तदिदं तत्त्वोद्योतप्रकरणं श्रीजयतीर्थविरचितेन व्याख्यानेन सनाथं मुद्रणाय स्वयकारि। श्रीजयतीर्थीया टीका च श्रीविजयीन्द्रतीर्थविरचितया, श्रीराघवेन्द्रतीर्थविरचितया, श्रीवेदेशतीर्थविरचितया, गुरुराजीयाभिधया श्रीपाण्डुरङ्गीकेशवाचार्यविरचितया, द्वैतद्युमण्यभिधया हुलिगीश्रीपत्याचार्यविरचितया चेति पञ्चभिष्टिप्पणीभिः समलङ्कृतया प्रकाश्यते।

तत्र चतुरधिकशतग्रन्थकर्तृतया जगद्विख्यातः श्रीव्यासतीर्थश्रीमच्चरणान्तेवासिभिः श्रीविजयीन्द्रतीर्थश्रीमच्चरणैर्विरचिता नातिविस्तरा नातिलघ्वी मूलगतप्रतिपदार्थविवरणरूपा बहुषु स्थलेषु तत्कालीनप्रथितप्रतिवादिकृताक्षेपनिरसनपरा तत्तत्स्थलोपयुक्तशास्त्रान्तरसारसङ्ग्रहरूपा तत्र तत्र न्यायामृतादिग्रन्थविशदीकरणचणा बुभुत्सूनां पण्डितानाञ्च नितान्तमुपकरोतीत्यत्र नास्ति संशयलेशः।

तत्प्रशिष्यैः श्रीराघवेन्द्रतीर्थैः कृता टिप्पणी सूत्रप्राया बह्वर्थगभीरा अत्युपयुक्तसर्वार्थाव्यभिचारिणी स्पष्टार्थवाक्यव्याख्यानस्यात्युपयोगाभावेन परित्यागिनी दुरूहशास्त्रान्तरार्थप्रदर्शनदर्पणायिता अत एव सहृदयहृदयमन्दिरे सर्वदा कृतनिवासा सर्वमान्या तत्त्वोद्योतद्योतने द्युमणिभावमवलम्बत इति सप्रमोदं वदाम.।

श्रीवेदेशतीर्थैर्विरचिता टिप्पणी च बहुषु स्थलेषु श्रीविजयीन्द्रतीर्थीयटिप्पणीगतवाक्यसाम्येन विषयसाम्येन च तट्टिप्पणीमनुकुर्वाणा विविधापूर्वविचारगर्भिता च विनेयानां हृदयमावर्जयतीति सामन्दानन्दं ब्रूमः।

श्रीपाण्डुरङ्गीकेशवाचार्यैः कृता गुरुराजीयाभिधा टिप्पणी च मधुरमधुरया बालानामपि बोधजनन्या अनन्वयालङ्कारोदाहरणभूतया शैल्या सरस्वतीप्रसादलब्धया सुललितवाण्या च टीकाभिप्राय विशदयन्ती शोभतेतराम्।

श्रीहुलिगीश्रीपत्याचार्यकृतटिप्पणीविषये यद्वक्तव्य तत्र न वयं प्रभवामः। तेऽपि शक्नुयुर्वा न वेत्यन्यदेतत्। सा च टिप्पणी द्वैतद्युमण्यभिधाना न केवल मूलटीकाक्षरार्थविवरणपरा। किन्तु मूलटीकाक्षरार्थविरुद्धार्थाभिधायिनीं तत्खण्डनकृतोद्योगाश्च अद्वैतसिद्धिब्रह्मानन्दीयलघुचन्द्रिकागुरुचन्द्रिकाश्रुतिमतोद्योतादिग्रन्थततिमक्षरशो वा अर्थतो वा अनूद्य विस्तरेण खण्डयित्री मूलटीकागतसर्ववाक्यपदाक्षराणां मध्ये एकस्याप्यवैयर्थ्य प्रकृतानुपयोगाभावमपौर्वापर्यञ्च स्थापयन्ती न्यायामृतादिग्रन्थार्थकूलङ्कषविचारपरा 'न केवलं तत्त्वोद्योतटीकाटिप्पणी। किन्तु माध्वीयानां तच्छिष्यसम्बन्धिनाञ्च सर्वेषां वादग्रन्थानां टिप्पणीत्युक्तिर्नातिशयोक्तिः। अत एव द्वैतग्रन्थानां सर्वेषां द्युमणिरिव प्रकाशिका। तद्विरुद्धानां सर्वेषां ग्रन्थानां तमसा द्युमणिरिव निरासिकेत्यस्याष्टिप्पण्या द्वैतद्युमणिरित्यन्वर्थकं नाम।

महामहोपाध्यायैः काशी तिम्मण्णाचार्यैर्विरचितं कुमतखण्डन तत्वोद्योतमूलटीकयोः प्रतिपद-व्याख्यानरूपतां न भजते। तथाऽपि भट्टत्र्यम्बकशास्त्रिणा कृतयोः तत्वोद्योतमूलटीकाखण्डनोद्युक्तयोः गुरुश्रुतिमतोद्योतलघुश्रुतिमतोद्योतनाम्नोर्ग्रन्थयोः खण्डनेन मूलटीकोक्तार्थस्थिरीकरणपरम्। तदप्यत्र प्रत्येकं न्यविविक्षाम।

एवं पञ्चटिप्पणीविभूषितटीकालंकृत मूलटीकाकण्टकोद्धारककुमतखण्डनविभूषितश्चेद् तत्वोद्योतप्रकरण श्रीनृसिंहतृतीयनेत्रायितं जाज्वल्यते इति निश्चयेन वदामः।

अस्मिन् दशप्रकरणसम्बन्धिनि तृतीयभागे विद्यमाना विषया विस्तृतसूचीपत्रावलोकनेनैव स्पष्टा इति न तत्प्रदर्शनाय प्रयत्नान्तरमास्थीयते।

एतद्भागमुद्रणावसरे श्रीविजयीन्द्रतीर्थीयटिप्पण्या द्वैतद्युमणिटिप्पण्याश्च शुद्धसुन्दराक्षरमूल-कोशदानेनोपकृतवद्भ्यो नञ्जनगूडु परिमळसंशोधनमन्दिराध्यक्षेभ्यः पण्डितवरेभ्यः श्रीयुतेभ्यो राजा, एस् गुरुराजाचार्येभ्यः तथा गुरुराजीयटिप्पणीमूलकोशदानेनोपकृतवद्भ्यो होन्नाळिस्थेभ्यः पण्डितेभ्यः श्रीमद्भ्यो वेणुपल्ली (बिदिरहळ्ळी) श्रीनिवासाचार्येभ्यश्च श्रेयस्ततिर्भूयादिति नारायण मनवरत स्मरामः।

संशोधन सम्यग्विधाय श्रीमदाचार्यपादानां श्रीजयतीर्थादिटीकाटिप्पणकर्तॄणां परमानुग्रह भाजनतां प्राप्ता अस्मत्परमप्रीतिपात्रभूता ज्यौतिषविद्वान्, तर्कविद्वान्, वेदान्तशिरोमणिः, विद्या वाचस्पतिः, महीशूरास्थानविद्वान्, पण्डितभूषणम् इत्यादिबिरुदभाजो मद्रपुरसंस्कृतकलाशालायां ज्यौतिषप्रधानाध्यापकाः पण्डितप्रकाण्डाः पि. पि. लक्ष्मीनारायणोपाध्याया विशेषेण प्रशस्या इति हृदयेनाभिनन्दाम।

एतन्मुद्रणकाले अक्षरयोजनादिषु जात मनुजसुलभ दोष दूरीकृत्य स्वयमेव परिष्कृत्य प्रयोजन-मनुभवन्तु पाठका इति निवेदयाम।

एतन्मुद्रणार्थं प्राय पर्याप्तं धन दत्वोपकृतवतां भारतशासनाधिकारिणां उपकारस्य कदाऽपि न विस्मराम।

एतन्मुद्रणविषये श्रद्धातिरेकेण देहेन मनसा साह्य विधाय समुचितेन पथा क्लृप्ते काले सुन्दरतया मुद्रण विधाय प्रदत्तवद्भ्यो मद्रपुरीस्थधर्मप्रकाशमुद्रणालयधर्मकर्तृभ्यस्तदधीनकार्यकर्तृभ्यश्च श्रेय परम्परामनुगृह्णात्विति स्वोपास्यसीताजान्यभिन्न रजतपीठपुरश्रीकृष्ण प्रार्थयामहे।

श्रीविद्यामान्यतीर्थाः

फलिमारुभण्डारकेर्युभयमठाधीशा

श्रीमन्माध्वराद्धान्तसंवर्धिनीसभासंस्थापकाश्च

# समर्पणम्

इदमिदानी श्रीमदानन्दतीर्थभगवत्पादाचार्यैः संगृहीत श्रीजयतीर्थगुरुवरेण्यैः परिमलितम् प्रतैर्विद्वल्ललामैः श्रीविजयीन्द्रतीर्थप्रमुखैः प्राप्तविकासम् श्रीमद्दशप्रकरणकुसुमवृन्दम् श्रीरजतपीठकृष्ण-चरणनलिनयोः समर्पयितुकामानां श्रीफलिमारुभण्डारकेर्युभयमठाधीशानां श्रीविद्यामान्यतीर्थ श्रीचरणानामाज्ञया कृतप्रवृत्तिरहमस्मिन् परमपावने कर्मणि बुद्धिमान्द्यात् पदे पदे स्खलन्नपि गुरु-चरणानुग्रहेणैव कथञ्चित्कार्यभरमर्घाधिक निरवर्तिषीति हन्त प्रमोदस्थानम् ।

कार्येऽस्मिन् मां प्रवर्त्य वार वार समुचितमार्गप्रदर्शनेन कृतोपकारेभ्यः श्रीचरणेभ्यः सहस्र भक्तिभरभरितान् प्रणामान् वितरामि ।

मुद्रणसमये बहूपकृतवद्भ्यो धर्मप्रकाशमुद्रणालयधर्मकर्तृभ्यो मुद्रणालयनिर्वाहकाय श्रीमते श्रीकान्ताचार्याय च शत धन्यवादान् वितीर्य ग्रन्थकुसुममिद श्रीविद्यामान्यतीर्थश्रीचरणनलिनयोः समर्पयामि ।

पि पि. लक्ष्मीनारायणोपाध्याय

सम्पादकः

# तत्वसंख्यानम्

## विषयानुक्रमणिका

## तत्वविवेकः

# द्वैतद्युमणिपरिशिष्टम्

## विषयानुक्रमणिका

## कुमतखण्डनम्

## तत्वोद्योतप्रकरणम्

| विषया | | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| १३९ | 'सत्तादात्म्यमसद्विलक्षणत्वम्' इत्येतत्पक्षनिरास | ,, | १३ |
| १४० | 'सत्त्वेनापरोक्षप्रतीतिविषयत्वमसद्विलक्षणत्वम्' इत्येतत्पक्षनिरास | ४३३ | ,, |
| १४१ | 'सत्तादात्म्यप्रकारकापरोक्षप्रतीतिविषयत्वमसद्विलक्षणत्वम्' इति पक्षनिरास | ४३४ | ८ |
| १४२ | 'सत्त्वेन प्रतीत्यर्हत्वमसद्विलक्षणत्वम्' इति पक्षनिराकरणम् | ४३६ | १७ |
| १४३ | 'अबाध्यं सर्वं प्रमेयमिति यत्किञ्चिद्धीविषयत्वाभाव सद्विलक्षणत्वम्' इति पक्षनिरास | ४३७ | ९ |
| १४४ | 'सत्त्वोपहिततादात्म्याभाव. सद्विलक्षणत्वम्' इति पक्षनिरास | ,, | २५ |
| १४५ | 'सत्त्वावच्छिन्नप्रतियोगिताकभेदवत्त्वासत्त्वावच्छिन्नप्रतियोगिताकभेदवत्त्वोभयवत्त्व मिथ्यात्वम्' इति पक्षनिरास· | ४३९ | ६ |
| १४६ | 'यावन्ति सद्वृत्तित्वानि तत्तदभावकूटवद्धर्मवत्त्व सद्विलक्षणत्वम्' इति पक्षनिरास | ,, | ७ |
| १४७ | 'प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वम्' इति पक्षनिरास | ४४२ | ४ |
| १४८ | 'प्रतिपन्नोपाधिनिष्ठस्वान्यूनसत्ताकाभावप्रतियोगित्व मिथ्यात्वम्' इति पक्षनिरास | ४४३ | २२ |
| १४९ | 'ज्ञाननिवर्त्यत्व मिथ्यात्वम्' इति पक्षनिरास | ४४६ | १८ |
| १५० | 'स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्व मिथ्यात्वम्' इति पक्षनिरास. | ,, | १९ |
| १५१ | 'असदेवेदमग्र आसीत्' इति श्रुत्या असत. सत्त्वेन प्रतीत्यनुवादसमर्थनम् | ४४७ | १४ |
| १५२ | 'असदेवेति श्रुत्या सदेवेति श्रुत्यर्थाभावोऽनूद्यते' इति पक्षनिरास | ४४८ | ९ |
| १५३ | 'सद्विविक्तत्व मिथ्यात्वम्' इति पक्षनिरास | ४५० | २३ |
| १५४ | दृश्यत्वानुमाने अनैकान्तिकतोपपादनम् | ४५३ | १२ |
| १५५ | आत्मनो दृश्यत्वाभावे बाधकोक्ति | ४५४ | १६ |
| १५६ | आत्मज्ञानाभावे बाधकोक्ति. | ४५५ | १५ |
| १५७ | आत्मनो दृश्यत्वाभावे बाधकान्तरोक्ति. | ४५६ | ४ |
| १५८ | आत्माविषयकस्याप्यात्मज्ञानस्यात्माकारत्वशङ्का तन्निरासश्च | ४५९ | २३ |
| १५९ | आत्मज्ञानस्य आत्मविषयकत्वमेव आत्माकारत्वमिति समर्थनम् | ४६१ | १४ |
| १६० | ज्ञानकर्मत्वविषयत्वयोरविशेषसमर्थनम् | ४६५ | ८ |
| १६१ | विषयाश्रिताज्ञाननिवर्तकतया आत्माकर्मकस्यापि ज्ञानस्यात्मज्ञानत्वमिति शङ्का | ४७३ | २२ |
| १६२ | अज्ञानस्य ब्रह्माश्रितत्वाभावोपपादनेन पूर्वोक्तशङ्कानिरास | ४७५ | १७ |
| १६३ | अज्ञानस्य ज्ञातृपुरुषगतत्वसमर्थनम् | ४७८ | २० |

विषयाः
२३४ व्या बा
२३५ प्रत्य
२३६ अद्वै
२३७ प्रत
२३८ प्रत
२३९ प्रत र्ता
२४० प्रत
२४१ प्रत
२४२ प्रत
२४३ प्रवृ
व
२५२ ज
इ
२५३ ज
२५४

| विषयाः | | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| ३१८ | मोक्षहेतुसगुणज्ञानविशेष्यस्यैव मोक्षहेतुत्व न तु विशिष्टस्य सगुणस्येति शङ्का तत्परिहारश्च | ,, | ११ |
| ३१९ | परापरमुक्तिभेदाभावसमर्थनम् | ७०६ | ६ |
| ३२० | प्रसादस्य मोक्षसाधनत्व निर्गुणोपासनसम्पादनद्वारा मोक्षसाधनत्वपरमिति शङ्का तत्परिहारश्च | ,, | १० |
| ३२१ | निर्गुणस्तुत्युपयोगित्वेन गुणपाठ इति शङ्का तत्परिहारश्च | ७०७ | ११ |
| ३२२ | सगुणब्रह्मणो ज्ञेयत्वाश्रवणान्न तत्र तात्पर्यमिति शङ्का तत्परिहार | ,, | १४ |
| ३२३ | उपास्यतयोक्ते निर्गुणत्वेन पराभिमते ब्रह्मणि सगुणत्वसमर्थनम् | ,, | २४ |
| ३२४ | निर्गुणब्रह्मणि प्रमाणाभावसमर्थनम् | ७०८ | ३ |
| ३२५ | ईश्वरस्य अनन्तविग्रहसमर्थनम् | ७११ | ८ |
| ३२६ | ईश्वरशरीराणामनादिनित्यत्वसमर्थनम् | ७१४ | २३ |
| ३२७ | 'एको नारायण आसीत्' इति श्रुतिगतं नारायणपद मायोपहितं मायाप्रतिबिम्बित वा चेतन वदति इति शङ्का तन्निरासश्च | ७१५ | २४ |
| ३२८ | ईश्वरगुणाना नित्यत्वे सृष्टिप्रलययोर्यौगपद्यशङ्का तन्निरासश्च | ७१६ | ९ |
| ३२९ | 'यदात्मको भगवान्' इति श्रुते परोक्तार्थानुवादस्तन्निरासश्च | ,, | २१ |
| ३३० | ईश्वरदेहानित्यत्वसाधकानुमाननिरासः | ,, | २६ |
| ३३१ | ईश्वरचाक्षुषादिक मायापरिणतं वा जीवचक्षु सन्निकर्षजं वेत्येतत्पक्षनिराकरणम् | ७१७ | १३ |
| ३३२ | पूर्वोक्तसगुणविषये तत्सम्बन्धिषु च विषयेषु भट्टत्र्यम्बककृताक्षेप | ७१८ | ३ |
| ३३३ | तन्निरास | ,, | २५ |
| ३३४ | ब्रह्मण्येकव्यक्तौ ज्ञानत्वादिजात्यभावेन ज्ञानादिरूपत्वायोगापादनम् | ७१९ | २० |
| ३३५ | सुखार्थं दु खाभावेच्छा इति शङ्का तत्परिहारश्च | ७२१ | १८ |
| ३३६ | दु.खाभावस्य सुखरूपत्वमिति शङ्का तत्परिहारश्च | ,, | २० |
| ३३७ | परमते ब्रह्मणो नित्यत्वानुपपत्ति | ,, | २३ |
| ३३८ | परमते ब्रह्मणो द्रष्टृत्वानुपपत्ति | ७२३ | १२ |
| ३३९ | स्वविषयकवृत्त्युपहितचैतन्य साक्षी इति पक्षनिरास | ७२५ | ८ |
| ३४० | अनाद्यविद्यावृत्तिरेकाऽखण्डा। तदुपहित तत्प्रतिफलित वा चैतन्यं साक्षी इति पक्षनिरास | ,, | १५ |

इति तत्त्वोद्योतटीकायां द्वैतद्युमणिटिप्पण्याश्च स्थितानां विशेषविषयाणामनुक्रमणिका समाप्ता

## श्रीविजयीन्द्रतीर्थीयटिप्पणीगतविशेषविषयानुक्रमणिका

## श्रीराघवेन्द्रतीर्थीयटिप्पणीगतविशेषविषयानुक्रमणिका

## श्रीवेदेशटिप्पणीगतविशेषविषयानुक्रमणिका

## श्रीगुरुराजीयटिप्पणीगतविशेषविषयानुक्रमणिका

श्रीवादिराजतीर्थ



हयग्रीवपदाम्भोजलोलभृङ्ग सतागुरुम ।
नमामि श्रीवादिराज ज्ञानवैराग्यसम्पदम् ॥

हयास्यनासापुटजातवातविघातधूताघपलालजात ।
मुनीशवागीशसुत सुरम्या हरे कथा शसति वादिराज ।

अथ श्रीमदानन्दतीर्थभगवत्पादाचार्य विरचितेषु
दशप्रकरणेषु

# अष्टमं तत्वोद्योत प्रकरणम्

श्रीजयतीर्थभिक्षुविरचितया टीकया

श्रीराघवेन्द्रतीर्थीयटिप्पणी श्रीवेदेशतीर्थीयटिप्पणी
श्रीविजयीन्द्रतीर्थीयटिप्पणी श्रीपाण्डुरङ्गिकेशवा-
चार्यकृतटिप्पणी श्रीहुलिगि श्रीपत्याचार्यकृतद्वैतद्युमणिटिप्पण्याः
सारोद्धारः श्रीकाशीतिम्मण्णाचार्यकृतकुमतखण्डनञ्चेति विवरणषट्कालङ्कृतया

विभूषितम्

# श्रीजयतीर्थाः



मिथ्यासिद्धान्तदुर्ध्वान्तविध्वंसनविचक्षणः ।
जयतीर्थाख्यतरणिर्भासतां नो हृदम्बरे ॥
चित्रैः पदैश्च गम्भीरैर्वाक्यैर्मानैरखण्डितैः ।
गुरुभावं व्यञ्जयन्ती भाति श्रीजयतीर्थवाक् ॥

विज्ञानोदर्कतर्कप्रतिपदमधुरोदारसन्दर्भगर्भ-
प्रौढानेकप्रबन्धप्रकटितभगवत्पादभाष्यादिभावः ।
मिथ्यावादापवादप्रकुपितविमतध्वान्तसन्तायभानु-
र्जीयादन्यैरजेयस्त्रिभुवनविदिताश्चर्यचर्यो जयार्यः ॥

# सहृदयेषु सविनयमभ्यर्थनम्

तत्वोद्योतमुद्रणारम्भे 'तत्वोद्योतटीकाटिप्पण्या द्वैतद्युमणेः सारोद्धार एव मुद्रणीयः । न तु सा टिप्पणी समग्रा मुद्रणीया' इति निरधारि । आरब्धे च मुद्रणेमुद्रितेषु च कतिपयेषु पृष्ठेषु सहृदयानां बहूनां पण्डितवरिष्ठानामाशयमनुरुद्ध्य 'सा टिप्पणी समग्रा मुद्रणीया । न तत्राल्पीयानप्यंशः परित्याज्यः' इति फलिमारुभण्डारकेर्युभय-मठाधीशैर्माध्वराद्धान्तसंवर्धिनीसभासंस्थापकैः श्रीविद्यामान्यतीर्थश्रीचरणैर्निरणायि । समाज्ञापि चाह तथैव मुद्रणाय । कतिपयपृष्ठमुद्रणानन्तरं श्रीचरणाज्ञामनुसृत्य समग्र-टिप्पणीमुद्रणकार्यमारब्धम् । तावन्त काल मुद्रितेषु पृष्ठेषु परित्यक्तो द्वैतद्युमणिभागो ग्रन्थस्याविकलत्वाय द्वैतद्युमणिपरिशिष्टनाम्ना दशप्रकरणसम्बन्धिन्यस्मिन् भागे आदौ संयोज्यते ।

द्वैतद्युमणिपरिशिष्टे तत्र तत्र दृश्यमानाः पृष्ठाङ्काः पंक्त्यङ्काश्च दशप्रकरणसम्ब-न्ध्येतद्भागीयाः पृष्ठाङ्काः पक्त्यङ्का इति वाचका विदाङ्कुर्वन्तु । द्वैतद्युमणिपरिशिष्टे निर्दिष्टेषु पृष्ठेषु निर्दिष्टां पंक्तिमारभ्य दशप्रकरणसम्बन्धिन्यस्मिन् भागे द्वैतद्युमणि-परिशिष्टगत द्वैतद्युमणिभागं पठन्तस्तदुपरितनभागं पठित्वा टिप्पणीमिमामन्यूना-माकलयन्तु सहृदया इत्यभ्यर्थये ।

इति श्रीचरणाज्ञप्तः

पि पि. लक्ष्मीनारायणोपाध्याय.

सम्पादकः

# द्वैतद्युमणिपरिशिष्टम्

## १०६ पृष्ठे ११ पङ्क्ति १२ पङ्क्त्योर्मध्ये

(द्वै द्यु ) ननु सुखदुःखनिवृत्तिभेदाभ्यां परमेष्टभेदसाधनमेवैतद्ग्रन्थाभिप्रेतम्। अत इष्टसाधनभेद-पूरणेन व्याख्यानमयुक्तमिति चेन्न। पूर्वमिष्टमात्रविषयकत्वेनैव पुरुषार्थताया उक्तत्वेन परमेष्टस्याप्रसक्तत्वात्। न च तत्रापि परमेष्टविषयकत्वेनैव परमफलत्वमुक्तमिति वाच्यम्। तर्हि यद्धि यस्येष्टमिति प्रक्रमविरोधात्। न च तत्रापीष्टपदेन परमेष्टमेवोच्यत इति वाच्यम्। तर्हि 'यद्यस्य परमेष्टं तं प्रति तदेव वाच्यम्। नान्यत्' इत्युक्तं स्यात्। लोकरीतेरेवेदानीं प्रतिपाद्यतया लौकिकानाञ्च सुखदुःखप्राप्तिनिवृत्त्योरेव परमेष्टत्वेन तयोरेव सुखं दुःखनिवृत्तिश्चेत्यादिवाक्येनोपदेश्यत्वं तादृशवाक्यस्यैवोपादेयत्वञ्च स्यात्। न तु यजेत पचेतेत्यादिवैदिक-लौकिकवाक्यानां तत्साधनीभूतेष्टबोधकानाम्। तेषां परमेष्टाविषयकत्वात्। न हि तथा कश्चिदङ्गीकरोति।

ननु तत्रेष्टसाधनमपि उपलक्षणया गृह्यते। तथा च 'यद्धि यस्य परमेष्टं, साक्षात् परम्परया वा तत्साधनं तयोरन्यतरदेव बोधनीयम्। नान्यदित्यर्थः। न चोत्तरत्रेष्टस्यैवोपादानं कुत इति वाच्यम्। उभयोर्मध्ये प्रकृते ईश्वरबोधकवाक्यस्य कांश्चित्प्रतीष्टबोधकत्वेन तावदुपादेयत्वं वक्तुं इष्टश्च रमापतिरित्युक्तम्। परमेष्ट इत्येवार्थः। एवमपि प्रवृत्त्याद्यजनकत्वात्कथं वाक्यस्य साफल्यमिति चोद्यपरिहारायेष्टानुभवस्येत्युक्तम्।

एतद्वाक्यमेके व्याचक्षते। अत्रानुभवपदेन स्वसम्बन्धिवर्तमानेष्टविषयकज्ञानमात्रं विवक्षितम्। तेनानुभव-पदेन स्मृत्यन्यज्ञानविवक्षायां 'यन्न दुःखेन सम्भिन्नम्' इत्यादिवाक्यजज्ञानस्यापि पुरुषार्थत्वापत्तिः। साक्षात्कार-विवक्षायां वेदजन्येश्वरबोधस्य साक्षात्काररूपत्वाभावेन पुरुषार्थत्वानुपपत्तिरिति दूषणानवकाश इति।

तत्रेदं चिन्त्यते। एवमपि चैत्रस्य भोजनादिसाध्यसुखोत्पत्तिवेलायां दुःखाभावदशायाञ्च मैत्रेण प्रयुक्तेन 'चैत्र त्वयि सुखं वर्तते। त्वयीदानीं दुःखाभावो वर्तते' इति वाक्येन जायमानस्य चैत्रनिष्ठबोधस्य चैत्रं प्रति पुरुषार्थत्वापत्तिः। न चेष्टापत्तिः। तादृशवाक्यप्रयोक्तरि मैत्रे 'ममेष्टसम्पादकोऽयम्' इति उपकारान्तरकर्तरीव चैत्रस्य 'अयं चैत्रोपकर्ता' इति लोकानाञ्च प्रत्ययापत्तेः। न च सोऽस्ति। प्रत्युत 'त्वया किं वक्तव्यम्। वर्तत एव' इत्युपहासकर्तारो भवन्ति। किञ्च स्वसम्बन्धीत्यत्र सम्बन्धत्वेन सम्बन्धनिवेशे परकीयसुखस्य किञ्चित्परम्परा-[1]सम्बन्धतया परसुखादिविषयकज्ञानस्यापि पुरुषार्थत्वापत्तिः। परकीयसुखं न स्वेष्टमिति वाच्यम्। तर्हि तद्व्यावृत्तये स्वसम्बन्धीत्यस्य वैयर्थ्यापत्तिः।

---

[1] सम्बन्धेन स्वसम्बद्धतया इति पाठेन भाव्यमिति भाति।

किञ्च दु खविशेषात्यन्ताभावस्य स्वस्मिन्नन्यत्र च विद्यमानस्यैकत्वेन चैत्रनिष्ठदु खाभावानुभवस्य मैत्र प्रति पुरुषार्थत्वापत्ति । ज्ञानेऽपि स्वनिष्ठत्वस्य निवेशे मैत्रनिष्ठस्य चैत्रनिष्ठोक्तदु खाभावविषयकशाब्दस्य तथात्व स्यात् । विशिष्य स्वसमवेतत्वस्य स्वस्वामिकत्वस्य वा निवेशे दु खाभावसाक्षात्कारासग्रह । स्वासमवेतत्वात् स्वास्वामिकत्वाच्च दु खाभावस्य । सिद्धान्ते समवायाभावात् । समवेतत्वस्य वृत्तित्वमात्ररूपत्वे उक्तदोषाभावेऽपि यथाश्रुते निष्कर्षे च सुखसाक्षात्कारस्यैवासग्रह । सुखादेरन्त करणधर्मत्वात् । स्वस्वामिकत्वकल्पे ईश्वरज्ञान-स्यैवासग्रह । तस्येतरास्वामिकत्वादिति ।

वस्तुत [1]इष्टानुभवस्य इष्टपद परमेष्टपरमेव । एवकार प्रवृत्त्यादिजनकत्वादिविशेषणाविशेषितत्वबोधक । अनुभवपद ज्ञानपरमेव । पुरुषार्थत्वात् परमफलत्वात् प्रवृत्त्याद्यजनकस्यापि परमेष्टज्ञानस्य कस्यचित्फलरूप-ताया दृष्टत्वेनासम्भावितत्वाभावात् 'ईश्वरानुभवोऽपि फलरूप' इति वक्तुमुपक्रान्तत्वेन तादृशज्ञानसामान्यस्य फलरूपत्वनियमे एतद्वाक्यतात्पर्यकल्पने बीजाभावेन सुखादिशाब्दबोधादौ व्यभिचारानवकाशः । न हीत्यादि-वाक्यद्वय तस्यैवोपपादकम् । तथा च परमेष्टस्यैव प्रक्रान्तत्वादत्र सुखदु खहान्यन्यतरानात्मकत्वेन परमेष्टत्व-मेवाक्षिप्यते ।

नः इत्यादिना मूलकृदभिप्रेत परमेष्टत्वमुपपादयित्वा इष्टसाधनत्वादिना मध्यमभक्तान् प्रति वेदप्रामाण्य-मुपपादयिष्यतीति पूर्वोत्तरग्रन्थसामञ्जस्ये किमर्थं इष्टपदस्येष्टसामान्यपरत्वमाश्रित्य पूरणसंवलित व्याख्यानमिति चेन्न । भवद्व्याख्यानेऽपीष्टसाधनस्य पूरण प्राप्तमेव । परन्तु नानावाक्यस्थेष्टपदस्य परमेष्टलाक्षणिकत्वमधिकम् । अपि चेष्टसाधनसमकक्षतया परमेष्टस्य वाक्येन बोधनीयताकथनमयुक्तमेव । लोके स्वसुखसाधनादावेव प्रश्न प्रतिवचनयोरेव दर्शनात् 'मत्सुख कीदृशम्' इति प्रश्नस्य 'त्वत्सुखमेतादृशम्' इत्युत्तरस्य चादर्शनात् ।

किञ्चोत्तरत्रेष्टानुभवस्येत्यादिवाक्यैरीश्वरशाब्दस्य फलरूपत्वबोधनाय सुखसाक्षात्कारस्य फलरूपत्वकथन-मसङ्गतम् । उदासीनतृणादिप्रत्यक्षस्य प्रामाण्यादे सर्वसिद्धत्वात्तत्र यथावस्थितार्थबोधकत्वमात्र प्रामाण्य शब्दस्य तु परार्थत्वात्सफलत्वघटितमेव प्रामाण्यमिति प्रत्यक्षवैलक्षण्येन पूर्वपक्षस्य प्रवृत्तत्वेन सुखसाक्षात्कारस्य फलरूप-त्वेनेश्वरशाब्दस्य फलरूपत्वासिद्धे । इष्टज्ञानत्वसाम्यमात्रेण तथात्वे सुखशाब्दस्यापि तथात्व प्रमेयत्वसाम्येन घटादेरपि तथात्व स्यात् । सुखशाब्दसाक्षात्कारयो साक्षात्कारत्वशाब्दत्वाभ्यामेव फलाफलरूपत्वे ईश्वरशाब्द-स्यापि कुतो नाफलत्वम् । प्रवृत्त्याद्यजनकप्रत्यक्षादेरिच्छाविषयत्वाभावेन प्रवृत्त्याद्यजनकज्ञानसामान्यस्येच्छा-विषयत्वाभावनियमे परेण स्वीकृते प्रत्यक्षविशेषादौ व्यभिचारोद्भावनस्य सङ्गतत्वेनास्मदीयैतद्वाक्यव्याख्यायामनुप पत्त्यभावात् । ईश्वरावबोधस्य फलत्वन्तु तस्य परमेष्टत्ववत्प्रमाणेनैव सिद्ध्यति । किञ्च भवद्व्याख्याने मूलस्थेष्टपदं परमेष्टपरमेव । तथा च मध्यमभक्तान् प्रति वेदसार्थक्यस्यानुक्तत्वेन मूलस्य न्यूनतापात. । तस्माद्युक्तमेव पूरण-संवलितं व्याख्यानम् । इष्टपदन्त्विष्टसामान्यपरमेवेति ।

---

[1] इष्टानुभवस्येत्यत्र इष्टस्यानुभव षष्ठ्या विषयत्वमर्थं । इष्टपद इति पाठेन भाव्यमिति भाति ।

## १२८ पृष्ठे १९ २० पङ्क्त्योर्मध्ये

ननु विमते पक्षतावच्छेदकत्वानङ्गीकारे मूले मुक्त इत्यादिपक्षनिर्देशं विहाय विमतमिति पदप्रयोगस्या नर्थक्य स्यात् । न च विमतिवाक्यस्य सर्वत्रावश्यकताबोधनार्थं तदिति युक्तम् । तदावश्यकतायाः विप्रतिपत्ति-साध्यसंशयस्य पक्षतारूपत्वाभावाद्युपपादनेन न्यायामृते निरस्तत्वेन तस्य सिद्धान्तत्वाभावात् ।

यत्तु 'विप्रतिपत्तिरावश्यिक्येव। विप्रतिपत्त्या संशयेन तदभावरूपफलेच्छया न्यायवाक्यरूपविचारावसरेण विप्रतिपत्तेर्विचाराङ्गत्वात् । ननु वादिनो स्वस्वपक्षनिश्चयवत्त्वध्रौव्येण मध्यस्थादीनामपि विद्वत्त्वात् कुत्र संशयो जायते । किञ्च मूर्खस्य विचारे नियमने स्वस्याकीर्तिं स्यादिति तत्परिहाराय उभयो. समविद्यत्वपरीक्षाया मध्यस्थेन कर्तव्यतया तेन तदुभयनिष्ठान्यतरपक्षनिश्चयस्यापि निश्चितत्वेन तत्सम्भावनाऽपि नास्तीति कथ संशयो भवत्विति बुद्ध्या मध्यस्थो विप्रतिपत्तिवाक्य प्रयुञ्जीतेति चेन्न । तत्काले सशयानुपधानेऽपि विप्रतिपत्तेः संशय-स्वरूपयोग्यत्वरूपकारणत्वेन सम्बन्धितया विप्रतिपत्तिरूपैकसम्बन्धिज्ञाने सत्यपरसम्बन्धिरूपसशयस्मरणे सति प्रतियोगिज्ञानानन्तर तदभावरूपफलज्ञानोदयेन तदिच्छया तन्निर्वाहकविचारे प्रवृत्तिनिर्वाहकतया विप्रतिपत्ते-र्विचाराङ्गत्वस्याभिमतत्वात् ।

न च तत्र सशयाभावस्तदा वर्तत एवेति कथ तदिच्छेति वाच्यम् । कालान्तरे व्यासङ्गादिना तदुच्छेद-शङ्कया कालान्तरेऽपि सशयाभावोऽनुवर्ततामिति बुद्धया स्वजन्यानुभवाधीनसंस्कारदार्ढ्यादिद्वारा तन्निर्वाहकविचार इच्छासम्भवात् । न च तत्वनिर्णयमात्रफलकवादकथाया विप्रतिपत्तेरनावश्यकत्व प्रत्यक्षालोकादिग्रन्थसम्मत्या नैयायिकादिसिद्धमेव । जल्पे तु स्वस्वविजयार्थमेव विचारे प्रवृत्तिसम्भवेन फलान्तरानुसन्धान नापेक्षितमिति वाच्यम् । एवमपि सभ्यसभापत्यादीना स्वकीयफलानुसन्धान विना तत्र मन प्रणिधानायोगेनोक्तरीत्या विप्रति-पत्तेस्तदर्थकत्वात् । न च पूर्वोक्तरीत्या कुत्रापि फलानुपधाने स्वरूपयोग्यताऽपि नास्ति । कल्पकाभावादिति वाच्यम् । सभ्याना सर्वेषा विद्वत्त्वनियमाभावात्सभाबहिर्भावेण कदाचित्तज्जातीयवाक्येन सशयस्यान्येषा सम्भवेन च फलानुपधानासिद्धे ।

न चैवमज्ञानविपर्ययनिवृत्तिरूपफलप्रतियोग्यज्ञानादिजनकवाक्यमप्यावश्यकं स्यादिति वाच्यम् । अज्ञान-स्यानादितया तज्जनकवाक्यासिद्धे । सशयनिवृत्तेरज्ञाननिवृत्तिमूलकत्वेन पृथग्यत्नानपेक्षणाच्च । सर्वेषामेकदर्शन-निविष्टत्वनियमाभावेन सर्वनिरसनीयैककोटेरभावेन इदमित्थमेवेत्याकारकस्य विपर्ययवाक्यस्य दर्शयितुमशक्यत्वात् । किञ्च विप्रतिपत्तेर्नैतावन्मात्रं प्रयोजनम् । अन्यदपि वर्तते । विप्रतिपत्तिवाक्ये प्रयुक्ते सर्वे. कोटिद्वयस्य श्रुतत्वा-त्तदपलापपूर्वकं वादिनोरन्यतरेण विषयान्तरग्रहणपूर्वकं स्वजयः स्थापयितु नैव शक्यते । अन्यथा जयपराजय-व्यवस्थाऽभावप्रसङ्गात् । एव मध्यस्थेन स्वयमेवैकैक प्रत्येकैकपक्षदाने तत्समर्थनाशक्तेन वादिना अन्यतरस्मिन्पक्ष पातः स्वस्मिन्नसूयादिकं व्यवह्रियेत । अतो विप्रतिपत्तिवाक्येनोभाभ्या कोटिश्रवणानन्तर स्वयमेव पक्षविशेषग्रहणे

पक्षान्तरसमर्थनाशक्तत्वशङ्का लोकाना स्यादित्यभिप्रायवद्भ्या वादिभ्यां त्वयैव कश्चन पक्षो देय इत्युक्त्यनन्तर-मेव तथाकरणे स्वस्य दोषाभावात्। अत एतदुभयप्रयोजनार्थमपि विप्रतिपत्तिरावश्यिकी। एतेन साधारण-धर्मादिप्रतिबन्दिदान परास्तम् । तस्मात्स्वकर्तव्यनिर्वाहाय समयवन्धादिवद्विप्रतिपत्तिर्दर्शनीयैव । परमवयवेषु नाग्रह' इति ।

तन्न। 'शब्दो गुणत्वेन नैयायिकाभ्युपगमविषयो द्रव्यत्वेन तु मीमांसकानाम्। अतो यथाकाममन्यतर-पक्षाऽश्रयण कार्यम्' इत्याकारकेण संस्कृतेन तत्समार्थकभाषारूपवाक्येन वा मध्यस्थोक्तेन पूर्वोक्तसर्वप्रयोजननिर्वाहात् एकस्मिन्धर्मिणि विरुद्धकोटिद्वयशाब्दधीजननयोग्यत्वादिनानाकुसृष्ट्यादियुक्तवाक्यविशेषरूपविप्रतिपत्तेरनावश्यक-ताया न्यायामृतोक्ताया एतादृशशतोक्तिभिरप्यपरिहारात् । न हि न्यायामृते सर्वथाऽनुपयोग उक्त । किन्त्वनावश्यकत्वमात्रम्। न हि कथापूर्व मध्यस्थादिभिर्भाषया व्यवहारे किञ्चिद्बाधकम्। प्रत्युत प्राकृतादीना-मपि सुज्ञानाय तस्यैवोचितत्वञ्च ।

अपि च सभापतिप्रेरितेनान्येनैवोक्तरीत्या वादिप्रतिवादिभ्या पक्षपरिग्रहादिकं कारयित्वा अनन्तर मध्यस्थो नियमित । तत्र मध्यस्थस्य विप्रतिपत्तिदर्शनानवकाशाच्च । यत्र सर्वविषयेषु तत्काले मध्यस्थकल्पित-वाक्यस्यान्यदाप्युच्चारनियमाभावात्संशयाजननं तेषु स्वरूपयोग्यत्वकल्पकाभावाच्च । क्वचित्तस्य सत्त्वेपि ज्ञानस्यैव स्वस्योपयोगेन सर्वेषा तज्ज्ञाननियमाभावेन सर्वेषा संशयसारकत्वायोगश्च । केषाञ्चित्सम्भवेऽपि भाविविचारस्य संशयनिवृत्तिनिर्वाहकत्वानुपस्थित्या तत्र सभापत्यादीनां मन प्रणिधानस्य ततोऽनिर्वाहाच्च । यत्र सभापत्यादीना-मन्यतरकोटिनिश्चय एव तत्र स्वकर्तव्यसम्मानोपयोगितदुत्कर्षज्ञानार्थमेव मन प्रणिधानोपपत्तेश्च । वादिनो प्रामाणिकत्वे निश्चितेऽसाधकतास्थलीयन्याये उदाहरणप्रयोगस्येव समयविशेषबन्धस्याप्यकर्तव्यतया दृष्टा-न्तस्य नियमेन सार्वत्रिकतयाऽसम्मतेश्च । वाक्यविशेषस्य क्षेमसाधारणमज्ञाननिर्वाहकत्वमपि भवतीति फल-स्मरणोपयोगितामात्रेण तत्प्रदर्शनप्रतिबन्ध्यपि युक्तैव। तस्मादवयवेष्विव विप्रतिपत्तावप्यावश्यकत्वाग्रहस्त्याज्य एवेत्यत.।

## १२९ पृष्ठे ११-१२ पङ्क्त्योर्मध्ये

ननु किञ्चिद्धर्मोपहिते तदुपलक्षिते वा चैतन्ये सर्वाधिष्ठानभूते भेदस्यापि सत्त्वेन न मन्मते पक्षतावच्छे-दकोपहिते तदुपलक्षिते वा भेदकोटिकविप्रतिपत्ति सम्भवति । न च त्वन्मते घटश्चिन्नेत्यादिप्रतीतिसिद्धभेदस्य घटावच्छिन्नचित्यारोपितत्वेन चिति तादात्म्यसम्बन्धेन भेदसत्त्वेऽपि चिच्चिन्नेति प्रतीतिवारणाय 'नञुल्लेख्यप्रतीतौ विशेषणतासम्बन्धो भासते। तेन सम्बन्धेन तु चिति [1]स भेदो नास्ति' इति वक्तव्यम्। एवञ्च भेदान्तराणा-मपि तादात्म्यसत्त्वेऽपि न विशेषणतासम्बन्धेन वृत्तित्वम् । प्रकृते च मुक्तत्वोपलक्षिते तत्सम्बन्धसंसर्गकभेद-

---

1 चित्प्रतियोगिक ।

कोटिकविप्रतिपत्तिर्युक्ता । चिद्घटो नेति प्रतीतिसिद्धभेदो यद्यपि शुद्धचिति विशेषणतासम्बन्धेन वर्त प्रतिभाति तथापि स स्वोपहित एव वर्तते । अन्यथा शुद्धत्वहानिप्रसङ्गात् । एव अन्येषामपि शुद्धचिति भेदस्यासिद्धतया मुक्तत्वोपलक्षिताया चिति भेदकोटिकविप्रतिपत्तिसम्भवेन तत्र तत्साधनं साधननावकाश इति वाच्यम् । अनुमितेर्वा विप्रतिपत्तिघटकवाक्यस्य वा यदि मुक्तत्वरूपधर्मपुरस्का वगाहिता तदा मुक्तत्वोपहितस्यैवानुमितौ भानान्न शुद्धचिति भेदसिद्धि. । विप्रतिपत्तिघटकवाक्येन भेदस्याङ्गीकृतत्वात्तन्निषेधरूपकोटिप्रतिपादनानुपपत्ति । यदि चोपलक्षणीभूतधर्मस्य धर्मान्तरोपलक्ष स्वरूपोपलक्षकत्वञ्चाङ्गीकृतम् । तस्याय निष्कर्ष फलीभूतबोधे भासमानधर्मान्तरोपस्थापक सन् स्वयमभासमान क्वचिद्भवति । क्वचिच्च फलीभूतबोधे भासमानस्वरूपमात्रोपस्थापक सन् तत्र स्व स्वरूपोपलक्षणमित्युच्यते इति । एतदुदाहरणादिकन्त्वाकरे व्यक्तम् । एवञ्चेहापि यदि मुक्तत्व धर्मा स्वयं निवर्तते तदा विप्रतिपत्तिवाक्येन धर्मान्तरविशेषितचिति भेदनिषेध. कृत· स्यात् । स चानुपपन्न पहित इव धर्मान्तरोपहितेऽपि भेदाङ्गीकारात् । एव सिद्धार्था प्रतिज्ञा स्यात् । धर्मान्तरोपहिते भे त्वात् । यदि च स्वरूपमात्रोपलक्षणं स्यात् तदा मुक्तो न भिन्न इति वाक्य वा नञ्घटितोक्तवाक्यं मात्रावगाहिन भेदाभाववान् इत्याकारक वा भेदवान् इत्याकारक वा बोध जनयेत् । तथा च कथं विप्रतिपत्तिवाक्यत्वम् । तदुभयजन्यबोधस्य तदधीनबोधान्तरस्य वा संशयरूपत्वाभावेन तज्जनक निर्धर्मितावच्छेदककसंशयाभावात् । अनुमितिरपि कथमुक्तविधमुक्तत्वोपलक्षितचिदवगाहिनी स्य निर्धर्मितावच्छेदककत्वाद्यभावात् ।

अथ मन्यसे 'मुक्तत्वोपलक्षिते भान नाम मुक्तत्वसामानाधिकरण्यमात्रस्य प्रकारांशे भानम् सम्बन्धे मुक्तत्वावच्छिन्नत्वभानन्तु तदुपहिते भानम् । प्रकृते च किञ्चिदुपहितचित्येव भेदस्य भ मुक्तत्वेनोपलक्षिताया शुद्धचिति भेदाभावकोटिका विप्रतिपत्तिर्युक्ता' इति । तदप्ययुक्तम् । मुक्तत्वाश्र त्वोपहित एव सत्त्वेन तेन रूपेण शुद्धचितौ विप्रतिपत्तिवाक्येन भासमानत्वेन तदुपहितस्यैव विप्रतिपत्त्ययोगस्योक्तत्वात् । यदि चोपहितधर्माणा शुद्धवृत्तित्वस्याभ्युपगमा मुक्तत्व शुद्धचिति वर्तत तदा भेदोऽपि तत्र वर्तत एवेति कथं तत्र तत्कोटिका विमति स्यात् । किञ्च शुद्धचिति कथमपि त्यभ्युपेत्य मुक्तत्वोपलक्षिताया भेदाभावकोटिका विप्रतिपत्ति मुक्तत्वोपलक्षिते भेदसाधने शुद्धचि सिद्ध्या आत्मन कृतार्थतेति यदि मनुषे तर्हि आत्मत्वससारित्वादिधर्मेषु कस्यचित्पक्षतावच्छेद विप्रतिपत्तेश्चिति भेदसिद्धिसम्भवेन सिद्धसाधनतादोषेणैव तन्निराकरणपूर्वक ससारान्मुक्तत्वस्य पक्षता

यदि च शुद्धत्वादिधर्मा इव शुद्धचित्येव जडानृतादिव्यावृत्तयोऽपि वर्तन्त इति विवरणमतमाद्रियते तदा शुद्धचित्येव भेदाभ्युपगमान्न विप्रतिपत्ति । न तत्साधनेनानुमानस्य कृतार्थत्वम् । सिद्धसाधनानुद्धारात् । नापि मुक्तत्वविशिष्टे भेदतदभावकोटिका विप्रतिपत्तिः । मन्मते चरमक्षणस्य चरमसाक्षात्कारस्य वाऽऽवरणध्वसरूप-मुक्तितया तद्विशिष्टे भेदस्य निर्विवादत्वात् । तदुत्तरावस्थाविशिष्टस्वरूपमुक्तत्वविशिष्टे विप्रतिपत्तिरपि न युक्ता । मन्मते तदुत्तरावस्थाया एवालीकत्वात् ।

यदि चाऽवरणध्वसोपलक्षिता चिदेव मुक्तिस्तदाश्रयस्याभावात्तस्या पक्षतावच्छेदकत्वायोग. ।

यदि चोभयसिद्धमुक्तत्वाश्रयेऽनवच्छिन्नविशेषणतया भेदकोटिका विप्रतिपत्तिस्तेनैव सम्बन्धेन भेदस्य साध्यतापि मुक्तौ नश्यमानभेदस्य चित्यनवच्छिन्नविशेषणतया वृत्त्यभावान्न विप्रतिपत्त्ययुक्ति सिद्धसाधनता वा । न च पक्षनिष्ठाया दृष्टान्तनिष्ठाया वा भेदीयविशेषणताया मुक्तत्वनिगडमुक्तत्वादिधर्मावच्छिन्नत्वाद्बाधो दृष्टान्तासिद्धिश्चेति शङ्क्यम् । कालविधया या विलक्षणावच्छेदकता तदनिरूपकत्वस्यैव निवेशनीयत्वादिति मन्यसे तदप्ययुक्तमेव । आसंसार चिन्निष्ठानामनृतादिभेदानां यावत्कालमनुवर्तमानाना विशेषणताया कालिक-व्याप्यवृत्तितया कालानवच्छिन्नताया एव मदङ्गीकृतत्वेन विप्रतिपत्त्यनुपपत्तिसिद्धसाधनतयोरनुद्धारात् । न च मुक्तिकालासम्बन्धिनां भेदाना कथ कालिकव्याप्यवृत्तित्वमिति वाच्यम् । भेदै सह ब्रह्मज्ञानेन कालस्यापि निवृत्त-त्वेन मुक्तौ कालस्यैवाभावात् । न च मुक्तौ कालानभ्युपगमे व्याहति स्यादिति वाच्यम् । विप्रतिपत्त्यभावे सिद्धसाधनतोद्भावने च परीक्षितापरीक्षितपराभ्युपगममात्रस्य बीजतया तत्सदसत्त्वविचारस्येदानीमनवसरपराहत-त्वात् । किञ्चैतत्कल्पे आत्मत्वसंसारित्वादिचिद्वृत्तिधर्मसामान्यस्यापि पक्षतावच्छेदकत्वसम्भवे तत्परित्यागानुपपत्ति-रूपपूर्वोक्तदोषानिस्तारश्च ।

ननु भेदस्य मिथ्यात्वसिद्धये भेदाभावोऽपि त्वयाऽङ्गीकृत इति तस्य कोटिता युक्तेति चेन्न । तस्ये-दानीमावृतत्वेन लौकिकाना भेदाभ्युपगमविरोधिग्रहाविषयस्य तस्य ज्ञानेन मध्यस्थसंशयाद्यनिर्वाहेण विप्रतिपत्ति कोटित्वायोगात् । भेदसाधनेऽपि तत्कोटेरसदभिमताया एव साधितत्वेन सिद्धसाधनानुद्धाराच्च । तस्माच्छुद्ध-भेदकोटिकमुक्तधर्मिकविप्रतिपत्तेरेवायोगात्कथं तत्काले भेदसाधनेन सिद्धसाधनत्वाभाव इति समाधानम्' इति ।

**अत्रोच्यते** । 'मुक्तानां परमा गति.' 'मुक्ता॰ प्राप्य पर विष्णुं तद्देह सश्रिता अपि' 'मम साधर्म्यमागता । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ।' इत्येवमादीनि कानिचिद्वाक्यानि, तथा 'एतमानन्दमयमात्मान-मुपसंक्रम्य' 'परम साम्यमुपैति' इत्यादिकानि श्रुतिवाक्यानि च मुक्तविषयतयाऽवगम्यमानानि श्रूयन्ते । तथा 'परम ब्रह्म वेद ब्रह्मैव भवति' 'ब्रह्मैव सन्ब्रह्माप्येति' 'यत्र त्वस्य सर्वमात्मैवाभूत्' इत्यादीनि श्रुतिवाक्यानि, तथा

आमुक्तेर्भेद एव स्याज्जीवस्य परमस्य च ।
मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः ॥

विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्त क. करिष्यति ॥
यावन्मोक्षन्तु भेद स्याज्जीवस्य परमस्य च ।
ततः पर न भेदोऽस्ति भेदहेतोरभावत. ॥

इत्यादीनि च स्मृतिवाक्यानि मुक्तविषयतया प्रतीयन्ते । तत्र पूर्ववाक्येषु बहुवचनश्रवणेन साधर्म्येण प्राप्यप्रापक-भावादिश्रवणेन मुक्ताना परस्पर परमात्मना च भेदोऽवगम्यते । यत्र त्वस्येत्यादिवाक्येषु यत्रेत्यनेन मुक्त्यवस्था नाशमात्यन्तिक गते इत्यनेन तत परमित्यनेन च परममुक्त्युत्तर. काल प्रतीयते । तथा सर्वमात्मैवाभूदित्यनेन भेदो नास्तीत्यनेन च भेदसामान्यनिषेध प्रतीयते । तदुभयवाक्यदर्शनेन बलाबलनिर्णयाभावदशाया 'भेदप्रति-पादकानामर्थान्तिरपरत्वेन प्रामाण्याभावादभेदपराणि प्रमाणानि' इति त्वदीयेषु भास्करानुसारिषु वदत्सु 'भेद-निषेधपराणा न स्वार्थपरत्वं किन्त्वन्यार्थपरत्वम्' इति तत्ववादिषु वदत्सु लौकिकाना मध्यस्थप्रभृतीनां वा 'मुक्तो भिन्नो न वा' इति सशयो जायते न वा । नेति वदन् सर्वानुभवसिद्धापलापी न वैदिको नापि लौकिक इत्युपे क्षणीय एव स्यात् । आद्ये संसारध्वसविशिष्टस्य तदुत्तरकालविशिष्टस्य च भेदतन्निषेधकवाक्याभ्या धर्मितया स्फुरणेन तत्रैव संशयोदयेन तत्रैवान्यतरजिज्ञासाया तादृशविमतिविषयतावच्छेदकमुक्तत्वमुक्तिकालावच्छिन्नत्वादि विशिष्टे भेदसाधने सिद्धसाधनानवकाशात् ।

ननु बन्धध्वसविशिष्टे भेदस्तु मयाभ्युपगम्यते । तदुत्तरकालस्यानभ्युपगमात्तदवच्छिन्नस्य पक्षता त्वप्रसिद्ध्या न युक्तेत्युक्तमेवेति चेन्न । तथात्वे विशिष्टे भेदाङ्गीकारे मम साधर्म्यमागता इति वाक्यस्य परम साम्यमिति वाक्यस्य च 'साधर्म्यं परमसाम्यञ्च अभेद एव' इति, एव 'सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता' इति वाक्यस्य

सोऽश्नुते सकलान् कामान् क्रमेण च सुरर्षभा ।
विदितब्रह्मरूपेण जीवन्मुक्तो न संशय ॥

इत्यादिस्कान्दवाक्यमुदाहृत्य ब्रह्मस्वरूपेण सर्वभोगानुभवपरतया व्याख्यान 'आनन्दमयमात्मानमुपसक्रम्य' इत्यत्र अनतिक्रमार्थकत्वेन उपेत्यस्य व्याख्यान व्यर्थमापद्येत । न च भेदान्तराङ्गीकारेऽपि ब्रह्मभेदस्यानङ्गीकारात् तत्परतया प्रतीयमानाना वाक्याना युक्त व्याख्यानमिति वाच्यम् । अज्ञानस्यैवात्यन्तिकनाशे ब्रह्मभेदस्येव भेदा-न्तरस्यापि स्थित्ययोगात् । भेदान्तरविशिष्टस्य ब्रह्मतादात्म्यायोगाच्च । स्वरूपैक्यविवक्षा तु ससारदशायामप्यवि-शिष्टत्वेन मुक्तौ विशिष्य न घटते ।

किञ्चोक्तवाक्ये ब्रह्मभेदप्रतिपादने किं तव गतम् । ब्रह्मैव भवतीत्यादिवाक्यानां प्रामाण्यमिति चेत्तर्हि मुक्तस्य तु न भेदोऽस्तीत्यादिवाक्यप्रामाण्यविघातकस्य भेदान्तरस्य कथमङ्गीकार । न च तद्वाक्याना भेदनिषेध-

द्वारा चिन्मात्रे वा स्वसमानविषयकेत्यादिनियमान्तरे वा तात्पर्यम् । तात्पर्यविषयीभूतार्थाविरोधात्तदङ्गीकार इति वाच्यम् । तर्हि ब्रह्मैव भवतीत्यादिवाक्यानामपि तथैव गतिरिति कुत उक्तश्रुतीना व्याख्यानान्तरम् । तस्मान्मुक्त त्वविशिष्टे भेदो नास्तीत्येव यथाश्रुत तव मतम् । यथा नेह नानेत्यादिवाक्याना द्वैतसामान्याभावप्रतिपादनद्वारा चिन्मात्रपरत्व, तत्त्वमसीत्यादिवाक्याना लक्षणया अभेदबोधद्वारा चिन्मात्रपरत्व, तद्वारकचिद्बोधस्य द्वैतधीविरोधित्व स्वीक्रियते, तदर्थं द्वारीभूतबोधेऽपि तद्वाक्याना तात्पर्यं, तद्विषयघटितव्यावहारिकप्रामाण्य, तेषा तादृशावान्तरबोधे तात्पर्यसिद्धये मिथ्यात्वानुमानाना अभेदानुमानाना प्रवृत्ति , 'नेह नानेत्यादिश्रुत्यर्थे विवदमान प्रति साध्यान्तरमाह' इति त्वदीयोक्ते । तद्वन्मुक्तभेदनिषेधकवाक्यानामपि मुक्तत्वविशिष्टे भेदनिषेधे तात्पर्यं, तद्बोध द्वारा चिद्बोधे वा फलत सर्वनिषेधकनियमे वा तात्पर्यं स्वीकार्यम् । अवान्तरतात्पर्यविषयीभूतार्थे व्यावहारिक प्रामाण्यनिर्वाहाय मुक्तत्वविशिष्टे भेदाभाव , यत्र त्वस्येत्युक्तमुक्त्यवस्था, तत परमित्यादिनोक्त भेदसामान्यानवच्छेदको ज्ञाननिवृत्त्यवच्छेदकश्च काल सर्वोऽपि बद्धपुरुषाज्ञानकल्पितो व्यवहारदशायामङ्गीकार्य । उक्तञ्चाद्वैतचन्द्रिकायां जडत्वहेतुनिरूपणे 'बद्धपुरुषकल्पितस्य मुक्तिकालस्याभ्युपगमात्' इति ।

इत्थञ्च यथा श्रुत्यवान्तरतात्पर्यविषयीभूतानिर्वचनीयत्वरूपमिथ्यात्वसत्यत्वकोटिकविप्रतिपत्त्या त्वया अनिर्वचनीयत्वेनाभ्युपगते जगति आवयोस्तत्साधनमुपपद्यते तथा आवरणध्वंसविशिष्टे तदवच्छेदककालावच्छिन्ने तदुत्तरकालावच्छिन्ने वोक्तरीत्या त्वन्मतेनापि सिद्धेरुक्तयुक्त्या भेदाभेदकोटिका विप्रतिपत्तिर्युक्तैव । परन्तु विप्रतिपत्तिविशेष्यीभूत विशिष्ट वस्तु भवतोऽनिर्वचनीय मम भास्करस्य वा सत्यम् । तत्र भेदसाधनमात्रेणास्मदिष्टसिद्धि: । सोपपत्तिकभेदश्रुतिविरोधेन तन्निषेधकश्रुतीना मन्मतरीत्या मिथ्यात्वश्रुतीनामिवार्थान्तरपरत्वे द्वारीभूतबोधासिद्ध्या त्वदभिमतनिष्कृष्टार्थस्याप्यसिद्ध्या त्वत्पराजयोऽपि जात इति चैतन्ये भेदोऽभ्युपेयते । किञ्चिद्विशिष्टे मया भेदोऽभ्युपगम्यत इति त्वत्प्रलापस्य क्वोपयोग ।

यद्वा अस्तु भवदभ्युपगमो यथा तथा । तथापि उक्तश्रुतिविगानेन सन्देहे त्वन्मतच्छायामात्रानुसरणेन च भेदकोटिनिषेधकतया च शङ्काया प्राप्ताया भेदनिषेधकश्रुतीना पराभिमतवाक्यार्थविघटनद्वारा शिष्याणा तत्वनिर्णयाय सामान्यतस्तद्वाक्यस्थनञर्थप्रतियोगिसमर्पकपदघटितन्यायप्रयोग कृत । इत्थञ्च यथाश्रुतश्रुत्यनुरोधेन विप्रतिपत्तौ यथाश्रुतपरमेव विमतो भिन्न इति न्यायवाक्यम् । श्रुतीना त्वदभिमतनिष्कृष्टार्थादरे तु सोऽर्थो यद्युक्तनियमरूप , नियमस्य लोकरीत्या सिद्धत्वेऽपि आत्मसाक्षात्कारात्माज्ञाननिवृत्त्यो कार्यकारणभावबोधकश्रुतीनामिव लौकिकार्थस्यैवानुवादकत्वसम्भवात् । असिद्धत्वे तद्बोधायैव प्रवृत्तिसम्भवात् । तदा तत्वज्ञानाधिकरणक्षण. स्ववृत्ति यत्तत्वज्ञान तत्समानविषयकतत्समानाधिकरणाज्ञानतत्प्रयुक्तदृश्याधिकरणकालपूर्वत्वाभाववान्न वेत्येव विप्रतिपत्तौ तद्भावकोटिसाधकानुमाने मूलवाक्यस्य तात्पर्यमस्तु । उभयथाऽपि न भवत सिद्धसाधनताया अवकाशः ।

न च भावरूपाज्ञानस्य त्वन्मतेऽप्रसिद्ध्या अभावकोट्यप्रसिद्धिः । प्रकृतेरेवाज्ञानत्वेन त्वया परिभाषितत्वान्न तदसिद्धिरित्युच्यते । तदापि तस्य स्वविषयकताया भवताऽनङ्गीकृतत्वाद्भावकोट्यप्रसिद्धिरेवेति वाच्यम् । नैयायिकादीन्प्रति विप्रतिपत्तिवेलाया प्रतियोग्यप्रसिद्ध्या अभावरूपत्वदभिमतकोट्यप्रसिद्धिपरिहाराय मां प्रति सिद्धसाधनतापरिहाराय च तत्वज्ञानस्य साक्षात्स्वविरोधित्वप्रयुक्तदृश्याधिकरणकालपूर्वत्वाभावनियम स्वीकार्य । विरोधित्व स्वजन्यनाशप्रतियोगित्वम् । तच्च प्रागभावस्य प्रतियोगिनाश्यत्वमते प्रागभावे प्रसिद्धमित्यादिरीत्या[1] कथञ्चिन्निर्वाह्यम् । तथा च सुलभैव मम भावकोटिप्रसिद्धिः ।

यद्वा [2]आत्मसाक्षात्कारत्वावच्छेदेन भेदत्वेन वा दृश्यत्वेन वा भेद निवेश्य तदधिकरणकालपूर्ववृत्तित्वकोटिका सामानाधिकरण्येन तदभावकोटिका विप्रतिपत्तिः । तत्र भावकोटिस्तत्ववादिना । अभावकोटिर्मायावादिनाम् । कस्मिंश्चित्साक्षात्कारे तत्सिद्धिमात्रेण तदभिमतार्थसिद्धेः । हेतुवाक्यस्यापि तु स्वरूपबन्धध्वंसाधिकरणकालवृत्तित्वस्य वा ध्वसाधिकरणकालवृत्तित्वस्य वा स्वध्वंसाधिकरणकालवृत्तित्वसम्बन्धेन स्वाधिकरणकालवृत्तित्वसम्बन्धेन वा बन्धस्य ध्वसस्य वा हेतुत्वे तात्पर्यम् । तत्वज्ञानस्य सर्वदृश्योच्छेदरूपतया तत्वज्ञानक्षणमादाय चरमसाक्षात्कारे अन्यत्र तु स्वान्तरध्वसमादाय पक्षतावच्छेदकावच्छेदेन हेतुरनपवादः ।

यदि च चरमतत्वज्ञानस्य स्वातिरिक्तसर्वदृश्योच्छेदरूपत्व तद्द्वितीयक्षणस्य तदवच्छिन्नस्य स्वस्य (तत्वज्ञानस्य) वा तत्वज्ञानध्वसत्वमिति मतेन तत्वज्ञानस्य क्षणद्वयवृत्तित्वमास्थीयते तदा दृश्यत्वेन भेदनिवेशघटितसाध्यस्य तत्वज्ञानद्वितीयक्षणवृत्ति तदेवोपादाय सिद्धसाधनतापरिहाराय स्वाधिकरणकालपूर्ववृत्तितत्वज्ञानाधिकरणक्षणसामान्यकत्वसम्बन्धेन दृश्य दृश्याधिकरणक्षणपूर्वक्षणवृत्तित्वं वा साध्यम् ।

यदि च अवच्छेदकावच्छेदेन साध्यसिद्धावप्यंशत सिद्धसाधनता दोष एव । अन्यथा यथाश्रुतरीतौ आत्मत्वावच्छेदेन मुक्तत्वावच्छेदेन वा साध्यासिद्ध्या निगडमुक्तत्वादिकमादाय सिद्धसाधनतावारणसम्भवे संसारान्मुक्तपर्यन्तं पक्षतानुसरणं व्यर्थं स्यात् । तथा च निष्कृष्टकल्पेऽपि तन्मतानुसरणमेवोचितम् । इत्थञ्चात्मसाक्षात्कारस्य तत्त्वेनैव निविष्टत्वात् पक्षकोटिनिविष्टैतत्कालिकात्मप्रत्यक्षमादाय सिद्धसाधनतेत्युच्यते तदा स्वसमानाधिकरणदु स्वप्रागभावासमानकालीनसाक्षात्कारत्वेन वा स्वोपादानभूतमन परिणामप्रागभावकालिकं यद्यत् तत्तद्भेदवत्साक्षात्कारत्वेन वा चरमसाक्षात्कारस्यैव पक्षत्वान्न सिद्धसाधनतादेरवकाशः ।

अत्र पूर्वकल्पे एतत्कल्पे वा बहुजीववादेन सिद्धसाधनतावारणाय स्वसामानाधिकरण्यं दृश्ये भेदे वा निवेश्य परिष्कार्यम् । स्वसमानाधिकरण्यञ्च स्वसाक्षिनिष्ठत्वम् । अत सिद्धान्ते आत्मनिष्ठभेदादे. साक्षात्काराश्रयमनस्सवृत्तित्वेऽपि न क्षतिः ।

---

[1] प्रागभावप्रयुक्तत्व ज्ञायमानस्यानुमितिकारणतामते प्रागभावसत्ताकालीनतल्लिङ्गकानुमितौ सम्पाद्यम् । प्रागभावस्य प्रतियोगिनाश्यत्वमेव । न तु तज्जनकत्वमिति मतमनुसर्तव्यम् । अन्यथा तत्वज्ञानस्य स्वविरोधिप्रागभावप्रयुक्तत्वान्नियमभङ्गाप्तेरित्याशय. ।

[2] आत्मसाक्षात्कारत्वावच्छेदेनाऽऽत्मसाक्षात्कारधर्मिकेत्यर्थः ।

एतेन 'आत्मसाक्षात्कारस्यानवच्छिन्नात्मनिष्ठविषयताकत्वेन पक्षत्वे तत्त्ववादिना तादृशज्ञानानभ्युपगमात्पक्षासिद्धि । 'दृष्ट्वैव त मुच्यते' इत्यादिश्रुतितात्पर्यविषयज्ञानत्वेन पक्षत्वे तत्त्ववादिमते अपरोक्षज्ञानानन्तरमपि भगवत्प्रसादविलम्बेन मुक्तिविलम्बात्ससारकालीनतादृशज्ञाने उक्तसाध्यसत्त्वेऽपि मुक्तौ कालस्य मेदस्याप्यसिद्धया स्वपक्षासिद्धि' इति परास्तम् । मुक्त्यव्यवहितप्राक्क्षणवृत्तीनामेव पक्षत्वात् । संसारकालीनस्वरूपज्ञानवारणाय जन्यत्वमात्रमुपादेयम् ।

यदि चोक्तश्रुतीना तदनुग्राहकयुक्तीनाञ्चोक्तनियमपरत्वमपि नाङ्गीकुरुषे तर्हि भवान् तासा यादृशार्थे तात्पर्यं यत्प्रयोजनकत्वं मनुतेऽस्मदीयन्यायस्यापि तद्विरोध्यर्थसाधन 'तद्विरोधिप्रयोजनकत्वञ्चानुमतमिति न कथञ्चिदपि सिद्धसाधनतादेरवकाश इति दिक् ।

केचित्तु 'यदि स्वाभ्युपगमेनैव वैयात्यात्सिद्धसाधनता ब्रवीषि तर्हि त्वन्मते तस्या अपि मिथ्यात्वात्तदभावो वर्तत इति सन्तोष्टव्यम् । न च प्रतियोगिव्यधिकरणसिद्धसाधनत्वाभावोऽपेक्षित इति वाच्यम् । तस्यापि मन्दारोपितस्य सत्त्वात् । न च तत्र व्यावहारिकत्व प्रातिभासिकान्यत्व वाऽपेक्षितमिति वाच्यम् । तस्यापि मन्दबुद्धिकल्पितस्य सत्त्वात्' इत्याहु ।

वस्तुतस्तु यथा परमते शुक्तिरूप्यादावनिर्वचनीयत्वसिद्ध्यनन्तरमेव विमत मिथ्येत्यनुमानस्य प्रवृत्ति. । ग्रन्थे प्रथमतस्तदनुक्तिपूर्वमेतदनुमानोक्तिस्तु तदसङ्गतत्वभ्रमनिरासायैतदनुमानसङ्गतत्वप्रदर्शनार्थं । तथैवैतदनुमानस्याप्यनिर्वचनीयपदार्थस्य जगदनिर्वचनीयत्वस्य च निराकरणोत्तर मुक्तभेदमात्रे उक्तरीत्या विप्रतिपत्त्या प्रवृत्ति. । उत्तरत्र शिष्यान् प्रति तदपि बोधयितु कथञ्चिदेतदनुमानसङ्गतत्वेनासङ्गतिशङ्कापरिहाराय ग्रन्थ प्रवृत्त । परोपि स्वग्रन्थेऽनिर्वचनीयसिद्ध्युपसंहारे वक्ष्यति 'एवमनिर्वचनीये सिद्धे सिद्धसाधनम्' इति । ततश्चानिर्वचनीय वादिरीत्या चिन्मात्रे भेदमादाय न सिद्धसाधनतावकाश । तद्यात्ममात्रपक्षीकरणेपि व्यावहारिकभेदेन परेण सिद्धसाधनोद्भावनस्य कर्तुमशक्यत्वात्पूर्वोक्तासङ्गतिरिति न शङ्क्यम् । तथात्वेऽपि मुक्ते भेदे विवादे आत्ममात्रे भेदसाधनस्यानाकाङ्क्षिताभिधानरूपासङ्गते । सिद्धसाधनतापि सिद्धान्ते तन्मुखेनैव दोष इति युक्तमुत्पश्याम ।

केचित्तु 'विनश्यदवस्थापन्नबन्धाधिकरणक्षणावच्छिन्नात्मन्यद्वैतवादिनां चरमक्षणत्वेन योऽभिमतस्तदवच्छिन्नात्मपर्यवसिते स्वाधिकरणकालप्रागभावाधिकरणक्षणावच्छिन्नत्वविशिष्टविशेषणतासम्बन्धेन भेद· साध्यतया भिमतः । उक्तानुमान मुक्तौ काल भेदश्च विना न पर्यवस्यतीति कालभेदोभयसिद्धि' इत्याहुः ।

तच्चिन्त्यम् । अद्वैतवाद्यभिमतचरमक्षणस्यैव स्वाभिमतचरमक्षणत्वे मानाभावादद्वैतवादिना यदीदानीन्तनक्षण एव चरमत्वेन ग्रहविषयस्तदा तदवच्छिन्ने उक्तसम्बन्धेन साध्यसिद्धावपि स्वमते मुक्तौ भेदासिद्धि । न चेष्टा-

---

1 श्रुत्यादीना भेदभ्रमनिवर्तकतया अखण्डार्थबोधनिर्वाहकत्वे अनुमानस्याप्यभेदभ्रमनिवर्तकत्वद्वारा सखण्डार्थबोधकत्वं स्यात् । अविशेषादिति भाव ।

पत्ति । एतत्कथाया वादरूपत्वस्योक्तत्वेन तत्वनिर्णयाभावे तद्रूपत्वासिद्धयेष्टापत्तेरयोगात् । अन्यथा वितण्डात्वापत्तेः ।

किञ्चाद्वैतवादिनापि बद्धपुरुषकल्पितस्योक्तसाध्यस्योक्तपक्षेऽङ्गीकारात्सिद्धसाधनस्यापरिहारश्च । यथाश्रुतार्थदशायामेवोक्तपक्षानुसरणे 'संसारान्मुक्तो विवक्ष्यते' इति टीकाविरोधो मुक्तत्वहेतो कण्ठत एव मूलोक्तस्य यथाश्रुत एव परित्यागश्च स्फुट । तस्माद्विमतपदोपरि भारेणैवास्मदुक्तरीत्या सिद्धसाधनता परिहरणीया । किं सिद्धान्तानभिमतोक्तसम्बन्धघटितसाध्यादरेणेत्यलम् ।

केचित्तु 'अज्ञानरूपबन्धध्वंसरूपमुक्तत्वमेवोपलक्षणविधया पक्षतावच्छेदकम् । यथा विशेषणविधयोद्देश्यतावच्छेदकत्वे उद्देश्यतावच्छेदकविधेययो समानकालिकत्व भासते तथोपलक्षणविधयाऽवच्छेदकत्वस्थले उद्देश्यतावच्छेदकोत्तरकालिकत्व विधेये भासत इत्यभ्युपगम्यते । न च समानकालिकत्वाभानमात्रेण विशिष्टोपलक्षितस्थलयोर्वैलक्षण्यसम्भवात्तद्भानमप्रामाणिकमिति वाच्यम् । उपलक्षितस्थले भासमानोत्तरकालिकत्वाभानमात्रेण विशेषणतया भानस्थले वैलक्षण्यसम्भवे तत्र समानकालिकत्वभाने मानाभाव इति युक्तेस्तौल्यात् । न च तत्रावच्छेद्यावच्छेदकभावो भासत इति वाच्यम् । समानकालिकत्वातिरिक्तावच्छेद्यावच्छेदकभावे मानाभावात् । न चोपलक्षितस्थले धर्मितावच्छेदकोत्तरकालिकत्वभाने भाविरक्तरूपविवक्षया रक्तोपलक्षितघटबोधतात्पर्येण रक्तो घटस्तिष्ठति इतीदानीन्तनवाक्यजज्ञानस्याप्रमात्वापत्तिः । इष्टापत्ते । उक्तञ्च त्वदीयैरेव

'निवृत्तिरात्मा मोहस्य ज्ञानत्वेनोपलक्षित' ।'

इति वार्तिकविवरणावसरे भाविज्ञानमुपादायाऽऽत्मन इदानीं अज्ञाननिवृत्तिव्यवहारवारणाय 'स्वपूर्वकाले स्वस्योपलक्षणत्व नास्त्येव । न हि पाककरणपूर्वकाले तस्योपलक्षणत्वतात्पर्येण पाचक इति प्रयोग ' इति । यदि तादृशोऽपि प्रयोग प्रामाणिकस्तदा समानकालिकत्वोत्तरकालिकत्वयोरभानमात्रमिति वा तत्र तत्प्रागभावकालीनत्वरूपमुपलक्षणत्व वा भासत इत्यभ्युपेयम् ।

नियामकविशेषस्तु शब्दस्थले तथा तथा तात्पर्यग्रहरूप । अन्यत्र बाधाद्यभावपरामर्शेन्द्रियसन्निकर्षादिरूप । तथा चोक्तपक्षतावच्छेदकोपलक्षिते भेदावगाहिन्यामनुमितौ मुक्त्युत्तरकालिकत्व भेदे भासते । अतो न सिद्धसाधनताऽवकाश । न च तत्र पूर्वकालिकत्वमेव कुतो न भासत इति वाच्यम् । शक्यार्थबाधग्रहोत्तरमेव लक्षणाप्रतिसन्धानस्येवानुभवबलेन सवत्रोत्तरकालिकत्वघटितोपलक्षणत्वबाधनिर्णयोत्तरमेव पूर्वकालिकत्वघटितोपलक्षणत्व भासते । प्रकृते च बाधाभावात्पूर्वकालिकत्व न भासते । किन्तूत्तरकालिकत्वमेव भासते' इत्याहुः ।

यच्च 'प्रमाणाना पारमार्थिकसत्तावगाहित्वस्वाभाव्याद्भेदे पारमार्थिकत्व भासते । अतो न सिद्धसाधनत्वमनुमानस्य' इति तत्तु आत्मत्वाद्यवच्छिन्नपक्षपरित्यागे बीजाभावप्रसङ्गाच्चिन्त्यमिति ।

नापि तत्वज्ञानस्येत्यादिभवदुक्तनियमोऽप्युपपन्नः । तथा हि, किं शुक्तिज्ञानादिसाधारणरूपेणायं नियमः किं वोक्तश्रुत्यादिकमवलम्ब्यात्मतत्वज्ञानमात्रस्य । नाद्यः । किमिदं तत्वज्ञानत्वं प्रमात्वमिति चेत् तदेव

निर्वाच्यम् । तद्वति तदवगाहित्वं तदिति चेत् 'इदं रजतम्' इत्यादिज्ञानानामपि तादात्म्यसम्बन्धेन रजतादिमत्त्वेव रजताद्यवगाहित्वात्प्रमात्वापत्त्या तत्र व्याप्यसत्त्वेन स्वसमानविषयकाज्ञानरूपव्यापकाप्रसिद्ध्या व्यभिचारात् । निष्प्रकारकात्मज्ञानासंग्रहश्च । नाप्यबाधितार्थविषयकत्वम् । किञ्चित्कालाबाधितार्थविषयकत्वस्य शुक्तिरूप्यादिज्ञानसाधारण्यात् । सर्वथाप्यबाधितार्थविषयकत्वस्य शुक्तिज्ञानेप्यभावात् । न च व्यवहारकालाबाध्यार्थावगाहित्वं ब्रह्मज्ञानेतराबाध्यत्वपर्यवसितम् । तत् सर्वथाऽबाध्यस्यात्मनो व्यवहारकालाबाध्यत्वमपि वर्तत इति न तज्ज्ञानासग्रह इति वाच्यम् । देहात्मतादात्म्यस्य ब्रह्मसाक्षात्कारपूर्वमसञ्जातबाधभ्रमविषयस्यापि पदार्थस्य तथात्वापत्त्या तद्भ्रमे व्यभिचारात् ।

नापि तूलाज्ञानाजन्यविषयत्वं तत् । तूलाज्ञानत्वं यदि ब्रह्मज्ञानेतरबाध्यत्वं पूर्वोक्तपदार्थभ्रमजनकाज्ञानानामपि [1]तथात्वापत्त्या तज्जन्यपदार्थावगाहिभ्रमेपि प्रमात्वापत्त्या तत्राज्ञाननिवर्तकत्वापातेन व्यभिचारात् । तूलाज्ञानत्वमविद्यात्वव्याप्यजातिरिति चेत् अविद्यात्वजातावेव मानाभावेन तद्व्याप्यजातौ सुतरां मानाभावात् । तूलाज्ञाननिष्ठस्य वैजात्यस्याङ्गीकारेपि इदं रजतमिति भ्रमोत्तरं यत्र नेदं रजतमिति बाधो जातः पुनर्द्वितीयदिवसे इदं रजतमिति भ्रमो जायते तत्र प्रथमदिवसोत्पन्नबाधप्रमाया व्यभिचारः । द्वितीयदिवसे जायमानभ्रमानुरोधेन तत्राज्ञानान्तरस्यावश्यकत्वात्तस्य स्वसमानविषयकत्वात्स्वसामानाधिकरण्याच्च । एवं स्वाप्नभ्रमोत्तरात्मप्रबोधे द्वितीयदिवसीयस्वप्नभ्रमजनकस्वसमानविषयकस्वसमानाधिकरणाज्ञान[2]कालेपि वर्तमाने व्यभिचारश्च । न हि पूर्वोत्तरदिवसीयस्वाप्नभ्रमजनकाज्ञानानां विषयवैलक्षण्यमस्ति । मानाभावात् । दुर्निरूपत्वाच्च । किञ्च स्वप्ने दत्तमौक्तिकादीनां कदाचित्प्रबोधानन्तरमप्युपलभ्यमानत्वेनोक्तनियमे व्यभिचारः । न च तेषां न स्वप्नहेत्वज्ञानप्रयुक्तत्वम् । किन्तु मूलाज्ञानप्रयुक्तत्वमेवेति वाच्यम् । बाह्यसामग्रीनैरपेक्ष्येण जातानां मूलाज्ञानहेतुकत्वे मानाभावात् ।

किं चाज्ञानस्य ज्ञानसमानविषयकत्वं यदि ज्ञानविषयविषयकत्वं तदा ज्ञानं वृत्तिर्वा तत्प्रतिबिम्बितचैतन्यं वा । नाद्यः । एतत्पक्षे विषयता किमाकाराख्या गौणी उत तादात्म्यरूपा मुख्या । नाद्य । शुक्तित्वादिप्रकारकसाक्षात्कारीयाऽऽकाराख्यगौणविषयताया शुक्त्यादावेव सत्त्वेन तदवच्छिन्नचिद्विषयकाज्ञानीयाकाराख्यविषयतायास्तत्रासत्त्वेन तयोः समानविषयकत्वानुपपत्तेः । न द्वितीयः । वृत्तितादात्म्यस्य शुक्त्यवच्छिन्नचित्यनङ्गीकारेण तद्दोषतादवस्थ्यात् । नापि वृत्तिप्रतिबिम्बितचिदादिरूपा । तदीयतादात्म्यरूपविषयताया श्चित्यभावेन चिद्विषयकाज्ञानस्य तत्समानविषयकत्वायोगात् । अथ समानविषयकत्वं स्वप्रकारताविशिष्टा याऽवच्छेदकता तन्निरूपितावच्छेदकताकविषयताकत्वम् । अवच्छेदकताया प्रकारतावैशिष्ट्यं च स्वसामानाधिकरण्यस्वसजातीयत्वोभयसम्बन्धेन । साजात्यं च स्ववृत्त्यवच्छिन्नत्वानवच्छिन्नत्वान्यतररूपेण । एवं च शुक्तित्वप्रकारकज्ञानीय-

---

1 अतथात्वापत्त्या इति पाठेन भाव्यमिति भाति ।        2 पूर्वकालेपि इति पाठेन भाव्यमिति भाति ।

शुक्तित्वनिष्ठप्रकारतायाः शुक्तिनिष्ठचैतन्यवृत्त्यज्ञानविषयतावच्छेदकतानिरूपितशुक्तित्वनिष्ठावच्छेदकतायामुभय-सम्बन्धेन सत्त्वाच्छुक्तित्वविशिष्टावच्छिन्नचिन्निष्ठविषयताकाज्ञानशुक्तिज्ञानयो. समानविषयकत्वमिति चेत् तर्हि ब्रह्मज्ञानस्य निष्प्रकारकत्वेन चिन्निष्ठमूलाज्ञानसम्बन्धस्यानवच्छिन्नत्वेन च तत्र व्यापकाप्रसिद्ध्या व्यभिचार । व्याप्यकोटौ सप्रकारत्वनिवेशे ब्रह्मज्ञानस्य सोय देवदत्त इत्यादिवाक्यजन्यबोधाना चासंग्रह । पर्वतस्तेजस्वीति ज्ञानस्य वह्नित्वविशिष्टवह्निमत्पर्वतरूपविशिष्टविषयावच्छिन्नचिद्विषयकाज्ञानस्योक्तसमानविषयकत्वापत्त्या निवर्त्यनिवर्तकभावप्रसङ्ग ।

किञ्चाभानापादकाज्ञानस्य विषयावच्छिन्नचिदाश्रितस्य प्रमात्राश्रितज्ञानसामानाधिकरण्यानुपपत्तिः । चक्षुरादिना बहिर्निर्गतान्त.करणवृत्तेर्विषयावच्छिन्नचिदाश्रितत्वमङ्गीकृत्य सामानाधिकरण्य यदि ब्रूपे तदा चैत्रीयाज्ञानस्य मैत्रज्ञानसामानाधिकरण्यापत्त्या तन्निवेशस्याव्यावर्तकता । अज्ञानस्य चैत्रादिनिरूपितत्व स्वीकृत्य सामानाधिकरण्यस्थाने स्वाश्रयनिरूपितत्व निवेश्यते तदा [1]प्रमातृगताज्ञानस्य सामानाधिकरण्येनैवोपपत्त्या निष्प्रामाणिकस्य प्रमातृनिरूपितत्वस्याभावेन तस्य निवृत्त्यसिद्धि । तत्र नियमान्तरस्वीकारेऽपि एकस्यैव पुरुषस्य सजातीयबहुभ्रमजनकनानाऽज्ञानस्थले पूर्वोक्तदोषो दुर्वार ।

एतेन 'ज्ञानाज्ञानयोराकाराख्यविषयतैकैव । जडेपि सा स्वीक्रियते । तथा च स्वनिरूपितविषयतानिरूपकत्वमेव समानविषयकत्वम्' इत्यपि परास्तम् । उक्तव्यभिचारस्य दुर्वारत्वात् ।

यत्तु 'तत्तज्ज्ञानाना तत्तदज्ञाननाशकत्वोपगमात् तत्वज्ञानाना स्वनिवर्त्यत्वमज्ञाने निवेश्य पूर्वोक्तनियमाभ्युपगमान्न कुत्रापि व्यभिचार ' इति । तदसत् । स्वसामानाधिकरण्यस्वसमानविषयकत्वयोर्वैयर्थ्यापत्ते । किञ्च दृश्येषु अज्ञानप्रयुक्तत्व कीदृशं नियमे निविष्टम् । तदुपादानकत्व वा साक्षात्तज्जन्यत्व वा साक्षात्परम्परासाधारणजन्यत्व वा स्वरूपसम्बन्धविशेषात्मकं वा । नाद्य । अनादिदृश्याना कालरूपाविद्याचित्सम्बन्धजीवब्रह्मविभागादीना मुक्तावभावस्योक्तनियमबलादसिद्धे । अत एव न द्वितीय । आत्मापरोक्षानन्तरमाविद्यकपदार्थविलयेन संस्कारोपादानकपदार्थानामभ्युपगमात्तमादाय मुक्तौ दृश्यसामान्योच्छेदासिद्ध्या पक्षद्वयेऽप्युक्तनियमाङ्गीकारवैयर्थ्यस्य दुर्वारत्वाच्च । द्वितीयपक्षे ज्ञायमानस्य लिङ्गस्यानुमितिकारणतामते चैत्रीयशुक्त्यज्ञानलिङ्गकमैत्रीयानुमितेश्चैत्रीयशुक्तिसाक्षात्कारोत्तरमपि सत्त्वाद्व्यभिचारश्च । न तृतीय । पूर्वोक्तदोषानिस्तारात् । सर्पभ्रमोत्थभयादीना परम्परया रज्ज्वज्ञानजन्याना रज्जुसाक्षात्कारानन्तरमपि सत्त्वाद्व्यभिचाराच्च । नापि चतुर्थ । अनादिदृश्याना साक्षाद्वा परम्परया वा जन्यत्वाभावेपि स्वरूपसम्बन्धरूपप्रयुक्तत्वस्यानादिसाधारणस्य कथञ्चिदभ्युपगमेन तेषा सङ्ग्रहेपि तृतीयपक्षोक्तव्यभिचारस्य दुर्वारत्वात् । भयादीनामपि 'रज्ज्वज्ञानान्ममेद सर्वमनिष्टमभूत्' इति प्रतीतिसाक्षिकस्वरूपसम्बन्धरूपप्रयुक्तत्वानपायात् । अविद्यासंस्कारोपादानकपदार्थेष्वविद्याप्रयुक्तत्वे मानाभावेन तदुच्छेदासिद्ध्यापत्तेश्च ।

---

[1] प्रमातृगतज्ञानसामानाधिकरण्येनैवोपपत्त्या इति पाठेन भाव्यमिति भाति ।

यत्तु 'अनादिदृश्यानामविद्याप्रयुक्तत्वमविद्यानाशाधीननाशप्रतियोगित्वम्। उक्तभयादीनां तन्नास्तीति न व्यभिचार.' इति। तत्तुच्छम्। शुद्धाद्वैतपक्षस्यैवेदानीमादृततया तत्राविद्यानाशादनादिदृश्यनाशोपगमे नाशस्य नाशानभ्युपगमेऽद्वैतहानि.। आत्मनस्तद्रूपत्वकल्पनेऽपि तत्र कल्पितनाशत्वानुच्छेदे स एव दोष। नाशस्य नाशान्तरकल्पनेऽप्रामाणिकनाशधाराकल्पनायामनवस्था। 'आद्यक्षणावच्छिन्नतत्वज्ञानस्याज्ञाननाशत्व द्वितीयक्षणावच्छिन्नस्य तस्यैव साधनादिसाधारणसर्वदृश्योच्छेदत्वेन जन्यत्वमित्यङ्गीकारस्य तत्वज्ञानस्याज्ञानानाशकत्व प्रसङ्गेन हेयत्वम्' इति स्वयमेवाभिधायोक्तनियमतात्पर्यकत्वस्य श्रुत्यादीनामादृततया तत्रानादिदृश्यनाशेष्वज्ञान-नाशकारणत्वप्रक्रियाया एव त्यक्तत्वात्तादृशनियमशरीरेऽज्ञाननाशप्रयुक्तनाशप्रतियोगित्वरूपप्रयुक्तत्वस्य निवेश-यितुमशक्यत्वात्। तस्माल्लोकरीत्यैवात्र नियम इति न युज्यते।

नाप्यात्मसाक्षात्कारस्थल एव श्रुत्यादिबलात् नियम इति प्राग्विकल्पितद्वितीयपक्ष साधु। अत्राप्य विद्यासंस्काराङ्गीकारपक्षेण नियमवैयर्थ्यदोषस्य दुर्वारत्वात्।

अपि चायं नियमो नानाज्ञानभेदेन जीवनानात्वपक्ष एव वाच्य। एकाज्ञानैकजीवपक्षे आत्मसाक्षात्कारक्षणस्य क्षणपूर्वत्वाभावमात्रस्वीकारेण सामञ्जस्ये नियमस्य तत्र व्यभिचारवारकाणां स्वसमानाधिकरणेत्यादि विशेषणानां च वैयर्थ्यात्। एवञ्च नानाज्ञानपक्षे नानाजीवानामेव जगदुपादानतया शुकस्य तत्वसाक्षात्कारेण स्वाज्ञानपरिकल्पितनिखिलजगत्सम्बन्धाभावसिद्धावपि मैत्रादिपरिकल्पितकालादिसम्बन्धशरीरादिसम्बन्धानां प्रपञ्च-स्येश्वरमायाकल्पितत्वपक्षे तत्कल्पितानाञ्च तत्रानपगमात्कथं तत्र मुक्तिसिद्धिरुक्तनियमेन। स्वाविद्यैव स्वस्य किञ्चित्सम्बन्धं सम्पादयति। तदपगमे तु केनापि स्वस्य सम्बन्धाभावान्मुक्तत्वं घटत इत्युच्यते यदि तर्हि मुक्ते कथं भेदाङ्गीकारेण तव सिद्धसाधनोद्भावनावकाश। किञ्च लोकसाधारणे असाधारणे वा एकजीववादे बहुजीववादे वा सर्वेषु पक्षेषु तत्वसाक्षात्कारक्षणस्य दृश्याधिकरणक्षणपूर्वत्वाभावो नाम दृश्याधिकरणक्षणवृत्तिध्व-सप्रतियोगित्वाभावो वा दृश्याधिकरणक्षणप्रागभावानधिकरणत्व वा। आद्ये चरमक्षणस्य नित्यतया पर्यवसानम्। द्वितीयेपि क्षणान्तरानुत्पत्त्या पर्यवसानम्। न च तस्य नित्यत्वे तस्य क्षणत्वानुपपत्तिरिति वाच्यम्। त्वयापि चरमक्षणस्योत्तरत्र नाशानङ्गीकारेण तवापि तद्दोषतादवस्थ्यात्। तत्वज्ञानोत्तर दृश्यानां ब्रह्मवत्कालासम्बद्धा-नामेव सत्तासम्भवे पक्षद्वयेपि मुक्तौ दृश्यमात्रोच्छेदासिद्धेश्चेत्यन्यत्र विस्तरः। तस्मादुक्तनियमेन मुक्तौ कालान-भ्युपगमे व्याहतिपरिहारोऽसङ्गत एवेति।

यदपि परेण प्रलपितं 'मुक्तिकालावच्छिन्नभेदसाधने उक्तरीत्या साध्याप्रसिद्धि.। पारमार्थिकभेदसाधन-मप्यत एवायुक्तम्। स्वज्ञानाबाध्यभेदसाधने स्वपदेन पक्षोक्तौ साध्याप्रसिद्धि'। पक्षीभूतशुद्धचिन्मात्रज्ञानाबाध्य-भेदाप्रसिद्धेः। दृष्टान्तोक्तौ दृष्टान्तीभूतनिगडमुक्तज्ञानाबाध्यस्य व्यावहारिकभेदस्य मुक्तेऽङ्गीकृतत्वात्सिद्धसाधन-मेव। मण्डनमते चरमदृश्यध्वंसस्य मुक्तिकालत्वसम्भवात्तस्य पक्षतावच्छेदकत्वेन तदवच्छिन्ने भेदसाधने न

सिद्धसाधनम् इति तु न युक्तम्। तन्मतेऽनृतादिव्यावृत्तेरपि मुक्तिकाले सत्त्वात्सिद्धसाधनस्य दुर्वारत्वात्' इति। तदेतदनुक्तोपालम्भनरूपत्वादश्रद्धेयमेव।

न चैतेषां पक्षाणां सम्भावितत्वेन शङ्कनमित्यपि युक्तम्। उक्तसाध्यादरे आत्मत्वावच्छिन्नस्य पक्षत्वेपि सिद्धसाधनत्वप्रसक्त्यभावेन तत्पक्षोपेक्षणस्य निर्बीजत्वापातेन 'भेदस्य पारमार्थिकत्वानौपाधिकत्वाभ्यामविशेषितत्वात्' इति टीकावाक्येनान्योपलक्षणपरेणोक्तकल्पाना ग्रन्थकृदनभिप्रेतत्वावगमात्।

किञ्च स्वज्ञानाबाध्यभेदस्य साध्यतापक्षे यत्स्वशब्दार्थविकल्पेन दूषणमभिहितं तदयुक्तमेव। तथा हि, अनुगतरूपेण साध्यस्यानुपस्थापकत्वेन पक्षदृष्टान्तयोः साध्यबोधाभावेन परामर्शद्वारा मध्यस्थानुमितेरनिर्वाहात्ता दृशन्यायप्रयोगोऽसङ्गत इति भवतामभिप्रायः। उत तादृशन्यायप्रयोगस्थले अन्यत्र निर्वाहेपि प्रकृते सोऽसङ्गत इति। नाद्यः। तत्त्वज्ञानस्य स्वसमानाधिकरणेत्यादित्वदीयनियमबोधकवाक्यस्य एकमात्रोपस्थापकतापत्त्या सर्वस्थलीयसर्वसाधारणव्याप्तिबोधकत्वाभावेनासङ्गतत्वापत्तेः। 'स्वज्ञानाबाध्यदृश्यत्ववत्त्वात्' इति त्वयैव दृश्यत्वहेतुपरिष्कारस्य कृतत्वेन तत्राप्येकव्यक्तेरेव स्वपदेनोपस्थापनात्तस्यैकव्यक्तावेव सत्त्वेन भागासिद्ध्यापत्त्या तस्याप्यसङ्गतत्वापत्तेश्च। स्वप्रागभावातिरिक्तेत्यादिन्यायप्रयोगस्य स्वान्यूनसत्ताकेत्यादिव्यवहारस्य त्वद्ग्रन्थेष्वेव बहुलमुपलम्भाच्च। न द्वितीयः। प्रकृत एव तद्वैषम्ये बीजाभावात्।

अथ तत्रानुगतरूपावच्छिन्नसाध्यहेत्वादीनां बोधो मानसः न्यायवाक्याधीनशाब्दबोधोत्तरकाले मध्यस्थस्य जायते। न्यायवाक्यस्यापि तत्रैव तात्पर्यमधिगच्छति। ततः परामर्शद्वारा मध्यस्थानुमितिनिर्वाहो जायत इति यदि ब्रवीषि तदा तद्वाक्यान्मध्यस्थपरामर्शद्वाराऽनुमितिमध्यस्थसंशयोच्छेदादिकं सर्वं सम्पद्यत इत्यावयोः सम्मतम्। तदुपपत्तिप्रकारस्तु भवताऽनुगतधर्मं विना व्यवहारानिर्वाहं वदतोक्तरीत्याऽनुगतधर्मस्फूर्त्या निरूपितः। अनुगतधर्मं विना सर्वनिर्वाहवादिना मया त्वन्यथैव निरूप्यते।

तथा हि, यथा वह्नित्वस्यानुगतत्वे वह्नित्वेनैकवह्निज्ञानानन्तरं सकलवह्न्यादिज्ञानद्वारा सकलधूमनिष्ठव्याप्त्यादिज्ञानद्वारा विशिष्टपरामर्शनिर्वाहस्तथा तदननुगमेपि तद्धर्माभिव्यञ्जकविलक्षणसादृश्यज्ञानसहकृतेन्द्रियेण सकलवह्न्यादिज्ञानद्वारा विशिष्टपरामर्शनिर्वाहस्त्वाकरे दर्शित एव। यथा वह्निपदप्रवृत्तिनिमित्तं वह्नित्वं द्रव्यपदप्रवृत्तिनिमित्तं द्रव्यत्वं चैकस्मिन्वर्तते तेषां व्यक्तयभेदेपि परस्परमसङ्कीर्णतापि सर्वत्र जात्यादीनां भेदाभेदवादिना यथा भेदेनैव तथास्माकं क्वचिद्भेदेन क्वचिद्विशेषेणेत्यन्यदेतत्। तथा च वस्तुषु स्वशब्दप्रवृत्तिनिमित्तधर्माणां विलक्षणत्वात्तदभिव्यञ्जकसादृश्येन सकलसाध्यनिरूपितानां व्याप्तीनां प्रकृतहेतुषु ग्रहेण विशिष्टपरामर्शादिनिर्वाहे कानुपपत्तिः। परन्तु अनुगतधर्माग्रहवादिन एव स्वशब्दघटितन्यायप्रयोक्त्रा श्रोत्रा च विविच्य वक्तुमशक्येऽप्रामाणिकसंसर्गताके नानापदार्थघटिते कस्मिंश्चित्पदार्थे संसर्गतां परिकल्प्य तद्घटितसाध्यतावच्छेदकादेः श्रोतुर्मानसबोधविषयकत्वकल्पनं वक्तुस्तत्र तात्पर्यकल्पनमप्रामाणिकमनुभवविरुद्धं गुरु च। यथाश्रुतवाक्यबोध्यधर्मज्ञानद्वारोक्तरीत्याऽनुमितिनिर्वाहप्रकार एव लघीयान्। अधिकमन्यत्रानुसन्धेयम्। एवं च स्वशब्दार्थघटित-

साध्यहेत्वादिस्थले स्वार्थानुमितिपरार्थानुमित्योरानुभाविकत्वेन तदुपपादनप्रकारस्य पुरुषमतिवैचित्र्येण वैचित्र्येऽपि तादृशानुमानप्रयोग सङ्गत एव। परन्तूपपादनक्रमे सौष्ठवविचार परमवशिष्यते। स चेदानीमनुपयुक्त। विचारान्तरत्वापत्ते। अन्यथा [1]भेदत्वमात्रस्य साध्यत्वेऽप्येतादृशदूषणसम्भवेन तत्र तदनुक्त्वा स्वत्वघटितसाध्य-एव तदुक्तेस्त्वासङ्गतत्वापातात्।

अनुगतधर्माऽग्रहमात्रेण भवदुक्तस्वत्वविकल्पादेर्दूषणत्वे नैयायिकमीमांसकादीनां कथोच्छेदप्रसङ्गात्। नैयायिकेन पर्वतो वह्निमानित्युक्ते मीमांसकेनोच्यते। किं पर्वतवह्न्यादिपदानि जातिवाचीनि किं व्यक्तिवाचीनि, आद्ये बाधादिकमपसिद्धान्तश्च। द्वितीये तेषां मा प्रत्ययबोधकत्वमिति। तत्रैतावदेव वक्तव्यम्। उक्तवाक्येन मध्यस्थानुमित्यादेरानुभाविकत्वेनोक्तदूषणमसङ्गतमिति। तत्सर्वं प्रकृतेऽप्यविशिष्टमेवेति।

एतेन न्यायामृतोदाहृतस्वशब्दार्थघटितसाध्येषु त्वदाचार्याणां स्वशब्दार्थविकल्पपूर्वकदूषणान्यसाधून्येव। अपि चान्यत्र यथा भवतानुगम क्रियते तथा प्रकृतेऽपि शक्यते कर्तुम्। तथा हि, स्वविषयताशालिज्ञानबाध्यत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभाववत्त्वस्ववृत्तित्वोभयसम्बन्धेन तादृशाभाववत्त्वविशिष्टाधेयता-सम्बन्धेन वा किञ्चिद्विशिष्टभेदवत्त्वं साध्यम्। अतो नाप्रसिद्धविशेषणत्वसिद्धसाधनत्वादय। तव मते अनुगत-धर्मो नास्तीत्यस्य दत्तमुत्तरम्। पररीत्येत्यपि वक्तु शक्यत्वाच्चेति सर्वं समञ्जसम्।

यत्तु केचित्त्विति मतान्तरमुत्थाप्य निगडमुक्तिसाधारणमुक्तिकालावच्छिन्नभेदसाधने सिद्धसाधनता। परममुक्तिकालावच्छिन्नभेदस्त्वप्रसिद्ध इति दूषणेन मुक्तिकालावच्छिन्नभेदसाधनदूषणं तदप्यनुक्तदूषणमेवेति नास्माकं काचित्क्षतिरित्यलम्।

## १४४ पृष्ठे १८–१९ पङ्क्तिमध्ये

(द्वै द्यु.) अनुयोगितासम्बन्धेन बन्धेनैव रूपेणाभावस्य हेतुत्व सुवचमित्यसत्। बन्धधर्मितावच्छेदकतयाऽभावत्वस्य निवेशोऽभावत्वमात्रस्य व्याप्यतावच्छेदकतयेतरांशस्य वैयर्थ्यात्। तस्यानिवेशे निर्धर्मितावच्छेदकक-तादृशभानस्याव्युत्पन्नत्वात्। अन्यथा 'अभावो न घटीय' इति बाधकालेऽपि एकत्र द्वयमिति रीत्या अभावत्व घटयोरवगाहिनो बोधस्य घटो नास्तीत्यादिवाक्यादापत्ते। अनुयोगितासंसर्गस्थले प्रकारतावच्छेदकधर्मावच्छिन्न-प्रतियोगितानिरूपितानुयोगिताया एव संसर्गताभाननियमात् बन्धसामान्यात्यन्ताभावस्य प्राप्त्या निगडमुक्ते साधनवैकल्यात्। ध्वंसप्रागभावाधिकरणेऽत्यन्ताभावानङ्गीकारे ईश्वरातिरिक्तपक्षेषु भागासिद्ध्यापत्तेश्च।

न च स्वसंसर्गाभावाधिकरणतासम्बन्धेन बन्धस्य हेतुत्वेऽपि बन्धत्व न जातिर्न वाऽखण्डोपाधि। माना-भावात्। किन्तु दुःखप्रयोजकत्वमेव। तत्र प्रयोजकत्वस्यैवोक्तसम्बन्धेन व्याप्यतावच्छेदकत्वे इतरांशवैयर्थ्यमिति

---

[1] भेदवत्त्व इति पाठेन भाव्यमिति भाति।

वाच्यम्। बन्ध इत्यनुगतप्रतीतिसाक्षिकबन्धत्वजात्यङ्गीकारेऽस्मन्मते बाधकाभावात्। स्वोत्पत्तिप्रयोजकप्रतियोगिकसंसर्गाभाववत्त्वसम्बन्धेन दुःखस्य हेतुतायाः कर्तुं शक्यत्वाच्च।

ननु पूर्वं सामान्यव्याप्त्यभ्युपगमपक्षे संसाररूपत्वस्य दुःखे विशेषणत्वायोगात्कथं हेतुतेति चेन्न। संसारजन्यदुःखत्वेनैव हेतुत्वात्। साध्यमपि स्ववृत्तिर्या संसारजन्यदुःखसंसर्गाभावाधिकरणतेत्यादिरीत्या निवेश्य परिष्कर्तव्यम्। व्याप्तिरपि यो यत्प्रयोज्यदुःखस्य स्वप्रयोजकप्रतियोगिकसंसर्गाभाववत्त्वसम्बन्धेन सम्बन्धीत्यादिरीत्या वक्तव्येति न कोऽपि दोषः।

न चैतादृशपरम्परासम्बन्धस्य ग्रन्थकृता कुत्राप्यनुक्तत्वादनभिप्रेतमिदमिति वाच्यम्। **तत्त्वप्रकाशिकादौ** नारायणपदार्थनिर्वचनप्रस्तावे 'नारा वेदाः। प्रतिपाद्यतया तदयनत्वाद्वा नारायणः। नारा मुक्ताः। प्राप्यतया तदयनत्वाद्वा' इत्यादिना सम्बन्धत्वेन ग्रहणात्। विषयितादिवद्वृत्त्यनियामकत्वेऽपि व्याप्यतावच्छेदकत्वे विरोधाभावादुक्तं युक्तमेव।

यदि च गुरोरपि धर्मस्य व्याप्यतावच्छेदकत्वमविरुद्धम्। स्वरूपसम्बन्धरूपव्याप्यतावच्छेदकताया मानाभावाद्दूषितत्वाच्च। किन्तु स्वावच्छिन्नसमानाधिकरणेत्यादिरीत्या पारिभाषिकमेव। तच्च नीलधूमत्वादेरविरुद्धम्। नीलधूमादिति न्याये अप्रयोगस्तु वक्तुर्निग्रहादेव। धूमपदेन बोध्यमाने हेतौ नीलरूपविशेषणबोधेच्छया तत्प्रयोगे तस्य निष्प्रयोजनत्वेनानाकाङ्क्षितबोधनेनाधिक्यात्। वक्तुः प्रयोजनभ्रमं विना तदिच्छाऽसम्भवेन तस्य भ्रान्त्युन्नायकत्वेन निग्रहस्थानत्वात्। यत्र हेतुबोधकैकपदप्रयोगे कर्तव्ये तत्र प्रमेयत्वादित्युक्तौ विषयत्वादित्युक्तौ वा विशेषाभावः तत्प्रतिपाद्यस्य च व्याप्यत्वे च विशेषाभावश्च तत्र न निग्रहः। अतः प्रमेयत्वादिति हेतुवाक्यं साध्वेव। न च काकदन्तज्ञानविषयधूमत्वावच्छिन्नबोधतात्पर्यकैकप्रातिपदिकात्मकहेतुवाक्यं साधु स्यादिति वाच्यम्। तादृशपदसत्त्वे इष्टापत्तेः। न च पूर्वं तस्य प्रक्रान्तत्वे तद्बोधकं तस्मादिति हेतुवाक्यं साधु स्यादिति वाच्यम्। सर्वनामपदघटिततादृशन्यायप्रयोगस्यासाम्प्रदायिकत्वादेव तथा व्यवहाराभावात्। लोके च तस्य पूर्वं बुद्धिस्थत्वे तथा प्रयोगस्येष्टत्वात्। न चैतादृशस्थले लघुशरीरहेतुबोधतात्पर्यं विहाय गुरुशरीरहेतुबोधेच्छा वक्तुरनुचितेति प्रमेयत्वादिति वक्तुर्निग्रहः स्यादिति वाच्यम्। एकत्र पक्षे गुरुलघुप्रकाराणामुक्तेः सम्प्रदायसिद्धत्वात्। अन्यथा धूमप्रागभावादित्यस्याप्यवक्तव्यतापातेन तेषां हेतुत्वाङ्गीकाराभावप्रसङ्गात्। **दीधितिकृत्प्रभृतिभि**रङ्गीकृतत्वेन तत्रेष्टापत्तेः कर्तुमशक्यत्वात्।

ननु हेत्वाधिक्यवद्धेतुविशेषणाधिक्येऽपि निग्रहो युक्त इति चेत्। सत्यम्। हेत्वाधिक्यं नाम हेत्वन्तरबोधकशब्दान्तरप्रयोग एव। वस्तुतो विद्यमानस्य त्यक्तुमशक्यत्वात्। एकप्रातिपदिकेन युगपद्धेतुतावच्छेदकद्वयावच्छिन्नस्य बोधयितुमशक्यत्वाच्च। तथा च हेत्वाधिक्यं नियमेन निग्राहकम्। हेतुविशेषणाधिक्यन्तु न तथा। विशिष्टवाचकैकप्रातिपदिकप्रयोगे शब्दान्तरप्रयोगप्रयुक्ताधिक्यविरहात्। पृथक्पदेनोपादान एव तदा

धिक्यप्रसक्ते । तस्मात्प्रमेयत्वनीलधूमादीना विशेषो युक्त एवेति यद्यभिप्राय सोऽपि मम सम एव । अत्रापि मुक्तत्वपदेनोक्तहेतौ पदान्तरेण विशेषणान्तरादानेनाऽधिक्यरूपनिग्रहाभावेनोक्तहेतुवाक्य युक्तमिति ।

इदमिहावधेयम् । बन्धसंसर्गाभावाधिकरणत्वस्य वक्ष्यमाणसंसारससर्गाभावाधिकरणत्वस्य वा व्यभिचारावारकविशेषणघटितत्वेऽपि हेतुत्व युक्तमेव । विशेषणानामप्रयोजकताशङ्कानिरासद्वारा व्याप्तिनिश्चयोपयोगित्वेन तद्घटितस्य व्याप्यतावच्छेदकत्वात् । अधिकरणत्वमात्रस्याभावाधिकरणत्वस्य संसर्गाभावाधिकरणत्वस्य वा भेद विना प्रागवस्थेत्याद्युक्तसाध्य विनाप्युपपत्ते । भेद विना स्वस्वरूपभूतप्रमेयत्वाद्यधिकरणताया घटादौ स्वस्वरूपभूतस्वाधिकरणतायाश्च घटससर्गाभावादौ दृष्टत्वेन प्रकृते भेद विना तदभावापादनायोगात् । प्रागवस्थेत्यादिसाध्ये तु सुतरामप्रयोजकत्वम् । कथञ्चिद्भेदमात्राङ्गीकारेणोक्तहेतूपपत्तावुक्तविशेषणसहितभेदाङ्गीकारे बीजाभावात् । बन्धरूपस्य वा संसाररूपस्य वा प्रतियोगिनोऽभावाशे विशेषणत्वे तु तस्य स्वप्रतियोगिना सह विरोधस्फूर्त्या विरोधस्यैककाले एकाधिकरणे अवर्तमानत्वरूपस्य तत्कालीनप्रतियोग्यधिकरणस्वाधिकरणयोर्भेदानङ्गीकारे उच्छेदप्रसङ्गरूपतर्कस्योत्थानेन व्याप्तिनिश्चयात् । एव पक्ष एव [1]साध्य मास्त्वित्यप्रयोजकत्वशङ्काया वादिरीत्या प्राप्ताया मुक्तामुक्तयोरिति वक्ष्यमाणरीत्याऽनुकूलतर्कं विना [2]तन्निरासायोगेन तादृशानुकूलतर्कोत्थानार्थमपि हेतुविशेषणमावश्यकम् । [3]भेदमात्रानङ्गीकारे बद्धाबद्धव्यवस्थानुपपत्त्या बन्धाभावसंसाराभावरूपहेतूच्छित्तिवत्ससर्गाभावाधिकरणत्वानुपपत्तौ बीजाभावात् । भेदरहितेऽपि कस्यचिच्छशविषाणादे सृष्ट्याद्यकालीनतृणव्यक्त्यादेरभावमादायाप्युपपत्ते । प्रागवस्थीयभेदानङ्गीकारे भेदनाशस्याभ्युपगन्तव्यत्वेन पूर्वं स्वभिन्नै संसारिभि सहैक्यप्राप्त्या मुक्तामुक्तव्यवस्थोच्छेदेन मुक्तत्वाभाव । भेदान्तरोत्पत्त्यङ्गीकारे गौरवमित्यनुकूलतर्क प्रसरत्येव ।

ननु स्वनिष्ठध्वसरूपससारसंसर्गाभावस्य भेदापगमेनेदानीन्तनसंसारिभि सहैक्येनाप्युपपत्त्या ससारिण्यपि ससारान्तरससर्गाभावमादाय मुक्तत्वव्यवहाराभावेन च तस्य मुक्तत्वरूपत्वाभावेन तदुच्छेदापादनासम्भवात्ससारससर्गाभावकूट हेतु । अत एव उभयाभावादिघटितससाराभावकूटस्य भेद विनाऽप्युपपत्त्या अप्रयोजकत्व स्यादत. ससर्गेति संसारससर्गविरोध्यभावनिवेशलाभाय सार्थकम् । अभावकूटन्तु न हेतु । अन्यदीयससारध्वसादीनामपि कूटान्तर्गतत्वेन तादृशकूटाधिकरणस्यैवाप्रसिद्ध्यापत्ते. । किन्तु यावन्त. ससारा [4]तत्तत्प्रतियोगिकाभावकूटमेव हेतुरिति युक्तम् । [5]घटादिहेतौ उक्तकूटसत्त्वाद्दृष्टान्तस्यापि न साधनवैकल्यम् । अविवक्षितबन्धाभावपक्षे तु कथम् । तत्रापि स्वनिष्ठनष्टैकबन्धव्यक्तिप्रतियोगिकस्य कस्यचिदभावस्योक्तरीत्या साध्य विनाऽप्युप

---

[1] व्यभिचारशङ्काया इति पाठान्तरम् ।

[2] व्याप्तिनिश्चयायोगेन इति पाठान्तरम् ।

[3] एवमपि पक्षान्तर्भावेण व्यभिचारनिरासद्वारा व्याप्तिग्रहौपयिकत्वमक्षुण्णमेव इति पाठान्तरम् ।

[4] तत्तत्प्रतियोगिकात्यन्ताभावकूटमेवेत्यर्थ ।

[5] घटादिदृष्टान्ते इति पाठेन भाव्यमिति भाति ।

पत्त्याऽप्रयोजकत्वात् । न हि भेदानङ्गीकारे तादृशबन्धव्यक्तितदभावयोर्विरोध उच्छिद्यते । न वा साध्याभावे पक्षे तदुच्छेदः प्राप्नोति । बन्धसंसर्गाभावकूटस्य तु हेतुता न घटते । निगडमुक्ते अन्ततः संसाररूपबन्धस्य सत्त्वेन तदभावकूटाभावेन साधनवैकल्यापत्तेरिति चेन्न ।

स्वनिरूपकाभावविरोधिसत्ताकालीनबन्धाभावाधिकरणताया हेतुत्वेन विवक्षितत्वात् । उक्तहेत्वधिकरणे भेदासत्त्वे विरोधोच्छेदापत्तिरूपानुकूलतर्कावतरणेन व्याप्तेः सुग्रहत्वात् । पूर्वकालीनभेदनाशेन तयोरैक्येऽप्येषैवा-नुपपत्तिर्भेदान्तरकल्पने च गौरवमित्यनुकूलतर्कः साध्यान्तरे द्रष्टव्यः ।

न चैवमप्यभावे बन्धप्रतियोगिकत्वं व्यर्थम् । एतादृशाभावान्तराधिकरणताया अपि भेदं विनाऽनुपपद्य मानत्वेन व्याप्तिग्रहसम्भवादिति वाच्यम् । बन्धपदस्य दुःखप्रयोजकजडपरत्वे सर्वस्यापि तथात्वेन चिन्मात्र-व्यावृत्तौ बीजाभावेन बन्धपदस्यैवोक्तार्थतात्पर्यग्राहकत्वाभ्युपगमात् । यद्वा प्रतियोगिविशेषेणाभावस्याविशेषितत्वे तादृशाभावस्वरूपसन्देहेन झडिति हेतुतावच्छेदकविशिष्टहेतुस्वरूपानिश्चयेन व्याप्तिनिश्चयायोगात्तद्विशेषणम् । दत्ते च विशेषणेऽभावविशेषस्य झडिति स्फूर्त्या भवत्येव व्याप्तिग्रहः । यथा समवायेन संयोगसामान्याभावे साध्ये संयोगीययावद्विशेषाभावेषु समवायसम्बन्धावच्छिन्नत्वं निवेश्य सामान्यमुखव्याप्तिशरीरे समवायावच्छिन्नप्रति-योगिकत्वं हेतुकोटौ निवेश्यते । अन्यथा विशेषाभावकूटमात्रस्य समवायसम्बन्धावच्छिन्नप्रतियोगिताकसामान्या-भावेन व्यभिचाराभावेऽपि विशेषाभावकूटमात्रस्य क्वचिदधिकरणेऽवृत्तित्वसन्देहेन व्याप्तिनिश्चयानुपपत्तेस्तद्व-त्प्रकृतेऽपि । स्पष्टश्चैतत्सिद्धान्तलक्षणगदाधरीये । विरोधस्य सम्बन्धविशेषघटितत्वलाभाय संसर्गपदम् । पक्षीभूते मुक्ते तादृशहेतुश्च संसारध्वंसो वा तदत्यन्ताभावो वा । पुरुषान्तरनिष्ठसंसारध्वंसस्यापि पुरुषान्तरवृत्ति-संसारेण सहैकाधिकरणावृत्तित्वरूपविरोधशालित्वात् ।

व्यभिचारावारकस्यापि व्याप्तिनिश्चयोपयोगिनो विशेषणस्य सार्थक्यं 'परमाणुर्दशभागवान् युगपद्दश-दिक्संयोगात्' इत्यनुमाने अन्यथासिद्धिनिरासकतया **सौधसमयचरणटिप्पण्यां यादवाचार्यै**रुपपादितम् । **एवमद्वैतचन्द्रिकायां गुर्व्यां लघ्व्याञ्च** सत्यतासाधकानुमानभङ्गे उपपादितम् । **गदाधरेणापि** तर्कग्रन्थे 'संयोगान्यसम्बन्धावच्छिन्नवह्निनिष्ठजनकत्वानिरूपकत्वे संयोगान्यसम्बन्धावच्छिन्नवह्निनिरूपितजन्यत्वशून्यत्वे च सति संयोगसम्बन्धावच्छिन्नवह्निनिष्ठजनकतानिरूपितजन्यताशून्यः स्यात् धूमस्तर्हि वह्निजन्यो न स्यात्' इति तर्के आपादककोटौ प्रथमसत्यन्तस्य व्यभिचारावारकस्यापि व्याप्तिग्रहौपयिकतया सार्थक्यमभिधाय **मिश्रसम्मति**-रभिहिता । **ग्रन्थकारै**रपि

साध्यसाधनवैकल्यं दृष्टान्तस्य विशेषणे ।
वैयर्थ्यमेकासिद्धौ तु विशिष्टासिद्धिरेव हि ॥

इति भक्तिपादीयानुव्याख्याव्याख्यावसरे व्याप्तिग्रहानौपयिकविशेषणस्यैव वैयर्थ्यमभिहितम् । न व्यभिचारावारकत्वमात्रेण । अतो नेदमलौकिकम् । इत्थञ्चोक्तरीत्या विशेषणसार्थक्यसम्भवेऽपि यत्प्रतिबन्द्या उत्तरप्रदानं तदुक्तरीत्यैवैतत्समाधानं मूले वक्ष्यमाणानुकूलतर्कानुरोधेन शिष्यैरेव सुग्रहमित्याशयेन वा परस्य स्वयमपि प्रमेयत्वादित्यादिहेतुवाक्यं प्रयुज्य परं प्रत्येतदाशङ्कनमनुचितमिति प्रदर्शनाय वा समाधिसौकर्याय वेति ज्ञेयम् ।

एतेन परेरीतिमात्रे निर्भरकरणमयुक्तम् । स्वयमपि उक्तानुव्याख्यानव्याख्याया व्यर्थविशेषणस्य व्याप्यत्वासिद्धिसम्पादकत्वेनाङ्गीकृतत्वात् । परपक्षे यदा तस्याधिक्येनैव दूषकत्वं तदा तत्पक्ष एव निर्भरकरणे स्वमतपरित्यागे अपसिद्धान्तापत्तेः । यद्यपि आधिक्यसम्पादकतयाऽपि तत्पदम् 'अथ वा' इति व्याख्यातं तथाऽपि तत्पूर्वकल्पापरित्यागेनैव । अन्यथा वस्तुनि विकल्पासम्भवेन पूर्वकल्पस्य भ्रममूलकत्वप्रसङ्गात् । स्वमतनिरूपणप्रस्तावे परेरीत्या तद्व्याख्यानमित्यस्यायुक्तत्वात् । न हि तन्मात्रान्तर्गतविशेषणातिरिक्तविशेषणस्य पदान्तरेणोपादाने व्याप्यत्वासिद्धिरिति वक्तुं युक्तम् । तथा सति नीलधूमस्यैकस्यैव भिन्नपुरुषप्रयुक्ताभ्यां नीलधूमात् तस्मादिति पदाभ्यामेककाले व्याप्यत्वाव्याप्यत्वयोर्विरुद्धयोरापातात् । न च दोषत्वस्य पुरुषकालविशेषघटितत्वाद्व्यवस्थेति वाच्यम् । अज्ञानासिद्ध्यादेरेव तथात्वात् । अस्य व्याप्यत्वासिद्धित्वपक्षेऽव्याप्तिरूपहेतुविरोधान्तर्गततया [1]'अर्थद्वारा वचनदोषत्वेन तत्पुरुषं प्रति तादृशस्यैवार्थस्य दुष्टत्वे वक्त्रन्येऽन्यं प्रति तादृशस्यैवार्थस्यादुष्टत्वे नियामकाभावात्' इति निरस्तमिति ।

## १४८ पृष्ठे १७–१८ पङ्क्त्योर्मध्ये

न चोत्तरत्र सामान्यरूपेण प्रयुक्ते विशेषरूपेण विकल्प्य दूषणस्यातिप्रसञ्जकत्वमाशङ्क्य सामान्यरूपासम्प्रतिपत्तेरुक्तविकल्पे बीजत्वोक्तिर्विरुद्ध्येत । सामान्यरूपसत्त्वेऽप्युक्तरीत्या भ्रमविषयव्यावर्तकविशेषणदानप्रयुक्तविकल्पतत्पक्षदोषाणां सङ्गतेरिति वाच्यम् । यतः दृश्यत्वत्वं तावद्धेतुतावच्छेदकं न भवति । आत्मनि भ्रमप्रतिपन्नदृश्यत्वमादाय त्वद्रीत्याऽनैकान्त्यापातात् । अतस्तद्व्यावृत्तं हेतुतावच्छेदकं त्वया वाच्यमित्याशयेन यदि व्यावहारिकसत्त्वरूपानिर्वाच्यत्वविशिष्टदृश्यत्वत्वं तन्ममासिद्धम् । यदि पारमार्थिकत्वघटितं तत्तवासिद्धम् इति दूषणेऽभिहितेऽसदभिमतव्यावहारिकसद्रूपानिर्वचनीये त्वदभिमते पारमार्थिके च विद्यमानं भ्रमप्रतिपन्नव्यावृत्तं किञ्चित्सामान्यं हेतुतावच्छेदकं स्यात्तावताऽन्यतरासिद्धिव्यभिचारपरिहारसम्भवे भवदीयविकल्पोऽसङ्गत इत्याशयेन शङ्किते पारमार्थिकं मिथ्यापरपर्यायव्यावहारिकपदबोध्यं व्यावहारिकञ्चाङ्गीकृत्योभयत्रैकं सामान्यं ममासम्प्रतिपन्नमेव । दृश्यत्वत्वं व्यभिचारितावच्छेदकत्वेन त्वयैव स्वीकृतम् । अतो विकल्पो युक्त एवेत्याशयेन तादृशसामान्यनिराकरणं युक्तमेव । अतो न कश्चिद्दोषः ।

---

[1] अर्थद्वारा वचनदोषत्वं नामार्थनिष्ठदोषस्य वचनजन्यबोधेऽप्रामाण्यसम्पादकत्वम् । यथा धूमवान् वह्नेरित्यत्र हेतुनिष्ठदोषस्य व्यभिचारस्य हेतुवाक्यजन्यबोधे वह्नौ लिङ्गत्वप्रकारकत्वांशेऽप्रामाण्यसम्पादकत्वम् । तथा च नीलधूमादित्यस्य तस्मादित्यस्य च समानाकारबोधसम्पादकतया तत्रैव प्रामाण्यमप्रामाण्यञ्च द्वयं विरुद्धमिति भावः ।

अवश्यमित्थमेव तदभिप्रायो वाच्य । अन्यथा जगति तावद्दृश्यत्वं भवताङ्गीकृतम् । तत्सत्य मिथ्या वाऽस्तु । तत्र दृश्यत्वरूपधर्मस्त्वयाङ्गीकृत एव । स च मिथ्यासत्योभयवृत्तित्वेन त्वया नाभ्युपगम्यताम् । तथा च तत्रानिर्वचनीयत्वसत्यत्वरूपविशेषणप्रक्षेप विहाय दृश्यत्वत्वमात्रेण तस्य हेतुत्वेऽभिप्रेते उक्तविकल्पोऽसङ्गत एव । अन्यथा मीमांसकनैयायिकयोः [1]वर्णेषु शब्दे नित्यत्वानित्यत्वरूपस्वपक्षसाधनाय पक्षीकरणायोगप्रसङ्ग । मीमांसकैर्वर्णस्य द्रव्यत्वमुच्यते । नैयायिकैस्तु गुणत्वम् । द्रव्यात्मकवर्णे गुणात्मकवर्णे च वर्णत्वरूपसामान्यधर्मो वर्तत इत्युभाभ्यामपि न स्वीकृतम् । इत्थञ्चैकेन वर्णस्य पक्षीकारे परेण द्रव्यात्मकवर्णस्य पक्षत्वे मम पक्षाप्रसिद्धि । गुणात्मकवर्णस्य पक्षत्वे तु तवाप्रसिद्धि इत्यादिदूषणप्रसङ्गात् । अत एवोक्ताभिप्रायो युक्त । न च धूमादिति हेतावपि आभासेन व्यभिचारवारणाय तत्र तद्वारकविशेषणस्यावश्यकत्वेऽन्यतरासिद्ध्यादिदूषणस्य तत्रापि सम्भवात्तत्र सम्प्रतिपत्तिरयुक्तेति वाच्यम् । उक्तरीत्या दूषण परमते सर्वत्रापि वर्तत एव । परन्तु धूमत्वसामान्याङ्गीकर्त्रोर्विचारे एतद्देशसंलग्नत्वादिना विकल्पो न कर्तव्य इत्यत्रैव सम्प्रतिपत्तिस्तत्रोक्तेत्यलमप्रस्तुतविचारेण । प्रकृतमनुसराम ।

## १७२ पृष्ठे ६ पङ्क्तौ ॥ रजतात्यन्ताभाव इति ॥
## ॥ स्वयमसत इति ॥ इत्यनयोर्मध्ये

ननु अत्यन्ताभावप्रतियोगित्वार्थकत्वे समभिव्याहृतरजतपदार्थे निपातार्थत्वेन तस्याश्रयतयाऽन्वये रजतमत्यन्ताभावप्रतियोगीत्यर्थो लभ्यते । अत्यन्ताभावविशेष्यकबोधस्तु कथम् । समभिव्याहृतरजतादिपदार्थस्याधेयतया व्युत्पत्तिवैचित्र्येण [2]प्रतियोगित्वेऽन्यथाभ्युपगमेपि प्रतियोगित्वविशेष्यकबोध एव स्यान्नाभावविशेष्यक । तस्य वाच्यतावच्छेदककोटिनिविष्टत्वात् । किं चासत्तुच्छालीकमिथ्यापदानि पर्यायाणीत्यविवादम् । तेषामप्यत्यन्ताभावप्रतियोग्यर्थत्वे तत्पर्यायस्य मिथ्यापदस्यात्यन्ताभावप्रतियोगित्वार्थकत्वानुपपत्ति । तेषामप्यत्यन्ताभावप्रतियोगित्वार्थकत्वे शशविषाणमलीकमिति सामानाधिकरण्यानुपपत्ति । मिथ्येत्यस्याव्ययतया तत्र भेदान्वयेप्यत्र तत्रैव भेदान्वयायोगात् । अभेदान्वयस्य बाधितत्वात् । शशविषाणे शशविषाणस्य वा मिथ्या अलीकमित्यादिव्यवहारापातश्च । षष्ठीसप्तम्यर्थभूतसम्बन्धाधेयत्वयोरुक्तमिथ्यालीकशब्दार्थे सम्भवात् । न च मिथ्यालीकादिशब्दानामत्यन्ताभावप्रतियोग्येवार्थ । समभिव्याहृतशशविषाणादिपदार्थानामभेदेनैवान्वयित्वमिति वाच्यम् । वाच्यार्थसत्त्वशङ्काया तस्यैव सत्त्वे वक्तव्ये 'अत्यन्ताभावप्रतियोगित्वलक्षणस्यासत्त्वस्य सत्त्वात्' इत्यनेन वाच्यस्य [3]तस्य सत्त्वोक्तिवैयर्थ्यप्रसङ्गात् । न च तदपि विशेषणतया वाच्यमिति वाच्यम् । सिद्धान्ते विशेषणे वृत्तिनिमित्तताङ्गीकारेण शक्तेरनङ्गीकृतत्वादिति चेन्न ।

---

[1] वर्णात्मकशब्दे इति पाठेन भाव्यमिति भाति ।

[2] प्रतियोगित्वे अन्वयाभ्युपगमेऽपि इति पाठेन भाव्यमिति भाति ।

[3] तत्र इति पाठेन भाव्यमिति भाति ।

तद्विषयिताशालिबोधजनकत्व यत्स्वाभाविकं तदेव पदे शक्तिरित्युच्यते। सा च शक्तिर्ज्ञातैवोपयुज्यते। तादृशविषयितानिरूपकाणि सर्वाणि शक्यान्येव। अत एवान्वयेऽपि शक्तिरिति सिद्धान्त। अशक्यस्य शाब्द-बोधे भानाङ्गीकारे प्रवृत्तिनिमित्तवदन्वयस्यापि तथैव भानसम्भवेन योग्येतरान्विते शक्त्यङ्गीकारवैयर्थ्यप्रसङ्गात्। परन्तु शाब्दबोधानुकूलशक्तिज्ञान 'घटत्वविशिष्टो घटपदशक्य.' इत्याकारम्। न तु 'घटत्वघटौ घटपदशक्यौ' इत्याकारम्। अत शाब्दबोधानुकूलज्ञानविषयीभूतशक्त्यशेऽविशेष्यत्वात्तत्राशक्यत्वव्यवहार। एवञ्च तादृशप्रति योगित्वाशे विशेषणतया वाच्यत्वसत्त्वादुक्तटीका सङ्गतैव। न च मिथ्यादिपदानामुक्तप्रतियोग्यर्थकत्वे 'मिथ्यापद-वाच्य नास्ति' इति प्रतीतिप्रसङ्ग। 'वाच्यसामान्य नास्ति' इति प्रतीतेस्तादृशप्रतियोगित्वरूपवाच्यत्वेन बाधितत्वात्। अत एव तादृशप्रतियोगित्वरूपवाच्यस्य सत्त्वमुक्तम्। 'विशेष्यतया वाच्यं नास्ति' इति प्रतीतिरिष्टैव। न चासत कथं वाच्यत्वमिति वाच्यम्। विषयितानिरूपकत्वरूपोक्तवाच्यत्वस्य तत्र सत्त्वे बाधकाभावात्। अर्थवत्सूत्रेपि शक्तिमत्त्वरूपार्थवत्त्वमेव विवक्षितम्। न तु सद्विशेष्यकबोधजनकत्वम्। तथात्वेऽलीकादिपदाना पदत्वव्याघात प्रसङ्गात्। मिथ्यापदस्य तु प्रतियोगी अभावश्च पृथगेवार्थ इत्यङ्गीकृत्य प्रतियोगिनि समभिव्याहृतपदार्थस्या-भेदेनान्वयमङ्गीकृत्याभावप्राधान्येन बोध मिथ्याशब्दस्थलेऽनुभवादेव स्वीक्रियते। मिथ्यालीकशब्दयो पर्याय-त्वोक्तिस्त्वनतिभिन्नार्थत्वात्। यद्यभावप्रधानकबोध पाश्चात्य एव [1]दर्शित इत्युच्यते तदा न कोपि दोष.।

मायावादिनस्तु 'असतो निरुपाख्यत्व शब्दशक्त्यविषयत्वम्' इति वदन्तोऽसत शक्त्यगोचरतामाहुः। तन्न। अलीकादिपदाना तेषामपदत्वापत्ते। न च तान्यनिर्वचनीयवाचीनीति वाच्यम्। 'शशविषाणमलीकम्' इति वाक्यस्य सर्वमते प्रमाणस्यापलापापत्ति। न च तद्वाक्य विकल्पजनकमेवेति न बोधकत्वघटितप्रामाण्यं मत्सम्मतमिति वाच्यम्। [2]पदार्थसम्बन्धज्ञानरहितपुरुषे विकल्पस्याप्यनुत्पत्त्या तदर्थमप्यलीकपदस्यासति शक्तिग्रह-स्यावश्यकत्वात्। अनिर्वचनीये शक्तिज्ञानेनासद्भानाङ्गीकारे घटे शक्तिज्ञानेन पटभानप्रसङ्गात्। अन्यदधिक-मुत्तरत्र निराकरिष्यते। असत्प्रतीतिमनङ्गीकुर्वता नैयायिकादीना अलीकादिपदानां पदत्वव्याघात स्फुट एव। कथञ्चित्सदर्थकत्वकल्पना अनुभवविरुद्धेत्युपरम्यते।

## १७२ पृष्ठे ११-१२ पंक्त्योर्मध्ये

अप्रामाणिकप्रतियोगिकात्यन्ताभावनियमवादिनस्तु यत्र भूतले घटस्य सर्वथा न सम्बन्धस्तद्भूतले घटो नास्तीत्यादिवाक्य तद्भूतलवृत्तित्वविशिष्टघटप्रतियोगिकात्यन्ताभाव बोधयति 'न त्वेतद्भूतले घटाभाव' इति तदा तद्वाक्याभिलाप्यं प्रत्यक्षमपि तादृशाकारमेव। भूतलवृत्तित्वस्य तज्ज्ञानेऽभावाशेऽभानेपि क्षतिविरहात्। प्रत्यक्षस्थले घटस्मरणोत्तर भूतलवृत्तित्वेन घटस्य भानानन्तर विशिष्टस्यासत एवाभावाशे भानम्। न च कारणी-भूतज्ञानस्यानाहार्यत्वे तादृशज्ञानविषयप्रतियोगिकनिषेधभानानुपपत्ति। एतन्मते तादृशज्ञानस्यात्रैव विरोधित्वात्।

---

[1] दर्शितस्थले इति पाठेन भाव्यमिति भाति।

[2] पदपदार्थयो सम्बन्ध इत्यर्थ.।

अन्यथा भूतले घट इति वाक्यादिना निश्चितवतोऽपि तादृशाभावबुद्धिप्रसङ्गात्। कारणीभूतज्ञानस्याऽऽहार्यत्वे तत्र बाधग्रहापेक्षा तत्रापि कारणतया पुनराहार्यग्रहान्तरापेक्षेत्यनवस्थैवेति वाच्यम्। 'भूतलवृत्तिर्घट' इतिरूपस्य कारणीभूतज्ञानस्य तत्र सत्त्वानवगाहितया प्रतिबन्धकत्वाभावात्। सत्त्वावगाहिधिय एव प्रतिबन्धकत्वात्प्रति-बध्यत्वाच्च। तस्याऽऽहार्यत्वाभावेन बाधग्रहान्तरानपेक्षकतया अनवस्थाया अभावाच्च।

ननु सत्त्वानवगाहिज्ञानं भ्रमः प्रमा वा। प्रमैवेति ब्रूमः। न च तदभाववति तत्प्रकारकस्य कथं प्रमा त्वमुच्यत इति वाच्यम्। स्वनिश्चिताभावकप्रतिवादिवाक्यार्थं ज्ञात्वा अनुवादकस्य भ्रान्तत्वेन प्रेक्षावद्व्यवहृत्य गोचरतया तत्र सत्त्वावगाहितया विधिरूपत्वेन व्यवह्रियमाणज्ञानस्यैव [1]भ्रमत्वाङ्गीकारात्। अत एवोक्त माचार्यैः। 'असतः सत्त्वेन प्रतीतिः सतोऽसत्त्वेन प्रतीतिरित्यन्यथाप्रतीतेरेव भ्रान्तित्वात्' इति। न चानुवाद स्थलेऽनुवादकर्तृज्ञानस्याऽऽहार्यभ्रमत्वात्तस्य स्वबुद्धिपूर्वं जातत्वात्तमादाय न तस्य भ्रान्तत्वव्यवहारगोचरतेति वाच्यम्। बुद्धिपूर्वं स्वाङ्गविकृतिकर्तरि विकृताङ्ग इति व्यवहारगोचरत्वाद्बुद्धिपूर्वकभ्रमसम्पादकत्वे सुतरां भ्रान्तव्यवहारगोचरत्वस्य दुर्वारत्वात्। निर्दोषत्वेन प्रमितेषु योग्यादिष्वनुवादकत्वदर्शनेन तन्निष्ठज्ञानस्य दोषा-जन्यत्वेन भ्रमत्वानुपपत्तेः।

अत एव तत्र तज्ज्ञानप्रयोजकेच्छाया एव दोषत्वमिति निरस्तम्। भ्रमस्य तत्कारणदोषस्य च तत्र तत्र भ्रान्तत्वादिव्यवहाररूपप्रमाणं विना कल्पकाभावात्। अन्यथा तत्पुरुषनिष्ठतत्कालीनानन्तवायुसंयोगादिव्यक्तीनां समानाधिकरणतया दोषविधया कारणत्वस्य कल्पनाया विनिगमनाविरहादापत्तिरिति गौरवापत्तेः। न च तज्ज्ञान-जनकत्वेन क्लृप्तेच्छाया एव दोषत्वं कल्प्यते। न तु वायुसंयोगस्य। तस्य जनकत्वस्याक्लृप्तत्वादिति वाच्यम्। इच्छाया दोषविधया विलक्षणकारणताया अक्लृप्ततया विनिगमकाभावस्य दृढत्वात्। तज्ज्ञानकारणत्वेन क्लृप्ततत्क्षणतददृष्टतत्सन्निकर्षादिनादाय विनिगमकाभावस्य दुर्वारत्वाच्च। दोषाजन्यत्वेपि तस्य भ्रमत्वाङ्गीकारे तत्पारिभाषिकं स्यात्।

न च प्रमात्वमपि कथं अर्थाव्यवस्थापकत्वादिति वाच्यम्। सत्त्वावगाहिप्रमाया एवार्थनिश्चायकत्वेन सत्त्वानवगाहितयाऽर्थाव्यवस्थापकत्वेपि भ्रमभिन्नत्वमात्रेण परेषां निर्विकल्पकस्येव प्रमात्वोपपत्तेः। न च 'यथार्थं ज्ञानं प्रमा' इति तल्लक्षणात् अस्य चायथार्थत्वात्कथं प्रमात्वम्। भ्रमभिन्नत्वमात्रेण प्रमात्वोपचारेपि संशयविपर्य-यप्रमातिरिक्तज्ञानाङ्गीकारप्राप्त्याऽपसिद्धान्तः स्यादिति वाच्यम्। यथार्थत्वं प्रमाया नासद्विषयकत्वरूपम्। 'शशविषाणमसत्' इति प्रमायामव्याप्तेः। किन्तु भ्रमभिन्नत्वमेव। विभाजकवाक्यस्थप्रमादिपदस्यापि तत्परत्वेनाप सिद्धान्ताभावात्। न च सत्त्वासत्त्वान्यतरावगाहित्वस्य प्रतीतौ नियतत्वेन तदौदासीन्येन प्रतीत्यनुपपत्त्या कथमस्याः प्रतीतेः सम्भव इति वाच्यम्। प्रामाण्यस्व(त)स्त्वस्येव तस्यौत्सर्गिकतया तस्मिन्नसत्त्वग्रहसामग्र्याः कार्य-

[1] प्रमात्वाङ्गीकारात् इति पाठान्तरम्

कालवृत्तितया विरोधित्वाङ्गीकारेण द्वितीयक्षण एव निषेधप्रतियोगित्वरूपासत्त्वबुद्ध्युत्पत्त्योक्तज्ञानाधिकरणक्षणस्य सत्त्वग्रहसामग्र्यनधिकरणत्वात् । न च सत्त्वग्रहाभावेपि उक्तज्ञानोत्पत्तिक्षण एव तत्रासत्त्वभानापत्ति । तस्य सत्त्ववत् ज्ञानोत्पादकसामग्रीमात्रग्राह्यत्वाभावेनासत्त्वग्राहकसामग्रीं विना प्रथमतस्तद्ग्रहायोगात् । न चोक्तज्ञानस्य भ्रमत्वाभावे आरोपकारणत्ववचन योगिप्रश्नकारणीभूतसंशयस्याऽहार्यत्ववचन च प्राचा विरुद्ध्यते । तस्य भ्रम-विशेषत्वादिति वाच्यम् । सत्त्वानवगाहित्वेन विपरीतज्ञानाप्रतिबन्ध्यतया च तदुक्तिसङ्गते ।

न च 'शशशृङ्गे सत्त्व नास्ति' इति धी शशशृङ्गे सत्त्वज्ञानपूर्विकैव वाच्या । एव 'घटे असत्त्व नास्ति' इति धीर्घटेऽसत्त्वज्ञानपूर्वकैव वाच्या । तथा च तादृशनिषेधज्ञानवना भ्रान्तव्यवहारगोचरत्वापत्ति । असत शशविषाणादे सत्त्वेन सतो घटादेरसत्त्वेन च प्रतीते सत्त्वात् । तत्र भासमानसत्त्वाशेऽपि सत्त्वावगाहित्वमिति भ्रमत्वपरिष्कारे 'शुक्तिरजतसत्त्वे सत्त्व नास्ति' इति ज्ञानकारणीभूतज्ञानमादाय पूर्वोक्त एव दोष । तत्र भासमान-सत्त्वेऽपि सत्त्वान्तरावगाहित्व निवेश्य परिष्कारे तत्र तत्र सत्त्वनिषेधज्ञानकारणीभूतज्ञानमादायोक्तदोषवारणा-योत्तरत्रापि तथा तथा परिष्कारावश्यकत्वे भ्रमेऽनवस्थितविषयताकल्पनापत्तिस्तद्घटितभ्रमत्वस्य दुर्ग्रहत्वापत्तिश्चेति वाच्यम् । यतो घटादौ यत्र सत्त्वं भासते तत्र सत्त्व स्वांशे स्वरूपतो भासते । तदेव ज्ञानं घटांशे सत्त्वांशे चासत्त्वावगाहिनीं धियं विरुणद्धि । घटस्य सत्त्व तत्सत्त्वस्यापि सत्त्वं तस्यापि सत्त्वमित्यादिनानाविधव्यवहार जनयति च । एव 'शशविषाणमसत्' इति प्रत्ययेऽप्यसत्त्वे सत्त्व प्रतीयत एव । ज्ञानसामान्यसामग्र्या सत्त्वावगाहि-ताया अपवादाभावे नियतत्वात् । तत्र भासमानसत्त्वे स्वयमेव सत्त्व स्वरूपतो भासते । अतस्तत्र नासत्त्वसंशया-द्यापत्ति । घटाभावस्य स्वात्मकघटाभावाधारत्वज्ञानमात्रस्य 'घटाभावे घटाभाव' 'घटाभाववृत्तिघटभावे घटो नास्ति' इत्यादिव्यवहारनिर्वाहकत्ववत् त्रिकालबाध्यत्वसामान्याभावरूपसत्त्वस्य स्वांशेऽवगाहिज्ञानस्य सत्त्वे सत्त्व तत्सत्त्वे सत्त्वमित्यादिव्यवहारनिर्वाहकत्वमुपपन्नम् । एव यथा द्रव्यादिषट्कान्योन्याभावस्याभावत्वरूपतामते 'घटो नास्ति घटाभाव' इत्यादिप्रत्ययेषु अभावे भासमान षट्कान्योन्याभाव[1]रूपभावत्व स्वरूपत एव भासत इत्यभ्युपेयते । अन्यथा तादृशान्योन्याभावत्वेन भाने तच्छरीरे पुनरभावत्वस्य निविष्टतयाऽनवस्थितविषयता-प्रसङ्गादभावत्वेनाभावस्य दुर्ग्रहत्वापत्तेश्च । तथा बाध्यत्वाभावरूपसत्त्वस्य स्वांशे स्वरूपतो भानमविरुद्धम् । इत्थञ्च भ्रमलक्षणेपि 'असत· सत्त्वावगाहित्वम्' इत्यत्रानवच्छिन्नस्वविषयतानिरूपितसत्त्वविषयतानिरूपितासन्निष्ठविषयताया. 'सतो असत्त्वेनावगाहित्वम्' इत्यनेन स्वरूपत स्वविषयतानिरूपितसत्त्वविषयतानिरूपिता याऽसत्त्वविषयता तद्रूपप्रकारतानिरूपितसन्निष्ठविषयतायाश्च निवेश । न च 'इद रजतम्' इति भ्रमस्थानेऽसद्रजते भासमानसत्त्व-स्याप्यसत्त्वेन तस्य नि स्वरूपत्वेन कथ स्वांशे स्वरूपतो भानमिति वाच्यम् । शुक्त्याद्यधिष्ठसत्त्वभासकसामग्र्या सत्त्वेन तत्संसर्गमात्रस्य भ्रमे रजतादावारोपिततत्त्वाङ्गीकारेण सत्त्वस्यासत्त्वाभावात् । यद्वा रजताद्यसत्त्वेपि भ्रमसामग्रीबलाद्रजतमित्यादिव्यवहारनिर्वाहिका विषयिता भ्रमे स्वीक्रियते यथा तथा तद्बलादेव रजत सत्

[1] रूपाभावत्वम् इति पाठेन भाव्यमिति भाति ।

तत्सत्त्व सदित्यादिव्यवहारनिर्वाहिका विषयिता प्रमायामिव स्वीक्रियते । भ्रमलक्षणेपि सैव निविष्टेति न काप्यनुपपत्ति । अधिकमुत्तरत्र वक्ष्यते ।

एव च 'शुक्तिरजते सत्त्व नास्ति' 'घटेऽसत्त्व नास्ति' इति निषेधकारणीभूतोक्तप्रतियोग्यारोपरूपज्ञाने निरवच्छिन्नसत्त्वविषयत्वास्वीकारान्न तस्य भ्रमत्वापत्ति । तज्ज्ञानस्य तादृशविषयत्वाभावे नियामकन्तु तादृशविषयिनाशालिबुद्धि प्रति तद्वस्तुनिषेधबोधकसामग्र्यादीना यथासम्भव प्रतिबन्धकत्व पूर्वोक्तमेवोह्यं सूक्ष्मदर्शिभिरिति दिक् ।

एवञ्च 'भूतले न घट' इत्यत्र प्रथमप्रत्यक्षे शाब्दे च सर्वत्र 'भूतलवृत्तिघटप्रतियोगिकोऽत्यन्ताभाव' इत्येवाकार । अनन्तरञ्च 'घटाभाववद्भूतलम्' इति द्वितीय ज्ञानम् । तत्र घटादिपदाना भूतलवृत्तिघटादौ लक्षणाया निरूढाया स्वीकारात् 'भूतलवृत्तिघटाभाववद्भूतलम्' इति शाब्दाकार । प्रत्यक्ष 'भूतलवृत्तिघटाभाववद्भूतलम्' इत्याकारकमेव । 'भूतले घटो नास्ति' इत्यादौ भूतलवृत्तिघटस्य भूतलाधिकरणकघटकर्तृकसत्ताया वा अभाव एव प्रथम ज्ञायते । 'अन्यत्र घटाभाव' इत्यत्र तु घटतत्कर्तृकसत्तयोरत्यन्ताभेदात् तादृशघटाभावत्वेन बोध्यते ।

यत्र भूतले घट उत्पत्स्यते नष्टो वा तत्र भूतले घटो नास्तीति प्रतीति प्रात्यक्षिकी भूतलसंसृष्टघटप्रतियोगिकं ध्वसं प्रागभाव तत्ससर्गप्रतियोगिकं ध्वसं प्रागभावञ्चावगाहते । ससर्गप्रागभावे ध्वसे वा ससृष्टप्रतियोगिकत्व स्वीक्रियते । विशिष्टस्योत्पत्तिनाशाङ्गीकारपक्षे तत्प्रतियोगिकप्रागभावध्वसयोरावश्यकतया पृथक् तत्स्वीकारे गौरवात् । नीलोपहितघटयोस्तादात्म्यार्थं भेदाभेदस्वीकारनये नीलप्रतियोगिकभेद एव नीलोपहितप्रतियोगिकत्ववदुक्तस्थले स्वीकारे बाधकाभावाच्च । इत्थञ्च 'अत्र भूतले न घट.' इत्यत्र भूतलससृष्टत्वविशिष्टघटप्रतियोगिकप्रागभावध्वसयोर्भानेऽपि न क्षति ।

'भूतले घटो नास्ति' इत्यादौ तु भूतलाधिकरणकघटवृत्तिसत्ताया. ससर्गरूपाया ध्वस प्रागभावो वा भासते । आख्यातार्थस्य नञर्थप्रकारतावच्छेदकतया भानाभ्युपगमे तु तादृशास्तित्वविशिष्टघटस्यैव तौ भासेते ।

'इदानीमेतद्भूतले घटो नास्ति' इत्यत्र तु एतत्कालावच्छिन्नैतद्भूतलसंसृष्टत्वविशिष्टघटस्यासत्त्वेनाप्रामाणिकप्रतियोगिकात्यन्ताभाव एव भासते । एतन्मते च नञुल्लेखप्रयोजकविशेष्यतानिरूपितप्रकारताप्रयोजकविषयत्व तत्समानाधिकरणविषयत्वमात्र वा प्रतियोगिता । न त्वाधेयताससर्गावच्छिन्नप्रकारत्वाप्रयोजकत्वादिक देयम् । अधिकरणस्य प्रथमप्रतीतावभावाशे भानानङ्गीकारेण तत्रातिव्याप्तेरभावात् । नियमेन 'घटाभाववद्भूतलम्' इति द्वितीयप्रतीत्यङ्गीकारेण तदधिकरणे तादृशसशयानुदयादिक सर्वमुपपद्यते ।

केचित्तु 'भूतले घटो नास्ति' 'भूतले न घट' इत्यादिप्रत्यक्षशाब्दबोधादिक पूर्वमतोक्तरीत्यैव । परन्तु कारणीभूतज्ञानन्तु 'भूतले घटोऽस्ति' 'भूतले घट' इत्याकारकमारोपरूप नापेक्ष्यते । मूलकृट्टीकाकृच्चरणै-

स्तत्कारणताया· कुत्राप्यनुक्तत्वान्निर्युक्तिकत्वाच्च । क्वचिट्टिप्पण्यादौ तदुक्तिर्मतान्तरानुसारेणाभिर्भरेणैव । विशृङ्खलघटभूतलाद्युपस्थित्यैव 'भूतलवृत्तिघटप्रतियोगिकाभाव ' इति 'भूतलाधिकरणकघटकर्तृकसत्ताभाव ' इत्याद्याकारकज्ञानं जायते । तावताऽप्यप्रामाणिकस्य विशिष्टस्याभावांशे भानादभावस्याप्रामाणिकप्रतियोगिकत्वोपपत्ति ।

नन्वेव तद्धभावज्ञान एवाप्रामाणिकभानेन कारणीभूतज्ञानेऽभानेन कथमत्रोक्त प्रतियोगित्वलक्षणं तत्र सम्भवतीति चेन्न । निषेधत्वावगाहिज्ञाने तदतिरिक्तधर्मान्तरभानस्यानुभवविरुद्धत्वेनाभावांशे नञुल्लेखप्रतीतौ सत्त्वादेरभानेन तत्र सत्त्वाधिकरणविशेषवृत्तित्वादिसन्देहानुत्पत्तेरनुभवसिद्धाया निर्वाहाय तद्द्वितीयक्षणे सत्त्वाद्यवगाहिप्रतीत्यन्तर नियमेनाङ्गीकर्तव्यम् । तथा च 'भूतले घटो नास्ति' इति ज्ञानोत्तर नियमेन ज्ञानस्य 'भूतलवृत्तिघटाभाववद्भूतलम्' इत्याकारकस्य द्वितीयस्याभावज्ञानस्याभावज्ञानपदेन धर्तव्यतया तदुपयुक्त यत् 'भूतले घटो नास्ति' इति ज्ञान तद्विषयताया विशिष्टाप्रामाणिके सत्त्वात्तत्र लक्षणोपपत्ति । 'अभावज्ञानोपयोगिज्ञान विषयत्वम्' इत्यत्राभावज्ञानोपयोगीत्येतत् द्वितीयज्ञानोपयोगिप्रथमज्ञानस्य परिचायकम् । तथा च नञुल्लेखप्रयोजकविषयत्वमेव प्रतियोगित्वम् । तत्र पूर्वज्ञानीया नञुल्लेखप्रयोजकीभूतनिषेधत्वविषयतानिरूपितामभावविषयता मादायातिव्याप्तिवारणाय तद्भिन्नत्वार्थक अभावनिष्ठविशेष्यतानिरूपितप्रकारतारूपत्वार्थक वा विशेषपदमपि सार्थकम् । तादृशविषयतारूपप्रतियोगिताया ससर्गत्व वा प्रतियोगिपदप्रवृत्तिनिमित्तत्व वेति सर्वाऽपि पूर्वोक्तरीतिरनुसन्धेया । एतेन प्राचा प्रामाणिकेष्वपि घटादिषु शास्त्रे बहुश प्रतियोगित्वव्यवहारोऽपि निर्व्यलीक । 'भूतले घटो नास्ति' इति प्राथमिकज्ञानजनकस्य 'घट ' इति विशृङ्खलज्ञानस्य विषयतारूपामुख्यप्रतियोगितामादाय भ्रातृसुते सुतत्वव्यवहारस्येवामुख्यस्य तादृशव्यवहारस्य सम्भवात् भूतलादौ तादृशव्यवहारस्य वारणाय विशेषपद तदन्यत्वाद्यर्थकम् । न च भूतलादौ गौणव्यवहारकरणे बीजाभाव इति वाच्यम् । तदिच्छाया एव नियामकत्वात् । आरोपे सतीति न्यायेनोक्तशङ्काया एवायोगाच्च ।

एवञ्च 'शुक्तिरजते सत्त्व नास्ति' 'घटे असत्त्व नास्ति' इति ज्ञानोत्पत्तये 'शुक्तिरजते सत्त्वम्' 'घटे असत्त्वम्' इति ज्ञानस्य पूर्वमनपेक्षणात् न तज्ज्ञानवतो भ्रान्तत्वमस्माकमापद्यते । निषेधांशेऽप्रकारतया सतोऽसत्त्वावगाहित्वस्यासत सत्त्वावगाहित्वस्यैव भ्रान्तित्वरूपत्वात् ।

न च भूतलघटादीना विशृङ्खलज्ञानेन भूतलवृत्तित्वविशिष्टघटत्वावच्छिन्नप्रतियोगिताकाभावबुद्धि कथमुपपद्यताम् । प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानरूपकारणाभावात् । अन्यथा 'वह्निर्महानसीयश्च' इति विशृङ्खलज्ञानोत्तर 'महानसीयवह्निर्नास्ति' इति घटनिर्विकल्पकोत्तर 'घटो नास्ति' इति धियश्चापत्तेरिति वाच्यम् । वक्ष्यमाणरीत्या प्रतियोगितावच्छेदकत्वादिप्रक्रियाया अप्रामाणिकतयोक्तनियमासिद्धे । 'वह्निर्न महानसीय ' इति निश्चयवतामपि 'महानसीयवह्निर्नास्त्येव' इत्यादिप्रतीतेरपलपितुमशक्यतयाऽभावबुद्धौ प्रतियोग्यंशे साक्षात्परम्परया

भासमानधर्मपुरस्कारेण प्रतियोगिज्ञानस्यानावश्यकत्वम् । 'वह्निर्महानसीयश्च' इति विशृङ्खलज्ञानोत्तरमसंसर्गाग्रहवता 'वह्निर्महानसीय' इति ज्ञानोदयद्वारा 'महानसीयवह्निर्नास्ति' इति बुद्धिर्जायते तृतीयक्षण इति त्वया स्वीक्रियते । तत्र द्वितीयक्षण एव 'महानसीयवह्निर्नास्ति' इति बुद्धिर्जायत इति मया स्वीक्रियते । क्षणविलम्बस्य शपथनिर्णेयत्वात्तादृशज्ञानान्तराकल्पनाप्रयुक्तलाघवाच्च । यत्र तु [1]'महानसीयवह्नि' इति विशृङ्खलज्ञानोत्तर 'महानसीयवह्नि' इति ज्ञानसम्भवेऽपि अनुभवसिद्धाया 'महानसीयवह्निर्नास्ति' इति बुद्ध्यनुत्पत्तेरुपपत्तिर्यद्बलेन भवतोपपाद्यते मयाऽपि तेनैवोपपाद्यते । अनयैव रीत्या घटनिर्विकल्पकोत्तर घटो नास्तीति बुद्ध्यापत्तिरपि निरस्ता । सिद्धान्ते निर्विकल्पकाभावाच्चेत्याहुः ।

ननु 'शशविषाणं नास्ति' इति प्रतीत्याऽसत्प्रतियोगिकाभाववत् 'अत्र भूतले घटो नास्ति' इति प्रतीत्या प्रामाणिकघटप्रतियोगिकोऽभाव भूतलवृत्तित्वेन प्रतीयत इति कुतो न स्वीक्रियते । तत्र तत्र विद्यमानटीकावाक्यानि अप्रामाणिकप्रतियोगिकत्वनियमवत्प्रतीयमानानि कथञ्चित् योजयितु शक्यानीति न तद्विरोधोऽपि । न चात्यन्ताभावपदेनाभावे आत्यन्तिकत्व प्रतीयते । आत्यन्तिकत्वञ्च देशकालपरिच्छेदराहित्यमेव । ततश्चात्यन्ताभावस्य सत्प्रतियोगिकत्वेऽभावस्य प्रतियोगिना सह विरोधात्प्रतियोग्यधिकरणदेशावृत्तित्वप्राप्त्या देशपरिच्छेदस्य प्राप्त्या आत्यन्तिकत्व भज्यत इति असत्प्रतियोगिकत्वनियम स्वीक्रियत इति वाच्यम् । दोषवत्स्वपि जीवेषु भगवतीवाप्रामाणिकदोषात्यन्ताभावसत्त्वेन निर्दोषत्वलक्षणस्यातिव्याप्तिमाशङ्क्य 'प्रतियोग्यारोपे यत्प्रधान तेनापि साकमभावस्य विरोधात्' इत्यादिग्रन्थेनाप्रामाणिकप्रतियोगिकस्याप्यभावस्य देशपरिच्छेदमङ्गीकृत्यैव **वंशपल्ल्याचार्यैरतिव्याप्ते** परिहृतत्वेन **आचार्यैरपि** 'प्रावप्रध्वससदात्वेन' इति 'पूर्वापरसदात्वेन' इति चात्यन्ताभावस्य कालावधिराहित्यमात्रस्योक्तत्वेन देशपरिच्छेदराहित्यस्याऽत्यन्तिकपदार्थत्वाभावेन तन्निर्वाहायासत्प्रतियोगिकत्वनियमाङ्गीकारायोगात् । युक्त्यन्तरस्याभावादिति चेन्न । यतो अभावाना स्वप्रतियोगिविरोधस्तावत्सम्मतः । स च नैकाधिकरणावृत्तित्वरूप । प्रागभावध्वसयोरभावात् । किन्त्वेककालावृत्तित्वम् । इत्थञ्चात्यन्ताभावस्यापि तदेव स्वीकर्तव्यम् । वैषम्ये बीजाभावात् ।

तथा च प्रयोग । अत्यन्ताभाव स्वनिष्ठनञुल्लेखप्रयोजकविषयतानिरूपितप्रकारताश्रयविशिष्टाधिकरण

[1] 'महानसीयो वह्निश्च' इति, इति पाठेन भाव्यमिति भाति ।

कालावृत्तिरभावत्वात् । प्रागभावादिवदिति । अत्यन्ताभावत्वञ्च सार्वकालिकाभावत्वम् । पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिरुद्देश्या । एवञ्च तादृशरूपावच्छिन्नपक्षे तादृशप्रकारतारूपप्रतियोगिताश्रयाधिकरणकालावृत्तित्वसिद्धौ तादृशविशिष्टरूपप्रतियोगिन कालासम्बद्धत्वमेव सिद्ध्यतीति सर्वात्यन्ताभावानामप्रामाणिकप्रतियोगिकत्वनियम. सिद्ध्यति । घटात्यन्ताभाव पटात्यन्ताभावो नेति नञुल्लेखप्रयोजकभेदत्वरूपधर्मावच्छिन्नविशेष्यतानिरूपितप्रकारताश्रयीभूतपटात्यन्ताभावरूपविशिष्टरूपप्रतियोग्यधिकरणकालवृत्तित्वमादाय बाधस्य तद्रीत्यैव दृष्टान्ते साध्यवैकल्यस्य चापत्तिवारणाय नास्तीत्युल्लेखप्रयोजकविषयतेत्येव निवेश । सा च भेदत्वातिरिक्तेन प्रागभावत्वादि-

विलक्षणेन परमते संसर्गाभावत्वपदव्यवह्रियमाणेन धर्मेणैवावच्छिन्ना भवतीति न तादृशभेदत्वावच्छिन्नविषयतामादायोक्तदोष । न च हेतोरप्रयोजकता । अभावत्वसाम्ये प्रमाण विनात्यन्ताभावविशेषस्य निरुक्तप्रतियोगिना दैशिकविरोधस्यान्ययो शशविषाणाद्यत्यन्ताभावानाञ्च कालिकविरोधस्य कल्पने गौरवरूपतर्कस्यैव बाधकत्वात् ।

अपि चात्यन्ताभावस्य देशिकविरोधस्यावश्यकत्वे प्रतियोग्यधिकरणकाले प्रतियोग्यधिकरणदेशावृत्तित्वस्यैकस्यैव सामयिकात्यन्ताभावस्य स्वीकरणेनैव घटोत्पत्ते पूर्वं परतश्च घटो नास्तीत्यादिप्रतीतिप्रामाण्याद्युपपत्तौ ध्वसप्रागभावाङ्गीकारस्यैव निर्बीजत्वापात । न च 'अत्र घटो भविष्यति' 'अत्र घटो ध्वस्त' इति प्रतीतिबलात्तदुभयाङ्गीकार । 'एतद्देशवृत्तित्वविशिष्टघट एतदुत्तरकालसम्बन्धी' इति भविष्यतीति प्रत्ययेनावगाहनात् । अत्र घटो ध्वस्त इति प्रत्ययेन तु 'एतद्भूतलवृत्तिघट एतदुत्तरकालासम्बन्धी' इत्यवगाहनात् । न चोत्तरत्वादिकमपि प्रागभावध्वसानङ्गीकारे निर्वक्तुमशक्यम् । पूर्वत्वोत्तरत्वयोरखण्डयो काले स्वतो विद्यमानयो किञ्चिन्निरूपितयो सैद्धान्तिकशिरोमणिभिर्यादवाचार्यैस्तत्त्वसख्यानटिप्पण्यामुक्तत्वेन तयो प्रागभावध्वसाघटितत्वात् । न चोत्पन्नस्य पुनरुत्पत्त्यादिपरिहाराय प्रागभावाङ्गीकार इति वाच्यम् । उत्पत्तिर्हि तत्क्षणपूर्वक्षणासम्बद्धस्य क्षणसम्बन्ध । तत्र सामग्री क्षणसम्बन्धमात्रस्य निर्वाहिका । न तु तत्पूर्वक्षणासम्बन्धस्यापि सामग्री । पूर्वमपि स्वतो विद्यमानस्य सामग्रीनियम्यत्वाभावात् । एवञ्च दण्डादिरूपा घटसामग्री घटस्य क्षणसम्बन्धमापादयेत् । न तु विशिष्टक्षणसम्बन्धरूपोत्पत्तिमपीति कुत प्रागभावाङ्गीकार ।

न च तद्घटध्वंसोत्तर तद्दण्डादिघटितसामग्रीबलात्तद्घटस्य क्षणसम्बन्धापत्तिवारणाय तत्प्रागभावस्य कारणत्वमावश्यकम् इति प्रागभावसिद्धिरिति वाच्यम् । प्रागभावस्वीकारेऽपि तद्दण्डादिरूपसामग्रीबलात्क्षणचतुष्टयानन्तरमुत्पत्स्यमानघटस्येदानीमेवापत्तिपरिहाराय तत्क्षणस्य तत्क्रियाया वा कस्यचिदननुगतस्य कारणस्यावश्य सामग्रीकोटिनिविष्टतया तद्बलादेवोक्तापत्तिवारणेन प्रागभावासिद्धि । न च त्यज्यता प्रागभावो ध्वसोऽपि । सामयिकाभाव एव स्वीक्रियता प्रामाणिकप्रतियोगिक । किमर्थं प्रागभावादीना पृथक्सिद्ध्यर्थमप्रामाणिकप्रतियोगिकत्वाङ्गीकारोऽतिलाघवादिति वाच्यम् । सिद्धान्तिना तु मैव वक्तुं शक्यम् । अपसिद्धान्तादिप्रसङ्गात् । तटस्थशङ्कायास्त्विदमुत्तरम् । लाघवमात्र नार्थव्यवस्थापकम् । तथात्वे एकस्मिन्नेव गुणे रूपत्वरसत्वादिक परिकल्प्य रूपत्वेन चक्षुर्ग्राह्यत्व रसत्वेन रसनाग्राह्यत्व कल्पनीय स्यात् । लाघवात् । अपि च जगत्येकमेव नीलादिक स्यात् । लाघवात् । व्यक्तिनाशे पाके वा तत्सम्बन्धापगमस्य वक्तु शक्यत्वात् । तथा च सर्वव्यवस्थोच्छेदप्रसङ्ग । 'कामाच्च नानुमानापेक्षा' इति सूत्रविरोधश्च स्यात् । अत

प्रत्यक्षयोरागमयोर्विरोधे निश्चयाय तु ।<br>
अनुमाद्या न स्वतन्त्राः प्रमाणपदवी ययु ॥

इति पुरुषोत्तमतन्त्रवचनानुसारेण प्रमाणानां परस्परविप्रतिपत्तौ सत्यां लाघवरूपतर्कादिकं अन्यतरसहकारी-भूयार्थव्यवस्थापकम्। प्रकृते च

पूर्वापरसदात्वेन त्रिविधोऽभाव इष्यते।
भावाभावस्वरूपत्वान्नान्योन्याभावता पृथक्॥

इति आचार्योदाहृतभगवत्कृततत्त्वविवेकवाक्यादिना प्रसिद्धवायुपुराणस्थशाण्डिल्यतत्त्वगतवाक्यादिना तत्सह कृतेन 'नष्टो घटः' 'भविष्यति घट' इति प्रत्यक्षेण च प्रागभावप्रध्वंसात्यन्ताभावानां पृथक्प्रमितानां लाघव-मात्रेण नापलापः कर्तुं शक्यः।

एतेन भेदवदत्यन्ताभावादीनामपि धर्मिस्वरूपत्वं परिकल्प्य सप्रतियोगिकत्वादिव्यवस्था सर्वा बोद्धुं शक्येति व्यर्थमन्योन्याभावमात्रस्य धर्मिस्वरूपत्वपरिकल्पनमिति कस्यचिद्दूषणम्, एवं दीधितिकारीयं प्रागभाव-खण्डनञ्चेत्येवमादीन्यपहस्तितानि। अस्माभिः केवलयुक्त्या कस्याप्यर्थस्यानङ्गीकारात्। पूर्वोदाहृततत्त्वविवेक-वायुपुराणवाक्यादिना भेदमात्रस्य वस्तुस्वरूपत्वावेदकेन

भेदस्तु सर्ववस्तूनां स्वरूपं नैजमव्ययम्।

इत्यादिना तैत्तिरीयभाष्याद्युदाहृतप्रमाणेन सिद्धार्थे उक्तचोद्यानवकाशात्।

यस्तूक्तवचनेष्वेव विप्रतिपद्यते तं प्रत्येतत्साधनोपायाभावेऽपि अस्मदङ्गीकारस्योक्तप्रमाणमूलकस्य क्षत्य-भावात्। अन्यथा बौद्धं प्रति तदसिद्धप्रमाणभावेन वेदेन सन्ध्यावन्दनयज्ञादिकर्तव्यतायाः साधयितुमशक्यत्वात् स्वमतेऽपि तत्परित्यागप्रसङ्गात्। भेदग्रहेऽन्योन्याऽश्रयाऽऽदिपरिहारस्तु धर्मिस्वरूपत्वनिर्भरं विनाऽपि 'धर्मित्वप्रति योगित्वतद्भेदा युगपत्' इत्यनुव्याख्यानसुधायां समयपादे नैयायिकमतप्रदर्शनेन किञ्चेत्यादिना विष्णुतत्त्व-निर्णयटीकायाञ्च टीकाकारैः प्रदर्शित इति नाद्वैतवादिभिः सह विचारे तन्निर्भरस्योपयोगः। तथा च प्रागभावादीनां त्रयाणामपि प्रतियोगिना सह कालिक एव विरोधः उतात्यन्ताभावविशेषस्य दैशिक एवेत्यत्र स्फुटनिर्णायकविशेषप्रमाणाभावाल्लाघवादिसहकृतानुमानाद्यवसर इति।

अपि च स्वरसतो यादृशशब्दात् यादृशबोधो जायते तदभिलाप्यप्रत्ययस्याप्युत्सर्गतस्तदाकारत्वं नियतम्। एवञ्च भूतले घटो नास्तीत्यत्र भूतलाधिकरणकसत्तावद्घटाभावो बोध्यत इति तदभिलाप्यप्रतीतेस्तादृशविशिष्टघट-प्रतियोगिकाभावो विषयो वाच्यः। यत्र भूतले घटः प्रसिद्धस्तद्घटितविशिष्टप्रतियोगिकः प्रागभावो ध्वंसो वा भवति। न चैवं सति शुद्धप्रतियोगिकप्रागभावध्वंसौ न सिद्ध्येतामिति वाच्यम्। यत्र घटस्तत्संसर्गश्चोभाव[1]प्युत्पन्नौ

[1] प्यनुत्पन्नौ इति पाठेन भाव्यमिति भाति।

नष्टौ वा तत्र 'घटस्तत्संसर्गश्च उत्पत्स्यते, भविष्यति, घटस्तत्संसर्गश्च नष्ट' इत्यादिप्रत्ययान्तरानुरोधेन [1]सिद्ध-विशेषणविशेष्यप्रतियोगिकप्रागभावध्वसानामेव विशिष्टप्रतियोगिकत्वेन भानमङ्गीक्रियत इति तस्य शुद्धप्रतियोगिकत्वसिद्धि । वस्तुतस्तु चैत्रो रूपीति चैत्रत्वविशिष्टे रूपावगाहिप्रतीत्यैव शुद्धेऽपि रूपित्व सिद्ध्यति । अन्यथा शुद्धस्यारूपित्व स्यात् । एव विशिष्टे प्रतियोगित्वावगाहिप्रतीत्या शुद्धेऽपि प्रतियोगित्व विषयीक्रियत एव ।

यद्वा माऽस्तु तद्धर्मविशिष्टे प्रतियोगित्वावगाहित्वम् । तद्धर्मोपलक्षित एव तदवगाहित्वमस्तु । यत्र विशेष्याशे तदा भासमानाभावप्रतियोगित्व बाधित तत्र विशिष्टे तत्र विशेषणीभूतघटभूतलससर्गे वा प्रतियोगित्व भासते । यत्र भूतले घट सर्वथा नास्ति तत्र घटो नास्तीति प्रतीतिर्जायते । तत्र तद्भूतलवृत्तिघटस्यासत प्रति-योगित्वेन भानमिति अत्यन्ताभावस्य सर्वस्याप्यसत्प्रतियोगिकत्व सिद्धम् । न च यत्र 'घटाभाववद्भूतलम्' इति प्रतीतिर्जायते तत्रैतद्भूतलासंसृष्टस्यैव घटस्य प्रतियोगितया भानात्सत्प्रतियोगिकाभावोऽपि स्वीक्रियतामिति वाच्यम् । यत्रोक्तप्रतीति प्रात्यक्षिकी तदा तस्या 'अत्र भूतले घटो नास्ति' इति प्राथमिकप्रतीतेरावश्यकतया तत्रोक्तरीत्या-ऽसत एव प्रतियोगितया भानात्तद्विषयीभूतार्थावगाहिन्या द्वितीयप्रतीतेरप्यसत्प्रतियोगिकाभावविषयकत्वावश्यकत्वे घटादिपदस्याभिलापकवाक्यस्थस्य भूतलवृत्तिघटादौ लक्षणाऽऽश्रयणीया । यत्र 'घट भ ववदिदम्' इत्यानुमानिक प्रत्यय शाब्दो वा तत्राधिकरणे 'अत्र घटो नास्ति' इति प्रत्ययस्य कदाचित्कस्यचिदपि दुरपह्नवतयोक्तानुमानिका-द्यभावप्रत्ययस्यापि तद्विषयत्वमिति रीत्योपपत्ते ।

न च 'भूतले घटो नास्ति' इति वाक्यात् 'घटाभावो भूतलाधिकरणकसत्ताश्रय' 'भूतलवृत्तिघटाभावः सत्ताश्रय.' इति वा बोध. स्वीक्रियत इति तदभिलाप्यप्रतीतेरपि तत्समानविषयकतया घटप्रतियोगिकत्वावगाहि-तया नासत्प्रतियोगिकत्वसिद्धिरिति वाच्यम् । नञो नियतत्वेन तदुपस्थाप्ये आख्यातार्थस्यान्वयायोगादुक्तरीत्या बोधस्य वक्तुमशक्यत्वात् । अन्यथा 'भूतलवृत्तिघटाभावो दृश्यो भवति' इत्याद्यर्थे उक्तवाक्यप्रयोगवत् 'भूतले घटो न दृश्यो भवति' इति 'भूतले घटो न प्रमेय' इत्यादिप्रयोगस्य प्रसङ्ग । 'भूतले घटौ न स्त' 'भूतले घटा न सन्ति' इत्यादौ आख्यातस्य द्विवचनबहुवचनानुपपत्तेश्च । अभावस्यैकत्वेन द्वित्वाद्यनुपपत्ते । न हि तत्र अभावद्वय त्रय वा बोध्यते । तथात्वाङ्गीकारे एकद्विघटाधिकरणे तादृशप्रत्ययानुदयापत्ते । न च तर्हि 'घट-कर्तृकसत्ताभावो भूतलवृत्ति' इति वा 'भूतलवृत्त्यभावीयप्रतियोगी घट सत्ताश्रय' इति वा बोध स्वीक्रियताम् । तावताऽपि प्रामाणिकप्रतियोगिकत्वाक्षतेरिति वाच्यम् । आद्यकल्पे भूतलपदोत्तरं सप्तम्यनुपपत्ते । तस्या धात्वर्थ-निरूपिताधिकरणार्थकत्व एवानुशिष्टत्वात् । अत सत्तायामेवान्वयस्य वक्तव्यतया भूतलाधिकरणकघटकर्तृकसत्ता-भावबोध एवाङ्गीकार्य इति सिद्धमप्रामाणिकप्रतियोगिकाभावविषयत्वम् । द्वितीयकल्पस्त्वयुक्त एव । तथात्वे 'सर्वत्र शशविषाणं नास्ति' इति [2]वाक्यादस्याप्रामाण्यप्रसङ्गात् । शशविषाणे सत्ताया बाधितत्वात् । नैयायिक-

---

[1] शुद्ध इति पाठेन भाव्यमिति भाति ।

[2] वाक्यादावप्रामाण्य इति पाठेन भाव्यमिति भाति ।

मतेऽपि 'भूतले गगन नास्ति' इति वाक्यस्याप्रामाण्यप्रसङ्गात् । 'ह्रदवृत्त्यभावप्रतियोगी वह्नि पर्वतवृत्ति ' इति बोधतात्पर्येण 'ह्रदे पर्वते वह्निर्नास्ति' इति प्रयोगप्रसङ्गाच्च । तस्मादुक्तरीत्यैव बोधो युक्तः ।

किञ्च 'भूतले घटोऽस्ति किम्' इति पृष्टे 'न' इत्युत्तरयति । तत्र किंपदातिरिक्तप्रश्नभागार्थान्वितार्थबोधकत्वस्योत्तरवाक्ये क्लृप्ततया तद्वाक्यबोध्यविशिष्टप्रतियोगिकाभावबोधस्य तद्वाक्ये क्लृप्तत्वादन्यत्रापि तथैव बोध आवश्यक । 'नेद चैत्रस्य' इत्यादौ चैत्रसम्बन्धविशिष्टेदंपदार्थस्य असत्त्वेन तदभावो बोध्यते । न च षष्ठ्यर्थ-चैत्रसम्बन्धाभाव एवेदमर्थे प्रत्याय्यताम् । घटो नास्तीत्यादाविवात्र बाधकाभावात् । तथा च प्रामाणिकप्रति-योगिकाभावसिद्धिरिति वाच्यम् । चैत्रसम्बन्धार्थकसर्वनामतत्पदघटितेन 'तदत्र नास्ति' इति वाक्येन बोध्याभावातिरिक्तप्रामाणिकप्रतियोगिकाभावान्तरस्य तद्वाक्येन बोधने गौरवेणोक्तरीत्याऽप्रतियोगिकाभावविषयक-बोधजनकत्वस्यैवाङ्गीकारात् । एव 'चैत्रो न पचति' इत्यस्यात्यन्ताभावबोधकत्वेऽप्येषैव गतिरूह्या ।

नन्वेव पूर्वोक्तयुक्तिभि 'घट पटो न भवति' इत्यनेनापि पटकर्तृकभवनाश्रयघटभावबोधोत्पत्त्यापत्त्या तस्य घटस्याप्रामाणिकतयोक्तवाक्यस्यात्यन्ताभावबोधकत्वमेव स्यात् । न भेदबोधकत्वम् । तथा च 'नान्योन्या-भावना पृथक्' इति तत्त्वविवेकमूलव्याख्यावसरे भावशब्दस्य कर्तृप्रत्ययान्तत्वमभ्युपेत्यान्योन्य न भवतीति व्युत्पत्त्या 'अन्योन्याभावशब्देन भेदवान् बोध्यते । तदुत्तरभावप्रत्ययेन पुनरन्योन्याभावो बोध्यते' इति टीकाकृद्व्याख्यानं विरुद्ध्येतेति चेन्न । यतो 'घट पटो न भवति' इत्यत्र नञर्थे भेदे पटस्य प्रतियोगितयान्वयः । तस्य च भवनरूपासाधारणधर्मे अभेदेनान्वय । सर्वत्र नामार्थयोरभेदान्वयनये 'घटो न पट ' इत्यत्र भेदवल्लाक्षणिक नञर्थस्य इतरपदार्थे अभेदान्वयस्याङ्गीकृतत्वेन प्रकृते नञर्थस्य भेदस्य भवने अभेदान्वये क्षतिविरहात् । तथा च पटभेदात्मकासाधारणधर्माश्रयो घट इति बोध । घटस्वरूपभेदस्य घटासाधारणत्वमनपवादम् ।

यद्वा भवनं स्वरूपसत्ता[1] घटभेदस्वरूपा घटनिष्ठा भवतीति न दोष. । अथवा 'घट पटो न भवति' इत्यत्र पटस्यैव स्वरूपसत्तारूपभवने आश्रयतयाऽन्वय । तथा च 'पटकर्तृकभवनाश्रयभिन्नो घट ' इति बोध· आख्यातस्याश्रयरूपकर्त्रर्थकत्वपक्षे आख्यातार्थप्रतियोगिकभेदावगाही जायते ।

अथ वाऽस्मिन्नेव पक्षे पटस्य धात्वर्थभवनान्विताख्यातार्थाश्रये अभेदेनान्वय । तथा च 'पटरूपभवनकर्तृ-भेदवान् घट ' इति बोधो जायते ।

अथ वा पटान्वितधात्वर्थभवनरूपसत्ताया नञर्थाभावरूपभेदे तस्याख्यातार्थे कर्तरि आश्रयरूपे तस्य घटे अन्वय । 'न कलञ्ज भक्षयेत्' इत्यादौ 'कलञ्जभक्षणाभावविषयकं कार्यम्' इति बोधाभ्युपगन्तृणा गुरूणां मत इव धात्वर्थाख्यातार्थयोरन्तरा नञर्थभानाभ्युपगमसम्भवात् । 'नामूढस्येतरोत्पत्ते ' 'नानुपमृद्य प्रादुर्भावात्' इत्यादौ पञ्चमीप्रकृतिप्रतियोगिकाभावस्य पञ्चम्यर्थान्वयस्याभियुक्तैरङ्गीकृतत्वाच्च । एतत्कल्पे पटकर्तृकसत्ताभाव-स्तद्भेदरूप एव भवतीति सर्वपक्षेष्वपि भेदबोधकतानिर्वाह ।

[1] पट इति पाठेन भाव्यमिति भाति ।

ननु कुत एवमाश्रीयते । पटकर्तृकसत्तावद्घटनिषेध किं न स्यात् 'भूतले घटो नास्ति' इत्यादाविवेति चेन्न । तत्र घटकर्तृकसत्ताभावस्य भूतले बोधने भूतल इति सप्तम्यनुपपत्तेर्नञर्थे आख्यातार्थान्वये पूर्वोक्तानुपपत्तेरिव उक्तरीत्या बोधाङ्गीकारे प्रथमाद्यनुपपत्तेरभावात् । न च 'घट पटो भवति किम्' इति पृष्टे 'न' इति ब्रूते । तत्र पटकर्तृकभवनविशिष्टघटनिषेधबोधकत्व तद्वाक्यस्य पूर्वं भवदुक्तरीत्यैव तवावश्यकम् । एव 'घटे पटतादात्म्य नास्ति' इत्यभिलापानुरोधात् तादृशप्रतीतेर्घटनिष्ठपटतादात्म्याभावविषयकत्वस्य क्लृप्तत्वात्तदनुसारेण 'घट पटो न भवति' इति प्रतीतेरपि 'नेदं चैत्रस्य' इत्यादावुक्तरीत्या घटनिष्ठपटतादात्म्याभावविषयकत्वमेव वाच्यमिति कुतोऽस्या भेदविषयकत्वप्रत्याशेति वाच्यम् । 'घट पटात्पृथक्' इति शब्दाभिलाप्यप्रतीतेर्निषेधविषयकत्वेनानुभवसिद्धाया अत्यन्ताभावविलक्षणभेदविषयकत्वमावश्यकम् । एव 'घट एवायम्' इत्येतावन्मात्राकारप्रत्ययस्यापि स्वरूपभेदरूपविलक्षणविषयकत्व दुरपह्नवम् । 'घट पटो न' इत्यत्रापि 'नास्ति' इत्यादिप्रत्यये भासमानानुयोगिताविलक्षणभेदत्वादिरूपानुयोगिताविशिष्टविषयकत्वमनुभवसिद्धम् । न चाभिलापकवाक्ये 'भवति' इत्यस्याध्याह्रियमाणत्वात्पटभवनविशिष्टघटरूपासत एवात्यन्ताभावरूपनिषेधप्रतियोगित्वेन भान तत्रेति वाच्यम् । सार्वजनीनानुभवविरोधात् ।

प्रसज्यप्रतिषेधोऽय क्रियया सह यत्र नञ् ।
पर्युदास. स विज्ञेयो यत्रोत्तरपदेन नञ् ॥

इति कारिकयाऽभियुक्तै 'घट पटो न' इत्यादावुत्तरपदरूपपटपदार्थान्वितस्वार्थरूपभेदबोधकत्वेन नञ पर्युदास संज्ञकत्वोक्तया अत्र क्रियाध्याहार विनैव बोधस्योक्तत्वात् । प्रसज्यप्रतिषेधात्मकससर्गाभावबोधस्थले क्रियाया आवश्यकत्वोक्तया तत्राश्रुतक्रियाध्याहारस्यावश्यकत्वात् । 'अघट भूतलम्' 'निर्मक्षिकम्' इत्यादौ क्रिया विनाऽत्यन्ताभावबोधकत्वं तादृशसमासविधायकशास्त्रबलादेव सिद्ध्यति । तत्रासत्प्रतियोगिकाभावभाननिर्वाह. पूर्वोक्तरीत्या लक्षणया बोध्य । एवञ्चोक्तप्रतीतिभिर्भेदस्यापि क्लृप्तत्वेन 'घट पटो [1]भवति' इति वाक्यस्य तदभिलाप्यप्रत्ययस्य च तद्विषयकत्वकल्पने गौरवाभावात् । 'घट पटो न' इति वाक्यजन्यबोधस्य यत्कार्यं मध्ये ज्ञानान्तर विना 'घट: पटात्पृथक्' इति व्यवहारादि तज्जनकत्वादिना 'घट. पटो न भवति' इति वाक्यजन्यबोधस्य तत्समानविषयकत्वस्य निष्प्रत्यूहतयोक्तरीत्याऽन्योन्याभावबोधकत्व निराबाधमिति युक्तैव तत्त्वविवेकटीका । 'घट. पटो भवति किम्' इत्युत्तरवाक्यस्थनञ्पदसमभिव्याहृतेन पटभवनविशिष्टघटनिषेधो बोध्यता नाम क्वचित् । न ह्येतावताऽनन्तरमुक्तयुक्त्या सिद्धमुक्तवाक्यस्यान्योन्याभावविषयकत्वं हीयते । 'घटे पटतादात्म्य नास्ति' इत्यसाद्धटवृत्तिपटतादात्म्यरूपासत्प्रतियोगिकात्यन्ताभावस्य बोध । तल्लिङ्गकभेदानुमितेर्मानसज्ञानस्य वोत्पत्त्यैव 'घट पटात्पृथक्' इति व्यवहारादिकार्यमङ्गीक्रियते । तादात्म्याभावस्य भेदव्याप्यताग्रहरहिताना तदनुदयादिति सर्वमनवद्यम् ।

---

[1] न भवति इति पाठेन भाव्यमिति भाति ।

केचित्तु प्रामाणिकप्रतियोगिकस्यात्यन्ताभावस्याङ्गीकारे तद्भेदस्यैव तदत्यन्ताभावरूपताया नैयायिकै-रङ्गीकृतत्वेन प्रकृतयोर्भेदे मानाभावेन च तत्रैव पर्यवसानादव्याप्यवृत्त्यत्यन्ताभावस्य सिद्धान्तेऽनङ्गीकारात् सोऽत्यन्ताभावो भेद एव । शुद्धात्यन्ताभावस्तु केवलान्वयी अप्रामाणिकप्रतियोगिक एवेति शुद्धात्यन्ताभावस्या प्रामाणिकप्रतियोगिकत्वनियमस्य न काचित्क्षति. । अत्यन्ताभावस्य शुद्धत्वन्तु यादृशयादृशप्रतियोगिकात्यन्ता भावत्वविशिष्टाधिकरण यद्यत् तत्तत्स्वरूपभूतभेदनिष्ठात्यन्ताभावत्वनिरूपिका या या तादृशतादृशप्रतियोगिता तत्तदन्यप्रतियोगितानिरूपकात्यन्ताभावत्ववत्त्वम् । यादृशी घटात्यन्ताभावीयघटनिष्ठप्रतियोगिता तन्निरूपकात्यन्ता-भावत्वविशिष्टाधिकरणानि घटवद्भिन्नानि नानाधिकरणानि तत्तदात्मकभेदास्तु तत्तत्स्वरूपभूतघटवद्भेदा. तन्निष्ठा-त्यन्ताभावत्व घटात्यन्ताभावत्व, प्रामाणिकप्रतियोगिकात्यन्ताभावस्य भेदरूपताया उपपादितत्वात् । तन्निरूपिका या या प्रतियोगिता प्रामाणिकघटादिनिष्ठा एव । तत्तदन्या शशविषाणादिरूपाऽसन्निष्ठा भवति । तस्या यादृशपदेनोपादानासम्भवात् । तथा हि, शशविषाणादिनिष्ठप्रतियोगिता यादृशी चेत् तन्निरूपकात्यन्ताभावत्व-विशिष्टाधिकरण यद्यत् भूतलादिक तत्तदात्मकभेदास्तु पदार्थान्तरप्रतियोगिकभेदा । तन्निष्ठं यदत्यन्ताभावत्व [1]शशविषाणाभावत्व [2]तस्य धर्मिस्वरूपत्वाभावेन तदात्मकभेदरूपत्वाभावात् । किन्तूक्तरीत्या घटात्यन्ताभावत्व-मेव । तन्निरूपकत्व न शशविषाणादिनिष्ठप्रतियोगिताया इति । अत्र यद्यदधिकरणमितिवीप्सानादरे शशविषाण-निष्ठप्रतियोगिताऽपि तादृशी भवत्येव । शशविषाणाभावस्य स्वस्मिन्नपि सत्त्वात् शशविषाणनिष्ठप्रतियोगिताका-त्यन्ताभावत्वविशिष्टाधिकरण शशविषाणाभावोऽपि । तदात्मको भेदस्तन्निष्ठघटभेद । तन्निष्ठमत्यन्ताभावत्वं शशविषाणात्यन्ताभावत्वम् । तन्निरूपकत्वात् । अतस्तदादर । यादृशप्रतियोगिताकाभावाधिकरणमित्येतावता पूर्तावत्यन्ताभावत्वाश्रयेत्युक्तिरन्यात्यन्ताभावप्रतियोगिता यादृशपदेनोपादेयेति सूचनाय । न त्वतिप्रसङ्गपरिहारा-येति ज्ञातव्यम् ।

यद्वा व्यतिरेकिभिन्नत्वमेव शुद्धत्वम् । तत्तद्धर्मिस्वरूपभेदात्मकाना प्रामाणिकप्रतियोगिकात्यन्ताभावानां व्यतिरेकित्वात्तेन तद्वारणम् ।

एतेन 'भेदान्यत्वं चेच्छुद्धत्व तदा शशविषाणात्यन्ताभावादीनामपि स्वनिष्ठघटभेदस्वरूपत्वादसग्रह एव । स्वाश्रयस्वरूपभेदात्मकान्यत्वमित्युक्तावपि स एव दोष । शशविषाणाभावादीनामपि स्वाश्रयत्वेन स्वाश्रयस्वरूप-भेदात्मकत्वात्' इति परास्तम् । उक्तनिर्वचनद्वयेऽपि दोषाभावात् । न च घटत्वात्यन्ताभावस्य पटात्मकभेद-स्वरूपत्वे पटस्वरूपस्वाधिकरणात्मकत्वापत्त्याऽत्यन्ताभावस्याधिकरणस्वरूपत्वखण्डकसुधातत्वसंख्यानटीकादि-विरोध । तत्राभावत्वेनैव रूपेण प्रस्तुततया शुद्धात्यन्ताभावघटतत्ससर्गध्वसप्रागभावादिपरत्वात् ।

ननु व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकरूपात्यन्ताभावादीना तदवच्छिन्नभेदाप्रसिद्ध्या तदनात्म-काना केवलान्वयिना शुद्धात्यन्ताभावत्ववता प्रामाणिकप्रतियोगिकानामसत्प्रतियोगिकत्वाभावाद्व्यभिचार । न च

---

[1] न शशविषाणाभावत्व इति पाठेन भाव्यमिति भाति ।

[2] शशविषाणात्यन्ताभावस्येत्यर्थः ।

तेन सम्बन्धेन तद्भेदोऽपि तदत्यन्ताभावरूप केवलान्वयीति नोक्तशुद्धत्व तस्येति वाच्यम् । प्रतीतिबलात्तद्रूपा सत्प्रतियोगिकभेदाङ्गीकारेऽपि तद्वान्नेत्यप्रतीतेरसद्विशेषे तद्भेदानङ्गीकारादिति चेन्न । सम्बन्धस्य प्रतियोगितावच्छेदकत्वादेरग्रे खण्डनीयतया तस्य सयोगप्रतियोगित्वविशिष्टरूपप्रतियोगिकत्वस्यैव स्वीकारेण तस्यासत्त्वेन व्यभिचारविरहात् ।

न चाकाशे 'इह पक्षी, नेह पक्षी' इति प्रतीतिसिद्धप्रामाणिकप्रतियोगिकाभावो व्याप्यवृत्त्यभावानङ्गीकारे अशव्यवस्थया विद्यमानस्तदशात्मकभेदस्वरूपो न वाच्य । तदंशे अंशान्तरप्रतियोगिकभेदाभावात् । अतोऽतिरिक्त एवेति शुद्धत्वप्राप्त्या व्यभिचार इति वाच्यम् । तदशे विद्यमानपक्षिसयोगनिष्ठयादृशप्रतियोगिता घटात्मकभेदस्वरूपात्यन्ताभावनिरूपिका सैवाशान्तरनिष्ठभेदात्मकाभावनिरूपिकेति तत्तदन्यप्रतियोगितानिरूपकत्वाभावात्प्रतियोग्यधिकरणाशावृत्तित्वेन व्यतिरेकित्वाच्च तत्र शुद्धत्वाभावात् । तत्रत्याभावस्याशभेदस्थानीयतद्विशेषात्मकत्वाङ्गीकारान्निरुक्तौ भेदविशेषयोरुभयोरपि निवेश्यतया वा दोषाभावात्' इत्याहुः ।

अथ सर्वेषामत्यन्ताभावाना केवलान्वयितया समनियतत्वेनैक्यापत्ति । निर्दोषत्वादे भगवल्लक्षणत्वानुपपत्ति । जीवादावतिव्याप्ते । घटाधिकरणेऽपि भूतले घटो नास्ति इति वाक्यस्य प्रामाण्यञ्च स्यात् । घटवति भूतले घटाभावो नास्ति इति वाक्य प्रमाणञ्च न स्यात् । सत्त्वासत्त्वयो परस्परविरहात्मकत्वायुक्तिरपि न सङ्गच्छेत इति चेन्न ।

समनियतत्वेऽप्यैक्यसाधकप्रमाणं विना लाघवमात्रेणैक्यसिद्धेरयोगात् । अन्यथाऽभिधेयत्वज्ञेयत्वादीना पञ्चाशद्वर्णाव्याकृताकाशादीनां देशकालसमनियतानामप्यैक्य स्यात् । तेषा भावत्वान्नैवमिति चेत्तर्हि भावत्वादेवैषामपि भेदोऽस्तु । तेषा ककारादिरूपविलक्षणधर्मेणानुभूयमानाना 'ककारो मया श्रुतो न गकार.' इति भेदोपलम्भान्नैवमिति चेत्तर्हि 'शशविषाण नास्ति' इति वाक्य श्रुत्वा तत कञ्चित्काल विलम्ब्य 'नरविषाण नास्ति' इति श्रुतवता 'पूर्वं शशविषाणाभाव श्रुतो न नरविषाणाभाव' 'इदानीमयं श्रुतो न स' इत्यादिरूपेण भेदोपलम्भात्तत्तज्ज्ञानकार्यीभूतसशयादिप्रतिबन्धादीना वैलक्षण्यानुभवाच्च स्ववृत्तितत्तत्प्रतियोगिकत्वरूपविलक्षणधर्मशालिनामभावानामपि भेदोऽस्तु ।

नापि निर्दोषत्वस्य भगवल्लक्षणत्वानुपपत्ति । स्ववृत्तिदोषाभाववत्त्वस्य भगवल्लक्षणत्वाभ्युपगमात् । अत एव **मन्दारमञ्जर्यां** 'स्वप्रागभावाप्रतियोगित्वमनादित्वम्' इति परिष्कृतम् । ननु स्वशब्दस्य समभिव्याहृतपरत्वेनेश्वरलक्षणवाक्यस्थस्वशब्देनेश्वरस्य बोधनेऽपीश्वरवृत्तिदोषाभावस्यैव लक्षणत्वप्राप्त्या तस्य जीवेऽतिव्याप्तिर्दुर्वारैवेति चेन्न । मन्दारमञ्जर्युक्तलक्षणस्याप्येवमेव प्रत्याख्यानप्रसङ्गात् । तत्रापि स्वशब्देनानादेर्बोधनेऽप्यनादिप्रतियोगिकप्रागभावप्रतियोगित्वाभावस्य वाऽनादिनिष्ठ यत्प्रागभावप्रतियोगित्व तदभावस्य वा लक्षणत्वेन प्राप्ततया तस्य सादिष्वतिव्याप्तेर्दुर्वारत्वात् । 'स्वप्रागभावप्रतियोगित्वाभाववदिदम्' इति वाक्यजन्यप्रमाविषयीभूतं यद्विशिष्ट तस्य

तादात्म्येन लक्षणत्व तद्वाक्याभिप्रेतमिति चेदत्रापि 'स्ववृत्तिदोषाभाववानयम्' इति वाक्यजन्यप्रमाविषयीभूत-विशिष्टस्यैव तादात्म्येन लक्षणत्वाभ्युपगमान्नोक्तदोष । न च दोषाभाववदिति वाक्यस्योभयाभावादिबोधकत्व-स्यापि सम्भवेन तादृशप्रमाविषयविशिष्टो जीवोऽपि भवतीति वाच्यम् । दोषत्वावच्छिन्नप्रकारकग्रहविरोधित्वेन प्रमाया विशेषणीयत्वात्। उभयाभावादिग्रहस्याविरोधित्वात्। 'अत्र दोषो नास्ति' इति प्रमाव्यवहितोत्तरक्षणोत्पन्ना या 'दोषाभाववानयम्' इति वाक्याभिलाप्यप्रमा तद्विषयीभूतविशिष्टस्य लक्षणत्वे तात्पर्याद्वा न कश्चिद्दोष । अनादित्वलक्षणमप्येवमेव परिष्कर्तव्यम् । अन्यथोक्तोभयाभावप्रमामादायासङ्गते ।

केचित्तु 'दोषो नास्ति' इति प्रमीयाभावनिष्ठविशेष्यतानिरूपितप्रतियोगितासंसर्गावच्छिन्नप्रकारतानिरूपिता ऽधेयतासंसर्गावच्छिन्नप्रकारतावत्त्वमेव निर्दोषत्वमभिप्रेतम् । 'ईश्वरे दोषो नास्ति' इति प्रमीयतादृशप्रकारता-मादायेश्वरे लक्षणसमन्वय । प्रतियोगितया भासमानदोषसम्बन्धवत्तया भासमानस्य तादृशससृष्टरूपेणासत्त्वेऽपि शुद्धस्याप्यग्रे भानस्य व्यवस्थापनीयतया तस्यापि भानाभ्युपगमात् । तदनङ्गीकारे तु तादृशप्रकारतानिर्वाहक-विषयताश्रयत्वमेव लक्षणमस्तु । पूर्वमीश्वरोपस्थितिं विनोत्तरज्ञाने तादृशप्रकारताया· प्रतियोगिससृष्टतया भास-मानेऽसत्यनिर्वाहात् । प्रतीतिबलादेव पूर्वोपस्थितीयेश्वरविषयतायास्तादृशप्रकारताप्रयोजकत्वाभ्युपगमात् । 'जीवे दोषो नास्ति' इति धिय प्रमात्वाभावादेव तत्रोक्तरीत्या लक्षणागमनात् । एवमनादि[1]लक्षणत्वस्यापि स्वनिष्ठ यत्प्रागभावप्रतियोगित्वं तदभाव इत्यर्थकत्वे उक्तरीत्यैव परिष्कार । यस्य य प्रागभाव इत्यादिरीत्यार्थकरणे तु तादृशाभावविषयतानिरूपितप्रतियोगितासंसर्गावच्छिन्नप्रकारतानिरूपितप्रागभावप्रकारतानिरूपितप्रकारतात्प्रयोज-कविषयताश्रयत्वमिति रीत्या परिष्कर्तव्यम् । प्रतियोगिकोटौ भासमानस्य सर्वस्यासत्त्वात्कथ प्रकारता प्रागभा-वीया भवतीत्याशङ्का तु तच्छब्दोल्लेखादिप्रयोजकत्वमेव तथात्वमित्यग्रे वक्ष्यमाणदिशा वारणीया । एवमन्यत्रापि द्रष्टव्यमित्याहुः ।

एव नापि घटवति भूतले 'अत्र घटो नास्ति' इति वाक्यस्य प्रामाण्यम् । तद्वाक्येन तद्भूतलसंसृष्टघट-प्रतियोगिकात्यन्ताभावबोधस्य व्यवस्थापितत्वेन घटाधिकरणसंसृष्टघटप्रतियोगिकत्वस्य तद्वाक्येनात्यन्ताभावे बोध नीयस्य बाधितत्वात् । नापि 'घटाभाववदिदम्' इति वाक्यस्य प्रामाण्यापादन युक्तम् । उभयाभावादिबोधतात्पर्यक-तादृशवाक्यप्रामाण्यस्य त्वयाऽङ्गीकृतत्वेन ममापीष्टत्वात् । सामान्याभावबोधतात्पर्यस्थले समभिव्याहृताधिकरण-संसृष्टघटादौ लाक्षणिकत्वस्य घटादिपदाना पूर्वमुक्तत्वात्तादृशवाक्यस्याप्युक्तरीत्या बाधितार्थकत्वात् ।

'निरनिष्टो निरवद्य.' इत्यादिवाक्याना जीवविषयकतया प्रामाण्य स्यादित्यप्यनेनैव निरस्तम् । तद्वाक्यस्य जीवविषयकत्वे जीववृत्तिदोषाभाववत्त्वस्यैव जीवे बोधकताया एव बलादापत्त्या तस्य बाधितत्वात् ।

---

[1] लक्षणस्यापि इति पाठेन भाव्यमिति भाति ।

न च 'निरनिष्ट इत्यादिवाक्यबोध्यो योऽभावस्तद्वान् जीव.' इति वाक्यस्य प्रामाण्य स्यात् । तद्वाक्यबोध्यस्येश्वरवृत्तिदोषप्रतियोगिकाभावस्य जीवेऽपि सत्त्वात् इति वाच्यम् । तस्य केवलान्वयित्ववादिनामिष्टत्वात् । अन्यथा केवलान्वयित्वोक्तेरेवासङ्गतिप्रसङ्गात् । एव घटवति भूतले 'घटाभावो नास्ति' इति वाक्यमपि प्रमाणं भवत्येव । घटपदस्य तद्भूतलसंसृष्टघटपरतया 'अत्र घटाभाव ' इत्यप्रमाणवाक्यानुसारेण क्लृप्ततया 'अत्र घटाभावो नास्ति' इति वाक्येनापि 'एतद्भूतलसंसृष्टो य एतद्भूतलसंसृष्टघटप्रतियोगिकोऽभावस्तदत्यन्ताभाव' इति बोधो जायते । स च प्रमैव । यत्र भूतले घटोऽस्ति तद्भूतलससृष्टघटप्रतियोगिकात्यन्ताभावस्यासत्त्वेनैतद्भूतलससृष्टस्य तस्य सुतरामसत्त्वेन तत्प्रतियोगिकात्यन्ताभावस्य तद्बोधविषयस्य सत्त्वात् । भूतलान्तरससृष्टघटप्रतियोगिकात्यन्ताभावरूपकेवलान्वयिवस्तुबोधकतत्पदघटितम् 'अत्र स नास्ति' इति वाक्यमप्रमाणमेव । एतद्भूतलवृत्तित्व विशिष्टतदभावव्यक्ते. सत्त्वेन तदत्यन्ताभावस्य बाधितत्वात् ।

एवं भावाभावयो परस्परविरहात्मकत्वोक्तिरपि मतान्तररीत्या । स्वमते तु 'अत्र घटो नास्ति' इति प्रतीत्युत्तर यद्घटाभाववदिति यथार्थज्ञान तद्विषयीभूत यद्विशिष्टं तद्व्याप्यत्व घटाभावस्य घटविरहरूपत्वम् । एवम् 'अत्र घटाभावो नास्ति' इत्यादिरीत्या घटस्य घटाभावविरहरूपत्वम् । व्याप्यता च नञुल्लेख्यस्वप्रमोत्तरप्रमाविषयतया बोध्या । अतो न तस्य केवलान्वयित्वेऽपि व्याप्यताभङ्ग । एवक्रमेण तत्पारिभाषिकमेव । यद्वा स्वप्रधानकारोपविषयप्रतियोगिकत्वमभावस्य भावविरहात्मकत्वम् । स्वविषयताप्रयोज्यप्रतियोगितासंसर्गावच्छिन्न प्रकारतानिरूपितप्रमीयविषयताश्रयत्व पर्यवसितमभावे । भावे तु तादृशप्रतियोगिप्रकारताप्रयोजकविषयताऽश्रयत्वमिति रीत्या पारिभाषिकम् । प्रागभावादिस्थले प्रतियोगिन सत्त्वादेव प्रतियोगिविषयता अभावप्रमीयप्रतियोगिप्रकारताप्रयोजिका । अत्यन्ताभावस्थले तु सत्यभूतप्रधानविषयतैव केचिदित्युक्तमतरीत्या प्रयोजिका । तत्र घटत्वरूपसामान्यधर्मावच्छिन्नविषयता प्रयोजिका चेत् सामान्यप्रधानकोऽभाव सामान्याभावपदव्यवहार्य । विशेषधर्मावच्छिन्नप्रधानकस्तु विशेषाभावो भवतीति तद्व्यवस्थापि घटते । 'शशे विषाण नास्ति' इति प्रतीतिसिद्धोऽभावो विषाणप्रधानक । 'सर्वत्र शशविषाणं नास्ति' इति प्रतीतिसिद्धोऽभाव शशविषाणप्रधानक एव । असतोऽपि तादृशविषयताश्रयत्वरूप प्रकृताभिमतप्रधानत्व युक्तम् । भावाभावयोरुक्तविरहात्मकत्व भावाभावबोधकवाक्यप्रामाण्यादौ कथञ्चिदुपयुज्यत इति तदुक्तिरपि सार्थकैव । एवमन्यदपि ऊह्यमित्यल विस्तरेण ।

**वंशपल्लीस्थाचार्यास्तु** निर्दोषत्व दोषारोपपूर्वकप्रतीतिविषयाभाववत्त्वमिति परिष्कृत्य प्रतियोग्यारोपे यत्प्रधानं तेनापि साकमसत्प्रतियोगिकाभावस्यापि विरोधमङ्गीकृत्य जीवेऽतिव्याप्तिं परिहृतवन्त । तेषा मते सर्वेषामत्यन्ताभावानामसत्प्रतियोगिकत्वाविशेषेऽपि 'घटवति भूतले घटो नास्ति' 'घटाभाववदिदम्' इति वाक्याप्रामाण्यादिव्यवस्थाबलात् सत्प्रधानकोऽभावो व्यतिरेकी प्रधानभूतसद्विरोधी । असत्प्रधानकस्तु केवलान्वयी । तरङ्गिण्युक्तसत्त्वासत्त्वयो परस्परविरहात्मकत्वपरिष्कारोऽप्येतन्मतरीत्या निर्वाह्य । एवमप्रामाणिकप्रतियोगिकाभावनियमे एवमन्येऽपि क्षुद्रोपद्रवा: सूक्ष्ममतिभि· परिहरणीया इत्यलमिति वदन्ति ।

सत्यनाथश्रीचरणाः पुनरभिनवताण्डवादौ प्रामाणिकप्रतियोगिकमप्यत्यन्ताभावं सिद्धान्ते व्यवस्थापयन्त स्तन्नियमं तत्यजु । तन्मते सर्वोऽपि व्यवस्था सुलभैव । व्यवस्थापनप्रकारस्तत्कृतग्रन्थ एवानुसन्धेय । ग्रन्थ-गौरवभयान्नेह प्रपञ्च्यत इति ।

## १९४ पृष्ठे २-३ पङ्क्त्योर्मध्ये

तर्ह्यनुभवकलहोऽय निरवधि इति चेत् युक्त्याऽपि बाधितत्वात् । तथा हि, साध्याभावत्वेनावगाहित्वेन कारणत्वानङ्गीकारे वस्तुतो य साध्याभाव तद्व्यापकाभावप्रतियोगित्वज्ञानस्य कारणत्वं वाच्यम् । तथात्वे रूपा-भावाभावात्मकतया तद्रूपस्य तद्रूपव्यापकाभावप्रतियोगिघटत्ववत्ताज्ञानात् घटे रूपाभावानुमिति स्यात् । एव भावसाध्यकस्थलेऽपि वह्न्यभावस्य तद्व्यक्तित्वेनावगाहिन तद्व्यक्तिव्यापकाभावप्रतियोगिधूमवत्ताज्ञानात् पर्वते वह्नि-रित्यनुपस्थितसाध्यमुख्यविशेष्यकानुमित्यापत्तिश्च । अभावसाध्यकस्थलेऽनुमितिं स्वीकृत्य भावसाध्यकस्थले तदन-ङ्गीकारे तु अर्धजरतीयन्यायापत्ते । न च भावप्रतियोगिकाभावनिष्ठतद्व्यक्तित्वं प्रतियोगिविशेषप्रतियोगिकत्वातिरिक्तं दुर्वचमिति वाच्यम् । रूपादाविव प्रतियोग्यघटितस्यैव तद्व्यक्तित्वस्य तत्र सत्त्वात् । अन्यथा प्रलये सर्ववह्निनाशे अभावनिष्ठतद्व्यक्तित्वस्यापि नाशप्रसङ्गेन तद्व्यक्तिरूपत्वाभावेनेतरतादात्म्य नि स्वरूपत्व वा स्यात् । चैत्रेण 'ह्रदे यत्किञ्चिद्वर्तते' इत्युक्तौ तत्कालीनचैत्रोच्चारितयत्किञ्चित्पदतात्पर्यविषयतया वह्न्यभावावगाहिन 'तादृशयत्किञ्चि-त्पदतात्पर्यविषयीभूतव्यापकाभावप्रतियोगि' इत्यादिपरामर्शादुक्तानुमित्यापत्तेर्दुर्वारत्वाच्च । एवमभिधेयत्वाभावनिरू पितव्यतिरेकिपरामर्शाद्भ्रमात्मकाभिधेयत्वाभावानुमितिर्व्यतिरेक्याभासाज्जायते । सा न स्यात् । तत्र साध्यस्यैवा-प्रसिद्ध्या तदभावस्य वास्तवस्याभावेन तत्र कारणतावच्छेदकविरहात् ।

न च वास्तवसाध्याभावघटितकारणान्तराङ्गीकारेऽपि प्रतिषेधाकारपरामर्शस्य कारणताया अपरित्यागात् निरूप्यनिरूपकभावापन्नविषयिताशालिभ्रमात्मकपरामर्शादेव व्यतिरेक्याभासलिङ्गकानुमित्युपपत्तिरिति वाच्यम् । उक्तकारणान्तराङ्गीकर्तुर्भवतो मते 'धूमव्यापकाभावप्रतियोगिवह्न्यभाववान् ह्रद ' इति ज्ञानाद्ध्रदे धूमाभावानु-मितेरिव 'अभिधेयत्वव्यापकाभावप्रतियोगिघटत्वाभाववान् पट ' इति भ्रमात् 'पटेऽभिधेयत्वाभाव ' इत्यनुमिते-र्दुष्परिहरतया तत्स्थलीयपरामर्शे भवदुक्तकारणावच्छेदकाभावाद्व्यतिरेक्याभासत्वानुपपत्तेरित्यभिप्रायात् ।

एतेन 'साध्यीभूताभावप्रतियोगितावच्छेदकावच्छिन्ननिरूपितव्यापकत्वावगाहिज्ञानस्य कारणत्वम्' इति प्रत्युक्तम् । उक्तस्थले साध्यीभूताभावस्यैवाप्रसिद्धे । न च तद्धर्मावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविधेय-ताकानुमितौ तद्धर्मावच्छिन्ननिरूपितव्यापकतावच्छेदकत्वेन गृहीतधर्मावच्छिन्नप्रतियोगिताकाभावनिर्णयत्वेन परामर्शस्य तादृशज्ञानद्वयसाधारण्येनापि हेतुता स्वीक्रियते । अत एव **व्यतिरेकिग्रन्थे दीधितिकृता तथैवोक्तम्।** इत्थञ्च न कोऽपि पूर्वोक्तदोष प्रसरतीति वाच्यम् । 'ह्रदो धूमाभाववान् धूमत्वावच्छिन्नव्यापकताव

च्छेदकधर्मावच्छिन्नाभाववत्त्वात् । यो यद्धर्मावच्छिन्नव्यापकतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभाववान् स तद्धर्मावच्छिन्नाभाववान्' इति सामान्यव्याप्तिज्ञानेन वा यत्त्वतत्त्वाननुगमविद्वेषे तु 'यो यद्विशेषाभावकूटवान् स तत्सामान्याभाववान्' 'यो यद्धेतु स तद्व्याप्त' 'यद्यन्मङ्गलं तत्तत्समाप्तिसाधनम्' 'यो यस्य सुत स तदीय धनमाददीत' इत्यादौ यत्त्वतत्त्वहेतुत्वसाध्यत्वमङ्गलत्वसमाप्तित्वादेरनुगतत्वाभावेऽपि तत्रानुभवसिद्धानुमितिनिर्वाहाय सामान्यव्याप्तिस्थानाभिषिक्तव्याप्त्यन्तरावगाहिज्ञानेनानुमितिस्वीकारेण प्रकृतेऽपि तथैवानुमितिस्वीकारसम्भवेनोक्तविधव्यतिरेकिपरामर्शस्य फलोपधायकत्वानङ्गीकारात् । न च वह्नित्वावच्छिन्नाभावलिङ्गकत्वं न स्यात् । अपि तु धूमव्यापकतावच्छेदकवह्नित्वावच्छिन्नाभावलिङ्गकत्वमेव स्यात् । न चेष्टापत्ति । तद्रूपावच्छिन्नास्फूर्तिदशायामेव वह्नित्वावच्छिन्नाभावलिङ्गकानुमित्युदयात् । तदर्थमेव चोक्तव्यतिरेकव्याप्तेरङ्गत्वमपि स्वीक्रियत इति वाच्यम् 'धूमव्यापकवह्न्यभाववान्' इति परामर्शस्य भवदभिमतस्यैव मत्सिद्धलिङ्गस्फूर्तिरूपतया तदस्फूर्तेरेवासिद्धे । परन्तु त्वया तदुत्तरक्षण एव 'ह्रदे धूमाभाव' इत्याकारामनुभवविरुद्धामनुमितिं स्वीकृत्य ततो 'धूमाभाववान्' इत्यनुमित्यन्तरं स्वीक्रियते । साध्यप्रसिद्धिवेलाया साध्यविशेष्यकानुमितिवारणाय साध्यप्रसिद्धे साध्यविशेष्यकानुमितिप्रतिबन्धकत्वम् इत्यादिकमप्रामाणिकं बहु कल्प्यते । मया तु क्षणद्वयविलम्बेन तादृशसामान्यव्याप्त्यादिस्फूर्त्या सर्वानुभवसिद्धसाध्यप्रकारकानुमितिरेव स्वीक्रियते । भवदभिमतसूक्ष्मकाल एवानुमित्युत्पत्ते शपथैकनिर्णेयत्वात् । तत्रास्मन्मतमेव युक्तम् । अस्मदभिमतान्वयव्याप्तिविशिष्टलिङ्गान्तरस्य कालान्तरे ज्ञानस्थलेऽनुमित्यनुरोधेनोभयक्लृप्ततत्सामग्रीबलादेव क्षणद्वयादिविलम्बेनानुमितिमात्राङ्गीकारेण निर्वाहे अप्रामाणिकस्य कल्पितसाध्यविशेष्यकानुमितिनिर्वाहाय सामग्र्यन्तरकल्पनस्य साध्यप्रसिद्ध्यादिप्रतिबन्धकत्वकल्पनस्यातिगुरुत्वेन हेयत्वात् ।

एवञ्च 'वह्निर्धूमव्यापक' 'वह्न्यभाववाश्चायम्' इति ज्ञानद्वयस्थलेऽपि सम्भवदुत्पत्तिकधूमव्यापकवह्न्यभावरूपहेतुज्ञानं स्वीकृत्यैवानुमितिरुपपादनीया । अन्यथाऽन्वयिस्थलेऽपि ज्ञानद्वयानन्तर विशिष्टपरामर्शोऽप्यकल्पनीय स्यात् । उक्तलाघवादेव वृक्षतादात्म्याद्यनुमितिसम्भवे तादात्म्येन वृक्षस्य व्यापकतामनिच्छन्तः प्राचीनाः वृत्त्यनियामकसम्बन्धेन व्यापकता न स्वीकुर्वन्ति । तस्मात्साध्याभावत्वेन साध्याभावावगाहिव्यतिरेकिपरामर्शस्यैवानुमितिहेतुत्वं सयुक्तिकमिति साधूक्त 'प्रतिषेधाकारबुद्धेरनिवारणात्' इति ।

यद्वा अन्यत्र व्यतिरेकिणि परोक्तमभ्युपगम्य प्रकृतानुमानविषय एवैतद्रीत्यसम्भवप्रतिपादकमिदं वाक्यम् । तथात्वे चाभावेत्यादिना तन्निर्वाहस्य प्रतिषेधाकारानवगाहिपरामर्शकारणत्वस्य परिग्रह । अपिशब्द सम्प्रतिपत्तिसूचकः । प्रकृत इति आवश्यकताया इति च प्रतिषेधेत्यस्याद्यन्तयोर्योज्यम् । तथा चाभावसाध्यकस्थले जलादिरूपप्रतियोगिनो जलत्वेनावगाहिन 'तादात्म्येन जलव्यापकाभावप्रतियोगिगन्धवान् घट' इति परामर्शात् 'घटे जलभेद' इत्याद्यनुमितिसम्भवेऽपि प्रकृतानुमाने सदसद्विलक्षणत्वरूपसाध्याभावत्वेन साध्याभावावगाहिपरामर्शस्यावश्यकताया वारणायोगादित्यर्थ । कुत इति चेत् यतः सदसद्विलक्षणत्व नाम सद्विलक्षणत्वविशिष्टा-

सद्विलक्षणत्वम् । तादृशविशिष्टसाध्याभावस्तु न सत्त्वासत्त्वरूप । विशिष्टाभावस्य सदसदुभयत्रैकस्यैव प्रतीत्या सत्त्वासत्त्वयो परस्परासमानाधिकरणत्वेन तदैक्यायोगात् ।

नन्वभावस्यैवैक्यप्रतीतिरभावत्वैक्यमवलम्बते । रूपाणां रूपाभावाभावात्मकत्वेऽपि घटपटवृत्तिरूपाभावैक्यप्रतीतिवदिति चेन्न । तथात्वेऽपि सदसद्विलक्षणत्वाभावव्यापकीभूतेत्यादिरीत्या ज्ञानाङ्गीकारे प्रतिषेधाकारत्वमागतमेव । तादात्म्येन 'सद्व्यापकीभूताभावप्रतियोगिबाध्यत्ववान्' एवम् 'असद्व्यापकीभूताभावप्रतियोगिबाध्यत्ववान्' इति समूहालम्बनादनुमित्यङ्गीकारेऽनुमितिरपि समूहालम्बनरूपैव स्यात । न सद्विलक्षण वविशिष्टासद्विलक्षणत्वरूपसाध्यविधेयिका । तत्र तु [1]असद्वैलक्षण्यस्य शुक्तिरूप्ये सिद्धतयांशे सिद्धसाधनताया दुर्वारत्वात। एतदर्थमेव 'मिथ्यैव रजतम्' इति प्रत्यक्षमुभयसम्प्रतिपन्नसद्विलक्षणत्वावगाहिताकमुपन्यस्तं प्राक् ।

न [2]चैकत्र द्वयमिति रीत्या बाध्यत्वे तादृशप्रतियोगित्वद्वयावगाहिपरामर्शा[3]देकत्र द्वयमित्यादिरीत्यैव सद्विलक्षणत्वासद्विलक्षणत्वावगाहिनी अनुमितिः स्यात् । तत्समानाकारकज्ञानस्य पूर्वमसिद्धतया न सिद्धसाधनमिति वाच्यम् । तादृशज्ञानानामप्रामाणिकत्वात् । प्रामाणिकत्वे वाऽनुमितिपरामर्शयोस्तादृशरूपेण कार्यकारणभावे मानाभावाद्विधेयतावच्छेदककोटावधिकावगाहित्वाभावेनांशे सिद्धसाधनतैव । एतदप्युक्तम् । **प्रतिषेधाकारबुद्धेः** शुक्तिरूप्ये सद्विलक्षणत्वबुद्धे **अनिवारणात्** । अंशे सिद्धसाधनत्वस्येत्यर्थः ।

यदि सदसदुभयव्यापकीभूताभावप्रतियोगीत्यादिपरामर्शाच्चोभयत्वावच्छिन्नभेदावगाहिनी अनुमिति स्यात्तदा शुक्तिरजतस्योभयात्मकत्वानङ्गीकारात्स्फुट सिद्धसाधनतैव । सदसदन्यतरव्यापकीभूतेत्यादिपरायर्शादरेऽनुमितेरप्यन्यतरत्वावच्छिन्नभेदावगाहित्वेनेष्टसिद्धिरित्युक्तावपि सद्भेदविशिष्टासद्भेदावच्छिन्नप्रतियोगिताकभेदवत्त्वरूपान्यतरत्वस्योक्तसद्भेदविशिष्टासद्भेदरूपप्रतियोगितावच्छेदकाद्यप्रसिद्ध्या तद्घटितव्याप्तिग्रहस्य प्रतिषेधविषयिण्या व्याप्तिग्रहो न घटत इत्याकाराया बुद्धे त्वया वारयितुमशक्यत्वात् ।

अथ तद्भेदैतद्भेदैतदुभयत्वावच्छिन्नप्रतियोगिताकाभाव एवान्यतरत्वम् । तद्ग्रहश्च प्रत्येकं तादृशभेदग्रहादपि सम्भवतीति उच्यते । तदापि तादृशोभय नास्ति इति प्रतिषेधाकारबुद्धेस्तयोर्विरोधग्रहमूलायाः शशविषाणघटादिष्विव शुक्तिरूप्यादिषु पक्षेष्वपि उक्तानुमानप्रवृत्ते प्रागेव लोकानामवारणात् बाध्यत्वरूपहेतोरभावस्य तद्व्यापकत्वप्रतिषेधबुद्धेरवारणमेव । एतेन सदसदुभयत्ववृत्तिस्वरूपसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदोऽनुमितिविषय । अतो न सिद्धसाधनता । कारणीभूतपरामर्शश्च तत्सम्बन्धेनोभयत्वाश्रयस्य तादात्म्येन व्याप्यतावगाही हेत्वभावस्य व्यापकत्वावगाही इति निरस्तम् । सत्त्वासत्त्वयोर्लोकाना परस्परविरुद्धत्वरूपप्रतिषेधाकारबुद्धेरनुमान-

---

[1] सद्वैलक्षण्यस्य इति पाठेन भाव्यमिति भाति । [2] चैकं न इति पाठेन भाव्यमिति भाति ।
[3] देक न इति पाठेन भाव्यमिति भाति ।

प्रवृत्ते प्रागनिवारणात् । सत्त्वाभावप्रयुक्तासत्त्ववत्त्वेन गृह्यमाणत्वात् । तादात्म्येन तदुभयत्वाश्रयतया गृह्यमाणे शुक्तिरूप्यादौ बाध्यत्वरूपहेतुग्रहेण हेत्वभावस्य पक्षादिप्रविभागात्पूर्वमेव व्यापकत्वप्रतिषेधबुद्धेरवारणात् इदमयुक्तमिति ।

## २०३ पृष्ठे ११–१२ पङ्क्त्योर्मध्ये

अयमूहप्रकारः । अत्रनिविष्टसत्पदर्थो यद्यबाध्यत्वविशिष्टस्तदा [1]तत्तादात्म्यमबाध्यत्वतादात्म्यमेव । तथा च बाध्यत्वे सत्यबाध्यत्वमेवोक्तं स्यात् । इत्थञ्च कथं न स्वव्याहतिः । यदि च सदिति प्रतीमयानस्तदा तत्तादात्म्य सत्त्वेन प्रतीयमानत्वं तदा अर्थान्तरता । असत्ख्यातिवादिनाऽपि शुक्तिरजतादे सदिति प्रतीतिगोचरताङ्गीकारात् । अथ तादात्म्य सम्बन्धविशेष । तथा चाबाध्यतादात्म्य नाबाध्यत्वरूपमिति कथं व्याहतिरिति चेन्न । तादृशसम्बन्ध कश्चन नीलघटयो यादृशतादात्म्य तज्जातीयादन्यस्तच्छब्ददबोध्यश्चेत्तस्य चाबाध्याधिष्ठानकभ्रमविषयत्वादेतज्ज्ञा(स्व अबाध्यज्ञा)ननिवर्त्यज्ञानविषयत्वादे कस्यचित्सम्बन्धस्य सत्यपि सम्भवेन तत्साधनमात्रेण।सद्यावृत्त्ययोग । प्रसिद्धतादात्म्यसाजात्ये तस्य भेदाभेदसापेक्षत्वेनाबाध्येन सहाभेदस्यापि प्राप्त्याऽबाध्यत्वावच्छिन्नात्यन्तभेदात्मकबाध्यत्वं तत्र कथं स्यात् । अन्यथा 'नीलो घट' इति प्रतीतिवत् 'बाध्योऽबाध्य' इति प्रतीतिप्रसङ्ग । तद्धर्मावच्छिन्नेन सहात्यन्तभेदग्रहस्यैव तादात्म्येन तद्धर्मावच्छिन्नग्रह प्रति विरोधित्वेनाबाध्यतादात्म्येन विद्यमानस्य बाध्यत्वस्याबाध्यात्यन्तभेदरूपत्वाभावात् । न चाबाध्यभेदस्य तादात्म्यापेक्षयाऽधिकसत्ताकत्वान्न विरोध इति वाच्यम् । स्वार्थानुमित्याऽनिर्वचनीयत्वसिद्धे. प्रागुक्तसत्ताकभेदानुपस्थित्या विरोधशान्त्ययोगात् । जगति उक्तभेदतत्तादात्म्ययो व्यावहारिकत्वस्यैव वक्तव्यतया विरोधशान्त्ययोगाच्च ।

न च शुक्तितादात्म्यं रजते नाबाध्यत्वावच्छिन्नप्रतियोगिताकं किन्त्विदन्त्वाद्यवच्छिन्नप्रतियोगिताकमेव । अबाध्यत्वावच्छिन्नप्रतियोगिताकात्यन्तभेदरूपबाध्यत्वस्य सत्त्वान्न 'अबाध्यो बाध्य.' इति व्यवहारापत्ति । अनिर्वचनीयत्वशरीरेऽपि अबाध्यत्वाश्रयनिरूपिततादात्म्यनिवेशान्न कोऽपि दोष इति वाच्यम् । येन केनापि रूपेण तेन सहात्यन्तभेदवति केनापि रूपेण तेन सह भेदाभेदयोस्तदधीनतादात्म्यस्य च सर्वानुभवविरुद्धत्वात् । अन्यथा करकादितात्पर्यकजलपदघटितजलं पेयमिति वाक्यजानुमानजज्ञानप्रामाण्यप्रसङ्ग । करकादित्वेन पेयत्वेनात्यन्तभेदसद्भावेऽपि त्वद्रीत्या जलत्वावच्छिन्नेन सह तादात्म्यस्याबाधात् । उक्तञ्च त्वयाऽपि वाचस्पतिकारिका व्याख्यावसरे 'युगपद्भिन्नदेशकालवृत्तिनो कटककुण्डलयोर्हेमत्वादिनाऽपि नाभेद' इति । न चैकहेमव्यक्त्युपादानकयो कटककुण्डलयोर्हेमत्वादिनाऽभेद तत्कटकत्वेन तत्कुण्डलत्वेनात्यन्तभेदोऽपि तत्रैवोक्त इति येन केनापि रूपेणात्यन्तभिन्नस्य येन केनापि रूपेणाभेदो नास्तीत्येतदयुक्तमेवेति वाच्यम् । तत्रापि 'एतत्कुण्डल

---

1 ततादात्म्यमबाध्यतादात्म्यमेव इति पाठेन भाव्यमिति भाति ।

हेमत्वेन तत्कटकम्' इत्यप्रत्ययेन हेमत्वेनापि रूपेण तत्कुण्डलप्रतियोगिकाभेदस्य तत्कटकेऽनङ्गीकारात्। तदुपादानवृत्तिहेमत्वाश्रयणेन सहैवाभेदस्याङ्गीकृतत्वात् । अत एव 'अत्यन्तभिन्नैकघटनिष्ठरूपरसादिव्यवस्थैवमेव' इत्यभिहित तत्रैव ।

न चैवमेव सदुपादानकस्य रजतस्य सता सह तादात्म्यमस्त्विति वाच्यम् । तेन सहात्यन्तभिन्नत्वेन प्रतीयमाने तदुपादानकत्वस्य मृदात्यन्तभिन्नत्वेनोपलभ्यमाने पटादावदृष्टत्वेनाबाध्यत्वानाश्रये रजते तदुपादानकत्वायोगात् । किञ्च बाध्यत्वस्यैव हेतूकृतत्वेन तेन बाध्यत्वविशिष्टसत्तादात्म्यसाधने विशेषणांशस्य साध्यशरीरे नातिप्रयोजनकत्वम् । विशिष्टसाध्यत्वे विशेषणपरित्यागेनाबाध्यतादात्म्यरूपसत्तादात्म्यसाधने वा बाध्यत्वहेतोर्विरोधश्च । न चार्थक्रियाकारित्वमेव सत्त्वम् । तदवच्छिन्नतादात्म्य साध्यत इत्यपि युक्तम् । बाध्यस्यार्थक्रियाकारिभिन्नत्वेनैवावगतस्य तत्तादात्म्यसाधने बाधाद्विरोधाच्च । असत्ख्यातिवादिना सौगतेन बाध्यस्याप्यर्थक्रियाकारित्वाभ्युपगमेन तस्यैव जगत्यनिर्वचनीयत्वरूपत्वाङ्गीकारे सौगतवैलक्षण्यासिद्ध्या तत्सिद्ध्यर्थं अन्यस्यैवानिर्वचनीयत्वस्य जगति निर्वक्तव्यतया तत्साधकानुमाने दृष्टान्तभूते शुक्तिरजतादौ तादृशस्यैव वक्तव्यत्वाच्च ।

नापि 'सर्वं सत्प्रमेयम्' इत्याकारा काचन बुद्धिस्तत्तद्विषयतादात्म्यम् । तत्साधने तस्या बुद्धित्वेनैव परिचये 'सर्वं सत्' इत्याकारस्य शुक्तिरजतादिसर्वविषयस्य भ्रमस्यापि परिचितत्वेन तद्विषयीभूतस्य तादात्म्यस्य शुक्तिरजतादेरसत्त्वपक्षेऽपि सत्त्वेन सिद्धसाधनापरिहारात् । तादृशाकारज्ञानेषु 'इयं प्रमैव, अयं भ्रम एव' इति निर्धारणायोगेन विशिष्य व्यक्तिविशेषस्य निवेशयितुमशक्यत्वात् । तादृशाकारभ्रमत्वेन परिचये तद्विषयताया शुक्तिरूप्येऽङ्गीकारात्सिद्धसाधनता नापि तादृशी काचन प्रमा व्यक्ति । [1]तत्त्वेन परिचय । घटात्यन्तभिन्नत्वेन गृह्यमाणे घटत्वप्रकारकप्रमाविषयात्यन्तभेदग्रहस्यौचित्यावर्जितस्य सार्वलौकिकस्य सार्वकालिकस्य दुरपह्नवताया इव अत्रापि 'असदेव रजतम्' इति रूपेणात्यन्तसद्भिन्नत्वेन गृह्यमाणरजते सत्त्वप्रकारकप्रमाविषयात्यन्तभेदस्य तादृशप्रमाव्यक्तिविशेषविषयात्यन्तभेदस्य च यो ग्रहस्तस्य दुरपह्नवतया तादृशरजते तादृशप्रमाविषयतादात्म्यसाधने बाधस्य बाध्यत्वहेतोर्विरोधस्य च दुर्वारत्वात् । अन्यथा 'नील' इति प्रमाविषयभिन्ने वा 'सर्वं नीलम्' इति प्रमाविशेषविषयात्यन्तभेदवत्त्वेन वा निश्चितेऽपि घटे नीलतादात्म्यसिद्धिप्रसङ्ग । न चानिर्वचनीयवादिनामयं विरोधो न सम्मत इति वाच्यम् । अनिर्वचनीयप्रतीते प्रागुक्तविरोधस्य सर्वलोकसिद्धस्य स्वेच्छामात्रेण परिहर्तुमशक्यतया स्वार्थानुमितेरेवायोगस्योक्तत्वात् ।

परार्थानुमाने तूक्तप्रकार सर्वथा न सङ्गच्छते । यदि सा व्यक्ति 'इद रजतम्' इति ज्ञानप्रकाररजतविषयकत्वेन स्वपरसम्मता तदा तादृशव्यक्ते प्रमात्वमेव मां प्रत्यसम्मतमिति मा प्रति तत्परिचयायोग. । यदि तदविषयकत्वेन मतद्वयसिद्ध ज्ञानमुपादीयते तदा बाध एव । यदि मध्यस्थस्य प्रतिवादिनश्च शुक्तिरजताद्यविषय-

---

[1] प्रमात्वेन तादृशव्यक्तित्वेन चेत्यर्थं ।

त्वेन सम्मत स्वमतमात्रेण तद्विषयकत्वेन सम्मत ज्ञानमुपादीयते तदा तद्विषयात्यन्तभिन्नत्वेन गृह्यमाणे तत्तादात्म्यानुमिति मध्यस्थस्य वादिनो वा न घटत एव । यदि चोभयमतेऽपि प्रमात्वेन शुक्तिरजतविषयकत्वेन च सम्मत 'सर्वं सत्प्रमेयम्' इति ज्ञानमुपादीयते तदा तद्व्यक्ते प्रमात्वेन सम्मति शुक्तिरजते सत्त्वसम्मतिं विना न घटत इति तत्र सत्तादात्म्यसाधनस्य वैयर्थ्यमेवेति द्रष्टव्यम् ।

किञ्च यदि सदित्याकारकप्रमेत्यस्य सत्पदघटितवाक्याभिलाप्यप्रमेत्यर्थं तदा [1]शुक्तिभ्रमेण लक्षणया आधुनिकसङ्केतेन च सत्पदेनासतोऽपि बोधसम्भवात्तद्विषयतादात्म्यसाधने सिद्धसाधनत्वादिकमेव । यदि [2]शुक्ति भ्रमाद्यनधीनतादृशवाक्यसाध्यप्रमोच्यते तदा 'सर्वं सत्प्रमेयम्' इति वाक्येन शक्तिभ्रमादिकं विनाऽपि जायमानाया समीचीनत्वादिप्रकारकप्रमाया अपि ग्रहणापत्त्या तद्विषयतादात्म्यसाधने [3]अर्थान्तराद्यनिस्तारात् । न हि समीचीनत्वादौ कोशसिद्धे शक्तिर्नास्ति । अबाध्यत्वावच्छिन्ने वर्तत इति राज्ञामाज्ञास्ति । अबाध्यत्वप्रकारकप्रमातात्पर्यकतादृशवाक्यसाध्यप्रमात्वेन तदुपादाने अबाध्यत्वप्रकारकप्रमात्वेन तदुपादानस्य सम्भवे शिरोवेष्टनन्यायापात । तत्परित्यागे तथैवोपादाने अबाध्यभिन्नत्वेन निश्चीयमाने तत्प्रमाव्यक्तिविषयतादात्म्यसाधने पूर्वोक्तरीत्या बाधादिरेव ।

ननु सत्ताजातिमत्तादात्म्यं साध्य इति चेन्न । द्रव्यत्वरजतत्वादिमत्तादात्म्येनापि गृह्यमाणे रजते असत्त्व सदधिष्ठानकत्वादि[4]सशयनिवृत्तेरिव तन्मते उक्तसत्तादात्म्यज्ञानेनापि तदनिवृत्तेस्तुल्यत्वेनार्थान्तरानिस्तारात् । द्रव्यतादात्म्यज्ञानादेरपि तन्निवर्तकत्वे 'रजत द्रव्यम्' इति व्यवहारादिबलसिद्धतादृशज्ञानबलेनोक्तसशयस्य निवृत्ततया अनुत्पन्नतया वा सत्तादात्म्यसाधनस्याकिञ्चित्करत्वापात । द्रव्यतादात्म्यज्ञानस्योक्तसशयाविरोधित्व सत्तादात्म्यज्ञानस्यैव विरोधित्वमित्यत्र नियामकाभाव । द्रव्यत्वादिजातेरिव सत्ताजातेरपि प्रत्यक्षगृहीततया तत्तादात्म्यसाधनायोग ।

एतेन सदित्याकारप्रतीतौ स्वरूपत प्रकारो य तदवच्छिन्नतादात्म्य साध्यते । समीचीनत्वादिकन्तु न तथेति परास्तम् । तादृशधर्मो यदि सत्ता तदाऽर्थान्तरम् । यद्यबाध्यत्व तदा बाध एवेत्यादिपूर्वोक्तदोषानिस्तारात् । कालसम्बद्धतादात्म्यमप्यर्थान्तरबाधादिना निरस्तम् ।

---

[1] शक्तिभ्रमेण इति पाठेन भाव्यमिति भाति ।

[2] शक्ति इति पाठेन भाव्यमिति भाति ।

[3] अर्थान्तरानिस्तारात् इति पाठान्तरम् ।

[4] संशयानिवृत्तेरिव इति पाठेन भाव्यमिति भाति ।

अस्तु वा सत्तादात्म्यं यादृशतादृशं 'इदं सत्' इति प्रतीतिसिद्धम् । तत्साधनस्यो बौद्धाभिहितासत्ख्यातिनिरासार्थमिति चेन्न । 'शशविषाण सत्' इति प्रतीतिबलेन शशविष सत्तादात्म्यस्यावर्जनीयतया तस्यासत्त्वव्यावर्तकत्वायोगात् । 'अनिर्वचनीयसत्तादात्म्यमसति न पादनं, 'शशविषाणादिव्यवहारे हेतुर्विकल्प एव । शुक्तिरजतादिव्यवहारहेतुश्च ज्ञानम् । सत्तादात्म्यमेव निवेश्यते । अतोऽसद्व्यावृत्ति.' इति भाषणम्, 'शशविषाण सदित्यादिप्रतीतौ प्रतीयते । न तु सत्तादात्म्यम्' इति विशेषकथन, 'शशविषाण सदित्यादिप्रतीतावनिर्वचनं असच्च सर्वथा निरुपाख्यमेव । अतो न सत्तादात्म्यवत्' इति जल्पनं, 'शशविषाणमिति वाक्या त्मकमेव ज्ञानं जायते' इति भाषणञ्चेत्येवमादीनि दुर्भाषणान्यर्थापत्त्यादिनिरासप्रस्तावे निरसिष्यन्ते

इति द्वैतद्युमणिपरिशिष्टं सम्पूर्णम्



॥ श्री ॥

# कुमतखण्डनम्

महामहोपाध्यायैः काशी तिम्मण्णाचार्यैर्विरचितम्

श्रीमदानन्दतीर्थभगवत्पादाचार्यैर्विरचितस्य तत्वोद्योतप्रकरणस्य

श्रीजयतीर्थमुनिविरचितायास्तट्टीकायाश्च खण्डनपरस्य

भट्टत्र्यम्बकशास्त्रिविरचितस्य लघुगुरुश्रुतिमतोद्योताभिधग्रन्थद्वयस्य खण्डनात्मकम्

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

जन्माद्यस्य यतः शास्त्रगम्यमन्वयतः पृथक् ।
परमं ब्रह्म विष्ण्वाख्यमधिकं तदुपास्महे ॥

'विमतो भिन्नो मुक्तत्वात्, यदित्थं तत्तथा, यथा सम्प्रतिपन्नः' इत्याचार्याः ।

यदत्र केनचित्प्रलपितं 'शुद्धचिन्मात्रेऽमुक्तभेदस्याभ्युपगमात्सिद्धसाधनम् । मुक्तिदशाया धर्मिविशेषणत्वे च परं प्रत्यसिद्धिः । मुक्तौ कालानभ्युपगमात् । मुक्तिदशाया कालो नाभ्युपेयत इति व्याहतमिति चेन्न । तत्वज्ञानस्य स्वसमानविषयस्वसमानाधिकरणाज्ञानतत्कार्याधिकरणकालपूर्वत्वाभावनियमाभ्युपगमेनार्थतस्तन्निरासात्' इति ।

तन्न । 'विमत इति संसारान्मुक्तो विवक्ष्यते' इति टीकायामेव विमतिविषयतावच्छेदकमुक्तत्वविशिष्टस्य पक्षत्वेन विवक्षितत्वात् । विशिष्टे च साध्यस्यासिद्धतया सिद्धसाधनानवकाशात् । न च शुद्धाद्वैते विशिष्टपक्षाप्रसिद्धिः । विनश्यदवस्थबन्धावच्छिन्नचित्साधारणस्य अविनश्यदवस्थबन्धानधिकरणकालावच्छिन्नचित्त्वस्यैव पक्षतावच्छेदकत्वात् । तदवच्छिन्ने च स्वाधिकरणकालप्रागभावावच्छिन्नत्वविशिष्टविशेषणतया भेदसाधनेनार्थत एव मुक्तौ भेदस्य कालस्य च सिद्धेः । उभयसिद्धमुक्तिप्राक्कालविशिष्टचिद्रूपपक्षस्योत्तरकाले भेदवत्त्वं विना साध्यापर्यवसानात् । न च सिद्धान्ते सर्वमुक्त्यभावादविनश्यदवस्थबन्धानधिकरणकालाप्रसिद्धिः । किञ्चिन्निष्ठतादृशबन्धानधिकरणकालस्य स्वनिष्ठतादृशबन्धानधिकरणकालस्य वा विवक्षितत्वात् । मतद्वयेऽपि मुक्तिप्राक्कालस्यैव तादृशबन्धानधिकरणत्वात् तत्कालावच्छिन्ने च कर्मक्षयलक्षणमुक्तेरक्षतत्वान्मुक्तत्वव्यवहारोपपत्तिः । न चैव विमत

इति पक्षनिर्देशानुपपत्तिः । विमतपदस्य विमतिविषयतावच्छेदकविशिष्टपरत्वात् । अस्तु वा पर्याप्तिसम्बन्धेन विमतिविषयत्वमेव पक्षतावच्छेदकम् । तस्य निरुक्तमुक्तत्वविशिष्ट एव पर्याप्ततया सिद्धसाधनानवकाशात् ।

न चैवमपि भिन्न इति साध्यनिर्देशानुपपत्तिः । भिन्नपदस्य केवलविशेषणतया भेदवदर्थत्वादिति वाच्यम् । सम्बन्धमात्रस्य निष्ठार्थत्वेन विशिष्टविशेषणताग्रहणेऽपि बाधकाभावात् । व्यक्तश्चैतदानुमानिकाधिकरण सुधायाम् ।

केवलविशेषणताविवक्षणेऽप्यदोषः । मुक्तिकालीनभेदस्यैव साध्यत्वात् । न चैव निगडमुक्तिसाधारण-मुक्तिविवक्षाया सिद्धसाधनम् । मुख्यमुक्तिविवक्षाया साध्याप्रसिद्धिरिति वाच्यम् । 'यो यस्मान्मुच्यते स तन्मुक्तिकालीनभेदवान्' इति सामान्यव्याप्तौ व्यतिरेकिवत्प्रकृतसाध्यप्रसिद्धेरनपेक्षितत्वात् । न च साध्ये साध्य-तावच्छेदकाभावग्रहे कथं विशिष्टसाध्यानुमितिरिति वाच्यम् । तन्निर्णयस्याद्वैतसिद्ध्युत्तरकालीनत्वात् । तत्संशयस्य चाविरोधित्वात् । इत्थश्च मुक्त्युपलक्षितस्य पक्षत्वेऽपि न क्षतिरित्यप्याचक्षते ।

नन्वेवमपि सिद्धसाधनमेव । 'बन्धदशोत्तर मुक्तिदशा' इत्यादिव्यवहारबलेन चरमक्षणपर्यन्तनिष्ठप्रागभाव प्रतियोग्यनिर्वचनीयमुक्तिदशाविशेषस्य व्यवहारकाल एवाभ्युपगमात् । दुर्घटत्वस्य च मायिकप्रपञ्चभूषणत्वादिति चेत् । उच्यते । स्वव्याहतस्य हि प्रथममुदाहरणमेतत् । यत्स्वयमेव 'मुक्तिदशाया धर्मिविशेषणत्वे परं प्रत्य-सिद्धि' इत्यभिधाय पुन साऽभ्युपगम्यते । एव [1]"मुक्तिदशा' इत्यादिव्यवहारबलात्तदभ्युपगमे 'मुक्तिदशाया भेदो नास्ति' इति भवन्मतसिद्धव्यवहारविरोधेन तादृशदशाया भेदावच्छेदकत्वासम्भवात्तदवच्छेदेनात्मनि भेद-साधनेऽपि न सिद्धसाधनावकाश । तथा च 'मुक्तो भिन्न' इति यथाश्रुतप्रतिज्ञार्थ एव सङ्गच्छत इति दिक् ।

एव प्रतिज्ञाया विमतग्रहणस्य विशेष्यविशेषणासिद्धिसिद्धसाधनादिशङ्कानिरास एव बीजम् । 'यदि विशेष्यासिद्ध्यादि स्यात्तदा निराश्रयत्वादिना विमतिरेव न स्यात्' इति । तथा च कथं सिद्धसाधनशङ्कावकाशः।

यत्तु "विमतग्रहणमात्रेणोक्तशङ्कानिरासे 'विमत मिथ्या दृश्यत्वात्' इत्यादावाश्रयासिद्ध्याद्युद्भावनानुप-पत्ति" इति। तन्मन्दम्। विमते स्वव्याघातकशङ्कामात्रव्याघातकत्वस्य विवक्षितत्वेन तदव्याघातकदोषोद्भावना-विरोधित्वात् । अन्यदीयदोषस्यान्येनोद्भावने व्याघातानवकाशात् । न च मयाऽप्यसदभिमताविरुद्धसाधनादन्य दीयदोष एवोद्भावित इति वाच्यम् । 'मुक्तो न भिन्न' इति त्वद्वाक्याभिमतविरुद्धसाधनस्यैवोपपादितत्वात् ।

एतेन दृष्टान्ते सम्प्रतिपन्नग्रहणस्य साध्यसाधनवैकल्यादिशङ्कोद्धार. प्रयोजन व्याख्यातं वेदितव्यम् । अथात्र भेदमात्रस्य साध्यत्वे मुक्तानामन्योन्यमीश्वरेण च भेदासिद्धेरर्थान्तरमिति चेन्न । मुक्तस्य भेदमात्रानङ्गी-कारेणाऽक्षिपन्त प्रति तत्साधनात् ।

---

[1] '......' इति पाठेन ... भाति ।

यत्तु 'मुक्ते मुक्त्यन्यदशायां भेदमात्रानङ्गीकर्तुर्वादिन एवाप्रसिद्धि ' इति । तदसत् । शुद्धाद्वैतिन एव उक्तरीत्या मुक्तत्वविशिष्टे भेदमात्रानङ्गीकारित्वेन प्रतिपक्षत्वात् । मुक्त्यन्यदशाया भेदाङ्गीकारस्याप्रयोजकत्वात् । अथ वा 'प्रागवस्थाया येन भेदेन विशिष्टस्तेनैव मोक्षेऽपि' इत्ययमत्रार्थो विवक्षित । न चैवमर्थान्तरादि । निरुक्तमुक्तत्वविशिष्टे यत्किञ्चिद्व्यक्तिनिष्ठयावद्भेदविशिष्टत्वस्य साध्यत्वेन विवक्षितत्वात् । मुक्तिप्राक्काले तदात्मव्यक्तिनिष्ठानामीश्वरादिभेदानां मुक्तौ सत्त्व विना साध्यापर्यवसानात् ।

मुक्तत्वञ्च बन्धसंसर्गाभाववत्त्वमात्रम् । अतो नेश्वरे भागासिद्धि । न चाभाववत्त्वस्यैव हेतुत्वसम्भवादितरांशवैयर्थ्यम् । तस्यादोषत्वात् ।

यत्तु 'एव स्वसमानाधिकरणव्याप्यतावच्छेदका तराघटितधर्मस्यैव व्याप्यतावच्छेदकतया व्याप्यत्वासिद्धिराधिक्यं वा निग्रहस्थानम् । अन्यथा नीलधूमादिति प्रयोगेऽप्यनिग्रहप्रसङ्गात्' इति । तत्तुच्छम् । तादृशनियमे मानाभावात् । व्याप्तिमात्रस्योपयोगित्वेन तदवच्छेदकत्वानपेक्षणाच्च । शब्दाधिक्यस्यैव दोषत्वाच्च । 'यद्धेतुत्व्यवच्छेदकत्वेन पृथगुपादीयते तदेव विशेषण प्रयोजनान्तरमपेक्षते । न पुनस्तन्मात्रान्तर्गतम्' इति न्यायात् । तदर्थश्च हेतुघटकत्वेन यद्विशेषण पृथगुपादीयते स्वघटितहेतुघटकयत्पदातिरिक्तपदोपात्त यद्विशेषणमिति यावत् । तत्तत्पदोपात्तविशेषणाप्रयोज्यप्रयोजनमपेक्षते । न तु तत्पदोपात्तविशेषणान्तर्गत पृथक्प्रयोजनमपेक्षते । 'इद स्पर्शवत् भूतमूर्तत्वात्' इत्यादौ भूतपदघटितहेतुघटकमूर्तपदातिरिक्त यद्भूतपद तदुपात्तभूतत्वविशेषण मूर्तपदोपात्तमूर्तत्वविशेषणाप्रयोज्य मनस्यनैकान्त्यवारणरूप प्रयोजनमपेक्षते । न तु बहिरिन्द्रियग्राह्यविशेषणगुणवत्त्वरूपभूतत्वान्तर्गत बहिष्ट्वादिविशेषण पृथक्प्रयोजनमपेक्षते। हेतुवाक्यघटकपदद्वय परस्पराप्रयोज्यप्रयोजनमपेक्षते । एकपदोपात्तविशेषणैकदेशस्य तु विशिष्टप्रयोजनेनैव प्रयोजनवत्त्वमिति फलितार्थ । प्रकृते च मुक्तत्वादित्येकपदेनैव विशिष्टार्थलाभान्नाधिक्यप्रसङ्ग । कथमन्यथा प्रमेयत्वाद्दृश्यत्वादित्यादय प्राचाप्रयोगा । तत्रापि विषयत्वमात्रहेतुत्वसम्भवात् । यदि च तत्र विषयतया प्रमादिव्यक्तेरेव हेतुत्वान्न दोष । उक्तन्यायार्थश्च यद्धेत्वर्थविशेषणत्वेन पृथगुपादीयते यत्र हेतुतावच्छेदकघटकं विशेषणद्वयमिति यावत् । तदेव हेतुस्वरूपलाभातिरिक्तं व्यभिचारवारणादिरूप प्रयोजनमपेक्षते । न तु हेतुस्वरूपलाभमात्रौपयिकत्वेनोपात्तम् । धूमादित्यादौ धूमत्वादे प्रयोजनान्तरानपेक्षणादिति विभाव्यते । तदा प्रकृतेऽपि स्वप्रतियोगिकतया बन्धविशिष्टस्यैव हेतुत्वमस्तु । अत एव टीकायां प्रमेयत्वादेर्हेतुत्वोपपत्तिमाशङ्क्य 'सम प्रकृतेऽपि' इत्येवोक्तमिति विभावनीयम् ।

अथ वा परमात्मप्रतियोगिकभेदोऽत्र साध्य । बन्धप्रध्वसश्च हेतुरिति न कश्चिद्दोष ।

यत्तु 'परमात्मपदेन जगत्कर्तृत्वविशिष्टविवक्षायां सिद्धसाधनम् । सत्यज्ञानादिपदतात्पर्यविषयविवक्षाया मुक्ते तद्भेदस्य सन्दिग्धतया सन्दिग्धानैकान्त्यम्' इति । तन्न । उक्तरीत्या मुक्तौ भेदस्यासिद्धत्वेन सिद्धसाधनानवकाशात् । अनुकूलतर्काणा वक्ष्यमाणत्वेन सन्दिग्धानैकान्त्यस्यादोषत्वाच्च ।

स्यादेतत् । किमनिर्वचनीयो भेदः साध्यते उत पारमार्थिकः । नाद्यः । अपसिद्धान्तात् । न द्वितीयः । परं प्रति दृष्टान्तस्य साध्यवैकल्यात् इति चेत् प्रश्न एवायं न युज्यते । अनिर्वचनीयस्याप्रसिद्धत्वात् । न चानिर्वचनीये किञ्चिन्मानम् । प्रत्यक्षादेरतद्विषयत्वात् । न च शुक्तिरजतादेरनिर्वचनीयत्वं बाधकप्रत्यक्षसिद्धम् । 'मिथ्यैव रजतं प्रत्यभात्' इत्यनुवादादिति वाच्यम् । मिथ्याशब्दस्यानिर्वाच्यवाचित्वे मानाभावात् ।

यत्तु 'मिथ्याशब्दस्य सद्विलक्षणत्वमेवार्थः । तच्चासदनिर्वाच्यसाधारणम्' इति तत्तु अनिर्वचनीयसाधनानुपयोगित्वादुपेक्ष्यम् । अथ 'विमतमनिर्वचनीयं बाध्यत्वाद्व्यतिरेकेणात्मवत् इत्यनुमानेन तत्सिद्धिः' इति चेन्न । अप्रसिद्धविशेषणत्वात् । अस्तु तर्हि 'विमतं मिथ्या बाध्यत्वात् इत्यनुमानम् । सद्विलक्षणत्वलक्षणमिथ्यात्वस्यासत्साधारण्येऽप्यसत्त्वबाधे सदसद्विलक्षणत्वरूपानिर्वचनीयत्वस्यैव ततः सिद्धेः' । इति चेन्न । शुक्तिरजतादेरसत्त्वे बाधकाभावात् । असत एव सद्विलक्षणत्वेन सदसद्विलक्षणत्वस्य व्याहतत्वाच्च । न ह्यनिर्वाच्यसिद्धेः प्रागसदनिर्वाच्योभयसाधारणमिथ्यात्वसामान्यं सिद्ध्यति । अन्यथा बाष्पारोपितधूमे धूमान्तरे च धूमत्वसामान्यमपि सिद्ध्येत् ।

यत्तु 'घटादिनिष्ठात्यन्ताभावप्रतियोगितायाः सदसत्साधारण्यवद्धूमत्वादेरप्युभयसाधारण्यमिष्टमेव' इति । तदत्यन्तमसत् । अत्यन्ताभावप्रतियोगित्वस्यात्यन्तासत्येवास्माभिरुपगमात् । धूमत्वादेरारोपितधूमसाधारण्ये वह्न्यादौ साध्ये धूमादेरनैकान्त्यापाताच्च ।

यत्तु 'बहलोर्ध्वत्वादिवद्व्यवहारकालाबाध्यत्वस्यापि हेतुविशेषणत्वाभ्युपगमान्नानैकान्त्यम् इति । तन्न । आरोपितधूमे धूमत्ववद्व्यवहारकालाबाध्यत्वस्याप्यारोपितस्य सत्त्वात् । तस्यापि व्यवहारकालाबाध्यत्वेन विशेषणेऽनवस्थानात् । आरोपितधूमे धूमत्वस्याप्यारोपितत्वेनोभयानुगतसामान्यायोगाच्च । अत एवारोपितधूमवत्त्वेनानैकान्त्ये चोदिते 'धूम एवासौ न भवति' इति प्रतिवक्तारो भवन्ति । अबाधितलोकन्यायमुलङ्घ्याभ्युपगमस्तु नादरणीय एवेति ।

अस्तु 'तर्ह्यागम एवानिर्वचनीये प्रमाणम् । तथा हि,

> नासदासीन्नो सदासीत्तदानीम् नासीद्रजो नो व्योमा परो यत् ।
> किमावरीवः कुहकस्य शर्मन् । अम्भः किमासीद्गहनं गभीरम् ॥
> न मृत्युरमृतं तर्हि न रात्र्या अह्न आसीत्प्रकेतः ।
> आनीदवातं स्वधया तदेकम् तस्माद्धान्यन्न परः किञ्चनास ॥
> तम आसीत्तमसा गळहमग्रे प्रकेतं सलिलं सर्वमा इदम् ।

इत्यादिश्रुत्या सदसतोर्निषेधपूर्वकं तम सत्त्वकथनेन तस्य सदसद्विलक्षणत्वरूपानिर्वाच्यत्वलाभात्' इति चेन्न। सद-सद्वैलक्षण्यस्योक्तवाक्याप्रतिपाद्यत्वात्। अतदर्थे च तत्प्रामाण्यमलौकिकम्। प्रलये सदसन्निषेधसामर्थ्यात्तमसस्त-द्विलक्षणत्व लभ्यत इति चेत्। तर्हि परिशेषादिति वक्तव्यम्। न चैतदपि सम्भवति। असत प्राप्त्यभावेन निषेधायोगात्।

यत्तु 'सतो निषेधेन तस्याऽपातत प्राप्तिसम्भव' इति। तदसत्। असत्पदस्य सत्तादात्म्यशून्यपरत्व वदत-स्तव तत्सत्त्वशङ्काया व्याहतत्वात्। असत्प्राप्ते सन्निषेधमूलकत्वे तदनन्तरमेव तन्निषेधापत्तेश्च। किञ्चासत्ख्याति मनभ्युपगच्छत कथमसन्निषेध। 'नासदासीत्' इत्यस्य सदासीदित्यर्थकत्वे च नञ्द्वयवैयर्थ्यात्। 'आनीदवातम्' इत्यनेन पौनरुक्त्याच्च। किञ्चैवं 'नो सदासीत्' इत्यस्य व्याघात। परमार्थसन्निषेधोऽयमिति चेत् तर्हि ब्रह्मणो-ऽप्यनिर्वाच्यत्वापात।

यत्तु 'ब्रह्मान्यत्वेनेति पूरणान्न दोष' इति। तत्तुच्छम्। ब्रह्मान्यत्वस्यानादितया तद्विशिष्टचेतनस्य प्रलये सत्त्वेन निषेधानुपपत्ते। पूरणबलात्तमस एवानिर्वाच्यत्वपर्यवसाने तमोन्यत्वेनेति पूरणाद्ब्रह्मण एवानि-र्वाच्यत्व किन्न रोचये। 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतिविरोधान्न तथेति चेत् 'विश्व सत्यम्' इत्यादिश्रुति-विरोधान्नैवमिति तुल्यम्। विश्वसत्यत्व 'नेह नाना' इति निषिद्धयत इति चेद्ब्रह्मसत्यत्व 'असद्वा इदमग्र आसीत्' इति निषिद्धयत इत्यस्तु। 'तस्माद्धान्यन्न पर. किञ्चनास' इति वाक्यशेषाद्ब्रह्मान्यत्वेनेति पूरणमेव युक्तमिति चेत्तर्हि तत एव परत्वेनेत्यपि पूरणीयम्। तथा च कथमपरतत्त्वप्रतिषेध स्यात्। परशब्दस्य परमार्थपरतया तन्निषेधादन्यस्यापरमार्थत्व लभ्यत इति चेत्तर्हि 'नो सदासीत्' इत्यस्य वैयर्थ्यम्। कथञ्चित्सार्थक्येऽप्यसदादे स्वरूपेणैव निषेधात्तत्प्रायपाठविरोध।

एतेन 'सदसच्छब्दयोर्भावाभावपरत्वान्नाप्राप्तप्रतिषेध। अनादेर्जीवेशभेदादे प्रलये सत्त्वेऽपि न तन्निषे-धानुपपत्ति। विश्वस्य भावाभावविलक्षणत्वाभ्युपगमात्' इत्यपि प्रत्युक्तम्। उक्तरीत्या ब्रह्मणोऽनिर्वाच्यत्वापत्ते। एवमेतत्पक्षे रज.प्रभृते पृथक्प्रतिषेधो व्यर्थ। न च प्रलये सदसद्विलक्षणत्वेन रज·प्रभृत्यवस्थानशङ्कानिरासाय तदावश्यकत्वमिति वाच्यम्। सदसत्त्वेनेव सदसद्विलक्षणत्वेनाप्यवस्थानस्य व्याहतत्वेन शङ्कानास्पदत्वात्। अन्यथा तन्निषेधेऽपि तत्सत्त्वशङ्कापातात्।

यत्तु 'नोसत् नासत्' इत्यनयो. समासत्वमभ्युपगम्य सदसद्विलक्षणपरत्वेन व्याख्यान कस्यचित्तदप्येतेन निरस्तम्। पदपाठविरोधात्। स्वरविरोधाच्च।

अपि च व्याख्येयसमयानुगुण हि व्याख्यानं युक्तम्। तादृशश्च भगवत सकलवेदविच्छिरोमणेराचा-र्यस्य। तथा हि,

### तत्त्वोद्योतखण्डनपरश्रुतिमतोद्योतखण्डनम्

मूर्तं सदिति सम्प्रोक्तममूर्तमसदुच्यते ।
मूर्तामूर्तेतरद्ब्रह्म न सत्तन्नासदुच्यते ॥

'यदन्यद्वायोश्चान्तरिक्षाच्चैतत्सत्, वायुरन्तरिक्षश्चासत्' इति पैङ्गिमाध्यन्दिनश्रुतिभ्यां सदसच्छब्दयोर्भूतमात्रपरताऽवगमात् तन्निषेधलब्ध ब्रह्मतमसो. सदसद्वैलक्षण्यं सर्वप्रमाणसिद्धमविरुद्धञ्च ।

यत्तु 'उक्तश्रुतेर्यया कयाचिद्वृत्त्या तद्बोधकतामात्रेणोपपन्नतया तयोस्तद्वाचकताकल्पने मानाभावः' इति । तदसत् । 'सम्प्रोक्तम्' 'उच्यते' इति शक्त्यनुशासनस्य स्फुटत्वात् । तिष्ठतु तावद्वृत्तिचिन्ता । श्रुत्या श्रौतसदसच्छब्दयोर्भूतमात्रपरताभिधानेन तत्परतया तद्व्याख्यानमेव युक्तम् ।

एतेन 'सदसच्छब्दयो पारमार्थिकापारमार्थिकपरतया लौकिकवैदिकप्रयोगप्राचुर्येण श्रुतिमात्रप्रसिद्धमूर्तामूर्तपरताकल्पनमयुक्तम्' इति दुरुक्तमपि प्रत्युक्तम् । तथा सति श्रौतसदसच्छब्दयो क्वचिदपि मूर्तामूर्तपरतानुपपत्त्या दर्शितश्रुतिवैयर्थ्यापातात् । 'असद्वा इदमग्र आसीत्' इत्यादावसदादिशब्दस्य ब्रह्मपरतानुपपत्तेश्च । तत्र बाधकवशात्प्रसिद्धोऽप्यर्थः परित्यज्यत इति चेत्तुल्य प्रकृतेऽपि । बाधकानामुक्तत्वात् । अत एव रज.पदादिना गुणत्रयादे पृथक्प्रतिषेध· सङ्गच्छते । तस्य भूतानन्तर्भूतत्वात् ।

यत्तु 'रज पदस्य गुणत्रयपरत्वे गुणत्रयात्मकतम·सत्त्वाभिधानविरोध ' इति । तन्न । तम शब्दस्य प्रकृतिपरतया व्याख्यातत्वात । कार्यनिषेधे कारणसत्त्वशङ्कया भूतकारणगुणत्रयनिषेधस्यैव युक्तत्वेन रजःपदस्य पराग परत्वायोगाच्च । यद्यप्यव्याकृत व्योम नित्यम् भूत तु असत्पदेनैव सङ्गृहीतम् तथाऽपि परत्वेन विशेषणात्सर्वगतत्वविशिष्टनित्याकाशनिषेधे तस्य मूर्तसंयोगलक्षणसर्वगतत्वमेव निषिद्धं भवतीत्यादिकमवगन्तव्यम् ।

ननु क्वचित् श्रुतिपुराणादिषु प्रपञ्चस्यानिर्वाच्यतोच्यते । असदनृतादिशब्दाश्च तत्र प्रयुज्यन्ते । तेषामत्यन्तासदर्थकताया अयोगादनिर्वाच्यवाचितैव वाच्या । तथा च तेनैव प्रपञ्चस्यानिर्वाच्यतासिद्धिरिति चेत् । मैव वोच· ।

अद्भुतत्वादनिर्वाच्य ब्रह्म चिच्चेत्यमेव च ।
अचिन्त्यं तत एवैतदतर्क्याज्ञेयमेव च ॥
ऋ गताविति धातोस्तु पूर्वावगतवत्सदा ।
स्थितेर्ब्रह्मर्तमित्युक्तमनृतं परिणामतः ॥
प्रकृतिप्राकृत प्रोक्तमसत्तदशुभत्वत. ।
असता बुद्धिगम्यत्वादसत्यमिति चोच्यते ॥

इत्यादिव्यासस्मृत्यनुसारेण तेषामर्थान्तरपरत्वस्याऽवश्यकत्वात् ।

यत्तु

'न सती नासती माया माया नैवोभयात्मिका । अनिर्वाच्या'

इति **बृहन्नारदीये** प्रयुक्तस्यानिर्वाच्यशब्दस्य तादृशार्थत्वे 'न सती' इत्यादेरसङ्गतिरिति तदसत् । वाराहादिवचनेन **बृहन्नारदीया**देर्मोहार्थत्वावगमेन तद्विरोधस्यावश्यापरिहार्यत्वात् ।

अस्तु वा वचनान्तरस्य यथा तथा गतिः । अस्य तु नात्यन्तविरोधित्वम् । दर्शितप्रमाणानुसारेण सावकाशत्वात् । तथा हि, पृथिव्यादिव्यतिरिक्तप्रकृतिमनभ्युपगच्छतस्तार्किकादीन्प्रत्युच्यते । 'प्रकृतिर्न पृथिव्यप्तेजोरूपा । नापि वाय्वन्तरिक्षलक्षणा । नापि तदुभयात्मिका पाञ्चभौतिकरूपा । अपि तु ततोऽन्या अद्भुता' इति ।

यद्वा प्रकृतिर्न केवल शुभा । बन्धकत्वेन दुःखहेतुत्वात् । नाप्यशुभैव । मुक्तिसाधनत्वेन सुखहेतुत्वात् । नाप्युभयरूपैव । असता दुःखैकहेतुत्वात् । किन्त्वाश्चर्यरूपैवेति ।

अथ वा मायेत्यविद्या । सा नात्मवत्सर्वदा विद्यमाना । मोक्षानुपपत्तेः । नापि शशविषाणवत्कदाऽप्यविद्यमाना । बन्धानुपपत्तेः । नापि घटादिवद्विद्यमानाऽपि प्रागूर्ध्वमविद्यमाना । बन्धस्यानादित्वानुपपत्तेः । तस्मादनादिविनाशित्वादाश्चर्यरूपेति । अन्यथा सदसदात्मकत्वस्य व्याघातेनाप्राप्तेर्निषेधानुपपत्तिः ।

यदपि 'ऋ गतौ' इत्यनुशिष्टात् धातोर्निष्ठाया निष्पन्नस्य ऋतशब्दस्य पूर्वावस्थितज्ञानविषयार्थत्वेऽपि कथं परिणामितामात्रेण प्रकृतेस्तत्त्वाभाव इति तदप्यसत् । अनादितोऽवगतार्थकेन ऋतशब्देनापरिणामित्वस्यैव विवक्षितत्वात् । तस्य च प्रकृत्यादिव्यावृत्तत्वात् । अनादित्वस्य निष्ठाप्रत्ययावाच्यत्वेऽपि तद्वाच्यभूतस्य ऋतत्वस्य विशेषानुक्त्या तदर्थलाभात् ।

यदपि यत्काले क्त प्रयुज्यते तदधिकरणक्षणवृत्तिध्वंसप्रतियोग्युत्पत्तिकत्वस्यैव तदर्थत्वेन शब्दप्रयोगस्यैवावधित्वभानाद्विशेषानुक्तिरसिद्धेति तत्तुच्छम् । [1]अनादित्वलाभप्रयोजकपूर्वावध्यनुक्तेरेव विवक्षितत्वेन शब्दप्रयोगावधेरप्रयोजकत्वात् । उत्पत्तिविशिष्टस्य कथमनादित्वमिति न शङ्क्यम् । निरुक्तोत्पत्तिकयावत्कालावगतत्वस्यैवानादितोऽवगतत्वशब्देन विवक्षितत्वात् ।

यच्च सादेरपि पूर्वपूर्वतनज्ञानविषयत्वसम्भवादपरिणामित्वालाभ इति तन्न । अवगतशब्देन प्रत्यक्षावगतत्वस्य विवक्षितत्वात् । प्रकृतेरनादित प्रत्यक्षत्वावगतत्वसम्भवेऽपि न पूर्वावगतात्यन्ताभिन्नत्वम् । परिणामि-

---

1 अनादित्वालाभ इति पाठेन भाव्यमिति भाति ।

त्वात् । औत्सर्गिकश्च समानाधिकरणविशेषणानामत्यन्ताभेदान्वय इत्यपरिणामित्वलाभस्याऽवश्यकत्वात् । एतदेवाभिप्रेत्योक्तम् 'पूर्वावगतवत्सदा स्थिते' इति । न च सदा स्थित्यलाभ शङ्क्य । वैदिकपदप्रयोगस्य सदातनत्वादेव तल्लाभात् । अत एव 'तदेवर्तं' इत्यादिवैदिकप्रयोग एव टीकायामुदाहृत ।

यत्तु 'तदेवर्तं' इत्यादावृतशब्दस्यापरिणाम्यर्थत्वे जीवव्यवच्छेदानुपपत्ति इति तन्मन्दम् । 'परममृतं तदेव' इत्यन्वयेन मुख्यार्थत्वस्यैव जीवव्यावृत्तत्वेन विवक्षितत्वात् । यद्वाऽपरिणामित्वशब्देन परिणाम्यभिमानित्वाभावोऽप्युपलक्षणीय ।

यदपि 'ऋतशब्दस्य यथाकथञ्चिद्विवक्षितार्थबोधकत्वेऽप्यमुख्यार्थत्वम्' इति तदपि न । 'तदेवर्तं तदु सत्यमाहु' इति श्रुत्या 'ब्रह्मर्तमित्युक्तम्' इति स्मृत्या च रूढिप्रदर्शनात् । रूढलक्षणायाश्च शक्तितुल्यत्वस्य सर्वसम्मतत्वात् । एवमनृतादिशब्दाना प्रकृत्यादौ योगरूढिरेव

'अनृत परिणामत । प्रकृतिप्राकृत प्रोक्तम्' इति स्मृते ।

एतेन वियदादौ प्रयुक्तानामनृतादिशब्दाना रूढित्यागे हेत्वभाव इत्यपास्तम् । केवलरूढेरप्रामाणिकत्वात् । योगरूढेश्चोक्तत्वात् ।

एवमशुभत्वेन प्रकृत्यादेरसत्पदप्रतिपाद्यत्वे कारणव्यतिरेकेण कार्यासत्त्वोपपादकश्रुतिपुराणादिविरोध इत्यपि हेयम् । विरोधप्रकारानिरूपणात् । असत्पदप्रयोगे कारणव्यतिरेकेणासत्त्वमेव निमित्तमस्तु । न त्वशुभत्वमिति चेत् । अशुभत्वमेव निमित्तमस्तु । न तु कारणव्यतिरेकेणासत्त्वमित्यपि वक्तु शक्यत्वेन कुतोऽयमाग्रह इत्यस्य किमुत्तरम् । वचनबलादिति चेत् । 'असत्तदशुभत्वत' इत्युक्तिरन्यत्राप्यस्तीति तुल्यम् ।

सद्भावे साधुभावे च सदित्येव प्रयुज्यते ।

इति स्मृत्या सच्छब्दस्य साधुत्वार्थकत्वसिद्धावसच्छब्दस्यासाधुत्वार्थकत्वे वचनान्तरानपेक्षणाच्च । कारणव्यतिरेकेणासत्त्वञ्च कारणायत्तसत्ताकत्वमस्वातन्त्र्यपर्यवसितम् । तच्चासत्पदार्थ इत्यङ्गीकृतमसद्व्यपदेशसूत्रे भगवतैवेत्यन्यत्र विस्तरः ।

एवमसत्यशब्दस्यासद्बुद्धिगम्यार्थत्वे लक्षणाऽऽपत्तिरित्यप्यशुद्धम् । असद्भिर्याप्यते प्राधान्येन ज्ञायत इत्यसत्यमिति व्युत्पत्त्या मुख्यार्थलाभात् । रूढेरपि 'उच्यते' इत्यनेनोक्तत्वात् । युक्तञ्चैवमनृतादिशब्दव्याख्यानम् । अन्यथा

विश्व सत्यं वशे विष्णोर्नित्यमेव प्रवाहत ।<br>न क्वाप्यनीदृशं विश्व तत्तत्कालानुसारत. ॥

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
त आसुरा. स्वयं नष्टा जगत क्षयकारिण ॥

इत्यादिव्यासस्मृतिविरोधात् ।

अथ विस्पष्टमहमर्थादर्थान्तरप्रतिषेधपरपुराणादिवचनाना का गतिरिति चेदद्वैतपरमूर्धाभिषिक्तानां 'सोऽहमस्मि' इत्यादिवेदान्ताना या गति सैव तदुपजीविनामिति स्फुटमेव । परन्तु श्रुतेरर्थान्तरे प्रामाण्यमन्यस्य तु विप्रलम्भादिमूलत्वेनाप्रामाण्यमपि सम्भवति । युक्तञ्चैतत् । यदापातत एवाद्वैतप्रतिपादककतिपयश्रुतिबलेन भेदनिष्ठस्य महतो वेदपुराणादिप्रबन्धस्यानुवादकत्वकल्पनात्कतिपयपुराणादिवचसा 'असत्यमप्रतिष्ठम्' इत्याद्यनुवादोपयुक्ततया प्रवृत्तिरितीति सुधियो विभावयन्तु ।

यस्तु उक्तवचनाना कृष्णद्वैपायनप्रणयनच्छायाराहित्यादिना कल्पितत्व भणति, तस्य भागवतभारतपुराणादीनामपि भिन्नकर्तृकत्व भावयत उत्तरमसुर्येषु भविष्यति । एवम्,

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूत किमन्यत्कामहैतुकम् ॥

एता दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माण क्षयाय जगतोऽहिता ॥

इत्यादिभगवद्गीतासु मायावादिनामसुरत्वोक्त्या

'विश्वं सत्य मघवाना युवोरिदापश्चन प्रमिनन्ति व्रतं वाम् ।
प्र घान्वस्य महतो महानि सत्या सत्यस्य करणानि वोचम् ॥

सत्य सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये ।

कविर्मनीषी परिभू· स्वयम्भूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्य. ॥'

इत्यादिश्रुतिभिश्च साक्षाद्विश्वसत्यत्वमवसीयते ।

यत्तु 'असत्यम्' इत्यस्य न सत्य यस्मिन्निति व्युत्पत्त्या शून्यवादस्य, 'अप्रतिष्ठम्' इति स्थैर्यनिषेधेन क्षणभङ्गवादस्य, 'अनीश्वरम्' इति निरीश्वरनास्तिकवादस्य, 'अपरस्परसम्भूतम्' इति स्वभाववादस्य, किमन्यत्किं वाच्यम् । काम्यत इति काम इष्टस्तद्धेतुकम् । यस्य यदिष्ट परमाण्वादि तद्धेतुकमित्यनेनावैदिकानामन्येषाञ्च निन्दितत्वेऽप्यत्र ब्रह्मवादो न निन्दित इति । तदसत् । 'अनीश्वरम्' इत्यनेनैव सकलनास्तिकमतग्रहणसम्भवेन शून्यवादादे पृथग्ग्रहणानुपपत्ते । गोबलीवर्दन्यायश्चागतिका गति. । सम्भव.येकवाक्यत्वे वाक्यभेदस्यान्याय्यत्वाच्च ।

विश्वं सत्यं वशे विष्णोर्नित्यमेव प्रवाहतः । इति सुरमतवैपरीत्येन
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।

इत्यसुरमतप्रदर्शकव्यासस्मृतिसमाख्याविरोधाच्च । 'असत्यम्' इति बहुव्रीहिणा शून्यवाद एव गृहीतो न तत्पुरुषेण मायावाद इत्यत्र नियामकाभावाच्च । अवैदिकमतनिन्दैव प्रकृतेति चेन्मुख्यतस्त्वन्मतस्यापि वैदिकत्व कोऽभ्युपैति । वक्ष्यति च मायावादस्य शून्यवादादविशेषमाचार्यः । प्रकृतासुरमतस्य विरोचनप्रवर्तितत्वेनावैदिक त्वावगमाच्च ।

यदपि 'असत्य जगत्' इत्यस्यासद्बुद्धिगम्यं जगदित्यपि व्याख्यातुं शक्यत्वात्त्वद्वादिनामपि निन्दा स्या दिति तन्न । तथा सति [1]"असुरा आहु" इत्यसद्बुद्धिगम्यताङ्गीकारविरोधान्निन्दाया निषेधे तात्पर्यात् ।

तस्मात् **'असत्यम्** अपरमार्थम् । तत एव **अप्रतिष्ठम्** ज्ञानबाध्यम् । तत एव **अनीश्वरम्** । न च यतो जातमसावीश्वर इति वाच्यम् । यतोऽ**परस्परसम्भूतम्** एकस्मादेकस्य नोत्पत्तिरिति यावत् । सत्यं न चेत्, किमसदेव । परस्परसम्भूत न चेत् किं नित्य स्वतो वा जातम् । आद्यस्योत्तर **अन्यदिति** । सदसद्भ्यामिति शेष. । द्वितीयस्य **कामहैतुकमिति** । काम इति तत्कारणमविद्योपलक्ष्यते' इति टीकोक्तार्थ एव ग्राह्य. ।

यदत्रोक्तं, 'सदसद्भ्याम्' इत्यध्याहारे मानाभाव इति तन्न । जगत प्रत्यक्षसिद्धसत्त्वानङ्गीकारेण अर्थलभ्यासत्त्वस्याप्यनङ्गीकारसम्भावनया किमसदेवेति प्रश्ने सदसदन्यत्वेनैवोत्तरस्य वाच्यत्वात् । अन्यथा 'अन्यत्' इत्यस्य वैयर्थ्यापातात् ।

यदपि 'कामपदेनाविद्यापरिग्रहे मतान्तरानिरासप्रसङ्ग' इति । तदिष्टमेव । 'आसुर पार्थ मे शृणु' इत्यासुरमतस्यैव प्रकृतत्वात् । एतन्मतस्यैवाऽसुरत्वेनेन्द्रविरोचनाख्यायिकादिसिद्धत्वात ।

यच्च 'जगतोऽविद्याहेतुकत्वेऽपरस्परसम्भूतत्वव्याघात' इति । तन्न । अविद्याकल्पितत्वस्यैव विवक्षित त्वात् । तस्यासम्भूतत्वेनाविरोधात् ।

यदपि 'अप्रतिष्ठम्' इत्यस्य ज्ञानबाध्यत्ववर्णनमुदक्षरमिति । तदपि न । ज्ञानाबाध्यत्वरूपसत्त्वस्यैव धात्वर्थतया तदभावरूपज्ञानबाध्यत्वस्य शब्दशक्तिलभ्यत्वात । 'एता दृष्टिमवष्टभ्य' इत्येकदर्शनानुवादाच्चैकवाक्य तया व्याख्यानमेव युक्तम् ।

यदपि 'विश्व सत्यम्' इति श्रुत्यर्थकथनम् 'हे इन्द्राब्रह्मणस्पती **युवोरित्** युवयोरेव युवामेवोद्दिश्य **विश्व** कर्म **सत्यम्** अमोघम् । **आपः** व्यापनशीला देवता **वां** युवयो **व्रत** कर्म **न प्रमिनन्ति** न हिंसन्ति' इति ।

---

[1] 'असता बुद्धिगम्यत्वात्' इत्यसद्बुद्धिगम्यताङ्गीकारविरोधात् 'असुरा आहु' इति निन्दाया निषेधे तात्पर्यात् । इति पाठेन भाव्यमिति भाति ।

तन्न । विश्वशब्दसङ्कोचे मानाभावात् । सत्यशब्दलक्षणायाश्चायुक्तत्वात् । देवतान्तरोद्देश्यककर्मणोऽप्यमोघत्वेनावधारणविरोधाच्च । ऐकपद्येन पठ्यमाने 'चन' शब्दे भेदकल्पनञ्च निर्मूलमेव ।

किन्तु 'हे मघवानौ धनादिमन्तौ युवयोर्विश्वं सत्यमेव । न केवलमहमेव प्रतिपन्न । किन्त्वापोऽपि वां सत्यजगत्सर्जनादिकर्म जानन्ति' इति द्विरूप परमेश्वरं प्रत्युच्यते' इति टीकोक्तार्थ एव ग्राह्य ।

यदपि 'सत्यानि करणानि' इत्यत्र सत्यशब्द सफलार्थ इति तदसत् । षष्ठ्यन्तस्य सत्यशब्दस्य परमार्थपरतया तत्सहचरितप्रथमान्तस्य तदर्थत्यागायोगात् । सफलार्थत्वे लक्षणापत्तेश्च । अतो 'नु इदानीं अस्य महत सत्यस्य परमेश्वरस्य महान्ति सत्यानि कर्माणि प्रवोचमेव' इत्यर्थ । न च सत्यस्येत्येतदव्यावर्तकम् । यथा कर्तृमहत्त्वादेव क्रियामहत्त्व तथा तत्सत्यत्वादेव तत्सत्यत्वमित्यर्थवत्त्वात् । न हि कर्तृकर्मणोरसत्यत्वे सृष्ट्यादिक्रियाया: सत्यत्व सम्भवति । अत एव तत्कर्मण प्रपञ्चस्य सत्यत्वसिद्धि. ।

यदपि 'सत्य सो अस्य महिमा' इत्यादौ महिमशब्दस्य परमानन्दाद्यर्थत्वे सत्यत्वं परमार्थत्वम् । जगत्कर्तृत्वाद्यर्थत्वे तु सफलत्वमेव' इति । तदप्यसत् । महिमत्वेन महिमसामान्यस्य महिमशब्दार्थतया तत्र सकृदुक्तसत्यशब्देन धर्मद्वयबोधनायोगात् । बाधक विना मुख्यार्थत्यागायोगाच्च । मिथ्याभूतफलवत्त्वेन च शवः सुखमुद्दिश्य स्तौमीत्युक्तस्तुत्यत्वानुपपत्तेश्च ।

यदपि 'याथातथ्यत.' इत्यस्य यादृशतादृशभाव प्रतिसन्धायेत्यर्थ । अन्यथा तथाशब्दस्यैव 'तथागत.' इत्यादौ सत्यार्थकताया अमरटीकादावुक्ततया यथाशब्दस्य तद्धितस्य च वैयर्थ्यम् इति । तदप्यशोभनम् । तथा सति 'याथातथ्यत' इत्यस्य वैयर्थ्यापत्ते । 'शाश्वतीभ्य' इत्यादे सत्यत्वोपपादकसार्वदिकत्वादिपरत्वासङ्गतेश्च । तथाशब्दमात्रस्य सादृश्याद्यर्थत्वसम्भवेन तद्व्यावृत्त्यर्थतया तद्धितान्तावैयर्थ्यात् । याथातथ्यशब्दलभ्यसत्त्वानतिक्रमस्य कर्मणि क्रियाया वाऽन्वये सत्त्वावधारणलाभेन वैयर्थ्यशङ्कानवकाशश्चेति । तस्मान्नागमोऽनिर्वचनीयार्थे मानमिति स्थितम् ।

अथापि स्यात् । अर्थापत्त्या शुक्तिरजतादेरम्बरादेर्वाऽनिर्वाच्यता सेत्स्यति । तथा हि, यदत्यन्तासन्न तत्प्रतीयते, यथा नरविषाणम् । यच्चात्यन्तसन्न तद्बाध्यते यथाऽत्मा । तदिहोभयान्यथानुपपत्त्या अनिर्वचनीयतैवाऽश्रयितु युक्तेति चेदुच्यते । अर्थापत्ति खलु नानुमानाद्भिद्यते । अनुमानञ्च निराकृतम् । एवमत्यन्तासतो नरविषाणादेरपि तत्पदात्प्रतीतिसम्भवेन 'असन्न प्रतीयते' इति व्याप्त्यभावाच्छुक्तिरजतादेरत्यन्तासत्त्वेनैवोपपत्ते । तथा अन्यथा विज्ञातस्य सम्यग्ज्ञानगोचरत्वरूपबाध्यत्वस्य सतश्चिदात्मनोऽपि सम्भवेन 'सन्न बाध्यते' इति व्याप्त्यभावादम्बरादे सत्त्वेनैवोपपत्तेर्नार्थापत्त्याऽनिर्वचनीयसिद्धि ।

यत्तु 'नरशब्दस्य नरसम्बन्ध्यर्थतया विषाणशब्दस्य श्रृङ्गमात्रवाचितया तयोरत्यन्तासत्त्वविरहेण तदन्यस्य चाशब्दार्थतया नासत प्रतीति । अन्यथा नरविषाणशब्दजन्यबोधस्य निर्विकल्पकतया नरसम्बन्धित्वश्रृङ्गत्वाद्यप्रकारकतया श्रृङ्ग नरीयं न वेति सशयाद्यविरोधित्वापत्ते ' इति । तन्न । सन्मात्रवाचिनामपि शब्दाना समभिव्याहारवशेनासत्प्रत्यायकत्वे बाधकाभावात् । न च तत्तदर्थगृहीतवृत्तिकपदाना तत्तदर्थमात्रबोधकत्वव्युत्पत्ते कथमसत शब्दात्प्रतीतिरिति वाच्यम् । पदाना पदार्थस्मृतिमात्रहेतुत्वात् । पदसमभिव्याहारस्य च सदसत्साधारणविशिष्टाकारज्ञानहेतुत्वात् । अत एव न तस्य निर्विकल्पकत्व संशयाद्यविरोधित्व वा । विपरीतविशिष्टाकारप्रतीतेरेव विरोधित्वात् । युक्तश्चैतत् । कथमन्यथा घटादिपदादशक्यस्यापि पटादेर्दोषवशात् घटत्वादिना बोध । अनुभवबलाच्छक्यतावच्छेदकरूपेणैव शब्दानामर्थबोधकत्वमुपगम्यत इति चेत् तत एव रूपनियममवधीर्य विशिष्टाकारबोधकत्वमात्रमुपगम्यताम् । अन्यथा 'नरश्रृङ्गमसत्, नरश्रृङ्गशब्दादसदेव श्रृङ्गममनिषि' इति सार्वजनीनानुभवापलापप्रसङ्गात् ।

एतेन शशश्रृङ्गादिशब्दजन्यशाब्दानन्तर शशीयत्वेन श्रृङ्ग जानामीत्यनुभवानुपपत्तिरित्यपास्तम् । तत्रापत एव शशीयत्वादेर्ज्ञानविशेषणतया भानात् ।

यदपि 'श्रृङ्ग क्वास्ति' इति पृष्टे यत्र प्रकारकेण 'शशश्रृङ्गमत्र' इत्युत्तरितम् । तत्र श्रृङ्गत्वानवगाह्यखण्डात्यन्तासदवगाहिप्रत्ययस्यैव जनने श्रृङ्गार्थिनस्तत्र प्रवृत्तिर्न स्यात् । किञ्च 'इद रजतम्' इति ज्ञानेऽप्यसद्रजतत्वेन भाति न वा । नाद्य । अन्यथाख्यात्यापत्ते । तुल्ययुक्त्या रजतस्यापि भानप्रसङ्गाच्च । न द्वितीय । भ्रमाद्रजतार्थिप्रवृत्त्यनुपपत्ते । तस्येष्टतावच्छेदकधर्मसंसर्गानवगाहित्वात्' इति । तदप्येतेनापास्तम् । श्रृङ्गरजताद्याकारज्ञानस्यैव तदर्थिप्रवृत्तिहेतुत्वेन तत्त्वत श्रृङ्गत्वाद्यभानेऽपि प्रवृत्त्युपपत्ते । तदाकारत्वञ्च तत्सत्तानपेक्षो ज्ञानधर्मविशेष । अन्यथा तवाप्यनुपपत्ति । प्रातिभासिकरजतज्ञानस्येष्टतावच्छेदकव्यावहारिकरजतत्वसंसर्गानवगाहित्वात् ।

ननु 'अपरोक्षज्ञानस्येन्द्रियसन्निकर्षजन्यत्वादसता च सन्निकर्षायोगात् कथमिद रजतम् इत्यपरोक्षज्ञानमसद्विषयम्' इति चेन्न । तद्विषयकप्रत्यक्ष प्रति तदिन्द्रियसन्निकर्षस्य हेतुतया शुक्तीन्द्रियसन्निकर्षेण शुक्तिविषयक प्रत्यक्षस्यैव जननात् । न चैवमख्यातिवाद । भ्रमस्य रजताकारत्वाभ्युपगमात् । न चैवं तद्विषयत्वापत्ति । तज्ज्ञानजनकसन्निकर्षादिमत्त्व तद्विषयत्वमित्यङ्गीकारात् ।

यत्तु 'आकारतैवास्तु विषयता । न तूक्तसन्निकर्षादि । गौरवात् । 'रजतत्वेनेमं साक्षात्करोमि' इत्यनुभवस्य भ्रमप्रमासाधारणस्य वैरूप्यकल्पनापत्तेश्च नित्यज्ञाने विषयतान्तरस्यावश्यकतया तस्यैव सर्वत्र स्वीकर्तुमुचितत्वाच्च' इति । तदसत् । सन्निकर्षादिस्वरूपस्य प्रामाणिकत्वेन तत्कल्पने गौरवाभावात् । न च तत्र विषयतात्व-

कल्पने गौरवम् । आकारत्वे तत्कल्पनेऽपि साम्यात् । उक्तभ्रमप्रमासाधारणानुभवस्य समानाकारताविषयत्वेना-वैरूप्यात् । अगत्या नित्यज्ञाने विषयतान्तरकल्पनेऽप्यन्यत्र तत्कल्पन एव गौरवात् । साक्षात्करोमीति प्रतीति-नियामकलौकिकसन्निकर्षाधीनविषयत्वान्तरकल्पनापेक्षया सन्निकर्षस्यैव तथात्वकल्पने लाघवस्य दुरपह्नवत्वाच्च ।

अथ सन्निकर्षस्यैव विषयतात्वे यत्रैकेनैव सन्निकर्षेण 'घटवद्भूतलम्, भूतले घट' इति ज्ञानद्वयोत्पत्तिस्तत्र विशेष्यविशेषणभाववैपरीत्यप्रसङ्ग । घटभूतलसन्निकर्षयोरुत्तरज्ञानानुरोधेन विशेष्यत्वविशेषणतारूपताया पूर्व ज्ञानानुरोधेन विशेषणताविशेष्यतारूपायाश्चावश्यकत्वादिति चेन्न । घटवद्भूतलमिति ज्ञाने घटभूतलविषयतयो, भूतले घट इति ज्ञाने च भूतलघटविषयतयो प्रकारतात्वविशेष्यतात्वाभ्यामिव विशेष्यतात्वप्रकारतात्वाभ्या निरूप्यनिरूपकभावानभ्युपगमेन विशेष्यविशेषणभावव्यवस्थोपपत्ते ।

एतेन 'घटवद्भूतलम्' 'घटो रूपवान्' 'भूतले पट' इति समूहालम्बनज्ञाने घटांशे भूतलविशेषणकतापत्ते । घटसन्निकर्षस्य विशेष्यतारूपताया, भूतलसन्निकर्षस्य विशेषणतारूपताया, तयोर्निरूप्यनिरूपकभावस्य चावश्य-म्भावात्' इति निरस्तम् । तादृशज्ञाने घटविषयताया विशेष्यतात्वेन भूतलविषयत्वानिरूप्यत्वात् । न च घटो भूतलवानिति ज्ञानानुरोधेन विशेष्यतात्वेनापि तन्निरूप्यताऽऽवश्यकतेति वाच्यम् । घटवद्भूतलमिति ज्ञानावच्छेदेन तदनभ्युपगमात् ।

यत्तु 'निरूप्यतादेरतिरिक्तत्वे विषयताऽपि तथाऽस्तु' इति तदतीव मन्दम् । निरूप्यतादेरप्याश्रयान तिरिक्तत्वात् । विषयताऽतिरेकेऽपि निरूप्यनिरूपकभाववैचित्र्यस्याऽवश्यकत्वाच्च । अन्यथा 'घटवद्भूतलवानय देश' इति ज्ञाने घटांशे भूतलस्य विशेषणत्वापत्ते । घटनिष्ठप्रकारताया घटत्वांशे विशेष्यतारूपत्वात् । भूतलनिष्ठ-विशेष्यतायाश्च देशांशे प्रकारतारूपत्वात् । तत्र तत्र विभिन्नानन्तविषयतास्वीकारे च महागौरवादिति दिक् ।

एवमसत प्रतीत्यभावेऽसद्वैलक्षण्यज्ञानानुपपत्ति । वैलक्षण्यज्ञानस्य प्रतियोगिज्ञानसापेक्षत्वात् ।

यत्तु 'सत्तादात्म्यमात्रमसद्वैलक्षण्यम् । अतो न तज्ज्ञानस्य प्रतियोगिज्ञानापेक्षा' इति । तदसत् । असद्-वैलक्षण्यशब्दादसद्वैलक्षण्यत्वेन बोधस्य निराकर्तुमशक्यत्वात् । न च भेदो न सत्त्वावच्छिन्नप्रतियोगिताक इति प्रतीतिकाले सत्त्वावच्छिन्नप्रतियोगिताकभेदघटितासत्पदार्थवैलक्षण्यज्ञान कथमुपपद्यतामिति वाच्यम् । तादृश-ज्ञानस्य भेदत्वावच्छिन्नधर्मिकज्ञानं प्रत्येव विरोधितया सत्त्वावच्छिन्नप्रतियोगिताकवद्वैलक्षण्यज्ञानस्योत्पत्तौ बाधका-भावात् । तादृशप्रतीतिशून्यकाले विशिष्टज्ञानस्य दुर्वारत्वाच्च ।

यत्तु 'एव भावाभावविलक्षणान्योन्याभावस्वीकारापत्ति । असद्धर्मिकभेदस्य धर्मिस्वरूपत्वायोगात्' इति । तन्न । असद्धर्मिकभेदस्यासत्त्वरूपतया भावाभाववैलक्षण्याप्रसङ्गात् ।

यदपि 'असद्धर्मिकधर्मस्वीकारे घटत्वादेरपि घटाद्यतिरिक्त आश्रय स्यात् । घटातिरिक्तघटत्वाश्रयोऽसन्नित्यनुभवात्' इति । तत्तुच्छम् । तादृशप्रतीत्या हि घटातिरिक्तघटत्वाश्रयस्यासत्त्वमवगाह्यते । तच्चेष्टमेव । घटातिरिक्तघटत्वाश्रयस्य सत्त्वन्तु स्वव्याघातादशक्यापादनम् ।

एवमसत ख्यात्यभावे तत्खण्डनानुपपत्ति । 'शशशृङ्गमलीकम्' इत्यादिव्यवहारानुपपत्तिश्च ।

यत्तु 'असत्प्रतीयते' इति परोक्तप्रतिज्ञाया अप्रामाण्यसमर्थनमेव तत्खण्डनम् । तच्च प्रतीयमानताव च्छेदेन सत्तादात्म्यसाधनमात्रेणाप्युपपद्यते । 'शशशृङ्गमलीकम्' इत्यस्य च 'शशशृङ्गशब्दोऽप्रमाणम् इत्यर्थ.' इति । तदसत् । प्रतीयमानत्वाभाववति प्रतीयमानताबोधकतारूपाप्रामाण्यस्यासत्ख्यातिमन्तरेण दुर्ग्रहत्वात् । सत्त्वावच्छिन्नप्रतियोगिताकत्वाभाववति सत्त्वावच्छिन्नप्रतियोगिताकताबोधकत्वरूपाप्रामाण्यस्य च तादृशभेदवत्त्वेनासद्बोधकत्वेऽप्युपपन्नतया तत्समर्थनस्यानुपयुक्तत्वात् । प्रामाण्याभावरूपाप्रामाण्यसमर्थनमप्यनुपयुक्तमेव । किञ्चिद्देशोऽप्रामाण्येऽप्यसत्ख्या[1]तिनिरासात् । 'शशशृङ्गमलीकम्' इत्यस्य च मुख्यार्थे बाधकाभावेन लाक्षणिकार्थानौचित्यात् । 'शशशृङ्गस्यालीकत्वाच्छशशृङ्गशब्दोऽप्रमाणम्' इत्यादेरनन्वितार्थत्वप्रसङ्गाच्च ।

यदप्युक्तम् । अविषयस्य ख्यातिरस्ति न वा । नाद्य । अविषये विषयत्वस्य व्याहतत्वात् । नान्त्य । तस्याख्यातौ तत्खण्डनायोगात् इति । तत्तुच्छम् । अविषयस्यासत्त्वेन व्याघातानवकाशात् । विरुद्धयोरेकवस्तुवृत्तित्व हि व्याहतम् । तथा हि प्रत्ययो 'घटत्वपटत्वोभयाश्रयोऽसन्' इति । न चैवम् 'अविषयोऽसन्' इति वाक्यस्याप्रामाण्यापत्ति । विषयत्ववत्यविषयत्वबोधकत्वादिति वाच्यम् । असत. सत्त्वप्रतीतिः सतोऽसत्त्वप्रतीतिरित्यन्यथाप्रतीतिरेव भ्रान्तिस्तज्जनकं वाक्यमप्रमाणमित्यङ्गीकारात् । न चैतदप्रामाण्य प्रकृतेऽस्तीति ।

एतेनैतद्दृष्टान्तेन 'शशशृङ्गमसत' इत्यादिवाक्यानामप्रामाण्यस्वीकारोऽपि निरस्त । शशशृङ्गादिशब्दादखण्डार्थप्रत्यये नीलघटादिशब्दादपि तदापत्तिरित्यादिकन्तु दूषितप्रायम् । एवमसत ख्यात्यभावे 'नासदासीत्, तद्धैक आहुरसदेवेदमग्र आसीत, कथमसत. सज्जायेत' इत्यादिश्रुतीनामप्रामाण्यप्रसङ्ग. । कथञ्चिदमुख्यार्थकल्पने च स एव दोषः । तस्मादसत्ख्यातिरावश्यिकी ।

एवम् 'बाध्यता च नोक्तरूपा । अपि तु ज्ञानत्वेन ज्ञाननिवर्त्यता स्वाधिकरणनिष्ठात्यन्ताभावप्रतियोगिता वा । न च तत्सतश्चिदात्मनोऽस्ति । अस्ति च जगत इत्यनिर्वाच्यत्वमेव तस्य' इत्यपि हेयम् । 'न च बाध्यं जगदित्यत्र किञ्चिन्मानम्' इति मूलोक्तदूषणपरिहारादर्शनात् ।

अथापि स्यात् । 'नोक्तानुमानेन मुक्तौ भेद सिद्ध्यति । अप्रसिद्धे प्रमाणविरोधाच्च । तथा हि, विमत मिथ्या दृश्यत्वाज्जडत्वात्परिच्छिन्नत्वाच्छुक्तिरूप्यवत् विमता आत्मान परमात्मन परमार्थतो न भिद्यन्ते आत्म-

[1] ख्यातिनिरासात् इति पाठेन भाव्यमिति भाति ।

त्वात्परमात्मवदित्यनुमानम् 'वाचारम्भणं विकारो नामधेयम् । नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतिश्च न परमात्मातिरिक्तं तत्त्वं सहते । सति चैवं बन्धस्यैवाभावात्कुतो मुक्तत्वम् । कुतो वा मुक्तौ भेदः स्यात्' इति । नैवम् । मिथ्येत्यनिर्वचनीयताविवक्षायामप्रसिद्धविशेषणत्वात् । असत्त्वविवक्षायामपसिद्धान्तात् । किञ्च मिथ्यात्वस्य मिथ्यात्वे जगतः सत्यत्वापातः । सत्यत्वे चापसिद्धान्तः ।

यत्तु 'यत्र मिथ्याभूतमिथ्यात्वकत्वं तत्र पारमार्थिकत्वमित्यङ्गीकारे शुक्तिरूप्ये व्यभिचारः । तन्मिथ्यात्वस्यापि मिथ्यात्वात्' इति । तदसत् । शुक्तिरूप्यादेरपि मिथ्याभूतमिथ्यात्वकत्वेन विप्रतिपन्नतया पक्षत्वेन व्यभिचारोद्भावनानर्हत्वात् । शुक्तिरूप्यनिष्ठमिथ्यात्वस्य शुक्तिरूप्यनिष्ठात्यन्ताभावप्रतियोगितारूपमिथ्यात्वाङ्गीकारानङ्गीकारयोर्मिथ्यात्वरूपसाध्यव्यभिचारस्य हेतौ दुर्वचत्वाच्च ।

यत्तु 'सत्यत्वं यदि मिथ्यात्वाभावस्तदा तदापादने इष्टापत्तिरेव' इति । तन्न । मिथ्यात्वमङ्गीकृत्य तन्निषेधे व्याघातात् । मिथ्यात्वविरोधिसत्यत्वान्तरस्य दुर्वचत्वाच्च ।

यत्तु 'स्वान्यूनसत्ताकमिथ्यात्ववद्भेद एव मिथ्यात्वविरोधिसत्यत्वम्' इति । तदसत् । मिथ्यात्वस्य सत्यत्वाभावरूपतया परस्पराश्रयप्रसङ्गात् । मन्मते स्वान्यूनसत्ताकमिथ्यात्ववतोऽप्रसिद्धेश्च । भवन्मते स्वान्यूनसत्ताकमिथ्यात्वभेदस्य स्वन्यूनसत्ताकस्य जगत्यपि सम्भवाच्च । धर्म्यन्यूनसत्ताकतया भेदविशेषणे च ब्रह्मण्यसम्भवात् । जगत्सत्यत्वस्य व्यावहारिकतयाऽतिप्रसङ्गाच्च ।

यदपि 'जगत्सत्यं मिथ्याभूतमिथ्यात्वकत्वात् इत्यत्र स्वावृत्तिमिथ्यात्वकत्वमुपाधि' इति । तदपि न । भवन्मते मिथ्यात्वगतप्रपञ्चवृत्तिताया अपि मिथ्यात्वेन स्वावृत्तिमिथ्यात्वकत्वस्य साधनव्यापकत्वात् । मन्मते मिथ्यात्वस्य सर्वथा प्रपञ्चावृत्तित्वाच्च उक्तव्याघातस्यैव विपक्षबाधकत्वाच्च ।

किञ्च आत्मनोऽपि दृश्यत्वादनैकान्त्यम् ।

यत्तु 'स्वविषयविषयकज्ञानाबाध्यदृग्विषयत्वं दृश्यत्वम् । अतो नानैकान्त्यम्' इति । तदसत् । तद्बाध्यतायास्तदनिवर्त्यतारूपत्वे स्वोत्तरोत्पन्नयत्किञ्चिद्गुणनिवृत्तेदानीन्तनब्रह्मज्ञानस्य कालान्तरभाविब्रह्मज्ञाननिवर्त्यतया तद्विषये ब्रह्मण्यनैकान्त्यतादवस्थ्यात् । अन्यविधतायाश्चासिद्धेः । किञ्च ब्रह्मज्ञाननिष्ठब्रह्मज्ञानबाध्यताया अपि ब्रह्मज्ञानबाध्यतया तत्र तदभावावश्यम्भावात्तद्विषये ब्रह्मण्यनैकान्त्यमेव । अपि च त्वन्मते ब्रह्मणः सर्वप्रत्ययवेद्यतया वृत्तिज्ञानमात्रस्य स्वविषयविषयकब्रह्मज्ञानबाध्यत्वात्तदबाध्यचिद्रूपज्ञानविषयत्वं ब्रह्मण्यनैकान्तिकमेव । अपि च मन्मते ब्रह्मज्ञानस्याबाध्यतया तद्विषये ब्रह्मण्यनैकान्त्यम् । अनुकूलतर्काभावे यतः सन्दिग्धानैकान्त्यमपि दोषः ।

यत्तु 'निर्विशेषब्रह्मणस्तत्त्ववादिभिः सद्व्यतिरिक्तताभ्युपगमात्तत्र व्यभिचारोद्भावनायोगः । सद्विविक्ततामात्रस्यैव साध्यत्वात्' इति । तन्मन्दम् । सत्यादिपदतात्पर्यविषयपारमार्थिकवस्तुन एव त्वया निर्विशेषत्वाङ्गीकारात्तत्रैवास्माभिर्व्यभिचारोद्भावनात् ।

एतेन 'चिद्विषयत्वं दृश्यत्वम् । तच्च न ब्रह्मणि । अत्यन्ताभेदे सम्बन्धानभ्युपगमात् । न च नित्यातीन्द्रियेऽसिद्धिः । अधिष्ठानचित्तादात्म्यरूपचिद्विषयत्वस्य सर्वदृश्यसाधारणत्वात्' इत्यपि निरस्तम् । उक्तानैकान्त्यापरिहारात् । अधिष्ठानचित्तादात्म्यासिद्धेश्च ।

यदपि 'परमात्मातिरिक्तं सर्वमस्वतन्त्रमित्याकारकयत्किञ्चिज्ज्ञानविषयत्वं दृश्यत्वम्' इति तदप्यसाधु । त्वन्मते ब्रह्मण एव ब्रह्मातिरिक्तत्वेन अस्वतन्त्रत्वेन च ज्ञायमानत्वोपगमेनोक्तव्यभिचारावारणात् ।

यदपि 'सत्यादिपदतात्पर्याविषयविषयकदृग्विषयत्वं दृश्यत्वम्' इति तदपि तुच्छम् । सर्वप्रत्ययवेद्ये ब्रह्मण्यनैकान्त्यानिस्तारात् । ब्रह्माब्रह्मसमूहालम्बनविषयत्वेन च व्यभिचारात् । सर्वत्र दृश्यपदलक्षणापत्तेश्चेति दिक् ।

जडत्वञ्चाप्रमातृत्वमेव । न च प्रमातृत्वमात्मनस्तैरङ्गीक्रियते । अतस्तदप्यनैकान्तिकम् ।

यत्तु 'अर्थोपलक्षितप्रकाशान्यत्वं जडत्वम्' इति तन्न । 'यदि जडत्वं नामाप्रकाशत्वं तदाप्यात्मनः विषयप्रकाशत्वाभावात्परविषयप्रकाशत्वाभावाच्चानैकान्तिकमेव' इत्यादिना मूल एव दूषितत्वात् । मुक्तात्मन्यकान्त्यतादवस्थ्यञ्च । तस्य निर्विषयत्वेन ज्ञानत्वासम्भवात् ।

यत्तु 'संसारदशायां विषयसत्त्वादेव तस्य ज्ञानत्वोपपत्तिः । अन्यथाऽतीतविषयकज्ञानस्यापि ज्ञानत्वानुपपत्तेः' इति तदसत् । मुक्तावज्ञानाभावेन तदधीनस्य ज्ञानत्वादिधर्मस्याप्यभावेन व्यभिचारस्य विवक्षितत्वात् । न च तस्य निर्धर्मकत्वादेव तदभावोऽपि तत्र नेति वाच्यम् । अभावधर्माङ्गीकारे तद्दोषतादवस्थ्यात् । अन्यथा निर्धर्मकत्वरूपधर्माङ्गीकारानङ्गीकारयोर्व्याघातप्रसङ्गात् ।

एवं देशतः कालतः परिच्छिन्नत्वं प्रकृतिकालादिष्वभावादसिद्धम् । वस्तुतः परिच्छिन्नत्वमात्मनोऽपि भेदाङ्गीकारादनैकान्तिकम् । एतेनैव 'स्वज्ञानाबाध्यभेदप्रतियोगित्वं परिच्छिन्नत्वम्' इत्यपास्तम् । मया तस्याप्यात्मन्यङ्गीकारात् ।

प्रत्यक्षबाधितञ्च जगन्मिथ्यात्वम् । सदिति प्रतीयमानत्वात् ।

यत्तु 'प्रत्यक्षयोग्यं मिथ्यात्वविरोधि सत्यत्वं दुर्वचम् । स्वरूपसत्त्वादेर्मिथ्यात्वाविरोधित्वात्' इति तन्मन्दम् । स्वरूपसतो मिथ्यात्वे प्रमाणाभावात् । मिथ्याभूतस्य शशविषाणादेर्निःस्वरूपत्वेन स्वरूपसतश्च ब्रह्मणो

मिथ्यात्वाभावेन मिथ्यात्वस्वरूपसत्त्वयोर्विरोधावधारणात् । स्वरूपसत्त्वाविरोधिन पारिभाषिकमिथ्यात्वस्य चासद्विरोधित्वात् । एव कालसम्बन्धित्वात्यन्ताभावाप्रतियोगित्वादिकमपि मिथ्यात्वविरोध्येव । स्वयमसत शशशृङ्गादेरिव कालसम्बन्धित्वायोगात् । लाघवेनाभावत्वावच्छेदेन प्रतियोगिकालावृत्तित्वसिद्धे । अत्यन्ताभावस्य अत्यन्तासत्प्रतियोगिकत्वानुभवाच्च । न च कालस्य चक्षुराद्यगोचरत्वात्कथ तत्सम्बन्धस्य प्रत्यक्षयोग्यत्वमिति वाच्यम् । साक्षिप्रत्यक्षयोग्यत्वात् ।

तथाऽपि प्रत्यक्षस्यानुमानबाधकत्वं कुत इति चेदुपजीव्यत्वादिति तावद्ब्रूम ।

यत्तु 'यदश उपजीव्यत्वं तस्यैव नोपमर्द । न च धर्मिण सत्त्वमनुमानेनोपजीव्यते । किन्तु स्वरूपमात्रम्' इति तदसत् । स्वरूपस्यैव सत्त्वरूपत्वात् । किञ्च अनुमानेन सत्त्वप्रतिषेधे तत्प्रसञ्जकप्रत्यक्षस्य तदंशे कथ नोपजीव्यत्वम् । प्रतिषेधस्य प्रसक्तिपूर्वकत्वात् । न च प्रत्यक्षसिद्धमन्येन केनापि बाध्यं दृष्टम् । सर्पभ्रमादेरपि बलवत्प्रत्यक्षेणैव विषयापहारात् । अन्यथा कालातीतस्य दोषत्वानुपपत्ते । प्रत्यक्षन्तु परीक्षितमपरीक्षितस्य बाधकम् । चन्द्रप्रादेशत्वादिविषयन्तु दूरस्थत्वादिदोषयुक्तत्वादपटु । ततश्च साक्षिणैव गृहीताप्रामाण्यकत्वान्नानुमानादेर्बाधकत्वम् ।

न च जगत्प्रत्यक्षस्यापटुत्वे किञ्चिन्मानम् । मानाभावेन जगतो मायिकत्वानिश्चयात् ।

यत्तु 'माया तु प्रकृतिं विद्यात्' इत्यादिश्रुत्या तन्निश्चय इति तन्न । बलवद्युक्तिविरुद्धत्वेन श्रुतेरतदर्थत्वात् । तथा हि । अम्बरादिक नेश्वरमायाजन्यम् तेन दृश्यमानत्वात् यद्यन्मायाजन्य तत्तेन न दृश्यते यथैन्द्रजालिकं मायाविना इति युक्ति ।

न च मायाविना माया दृश्यते विश्वमीश्वरः ।
सदा पश्यति तेनेद न मायेत्यवधार्यताम् ॥

इति ब्रह्माण्डोक्ता तावद्बलवती ।

यत्तु 'व्याप्तिरसिद्धा ।

'ततो मायां परां चक्रे देवशत्रु प्रतापवान् ।
सिंहव्याघ्रवराहांश्च तरक्षूनृक्षवानरान् ॥
मुमोच धनुरायम्य प्रद्युम्नस्य रथोपरि ।
गन्धर्वास्त्रेण चिच्छेद सर्वांस्तान् खण्डशस्तथा ॥

प्रद्युम्नेन तु सा माया हता ता वीक्ष्य शम्बरः ।
अन्या माया मुमोचाथ दानवः क्रोधमूर्छितः ॥
निहता हस्तिमाया तु ता समीक्ष्य महासुरः ।
सैहीं मायां महातेजाः सोऽसृजद्दानवेश्वरः ॥
सिंहान् विद्रावितान् दृष्ट्वा माययाऽष्टापदेन हि ।
शम्बरश्चिन्तयामास ॥'

इति मायिनोऽपि मायाद्रष्टृत्वस्य महाभारतादावुक्तत्वात्' इति । तदयुक्तम् । उदाहृतवचनैर्मायादर्शनस्यासिद्धेः । न च 'दृष्ट्वा' इत्यादिना तत्सिद्धिः । निहतस्य दर्शनायोगात् । न च निधनं दृष्ट्वेत्यर्थः । तेन तत्प्रतियोगिदर्शनमाक्षिप्यत इति वाच्यम् । दृशेर्निश्चयार्थत्वेन यथाश्रुतान्वयोपपत्तेः । शम्बरस्य मायाशब्दितशक्तिविशेषेण सत्यसिंहादिस्रष्टृत्वसम्भवाच्च । अन्यथा तेषां शत्रुभयमात्राधायकत्वेन च्छेदभेदादिकारित्वानुपपत्तेः । किञ्च भारतवचनविरोधात्पुराणमप्रमाणीकरोषि उत तस्यार्थान्तरं मन्यसे । नाद्यः । वैपरीत्यप्रसङ्गात् । नान्त्यः । अनिरूपणात् । निरवकाशत्वाच्च ।

'कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधात्'

इत्यादौ कवित्वादेव यथार्थजगद्विधातृत्वोक्त्या निरुक्तानुमानस्य श्रुत्यनुगृहीतत्वाच्च ।

यत्तु एवम्

'ज्ञानस्वरूपमेवाहुर्जगदेतद्विचक्षणाः ।
अर्थस्वरूपं भ्राम्यन्तो द्वैतिनोऽतथ्यदर्शिनः ॥
तस्मान्न विज्ञानमृतेऽस्ति किञ्चित् ।
अहं हरिः सर्वमिदं जनार्दनः स वासुदेवो न यतोऽन्यदस्ति ॥

इत्यादिपुराणवचनविरोधः' इति । तन्न । तेषां सावकाशत्वात् । तथा हि, वेदविचक्षणाः 'एतज्जगत्' जीवजातं ज्ञानस्वरूपमेवाहुः । भ्रान्तास्तु बाह्यार्थदेहादिस्वरूपम् । वेदविरुद्धवेदिन एव मिथ्याज्ञानिनः । विशिष्टज्ञानस्वरूपं ब्रह्म विना न किञ्चिदस्ति । सर्वं तदधीनसत्ताकमिति यावत् । मदन्तर्नियामको हरिरेव सर्वान्तर्यामीत्यर्थः । उक्तश्चैतच्छास्त्रदृष्टिसूत्रे भगवतैव । 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति च गीतायाम् ।

ईशोऽनीशो जगन्मिथ्या न पूज्यो गुरुरित्यपि ।
एक आत्मा परब्रह्मभावो मुक्तिरिति क्वापि ॥

एवमादिविरुद्धानि वचनान्यथ युक्तय ।
प्रमाणैर्बहुभिर्ज्ञेया आभासा इति वैदिकै ॥
वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना ।
इतराणि विरुद्धानि प्रलम्भभ्रमजान्यपि ॥

इति च व्यासस्मृतिः ।

यत्तु 'एतद्वचनाना प्रसिद्धव्यासस्मृतावनुपलम्भाद्व्याख्यातृभिरनुदाहृतत्वाच्चाप्रामाणिकत्वम्' इति । तदसत् । अनुपलम्भस्योत्सादमूलत्वात् । अनुदाहरणस्य चाज्ञानमूलत्वात् । अनुपलम्भस्यासत्त्वोत्सादमूलत्वसन्देहेऽपि सन्दिग्धान्यथासिद्धत्व दुर्वारमेव । श्रुत्यादिभिराचार्यस्य परमाप्तत्वसिद्धावन्यथासिद्धिनिश्चयोऽपि भविष्यति ।

निराकृतश्च सूत्रकृतैव मायावाद । 'नासतोऽदृष्टत्वात्, नाभाव उपलब्धे' इति । नन्वत्र शून्यवादो निराक्रियते । नासतः शून्याज्जगदुत्पत्ति अदृष्टत्वात् । न ह्यसत सदुत्पद्यते । न च जगतोऽसत्त्वान्नानुपपत्तिरिति वाच्यम् । यतो जगत नाभावो नासत् । कुत । उपलब्धेः सत्त्वेन प्रतीयमानत्वादिति । तत्कथमत्र मायावादनिराकरणमिति चेत् । सत्यम् । न हि शून्यवादिन सकाशाद्वैलक्षण्य मायावादिन । निरसनीयाशसाम्यात् । सञ्ज्ञामात्रभेदस्याप्रयोजकत्वात् ।

यत्तु शून्यवादिभि शून्याज्जगदुत्पत्तिर्नेष्यते । अन्यथा युगपत्सर्वोत्पत्त्यादिप्रसङ्गात् । सहकारिविरहस्य कार्यानुदयप्रयोजकत्वे क्षणभङ्गभङ्गापत्ते । इष्यते च तैरपि क्षणभङ्ग । ब्रह्मवादिभिस्तु ब्रह्मणो जगदुत्पत्तिरिष्यत इत्यनयोर्वैलक्षण्यमिति । तन्न । जगदुत्पादकतायास्तन्मते शून्य इव त्वन्मते ब्रह्मण्यप्यभावात् । जगदारोपाधिष्ठानतारूपजगत्कारणतायाश्च शून्यब्रह्मशब्दिते तटस्थतयोभयसम्मतत्वात् । अन्यथा सूत्रे शून्यकारणतानिराकरणानुपपत्तेः ।

यदपि 'मायिनां ब्रह्म पारमार्थिकम् । माध्यमिकानान्तु न तथा शून्यमिति मतभेद' इति तदपि तुच्छम् । अर्थक्रियाकारितारूपस्य पारमार्थिकत्वस्य त्वन्मतेऽप्यभावात् । अनारोपितत्वाबाध्यत्वादिरूपस्य च तन्मतेऽपि सद्भावात् ।

यदपि 'शून्यस्य पारमार्थिकत्वे 'नासत' इति सूत्रे कथमसत्पदप्रयोग' इति तदपि न । अर्थक्रियाकारितारूपसत्त्वराहित्येन तदुपपत्ते । तस्यैव जगदहेतुताया हेतुत्वात् ।

यदपि 'शून्यस्य स्वप्रकाशानुभवात्मकतानुपगमाद्वैलक्षण्यम्' इति तदपि तुच्छम् । स्वविषयत्वरूपस्वप्रकाशत्वस्य त्वयाऽप्यनुपगमात् । अवेद्यतादिरूपस्य च तेनाप्युपगमात् । एवमनुभवत्वादिजातिस्तवाप्यसिद्धा । जडव्यावृत्तिमात्रन्तु तस्यापि सिद्धम् । एवमपरप्रमेयेऽपि साम्लक्षण्य ग्राह्यम् ।

सत्यन्तु द्विविधं प्रोक्तं सांवृतं पारमार्थिकम् ।
सांवृतं व्यावहार्यं स्यान्निवृत्तौ पारमार्थिकम् ॥
निर्विशेषं स्वयम्भातं निर्लेपमजरामरम् ।
शून्यं तत्त्वमविज्ञेयं मनोवाचामगोचरम् ॥

इत्यादितद्वचनात् ।

यत्तु 'तार्किकैरेतन्मतानुवादेष्वनुदाहृतत्वादेतद्वचनस्याप्रामाणिकत्वम्' इति तन्न । तदीयाशेषमूलकोशादर्शनोत्थप्रलापस्यानादरणीयत्वात् ।

द्वे तत्त्वे समुपाश्रित्य बुद्धानां धर्मदेशना ।

इत्यादितदुदाहृतधर्मकीर्तिवचनानुसारित्वाच्च ।

यत्तु एकेनैव बुद्धेन सत्यानिर्वाच्यविज्ञानवादौ परस्परविरुद्धौ कथमुपदर्शितावित्याशङ्कायामधिकारिभेदेन तदुपपत्तिप्रतिपादनपरमुक्तवचनम् ।

देशना लोकनाथानां श्रोतृवित्तिवशानुगा ।

इत्युक्तेरिति तदसत् ।

लोके सांवृतसत्त्वञ्च सत्त्वञ्च परमार्थतः ।

इत्युत्तरार्धाननुगुणत्वात् । अधिकारिभेदेऽप्यर्थद्वैरूप्यानिस्ताराच्च । अपि च न शून्यस्य ब्रह्मणो व्यावृत्तिः । व्यावर्तकाभावात् । शून्यतादिधर्माणां तेनानङ्गीकृतत्वात् । पारमार्थिकतादिधर्माणां त्वयाऽनुपगमात् । अन्यथाऽखण्डताविरोधात् । अतः शून्यं ब्रह्मेति संज्ञाभेद एव । नार्थभेदः । प्रपञ्चानिर्वाच्यत्वञ्चोभयसम्मतमिति युक्तम् । तस्मात्साधूक्तं चिरन्तनैः 'प्रच्छन्नबौद्धा मायिनः' इति ।

ननु कथं शून्यवादाविशिष्टमायावादं सूत्रकारो निराकार्षीत् । यावता 'न स्थानतोऽपि परस्योभयलिङ्गम्' इत्यखण्डं ब्रह्माङ्गीचकारेति चेन्मैवं वोचः ।

मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे ।
यदासीत्तत एवाऽद्य स्वयम्भूः समभूदजः ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥

इत्यन्यत्र सगुणतासर्वोत्तमतादेः स्वयमेवोक्तत्वात् । सूत्रन्तु परमेश्वरस्य स्थानभेदेऽप्यभेदादिपर यथाभाष्यमव गन्तव्यम् ।

यत्तु हेयप्रत्यनीका सुखादिगुणा भगवदभिन्नाः । मायोपाधिकाश्च कर्तृत्वादय सर्वोत्तमत्वादयश्च मया-ऽप्यङ्गीक्रियन्त एव इति तदसत् । गुणगुणिभावाभावे तेषा गुणत्वाभावात् । ज्ञानानन्दादिगुणानामखण्डैकब्रह्म स्वरूपत्वे मिथो वैलक्षण्यस्य गुणानन्त्यस्य चानुपपत्तेश्च । गुणगुणिभावादेराविद्यकस्याभ्युपगमान्न दोष इति चेन्न । उक्तवचनाप्रामाण्यानिवारणात् ।

'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ।'

इति श्रुतिविरोधाच्च ।

यत्तु 'ज्ञानादिगुणानामीश्वरस्वभावभूतत्वाभ्युपगमान्न विरोध ' इति तत्तुच्छम् । क्रियाशब्दोक्तकर्तृत्वादे-स्तदनभ्युपगमात् । द्वन्द्वनिर्दिष्टज्ञानबलादीनामवैलक्षण्यप्रसङ्गाच्च ।

यदपि कर्तृत्वादे स्वभावत्वे 'तत्तेजोऽसृजत' इत्याद्यतीतत्वबोधकश्रुतिविरोध इति तन्न । ज्ञानादे स्वभा-वत्वेऽपि 'तदैक्षत' इत्याद्यतीतत्वबोधकश्रुतिविरोधसाम्यात् । आख्यातबोध्याऽविद्यकतत्कर्तृत्वस्यैवातीतता बोध्यत इति तु न युक्तम् । भावाख्यातानुरोधेन धात्वर्थ एव कालान्वयस्य व्युत्पन्नत्वात् । तस्माच्छक्तयात्मना नित्यानां व्यक्तिविशेषाभिप्राया उक्तश्रुतय इति युक्तम् । व्यक्तेर्धर्मिरूपतया नित्यत्वेऽपि विशेषबलेन कादाचित्कत्वोपपत्ते ।

यत्तु 'एतन्न्यायस्याम्बरादिष्वपि तुल्यत्वात्तेषामपि नित्यतापत्ति ' इति तन्न । प्रमिते हि नित्यत्वे विरोधि व्यवहारोपपत्त्यर्थमुक्तन्यायानुसरणम् । न चाम्बरादेरस्ति नित्यत्वे प्रमाणम् । सूत्रकृतैव निराकृतत्वात् । प्रकृते च प्रमाणद्वयविरोधस्योक्तत्वात् ।

एतेनैतदपि निरस्त यदशेषश्रुतीनामखण्डार्थनिष्ठत्वम् । सर्वत्र 'अशब्दमस्पर्शम्' इत्यादिना निर्विशेष-ब्रह्मोपदेशादिति । स्वभावत. सगुणत्वप्रतिपादकनिरवकाशोक्तश्रुतिविरोधात् । निर्विशेषश्रुते प्राकृतविशेषनिषेध-परतया सावकाशत्वाच्च ।

उपपत्तिविरुद्धा च श्रुतीनामखण्डार्थनिष्ठता । सा हि संसर्गागोचरप्रमितिजनकतापर्यवसिता न वाक्य-स्योपपद्यते । तस्य पदार्थसंसर्गबोधकतास्वाभाव्यात् । अन्यथा पदद्वयवैयर्थ्यात् ।

यदत्रोक्त प्रतीतिस्तावद्द्विविधा । विशिष्टवैशिष्ट्यावगाहिनी उपलक्षितवैशिष्ट्यावगाहिनी चेति । तत्राद्या विशेष्य विशेषणं तत्संसर्गञ्चावगाहते । द्वितीया तु विशेष्यमात्रम् । न चैवम् 'इद द्रव्यम्' इति ज्ञानस्य द्रव्य-

त्वोपलक्षितावगाहिनो घटत्वाद्युपलक्षितावगाहितानपायात् 'अयं घटो न वा' इत्यादिसंशयविरोधितापत्ति इति वाच्यम् । तटस्थस्यापि द्रव्यत्वादेर्द्रव्यनिष्ठविषयतानिरूपकत्वाङ्गीकारेणातिप्रसङ्गवारणसम्भवात् । एवञ्च 'सोऽय देवदत्त' 'तत्त्वमसि' इत्यादिवाक्यमेव तत्तेदन्ताद्युपलक्षितवैशिष्ट्याद्यवगाहिबोधजनकत्वादखण्डार्थनिष्ठम् इति तदसत् । यत उपलक्षणीभूतधर्मसंसर्गाभाने उपलक्षितवैशिष्ट्यावगाहिनीति विभाग एव तावदयुक्त । किञ्च पदाना पदार्थसंसर्गबोधनशक्तिमुपमृद्य स्वरूपमात्रबोधकत्वकल्पने दृष्टादृष्टत्यागकल्पनाप्रसङ्ग । तत्संसर्गानव गाहिनस्तन्निरूपकविषयताकत्वञ्चाप्रामाणिकमेव ।

यत्तु 'सोऽयम्' इत्यत्र तदेतद्देशकालविशिष्टयोस्तदिदपदार्थयोरभेदस्य बाधितत्वात्तत्तेदन्तोभयानिरूपित-तदाश्रयविषयताशालिबोध एव स्वीकार्य इति तदसत् । इदन्त्वविशिष्टेऽतीतकालसम्बन्धध्वंसवैशिष्ट्यस्यैव तच्छब्देन बोधनात् । तस्य चाबाधितत्वात् । अतीतकालसम्बन्धस्यैवोपलक्षणतया भानाङ्गीकारेऽपि क्षत्यभावाच्च । न च इदन्त्वविशिष्टे तत्तायास्तत्ताविशिष्टे वेदन्त्वस्योपलक्षणतया भानमित्यत्र विनिगमनाविरह इति वाच्यम् । वक्तृ-तात्पर्यस्यैव विनिगमकत्वात् ।

यदपि 'तदेतद्देशकालविशिष्टपरतदिदपदघटितवाक्यस्थले विशिष्टवैशिष्ट्यभानायोगादस्मदिष्टसिद्धि' इति तदत्यन्तमसत् । विशिष्टपरशब्दादुपलक्षितबोधस्य त्वन्मतेऽप्ययोगात् । 'गङ्गायां घोष' इत्यादौ गङ्गादिपदस्य प्रवाह इव तदेतद्देशकालविशिष्टे तदेतत्पदतात्पर्यासिद्धेश्च । एव द्रव्यत्वोपलक्षितघटादिज्ञानस्य तत्संसर्गानवगाहिताया तत्संशयविरोधितानुपपत्ति । तत्संसर्गावगाहिनिश्चयस्यैव तत्संशयविरोधित्वात् ।

यत्तु तन्निरूपकविषयताशालिनिश्चयतयैव भेदग्रहविरोधिताङ्गीकाराद्द्रव्यत्वोपलक्षितघटादिज्ञानस्यापि 'घटो द्रव्य न वा' इतिसंशयविरोधित्वोपपत्ति इति तन्न । 'घट संयोगेन द्रव्यत्ववान्' इत्यादिनिश्चयस्यापि तादृश संशयविरोधितापत्ते । तत्सम्बन्धावच्छिन्नतन्निष्ठनिरूपकताकविषयकताशालिनिश्चयस्य तत्संसर्गकसंशयविरोधितोप गमान्नाय दोष इति चेत् निरूपकतायास्तत्सम्बन्धावच्छिन्नत्व यदि निरूपकस्य तत्सम्बन्धवत्त्वमात्रेण तदा नोक्त दोषनिरास । द्रव्यत्वस्य घटादौ समवायवत्त्वेनोक्तज्ञानीयनिरूपकतायास्तत्सम्बन्धावच्छिन्नत्वस्याऽवश्यकत्वात् । उक्तज्ञानस्य संयोगेन द्रव्यत्वसंशयविरोधितानुपपत्तेश्च । द्रव्यत्वस्यासंयोगित्वेन तन्निरूपकतायास्तत्सम्बन्धाव-च्छिन्नत्वायोगात् । यदि तु तत्सम्बन्धभाननिमित्त तदवच्छिन्नत्व तदा तदुपलक्षितज्ञानस्यापि तत्संसर्गावगाहित्व तत्संशयविरोधितानुरोधादापतितम् ।

एतेनैतदपि निरस्तम् । यत्सत्यज्ञानादिवाक्यानामखण्डार्थतासिद्धये 'प्रकृष्टप्रकाशश्चन्द्र' इति वाक्योदाहरणम् । एतद्वाक्यस्यापि स्वरूपमात्रपरताया मानाभावात् । अन्यथा 'कश्चन्द्र' इति प्रश्ननिवर्तनानुपपत्ते । न हि तत्र स्वरूपमात्रे प्रश्न । स्वरूपस्य प्रागवगमानवगमयो प्रश्नव्याघातात् । किन्तु विशिष्टविषये । अत उत्तरस्यापि विशिष्टपरत्वमेव ।

यत्तु 'चन्द्रश्चन्द्रत्ववान् चन्द्रपदवाच्य' इत्यादिविशिष्टनिश्चयवतोऽपि तादृशप्रश्नदर्शनाद्विशिष्टविषयेऽपि तदनुपपत्ति इति तदसत्। अज्ञातविशिष्टविषय एव प्रश्नाङ्गीकारात्। तथा हि, किंपदस्य जिज्ञासिते शक्ति। समभिव्याहारमहिम्ना च समभिव्याहृतपदार्थतावच्छेदकधर्मव्याप्यधर्मविशिष्टविषयकबोधेच्छाविषयपरत्वम्। तथा च 'चन्द्रश्चन्द्रत्ववान्' इत्यादिनिश्चयसत्त्वेऽपि नक्षत्रादौ चन्द्रनासशयानिवृत्तेश्चन्द्रताव्याप्यधर्मान्तरविशिष्टविषयकबोधेच्छया 'कश्चन्द्र' इति प्रश्नोपपत्ति।

यत्तु प्रकृते किंपदस्य समभिव्याहृतपदार्थतावच्छेदकतद्व्याप्योभयनिरूपितनदाश्रयनिष्ठविषयताशालिबोधविषयकेच्छाविषयवाचकताङ्गीकाराच्चन्द्रत्वतद्व्याप्यप्रकृष्टप्रकाशत्वोभयनिरूपितैकविषयताशालिबोधेच्छया 'कश्चन्द्र' इति प्रश्नाद्युपपत्ति इति तन्न। 'प्रकृष्टप्रकाशश्चन्द्र' इत्यादिवाक्यात्प्रकृष्टप्रकाशतादिविषयकबोधानुदये व्याप्यदर्शनाभावेन चन्द्रे चन्द्रत्वनिश्चयरूपप्रयोजनासिद्धे। यदि चोक्तवाक्यात् चन्द्रविशेष्यकप्रकृष्टप्रकाशत्वप्रकारकबोधोदयेऽपि तयोर्वैशिष्ट्यमात्र न भासते इत्युच्यते तदाऽपि साध्यसाधनसम्बन्धाज्ञानादुक्तप्रयोजनासिद्धितादवस्थ्यम्। चन्द्रप्रकृष्टप्रकाशयोर्भेदग्रहनिवृत्तिमात्र तत्प्रयोजनम् इत्यपि न सत्। उक्तरीत्या तस्याप्यसम्भवात्।

यदपि अज्ञाते किंपदस्य शक्ति। अज्ञाननिवर्तकज्ञानजनकञ्चोत्तरम्। अज्ञाननिवर्तनशक्ते पूर्वज्ञानेऽभावात् उत्तरज्ञाने भावाच्च न प्रश्नप्रतिवचनानुपपत्ति इति तदतीव मन्दम्। ज्ञानस्य स्वविषयविषयकाज्ञाननिवर्तकतास्वाभाव्यात्। अन्यथा कथमुत्तरज्ञानस्याप्यज्ञाननिवर्तकत्वम्। किञ्च 'सोऽयम्' इत्यादिवाक्यानामुक्तक्रमेणाखण्डार्थनिष्ठत्वे 'सोऽयमप्रकाशश्चन्द्र' इत्यादिवाक्याभासस्य पर प्रामाण्यप्रसङ्ग। स्वरूपमात्रावभासस्योभयत्र साम्यात्। एवञ्च 'तत्त्वमसि' 'सत्यं ज्ञानम्' इत्यादिश्रुतीनामखण्डब्रह्मनिष्ठत्वं दूरोत्सारितम्। सर्वानुभवसिद्धविशिष्टबोधापह्नवेन निर्विकल्पकज्ञानाङ्गीकारस्य कल्पनागौरवाद्यनन्तदोषदुष्टत्वादित्यन्यत्र विस्तर।

ननु मा भूदनुमानेन प्रपञ्चमिथ्यात्वसिद्धि। श्रुत्या तु भविष्यति। तथा हि 'उत तमादेशमप्राक्ष्य येनाश्रुतं श्रुत भवत्यमत मतमविज्ञातं विज्ञातम्' इत्येकविज्ञानेन सर्वविज्ञान प्रतिज्ञानम्। तच्च नैकस्यैव परमार्थता विनोपपद्यत इत्यन्यस्य मिथ्यात्वसिद्धे इति चेन्न। प्रपञ्चमिथ्यात्वेऽप्येकज्ञानस्य सर्वज्ञानत्वाभावेन प्रतिज्ञाव्याघातात्।

यत्तु 'तत्त्वत' इत्यध्याहारेण यस्मिन् श्रुते सर्वं [1]श्रुततत्त्वं भवतीत्यर्थलाभान्न दोष इति तन्न। श्रुतत्वाश्रुतत्वयो सामानाधिकरण्यानुपपत्ते। [2]'श्रुतम्' इत्यस्य वैयर्थ्याच्च। 'यत्सर्वस्य तत्त्वम्' इत्यनभिधाय 'येनाश्रुतं

---

[1] अश्रुतं तत्वत श्रत भवतीत्यर्थलाभान्न इति पाठेन भाव्यमिति भाति।

[2] 'अश्रुतम्' इति पाठेन भाव्यमिति भाति।

श्रुतम्' इत्यार्थिकाभेदाभिधानस्य निर्बीजत्वाच्च । किञ्च 'अश्रुतं श्रुतं भवत्यमतं मतं अविज्ञातं विज्ञातम्' इति पृथगभिधानवैयर्थ्यम् । एकेनैव विवक्षिताभेदसिद्धेः ।

एतेन 'तत्त्वतः' इत्यनन्वयाहृत्य 'येनाश्रुतम्' इत्यस्य यदभिन्नाश्रुतं श्रुताभिन्नं भवतीत्यर्थवर्णनमप्यपास्तम् । 'अश्रुतं श्रुतम्' इत्यस्यापि वैयर्थ्यात् । यत्पदार्थाभेदस्यैव साक्षाद्वक्तुमुचितत्वात् । तस्माद्येन ज्ञातेन सर्वं श्रुतादिफलं स्यादित्येवार्थः ।

यत्तु 'ब्रह्मतदितरज्ञानयोः यत्किञ्चिदेकफलसाधनत्वस्यानुत्कर्षकरत्वेनोक्तययोगः' इति तत्तुच्छम् । श्रुतमित्यस्य यावच्छ्रुतफलितार्थतया ब्रह्मज्ञानस्य यावत्फलहेतुत्वलाभेनानुत्कर्षस्याप्रसक्तेः ।

यत्तु 'ब्रह्मज्ञानस्य न यावत्फलहेतुत्वम् । कर्ममात्रेणापि काम्यफलसम्भवात्' इति तदसत् । कर्ममात्रेण फलसम्भवेऽपि ब्रह्मज्ञानस्य स्वरूपयोग्यतारूपकारणत्वानपायात् । न च तत्र प्रमाणाभावः । पुरुषार्थाधिकरणे 'यं यं लोकं मनसा संविभाति' इत्यादिश्रुतिबलेन व्यवस्थापितत्वात् ।

यदपि 'काकदन्तादिज्ञानस्य पुरुषार्थाहेतुत्वान्न सर्वस्य ब्रह्मज्ञानेनापि श्रुतफलत्वसम्भवः' इति तदसङ्गतम् । श्वेतकेतोः कर्मदेवतादिविषयापरविद्यासंवेदनोत्थाहङ्कारशान्तये परविद्यावेदनं विना तद्वैयर्थ्यस्य वक्तव्यत्वात् ।

नन्वेकविज्ञानेन सर्वविज्ञानं विज्ञातदृष्टान्तमुखेनोपपाद्यते । 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्' इत्यादि । तत्र कार्यस्य कारणव्यतिरेकेणासत्त्वमवगम्यत इति चेन्न । तत्सूचकशब्दाभावात् ।

नन्वेतद्दृष्टान्तविवरणे 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यादिवाक्यैकार्थ्यात् मिथ्यात्वमवगम्यते । वाचा केवलमारभ्यते विकारः कार्यं घटशरावादि । नामधेयमात्रं ह्येतत् न परमार्थम् । किन्तु मृत्तिकेत्येव सत्यम् । अत एकेन मृत्पिण्डेन विज्ञातेन तदात्मकत्वात्सर्वं मृण्मयं विज्ञातं स्यादिति । मैवम् । सर्वमृण्मयानामेकमृत्पिण्डकार्यत्वाभावेनोक्तव्याख्यानानुपपत्तेः ।

यत्तु 'मृण्मयपदं विशेषलक्षकम् । न मृत्पिण्डविकारसामान्यपरम्' इति तन्न । अस्मद्रीत्या मुख्यार्थसम्भवे लक्षणाया अन्याय्यत्वात् । 'यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात्' इत्यस्यासाङ्गत्यापत्तेश्च । नखनिकृन्तनस्यान्त्यावयवित्वात् ।

यत्तु 'नखनिकृन्तनादेरपि स्वकार्यशलाकाद्युपादानत्वं सम्भवत्येव । अन्त्यावयविद्रव्यानङ्गीकारात्' इति तत्तुच्छम् । नखनिकृन्तनस्य पूर्वाकारविनाशं विना दीर्घतराकारपरिणामायोगात् । तथा च तदुपादानस्य द्रव्या-

न्तरोपादनत्वसम्भवेऽपि न तस्य तथात्वम् । किञ्च 'यथा मृत्पिण्डेन मृण्मय विज्ञात स्यात्' इत्येवास्तु । किमेक पदसर्वपदाभ्या व्यर्थाभ्यामनर्थहेतुभ्याम् । कार्यसामान्यस्य कारणव्यतिरेकेणासत्त्वज्ञापनन्तु 'वाचारम्भण' इत्यादिनैव सेत्स्यतीति । पिण्डपदमपि व्यर्थम् । 'मृदा' इत्येतावता पूर्णत्वात् । किञ्च नामधेयपद व्यर्थम् । 'वाचारम्भणम्' इत्यनेन गतार्थत्वात् । न च तावताऽपि कार्यमिथ्यात्वप्रतिपत्ति । सत्यस्यापि वाचारम्भणनामधेयतोपपत्ते । वाचैवारभ्यते नामधेयमात्रमित्यर्थस्तु विना लक्षणा न सम्भवति । इति शब्दश्च सर्वथा व्यर्थ । मृत्तिकैव सत्येत्येव वक्तव्यत्वात् । न च मृदादेरपि सत्यत्व त्वन्मतसिद्धम् । मिथ्यात्वाङ्गीकारात् । कार्याधिकसत्यतामात्रविवक्षाया सर्वमिथ्यात्वासिद्धि । गुडजिह्विकैवेय न परमार्थत इति चेद्गत्यन्तराभावे त्वेवमेतत् । अस्ति च प्रमाणसिद्ध प्रमाणाविरुद्धञ्च गत्यन्तरम् । तथा हि 'येनाश्रुतम्' इत्यादौ सादृश्यप्राधान्याभ्या ब्रह्मज्ञानेन सर्वविज्ञानमभिप्रेतम् । तत्र सादृश्यविषयदृष्टान्तोक्ति । यथैकेन मृत्पिण्डेन मृत्त्वादिना विज्ञातेन तत्सादृश्या सर्वं मृण्मयं विज्ञातं स्यात्तथैकेन ब्रह्मणा पारमार्थिकत्वादिना विज्ञातेन तत्सादृश्याज्जगदपि तथा विज्ञात भवतीति । अत्र मृत्पिण्डज्ञानान्मृण्मयज्ञानस्य कार्यकारणभावनिबन्धनत्वभ्रमवारणायैकशब्दसर्वशब्दावुपात्तौ ।

यत्तु 'एकवचनेनैकत्वलाभादेकपद व्यर्थम्' इति तन्न । जात्येकवचनभ्रमभञ्जकतया तत्सार्थक्यात् । त्वन्मते च जात्येकवचनविवक्षाया अप्यसम्भवान्न तद्व्यावर्तकतया तत्सार्थक्यम् ।

यत्तु 'सिद्धान्ते पिण्डपदवैयर्थ्यम्' इति तदसत् । सूक्ष्मव्यावर्तकत्वात् । स्थूलस्यैव सदृशव्यवहारमूलत्वेनोपादेयत्वात् । कारणत्वाभिप्राये सूक्ष्मस्यैव मूलकारणत्वेनोपादानौचित्यान्न पिण्डपदसार्थक्यम् ।

यदपि 'सादृश्याभिप्राये मृत्पदवैयर्थ्यम्' इति तदप्यसत् । मृद्विकाराणामवान्तरवैचित्र्येऽपि मृत्त्वादि सादृश्येन ज्ञानवद्विचित्रानन्तवस्तूनामप्येकार्थसादृश्येन ज्ञानोपपत्तिरित्येतत्सूचनार्थत्वात् ।

यत्तु 'एतादृशविज्ञानस्यानुत्कर्षकारित्वम् । काकदन्तादिज्ञानादप्यभिधेयत्वादिना तत्सदृशाशेषवस्तुज्ञानसम्भवात्' इति तन्न । यथाकथञ्चिदितरज्ञानस्याफलत्वात् । सफलन्तु परमार्थत्वपरमात्माधीनत्वादिसामान्यरूपेण सर्वस्य चेतनत्वप्रेरकत्वादिविशेषरूपेण देवतादेश्च ज्ञानं परमात्मग्रहण एवोपपद्यते । अन्यत्र परमार्थत्वादियावद्धर्माणामसिद्धत्वादित्याशयेन परमात्मज्ञानेन सर्वं सम्यक् ज्ञात सर्वस्य ज्ञानं तत्फलञ्च भवतीत्युच्यते । न चैव वाक्यभेद । येन ज्ञातेन सर्वं फलवज्ज्ञानविषयो भवतीत्येकान्वयेनोभयलाभात् ।

ननु च ब्रह्मज्ञानेन कथमितरज्ञानमित्यपेक्षाया सादृश्याभिप्रायेण मृत्पिण्डादिदृष्टान्तोक्ति । कथमितरज्ञानफलवत्त्वमित्याकाक्षाया प्राधान्याभिप्रायेण संस्कृतशब्ददृष्टान्तोक्ति । तथा हि, वाचारम्भणं वागिन्द्रियोत्पाद्यं साङ्केतिक नाम विकारो विविधप्रकारम् । पुरुषमतिवैचित्र्यादित्यनित्यत्वेन प्राकृतभाषाणामप्राधान्यमभिप्रेयत इति ।

नामधेय नित्यं धार्यं नाम मृत्तिकेत्यादिकमेव इत्येतद्वचन सत्यमर्थाव्यभिचारीत्यर्थ । अनेन च नित्यत्वेन संस्कृत-नाम्न प्राधान्य लभ्यते। तथा च यथा संस्कृतनाम्ना विज्ञातेन साङ्केतिकनाम ज्ञात सफलञ्च स्यादित्यर्थ सम्प द्यते। यद्यपि सादृश्यप्राधान्ययोरेकदृष्टान्तोक्ति सम्भवति तथाऽपि स्पष्टप्रतिपत्तये पृथगभिधानम्।

यत्तु 'साङ्केतिकनाम्नोऽपि न विविधाकारत्वम्। पुरुषमतिवैचित्र्येऽपि रूपान्तरापत्त्यभावात्' इति तदसत्। सङ्केतस्यानियतत्वेन साङ्केतिकनाम्नोऽपि विविधाकारत्वस्य विवक्षितत्वात् । दृश्यते चैकत्र सङ्केतितस्य कालभेदे-नान्यत्र सङ्केत ।

यदपि 'नामधेयमित्यत्र धार्यं नामेति साङ्केतिकसाधारणम्। नित्यधार्यता तु लक्षणागम्या बाधिता च। न हीद विद्वद्भिरपि नित्य धार्यते इति' तत्तुच्छम् । त्वन्मतेऽपि नामधेयमात्रमित्यस्य लक्षणालभ्यत्वात्। सजातीय-व्यावर्तनीयशब्दान्तरस्य अनित्यत्वाभिधानसामर्थ्यलभ्यत्वेन लक्षणाया निरूढत्वात् इतरस्य अत्यन्तहेयताज्ञापन रूपप्रयोजनसत्त्वाच्च वैषम्यात् । 'एतद्ग्रामे सर्वे दुराचारा, अयमेव ब्राह्मण' इत्यादौ ब्राह्मणशब्दस्य सदाचारत्व विशिष्टब्राह्मणपरत्ववत् । बाधितत्वन्तु बाधितमेव। 'धार्य सर्वदा ज्ञातव्यम्' इति टीकायामेव व्याख्यातत्वात् । न च सस्कृतनाम्नोऽपि सर्वदा ज्ञानविषयत्व बाधितम् । ईश्वरज्ञानविषयत्वात् । वर्तमानत्वेन ज्ञानयोग्यताया एव ज्ञातव्यपदार्थत्वाच्च ।

यत्तु 'मृत्तिकैवेत्यवधारणानुपपत्ति । तत्तुल्यनामान्तरस्यापि सत्त्वात् । इतिशब्दस्याद्यर्थत्वे मृत्तिकाशब्दस्य शब्दपरत्व निर्मूलम्' इति तदपि वृथा। मृत्तिकाशब्दस्यैव वैदिकनामान्तरोपलक्षणत्वात्। लाक्षणिकप्रयोगस्य च वैदिकानुकार्यपभ्रंशव्यावृत्त्यर्थत्वात् ।

यदपि 'सत्यशब्दस्यार्थाव्यभिचारित्वपरत्वे लक्षणाऽऽपत्ति' इति तदपि न। 'सत्य वचनम्' इत्यादिप्रचुर-प्रयोगदर्शनात् । परमार्थपरतायास्त्वन्मतेऽप्यसम्भवस्योक्तत्वाच्च। एव परमतेऽपि मृत्पिण्डादेर्मृण्मयादिविकारित्ववद्-ब्रह्मण प्रपञ्चविकारित्वाभावाद्दृष्टान्तोऽननुगुण । एव विकारपदस्यार्थपरत्वे नामधेयमित्यस्यानन्वय । शब्दपरत्वे तु न ज्ञापकमस्ति । नामधेयमित्यस्योत्तरत्राप्यन्वयोपपत्ते । उत्तरेतिशब्दस्य विकारशब्देनान्वयस्तु क्लिष्ट । तथात्वे सत्यशब्दस्य नपुसकत्वानुपपत्तिश्च । तथा च परमते 'येनाश्रुतम्' इत्यादिवाक्येषु बहूनां पदाना वैयर्थ्यम् लाक्षणिकत्वमर्थबाधो विवक्षितार्थाबोधश्च एवमादयो दोषाः ।

न च सिद्धान्ते वाचारम्भणवाक्ये यथैकेन मृत्तिकानाम्ना सर्ववाचारम्भणं विज्ञात स्यादित्यध्याहार विना विवक्षितार्थसिद्धि इति शङ्क्यम् । यथेत्यस्यानुवृत्तिमात्रेण धेयमित्यस्य सर्वभाषाफलनिर्वाहकज्ञानविषयपरतया विवक्षितार्थसिद्धे. । क्वचिदध्याहारोक्ति स्फुटप्रतीत्यर्थैव । सिद्धान्ते इतिशब्दावृत्त्या इत्येतद्वचन सत्यमित्यभि-

धानवैयर्थ्यमित्यपि नाशङ्कनीयम् । एकविज्ञानेन सर्वविज्ञानोक्ते औपचारिकत्वशङ्कानिरासाय तदावश्यकत्वात् । सत्यत्वस्य नामविशेषणत्वे तु संस्कृतस्यार्थाव्यभिचारित्वेनाप्युत्कर्षसिद्धेर्न तद्वैयर्थ्यशङ्कावकाशः । इत्थञ्च सर्वत एव विवक्षितोत्कर्षसिद्धेर्नास्माकमपकर्षप्रसक्तिः । अपि तु श्वपचाद्यैकत्वं प्रतिपादयतामेवात्यन्तमनुत्कर्षः । तस्मादसद्व्याख्यानमेव हृदयङ्गमम् । तदेव प्रपञ्चमिथ्यात्ववादे कथमप्यसिद्धेर्मुक्तत्वानुमानं सुस्थमेव ।

न चाप्रयोजकत्वम् । मुक्तामुक्तयोर्भेदाभावे मुक्तस्य संसारः संसारिणो वा मुक्तत्वं स्यात् । तथा च मुक्तामुक्तव्यवस्थानुपपत्तिरेव विपक्षे बाधकस्तर्कः ।

यत्तु 'कस्यचित्संसारदशायां तदज्ञानप्रयुक्तमुक्तामुक्तभेदाभ्युपगमान्न दोषः । सर्वमुक्तौ चोक्तापत्तेरयोगात्' इति तदसत् । परमार्थतो भेदाभावे मुक्तामुक्तव्यवस्थानुपपत्तेर्विवक्षितत्वात् । पारमार्थिकत्वेन भेदस्यासाध्यत्वेऽपि पूर्वोक्तरीत्या मुक्तिकालावच्छिन्नभेदसिद्धौ पारमार्थिक एवार्थात् सिद्ध्यतीत्यभिप्रायेण पारमार्थिकभेदाभाव एवानुपपत्तेरुक्तत्वात् ।

ननु 'मुक्तस्य संसारः स्यात्' इति किं संसाराधिकरणस्वरूपैक्यमापाद्यते उत संसारानुभवः । नाद्यः । इष्टापादनात् । आपाद्यापादकयोर्भेदाभावाच्च । न द्वितीयः । अनुभवस्यान्तःकरणादिसापेक्षत्वात् । अन्तःकरणादेश्चाज्ञानकृतत्वात् । निवृत्ताज्ञानस्य च तदयोगात् । एवं 'संसारिणो मुक्तत्वं स्यात्' इति कोऽर्थः । किं संसाराधिकरणस्वरूपस्यैव मुक्तत्वं स्यादिति किं वा संसारिण एव सतो मुक्तत्वानुभवः स्यादिति । नाद्यः । पूर्ववदिष्टापादनादिप्रसङ्गात् । न द्वितीयः । संसारिणो मुक्ताद्भेदसद्भावात् । मुक्तस्य संसारिणो भेदाभावे कथं संसारिणो मुक्ताद्भेद इति चेत् । स्यादप्येषाऽनुपपत्तिः यद्ययं भेदो वास्तवः स्यात् । अज्ञानकृतो हि मुक्तात्संसारिणो भेदः । सोऽज्ञानिनः संसारिणः प्रतीयते । न तु निवृत्ताज्ञानस्य मुक्तस्येत्याशङ्क्य 'यद्यज्ञानकृतो भेदस्तर्हीश्वरस्याज्ञानाभावात्संसारिणैक्यं तेनानुभूयेत' इत्युक्तम् ।

यत्तु 'एषा शङ्कैव न युक्ता । संसार्यविद्याकल्पितभेदस्य परस्परं मुक्तसंसारिणोर्द्वयोरप्यभ्युपगमात् । दूषणमप्ययुक्तम् । संसारिशब्देन सधर्मस्य विवक्षायां तेनैक्यस्यैवाभावात् । जीवस्य यत्पारमार्थिकं रूपं तेनैक्यानुभवस्य चेष्टत्वात्' इति तदतीव तुच्छम् । मुक्तस्य संसार्यैक्यानुभवविरोधिभेदस्यैव निषेध्यत्वेन प्रकृतत्वात् । अन्यदीयाज्ञानकल्पितभेदस्य चान्यदीयानुभवाविरोधित्वात् । तदीयाज्ञानकल्पितभेदस्य च निवृत्ताज्ञाने त्वयाऽप्यनभ्युपगमात् । एवमीश्वरस्य जीवस्वरूपैक्यानुभवे तद्गतदुःखाद्यनुभवापत्तिर्दुर्वारैव ।

यत्तु 'निर्विशेषैकरसचैतन्येऽप्यनाद्यविद्याकल्पितविभागेन व्यवस्थोपपत्तिः' इति तदसत् । अविद्याया निर्विशेषैकरसचैतन्ये कृत्स्नैकदेशग्रासविकल्पानुपपत्त्या विभाजकत्वासम्भवस्यात्र अन्यत्र चोपपादितत्वात् ।

एतेन मुक्तस्यान्तःकरणाद्यभावान्नानुभव इत्युक्तमपि प्रत्युक्तम् । निर्विशेषैकरसचैतन्ये तद्भावाभावयोरेवायोगात् । मुक्तेश्वरचैतन्यस्य यावदन्तःकरणं दुःखाद्यनुभवोऽपीष्ट एव इति चेन्न । दुःखाद्यनुभवे मुक्तत्वेश्वरत्वानुपपत्तेर्मुक्तामुक्तादिव्यवस्थानुपपत्तितादवस्थ्यात् ।

एकमेव चैतन्यं स्वरूपेण मुक्तम् । आरोपितरूपेण बद्धमिति चोच्यते । एवमुपाधिभेदाज्जीवेश्वरव्यवहारभाग्भवति इति चेन्न । स्वरूपमात्रव्यवहारस्य दूषितत्वात् । उपाधेश्च विभाजकत्वानुपपत्तेरुक्तत्वात् । किञ्च

तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ।
सुखं दुःखं भवोऽभावो भयञ्चाभयमेव च ॥
अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥
यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥

इत्यादिभगवद्वचनैर्ज्ञानित्वाज्ञानित्वेशत्वेशितव्यत्वोत्कृष्टत्वापकृष्टत्वादिवैधर्म्यप्रतिपादनात्तस्य भेदानुभव एवावसीयत इति नैक्यानुभवसम्भवः ।

यत्तु 'एतद्वचनं नास्मत्प्रतिकूलम् । यावत्संसारमाविद्यकभेदाभ्युपगमात्' इति तन्न । ईश्वरप्रत्यक्षविषयत्वेन भेदस्य पारमार्थिकत्वसिद्धेः ।

यत्तु 'ईश्वरज्ञानस्य शशविषाणाविषयकत्वे तस्यासर्वज्ञत्वापत्तिः । तद्विषयकत्वे च तत्रैव व्यभिचारः । पारमार्थिकत्वेनेश्वरानुभवगम्यत्वञ्च जगत्यसिद्धम्' इति तन्मन्दम् । असद्विलक्षणत्वेनेश्वरानुभवविषयत्वस्य विवक्षितत्वात् । न च तथाऽपि प्रातिभासिके शुक्तिरूप्यादौ सन्दिग्धानैकान्त्यम् । तस्यासत्त्वेनैवेश्वरानुभवविषयत्वव्यवस्थापनात् । प्रातिभासिकत्वेऽपि प्रातिभासिकत्वपारमार्थिकत्वान्यतरव्याप्तस्य हेतोः प्रातिभासिकत्वबाधे पारमार्थिकत्वसाधकत्वं दुर्वारमेव । उक्तवक्ष्यमाणवचनसिद्धानुकूलतर्कसद्भावान्नाप्रयोजकत्वम् इति ।

किञ्चेश्वरस्य बाध्यार्थानुभवित्वे भ्रान्तत्वापत्तिः ।

यत्तु 'तद्भिन्ने तदात्मताप्रत्ययो भ्रान्तिः । न तु बाध्यार्थप्रत्ययमात्रम् । 'शशविषाणमसत्' इत्यादिप्रत्ययस्यापि भ्रान्तित्वापत्तेः । तथा चानिर्वाच्यं जगदनिर्वाच्यत्वेनैव विषयीकुर्वतो भगवज्ज्ञानस्य भ्रान्तित्वाभावान्न तस्य भ्रान्तत्वापत्तिः' इति तत्तुच्छम् । भगवज्ज्ञानमनिर्वाच्यत्वेन जगद्विषयीकरोतीत्यत्रैव प्रमाणाभावात् । जगदनिर्वाच्यत्वप्रतिपादकप्रमाणानाञ्च निरस्तत्वात् । उक्तवचनानां सत्त्वेनैव भेदादिबोधकतया सद्विलक्षणत्वेन तज्ज्ञानमूलकत्वानौचित्याच्च ।

यदपि 'ईश्वरस्य सर्वज्ञत्वादिकं येनागमेन ग्राह्यम् तेनैव तात्पर्यलिङ्गसचिवेन द्वैतमिथ्यात्वदृढीकरणात् भेदसत्यत्वानुमानस्य प्रमाणबाधः' इति तदप्यसत् । ईश्वरसार्वज्ञ्यप्रतिपादकानां 'तान्यहं वेद सर्वाणि' 'यः सर्वज्ञः स सर्ववित्' इत्यादीनामद्वैतपरत्वप्रतिभासस्याप्यभावात् । तात्पर्यलिङ्गानाञ्च द्वैतोपपादकत्वमन्यत्र व्यवस्थापितम् । एवम्

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥

यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥

इत्यादिरागमोऽपि मुक्तेश्वरभेदप्रमाणम् ।

यत्तु 'समान एको धर्मो येषां ते सधर्माणस्तेषां भावः साधर्म्यमिति व्युत्पत्त्या साधर्म्यशब्दोऽप्यैक्यपर एव । समानजातीयेत्यादौ एकस्मिन्नपि समानशब्दप्रयोगात्' इति तदसत् । तथा सति समानपदादेर्वैयर्थ्यात् । मम धर्ममित्यनेनैवैक्यलाभात् । बहुवचनोपात्तबहुत्वविरोधाच्च । न च मुक्तौ धर्मप्राप्तिरपि सम्भवति । निर्विशेषचैतन्यमात्रत्वात् ।

एवं निरञ्जनश्रुतेर्निरञ्जनत्वरूपसाम्यप्राप्त्यर्थत्ववर्णनमप्यसाधु । साम्यस्य भेदघटितत्वेन भेदप्रतीतेरवर्जनीयत्वात् । अन्यथा निरञ्जनो निरञ्जनत्वमुपैतीतिवन्निराकाङ्क्षत्वप्रसङ्गात् । निरञ्जनो भवतीत्यनेनैव विवक्षितार्थलाभे शेषवैयर्थ्याच्च । मम त्वभेदप्रतीतिनिरासेन भेदप्रतिपादनाय सादृश्याभिधानं सार्थकम् ।

नन्वेवं 'परेऽव्यये सर्व एकीभवन्ति' 'ब्रह्म वेद ब्रह्मैव भवति' 'मद्भावायोपपद्यते'

तद्भावभावमापन्नस्ततोऽसौ परमात्मना ।
भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥

विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥

इत्यादिमुक्तेश्वराभेदपरश्रुतिस्मृतिविरोध इति चेन्न । तासामुक्तप्रत्यक्षाद्यनुसारिभेदवाक्यानुरोधेन स्थानैक्यमत्यैक्यसादृश्यादिपरतया व्याख्येयत्वात् ।

विरुद्धवत्प्रतीयन्ते आगमा यत्र वै मिथः ।
तत्र दृष्टानुसारेण तेषामर्थोऽन्ववेक्ष्यते ॥

इति वचनाच्च ।

यत्तु 'उक्तवाक्यानां स्वारस्यहानेन गौणार्थस्वीकारे हेत्वभावः । स्वतः प्रमाणे प्रमाणान्तरानुसरणवैफल्यात्' इति तदत्यन्तमसत् । परमते हि 'परे' इति सप्तमीस्वारस्यस्य हानिः । 'गोष्ठे गाव एकीभवन्ति' इति वाक्यतः कदाऽपि गोष्ठाभेदबोधानुदयात् । एकीभावस्यागन्तुकत्वस्वारस्यहानिश्च ऐक्यस्य सिद्धत्वात् । मिथ्याभूतभेदनिवृत्तिमात्रस्य विवक्षायाञ्च तवैव गौणार्थत्वम् । स्थानैक्यादौ तु एकीभावव्यवहारः प्रयोगप्राचुर्याद्रूढ एव ।

'ब्रह्मैव भवति' इत्यस्य गुणाभिव्यक्तिरूपवृद्धिमानेव भवतीत्यर्थताया न गौणार्थत्वम् । आद्यब्रह्मशब्दस्य परब्रह्मपरत्वे द्वितीयस्यापि तत्परत्वमेव न्याय्यमिति चेत् तर्हि त्वन्मतेऽपि निर्गुणस्य कर्मत्वेन क्रियान्वयायोगादाद्यस्य सगुणपरत्वे द्वितीयस्यापि तत्प्रसङ्गः । बाधकाच्चैतन्यमात्रपरत्वमस्येति चेत् तुल्यम् । चैतन्यैक्येऽप्यनेकधा बाधकानामुक्तत्वात् ।

मयि भावो मद्भावः । न त्वैक्यम् । तस्य सिद्धत्वेन साध्यत्वानुपपत्तेः ।

एव तस्य भावा यत्र तत्र भावमापन्नः । तेनैकमतिर्भवति । भिन्नमतित्वस्य तदज्ञाननिमित्तकत्वादित्यर्थः । अन्यथा ततस्तेनाभेदी भवतीत्यस्यास्वारस्यात् । एवं विभेदो विरुद्धज्ञानम् । अन्यथा भेदाज्ञानयोरनादित्वेन जन्यजनकभावानुपपत्तेः । मिथ्यात्वेन विनाशोक्तयस्वारस्याच्च । अभेदस्तु विरुद्धज्ञानवैधुर्यमेव । न तु भेदनिवृत्तिः । तस्यास्वरूपत्वे आत्मब्रह्मसम्बन्धित्वानुपपत्तेः । अतिरिक्तत्वे मिथ्यात्वापत्त्या तन्निषेधानुपपत्तेः ।

'स्वतः प्रमाण' इत्याद्यपहसनीयमेव । भेदाभेदादिपरवाक्ययोरापातप्रतीतार्थत्वे मीमांसावैयर्थ्यात् । उन्मत्तप्रलापतापत्तेश्च । तात्पर्यनिर्णायकतया प्रमाणान्तरानुसरणे च प्रत्यक्षादिप्रमाणसंवादसम्पत्त्या निर्णीततात्पर्यकभेदवाक्यविरोधादभेदवाक्यानां प्रतीतार्थप्रच्यावनमेवोचितमिति युक्तमुत्पश्याम ।

ननु भेदप्रत्ययो भ्रमः विशिष्टप्रत्ययत्वाच्चन्द्रभेदादिप्रत्ययवत् । तथा च कथं तद्विरोधादभेदवाक्यानामन्यार्थत्वमिति चेदुच्यते । 'भेदप्रत्ययो भ्रमः' इति प्रत्ययः प्रमा भ्रमो वा । आद्ये तत्रैवानैकान्त्यम् । अन्त्ये भेदप्रत्ययो यथार्थः तद्विरुद्धप्रत्ययस्यायथार्थत्वादात्मनित्यत्वप्रत्ययवदिति सत्प्रतिपक्षता ।

यत्तु 'भ्रमत्वमनिर्वाच्यविषयकत्वमेव । तथा च तद्विरुद्धप्रत्ययस्य भ्रमत्वेऽपि न तस्य यथार्थत्वम् । भेदतन्मिथ्यात्वयोर्द्वयोरप्यनिर्वाच्यत्वाङ्गीकारात्' इति तन्न । अनिर्वाच्यविषयकत्वरूपभ्रमत्वसाधने साध्याप्रसिद्धेः ।

विरुद्धप्रत्ययस्यापरमार्थविषयत्वेन भेदप्रत्ययस्य परमार्थविषयताया न्यायप्राप्त वाच्च । परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वात् । विधिनिषेधयाद्वयोरप्यपरमार्थत्वस्य व्याहतत्वाच्च । प्रत्ययत्वस्याप्रयोजकत्वाच्च ।

यदपि 'भेदप्रत्ययो यथार्थस्तद्विरुद्धप्रत्ययस्यायथार्थत्वादित्यत्र वैयधिकरण्यम् । न चायमदोष. । व्याप्तिभञ्जकत्वात् । अविनाभावो हि व्याप्ति । न च साध्यशून्यवृत्तिहेतो साध्याविनाभाव सम्भवति । न च साध्याभावप्रयोज्याभावप्रतियोगित्वमपि व्याप्ति । अन्यथा चक्रभ्रमे कुलालाऽसत्त्यनुमापकत्वानुपपत्तेरिति वाच्यम् । चक्रभ्रमविरहस्य कुलालाऽसत्त्यभावप्रयोज्यत्वे मानाभावात्' इति तत्तुच्छम् । 'चक्रं भ्रमति' इत्यादिज्ञानोत्तरम् 'आसन्न कुलाल' इत्यनुमितेरनुभवसिद्धतया लाघवेन साध्यप्रयोज्यत्वस्यापि व्याप्तित्वात् । न च चक्रभ्रमे कुलालाऽसत्तिप्रयोज्यत्वे मानाभाव । चक्रभ्रमिकारणकुलालनोदनप्रयोजकसमीपसयोगलक्षणकुलाल ऽसत्तेश्चक्रभ्रमिप्रयोजकताया पाकादेस्तृप्तिप्रयोजकतावदुपपत्ते. ।

एतेन कुलालवद्देशनिष्ठसामीप्यप्रतियोगित्वादिकमेवोक्तस्थले चक्रादावनुमेयमित्यपास्तम् । अनुभवसिद्धसाध्यादिप्रतीतिविपरिणामे कारणाभावात् । साध्यान्तरप्रतीतेरननुभवाच्च । न च नानाविधव्याप्तीनामनुमित्यौपयिकत्वे कल्पनागौरवम् । रूपरसयोरिव समानदेशताया वह्निधूमयोरधरोर्ध्वदेशसम्बद्धयोरभावेऽपि गम्यगमकभावस्यानुभवानुरोधेन कल्पनेऽपि व्याप्तिभेदस्यावश्यकत्वात् ।

यत्तु 'अविच्छिन्नमूलस्यैव धूमस्य हेतुतया न विभिन्नदेशत्वम्' इति तन्न । धूमवह्न्यधिकरणप्रदेशयोरसन्निकृष्टत्वेन तत्र तद्व्याप्तिदर्शनायोगात् । धूमशिखागिरिशिखरसयोगदर्शनमात्रेण वह्न्यनुमानस्यानुभवसिद्धत्वात् । स्वपरिकल्पितनियमानुरोधेन प्रामाणिकानुभवस्यान्यथयितुमनुचितत्वात् । अन्यथाऽतिप्रसङ्गादित्यन्यत्र विस्तर ।

स्यादेतत् । 'एकजीववादिन प्रति मुक्तत्वानुमानमप्रयोजकमेव । तन्मते एकमुक्तौ जीवान्तरादर्शनेनाभावेन तद्धर्मदु खाद्यनुभवापादनायोगात्' इति चेन्न । एकजीववादस्यात्यन्तानुपपन्नत्वेन हेयत्वात् ।

तथा हि, एकजीववादे तावन्मोक्षानुपपत्ति । तस्यानादितो भेदनिष्ठतया तत्रैवाऽग्रहेणाद्वैतज्ञानानुपपत्ते ।

यत्तु 'जीवे स्वातन्त्र्याभिमानादेरनादेरपि परमेश्वरानुग्रहान्निवृत्तिवदनादिभेदवासनाया अपि तत एव निवृत्तिसम्भव' इति तदसत् । दृष्टसामग्रीनिरपेक्षादृष्टकल्पनाया अलौकिकत्वात् । लोके हि बलवदुपदेशादिसापेक्षादेवादृष्टाद्विरुद्धवासनाविच्छेदो दृष्ट. । न चाद्वैतोपदेशकस्तन्मते कश्चिदस्ति । न च परमेश्वरानुग्रहोऽपि सम्भवति । न च सगुण साक्षात् निर्गुणत्वेनोपासित प्रसीदति । न च स्वयमीश्वर परमैश्वर्यप्रच्युतिमवेक्षत इति युक्तम् । न चानादिवासनानिवृत्तौ प्रमाणमस्ति । न च मुक्तिश्रुति. प्रमाणम् । तन्मते शुकवामदेवादिमुक्तिवादवदर्थवादत्वसम्भवात् ।

यत्तु 'असति पुरुषार्थे नार्थवादसम्भव । तस्य परप्रवर्तनार्थत्वात्' इति तन्न । कर्मप्रवृत्त्यङ्गभूतदेहात्म विवेकप्राशस्त्यबोधकतया मुक्तिवादस्यार्थवादत्वसम्भवात् ।

किञ्चैकजीववादे प्रमाणाभाव ।

यत्तु 'माया तु प्रकृतिं विद्यात्' इति श्रुतप्रकृत्यैक्ये लाघवानुसन्धानेनोपाध्यैक्ये तदुपहितजीवैक्यसिद्धि' इति तन्न । जीवस्यौपाधिकत्व एव प्रमाणाभावात् । चैतन्यैक्याज्जीवेश्वरभेदस्यौपाधिकत्वमास्थीयत इति चेन्न । चैतन्यैक्यस्यैव सर्वप्रमाणविरुद्धत्वात् । लाघवन्तु प्रमाणबाधितम् । अन्यथा चैतन्यस्यैवाज्ञानकल्पितत्व किं न रोचये । किञ्चैतावत्काल कस्याप्यमुक्तावग्रेऽपि मुक्तिर्न स्यात् । मुक्तावनाश्वासेन प्रवृत्त्यनुपपत्तेः ।

यत्तु' बहुजीववादेऽप्येतावत्कालममुक्तस्य स्वस्य मुक्तिर्न स्यात् । अनाश्वाससाम्यात्' इति तन्मन्दम् । अस्य न्यायस्यालौकिकत्वात् । लोके हि पर्वतादावग्न्यादिकमनुमिमानो धूमाग्न्योरन्यत्र साहचर्यमपेक्षते । न पुन. पर्वत एव । तथा मोक्षतत्साधनयोरप्यन्यत्र साहचर्यदर्शनादेव स्वात्मनि तत्सम्भावयतीति युक्तम् । न च प्रमाणतोऽर्थ-निश्चये सम्भावनाविरहो न दोषायेति शङ्क्यम् । अतीतमुक्तिवाक्यानामप्रामाण्ये सत्यागामिमुक्तिवाक्यप्रामाण्ये ऽप्यनाश्वासध्रौव्यात् । किञ्चैकजीववादे सर्वेषां मुक्त्यभावेन महायाससाध्यमुक्तिसाधनानुष्ठाने प्रवृत्त्यनुपपत्तिः । स्वनाशस्यापुरुषार्थत्वादिति सक्षेप' ।

सत्योपाधिकृतसत्यभेदवादोऽप्ययुक्त । जीवानामन्योन्यमीश्वरेण च स्वाभाविकाभेदे मिथः सुखदु.खा-द्यनुसन्धानापत्ते ।

यत्तु 'संसारदशाया भेदमात्राभ्युपगमान्न मिथ' सुखाद्यनुसन्धानापत्ति । मोक्षे च भेदनाशान्न मुक्त-परैक्यविरोध.' इति तदसत् । ससारदशाया भेदाभेदवादिन प्रत्यनुसन्धानस्याऽपादितत्वात् । औपाधिकभेदमात्रा-ङ्गीकारस्त्वत्यन्तायुक्त । ऐक्यस्य स्वाभाविकत्वेनापह्नोतुमशक्यत्वात् । मोक्षे तदुत्पत्तौ च तस्याप्यौपाधिकत्वेन विनाशप्रसङ्गात् ।

किञ्च मुक्तावैक्य भवतीत्यत्र प्रमाणाभाव ।

'यावन्मोक्षन्तु भेदः स्याज्जीवस्य च परस्य च ।
ततः पर न भेदोऽस्ति भेदहेतोरभावत' ॥

ब्रह्म वेद ब्रह्मैव भवति' इत्यादेरर्थान्तरे सावकाशत्वात् । 'परम साम्यमुपैति' इत्यादिप्रमाणविरोधश्च ।

किञ्चोपाधेर्भेदस्य चानित्यत्वे तदुपहितजीवस्याप्यनित्यत्वेन मुक्त्यनुपपत्तिः ।

यत्तु 'जीवस्य नित्यं रूपं परमात्मैव । अनित्यं पुनरौपाधिकम् । एवञ्चौपाधिकरूपस्य ब्रह्मणि लय एव मुक्तिः । नित्यरूपेण च मुक्त्यन्वयः' इति तदसत् । स्वरूपप्रध्वंसरूपलयस्यापुरुषार्थत्वात् । अन्यविषयस्य चानभ्युपगमात् । नित्यरूपस्य मुक्त्यन्वयेऽपि तस्य जीवत्वाभावेन जीवस्य मुक्तिरित्यनर्थकं स्यात् । नित्यरूपस्य जीवत्वे च मुक्तावपि भेदो दुर्वारः ।

यत्तु 'मुक्तौ जीवब्रह्मणोर्भेदाभावेऽपि ब्रह्मतद्गुणयोरिव स्वरूपद्वयावस्थानस्वीकारान्न जीवमुक्त्यनुपपत्तिः' इति तन्न । मन्मते गुणगुणिनोः सविशेषाभेदेन रूपद्वयोपपत्तावपि जीवब्रह्मणोर्निर्विशेषाभेदवादिनस्तदसम्भवात् । निर्विशेषाभेदेऽपि व्यक्तिद्वयाभ्युपगमे बाधकाभाव इति न शङ्क्यम् । निर्विशेषाभेदपदेन रूपान्तरत्वाभावस्य व्यक्तिद्वयपदेन रूपान्तरत्वस्य चाभिधानेन व्याघातात् । मयाऽपि सविशेषाभेद एवोपेयते । स्वरूपस्यैव विशेषत्वसम्भवादिति तु प्रलापमात्रम् । विशेषस्य स्वरूपतन्मात्रत्वे स्वरूपस्यैव विशेष इति नामान्तरं स्यात् । तथा च कथमुक्तदोषपरिहारः स्यात् । तस्य स्वरूपविशेषत्वे च निर्विशेषत्वभङ्गोऽस्मच्चरणशरणीकरणञ्च स्यात् ।

अपि च जीवब्रह्मणोरभेदबोधकनिरवकाशप्रमाणे सति सर्वमिदमर्थापत्त्या कल्प्यम् । तदेव तु नास्तीत्यसकृदुक्तम् । अधिकञ्चोपाधिखण्डनपञ्चिकायां द्रष्टव्यम् । तस्मान्मुक्तामुक्तसकलजीवजडप्रपञ्चनियामकः सकलकल्याणगुणाकरो भगवान्विष्णुरिति सिद्धम् ।

इति श्रीमदुपाध्यायकृतं कुमतखण्डनम् ।  
भूयाच्छ्रीभगवत्पादतत्त्वोद्योतार्थसिद्धये ॥

दुरन्तदुर्मतध्वान्तध्वंसकृन्मध्वभास्करः ।  
बलित्थेत्यादिवेदोक्तगुणः प्रीतोऽस्तु मे सदा ॥

एकं तत्त्वमवेद्यमुज्झितगुणं मिथ्यैव वस्त्वन्तरं  
बाध्यग्राहि च मानमात्मविहतं जल्पन्त्वतीता हि ते ।  
अर्वाञ्चः परभावबोधविधुराः प्रौढप्रबन्धैः सह  
स्पर्धन्ते यदि तर्हि हंसचरणैः काकस्तरेदर्णवम् ॥

इति श्रीमहामहोपाध्यायकाशीतिम्मण्णाचार्यविरचितं भट्टत्र्यम्बकशास्त्रिकृतश्रुतिमतोद्योतखण्डनात्मकं  
कुमतखण्डनं सम्पूर्णम्

---

॥ श्रीराघवेन्द्रतीर्थाः ॥



चित्ते नायुक्तमर्थं कलयति सहसा नाभिधत्ते न सद्भिः
साकं मीमांसते वा न लिखति वचसोद्धाटयत्याशयं स्वम् ।
उक्तं नो वक्ति भूयः क्वचिदपि लिखितं नैव निर्माष्टि तस्माद्-
स्माभिः सत्प्रबन्धप्रणयनविषये स्तूयते राघवेन्द्रः ॥

श्रीमतो राघवेन्द्रस्य नमामि पदपङ्कजे ।
कामिताशेषकल्याणकलनाकल्पपादपौ ॥

श्री:

# अथ श्रीमदानन्दतीर्थ भगवत्पादाचार्यविरचितेषु दशप्रकरणेषु

# अष्टमं तत्वोद्योत प्रकरणम्

श्रीजयतीर्थभिक्षुविरचितया टीकया समलङ्कृतम्

टीका

टीकाया मङ्गलाचरणम्

विश्वोत्पत्तिस्थितिध्वंसकारणं रमणं श्रियः ।
अभिवंद्य यथाबोधं तत्वोद्योतं विवृण्महे ॥

अथ तत्वोद्योतटिप्पणी श्रीविजयीन्द्रतीर्थभिक्षुविरचिता प्रारभ्यते

सर्वज्ञं सर्वकर्तारं सर्वजीवजडात्मकात् ।
प्रपञ्चाद्वस्तुतोऽत्यन्तभिन्नं श्रीनृहरिं भजे ॥ १ ॥

[1]तं पाणिपल्लवं बाहुशाखं सद्द्विजसेवितम् ।
विद्याहासलतापुष्पं मध्वकल्पतरुं भजे ॥ २ ॥

ब्रह्मविन्मुखरङ्गस्था मध्व ते वाङ्नटी परान् ।
विचित्रपदविन्यासैर्मोहयन्तीं भजेऽन्वहम् ॥ ३ ॥

यस्य वाक्कामधेनुर्नः कामितार्थान् प्रयच्छति ।
सेवे तं जययोगीन्द्रं कामबाणच्छिदं सताम् ॥ ४ ॥

यो व्यासमुनिदावाग्निः सच्छास्त्रमरुता सह ।
ददाह कुमतारण्यं प्रकाशाय तमाश्रये ॥ ५ ॥

श्रीसुरेन्द्रमुनेः पादपद्मे रागस्य पीडनात् ।
रक्ते नखदलोपेते सेवे [2]शिष्यालिसेविते ॥ ६ ॥

---

1 क्वचित्कोशे २-६ श्लोका न सन्ति

2 शिष्यालिशोभिते इति पाठान्तरम्

(वि टि)　　सर्वतन्त्रस्वतन्त्रेण विजयीन्द्राख्यभिक्षुणा ।
तत्वोद्योतस्य विवृतेर्गूढो भाव प्रकाश्यते ॥ ७ ॥

श्रीमज्जयतीर्थमुनि प्रारिप्सितस्य ग्रन्थस्याविघ्नेन परिसमाप्त्यर्थं शिष्यार्थदानाविच्छेदरूपप्रचयगमनार्थं च कृतमविगीतालौकिकशिष्टाचारानुमितवेदबोधितकर्तव्यताक श्रीरमणाभिवन्दनरूप मङ्गल शिष्यशिक्षायै निबध्नन् त मन समाधानाय चिकीर्षित प्रतिजानीते ॥ विश्वोत्पत्तिस्थितिध्वंसकारणमिति ॥ अत्र विवृण्महे इत्युत्तमपुरुषबहुवचनघटनाय [1]'अस्मद्युत्तम' इति शास्त्रार्थसम्पत्तये वयमित्यध्याहर्तव्यम् । तत्वोद्योतविवरणकर्तुरेकत्वेऽपि [2]'अस्मदो द्वयोश्च' इति सूत्रात् वयमिति बहुवचनोपपत्ति । तथा च वय विश्वोत्पत्तिस्थितिध्वसकारण श्रियो रमणमभिवन्द्य यथाबोध तत्वोद्योत विवृण्महे इति सम्बन्ध । विवरणरूपक्रियाया करिष्यमाणत्वेऽपि 'वर्तमानसामीप्ये वर्तमानवद्वा' इति शास्त्रप्रवृत्तिसम्भवात् 'स्वरितञित कर्त्रभिप्राये क्रियाफले' इति तत्फलस्य कर्तृगामित्वाच्च विवृण्महे इति [3]तत्रात्मनेपदोपपत्ति । विश्वोत्पत्तिस्थितिध्वसकारणमिति विशेषणेन श्रियो रमणस्य 'यतो वा इमानि भूतानि जायन्ते' इत्यादिकारणवाक्यगतब्रह्मादिशब्दमुख्यार्थत्वमस्तीति विभावितम् । एतच्चोपलक्षणम् । तन्नियतिज्ञानाज्ञानबन्धमोक्षकारणमित्यपि द्रष्टव्यम् । तदाहु

उत्पत्तिस्थितिसंहृतिप्रभृतयो भावा भवन्त्याज्ञया
पद्मापद्मभवादिसर्वजगतो व्यस्ता समस्तास्सदा । इति ।

यद्यपि विश्वोत्पत्तिकारणमित्येवोक्तेऽपि स्थित्यादीनामपि विश्वशब्दार्थत्वेन तत्कारणत्वसिद्धे स्थित्यादिशब्देन विशिष्योपादानं व्यर्थमेव । तथापि

यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति ।
त्व मुक्तिदो बन्धदोऽतो [4]मतो नस्त्व ज्ञानदोऽज्ञानदश्चासि विष्णो ।
उत्पत्तिस्थितिसहारा नियतिर्ज्ञानमावृति ।
बन्धमोक्षौ च पुरुषाद्यस्मात्स हरिरेकराट् ॥

इत्यादिश्रुतिस्मृतिविवक्षानुसारेण उत्पत्त्यादीन् तेन तेन रूपेण सङ्कीर्त्य तत्कारणत्वप्रतिपादनमत्रेति ध्येयम् । ध्वसपदोपादानेन ध्वसासाधारणकारणत्वप्रतिपादनेन तस्य निमित्तत्वमेव न तूपादानत्वमिति विभावितव्यमित्यप्याहु । अत एव विश्वोत्पत्तिकारणत्वादेरव्याप्त्यतिव्याप्त्यादिलक्षणदोषाभावात्प्रत्येकमेव लक्षणत्वमिति समुदित तत्कारणत्वप्रतिपादनं क्वोपयुक्तमिति निरस्तम् । तथा प्रतिपादनस्य श्रुतिविवक्षामूलत्वेन पुरुषार्थोपयोगित्वात् । अन्यथा तथा तथा भगवत्स्वरूपप्रतिपादिका श्रुतिस्मृतय उन्मत्तप्रलापा स्यु ।

---

[1] अस्मद्युत्तम (१।४।१०७) तिङ्वाच्यकारकवाचिनि अस्मदि प्रयुज्यमाने अप्रयुज्यमाने च उत्तम स्यात् ।

[2] अस्मदो द्वयोश्च (१।२।५९) एकत्वे द्वित्वे च विवक्षिते अस्मदो बहुवचन वा स्यात् ।

[3] लडात्मनेपदोपपत्ति इति पाठेन भाव्यमिति भाति ।　　[4] मतोऽसि त्व इति पाठान्तरम् ।

(वि टि) यद्वा उत्पत्त्याद्यैकैककारणत्व ब्रह्मविष्णुशिवेषु प्रत्येकं विश्रान्तमिति मतनिरासाय श्रीरमणनिष्ठतया तत्त्रितयोक्तिरत्रेति ध्येयम्। यद्यप्यत्र पूर्णिमामावास्यातिथ्योरिव विश्वोत्पत्तिस्थितिध्वंसाना प्रवाहतोऽनादित्वस्याविशिष्टतया एव क्रमेणोपादाने न किमपि नियामकमस्ति तथापि विश्वशब्दार्थभूतवियदादिप्रत्येकव्यक्तिषु उत्पत्ति विना स्थित्यभावात् लब्धस्थितिकस्यैव ध्वसाच्च तत्तद्व्यक्त्यपेक्षयोत्पत्त्यादीना क्रमे नियामकसत्त्वात् तथैवेहोपादानमिति न किञ्चिदनुपपन्नम्। यद्यप्येवमप्युत्पत्तिस्थितिध्वसपदेषु द्वन्द्वे घीति सामान्यशास्त्राद्बलवता अल्पाच्तरमिति विशेषशास्त्रेण स्थितिशब्दस्यैव प्राथम्यमुचितम्। अत एव **विश्वस्थितिप्रलयसर्गमहाविभूतीति** भगवत्पादीयप्रयोग। तथाप्युक्तरीत्योत्पत्ते स्थिति प्रत्युपजीव्यत्वेनाभ्यर्हितत्वात् अभ्यर्हित पूर्वमिति ततोऽपि विशेषशास्त्रेणोत्पत्तिशब्दस्यैव प्राक्प्रयोगोऽयमुपपद्यत इति ध्येयम्। यद्यपि च विश्वोत्पत्तिस्थितिध्वसकारणमित्येवोक्तेऽपि तेन पदेन श्रीरमणस्यैव लाभो भविष्यति।

एको ह वै नारायण आसीत् न ब्रह्मा नेशानो नेमे द्यावापृथिवी

नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते

इत्यादिश्रुत्या सर्गाद्यसमये नारायणान्यसत्त्व प्रतिषिध्य तस्यैव सत्त्वप्रतिपादनपूर्वक देवप्रमुखचतुर्मुखेशानादिसहितजगत्कारणत्वोपपादनात्। तथापि श्रियो रमणमित्युक्तिस्तस्यैवाभिवन्दनीयताप्रयोजकेष्टत्वरूपसपत्तिरस्तीति ज्ञापनाय। तथा हि, श्रयन्त्येता स्वेष्टार्थलिप्सया ब्रह्मेशानादिसर्वे जना इति श्रीर्लक्ष्मी.। [1]क्विप् चेत्यादिसूत्रेण श्रीङ्धातो कर्मणि क्विप्। तस्या रमण तस्या अपि सुखप्रदमित्यर्थ। तथा च श्रुति

य कामये तं तमुग्र कृणोमि त ब्रह्माणम्

इत्यादिका। अनेन अभिवन्दनीयताप्रयोजक विशिष्टत्वाख्य रूपान्तरमप्यस्तीति विभावितम्। तथा च स्मृति

एतावताऽल ननु सूचितेन गुणैरसाम्येऽनतिशायितेऽस्य।

हित्वेतरान् प्रार्थयतो विभूतिर्यस्याङ्घ्रिरेणुं जुषतेऽनभीप्सो॥

इत्यादिका। अधिकृतत्वरूप प्रयोजकान्तरमपि व्याख्येयतत्वोद्योतनामकग्रन्थप्रतिपाद्यत्वादेव सिद्ध्यति। **अभिवन्द्येत्यभिशब्दो** भक्तिश्रद्धातिशयकथनाय। **क्त्वाप्रत्ययस्तु** तादृशमेवाभिवन्दन प्रारिप्सिताविघ्नपरिसमाप्त्यादिकारणमिति कारणताशरीरप्रविष्टाव्यवहितपूर्वकालत्वप्रतिपादनमुखेन तत्कारणत्वस्फोरणायेति मन्तव्यम्।

केचित्तु विश्वोत्पत्तिस्थितिध्वसकारणमित्यनेनैव तादृशत्वस्यान्यत्रासम्भवात् वस्तुगत्या श्रीरमण एवाभिवन्द्यत्वेन लभ्यत इति श्रियो रमण वायु चेति चशब्दाध्याहारमङ्गीकृत्य

शरूपमाश्रिता वायु श्रीरित्येव च कीर्त्यते।

इत्यादे श्रीशब्देनात्र भारती विवक्षित्वा तद्वाक्यार्थं वर्णयन्ति।

---

[1] क्विप् च (३।२।७६) मन्निन् इत्यादिप्रत्ययवत् क्विप् प्रत्ययोऽपि धातोर्दृश्यते। उखास्रत्। सत्सूद्विषेति सूत्रस्यैव प्रपञ्च।

(वि टि) यथाबोध विवृणमह इति प्रतिज्ञया स्वव्याख्येयतत्वोद्योतग्रन्थस्य शब्दतोऽर्थतश्च गभीरत्व स्वस्य तद्व्याख्यानसामर्थ्यरूपगौरवञ्च विभावित । अन्यथा बहुवचनवैयर्थ्यात् यथाबोधमित्युक्तिवैयर्थ्याच्च । तत्वोद्योत विवृण्महे इति विशिष्टविवरणप्रतिज्ञया विषयप्रयोजनाभावप्रयुक्त तस्य प्रेक्षावदनुपादेयत्वरूपानारम्भणीयत्व निरस्यति। व्याख्येयग्रन्थस्य तत्व उद्योत्यते उत्कर्षेण प्रकाश्यते ज्ञाप्यते अनेनेति अन्वर्थसञ्ज्ञया विषयप्रयोजनादिसद्भाव ज्ञापनेन तद्विषयप्रयोजनाभ्यामेव तद्व्याख्यानरूपस्यास्यापि तद्वत्त्वस्य सूचितत्वादिति सर्वमवदातम् ।

## अथ तत्वोद्योतटीकाटिप्पणी श्रीराघवेन्द्रतीर्थयतिकृता प्रारभ्यते

जगज्जन्मस्थेमलयनियमा यदपाङ्गत ।
त वन्दे परमानन्दमिन्दिरामन्दिरोरसम् ॥
प्रणम्य श्रीमदानन्दतीर्थादिगुरुशेखरान् ।
व्याख्यास्यामि यथाबोध तत्वोद्योतस्य पञ्जिका ॥

ग्रन्थादौ मङ्गलाचरणपूर्वक चिकीर्षितं प्रतिजानीते ॥ **विश्वेति** ॥ मूले **चिच्चेत्यपदेन** न यत्किञ्चेतनाचेतनग्रह । अपि तु कृत्स्नस्येति भावेन भगवतोऽपि चिद्रूपत्वाद्वाव्यनिरासाय तदन्यचिच्चेत्यग्रहणप्रदर्शनाय वा **विश्वे**त्युक्ति । **यन्तेति** नियमनमुपलक्षणमितिभावेनोक्तमुत्पत्तीत्यादि । तेनान्यजातस्याप्यन्येन नियमनसम्भवात् जन्मादिहेतुत्वमेकनिष्ठ नेति शङ्का परस्ता । अत एव मूलोपात्तमेव विशेष्य **श्रियो रमणमि**त्युक्त । जन्मादिचतुष्टयस्यैव कृत्स्नजगद्विषयत्वादुत्पत्त्यादेरेव ग्रहण । न ज्ञानाज्ञानबन्धादे । तेन भगवति जन्महेतुत्वादयश्चत्वारो हेतव उक्ता भवन्ति । उत्पत्ति पराधीनविशेषावाप्ति । स्थिति परिपालन । जातस्यैव स्थित्यादीत्यतोऽभ्यर्हितत्वाद्वा बहुष्वनियमाद्वा अनेकाचोऽप्युत्पत्ते पूर्व निर्देश । **श्रिय** इत्युक्तया तस्या अपि भगवदुपसर्जनतया अभिवन्दनसिद्धि । भक्त्याद्यङ्गवत्त्वद्योतनायामीत्युक्ति । **यथाबोध** अस्मद्बुद्धिमनतिक्रम्य अस्मद्बुद्ध्यनुसारेणेति वा शिष्यबुद्धिमनतिक्रम्य तस्य बोधो यथा भवति तदनुसारेणेति वा मूलकर्तृबोधमनतिक्रम्य तदभिप्रायानुसारेणेति वाऽर्थ । तत्वस्य परापररूपतत्वस्य । उद्योत द्युत दीप्तौ भावे घञन्त । उत्कृष्टदीप्ति सम्यग्ज्ञान । यद्वा तत्वस्य परमपुरुषस्य उत्कृष्टत्वेन द्योतो ज्ञान येन भवति तत्प्रकरण तत्वोद्योतसञ्ज्ञ प्रकरण विवृण्महे । वर्तमानसामीप्ये वर्तमानवद्वेति लडुक्ति । विश्वेत्यादिना किञ्चिद्विवरणाद्वा । बहुवचन गौरवात् । ग्रन्थकर्तु प्रतिपाद्यस्य च प्रीतेरात्मगामित्वद्योतनायाऽऽत्मनेपद । 'स्वरितञित कर्त्रभिप्राये क्रियाफले' इत्युक्ते ।

## अथ तत्वोद्योतटीकाटिप्पणी श्रीवेदेशतीर्थकृता प्रारभ्यते

जयति जगति जन्मस्थेमसहारकर्ता चिदचिदखिलयन्ता य स्वतन्त्रोऽखिलज्ञ ।
विनतविमलशक्ति पूर्णबोधेष्टरूप श्रुतिततिमतमुक्तामुक्तभेदो रमेश ॥

(वे टि) व्यासं नत्वा तथा मध्व जयार्य च गुरूनपि ।
व्याख्यास्ये मन्दबोधाय तत्वोद्योतस्य पञ्चिका ॥

स्वेष्टदेवतानमनपूर्वकं चिकीर्षितं निर्दिशति ॥ **विश्वोत्पत्तीति** ॥ ननु 'अल्पान्तर पूर्वम्' इति शास्त्रानुसारेण स्थितिशब्दस्यैव प्राक्प्रयोग उचित । अत एव **विश्वस्थितिप्रलयसर्गेति भगवत्पादीयप्रयोगः** इति चेत् । न । उत्पत्ते. स्थितिं प्रत्युपजीव्यत्वेनाभ्यर्हितत्वात् 'अभ्यर्हित पूर्वम्' इति विशेषशास्त्रेणोत्पत्तिशब्दस्यैव प्राक्प्रयोगात् । अत्र मुक्तेश्वरयोर्भेद सा-यते । भेदप्रतीतिश्च व्यावर्तकधर्मप्रतीतिसाध्येति तत्प्रदर्शनार्थमिदमुक्त । मुक्ताना तु 'जगद्व्यापारवर्जम्' इत्यादिना सूत्रकृतैव विश्वोत्पत्त्यादिकारणत्वाभाव उक्त । श्रीपतित्व तु विष्णोरेवासाधारणो धर्म इति मुक्ताना तदभाव प्रसिद्ध एव । **श्रियो रमणमित्यनेन** श्रियोऽपि नमस्कार कृता भवति । तत्वस्य परमपुरुषरूपस्य उद्योत यथार्थज्ञान भवत्यस्मादिति व्यधिकरणबहुव्रीहिः । अथ वा तत्वमुद्योत्यते उत्कर्षेण ज्ञाप्यतेऽनेनेत्यन्वर्थसञ्ज्ञेत्याहु ।

हरिः ॐ

## अथ हुलिगि श्रीपत्याचार्यकृततत्वोद्योतटीकाद्वैतद्युमणिटिप्पणीसारोद्धारः प्रारभ्यते

श्रीमन्त जगदुदयस्थितिप्रणाशान् कुर्वन्त गुणगणपूर्णमीशितार ।
मुक्तानामपि सकलैरवद्यगन्धैरस्पृष्ट हरिमनिश नमामि भक्त्या ॥ १ ॥

श्रीमदानन्दतीर्थार्यान् जयराजमुनीनपि ।
तद्गुरून्मद्गुरूंश्चापि प्रणमाम्यहमञ्जसा ॥ २ ॥

माध्वागमार्थविशदीकरणप्रवीणो दुर्वादिगर्वगिरिवज्रवचोविनोदी ।
श्रीसत्यधर्मगुरुराण्मयि सुप्रसन्नो भूयाद्व्यासवरत सकलार्थवेदी ॥ ३ ॥

रघुपतिपदपाथोजातगन्धाभिनन्दी निखिलनिगमचर्चासद्विलासैकशौण्ड ।
जयति यमिकुलेश सत्यसङ्कल्पनामा गुरुरखिलबुधाना भक्तिवैराग्यराग ॥ ४ ॥

दुर्वादिव्रातमायत्करिवरदमनोद्दामपञ्चास्यलीला
मातन्वन् मोद तीर्थागमगहनपयोराशिमन्थाचलश्री ।
विख्यात कण्ठपल्लीस्थलवरवसति श्रीरघूत्तसनामा
दद्याद्वागर्थबोध मम परमगुरुर्ग्रन्थमेनं विधातुम् ॥ ५ ॥

श्रीमद्वेदान्तशास्त्रप्रवचनमहिमत्रस्तषट्शत्रुमुख्य
स्तात श्रीवासुदेवाभिधगुरुतिलक सर्वविद्यालिरस्य ।

(द्वै द्यु) ग्रन्थस्यैतस्य पारं कलयतु कमलानाथपादावलम्बी
यस्मान्माध्वागमार्थानलमपि मनु पासवानस्मि हृष्टात ॥ ६ ॥

अस्मद्गुरुहृदब्जस्थरमाप्राणेशतुष्टये ।
तत्वोद्योतस्य टीकाया विवृतिं करवाण्यहम् ॥ ७ ॥
तत्वोद्योतस्य टीकाया विकासो मत्कृतेः फलं ।
माय्युक्तदूषणाभासनिरासोऽर्थत इष्यते ॥ ८ ॥
क्व टीकाकृद्वाग्विलासः क्व चाहं जडधीपतिः ।
तथापि तत्कृपालेशो न कुर्यात्किमलौकिकम् ॥ ९ ॥

निर्विघ्नपरिसमाप्त्याद्यर्थं ग्रन्थादावनुष्ठेयत्वेन शिष्टाचारपरम्परया अवगतं मङ्गलं ग्रन्थादावनुष्ठाय शिष्यान् ग्राहयितु निबध्नन् स्वचिकीर्षितं प्रतिजानीते ॥ विश्वेति ॥ उत्तमपुरुषप्रयोगाद्वयमिति कर्ता लभ्यते । अतो न न्यूनता । सकलवाङ्मनसदेवताया श्रियो नमनस्याप्यावश्यकत्वात् भगवद्विशेषणतया तन्नमनस्य च

विष्णुना सहिता ध्याता सापि तुष्टिं परां व्रजेत्

इत्यादिमानैस्तदत्यन्तप्रीतिहेतुतया श्रियो रमणमित्युक्तं । लक्ष्मीपतित्वोक्त्या तदभिमन्यमानजडप्रकृत्यादिनियामकत्वप्राप्त्या प्रकृतिबन्धाऽदिप्रयुक्तदोषराहित्यं ध्वनितम् । विश्वोत्पत्त्यादिकारणत्वं तु गुणपूर्णत्वोपपादनद्वारा नम्यताप्रयोजकविशिष्टत्वस्योपपादनाय । जगद्व्यापारवर्जमित्यादिना जगद्विषयकव्यापाररहितत्वेन प्रमितमुक्तव्यावर्तकधर्मप्रतिपादनद्वारा प्रकृतग्रन्थप्रतिपाद्यस्य मुक्तभेदस्येश्वरे प्रतिपादनायेति टिप्पण्यां प्राहु । अभीत्यनेन वन्दनस्य भक्त्याद्यतिशयसाहित्यं समाप्त्यादिप्रयोजकतावच्छेदकमाह । बोधपदस्य मुख्यार्थकत्वेन सम्प्रदायसिद्धयथार्थज्ञानस्य लाभेन यथापदेन अनतिक्रमार्थकेन तदनुसारित्वस्यैव प्राप्त्या ग्रन्थस्य स्वोत्प्रेक्षादिमूलकत्वप्रयुक्तानुपादेयत्वव्यवच्छेदः । तत्वस्य मुख्यस्वतन्त्रतत्वात्मकनारायणस्य उत्कृष्टद्योतः मुक्तामुक्तसकलनियन्तृत्वादिना ज्ञानं यस्मादिति व्युत्पत्त्या ग्रन्थस्य तत्साधनत्वलाभः ।

## अथ श्रीपाण्डुरङ्गिकेशवाचार्यकृता तत्वोद्योतटीकाटिप्पणी (गुरुराजीया) प्रारभ्यते

यद्विद्याधीशगुरो शुश्रूषान्या न रोचते तस्मात् ।
अस्त्वेषा भक्तियुता श्रीविद्याधीशपादयोः सेवा ॥ १ ॥
तत्वोद्योतस्य विवृतेर्विद्याधीशोक्तमार्गतः ।
विवृतिर्भावगूढायाः क्रियते भावशुद्धये ॥ २ ॥
यत्स्पष्टार्थं पदं वाक्यं तन्न व्याक्रियते मया ।
ग्रन्थगौरवभीरुत्वान्न चोद्ग्रन्थ बहूच्यते ॥ ३ ॥

(गु टि) ग्रन्थादौ मङ्गलमाचरन्नेव शिष्यावधानार्थं चिकीर्षितं निर्दिशति ॥ विश्वेति ॥ ननु इन्द्राग्नी इत्यत्र [1]तत्र तत्र सावकाशघ्यन्ताजाद्यदन्तशास्त्रयोरुभयोरपि प्रसङ्गेऽपि विप्रतिषेधे परमिति न्यायेन परत्वादजाद्यदन्त शास्त्रस्यैव प्रवृत्त्या इन्द्रशब्दस्यैव पूर्वनिपातवत् अजाद्यदन्तमित्यस्य ईशकृष्णावित्यत्र अल्पाच्तरमित्यस्य च प्लक्षन्यग्रोधावित्यत्र सावकाशत्वेन उत्पत्तिस्थितीत्यत्र वागिन्द्रावित्यादाविव उत्पत्तिशब्दस्यादन्तत्वाभावेन तदुभयाप्रसङ्गेऽपि अल्पाच्तरशास्त्रस्यैव प्रवृत्त्या स्थितिशब्दस्यैव पूर्वनिपातः स्यादिति चेदत्र स्वामिनः । 'लक्षणहेत्वोः क्रियायाः' 'समुद्राभ्राद्घः' 'समानाधिकरणजातीययोः' इत्यादिषु यथायथं व्यभिचारं कुर्वता सूत्रकृता एतत्प्रकरणस्यानित्यताया ज्ञापितत्वेन तस्यानित्यत्वसिद्ध्या अत्राप्रवृत्त्युपपत्तेः । अभिप्रेतञ्चानित्यत्वमल्पाच्तरशास्त्रस्य टीकाकाराणां । 'अल्पाच्तरमित्यस्यानित्यत्वात् शकुनिसूत्रयोरिति साधु' इति अन्यत्रापि टीकाकारैरुक्तत्वादिति ध्येयम् ।

॥ रमणमिति ॥ रमत इति रमणः । कर्तरि ल्युट् । [2]ल्युड्भावे करणाधिकरणयोश्चेति भावकरणाधिकरणेषु [3]ल्युड्विधानानन्तरं कृत्यल्युटो बहुलम् (३।३।११३) इति सूत्रारम्भसामर्थ्यादेव कर्त्रादावपि तत्सिद्धेरिति ध्येयम् । यत्तु बाहुलकात्कर्तरि ल्युडिति तन्न । सूत्रारम्भसामर्थ्यादेव कर्तरि तत्सिद्धिसम्भवे [4]बाहुलकपर्यन्तानुधावनानर्थ्यं स्यात् । तस्य प्रयोजनान्तरार्थतायाः एवाऽकरे स्थितत्वेन बाहुलकेन कर्तरि ल्युड्व्युत्पादनस्य परेषाममतत्वाच्चेति ।

**ग्रन्थावतरणिका मूले मङ्गलाचरणञ्च**

**(टी) इहाविद्यातिमिरनिरन्तरे संसारकान्तारे परिखिन्नानामल्पास्थिरसुखखद्योतिकासु द्योतमानास्वपि मनःप्रसादमनासादयतामधिकारिणामनन्तानन्दनिदानस्य परमपुरुषतत्त्वोद्योतस्य सिद्धये समीहमानो भगवानाचार्यवर्यः स्वयमन्तरायविधुरोऽपि निरन्तरायप्रारिप्सितपरिसमाप्त्यादेरङ्गमिष्टदेवताभिपूजनं शिष्यान्ग्राहयितुं प्रकरणादौ निबध्नाति**

सर्वत्राखिलसच्छक्तिः स्वतन्त्रोऽशेषदर्शनः ।
नित्यातादृशचिच्चेत्ययन्तेष्टो नो रमापतिः ॥

---

[1] यू स्त्र्याख्यौ नदी (१।४।३) ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसञ्ज्ञौ स्तः । शेषो घ्यसखि (१।४।७) अनदीसञ्ज्ञौ ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिसञ्ज्ञं स्यात् । द्वन्द्वे घि (२।२।३२) द्वन्द्वे घिसञ्ज्ञं पूर्वं स्यात् इत्येकं घ्यन्तं शास्त्रं । अजाद्यदन्तम् (२-२-३३) इदं द्वन्द्वे पूर्वं स्यात् इति द्वितीयं शास्त्रम् । अनयोः प्रथमस्य हरिहरौ इत्यत्र द्वितीयस्य ईशकृष्णौ इत्यत्र सावकाशता । इन्द्राग्नी इत्यत्रोभयोः शास्त्रयोः प्रवृत्तौ घ्यन्तादजाद्यदन्तं विप्रतिषेधेन (वा २।२।३३) इति वार्तिकेन घ्यन्तशास्त्रस्य बाधः । अजाद्यदन्तशास्त्रस्य प्रवृत्तिरिति भावः ।

[2] नपुंसके भावे क्तः (३।३।११४) ल्युट् च (३-३-११५) करणाधिकरणयोश्च (३।३।११७) एतत्सूत्रत्रयार्थानुवादोऽयम् ।

[3] ल्युड्विधायकसूत्रत्रयात् कृत्यल्युटो बहुलमित्यस्य प्राक्तनत्वादिदमयुक्तमिव भाति । अतः ल्युड्विधानात् पृथक् कृत्यल्युटो बहुलमिति इति पाठेन भाव्यमिति भाति ।

[4] बाहुलकपर्यन्तानुधावनानर्थक्यात् इति पाठेन भाव्यमिति भाति

(टी) देवतास्तुतिमात्रपरत्वादस्य श्लोकस्य क्रियाभिसम्बन्धाभावो न दोषाय। किं तु रमापतिः सर्वत्राखिलसच्छक्तिरित्यादिरूपैव योजना।

यद्यप्यत्र न विशेषणानां परस्परसङ्गत्यपेक्षा। विशेष्यप्रशंसामात्रपरत्वेन निराकाङ्क्षत्वात्। तथाप्येतैरेव स्तवने किमपि प्रयोजनमभिधीयते। अत एव च न वाक्यभेददोषः।

तत्र विद्योपदेशावसरे सकलवाङ्मनसदैवतया रमया युतस्यैव हरेः स्तुतिरुचिता। अतो रमापतिरिति विशेष्यं निरदिक्षत्।

(वि टि) ननु प्रकरणमेवेदमनारम्भणीयं निर्विषयत्वनिष्प्रयोजनत्वादेः। न चास्य तत्वस्वरूपप्रतिपादकतया प्रतिपाद्यं तत्वमेव विषयः तत्प्रतिपत्तिरेव प्रयोजनं तज्जिज्ञासुरेवाधिकारीति वाच्यम्। अपरतत्वस्य जीवाऽस्मादेरहमित्यादिधीनिश्चितत्वेन स्फीतालोकमध्यवर्तिघटवद्विषयत्वायोगात्। न ह्यत्र ज्ञातमसन्दिग्धमविपर्यस्तं वा वस्तु विषयो भवितुमर्हति। परतत्वस्यापि ब्रह्मादिशब्दितस्य जीवानन्यत्वेनोक्तरीत्या निश्चिततया विषयत्वासम्भवात्। किञ्चास्तु कथञ्चिद्विषयसत्वं। तावन्मात्रस्यारम्भणीयत्वं प्रत्यप्रयोजकत्वात्। अन्यथा करटदन्तादिप्रतिपादकग्रन्थस्याप्यारम्भणीयत्वापत्तेः। न च परतत्वप्रतिपत्तिरूपप्रयोजनस्यापि सत्त्वादारम्भणीयत्वमस्त्येवेति वाच्यम्। तत्प्रतिपत्तेरपि काकदन्तप्रतिपत्तितुल्ययोगक्षेमत्वेन स्वतः प्रयोजनत्वायोगात्। सुखानुभवदुःखाभावयोरेव तथात्वात्। न च परमात्मनः सुखरूपत्वेन तत्प्रतिपत्तेः सुखानुभवतया स्वतः पुरुषार्थत्वं किं न स्यादिति वाच्यम्। तथापि तस्य नित्यनिरतिशयपुरुषार्थत्वासिद्धेः। स्वीयसुखानुभवस्यैव पुरुषार्थत्वात्। दुःखिजीवाभिन्नत्वेन परमात्मनः सुखरूपत्वासिद्धेश्च। सांसारिकसुखस्य स्रक्चन्दनाद्यन्यविषयहेतुकत्वेन परतत्वप्रतिपत्त्यहेतुकत्वाच्च। किञ्च तस्य दुःखसम्भिन्नत्वेन विषसम्पृक्तान्नवदन्ततो हेयत्वेन तत्सम्पादकतया परतत्वज्ञानस्य प्रयोजनत्वानुपपत्तिः। किञ्च

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतञ्च सुखं स्वर्गपदास्पदम्॥

इत्यादिना दुःखासम्भिन्नत्वेन प्रमितमामुष्मिकसुखमपि न तज्ज्ञानफलम्। कर्मत एव तत्सिद्धिसम्भवेन तत्प्रयोजनत्वासिद्धेः। न च मोक्षार्थमेव तर्हि परतत्वज्ञानमस्त्विति युक्तम्। मोक्षस्यापि 'अपाम सोमममृता अभूम' इत्यादिश्रुत्या कर्मत एव सिद्धिरित्यावेदनात्। किञ्च विरक्तः परतत्वज्ञानोपायश्रवणादावधिकारी वाच्यः। न ह्यैहिकसुखे उक्तामुष्मिकसुखे वा कस्यापि विरागो भवितुमर्हति। हेयदुःखसम्बन्धादैहिकसुखे विषसम्पृक्तान्न इव कथञ्चिद्विरागसम्भवेऽप्युक्तामुष्मिकस्वर्गादिसुखे सर्वथा विरागानुपपत्तेश्च। किञ्च हेयदुःखसम्बन्धादैहिकसुखे विरागश्चेदुपादेयसुखसम्बन्धाद्दुःखस्याप्युपादेयत्वं किं न स्यात्। न च कृतकत्वाद्यनुमानेनाऽमुष्मिकसुखस्यापि सान्तत्वसातिशयत्वसाधनपारतन्त्र्यादिविराग[1]प्रयोजकरूपत्वेन प्रमिततया तत्रापि विरागः सम्भवतीति युक्तम्।

[1] प्रयोजकरूपवत्त्वेन इति पाठेन भाव्यमिति भाति।

(वि. टि) 'अक्षय ह वै चातुर्मास्ययाजिन सुकृत भवति' इत्यादिश्रुतिबाधितत्वेन कृतकत्वाद्यनुमानस्य सान्तत्वसातिशयत्वादिप्रमापकत्वानुपपत्ते । किञ्चैतत्प्रकरणादौ भगवत आचार्यसूर्यस्येष्टदेवतास्तुतिरूप मङ्गलानुष्ठान व्यर्थम्। स्वत एव विघ्नगन्धमात्रविधुरस्य तस्य स्तुतिरूपमङ्गलसाध्यप्रयोजनाभावात् । न च प्रयोजनं विना प्रेक्षावत्प्रवृत्तिर्दृष्टचरी । न च स्वत सिद्धविघ्नविरहे सति मङ्गलं विना समाप्त्यादिकार्याभावो दृष्टचर । येन मङ्गलमपि तदङ्ग स्यात् । न चाचार्यसूर्यस्य भगवदभिपूजनशीलत्वेन तदनुष्ठानोपपत्ति । तथापि प्रकरणारम्भसमये नियततदनुष्ठानानुपपत्ते । न हि सर्वत्राखिलमच्छक्तिरित्याचार्यसूर्येण क्रियमाणा रमापतिस्तुतिर्न मङ्गलमित्यस्ति। किञ्च तस्य तदनुष्ठानशीलत्वेन स्वभावस्यानपायादवर्जनीयतया प्रकरणारम्भसमये तत्करणसम्भवेऽपि तन्निबन्धनानुपपत्ति । न हि तन्निबन्धनमपि भगवदनुग्रहविशेषकारणमित्यत्रापि प्रमाणमस्तीत्याशङ्क्याह ॥ इहेति ॥ विविधदु खहेतुत्वेन सर्वानुभवसिद्ध इत्यर्थ । एतच्च कान्तारविशेषणम् । इह जगति वा । अत्र इहेत्यादिना अधिकारिणामित्यन्तेनाधिकार्यसम्भवप्रयुक्तानारम्भणीयत्वशङ्का अनन्तानन्दनिदानस्येत्यादिना सिद्धय इत्यन्तेन प्रयोजनाभावप्रयुक्ता विषयाभावप्रयुक्ता चानारम्भणीयत्वशङ्का भगवानाचार्यसूर्य इत्यादिना निबध्नातीत्यन्तेनाचार्यस्य स्वत सिद्धविघ्नविरहवत्त्वेन मङ्गलाचारवैयर्थ्यशङ्का तन्निबन्धनवैयर्थ्यशङ्का च निरस्ता वेदितव्या । तत्राविद्यायास्तिमिरत्वेन निरूपण ज्ञानरूपार्थप्रकाशविरोधित्वादिना संसारस्य कान्तारत्वेन निरूपण दुर्गमोर्ध्वगत्यधोगत्यादिविषयस्वर्गनरकादिरूपदेशवत्त्वेन स्रक्चन्दनादिविषयहेतुकसुखाना खद्योतिकात्वेन निरूपणं अल्पत्वास्थिरत्वक्षणिकानुभवविषयत्वादिना आचार्यस्य सूर्यत्वेन निरूपण तादृशाविद्यातिमिरतिरस्कारपूर्वक परमपुरुषरूपतत्त्वप्रकाशकत्वादिनेति ज्ञातव्यम् । अत्र इहेत्यादिना परिखिन्नानामिति प्रथमेनाधिकारिविशेषणेन विविधसांसारिकदु खदर्शन अल्पास्थिरेत्यादिद्वितीयविशेषणेनैहिकामुष्मिकसुखयोरल्पत्वास्थिरत्वप्रयुक्तवैमुख्यञ्चोच्यत इति विशेषणद्वयेन वैराग्यरूपाधिकारिविशेषणसद्भाव उक्त । अधिकारिणामित्यनेन भक्तिपूर्वकाध्ययन शमदमादिसम्पत्तिर्मुमुक्षुत्वञ्चेति तद्विशेषणत्रयसद्भाव उक्त इति ज्ञातव्यम् । न चोक्तरीत्या ऐहिकाऽमुष्मिकसुखयोर्वैराग्यानुपपत्ति । अल्पत्वास्थिरत्वादिना तदुपपत्ते । न चाल्पास्थिरपुरुषार्थमजानत प्रथममेव कथं तत्र वैराग्यमिति वाच्यम् । परमाप्ताचार्योपदेशेन तदस्थिरत्वनिश्चयात् । न च तत्र मानाभाव । 'सैषाऽऽनन्दस्य मीमासा भवति' इत्यादिना मुक्तसुखेषूत्तरोत्तरमाधिक्यवर्णनेनैहिकामुष्मिकसुखेषु तथाविधाधिक्याननुभवेनाल्पत्वसिद्धे । 'तद्यथेह कर्मचितो लोका क्षीयन्ते' इत्यादिना तत्रास्थिरत्वसिद्धेश्च । न चैवमक्षय्यादिवाक्यविरोध । कृतकत्वाद्युपपत्तिसहितत्वेन तद्यथेत्यादिश्रुते प्रबलतया तस्य गौणाक्षयत्वपरत्वात् । अनन्तानन्दनिदानस्येत्यत्र अनन्तेत्युपलक्षणम् । अनल्पेत्यपि द्रष्टव्यम् । अनन्तानन्दस्य निदानमनन्तानन्दनिदानमिति समासान्तर्वर्तिनी षष्ठी 'सप्तदशारत्निर्वाजपेयस्य यूप' इत्यत्रेव 'देवदत्तस्य नप्ता' इत्यत्रेव च परम्परासम्बन्धेन। तेन अनन्तानन्दनिदानस्य स्वरूपानन्दाऽच्छादकाविद्यानिवृत्त्यादिरूपाभिव्यक्तिनिदानस्येत्यर्थो लभ्यत इति न विरोधावकाश । परमपुरुषेति परमत्वेन पुरुष विशिष्यता पुरुषशब्दार्थस्य जीवान्यत्वं विभावितम् । तस्य तत्व अनारोपितरूप सार्वज्ञ्यसर्वशक्तित्वादिकं । तस्योद्योत. श्रवणादिजन्य

(वि टि ) ज्ञान तस्येति कर्मणि षष्ठी । सिद्धय इति चतुर्थी [1]'तुमर्थाच्च भाववचनात्' इति सूत्रात् । तथा च उक्ताधिकारिणामनन्तानन्दनिदानपरमपुरुषतत्त्वविषयक ज्ञानमुत्पादयितु । समीहमानो यतमान. तत्त्वोद्योतनामकग्रन्थरूपव्यापार कुर्वाण इत्यर्थ । एतेन अस्य प्रकरणस्य परमपुरुषतत्व विषय । तस्य जीवान्यत्वेन सन्दिग्धत्वात् । तज्ज्ञानमवान्तरप्रयोजन अनन्तस्वरूपानन्दाभिव्यक्तिश्च परमप्रयोजनमित्युक्त भवति । न च 'अपाम सोमममृता अभूम' इति श्रुत्या कर्मण एवाऽनन्दाभिव्यक्तिरूपमोक्षसिद्ध्यावेदनात् किं श्रवणाद्यनेकयत्नसाध्यपरमपुरुषतत्त्वज्ञानेनेति वाच्यम् । 'नास्त्यकृत कृतेन, तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इत्यादिनिरवकाशश्रुतिविरोधेन तस्य

आभूतसम्प्लव स्थानममृतत्व हि कथ्यते

इति स्मृत्युक्तगौणामृतत्वपरत्वेनाविरोधात् । प्रारिप्सितपरिसमाप्त्यादेरित्यादिशब्देन प्रचयगमनादिपरिग्रह । अङ्ग कारणम् । इष्टदेवतेत्याचार्यपूजनीयदेवताया निरुपाधीष्टत्वकथनेन तत्कर्तृकदेवतापूजनस्यानन्यशेषत्व विभावितम् ।

ननु ग्रन्थारम्भसमये तत्करण किमर्थम् । कृतस्य वा तस्य ग्रन्थे निवेशनरूपनिबन्धनं किमर्थमित्यत आह ।। **शिष्यान् ग्राहयितुमिति** ।। अत्र कृतमिति शेष. । तन्त्राऽवृत्त्योरन्यतराश्रयेण शिष्यान् ग्राहयितुमित्यस्य कृतमित्यनेनापि सम्बन्ध । एवञ्च प्रकरणाऽरम्भसमय उपस्थितान् शिष्यान् ग्राहयितु कृत । अनुपस्थितास्तु ग्राहयितु निबन्धनमिति वाक्यार्थ पर्यवस्यति । एतेन

आचिनोति हि शास्त्रार्थानाचारान् ग्राहयत्युत ।
स्वयमाचरते यस्तु तमाचार्यं प्रचक्षते ॥

इति शास्त्रसिद्धाऽचार्यपदप्रवृत्तिनिमित्तमेतद्ग्रन्थप्रणेतर्यस्तीति विभावितम् ।

ननु सर्वत्राखिलसच्छक्तिरित्याचार्यश्लोको न व्याख्येय । तस्य क्रियासम्बन्धरहितस्याबोधकत्वेनाप्रामण्यात् । न च क्रियाध्याहारेण बोधकत्वम् । जनयति प्रीणात्वव्यादित्याद्यध्याहारयोग्यक्रियावाचिपदानामनेकत्वेनास्यैवाध्याहार इति निर्धारणायोगात् । सर्वाध्याहारे च नियतवाक्यार्थासिद्धेर्गौरवाच्चेत्याशङ्क्याह ।। **देवतास्तुतिमात्रपरत्वादिति** ।। तथा च प्रवृत्त्यादिपरवाक्यस्यैव क्रियासम्बन्धाभावेनाबोधकत्वम् । न तु स्तुत्यादिपरस्यापि । दृश्यते हि 'विश्व विष्णु' इत्यादे क्रियावाचिपदसमभिव्याहाराभावेऽपि बोधकत्वमिति भाव । क्रियाभिसम्बन्धाभावे कथमन्वय इति पृच्छति ।। **किं त्विति** ।। विवक्षितान्वयप्रकारमेव दर्शयति ।। **रमापतिरिति** ।। रक्तपटन्यायेनोत्थाप्याकाङ्क्षासत्त्वाद्विशेषणान्तराणामप्यन्वय इति भाव । ननु धूमवान् पर्वतोऽग्निमान् इत्यादाविव बुद्धिमान्नीतिमान्वाग्मीत्यादिपरस्परसङ्गतविशेषणैरेव विशेष्यप्रशसासम्भवेऽतथाभूतै सर्वत्राखिलसच्छक्तिरित्यादिविशेषणैरेव स्तवने किं कारणं । स्वतन्त्रानेकविशेषणविधाने वाक्यभेदश्चेति शङ्कते

---

[1] भाववचनाश्च (३।३।११) भाव इत्यधिकृत्य वक्ष्यमाणा घञादय क्रियार्थायां क्रियायां भविष्यदर्थे स्यु । तुमर्थाच्च भाववचनात् (२-३-१५) भाववचनाश्चेति सूत्रेण यो विहितस्तदन्ताच्चतुर्थी स्यात् । यागाय याति । यष्टुं यातीत्यर्थ ।

(वि टि) ॥ **यद्यप्यत्रेति** ॥ यद्यपि सर्वत्राखिलशक्तिमत्त्वस्वातन्त्र्याशेषदर्शनत्वेष्टत्वाना परस्परोपपाद्योपपादकभावलक्षणसङ्गति सम्भवति तथापि लोके कस्यचिच्छक्त्याधिक्येऽपि स्वातन्त्र्यादर्शनात् प्रत्युतान्याधीनत्वदर्शनात् बहुज्ञस्याल्पशक्तित्वदर्शनाच्च तदनुसारेण सङ्गत्यपेक्षाभावोक्तिरियमिति ज्ञेयम् ॥ **किमपि प्रयोजनमिति** ॥ वक्ष्यमाणानुमानत्रयाऽऽगमसूचनरूपमित्यर्थ ।

अय भाव । परमप्रेक्षावानाचार्यो रमापतिरूपस्वेष्टदेवताया परमप्रसादाय तन्निष्ठगुणाभिधानरूपा स्तुतिं विदधानस्तस्या अप्रामाणिकत्वे स्वेन विधीयमानायास्तत्स्तुतेस्तादृशप्रसादरूपप्रयोजनोपयुक्तत्वायोगेनानुपपन्नत्वशङ्कानिरासमभिप्रेत्य तादृशगुणविशिष्टाया तस्या सर्वत्राखिलसच्छक्तिरित्यादिविशेषणोपादानेन

'पराऽस्य शक्तिर्विविधैव श्रूयते । स्वाभाविकी' 'कविर्मनीषी परिभू स्वयम्भू' 'तदात्मान स्वयमकुरुत' 'य सर्वज्ञ स सर्ववित्'

एवा हि त्वामृतुथायातयन्तमघा विप्रेभ्यो ददत शृणोमि ।

किं ते ब्रह्माणो गृहते सखायो ये त्वा यानि दधु काममिन्द्र ॥ (ऋ स अष्ट ४।१।२३)

इत्याद्यागमाः नित्यातादृशचिच्चेत्यन्तेति हेतुगर्भप्रतिज्ञया अनुमानत्रयञ्च [1]प्रमाणत्वेनाभिप्रेतेति ॥ **अत एवेति** ॥ प्रयोजनवशेन वाक्यभेदस्याऽऽश्रितत्वादेव वाक्यभेदो न दोष इत्यर्थ । ननु सर्वत्रेतिश्लोके नारायणाऽऽदिशब्देनैव विशेष्यनिर्देशसम्भवे रमापतिशब्देन तन्निर्देशस्य नातिप्रयोजनत्वमित्याशङ्क्य तथानिर्देशस्य विशेषप्रयोजन दर्शयति ॥ **तत्रेति** ॥ सर्वत्रेति श्लोक इत्यर्थ । तत्र विशेष्य निरदिक्षदिति योजना । उपरागे स्नायादित्यादाविव विद्योपदेशावसर इति निमित्तसप्तमी । [2]मनसेतिशब्दस्याकारान्तत्व अचतुरविचतुरेत्यादिसूत्रे निपातितत्वात् साधु । अत इत्यस्यानन्तर अस्यापि ग्रन्थस्य विद्योपदेशरूपत्वेन तदवसरेऽपीति शेष । तथा च लक्ष्मीप्रसादस्यापि यथावच्छ्रुतिस्मृत्यादिसदागमरूपविद्यार्थावगम तदुपयुक्तसौमनस्यञ्च प्रति साधनत्वेन आवश्यकतया पार्थक्येन तदुपासनस्य

क्लेशोऽधिकतरस्तेषामव्यक्ताऽऽसक्तचेतसाम् ।

इत्यादिस्मृत्या क्लेशातिशयकारित्वप्रतिपादनात् भगवत्पारतन्त्र्येण स्तुतिरूपतदुपासनमिष्टसाधनमित्यभिप्रेत्य रमापतिरिति विशेष्यनिर्देश कृत इति भाव ।

(रा टि) श्रोतृप्रवृत्त्यङ्गं विषयाद्यनुबन्धचतुष्टय प्रकरणस्य सूचयन् आद्यपद्य तत्कृत्योक्तिपूर्वकमवतारयति ॥ **इहेत्यादिना** ॥ इह लोके षष्ठ्यन्तैस्त्रिभिरस्यान्वय । तेषा च सिद्धिपदेनान्वय । अविद्याख्यतिमिरेणान्धकारेण निरन्तरे निबिडे कान्तारे दुर्गमार्गे परिखिन्नानामित्यर्थ । अय च मन प्रसादानासादने हेतु । वैषयिकसुखसत्त्वात्कुत एवमित्यत उक्त **अल्पेति** । महान्धकारे खद्योतप्रकाश इव महाखेदयुते ससारे तत्सुख न प्रसादहेतुर्महात्मनामितिभावेनोक्त ॥ **अधिकारिणामिति** ॥ अनेन वैराग्ययुतोऽधिकार्युक्त ।

[1] प्रमाणत्वेनाभिप्रेयन्त इति पाठान्तरम्, [2] वाङ्मनसेति शब्दस्याकारान्तत्व इति पाठेन भाव्यमिति भाति,

**(रा टि)** बहुवचनेनैकाधिकारिक शास्त्रमिति शङ्का परास्ता। परमपुरुषास्यतत्वविषयकद्योतस्य सम्यग्ज्ञानस्य सिद्धय इति अन तानन्दनिदानत्वनिर्वाहायोक्त। सत्यत्वादिनाऽपरतत्वस्याप्यत्रोऽद्योतनात। अनेन परमपुरुषतत्व विषय, तज्ज्ञानमवान्तरप्रयोजनं, अनन्तानन्दो महाप्रयोजनं, ग्रन्थस्य तत्वज्ञानस्य च जन्यजनकभाव तस्य चानन्तानन्दस्य च साध्यसाधनभावस्सम्बन्धस्सूचितो भवति। समीहमान सम्यक्प्रवर्तमान। शेषेण कृत्योक्ति ॥ **शिष्यान् ग्राहयितुमिति** ॥ 'यद्यदाचरति श्रेष्ठ' इति न्यायेन शिष्याणा सविघ्नत्वेन 'निर्विघ्नसमाप्तिहेतुत्वादिदमवश्य मनुष्ठेय' इतिबुद्धिमुत्पादयितुमित्यर्थ.। स्तुतेर्वाचनिकपूजारूपत्वादिष्टदेवताभिपूजनमित्युक्ति। अक्रियापद-त्वादपूर्णाकाङ्क्ष पद्यमित्यत आह ॥ **देवतास्तुतीति** ॥ अक्रियापदे कथ योजनेतिप्रश्नस्योत्तर ॥ **किं तु रमापतिरिति** ॥ **इत्यादिरूपैवेति** ॥ रमापति स्वतन्त्र, रमापतिरशेषदर्शन, रमापतिर्नित्यातादृशचिच्चेत्ययन्ता रमापतिर्नोऽस्माकमिष्ट इति पञ्चधा वाक्यभेदेन योजनेत्यर्थ। तर्हि पदानामन्यान्यमसङ्गति। सङ्गतविशेषणा-न्तरत्यागेनैवंरूपविशेषणोक्तौ फल च वाच्यमित्याशङ्क्य निराह ॥ **यद्यपीत्यादिना** ॥ **अत एवेति** ॥ प्रयोजन वत्त्वादेवेत्यर्थ ॥ **तत्रेति** ॥ देवतास्तुतौ कर्तव्याया सत्यामित्यर्थ। अचतुरविचतुरेतिसूत्रेण निपातनात् वाङ्मनसेति साधु। विशिष्टेऽन्वीयमानक्रियाया विशेषणेऽप्यन्वयस्य दण्डिनमानयेत्यादौ दर्शनादिति भाव।

**(वे टि)** नन्वधिकार्याद्यभावादिदमनारम्भणीयमित्याशङ्कामपाकुर्वन्प्रथमश्लोकमवतारयति ॥ **इहेति** ॥ **अधिकार्यनधिकारिवर्ग** इत्यर्थ। केचित्तु विविधदुःखहेतुत्वेन सर्वानुभवसिद्ध इत्यर्थ। एतत्कान्तारविशेषण-मित्याहु। मन प्रसादमनासादयतामित्यनेन विषयवैराग्यमधिकारिविशेषणमुक्तं। तत्र हेतु समारकान्तारे परिखिन्नानामिति। विविधसासारिकदुःखदर्शनस्य तद्धेतुत्वादिति भाव। **परमपुरुषे**त्यनेन विषयो दर्शित। **तत्वोद्योतस्य सिद्धये** प्राप्तय इत्यनेन प्रयोजन। ननु सुखदुःखाभावान्यतरत्वाभावेन कथमिद प्रयोजनमित्यत उक्तं ॥ **अनन्तानन्दनिदानस्येति** ॥ आनन्त्य कालत। अनन्तानन्दाविर्भावनिदानस्येत्यर्थ.। तथा चावान्तर-प्रयोजन तदिति भाव। प्रारिप्सितपरिसमाप्त्यादेरित्यत्र आदिपदेन प्रचयपरिग्रह। इष्टदेवताभिपूजनमित्यनन्तर कृतमिति शेष। नन्वन्तरायविधुर इत्यनेन समाप्त्यादेरन्यथासिद्धत्वावगमेन किमर्थमाचार्यैर्मङ्गलं कृतमिति चेत् परमास्तिकत्वेन सदेश्वरप्रवणकायकरणचित्तत्वात्। ग्रन्थे निवेशन तु अगन्निहितशिष्यशिक्षार्थं कृतमित्य-वधेय। ननु रमापतिर्जयतीत्यादिक्रियापदाभावेन न निराकाङ्क्षं वाक्यमित्यत आह ॥ **देवतेति** ॥ देवतास्तुति परेऽपि श्लोके क्रियासम्बन्धोऽस्त्येव। यथा नारायणोऽगण्यगुण इत्यादौ। तद्वदत्रापि स्यादित्यत उक्त ॥ **मात्रेति** ॥ तत्र प्रीत्याशंसनस्यापि सत्त्वेन तदावश्यकत्वेऽप्यत्र तदभावान्न तदपेक्षेति भाव। स्तुतिमात्रत्वस्य तु 'विश्व विष्णुर्वषट्कार:' इत्यादाविव क्रियासम्बन्धाभावेऽप्युपपन्नत्वादिति हृदय। तर्हि कथमन्वय इति पृच्छति ॥ **किं त्विति** ॥ उत्तरमाह ॥ **रमापतिरिति** ॥ **किमपि प्रयोजनमिति** ॥ ईश्वरसाधकप्रमाणसूचनरूपमित्यर्थ.। ननु रमापतिरित्यादिरूपेण योजनाया वाक्यभेद स्यात्। सम्भवत्येकवाक्यत्वे वाक्यभेदो हि दूषणमित्यत आह ॥ **अत एवेति** ॥ यत एतैरेव विशेषणै स्तवने किमपि प्रयोजनमभिधीयत इत्यर्थ। तथा च पञ्चाना-

(वे टि ) मप्येषा वाक्यानामीश्वरसाधकप्रमाणरूपैकार्थपरत्वेनैकवाक्यत्वसम्भवान्महावाक्यभेदो नास्त्येव । अवान्तरवाक्यभेदस्तु न दोषायेति भाव । अत एवानुव्याख्याने

पृथगेव च वाक्यत्व पृथगन्वयतो भवेत् ।
अवान्तरत्वाद्वाक्याना वाक्यभेदो न दूषणम् ॥

इत्युक्त । अत एव विशेष्यप्रशसामात्रपरत्वादेवेत्यर्थ इत्यप्याहु ।

(द्वै द्यु ) यद्यपि ग्रन्थनाम्नैव तस्य विषयसम्बन्धो लभ्यते तथापि निष्प्रयोजनत्वेनानुपादेयत्वशङ्कामपाकर्तु वा 'अनधिगतत्वमात्र न प्रतिपाद्यताप्रयोजक । किं तु सप्रयोजनज्ञानविषयत्वम्' इत्यन्यत्रोक्तत्वात् ईश्वरस्य तथात्वाभावात्तस्य विषयत्वाभावादस्य निर्विषयत्वादिनाऽनुपादेयत्वशङ्कामपाकर्तु वा विषयादिक निरूपयन् तथात्वेऽपि निष्प्रयोजनकाऽयपद्यघटितत्वात्पुनरस्यानुपादेयत्वमिति शङ्काव्युदासायाऽयपद्यमवतारयति ॥ इहेति ॥ इद चेतनवर्ग इत्यर्थकमधिकारिणामित्यनेन सम्बन्ध । कान्तारविशेषणीभूतानुभवसिद्धार्थकमित्यन्ये । अविद्येति विद्याविरोधित्वेन त्रिगुणात्मकप्रकृतिकामकर्मादिक ग्राह्य । तत्त्वेन तदुत्कीर्तन तु ज्ञानस्य तन्नाशार्थमवश्यापेक्षणीयतालाभाय । तेषा तिमिरत्व तु मोक्षमार्गप्रवृत्तिहेतुभूतज्ञानप्रतिबन्धकत्वेन । संसारो नाम प्रकृते सुरनरतिर्यगादिनानादेहा । मनुष्यदेहादिमात्रे विरक्तस्य सुरादिदेहादाविच्छया प्रवर्तमानस्य विरक्त्यभावेन ज्ञानानुदयेन ऐहिकामुष्मिकसकलभोगविरक्तिलाभाय परीत्युक्त । सर्वयोनिषु द्वेषवतामित्यर्थ । तत्र द्वेषेण तद्विरोधिनि ज्ञान इच्छोदयद्वारा ज्ञानोत्पत्तिरिति भाव ।

ननु मुख्येच्छाविषयत्व यथा सुखस्य तत्साधनतया चान्येषामिच्छाविषयत्व तथा दु खस्यैव मुख्यद्वेषविषयत्व तत्साधनतयाऽन्येषा । एव च सुखसाधनेषु शरीरेषु कथ द्वेष । न च दु खसाधनत्वात् द्वेषोऽपि स्यादिति वाच्य । सुखासाधने दु खसाधन एव लोकाना द्वेषदर्शनात । अन्यथा नान्तरीयकदु खसाधनत्वात्प्रायेण सर्वक्रियाणा सर्वत्र प्रवृत्त्युच्छेदप्रसङ्गादित्यभिप्रायपूर्विकामाशङ्का अप्यन्तेन सूचयन् तन्निराकरणपूर्वकं परिखेदमुपपादयति अल्पेत्यादिनाऽनासादयतात्यन्तेन । सुखेऽल्पत्वास्थिरत्वयो समाधानोपयोगित्वेनाभिधान न तु शङ्कोपयोगेन । द्योतमानासु साक्षात्क्रियमाणासु । मनःप्रसादं तज्जातीयान्यसुखेच्छानुत्पत्तिपूर्विका तज्जातीयविषयकोत्कटेच्छा । शङ्काया सुखे साक्षात्क्रियमाणत्वकथन त्वनुभवसिद्धसुखसाधनत्वात्कथमत्र शरीरादौ द्वेष इति शङ्कोत्थापनाय । नन्वनासादयतामित्यनेन कथमुक्तशङ्कापरिहार । इत्थ । सुखासाधनत्वसमानाधिकरणदु खसाधनत्व न द्वेषविषयत्वप्रयोजकम् । तात्कालिकतृप्तिसाधने विषसम्पृक्तमधुभक्षणादौ द्वेषानुदयप्रसङ्गात । किं तु स्वसाध्यदु खन्यूनमनधिक वा यत्सुख तत्साधनत्व केवल दु खसाधनत्व च । लोकाना तथैवानुभवात । तथा च सांसारिकसुखापेक्षया दु खस्याधिकत्वज्ञानवता विवेकिना संसारे द्वेषोदय इति । ननु अविरललग्नसुखधाराया एव 'यन्न दु खेन सम्भिन्न' इत्यादिना स्वर्गपदार्थत्वावगमात्कथ तत्साधने दु खासाधने तच्छरीरादौ द्वेष इत्यत अस्थिर इत्युक्तं । तेषामप्यस्थिरत्वात् स्थिरसुखरूपमोक्षविरोधिनि तत्सुख-

(द्वै ध्रु) साधने शरीरे द्वेषोदयो युक्त इति भाव । अल्पपदस्य स्वकारणजन्यदु खापेक्षया अल्पत्वार्थत्व विहाय मोक्षापेक्षया अल्पत्वार्थकत्वे स्वर्गसुखस्यापि तथात्वमेव । अस्थिरत्व तु सर्वत्रापि द्वेषाधिविषयसूचनाय अभ्युच्चयत्वेनोक्तम् ।

यद्वा **संसारे परिखिन्नानामित्यस्य** सासारिकबहुदु खानुभववतामित्यर्थ । तस्य वैषयिकसुखविषयकेच्छाभावरूपवैराग्येऽनासादयतामित्यन्तेनोक्ते हेतुत्व । 'विविधसासारिकदु खदर्शनेन विरक्तस्य' इत्यन्यत्रोक्तेरिति ध्येय । अत्र यद्यपि पूर्वोक्तार्थाक्षेपसूचकापिपदवैयर्थ्य । पूर्वोक्तपरिखेदस्याऽक्षेपपूर्वमसमर्थनात् तमेव हेतूकृत्य वैराग्यम त्रस्य कथनादिति भाति । तथापि परिखेदसद्भावेऽपि तत्काले साक्षात्क्रियमाणेषु तज्जातीयेषु सत्सु मोक्षरूपकालान्तरीणसुखविषयकोत्कटेच्छया न वैराग्यमित्याशङ्कासूचक द्योतमानपदसमभिव्याहृत **अपिपदमिति** न तस्य वैयर्थ्यं । सुखेष्वल्पत्वाद्युक्त्या तच्छङ्कापरिहार पूर्वोक्तरीत्या द्रष्टव्य ।

ननु मोक्षसुखस्य विषयसुखवैलक्षण्यायानन्तत्वाभिधानात्तस्य यथायोग्यं पूर्णत्वनाशराहित्यरूपत्वात्तद्विरुद्धधर्मयोरल्पत्वास्थिरत्वयोर्वैषयिकसुखेषु कथन युक्त । तस्य खद्योतिकोपमा तु न सङ्गता । न हि मोक्षसुखस्य सूर्यस्थानीयतया तमोनिवर्तकत्वमुच्यते युक्त वा । तन्निवृत्त्युत्तरकालीनत्वात्तदभिव्यक्ते । कि तु आचार्यस्य सूर्यस्थानीयत्वं । तदुपदेशजन्यत्वेन तदधीनपरमपुरुषतत्त्वोद्योतस्य तत्प्रकाशस्थानीयत्व । तस्याविद्यादिरूपतमोनिवृत्तिद्वारा अनन्तानन्दाभिव्यक्तिहेतुत्वात् । तथा च सूर्यस्थानीयाचार्येण प्रकाशकत्वेनासजातीये प्रत्युत स्वय प्रकाशकर्मीभूते वैषयिकसुखे तमोनिवर्तकत्वासामर्थ्यसूचनाय खद्योतिकासाम्योपादान कथमिति चेन्न । यत वैषयिकसुखेषु तमोनिवर्तकत्वासामर्थ्यसूचनाय न खद्योतिकोपमोपादान । कि तु तस्य प्रयोजनान्तरमेव वर्तते । कथ । इत्थ । ननु संसारनिवृत्तीच्छया परमपुरुषज्ञानसम्पादनमयुक्तम् । ससारसद्भाव एव स्त्रीपुत्रादिनानासुख सम्भवात् । परमपुरुषज्ञानस्य तु विद्यमानसुखनाशकतया अनपेक्षितत्वेन तत्सम्पादकाचार्यसूर्योऽप्यनपेक्षित इत्याशङ्कापरिहारायेदमभिहित । तेन च यथा तम सम्बन्धकाल एव खद्योतिका द्योतन्ते न सूर्यप्रकाशवेलायामित्येतावता खद्योतिकाप्रकाशनिर्वाहाय तमस्येवेच्छा प्रेक्षावता न सूर्यप्रकाश इति न युज्यते तद्वत् खद्योतिकास्थानीयसुखप्रकाशकतमोनिबिडसम्सारे इच्छा आचार्यसूर्यप्रकाशादौ तु नेच्छेति न युज्यत इति ।

**श्रीपादास्तु** आचार्यसूर्य इत्यत्र न सूर्यपद रूढ्या सूर्यपर सत् आचार्यस्य तमोनिवर्तकत्वादिसामर्थ्यबोधनपरं । अपि तु लोकाना दु खादिमत्त्वेऽपि कुत आचार्याणामेतन्निर्माणे प्रवृत्ति । तेषा उपदेशानिच्छुत्वात् तान्प्रत्युपदेशे स्ववाक्यस्यानुपादेयत्वापत्तिरित्याशङ्कापरिहाराय योगेन ज्ञानिगम्यार्थकम् । 'सूर्य स सूरिगम्यत्वात्' **इतीशावास्यभाष्योक्तेः** । तथा च ससारबाधावद्भि ज्ञानिभि शरणतया स्वस्य गम्यत्वात् तान्प्रत्युपदेशरूपे ग्रन्थे प्रवृत्तिर्युक्तैव । 'ते वायवे मनवे बाधिताय' इत्यत्र बाधितायेति शब्दस्य संसारबाधावद्भि शरणं प्राप्तायेत्यर्थस्य **टीकाकृता** अभिहितत्वात् उक्तं युक्तमिति प्राहु ।

वैराग्यादिसद्भावेऽपि ज्ञानोत्पत्तौ स्वरूपयोग्यताख्याधिकारोऽपेक्षित इत्याशये**नाधिकारिणा**मित्युक्तम् । अत्र **निदानेति** परमपुरुषज्ञानस्यानन्दाविर्भाव प्रति मूलकारणत्वोक्त्या मध्ये अपेक्षित किंचिदस्तीति गम्यते ।

(द्वै द्यु) तच्च प्रकृत्यादीना विद्याविरोधित्वकथनेनाविद्यानिवृत्यादिरूपमेवेति लभ्यते। तदपि न परमतरीत्या साक्षा देव ज्ञानेन। स्वविषयकापरोक्षज्ञानं यदि बन्धनिवर्तक स्यात् तदा तस्य स्वसमानविषयकस्वस्वरूपाज्ञाननिवर्तकता सम्भाव्येत। कि तु ज्ञान स्वापेक्षया पारम्येण स्वान्यस्य परमपुरुषस्यैव। तस्य च कथं जीवस्वरूपावरकाज्ञान बन्धनिवर्तकत्व साक्षाद्घटते। किं तु निगडमोचकराजसाक्षात्कारस्येव प्रसादद्वारेति सूचनाय **परमपुरुषेत्याद्य-** भिहितम्। अत्रानन्तानन्दाय परमपुरुषतत्त्वोद्योतस्य सिध्यय इति अनन्तानन्दस्योद्देश्यत्वमनभिधाय वस्तुतस्तज्जन कज्ञानस्यैव सिध्यय इति उद्देश्यत्वाभिधान एतद्ग्रन्थस्योत्तमाधिकारिसाधारण्य सूचयितुम्। उत्तमाधिकारिणा भगवज्ज्ञानमेवोद्देश्य आनन्दावाप्तिस्तु तत्स्वाभाव्यात्। अन्येषा तु आनन्दार्थं तदुद्देश्यमिति बोध्यम्। अस्य शास्त्रैकदेशत्वरूपप्रकरणत्वेन शास्त्रीयविषयादिकमेव परमपुरुषादिकमस्य विषयादिकमिति मायावादखण्डनटीका दावुक्तदिशा द्रष्टव्यम्। मायावादखण्डनटीकादौ स्फुटतया तथोक्तिरत्रानुक्तिश्च तत्र परपक्षमात्रस्यादित एव निराकृतत्वेन विषयादीना स्फुटमप्रतिभासादत्र मुक्तभेदरूपस्वपक्षस्थापनेन मुक्तभेदवत्तया तन्नियामकत्वरूपपार- म्यविशिष्टेश्वररूपविषयादिप्रतिभासादिति द्रष्टव्यम्। अतएवास्यापि शास्त्रैकदेशत्वलाभाय **प्रकरणादावित्युक्तम्।** अभिपूजनस्य स्तुतिरूपत्वे सर्वत्रेत्यादिवाक्यरूपस्य तस्य [1]विषयीभूतस्वप्रत्यक्षनिर्वाहकत्वान्मङ्गलप्रकाशकवाक्य- रूपनिबन्धनत्व सर्वत्रेत्यादिश्लोके न बाधितम्। टीकाया मूलपाठोत्तरमितिशब्दोध्याहार्यः। तस्य स्वरूपार्थत्वेन निबन्धने अभेदेनान्वय। एतत्स्वरूपाभिन्ननिबन्धनकर्तेति बोध। एवमुत्तरत्र सर्वत्र मूलपाठोत्तरमितिशब्द- मध्याहार्योवनारिकोक्तक्रियायामन्वयो द्रष्टव्य।

ननु मूले रमापतिरित्येवोद्देश्यसमर्पकम्। झडिति व्यक्तिविशेषोपस्थापकत्वात्। तत्पूर्ववर्तिना पदाना तूद्देश्यतावच्छेदकसमर्पकत्वम्। नीलश्चैत्रीयो घट सुन्दर इत्यादौ तथा दर्शनात्। तथा च विधेयवाचकक्रिया- पदाभावान्न्यूनता। न चास्ते सार्वत्रिकत्वेन सिद्धत्वान्नोक्तमिति वाच्यम्। तत्कथनस्यास्तिताया रमापतित्वादि- रूपधर्मान्यथानुपपत्त्यैव सिद्धत्वेन वैयर्थ्यात्। तत्कथनस्य मङ्गलनिबन्धनरूपत्वाभावाच्चेत्यत आह ॥ **देवतेति**॥ **स्तुतिः** उत्कर्षबोधानुकूलधर्मप्रतिपादन **तन्मात्रपरत्वात्।** उक्तविशेषणविशिष्टरमापत्युद्देश्यकक्रियापदार्थादिविधे- यकबोधे तात्पर्याभावो **मात्र**पदार्थ.। **क्रियासम्बन्धाभावः** क्रियेत्युपलक्षणम्। विशिष्टरमापतौ विधेयसमर्पक- पदमात्रं ग्राह्यम्। नीलमिद न तु रक्तमित्यादौ क्रियापदाभावेदि वाक्यपरिसमाप्तेस्तात्रिकैरुक्तत्वेपि 'एकतिङन्त वाक्यम्' इति वार्तिकानुसारेण वा क्रियापदार्थविधेयकबोधेन वाक्यसमाप्तेर्बाहुलकत्वेन वा क्रियापदस्य कण्ठतो ग्रहणम्। तथा च विशिष्टरमापत्युद्देश्यकविधेयान्तरविषयकबोधानुकूलपदसमभिव्याहाराभाव इत्यर्थ। **न दोषाय** स्वतात्पर्यविषयीभूतबोधानुकूलपदाघटितत्वरूपन्यूनतादोषाय नेत्यर्थ। विशिष्टरमापतौ विधेयान्तरबोधे ग्रन्थकृत- स्तात्पर्यसत्त्वे हि पदविशेषस्य अध्याहारादौ विनिगमकाभावादिना स्फुटज्ञापकाभावे हि तद्बोधकपदाप्रयोगो ग्रन्थकृतां तदघटितत्व च वाक्यस्य दोष। न चैव प्रकृते। ग्रन्थकृतस्ताद्दशबोधे तात्पर्यस्यैवाभावात्।

---

[1] विषयीभूतेशप्रत्यक्षनिर्वाहकत्वात् इति पाठेन भाव्यमिति भाति

(द्वै द्यु) ननु प्रीत्याशासनादिक्रियार्थबोधे तात्पर्याभावे कथमस्य वाक्यस्य वाचनिकमङ्गलात्मकत्वम्। वाचनिकमङ्गलात्मके 'नारायणोऽगण्यगुण' इत्यादिश्लोके प्रीयतामित्यादिक्रियासत्त्वेन तद्भावस्य तादृशमङ्गलत्वव्यापकत्वावगमात्। व्यापकाभावे च व्याप्यमङ्गलात्मकत्वमप्यनुपपन्नमित्याशङ्कापरिहाराय **देवतास्तुतीत्याद्यभिहितम्**। उत्कर्षप्रतिपत्त्यनुकूलधर्मप्रतिपादकत्वादेव हि मङ्गलरूपत्व। न तु प्रीत्याशासनादिक्रियासाहित्यनियम। विष्णुसहस्रनामादौ तदभावेपि मङ्गलरूपताया दृष्टत्वादिति हृदयम्। मनुष्यस्तुतौ मङ्गलरूपताया असम्प्रतिपत्तेर्**देवते**त्युक्तम्। मङ्गलात्मकत्वाभावादिदोषोऽपि नास्तीति सूचनाय **न दोषायेति** सामान्येनोक्तम्। **देवता**पदमप्यत एव सार्थकम्। अन्यथा स्तुतिमात्रपरत्वादित्येवोच्येत। ननु क्रियापदादिरूपविधेयसमर्पकपदाभावे पदाना स्वार्थमात्रोपस्थापकताप्राप्त्या रमापतावुत्कर्षनिर्वाहकधर्मप्रतिपादकतया स्तुतिरूपता न निर्वहतीत्याशयेन शङ्कते॥ **किं त्विति**॥ उत्तरमाह॥ **रमापतिरित्यादि**॥ एवकारस्तेषामुद्देश्यतावच्छेदकसमर्पकतया योजनाव्यवच्छेदक.।

स्वय क्रियमाणस्य श्लोकस्थपदाना तन्निवर्तनीयाकाङ्क्षोत्थापकत्वतदुत्थाप्याकाङ्क्षानिवर्तकत्वान्यतररूप सङ्गतिप्रदर्शनस्य वैयर्थ्यमाशङ्क्य तत्परिहारपूर्वकं ता सङ्गतिं दर्शयति॥ **यद्यपीत्यादिना**॥ **विशेष्यप्रशसापरत्वेन** तन्निष्ठोत्कर्षाधिक्यप्रतिपत्तिप्रयोजनकतया निश्चितत्वेन। **निराकाङ्क्षत्वात्** प्रयोजनविशेषवत्तयाऽजिज्ञासितत्वात्। तथा च भवता तत्कथनमजिज्ञासिताभिधानरूपतया अनुपादेय स्यादिति भाव। **किमपि** अपि सभावनायाम्। सामान्येन सभावित श्रोतृभिर्विशेषरूपेणानिश्चिततया जिज्ञासित प्रयोजनमस्माभिरभिधीयते। अतोऽस्मदुक्तेर्न निराकाङ्क्षिताभिधानरूपत्वमिति भाव। यद्यपि विशेषणान्तराण्यनुपादाय एतैरेव स्तवने स्वतन्त्रेच्छैव नियामिकेति वक्तु शक्यत्वेन न तावता पदाना प्रयोजनान्तरसम्भावनाप्रसक्ति। अन्यथा विशेषणान्तरोपादाने तत्राप्येतादृशशङ्काया अनुच्छेदापत्ते। तथापि प्रयोजनान्तरबाधनिर्णयोत्तरमेवेच्छारूपसमाधानप्रसक्ति.। न च प्रकृते बाधो निश्चेतु शक्य। आचार्यवचसामतिगम्भीरार्थत्वस्य बहुशो दृष्टत्वेन तदुपायाभावात्। अत प्रयोजनान्तरसम्भावना युक्तैवेति ज्ञातव्यम्। **वाक्यदोषः** तदुत्थाप्याकाङ्क्षानिवर्तकत्वतन्निवर्तनीयाकाङ्क्षोत्थापकत्वान्यतराभावरूपो वाक्यदोष। **अत एव** वक्ष्यमाणरीत्या अवान्तरवाक्यानामन्यतरसत्त्वादेव नेत्यर्थ.। अन्यतराभावात्मकवाक्यदोषत्वावच्छिन्नाभावत्वेन साध्यत्व तादृशान्यतरवत्त्वेन हेतुत्वमिति न साध्याविशिष्ट्यमत्र शङ्क्यम्। वाक्यभेदपदस्य विशिष्टैकार्थविषयकसमूहालम्बनानात्मकशाब्दाजनकत्व नार्थ। तस्य वक्ष्यमाणरीत्या सङ्गतिसद्भावेपि पदाना पूर्वोक्तयोजनाया तादृशदोषस्य दुर्वारत्वात्। ननु तर्हि तद्दोषेणाप्यस्य दुष्टत्वमेव श्लोकस्य स्यादिति वाच्यम्। वाक्याना परस्परासङ्गतिरेव दोष न तु सर्वेषा विशिष्टैकार्थशाब्दधीजनकत्वाभाव.। महाग्रन्थस्थानामवान्तरवाक्याना तादृशाना बहुलमुपलम्भादित्यभिप्रायात्।

**अत एवे**त्यस्य यत एतैरेव स्तवने किमपि प्रयोजनमभिधीयते अत एवेत्यर्थ। तथा च पञ्चानामप्येषां ईश्वरप्रमाणरूपैकार्थप्रतीतिपरत्वान्न वाक्यभेद इति **टिप्पण्यां** व्याख्यात। तत्र यद्यपि विशेष्यप्रशसारूपैक-

(द्वै द्यु) विशिष्टार्थप्रतीतिपरत्वेन तद्दोषत्वस्य पूर्वमपि सत्त्वात् अत एवेत्युपष्टम्भासङ्गतिरिति प्रतिभाति तथापि [1]नैकार्थप्रतीतिपरत्वमात्रत्वमेकवाक्यत्व। विभिन्नकर्तृकयोरेकेनैव कालभेदेनोच्चारितयोर्वा घटोस्तीति वाक्ययोरपि तथात्वापत्ते.। किं तु परस्परसाकाङ्क्षतयैकविशिष्टार्थपरत्वम्।

अर्थैकत्वादेक वाक्य साकाङ्क्ष चेद्विभागे स्यात

इति जैमिन्युक्ते। तच्च प्रशसापरत्वपक्षे विशेषणपदाना परस्परापेक्षाविधुराणामेवोत्कर्षरूपप्रशंसापरत्वान्नैकवाक्यत्वनिर्वाह। इदानी तु वक्ष्यमाणरीत्या परस्परसाकाङ्क्षाणामेव प्रामाणिकत्वेनेश्वरबोधपरत्वम्। अनुमानस्याप्यागमासहकृतस्येश्वरे प्रामाण्यायोगात्तस्यापि तत्साकाङ्क्षत्वमेवेति तत्सूचकवाक्यानामपि परस्परसाकाङ्क्षत्वमेवेत्येतत्पक्षे उपष्टम्भसङ्गतिरिति **टिप्पण्यभिप्राय**। साकाङ्क्षत्व चास्मदुक्तान्यतरात्मकत्वमेवेति **टिप्पण्या** अप्यत्रैव पर्यवसानात् 'अन्यतरसत्त्वादेव' इत्यस्माभिर्व्याख्यातमतस्तद्विरोधोत्र न शङ्क्य इति ज्ञेयम्। प्रसिद्धस्वनामानि विहाय [2]भार्यानामपूर्वकग्रहणप्रयुक्तापकर्षं तस्य बीजान्तर वदन् परिहरति ॥ **तत्रेति** ॥

(गु. टि) ननु क्रियाकारकसम्बन्धस्य वाक्यार्थत्वात् तस्य च क्रियासम्बन्धसापेक्षत्वेनासति क्रियासम्बन्धे तदनुपपत्तेरत्र क्रियाभिसम्बन्धाभावो दोषायेत्य। यत्र वाक्यस्य क्रियाभिसम्बन्धे तात्पर्यं तत्र क्रियाभिसम्बन्धाभावस्य दोषत्वेऽपि यत्र विरोधिधर्मान्तरव्यावृत्तौ तात्पर्यान्न क्रियाभिसम्बन्धे तात्पर्यं तत्र न तस्य दोषत्वम्। यथा नीलमुत्पल राज्ञोऽयं पुरुष इत्यादि। तत्र नीलमुत्पलं न रक्तं, राज्ञोऽय पुरुषो न देवदत्तस्येति विशेषणान्तर व्यावृत्ते प्रतीत्या तद्व्यावृत्तौ तात्पर्यस्य, नीलमुत्पलमस्ति राज्ञ पुरुषोऽस्तीत्यप्रतीत्या च क्रियाभिसम्बन्धे तात्पर्याभावस्य च [3]अनभिहितसूत्रे समर्थितत्वात्। अतोऽत्रापि विरोधिधर्मान्तरव्यावृत्तावतात्पर्ये तत्प्रसङ्गेन विशेष्यप्रशंसाया असिद्धिप्रसङ्गेन तत्र तात्पर्यस्याभिमतत्वेन क्रियाभिसम्बन्धे तात्पर्याभावान्न क्रियाभिसम्बन्धाभावो दोषायेत्याशयेनाह ॥ **देवतास्तुतिमात्रपरत्वादिति** ॥

अन्ये तु [4]अस्तिर्भवतिपरोऽप्रयुज्यमानोप्यस्तीति न क्रियाभिसम्बन्धाभाव। अन्यथा नैराकाङ्क्षयाभावेन वाक्यापर्यवसानप्रसङ्गात्। विधिं निषेध वा अनवगाहमानाया प्रतीते सत्त्वापाताच्च। तस्माद्रमापतिर्निपालयत्वित्यादिविशेषक्रियाभिसम्बन्धाभावाभिप्रायक एवाय ग्रन्थ। ततश्च रमापति सर्वत्राखिलसच्छक्तिरस्तीत्येतावतैव देवतास्तुतेरुपपन्नत्वात् न पालयत्वित्यादिविशेषक्रियासम्बन्धाभावो न दोष इत्यर्थ इत्याहु।

तन्न। नीलमुत्पलमित्यादौ व्यभिचारेण अस्तिर्भवातिपर इत्यस्यौत्सर्गिकत्वसिद्ध्या तद्बलेनात्र अस्तीतिक्रियासम्बन्धस्यैवासिद्धे। नीलमुत्पलमित्यादाविव तदभावेऽपि नैराकाङ्क्ष्येण वाक्यपर्यवसानस्याप्युपपत्ते।

1 नैकार्थप्रतीतिपरत्वमात्रमेकवाक्यत्वम् इति पाठेन भाव्यमिति भाति।

2 भार्यानामपूर्वकनामग्रहणप्रयुक्तापकर्षं इति पाठेन भाव्यमिति भाति।

3 अनभिहिते (२।३।१) इत्यधिकृत्य, कर्मणि द्वितीया (२।३।२) अनुक्ते कर्मणि द्वितीया स्यात्। हरिं भजति। अभिधान तु प्रायेण तिङ्कृत्तद्धितसमासैः। इति सूत्रार्थः।

4 भवतीत्यर्थपरोऽस्तिधातुरित्यर्थ।

(गु टि) 'स्तम्भोयमित्यादिप्रतीतिर्न यद्यपि सदित्याकारा तथापि स्तम्भादीनां सद्विशेषत्वान्न ता व्यभिचरति' इत्युत्तरटीकाग्रन्थानुरोधेन स्तम्भादिप्रतीते अस्तीत्यादिपदाभावेऽपि सत्त्वावगाहित्वात् अत्रापि असत्यपि अस्तीति क्रियाभिसम्बन्धे सत्त्वावगाहित्वोपपत्तेश्च। अत एव विशेषक्रियासम्बन्धाभावाभिप्रायकत्वकल्पनमपि अनवकाशञ्च। उक्तरीत्या अस्तीतिक्रियाभिसम्बन्धस्यात्रासिद्धतया यथास्थितार्थताया अनुपपत्त्यभावादित्यास्तां तावत्।

नन्वेव विशेषणानामेतेषां सङ्गतिकथनमनर्थकमापद्येत। सङ्गतेरनपेक्षितत्वेनानपेक्षिताभिधानत्वात्। विरुद्धञ्च। सङ्गतिकथनेन प्रयोजनान्तरार्थत्वस्यापि प्राप्त्या स्तुतिमात्रपरत्वभञ्जकत्वादित्यभिप्रेत्य हेतुकथनपूर्वकं सङ्गत्यनाकाङ्क्षामाशङ्कते ॥ यद्यपीति ॥ न विशेषणानां सङ्गतिरत्र प्रयोजनान्तरार्थतया उच्यते। किं नाम विशेषणान्तराणि विहायैतैरेव स्तवनस्यासति प्रयोजनविशेषे अनुपपन्नतया तत्सापेक्षत्वात् तस्य च विशेषणसङ्गतिकथनं विना असिद्धेस्तदर्थतयैव। ततश्च न तदानर्थक्यम्। तेन विना नियमप्रयोजनस्यासिद्धेः। नापि विशेषणानां स्तुतिपरत्वभङ्गः। सङ्गतिकथनस्य नियमप्रयोजनार्थत्वेन विशेषणप्रयोजनार्थत्वाभावादित्यभिप्रेत्य समाधत्ते ॥ तथापीति ॥ ननु रमापतिः सर्वत्राखिलसच्छक्तिरित्यादिरूपेण योजनाया वाक्यभेदो दोषः स्यादित्यत आह ॥ अत एवेति ॥ विशेष्यमात्रप्रशंसापरत्वेन विशेषणानां परस्परनिराकाङ्क्षतया एकवाक्यत्वासम्भवादेव न वाक्यभेदो दोष इत्यर्थः।

सम्भवत्येकवाक्यत्वे वाक्यभेदो हि दूषणम्।

इत्यङ्गीकारेणैकवाक्यतासम्भवे तस्य दोषत्वेऽपि तदसम्भवे तस्य गुणत्वेन दोषत्वाभावादिति भावः। यद्वा वक्ष्यमाणरीत्या विशेषणानां विभागे साकाङ्क्षत्वादीश्वरसिद्धिरूपैकप्रयोजनवत्त्वेनैकार्थत्वादेकवाक्यताप्रयोजकरूपद्वयलाभेनैकवाक्यताया विद्यमानत्वादत्र वाक्यभेद एव नास्ति। तस्य दोषत्वं तु दूरनिरस्तमित्यर्थः।

### आगमस्येश्वरे प्रामाण्यसमर्थनम्

(टी) [नन्वीश्वर एव किं प्रमाणं। आगमं तावद्ब्रूमः। श्रूयते हि 'द्यावाभूमी जनयन्देव एकः' इत्यादि। केवलसिद्धार्थबोधकस्य प्रवृत्त्याद्यनङ्गतया वैयर्थ्यप्रसङ्गादागमस्येश्वरे न प्रामाण्यमिति चेत्तत्राह ॥ इष्ट इति ॥ यद्धि यस्येष्टं तत्तं प्रति बोधनीयं नान्यत्। तथा सत्यनुपादेयताप्रसङ्गात्। इष्टश्च रमापतिरिति युक्तमेव तद्बोधनं। न च प्रवृत्त्याद्यनुपपत्तिदोषः। इष्टानुभवस्यैव पुरुषार्थत्वेन ततः प्रयोजनानपेक्षणात्। न हि सुखानुभवस्य प्रयोजनमन्विष्यते। तस्यैव स्वरससुन्दरत्वात्। स्वाश्रिते सुखे दुःखनिवृत्तौ वा लोकानामिष्टव्यवहारः। न चानयोरन्यतरो रमापतिस्तत्कथमसाविष्ट इत्यत आह ॥ नोऽस्माकमिति ॥ यथा खलु केषांचिदिष्टसाधनतामनासादयन्तोऽपि भावाः परेषां तथाभूता दृश्यन्ते तथा लौकिकानामिष्टतामभजन्नपि भगवानुत्तमाधिकारिणामिष्टो भवतीति किमनुपपन्नं। सन्ति खलु तेऽपि पुरुषाः येषामपवर्गोऽपि परमपुरुषावबोधनार्थमेवार्थनीयः। यथोक्तं

(टी)　　　　.　　एकान्तानां न कस्यचित् ।
अर्थे नारायणो देवः सर्वमन्यत्तदर्थकम् ॥ इति ।

**इतरान्प्रत्यपीश्वरस्येष्टसाधनत्वान्न तत्परत्वमागमस्यानुपपन्नं । इष्टवदिष्टसाधनस्यापि बुभुत्सितत्वात् ।**

(वि टि) सर्वत्रेत्यादिविशेषणोपादानेन आचार्यस्येश्वरे प्राधान्येनाऽगम एव प्रमाणत्वेनाभिमतः । तत्प्रामाण्यसमर्थनञ्च इष्ट इति विशेषणेनाभिप्रेतमिति वक्तु तदनुगुणा शङ्का दर्शयति ॥ **नन्विति** ॥ अयमाशय. । न तावदीश्वरे प्रत्यक्ष मानम् । तस्यायोग्यत्वात् । नाप्यनुमानम् । स्वतन्त्रप्रमाणावष्टम्भ विना तस्य स्वार्थसाधकत्वात् । नाप्युपमानम् । तस्य नियतविषयत्वात् । नाप्यर्थापत्ति । ईश्वर विना अनुपपद्यमानस्यार्थस्याभावात् । क्षित्यादिकार्यस्याप्यदृष्टद्वारा अस्मदादित एवोपपत्ते । नाप्यागम । कर्मकाण्डस्य कर्मपरत्वात् । वेदान्तानामपि केषाञ्चिदुपासनापरत्वात् । केषाञ्चित्तु केवलसिद्धार्थत्वेन प्रवृत्त्याद्यनङ्गतया वैयर्थ्येन प्रामाण्यासम्भवात् । हुं फट् इत्यादिशब्दवत् जपमात्रोपयोगित्वेनाध्ययनविध्यापादितपुरुषार्थपर्यवसायित्वोपपत्तेश्चेति ।

वक्ष्यमाणरीत्या आगमप्रामाण्यध्रौव्य मन्वान सिद्धान्ती सामान्यत उत्तरयति ॥ **आगमं तावदिति** ॥ तावच्छब्द क्रमार्थ । अनुमानानामप्यग्रे दर्शयिष्यमाणत्वात् । प्रथम तेषामनुपन्यासम्तु

पृष्टेनाऽगम एवादौ वक्तव्य· साध्यसिद्धये ।

इत्यनुसारात् । तदागमस्याप्रत्यक्षत्वशङ्का वारयति ॥ **श्रूयते हीति** ॥ इत्यादीति नपुसकनिर्देश प्रमाणापेक्षया। आदिशब्देन 'पराऽस्य शक्ति' इत्याद्यसदुदाहृतश्रुतिपरिग्रहः । न चैव श्लोकोपात्तविशेषणमूलतया पराऽस्येत्यादिश्रुतीनामेव टीकायामुदाहर्तव्यत्वे कथं तत्र 'द्यावापृथिवी जनयन्देव एक' इत्याद्युदाहरणमिति वाच्यम् । तदुदाहरणस्य पराऽस्येत्यादिसर्वागमार्थाऽक्षेपकत्वेन लाघवेन तस्यैव तत्रोदाहरणोपपत्तेरित्यवधेयम् । आचार्याशयमविद्वान् शङ्कस्तदभिप्रेतोदाहृताऽगमप्रामाण्य दूषयति ॥ **केवलेति** ॥ माध्यतोपरागरहितस्य प्रवृत्तिनिवृत्त्यजनकतया विगीतप्रयोजनत्वापत्त्या अप्रामाण्यमेव तस्य दुर्वारमिति भाव । आचार्याशयमाविष्कर्तुमाह ॥ **तत्राहेति** ॥ उक्ताऽशङ्काया समाधानमाहेत्यर्थ ।

यद्यपि 'यथार्थं प्रमाणम्' इति केवलानुप्रमाणसाधारणलक्षणानुसारात् 'यथार्थज्ञानं केवलम्' इति तद्विशेषकेवलप्रमाणलक्षणानुसाराच्च हानोपादानोपेक्षारूपयथार्थज्ञानतत्करणाना सर्वेषामप्यविशेषेण प्रामाण्य सिद्ध्यति। न तु पुरुषार्थपर्यवसायिनामेवेति नोदाहृतागमाना वैयर्थ्येऽपि प्रामाण्याभाव शङ्कार्हे । अबोधकत्वाप्रमाजनकत्वरूपाप्रामाण्ये तु तेषामाकाङ्क्षाऽदिमच्छब्दत्वापौरुषेयत्वप्रयुक्तनिर्दोषशब्दत्वाभ्यामेव निरस्ते इति न प्रामाण्याभावे किमपि कारणमस्ति । न हि प्रामाण्यं प्रयोजननियतं। येन तदभावे तन्न स्यात् । किं तु विषयाबाधनियतम् । न हि 'द्यावापृथिवी जनयन् देव एक' इत्याद्यागमार्थेषु किमपि बाधकमस्तीति न किञ्चिदनुपपन्नम् ।

(वि टि) तथापि 'निर्दोषः शब्द आगम' इत्यागमलक्षणानुसारात् प्रयोजन विना नागमप्रामाण्यसिद्धि रिति शङ्कासमाधाने तदनुसारेणैवात्र कृते इति ध्येयम्। अत एव पद्धतौ 'निर्दोष शब्द आगम' इत्यागम लक्षणमभिधाय 'शब्ददोषाश्च निरभिधेयत्वेन अन्वयाभावेन वा अबोधकत्व विपरीतबोधकत्व ज्ञातज्ञापकत्वमप्रयोजनत्वमनभिमतप्रयोजनत्वमशक्यसाधनप्रतिपादन लघूपाये सति गुरूपायोपदेशनञ्च' इति शब्ददोषेष्वप्रयोजनत्वमपि तदप्रामाण्यप्रयोजकतया दोषत्वेन सङ्कीर्तितम्।

इष्ट इत्यस्योदाहृतागमप्रामाण्योपपादकत्वमुपपादयितुमाह ॥ **यद्धीति** ॥ यद्धीष्ट बुभुत्सितं त प्रति तदेव बोधनीय नान्यदित्यर्थ । यद्यपि यद्धि यस्यानिष्टं तदपि त प्रत्युपदिश्यते ततो निवर्ततामिति तथापि यस्य यद्बुभुत्सित तदेव त प्रत्युपदिश्यते नान्यदिति सामान्यव्याप्तिरभिप्रेता। विशिष्य तत्प्रदर्शन तु प्रकृताभिप्रायेणेति द्रष्टव्यम् ॥ **तथा सतीति** ॥ अबुभुत्सितस्याप्युपदेश इत्यर्थ ॥ **न चेति** ॥ न च प्रवृत्त्याद्यनङ्गत्वप्रयुक्तवैयर्थ्यापादितप्रामाण्याभावरूपदोष इत्यर्थ ॥ **इष्टानुभवस्येति** ॥ नन्वत्रानुभवशब्देन स्मृत्यन्यज्ञानमात्रमुच्यते किं वा साक्षात्कार । न प्रथम । यन्न दुःखेन सम्भिन्नमित्यादिवाक्यजन्यज्ञानस्यापि पुरुषार्थत्वापत्त्या तत प्रयोजनान्तरापेक्षाऽभावप्रसङ्गात्। न द्वितीय। 'द्यावापृथिवी जनयन् देव एक' इत्याद्यागमेन रमापतेर्निरुपाधिकेष्टत्वेऽपि तत्साक्षात्काराजननात्। तथा च तद्वैयर्थ्यप्रसक्तादवस्थ्य तत्प्रयुक्ताप्रामाण्यतादवस्थ्य श्चेति। उच्यते। अत्रेष्टानुभवपदेन स्वसम्बन्धिवर्तमानेष्टज्ञानमात्रं विवक्षितम्। न चातिप्रसङ्ग। इष्टरूपेश्वरस्य व्यापकतया सर्वसम्बन्धित्वेन सर्वदा वर्तमानत्वादिति वाच्यम्। ईश्वरस्य परमैकान्तिन प्रतीष्टत्वेन तदितरान् प्रतीष्टसाधनत्वेनैव पुरुषार्थत्वेन निरुपाधीष्टत्वेन पुरुषार्थत्वाभावात्। शत्रुसुखस्य सुखत्वेन पुरुषार्थत्वेऽपि स्वीयत्व प्रयोजकसम्बन्धविशेषाभावेनापुरुषार्थत्ववदीश्वरस्यापि तत्त्वेन पुरुषार्थत्वेऽपि परमैकान्तिषु तस्य यादृशसम्बन्ध विशेषेण तदीयत्व तदितरेषु तदभावेन तान्प्रत्यपुरुषार्थत्वोपपत्ते.। वक्ष्यत्येतत्सप्रमाणकमनुपदमेवेति ॥ **स्वाश्रित इति** ॥ यद्रूपावच्छिन्न[1]ज्ञान सत् स्ववृत्तितयेष्यते तद्धि लोकाना निरुपाधीष्टव्यवहारगोचर । तद्रूपं च सुखत्व दुःखविरहत्वं वा नान्यत्। न चेश्वरत्व तथेत्यत्र मानमस्ति। न च रमापतिरूपेश्वरस्तयोरन्यतर । येन स्वत पुरुषार्थ स्यात्। तथा च कथं तदनुभावकत्वेऽप्युक्ताऽऽगमप्रामाण्यनिर्वाह इति शङ्काभिप्राय । यद्यपि 'विज्ञानमानन्द ब्रह्म' 'यो वै भूमा तत्सुख' इत्यादिश्रुत्या रमापते सुखरूपत्वाऽवेदनेनास्त्येव सुखदुःखाभावयोरन्यतरत्वम्। तथा

य आत्मनि तिष्ठन्

एक एव तु भूतात्मा भूते भूते व्यवस्थित ।

इति तस्य स्वाश्रितत्वञ्च श्रुतम्। तथापि सुखदुःखाभावयोरिव भगवतः सम्बन्धविशेषेणैकान्ताश्रितत्वे प्रमाणाभावेन तस्य तान् प्रति न तेन रूपेणेष्टत्वमिति ध्येयम्।

---

[1] सुखदुःखाभावयोरन्यतरत् ज्ञात सत् इति पाठेन भाव्यमिति भाति।

(वि. टि.) ननु इष्टो नो रमापतिरित्यस्माद्रमापतिरिष्टो नेति प्रतीते कथ तद्बोधकत्वेऽप्यागमस्येष्टबोधकत्वेन प्रामाण्यसिद्धिरिति भ्रान्ति निवारयितु नायमोदन्तो निपात प्रतिषेधार्थ । कि तु षष्ठीस्थास्मच्छब्दस्य बहुवचनस्य वस्नसाविति वसादेशोऽयमिति ज्ञापनायाह ॥ नोऽस्माकमिति ॥ द्वितीयास्थास्मच्छब्दबहुवचनरूपत्वेऽनन्वय । रक्षत्वित्यध्याहारे च स एव दोष इति भाव । 'न केवलं ममैव रमापतिरिष्ट । कि तु मत्समानशीलाना सर्वेषामिति स्वाशयज्ञापनाय नः इत्याचार्येण षष्ठीबहुवचनान्तनिर्देश कृत ' इति अनेन व्याख्यानेन भावितम् ।

नन्वीश्वरस्य सुखादे सुखत्वादिनेव रमापतित्वादिना स्वरससुन्दरत्वे [1]तदेव प्राणभृन्मात्र प्रत्यपीष्टत्वप्रसङ्ग । उत्तमाधिकारिण प्रत्येवेत्यस्यासम्भावितत्वादित्यशङ्क्य [2]अगस्त्यसमुद्रपानवत् कामधेनो प्रसादादुद्गिरणवच्च असम्भावितमपि प्रमाणसिद्धत्वात्स्वीकार्यमेव । किमुत सम्भावित प्रामाणिकञ्चेत्यभिप्रेत्य पदार्थेषु वैचित्र्यदर्शनात् पुरुषविशेषान् प्रत्येवेश्वरस्येष्टत्व सम्भावितमिति वक्तु तदनुरूपदृष्टान्तं तावदाह ॥ यथा खल्विति ॥ भवन्तीति भावा पदार्था । तथाभूता इष्टसाधनतामासादयन्त । लौकिकानामनुत्तमाधिकारित्वेन लोकविदिता नाम् । इष्टता निरुपाधीष्टनाम् । ननु रमापतिर्निरुपाधीष्टश्चेत् सुखादिवत्सर्वान् प्रत्यपि तथा स्यात् । न चेद्घटादिवत् काश्चित् प्रत्यपि न स्यात् । विशेषनियामकाभावादित्युक्ताशङ्कानिवारणायात्र भगवानित्युक्तम् । अनेन

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशस श्रिय ।
ज्ञानवैराग्ययोश्चैव षण्णा भग इतीरणा ॥

इति भगवच्छब्दप्रवृत्तिनिमित्ततयोक्त समग्रैश्वर्यमेव तत्र विशेषनियामकमिति भावितम् । मनुष्यान् प्रतीष्टविशेषसाधनत्वस्वरूपायोग्या अपि तृणादिपदार्था पश्वादीन् प्रत्येव यथा इष्टविशेषसाधनत्वस्वरूपयोग्या दृश्यन्ते एवमनुत्तमाधिकारिणा निरुपाधीष्टनामभजन्नपि भगवानैश्वर्यविशेषवशात् उत्तमाधिकारिणा निरुपाधीष्टो भवतीति किमनुपपन्नमिति यथा खल्विति वाक्यस्य निर्गलितोऽर्थ ।

नन्वेव पुरुषवैचित्र्यदर्शनात् काश्चित्प्रत्येवेश्वरस्य निरुपाधीष्टत्वे तद्वदपवर्गादिकमपि तान् प्रति निरुपाधीष्ट न स्यादित्याशङ्क्येष्टापत्त्या परिहरति ॥ सन्ति खल्विति ॥ अपवर्ग इति ॥ [3]अनाद्यविद्याकाम्यकर्मादिरूपोपप्लवहेतूच्छेदरूप इत्यर्थ ॥ परमेति ॥ पुरुषस्य परमत्वमुत्तमत्वम् । तच्च कल्याणगुणपूर्णत्वेनेति [4]कल्याणगुणविशिष्टतया परमपुरुषार्थावबोधार्थमित्यर्थ । सुखदुःखाभावयोरन्यतरत्वाभावेऽपि रमापति काश्चित्प्रत्येव निरुपाधीष्ट इत्यत्रैव कि मानमित्यतस्तत्र प्रमाण वक्तुमाह ॥ यथोक्तमिति ॥ एकस्मिन् ईश्वरे अन्तो निरुपाधीष्टत्वनिश्चयो येषा । कस्यचिदर्थे कस्मैचित्प्रयोजनाय । नारायणो दोषविरुद्ध सकलकल्याणगुणाश्रय । देवो न उपास्यो न । दीव्यते गम्यते ज्ञायते स्तूयत इति वा देव । सर्वमन्यत् श्रवणमनननिदिध्यासनसाक्षात्कारतत्साध्यमोक्षकालीनकर्मानुष्ठानादिकमन्यत्सर्व भगवद्गुणानुभवैकप्रयोजनमिति तद्वचनार्थ ।

---

[1] तस्यैव इति पाठेन भाव्यमिति भाति [2] अगस्त्यस्य इति पाठेन भाव्यमिति भाति

[3] अनाद्यविद्याकाम इति पाठेन भाव्यमिति भाति

[4] कल्याणगुणपूर्णतया परमपुरुषावबोधार्थमित्यर्थ इति पाठेन भाव्यमिति भाति

(वि. टि.) ननु द्यावापृथिवी जनयन्नित्यादेर्निरुपाधीष्टेश्वरबोधकत्वेन पुरुषविशेषान् प्रत्युपादेयत्वेऽपि नास्मदादीन् प्रति तस्योपादेयत्वं स्यादित्यत आह ॥ **इतरान् प्रत्यपीति** ॥ **तत्परत्वमिति** ॥ तत्प्रतीतिप्रयोजनकत्वमित्यर्थः। नन्वीश्वरस्येतरान् प्रति निरुपाधीष्टत्वाभावे बुभुत्सितत्वायोगात्तत्प्रतिपादकागमस्य वैयर्थ्यं तदवस्थमित्यत आह ॥ **इष्टवदिति** ॥ अन्यथा 'स्वर्गकामो यजेत' इत्याद्यागमानामपि वैयर्थ्यं स्यात्। एतावांस्तु विशेषः। यागादिरूपेष्टसाधनं स्वरूपेण कृतिसाध्यम्। भगवत्स्वरूपं तत्प्रसादविशिष्टतयेति। ईश्वरस्यापवर्गादिरूपेष्टसाधनत्वं

'संसारमोक्षस्थितिबन्धहेतुः' 'त्वं मुक्तिदो बन्धदोऽतो मतो मे'

इत्यादिश्रुतिसिद्धमिति न तत्र विवदितव्यमिति भावः। यद्यप्यत्रेश्वरस्य संसाराद्यनिष्टहेतुत्वमपि श्रूयते तथापीश्वरस्य पित्रादिवत् परमहितैषितयोपादेयत्वमेव। अन्यथा कष्टं कर्मेति न्यायेन ज्योतिष्टोमादीनामप्यनुपादेयत्वमेव स्यादिति ध्येयम्।

(रा. टि.) वक्ष्यमाणानुमानस्यानुग्राहकमाह ॥ **आगमं तावदिति** ॥ **इत्यादीति** ॥ 'एको दाधार भुवनानि विश्वा' 'उक्षा स द्यावापृथिवी बिभर्ति' 'यत्प्रयन्ति' 'आत्मानमन्तरो यमयति' इत्यादिरादिपदार्थः ॥ **केवलेति** ॥ कार्यानन्वितकृत्यसाध्यरूपार्थे इत्यर्थः ॥ **तथा सतीति** ॥ इष्टादन्यस्य बोधने इत्यर्थः। **शङ्कते** ॥ **स्वाश्रित इति** ॥ स्वीयमनोगत इति वा धनीतिवन्मनोगतं प्रति स्वामितासम्बन्धेन स्वाश्रित इति वा पररीत्या वा स्वाश्रित इत्युक्तिः ॥ **केषाञ्चिदिति** ॥ उष्ट्रादीनामिष्टसाधनताविधुरा कदलीफलादयोऽन्येषामिष्टसाधनभूता दृश्यन्त इत्यर्थः ॥ **यथोक्तमिति** ॥ **गीताभाष्ये** सप्तमान्ते। ग्रन्थकर्ता च ऋजुगणत्वादेकान्त इत्यर्थः।

(वे. टि.) किमपि प्रयोजनमभिधीयत इत्युक्तं। तद्वक्तुमाक्षिपति ॥ **नन्विति** ॥ ग्रन्थो हि वादप्रक्रियया प्रवर्तते। वादे च

पृष्टेनाऽऽगम एवादौ वक्तव्यः साध्यसिद्धये।

इत्यागमस्यादौ वक्तव्यत्वोक्तेरागममेवादावाह ॥ **आगममिति** ॥ मङ्गलस्य समाप्तिहेतुतावबोधकश्रुतिवन्नायमनुमेय इत्याह ॥ **श्रूयते हीति** ॥ **केवलसिद्धार्थेति** ॥ स्वप्रधानतया कार्यत्वातिरिक्तार्थबोधकस्येत्यर्थः। कार्यान्वितसिद्धार्थबोधकत्वं त्वनुमतमिति भावः ॥ **प्रवृत्त्याद्यनङ्गतयेति**। यद्यपि बोधकत्वेन प्रामाण्यं तथापि वाक्यप्रयोगस्य परार्थत्वात्परप्रवृत्तिनिवृत्त्यौपयिक एवार्थो वाक्यबोध्योऽङ्गीकार्यः। कार्यमेव तथाविधं। कार्यवाचिपदोपेतवाक्यात्प्रवृत्त्यादेर्दर्शनात्। तच्छून्यवाक्याच्चादर्शनादिति भावः। सिद्धार्थबोधकवाक्यस्य वैयर्थ्यं वदतो मते कार्यताबोधकत्वेन प्रामाण्यमभिमतं। कार्यताबोधस्य प्रवृत्त्याद्यङ्गत्वात्। कार्यता [1]चेष्टसाधनतातिरिक्ता न काचिदित्यन्यत्रोक्तं। तथा चेष्टरूपपरमात्मबोधकस्यागमस्य कार्यताबोधकत्वेनैव प्रामाण्यमुपपन्नमित्यभिप्रेत्याह ॥ **यद्धि यस्येष्टमित्यादिना** ॥ प्रवृत्त्याद्यनङ्गतयेत्युक्तं दोषं परिहरति ॥ **न चेति** ॥ प्रवृत्त्याद्यनुपपत्तिदोषश्च नेति सम्बन्धः ॥ **इष्टानुभवस्यैवेति** ॥ अत्रेष्टानुभवपदेन स्वसम्बन्धिवर्तमानेष्टज्ञानमात्रं विवक्षितं। तेनात्रानुभव-

[1] चेष्टेष्टसाधनतातिरिक्ता इति पाठेन भाव्यमिति भाति।

(वे टि.) पदेन स्मृत्यन्यज्ञानमात्रमुच्यते साक्षात्कारो वा। नाद्य। 'यन्न दु खेन सम्भिन्नं' इत्यागमजन्यज्ञानस्यापि पुरुषार्थत्वापत्त्या तत प्रयोजनान्तरापेक्षाभावप्रसङ्गात्। न द्वितीय। प्रकृतेऽपि 'द्यावाभूमी' इत्याद्यागमेन रमापतिरूपेष्टसाक्षात्काराजननात् तद्वैयर्थ्यप्रसङ्गस्तदवस्थ इति निरस्तमित्याहु ॥ ततः प्रयोजनानपेक्षणादिति ॥ अय भाव। परप्रयोजनोपयुक्तमेव वाक्य प्रमाणमिति सन्त। परप्रयोजन च परस्यापेक्षितमेव भवति। परश्च मुख्यतयेष्टमनिष्टनिवृत्तिं वा अमुख्यतया तत्साधन वा अपेक्षते। न प्रवृत्तिनिवृत्ती। क्लेशरूपत्वात्। प्रवृत्त्याद्यर्थवाक्यानामपीष्टसाधनज्ञानार्थत्वेनैव सार्थकत्वाच्च। यथोक्तमनुव्याख्याने।

> इष्टमाकाङ्क्षते सर्वो न प्रवृत्तिमपेक्षते।
> अपरोक्ष परोक्षं वा ज्ञानमिष्टस्य साधन ॥
> क्वापि चेष्टा तदर्था स्यात् । इति।

अत परमेष्टेश्वरानुभवस्यैव परैरर्थ्यत्वान्मुख्यप्रयोजनत्वेन तत प्रयोजनान्तरानपेक्षणान्न तत्परागमवैयर्थ्यमिति। केषाञ्चित्ज्वराद्युपेताना। भावा क्षीराद्य पदार्था। परेषा ज्वरादिरहिताना। नन्वेकान्तभक्तानामागमस्येष्टबोधकत्वेनोपादेयत्वेऽपि मध्यमभक्तानुपादेयत्व स्यात्। तान्प्रतीश्वरस्येष्टत्वाभावादित्यत आह ॥ इतरान्प्रत्यपीति ॥

> नारायणस्तु मोक्षार्थी मोक्षो नान्यार्थ इष्यते।
> इति मध्यमभक्ताना ॥ इत्युक्तेरित्यर्थ।

(द्वै द्यु) 'असन्नेव स भवति' इत्यादिना जीवविलक्षणेश्वरमजानता जानता निंदास्तुत्यो श्रवणात्प्रामाणिकत्वेन ज्ञानस्यैव तज्ज्ञानदार्ढ्यसम्पादकत्वात् प्रमाणज्ञानपूर्वकं ईश्वरानुसन्धानस्य विशेषप्रसादहेतुत्वसूचनाय पदाना प्रमाणसूचकत्वमाचार्याभिप्रेतमित्याशयेन प्रमाणसूचकतया पदानि व्याख्यातु शङ्कते ॥ नन्विति ॥ एतेनैतच्छ्लोकस्य मङ्गलाचरण ग्रन्थारम्भे कर्तव्यमिति शिष्यान् बोधयितु प्रवृत्तत्वेन तेषामीश्वरसद्भावे संशयाद्यभावेन संशयसत्त्वे वा एतावन्मात्रेणानिरासेन तान् प्रति प्रमाणसूचनमकिञ्चित्करमित्युक्तव्याख्यानमसङ्गतमिति शङ्कानवकाश। उक्तरीत्या प्रामाणिकत्वेनानुसन्धान ग्रन्थारम्भे कर्तव्यमिति सूचनार्थमित्युक्तत्वात्

> पृष्टेनाऽऽगम एवादौ वक्तव्य. साध्यसिद्धये

इत्युक्तेरागममेवादावाह ॥ आगममिति ॥ मङ्गलसमाप्तिकारणताबोधकश्रुतिरिव नानुमेयेयमित्याह ॥ श्रूयते हीति ॥ वैयर्थ्यप्रसङ्गादिति ॥ पदाना कार्यान्वित एव शक्तत्वे अबोधकत्वप्रसङ्गात् सिद्धे शक्तत्वेपीश्वरप्रधानकत्वे सफलत्वघटितप्रामाण्याभावप्रसङ्गादित्यर्थ। प्रवृत्त्याद्यनङ्गत्व तु बालव्युत्पत्तिप्रयोजकप्रयोज्यवृद्धप्रवृत्त्यभावसम्पादनेन कार्यातिरिक्तार्थे व्युत्पत्त्यभावे तत्सत्त्वेपि सफलत्वघटितप्रामाण्याभावे चेत्युभयत्र हेतुत्वेनाभिमतम्। अत एव सुधायां सिद्धार्थबोधकत्वे वाक्यपर्यवसानरूपप्रामाण्याभावमभिधाय कार्यातिरिक्तार्थे व्युत्प-

(द्वै द्यु) त्यभाव पूर्वपक्षे किं चेत्यादिना पृथगभिहित । समाधानेऽपि सिद्धार्थकत्वेऽपि प्रामाण्यमुपपाद्य कार्यातिरिक्तार्थे व्युत्पत्त्यभावो निराकृत इत्यवधेयम् ॥ ईश्वरे न प्रामाण्यमिति ॥

ननु ईश्वरपरत्वेन प्रतीयमानानामप्यागमानामपौरुषेयत्वेन प्रामाण्यस्य दुर्वारतया कार्यशेषतयैतन्मते प्रामाण्यस्य वक्तव्यतया यूपाहवनीयादिवत्कार्यशेषतयैवेश्वरसिद्धिर्दुर्वारैवेति चेन्न । कार्यशेषतयापि कार्ये एव विनियुज्यमान एवार्थे वाक्यस्य तात्पर्याद्यूपाहवनीयादिसिद्धि । कार्ये अविनियुज्यमाने वाक्यात्प्रतीयमाने वाक्यतात्पर्ये बीजाभावेन तेषा कार्ये विनियुज्यमानजीवपरत्वमेव कथञ्चिद्वाच्यमतो नेश्वरसिद्धिरित्याशयात । वाक्याना पराभिमतकार्यपरत्वेनैव प्रामाण्यमिति नास्त्येव । सिद्धार्थपरादपि व्युत्पत्तेराकरे उपपादितत्वात् ।

कार्यपरत्वेऽपि इष्टेष्टसाधनान्यतरत्वावच्छिन्नस्य इष्टसाधनस्यापीष्टतयेष्टत्वावच्छिन्नस्य वा कार्यरूपत्वात्पदाना तदन्वितस्वार्थबोधन एव तात्पर्यं । इत्थ चेष्टरूपेश्वरान्विततया सर्ववेदाना बोधकत्वोपपत्तिः । ईश्वरस्य तु स्वप्रधानतयैव वेदेन सिद्धिरित्याशयेन मूले इष्ट इत्युक्तम् । नन्विदमयुक्तम् । सर्वमपीष्टमेव । चैत्रस्य यथा स्वसुख 'भवतु' इत्याकारेच्छाविषयीभूत तथा दु खमपि 'मम न भवतु' इत्याकारेच्छाविषयीभूतम् । एव चैत्रदु - खस्य चैत्रद्वेषिमैत्रसम्बन्धिनी 'चैत्रस्य भवतु' इत्याकारा या इच्छा तद्विषयत्वं वर्तत इतीष्टत्वस्य केवलान्वयित्वेना व्यावर्तकत्वादिष्टान्वित एव पदाना शक्तिरिति नियमो न सङ्गच्छते । न च स्वसम्बन्धित्वेनेच्छाविषयत्व तत् । सामान्यत सम्बन्धित्वस्य द्वेषिदु खेऽपि सत्त्वेनोक्तदोषा रिहारात् । स्ववृत्तित्वेनेष्टत्वस्य स्वस्मिन्नुत्पद्यमानत्वेनेच्छाविषयत्वस्य वा पुत्रादिसम्बन्धिसुखादावभावेन तेषामनिष्टत्वापातेन तद्बोधकवाक्यस्यानुपादेयत्वप्रसङ्गात् । ईश्वरे उत्तमाधिकारिवृत्तित्वस्य सिद्धत्वेन उत्पद्यमानत्वस्य च बाधितत्वेन तेषा तथेच्छानुत्पत्त्या तान् प्रतीश्वरस्येष्टत्वोक्तेरयुक्तत्वापाताच्च । तस्मादिष्टत्वस्य दुर्निरूपतया तद्बोधकतया वाक्याना प्रामाण्योक्तिरयुक्तेत्यत आह ॥ यद्धि यस्येष्टमिति ॥ इष्टं स्नेहविशेषविषयीभूतम् । अनुपादेयत्व तत्पुरुषवृत्तीच्छाविषयत्वाभाववत्स्वतात्पर्यविषयीभूतबोधकत्वम् । तत्प्रसङ्गात्तत्पूर्वकमप्रामाण्यप्रसङ्गादित्यर्थ । ॥ इष्टश्चेति ॥ इष्टत्व तु जिज्ञासाजननद्वारा वाक्यस्योपादेयत्वे नियामकम् ।

अय भावः । सर्वान् प्रति सर्वस्य नेष्टत्वम् । एकैकं प्रत्येकैकस्येष्टत्वमिति रीत्येष्टत्व केवलान्वयीति सत्यम् । तथापि वाक्यप्रामाण्यस्य पुरुषकालादिभेदेन व्यवस्थितत्वेन तत्प्रयोजकेष्टत्वमपि व्यवस्थितमेव । तथा हि । विरक्तं प्रति वाणिज्योपदेशपरवाक्यमप्रमाणम् । रक्तं प्रति तु प्रमाणम् । एकस्यैव पुरुषस्य दशाकालभेदेनापि रक्ताविरक्ततयो सम्भवात् कालभेदेनापि व्यवस्थितम् । इदं वाक्यमिदानीमेतत्पुरुष प्रति प्रमाणं न तदेति सर्वसिद्धव्यवहारात् । न च तथात्वे वस्तुनोऽपि पुरुषभेदेन व्यवस्थया विरुद्धधर्माक्रान्तत्व स्यात् । अन्यथा पुरुषान्तरं प्रत्यप्रमाणत्वानुपपत्तेरिति वाच्यम् । अप्रमाणत्वं न भ्रमजनकत्वरूप प्रकृते व्यपदिश्यते । किं तु स्वतात्पर्यविषयीभूतयथार्थबोधोपधायकत्वाभाव । व्यपदिश्यमानप्रामाण्यस्यापि तत्प्रतियोगिरूपत्वात् । एतादृशप्रामाण्याप्रामाण्यनिर्वाहाय न वस्तुनो विरुद्धधर्मद्वयालिङ्गितत्वमपेक्षितम् । किं तु श्रोतुस्तद्वाक्यार्थस्य सामान्यतस्त-

(द्वै द्यु.) स्काले बोध्यत्वेनेष्टत्वमनिष्टत्वम्। तत्रापि पुरुषविशेषनिष्ठस्नेहविषयत्वं तत्साधनत्वं च प्रयोजकम्। लोके तादृशानामेव प्रायो जिज्ञासितत्वेन विषयान्तरसञ्चाररहित्यद्वारा तद्वाक्यार्थबोधानुकूलशक्तितात्पर्यज्ञानादिद्वारा बोधोदयात्। न चाजिज्ञासितस्वनिन्दापरवाक्येन दैवाच्छ्रुतेन बोधस्यानुभवसिद्धत्वेन कथमजिज्ञासिताभिधायक वाक्यस्यार्थबोधोपधायकत्वं नास्तीत्युच्यत इति वाच्यं। यत्किंचिद्वाक्यैकदेशजन्यबोध एव तथा जायते। नानावान्तरवाक्यघटितमहावाक्यार्थबोधस्तु नैव जायत इत्यनुभवेनैव तादृशनियमाङ्गीकारात्। प्रकृतेऽनुपादेयत्वप्रसङ्गस्तादृशमहावाक्यस्यैवापाद्यत इति।

यद्वा सफलयथावस्थितार्थविषयकबोधजनकत्वलक्षणप्रामाण्यलक्षणोपादेयत्वस्याभावप्रसङ्गादित्यर्थः। वक्ता खलु 'श्रोतुः स्ववाक्यजन्यबोधेन साक्षाद्वा तद्विषयानुष्ठानद्वारा वा सुखदुःखावाप्तिहान्यादिकं भवतु' इति बुद्ध्या वाक्यं प्रयुङ्क्त इत्यनुभवसिद्धं। प्रतिपाद्यस्य श्रोतृसम्बन्धिप्रेमविषयत्वरूपतदिष्टत्वाभावे उक्तप्रकारद्वयेन ज्ञानस्य सफलत्वाप्राप्त्या वाक्यस्यानुपादेयत्वं स्यादिति भावः। नन्वेतद्वाक्यस्यानुपादेयत्वापादनं वक्तुर्भ्रान्तत्वापादने पर्यवसन्नम्। श्रोतुरिष्टबोधजनकत्वबुद्ध्या वक्त्रा वाक्यस्य प्रयुक्तत्वात्। वेदे तादृशानुपादेयत्वसत्त्वे किं बाधकम्। तत्र वक्तुरभावादिति चेन्न। तत्रापि पुरुषाभिप्रायनिवेशस्य सिद्धत्वेन तेषामेव भ्रान्तत्वापादने पर्यवसानात्। तस्य चानिष्टत्वात्। नन्वेतत्कल्पे नानावान्तरवाक्यघटितमहावाक्यात्मकस्य स्वानपेक्षितार्थबोधकग्रन्थस्यापि स्वं प्रति बोधकत्वमङ्गीकृतं स्यात्। परं तु तदर्थस्यानपेक्षितत्वेनाजिज्ञासिततया तद्बोधस्य साक्षाद्वा विषयानुष्ठानद्वारा वा फलापर्यवसायितया तद्वाक्यजातं तत्पुरुषं प्रत्यनुपादेयमिति वक्तव्यम्। तच्चानुभवविरुद्धम्। एतद्ग्रन्थे किमुक्तं तज्जानीयामिति तदर्थजिज्ञासया ग्रन्थश्रवणे प्रवृत्तेस्तेन बोधस्य चानुभवसिद्धत्वादिति चेत् सत्यम्। एवमपि तदनिष्टाभिधायकवाक्यत्वस्य तं प्रत्यनुपादेयत्वव्याप्यत्वे व्यभिचाराभावात्। तद्ग्रन्थस्यान्योद्देशेन प्रवृत्तत्वेनान्यपुरुषं प्रत्युपादेयत्वेऽपि तत्पुरुषं प्रति सफलबोधानुपधायकत्वेनानुपादेयत्वस्य सर्वसम्मतत्वात्।

नन्वेवमपीष्टस्यैव जिज्ञासितत्वमिति नियमे व्यभिचारो दुर्वारः। स्नेहाविषयस्यापि तद्ग्रन्थप्रतिपाद्यस्य जिज्ञासितत्वादिति चेन्न। न हीष्टत्वमेव जिज्ञासाया प्रयोजकमिति टीकायामुक्तम्। येनास्य व्यभिचारप्रसक्तिः। किं तु यद्धि यस्येष्टमित्याद्येवोक्तम्। तत्पर्यवसितस्य पूर्वोक्तनियमस्य व्यभिचाराभाव उपपादित एव। एवं च प्रतिपाद्ये इष्टत्वं तु बाहुल्यकत्वाभिप्रायेण जिज्ञासासम्पादकतयोक्तम्। एवं च भवदुक्तस्थले कारणान्तरेण जिज्ञासाजननेऽप्यस्मदभिमतार्थे न किञ्चिद्बाधकम्। अधिकमन्यत्रानुसन्धेयमित्यलम्।

अत्र स्नेहो नाम सिद्धपदार्थेष्वपि एतत्सत्ता सार्वकालिकी भवत्वित्याकारा संवादिविसंवादिसाधारणी इच्छा वा तत्प्रयोजकगुणान्तरं वेति न नः काचित्क्षतिः। अनुव्याख्यानसुधयोरपि एतादृशेष्टेष्टसाधनत्वयोर्वाक्यपर्यवसानोपयोगित्वं स्वरूपसतोरेव जिज्ञासासम्पादनद्वाराभिप्रेतम्। न तु वाक्यबोध्यतयेति सम्यक् तद्ग्रन्थविमर्शे लभ्यते। इष्टत्वस्य स्नेहविषयत्वरूपत्वं तु अनुव्याख्याने प्राणबुद्धीत्यादिस्मृतेः पुत्रात्प्रेय इत्यादिश्रुतेश्चो-

(द्वै ध्य) दाहरणपूर्वकं भगवत इष्टत्वोपपादनेन स्फुटीकृतम्। अतो नोक्तार्थे तद्विरोध इत्यादिकं बहुतरमनुसन्धेयमित्यलमप्रस्तुतविचारेण।

॥ **न च प्रवृत्तीति** ॥ ईश्वरमुख्यविशेष्यकबाधस्य प्रवृत्त्याद्यहेतुतया तदभिप्रायकत्वे वाक्यानामबोधकत्व सफलत्वघटितप्रामाण्याभावश्चेत्येतद्रूपदूषणद्वयं पूर्वपक्ष्यमिहित नेत्यर्थः। कथमित्यत इष्टपदसूचितमेव वदन् परिहारं स्फुटीकरोति ॥ **इष्टानुभवस्यैवेति** ॥ अत्रानुभवपदं ज्ञानमात्रपरम्। परमस्नेहविषयीभूतार्थस्मरणस्याप्यानन्दहेतुतया अनुभवसिद्धत्वात्। **अनुभवस्यैव** अनुभवत्वरूपसामान्यधर्माक्रान्तस्यैव। एवकारेण प्रवृत्तिजननोपयोगित्वरूपविशेषणविशेषितस्यैवेतिनियमव्यवच्छेदः। **पुरुषार्थत्वेन** पुरुषेच्छाविषयत्वेन। ननु सुखमित्यादिस्मरणानां पुरुषार्थत्वापत्तिरिति चेन्न। न ह्येतद्ग्रन्थेनेष्टज्ञानसामान्यमिच्छाविषयीभूतमिति नियमो बोध्यते। किं तु प्रवृत्त्याद्यजनकत्वेन निश्चितमपीष्टविशेषविषयकं ज्ञानं प्रवृत्तिहेतुत्वेनानुसन्धीयमानमननुसन्धीयमानं वा पुरुषेच्छाविषयीभूतं भवतीत्यस्यानुभवसिद्धत्वेन प्रवृत्त्यादिजनकत्वेनानुसंहितमेव ज्ञानमिच्छाविषय इति परोक्तनियमस्य व्यवच्छेदमात्रं क्रियते। स (व्यवच्छेद) श्चैकस्यापि वा ज्ञानस्य पुरुषार्थत्वेऽप्युपपादितो भवति। इत्थं च सुखमित्यादिस्मरणानां पुरुषार्थत्वापादनस्य कः प्रसङ्गः। इष्टविषयकेष्वपि ज्ञानेषु केषाञ्चित्प्रवृत्त्याद्यजनकानामपीच्छाविषयत्वमन्येषां नेति तु अननुगतकारणकलापात् स्नेहरूपेष्टत्ववत् इति ज्ञेयम्।

॥ **ततः प्रयोजनान्तरानपेक्षणादिति** ॥ बोधसाध्यप्रवृत्त्यादेरवश्यमनपेक्षणादित्यर्थः। 'न प्रवृत्तिमपेक्षते' इत्युक्ते। परोक्तनियमस्य व्यभिचारमुपपादयति ॥ **न हीति** ॥ **अनुभवस्य** साक्षात्कारस्य। **प्रयोजनं**[1]प्रवृत्त्यादिजनकम्। **अन्विष्यते** सुखसाक्षात्कारेच्छापूर्वकाले गृह्यते। तथा च सुखसाक्षात्कारे परोक्तनियमस्य व्यभिचार इति भावः। हिशब्दो व्यभिचारस्य स्फुटतामाह। न च घटादिज्ञानादौ प्रवृत्त्यादिजनकत्वाद्यनुसन्धानेनैवेच्छोत्पत्तेर्बहुलमुपलम्भेन तादृशानुसन्धानेच्छयोः कार्यकारणभावावधारणादत्रापि पूर्वं जनकत्वानुसन्धानं कल्प्यते। न चोक्तस्थले व्यभिचारस्फूर्त्या कार्यकारणभावग्रह एव न सम्भवतीति वाच्यम्। वस्तुज्ञानत्वाविशेषे घटादिबहुपदार्थज्ञानापेक्षया सुखसाक्षात्कारे विशेषकल्पने गौरवमित्यनुकूलतर्कसाहित्येन व्यभिचारज्ञानस्य विधूननादित्यत आह ॥ **तस्यैवेति** ॥ सुखस्यैवेत्यर्थः। एवकारेण घटादिव्यवच्छेदः। स्वस्य सुखस्य यो रसोऽसाधारणधर्मः सुखत्वं। तेन सुन्दरत्वात् तत्प्रयोज्यनिरुपाधिकेष्टत्ववत्त्वात्। अस्य नान्विष्यत इति पूर्वेण सम्बन्धः। अस्य च वक्ष्यमाणरीत्या परम्परया हेतुत्वं। घटादीनां घटत्वादिना ज्ञानमात्रान्न तत्रेच्छा स्नेहो वा। किं तु इष्टसाधनत्वेन गृह्यमाणेष्वेव। अतो न तत्र निरुपाधिकेष्टत्वम्। सुखादौ तु सुखत्वग्रहमात्रेण तत्र स्नेह इच्छा वा। न तु स्नेहान्तरेच्छान्तराधीनत्वं तयोः। तथा च घटादिसुखादिरूपविषययोर्निरुपाधिकेष्टत्वाभावतत्त्वाभ्यां तत्साक्षात्कारयोरुक्तवैचित्र्यात्सुखसाक्षात्कारेच्छापूर्वं तत्साक्षात्कारे प्रवृत्त्यादिसाधनता न गृह्यत इति भावः। तथा च सुखसाक्षात्कारादौ घटादिसाक्षात्कारादिवैलक्षण्यस्य निरुपाधिकेष्टविषयकसाक्षात्कारत्वादिव्यतिरेकिहेतुसिद्धत्वेनानुभवसिद्धत्वेन च कल्पनाभावात्तन्मूलककल्पनागौरवरूपतर्कस्यानुत्थितिरेवेति हृदयम्।

---

[1]प्रवृत्त्यादिजनकत्वं इति पाठेन भाव्यमिति भाति।

(द्वै द्यु) यद्वा सुखसाक्षात्कारे प्रवृत्त्यादिसाधनत्वज्ञानमन्तरा तत्रेच्छा कुत इति तटस्थशङ्कानिवृत्तये तत्र प्रयोजकमाह ॥ तस्यैवेति॥ सुखादिसाक्षात्कारत्वावच्छिन्नस्यैव। एवकारेणेष्टसाधनत्वादिविशेषणावच्छिन्न त्वस्य व्यवच्छेद। स्वरसेन सुखविषयकत्वरूपस्वासाधारणधर्मेण। सुन्दरत्वात् घटादिसाक्षात्कारविलक्षणत्वात् तत्रोक्तेच्छोपपत्रेति शेष। सुखविषयकत्वमेव तत्र बीजमिति भाव।

ननु प्रवृत्यादिजनकत्वेनानुसन्धीयमानमेव ज्ञानमिच्छाविषय इति नियम किंनिबन्धन परस्य। येन तद्दूषणप्रयत्नो भवता सार्थक स्यादिति चेन्मैवम्। सित्धार्थबोधकस्य सफलत्वघटितप्रामाण्य नास्ति। किं तु कार्यबोधकस्येति वदता इत्थ वक्तव्यम्। [1]सुखदु खहान्यादिक फलम्। तस्य साक्षाद्वाक्यजन्यत्वाभावात् बोधप्र त्यादिद्वारा तत्साध्य तत्। स्वप्रयोजकेच्छातरानधीनेच्छाविषय परमफलम्।[2] तदिच्छाधीनस्वप्रयोजकेच्छा-विषयोऽवान्तरफलम्। श्रोता हि क्रियाविशेषानुष्ठातुरेव सुखाद्युपलम्भात्तूष्णी स्थितस्य तदनुपलम्भात् सुखादि-रूपफलसामान्यस्य क्रियासाध्यत्वमधिगत्य सुखविशेषेच्छया तत्साधनीभूत क्रियाविशेष कामयते 'क्रियाविशेषो मम भवतु' इति। ततस्तन्निर्वाहकप्रवृत्तिजनकः क्रियात्वव्याप्यरूपावच्छिन्ने कार्यतावोध इत्यवगम्यैव तादृशकार्यताबोध कामयते। वक्त्रा च स्ववाक्येन तादृशबोधसम्पादनद्वारा परमफल सम्पाद्यत इति कार्यताबोधकस्यैवोक्तविध प्रामाण्यम्। सित्धार्थबोधस्य वाक्येन जननेपि तेन प्रवृत्त्यादिद्वारा परमफलानिर्वाहान्न तद्बोधकवाक्य प्रमाणमिति।

एव वदत सुखादिसाधनप्रवृत्त्यादिजनकत्वज्ञानमेव [3]ज्ञानविषयकेच्छाजनकतादृग्जनकत्वेन ज्ञायमानमेव ज्ञानमिच्छाविषय इति नियमोऽभिप्रेत। इतरथा तादृशजनकत्वेनाननुसहितज्ञानस्येच्छाविषयत्वं नेच्छान्तरमन्तरेण। तस्य सुखादिरूपत्वाभावात् लोके तस्यैव तथात्वानुभवात। कि तु प्रवृत्त्यद्वारा साक्षात्सुखसाधनत्वेन तद्बुध्येति वक्तव्यम्। तथा च प्रवृत्याद्यद्वारकसुखादिजनकसित्धार्थबोधे सुखेच्छया श्रोतुरिच्छासम्भवेन वक्त्रा वाक्येन तादृशबोधे सम्पादिते श्रातु सुखरूपफलसम्भवेन सफलत्वघटितप्रामाण्य सित्धार्थपरवाक्यस्य नास्तीति सित्धान्तभङ्ग एव स्यात्। अत प्रवृत्त्यद्वारा ज्ञानस्य सुखजनकत्व नास्त्येव। तादृशज्ञाने अन्यथाख्यात्यनभ्युपगमा-दिच्छापि नोत्पद्यत एवेति नियमोऽवश्यमभ्युपेय। सिद्धार्थपरवाक्यप्रामाण्यवादिना त्ववश्य तत्र व्यभिचारव्युत्पादनं कर्तव्यमेव। न च शाब्दज्ञानान्तर्भावेन नियम स्वीक्रियतेऽतो न व्यभिचार इति वाच्यम्। स्वेष्टपुत्राद्युत्कर्षश्रव-णेच्छाया अनुभवसिद्धत्वेन तादृशनियमेऽपि व्यभिचारस्य दुर्वारत्वादित्यभिप्रायादिति सर्वं समञ्जसम्।

अत्रेष्टानुभवे प्रवृत्त्याद्यजनकेऽपीच्छाविषयत्वोपपादनेन पदाना कार्यान्वित एव शक्तत्वेन कार्यत्वावोधकत्वा-दीश्वरपरत्वेन भवदभिमतवाक्यानामबोधकत्वलक्षणाप्रामाण्यप्रसङ्ग इति दूषणान्तरमपि निरस्त भवति। प्रवृत्त्याद्य-जनकेपि मात्रादिरूपस्वेष्टवस्तुविषयकबोधे साक्षात्सुखजनकतयैव बालस्येच्छासम्भवेन मात्रादिकमङ्गुल्या निदिश्य

1 सुखदु खावाप्तिहान्यादिक फल इति पाठेन भाव्यमिति भाति

2 स्वप्रयोजकेच्छाधीनेच्छाविषयो इति पाठेन भाव्यमिति भाति

3 ज्ञानविषयकेच्छाजनकम्। इति पाठेन भाव्यमिति भाति.

(द्वै द्यु) स्वेष्टबोधार्थं प्रवृत्तवाक्यस्य तज्जनकत्वानुसन्धानपूर्वकमावापोद्वापाभ्या पदाना कार्यानन्वित एव शक्त्यवधारणात्। एतेन शङ्कोक्ताबोधकत्वदूषणस्यासमाधानान्न्यूनतेति परास्तम्।

अन्याश्रितसुखेऽन्यस्येष्टत्वव्यवहाराभावात् **स्वाश्रित इति**। लिङ्गविपरिणामेन दु खनिवृत्तावप्यन्वेति ॥ **व्यवहार इति** ॥ तस्यैव वस्तुव्यवस्थापकत्वादिति भाव । अत्र तत्साधने इत्यपि ग्राह्यम्। तत्रापि स्रक्चन्दनादौ लोकानामिष्टत्वव्यवहारात् ॥ **न चानयोरन्यतर इति** ॥ तत्साधन चेत्यपि ग्राह्यम्। अन्यथेष्टत्वस्यैतत्त्रितयसाधारणधर्मतया रमापतौ इष्टसामान्यभेदसाधनाय विशेषभेदद्वयस्यैवेष्टसाधनतयेष्टे व्यभिचारेण हेतूकरणायोगात्। ननु रमापतौ दु खनिवृत्तिसुखभेदयो सिद्धत्वेऽपि तत्साधनभेद कथ सिध्यतीति चेन्न। क्रियाविशेषादीना तत्सहकारिभूतद्रव्यदेवतादीना सुखादिसाधनत्वेन भवदभिमतपूर्णकामत्वादिविशिष्टरमापते सर्वत्रौदासीन्येन तस्य सुखादिसाधनत्वे मानाभावादित्याशयात्। अत एवेश्वरस्य सर्वनियामकत्वेनेष्टसाधनतासिद्ध्यभिप्रायेण सर्वनियामकत्वेनेश्वरसिद्धिरनुमानेन संपादिता। अत एवागमप्रमाणपरवाक्योत्थेष्टसाधनत्वाकाङ्क्षाशामकतया पूर्वोक्तैकवाक्यत्वमपि तयोर्युक्तम्।

न इत्यत्रात्मनि बहुमानार्थं न बहुवचनम्। किं तु एते च ते चाहं चेति वयम्। तेषा न इति व्युत्पत्त्या अधिकारिवर्गपरमिति भावेन व्याख्याति ॥ **नोस्माकमिति** ॥ मूले अयोग्यजनानामिष्टत्वाभावेप्यधिकारिणा प्रेमविषयत्वरूपेष्टत्व**मिष्टपदेनोक्त**म्। तच्च सर्वेषामेकरूप न भवतीत्याशयेनोत्तमाधिकारिविवक्षया तावन्निरूपयति ॥ **यथा खल्विति** ॥ भावाः क्षीरादय। **लौकिकानां** एकान्तभक्तातिरिक्ताना। **इष्टतां** परमेष्टता। अर्थस्य सोपपत्तिकत्वे लक्षणाङ्गीकारेऽपि बाधकाभावात्। **इष्टः** परमेष्ट । 'एकान्ताना न कस्यचित्। अर्थे नारायणो देव' इत्यत्रैकान्तिप्रयोजनजनकत्वनिषेधो नारायणस्य न क्रियते। सर्वकारणत्वहानिप्रसङ्गात्। किं तु ज्ञेयत्वविशिष्टनारायणपर **नारायणपदम्**। इत्थ चैकान्तिना ज्ञेयत्वविशिष्टो नारायण किञ्चित्प्रयोजनोद्देशेन न भवतीत्यनेन विशेषणीभूतज्ञाने किञ्चित्प्रयोजनोद्देश्यकत्वं निषिद्ध्यत इति तस्य फलरूपत्व तद्विषयस्य सुखादिवत्परमेष्टत्व लभ्यत इति बोध्यम्। नारायणबोधस्य फलत्वे तस्य फलान्तराभावाद्बोधे सफलत्वघटितप्रामाण्यमागमस्य कथमागतमिति चेन्न। फलनिर्वाहिका या यथार्थज्ञानानुकूलशक्ति तद्वत्त्वस्यैव लक्षणत्वेन बोधस्य तत्फलत्वे तन्निर्वाहकशक्तिरेव फलनिर्वाहिका। फलस्य बोधसाध्यत्वे बोधानुकूलशक्ते परम्परया फलनिर्वाहकत्वेन सामञ्जस्यमित्याशयात्। मूलोक्तेष्टत्व मध्यमभक्तान् प्रतीष्टसाधनत्वेन। तस्यापि बुभुत्साद्वारा वेदोपादेयत्वनिर्वाहकत्वादित्याशयेनाह ॥ **इतरान्प्रतीत्यादि** ॥ **इष्टवत्** एकान्तिना परमेष्टत्वविशिष्टवत्। **इष्टसाधनस्य** इष्टसाधनत्वेनेष्टस्य **बुभुत्सितत्वात्**। मध्यमभक्ताना इष्टताया जिज्ञासाद्वारैव वाक्योपादेयत्वस्य निर्वाहकत्वमिति हृदयम्। **इष्टवदि**त्यस्य लोकाना परमेष्टसुखस्येवेति नार्थ । लोकानां सुखोत्पत्तावेवेच्छासत्त्वेन स्वसमवेतसुखजिज्ञासा तत्प्रश्नोत्तराद्यभावस्य पूर्वमुपपादितत्वादिति।

(गु टि) किमपि प्रयोजनमभिधीयत इत्युक्तम्। तदुक्तं गूढाभिसन्धिराक्षिपति ॥ **नन्विति** ॥ कि प्रमाणं न किमपीत्यर्थ । तद्धि न तावत्प्रत्यक्षम्। तस्यापाततस्तदभावावेदकत्वात । नाप्यनुमानम्। तत्प्रतिबद्धलिङ्गाभावात्। नाप्यागम । तस्य प्राभाकररीत्या कार्यनिष्ठत्वेन सिद्धरूपेश्वरपरत्वासम्भवात्। नाप्यर्थापत्ति । तस्या अनुमानानतिरेकेण तत्पक्षोक्तदोषात्। नाप्युपमानाभावौ । तयोर्नियतविषयत्वादित्याशय । गूढाभिसन्धिरेव परिहरति ॥ **आगममिति** ॥ अनुमानस्याप्युत्तरत्र कथनात्तावदित्युक्तम्। ननु आगम कि प्रत्यक्ष उताऽनुमानिक । नाद्य । तदनाकलनात्। नान्त्य । तदनुमापकलिङ्गाभावादित्यत· प्रथम कल्पमङ्गीकृत्य तत्पक्षोक्तदोषमसिद्ध्या परिहरति ॥ **श्रूयते हीति** ॥ पूर्ववादी स्वाशयमुद्घाटयति ॥ **केवलसिद्धार्थेति** ॥

ननु कार्यान्विततया यूपाहवनीयादाविव उपासनाकार्यशेषतया, सिद्धरूपेऽपीश्वरे 'द्यावाभूमी जनयन् देव एक' इत्यागमप्रामाण्यसम्भवात्कथ कार्य एव प्रामाण्यमित्यवधारणमित्यतो न सर्वथा आगमस्य तत्र प्रामाण्य निराकुर्म । किं तु सिद्धान्त्यभिमतमकार्यशेषतया स्वप्रधाने ईश्वरे तत्प्रामाण्यमेवेति युक्तमवधारणमिति भावेन केवलत्वेन सिद्धविशेषणम्। केवलत्वञ्च सिद्धस्य कार्यान्वयरहितत्वम्। स्वप्रधानत्वमिति यावत्।

अयमाशय. । यद्यपि बोधकत्वेनैव प्रमाणाना प्रामाण्य। ज्ञापनमेव साक्षाद्वाक्यस्य प्रयोजन। तथापि स एवार्थो वाक्येन ज्ञापनीयो यज्ज्ञान परस्य क्वचित् प्रवृत्ति क्वचिन्निवृत्तिं कुर्यात्। परप्रवृत्तिनिवृत्त्यभिप्रायेण वाक्यप्रयोगात्। प्रवृत्त्यादिकारणञ्च कार्यज्ञानमेव। 'अग्निहोत्र जुहुयात्स्वर्गकाम' इत्यादिकार्यपरवाक्यश्रवणात् प्रवृत्त्यादिदर्शनात्। न केवलसिद्धज्ञानम्। 'काकस्याष्टौ दन्ता' इति सिद्धपरवाक्यश्रवणात्प्रवृत्त्याद्यदर्शनात्। अत· प्रवृत्त्यादिकारणं कार्यमेव वाक्यबोध्यमिति तत्रैवागमस्य प्रामाण्य नेश्वर इति।

कथमिष्टत्वोक्तिमात्रेणोक्तशङ्कापरिहार इत्यतो नायमस्ति नियम कार्यमेव वाक्यबोध्य नान्यदिति। किं तु यद्धि यस्य बुभुत्सित तदेव वाक्येन त प्रति बोधनीय नान्यदिति। अन्यथा अपिपासुं प्रति जलाशयोपदेशस्यापि प्रामाण्यप्रसङ्गात्। ईश्वरश्चेष्टत्वाद्बुभुत्सित इति युक्त तत्प्रतिपादकत्वमागमस्येति बुभुत्सितत्वनियामकेष्टत्वकथकत्वात् युक्तोऽनेनोक्तशङ्कापरिहार इत्यभिप्रेत्येश्वरबोधकतामुपपादयति ॥ **यद्धीति** ॥ इष्ट बुभुत्सितमित्यर्थ ।

ननु 'अग्निहोत्र जुहुयात्स्वर्गकाम' इत्यादौ वाक्यजन्यज्ञानस्य प्रवृत्त्यादिजनकतया प्रयोजनवत्त्वदर्शनादीश्वरज्ञानस्य च तदजनकत्वात्कथं प्रयोजनवत्त्वमित्याशङ्क्य तद्वाक्यार्थस्य निरुपाध्यनुकूलत्वाभावेन तज्ज्ञानस्य स्वत प्रयोजनत्वासम्भवेन प्रयोजनान्तरसाधनतयैव प्रयोजनविषयत्वेन तदर्थतया प्रवृत्त्यादिजनकत्वावश्यम्भावेऽपि प्रकृते बोध्यस्येश्वरस्य निरुपाध्यनुकूलतया तज्ज्ञानस्य स्वत पुरुषार्थत्वेन प्रयोजनान्तरानपेक्षणान्न प्रवृत्त्याद्यजनकत्वेऽपि प्रयोजनत्वव्याघात इत्याशयेनाह ॥ **न चेत्यादिना** ॥ **तत इति** ॥ तस्येत्यर्थ । ज्ञानमात्रस्य प्रयोजनान्तरसाधनतया प्रयोजनत्वनियमादिष्टानुभवस्यापीश्वरज्ञानस्य प्रयोजनान्तरापेक्षा स्यादेव। अन्यथा प्रयोजनत्वानिर्वाहादित्यतो व्यभिचारान्नोक्तनियमो युक्त इत्याह ॥ **न हीति** ॥ बुभुत्सितत्वप्रयोजकस्येष्टत्वस्यैवेश्वरेऽसिद्धेर्न तस्य बुभुत्सितत्वमिति कथ वाक्यबोध्यतेत्यभिप्रेत्य तस्येष्टत्वाभावमाशङ्कते ॥ **स्वाश्रित इति** ॥ **उत्तमाधिकारिणा-**

ु टि ) मिति ॥ पुरुषार्थान्तराभिलाषशून्यानामित्यर्थः । कुत प्रमाणात्तन्निश्चय इत्यत उत्तमाधिकारिस्वरूप-
।त्रणर्क तत्र प्रमाणमप्याह ॥ सन्तीति ॥ एकान्ताना नियतानामुत्तमभक्ताना । न कस्यचिदर्थे । स एव
रमपुरुषार्थ इत्यर्थ । एक एवान्तोन्त गत अस्मादमावुच्च इति तारतम्यक्रमस्यान्तगतो हरिर्वेद्यतया येषा ते
कान्ता इति वा अर्थ ।

अस्मादसावुच्च इति क्रमस्यान्तगत हरिम् ।
एकमेव तु ये विद्युस्ते ह्येकान्तिन ईरिता ॥

ति छान्दोग्यभाष्यानुसारादिति ध्येयम् । अस्त्वेवमुत्तमाधिकारिण प्रतीष्टत्वेन भगवतो बुभुत्सितत्वाद्वाक्य-
ध्यत्वं तथापि तदितरान् प्रति न तद्बोधकत्वमागमस्य सम्भवति । तत्प्रयोजकीभूतबुभुत्सितत्वप्रयोजकाभावादि-
प्रो न निरुपाध्यनुकूलत्वमात्र बुभुत्सितताया प्रयोजकम् । किं तु तत्साधनत्वमपि । ततश्चेतराधिकारिण
ति भगवत इष्टत्वाभावेऽपि इष्टसाधनत्वेन बुभुत्सितत्वोपपत्तेर्युक्तमेव तान् प्रत्यपि ईश्वरबोधकत्वमागमस्येत्याह
। इतरान् प्रतीति ॥

## अनुमानस्येश्वरे प्रामाण्यसमर्थनम्

(टी ) अनुमानमपि रमापति गमयतीत्याशयवानाह ॥ नित्याताद्दशचिच्चेत्ययन्तेति ॥
त्र तदिति सर्वत्राखिलसच्छक्तिः स्वतन्त्रोऽशेषदर्शनः इत्युक्त परामृश्यते । चिच्चेतन
माब्रह्मादि । चेत्यं दृश्य-जड प्रकृत्यादि । ननु चेत्यता चितोऽप्यस्ति । यद्वक्ष्यति आत्मनो-
.पि दृश्यत्वादिति । तत्कथमुच्यते चेत्य दृश्य जडमिति । सत्यं । चितः पृथगभिधानात्समा
ोऽपि चेत्यशब्दो जडविषयोऽवगम्यते । चेत्यग्रहणादेवोभयलाभे सति किं चिद्ग्रहणेनेति चेत्सत्यं ।
ुरुपाण्डवन्यायेनाऽसाधारणधर्मेण व्यवहारोपपत्तिः । नित्यमताद्दशे अपर्याप्तशक्तिनी अस्वतन्त्रे
ासर्वज्ञे चिच्चेत्ये यन्तेति विग्रहः ।

(वि टि ) उदाहृतागमावष्टम्भेनानुमानमपीश्वरे प्रमाणमाचार्याभिप्रेतमिति वक्तुमाह ॥ अनुमानम
ीति ॥ ननु नित्याताद्दशचिच्चेत्ययन्तेत्यनेनानुमानमपि रमापतिं गमयतीत्याशयवानाहेत्युक्तमयुक्तम् । अता-
शेतितच्छब्दस्य बुद्धिस्थचिच्चेत्यपरामर्शकत्वे तयोरताद्दशत्वस्य विरुद्धत्वात् । परस्परमताद्दशे परस्परविलक्षणे ये
चच्चेत्ये तयोर्यन्तेति वाक्यार्थकरणे च तस्य विवक्षितानुमानासूचकत्वाच्चेत्यतो व्याख्यातुमाह ॥ अत्रेति ॥
ताद्दशेतिपदे प्रकृतिभूतेन तच्छब्देनेत्यर्थ । चिच्चेत्यशब्दौ विवक्षितार्थपरतया व्याचष्ट ॥ चिच्चेतनमिति ॥
मानोऽपि उभयप्रतिपादनसमर्थोऽपि ॥ किमिति ॥ पृथगित्यनुषङ्ग ॥ कुरुपाण्डवन्यायेनेति ॥ यथा कुरुत्व-
ाण्डवत्वरूपतत्प्रातिस्विकरूपेण प्रतिपिपादयिषया कुरवः समागता पाण्डवाश्चेति व्यवहारो न व्यर्थस्तथा चेतन-
जड स्वरूपप्रातिस्विकरूपेण चेतनजडप्रतिपिपादयिषया चेतन चेत्यश्चेति व्यवहारो न व्यर्थ इति भाव ।

ननु नित्याताद्दशेत्यत्र नित्येति व्यर्थम् । चिच्चेत्ययन्तेत्येतावतैव स्वव्यतिरिक्तसकलचेतनाचेतननियामकत्वस्य
वक्षितार्थस्य सिद्धेः । किञ्च नित्यविशेषणे च रमापतेर्नित्यचेतनाचेतननियामकत्वमेव सिद्ध्यति । न तु विवक्षि-

(वि टि )तसर्वनियामकत्वम् । अपि च चेतनाशे नित्येति विशेषण व्यर्थम् । अनित्यचेतनस्यैवासिद्धत्वात् । अपि चात्र चिच्चेत्ययन्तेति किं षष्ठीतत्पुरुष किं वा द्वितीयातत्पुरुष । तत्र न प्रथम । यन्तेत्यस्य तृजन्तत्वे 'तृजकाभ्या कर्तरि' इति षष्ठीसमासनिषेधात्। तृन्नन्तत्वेऽपि तद्योगे 'न लोकाव्ययनिष्ठाखलर्थतृना इति षष्ठीनिषेधेन षष्ठीतत्पुरुषस्यैवासम्भवात्। न द्वितीय । द्वितीया श्रितेति सूत्रेण श्रितादिभिरेव समासविधानेन यन्तेतितृन्नन्तेन समासानुपपत्तेश्चेत्याशङ्क्य द्वितीयातत्पुरुष एवाभिप्रेत इति प्रदर्शनाय विग्रहवाक्य तावदाह ॥ **नित्यमिति** ॥ सर्वदेत्यर्थ । एतच्च सामर्थ्यादतादृशत्वस्य नियन्तृतायाश्च [1]वस्तु स विशेषणमिति वक्ष्यते । न च द्वितीयातत्पुरुषानुपपत्ति । द्वितीया श्रितेत्यत्र द्वितीयेति योगविभागाद्वा गम्यादेराकृतिगणत्वेन गम्यादीनामुपसङ्ख्यानमित्युपसङ्ख्यानाद्वा तदुपपत्तेरिति भाव ।

(रा टि ) तादृशेत्यस्य तच्छब्दरूपत्वादाह ॥ **अत्र तदितीति** ॥ अतादृशेत्युक्त्याऽल्पशक्तिकास्वतन्त्राल्पज्ञे चिच्चेत्ये इत्यर्थ । 'चिती सञ्ज्ञाने इत्यत कर्मणि 'ऋहलोर्ण्यत्' इति ण्यत्प्रत्यये पुगन्तेति गुणे चेत्य ज्ञेयमित्यर्थमुपेत्योक्त ॥ **चेत्यं दृश्यमिति** ॥ **अपर्याप्तेति** ॥ अपरिपूर्णेत्यर्थ । 'आ केस्तच्छीलतद्धर्मतत्साधुकारिषु' इतिपूर्वसूत्रोक्तताच्छील्यार्थे 'तृन्' इति उत्तरसूत्रेण विहिततृन्नन्तोऽय यन्तेतिशब्द । तद्योगे च न लोकाव्ययेति षष्ठीनिषेधात् चिच्चेत्ये इति द्वितीयाद्विवचनान्तस्य 'श्रितादिषु गमिगम्यादीनामुपसङ्ख्यानम्' इत्युक्तेर्द्वितीयातत्पुरुष इत्युपेत्योक्त ॥ **चिच्चेत्ये यन्तेतीति** ॥

(वे. टि )॥ **तदितीति** ॥ **अतादृशेत्यत्र** तच्छब्देनेत्यर्थ । नन्वीश्वरस्यापि चेतनत्वेन पक्षनिक्षिप्तत्वे बाध इत्यत आह ॥ **चेतनं रमाब्रह्मादीति** ॥ 'न लोकाव्ययनिष्ठाखलर्थतृना' इति षष्ठीप्रतिषेधाद्द्वितीयासमासोऽयमित्यभिप्रेत्य तथैव विग्रहमाह ॥ **नित्यमतादृशे इत्यादिना** ॥ श्रितादिषु गम्यादीनामुपसङ्ख्यानादिति भाव । ननु 'कर्तरि च' इति प्रतिषिद्धस्य 'याजकादिभिश्च' इति प्रतिप्रसवात्तृजन्तेन षष्ठ्यास्समास किं न स्यादिति चेन्न। यन्तृशब्दस्य तृन्नन्तत्वेन वक्ष्यमाणतर्कपराहतिपरिहारस्य सूचनात्तृजन्तत्वे तदभावात्। अत एव **ताच्छीलिकतृन्नन्तप्रयोग** इति वक्ष्यति ।

(द्वै द्यु ) एवमागमप्रामाण्यमुपपाद्य तस्य सोपपत्तिकत्वेन स्वार्थे तात्पर्यदृढीकरणायानुमानप्रमाणपरतयापि विशेषणानि योजयितुमाह ॥ **अनुमानमपीति** ॥ **तदितीति** ॥ नित्यातादृशेत्यत्रत्यतच्छब्देनेत्यर्थ ॥ **दृश्यमिति** ॥ चिती संज्ञान इति धातो कर्मणि यत्प्रत्ययेन लब्धमक्षरार्थमुक्त्वा तेन रूपेणापि तात्पर्यविषयीभूतमर्थमाह ॥ **जडमिति** ॥ **कुरुपाण्डवन्यायेनेति** ॥ अत्र **कुरुपाण्डवशब्देन** तच्छब्दघटितवाक्यविशेष परामृश्यते । **न्यायपद** तद्वाक्यस्य पौनरुक्त्यपरिहारकयुक्तिपरम् । **असाधारणधर्मेण** पदान्तरबोध्यधर्मन्यूनवृत्तिधर्मेण। **व्यावहारपद** ज्ञानजनकशब्दरूपप्रकृतवाक्यपरम् । **धर्मेणे**ति तृतीयार्थ प्रकारकत्व ज्ञानेऽन्वेति। **न्यायेने**ति तृतीयार्थो ज्ञाप्यत्व **उपपत्तिपदार्थभूतपौनरुक्त्याभावेनान्वितम्** । तथा च कुरुपाण्डवपदघटितवाक्यनिष्ठपौनरुक्त्यपरि-

[1] वस्तु स इतीदमधिकमिति भाति

(द्वै ध्रु) हारकयुक्तिज्ञाप्या असाधारणधर्मप्रकारकज्ञानजनकप्रकृतवाक्य. तन्निष्ठपौनरुक्त्याभावस्तस्मादित्यर्थ । कुरूणामित्युक्तावपि पाण्डवेषु कुरुत्वाग्रहदशाया पाण्डवसन्तानबीजत्वाभावभ्रमं क्षिप्रमपनेतु यथा पाण्डवशब्दप्रयोगस्तथा प्रकृतेपि जडस्य स्वत शक्तिशून्यत्वात्तस्येश्वरनियम्यतास्तु । चेतनस्य जडनियामकतयोपलभ्यमानस्य ईश्वरवच्चेत्यपदेन ग्रहणाभावात्तदन्यपरमेव चेत्यपदमिति भ्रमेण चिन्नियामकत्वाभावभ्रम स्यात् । तत्परिहाराय विशेषरूपेणैव तद्ग्रहणमतो न पौनरुक्त्यादीति भाव । नित्यपदस्य ध्वसाप्रतियोग्यर्थत्वे केषुचिज्जडेषु बाधादसङ्ग्रहापत्तिरित्याशङ्क्य सार्वदिकार्थकक्रियाविशेषणेन समास इत्याह ॥ **नित्यमिति** ॥ अत्र **नित्य**मित्यस्य नाताद्दशत्वपदार्थेनैवान्वय । कि तु नियन्तृत्वेऽपि । 'नित्येत्यताद्दशत्वस्य नियन्तृतायाश्च स्वरूपसङ्कीर्तनम्' इति वक्ष्यमाणत्वात् ।

ननु तन्त्रेणैवोभयत्रान्वय स्वीकार्य । न च तस्य हेतुकोटौ वा साध्यकोटौ वा प्रयोजनाभावे एकदोच्चरितशब्दस्योपस्थित्या द्विद्वयकल्पनारूपतन्त्रानुसरणं युक्तम् । कि तु स्थितस्य गतिश्चिन्तनीयेति न्यायेनाताद्दशत्वस्वरूपकीर्तनपरमित्येव वक्तव्यम । तथा च नियन्तृताया स्वरूपकीर्तनत्वकथनस्यैव वक्ष्यमाणस्यायुक्तत्वात्तदनुरोधेनोभयत्रान्वयस्वीकरणमयुक्तमेवेति चेन्न ।

अत्र **केचित्** विनिगमकाभावन्नित्यमताद्दशे इति नित्य चिच्चेत्ययन्तेति च योजनाद्वयमप्यभिमतम् । न च नित्याताद्दशपदयो सान्निध्यमेव विनिगमकमिति वाच्यम् । द्वितीययोजनायां अताद्दशश्चिच्चेत्ययन्तेति विशिष्टपदस्यैव नित्यमिति पदसान्निध्येन तस्याविनिगमकत्वात् । न च नित्यमताद्दशे इति एकत्रैव तदन्वय प्रदर्शनं विरुध्दमिति वाच्यम् । इहान्वयप्रदर्शन न कृतम् । कि त्वेतत्समासघटकं नित्यपद ध्वसाप्रतियोग्यर्थकं न भवति । किं तु सार्वदिकार्थकमिति सूचनाय शब्दस्वरूपमात्रनिर्देश कृत । योजनाया तु स्ववक्ष्यमाणानुसारेणैवेत्यभिप्रायात् । न चैव विकल्पेन योजनाद्वयस्वीकारे नित्येत्यताद्दशत्वस्य नियन्तृताया वा इति वक्तव्यम् । समुच्चायकचशब्दस्त्वयुक्त इति वाच्यम् । योजनाभेदेनेत्यध्याहारेण वा चशब्दस्य वाशब्दार्थत्वेन वोपपत्तेरित्याहु ।

**परे** तु चिच्चेत्यनिष्ठास्वानन्त्यादेरसार्वदिकत्वे तस्यैव पर्याप्तशक्त्यादिदशायामितरनियामकत्वसम्भवादीश्वरत्वेन भवदभिमतपुरुषनिष्ठनियामकताया अपि राजादिनिष्ठनियामकतावत्कादाचित्कत्वे तत्कालेऽन्यस्य नियामकस्यावश्यकत्वात् चिच्चेत्ययोरेव कथञ्चिन्नियम्यनियामकभावेनोपपत्त्या नैतद्विलक्षणेश्वर सिध्यतीत्यर्थान्तरतापरिहारायोभयत्र विशेषणमुपात्तम् । तेन च सर्वदाप्यपर्याप्तशक्तित्वादन्धपङ्गुन्यायेन प्रवृत्त्यारम्भ एव न घटते । एतन्निष्ठनियामकताया सदा सम्भवान्नात्र तद्दोषोऽतो विलक्षणेश्वरोऽङ्गीकार्य इति सिध्यति । एतदेवाभिप्रेत्य **चिच्चेत्ये एवान्धपङ्गुन्यायेने**त्याद्याशङ्क्य समाहितम् । नित्यपदस्य हेतुकोटौ साध्यतावच्छेदककोटौ वा निवेशाभावतात्पर्येण **स्वरूपसङ्कीर्तन**मित्युक्तम् । न तु सर्वथा निरर्थकत्वाभिप्रायेण । अत एव **सम**मित्युक्तम् । अन्यथा प्रमेयत्वमपि कुतो न स्वरूपकथनार्थमुक्तम् । एव च तन्त्रेणैवोभयत्रोपादान कर्तव्यमेवेति प्राहु ।

(गु टि) कुरुपाण्डवन्यायेनेति ॥ यथा पाण्डवाना कुरुत्वेऽपि सामान्यविशेषापेक्षया 'सन्तानबीजं कुरुपाण्डवाना' इत्यादौ कुरुभ्य पृथग्वचन तथा चितश्चैत्यत्वेऽपि चैत्यात्पृथग्वचनमुपपद्यत इत्यर्थ ।

॥ चिच्चैत्ये यन्तेति विग्रह इति ॥ द्वितीयान्तस्य चिच्चैत्यशब्दस्य तृन्नन्तेन यन्तृशब्देन द्वितीयासमास इत्यर्थ ।

यद्यपि यन्तृशब्दो न श्रितादिषु पठितस्तथापि श्रितादिषु [1]गमिगम्यादीनामुपसङ्ख्यानात् तदुपपत्तिरिति बोध्यम् ।

एतच्च द्वितीयासमासाश्रयण कर्मत्वविवक्षा षष्ठीतत्समासयोर्नित्यत्वाविवक्षाञ्चाश्रित्य द्रष्टव्यम् । न तु यन्तृशब्दस्य तृजन्तत्वतृन्नन्तत्वयो षष्ठीसमासानुपपत्तिभिया । तथा हि । अस्तु तावद्यन्तृशब्दस्तृजन्त । न चैवं सति [2]कर्तरि चेति वा तृजकाभ्यामिति वा षष्ठीसमासनिषेधप्रसङ्ग. । ताभ्या कृल्लक्षणषष्ठीसमासस्यैव प्रतिषेधात् । न हि यावद्वस्तुनि वर्तते तावदवश्य प्रयोगे विवक्षितव्यमिति नियम । तथा सति वृक्षस्य शाखेत्यादावधिकरणत्वादेर्विद्यमानत्वेन विवक्षापत्त्या षष्ठ्यभावप्रसङ्गात् । ततश्च तद्योगे [3]कर्तृकर्मणो कृतीति प्राप्तषष्ठ्या समासासम्भवेऽपि शेषषष्ठ्या समासे न काप्यनुपपत्ति । अत एवाह कैयटः 'कथ तर्हि घटाना निर्मातुस्त्रिभुवनविधातुश्च कलह इति । शेषषष्ठ्या समास ' इति ।

कर्मत्वविवक्षायामपि न कर्तृकर्मणो कृतीतिप्राप्तकृल्लक्षणषष्ठीसमासानुपपत्ति । 'जनिकर्तु॰ प्रकृति ' 'तत्प्रयोजको हेतुश्च' 'जातिवाचक ' 'गुणो गुणिविशेषक ' इत्यादित्रिमुनिनिर्देशेन कर्तरि चेति तृजकाभ्या कर्तरीति वा निषेधस्यानित्यत्वज्ञापनेन क्वचिदप्रवृत्तिप्रसङ्गात् । अत एव 'भीष्म कुरूणा भयशोकहन्ता हितकारक ' इत्यादिप्रयोग उपपद्यते ।

एव यन्तृशब्दस्य तृन्नन्तत्वेऽपि न दोष । न च तृन्योगे [4]न लोकेति षष्ठ्या निषेधात् षष्ठ्येव न । समासस्तु दूरनिरस्त इति वाच्यम् । कारकषष्ठीनिषेधेन तृन्योगे तस्या समासासम्भवेऽपि शेषषष्ठ्यनिषेधेन तस्या समासे दोषाभावात् । अवश्यञ्चैतदेव यन्न लोकेति न षष्ठीमात्रनिषेध किं तु कारकषष्ठ्या एवेति । अन्यथा ब्राह्मणस्य कुर्वन्नित्यादौ षष्ठ्यनुपपत्तिप्रसङ्गात् ।

---

[1] गम्यादीनामुपसङ्ख्यानम् इति पाठेन भाव्यमिति भाति

[2] कर्तरि च (२।२।१६) कर्तरि षष्ठ्या अकेन न समास । भवत शायिका । नेह तृजनुवर्तते । तद्योगे कर्तुरभिहितत्वेन कर्तृषष्ठ्या अभावात् । तृजकाभ्या कर्तरि (२।२।१५) कर्त्रर्थतृजकाभ्या षष्ठ्या न समास । वज्रस्य भर्ता । ओदनस्य पाचक । चिच्चैत्ये यन्तेत्यत्र' 'कर्तरि च' इति सूत्रस्य प्रवृत्तिरेव नास्ति । अत अत्र उत्तरत्र च तद्ग्रहण लेखकप्रमादायत्तमिति भाति.

[3] कर्तृकर्मणो कृति (२।३।६४) कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात् । कृष्णस्य कृति । जगत कर्ता कृष्ण ।

[4] न लोकाव्ययनिष्ठाखलर्थतृनाम् । (२।३।६९) एषा प्रयोगे षष्ठी न स्यात् । लादेशा -कुर्वन् कुर्वाणो वा सृष्टि हरि उ -हरिं दिदृक्षु । उक दैत्यान् घातुको हरि । अव्यय-जगत् सृष्ट्वा । निष्ठा-दैत्यान् हतवान् विष्णु । खलर्थ -ईषत्कर प्रपञ्चो हरिणा । तृन्-कर्ता लोकान् । सर्वोऽय कारकषष्ठ्या प्रतिषेध । शेषे षष्ठी तु स्यादेव । ब्राह्मणस्य कुर्वन् ।

(गु. टि) एव कारकषष्ठ्यास्तृन्नन्तेन समासाश्रयणेऽपि न दोषः । तृजकाभ्यां कर्तरीत्यत्र तृचस्सानुबन्धकस्य निर्देशेन तृन्व्यावृत्त्यर्थेन न लोकेतिनिषेधस्यानित्यत्वज्ञापनेन प्रकृते अप्रवृत्तिसम्भवात् । न ह्यसत्या षष्ठ्या समासप्रसङ्गोऽस्ति । अत एवोक्तं न्यासकारेण 'तृन्नन्तमेतत् । न लोकेति निषेधस्त्वनित्यः । त्रकाभ्यामिति वक्तव्ये तृचस्सानुबन्धकस्य ग्रहणाज्ज्ञापकात्' इति ।

नन्वेवमपि [1]कर्मणि चेति कर्मणि षष्ठ्या समासप्रतिषेधात्कथं समास इति चेन्न । तस्योभयप्राप्तौ कर्मणीतिप्राप्तषष्ठीसमासनिषेधकत्वेऽपि कृल्लक्षणषष्ठीसमासनिषेधकत्वाभावादिति दिक् ।

यत्तु 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति षष्ठीनिषेधाद्द्वितीयासमासोऽयमित्येतदभिप्रायवर्णनं तदसत् कारकषष्ठीनिषेधकत्वेन शेषषष्ठ्यनिषेधकत्वस्यानित्यत्वस्य चाकर एव स्थितत्वेन षष्ठीतत्समासयोरुपपन्नत्वात् ।

यदपि [2]कर्तरि चेतिप्रतिषिद्धस्य [3]याजकादिभिश्चेति प्रतिप्रसवात् तृजन्तेन षष्ठ्या समासमाशङ्क्य तृन्नन्तत्वे वक्ष्यमाणरीत्या तर्कपराहतिपरिहारसिद्धेस्तृजन्तत्वे तदभावान्न षष्ठीसमास इति समाधानमुक्तं तदप्यसत् । [4]कर्तरि चेत्यस्य कृल्लक्षणषष्ठीसमासप्रतिषेधकत्वस्य शेषषष्ठीसमासाप्रतिषेधकत्वस्य समर्थितत्वेन प्रतिषेधशास्त्रप्रवृत्तेरेवासम्भवात् । कथञ्चित्सम्भवेऽपि कर्तृशब्दस्य

स्युर्याजकोद्वर्तककर्तृकारकाः प्रयोजकोत्साहकभर्तृवक्तृकाः ।
अध्यापकस्तापकगोप्तृपूजका ॥

इत्यादिना याजकादिगणपाठे पठितत्वेन याजकादितया वेदकतया वेदकर्तुरित्यादौ प्रतिप्रसवेऽपि यन्तृशब्दस्य तत्रापठितत्वेन याजकादित्वाभावेन चिच्चेत्ययन्तेत्यत्र प्रतिप्रसवाप्रसङ्गेन तृजन्तेन षष्ठीसमासशङ्काया अनवसरात् । तृन्नन्तत्वेन वक्ष्यमाणतर्कपराहतिपरिहारसूचनस्य षष्ठीसमासद्वितीयासमासयोरविशेषेण तृन्नन्तत्वमात्रेण द्वितीयासमासानिर्वाहाच्चेत्यास्तां तावत् ।

(टी) इदमुक्तं भवति । चिच्चेत्ये [5]ऽल्पत्वपर्याप्तशक्त्यादिमत्तया प्रत्यक्षादिसिद्धे । अन्यथा नित्यसुखादिप्रसङ्गात् । यच्चैवंविधं तत्केनापि नियतमेव प्रवर्तमानमुपलब्धं । यथा रथादि । तदेताभ्यामपि येन केनचिन्नियताभ्यां भवितव्यं । यश्चैतन्नियता स भगवान् रमापतिरिति । नित्येत्यतादृशत्वस्य नियन्तृतायाश्च स्वरूपसङ्कीर्तनं । चित एव पक्षीकारे प्रकृतिनियततया साङ्ख्यानां कर्माधीनतया च मीमांसकानां सिद्धसाधनं स्यात् । तत्परिहाराय चेत्यस्यापि परायत्ततया चिन्नियत

[1] कर्मणि च (२।२।१४) उभयप्राप्तौ कर्मणीति या षष्ठी सा न समस्यते । उभयप्राप्तौ कर्मणि (२।३।६६) उभयोः प्राप्तिर्यस्मिन् कृति तत्र कर्मण्येव षष्ठी स्यात् । आश्चर्यो गवां दोहोऽगोपेन ।

[2] तृजकाभ्यां कर्तरीति प्रतिषिद्धस्य इति पाठेन भाव्यमिति भाति ।

[3] याजकादिभिश्च (२।२।९) एभिः षष्ठ्यन्तं समस्यते । तृजकाभ्यां कर्तरीत्यस्य प्रतिप्रसवोऽयम् ।

[4] तृजकाभ्यां कर्तरीत्यस्य इति पाठेन भाव्यमिति भाति ।

[5] स्वल्पपर्याप्तशक्त्यादिमत्तया प्रत्यक्षसिद्धे इति श्रीविजयीन्द्रतीर्थीयः पाठः ।

(टी.) तासम्भवप्रदर्शनाय पक्षीकरणं। चेत्यमात्रपक्षीकारे च लोकदृष्ट्या पाशुपतादिस्मृतिरीत्या च विनियततया सिद्धसाधनं स्यात्। तन्निरासाय चितोऽपि पक्षीकारः। न च चिच्चेत्ये एवान्धपङ्गुन्यायेनान्योन्यनियते भविष्यतः किमीश्वरेणेति वाच्यं। स्वतः शक्तिमात्रशून्ययोरितरेतराश्रयेण इतरेतरप्रत्यासत्तेरेवायोगात्। प्रयोजनमननुसन्दधदयं न नियच्छेत्। तदनुसन्धाने चापूर्णः स्यादिति तर्कपराहतिपरिहाराय नियमनशीलत्वात्प्रयोजनानुसन्धानाभावेऽपि तदुपपन्नमिति ज्ञापयितु यन्तेति ताच्छीलिकतृन्नन्तप्रयोगः। तथा च श्रुतिः 'देवस्यैष स्वभावोयम्' इति।

न च रुद्रादीनामिव रमापतेरपि कथं चिच्चेत्ययन्तृतोपपत्तिरिति वाच्यं। यतोऽसावपर्याप्तशक्त्त्वादीनां हेतूनां पक्षधर्मताबलेन सिद्ध्यन्पूर्णशक्त्यादिरूपेणैव सिद्ध इत्याशयवानाह॥ **सर्वत्राखिलसच्छक्तिः स्वतन्त्रोऽशेषदर्शन इति॥** सर्वत्र-सकलचिच्चेत्यनियमनविषये अखिला पर्याप्ता सती-प्रतिबन्धादिदोषरहिता शक्तिर्यस्यासौ तथोक्तः। स्वतन्त्रः-स्वेच्छाधीनप्रवृत्तिः। अशेषविषयत्वादशेषं दर्शनं यस्यासावशेषदर्शन इति।

(वि टि.) नन्वनुमानमपि रमापतिं गमयतीत्याशयवानाहेत्युक्तमयुक्तम्। नित्यातादृशेतिविशेषणेनेश्वरसाधकानुमानाप्रतीतेरित्यतस्तत्प्रदर्शयितुमाह ॥ **इदमुक्तं भवतीति** ॥ वक्ष्यमाणहेतूना पक्षधर्मता दर्शयति ॥ **चिच्चेत्ये खल्विति** ॥ **अपर्याप्तशक्त्यादीति** ॥ अपर्याप्तशक्तित्वादीत्यर्थ ॥ **प्रत्यक्षसिद्धे इति** ॥ यद्यपि रमाब्रह्मादिचेतनाना प्रकृत्याद्यचेतनानाञ्च परात्मत्वेनाव्यक्तत्वेन च प्रत्यक्षत्वमेव दुर्लभम्। सर्वस्य च शक्त्यादीनामयोग्यतया तद्वत्त्वेन प्रत्यक्षं तु सुतरा दुर्लभम्। तथापि अत्रापर्याप्तशक्त्यादितयेत्यनेन पर्याप्तशक्त्यादिप्रयोज्यकार्यरहिततया प्रत्यक्षसिद्धे इत्यर्थविवक्षणान्नोक्तदोष इति। यद्वा प्रत्यक्षसिद्धे इत्यनेन प्रत्यक्षाभ्यामागमलिङ्गाभ्या सिद्धे इत्यर्थविवक्षणान्न कोपि दोष। ननु चिच्चेत्ययोरपर्याप्तशक्त्यादितया प्रत्यक्षागमादिसिद्धत्वेऽपि तस्य प्रामाण्यनिश्चय विना कथ ततोऽपर्याप्तशक्तित्वादिसिद्धि। एवञ्चासिद्धितादवस्थ्यमित्यत आह ॥ **अन्यथेति** ॥ चिच्चेत्ययो पर्याप्तिशब्दितपूर्णशक्तित्वस्वातन्त्र्यसर्वज्ञत्वादिसत्त्वे नित्य सर्वदा सुखमेव स्यात्। न तु कदापि दु खम्। न हि सत्यामिष्टसम्पादनशक्तौ तत्त्यागो दृष्टचर.। न च तत्तदनुकूलशक्त्यादिमान् दु खाद्यनिष्टसाधनपरिहारस्य नेष्ट इति सम्भवति। तथा च प्रत्यक्षादिसिद्ध चिच्चेत्ययोरपर्याप्तशक्तित्वादिक वास्तवमेवाङ्गीकार्यमिति भाव।

[1]॥ **चिच्चेत्येति** ॥ नन्वत्र किं चित्त्व चिद्विषयत्वञ्च यथाश्रुतं पक्षतावच्छेदक विवक्षित किं वा 'चिच्चेतन रमाब्रह्मादि चेत्य दृश्य जड प्रकृत्यादि' इति व्याख्यानानुसारेण रमाब्रह्मादित्वप्रकृत्यादित्वे। [2]अपर्याप्तशक्तित्वादि। नाद्य। तयो साध्येश्वरसाधारणत्वेन बाधानवतारदशाया तदंशे अनुमितेर्भ्रान्तित्वापत्ते। तत्वनिर्णिनीषुकथारूपे ग्रन्थे भ्रमोपायोपन्यासायोगात्। तदवतारदशायामशतो बाधस्यैव दोषत्वात्। न द्वितीय।

[1] यद्वा ॥चिच्चेत्ये इति॥ इति पाठेन भाव्यमिति भाति [2] किं वा अपर्याप्तशक्तित्वादि इति पाठेन भाव्यमिति भाति.

(वि. टि.)ईश्वरव्यावृत्तधर्मं विना आदिशब्दस्यानतिप्रसक्तार्थत्वायोगात् । तादृशधर्मान्तरस्याभावात् ।न तृतीय । हेतोरेव पक्षतावच्छेदकत्वापत्तेरिति चेन्न । धूमवत्पर्वतत्वादेरिव परिमितशक्तिकचित्त्वस्य तादृशजडत्वस्य च पक्षतावच्छेदकत्वोपपत्तेरिति ॥ **अपर्याप्तशक्तित्वादीति** ॥ अल्पशक्तित्वादीत्यर्थ ।

नन्वस्तु चिच्चेत्ययोरेवमपर्याप्तशक्तित्वादिक । तावता हेतो पक्षधर्मत्वमेव सिद्ध्यति । न तु व्याप्ति । तथा च व्याप्तिशून्य कथ तद्रमापतिं गमयेदित्यत सदृष्टान्त व्याप्तिं दर्शयति ॥ **यच्चैवंविधमिति** ॥ यद्यपि रथादिकमपि पक्षान्तर्गतमेव तथापि दृष्टान्तत्वे निश्चितसाध्यवत्त्वमेव तन्त्र । लाघवात् । न तु पक्षान्यत्वविशेषित तत् । गौरवात् । तच्च रथादे पक्षान्तर्गतत्वेऽप्यक्षतमिति न तस्य दृष्टान्तत्वेनोपादानमनुपपन्नम् । अत एवासाधारणहेतुस्थले विशेषदर्शनदशाया पक्षस्यैव सपक्षत्व वदन्तीति भाव. । निगमयति ॥ **तदेताभ्यामिति** ॥ ननूक्तानुमानेन चेतनाचेतननियन्ता कश्चित् सिद्ध्यति । न तु रमापतिरित्यत आह ॥ **यश्चैतन्नियन्तेति** ॥ न हि नाममात्रे विवादो युज्यत इति भाव । ननु रमापत्यतिरिक्त एव चिदचिन्नियन्ता कश्चित्स्यादितिशङ्कानिरासाय भगवानिति रमापतिर्विशेषितः । भगवच्छब्दप्रवृत्तिनिमित्तं च सर्वैश्वर्यं यत्रास्ति स एव चिदचिन्नियन्ता । भगवच्छब्दमुख्यार्थश्च रमापतिरेव ।

अथापि यत्पादनखावसृष्ट जगद्विरिञ्चोपहृतार्हणाम्भ. ।
सेश पुनात्यन्यतमो मुकुन्दात्को नाम लोके भगवत्पदार्थ ॥

इति स्मृतेरिति भाव । ननूक्तरीत्या अतादृशत्वस्यैव व्यभिचाराद्यभावेन प्रकृतसाध्यसाधनसमर्थत्वेन नित्येति व्यर्थम् । यन्तेतिसाध्यविशेषणत्वे च दृष्टान्तस्य साध्यविकलता । न हि रथादि सर्वदा केनचिन्नियत दृश्यत इत्यत आह ॥ **नित्येतीति** ॥ तथा च पक्षधर्मताबललभ्योऽर्थस्तथा पर्यवस्यतीति [1]सूचितम् । नित्यविशेषणोपादानमिति भाव ॥ **साङ्ख्यानामिति** ॥ शेषे षष्ठीयम् । साङ्ख्यान् प्रति चित् केनचिन्नियतेति साधने तैश्चेतनस्य प्रकृतिनियतत्वाङ्गीकारात् मीमासकान् प्रति तथा साधने च तैरपि तस्य कर्मनियतत्वाङ्गीकाराच्च तेषा सिद्ध यतस्यैवास्माभि साधन कृतं स्यादित्यर्थः ॥ **तत्परिहारायेति** ॥ चेत्यस्यापि पक्षीकरणमिति योजना । चेत्यस्यापि पक्षीकरणे प्रकृतिकर्मनियन्तृकत्वमादाय साङ्ख्यमीमासकोद्भावनीयसिद्धसाधनताऽनवकाश इत्याह ॥ **पराऽयत्ततयेति** ॥ लोके चेत्यस्य जडस्य स्वान्यचेतनायत्तताया दृष्टत्वात् प्रकृतिकर्मनियतत्वासम्भवात् चेतननियन्तृकत्वस्योत्कटसन्देहविषयतया तद्व्यतिरेकानिर्णयेन तद्विशेषनियन्तृकत्वमादाय साध्यसिद्धिसम्भवप्रदर्शनाय चेत्यस्यापि पक्षीकरणमित्यर्थ ।

॥ **लोकदृष्टयेति** ॥ लोकानुभवानुसारेणेत्यर्थः ॥ **पाशुपतादीति** ॥ पाशुपतशाक्ताद्यागमोक्तन्यायेनेत्यर्थ. ॥ **चिन्नियततयेति** ॥ अदृष्टद्वारा अस्मदादिचेतननियततया पशुपतिशक्त्यादिचिन्नियततया चेत्यर्थ. । नन्वेवमपि न स्वाभिमतेश्वरसिद्धि. । अन्धपङ्गुन्यायेनान्योन्यनियतत्वेनापि साध्यपर्यवसानोपपत्ते. । न ह्यन्धपङ्गोः कुतश्चिद्देशान्तरप्राप्त्यादिरूप कार्यं स्वात्मलाभाय ताभ्यामन्यनियामकं कल्पयति । तथा च चिच्चेत्ययो परस्परनियम्य-

[1] सूचित नित्येतिविशेषणोपादानेनेति भाव इति पाठेन भाव्यमिति भाति ।

(वि टि) नियामकभावसिद्धयापि उक्तहेतूनामुपपन्नत्वेनाप्रयोजकतेत्याशङ्क्य निराकरोति ॥ **न चेति ॥** अन्धपङ्गुन्यायवैषम्यप्रदर्शनायाह ॥ **स्वतः शक्तिमात्रशून्ययोरिति ॥** अनन्यसाधारणपरमस्वतन्त्रनियामक विनैव स्वेच्छानुसारेणेष्टानिष्टप्राप्तिपरिहारानुकूलसामर्थ्यशून्ययोरित्यर्थ । अन्यथा चिच्चेत्यशो परस्परनियतत्वाभ्युपगम विरोध इति भाव । न चैव

शक्तय सर्वभावानामचिन्त्या ज्ञानगोचरा ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तय ॥

इत्याद्यागमविरोध । तस्यान्याधीनशक्तिकत्वेऽप्युपपत्तेरिति ॥ **इतरेतराश्रयेणेति ॥** जडचेतनयोरपि स्वत शक्तिशून्यत्वेन परस्परप्रत्यासत्तिहेतुव्यापारार्थं परस्परनियमनापेक्षाया तस्यापि व्यापारत्वेन तत्सम्पादनायापि चितश्चेत्यपेक्षाया तस्यापि तन्निर्वाहे चिदपेक्षानियमेनेतरेतराश्रयत्वापत्त्या प्रत्यासत्तेरेवायोगात् तदयोगे चान्योन्यनियमनासम्भवात् अन्यस्वतन्त्रनियामक विना हेतूच्छित्तेरेव बाधकत्वेन नोक्तहेतूनामप्रयोजकतेति भाव । उक्तानुमाने प्रतिकूलतर्कपराहतिमाशङ्क्य परिहरति ॥ **प्रयोजनमित्यादिना ताच्छील्यार्थकतृन्नन्तप्रयोग इत्यन्तेन ॥ तदनुसन्धानेऽपीति** प्रयोजनानुसन्धानेऽपीत्यर्थ ॥ **तदिति ॥** नियमनमित्यर्थ । यन्तेति तृन्प्रत्यय [1]आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिष्वित्यधिकारात् तृन्निति सूत्रेणेति द्रष्टव्यम् । ननु यन्तेतिताच्छीलिकतृन्नन्त शब्दसामर्थ्यात्प्रयोजनानुसन्धान विनापि नियन्तृत्वज्ञापनसम्भवेऽपि स्वतन्त्रप्रमाण विना अनुमानमात्रेण न प्रयोजनानुसन्धानरहितस्य चिच्चेत्यनियमनानुकूलप्रवृत्तिसिद्धिरित्यत आह ॥ **तथा च श्रुतिरिति ॥** यद्यपि

देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा ।

इति श्रुत्युपन्यासं विनैवोक्तप्रतिकूलतर्कखण्डन सुशकम् । तथा हि, 'प्रयोजनमननुसन्दधन्न नियच्छेत्' इति तर्कप्रतिपादकवाक्ये प्रयोजनशब्द किमिच्छामात्रविषयवचन किं वा स्वसमवेतसुखदु खाभावतत्साधनरूपेच्छाविशेषविषयवचन । नाद्य । अपर्याप्तशक्तित्वाद्यनुमानेन चिच्चेत्यनियन्तृतया सिद्ध्यतो रमापतेर्ज्ञानेच्छादिमत्त्वाव श्यम्भावेन तदिच्छाया सङ्कोचकाभावेन सर्वविषयतया तज्ज्ञानस्यापि तद्विषयत्वेन तदनुसन्धानवत्त्वाविरोधात् । न हि तादृशप्रयोजनशब्दार्थगोचरज्ञानरूपानुसन्धानमीश्वरस्य पूर्णत्वविघातकम् । न द्वितीय । परमकारुणिकस्य स्वसमवेतसुखादिकमनिच्छतोऽपि परदु खप्रहाणोपाये नियन्तृत्वदर्शनेन व्यभिचारात् । न हि कस्यचित्कारुणिकस्य परदु खानुसन्धानप्रयुक्तस्वदु खनिवारणार्थं तदुपाये प्रवृत्तिरस्तीत्येतावता सर्वस्यापि तथा प्रवृत्ति । अनुभवविरोधादिति । तथापि तत्वनिर्णिनीषुकथारूपे ग्रन्थे स्वत प्रमाणभूतश्रुत्युपन्यास आवश्यक इति प्रदर्शनाय तदुदाहरणमिहेति द्रष्टव्यम् ।

सर्वत्राखिलसच्छक्तिरिति श्लोकस्योत्तरार्धेनैव स्तुतिरूपमङ्गलतन्निबन्धनयो स्तुत्ये रमापतौ प्रमाणज्ञापनस्य च सिद्धत्वात्तत्र पूर्वार्धस्य वैयर्थ्यमित्याशङ्क्यातादृशेतिपदोपस्थाप्याभावरूपहेतुप्रतियोग्युपस्थापकत्वेन उपस्थितहेतुना

---

[1] आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु (३।२।१३४) क्विपमभिव्याप्य वक्ष्यमाणा प्रत्ययास्तच्छीलतद्धर्मतत्साधुकारिषु कर्तृषु बोध्या । तृन् (३।२।१३५) कर्ता कटान् ।

वि टि ) पक्षधर्मताबलादीदृशोऽर्थो लब्ध इत्यर्थविशेषोपस्थापकत्वेन च सार्थक्यं वक्तुमाह ॥ न चेति ॥ चिच्चे त्यनियन्तृताया रमापतौ रमापतित्वादिरूपासाधारणधर्मवत्त्वमात्रस्य प्रयोजकत्वे रुद्रादिष्वपि तर्हि रुद्रत्वाद्यसाधारणधर्मवत्त्वस्याविशिष्टतया तत्र प्रयोजकत्वं किं न स्यादिति शङ्कार्थः । न तत्रासाधारणधर्मवत्त्वमात्रं प्रयोजकमस्माभिरुच्यते येनातिप्रसङ्गः स्यात् । अपि तु सर्वकार्यानुकूलाप्रतिबद्धशक्तित्वादिरूपविशेषवत्त्वमिति परिहारार्थः । शक्ते· शक्यरूपविषयाकाङ्क्षायां सर्वत्रेत्यनेनैव तद्विषयसमर्पणादखिलेति व्यर्थम् । अखिले चिच्चेत्यरूपसर्वविषये सती प्रतिबन्धादिदोषरहिता शक्तिर्यस्येति विगृह्य समासे च व्यधिकरणबहुव्रीहिप्रसङ्गः । न चेष्टापत्तिः । 'समानाधिकरणानां बहुव्रीहिरिष्यते' इति वचनविरोधादित्यत आह ॥ अखिला पर्याप्तेति ॥ न चैवमपि लक्षणादोषप्रसङ्गः । अखिलशब्दस्य सर्वशब्दपर्यायत्वेन सामस्त्यार्थकतया शक्तेश्च सामस्त्यं सकलकार्यानुकूलत्वमेव पर्यवस्यतीति तदेव पर्याप्तत्वमिति न लक्षणादोषप्रसङ्ग इति भावः ॥ स्वेच्छाधीनप्रवृत्तिरिति ॥ स्वेच्छामात्राधीनप्रवृत्तिरित्यर्थः । प्रवृत्तेश्च तदधीनत्वं तन्नियतत्वमेवेति न काप्यनुपपत्तिरिति ध्येयम् । अत एव न्यायनये द्रव्यत्वादिजातेर्गुणवत्त्वाद्यधीनत्वोक्तिः । मायावादमते अनादिजीवब्रह्मविभागस्याविद्याधीनत्वोक्तिश्चेति । तदधीनत्वं स्वरूपसम्बन्धविशेष इत्यपि केचित् । अत एव लोके [1]भूतधराद्यात्मकराष्ट्रस्य राजाद्यधीनत्वोक्तिः । नन्वशेषदर्शन इत्यत्र अशेषे तद्विषये दर्शनं यस्येति व्यधिकरणबहुव्रीह्याश्रयणायोगात् अशेषं दर्शनं यस्येति समानाधिकरणबहुव्रीह्याश्रयणे च रमापतिज्ञानस्यैकत्वेनाशेषशब्दानर्थक्यात् समासानुपपत्तिमाशङ्क्य अशेषशब्दस्य लक्षणया अशेषविषयपरत्वमभिप्रेत्य लक्षणाबीजं मुख्यार्थसम्बन्धं वदन्नेव समानाधिकरणबहुव्रीहिमभिप्रेत्याह ॥ अशेषविषयत्वादशेषमिति ॥

ननु सर्वत्राखिलसच्छक्तिरित्यादिविशेषणत्रयं 'चिच्चेत्ये केनचिन्नियते' इति साध्यसाधनोपयोगिहेतुभूताभावप्रतियोग्युपस्थापकत्वेन सार्थकमित्ययुक्तम् । तादृशभिन्नत्वरूपस्य तादृशत्वाभावरूपस्य वा हेतुत्वेनाभिमतस्य साध्यरहिते अत्यन्तासत्यपि सत्त्वात् । न चातादृशशब्देन सर्वनियमनानुकूलाप्रतिबद्धशक्तिमद्भिन्नत्वे सति शक्तिमत्त्वस्य स्वेच्छामात्राधीनप्रवृत्तिमद्भिन्नत्वे सति प्रवृत्तिमत्त्वस्य अशेषदर्शनभिन्नत्वे सति ज्ञानवत्त्वस्य च विवक्षितत्वान्न दोष इति वाच्यम् । अनुमानप्रवृत्तेः पूर्वं तादृशेश्वरासिद्ध्या प्रतियोग्यप्रसिद्धेस्तदन्यत्वरूपहेतुविशेषणासिद्धेः । द्वितीयतृतीयहेत्वोश्चेत्यांशे विशेष्यासिद्धेश्चेति चेदत्राहुः । न तावत्प्रतियोग्यप्रसिद्धिप्रयुक्तविशेषणासिद्धिर्दोषः । विशेषणसूचितागमैरेव तत्सिद्धेस्तदनवकाशात् । न चैवमनुमानवैफल्यम् । प्रमाणसम्प्लवस्य दार्ढ्यहेतुत्वेनानुमानोपन्यासावैयर्थ्यात् । अनुमानेनापीश्वरबुभुत्सुं प्रति तदुपन्याससार्थक्योपपत्तेश्च । नापि द्वितीयतृतीयहेत्वोर्भागे विशेष्यासिद्धिर्दोषः । प्रवृत्तिशब्देन व्यापारमात्रस्य ज्ञानवत्त्वशब्देनानिषेध्यत्वेन [2]मितिविषयत्वस्य च विवक्षितत्वादिति ।

(रा टि ) चिच्चेत्ये केनचिन्नियते अपूर्णशक्तित्वात् बलवन्नियतदुर्बलवत् । अस्वतन्त्रत्वात् भृत्यभार्यावत् । अल्पज्ञत्वात् पुत्रशिष्यादिवदिति सामान्यपरिशेषाभ्यां रमापतिसिद्धिरित्यभिप्रेत्य हेतूनां कथं पक्षधर्मतादीत्यतो-

[1] भूधराद्यात्मक इति पाठान्तरम्

[2] साक्षात्प्रमितिविषयत्वस्य इति पाठान्तरम्

(रा टि) **ऽतादृशेत्यनेनोक्त व्यनक्ति ॥ इदमुक्त भवतीति** ॥ आदिना हिताकरणाहितकरणकृत्स्नप्रसक्त्याद्यनुमान अल्पशक्तिरसावश्यमित्याद्यागमश्च ग्राह्य । प्रत्यक्षादेरन्यथोपपत्तिशङ्काव्युदासायानुकूलतर्कमाह ॥ **अन्यथेति** ॥ पर्याप्तशक्त्यादिमत्त्व इत्यर्थ । दु खनिवृत्त्यारब्धकार्यसिद्ध्यादिरादिपदार्थ । हेतूना साध्येन व्याप्ति दर्शयति ॥ **यच्चैवंविधमिति** ॥ अपर्याप्तशक्त्यादिमदित्यर्थ । नियत व्यापारेषु प्रेरितमित्यर्थ । पक्षे निगमयति ॥ **तदिति** ॥ व्याप्तिमद्धेतुमत्त्वात् । एताभ्या चिच्चेत्य भ्यामित्यर्थ । एवं सामान्यानुमानै 'जनयन्देव एक' इत्यागमलाघवतर्काभ्यामनुगृहीतैर्नियन्तुरेकस्य सिद्धौ स क इत्याकाङ्क्षाया ब्रह्मादेश्चित्पदेन पक्षनिक्षेपात् ब्रह्मरुद्राद्यन्यो रमापतिरेव परिशेषात्सिद्ध इति भावेनोक्त ॥ **यश्चैतन्नियन्ता स भगवान् रमापतिरिति** ॥ 'को नाम लोके भगवत्पदार्थ' इत्यादिवचनसूचनाय **भगवानित्युक्ति** । रमेतिविशेषणमतन्त्रं । हरिरित्यत्रैव तात्पर्यं । विशेषणेऽनुमानासामर्थ्यात् । इतिपदस्येदमुक्तमित्यनेनान्वय ॥ **स्वरूपसङ्कीर्तनमिति** ॥ हेतौ व्यावर्त्याभावात्साध्ये च तद्रूपेणानुमित्यर्थतया ज्ञानचिकीर्षाकृतिमज्जन्यमित्यत्रेवोपरञ्जकविशेषणमित्यर्थ ॥ **लोकदृष्टयेति** ॥ घटादिजडस्य जीवचेतनाधीनत्वेन दर्शनादिति भाव ॥ **अन्धपङ्गुन्यायेनेति** ॥ अन्धपङ्गू द्वावपि प्रत्येकमभिमतदेश प्राप्तुमसमर्थावपि पङ्गुरन्धस्कन्धमारुह्य मार्गं प्रदर्शयति चेत्तदान्ध स्वय पादचारेण गच्छति । तदोभावप्यभिमतदेशमन्योन्याधीनतया प्राप्नुत । तथा चिच्चेत्ये अपि अन्योन्याधीनतया स्वस्वव्यापार कुरुता । तथा चाप्रयोजका हेतव इति शङ्कार्थ । अन्धङ्गोरन्योन्यमेलने ह्येव भवति । अन्धो हि पङ्गुपार्श्वं गन्तु मार्गदर्शनार्थं पङ्गुमपेक्षते । पङ्गुरप्यन्धसमीपमाप्तु तदीयपादचारमपेक्षते । अतस्तयोर्मेलकस्य पटुकरणस्यान्यस्याभावे मेलनविषयेऽन्योन्याश्रयेण मेलनायोग इव चिच्चेत्ययो प्रत्यासत्तेरेवायोग । दूरे तदधीना [1]भितसिद्धिरित्येवकारार्थ । चिच्चेत्ये केनचिन्नियते इति प्रागुक्तानुमानस्य नियमनायोगरूपतर्कपराहतिमाशङ्क्य निराह ॥ **प्रयोजनमिति** ॥ अय नियन्तृत्वेनाभिमतो न नियच्छेत् व्यापारेषु प्रेरणा न कुर्यात् ॥ **अपूर्णस्यादिति** ॥ तथा च चैत्रादेरिव नियन्तृत्वायोग इति भाव ॥ **एष इति** ॥ इषु गतौ भावे घञन्त । एष नियमनादिरूपोऽय व्यापार देवस्य स्वभाव । जीवाना निमेषादिरिवेत्यर्थ । सम्भावितोऽर्थो हेतुभिस्साधनीय । सामान्यपरिशेषाभ्या सिद्ध्यतोऽपि हरेर्नियम्यतुल्यतया तन्नियमनमसम्भावितमित्याशङ्क्य [2] नियम्यविशेषसिद्ध्या नियमनस्य सम्भावितत्वमाह ॥ **न चेति** ॥ हेतुगर्भ विशेषणत्रयमितिभावेनाह ॥ **यतोऽसाविति** ॥ यथा क्षित्यादिनिष्ठकार्यत्वहेतुबलेन सार्वज्ञ्यादिमान्सिद्ध्यति तथेति भाव. । स्वतन्त्रपदस्य स्वनियम्यत्व शब्दशक्तिलभ्योऽर्थ । स च चिच्चेत्ययन्तेत्यत्रेव भेदघटित । वक्ष्यति च **नियम्यनियामकभावस्येत्यादि** । न चेश्वरे भेदोऽस्तीत्यत फलितार्थमाह ॥ **स्वेच्छेति** ॥ तादृशे लोके स्वतन्त्रपदप्रयोगात् ।

स्वेच्छानुसारितामेव स्वातन्त्र्य हि विदो विदु ।

इति समयपादीयानुव्याख्यानोक्तेश्चेति भाव । इतिशब्द श्लोकव्याख्यानसमाप्तौ ।

---

[1] गतिसिद्धिरित्येवकारार्थ इति पाठेन भाव्यमिति भाति ।

[2] नियामकविशेषसिद्ध्या इति पाठेन भाव्यमिति भाति ।

(वे टि) कथमनेनानुमानमुक्तमित्यत आह ॥ इदमुक्तं भवतीति ॥ चिच्चेत्ये इति ॥ ननु किमत्र पक्षतावच्छेदक । न तावच्चित्त्व चेत्यत्व वा । ईश्वरस्यापि पक्षत्वापत्त्या बाधापत्ते एकसङ्ग्राहकाभावाच्च । नापीश्वरातिरिक्तपदार्थत्वेन पक्षता । ईश्वरस्यैवासिद्धौ तदतिरिक्तत्वस्यैव ज्ञातुमशक्यत्वादिति चेन्न । अस्वतन्त्र-चित्त्वजडत्वयोरेव पक्षतावच्छेदकत्वात् । तन्नानात्वस्यादोषत्वात् । यद्वाऽपर्याप्तशक्तिमत्त्वादिष्वेकस्य पक्षताव च्छेदकत्वमपरस्य हेतुत्वमित्युपपत्ति । अपर्याप्तशक्तिमत्त्वादिपक्षतावच्छेदकावच्छिन्न वस्तु चिच्चेत्यमिति तद्ग्रह-णोपपत्तिरिति भाव । पक्षधर्मतामुपपाद्य व्याप्तिमप्याह ॥ यच्चैवंविधमिति ॥ यथा रथादीति ॥ ननु रथाहे-रपि चेत्यत्वेन पक्षत्वात्कथं दृष्टान्तत्वमिति चेन्न । चेत्यत्वेन पक्षत्वेऽपि रथादित्वादिना दृष्टान्तत्वोपपत्ते । लाघवेन निश्चितसाध्यवत्त्वमेव तन्त्र सपक्षत्वे । न तु पक्षभिन्नत्वेनापि विशेषणीय । अत एव पृथिवी इतरभिन्नेत्यत्र घटस्यैव सपक्षत्व । ननु सन्देहसिषाधयिषादिघटिता पक्षता कथ निश्चितसाध्यवति रथादौ स्यादिति चेन्न । लिङ्गज्ञानजन्यप्रतीतिविषयसाध्यधर्मविशेषविशिष्टत्वस्य पक्षशब्दार्थत्वात् । साध्यधर्मविशिष्टः पक्षः इत्यत्र 'यत्प्रतीतिर्लिङ्गेन जनयितव्या स साध्यधर्म' इति टीकायां व्याख्यातत्वात् । तथा च निरुक्तपक्षतायाः साध्यसमानधर्मविशिष्टत्वरूपसपक्षतायाश्चैकत्र सम्भवान्न दोष इति भाव । निगमयति ॥ तदेताभ्यामिति ॥ अनेन चिच्चेत्ये केनचिन्नियते अपर्याप्तशक्तिमत्त्वात् अस्वतन्त्रत्वात् असर्वज्ञत्वाच्चेति प्रयोगो दर्शित. । ननु नित्यत्वमतादृशत्वरूपहेतुविशेषण नियन्तृत्वरूपसाध्यविशेषणं वा । नाद्य । नीलधूमादिवद्व्यर्थविशेषणत्वात् । नान्त्य । दृष्टान्ते साध्यवैकल्यात् । न हि रथादि सर्वदा केनचिन्नियम्यमित्यत आह ॥ नित्येत्यतादृशत्व-स्येति ॥ तथा च पक्षधर्मताबललभ्योऽर्थस्तथा पर्यवस्यतीति सूचयितु नित्येत्युक्तमिति भाव ॥ प्रकृतिनियततया सांख्यानामिति ॥

वत्सविवृद्धिनिमित्त क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषस्य [1]विमोक्षनिमित्त तथा प्रवृत्तिः प्रधानस्य ॥

इति तदुक्तेरिति भाव ॥ कर्माधीनतया च मीमांसकानामिति ॥

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे ।
रुद्रो येन कपालपाणिपुटके भिक्षाटन कारित. ।
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नम कर्मणे ॥

इति तेषा वचनादिति भाव ॥ लोकदृष्टचेति ॥ घटादेर्देवदत्ताद्यधीनत्वदर्शनादिति भाव ॥ अन्योन्य-नियते भविष्यत इति ॥ तथा च परस्परनियततया सिद्धसाधनमिति भाव ॥ प्रत्यासत्तेरेवेति ॥ तथा च प्रत्यासत्तिघटकत्वेनापि ईश्वरोऽङ्गीकार्य इति भाव ॥ अपूर्ण इति ॥ यत्प्रयोजनार्थं नियमनं तदूनत्वादिति भाव

[1] पुरुषविमोक्षनिमित्त इति पाठेन भाव्यमिति भाति

(वे टि)॥ **रुद्रादीनामिवेति** ॥ तथा च रमापतिर्न चिच्चेत्ययन्ता चेतनत्वाद्रुद्रादिवदिति सत्प्रतिपक्ष इति भाव । न च भिन्नपक्षत्वात्कथ सत्प्रतिपक्ष इति वाच्यं । विरोधिविषयकत्वमात्रस्यैव प्रयोजकत्वेन पक्षाभेदस्याप्रयोजकत्वादिति भाव ॥ **पक्षधर्मताबलेनेति** ॥ अपर्याप्तशक्तिमत्त्वादीना हेतूना पक्षधर्मत्वे अपर्याप्तशक्तिमच्चिच्चेत्यनियामको हि नापर्याप्तशक्त्यादिमान् सिद्ध्यति । तथात्वे तस्यापि केनचिन्नियतत्वप्रसङ्गात् । अन्यथा तत्रैव व्यभिचारात् । किंतु पर्याप्तशक्त्यादिमानेवेति भाव ॥ **पूर्णशक्त्यादिरूपेणैवेति** ॥ तथा च प्रतिपक्षानुमाने अपूर्णशक्त्यादिमत्त्वमुपाधिरिति भाव । यदि स्वतन्त्रत्व स्वसत्तादौ परानपेक्षत्व तर्हि परसापेक्षत्व केनचिन्नियतत्वे हेतूकर्तव्यं । तथा च साध्याविशिष्टो हेतुरित्यत आह ॥ **स्वतन्त्रः स्वेच्छाधीनप्रवृत्तिरिति** ॥ स्वेच्छामात्राधीनप्रवृत्तिरित्यर्थ । नित्याया अपि भगवत्प्रवृत्तेरिच्छाधीनत्वं न्यायमते द्रव्यत्वादिजातेर्गुणवत्त्वाद्यधीनत्ववत् मायिमतेऽनादिजीवब्रह्मविभागस्याविद्याधीनत्ववच्चोपपन्नं । नन्विद स्वातन्त्र्यमसाम्प्रदायिकमिति चेन्न ।

स्वेच्छानुसारितामेव स्वातन्त्र्य हि विदो विदु ।

**इत्यनुव्याख्याने**ऽभिधानादिति भाव ।

(द्वै द्यु.) ॥ **इदमुक्त भवतीति** ॥ ननु नियामकत्वेनैतदनुमानेनेश्वरसिद्धेरेतदनुग्राहकं 'एष त आत्मा अन्तर्याम्यमृत' इत्यादिकमेव वाक्यमीश्वर आगमतयोदाहर्तव्यम्। तद्विहाय किमर्थं द्यावाभूमीत्यादिजगत्कर्तृत्वप्रतिपादकागमोदाहरणमिति चेत् । सत्य । तदपि पूर्वमादिपदेन गृहीतम् । नियन्तेत्याद्युक्ति कर्तृत्वादेरुपलक्षणपरा । क्षित्यादिकर्तृत्वेनापीश्वर सिध्यति । नियामकत्वोक्तिस्तु उत्तरग्रन्थोत्थानाय । अत क्षित्यादिक सकर्तृकं इत्यनुमानेनेश्वरो न सिध्यतीति न भ्रमितव्यमिति सूचनाय तदनुग्राहकमेव कण्ठत उपात्तमित्यदोष ॥ **प्रत्यक्षादिसिद्धे इति** ॥ असिद्धिपरिहारायेद ॥ **यथा रथादीति** ॥ पक्षस्यापि रूपान्तरेण दृष्टान्तत्वमविरुद्धम् । सामानाधिकरण्येन सिद्धेर्विरोधित्वाङ्गीकारेपि रूपान्तरेण सिद्धे रूपान्तरेणानुमितावविरोधित्वादिति भाव ।

॥ **चितोऽपि पक्षीकार इति** ॥ ननु किमत्र पक्षतावच्छेदकम् । न चित्त्व नापि जडत्वमन्यतरासङ्ग्रहप्रसङ्गात् । नापि तदन्यतरत्व । सामानाधिकरण्येन साध्यसाधने सिद्धसाधनताया अवच्छेदकावच्छेदेन साधने चांशे बाधस्य चापत्ते. । नापि जीवजडान्यतरत्वम् । रमया स्वमतेऽर्थान्तरत्वापत्ते । नापि तद्घटितान्यतमत्वम् । ईश्वरवत्तस्या अप्यज्ञातत्वेन तद्घटितपक्षतावच्छेदकाग्रहात् । नापीश्वरान्यत्वम् । तस्यासिद्धिकाले तदन्यत्वविशेषणस्यासिद्धेरिति चेन्न । यतोऽत्रास्वतन्त्रत्वापर्याप्तशक्तित्वादीनामेकस्य पक्षतावच्छेदकत्वे परस्य हेतुत्वमिति बोध्यम् ।

ननु किमिदमस्वतन्त्रत्वम् । न स्वतन्त्रभेद: । अपर्याप्तशक्तिमत्वं न पर्याप्तशक्तिमद्भेद । एतदनुमानात्प्राक् प्रतियोग्यप्रसिद्ध्या तादृशविशेषणाप्रसिद्धे । नापि स्वातन्त्र्याभाव. पूर्णशक्त्यभावश्च । तस्यापि प्रतियोग्यप्रसिद्ध्या मीमांसकादीन् प्रति पक्षतावच्छेदकाप्रसिद्धे । तान्प्रत्येवेदानीमीश्वरस्य सिसाधयिषितत्वात् । स्वपक्षेप्येतादृशानुमानात्प्राक् पूर्णशक्तित्वादिधर्माणामनुपस्थित्या तदभावग्रहासम्भवाच्च । नाप्यल्पविषयकशक्तिमत्त्वमपर्याप्तशक्तिमत्त्वं स्वरूपसत्ताप्रवृत्त्यादौ परापेक्षत्वमस्वातन्त्र्यमिति भावरूपमेवैतदिति । जडे शक्तेरभावेनाल्पशक्तिमत्त्वस्य पक्षतावच्छेदकत्वे जडासङ्ग्रहस्य हेतुत्वे भागासिद्धेरापातात् । न च जडेऽल्पशक्ति. सम्भवति ।

(द्वै द्यु) अल्पशक्तिरसार्वज्ञ्यं पारतन्त्र्यमपूर्णता।
उपजीवकत्वं जीवत्वं ॥

इति जीवधर्मत्वोक्तेश्च। अस्वातन्त्र्यस्य प्रवृत्त्यादौ परनियम्यत्वघटितस्य साध्यस्वरूपतया तस्य पक्षतावच्छेदकत्वे वा हेतुत्वे वा तत्प्रसित्यैव कृतार्थतयाऽनुमानवैयर्थ्यात्। न च पराधीनप्रवृत्तिकत्वपराधीनसत्ताकत्वयोरेकस्य साध्यत्वमपरस्य पक्षतावच्छेदकत्वं हेतुत्वं वेति वाच्यम्। प्रवृत्तेर्यत्नरूपत्वे जडे तदसम्भवः। क्रियारूपत्वेऽप्यन्याकृताकाशकालादिरूपव्याप्तजडासङ्ग्रहः। तथा च यथासम्भवं बाधासिद्ध्यादिदोषप्रसङ्गः। न च सत्ताप्रवृत्त्याद्यन्यतमेषु परापेक्षत्वमस्वातन्त्र्यं पक्षतावच्छेदकं हेतुर्वा, एकमात्राधीनतावदन्यतमकत्वं साध्यमतः साध्यकोटावधिकनिवेशान्नानुमानवैयर्थ्यमिति वाच्यम्। तादृशसाध्यस्य रथादावभावेन व्यभिचारस्फूर्त्या व्याप्तिग्रहायोगात्।

सर्वज्ञभेदरूपस्य सर्वज्ञानाभावस्य वा पूर्ववदप्रसिद्धिः। स्वमते दुर्ग्रहता च। सर्वविषयकज्ञानवत्त्वं च जडासङ्ग्राहकमिति न तस्यापि पक्षतावच्छेदकत्वादिकं युक्तम्। नापि अल्पशक्तिमत्त्वमेवापर्याप्तशक्तित्वम्। जडेपि कार्यानुकूलशक्तेरङ्गीकारेण तस्याल्पशक्तिमत्त्वे बाधकाभावात्। शक्तावल्पत्वं च किञ्चित्कार्याननुकूलत्वम्। स्वानियम्ययत्किंचित्कत्वं पारतन्त्र्यम्। ईश्वरस्य रमाऽनियम्यत्वेन रमाया अपि पक्षता युक्तेति। कालस्य प्रकृतेस्तदभिमानिचित्प्रकृतेश्च [1]सर्वकार्यानुकूलत्वेन तेषां पक्षकोटावनिक्षेपप्रसङ्गेन तदन्यतममादायार्थान्तरताप्रसङ्गः। ईश्वरसिद्धेः प्रागस्वातन्त्र्यमपि रमाया दुर्ग्रहमिति तत्परिष्कारोप्यनुपपन्न इति चेन्न।

अपकर्षाश्रयशक्तिमत्त्वमल्पशक्तिमत्त्वं किञ्चिन्निष्ठस्वामितानिरूपकत्वं पारतन्त्र्यमित्यङ्गीकारात्। 'दण्डो घटे शक्तः न पटे' इति प्रतीतेः जडेपि शक्तिरस्त्येवेति न तदसङ्ग्रहः।

अन्ये तु जडे शक्त्यनङ्गीकारे अपकर्षानाश्रयत्वशक्तित्वोभयाभाववत्स्ववृत्तिधर्मसामान्यकत्वमेवाल्पशक्तित्वमित्याहुः।

न च सर्वत्रोक्तपारतन्त्र्यग्रहेणैव कृतार्थत्वादनुमानवैयर्थ्यम्। किञ्चिन्नियम्यसत्तास्वरूपप्रवृत्त्याद्यन्यतमवत्त्वरूपसाध्यस्य भिन्नत्वेन तद्ग्रहस्यैतद्ग्रहरूपत्वाभावात्। उक्तपारतन्त्र्यग्रहे साध्यग्रहो भवत्येवेति चेत्। सत्यम्। तस्य व्याप्त्यादिज्ञानमूलकत्वेनानुमानतया वैयर्थ्यशङ्कानवकाशात्। उक्तपारतन्त्र्यस्य साध्यरूपत्वाभावेन तदवच्छिन्नेऽल्पशक्तित्वादिहेतुनापि तन्सिद्धिरविरुद्धेति न कोपि दोषः।

अन्ये तु स्वातन्त्र्याभावपूर्णशक्तित्वाभावसर्वज्ञत्वाभावादय एव विकल्पेन पक्षतावच्छेदकहेत्वादयः। ननु अपकर्षाश्रयशक्तिमत्त्वस्वामितानिरूपकत्वादिधर्माणां पुरोवर्तिषु केषुचिदनुभवसिद्धत्वेन तेन सर्वेषामुपस्थित्या ब्रह्मादीनां विशेषरूपेणाऽगमेनाग्रहकालेपि पक्षकोटौ निक्षेपात्सर्वनियामकतयेश्वरसिद्धिर्भवति। न च सामान्यरूपाभावात्कथमेतदिति वाच्यम्। सिद्धान्ते [2]विशेषबलादनुगतसदृशधर्माणां सामान्यव्यवहारनिर्वाहकत्वाङ्गीकारात्।

[1] शक्ते सर्वकार्यानुकूलत्वेन इति पाठेन भाव्यमिति भाति।

[2] विशेषबलादननुगतसदृशधर्माणां इति पाठेन भाव्यमिति भाति

(द्वै द्यु) पुरोवर्तिषु कतिपयधूमेषु गृहीतेषु सकलधूमगोचरव्यवहारवत् प्रकृते बाधकाभावात्। भवता पक्षे ईश्वरसिद्धे प्राक् स्वातन्त्र्यादेः कुत्राप्यगृहीतत्वेन तदभावस्याऽपि गृहीतुमशक्यतया कथं पक्षतावच्छेदकत्वादिकम्। अत एव वक्ष्यति 'उक्तहेतूना पक्षधर्मताबलात् पूर्णशक्तित्वादिनैव सिद्ध' इत्यनेन ग्रन्थेनानुमानेनैव पूर्णशक्तित्वादिसिद्धिरिति। इति चेन्न। आगमेनैव स्वातन्त्र्याभावादे रमाब्रह्मादिषु सर्वेषु गृहीतु शक्यत्वात्। न चागमेनैव सर्वसिद्धेरनुमानवैयर्थ्यमिति वाच्यम्। आगमेनेश्वरस्वरूपे जगति स्वातन्त्र्याभावादौ च प्रतिपादिते च सति भगवत्स्वरूपपराणामागमाना वाद्यन्तररीत्या स्वार्थे तात्पर्याभावशङ्काया सोपपत्तिकत्वेन स्वार्थे तात्पर्यं समर्थयितु आगमोपजीवनेनैव आगमोक्तपक्षतावच्छेदकादिकमनुसृत्यानुमानस्य प्रवृत्तत्वेन तद्वैयर्थ्यानवकाशात्। सर्वथागमानुसरणे

उपाधिप्रतिपक्षौ तु क नामातीव दुर्वचौ।

इति न्यायेनानुमानेन तत्सिद्धेरेवाभावप्रसङ्ग इत्याहु.।

ननूक्तपक्षतावच्छेदकाक्रान्तेषु किञ्चिन्नियम्यत्वसाधने स्वामितानिरूपकाणा सर्वेषा स्वस्वामिनियम्यत्वस्य सिद्धत्वात्सिद्धसाधनं। एकमात्रनियम्यत्व व्यभिचारान्न साधयितु शक्यमित्युक्तमिति चेन्न। एकैकस्मिन् तत्तन्नियम्यत्वस्य प्रत्यक्षसिद्धत्वेऽपि स्वामितानिरूपक सर्वं किञ्चिन्नियम्यमिति सिद्धेरनुमानफलत्वात्। न चैकैकस्यैकैको नियामक इति पर्यवसानान्नेश्वरसिद्धि स्यादिति वाच्यम्। स्वामितानिरूपकसामान्ये किञ्चिन्नियम्यत्व स्वतो नियामकरूपेश्वरं विना न पर्यवस्यति। इतरनियम्यतयैव सर्वेषा नियामकत्वे 'अनवस्थितेरसम्भवाच्च' इति सूत्रभाष्योक्तरीत्याऽनवस्थाप्रसङ्गेन मूलक्षतिप्रसङ्गात्। **इतरेतराश्रयेण प्रत्यासत्तेरेवायोगादित्यत्रानवस्थाया** अप्युपलक्षणत्वेन गृहीतत्वेन उक्तरीत्या ईश्वरापर्यवसानस्यापि **टीकाकृता** निरस्तत्वादिति सर्वं चतुरस्रम्।

॥ **ताछीलिकतृन्नन्तप्रयोग इति** ॥ स्वभावबोधकतृन्प्रयोग इत्यर्थ। अत एव पूर्वं चिचेत्ये यन्तेति गम्यादिषूपसङ्ख्यानमभिप्रेत्य द्वितीयया विग्रह प्रदर्शित। 'न लोकाव्ययनिष्ठाखलर्थतृना' इति षष्ठीनिषेधादिति भाव ॥ **देवस्यैष इति** ॥ **देवस्य** क्रीडादिगुणविशिष्टस्य परमेश्वरस्य **एषः** इच्छारूप **अय** सृष्ट्यादिव्यापारः **स्वभावः** न तु प्रयोजनार्थाद्यनुसन्धानेनागन्तुक इति श्रुत्यर्थ अन्यत्र **टीकाकृदुक्तरीत्याऽवसेय** ॥ **न च रुद्रादीनामिवेति** ॥ तथा च पक्षकोटिनिविष्टेषु अल्पशक्त्या प्रत्यासत्त्यनुपपत्तिवदेतदतिरिक्तेश्वरपक्षेऽपि तस्यावर्जनीयत्वेन तस्याबाधकत्वाङ्गीकारे चिच्चेत्ययोरेवान्धपङ्गुन्यायेन परस्परनियम्यनियामकभावो युक्त इति अनुमानस्यार्थान्तरत्वमप्रयोजकत्वं वेति भाव ॥ **हेतूनां पक्षधर्मताबलेनेति** ॥ व्याप्तिविशिष्टहेतो पक्षसत्त्वस्य यद्बलं नियामक पूर्णशक्त्यादिक विना स्वसत्त्वायोगरूपानुपपत्तिप्रतिसन्धानविषयत्व तस्मादित्यर्थ। अय भाव। व्याप्तिविशिष्टस्य हेतो पक्षवृत्तित्व यादृशसाध्यं विनानुपपन्नत्वेन गृह्यते व्यापकतावच्छेदककोटयप्रविष्टमपि तद्रूपमनुमितौ साध्ये भासते। यथा वह्निव्याप्यधूमस्य पर्वते सत्त्व महानसीयत्वादिशून्यवह्निं विनाऽनुपपद्यमानत्वेन गृह्यमाण महानसीयादिवह्निभिन्नवह्निमानिति अनुमितिं सम्पादयति। एतदेव इतरबाधसहकारेण परामर्शो व्यापकताव-

(द्वै ग्र.) च्छेदकत्वेनागृहीतधर्मं साध्ये अवगाहमानामनुमितिं जनयतीति **नवीना** निष्कर्षयन्ति । तथाऽपशक्तित्वादिविशिष्टनियम्यत्वमनवस्थान्योन्याश्रयादिबाधकेनास्वन्तत्रत्वादिरूपपक्षतावच्छेदकावच्छेदेन न घटत इति बाधसहकृतपरामर्शेन पूर्णशक्तित्वादिविशिष्टकिञ्चिन्नियम्यमित्येवानुमितिर्जायतेऽतो न पूर्वोक्तरीत्याऽर्थान्तराद्यवकाश इति भाव । **कृष्णं** द्रक्ष्यन्यातीत्यादौ दर्शनेच्छागमनयो समानकालिकत्ववदत्रापि 'पक्षधर्मताबलेन सिध्यन् पूर्णशक्त्यादिमानेव सिध्य' इत्यत्र सिद्धिद्वयस्य समानकालिकत्व लब्धम् । ज्ञानद्वयस्य यौगपद्यायोगादेकस्यैव स्वसमानकालिकत्वस्य वक्तव्यतयानुमितेरेव पूर्णशक्त्यादिविषयकत्वलाभ इति ज्ञेयम् ॥ **स्वेच्छाधीनप्रवृत्तिरिति** ॥ अभेदेऽपि विशेषबलादधीनत्व स्वीक्रियते। 'स्वेच्छया विष्णुरव्यय । सृष्ट्यादिक करोत्यधा' इति प्रमाणाना तृतीयया प्रयोजकत्वबोधकाना प्रामाण्यनिर्वाहायेति भाव । नन्वेव ब्रह्मादिप्रवृत्तेरपि स्वेच्छाधीनत्वात्तेष्वतिव्याप्ति । मात्रार्थान्तर्भावे त्वित राशवैयर्थ्यमिति चेन्न । स्वनिर्वाहकेच्छात्वव्यापकस्वसामानाधिकरण्यका या प्रवृत्तिस्तद्वत्त्वं स्वप्रवृत्तिनिर्वाहकेच्छात्वव्यापकस्ववृत्तित्वकत्व वा लक्षणमित्यभिप्रायात् । मात्रान्तर्भावेन **तत्वसङ्ख्यानटीकोक्त** मार्गान्तरमिति न तद्विरोध इति ज्ञेयं ॥ **अशेषविषयत्वादशेषमिति** ॥ तथा चाशेषपद लाक्षणिकं विषयविषयिणोरभेदोपचारो वेति भाव । व्यधिकरणबहुव्रीहेरननुशिष्टत्वाभिप्रायेणाशेषस्य दर्शनं यस्येति विग्रहमुपेक्ष्योक्तरीतिरनुसृतेति **सम्प्रदायविदः । केचित्तु** न विद्यते शेषं स्वाविषयीभूतात्मकावशिष्टपदार्थो यस्य ज्ञानस्येति व्युत्पत्त्या अशेषपदमशेषविषयकपरं । न लक्षणा नाप्यभेदोपचार । उक्तरीत्या मुख्यवृत्त्यैव समानाधिकरणबहुव्रीहेरुपपत्तौ अशेषपदस्य सर्वार्थकत्वमङ्गीकृत्य सविवादव्यधिकरणबहुव्रीह्याश्रयणमयुक्तमिति तदुपेक्षेत्याहु ।

(गु टि) नन्वभिप्रेतानुमाने चिच्चेत्यरूपे पक्षे अतादृशत्वहेतोरसिद्ध्या पक्षधर्मत्वासिद्धि । दृष्टान्ताभावेन व्याप्त्यग्रहणाद्व्याप्यत्वासिद्धि । केनचिन्नियतत्वसिद्धावपीश्वरनियतत्वासिद्ध्येश्वरासिद्धेरनुमानेनेश्वरसिद्धिरिति प्रतिज्ञाहानिश्चेत्येता शङ्का परिहरन्ननुमानप्रकार सूचयितुमाह ॥ **इदमुक्तं भवतीति** ॥ अस्य च रमापतिरिति इति वक्ष्यमाणेनेतिशब्देनान्वय ॥ **तथा च श्रुतिरिति** ॥ **देवस्य अयं** जगत्सृष्ट्यादिविषय । **एषः** इच्छापूर्विका प्रवृत्तिरिति यावत् । **स्वभाव** एव न प्रयोजनाय । कुत. । आप्तकामस्य प्रयोजनस्पृहाऽसम्भवादित्यर्थ । 'अयमेष इयमिच्छा' इति **गीताभाष्यटीकाया** अव्ययमेवार्थ । परतन्त्रताव्यावृत्तिरेव स्वातन्त्र्यमिति भ्रमनिरासाय

स्वेच्छानुसारितामेव स्वातन्त्र्य हि विदो विदु ।

**इत्यनुव्याख्यानानुसारेण** स्वतन्त्रशब्दार्थमाह ॥ **स्वतन्त्र इति** ॥ न च भगवदिच्छाधीनप्रवृत्तित्वस्य रमाब्रह्मादावपि सत्त्वात्तत्रापि प्रसङ्ग इति वाच्यम् । स्वपदस्य समभिव्याहृतपरत्वेन भगवत्परत्वाभावात् । रमाब्रह्मादेश्च स्वत शक्तिमात्रशून्यत्वेन स्वेच्छाधीनप्रवृत्तित्वानुपपत्ते । 'यत्स्वसत्तादौ स्वाधीनं न तु परापेक्षम्' इत्यादि**टीकाकारीयोक्तिस्तु** विशेषे विवदमान प्रति परानधीनत्वमेव लक्षणमस्त्वित्यभिप्रेत्यैव । न तु स्वाधीनत्वस्य रमादिसाधारणत्वेन लक्षणत्वानुपपत्त्या तद्विवरणमेतदित्यभिप्रेत्य । तथा सति

(गु टि)　　स्वेच्छानुसारितामेव स्वातन्त्र्यं हि विदो विदुः ।

इत्यनुव्याख्यानेन 'अत एव स्वतन्त्र इत्यस्य परतन्त्रताव्यावृत्तिरर्थ इत्ययुक्तम्' इति निरवकाशटीकाकारीयतत्वनिर्णयग्रन्थेन च विरोधप्रसङ्गात् । देशस्य सर्वगतत्ववत् कालस्य कालसम्बन्धवच्च ईश्वरस्यापि विशेषबलेन स्वेच्छाधीनप्रवृत्तिरूपस्वाधीनत्वसम्भवाच्चेत्यवधेयम् ॥

यत्तु स्वातन्त्र्यस्य स्वसत्तादौ परानपेक्षत्वरूपत्वेन तदभावरूपपरापेक्षत्वस्यैव केनचिन्नियतत्वे हेतूकर्तव्यत्वात् साध्यावैशिष्ट्यशङ्कापरिहारायेदं व्याख्यानमिति तन्न । स्वसत्तादौ परानपेक्षत्वस्य स्वतन्त्रशब्दमुख्यार्थत्वाभावेन तमादाय साध्यावैशिष्ट्यशङ्काया अनुचितत्वात् । अन्यथा अनुमानमात्रविलयापातात् । अमुख्यार्थमादाय साध्यावैशिष्ट्यशङ्कायाः सर्वत्र सम्भवादित्यास्तां तावत् ।

### मुक्तचेतने भेदाक्षेपस्तत्साधकानुमानप्रयोगश्च

(टी) अत्राहुः,

भवतु चेत्यं परमेश्वरनियतम् । [1]चेतनश्च संसारी । मुक्तस्तु न च केनापि नियतः । नियम्यनियामकभावस्य भेदव्याप्तत्वात् । न च मुक्तस्य कुतोऽपि भेदोऽस्ति । प्रमाणाभावात् । व्यापकाभावे च व्याप्यनिवृत्तिरवश्यम्भाविनीति । तत्राह

**विमतो भिन्नो मुक्तत्वात् यदित्थं तत्तथा यथा सम्प्रतिपन्नः**

ननु ग्रन्थो हि वादप्रक्रियया प्रवर्तते । शिष्यानुकम्पया प्रवर्तनात् । वादे च

पृष्टेनाऽगम एवादौ वक्तव्यः साध्यसिद्धये ।

इत्यङ्गीकारः । तत्कथमनुमानमुच्यते । सत्यं, आगमोऽप्यत्रार्थे अभिधास्यते । अनुमानं तु तदर्थावधारणार्थमुपोद्घातप्रक्रिययोपन्यस्तमित्यदोषः ।

### अनुमाने विमतसम्प्रतिपन्नपदप्रयोगप्रयोजनम्

अत्र विमत इति संसारान्मुक्तो विवक्ष्यते । तस्मादात्मेत्येव ग्रहणे सिद्धार्था प्रतिज्ञा स्यात् । अद्वैतवादिनापि संसारिणो भिन्नत्वेनाभ्युपगतत्वात् । भेदस्य च पारमार्थिकत्वानौपाधिकत्वाभ्यामविशेषितत्वात् । मुक्त इत्येव तर्ह्युच्यताम् । [2]निगडमुक्तेन सिद्धार्थता स्यादिति चेत् । तर्हि संसारान्मुक्त इति वक्तव्यं । तथा कृते गौरवं स्यादिति चेत् न । विमतेरनेकविधत्वेन धर्मिविशेषानिश्चये साध्यविशेषोपादानादिना तन्निश्चयानुसरणेऽपि गौरवसाम्यात् । तथापि विनिगमनं कुत इति चेत् । अर्थप्रतिपत्तिगौरवाच्छब्दगौरवस्य ज्यायस्त्वात् । सत्यं । तथाप्यप्रसिद्धविशेष्यत्वाप्रसिद्धविशेषणत्वप्रसिद्धार्थत्वप्रमाण[3]बाधानां प्रतिज्ञादोषाणामुद्धारोऽप्यनेन सङ्क्षेपतः कृतः स्यादित्येवमर्थं विमत-

---

1 चेतनस्तु इति श्रीराघवेन्द्रतीर्थीयः पाठः　　2 निगडादिमुक्तेन इति पाठान्तरम् ।

3 बाधादीनां इति श्रीराघवेन्द्रतीर्थीयः पाठः ।

(टी) ग्रहणम्। तथा हि, यदि विशेष्यो मुक्तात्माऽप्रसिद्धः स्यात्तदा किमाश्रया विमतिः स्यात्। यदि च विशेषणं भेदोऽप्रसिद्धो भवेत्तदा किमुल्लेखिनी विमतिर्भवेत्। यदि वा भेदो मुक्तात्मनि सिद्धो बाधितो वा भवेत्तदाप्यन्यतरपक्षनिश्चयान्न विमतिः स्यात्। अस्ति चेयम्। ततो नाप्रसिद्धविशेष्यत्वादीति। एतेनोदाहरणेऽपि सम्प्रतिपन्नग्रहणस्य साध्यसाधनवैकल्याद्युद्धारः प्रयोजनं व्याख्यातम्। अन्यथा यथा निगडमुक्त इत्यवक्ष्यत्।

(वि टि) ननु 'चिच्चेत्ये केनचिन्नियते' इति साधनमयुक्तम्। अमुक्तचेतनस्य चेत्यमात्रस्य च मया ईश्वरनियतत्वस्वीकारेण मां प्रति तथा साधने सिद्धसाधनप्रसङ्गात्। मुक्तचेतनस्यापि पक्षत्वेन तस्येश्वराभिन्नत्वेन भेदनियतेश्वरनियम्यत्वसाधने तदंशे बाधश्चेति मायावादिनः शङ्कामुत्थापयति॥ अत्राहुरिति॥

यद्वा साङ्ख्यमीमांसकान् प्रति चिच्चेत्यनियामकतया श्रुत्यनुमानाभ्यामीश्वरस्य साधितत्वात् नियम्य-नियामकभावस्य भेदनियतस्य तं विना अनुपपत्तेः संसार इव मुक्तावपि चेतनस्येश्वरभिन्नत्वसिद्धेः. 'विमतो भिन्नो मुक्तत्वात्' इति तान्प्रत्येव मुक्तचेतनस्य भिन्नत्वसाधनमयुक्तमित्याशङ्क्य तत्परिहारार्थं नेदं तान्प्रति साधनं किं तु मायावादिनं प्रतीत्यभिप्रेत्योत्तरग्रन्थानुगुणामद्वैतिनः शङ्कामाह॥ अत्राहुरिति॥ यद्यपि प्रकृतितद्विकारोपाधानविलये पुरुषस्य स्वरूपेणावस्थानमेव मुक्तिरिति साङ्ख्यरीत्या दुःखप्रागभावपरिपालनमेव मुक्तिरिति मीमांसकरीत्या आत्यन्तिकी दुःखनिवृत्तिरेव मुक्तिरिति वैशेषिकादिरीत्या अन्यथैव मुक्तिरिति बौद्धादिरीत्या च मुक्ते नियमनकृत्यस्यैवाभावेन तस्य संसारदशायामिव मुक्तौ वस्तुतो नियामकभिन्नत्वेऽपि चिच्चेत्ये केनचिन्नियते इत्यनुमाने मुक्तचेतनस्यापि पक्षतावच्छेदककोडीकृतत्वेन तदंशे बाधशङ्काऽस्त्येव तथापि मायिरीत्योद्भावितबाधनिरासदिशैव मुक्तेऽपि नियमनकृत्यं भविष्यतीत्यभिप्रेत्य तत्साधने [1]साङ्ख्यरीत्यापि बाधोद्भावनपरिहार सिद्ध्यतीत्याचार्येण पृथक् तद्रीत्या तदुद्भावनपरिहारौ न कृताविति मनसि विधाय मायिरीत्यैव तदुद्भावनमेव कृतमित्याशय॥ चेतनश्चेति॥ संसारी चेतनश्च परमेश्वरनियतो भवत्विति सम्बन्धः॥ न च मुक्तस्येति॥ आत्मयाथात्म्यज्ञानं विना मुक्तेरेवायोगात् तत्सत्त्वे च तदज्ञाननिवृत्त्यवश्यम्भावेन तत्कल्पितभेदमात्रनिवृत्त्यवश्यम्भावात्। अन्यथा

विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥

इति स्मृतिविरोध इति भावः

यद्वा 'चिच्चेत्ये केनचिन्नियते' इत्यत्र मुक्तस्यापि पक्षत्वे 'मुक्तचेतनो न केनापि नियतः, कुतोऽपि भेद-रहितत्वात् यन्नैवं तन्नैवं यथा संसारिचेतनः' इति मायावदी प्रतिपक्षं भिन्नत्वमुपाधिं वा शङ्कते॥ अत्राहुरिति॥ कुतोऽपि भेदरहितत्वादिति हेतोः स्वरूपासिद्धिं भिन्नत्वोपाधेः पक्षे मुक्त एव साधनव्यापकत्वशङ्कां च वारयितु-

[1] साङ्ख्यादिरीत्यापि इति पाठेन भाव्यमिति भाति।

(वि टि) माह ॥ न च मुक्तस्येति ॥ इतीति ॥ अत्राहुरिति पूर्वेण सम्बन्ध । प्रमाणाभावादिति हेतुरसिद्ध इत्याहेत्याह ॥ तत्राहेति ॥ तथा च [1]व्यापकानुपलब्ध्यभावान्नियम्यनियामकभावरूपसाधनस्याभावानिश्चयात् कुतोऽपि भेदरहितत्वादिति हेतो स्वरूपासिद्धत्वात् नियामकाद्भिन्नत्वरूपोपाधेर्मुक्ते पक्ष एव साधनव्यापकत्वाच्च न बाधसत्प्रतिपक्षोपाधिशङ्केति भाव ।

ननु वादप्रक्रियया प्रवृत्ते ग्रन्थे आगमस्यैव प्रथममुपन्यसनीयत्वात्तदुपन्यासमकृत्वा कथमनुमानमेवोपन्यस्यत इत्याचार्यस्याचातुरी शङ्कते ॥ नन्विति ॥ किमतो यद्येवमत आह ॥ वादे चेति ॥ सत्यमित्यर्धाङ्गीकारो विभावित । वादकथात्मके ग्रन्थे प्रथममागम एवोपन्यसनीय इत्यङ्गीकाराश । तत्कथमनुमानमुच्यत इत्यनङ्गीकाराश । अयमाशय । आगम एव एव प्रथम विवक्षित । अत्र प्रथममनुमानोपन्यासस्तु तदर्थावधारणार्थत्वेन तदङ्गतया । न हि स्वाङ्ग स्वव्यवधायकमित्याचार्यस्य नाचातुरीति । तर्हि आगमेनैवालम् । किमनुमानेनेत्यत आह ॥ अनुमानन्त्विति ॥ उपोद्घातप्रक्रिययेति ॥ 'अणुरपि विशेषोऽध्यवसायकर' इति न्यायेनैकस्योपायस्योपायान्तरादूषकत्वात् 'द्विबद्ध सुबद्ध भवति' इति न्यायाच्च प्रकृतसिद्ध्यर्थचिन्तालक्षणोपोद्घातस्य प्रकृष्टोपायत्वबुद्ध्येत्यर्थ ।

ननु विमतः इति पक्षनिर्देशो नोपपद्यते । तदर्थभूतविमते भिन्नः इति साध्यविशेषोपादानेन भिन्नत्वतदभावकोटिकत्वलाभेनातथाभूतविमतितो व्यावृत्तिसिद्धावपि अनतिप्रसक्तविषयतावच्छेदकोपादानं विना किंधर्मिकेयं विमति प्रकृते पक्षतावच्छेदिकेति निर्धारणासम्भवात् यत्र कुत्रचिद्धर्मिणि भेदसाधने तस्य प्रकृतानुपयुक्तत्वेनार्थान्तरप्रसङ्ग इत्याशङ्क्य विमतग्रहण धर्मिविशेषपरतया व्याचष्टे ॥ अत्र विमत इति ॥ विमत इत्येव पक्षनिर्देश आवश्यक इति व्यवस्थापयितुं सम्भावितपक्षान्तराण्युद्भाव्य दूषयति ॥ तस्येत्यादिना ॥ वस्तुत ससरान्मुक्तस्येत्यर्थ ॥ सिद्धार्थेति ॥ ससार्यात्मनोऽपि आत्मपदप्रवृत्तिनिमित्तभूतात्मत्ववत्त्वेन तदशे सिद्धसाधनतेत्यर्थ । प्रतिज्ञाया सिद्धार्थतामेवोपपादयति ॥ अद्वैतवादिनापीति ॥ आरोपितो भेद इति वादिना सत्योपाधिकृतसत्यभेद इति वादिनापीत्यर्थ । ननु कथ सिद्धार्था प्रतिज्ञा । पारमार्थिकभेदस्यानौपाधिकभेदस्य चासिद्धेरित्यत आह ॥ भेदस्य चेति ॥ प्रतिपन्नोपाधिस्थत्रैकालिकनिषेधाप्रतियोगित्व पारमार्थिकत्वम् । उपाधिव्यतिरेकप्रयुक्तव्यतिरेकाप्रतियोगित्वमनौपाधिकत्वमिति विवेक । तथा च भिन्नः इत्येव प्रतिज्ञाकरणात् स्यादेव सिद्धार्था प्रतिज्ञेति भाव । एतच्च 'पक्षतावच्छेदकैक्येप्यशत सिद्धसाधनं दोष' इति मतेनेति बोध्यम् । यद्यपि पारमार्थिकभेदवानिति साध्यविशेषणादानेऽपि पर्वतोऽग्निमानित्यादाविव धर्मिसमसत्ताकसाध्यसिद्ध्यवैकल्येन न सिद्धार्था प्रतिज्ञा । अन्यथा प्रसिद्धधूमाद्यनुमानेऽप्यारोपितवह्निमादाय सिद्धार्था प्रतिज्ञा स्यात् । प्रत्युत विशेषणदाने पारमार्थिकभेदस्याप्रसिद्धतया अप्रसिद्धविशेषणतादोष तथापि प्रतिवादिहृदयानुसारेण तथोक्तमिति हृदयम् ॥ सिद्धार्थतेति ॥ प्रतिज्ञाया इति शेष ॥ तथा कृत इति ॥ संसारान्मुक्त इति पक्षनिर्देशे कृते विमत इति पक्षनिर्देशापेक्षया शब्दाधिक्यप्रयुक्तगौरव स्यादित्यर्थ ॥ तन्निश्चयानुसरण इति ॥ धर्मिविशेषनिश्चयानुसरणे

[1] व्यापकानुपलब्ध्यभावान्नियम्यनियामकभावरूपसाध्यस्याभावानिश्चयात् इति पाठेन भाव्यमिति भाति.

(वि. टि) आवश्यके प्रतिपत्तिगौरवसत्त्वेन साम्यादित्यर्थ ॥ **शब्दगौरवस्येति** ॥ झटिति विवक्षितार्थसमर्पकत्वेन प्रतिपत्तिगौरवापेक्षया लघुत्वेन श्रेष्ठत्वादिति भाव । संसारान्मुक्त इति पक्षनिर्देशो विमत इति पक्षनिर्देश इव गौरव नेत्यङ्गीक्रियते । संसारान्मुक्त इति तु वक्तव्यमिति नाङ्गीक्रियत इत्यभिप्रेत्याह ॥ **सत्यमिति** ॥ विमत इति पक्ष-निर्देशस्य शब्दगौरवापेक्षया अधिकप्रतिपत्तिगौरवग्रस्तत्वेऽपि प्रयोजनविशेषवशेनाऽदरणीयतामाह ॥ **तथापीति** ॥ **अनेन** विमत इति पक्षनिर्देशेन ॥ **विमतग्रहणमिति** ॥ स्वाभिमतपक्षस्य विमत इति निर्देश इत्यर्थः । वादिप्रति-वादिनो. स्वस्वपक्षनिश्चयवत्त्वात् प्राश्निकानाञ्चान्यतरपक्षनिर्णयवत्त्वात् आहार्यसंशयस्य चातिप्रसक्तत्वात् जल्पे विमतिशब्दितसंशयविषयत्वस्य पक्षतावच्छेदकत्वेनोपादानासम्भवेऽपि वादकथारूपेऽस्मिन् ग्रन्थे गुरोस्तत्वनिर्णय-वत्त्वेऽपि शिष्यस्य तदभावेन स्वारसिकविमतिविषयत्वस्य पक्षतावच्छेदकत्वेनोपादान नानुपपन्नमिति भाव ।

अत एव **टीकायां** प्राक् 'ननु ग्रन्थो वादप्रक्रियया प्रवर्तते । शिष्यानुकम्पया प्रवर्तनात्' इत्युक्तिरिति बोध्यम् । **न** चोक्तरीत्या विमत इति पक्षनिर्देशस्य प्रतिज्ञादोषोद्धारार्थत्वे विशिष्य प्रतिज्ञादोषशङ्कापरिहारौ क्वापि **न** कर्तव्याविति वाच्यम् । विमतग्रहणेन सङ्क्षेपतस्तन्निरासेऽपि विशिष्य तदुद्भावनपरिहारयोस्तत्प्रपञ्चार्थत्वोपपत्तेः । अत **एव** 'प्रतिज्ञादोषाणामुद्धारोप्यनेन सङ्क्षेपत कृत स्यादित्येवमर्थं विमतग्रहणम्' इति **टीकायामुक्ति.** । **विमत इति** पक्षनिर्देशस्य प्रतिज्ञादोषोद्धारार्थत्व मन्दान् प्रति व्युत्पादयति ॥ **तथा हीति** ॥ **अप्रसिद्ध इति** ॥ प्रमाणतः प्रसिद्धिरहित इत्यर्थ ॥ **किमाश्रयेति** ॥ किंधर्मिकेत्यर्थ । अन्यथा आश्रयासिद्धिरनुमानदोषो **न** स्यादिति भाव ॥ **किमुल्लेखिनीति** ॥ किंकोट्युल्लेखिनीत्यर्थ । प्रमाणजन्यकोटिप्रसिद्धेरेव संशयहेतुत्वात् । आरोपस्य **च** प्रमापूर्वकत्वनियमादिति भावः । मुक्ताऽत्मनीत्यस्यानन्तरं प्रमाणेनेति शेष । इष्टापत्तिमाशङ्क्याह ॥ **अस्ति चेति** ॥ तथाविधविमतेरनुभवसिद्धत्वेन दुरपह्नवत्वादिति भाव । उक्तन्यायमुदाहरणवाक्येप्यतिदिशति ॥ **एतेनेति** ॥ विमतग्रहणस्य सप्रयोजनत्वसाधकन्यायेनेत्यर्थ । एतच्च व्याख्यातमित्यनेन सम्बद्ध्यते । साध्य-साधनवैकल्यादीत्यादिशब्देन दृष्टान्तरूपधर्म्यप्रसिद्धेर्ग्रहणम् ॥ **अन्यथेति** ॥ उदाहरणे **सम्प्रतिपन्नग्रहणस्य** साध्यवैकल्यादिदोषोद्धारार्थत्वाभाव इत्यर्थः ।

(रा टि.) ॥ **चेतनस्त्विति** ॥ मुक्तव्यावृत्त्यर्थस्तुशब्द । भवतु परमेश्वरनियत इत्यनुषङ्ग ॥ **कुत इति** ॥ कस्मादपि वस्तुन इत्यर्थ ॥ **व्यापकेति** ॥ भेदाभावे तद्व्याप्तनियन्तृत्वस्याप्यभाव इत्यर्थः ॥ **तत्राहेति** ॥ एव चोद्ये परिहारमाहेति तत्र मुक्तेश्वरभेदे प्रमाणमाहेति वाऽर्थ ॥ **इत्यङ्गीकार इति** ॥ **कथालक्षणे** तथोक्ते रिति भाव. ॥**अभिधास्यत इति** ॥

इद ज्ञानमुपाश्रित्य मम साधर्म्यमागता· ।

इत्यादिरभिधास्यत इत्यर्थ· ॥ **तदर्थेति** ॥

उपपत्त्यवकाशोऽत्र ह्यागमार्थविनिर्णये ।

इति कथालक्षणोक्तेरिति भावः । तर्ह्यागमोक्त्यनन्तर वाच्यमित्यत आह ॥ **उपोद्घातेति** ॥ **विमत** इति

(रा टि.) भिन्नोऽभिन्नो वेति निरुद्धमतिविषय । सशयविषय इत्यर्थ । तत्र विशेष्याकाङ्क्षाया हेतूक्तिरुव्वमाह ॥ अत्रेति ॥ नन्वत्रात्मेति वा मुक्त इति वा ससारान्मुक्त इति वा कुतो नोक्त शब्दलाघवात्प्रतिपत्तिलाघवाच्चेत्यत क्रमान्निराह ॥ तस्येत्यादिना ॥ पारमार्थिकादिभेदस्य तेनानङ्गीकारान्नोक्तदोष इत्यत आह ॥ भेदस्येति ॥ तथा विशेषणस्य व्यावर्त्याभावेन व्यर्थत्वादिति भाव ॥ गौरवमिति ॥ शब्दगौरवमित्यर्थ ॥ अनेकेति ॥ सत्यत्वमिथ्यात्वाणुत्वमहत्त्वाद्यनेकप्रकारत्वेन । साध्यविशेषनिर्देशेन भिन्नत्वादिकोटिका विमतिरिति हेतुविशेषनिर्देशेन धर्मिविशेषनिर्णय इति गौरव सममेवेत्यर्थ ॥ तथापीति ॥ एव गौरवसाम्येऽपि ससारान्मुक्त इत्येव निर्देष्टव्य न विमत इति इत्यत्र किं विनिगमकमिति सिद्धान्तिना चोदिते पूर्ववादी उत्तरमाह ॥ अर्थप्रतिपत्तीति ॥ विमत इत्युक्तावुक्तदिशाऽर्थप्रतिपत्तेर्धर्म्याद्यर्थज्ञानस्य गौरवम् । ससारान्मुक्त इत्युक्तावर्थज्ञानस्य सुकरत्वान्न प्रतिपत्तिगौरवम् । किं तु विमत इत्युक्त्यपेक्षया शब्दगौरवमस्ति । तत्तु अर्थगौरवादुपादाने श्रेष्ठमेव । अतस्तथैव वाच्यमिति शङ्काभिप्राय ॥ बाधादीनामिति ॥ आदिपदेन व्याहतत्वादिवचनविरोधग्रह ॥ सङ्क्षेपत इति ॥ सामस्त्येन विनाकृतत्व सङ्क्षेप । तथा हीत्यादिग्रन्थे मूकोऽहमित्यादिवत्प्रतिज्ञा व्याहता चेन्न विमतिरित्यादिना तदुद्धारप्रकारोपपादनमुपलक्ष्यते । एतेन प्रतिज्ञादोषोद्धारव्याख्यानेन । दृष्टान्तो यदि साध्यहीनोऽप्रसिद्धो वा स्यात् कथ सम्प्रतिपन्न स्यादिति व्याख्यातप्रायमित्यर्थ ।

(वे टि) ॥ चेतनश्च ससारीति ॥ परमेश्वरनियत इति पूर्वेणान्वय ॥ मुक्तस्त्विति ॥ न च सोऽपि ससारदशाया नियम्य एवेति वाच्यम् । तथापि नित्येति नियन्तृतायाः स्वरूपसङ्कीर्तनमित्युक्तेर्भवदभिमतनित्यनियन्तृत्वस्यासिद्धिरिति भाव ॥ न च मुक्तस्येति ॥ निवृत्ताविद्यकस्याऽविद्यकभेदस्याप्यसम्भवादिति भाव ॥ तदर्थावधारणार्थमिति ॥

उपपत्त्यवकाशोऽत्र ह्यागमार्थविनिर्णये ।

इति तत्रैवोक्तत्वादिति भाव । नन्वेव प्रथममागममभिधायानन्तर तस्यान्यार्थे परेणाभिहिते स्वोक्तार्थनिर्धारणायोपपत्तिर्वक्तव्या । तत्कथं प्रथम तद्वचनमित्यत आह ॥ उपोद्घातप्रक्रिययेति ॥ ननु विमतिविषयतावच्छेदक किञ्चिदस्ति न वा । आद्ये तदेव पक्षतावच्छेदकमस्तु । द्वितीये पक्षतावच्छेदकग्रहणानुपपत्तिरित्यत आह ॥ अत्र विमत इतीति ॥ तथा च ससारान्मुक्तत्वमेव विमतिविषयतावच्छेदकमिति भाव. । विमतिग्रहणकृत्य तूत्तरत्र स्वयमेव वक्ष्यति । विमत इत्येव पक्षनिर्देश आवश्यक इति व्यवस्थापयितु सम्भावितपक्षान्तराण्युद्भाव्य दूषयति ॥ तस्येत्यादिना ॥ ससारान्मुक्तस्येत्यर्थ ॥ अद्वैतवादिनाऽपीति ॥ मायावादिना भास्करेण चेत्यर्थ । नन्वसाभि पारमार्थिकोऽनौपाधिको वा भेद साध्यते । तथा च भेदमिथ्यात्ववादिन , तत्सत्यत्वेऽपि तस्य सोपाधिकत्ववादिनो वा न सिद्धसाधनतेत्यत आह ॥ भेदस्येति ॥ [प्रतिपन्नोपाधौ त्रैकालिकनिषेधाप्रतियोगित्व पारमार्थिकत्व उपाधिव्यतिरेकप्रयुक्तव्यतिरेकाप्रतियोगित्वमनौपाधिकत्वमिति विवेको द्रष्टव्य] ॥ गौरव स्यादिति ॥ शब्दगौरव स्यादित्यर्थ ॥ एतेनेति ॥ विमतग्रहणस्य सप्रयोजनत्वसाधनन्यायेनेत्यर्थ । यदि दृष्टान्त. साध्य-

(वे टि) विकल साधनविकलो वा स्यात्तदा साध्यवत्तया साधनवत्तया च सम्प्रतिपत्तिर्न स्यात्। अस्ति चेयं। ततो न साध्यवैकल्यादीति भाव ॥ **अन्यथेति** ॥ यदि सम्प्रतिपन्नग्रहणस्य साध्यवैकल्याद्युद्धारो न प्रयोजनमित्यर्थ।

(द्वै द्यु) ॥ **अत्राहुरिति** ॥ यथाश्रुतार्थे **मायावादिभास्करमतानुयायिन** इत्यर्थ ॥ **मुक्तस्तु न केनापि नियत इति** ॥ तथा च **नित्यं नियन्ते**त्युक्तिरसङ्गतेत्यभिप्राय यद्वा मुक्तिदशाया तत्स्वरूपसत्तादेरितरानियम्यतयैव स्थितिवदन्यदापि तथैव स्थितिसम्भवाच्चिच्चेत्ययोरितरनियम्यत्वं मास्त्वित्यनुमानं अप्रयोजकमिति भाव ॥ **न च मुक्तस्य कुतोपि भेदोस्तीति** ॥

आमुक्तेर्भेद एव स्याज्जीवस्य परमस्य च।
मुक्तस्य तु न भेदोस्ति भेदहेतोरभावत ॥

इत्यादीना भेदसामान्यनिषेधकप्रमाणाना सत्त्वादिति भाव। ननु मुक्तौ भेदग्राहकप्रमाणबाधात्तेषा न स्वार्थे प्रामाण्यमित्यत आह ॥ **प्रमाणाभावादिति** ॥ भेद इति शेष। अस्य च प्रमाणाभावस्य भेदाभावे भेदग्राहकप्रमाणबाधाभावद्वारा हेतुत्वं बोध्यम्। यद्वा किं भेदाभावे प्रमाणान्तरोपन्यासेन। भेदे प्रमाणाभाव एव तदभावसाधक इत्याशयेनाह ॥ **प्रमाणाभावादिति** ॥ **वादप्रक्रियया** वादवृत्तितत्त्वनिर्णयोद्देश्यकत्वादिधर्मादिना सादृश्येन। कुत इत्यत आह ॥ **शिष्यानुकम्पयेति** ॥ **उपोद्घातप्रक्रिययेति** ॥ 'पृष्टेनागम एवादौ वक्तव्य.' इत्यत्र आगमपदस्य चागमोपयुक्तप्रमेयग्राहकतया एवकारेण तदन्यानुमानादेरेव व्यवच्छेद इति भाव.।

ननु विमतपदस्य विवादविषयोऽर्थ। भिन्न इत्यादिविशेषसमभिव्याहाराच्च भेदप्रकारकविमतिविषयत्व पक्षतावच्छेदकं लब्धम्। तदवच्छिन्ने साध्यसाधनमयुक्तम्। विमतिसाध्यसशयस्यान्यधर्मितावच्छेदककत्वेनानुमितेसंशयनिवर्तकत्वाभावापातेनानुमानवैयर्थ्यापत्तेरित्यत आह ॥ **अत्रेति** ॥ विमतपद ससारान्मुक्तस्य प्रकृतानुमानपक्षस्य परिचयायैव। न तु विमतत्वस्य पक्षतावच्छेदकत्वलाभायेति भाव। ननु **न्यायामृते** विमते पक्षतावच्छेदकत्वानुसरण कथमुपपद्यत इति चेत् न। समानधर्मिताकत्वेन प्रतिबन्धकतापक्षमाश्रित्याभ्युच्चयवादेन तत्र तथोक्तत्वात्।

ससारान्मुक्त इति निर्देशं विहाय विमतपदप्रयोगप्रयोजनमाह **तस्येत्यादिना** ॥ **अद्वैतवादिनापीति** ॥ आत्मत्वाश्रये शुद्धचिति आत्मत्वोपहिते वा भेदाभ्युपगमादिति भाव ॥ **पारमार्थिकत्वानौपाधिकत्वाभ्यामिति** ॥ अत्यन्ताबाध्यत्वोपाधिव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वरूपौपाधिकत्वाभावरूपविशेषणाभ्यामित्यर्थ. ॥ **अविशेषितत्वादिति** ॥ विशेषणे **मायावादिभास्करयोः** साध्याप्रसिद्धि स्यादिति भाव ॥ **मुक्त इत्येवोच्यतामिति** ॥ संसारिणि मुक्त इति व्यवहाराभावान्मुक्तत्वं संसारदशाव्यावृत्तम्। तदाश्रये ससारदशाया भेदसत्त्वेऽपि तदुपहिते भेदस्यासत्त्वात्प्रकृते तथैव साधनात्र सिद्धसाधनतेत्यभिमान। ससारिणि मुक्त इति शास्त्रीयव्यवहाराद्यभावेपि निगडमुक्त इदानीमय मुक्त इत्यादिव्यवहारो वर्तत एव। अन्यथा मुक्ता संसारसागरादित्यादौ संसारिव्यावृत्त्यर्थमवधिपदप्रयोगो व्यर्थ स्यात्। अतस्तत्साधारणं दु खजनकपदार्थप्रतियोगिकविभागवत्त्वादिकमेव तदर्थतावच्छेदक वाच्यम्। तस्य ससारदशासाधारणतया तदुपहिते भेदसाधनेऽपि सिद्धसाधनतेत्यभि-

(द्वै द्यु) माननिरासाभिप्रायेण समाधत्ते ॥ **निगडमुक्तेनेति** ॥ **ससारान्मुक्त इत्येव वक्तव्यमिति** ॥ अत्र ससार-पद स्वरूपावरणपरम्। मुक्तपद च विभागावच्छिन्नवाचि। ध्वसस्य सावधिकत्वाभावेन पञ्चम्यर्थान्वयस्य बाधितत्वेन तदवच्छिन्नवाचित्वायोगात्। विभागोपि न गुण। दु खाद्विमुक्त इत्यादावतिप्रसङ्गात्। किं तु सम्बन्धध्वसरूपा-पायमात्रम्। पञ्चम्यर्थप्रतियोगित्वस्य सम्बन्ध एवान्वय। स्वरूपावरणसम्बन्धध्वसोऽक्षरार्थ। स्वरूपावरण-ध्वसवत्त्व पक्षतावच्छेदकं फलितम्।

यदत्राह कश्चित्। विमतो भिन्नो मुक्तत्वात्सम्प्रतिपन्नवदित्युक्ते शुद्धचिन्मात्रे मुक्ते ससारदशाया भेद-स्याभ्युपगमात्सिद्धसाधनम्। मुक्तिदशायामिति धर्मिविशेषणत्वे पर प्रत्यसिद्धि। मुक्तौ कालानभ्युपगमात्। मुक्तिदशाया कालो नाभ्युपेयत इति व्याहतमिति चेन्न। तत्त्वज्ञानस्य स्वसमानाधिकरणस्वसमानविषयकाज्ञानतत्प्र-युक्तदृश्याधिकरणकालपूर्वत्वाभावनियमाभ्युपगमे फलतस्तन्निरासादिति। तत्तुच्छम्। विप्रतिपत्तिसाध्यसंशयस्य मध्यस्थादिनिष्ठतादशायामुक्तानुमानप्रवृत्तेर्विमतपदप्रयोगबलेन सूचितत्वेन सिद्धसाधनत्वादिशङ्काभावादेरग्रे ग्रन्थ-कृतैव वक्ष्यमाणतया तदुद्भावने स्वव्याहतत्वस्य स्वप्रतिज्ञातार्थपरित्यागस्य चापत्त्योद्भावकस्यैव निग्रहप्रसङ्गात्।

॥ **एवमर्थं विमतग्रहणमिति** ॥ अप्रसिद्धविशेषणत्वाद्यभावोऽत्रानुमाने वर्तते। अतो न तच्छङ्कयाऽत्रा-नुमानेऽप्रमाणत्वबुद्धि कर्तव्येति शिष्यान् प्रति बोधनार्थमित्यर्थ। यदत्र केनचिदुक्त 'विमत इत्युक्तिमात्रेणोक्त-शङ्कानिरासे विमत मिथ्या दृश्यत्वाद्यदित्थ तत्तथा यथा सप्रतिपन्नमित्युक्तिमात्रेण सकलदोषोत्धारसम्भवात्तत्र तवाप्रसिद्धविशेषणत्वाद्युत्थापनासङ्गति' इति। तद्भावानवबोधात्। न हि अनेन वाक्येन विमतपदेन सर्वदोषनिरा-सो जायत इत्युच्यते। किं त्वेतादृशार्थस्य सूचकतया ग्रन्थकारैर्विमतपद प्रयुज्यत इति। तत्र सूचितार्थस्य युक्तत्वे परीक्षकैरादरणीयता। अयुक्तत्वे तु नैव। एव च विमत मिथ्येत्यत्रापि भवदाचार्यैरुक्ताभिप्रायेण प्राचा सम्प्रदायमनुरुद्ध्य विमतपदसम्प्रतिपन्नपदे प्रयुक्ते। तत्र यथायोग्य मिथ्याशब्दार्थविकल्पेन सूचितस्यासाधुता निरूप्यते। तत्र भवदभिमतानिर्वचनीयत्वाभावकोटिग्रहणपूर्वक भावकोटेरप्रसिद्धत्वोद्भावने अप्रामाणिकप्रतियो-गिकाभाववादिनो मम न व्याहत्यादिकम्। सिद्धसाधनत्वादिकं न निष्कृष्टबाद्यभिमतसाध्ये प्रदर्श्यते। वादिन सदसत्सामान्यभेदानुसरणबीज शिष्याहितार्थ ग्रन्थे निबद्धम्। सत्यत्वग्राहकप्रमाणप्राबल्यविवक्षया बाधाद्युद्भावनं सङ्गच्छते। अत एवोत्तरत्र मुक्ताभेदग्राहकप्रमाणादिप्राबल्यविवक्षया प्रकृतानुमाने प्रमाणबाधशङ्कादिक सङ्गच्छते। यत्र कचिन्निष्कृष्टसाध्य एव सिद्धसाधनताद्युक्ति सा विप्रतिपत्तिरेव नास्तीत्यभिप्रायिका। न तु विप्रतिपत्तिमङ्गी-कृत्य सिद्धसाधनतापरा। न चेह प्रकृते सम्भवति। विप्रतिपत्तेर्निपुणतरमुपपादितत्वात्। ननु स्वमते स्वार्थानुमाने सिद्धिर्नानुमितिविरोधिनी। तथैव तर्कताण्डवोक्ते। परार्थानुमाने पुनरनाकाङ्क्षिताभिधानरूपतयाऽसङ्गतौ सिद्धसा-धनतापर्यवस्यति। तत्रापि विप्रतिपत्तेरावश्यकत्वेन तत्र सिद्धसाधनतोद्भावनाभावे तस्य दोषतावार्तैवोच्छिद्येतेति चेन्नै-वम्। सर्वत्र विप्रतिपत्तेरनावश्यकत्वेन वादकथादिषु यत्र परस्यासिद्धत्वाभिमानेन न्यायप्रयोगस्तत्र, विप्रतिपत्तिश्-लेऽपि प्रथम साध्ये हेतुमभिधाय तत्र वादिनोऽसिद्धत्वभ्रमेण पुनस्तत्साधने तत्र च तदुद्भावनसार्थक्यसम्भवान्न

(द्वै द्यु) कोपि दोष ॥ अन्यथा निगडमुक्त इत्यनक्ष्यदिति ॥ ननु हेतोरपि स्वरूपासिद्ध्यादिशङ्कापरिहाराय सम्प्रतिपन्नादिति कुतो नोच्यते । नैवम् । हेतुसाध्ययोर्विशेषरूपेण ग्रहणे तदाश्रयीभूतव्यक्ति सुग्रहा । सम्प्रतिपन्नादित्युक्तौ न विशेषरूपेण हेतु सुग्रह इति विशेषरूपेण तन्निर्देशस्यावश्यकत्वात् ।

(गु टि) ॥ नियम्यनियामकभावस्येति ॥ ननु अदुपधत्वात् [1]'पोरदुपधात्' इति पूर्वसूत्रेणैव यमेरपि यत्प्रत्ययसिद्धे 'गदमदचरयमश्चानुपसर्गे' इति पुनर्यमग्रहणं अनुपसर्गादेव यमेर्यथा स्यात्सोपसर्गान्मा भूदिति नियमार्थमित्याकरे स्थितम् । ततश्च सापसर्गात् यमेर्यतोऽसम्भवेन [2]'ऋहलोर्ण्यत्' इति ण्यत्प्रत्यये प्रयाम्यमितिवत् नियाम्यमित्येव भवितव्यम् । तथा च नियाम्यनियामकभावस्येति वक्तव्यम् । नियम्यनियामकभावस्येति तु कथमिति चेदत्र केचित् उपसर्गप्रतिरूपकनिशब्दत्वादस्यानुपसर्गत्वेनात्र यत्प्रत्ययसम्भवादिति । केवलयमेर्यत कृत्वा अनन्तर निशब्देन समासाददोष इत्यपरे । अन्ये तु [3]'ऋदोरप्' इत्यतोऽप् इत्यनुवृत्तौ [4]'यम समुपनिविषु च' इति यमेर्धातोर्भावे यतोऽपवादेन वैकल्पिकस्य अप्प्रत्ययस्य विधानात् सप्तमीसमर्थात् 'तत्र साधु' इति तद्धिते यत्प्रत्यये सति नियम्यशब्दस्य निष्पत्तिरित्याहुः ।

वस्तुतस्तु न 'अनुपसर्गे' इत्युपसर्गमात्रपूर्वकात् यमेर्यत्प्रत्ययनिषेध शक्यतेऽङ्गीकर्तुम् । 'तेन तत्र न भवेद्विनियम्यम्' इति वार्तिकप्रयोगदर्शनेन निपूर्वाद्यमेर्यत्प्रत्ययस्य सिद्धत्वात् । त्रिमुनिव्याकरणमते चोत्तरोत्तरप्राबल्याश्रयणेन सूत्रकारापेक्षया वार्तिककारस्य प्रबलत्वात् । ततश्च प्राद्युपसर्गपूर्वकाद्यमेर्यत्प्रत्ययनिषेधेऽपि निपूर्वाद्यमेस्तदनिषेधेन यत्प्रत्ययसम्भवान्नानुपपत्तिरिति द्रष्टव्यम् ।

यद्वा निपूर्वाद्यमेर्ण्यति च सति सञ्ज्ञापूर्वकत्वात् वृद्ध्यभावे नियम्यशब्दनिष्पत्ति । अत एव वार्तिकप्रयोगस्यापि ण्यदन्ततया अन्यथासिद्धत्वान्न तस्यापि निपूर्वाद्यमेर्यत्प्रत्ययज्ञापकत्वमित्यवधेयम् ।

॥ अविशेषितत्वादिति ॥ अविशेषणीयत्वादित्यर्थ । विशेषणे तादृशभेदस्य दृष्टान्ते पर प्रत्यसिद्धत्वेन साध्यवैकल्यप्रसङ्गादिति भाव ।

**पूर्वोक्तानुमाने भिन्न इति सामान्यत साध्यनिर्देशाभिप्राय**

**(टी) नन्वत्र भेदः किं परमात्मप्रतियोगिकः साध्यः उत जीवप्रतियोगिकः अथ वा जडप्रतियोगिकः आहोस्वित्सकलप्रतियोगिकः । नाद्यः । परमात्मनि हेतोरनैकान्त्यात् । संसाराभावलक्षण मुक्त-**

---

[1] पोरदुपधात् (३।१।९८) पवर्गान्तादतुपधात् यत् स्यात् । ण्यतोऽपवाद । शप्यम् । लभ्यम् । गदमदचरयमश्चानुपसर्गे (३।१।१००) गद्यम् । मद्यम् । चर्यम् । यम्यम् । यमेर्नियमार्थं सोपसर्गान्मा भूदिति । प्रयाम्यम् । निपूर्वकात्स्यादेव । विनियम्यमिति वार्तिकप्रयोगात् ।

[2] ऋहलोर्ण्यत् (३।१।१२४) ऋवर्णान्तात् हलन्ताच्च धातोर्ण्यत् स्यात् । कार्यम् । वाच्यम् ।

[3] ऋदोरप् (३।३।५७) ऋवर्णान्तात् उवर्णान्तात् अप् स्यात् । कर । स्तव ।

[4] यम समुपनिविषु च (३।३।६३) एषु अनुपसर्गे च यमेरप् वा भवति । नियम नियाम इत्यादि ।

(टी) त्वस्य तत्र सत्त्वात् । द्वितीयेऽपि सकलजीवप्रतियोगिकः स्वव्यतिरिक्तजीवप्रतियोगिको वा । न प्रथमः । मुक्तस्यापि जीवत्वेनांशे बाधात् । न द्वितीयः । मुक्तस्य तद्भेदसिद्ध्या विना तेषामेतद्व्यतिरिक्तत्वासिद्ध्याऽप्रसिद्धविशेषणत्वात् । सिद्धौ च सिद्धसाधनत्वात् । जीवभेदसाधनस्य प्रकृतानुपयोगित्वेनार्थान्तरत्वाच्च । एतेन संसारिभ्यो भेदः साध्यत इत्यपि परास्त। अत एव न तृतीयः । नापि चतुर्थः । पूर्ववदंशे बाधात् । अप्रसिद्धविशेषणत्वाच्च ।

(वि टि) विमतो भिन्न इति भेदसामान्यसाधनप्रतिज्ञाया विना विशेषविषयमपर्यवसानात्तमादाय पर्यवसाने च दोषदर्शनात्तथा साधनमनुपपन्नमित्यभिप्रायेण शङ्कते ।। नन्विति ।। मुक्तस्यापीति ।। तस्यापि जीवत्वरूपप्रतियोगितावच्छेदकावच्छिन्नत्वेन तत्र तद्भेदस्य बाधितत्वादिति भाव ।। तद्भेदसिद्ध्येति ।। संसारिजीवप्रतियोगिकभेदसिद्ध्येत्यर्थ ।। एतद्व्यतिरिक्तत्वेति ।। मुक्तव्यतिरिक्तत्वेत्यर्थ ।। अप्रसिद्धविशेषणत्वादिति ।। विमतो भिन्न इत्यनुमानप्रवृत्ते पूर्व मुक्ते संसारिभेदस्येव संसारिषु मुक्तभेदस्याप्यसिद्ध्या मुक्तव्यतिरिक्तजीवप्रतियोगिकभेदस्यैवाप्रसिद्ध्या अप्रसिद्धविशेषणत्वादित्यर्थ ।। सिद्धौ चेति ।। संसारिषु प्रतियोगितावच्छेदकभूतमुक्तव्यतिरिक्तत्वज्ञानोपयुक्तत्वेनैतदनुमानप्रवृत्ते प्रागेव मुक्ते संसारिप्रतियोगिकभेदस्य सिद्धौ चेत्यर्थ । ननु मुक्ते जीवत्वाधिकरणप्रतियोगिकभेदसाधने न बाधो न वा अप्रसिद्धविशेषणतेत्याशङ्क्याह ।। जीवभेदसाधनस्येति ।। मुक्तेश्वरयोर्नियम्यनियामकभावोपपादकभेदसाधनस्यैवोचितत्वेन तादृशभेदसाधनस्य प्रकृतानुपयुक्तत्वेनेत्यर्थ ।। एतेनेति ।। प्रकृतानुपयुक्तत्वप्रयुक्तार्थान्तरत्वदोषेणेत्यर्थ ।। अत एवेति ।। अर्थान्तरत्वदोषप्रसादेवेत्यर्थ ।। पूर्ववदिति ।। मुक्तांश इत्यर्थ ।। अप्रसिद्धेति ।। परमात्मजीवजडरूपसकलप्रतियोगिकभेदस्याप्रसिद्धतया अप्रसिद्धविशेषणत्वादित्यर्थ । एतच्च असत प्रतीतिरेव नेति मतेन। अन्यथा [1]उक्तसकलजीवप्रतियोगिकभेदरूपविशेषणस्य तत्रैव प्रसिद्धिसम्भवेनोक्तदोषाप्रसरादिति ।

(रा टि) एव विमत इत्यादिपक्षदृष्टान्तनिर्देशाभिप्राय व्यक्तीकृत्य भिन्न इति सामान्यत साध्यनिर्देशाभिप्राय व्यक्तीकरिष्यन् प्रतियोगिविशेषोपादानपक्षान् विकल्पपूर्वक शङ्कित्वा निराह ।। नन्वित्यादिना मैवमितिपर्यन्तेन ।। अनैकान्त्य व्यनक्ति ।। संसारेति ।। तत्र परमात्मनि । तद्ध्वंसस्य तत्राभावेऽपि ध्वंसात्यन्ताभावसाधारण्येन संसाराभावलक्षणस्येत्युक्तम् । परमात्मनि संसारो नेत्यस्य तत्संसर्गाभावविषयत्वात् । तत्संसर्गस्य तत्रालीकत्वात् । मुक्ते च बन्धस्य भूतत्वेन तत्संसर्गाभावस्य ध्वंसरूपत्वात् सम्बन्धाभावस्यैव संसाराभावत्वात् । भूतले घटोऽस्तीत्यत्र घटसम्बन्धसत्त्वमेव घटसत्त्वमिव तत्सम्बन्धाभावस्यैव तदभावरूपत्वात्संसाराभावलक्षणेत्युक्तिर्युक्तेति ज्ञेय ।। अंशे बाधादिति ।। स्वभेदस्य स्वस्मिन्नभावादिति भाव ।। सिद्धौ चेति ।। मुक्ते जीवभेदस्येति जीवेषु मुक्तव्यतिरिक्तत्वस्येति वा योज्यम् । अन्त्यपक्षे अर्थात्तद्भेदस्य मुक्ते प्राप्तत्वादिति भाव ।। प्रकृतेति ।। मुक्तस्तु न केनापि नियत इत्यादिना मुक्तनियन्त्रीश्वरैक्यस्य शङ्कितत्वेन तद्भेदसाधनस्यैव

[1] सकलप्रतियोगिकभेदस्य इति पाठेन भाव्यमिति भाति

'रा टि.) प्रकृतत्वादिति भाव ॥ **एतेनेति** ॥ प्रकृतानुपयोगित्वेनेत्यर्थ ॥ **अत एवेति** ॥ प्रकृतानुपयोगादेव। **तृतीयः** जडप्रतियोगिक इति पक्ष । सकलप्रतियोगिक इति चतुर्थश्च नेत्यर्थः । **पूर्ववदित्येत**दग्रेऽप्यन्वेति। मुक्तस्यापि जीवत्वेन सकलमध्यगतजीवभेदस्य तस्मिन्नभावात्स्**वव्यतिरिक्त**त्युक्तौ पूर्ववदप्रसिद्धविशेषणतेत्यर्थ ।

(**वे टि**) ननु ससारप्रध्वसाधिकरणत्वलक्षणमुक्तत्वरूपहेत्वभावादेव न परमात्मनि व्यभिचार इत्यत आह ॥ **ससाराभावेति** ॥ ससारसंसर्गाभावेत्यर्थ । नन्वेव निगडमुक्तदृष्टान्त साधनविकल । संसारसंसर्गस्यैव तस्मिन्सत्त्वादिति चेन्न । तथात्वे घटो दृष्टान्त इति वक्ष्यमाणत्वात् ॥ **मुक्तस्यापीति** ॥ विमतो मुक्त सकलजीवप्रतियोगिकभेदवानित्यत्र मुक्तस्यापि सकलजीवमध्यप्रविष्टत्वान्मुक्तेऽमुक्तजीवप्रतियोगिकभेदस्याबाधितत्वेऽपि मुक्तप्रतियोगिकभेदस्य बाधितत्वादशे बाधित इत्यर्थ ॥ **सिद्धाविति** ॥ मुक्तस्य स्वव्यतिरिक्तसर्वजीवप्रतियोगिकभेदसिद्धावित्यर्थ ॥ **प्रकृतानुपयोगित्वेनेति** ॥ मुक्तेश्वरभेदस्य प्रकृतत्वादित्यर्थ. । ननु ससारिभ्यो भेदसाधनान्न पूर्वोक्तदोष इत्यत आह ॥ **एतेनेति** ॥ अर्थान्तरत्वेनेत्यर्थ ॥ **अत एवेति** ॥ जडप्रतियोगिकभेदस्य प्रकृतानुपयोगित्वेनार्थान्तरत्वादेवेत्यर्थ ॥ **पूर्ववदिति** ॥ मुक्तस्यापि सकलमध्यप्रविष्टत्वादेवेत्यर्थ ॥ **अप्रसिद्धविशेषणत्वादिति** ॥ सर्वत्रापि स्वभिन्नप्रतियोगिकभेदस्यैव सत्त्वेन सकलप्रतियोगिकभेदाधिकरणत्वासिद्धेरित्यर्थ. ।

नन्वसति प्रसिद्धमिद साध्यम् । न च तदपि सकलपदेन गृहीतमिति स्वेतरभेद एव तत्र स्यान्न सकलभेद इति वाच्यम् । सकलपदस्य वस्तुमात्रपरत्वादिति चेन्न । 'सर्वं मिथ्येत्युक्ते ब्रह्मणि प्रमाणबाध । शुक्तिरजतादौ सिद्धार्थता च स्यात्' इत्याद्याचार्यवचनबलेनासतोऽपि सर्वपदपर्यायसकलपदसङ्ग्राह्यत्वात् । एव च असन्न प्रतीयत इति मतेनेदमिति परिहारोऽत्र न मनोहर इति ध्येयम् । यद्वा सकलजीवप्रतियोगिको वा स्वव्यतिरिक्तसकलजीवप्रतियोगिको वेति विकल्प्याद्ये अशे बाध । द्वितीयेऽप्रसिद्धविशेषणतेति बोध्यम् । अत एव पूर्ववदित्युक्तम् ।

(**द्वै द्यु**) भेदमात्रस्य केवलान्वयितया न भेदमात्रे विप्रतिपत्ति । किं तु किञ्चित्प्रतियोगिकभेद एव । अत एव भिन्न इति साध्योपस्थापकं पदमपि किञ्चित्प्रतियोगिकभेदावच्छिन्नपरमेव । पृथिवी इतरेभ्यो भिद्यत इत्यत्रेतरपदस्य पृथिवीभिन्नलाक्षणिकत्वेऽपि यथा न दोष तथा प्रकृते लक्षणाश्रयणेऽपि दोषाभाव इत्यभिमानिनां प्रतियोगिविषयिणीमाशङ्का निरसितुमनुवदति ॥ **नन्विति** ॥ एतेन भेदत्वरूपसामान्यधर्मपुरस्कारेण निर्दिष्टे साध्ये विशेषविकल्पेन दूषणमसङ्गतम् । अन्यथा पर्वतो वह्निमानित्यत्रापि पर्वतीयवह्निर्वा महानसीयवह्निर्वा साध्य इति विकल्प्य दूषणप्रसङ्ग इति निरस्त ॥ **सकलप्रतियोगिक इति** ॥ यावत्यो व्यक्तयस्तद्व्यक्तिभेदकूटमित्यर्थ ॥ **संसाराभावेति** ॥ आवरणध्वंसस्य पक्षतावच्छेदकत्वे पक्षतावच्छेदकहेत्वोरैक्यपरिहाराय घटादिदृष्टान्ते साधनवैकल्यपरिहाराय चावरणरूपससारप्रतियोगिकसंसर्गाभावस्यैव हेतूकर्तव्यत्वादिति भाव ॥ **सकलजीवप्रतियोगिक इति** ॥ यावन्तो जीवास्तत्तद्व्यक्तिप्रतियोगिकभेदकूटमित्यर्थ. ॥ **स्वव्यतिरिक्तेति** ॥ स्वभिन्नजीवत्वावच्छिन्न-

(द्वै सु.) प्रतियोगिताकभेद इति वा स्वव्यतिरिक्तत्वेन परिचितजीवव्यक्तीना भेदकूटमिति वाऽर्थ । जीवत्वावच्छिन्न-प्रतियोगिताकभेदपक्ष स्फुट बाधितत्वान्नाशङ्कित । अत एवोक्तकल्पद्वयोत्थानमपि ॥ अशे बाधादिति ॥ साध्यी-भूतकूटघटकस्वभेदाशे पक्षवृत्तित्वस्यैव बाधादित्यर्थ । तज्ज्ञानस्याप्युक्तव्यासज्यवृत्तिधर्मावच्छिन्नसाध्यकानुमितौ विरोधितया तत्राप्रामाण्यग्रहसम्पादकतया च तस्य दोषत्वमिति भाव ॥ अप्रसिद्धविशेषणत्वादिति ॥ स्वस्मिन् स्वातिरिक्तजीवभेदसिद्धे प्राक् तेषु स्वव्यतिरिक्तत्वासिद्धया स्वव्यतिरिक्तजीवत्वरूपप्रतियोगितावच्छेदकाप्रसित्या तदवच्छिन्नप्रतियोगिताकभेदरूपसाध्याप्रसिद्धि । भेदकूटपक्षे उक्तरीत्या स्वव्यतिरिक्तजीवरूपप्रतियोग्यपरिचयात्त-द्भेदकूटरूपसाध्याप्रसिद्धिरित्यर्थ ॥ प्रकृतानुपयोगेनेति ॥ परमात्मनियम्यताया मुक्तेष्वनिर्वाहकत्वेनेत्यर्थ । दूषणान्तरोक्तिबीजं स्वयमेवाह ॥ एतेनेति ॥ अर्थान्तरत्वेनेत्यर्थ ॥ संसारिभ्यो भेद इति ॥ उक्तरीत्या पूर्वोक्तसाध्यपरिष्कारेणेति भाव ॥ अत एवेति ॥ अर्थान्तरत्वादेवेत्यर्थ ॥ नापीति ॥ सकलप्रतियोगिक इत्यत्र साकल्यावच्छिन्नभेदस्य प्रत्येक सर्वत्र [1]साध्यत्वेन केवलान्वयित्वान्न विप्रतिपत्तिविषयता । साकल्यनिष्ठस्वरू-पसम्बन्धावच्छिन्नावच्छेदकताकभेदस्त्वप्रसिद्ध । अतो यावन्त पदार्थास्तत्तद्व्यक्तिभेदकूट वा स्वव्यतिरिक्तसकल-भेदो वार्थो वाच्य । तत्र क्रमाद्दूषणे आह ॥ पूर्ववदिति ॥ अभिप्रायस्तु पूर्ववदेव ।

**(टी) मैवम् । अविवक्षितप्रतियोगिविशेषभेदस्य साध्यत्वात् । न चैवमर्थान्तरता । मुक्तस्य भेद मात्रानङ्गीकारेणाक्षिपन्त प्रति तत्साधनस्य सङ्गतत्वात् । ईश्वराद्भेदस्त्वागमादिना साधयिष्यते । अथ वा प्रागवस्थायां येन भेदेन विशिष्टः तेनैव मोक्षेऽपीत्ययमत्रार्थो विवक्षित इति न कश्चिद्दोषः ।**

(वि टि) पर्वतो वह्निमानिति प्रसिद्धानुमाने पर्वतीयत्वाद्यौदासीन्येन वह्निमात्रसाधनवत् विमतो भिन्न इत्यनुमानेपि प्रतियोगिविशेषानालिङ्गितभेदमात्र साध्यम् । अन्यथा तत्रापि पर्वतीयवह्निसाधने सिद्धसाधन अप-र्वतीयवह्निसाधने बाध इति विकल्प्य दूषणोद्भावनप्रसङ्गादित्यभिप्रेत्य समाधत्ते ॥ मैवमिति ॥ पूर्वोक्तमर्थान्तरता-दोषमाशङ्क्य निराकरोति ॥ न चैवमिति ॥ एवं प्रतियोगिविशेषानालिङ्गितभेदमात्रसाधने । मुक्तत्वहेतो पक्षधर्म-ताबलात् भेदत्वेन जडादिभेदवत् अबाधितत्वाविशेषात् विनिगमनाविरहेणैव मुक्ते ईश्वरप्रतियोगिकभेदसिद्धच-वैकल्येपि भेदान्तरसाधनप्रयुक्तार्थान्तरतादोषतादवस्थ्यमिति शङ्कार्थ. ॥ भेदमात्रानङ्गीकारेणेति ॥ 'न च मुक्तस्य कुतोपि भेदोऽस्ति प्रमाणाभावात्' इति मुक्तस्य भेदमात्रानङ्गीकारेण मुक्तेश्वरयो परस्परभेदाभावेन नियम्यनियामकभाव एव न सम्भवतीत्याक्षिपन्त प्रति तदुपयुक्ततया भेदमात्रसाधनस्य प्रकृतसङ्गतत्वादित्यर्थ । नन्वेवं नियम्यनियामकभावप्रयोजकमुक्तेश्वरभेदासिद्धितादवस्थ्यमित्यत आह ॥ ईश्वराद्भेदस्त्विति ॥ मुक्तस्येति शेष । ईश्वरभेदत्वेनेश्वरभेदस्त्वित्यर्थ ॥ प्रागवस्थायामिति ॥ पूर्वकाल इत्यर्थ । पूर्वत्वादिक काले अखण्डो-पाधिरिति न काचिदनुपपत्तिरिति । मोक्षेपीत्यनन्तरं विशिष्ट इत्यनुषज्यते ॥ अत्रेति ॥ विमतो भिन्न इति प्रतिज्ञाया-मित्यर्थ ॥ न कश्चिद्दोष इति ॥ नन्वत्र भेद किं परमात्मप्रतियोगिक इत्यादिना विकल्प्य उद्भावित सर्वोपि दोष इत्यर्थः ।

---

[1] सिद्धत्वेन इति पाठेन भाव्यमिति भाति ।

(वि टि.) यद्यपि **अथ वेति** पक्षे विमतो भिन्न इत्यविशेषितप्रतियोगिकभेदसाधनपक्षतो नार्थकृतो विशेषोऽस्ति। तत्रैवात्रापि मुक्ते ससारिजडेश्वरभेदसिद्ध्यवैकल्यात्जडादिभेदसाधनप्रयुक्तार्थान्तरत्वशङ्कातत्परिहारयोरप्यविशेषाच्च तथापि 'प्रागवस्थाया मुक्तो येन भेदेन विशिष्टस्तेनैव मोक्षेपि विशिष्ट' इति प्रतिज्ञावाक्यार्थस्य विवक्षितत्वात् तस्याश्च बुद्धिस्थप्रकारावच्छिन्नवाचिसर्वनामसमभिव्याहारमहिम्ना प्रतियोगिविशेषालिङ्गिततत्तद्भेदत्वरूपविशेषाकारेण भेदोपस्थितिरत्र पक्षेस्तीति पूर्वस्मादस्य पक्षस्य भेद इति द्रष्टव्यम् ।

(रा. टि) ननु प्रकृत ईश्वराद्भेदो न सिद्ध इत्यत आह ॥ **ईश्वरादिति** ॥ **आगमादिनेति** ॥ 'तान्यह वेद सर्वाणि' इत्यादिवक्ष्यमाणागमेन 'तत एवाभ्रान्तत्वान्न मुक्तस्यापि भेदनिवृत्ति' इति वाक्येन वक्ष्यमाणानुमानान्तरप्रत्यक्षाभ्या चेत्यर्थ.। ईश्वरभेदस्याप्यनेनैव लाभायाह ॥ **अथ वेति** ॥ प्राक्तनभेदः परमते मायाद्युपाधिकृतोऽपि सर्वोपाधिविलयरूपमुक्तौ तस्य भेदस्य सद्भावसाधने पारमार्थिक एव स भविष्यति। मूलकृताप्यग्रे प्राचीनभेदस्यैव मुक्तावनिवृत्तिसाधनादिति भाव ।

(वे टि) ॥ **अविवक्षितप्रतियोगिविशेषेति** ॥ अत एव विमतो भिन्न इति सामान्योक्ति.। अन्यथाऽस्माद्भिन्न इति विशेषनिर्देश स्यादिति भाव। अस्मिन्पक्षे परमात्मा सपक्ष एव। तत्र परस्य व्यावहारिकभेदाङ्गीकारेण साध्यसम्प्रतिपत्तेरिति ज्ञेय। न चैव तर्हि 'ईश्वरस्याज्ञानाभावात्संसारिणैक्य तेनानुभूयेत' इत्यादिविपक्षबाधकतर्कोक्त्ययोग इति वाच्यम्। अस्मिन्पक्षे 'मुक्तामुक्तयोर्भेदाभावे मुक्तस्य संसार संसारिणो वा मुक्तत्व स्यात्' इत्युक्तस्यैव विपक्षबाधकस्य ग्रहणादिति। ननु मुक्तस्य परमात्मप्रतियोगिक एव भेद साध्य। तस्यैव विप्रतिपत्तिविषयत्वात्। तत्र **विमतो भिन्नः** इत्यविवक्षितप्रतियोगिविशेषभेदसाधनेऽर्थान्तरता स्यात्। विनिगमनाविरहेण मुक्तेश्वरभेदसिद्धावपि भेदान्तरस्याप्यनुपयुक्तस्य सिद्धेरित्याशङ्क्य निषेधति ॥ **न चैवमर्थान्तरतेति** ॥ **मुक्तस्य भेदमात्रानङ्गीकारेणेति** ॥ अत एवाक्षेपावसरे 'न च मुक्तस्य कुतोपि भेदोऽस्ति' इत्युक्तमिति भाव। नन्वनेनानुमानेन मुक्तस्य यस्मात्कस्माच्चिद्भेदमात्र सिद्धम्। न तु परमात्मप्रतियोगिक इत्यत आह ॥ **ईश्वरादिति** ॥ मुक्तस्येति शेष.। ईश्वरभेदत्वेनेश्वरभेदस्त्वित्यर्थ.। ईश्वराद्भेदोप्यनुमानेनैव साध्य इति निर्बन्धे त्वाह ॥ **अथ वेति** ॥ प्रागवस्थाया विद्यमानो भेद ईश्वरप्रतियोगिकोपि भवतीति तस्य मोक्षपर्यवसायित्वसाधने मुक्तस्येश्वराद्भिन्नत्वमपि सिद्ध्यतीति भाव। **यद्यप्यथ वेति**पक्षे अविशेषितप्रतियोगिकभेदसाधनपक्षतो नार्थकृतो विशेषोस्ति। तत्रैवात्रापि मुक्ते ससारिजडेश्वरभेदसिद्ध्यवैकल्यात्। तथापि सर्वनाम्ना बुद्धिस्थप्रकारावच्छिन्नवाचितया प्रतियोगिविशेषालिङ्गिततत्तद्भेदत्वरूपविशेषाकारेण भेदोपस्थितिरत्रेति पूर्वस्माद्भेद इति द्रष्टव्यम्।

(द्वै द्यु.) ॥ **अविवक्षितेति** ॥ शङ्कक स्वाभिमानबीजमुद्घाटयति ॥ **न चैवमर्थान्तरतेति** ॥ भेदमात्रस्य विप्रतिपत्त्यविषयतया तत्साधनेऽनाकाङ्क्षिताभिधानमित्यर्थ ॥ **भेदमात्रानङ्गीकारेणाक्षिपन्तमिति** ॥ एतत्प्रकारश्च प्रागेव विवृत ।

(द्वै द्यु) तेन यदत्रोक्त 'यत्तु मुक्तौ भेदमात्रानङ्गीकारेण।क्षिपन्तं प्रति प्रकृतप्रयोगोऽस्तो न सिद्धसाधनादीति। तदसत्। मुक्ते मुक्त्यन्यदशाया भेदमात्रानङ्गीकर्तुर्वादिन एवाभावात्। शुद्धाद्वैते मुक्तौ कालानभ्युपगमात्। भावाद्वैते सिद्धसाधनस्य दुर्वारत्वाच्च' इति तत्सर्वमपहस्तितं वेदितव्यम्। विप्रतिपत्तिप्रकारस्य पूर्वं निपुणतरमुपपादितत्वात्। उक्तानुमानस्य शुद्धाद्वैतपक्ष एव प्रवृत्तत्वाच्च।

ननु कैमुत्यन्यायमनुरुद्ध्य भेदमात्राभावेनेश्वरभेदाक्षेपवादिनो भेदमात्रसाधनेन निराकरणेपि ग्रन्थस्य तत्वनिर्णयार्थं प्रवृत्तत्वेनैतावन्मात्रेण शिष्याणा मुक्तेश्वरभेदासिद्धे कथं तेषामीश्वरस्य मुक्तनियामकत्वनिर्णय इत्यत आह ॥ ईश्वराद्भेदस्त्विति ॥ आदिनाऽनुमानान्तरप्रत्यक्षयोर्ग्रह । तच्चोत्तरत्र स्फुटीभविष्यति। नन्वेतदनुमानेन मुक्तेश्वरयो· भेदासिद्धावीश्वरे मुक्तनियामकत्वसिद्धौ साक्षादनुपयोगितया प्रथमतस्तदुपन्यासोऽनुचित । परम्परया कथञ्चिदुपयोगमात्रेण तदुपन्यासे जगत्सत्यत्वादिसाधनमपि प्रथमत कुतो न कृतमित्यरुचेराह ॥ अथ वेति ॥

यद्वा नानाज्ञानवादे 'मुक्तस्य तु न भेदोस्ति' इत्यादीनि मुक्तस्य स्वाविद्याकल्पितभेदसामान्यनिषेधपराण्येव।

भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत्।

इत्यादौ भेदस्य मुक्तावभावे तदज्ञानकृतत्वस्य हेतुतया कथनात्। बद्धपुरुषास्तु स्वव्यवहारार्थं स्वाविद्यया भेद कल्पयन्ति। तादृशभेदस्तु मुक्तेषु वर्तत एव। स च मुक्तेश्वरयोर्नियम्यनियामकभावानुपयोगी। अतस्तदर्थं मुक्तत्वविशिष्टे स्वकीयावरणदशाकालीनस्ववृत्तिभेदकूटविषय एव पूर्वोक्तोभयविधप्रमाणानुसारेण विप्रतिपत्ति। तथा च मुक्तिविशिष्टे भेदमात्रसाधने बद्धपुरुषकल्पितप्रातिभासिकभेदमादाय सिद्धसाधनमर्थान्तर वेत्यत आह ॥ अथ वेति ॥ प्रागवस्थायामित्यादि ॥ येन तेनेति च कूटतात्पर्यकम्। अन्यथा घटभेदसिद्ध्यापि चरितार्थत्वेनेश्वरनियम्यत्वसिद्धावनुपयोगापत्ते । भिन्न इत्यत्र क्तप्रत्ययेन भेदे पूर्वकालीनत्व लभ्यते। तथा च प्रागवस्थायामित्ययमशोऽक्षराल्लभ्य । येन येनेत्यादिकूटलाभस्तु नाक्षरेभ्य इत्यभिप्रेत्य विवक्षित इत्युक्तम्। ग्रन्थकृता तात्पर्यविषयीभूत इत्यर्थ । मुक्तभेदनिषेधकवाक्यस्य यादृशार्थकत्व परस्याभिप्रेतं तद्विरोध्यर्थसमर्पकं न्यायवाक्य भवत्विति तात्पर्येणैव तत्रत्यनञर्थप्रतियोगिसमर्पकपदघटितन्यायस्य प्रयुक्तत्वादुक्ततात्पर्यं युक्तमेवेति भाव । तथा चैतत्कल्पे ईश्वरस्यापि [1]पक्षकोटावन्तर्भाव इष्यमाणत्वात्। ईश्वरे नित्यमुक्तत्वादिबोधकश्रुत्यनुसारेण मुक्तत्वस्येश्वरसाधारणतया मुक्तभेदनिषेधकवाक्येषु मुक्तपदेन तस्यापि गृहीतुं शक्यत्वेन विप्रतिपत्तेस्तत्साधारण्यसम्भवादावरणससर्गाभाववच्चेतनत्वरूपमुक्तत्व ईश्वरसाधारणपक्षतावच्छेदकम्।

साध्य च स्ववृत्त्यावरण (आवरणत्व नाम चित्स्वरूपग्रहविरोधित्व स्ववृत्तित्वस्वग्रहविरोधित्वोभयसम्बन्धेन चिद्विशिष्टत्व पर्यवसित) ससर्गाभावाधिकरणताश्रयक्षणपूर्वकालसम्बन्धिस्ववृत्तिभेदकूटवत्त्वं पर्यवसितम्। अत्र स्वपदेन ससारान्मुक्तग्रहणे स्ववृत्तिर्याऽऽवरणससर्गाभावाधिकरणता ध्वसाधिकरणतैव। तदधिकरणक्षणो

[1] पक्षकोटावन्तर्भावस्येष्यमाणत्वात् ईश्वरे इति पाठेन भाव्यमिति भाति।

(द्वै द्यु ) मुक्तिक्षण एव । मुक्तनिष्ठाधिकरणतायाः क्षणरूपकाले सत्त्वात् । तत्पूर्वकालसम्बन्धिनो ये तन्मुक्तत्वाश्रयनिष्ठा भेदा अनादिकालतो विद्यमाना बहव एव । तत्कूटवत्त्व तत्र मुक्तत्वविशिष्टेनुमानेन सिध्यं चेत् प्रागवस्थायां तत्र विद्यमानाना ईश्वरजीवान्तरजडादिप्रतियोगिकाना सर्वेषा मुक्त्यवस्थाया सिद्ध्या उक्तानुमानेनेश्वरभेदासिद्ध्या प्रथममेतदनुमानोपन्यासायोगदोष ,एव इदानीननबद्धपुरुषकल्पितप्रातिभासिकभेदोपादानेनार्थान्तरादिदोषश्च नात्र कल्पे पदमादधाति । अत्रेश्वरे साध्योपपादनवेलाया स्वनिष्ठावरणससर्गाभावाधिकरणता तदत्यन्ताभावाधिकरणतैव । तदधिकरणताश्रयक्षणा अनादित सर्वेपि । तत्पूर्वकाला अपि एकैकस्यैकैक इति क्रमेण सर्व एव भवन्ति । तत्कालसम्बन्धीश्वरवृत्तिभेदकूटस्येश्वरे सिद्ध्येश्वरस्य सर्वसात्सर्वदा भेदसिद्ध्या न मुक्तेश्वरभेदावकाश । [1]प्रतियोगिमतीव ध्वसवति आवरणात्यन्ताभावो न घटत इति मुक्तजीवासङ्ग्रह ध्वसनिवेशे ईश्वरासङ्ग्रह इति उभयोपादानाय ससर्गाभाववत्त्व पक्षतावच्छेदकमनुसृतम् । साध्यकोटौ स्वपदेन मुक्तस्येश्वरस्य वा ग्रहणे दोष (आवरणध्वसत्वेनात्यन्ताभावत्वेन वा निवेश इत्यर्थ ) वारणाय ससर्गाभावत्वेन निवेश । आवरणध्वसतत्सामान्यात्यन्ताभावान्यतरत्वेन निवेशात्तु पुरुषान्तरीयावरणात्यन्ताभावस्य बद्धपुरुषान्तरे सत्त्वात्तस्य पक्षकुक्षिनिक्षेप । आवरणत्वावच्छिन्नप्रतियोगिताकत्वेन निवेशे ध्वंसासङ्ग्रह इति दोषानवकाश । ईश्वरे विक्षेपशक्तिविशिष्टाविद्याया परेणाङ्गीकारेपि आवरणशक्तिविशिष्टायास्तस्यास्तत्रानङ्गीकारेण तत्रावरणाभाव परस्य सम्मत एवातो न परमते ईश्वरस्य पक्षकोटावनन्तर्भावप्रसङ्ग । भेदकूटस्य निवेशादीश्वरभेदस्यापि सिद्धि । पुरुषान्तरवृत्तिभेद स्वस्मिन्बाधित इति भेदे स्ववृत्तित्व निवेशितम् । स्वपदेन विशेष्यभूतव्यक्तेरेव ग्रहणाद्विशिष्टपक्षरूपमुक्तवृत्तित्वस्य पूर्वकालीनभेदेषु पर प्रत्यसिद्धत्वेपि न तस्य साध्याप्रसिद्धिः । पूर्वकालीन विशेष्यवृत्तिसुखमादाय दुःखविशिष्टे सुखावगाहिनो दु खी सुखीति ज्ञानस्य भ्रमत्वे निर्विवादाद्विशेषणकालासम्बन्धिविशेष्यवृत्तिधर्मस्य विशिष्टवृत्तित्वस्याङ्गीकर्तुमशक्यत्वात् पूर्वकाल एव मुक्तात्मनि विशेष्यीभूते विद्यमानभेदाना मुक्तत्वविशिष्टे सत्त्वस्याक्षततया साध्योपपत्त्या मुक्तौ भेदासिद्ध्याऽर्थान्तरतेति शङ्कानवकाश । ईश्वरसाधारण्याय स्ववृत्तिससारकालीनभेदेत्यादिरीत्या साध्य न परिष्कृतम् । आवरणध्वसाधिकरणकालस्तु पूर्व समर्थित एवातो न कालाप्रसिद्धिनिबन्धनो दोष । यद्वा स्ववृत्त्यावरणसंसर्गाभावप्रतियोगिकालीनस्ववृत्तिभेदकूटवत्त्व साध्यम् । अत एवेश्वरे प्रागवस्थाया अभावात्कथ तत्र साध्योपपादनमिति शङ्कानवकाश । उक्तरीत्या साध्यद्वयपरिष्करणद्वयादिति दिक् ।

एनेन यदत्रोक्त केनचित् 'यदपि प्रागवस्थाया येन भेदेन विशिष्टस्तेनैव मोक्षेपीत्ययमर्थो विवक्षितोऽतो न कश्चिद्दोष इति तदविवक्षितविवेचन दूषितप्रायम्' इति तत्त्वाज्ञानविजृम्भितमिति सुज्ञानं विज्ञानामित्युपेक्षणीय ।

### पूर्वोक्तानुमाने परमात्मन पक्षत्वेऽनुपपत्तिनिरास

(टी ) ननु चात्र परमात्मा पक्षः सपक्षो विपक्षो वा । नाद्यः । परेण मुक्तपरमात्मभेदस्यानङ्गीकृतत्वेन द्वयोः पक्षीकरणासम्भवात् । अङ्गीकृतत्वे चानुमानवैयर्थ्यात् । न द्वितीयः । तत्र परस्य

---

[1] अत्यन्ताभावनिवेशे प्रतियोगिमतीव इति पाठेन भाव्यमिति भाति,

(टी )साध्यासम्मतेः। न तृतीयः। भेदाभावस्य वादिना क्वाप्यनभ्युपगतत्वात्। मैवम्। पक्षत्वेऽपि परमात्मनः मुक्तपरमात्मानौ भिन्नावित्यपक्षीकरणात्। अत एव च विमतो भिन्न इति विमतिविषयो यावानिति सामान्येनोक्तम्।

(वि टि) ननु विमतो भिन्न इत्यनुमाने परमात्मन सपक्षत्वस्य प्रतिवाद्यसम्मतत्वात् विपक्षत्वस्य च वाद्यसम्मतत्वात् पक्षत्वमेव वाच्यम्। चतुर्थप्रकारासम्भवात्। एवञ्च मुक्तपरमात्मानावित्येव पक्षो निर्देष्टुमुचित। न च तथा निर्देश उपपद्यते। तस्य नियम्यनियामकभावोपयुक्तपरमात्मभेदसिद्ध्यधीनत्वात्। तादृशभेदसिद्ध्यर्थैदनुमानप्रवृत्ते पूर्वमभावात्। भावे चैतदनुमानवैयर्थ्यप्रसङ्ग इत्यभिप्रेत्य शिष्य. पृच्छति ॥ **ननु चेति**॥ **परेणेति**॥ अद्वैतिनेत्यर्थ । **तत्र** परमात्मनि ॥**भेदाभावस्येति**॥ **वादिना** स्थापनावादिना। अविवक्षितप्रतियोगिविशेषस्य भेदमात्रस्य सर्वत्राप्युपगमादिति भाव। मुक्तवत्परमात्मापि पक्ष एव। न चोक्तानुपपत्ति। ससारान्मुक्तत्वरूपानतिप्रसक्तधर्मनियतविमतेर्मुक्तपरमात्मोभयसाधारणाया पक्षतावच्छेदकत्वेन विमत इति पक्षनिर्देशस्य तथाविधभेदसिद्धिनिरपेक्षत्वादित्यभिप्रेत्य समाधत्ते ॥ **मैवमिति**॥

यद्यपि बन्धनिर्वृत्तिमान् परमात्मनो भिन्न इति वा 'अथ वा प्रागवस्थाया येन भेदेन विशिष्टस्तेनैव मोक्षेपि' इति टीकोक्तरीत्या वा भेदसाधने परमात्मा विपक्ष इत्युत्तरयितु शक्य तथापि संसाराभावलक्षणमुक्तत्वमेव यथाश्रुत विमतिविषयतावच्छेदकमादाय परमात्मन. पक्षान्तर्गतत्वमङ्गीकृत्य तथोत्तरमभिहितम्। अत एव पक्षत्वेपीत्य**पि**शब्द पक्षान्तराङ्गीकारसूचक. सङ्गच्छत इति ध्येयम् ॥ **अपक्षीकरणादिति**॥ अप्रतिज्ञानादित्यर्थ ॥ **अत एवेति**॥ यत एव मुक्त परमात्मा चेति विशिष्यापक्षीकरणं अत एवेत्यर्थ ।

(रा टि) **विमत** इति निर्देशस्य कृत्यान्तर वक्तुमाक्षिपति ॥ **नन्विति**॥ **अनुमानवैयर्थ्यादिति**॥ तद्भेदस्यैव नियम्यनियामकभावसिद्ध्यर्थं सिषाधयिषितत्वादिति भाव ॥ **वादिनेति**॥ भेदवादिनेत्यर्थ ।

(वे टि) तटस्थ शङ्कते ॥ **नन्विति**॥ **द्वयोरिति**॥ परमात्मन. पक्षत्वे मुक्तपरमात्मानौ भिन्नाविति पक्षीकरणीयम्। तत्र द्विवचनार्थभेदासिद्धौ तथा पक्षीकरणासम्भव। तत्सिद्धौ सिद्धसाधनत्वापत्त्यानुमानवैयर्थ्यमिति भाव. ॥ **परस्येति**॥ परेणेश्वरे व्यावहारिकभेदाङ्गीकारेपि मोक्षपर्यवसायिभेदानङ्गीकारादिति भाव ॥ **भेदाभावस्येति**॥ परमात्मनि तदभावासम्मतेरिति वाक्यशेष ॥ **पक्षत्वेपि परमात्मन इति**॥ नन्वीश्वरे प्रागवस्थाया अप्रसिद्धत्वेन प्रागवस्थाया येन भेदेन विशिष्टस्तेनैव मोक्षेपीत्येतत्तत्र बाधितम्। प्रागवस्था च संसारावस्थेति दृष्टान्त साध्यविकल इति चेन्न। यतो बन्धदशाया येन भेदेन विशिष्ट इत्येव विवक्षित। न तु स्वबन्धदशायामिति। तथा च नाप्रसिद्धिर्न वा दृष्टान्त साध्यविकल इति भाव ।

(द्वै द्यु) तटस्थ शङ्कते ॥ **नन्विति**॥ **अत्र** उक्तानुमाने। **परमात्मा** सत्यादिपदतात्पर्यविषयीभूत। स च परमते शुद्ध। अस्मन्मते जगत्कर्तृत्वादिविशिष्ट। यद्वा जीवब्रह्मेश्वरभेदेन त्रिस्कन्धचैतन्याभ्युपगमपक्षादरेण जगत्कर्तृत्वादिविशिष्ट इत्यर्थ ॥ **द्वयोः पक्षीकरणासम्भवादिति**॥ आवरणध्वसरूपमुक्तत्वस्य तत्साधा-

(द्वै ग्रु) रण्याभावास्य पक्षत्वे द्वित्वेनैव पक्षता वाच्येत्यभिमान ।। साध्यासम्मतेरिति ।। भेदमात्रस्य साध्यतापक्षे यद्यपि सत्यादिपदतात्पर्यविषयीभूते शुध्धे भेदो वर्तते तथापि नासौ तत्समानसत्ताक । आरोपितवह्निमादाय ह्रदस्य सपक्षत्ववारणाय स्वसमानसत्ताकसाध्यवत्त्वप्रकारकनिश्चयविषयस्यैव सपक्षत्वेन तेनाङ्गीकृतत्वात् । द्वितीयकल्पे तस्य प्रागवस्थापि नास्तीति सुतरा सपक्षत्वानुपपत्ति । यद्युक्तरीत्या साध्यपरिष्कारस्तदा तत्र ससारससर्गाभावसत्त्वात् तमादाय साध्यसत्त्वेपि तस्य स्वसमानसत्ताकत्वाभावादेव सपक्षत्वानुपपत्तिरिति हृदयम् । ईश्वराङ्गीकारपक्षेऽपि मुक्ते आवरणापगमेन भेदसामान्याभाववादिमते स्वत आवरणशून्ये ईश्वरे भदाभाव कैमुत्य सिध्ध इति उक्तकल्पद्वयोक्तसाध्यमपि तस्यासम्मतमिति हृदयम् । यद्वोक्तकूटत्वावछिन्नाधिकरणतायामेकक्षणावच्छिन्नत्वस्य वक्ष्यमाणतया तस्येश्वरे वक्ष्यमाणरीत्या भास्करमायावादिनोर्न सम्मतत्वमिति भाव ।। भेदाभावस्येति ।। वादिनो मते तस्य केवलान्वयित्वादिति भाव । ननु द्वितीयस्य कथ केवलान्वयित्वं येन तदभावा प्रसिध्धि स्यात् । घटादीना प्रागवस्थाया मोक्षस्य चाभावेन तत्रैव साध्याभावसम्मतेरिति चेन्न । स्ववृत्तिसंसारसंसर्गाभावेत्यादिरीत्या परिष्कृतत्वेन घटादावपि ससारससर्गाभावसत्त्वात्तमादाय साध्यस्योपपादयितु शक्यत्वेन घटादावपि साध्याक्षते: । इदानीन्तनसंसारिष्वपि उत्तरत्र ससाराभावस्याङ्गीकृतत्वेन तमादायैव तत्र साध्यसत्त्वेन केवलान्वयित्वाक्षते ।

यद्वा [1]प्रागवस्थायामित्यनेन स्ववृत्तिभेदप्रतियोगिनो ये ये तत्तत्प्रतियोगिकभेदकूटत्वावछिन्ननिरूपितैकक्षणावछिन्नाधिकरणत्वं वा स्ववृत्तिभेदकूटत्वावछिन्नैकक्षणावच्छिन्नाधिकरणत्वं वा ससारससर्गाभावरूपेश्वरसाधारणपक्षतावच्छेदकविशिष्टे साध्यमित्यभिप्रेयते । तावतैव मुक्ते प्राग्दशापन्नवृत्तीना सर्वेषा भेदानां मुक्तिदशायामपि सिध्धि । न तु पूर्वरीत्या प्राग्दशाया अपि साध्यतावच्छेदककोटौ निवेश । अत एवार्थत सिध्यतीत्याशयेनायमर्थोत्र विवक्षित इत्युक्तम् । अत्र प्रतियोग्यालिङ्गितत्वेनापि भेदभानार्थं प्रथमसाध्यादरणम् । तस्यानावश्यकत्वे द्वितीयम् । अत्रेश्वरेऽनादित. ससाराभावविशिष्टे एकैकमुक्त्या एकैकजीवभेदापगमेपि तद्वृत्तिभेदाना सर्वेषा तत्रैव सत्त्वेन तत्कूटाधिकरणताया एकक्षणानवच्छिन्नायास्तत्राबाधात्तत्र मुक्तभेदासिध्यापत्तिनिवारणायैकक्षणावच्छिन्नत्वनिवेश । निवेशिते च तस्मिन् मुक्तेनेश्वरस्याभेदेनानादित· क्रमेण सर्वेषा मुच्यमानत्वादुक्तभेदकूटाना तस्मिन्नेकक्षणे मेलनायोगेन तादृशकूटत्वावच्छिन्नाधिकरणता एकक्षणावच्छिन्ना तत्र दुर्मिला भवतीति मुक्तेश्वरभेदसिध्धि: । पूर्वपरिष्कारेपि उक्तदोषपरिहारायैकक्षणावच्छिन्ना तादृशकूटाधिकरणतैव निवेश्या ।

वस्तुतस्तु मुक्तिक्रमेणेश्वरे एकैकभेदापगमपक्षेपि न स्ववृत्तिभेदकूटत्वावच्छिन्नाधिकरणता कदाचिदपि तस्मिन् सम्भवति । ईश्वर इदानीं स्ववृत्तिभेदा याव तस्तावत्कूटवानिति कस्मिन्नपि क्षणे प्रत्ययाभावेन प्रत्युत नेदानी तावत्कूटवानिति प्रत्ययसत्त्वेन च सर्वेषा क्षणाना कूटत्वावच्छिन्नाभावाधिकरणतायामेवावच्छेदकतया प्रतियोग्यधिकरणतावच्छेदकत्वस्य कस्मिंश्चिदपि काले अभावात् । तथा चैकक्षणावच्छिन्नत्वस्य साध्यशरीरे अनिवेशेपि

[1] नित्यससारिणां ससारससर्गाभावाधिकरणत्वपक्षमाश्रित्येदम्

(द्वै द्यु) नार्थान्तरतेति। न चेश्वरवृत्तिभेदकूटाधिकरणं ईश्वर इति सार्वजनीनप्रतीते का गतिरिति वाच्यम्। कूटत्वोपलक्षितभेदावगाहितया तत्प्रत्ययोपपत्ते।

अथ स्ववृत्तिसर्वधर्माधिकरण स्वयमेव नान्य इत्याकारा प्रतीति सार्वजनीना नापलापमर्हति। तत्र च [1]सर्वत्वोपलक्षिताधिकरणताभावे सर्वेषा प्रत्यधिकरण भिन्नत्वेपि अत्यन्ताभावाना भेदाभावेन सर्वत्वोपलक्षिततादृशात्यन्ताभावानामन्यत्रापि सत्त्वेन नान्य इति निषेधानुपपत्त्या सर्वत्वावच्छिन्नाधिकरणत्वमेव तत्र भासत इत्युपेयम्। क्षणाना च प्रातिस्विकेन तत्तत्क्षणत्वादिना तदधिकरणतानवच्छेदकत्वेपि सर्वक्षणसाधारणान्यतमत्वादिना तदवच्छेदकत्वाङ्गीकारे बाधकाभाव। येन रूपेणाभावाधिकरणतावच्छेदकता तदन्यरूपेण प्रतियोग्यधिकरणतावच्छेदकत्वे विरोधाभावात्। तथा च प्रकृते ईश्वरवृत्तिभेदकूटाधिकरणता एकैकभेदापगमपक्षे सम्भवत्येवेत्यर्थान्तरताया दुर्वारत्वमेवेति चेन्न। यत स्ववृत्तिसर्वधर्मवान् स्वयमेवेत्यस्य स्ववृत्तिधर्मत्वव्यापकस्वाधिकरणताक स्वयमेवेत्यर्थ। अत एव नान्य इत्यपि सङ्गच्छते। एतदन्यस्मिन्नेतद्वृत्तितद्व्यक्तित्वादिविरहात्। तथा च स्ववृत्तियादृशधर्मसामान्यस्य मेलन यदा तदैव तादृशकूटवत्त्वमिति नियमादीश्वरे एकैकभेदापगमपक्षे स्ववृत्तिभेदकूटवत्त्व कदापि नाङ्गीकर्तुं शक्यमिति भेदानपगमसिद्ध्यैव साध्यपर्यवसानान्नार्थान्तरता। सर्वेषा क्षणाना क्षणत्वरूपव्याप्यधर्मपुरस्कारेणावच्छेदकत्वेऽन्यतमत्वकालत्वादिरूपव्यापकधर्मेणापि स्ववृत्तिभेदकूटाभावाधिकरणताया अनवच्छेदकत्वे बाधकाभावेनान्यतमत्वेऽभावाधिकरणतावच्छेदकत्वस्याप्यसङ्गतत्वात्। अन्यथा ह्रदस्य ह्रदत्वेन वह्न्यभाववत्त्व वह्निमत्साधारणद्रव्यत्वेन वह्निमत्त्वमित्यपि स्यात्। द्रव्य वह्निमदिति प्रत्ययाविशेषात्। न च द्रव्य वह्न्यभाववदिति प्रत्ययाद्द्रव्यत्वे वह्न्यभावाधिकरणतायामपि अवच्छेदकतापत्त्या विरुद्धद्वय कथं सिध्येत्। अतस्तत्रोभयावच्छेदकत्वमपि नास्तीति वाच्यम्। तर्ह्यन्यतमत्वकालत्वादिधर्माणामप्येवमेवास्तु। ईश्वरे अन्यतमक्षणे तादृशकूट नास्तीति प्रतीतेर्दुरपह्नवत्वात्। ईश्वरे अन्यतमक्षणे तादृशकूटमिति प्रत्ययस्य सविवादत्वात् एकशेषकरणस्याशक्यत्वात्। न चैव स्ववृत्तिभेदकूटत्वावच्छिन्नाधिकरणत्वस्यैव साध्यत्वे प्रागवस्थाया येन भेदेनेति टीकोक्तिरयुक्ता स्यादिति वाच्यम्। स्ववृत्त्यावरणध्वसतदत्यन्ताभावान्यतराधिकरणताधिकरणपूर्वक्षणवृत्तित्वस्य तदुक्तिलक्ष्यभेदकूटविशेषणस्यानुमित्युत्तरकालोद्देश्यस्य प्रतीत्यर्थत्वात्। तस्योद्देश्यता च ससारकाले यद्यद्भेदसत्त्वेन यद्यन्नियामकत्व तद्भेदानपगमेपि नियम्यसत्त्वेपि च नियामकत्वाभावे मुक्तावङ्गीक्रियमाणे ससारेपि नियम्यनियामकभावोच्छेदप्रसङ्ग इत्यनुकूलतर्केण नियामकत्वस्थापनार्थमिति। अतिविवादे तु तुष्यत्विति न्यायेन एकक्षणावच्छिन्नत्व दत्तमित्यवसेयम्। एव चोक्तसाध्यस्य वादिमते सर्वत्र सत्त्वात् विपक्षाप्रसिद्धिरित्यर्थ॥ पक्षत्वेपीति॥ मुक्तत्व नावरणध्वस। किंतु तत्ससर्गाभाव। स चेश्वरसाधारण एव। अवच्छेदकावच्छेदेन तु साध्यसिद्धिरुद्देश्येति भाव।

## पूर्वोक्तानुमाने हेतुपरिष्कारः

**(टी) ननु मुक्तत्व संसारप्रध्वसो वा तत्ससर्गाभावो वा। नाद्यः। परमात्मन्यसिद्धेः। निगडमुक्तादिदृष्टान्तस्य साधनवैकल्यापत्तेश्च। अत एव न द्वितीयोऽपीति। मैवं। अविवक्षितविशेषबन्ध-**

[1] सर्वत्वोपलक्षितभावधर्माधिकरणत्वाना सर्वेषा इति पाठेन भाव्यमिति भाति।

(टी) संसर्गाभावस्य हेतुत्वात् । ननु चात्र बन्धाभावाधिकरणत्वं हेतुः । अभावाधिकरणत्वमात्रेणालम् । केवलान्वयित्वेन विशेषणव्यावर्त्याभावात् । अपि चाधिकरणत्वमात्रेणालम् । किमभावग्रहणेन । किं च [1]अधिकरणं कारकविशेषः । कारकत्वमात्रेणालं किं विशेषग्रहणेन । एवं कारकं कारणविशेषः । कारणत्वमात्रेणालम् । तत्किं विशेषेणेति । मैवं । तथा सति प्रमेयत्वादीनामपि केवलान्वयित्वभङ्गप्रसङ्गात् । प्रमाविषयत्वं प्रमेयत्वं । [2]तत्र विषयत्वमात्रेणालम् । किं प्रमाग्रहणेनेत्यादेस्तत्रापि सुवचत्वात् ।[ यद्धेतुव्यवच्छेदकत्वेन पृथगुपादीयते तदेव विशेषणं प्रयोजनान्तरमपेक्षते । न पुनस्तन्मात्रान्तर्गतमिति चेत् । समं प्रकृतेऽपि । ]

### प्रकारान्तरेण हेतुसाध्यपरिष्कारः

अथ वा संसारसंसर्गाभावो मुक्तत्वं तथात्वे घटो दृष्टान्तः । परमात्मप्रतियोगिको वा भेदोऽत्र साध्यः । बन्धप्रध्वंसाधिकरणत्वं च मुक्तत्वमिति न परमात्मनि व्यभिचारः ।

(वि टि) मुक्तत्वहेतौ दूषणदानाय प्रकृत्यर्थं तावत्पृच्छति ॥ **ननु मुक्तत्वमिति** ॥ **तत्संसर्गाभावो वेति** ॥ तत्संसर्गावच्छिन्नप्रतियोगिताकाभावो वेत्यर्थः ॥ **परमात्मनीति** ॥ मुक्तवत्परमात्मनोऽपि पक्षत्वाभ्युपगमादिति भावः । यद्यपि पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरनुमानफलत्वमिति पक्षे न भागासिद्धिर्दोषः तथापि पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेस्तत्फलत्वमिति पक्षे सा दोष एव । तदवच्छेदकावच्छेदेन साध्यसिद्धौ तदवच्छेदकावच्छेदेन हेतुज्ञानस्य कारणतया तस्यास्तद्विघटकत्वादिति ध्येयम् ॥ **निगडमुक्तादिदृष्टान्तस्येति** ॥ तस्य संसारित्वादिति भावः ॥ **अत एवेति** ॥ निगडमुक्तादिदृष्टान्तस्य साधनवैकल्यादेवेत्यर्थः । उक्तविकल्पे द्वितीयपक्ष एवाभिप्रेतः । किं तु प्रतियोगिदिशि संसारत्वनिगडत्वादिविशेषापुरस्कारेण तदुभयसाधारणबन्धत्वसामान्यमात्रं विवक्षितमिति समाधत्ते ॥ **अविवेचितविशेषेति** ॥ अनुपात्तसंसारत्वनिगडत्वादिविशेषेत्यर्थः ॥ **हेतुत्वादिति** ॥ हेतुशरीरप्रविष्टत्वादित्यर्थः । अन्यथा प्रसिद्धधूमाद्यनुमानस्यापि 'किं पर्वतीयधूमो हेतुरुतापर्वतीयः । नाद्यः । दृष्टान्तस्य साधनवैकल्यात् । न द्वितीयः । असिद्धेः' इत्यादि विकल्प्य दूषणप्रसङ्गेन दुष्टत्वं स्यादिति भावः । यद्यपि संसारनिगडादौ बन्धत्वं नैकं सम्भवति तथापि लोकवेदयोर्बन्धशब्दप्रयोगविषयत्वमनुगतं सम्भवतीति तदाश्रयप्रतियोगिकसंसर्गाभावस्य हेतुत्वे न कश्चिद्दोष इति ध्येयम् । उक्तरीत्या प्रकृत्यर्थपर्यालोचनया अधिकरणत्वरूपप्रत्ययार्थपर्यालोचनया च पर्यवसितहेतुशरीरवैयर्थ्यमाशङ्कते ॥ **ननु चात्रेति** ॥ **बन्धाभावेति** ॥ बन्धसंसर्गाभावेत्यर्थः । वैयर्थ्यमुपपादयति ॥ **केवलान्वयित्वेनेति** ॥ केवलान्वयिसाध्यकत्वेन पर्यवसितहेतौ बन्धसंसर्गरूपविशेषणयोर्व्यावर्त्याभावादित्यर्थः ॥ **प्रमेयत्वादीनामपीति** ॥ शब्दोऽभिधेयः प्रमेयत्वात् ज्ञेयत्वात् प्रामाणिकत्वात् इत्यादिकेवलान्वयिसाध्यकहेतूनामप्युक्तरीत्या व्यर्थविशेषणत्वस्य सुवचत्वेन तेषां केवला-

---

[1] अधिकरणं कारकविशेषः । तत्किं विशेषणेनेति । मैवं । इति पाठान्तरम् ।

[2] तत्र विषयत्वेनालं इति पाठान्तरम् ।

(वि टि.) न्वयिहेतुत्वभङ्गप्रसङ्गादित्यर्थ ॥ **किं प्रमाग्रहणेनेत्यादेरिति** ॥ अत्र प्रमापद ज्ञानादीनामप्युपलक्षकम्। आदिपदेन विषयत्व स्वरूपसम्बन्धविशेष । तत्र स्वरूपत्वेनालम्। किं विशेषग्रहणेनेत्यादिदूषणपरिग्रह ।

प्रमेयत्वादिहेतुपूक्तदूषणोद्धार शङ्कते ॥ **यदिति** ॥ अत्र हेतुपदेन तदर्थो व्याप्यमुच्यते। तथा च यद्विशेषणं हेतुशरीरमात्रानन्तर्गत सत्तद्दोषनिवारणार्थमुपादीयते तदेव तद्दोषपरिहारलक्षणमवेक्षते। यथा 'शब्दोऽनित्य सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वात्' इत्यादौ सामान्यवत्त्वे सतीत्यादिविशेषणम्। न तु हेतुशरीरमात्रान्तर्गत विशेषणमपि। प्रमा च प्रमाविषयत्वरूपहेतुशरीरमात्रान्तर्गतैव। व्याप्तेर्विशिष्टनिष्ठत्वात्। **अत एव** 'यन्निरूपिता व्याप्तिर्येन विशेषणेन विना न गृहीतुं शक्यते तदेव विशेषण सार्थकम्' इति वदन्तीति भाव ॥ **समं प्रकृतेपीति** ॥ प्रकृतहेतावपि व्याप्तेर्विशिष्टनिष्ठत्वेन तद्गतबन्धादिविशेषणानामपि हेतुशरीरमात्रान्तर्गतत्वेन प्रयोजनान्तरापेक्षाविरहात् सम समाधानमिति भाव ॥ **मुक्तत्वमिति** ॥ मुक्त्यधिकरणत्वरूपहेतुशरीरप्रविष्टमुक्तिपदार्थ इत्यर्थ । ननु संसारसंसर्गाभावाधिकरणत्वरूपहेतोर्निगडमुक्तादिदृष्टान्तेऽभावान्न तस्य दृष्टान्तत्वमित्यत आह ॥ **तथात्व इति** ॥ ससाररूपप्रतियोगिविशेषितसंसर्गाभावाधिकरणत्वस्य हेतुत्व इत्यर्थ । मुक्तपरमात्मनोर्नियम्यनियामकभावोपयुक्तभेदविशेषस्यैवात्र साधनमुचितम्। न तु भेदमात्रस्येत्यनुशयवन्त प्रत्याह ॥ **परमात्मप्रतियोगिको वेति** ॥ नन्वेव बन्धसंसर्गाभावाधिकरणत्वहेतो परमात्मन्येव व्यभिचार स्यादित्याशङ्क्याह ॥ **बन्धेति** ॥ अत्र बन्धत्वमुक्तरीत्या अनुगत द्रष्टव्यम्। यद्यप्ययं पक्ष 'प्रागवस्थाया येन' इत्युक्तपक्षात्फलतो न भिद्यते तथापि 'पृथिवी इतरेभ्यो भिद्यते' इतिवत् 'अथ वा प्रागवस्थाया' इत्युक्तपक्षस्यानेकभेदसाधनरूपेण प्रवृत्तत्वात् अस्य च 'पृथिवी जलादिभिन्ना' इतिवत् विशिष्य परमात्ममात्रप्रतियोगिकभेदसाधनरूपेण प्रवृत्तत्वात ततो भेद इति ध्येयम्।

(रा टि) एव प्रतिज्ञा परिष्कृत्य हेतु शङ्कापूर्वं परिष्करोति ॥ **नन्वित्यादिना न परमात्मनि व्यभिचार इत्यन्तेन** ॥ **अत एवेति** ॥ साधनवैकल्यादेवेत्यर्थ ॥ **अविवक्षितेति** ॥ अविवक्षितो विशेषो निगडसंसारादिरूपो यस्य बन्धस्य तत्ससर्गाभाव इत्यर्थ । परमात्मनि बन्धमात्रससर्गाभावमादाय मुक्ते ससारससर्गध्वसमादाय दृष्टान्ते च निगडध्वसमादाय हेतुसिद्धिरिति भाव । तत्ससर्गाभाव एव तदभाव इत्युपेत्याह ॥ **बन्धाभावाधिकरणत्वं हीति** ॥ **केवलान्वयित्वेनेति** ॥ केवलान्वयिसाध्यकत्वेन विपक्षशून्यतया अनैकान्त्यशङ्कायोगेन बन्धेतिविशेषणकृत्याभावादित्यर्थ ॥ **कारकविशेष इति** ॥ कर्तृकर्मकरणसम्प्रदानापादानाधिकरणरूपषट्कारकेषु कारकान्तराणीवेदमपि कारकविशेष क्रियाहेतुविशेष इत्यर्थ ॥ **प्रमेयत्वेति** ॥ शब्दोऽभिधेय प्रमेयत्वाज्ज्ञेयत्वादित्यादीनामित्यर्थ. । तर्हि कीदृशविशेषणस्य कृत्यापेक्षेत्यत परमुखेनोत्तर वाचयित्वा सममित्याह ॥ **यद्धेतुव्यवच्छेदकत्वेनेति** ॥ हेतौ व्यावर्तकत्वेनेत्यर्थ । निगडमुक्ते साधनवैकल्यादाह ॥ **तथात्व इति** ॥ पूर्वं परमात्मनोऽपि पक्षकोटितोक्ता। अधुना मुक्तमात्रमेव पक्ष इति भावेनाह ॥ **परमात्मेति** ॥ **न व्यभिचार इति** ॥ तत्र हेतोरेवाभावादिति भाव । निगडमुक्ते साध्यसाधनहीनता च नेत्यपि ध्येयम्।

(वे. टि) मुक्तत्वहेतौ दूषणदानाय प्रकृत्यर्थं तावत्पृच्छति ॥ **नन्विति** ॥ **तत्संसर्गाभावो वेति** ॥ तत्संसर्गावच्छिन्नप्रतियोगिकाभावो वेत्यर्थ ॥ **परमात्मन्यसिद्धेरिति** ॥ ध्वंसस्य प्रतियोगिसमानाधिकरणत्वेन संसारध्वंससत्त्वे संसारस्यापि प्राप्तेरित्यर्थ ॥ **अत एवेति** ॥ साधनवैकल्यादेवेत्यर्थ ॥ **अविवक्षितविशेषेति** ॥ अविवक्षितविशेषश्चासौ बन्धश्चेति विग्रह । बन्धसंसर्गाभावेत्युक्तया कथमुक्तदोषपरिहार इत्यत इदमुक्तम् । निगडबन्धस्यापि बन्धत्वात्तन्मुक्ते बन्धसंसर्गाभावोस्तीति न दृष्टान्त साधनविकल इति भाव· ॥ **हेतुत्वादिति** ॥ हेतुशरीरप्रविष्टत्वादित्यर्थ । अधिकरणार्थकक्तप्रत्ययपर्यालोचनयापि पर्यवसितहेतुशरीरे वैयर्थ्यमाशङ्कते ॥ **नन्विति** ॥ **केवलान्वयित्वेनेति** ॥ साध्यस्य केवलान्वयित्वेनाभावाधिकरणत्वमात्रस्य व्यभिचाराभावात् बन्धविशेषणव्यावर्त्याभाव इत्यर्थ ॥ **कारक कारणविशेष इति** ॥ 'क्रिया कुर्वद्धि कारकम्' इति क्रियारूपकार्यविशेषजनकस्यैव कारकत्वादिति भाव । क्रियारूपफलजनक कारकं । कारणं च क्रियाफलोपधानाभावेपि [1]स्वरूपयोग्यस्य साधारणमिति कारक कारणविशेष इत्यर्थ । **केवलान्वयित्वभङ्गप्रसङ्गादिति** ॥ केवलान्वयिसाध्यकानुमानभङ्गप्रसङ्गादित्यर्थ ॥ **विषयत्वेनालमिति** ॥ तावन्मात्रस्याभिधेयत्वेन व्यभिचाराभावादिति भाव । **इत्यादेरित्यादिपदेन** विषयत्वं स्वरूपसम्बन्धविशेष । तत्र स्वरूपत्वेनाल किं विशेषग्रहणेनेत्यादिपरिग्रह. ॥ **यद्धेतुव्यावर्तकत्वेनेति** ॥ यथा सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वादित्यादौ सत्यन्त न हेतुशरीरमात्रान्तर्गतम् । प्रमा च प्रमाविषयत्वरूपहेतुशरीरान्तर्गतैव । तस्याखण्डोपाधित्वेनाभिधेयत्वनिरूपितव्याप्तेर्विशिष्टनिष्ठत्वात् । अत एव यन्निरूपितव्याप्तिर्येन विशेषणेन विना न गृह्यते तदेव विशेषण सार्थकमिति वदन्तीत्यर्थ ॥ **मुक्तत्वमिति** ॥ मुक्त्यधिकरणत्वरूपहेतुप्रविष्टमुक्तिपदार्थ इत्यर्थ । नन्वेव निगडमुक्तदृष्टान्त साधनविकल इत्यत आह ॥ **तथात्व इति** ॥ **परमात्मप्रतियोगिको वेति** ॥ ननु परमात्मनोपि पक्षत्वेनांशे बाध इति चेन्न । अस्मिन्पक्षे परमात्मनो विपक्षत्वेनाङ्गीकारात् । अत एव तत्र बन्धसंसर्गाभावस्य संसारसंसर्गाभावस्य वा हेतोर्व्यभिचारमाशङ्क्य दूषयति ॥ **बन्धेति** ॥ अस्मिन्पक्षे मुक्तामुक्तयोरित्यादिकमेव विपक्षे बाधकमिति ज्ञेयम् ।

(द्वै द्यु) ॥ **अविवक्षितेति** ॥ विशेषरूपमात्रेणाऽविवक्षितो यो बन्धस्तत्संसर्गाभावस्येत्यर्थ । तथा च भेदमात्रे साध्ये बन्धसंसर्गाभावमात्र हेतु । बन्धत्व च स्वसम्बन्धाधीनदुःखकत्वम् । अतो निगडादीनामपि बन्धत्वम् । प्रागवस्थायामित्यादे समारसंसर्गाभावघटितपूर्वोक्तप्रथमपरिष्कारे हेतुकोटौ संसारत्वबन्धत्वोभयरूपेण निवेश । साध्यकोटावपि स्वनिष्ठसंसाररूपबन्धसंसर्गाभावेत्यादिरीत्या निवेश । इत्थं च यो यद्बन्धसंसर्गाभाववान् स स्वनिष्ठतद्बन्धसंसर्गाभावाधिकरणतेत्यादिरीत्या परिष्कृतपूर्वोक्तसाध्यवानिति सामान्यमुखी व्याप्ति । निगडमुक्तो निगडरूपबन्धसंसर्गाभाववान् स स्वनिष्ठा या निगडरूपबन्धसंसर्गाभावाधिकरणता तत्क्षणपूर्वक्षणवृत्तयो यावन्त स्ववृत्तयो भेदास्तत्कूटत्वावच्छिन्ननिरूपितैकक्षणावच्छिन्नाधिकरणतावान् भवति । पक्षीभूतमुक्तश्च संसाररूपबन्धसंसर्गाभाववान् । अत स्वनिष्ठसंसाररूपबन्धसंसर्गाभावाधिकरणतेत्याद्युक्तसाध्यवान् भवत्विति रीत्या अप्रसिद्धसाध्यविधेयकानुमितिर्जायते । इदमनुमान सिद्धान्ते सामान्यतोदृष्टमिति गीयते ।

---

[1] स्वरूपयोग्यसाधारणमिति इति पाठेन भाव्यमिति भाति ।

(द्वै द्यु) उक्त हि पत्थतौ 'कृषीवलस्य कर्षणादिप्रवृत्तेर्धान्यादिफलकत्वदर्शनेन यज्ञादे स्वर्गफलत्वानुमान सामान्यतो दृष्ट' इति। प्रामाण्यवादस्थद्वितीयविप्रतिपत्तिमणिदीधितिव्याख्याया सिद्धान्तलक्षणमणिदीधितिव्याख्याया च **गदाधरेण** स्पष्टीकृतश्चाय सामान्यमुखव्याप्तिस्थलीयसामग्रीप्रकार। यद्यपि ससाररूपबन्धससर्गाभावादित्यनुक्त्वा बन्धससर्गाभावादित्येव हेतु कृत्वा साध्येपि बन्धत्वससारत्वोभयरूपेणानिवेशेन स्वनिष्ठमसारससर्गाभावेत्यादिरीत्यैव साध्यीकरणे घटादिदृष्टान्त एव हेतुसाध्ययोरुपपादन सम्भवति तथापि निगडमुक्ते निगडरूपबन्धससर्गाभाववति स्वनिष्ठससारससर्गाभावेत्यादिसाध्याभावाद्व्यभिचार स्यादित्युक्तरीत्यनुसरणम्। यद्यप्युक्तरीतावपि घटादेरेव विशेषव्याप्तौ दृष्टान्तता युज्यते तथापि विशेषव्याप्तौ साध्ये बन्धत्वससारत्वोभयरूपेण निवेशवैयर्थ्ये हेतावपि तस्य वैयर्थ्ये अथ वेत्याद्युत्तरकल्पाभेद स्यादत सामान्यव्याप्त्यैवोक्तरीत्याऽप्रसिद्धसाध्यकानुमितिनिर्वाहायोक्तरीत्या व्याख्यानम्।

ननु बन्धससर्गाभावहेतावप्यनुपद वैयर्थ्यमाशङ्क्य व्यभिचारावारकस्यापि कथञ्चित्सार्थक्य वक्ष्यति। तथा च बन्धत्वससारत्वोभयरूपेण निवेशेपि तथैव सार्थक्यसम्भवात्कथं वैयर्थ्यमिति चेन्न। तत्र मुक्तपदेन प्रतीयमानार्थे व्यभिचारावारकत्वेपि दोषाभाव वक्ष्यति। तत्पदेन प्रतीयमानार्थस्तु वैदिकप्रयोगानुरोधात्ससाराभावो मुख्य। लोकेपि रोगादिमुक्ते गौणमुक्तपदप्रयोगाद्बन्धाभावोऽपि तदर्थ। स चामुख्य। बन्धत्वससारत्वोभयघटितस्तु नार्थो वैयर्थ्यात्। इत्थं च प्रकृत एव पदाप्रतीयमानस्य विवक्षा कर्तव्या। सा च प्रयोजन विना न युक्तेति विशेषव्याप्तौ वैयर्थ्यमेव। सामान्यव्याप्तौ तु न वैयर्थ्यम्। सामान्यरूपघटितसजातीयहेतुसाध्ययोर्व्याप्तिग्रहसहितेन तत्सामान्यघटितप्रकृतहेतो पक्षे ज्ञानेन तादृशसाध्यसजातीयसाध्यस्यानुपस्थितस्याप्यनुमितेरन्यत्र क्लृप्तत्वादिति न किञ्चिदसमञ्जसम्। यदा तु प्रागवस्थेत्यादेरुक्तरीत्या स्ववृत्तिभेदकूटेत्यादिकमेव साध्य तदा बन्धससर्गाभावमात्र हेतु। निगडमुक्तेपि साध्यसत्त्वेन व्यभिचाराप्रसक्ते। तदा तु विशेषव्याप्तिरेवानुमित्यौपयिकीति ध्येयम्।

हेतौ व्यभिचारावारकतया वैयर्थ्यमाशङ्कते॥ **नन्विति**॥ **कारकविशेष इति**॥ कर्त्रादिभिन्नत्वे सति क्रियाजनक इत्यर्थ। जनकत्व च प्रयोजकत्वम्। अधिकरणत्वस्याखण्डोपाधित्वे मानाभाव इति भाव। अत्र बन्धाभावोऽस्मिन् वर्तते बन्धध्वसोत्र जात इति प्रतीतिसिद्धक्रियाधिकरणत्व मुक्तत्वपदार्थशरीरनिविष्टमतोत्र क्रियाभावात्कथ तस्याधिकरणत्वस्य कारकविशेषत्वमुक्तमिति मन खेदो न कार्य इति ध्येय॥ **कारणविशेष इति**॥ कालादृष्टादीना पाकादिक्रिया प्रति कारकत्ववारणाय विशेषपदं असाधारण्यबोधक वा तद्भिन्नत्वबोधक वेति भाव। परमुखेनैव समाधिं वाचयितु प्रतिबन्दी गृह्णाति॥ **प्रमेयत्वादेरिति**॥ **केवलान्वयित्वेति**॥ केवलान्वयिसाध्यकसद्धेतुत्व इत्यर्थ॥ **भङ्गेति**॥ व्यर्थविशेषणघटितत्वेन दुष्टत्वप्रसङ्गादित्यर्थ। वाच्य ज्ञेयत्वादित्यादिहेतुप्रयोगस्य मण्यादिन्यायग्रन्थेषु पदार्थत्वादित्यादिहेतूनामद्वैतसिद्धिभेदधिकाराद्यद्वैतग्रन्थेषु बहुलमुपलम्भात्तत्रेष्टापत्तिकरणं साहसमात्रमिति भाव। गूढाभिसन्धि समाधानमाशङ्कते॥ **यत्धेतुव्यवच्छेदकत्वेनेति**॥

(द्वै द्यु) हेतुपदं पञ्चम्यर्थे साक्षाद्विशेषणतापन्नवस्तुपरम्। तद्व्यवच्छेदकत्वेन तदर्थस्येतरव्यावृत्त्यादीच्छया। [1]विशेषण तत्र प्रकारीभूतो धर्मः। पृथगुपादीयते तत्प्रतिपादकातिरिक्तप्रातिपदिकेन बोध्यते। तदेव विशेषणं प्रयोजनान्तरमपेक्षते व्यभिचारवारणादिप्रयोजनमपेक्षते। स्वोपरक्तहेतुबोधे हेतौ स्वाभावकोटिकसंशयनिवृत्तिरूपप्रयोजनस्य सिद्धत्वादन्तरपदम्। यथा गुणकर्मान्यत्वे सति सत्त्वादार्द्रेन्धनप्रभववह्नेरित्यादौ। तत्र विशेष्यांशप्रतिपादकसत्तावह्न्यादिप्रातिपदिकातिरिक्तप्रातिपदिकेन विशेषणोपादानात्। तन्मात्रान्तर्गतं विशेष्यांशप्रतिपादकप्रातिपदिकवृत्तिमहिम्नैव यत् विशेषणतया तत्र भासते, यथा विशेष्यांशरूपविषयत्वबोधकप्रमेयत्वप्रातिपदिकेनैव प्रमाया अपि भानं केवलत्वप्रत्ययस्याबोधकतया प्रकृतिसाहित्येन भासकत्वात् प्रमाविनिर्मोकेण भानासम्भवात्, तत् नोक्तप्रयोजनान्तरमपेक्षत इत्यर्थ। एवंवादी भवान् यथा नीलधूमादित्यादीनां प्रयोगानर्हत्वं प्रमेयत्वादीनां च प्रयोगार्हत्वं मनुते तत्प्रकारोऽत्राविशिष्ट इत्याशयेनाह ॥ सम प्रकृतेपीति ॥ अयं भाव। नीलधूमत्वादेर्व्यर्थविशेषणघटितस्य गुरुतया व्याप्यतानवच्छेदकतया तदवच्छिन्नहेतुप्रतिपादकं वचनमसाध्वेव। द्रव्यत्वेन धूमप्रतिपादकवाक्यवत्। द्रव्यत्वनीलधूमत्वयोर्व्याप्यतानवच्छेदकत्वे विशेषाभावात्। प्रमानिरूपितविषयतात्वमपि न व्याप्यतावच्छेदकं व्यर्थविशेषणत्वात्। तथापि प्रमेयत्वादिति हेतुवाक्य साध्वेव। प्रमात्वरूपजात्यवच्छिन्नस्य ज्ञानत्वावच्छिन्नस्य वा विषयतासम्बन्धेन व्याप्यत्वबोधतात्पर्येण तादृशन्यायप्रयोगस्य सम्प्रदायप्राप्तत्वात्। विषयतया प्रमाया इति प्रयोगे पदद्वयप्रयोगाधिक्यप्रयुक्तगौरवप्रसङ्गेनैकपदस्यैवोक्ततात्पर्येण प्रयोगस्य न्यायप्राप्तत्वात्। संयोगेन धूमादिति प्रयोगे गौरवप्रसङ्गेन मतुबर्थतया हेतुतावच्छेदकसम्बन्धबोधनात्पर्येण धूमवत्त्वादिति प्रयोगवत्। नीलधूमादित्यादावुक्तरीतेरभावादसाध्वेवेति यदभिप्राय स च सम प्रकृतेऽपि। अत्रापि विशेष्यांशप्रतिपादकमुक्तत्वप्रातिपदिकमहिम्नैव विशिष्टस्यैव प्रतिपादनात्स्वसंसर्गाभावाधिकरणतासम्बन्धेन बन्धस्यैव हेतुत्वे उक्तवाक्यस्य तात्पर्यात्।

पूर्वकल्पे उक्तरीत्या बन्धादिपदसार्थक्यायासविद्वेषात्कल्पान्तरमनुसरति ॥ अथ वेति ॥ घटादिरेवेति॥ यद्यपि घटस्य दृष्टान्तत्व बन्धाभावस्य हेतुतापक्षेपि घटते तथापि पुल्लिङ्गस्वारस्यलब्धनिगडमुक्तपरित्यागे बीजाभावात्स एवोक्त। पूर्वमुत्तरत्र पुल्लिङ्गप्रयोगेपि मध्ये यदित्थं तत्तथेति वस्तुमात्रग्राहकनपुंसकलिङ्गप्रयोगेण घटादीनां [1]दृष्टान्तमूलकता सूचितेति ज्ञेयम्। अत्र कल्पे बन्धसंसर्गाभावकूटस्य वा तत्सामान्याभावस्य वा पक्षतावच्छेदकत्वं संसारसंसर्गाभावकूटस्य हेतुत्व। पूर्वकल्पे चैतद्वैपरीत्यं ज्ञेयम्। तेन यत्किञ्चित्संसाराभावस्यामुक्तसाधारणतया कूटस्य पक्षतावच्छेदकत्वे पक्षतावच्छेदकहेत्वोरैक्यम्। तद्विशिष्टे तत्सत्तानभ्युपगमे चासिद्धिरित्यादिक्षुद्रोपद्रवाणां नावकाश इति सर्वमनवद्यम्।

यदत्र केनचिज्जाल्मेन जल्पितम् 'यत्तु मुक्तत्वादित्यस्य बन्धसंसर्गाभाववत्त्वादित्यर्थ इति तदसत्। अभाववत्त्वस्यैव हेतुत्वसम्भवे इतरांशवैयर्थ्यात्। यदत्र पण्डितम्मन्येनोक्तम्। तथा सति प्रमेयत्वादीनां केवला-

[1] यत् विशेषण इति पाठेन भाव्यमिति भाति

[1] दृष्टान्तता इति पाठेन भाव्यमिति भाति

(द्वै धु) न्वयित्वभङ्गप्रसङ्गः। तत्रापि विषयताया एव केवलान्वयित्वस्य सुवचत्वादिति तदुपहसनीयमेव। स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराघटितधर्मस्यैव व्याप्यतावच्छेदकतया प्राचां मते व्याप्यत्वासिद्धेरत्रापि दुर्वारत्वात्। नव्यमतेऽप्याधिक्येन निग्रहे तस्यानुत्तरत्वात्। अभ्युपगतश्च तान्त्रिकैराधिक्येन निग्रहः। स च हेत्वाधिक्यवद्धेतुविशेषणाधिक्येऽपि तुल्यः। अन्यथा वह्निमान् काकदन्तग्रहविषयधूमादिति प्रयुञ्जानो न निगृह्येत। एतेन बन्धात्यन्ताभावहेतुतापक्षोऽपि प्रत्युक्तः। अनुयोगितासम्बन्धेन लघोर्बन्धस्य हेतुविशेषणत्वं तु कथञ्चित्सुवचम्' इति।

तदप्युक्तरीत्या सम्यक् टीकाविमर्शिभिर्न दुष्परिहरमिति स्वमौर्ख्यख्यापकमेव। लघोर्बन्धस्य हेतुत्वं सुवचमिति स्वपाण्डित्यप्रदर्शनेन टीकाकृतामस्फूर्तिव्यञ्जनं तदपि स्वाज्ञानव्यञ्जकमेव। तस्य सम्भवदुक्तिकत्वे **सम प्रकृतेपीत्यनेनैवा**स्यापि लब्धत्वात्। वस्तुतस्तदयुक्तमेवेत्युक्तमेवेति।

'मुक्तस्य तु न भेदोऽस्ति' इत्यादिवाक्ये परमात्मन एव प्रक्रान्तत्वात्तद्विधेयकवाक्यस्थभेदपदमपि तद्भेदपरमेव। विमतिरपि तत्रैव। तस्यैव मुख्यत आकाङ्क्षितत्वेन कण्ठतस्तत्साधनमेव युक्तमित्याशयेन तथैव व्याख्याति ॥ **परमात्मप्रतियोगिको वेति** ॥ जगत्कर्तृत्वाश्रयप्रतियोगिकभेदः सत्यादिपदतात्पर्यविषयप्रतियोगिकभेदो वेत्यर्थः ॥ **बन्धेति** ॥ अविवक्षितविशेषबन्धेत्यर्थः। अन्यथा दृष्टान्ते निगडमुक्ते साधनवैकल्यापत्तेः। पक्षतावच्छेदकं तु संसारध्वंस एवेति भावः ॥ **न व्यभिचार इति** ॥ [1]घटेश्वरद्वित्वस्येश्वरात्यन्तभिन्नत्वाभावात्तद्ध्वंसमादायेश्वरे व्यभिचारवारणाय बन्धपदम्। न च तस्य जीवादृष्टजन्यस्य साक्षात्परम्परया वा जीवसम्बन्धिसुखदुःखादिजनकतया बन्धरूपत्वाद्व्यभिचारो दुष्परिहर इति वाच्यम्। बन्धपदस्य स्ववृत्तिदुःखप्रयोजकपरत्वेपि प्रकृते दुःखमात्रपरत्वेन दुःखध्वंसस्य हेतुत्वोररीकरणात्। उक्तव्याख्याने हेतुविशेषणवैयर्थ्यशङ्काया अप्यभावोऽप्येतद्व्याख्याने बीजमित्यवधेयम्।

यत्तु 'अथ परमात्मप्रतियोगिकभेदो वाऽत्र साध्यः बन्धप्रध्वंसाधिकरणत्वं हेतुस्तो न कोपि दोष इति चेन्मैव। परमात्मशब्देन जगत्कर्तृत्वविशिष्टविवक्षाया सिद्धसाधनम्। सत्यादिपदतात्पर्यविषयविवक्षाया मुक्ते तद्भेदस्य सन्दिग्धतया सन्दिग्धानैकान्त्यस्य दुर्वारत्वात्। अनुकूलतर्कास्फूर्तौ सन्दिग्धव्यभिचारस्यापि दूषकत्वात्। स्पष्टमेतदनुमानदीधितौ। [2]यत्त्वनवच्छिन्नविशेषणतया भेदवत्त्वं साध्यमिति तदसत्। यावत्कालमनुवर्तमानाया अनृतादिव्यावृत्तेः शुद्धचित्यभ्युपगमेन सिद्धसाधनानुद्धारात्' इति।

तत्तुच्छम्। उत्तरत्रात्राप्यनुकूलतर्कस्य वक्ष्यमाणतयोक्तदोषासङ्गतेः। अनुकूलतर्को निरसिष्यत इत्याशामात्रम्। यत्त्वित्याद्युक्तिस्त्वनुक्तोपालम्भनरूपा।

यत्तु तेनैव स्वयमेव सिद्धसाधनपरिहारमाशङ्क्य समाहितम् 'नन्वत्र न सिद्धसाधनमुद्भावनार्हम्। त्वया ब्रह्मातिरिक्तस्य सर्वस्याप्रामाणिकत्वाभ्युपगमात्। न ह्यप्रामाणिककार्याभ्युपगमेन सिद्धसाधनोपन्यासः प्रेक्षावतां

---

[1] घटेश्वरद्वित्वस्येश्वरात्यन्ताभिन्नत्वाभावात् इति पाठेन भाव्यमिति भाति।

[2] विशेषणानवच्छिन्नतया इति पाठेन भाव्यमिति भाति।

(द्वै द्यु) युक्त । तथासत्यतिप्रसङ्गादिति चेन्मेवम्। सिध्धसाधनतायां पक्षे साध्यतावच्छेदकावच्छिन्नसाध्यस्याभ्युपगतत्वमेव तन्त्रम्। न तु तस्य प्रामाणिकत्वमपि। न चातिप्रसङ्ग तस्यानिरूपणात् । न च पर्वतो वह्निमान् धूमादित्यादौ धर्मिज्ञानाबाध्यवह्न्यभ्युपगमशून्येनापि गुञ्जारोपितवह्निमादाय सिध्धसाधनताप्रसङ्ग । उत्सर्गत शब्दप्रवृत्तौ व्यवहारकालाबाध्यत्वस्योपाधितया वह्निपदेन व्यवहारकालाबाध्यवह्नेरेवोपस्थिततया तस्य पर्वतादावनभ्युपगतत्वेन सिध्धसाधनोद्भावनायोगात् । वह्नित्वमात्रस्य साध्यतावच्छेदकत्वे तु भवेदेव सिध्धसाधनम्' इति ।

तदसत् । अबाध्यत्वस्यैव प्रवृत्त्युपाधित्वसम्भवे ब्रह्मज्ञानेतराबाध्यत्वादिलक्षणस्य व्यावहारिकत्वस्य शब्दप्रवृत्त्युपाधित्वे ब्रह्मस्वरूपज्ञानविधुराणा पामराणा बोधाभावप्रसङ्गात् । शब्दबलादेव तज्ज्ञानोपगमे [1]शब्दज्ञानवत्सर्वेषा ब्रह्मस्वरूपे विप्रतिपत्त्यभावप्रसङ्गात् । लोके व्यावहारिकत्वविशिष्टवह्नित्वादिना केनापि साध्यतावच्छेदकत्वानभ्युपगमेन त्वदभ्युपगमस्य निर्मूलत्वात् । अधिकमुत्तरत्र निराकृतं भवतीत्यल।

वदति वदनसत्त्वाद्दूषण मोहयन् स्वान्य इह किल विदोषे दोषदृष्ट्याऽल्पबुध्वि ।
तिमिरभिदि नितान्त कल्पयन् तिग्मभानौ निबिडतम उलूकस्तत्तुला सम्बिभर्ति ॥

नवनीरदनीलविग्रहश्रीहृतलीलालसकामिनीकटाक्ष ।
मधुराधरचुम्बिवेणुनादै सुखयन् गा यदुनायकोऽवतान्मा ॥

**विमतो भिन्न इत्यत्र भेदे पारमार्थिकत्वादिप्रश्नायोगसमर्थनम्**

(टी) **स्यादेतत् । किमनिर्वचनीयो भेदः साध्यते । किं वा पारमार्थिकः । नाद्यः । अपसिद्धान्तात् । न द्वितीयः । परं प्रति दृष्टान्तस्य साध्यवैकल्यादित्यत आह**

## न च भेदे विकल्पो युज्यते

**चशब्द एवार्थे विकल्प इत्यनेन सम्बद्ध्यते । समुच्चये वा । एतदाशङ्कानिरासससुचितस्यैवानुमानस्य साधकत्वात् । एकत्र धर्मिणि विरुद्धानेकाकारकल्पन विकल्पः । संशय इति यावत् । तन्मूलः प्रश्नोत्र विकल्पपदेन लक्ष्यते । हेतुसूचन लाक्षणिकपदप्रयोगे प्रयोजनम् ।**

(वि टि) ननु विमतो भिन्नो मुक्तत्वादित्यनुमानेनैवोक्तरीत्या मुक्तपरमात्मनियम्यनियामकभावोपयुक्त भेदसिद्धे 'न च भेदे विकल्पो युज्यते' इत्याद्युत्तरग्रन्थसन्दर्भस्य वैयर्थ्यमित्याशङ्क्य तस्य शङ्कान्तरनिरासार्थत्वेन सार्थक्य दर्शयितु तदेव शङ्कान्तर दर्शयति ॥ **स्यादेतदिति** ॥ **अनिर्वचनीय इति** ॥ सत्त्वेनासत्त्वेन सदसत्त्वेन वा निर्वक्तुमशक्य इत्यर्थ ॥ **पारमार्थिक इति** ॥ स्वरूपेण त्रिकालसर्वदेशीयनिषेधाप्रतियोगीत्यर्थ ॥ **अपसिद्धान्तादिति** ॥ वादिना मुक्तपरमात्मभेद. पारमार्थिक एवेत्यभ्युपगमादिति भाव । एतच्चोपलक्षणम् । मायावादिनं प्रत्यनिर्वचनीयभेदसाधने सिद्धसाधनम् । अनिर्वचनीयभेदस्य मिथ्यात्वेन तस्य पारमार्थिकनियम्यनियामकभावानुपयुक्ततया तादृशभेदसाधने अर्थान्तरञ्चेत्यपि द्रष्टव्यम् ॥ **साध्यवैकल्यादिति** ॥ परेण भेदमात्रस्य पारमार्थिकत्वानभ्युपगमादिति भाव । नन्वत्र चशब्दसमुच्चेतव्यार्थस्य स्फुटमप्रतीतेर्वैयर्थ्यमित्याशङ्क्य अन्वाचयेतरेतरसमा

---

[1] शब्दज्ञानवता सर्वेषामित्यर्थ ।

(वि टि) हाररूपार्थाना प्रकृतेऽसम्भवादव्ययानामनेकार्थत्वादवधारणार्थपरत्वेन त व्याचष्टे ॥ **चशब्द एवार्थ इति** ॥ वर्तमान [1]इत्यर्थ । ननु तथापि नञा तस्यान्वये विवक्षिताधिकार्थालाभेन वैयर्थ्यतादवस्थ्यमित्यत आह ॥ **विकल्प इत्यनेनेति** ॥ प्रसिद्धार्थपरित्यागेनाप्रसिद्धावधारणार्थत्वस्वीकारस्य नातिप्रयोजनता मन्वान आह ॥ **समुच्चये वेति** ॥ [2]प्रसिद्धार्थपरित्यागे समुच्चेतव्याभावेन समुच्चयार्थकत्व कथमित्यत आह ॥ **एतदाशङ्केति** ॥ स्यादेतदित्यादिना प्रदर्शितप्रश्नेत्यर्थ ॥ **अनुमानस्येति** ॥ विमतो भिन्न इत्यस्येत्यर्थ । यद्यपि चशब्दस्य **भेदे** इत्यनेनान्वये साध्यभूते भेदे साधनभूते मुक्तत्वे निगडमुक्तादिदृष्टान्ते च विकल्पो न युज्यत इत्यपि समुच्चयार्थत्व सम्भवति तथापि तथावाक्यार्थस्य न्यायसाम्येन लब्धुं शक्यतया न तथा वाक्यार्थाश्रयण कृतमिति ध्येयम् ।

ननु 'न च भेदे विकल्पो युज्यते' इति वाक्ये विकल्पशब्दितसंशयनिरास एव प्रतीयते । तत्कथमुच्यते प्रश्ननिराससमुचितस्यैवानुमानस्य साधकत्वादितीत्याशङ्क्य तत्र विकल्पशब्देन लक्षणया तत्कार्यभूत प्रश्न एव गृह्यत इति वक्तु लक्षणाया मुख्यार्थसम्बन्धरूपत्वात्तत्प्रदर्शनाय तन्मुख्यार्थं तावदाह ॥ **एकत्रेति** ॥ एकस्मिन् । विशेष्ये भासमानविरोधकानेकधर्मवैशिष्ट्यावगाहिज्ञानमित्यर्थ. । घटपटाविति समूहालम्बने [3]शुक्तिरूप्यमिति निश्चये द्रव्य घट इति निश्चये चातिव्याप्तिवारणाय क्रमेण विशेषणानि ॥ **तन्मूलः प्रश्न इति** ॥ स विकल्पो **मूल** कारण यस्य स तथोक्त । संशयाकारप्रदर्शकवाक्यविशेष प्रश्न इत्यर्थ । ननु प्रयोजन विना लाक्षणिकप्रयोगो न न्याय्य इत्यत आह ॥ **हेतुसूचनमिति** ॥ विना संशय प्रश्नादर्शनेन स्वात्मलाभान्यथानुपपत्त्या स्वहेतुभूत-संशयाक्षेपक इत्यर्थ ।

(रा टि) समुच्चये वेत्युक्त व्यनक्ति ॥ **एतदाशङ्केति** ॥ यावद्भेदविषयकविकल्पनिरासो न क्रियते तावदुक्तदूषणाक्रान्त मुक्तत्वादित्यनुमान न भेदगोचरानुमितिं जनयति । तन्निराससमुचित तु करोतीति मुक्त त्वाद्भेदे विकल्पायोगाच्च विमतो भिन्न इति समुच्चयार्थश्चशब्द इत्यर्थ । एवमग्रेपि ध्येयमिति भाव । लक्षणाया शक्यसबन्धमाह ॥ **तन्मूल इति** ॥ तन्मूलकस्तज्जन्य इत्यर्थ ॥ **हेतुसूचनमिति** ॥ सन्देहमूलकत्वरूपहेतुसूच-नमित्यर्थः ।

(वे टि) ॥ [**एकत्रेति** ॥ 'कल्पन ज्ञान विकल्प' इत्युक्ते 'अय घट' इतिज्ञानेऽतिव्याप्तिरतोऽ**नेका-कारेति** । तावत्युक्ते 'वृक्ष शिंशुपा च' इति समुच्चयात्मकज्ञानेऽतिव्याप्तिरतो **विरुद्धेति** । घटपटाविति समूहा-लम्बनज्ञानेऽतिव्याप्तिपरिहारायै**कत्र धर्मिणीति** । नन्विद रूप्यमितिभ्रमेऽतिव्याप्ति ] तत्रेदन्त्वरजतत्वयोर्विरुद्धत्वा-दिति चेन्न। विरोधे भासमानत्वस्यापि विवक्षितत्वात् । तथा चैकस्मिन्धर्मिणि भासमानविरोधकानेकधर्मवैशिष्ट्या-वगाहिज्ञानं सशय इति पर्यवस्यतीति भाव । लक्षणाया शक्यसम्बन्धोपपादनार्थं **तन्मूल** इत्युक्तम् । सः विकल्पो **मूलं** कारण यस्य स तथोक्त. । सशयाकारप्रदर्शकवाक्यविशेष प्रश्न इत्यर्थ । ननु भेदे प्रश्नो न युज्यत इत्यनु-

---

[1] इति शेष इति पाठेन भाव्यमिति भाति  [2] प्रसिद्धार्थपरित्यागे इति पाठेन भाव्यमिति भाति.

[3] शुक्तौ रूप्यमिति निश्चये इति पाठेन भाव्यमिति भाति

(वे टि) क्त्वाऽवाचकविकल्पपदोपादाने किं निमित्तमित्यत आह ॥ हेतुसूचनमिति॥ यदि 'न च भेदे प्रश्नो-युज्यते' इत्येवोच्येत तर्हि 'कुतः प्रश्नो न युज्यते' इत्युक्ते पृथगुत्तरं वक्तव्य स्यात्। लाक्षणिकपदोपादाने तु प्रश्नायोगे सशयमूलकत्वरूपहेतुः सूच्यत इत्यर्थ ।

(द्वै यु) शङ्कते ॥ स्यादेतदिति ॥ किमनिर्वचनीयो वेत्यादि ॥ ननु कथमियमाशङ्का। सामान्यरूपेण निर्दिष्टे साध्ये विशेषविकल्पेन दूषणे वह्न्याद्यनुमानोच्छेदप्रसङ्ग.। तत्रापि पर्वतीयवह्निर्वा महानसीयवह्निर्वा साध्यत इत्यादिरीत्या विकल्पेन दूषणप्रसङ्गात्। न च परस्येयं शङ्काऽनूद्यत इति वाच्यम्। उक्तानुमानस्यैतद्ग्रन्थ एव सत्त्वेनैतद्ग्रन्थपूर्वमत्र विकल्पस्य परग्रन्थे अभावेन तन्निरासकतयोत्तरमूलावतरणायोगात्। न च पररीत्येयमाशङ्का स्वयमेव कृतेति वाच्यम्। पररीत्याप्येतादृशनिर्दलशङ्काया स्वयमकर्तव्यत्वात्। न हि सामान्यरूपेण साध्यस्थले विशेषविकल्प कर्तव्य इति परग्रन्थे वर्तते येनेय पररीति स्यादिति चेत् न। भेदमात्र मुक्ते न साध्यतया न्यायप्रयोक्तुरभिमतम्। तथात्वे तादृशभेदस्यासदादिभि बत्थपुरुषै कल्पितस्य तत्र मयाङ्गीकृतत्वेन तत्साधने सित्धसाधनात्। तस्य नियम्यनियामकभावानुपयोगितया तवार्थान्तरापाताच्च। किं तु आधुनिकभ्रमविषयभेदव्यावृत्तव्यावहारिकसद्विशेषभेद एव वा श्रुते पारमार्थिकत्वाकारेण भेदनिषेधपरत्वपक्षे तेन रूपेण वा विप्रतिपत्तिरिति वक्तव्यम्। तथा च प्रथमविप्रतिपत्त्यनुरोधेनानिर्वचनीयभेदः साध्यते वा द्वितीयविप्रतिपत्त्यनुरोधेन पारमार्थिकभेदो वा साध्यत इत्यभिमानेन प्रकृते विकल्पोपपत्तेः। एव मुक्तत्वादिहेतुविकल्पस्थलेपि भ्रमप्रतिपन्नमुक्तत्वादिना व्यभिचारवारणाय मन्मतरीत्या भ्रमप्रतिपन्नव्यावृत्तानिर्वचनीयत्वनिवेशे तवासिद्धिः। पारमार्थिकत्वनिवेशे ममासिद्धिरित्यादिरीत्यैवोपपत्तिर्द्रष्टव्या। मिथ्यात्वानुमानखण्डनादौ यद्दृश्यत्वादिहेतावुक्तरीत्या[1] विकल्पकरणं तत्परन्यायैस्तु दूषणमित्युक्तरीत्या परन्यायेनैव।

यद्वा विधिनिषेधाववधूय प्रतीतेरयोगात् 'असद्व्यावृत्तं रूप सर्वप्रतीतावुत्सर्गतो विषय' इत्यवश्यं वक्तव्ये तद्रूपमनिर्वचनीयत्वं चेत्साध्यादिस्वरूपग्राहकप्रमाणेन तद्रूपविशिष्टभेदस्यैवोपस्थित्याऽनिर्वचनीयत्वविशिष्टभेदत्व साध्यतावच्छेदक प्राप्तम्। तादृश रूप यदि पारमार्थिकत्व तदा पारमार्थिकत्वविशिष्टभेदस्यैवोपस्थित्या पारमार्थिकत्वविशिष्टभेदत्व साध्यतावच्छेदक प्राप्तम्। अत क पक्षमवलम्ब्यानुमान प्रवृत्तमित्याशयेन तत्वनिर्णयेच्छुः पृच्छति ॥ किमिति ॥ न च प्रथमकल्पे उभयसित्धभ्रमविषयव्यावृत्तानिर्वचनीयत्वस्यैव शङ्काविषयत्वेन प्रसक्ततया तत्रैव प्रमाणाभावे अभिहिते भ्रमविषयशुक्तिरूप्यादावनिर्वचनीयत्वसाधनाय प्रत्यक्षादिप्रमाणशङ्काया असङ्गतिरिति शङ्क्यम्। भ्रमविषये अनिर्वचनीयत्वं स्वीकृत्यान्यादृशानिर्वचनीयत्वमात्राप्रसित्ध्युक्तौ सिद्धान्तिनो बीजाभावेनोक्तविकल्पप्रापकाशे विकल्पाशे च सर्वत्र शङ्ककस्यायुक्तता बोधयितु चानिर्वचनीयसामान्यस्यैव सित्धान्तिनाऽप्रसिद्धावभिहिताया सामान्यतो विचारप्रसक्त्या शुक्तिरूप्ये तत्साधनाय प्रमाणशङ्कासङ्गते। द्वितीययोजनाया तु नैष दोष। सामान्यत एवानिर्वचनीयत्वस्य प्रथमत एव प्रसक्तत्वादिति भाव।

---

[1] विकल्पाकरण इति पाठेन भाव्यमिति भाति।

(द्वै द्यु) यत्तु सामान्यतो भेदे साध्यतयोक्ते उक्तरीत्या पारमार्थिकत्वादिधर्मस्य न साध्यतावच्छेदकतया प्रश्न । येन सामान्यत· प्रयुक्ते विशेषविकल्पानुपपत्तिरूपदोष स्यात् । किं तु प्रमाणेन विषयीकृतो भेद पारमर्थिकोऽनिर्वचनीयो वेति वस्तुतत्वविचारकस्य शङ्का अनिर्वचनीयनिराकरणप्रसक्तिसम्पादकतयोपन्यस्तेति । तदसत् । पारमार्थिकत्वस्य साध्यतावच्छेदककोटिप्रवेशाभावे भेदमात्रस्य दृष्टान्ते पराङ्गीकृतत्वेन साध्यवैकल्यदूषणासङ्गने । भेदत्वेनैव साध्यत्वे पारमार्थिकव्यक्तिसिध्देरनिर्वाह इति दूषणस्यैव वक्तव्यतापाताच्चेति ।

॥ **पर प्रतीति** ॥ प्रतिवादिन मा प्रतीत्यर्थ । तत्वनिर्णयेच्छोरन्यस्य शङ्कत्वे तु भवत्प्रतिवादिन मायावादिन प्रतीत्यर्थ । यद्यप्यप्रसिध्दविशेषणतैव परेण वक्तव्या । दृष्टान्ते साध्यवैकल्यरूपविशेषनिषेधेन सामान्यतस्तदङ्गीकारप्राप्त्या परस्यापसिध्दान्तप्रसङ्गात् । तथाप्यप्रसिद्धविशेषणतापि व्याप्तिग्रहस्थलरूपदृष्टान्ताभावनिर्वाहकतया व्याप्तिग्रहविरोधिनी भवतीति आवश्यकत्वात् दृष्टान्ते साध्यवैकल्यमेवाभिहितमित्यन्ये ।

पारमार्थिकत्वाकारेण विप्रतिपत्तिदशायां मुक्ते पारमार्थिकभेदतदभावबोधकश्रुतिं विना [1]तस्यावश्यकत्वेन सामान्यत पारमार्थिकभेदस्य श्रुतिप्राप्ततया अप्रसिध्दविशेषणताया इदानीं वक्तुमशक्यतया दृष्टान्ते साध्यवैकल्यमेवाभिहितमित्यपरे ।

**परे** तु साध्यमाने भेदे अनिर्वचनीयत्वादिकोटिकसंशयस्य भेदत्वे तत्सामानाधिकरण्यभ्रममूलकत्वरूपायुक्तता व्युत्पाद्य, तत्परिहाराय भेदे अनिर्वचनीयत्वपारमार्थिकत्वादिग्रहमन्तरेणापि जातसंशय एवैतत्प्रश्नमूल भवति स तु युक्त एवेति पुन प्रत्यवस्थिते, अनिर्वचनीयस्य सर्वत्राप्रतीतत्वादिना तन्निराकरिष्यते । शिष्याणा कथाक्रमशिक्षायै परानभिप्रेतस्याप्यापातत सम्भवदुक्तिककल्पस्य शङ्कानिराकरणयोर्ग्रन्थकारीयसम्प्रदायप्राप्तत्वात् । इदानी शङ्ककस्य क्वचिद्भेद एव पारमार्थिकत्व क्वचिदनिर्वचनीयत्वमिति ज्ञानपूर्वक प्रकृते विकल्प्य दूषकत्वात्तेनाप्रसिध्दविशेषणता नोद्भावयितु शक्येति दृष्टान्ते साध्यवैकल्यमेवोक्तम् । मुक्तभेद एव पारमार्थिकत्वादिविचारावसरे अन्यत्र क्वचित् पारमार्थिकभेदोपि स्यादन्यथा मुक्त एव विवादायोगादिति युक्त्या सामस्त्येन स्वमतास्फूर्तिमत परमतानुसारिण ज्ञानसम्भवात् । अत एव पारमार्थिकभेद परस्याप्रसिध्द इति स्वमतस्फूर्तिमुत्पाद्यायुक्तता संशयस्याह । तत्वनिर्णयेच्छोरन्यस्य शङ्कत्वेपि तस्य परमतानुसारेणैव प्रवृत्तत्वात प्रत्येतदभिधान युक्तमेव । अत शङ्ककस्य भेदे पारमार्थिकत्वज्ञानप्रसक्त्यभावशङ्कापि नेति युक्तमेव दृष्टान्ते साध्यवैकल्यस्यैवाभिधानमित्याहुः ।

**परे** तु भावाद्वैतपक्षे ब्रह्मवृत्त्यनृतादिव्यावृत्ते. पारमार्थिकत्वदर्शनेन विकल्पः । अत साध्याप्रसिद्धिविरहात् दृष्टान्ते साध्यवैकल्यमेवोद्भावितमित्याहु ।

॥ **एतदाशङ्केति** ॥ **अनुमानस्य** मुक्तत्वहेतो । **साधकत्वात्** पक्षे साध्यानुमितिनिर्वाहकत्वात् । तथा च प्रकृतानुमितिजननरूपैकक्रियान्वयित्वमुभयोरिति समुच्चयनिर्वाह । जननरूपक्रिया च जन्यज्ञानविषयत्वरूपपञ्च-

[1] तस्या अयोगेन इति पाठेन भाव्यमिति भाति,

(द्वै द्यु) म्यर्थघटिकेति भाव । तथा च मुक्तत्वहेतुर्वर्तते। उक्तशङ्काप्ययुक्तत्वान्न दूषणम्। अतो विमतो भिन्न इति पर्यवसितोर्थ.। **भेदे विकल्पो न युज्यते** इत्ययुक्तम्। विकल्पपदस्य विविधधर्मपरत्वे भेदे भेदत्वघट-प्रतियोगिकत्वादिनानाधर्माणा सत्त्वात्तन्निषेधानुपपत्ति प्रकृतानुपयोगश्चेत्यतो विकल्पपद प्रश्नपरतया व्याख्यातुमु-पयुक्तमाह। **एकत्रेत्यादिना** । **कल्पनं** ज्ञानम्। अक्षरार्थमुक्त्वाऽनेन कस्य लाभ इत्यत आह ॥ **संशय इति** ॥

(गु टि) ॥ **एकत्र धर्मिणीति** ॥ एकस्मिन् धर्मिणि भासमानविरुद्धनानाकोटिकज्ञानमित्यर्थ । अत्र च घटपटाविति समूहालम्बने दैवाद्विरोधभानदशायामतिप्रसङ्गवारणायोक्तमेकस्मिन् धर्मिणीति। घटोऽयमिति निश्चयेऽतिप्रसङ्गवारणायोक्तमनेकाकारेति। द्रव्य घटश्चेत्यत्रातिप्रसङ्गवारणाय विरुद्धेत्युक्तम्। स्थाणु पुरुषश्चेति विपर्ययेऽतिप्रसङ्गपरिहाराय भासमानतया विरोधो विशेषित ।

यत्तु 'उक्तरूपविशिष्टज्ञानं समानसामग्रीजन्यत्वेन अनाहार्यत्वेन वा अवश्य विशेषणीयम्। तेन धूमांशे चक्षुरादिजन्यतया धूमाभावांशे आपादकप्रत्ययजन्यतया भिन्नसामग्रीजन्ये आहार्ये च 'धूमवानय पर्वतो यदि निर्वह्नि. स्यात् तर्हि धूमोऽपि न स्यात्' इति तर्के एकत्र पर्वते धूमतदभावावगाहिनि नातिव्याप्ति.' इति केषाञ्चिद्यु-त्पादनं तदसत्। तर्कस्यैककोटिकत्वेनोक्तलक्षणस्य तत्राभावात्। तथा हि, अनेककोटिकत्व स्वमतेन किं वा परमतेन। नाद्य । निरग्निकत्व प्रति निर्धूमत्वस्य व्यापकत्व लिङ्ग। तज्ज्ञान करणम्। निरग्निकत्वाभाव प्रति निर्धूमत्वाभावस्य व्याप्यत्वं लिङ्गं। तज्ज्ञानं फलमिति पक्षे, आपादकरूप निरग्निकत्वं लिङ्ग तस्य पक्षे अभ्युपेतत्व-मेव पक्षसम्बन्ध निर्धूमत्वमेव लिङ्गि तस्य पक्षे अभ्युपगमनीयत्वमेव पक्षसम्बन्ध इति पक्षे, निरग्निकत्वेनाङ्गी-कृतत्व लिङ्ग निर्धूमत्वेनाङ्गीकर्तव्यत्वञ्च लिङ्गीति पक्षे वा करणांशे वा फलांशे वा स्वमते अनेककोटिकत्वाभा-वात्। नान्त्य.। तन्मते 'निर्धूम स्यात्' इत्येतावन्मात्रस्यैव तर्कस्वरूपत्वेन तत्रोक्तलक्षणागमनान्नातिव्याप्ति । फले करणविशेषे उक्ताकारत्वेपि वा तत्र धूमतदभावयोर्विरोधाभानेन विरोधभानघटितलक्षणाभावेन, कथञ्चित्त-दुपपादनेपि वा तस्य संशयत्वेन लक्ष्यतया तत्रातिव्याप्तिशङ्कानुदयात्। स्वमते तर्कस्यानाहार्यत्वेन तेन तत्राति-व्याप्तिपरिहारासम्भवात्। स्वकीयलक्षणव्याख्यानावसरे पररीत्या अतिव्याप्तिशङ्कापरिहारयोरत्यन्तासङ्गतत्वाच्चेत्य-न्यत्र विस्तर.।

(टी) इदमुक्त भवति। आस्तामिद दूरे दूषणाभिधानम्। प्रश्न एव तावदय न युज्यते। सन्देह-मूलत्वात्प्रश्नस्य। न खलु कश्चिन्निश्चित पृच्छति। नाप्यत्यन्ताविदितम्। न च विमतो भिन्न इत्युक्ते विना प्रश्नेनापसिद्धान्ताद्युद्भावनावसरोऽस्ति ।

### प्रश्नस्य संशयमूलकत्वसमर्थनम्

ननु विनापि सन्देहात्प्रश्नो भवति। यथा देवदत्त कियन्तस्तनयास्तवेति। मैवम्। तत्रापि पुत्रत्वसामान्यस्य सङ्ख्याविशेषसमानाधिकरणतया अनुभूतत्वेन तत्प्रतिभासे सति संस्कारोद्बोधात्स-

(टी) ङ्ख्याविशेषस्मृतौ तत्रान्यतमजिज्ञासायां निश्चायकप्रमाणाभावेन संशयोदयस्य न्यायप्राप्तत्वेन तन्मूलत्वात्। केवलं सङ्ख्याप्रभेदानां बाहुल्याद्गौरवभयेन एको द्वौ वेत्यादिविशेषनिर्देशेन विना कियन्त इति सामान्येन प्रश्नः क्रियते।

अथात्र गिरिदर्यां किमप्यद्राक्षमित्युक्ते किंलक्षणकं तदिति पृच्छति। तदा कथं सन्देहहेतुकत्वम्। विशेषस्मरणोपायाभावादिति चेन्न। तत्रापि वस्तुत्वेन लक्षणसद्भावमनुमाय ततस्तद्विशेषस्मृतौ तत्किमनुभूतेष्वन्यतममन्यद्वेति सन्देहादेव प्रश्नात्। १७

शानिकृतप्रश्नस्य संशयमूलकत्वाभावेपि प्रकृतसंशयस्य तन्नैयत्यसमर्थनम्

अस्तु वा अन्यत्र प्रश्नो यथा तथा। अनेककोट्यवलम्बी प्रकृतस्तावत्सन्देहमूल एवाङ्गीकार्यः।

(वि टि) एवंपदार्थमुक्तशङ्कानिरासक्षमं विवक्षितं वाक्यार्थं दर्शयितुमाह ॥ **इदमुक्तं भवतीति** ॥ **दूषणाभिधानमपसिद्धान्तादिदूषणाभिधानम्**। ननु विनापि प्रश्नं दूषणाभिधानमस्त्वित्यत आह ॥ **न चेति** ॥ न्यायानुसन्धानवैधुर्यात्सामग्रीकल्पनायामसमर्थं शङ्कते ॥ **ननु विनापि सन्देहादिति** ॥ अन्यथा एको वा तनयो द्वौ वा त्रयो वेति विशिष्य प्रश्नाकारः स्यादिति ॥ **तत्रापीति** ॥ एतच्च तन्मूलत्वादिति सम्बद्ध्यते। संशयस्य समानधर्मापेक्षायामाह ॥ **पुत्रत्वसामान्यस्येति** ॥ **अन्यतमजिज्ञासायामिति** ॥ एतच्च काचित्काभिप्रायम्। सर्वत्र संशयात्पूर्वं जिज्ञासाया अनुभवबाधितत्वादिति ध्येयम् ॥ **निश्चायकप्रमाणाभावेनेति** ॥ अन्यतरकोटिनिश्चयतत्सामग्र्यभावेनेत्यर्थं। तन्निश्चयवत् निश्चयसामग्र्या अपि संशयप्रतिबन्धकत्वादिति ध्येयम्।

ननूक्तप्रश्नस्य संशयमूलत्वे तस्येव प्रश्नस्याप्यनेककोट्युल्लेखित्वप्रसङ्ग। प्रश्नस्य स्वहेतुभूतसंशयसमानाकारत्वादित्याशङ्कायामिष्टापत्त्या परिहारमभिप्रेत्य विशेषाकारेण प्रश्नवाक्याप्रवृत्तौ हेतुमाह ॥ **केवलमित्यादिना** ॥ **गौरवेति** ॥ बहुशब्दोच्चारणप्रयुक्तप्रयासभयेनेत्यर्थं ॥ **सामान्येनेति** ॥ अभिप्रेतयावदर्थसङ्ग्राहकसङ्कुचितशब्देनेत्यर्थः। संशयस्य प्रश्नहेतुत्वे स्थलान्तरे व्यभिचारं शङ्कते ॥ **अथात्रेति** ॥ इत्युक्त इत्यनन्तरं यदेति शेषः ॥ **सन्देहहेतुकत्वमिति** ॥ प्रश्नस्येति शेषः ॥ **विशेषस्मरणेति** ॥ संशयप्रकारभूतधर्मविशेषस्मरणेत्यर्थं ॥ **तत्रापीति** ॥ गिरिदरीस्थत्वेन श्रुतवस्तुन्यपीत्यर्थं ॥ **वस्तुत्वेनेति** ॥ प्रामाणिकत्वेनेत्यर्थं। एतच्च 'अत्र गिरिदर्यां किमप्यद्राक्षम्' इत्याप्तवाक्यप्रतिपन्नतया न तत्रासिद्धमिति ध्येयम् ॥ **लक्षणवत्त्वमिति** ॥ वस्तुनो यत्किञ्चिदसाधारणधर्मवत्त्वनियमादिति भावः ॥ **तत इति** ॥ [1]तल्लक्षणवत्त्वरूपसामान्यधर्मविशिष्टलक्षणवत्तया अनुमित्यनन्तरं तथाविधानुभवजनितसंस्कारोद्बोधात्तेन तेन रूपेण लक्षणविशेषस्मृतावित्यर्थं ॥ **अनुभूतेष्विति** ॥ अनुभूतेष्वेवेदं न वेति सन्देहादेवेत्यर्थं। उक्तस्थलद्वये सन्देहं विनापि प्रश्नमङ्गीकृत्य प्रकृतप्रश्नस्यानेककोट्यवलम्बित्वेन तादृशसंशयमूलकत्वमावश्यकमित्याह ॥ **अस्तु वाऽन्यत्रेति** ॥ यद्वा ननु प्रश्नमात्रस्य न संशयमूलत्वं सम्भवति। सर्वज्ञेश्वरादिकर्तृकप्रश्नेषु तदभावात्।

---

[1] लक्षणवत्त्वरूपसामान्यधर्मवत्तया इति पाठेन भाव्यमिति भाति

(वि टि.) जानन्तोऽपि विशेषार्थज्ञानाय स्थापनाय वा ।
पृच्छन्ति ॥

इत्यादेरित्यनुशयवानाह ॥ **अस्तु वेति** ॥ यथा तथेत्यनास्थया । अन्यत्र प्रश्न सशयमूलोऽस्तु मा वा भूदित्यर्थ । ॥ **प्रकृत इति** ॥ गुरुशिष्यविचारमूलप्रश्न इत्यर्थ ।

(रा टि) अस्फुटत्वादाह ॥ **इदमुक्तमिति** ॥ एवकारतात्पर्यमाह ॥ **आस्तामिति** ॥ **दूषणेति** ॥ विकल्पस्येति शेषः । इद दूषणाभिधान दूरे आस्तामित्यन्वय । हेतोरप्रयोजकत्व निराह ॥ **न खल्विति** ॥ मास्तु प्रश्न दूषणमात्र मयोच्यत इत्यत आह ॥ **न चेति** ॥ अतो विकल्पस्यैव दूष्यम् । स विकल्प एवायुक्त इति साधूक्त मूल इति भाव । **सन्देहमूलत्वात्प्रश्नस्येत्युक्तहेतो**र्व्यतिरेकव्यभिचारमाशङ्क्य निराह ॥ **नन्वित्या-दिना** ॥ **देवदत्तेति** सबुद्धि । साधारणधर्मादिसन्देहसामग्रीमाह ॥ **तत्रापीति** ॥ कियन्त इति प्रश्नेऽपि । वाक्ये ऽपीति वा । **तथात्वे** प्रश्नस्येति शेषः । **तन्मूलत्वादि**त्यन्वय । सशयकोटीराह ॥ **सङ्ख्याविशेषेति** ॥ द्वित्वत्रि त्वादीत्यर्थ । **तत्प्रतिभासे** पुत्रत्वप्रतिभासे । **केवल**मित्यस्य विवरण **विने**त्यन्त ॥ **विशेषेति** ॥ लक्षणविशेषरूप-कोटिस्मरणोपायाभावात् । साधारणधर्मसहचरिततया कोटीनामननुभवादिति भाव ॥ **प्रकृतस्तावदिति** ॥ द्विकोटिकत्वेन कोटिस्मृतिसम्भवादिति भाव ।

(**वे टि**) ननु विनापि प्रश्न दूषणाभिधानमस्त्वित्यत आह ॥ **न चेति** ॥ **ननु विनति** ॥ अन्यथा एको वा तव तनयो द्वौ वा त्रयो वेति प्रश्नाकार स्यादिति भाव ॥ **तत्रापीति** ॥ एतस्य **तन्मूलत्वादि**त्युत्तरेण सम्बन्ध ॥ **सशयोदयस्येति** ॥ कोटीनामतिबाहुल्यात् 'किसज्ञकोऽय वृक्ष' इत्यादिवदनिर्दिष्टकोटिकसशयो-दयस्येत्यर्थ । अत एवाह ॥ **केवल सङ्ख्याप्रभेदानामिति** ॥ **सामान्येनेति** ॥ अभिप्रेतयावदर्थसङ्ग्राहक-सङ्कुचितशब्देनेत्यर्थ ॥ **विशेषस्मरणोपायाभावादिति** ॥ 'किल्लक्षणकम्' इति प्रश्नहेतुभूतसन्देहे गिरिदरी-विवरवर्तिवस्तुनि लक्षणवत्त्वज्ञान साधारणधर्मदर्शनत्वेन कोटिस्मरणोपाय । तच्च तस्य वस्तुनो व्यवहितत्वान्ना-स्तीति भाव । प्रत्यक्षरूपस्य तस्याभावेपि अनुमितिरूप तत्सम्भवतीत्याह ॥ **तत्रापीति** ॥ ननु प्रश्नमात्रस्य न सशयमूलत्वम् । सर्वज्ञकर्तृकप्रश्नेषु तदभावात ।

जानन्तोपि विशेषार्थज्ञानाय स्थापनाय वा ।
पृच्छन्ति साधव ॥

इत्यादेरित्यनुशयादाह ॥ **अस्तु वेति** ॥ अनास्थाया वाशब्द. । अन्यत्र यथा तथास्तु । शिष्यादिप्रश्नस्तु सन्देहमूलक एवेति भाव ।

(द्वै द्यु) प्रश्नस्य पुरुषविशेषकर्तृकस्यायोगेपि हेतोरुक्तदूषणेन दुष्टत्वेन गृहीतत्वात्कथ तस्य साधकतेत्यत आह ॥ **इदमुक्त भवतीति** ॥ **आस्तामित्यादि** ॥ तथा च प्रश्नस्यायुक्तत्वमनिर्वचनीयस्याप्रामाणिकतां विना न पर्यवस्यतीति भेदत्वेन वोत्सर्गत पदस्वाभाव्यात् प्रतीयमानपारमार्थिकत्वसहितभेदत्वेन वा साध्यत्वे न किञ्चिद्दूष-

(द्वै द्यु ) णमिति प्रकृतानुमानात्साध्यसिद्धिर्निष्प्रत्यूहेति भाव.। प्रश्नेन युक्तप्रश्नेन। उद्भावन सदुत्तररूपोद्भावनं। तथा च [1]वादिवाक्येन हेतावप्रामाण्यग्रहानास्कन्दितदुष्टत्वग्रहो दुष्टत्वग्रह एव वा न जायत इति भाव ॥ सङ्ख्याविशेषेति ॥ द्वित्वमात्रत्रित्वमात्रसामानाधिकरण्येनेत्यर्थ ॥ अन्यतमजिज्ञासायामिति ॥ एतच्च 'समानानेकधर्मोपपत्तेर्विप्रतिपत्त्युपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्श सशय' इति न्यायसूत्रे विशेषजिज्ञासाया विशेषापेक्षपदेन संशयकारणकोटौ परिगणितत्वादुक्तम्। तत्र तत्परिगणन च साधारणधर्मादिज्ञानवत्सशयान्वयव्यतिरेकानुभवमाश्रित्य वा सशयप्रतिबन्धकीभूतपदार्थान्तरविषयकलौकिकप्रत्यक्षादिसामग्रीविघटकतया प्रायेणोपयोगाद्वेति ज्ञे ।॥ न्यायप्राप्तत्वेनेति ॥ सशयसामग्रीरूपलिङ्गजन्यानुमितिविषयत्वेनेत्यर्थ ॥ अस्तु वेति ॥ अन्यत्र विशेषरूपेण कोट्यनुल्लेखस्थले। यथा तथा सामान्यरूपेण ज्ञातकोटीना विशेषरूपेणाज्ञानेनापि। अनेककोट्यवलम्बी विशेषरूपेणानेककोट्युल्लेखी। अत्र विशेष भक्तिपादसुधाव्याख्यायां यादवाचार्यैरुक्तोऽनुसन्धेय.।

### भेदे पारमार्थिकत्वादिकोटिकसशयायोगसमर्थनम्

(टी ) अस्तु सन्देहमूलत्व प्रश्नस्य। तथापि कुतो न युज्यत इत्यत्रापि न च भेदे विकल्पो युज्यते इत्येवोत्तरम्। प्रश्नो हि सन्देहहेतुक इत्युक्तम्। न च भेदे:भेदविषये 'किमयमनिर्वचनीयोऽथ वा पारमार्थिकः' [2]इत्येवंरूपो विकल्पः:सन्देहो युज्यते। न च कारणाभावे कार्यमुत्पत्तुमर्हति। अतिप्रसङ्गात्।

अथैवविधो भेदे सदेहः कुतो न युज्यत इत्यत्रापि न च भेदे विकल्पो युज्यते इत्येवोत्तर। सशयो हि स्थाणुपुरुषाद्यनेकविशेषसम्बन्धितया अनुभूतेनोर्ध्वतादिसाधारणधर्मेणाऽलिङ्गितस्य पुरोवृत्तिवस्तुनोऽवभासे संस्कारोद्बोधद्वारेण प्रागनुभूतस्थाण्वादिविशेषविषयस्मृतौ प्रयोजनानुसन्धाने विशेषजिज्ञासायां अन्यतरनिश्चायकप्रमाणमनुसरतोपि तदलाभे सति 'किमय स्थाणुस्स्यात्पुरुषो वा' इति जायते। न च भेदेऽनिर्वचनीयः पारमार्थिक इति विकल्पः:प्रभेदो युज्यते। येन विमतो भिन्न इत्युक्त्या भेदप्रतीतावनिर्वचनीयादिस्मृतिः स्यात्। 156

(वि टि ) ननु 'न च भेदे विकल्पो युज्यते' इति प्रतिज्ञातप्रश्नायोग प्रति 'अनिर्वचनीयस्य सर्वत्राप्रसिद्धत्वात्' इत्यग्रेतनवाक्येन साक्षाद्धेतुसमर्पणायोगात् हेतूपन्यास विना प्रतिज्ञामात्रं कुर्वत आचार्यस्य न्यूनतामाशङ्क्य तन्त्राऽऽवृत्त्योरन्यतराश्रयणेनास्यैव प्रतिज्ञावाक्यस्य हेतुपरत्वमाचार्याभिमतमिति व्याचष्टे ॥ अस्तु सन्देहमूलत्वमिति ॥ नन्वस्य कथ तदुत्तरत्वमित्यत आह ॥ प्रश्नो हीति ॥ प्रकृतप्रश्नो हीत्यर्थ। औपश्लेषिकसामीप्याद्यनेकार्थत्वेन सप्तम्यास्तेष्वर्थेष्वभिप्रेतमर्थमाह ॥ भेदविषय इति ॥ पारमार्थिक इत्यस्यानन्तर इतीति शेष.। ननु विकल्पशब्दस्य प्रश्नपरत्वेन व्याख्यानात् तदयोगस्य हेतुत्वे साध्याविशिष्टतेत्याह ॥ विकल्पः

---

[1] प्रतिवादिवाक्येन इति पाठेन भाव्यमिति।

[2] एवरूपो इति श्रीविजयीन्द्रतीर्थीय पाठ।

(वि. टि.) **सन्देह इति॥** विमत प्रश्नो नोत्पत्तुमर्हति स्वकारणभूतसंशयरहितत्वादित्यभिप्रेतानुमाने व्याप्तिमाह ॥ **न चेति ॥** नन्विदमपि प्रतिज्ञामात्रमिति कथ तेन प्रश्नायोगसिद्धिरित्याशङ्कयोक्तन्यायेनास्यैव प्रतिज्ञावाक्यस्य तत्साधकहेतुपरत्वमाचार्याभिप्रेतमित्याह ॥ **अथैवविध इत्यादिना ॥** एतच्च 'न च भेदे विकल्प.' इति चशब्दस्यैवाऽवृत्त्यादिना यस्मादित्यर्थकत्वमप्याश्रित्येति ध्येयम् । अत एव 'न चानिर्वचनीये किञ्चिन्मानम्' इति वाक्यव्याख्यानावसरे वक्ष्यति 'चशब्दो यस्मादित्यर्थे' इति। अनिर्वचनीयत्वादिकोटिस्मृतिविरहात् प्रकृतसंशयायोग वक्तु प्रसिद्धसंशये कोटिस्मरणस्य हेतुत्व क्लृप्तमित्येतद्दर्शयति ॥ **सशयो हीति ॥** सशयो हि जायत इति योजना ॥**स्थाणुपुरुषादीति ॥** स्थाणुपुरुषादीना ये अनेके विशेषा स्थाणुत्वपुरुषत्वादयस्तत्तत्सम्बन्धितया तत्तत्समानाधिकरणतयेत्यर्थ । एतच्च व्याख्यान संसर्गारोप सशय इति पक्षे। तादात्म्यारोपः सशय· इति पक्षे तु स्थाणुपुरुषादिरूपा ये विशेषास्तत्सस्रष्टतयेति ज्ञेयम्। एवञ्च प्रागनुभूतस्थाण्वादीत्यत्रापि सशयस्य ससर्गारोपरूपत्वे स्थाण्वादिशब्दो भावप्रधान, तादात्मारोपरूपत्वे तु भवितृप्रधान इति ज्ञेयम् | **प्रयोजनानुसन्धान** इत्यादि क्वाचित्काभिप्रायम्। **तदलाभे** अन्यतरकोटिनिश्चायकप्रमाणालाभे सति। ननु विकल्पशब्दस्य सशयार्थत्वे साध्याविशिष्टतेत्याशङ्कय त तद्धेतुभूतभेदविशेषपरतया व्याचष्टे ॥ **इति विकल्पप्रभेद इति॥** विशेषेण अनिर्वचनीयत्वादिधर्मवत्तया कल्प्यते बुद्ध्यते इति विकल्पो भेदविशेष । स एव प्रभेद इत्यर्थ.। **विकल्पः प्रभेद इति** पाठे तु विकल्पशब्दस्यैव व्याख्या प्रभेद इति। प्रभेदो भेदविशेष. अनिर्वचनीयत्वाद्यालिङ्गित इत्यर्थ ॥ **येनेति ॥** भेदत्वस्यानिर्वचनीयत्वाद्यनेककोटिसहचरितत्वेनाननुभूतत्वादिति भाव ।

(रा टि) ससम्यर्थमाह ॥ **भेदविषय इति ॥ कारणेति ॥** सन्देहरूपकारणाभावे प्रश्नरूपकार्यमित्यर्थ । **सशयो हीत्यस्य जायत** इत्यग्रेतनेनान्वय । मूलवाक्यार्थमाह ॥ **न च भेद इत्यादि ॥**

(वे. टि) एव प्रकृतेपि पारमार्थिकानिर्वचनीयभेदरूपविशेषसम्बन्धितया अनुभूतेन भेदत्वरूपसाधारणधर्मेणालिङ्गितस्य भेदस्य विमतो भिन्न इत्युक्तया अवभासेऽनिर्वचनीयादिकोटिस्मरणे सति सशयो वाच्य । स चायुक्त इत्याह ॥ **न च भेद इति ॥**

(द्वै द्यु) ॥ **इत्येवोत्तरमिति** ॥ तथा चोत्तरमूलस्य हेतुताया [1]कथतया न मन खेदयितव्यमिति भाव·। ॥ **किमनिर्वचनीय इत्यादि** ॥ ननु 'किमनिर्वचनीयो भेद साध्यते' इतिशब्दोल्लेख्यसशय पूर्वमुपन्यस्तः । स च विशिष्टभेदे साध्यत्वकोटिक एव । न तु भेदेऽनिर्वचनीयत्वकोटिक । तथात्वे विशेष्यतावच्छेदकविशिष्टविशेष्यनिर्णयायोगेनानिर्वचनीयभेद इत्यादिनिर्देशायोगादिति कथं पूर्वविकल्पप्रयोजकसंशयनिरासकत्वमस्येति चेन्न । नायमनिर्वचनीयत्वादिविशिष्टे भेदे साध्यत्वकोटिक । तथात्वे साध्यत्वाभावकोट्युल्लेखापत्त्या साध्यो न वेत्याकारकतापत्ते· । किं तु प्रकृतानुमितिसम्बन्धिसाध्यताया अनिर्वचनीयत्वविशिष्टभेदपारमार्थिकत्वविशिष्टभेदविषयक एव । एव च भेदवत्त्वेन निश्चिते साध्यत्वे विशिष्टभेदाऽवगाही सशय [2]विशेषणीभूते अनिर्वचनीयत्वपारमार्थि-

---

[1] कथन्तया कथमित्याकाङ्क्षया

[2] विशेष्यभूते भेदे इति पाठेन भाव्यमिति भाति

(द्वै घु) कत्वरूपविरुद्धकोटिद्वयावगाही। विशेष्यवन्निष्ठविशिष्टाभावस्य विशेषणाभावरूपतामते विशेष्यवत्त्वेन निश्चीयमानविषयकविशिष्टसंशयस्य विशेष्ये विशेषणाभावविषयकत्वस्य क्लृप्तत्वात्। दन्डवत्त्वेन निश्चिते पुरुषे रक्तदण्डवान्न वेति संशयस्य पुरुषवृत्तिदण्डे रक्तत्वकोटिकत्ववत्।

[1]न च दण्डे रक्तत्वकोटिकत्वे रक्तदण्डवान्वा अनिर्वचनीयभेदो वेत्यादिशब्देनोल्लेखानुपपत्तिः। तस्य दण्डादौ [2]रक्तत्वनिर्णयसापेक्षत्वादिति वाच्यम्। नैयायिकमते शशशृङ्गमस्ति न वेति संशयस्य शशे शृङ्गतदभावकोटिकस्यापि शशशृङ्गादिपदघटितवाक्येनाभिलाप्यताया स्वीकृतत्वेन विशृङ्खलतज्ज्ञानेनापि तादृशव्यवहारोपपत्त्या तस्योक्तनिर्णयसापेक्षत्वाभावाभ्युपगमात्।

यद्वा दण्डत्वभेदत्वसामानाधिकरण्येन रक्तत्वानिर्वचनीयत्वादिनिर्णयसत्त्वात्तादृशशब्दप्रयोगोपपत्तिः। संशयस्तु [3]पुरुषवृत्तिदण्डत्वे तदनुमानविषयभेदत्वावच्छिन्नधर्मिक इति न कोपि दोषः। अत एवैवंशङ्ककस्य क्वचिद्भेदेऽनिर्वचनीयत्वपारमार्थिकत्वज्ञानस्यावश्यकत्वादप्रसिद्धविशेषणता नोद्भावयितुं शक्येति।

[4]परेत्विति मतसङ्गतिः। नन्वयं प्रश्नः अनिर्वचनीयत्वविशिष्टभेदत्वपारमार्थिकत्वविशिष्टभेदत्वयोः साध्यतावच्छेदकत्वविषयक एव। तस्यैव साध्यवैकल्यादिदूषणक्षमत्वात्। न तु भेदे वस्तुतोऽनिर्वचनीयत्वपारमार्थिकत्वादिकोटिविषयकः। दृष्टान्ते साध्यवैकल्योत्तयसङ्गतेरिति पूर्वमेवोक्तम्। एवञ्च भेदे अनिर्वचनीयत्वादिकोटिकः अनिर्वचनीयत्वादिविशिष्टभेदत्वे साध्यतावच्छेदकत्वावगाही अयं संशयः कथं प्रकृतप्रश्नकारणत्वेन निरूप्य दूष्यत इति चेन्न। यतो विषयताया साध्यतारूपाया पारमार्थिकत्वादिविशिष्टभेदावगाहिसंशयो नाम पारमार्थिकत्वादिसामानाधिकरण्यविशिष्टभेदभेदत्वावच्छेद्यत्वविशिष्टतादृशभेदवृत्तित्वप्रकारकः। स च भेदे उक्तोभयकोटिक एव पर्यवस्यति। वादिनः स्वन्यायसाध्यत्वेनेच्छाविषयीभूतानुमितिनिरूपितविषयताया भेदनिष्ठत्वस्य भेदत्वावच्छेद्यत्वस्य च शङ्ककेन निश्चितत्वात् शुद्धभेदत्वस्य विषयतावच्छेदकत्वे भ्रमविषयीभूतभेदमादाय सिद्धसाधनत्वानुसन्धानेन पारमार्थिकत्वावच्छिन्नत्वानिर्वचनीयत्वावच्छिन्नत्वान्यतरस्यापि निश्चितत्वात्। अतो विशेष्यवन्निष्ठेत्यादिन्यायेनोक्तसंशयः भेदे अनिर्वचनीयत्वपारमार्थिकत्वकोटिको वा भेदनिष्ठभेदत्वावच्छिन्नविषयतायामनिर्वचनीयत्वावच्छिन्नत्वतदभावकोटिको वा पारमार्थिकत्वावच्छिन्नत्वतदभावकोटिको वा भवति। अन्यतरत्वेन निश्चयेपि विशेषरूपेणानिश्चयात्। एतत्संशयत्रयमपि विशिष्टभेदत्वे साध्यतावच्छेदकत्वसंशयरूपमेव। एतत्संशयत्रयनिरासकविशेषदर्शनाभावादेक एव वा समूहालम्बनरूपः संशयः साध्यतावच्छेदकत्वसंशयपर्यवसन्नः। तथा च पक्षद्वयेप्येतत्प्रश्नः प्रत्युक्तसंशयस्य कारणत्वादन्याशस्य दूषणेऽनुपयुक्तत्वाद्भेदेऽनिर्वचनीयत्वपारमार्थिकत्वकोटिकसंशयत्वेनैव तस्य प्रकृते ग्रहणं कृतमिति कृतबुद्धयो विदाङ्कुर्वतु।

॥ **संशयो हीति** ॥ पूर्वं वक्ष्यमाणरीत्या संशयसामग्रीत्वेन क्लृप्तस्य सङ्ख्याविशेषस्मृत्यादेः कारणकलापस्य सत्त्वात् संशयो 'देवदत्त कियन्त' इतिप्रश्नपूर्वं युक्तिसिद्ध इति प्रतिपादितं। अधुना प्रकृते संशयसामग्र्या

---

[1] न च दण्डादौ रक्तत्वादिकोटिकत्वे इति पाठेन भाव्यमिति भाति।    [2] रक्तत्वादि इति पाठेन भाव्यमिति भाति।

[3] पुरुषवृत्तिदण्डत्वेतदनुमान इति पाठेन भाव्यमिति भाति।    [4] परन्त्वियमत्र सङ्गतिः इति पाठेन भाव्यमिति भाति।

(द्वै द्यु) अभावघटिताया अयोगकथनाय सार्वत्रिकसंशयसामग्री निरूप्यतेऽतो न पौनरुक्त्यम्। प्रभेदः भेदत्वन्यूनवृत्तिधर्मः।

भेदे सर्वत्र चानिर्वचनीयत्वादिप्रभेदाभावेन पूर्वोक्तसंशयायोगसमर्थनम्

(टी) अथ कथमनिर्वचनीयत्वपारमार्थिकत्वप्रभेदो भेदे न युज्यत इत्यत आह

अनिर्वचनीयस्य सर्वत्राप्रसिद्धत्वादेव।

अनिर्वचनीयस्य भेदस्येति शेषः। एवकारोऽनिर्वचनीयस्येत्यनेन सम्बध्यते। उपलक्षणं चैतत्। पारमार्थिकोपि भेदो न परस्य सिद्ध इत्यपि द्रष्टव्यम्। [ननु नायमस्ति नियमः यत्सन्देहविषयजातीयमेवारोप्यमाणकोटिसम्बन्धितया प्रतिपत्तव्यमिति।] आरोप्यमाणकोटिप्रतिपत्तिमात्रेणापि सन्देहदर्शनादिति चेत्सत्यम्। तथापि नाय सन्देहो युज्यते। आरोप्यमाणानिर्वचनीयस्य कुत्राप्यप्रतीतत्वात्। एतदप्युक्तं अनिर्वचनीयस्य सर्वत्राप्रसिद्धत्वादेवेति।

पूर्वोक्तप्रश्नायोगे दृष्टान्तकथनम्

अत्र दृष्टान्तमाह ॥ शशविषाण गोविषाणं वोच्यत इतिवत्। यथा क्वनापि तत्र विषाणमस्ति' इत्युक्ते किं भवता विषाणपदेन शशविषाणमुच्यते किं वा गोविषाणमिति न युज्यते प्रश्नः। शशविषाणस्यैवाप्रसिद्धत्वेन विषाणत्वस्य तत्सम्बन्धितया अनुपलब्धस्य विषाणपदात्प्रतिभासे सत्यपि तदनुस्मरणहेतुत्वानुपपत्त्या जिज्ञासोदयाभावेनैवविधसंशयायोगात्। तथा प्रकृतेपि।

(वि टि) ननु भेदान्यानिर्वचनीयस्याप्रसिद्धत्व भेदानिर्वचनीयत्वपारमार्थिकत्वप्रभेदायोगे न हेतुर्भवितुमर्हति। वैयधिकरण्यादित्यत आह ॥ भेदस्येति शेष इति॥ आरोप्यकोटिसम्बन्धितया संशयधर्मिजातीयनिष्ठस्यैव धर्मस्य तत्कोट्युपस्थितिजननद्वारा संशयहेतुत्वादिति भाव। अनिर्वचनीयभेदस्याप्रसिद्धिर्वादिरीत्येति ज्ञेयम्। अप्रसिद्धत्वादेवेत्येवकारस्य हेतुशरीरप्रवेशे आधिक्यात्तत्सार्थक्याय भिन्नक्रमेण योजयति ॥ एवकार इति ॥ ननु भेद किमनिर्वचनीय उत पारमार्थिक इति विकल्पप्रभेदायोगे अनिर्वचनीयभेदमात्राप्रसिद्धेर्हेतुत्वोक्तिरयुक्तेत्यत आह ॥ उपलक्षणञ्चेति ॥ यद्यप्युक्तप्रभेदायोगोऽनिर्वचनीयभेदरूपैककोटिमात्राप्रसिद्ध्यापि साधयितुं शक्य इत्युपलक्षणमित्यधिकं तथापि वादिरीत्या अनिर्वचनीयभेदवत्प्रतिवादिरीत्या पारमार्थिकभेदोऽप्यप्रसिद्ध सम्भवतीत्युभयथा अप्रसिद्ध्या विकल्पप्रभेदायोगसाधनं सुशकमिति ज्ञापनायोपलक्षणपरतया व्याख्यानमिदमिति द्रष्टव्यम्।

ननु कोटिज्ञान कोटिज्ञानत्वेनैव हेतु। लाघवात्। न तु संशयधर्मितावच्छेदकधर्मसदृशधर्मावच्छिन्नधर्म्यन्तरसम्बद्धकोटिज्ञानत्वेन। गौरवात्। तादृशधर्मावच्छिन्नधर्म्यन्तरसम्बद्धतया कोटिज्ञानेपि संशयादर्शनाच्च। तथा चानिर्वचनीयत्वपारमार्थिकत्वकोट्योरपि भेदरूपधर्मिणा सह धर्म्यन्तरसम्बन्धितया प्रसिद्ध्यभावेऽपि क्वचित्प्रसिद्धि-

(वि टि) मात्रेण संशयो युज्यत इत्यभिप्रेत्य शङ्कते ॥ **ननु नायमस्ति नियम इति** ॥ **आरोप्यमाणकोटिसम्बन्धितयेति** ॥ आरोप्यमाणकोटिसदृशधर्मसहचारितयेत्यर्थ । उक्तरीत्या कोटिज्ञानमात्रं संशयहेतुरङ्गीक्रियत एव । तथापि प्रकृतसंशयायोगतादवस्थ्यमिति परिहरति ॥ **सत्यमिति** ॥ मूलोक्तमेवेद दूषणमित्याह ॥ **एतदप्युक्तमिति** ॥ अनिर्वचनीयत्वकोटिप्रसिद्धि॰ पमासग्री बाधप्रयुक्ततत्कोटिसंशयायोगरूपदूषणमित्यर्थ । **ननु शशविषाण गोविषाण वोच्यते** इत्येतद्दृष्टान्तवचनस्य **सर्वत्राप्रसिद्धत्वादेवेत्य**व्यवहितहेतुवाक्येनान्वयायोगेन वैयर्थ्यमित्याशङ्क्याह ॥ **अत्रेति** ॥ प्रकृतप्रश्नायोग इत्यर्थ । **शशविषाणं गोविषाण वोच्यते** इत्यस्य प्रकृतप्रश्नायोगरूपार्थे दृष्टान्तत्वघटनाय तत्प्रतिपादकं वाक्यमध्याहारपूर्वकं व्याचष्टे ॥ **यथा केनापीति** ॥ दृष्टान्तप्रश्नायोगे हेतुमाह ॥ **शशविषाणस्यैवेति** ॥ **तत्सम्बन्धितयेति** ॥ शशविषाणसम्बन्धितयेत्यर्थ । कोटिसहचरिततया अनुभूतस्यैव साधारणधर्मतया कोटयनुस्मृतिहेतुत्वादिति भाव ॥ **एवंविधेति** ॥ 'शशविषाणं गोविषाण वोच्यते' इत्येवमाकारकसंशयस्येत्यर्थ ।

(रा टि) यथाश्रुते योजनान्तर वक्तुमाह ॥ **एवकार इत्यादि** ॥ तथा च लब्धमर्थमनुवदन्नेव **शङ्कते** ॥ **नन्विति** ॥ अयमित्युक्त व्यनक्ति ॥ **यदित्यादि** ॥ सन्देहविषयो भेद । तज्जातीयो भेदान्तरम् । आरोप्यमाणकोटिरनिर्वचनीयत्वादि । तत्सम्बन्धितयाऽनिर्वचनीयो भेद पारमार्थिको भेद इति प्रतिपत्तव्यमिति यत् अय नियमो नास्ति । किं तु अनिर्वचनीयत्वपारमार्थिकत्वप्रतीतिमात्रेण भेदे तदुभयकोटिकस देहो युज्यते । न तु भेदसम्बन्धितयान्यत्र प्रतिपत्तव्यमिति शङ्कार्थ ॥ **अत्रेति** ॥ प्रश्नो न युज्यत इत्यत्रेत्यर्थ ।

(वे टि) ननु भेदेऽनिर्वचनीयत्वादिप्रभेदाभावोपपादनायानिर्वचनीयवस्तुमात्रस्याप्रसिद्धत्वकथनमसङ्गतमित्यत आह ॥ **अनिर्वचनीयस्य भेदस्येति शेष इति** ॥ ननु पारमार्थिकस्यानिर्वचनीयस्य च भेदस्याप्रसिद्धत्वेन भेदे पारमार्थिकत्वादिप्रभेदायोगात्सन्देहविषयभेदजातीयाप्रसिद्धौ तस्याऽरोप्यमाणानिर्वचनीयत्वादिकोटयधिकरणतया अनुभवाभावे कोटिस्मरणाभावेन संशयासम्भवेऽपि प्रकारान्तरेण संशयो युज्यत एव । इन्द्रियाणि भौतिकान्युताभौतिकानीतिसंशयवत्कोटिद्वयप्रतिपत्तिमात्रेण संशयोपपत्ते । न चैव साधारणधर्मासम्भव । इन्द्रियत्वस्य साधारणधर्मत्वाभावेऽपि भौतिकत्वेनाभौतिकत्वेन वा प्रतिपन्नत्वस्य साधारणधर्मत्ववदत्रापि तादृशस्य फलबलेन कल्पनादित्यभिप्रेत्य **शङ्कते** ॥ **ननु नायमिति** ॥ यद्वा नन्वेव भेदेऽनिर्वचनीयपारमार्थिकत्वप्रभेदाभावोपपादनेन विमत सन्देहो न युज्यते सन्देहविषयजातीयाधिकरणतया अनुपलभ्यमानारोप्यमाणकोटित्वात् शशविषाण नरविषाण वेति कोटिद्वयावलम्बिसंशयवदित्यनुमानमभिप्रेतम्। तदनुपपन्नम् । व्यतिरेकव्याप्तौ व्यभिचारात् । इन्द्रियाणि भौतिकान्यभौतिकानि वेति सन्देहस्याऽरोप्यमाणकोटिप्रतिपत्तिमात्रेणोपपत्तौ सन्देहविषयजातीयाधिकरणतया तज्ज्ञानानपेक्षणादित्यभिप्रेत्य शङ्कते ॥ **ननु नायमिति** ॥ **प्रतिपत्तव्यमिति यत् अयमि**त्यन्वय ॥ **सन्देहविषयेति** ॥ सन्देहविशेष्येत्यर्थ । **कोटिसम्बन्धितया** कोटयधिकरणतयेत्यर्थ । **नियमो नास्ती**त्युक्तया स्थाणुपुरुषसन्देहविशेष्यजातीयस्थाण्वादेरारोप्यमाणस्थाणुत्वादिकोटयधिकरणतया प्रतिपत्तव्यतामभ्युपैति ॥ **आरोप्यमाणानिर्वचनीयस्येति** ॥ तथा च स्यादेवेन्द्रियेषु भौतिकत्वाभौतिकत्वसन्देह । भौतिकत्वाभौतिकत्वकोटिप्रतिपत्ते सद्भावात् । प्रकृत संशयो न

(वे टि) युज्यते। ब्रह्मण पारमार्थिकत्वेन पारमार्थिकत्वरूपकोटिप्रतिपत्तिसम्भवेपि अनिर्वचनीयत्वकोटिप्रतिपत्तर-भावादित्यर्थ ॥ **एतदप्युक्तमिति** ॥ अस्मिन्पक्षे भेदस्येति शेष उपलक्षणत्व च नास्तीति ज्ञातव्यम्। अनिर्वचनी-यस्य वस्तुन इत्यर्थ । अप्यर्थकस्यैवशब्दस्य सर्वत्रेत्यनेन सम्बन्ध । अत एव कुत्रापीत्युक्तमिति ज्ञातव्यं॥ **अत्र दृष्टान्तमाहेति** ॥ पूर्वयोजनाया नाय दृष्टान्त । उभयोरप्यनिर्वचनीयपारमार्थिकभेदयोरप्रसिद्धेरुपपादितत्वात्। तत्र च शशविषाण नरविषाणं वोच्यत इतिवदिति निदर्शनीयमिति भाव ।

(द्वै द्यु) कस्यचिदनिर्वचनीयस्य सर्वत्राप्रसिद्धत्वे भेदे अनिर्वचनीयत्वरूपप्रभेदसत्त्वे बाधकाभाव । अनिर्वचनीयसामान्यस्याप्यप्रसिद्ध्युक्तौ इदानीमाधिक्यम्। भेदमात्रे अनिर्वचनीयत्वप्रभेदाभावस्य वक्तव्यत्वादित्यतो विशेष्यवाचक पद पूरयति ॥ **भेदस्येति शेष इति** ॥ पारमार्थिकभेदस्य परमतेऽप्रसिद्धेरपि विकल्पायुक्तताया बीजतया वक्ष्यमाणतया एवकार स्वस्थाने स्थितोऽन्ययोगव्यवच्छेदकश्चेद्धावितार्थकस्स्यादतो भिन्नक्रमेण योजयति ॥ **एवकार इति** ॥ अनिर्वचनीयस्यैव भेदस्येत्यनेन सर्वत्रेत्यनेन सूचितार्थान्तरस्यानुक्त्या न्यूनतापरिहारायाह । **उपलक्षणं चैतदिति**। शृङ्गग्राहकतया एकस्य प्रदर्शकमित्यर्थ । तथा चार्थान्तरे तात्पर्यसत्त्वेपि एतदुक्त्या तस्यापि शिष्यैर्ज्ञातु शक्यतया तस्यानुक्तिर्न न्यूनतापादिका । स्वोक्तिं विनाऽज्ञायमानावश्यवक्तव्यार्थानुक्तेरेव न्यूनतापदार्थत्वादिति भाव ॥ **पारमार्थिकोपीति। परस्येति** ॥ यद्यपि पारमार्थिकत्वे भेदत्वसामानाधिकरण्य-ज्ञान तत्कोटिस्मारक न भ्रमरूपमिति भ्रममूलकत्वरूपायुक्तत्वस्य सशये साधने नेदमुपयुज्यते तथापि वक्ष्यमा-णमयुक्तत्व न भ्रममात्रमूलकत्वरूपम्। किं तु भ्रमस्वमतापरिज्ञानस्फुटप्रतिपत्तिकव्यावर्तकधर्मज्ञानाभावाद्यन्यतम-मूलकत्वमेव। तत्र स्वमतापरिज्ञानादिमूलकत्वज्ञापकतयेदमुपयुज्यत एवेति द्रष्टव्यम्। प्रथमयोजनालब्धार्थमात्रे मूलस्य तात्पर्ये यथायोजनमेव वाक्यं प्रयोज्यम्। 'स्वायत्ते शब्दप्रयोगे' इति न्यायात्। अत उक्तविन्यासे नौचिती स्यादिति शङ्का स्यात्तत्परिहाराय न केवलमत्रैव तात्पर्यं किं तु शङ्कान्तरपरिहारकार्थान्तरेपि। तत्र च यथाप्रयुक्तमेवो-पयुज्यत इत्याशयेन तदवतारिकामाशङ्का दर्शयति ॥ **नन्विति** ॥ **सजातीयमिति** ॥ सन्देहविशेष्यतावच्छेद-कघटकधर्मवत्त्वेन सजातीयमित्यर्थ. । प्रकृते अय भेद पारमार्थिको न वेति सशये इदन्त्वविशिष्टभेदत्वरूप प्रकृतसशयविशेष्यतावच्छेदकघटकभेदत्वस्य साधारणधर्मताखण्डनार्थं सिद्धान्तिन. प्रवृत्ततया तदुपयुक्तशङ्का-सङ्गति ॥ **आरोप्यमाणकोटिप्रतिपत्तिमात्रेणेति** ॥ वस्तुत्वादिसाधारणधर्मान्तरेण विप्रतिपत्त्या चेत्यर्थ । तथा च वस्तुत्वादिसाधारणधर्मेण विप्रतिपत्त्या वा प्रकृतसन्देहो भ्रान्तिं विना भवतीति भाव. ॥ **नायं सन्देह इति** ॥ ऊर्ध्वत्वादिसाधारणधर्माधीनस्थाणुत्वादिसशयात् विप्रतिपत्त्यधीनात् इन्द्रियाणि भौतिकानि न वेति सशया-च्चास्य वैलक्षण्य सूचितम्। तत्र हेतुमाह॥ **आरोप्यमाणेति**॥ तद्धर्मारोपस्य तादात्म्येन तदवच्छिन्नारोपरूपत्वनै यत्यमेव। लोहित स्फटिकमित्यादौ स्फटिके जपात्वावच्छिन्नभेदग्रहेऽपि लौहित्यावच्छिन्नस्य तादात्म्येनारोपो वर्तत एव। लोहित स्फटिकमिति सामानाधिकरण्यबोधकशब्दप्रयोग इत्याशयेनानिर्वचनीयत्वस्य [1]प्रस्तुतत्वे-ऽप्यनिर्वचनीयत्वेत्यभिहितम्। भावद्वयकोटिकसशयाङ्गीकारपक्षे पाषाणे स्थाणुत्वपुरुषत्वसशये कोटिद्वयस्याप्या

[1] प्रस्तुतत्वेऽप्यनिर्वचनीयस्येत्यभिहित इति पाठेन भाव्यमिति भाति।

(गु टि) रोपितत्वम्। न तथा प्रकृते। [1]किं त्वनिर्वचनीयस्यैव। पारमार्थिकत्व तु भेदे वर्तत एवातस्तत्कोटावप्रसि-
द्धिर्न वक्तव्येत्याशयेनानिर्वचनीये आरोप्यमाणत्वमुक्तम्। आरोपविषयमदर्शयेत्यर्थ ॥ कुत्रापीति ॥ तथा चैवका-
रोऽप्यर्थक सन् सर्वत्रेत्यनेन सम्बद्ध्यत इत्युक्त भवति ॥ अप्रतीतत्वादिति ॥ सत्त्वेनानाहार्यप्रतीत्यविषयत्वादि-
त्यर्थ ॥ अत्रेति ॥ अत्र वक्ष्यमाणानुमान इति विशेष्यतावच्छेदकघटकधर्मस्य साधारण्याभावेन तदतिरिक्तस्य
च तथात्वाभावेन सर्वथा कोटचप्रतीतिरित्युक्तार्थ इति वार्थ ॥ विषाणत्वस्येति ॥ उपलक्षणमेतत्। वस्तुत्वादि-
धर्मान्तरस्येत्यपि ग्राह्यम्।

### पूर्वोक्तप्रश्नसशयायोगे अनुमानप्रमाणकथनम्

(टी) इदमुक्त भवति। विमतः प्रश्नो न युज्यते। असन्दिग्धविषयत्वात्। शशविषाण गोविषाण
वोच्यत इति प्रश्नवत्। विमतः संशयो न युज्यते। अनुपलब्धारोप्यमाणकोटित्वात्। उक्तसशयवदिति।

### पूर्वोक्तानुमाने साध्यपरिष्कार

ननु प्रश्नः सशयो वा न युज्यत इति कोऽर्थः। यदि नोत्पन्न इति तदा प्रत्यक्षबाधः। अथोत्प
न्नोऽपि कारणशून्य इति। तदानुमानबाधः। कार्यत्वादेव कारणानुमानात्। अथातत्कारणोत्पन्न इति।
तदा व्याघातः। तदुत्पादकस्यैव तत्कारणत्वात्। मैवं। शशविषाणादिप्रश्नाद्यनुपपत्तेरप्येव प्रत्याख्यान-
प्रसङ्गात्। कारणादिविमर्शवतो न शशविषाणादिप्रश्नाद्युत्पत्तुमर्हतीति तत्रार्थ इति चेत्। तर्ह्यत्रापि
कारणविपर्यासादुत्पद्यतां नाम। न पुनः प्रेक्षावतामुत्पद्यत इति प्रतिज्ञार्थोपपत्तेः। ज्ञानजन्येषु कार्येषु
कारणविपर्यासादपि भयादाविव जन्मोपपत्तेरिति।

### अनिर्वचनीये प्रमाणाभावोक्तिः

**कथमनिर्वचनीयस्य सर्वत्राप्रसिद्धत्वमित्यत आह**

## न चानिर्वचनीये किञ्चिन्मानं।

(वि टि) एतावता प्रबन्धेन प्रकृतप्रश्नतन्मूलसशययोरयोगे किं प्रमाणमुपन्यस्तमिति शिष्यजिज्ञासा-
यामाचार्यविवक्षागोचर तद्दर्शयितुमाह ॥ इदमुक्त भवतीति ॥ विमत इति ॥ युक्तत्वायुक्तत्वकोटिकविमति-
विषयीभूत इत्यर्थ। न चात्रानुमानद्वयेपि पक्षीकृतप्रश्नसशययोरसिद्धावाश्रयासिद्धि। सिद्धौ वा अयुक्तत्वव्या-
घात इति वाच्यम्। वन्ध्यासुतो न वक्ता चेतनत्वादित्यादाविव निषेधसाधने आश्रयासिद्धेरदोषत्वादिति भाव।
'भुजोऽनवने' इत्यादिज्ञापकाद्धतूनामनेकार्थत्वनिश्चयात्प्रकृते सम्भावित धात्वर्थमाश्रित्य प्रकृतप्रतिज्ञाहेतू दूषयितु-
काम पर आक्षिपति ॥ ननु प्रश्नः संशयो वेति ॥ कारणादिविमर्शवत इति ॥ इदमेव तस्य कारणं नेदमिति
तत्कारणाकारणे व्यावर्तकधर्मवत्तया अन्योन्यभिन्ने इति निश्चयवंत इत्यर्थ ॥ तत्रार्थ इति ॥ शशविषाण गोविषाणं

---

[1] किं त्वनिर्वचनीयत्वस्यैव इति पाठेन भाव्यमिति भाति।

(**वि टि**) वोच्यत इति प्रश्न संशयो वा न युज्यत इत्यत्रेत्यर्थ ॥ **कारणविपर्यासादिति** ॥ अकारणे कारणत्वभ्रमादित्यर्थ ॥ **प्रेक्षावतामिति** ॥ तत्तदुपाय एव तत्तदुपायतावच्छेदकरूपवत्तया निश्चयवतामित्यर्थ ॥ **प्रतिज्ञातार्थोपपत्तेरिति** ॥ विमत प्रश्न संशयो वा न युज्यत इति प्रतिज्ञार्थोपपत्तेरित्यर्थ । नन्वतत्कारणे तत्कारणत्वविभ्रममात्रान्न तत्कार्योपपत्ति । अन्यथा गुञ्जापुञ्जादौ वह्नित्वादिभ्रमात्तदुपादाने प्रवृत्तस्य दाहादिकार्यप्रसङ्ग इत्यत आह ॥ **ज्ञानकार्येष्विति** ॥ दाहादिलक्षणकार्येषु तथात्वादर्शनेपि ज्ञानरूपासाधारणकारणमात्रजन्येषु प्रश्नसंशयलक्षणकार्येषु नोत्पत्त्यनुपपत्ति । रज्ज्वादौ सर्पज्ञानाद्भयकम्पादिकार्योत्पत्तिदर्शनात् । अन्यथा तत्रापि तन्न स्यादिति भाव । ननु विमत प्रश्न संशयो वा न युज्यत इति प्रतिज्ञातार्थे हेतुदृष्टान्तयोरुक्तत्वेनानुमानशरीरनिष्पत्ते **र्न चानिर्वचनीये किञ्चिन्मान**मित्यग्रिमवाक्यवैयर्थ्यमित्याशङ्क्य तस्यानुपलब्धारोप्यकोटित्वरूपहेत्वसिद्धयुद्धारार्थत्वेन सार्थक्यं वक्तु तन्निवर्त्याशङ्का दर्शयति ॥ **कथमिति** ॥

(**रा टि.**) दृष्टान्तोक्त्या सूचितमर्थमाह ॥ **इदमुक्त भवतीति** ॥ हेतोरसिद्धिं निराह ॥ **विमतस्संशय इति** ॥ परमुखेन समाधिं वाचयित्वा सम प्रकृत इत्याह ॥ **कारणादीति** ॥ आदिपदेन बाधकग्रह. । **प्रेक्षावतां** कारणादिविमर्शवता ॥ **ज्ञानेति** ॥ ज्ञानजन्येषु कारणविपर्यासात्कारणभ्रमाज्ज मोपपत्ति । यथा सर्पभ्रमाद्भयकम्पादि । तथा कारणभ्रमात्संशयादिरस्त्वित्यर्थ ।

(**वे टि**) न च भेदे विकल्पो युज्यत इत्यादिवाक्यत्रयस्य लब्धार्थमाह ॥ **इदमुक्त भवतीति** ॥ स्वरूपासिद्धिपरिहारायाह ॥ **विमतः संशयो न युज्यत इति** ॥ **कारणविपर्यासादिति** ॥ कारणीभूतो विपर्यास कारणविपर्यास । विपर्यासरूपात्कारणादित्यर्थ । यथा शशविषाणमस्तीति भ्रमवत. विषाणमस्तीत्युक्ते किं शशविषाण गोविषाण वेति संशयस्तथा अनिर्वचनीयभ्रमवतस्तद्रूपात्कारणादुत्पद्यता नामेत्यर्थ । ननु ज्ञानजन्ये कार्ये प्रमाया एव जनकत्वात्कथमारोप्यमाणकोटिभ्रमात्संशयोत्पत्तिरित्यत आह ॥ **ज्ञानजन्येष्विति** ॥ न ज्ञानजन्यकार्येषु प्रमाया एव जनकत्वमिति नियम. । तथात्वे सर्पज्ञानजन्यभयादे. सर्पप्रमामात्रसाध्यत्वापत्त्या तद्भ्रमात्तदुत्पत्तिरनुभवसिद्धा न स्यादिति भाव· ।

**केचित्तु** ॥ **कारणविपर्यासादिति** ॥ अकारणे कारणत्वभ्रमादित्यर्थ. ॥ **प्रेक्षावतामिति** ॥ तत्तदुपाय एव तत्तदुपायतावच्छेदकरूपवत्तया निश्चयवतामित्यर्थ । नन्वतत्कारणे तत्कारणत्वभ्रमान्न तत्कार्योत्पत्ति. । अन्यथा गुञ्जापुञ्जादौ वह्नित्वादिभ्रमात्तदुपादाने प्रवृत्तस्य दाहादिप्रसङ्ग इत्यत आह ॥ **ज्ञानजन्येष्विति** ॥ दाहादिलक्षणकार्येषु तथात्वादर्शनेपि ज्ञानरूपासाधारणकारणमात्रजन्येषु प्रश्नसंशयलक्षणकार्येषु नोत्पत्त्यनुपपत्ति । रज्ज्वादौ सर्पज्ञानाद्भयकम्पादिकार्योत्पत्तिदर्शनात् । अन्यथा तत्रापि तन्न स्यादित्याहु ।

तच्चिन्त्यम् । भयादौ न स्वरूपत सर्पस्य कारणत्व व्यभिचारात् । किं तु सर्पज्ञानस्यैव । एव च कारणविपर्यासात्कार्योदय इत्यत्र रज्ज्वादौ सर्पभ्रमस्योदाहरणत्वेनोपादानमयुक्तम् । सर्पस्याकारणत्वेनास्य भ्रमस्याकारणे कारणत्वभ्रमत्वाभावादिति ।

(द्वै. द्यु) अनुमानप्रकारमाह ॥ **इदमुक्तमिति** ॥ **असन्दिग्धेति** ॥ प्रेक्षावत्सम्बन्धिसन्देहाविषयविषयकत्वादित्यर्थ । तादृशसन्देहानधीनत्वादिति पर्यवसित ॥ **अनुपलब्धेति** ॥ प्रेक्षावन्निष्ठसत्त्वप्रकारकानाहार्यप्रतीतिविषयत्वाभाववदारोप्यमाणकोटिकत्वात् स्वीयारोप्यमाणकोटिप्रतियोगिकसादृश्यवन्निष्ठविशेष्यताकानाहार्यसत्त्वप्रकारकप्रतीत्यभाववत्प्रेक्षावत्सामान्यकत्वादिति यावत् । तेन सर्वत्र सशये आरोप्यमाणकोटेरसत्त्वेन तत्र प्रेक्षावता सत्त्वप्रकारकप्रतीत्यभावात्सर्वसशयेषु व्यभिचारशङ्कानवकाश । प्रथमानुमानहेतौ सन्देहे प्रेक्षावन्निष्ठत्वनिवेशान्नासिद्धि । द्वितीयानुमानेऽप्यप्रेक्षावन्निष्ठा प्रेक्षावन्निष्ठामप्यसत्त्वेन प्रतीति तन्निष्ठामेवाहार्यसत्त्वप्रतीतिमादाय नासिद्धि । प्रेक्षावत्सामान्यनिवेशाद्यत्किञ्चित्प्रेक्षावदवृत्तिस्वारोप्यमाणसजातीयविषयकोक्तप्रतीतिके स्थाणुपुरुषादिसशये न व्यभिचार ॥ **एव प्रत्याख्यानेति** ॥ तत्रायुक्तताया सर्वैरङ्गीकृतत्वान्नेष्टापत्तिस्तत्र युक्तेति भाव ॥ **कारणादीति** ॥ **कारणादौ** प्रश्न स देहं प्रति वा साक्षात्परम्परया वा कारणीभूते साधारणधर्मज्ञाने तत्प्रयोजकीभूतकोट्यनुभवादौ । **विमर्शः** प्रामाण्याप्रामाण्यान्यतरनिश्चायकहेत्वाद्यनुसन्धानम् । तद्वतामित्यर्थ ॥ **तर्हीति** ॥ **कारणविपर्यासात्** कारणीभूतात् भ्रमादित्यर्थ । यद्वा **कारणे** साधारणधर्मज्ञाने कोट्यनुभवादौ । **विपर्यासा**त्प्रामाण्यभ्रमादित्यर्थ । निश्चितप्रामाण्यकसाधारणधर्मादिज्ञानस्यैवानाहार्यसशयकारणत्वात् साधारणधर्मदर्शनादौ प्रामाण्यनिश्चयस्यापि सशयप्रयोजकत्वमिति भाव । ननु कथ भ्रमात्कार्याङ्गीकार । तथात्वे रजतभ्रमोत्तरप्रवृत्त्यादिना रजतनिष्पत्तिपूर्वक कटकादिसिद्धि स्यादित्यत आह ॥ **ज्ञानजन्येष्विति** ॥ प्रमात्वघटितरूपानवच्छिन्नज्ञाननिष्ठकारणताकेष्वित्यर्थ ॥ **कारणविपर्यासादिति** ॥ पूर्ववदर्थद्वयमपि द्रष्टव्यम् ।

ननु प्रेक्षावत्त्व किं भ्रमरहितत्वमुत प्रमावत्त्वम् । नाद्य । भगवदतिरिक्ताना परशुक्लातिरिक्ताना च सर्वेषामेव भ्रमवत्त्वनियमेन तादृशप्रेक्षावदप्रसिद्धे । न द्वितीय । कचित्प्रमावत्त्वस्य सर्वेषा सत्त्वेन शशविषाणादिसशयवतामपि प्रेक्षावत्त्वापत्त्या दृष्टान्ते साध्यवैकल्यस्य बाधस्य चापत्तेरिति चेन्न । स्वनिष्ठसशयप्रयोजकभ्रमरहिताना प्रेक्षावत्पदेन विवक्षितत्वात् । तथा चानाहार्यभ्रमाघटितसामग्र्यनधीनत्व तादृशभ्रमघटितसामग्रीप्रयोज्यत्वरूप वा अयुक्तत्व सशये प्रश्ने च साध्यतया पर्यवसन्नम् । तादृशसामग्र्यनधीनसन्देहप्रकारीभूतस्वकोटित्व अनाहार्यभ्रमघटितसामग्र्यधीनसन्देहविषयीभूतस्वकोटिकत्वं तादृशसन्देहाधीनत्व वा प्रथमानुमाने हेतु । अन्यतरनिर्णयवत्पुरुषकर्तृके परपरीक्षार्थप्रश्ने वाक्यार्थज्ञानमुद्रया आहार्यसशयस्यावश्यकतया तदधीनप्रश्ने सन्देहस्य किञ्चिदशे भ्रमत्वनैयत्येन सन्देहरूपभ्रमघटितसामग्र्यधीनतत्प्रश्नस्य लोके नायुक्तत्वव्यवहार । तादृशायुक्तत्वस्य वादिप्रश्नस्य साधने वादिनस्तादृशभ्रमस्योक्तपुरुष इव भ्रान्तत्वव्यवहारानिर्वाहकतया वादिनिग्रहासम्पादकत्वेन उक्तानुमानस्याकिञ्चित्करत्वापत्तेरत साध्यकोटौ भ्रमेऽनाहार्यत्वनिवेश । इत्थं च हेतुकोटावपि भ्रमे अनाहार्यत्वानिवेशे उक्तपरपरीक्षार्थप्रश्नादौ व्यभिचार स्यादतस्तन्निवेश । [1]न च वादिनोऽनिर्वचनीयत्वादिसन्देहस्याऽहार्यत्वाभ्युपगमादिति वाच्यम् । प्रकृतप्रश्नसंशयस्यानाहार्यत्वपक्ष एवानिर्वचनीयनिराकरणोपोद्घातविधयोक्तग्रन्थस्य प्रवृत्तत्वात् । एतच्चाग्रे व्यक्तीभविष्यति । द्वितीयानुमानेऽप्युक्तमेव साध्यम् । हेतुस्तु सत्त्वेन प्रमीयमाण-

---

[1] न चानाहार्यत्वनिवेशे वादिरीत्या बाधासिद्धी अनिर्वचनीयत्वादि इति पाठेन भाव्यमिति भाति

(द्वै. द्यु) त्वाभाववत्त्वकोटिनिष्ठसादृश्यप्रतियोगिकत्वम् । अनिर्वचनीयत्वरूपैककोटिमादायैव पक्षे हेतुसत्त्वमुपपादनीयम् । न तु पारमार्थिकत्वरूपकोटिमित्याशयेनारोप्यमाणेत्यभिहितम् । न तु तदपि निविष्टं । प्रयोजनाभावात् । सत्त्वेनानिर्वचनीयप्रतीतेरनाहार्याया परम्भव सत्त्वात् तादृशप्रतीतिविषयत्वाभावघटितहेतोरसिद्धिपरिहाराय **प्रमाविषयत्वाभाव**निवेश । न च **प्रतीत्यभाव एव साधितो भवती**त्युत्तरग्रन्थविरोध । तस्य हेतुशरीराघटकत्वे तत्साधनस्याकिञ्चित्करत्वापत्तेरिति वाच्यम् । तस्य प्रतीतिसामान्याभावघटितपूर्वोक्तयथाश्रुतहेत्वभिप्रायेण प्रवृत्तत्वात् । तत्र प्रेक्षावत्पदेन स्वगृतिभ्रमाधिकरणक्षणानवच्छिन्नस्यैव हेतुशरीरनिविष्टतया यथाश्रुतहेतोरपि दोषाभावात् । उक्तनिष्कृष्टहेत्वादरे यथा न विरोधस्तथाऽनुपदमेवोत्तरग्रन्थो व्याख्यास्यते ।

ननु सन्देहस्यायुक्तत्वे **अनिर्वचनीयस्य सर्वत्राप्रसिद्धत्वादेवे**ति मूले भेदस्येति शेषपूरणेन भेदत्वस्य साधारणधर्मत्वखण्डनपरतया व्याख्याय प्रकारान्तरेण तत्प्रतीत्या संशयो भवतीत्याशङ्क्य तत्प्रतीतिसामान्यनिराकरणरूपतया तदेव मूल योजितम् । इदानों सशयस्यायुक्तत्वे अनुपलब्धार्थो प्रमाणकोटिकत्वादिति द्वितीययोजनालब्धार्थो हेतुत्वेन वर्णित । इत्थं च प्रथमयोजनालब्धार्थो यदि संशयायुक्तत्वे हेतुस्तस्यात्राकथनान्न्यूनता । यद्य हेतुस्तदा [1]प्रथमव्याख्यानमयुक्तमिति चेन्न । प्रथमत एव भेदत्वरूपसाधारणधर्मज्ञानाधीनकोटिस्मृत्यादिमूलकत्व वा प्रकारान्तराधीनकोटिस्मृतिमूलकत्व वेति विकल्पौ हृदि निधाय तत्राद्यपक्षनिराकरणपरतया **न च भेद** इति मूलस्य [2]तृतीययोजना कृत्वा तद्धेतुतयाऽ**निर्वचनीयस्ये**ति मूल शेषपूरणेन व्याख्याय प्रथमकल्पोक्तदोषपरिहारपूर्वक द्वितीयकल्पमुत्थाप्य तदाशङ्कापरिहारकत्वेन तदेव मूल यथाश्रुतमेव व्याख्यातम् । तत्र प्रथमव्याख्याया अकरणे भेदप्रयोगोत्तर जायमानसशयस्य पुर स्फूर्तिकभेदत्वरूपसाधारणधर्मज्ञानजन्यत्वकल्पस्य प्रथमत एव बुद्धिस्थस्य निराकरणमकृत्वा कथञ्चित्तदुपस्थित्यादिना सशयोपपत्तिनिराकरणे अवपराभावेनानाकाङ्क्षिताभिधानत्वापत्त्या तन्निराकरणाय प्रथमव्याख्यानमवश्यकमेव । एव च भेदत्वरूपसाधारणधर्मज्ञानजन्य उक्तसशयो [3]भ्रममूलस्वमता परिज्ञानान्यतरमूलक । भेदत्वस्य कोटिद्वयसाधारणत्वाभावात । पारमार्थिकत्वसमानाधिकरणत्वेन स्वमतासिद्धत्वाच्चेति अनुमान प्रथमव्याख्याने लब्ध । तच्च स्फुटमेवेति तदा न प्रदर्शितम् । द्वितीयव्याख्यालब्धानुमानमनिर्वचनीयत्वकोटिकसंशयसामान्यस्यायुक्तनासाधकमिति तस्यैव मुख्यत्वाच्छ**शविषाण गोविषाणं** वेति मूलेन तत्रैव दृष्टान्त आचार्यै. प्रदर्शितोऽतस्तद्व्याख्यानटीकाया तदेवानुमान प्रदर्शितमतो न पूर्वोत्तरग्रन्थसन्दर्भाशुद्धिरिति धीरा विभावयन्तु ।

(गु टि) ।। **कारणादिविमर्शवत इति** ।। प्रेक्षावत इत्यर्थ । अय भाव । विकल्प प्रश्नो हि सन्देह मूलक इत्युपपादितमधस्तात् । सन्देहश्च समानधर्मदर्शनादिना निर्णायकाभावसहकृतेन भवतीति तावदविवादम् । ततश्च समानधर्माद्यभावे निर्णायकसद्भावे वा य सन्दिग्धे, विकल्पाश्च पृच्छति स नूनमविद्यमानमेव समानधर्मादिक प्रतिपन्नो न प्रतिपन्नश्च निर्णायकसद्भावमित्यनुमीयत इति । न हि कार्यमकारण भवितुमर्हति । ननु समानधर्मादि-

[1] टिप्पणी-निष्प्रयोजनत्वादिति भाव । [2] प्रथमयोजनां इति पाठेन भाव्यमिति भाति.

[3] भ्रमस्वमतापरिज्ञानान्यतरमूलक इति पाठेन भाव्यमिति भाति

(गु टि) कार्यस्य संशयस्य कथं तदभावेपि भ्रमरूपज्ञानमात्रेणोत्पादः स्यादिति चेन्न। सत्यपि समानधर्मादौ तदज्ञानात्संशयानुदयादसत्यपि तस्मिंस्तज्ज्ञानमात्रेण संशयोदय इत्यन्वयव्यतिरेकाभ्यां समानधर्मज्ञानस्यैव तत्कारणत्वावधारणेन समानधर्मादेः संशयकारणत्वाभावः तस्य च भ्रमप्रमासाधारणत्वात् साधारणधर्मादिभ्रमयेव तद्भ्रमेणापि संशयोत्पादस्याविरुद्धत्वादित्याशयेनाऽऽह ॥ ज्ञानजन्येष्विति ॥ ज्ञानत्वावच्छिन्नकारणताकेष्वित्यर्थः। 'दृश्यते हि सर्पभ्रमादिना भयकम्पादिकार्योत्पादः' इति सुधाया अप्ययमेवाभिप्रायः।

यत्तु कारणविपर्यासादित्यस्याकारणे कारणत्वभ्रमादित्यर्थमभिधाय 'ननु ज्ञानजन्यकार्ये प्रमाण एव जनकत्वात्कथमारोप्यमाणकोटिभ्रमात्संशयोत्पत्तिः' इत्याशङ्कापरिहारकतया ज्ञानजन्येष्विति वाक्यमवतार्य 'न ज्ञानजन्ये कार्ये प्रमाया एव जनकत्वमिति नियमः। तथात्वे सर्पज्ञानजन्यभयादेः प्रमासाध्यत्वापत्त्या तद्भ्रमात्तदुत्पत्तिरनुभवसिद्धा न स्यात्' इति तात्पर्यमाचक्षते। तत्तु स्वपरदर्शनापरिशीलनमूलकमेवेति स्पष्टमेवेत्ययुक्तत्वादुपेक्ष्यम्।

(टी) चशब्दो यस्मादित्यर्थे।

प्रमाणाभावे अनिर्वचनीयज्ञानसामान्याभावसमर्थनम्

**ननु प्रमितिः प्रमाणमपेक्षते न प्रसिद्धिमात्रम्। न च संशयस्य प्रमितिसापेक्षता। [1]प्रतीतिमात्रेणापि स्मरणोपपत्त्या संशयोपपत्तेः। यथा खलु विप्रलम्भकवाक्याच्छशविषाणसद्भावं मन्यमानस्य विषाणमित्युक्ते भवति सन्देहः। अतोनिर्वचनीयप्रसिद्ध्यभावोपपादनाय तत्कारणाभावे वक्तव्ये कथं प्रमितिकारणाभावाभिधानमिति। सत्यम्। प्रतीतिरेव सन्देहोपयोगिनीति वस्तुगतिः। तथापि प्रमाणविषयतयोपक्षिप्ते भेदेऽनिर्वचनीयो वेत्यादिसन्दिहानेन प्रतिवादिनाऽऽत्मनोऽनिर्वचनीयादिविषया प्रमितिरेव सन्देहकारणतया वक्तव्या। तत्प्रतीतेरप्रमात्वाङ्गीकारे स्वयमेव विलीनं संशयेन। अतः प्रमाणाभावेन प्रमाभावे साधितेऽप्रमायाश्च स्वयमेवानङ्गीकारे प्रतीत्यभाव एव साधितो भवतीति न कश्चिद्दोषः।**

(वि टि) नन्वनिर्वचनीयत्वस्य सर्वत्राप्रसिद्धत्वं कथमिति शङ्कायां मानाभावादिति वक्तव्ये **न चानिर्वचनीये किञ्चिन्मानमित्युक्तिर्न** घटत इत्याशङ्क्य तद्घटनाय चशब्दं हेत्वर्थत्वेन व्याचष्टे ॥ **चशब्द इति** ॥ ननु भेदः किमनिर्वचनीयः पारमार्थिको वेति संशयायोगे अनिर्वचनीयरूपकोटिप्रसिद्धेरभाव एव हेतुत्वेनोपपादनीयः। न तु तस्याः प्रमाणजन्यत्वाभावः। प्रमितेः प्रमाणसापेक्षत्वनियमेपि संशयस्याप्रमितिरूपस्य भ्रमप्रमासाधारणकोटिप्रतीतिमात्रसाध्यत्वात्। विप्रलम्भकवाक्याच्छशविषाणसद्भावं मन्यमानस्य विशेषादर्शिनो विषाणमस्तीतिवाक्यश्रवणसमनन्तरं तत्किं शशविषाणं गोविषाणं वेति संशयदर्शनादिति शङ्कते ॥ **ननु प्रमितिरिति** ॥ **प्रतीतिमात्रेणापीति** ॥ लाघवेन संशयस्य स्मृत्यन्यज्ञानमात्रेणापि संस्कारोद्बोधद्वारा कोटिस्मरणोपपत्तेरित्यर्थः। ॥ **तत्कारणेति** ॥ अनिर्वचनीयप्रसिद्धिकारणाभाव एवोपपादनीय इत्यर्थः। सर्वत्र भ्रमप्रमासाधारणकोटिप्रसि-

---

[1] कोटिप्रतीतितामात्रेणापि इति (गु टि) पाठः

(वि टि) द्धिमात्रेण संशय इत्यस्तु। तथापि प्रमारूपाया अनिर्वचनीयकोटिप्रसिद्धे 'भेद किमनिर्वचनीय' इत्यादिसन्दिहानेनाङ्गीकार्यत्वात्। अन्यथा तत्र भ्रमत्वनिश्चयस्य तदप्रामाणिकत्वनिश्चयपर्यवसन्नतया विमतो भिन्नो मुक्तत्वादिति प्रमाणविषयतयोपक्षिप्तभेदधर्मिकानिर्वचनीयत्वादिकोटिकसंशयस्यैवायोगात्प्रमारूपैव कोटिप्रसिद्धिर्वाच्या। सा च प्रमाणाभावेनासाधिनैवेति कोटिप्रतीतिमात्राभावान्नोक्तसंशयो युज्यत इत्यभिप्रेत्य परिहरति ॥ **सत्यमिति** ॥ **आत्मनः** स्वस्य।

(श टि) ॥ **उपक्षिप्त इति** ॥ प्रतिज्ञात इत्यर्थ ॥ **स्वयमेवेति** ॥ अन्यापेक्षा विनैव संशयेन विलीन विलय प्राप्त संशयो गत इति यावत्। कथमित्यत उपसंहारव्याजेन व्यनक्ति ॥ **अत इति** ॥ **प्रतीत्यभाव एवेति** ॥ अनिर्वचनीयस्येति योज्यम्।

(वे टि) ॥ **यस्मादित्यत्र इति** ॥ यस्मात्प्रमाणाभावस्तस्मान्नानिर्वचनीय प्रसिद्धमिति पूर्वेणान्वय। ननु न प्रमाणाभावेन प्रतीत्यभाव साधयितु शक्यते। प्रमाणाभावेपि प्रतीतिदर्शनेन व्यभिचारादित्यभिप्रेत्य शङ्कते ॥ **नन्विति** ॥ ननु प्रमाणभावेनानिर्वचनीयप्रमित्यभाव एव साध्यत इति नोक्तदोष इत्यत आह ॥ **न च संशयस्येति** ॥ संशयाभावोपपादनार्थं ह्यनिर्वचनीयप्रमित्यभाव साध्य। स चायुक्त। संशयस्य कोटिप्रतीतिमात्रसापेक्षत्वेन तत्प्रमितिसापेक्षत्वाभावात्। तथा चार्थान्तरमिति भाव। **प्रतीतिमात्रेण** कोटिप्रतीतिमात्रेणेत्यर्थं ॥ **स्मरणेति** ॥ कोटिस्मरणेत्यर्थं। मध्यस्थस्य यस्य कस्यचिदनिर्वचनीयादिविषयकज्ञानमात्रेण शशविषाणादिसंशयवत्संशयोपपत्तावपि प्रतिवादिनस्तावत्तज्ज्ञानस्य प्रमात्वनिश्चयो वक्तव्य इति भावेनोक्त ॥ **प्रतिवादिनाऽऽत्मनइति** ॥ **तत्प्रतीतेरिति** ॥ अप्रमात्वनिश्चयाङ्गीकार इत्यर्थ.। अनिर्वचनीयादिविषयकप्रतीतेरप्रमात्वनिश्चयाङ्गीकारेऽनिर्वचनीयरूपार्थाभावनिश्चयेन तस्य संशय एव न स्यात्। न हि शशविषाणमस्तीतिज्ञानं भ्रम इति निश्चयवतोपि विषाणमस्तीत्युक्ते भवति सन्देह इत्यर्थ।

((द्वै द्यु) चशब्दस्य हेत्वर्थकत्वे यस्मादनिर्वचनीये प्रमाण नास्ति तस्मात्सर्वत्रानिर्वचनीयस्याप्रतीतत्वमित्यर्थ स्यात्तत्राशङ्कते ॥ **नन्विति** ॥ न चाप्रसिद्धत्वादित्यस्याप्रमितत्वादित्यर्थ। तत्र चोक्तस्य हेतुत्व युक्तमेवेत्याशङ्क्य निषेधति ॥ **न चेति** ॥ **प्रतीतिमात्रेणेति** ॥ तथा चाप्रसिद्धत्वादित्यस्याप्रमितत्वादित्यर्थकरणे संशयनिराकरणतावच्छेदकावच्छिन्नाभावे वक्तव्ये प्रमितत्वावच्छिन्नाभावकथन व्यर्थं स्यात् इति भाव ॥ **अत इति** ॥ मौलप्रसिद्धिपदस्य ज्ञानसामान्यार्थकत्वस्य स्थितत्वादित्यर्थ ॥ **तत्कारणाभावे वक्तव्य इति** ॥ नन्वेतदयुक्तम्। न ह्यत्र प्रश्ने सन्देहे वाऽनुत्पन्नत्वरूपमयुक्तत्व साध्यते। येनेयं कारणाभावस्य वक्तव्यत्वशङ्का सङ्गच्छेत। नैतदस्ति। तत्र प्रत्यक्षबाधोक्तिपूर्वकमविमर्शभ्रमादिमूलकत्वरूपायुक्तत्वस्य साध्यताया अनुपदमेव स्वय वक्ष्यमाणत्वात्। तत्र च प्रमाविषयत्वाभाववत्सकोटिकत्वमेव हेतु। न तु ज्ञानसामान्याभावघटित। सर्वस्यापि सन्देहस्य पूर्वं स्वस्मिश्च कोट्योर्भानावश्यकत्वेन स्वपदेन संशयग्रहणे हेतोरसिद्ध्यापत्ते। इत्थ चाप्रसिद्धत्वादित्यस्याप्यप्रमितत्वादित्येवार्थ। तत्र प्रमितिसामान्याभावसाधनाय प्रमाणाभावाभिधान सङ्गतमेव। न चाप्रसिद्धत्वादित्यस्याज्ञात

(द्वै द्यु )त्वार्थकत्वाभिमानिन इयमाशङ्केति वाच्यम्। तथात्वे अग्रे अभिमानस्यैव निराकर्तव्यतया **तत्प्रतीत्यभाव एव साधितो भवतीति** तस्यैव माध्यस्त्वोक्तेरसङ्गत्यापत्ते। किं चोत्तरत्र **प्रमितिरेव सन्देहहेतुतया वक्तव्येत्य**स्या सङ्गति। प्रतीत्यभावस्यैव साध्यत्वे तत्कथनस्योपयोगाभावात्। न च तस्मिन् भ्रमाभावसाधने तदुपयुज्यत इति वाच्यम्। यत. प्रतिवादिन सन्देहानुपपत्त्या तत्र कोटिज्ञान भवतामप्यनुमानसिद्धम्। स्वज्ञाने भ्रमत्व तु तेन न स्वीकृतम्। न ह्येतावता तत्र भ्रमाभाव सिद्ध्यति येनेदमुपयुक्त स्यात्। एव **प्रतीत्यभाव एव साधितो भवतीत्ये**तद्बाधितार्थक च। कोटिभ्रमस्य भवद्भिरेव तत्रानुमानेन निश्चितत्वात्। तथा च सर्वोप्ययं पूर्वापरग्रन्थ परस्परविरुद्ध इति चेन्न। यत **पूर्वमनिर्वचनीयस्य सर्वत्राप्रसिद्धत्वादि**ति मूलस्य प्रथमव्याख्यया भेदत्वरूपसाधारणधर्मजन्यसंशयस्य साधारण्यांशे भ्रमात्मकज्ञानजन्यत्वेनायुक्तत्वे सिद्धान्तिनाऽभिहिते पूर्ववादिना स्वसशयस्य भेदत्वरूपसाधारणधर्मज्ञानं विनाप्युपपादयता प्रकारविशेषनिर्भर विहाय साधारणधर्मान्तरेण वान्येन वा संशये आवश्यकीभूतकोटिस्मृत्यादि- सत्त्वान्न मम सशयसामग्री भ्रमघटितेति निरूपणे कर्तव्ये कोटिप्रतिपत्ते प्रमात्व न निरूपणीयम्। सिद्धान्तिना कोटिज्ञानांशे भ्रमत्व स्वीकृत्य तन्मूलकत्वेनायुक्तताया पूर्वमनुक्तत्वात्। किं तु भेदत्वरूपसाधारणधर्मज्ञानाधीनत्वं त्याज्यम्। तन्मात्र एव भ्रमत्वस्य पूर्वमुक्तत्वात्। इत्थ च तच्छङ्कापरिहारके उक्तमूलस्य द्वितीयव्याख्यानेऽप्र- सिद्धत्वादित्यस्याप्रमितत्वादिति नार्थ कर्तव्य। कोटिप्रमिते पूर्वमनाशङ्कितत्वेन तन्निषेधासङ्गते। तस्य प्रमा- त्वाभावेऽपि भेदत्वरूपसाधारणधर्मांशे भ्रमाधीनत्वरूपपूर्वसाध्यस्य तत्कल्पपरित्यागपूर्वकमेतच्छङ्कप्रतिवादिसशये बाधेनासिद्धेश्च। अतोऽनुमानान्तराभिप्रायेण **सर्वत्र** प्रेक्षावत्सु **अप्रसिद्धे**रप्रतीतत्वादित्येवार्थ कर्तव्य। सर्वत्रेत्यस्य न सर्वस्मिन्नित्यर्थ। पृच्छकस्यैव प्रतीतत्वेन सामान्यत प्रतीतत्वनिषेधायोगात्। उक्तरीत्याऽर्थाङ्गीकारे तु पृच्छकस्य प्रेक्षाभावेनैव वाक्यस्याबाधितार्थत्वम्। इत्थ च विमतप्रश्न स्ववृत्तिप्रेक्षाधिकरणक्षणावच्छिन्नपुरुषाधिकरणकोत्पत्त्यभाव- वान् तादृशक्षणावच्छिन्नपुरुषवृत्तिसंशयाविषयीभूतकोटिकत्वात्। शशविषाणमित्यादिप्रश्नवत्। विमत. सशय तादृश- क्षणावच्छिन्नपुरुषाधिकरणकोत्पत्त्यभाववान् तदवच्छिन्नवृत्तिप्रतीतिविषयत्वाभाववत्स्वकोटिकत्वादित्यनुमानद्वयमेव मूलटीकयोरभिप्रेतम्। अत एव टीकाया **न पुनः प्रेक्षावतामुत्पद्यत इति प्रतिज्ञार्थोपपत्ते**रित्यनेनोक्तस्य साध्यत्व- मादृतम्। प्रेक्षा च प्रकृते भ्रमाभाव एव। तस्योपलक्षणया निवेशे अन्तत सुषुप्तिकालमादाय सर्वेषा भ्रमसामा- न्याभाववत्त्वाद्बाध[1]व्यभिचारासिद्धय प्रसज्यन्त इत्युक्तरीत्यैव निवेश। पूर्वमस्मत्प्रदर्शितनिष्कर्षस्त्वेतन्मूलत्रय- परमतात्पर्यविषयीभूतो नेदानीमनुमत। इत्थ च नन्वित्यादिग्रन्थेन प्रेक्षावत्सु सशयानुत्पत्तिरूपसाध्यसिद्धये तत्कारणीभूतप्रतीत्यभावस्यैव हेतुशरीरप्रविष्टताया आवश्यकत्वेन पूर्ववाक्यतात्पर्यविषयत्वमभिप्रेत्य तत्र **प्रमाणाभावो**- क्तेरसङ्गतिशङ्का युक्तैव। समाधानग्रन्थोपि सन्दर्भशुद्ध। तथा हि। प्रतीतिसामान्यस्यैव हेतुशरीरनिविष्टत्व अस- त्सम्मतमित्याशयेनाह ॥ **सत्यमित्यादिना** ॥ **वस्तुगतिरिति** ॥ तथा च प्रतीत्यभावनिवेश एव हेतौ युक्त इति भाव। **तथापि** प्रतीतिमात्रस्य सशयकारणत्वेपि। वक्तव्येत्यत्रान्वय। **उपक्षिप्ते** गृह्यमाणे। एतच्च प्रमाणेन तत्वावधारणकाम प्रति प्रमाणस्योक्तत्वेन तस्यान्यतरकोट्यवधारणकाले इच्छाधीन आहार्यसशयो न घटतेऽतो

---

[1] टिप्पणी—हेतावप्युपलक्षणया निवेशेऽसिद्धिर्विशेषणतया निवेशे व्यभिचारो ज्ञेय।

अनाहार्य एवाय संशय तत्र युक्तायुक्तत्वादिचिन्ता युक्तैवेति सूचनाय। तत्र प्रतिवादित्वव्यवहारस्तु तत्वनिर्ण (द्वै. द्यु) येच्छया परमतमनुरुद्ध्य प्रवृत्तत्वादिति ध्येयम्। **आत्मन** इत्येतत्सन्देहान्वित॥ **वक्तव्येति**॥ प्रतीतित्वेन कारणतया शङ्कितामप्यनिर्वचनीयत्वकोटौ सत्त्वज्ञानसामान्य प्रमारूपमेवेति वस्तुत अभिप्रेतमिति वक्तव्यमित्यर्थ। **अप्रमात्वाङ्गीकारे** तादृशभ्रमत्वाङ्गीकारे। **स्वयमेव विलीनं** संशयकारणीभूत ज्ञानजातमिति शेष। प्रतीतिपदस्यैव विभक्तिविपरिणामेन सम्बन्धे नपुसकलिङ्गानुपपत्ते। सशयमनुत्पाद्य नष्ट स्यादित्यर्थ। न सशयेन स्वफलीभूतसशयेन नष्ट न स्यादित्यर्थ। स्वयमेव विलीन सशयेनेति नञ्घटितपाठे तु स्वोत्पत्तिप्रतिबन्धकासमवधानेऽपि स्वकारणाभावादेवानुत्पन्न सन्देह इत्यर्थ। इत्थ च पाठद्वयेऽपि अप्रमात्वग्रहानास्कन्दितस्य वा प्रमात्वेन गृह्यमाणस्य वा कोटिप्रतिपत्त्यादे सशयकारणत्वेन तदभावात्सशयो न स्यादिति भाव॥ **अत इति**॥ कोटिप्रतिपत्तिसामान्यस्य प्रमात्वाङ्गीकारादित्यर्थः। इद चानङ्गीकारे हेतु। साधिते प्रेक्षावत्स्विति शेष॥ **प्रतीत्यभाव एवेति**॥ हेतुशरीरघटक इत्यर्थ॥ **साधितो भवतीति**॥ प्रेक्षावत्स्वित्यत्राऽपि सम्बद्ध्यते॥ **न कश्चिद्दोष इति**॥ न न्यूनतेत्यर्थ इति।

यद्वा पूर्वोक्तनिष्कृष्टानुमानमेव मूलटीकयोरभिप्रेतम्। **सर्वत्रेति** मूल तु न हेतुशरीरप्रविष्टाभावप्रदर्शकम्। किं तु त्वदन्येषु सर्वेषु प्रेक्षावत्सु अनिर्वचनीयकोटेरप्रतीतत्वात् त्वत्प्रतीतिर्भ्रमरूपैव।

एकस्य प्रतिभात तु कृतकान्नातिरिच्यते।

इति न्यायादिनि रीत्या कोटौ हेतुशरीरप्रविष्टप्रमाविषयत्वाभावोपपादकम्। टीकाया तूक्तवक्ष्यमाणग्रन्थाभिप्राय हृदि निधाय शिष्यहिताय पूर्वमेवानुमानप्रकारोऽभिहित। वस्तुत एतन्मूलव्याख्योत्तरमेव वक्तव्य।

इत्थ च नन्वित्यादिशङ्कस्यायमभिप्राय। भेदत्वरूपसाधारणधर्मज्ञानजन्यत्वेन स्वसशयस्य भ्रममूलत्वरूपायुक्तत्वेऽभिहिते तं विना प्रतीतकोट्युपस्थित्यादिना स्वसशयमुपपाद्य पूर्वदोषे परिहृते पूर्वदोषव्यवस्थापनार्थं एतदन्यप्रकारेण कोट्युपस्थितिर्न घटते। त्वदन्यस्मिन् सर्वत्राप्रतीतत्वे तं प्रत्यन्यस्य कारणत्वाकल्पनादतो भेदत्वज्ञानेनैव कोट्युपस्थितिस्तवैव वक्तव्यात पूर्वोक्तदोषो दुर्वार इत्यनेन मूलेनोच्यते। तत्र प्रतीत्यभाव कथमित्याकाङ्क्षाया **न चेति** मूल प्रवृत्तम्। तच्चानुपपन्नम्। पूर्वमूलस्य प्रमित्यभावपरत्वे तस्य संशयकारणाभावानुपमर्दकतया प्रतीत्यभावस्यैव पूर्वमूलाभिप्रेतत्वे तत्र मानाभावोऽनुपपादक इति। समाधानग्रन्थे तु सशयकारणनिरूपणादिक यद्भवता कृत तत्सर्वं युक्तमेव। तथाप्यनिर्वचनीयत्वादिकोटिप्रमितिरेव तेन स्वसन्देहहेतुतया वक्तव्या। तस्या अप्रमात्वाङ्गीकारे **स्वयमेव विलीनं** तूष्णीं स्थितं स्यात्। **न सशयेन** न सशयसाध्यप्रश्नादिना भाव्यम्। नञ्घटितपाठे तु वादिनि स्वयमेव विलीन सशयेनानुत्पन्नमित्यर्थ। तथा च कथ तन्मूलकप्रश्नाद्युपपादनाशेति भावः। साधारणधर्मज्ञानरूपभ्रममूलकत्वाभावेऽपि स्वसशयस्य प्रकारान्तरेण भ्रममूलकत्वापरिहारात्। अस्माक तु भ्रममूलकत्वमेव साध्यतयाऽभिमत। न प्रथमदूषण एव निर्भरः। अतोऽप्रसिद्धत्वादित्येतदेकस्येतिन्यायेन प्रच्छकज्ञानस्याप्रमात्वोपपादकमेव। तथा चान्यत्र कोटिभ्रमजनकसामग्री परानङ्गीकृता। तस्य भ्रमत्वे तत्समा-

(द्वै द्यु.) नाकारस्य ज्ञानस्यापि प्रमात्वायोगात् । अनिर्वचनीये मानाभावात् प्रमासामग्री नास्त्येव । अत प्रतीत्यभाव एव प्रेक्षावत्सु साधितो भवतीति भाव । अतो न पूर्वोत्तरविरोध इति स्थितम् ।

(गु टि ) कोटिप्रतीततामात्रेणेति ।। आरोप्यमाणकोटिप्रतीततामात्रेणेत्यर्थ ।

अनिर्वचनीयस्य प्रत्यक्षसिद्धत्वशङ्का मिथ्याशब्दवाच्यत्वशङ्का च

(टी ) कथमनिर्वचनीयार्थे प्रमाणाभावः । यावता प्रत्यक्ष शुक्तिरजतादेरनिर्वचनीयतामावेदयदस्ति । बाधकज्ञानसमनन्तर मिथ्यैव रजतं प्रत्यभादित्यनुवादात् । यावदुक्तं भवत्यनिर्वचनीयमिति तावदुक्त मिथ्येति । न चाप्रतीतमाप्तेनानूद्यते । न च बाधकप्रत्ययो भ्रान्तिः । नापि लिङ्गादिजन्य इति ।

पूर्वोक्तशङ्काद्वयनिरास

अत्रेदं वक्तव्यम् । किं मिथ्याशब्दोऽनिर्वचनीयस्य वाचक इति कृत्वा भ्रान्त्युत्थितस्य तत्प्रयोगदर्शनादनिर्वचनीयविषयः प्रत्ययोऽनुमीयते । उतावाचकेनापि तेन भ्रान्त्युत्थितोऽनिर्वचनीय व्यवहरतीति कृत्वा ? आद्य निराकरोति

मिथ्याशब्दोऽनिर्वचनीय वदतीत्यत्र च ।

न किञ्चिन्मानमित्यस्यानुकर्षणार्थश्चकारः ।

मिथ्याशब्दस्यासद्वाचित्वसमर्थनम्

ननु व्याकरणाभिधानादिप्रमाणाभावाद्वृद्धादिसमयमात्रस्यातिप्रसङ्गेनानिश्चायकत्वादनिर्वचनीयस्य यदि न मिथ्याशब्दो वाचकस्तर्हि तद्वाच्य वाच्यम् । सत्यम् । असदिति ब्रूमः । एव तर्हि निरर्थक इति प्राप्तम् । न ह्यसदस्तीति सम्भवति । व्याघातात् । निरर्थकत्वे च पदत्वव्याघात इति चेन्मैवम् । अत्यन्ताभावप्रतियोगित्वलक्षणस्यासत्त्वस्य विद्यमानत्वात् । न हि मिथ्येत्यस्य शशविषाणादिकमर्थः । तथा सति शशविषाण मिथ्येति न स्यात् । किन्नाम तन्नास्तीति । तथा च मिथ्यैव रजतमित्यस्य नास्ति रंजत रजतात्यन्ताभावोस्तीत्यर्थः । स्वयमसतः कथ प्रतियोगित्वमिति चेत् । किमिह कथम् । न हि प्रतियोगित्व रूपादिवद्धर्मिसत्तासापेक्षम् । [अभावज्ञानोपयोगिज्ञानविषयतामात्रस्य प्रतियोगित्वात् ।] असतोपि प्रतीतिमुपपादयिष्यामः ।

(वि टि.) नन्वनिर्वचनीये प्रमाणाभाव प्रतिज्ञाय तदुपपादनमेव कर्तुमुचितम् । न तु मिथ्याशब्दस्यानिर्वचनीयवाचकत्वनिराकरणम् । अनुपयोगादित्याशङ्क्य तस्य प्रकृतोपयोगं दर्शयितु तदनुगुणा शङ्कामुत्थापयति ।। कथमनिर्वचनीयार्थे प्रमाणाभाव इति ।। ननु शुक्ताविदं रजतमित्यादिप्रत्यक्ष स्वविषयस्य शुक्तिरजतादेर्नानिर्वचनीयत्व गोचरयतीत्यत आह ।। बाधकज्ञानसमनन्तरमिति ।। ननु बाधकप्रत्ययानन्तर मिथ्यैव रजतमित्यनुवादो न त्वनिर्वचनीय रजतमितीति चेत्तत्राह ।। यावदुक्तमिति।। नन्वयमनुवाद शुकबालाद्यनुवादवदस्त्वित्यत आह

(वि टि) ॥ **न चाप्रतीतमिति** ॥ प्रकृतवाक्यार्थगोचरयथार्थज्ञानवत एवाऽप्तत्वादिति भाव । नन्वयमनुवादो भ्रममूल एवास्त्वित्यत आह ॥ **न चेति** ॥ बाधकाभावादिति भाव । नन्वनुवादहेतुभूतो बाधकप्रत्ययो लिङ्गादिजन्य किं न स्यादित्यत आह ॥ **नापीति** ॥ लिङ्गशब्दाद्यनुसन्धानाभावेपि नेद रजतमिति बाधकप्रत्ययोदयाच्च क्षुरन्वयव्यतिरेकानुविधानाच्चेति भाव । यद्यपि नेद रजत, नात्र रजतमित्यादिबाधकप्रत्ययस्याभावविषयतया अनुपलब्धित्वमेव वक्तुमुचित न प्रत्यक्षत्व तथापि आरोपिताभावस्य परेण शुक्त्यधिष्ठानरूपत्वोपगमात्तत्प्रत्यक्षत्वोक्तिरिति ध्येयम् । पररीत्या परो बोधनीय इति न्यायेन वा [1]तत्प्रत्यक्षत्वोक्तिरित्यत आहु ॥ **भ्रान्त्युत्थितस्येति** ॥ विशेषदर्शनेन भ्रान्तित्वनिश्चयवत इत्यर्थ ॥ **तत्प्रयोगेति** ॥ मिथ्याशब्दप्रयोगेत्यर्थ ॥ **अनुमीयत इति** ॥ भ्रान्त्युत्थितोऽनिर्वचनीयविषयकप्रत्यक्षवान् तदा तद्वाचकशब्दप्रयोक्तृत्वात् । यथा सम्प्रतिपन्न इत्यनुमीयत इत्यर्थ । ननु **मिथ्याशब्दोऽनिर्वचनीय वदतीत्यत्र** चेत्यस्य साकाङ्क्षत्वाद्योग्यार्थसमर्पकपदान्तराध्याहार विना विवक्षित वाक्यार्थालाभ इत्यत आह ॥ **न किञ्चिन्मानमित्यस्येति** ॥ व्याकरणाभिधानादीत्यादिशब्देनाऽप्तवाक्यादि परिग्रह ॥ **वादिसमयमात्रस्येति** ॥ वादिपरिभाषामात्रस्यातिप्रसङ्गेनानिर्वचनीयवाचकत्वानिश्चायकत्वादित्यर्थ ॥ **तद्वाच्यमिति** ॥ मिथ्याशब्दवाच्यमित्यर्थ ॥ **असदिति ब्रूम इति** ॥ तद्वाच्यमित्यनुषङ्ग । यद्यपि मिथ्या शब्दवाच्यानुक्तावपि परमतदूषणं सिद्ध्यति तथापि वस्तुगतिमभिप्रेत्यासतस्तद्वाच्यत्वोक्तिरियमिति ध्येयम् । मिथ्याशब्दस्यात्यन्तासदर्थकत्वे बाधकं शङ्कते ॥ **एव तर्हीति** ॥ नैरर्थक्यपरिहारायासत सत्त्वाङ्गीकारे बाधकमाह ॥ **न हीति** ॥ **व्याहतत्वादिति** ॥ त्रिकालसर्वदेशीयनिषेधप्रतियोगिनोऽसत कालसम्बन्धित्वरूपसत्त्वस्य व्याहतत्वादित्यर्थ । नैरर्थक्याङ्गीकारे को दोष इत्यत आह ॥ **निरर्थकत्वे चेति** ॥ अर्थवत एव अर्थवदधातुरप्रत्यय प्रातिपदिकमिति प्रातिपदिकसञ्ज्ञाया स्वाद्युत्पत्तौ सुप्तिङन्त पदमिति पदत्व सिद्ध्येत् । निरर्थकत्वे च तन्न सिद्ध्येदिति भाव । एतच्चोपलक्षणम् । मिथ्येति शब्दो मिथ्याशब्द इति मिथ्याशब्दशब्दशब्दयोर्मध्यमपदलोपी समासश्च न स्यात् । सुप्सुपेति समासशास्त्रप्रवृत्तौ निमित्तस्य सुबन्तत्वस्याभावादित्यपि द्रष्टव्यम् । एतेन कृत्तद्धितसमासाश्चेति समासत्वप्रयुक्तप्रातिपदिकसञ्ज्ञाया स्वाद्युत्पत्तौ पदत्वसिद्धिरित्यपास्तम् ॥ **अत्यन्ताभावप्रतियोगित्वलक्षणस्येति** ॥ अतीतानागतादिशब्दाना ध्वसप्रतियोगित्वप्रागभावप्रतियोगित्वादिविद्यमानार्थवत्त्ववत् मिथ्याशब्दस्यापि अत्यन्ताभावप्रतियोगित्वरूपविद्यमानार्थेनार्थवत्त्वोपपत्तेरिति भाव ॥ **तथा सतीति** ॥ न हि तुल्यार्थकत्वे सहप्रयोगो दृष्ट इति भाव ॥ **तन्नास्तीति** ॥ शशविषाण कालत्रयेपि नास्तीत्यर्थ इत्यर्थ । एतदेव दर्शयति ॥ **तथा चेति** ॥ **स्वयमसत इति** ॥ अत्यन्तासत इत्यर्थ । प्रागभावादिप्रतियोगित्वाश्रयस्यास्त्येव कदाचिद्विद्यमानत्वमिति भाव ॥ **रूपादिवदिति** ॥ वैधर्म्यदृष्टान्त । कदाचिद्धर्मिसत्त्वस्य कालान्तरे धर्मवत्त्वाप्रयोजकत्वादिति भाव ॥ **अभावज्ञानोपयोगीति** ॥ अभावत्वप्रकारकाभावज्ञानजनकज्ञानविषयतामात्रस्य प्रतियोगित्वरूपत्वादित्यर्थ । ननु शुक्तिरूप्यादेरत्यन्तासत्त्वे इन्द्रियसम्प्रयोगादिसामग्र्यसम्भवेन कथं शुक्ताविद रजतमिति प्रत्यक्षोदय । कथ वा शुक्तिरूप्यादेरभावज्ञानोपयोगिज्ञानविषयत्वरूप प्रतियोगित्वमित्यत आह ॥ **असतोऽपीति** ॥

---

[1] तत्प्रत्यक्षत्वोक्तिरित्याह इति पाठेन भाव्यमिति भाति

(रा टि) ॥ **यावतेति** ॥ यस्मादित्यर्थ । एवमग्रेपि ज्ञेय ॥ **प्रत्यक्षमिति** ॥ अस्तीत्यन्वय । तच्च शुक्तिरजतादिभ्रमवतस्तत्र जायमानमिथ्यात्वप्रत्ययरूपबाधकज्ञानमिति भाव । परकीय बाधकज्ञान तद्विषयमिति कथं ज्ञेयमित्यतस्तदीयानुवादरूपवाक्यलिङ्गादिति भावेनाह ॥ **बाधकेति** ॥ तावता अनिर्वचनीये किमायातमित्यत आह ॥ **यावदिति** ॥ मिथ्येत्यनिर्वचनीयमिति चानर्थान्तरमित्यर्थ । हेतोर्द्वैधाऽ यथोपपत्ति हृद्याशङ्क्य निराह ॥ **न चेत्यादिना** ॥ तावता तस्य प्रत्यक्षता कुत इत्यत आह ॥ **नापि लिङ्गादिजन्य इति** ॥ शङ्कामुखेन मूलार्थं व्यनक्ति ॥ **नन्वित्यादिना** ॥ **वादिसमयेति** ॥ वादिकृतसङ्केतेत्यर्थ । अस्तीतिप्रत्ययस्य वादिसङ्केतेना भावविषयता स्यात् । अन्तरित्यस्य बहिरित्यर्थ इत्याद्यतिप्रसङ्गादित्यर्थ । सत्त्वरूपवाचक एवार्थवानिति मन्वान आह ॥ **एवं तर्हीति** ॥ **पदत्वव्याघात इति** ॥ अर्थवदधातुरप्रत्यय प्रातिपदिकमित्यर्थवत एव प्रातिपदिकसञ्ज्ञाया ङ्याप्प्रातिपदिकादित्यत्र स्वौजसमौडिति सुप्प्रत्यये सुप्तिङन्त पदमिति पदत्वस्य विधानादर्थवत्त्वाभावे प्रातिपदिकसञ्ज्ञाभावेन सुबनुत्पत्ते पदत्वव्याघात इत्यर्थ ॥ **अभावज्ञानोपयोगिज्ञानविषयतेति** ॥ सा चातीतादेरिवासतोपि युक्ता । अतीतादिकं कदाचिदस्ति असत्त्व कदाचिदपीति वैषम्यमात्रं । ज्ञानकाले सत्त्वाभावस्योभयत्र साम्यादिति भाव ॥ **उपपादयिष्याम इति** ॥ 'असतोऽप्रतीतावसद्वैलक्षण्यज्ञानानुपपत्ति' इत्यत्रेति भाव. ।

**वे. टि**) नन्विद नीलमितिवदिदमनिर्वचनीयमिति प्रत्यक्षाभावात्कथ प्रत्यक्षस्य प्रमाणीकरणमित्यत आह ॥ **बाधकेति** ॥ ननु मिथ्यैव रजत प्रत्यभादित्यनुवादेन रजतमिथ्यात्वे प्रत्यक्ष प्रमाण भवतु । तदनिर्वचनीयत्वे किमायातमित्यत आह ॥ **यावदुक्त भवत्यनिर्वचनीयमितीति** ॥ ननु रजते मिथ्यात्वप्रतीत्यभावेपि मिथ्यैव रजत प्रत्यभादित्यनुवाद सम्भवति । घटज्ञानाभावेपि घटोस्तीति शुकबालादिभिरनुवादात् । अत कथमनुवादबलेन प्रत्यक्षकल्पनमित्यत आह ॥ **न चाप्रतीतमाप्तेनानूद्यत इति** ॥ ननु बाधकप्रत्ययस्य भ्रमत्वेप्यनुवादसम्भवात्कथ तन्मूलव्यवहारेण [1]प्रत्यक्षकल्पनमित्यत आह ॥ **न च बाधकप्रत्यय इति** ॥ अन्यथाविज्ञातस्य सम्यग्विज्ञानस्यैव बाधकप्रत्ययत्वादिति भाव । ननु बाधकप्रत्ययस्य प्रमात्वेपि तस्य लिङ्गादिजन्यत्वेनाप्यनुवादोपपत्त्या कथ तेन प्रत्यक्षकल्पनमित्यत आह ॥ **नापि लिङ्गादिजन्य इति** ॥ लिङ्गशब्दाद्यनुसन्धानाभावेपि जायमानत्वादिन्द्रियान्वयव्यतिरेकानुविधायित्वाच्चेति भाव ॥ **भ्रान्त्युत्थितस्येति** ॥ भ्रान्तित्वनिश्चयवत इत्यर्थ ॥ **अनुमीयत इति** ॥ भ्रान्त्युत्थितोऽनिर्वचनीयविषयप्रत्यक्षवान् । तदा तद्वाचकशब्दप्रयोक्तृत्वात् । सम्प्रतिपन्नवदित्यनुमीयत इत्यर्थ ॥ **निरर्थकत्वे चेति**॥ 'अर्थवदधातुरप्रत्यय प्रातिपदिकम्' इति प्रातिपदिकसञ्ज्ञाया 'सुप्तिङन्त पदम्' इति पदत्व सिद्ध्येत् । निरर्थकत्वे च तन्न सिद्ध्येदिति भाव ॥ **तथा सतीति** ॥ पौनरुक्त्यापातादित्यर्थ । **नास्ति रजतमिति** प्रतियोगिप्राधान्येन मिथ्याशब्दार्थमभिधायाभावप्राधान्येनापि तदर्थमाह ॥ **रजतात्यन्ताभावोस्तीति** ॥ **किमिह कथ** का कथन्तेत्यर्थ । धर्म्यभावे कथ धर्म इत्यत आह ॥ **न हीति** ॥ रूपादिक यथा धर्मिसत्तासापेक्ष न तथा प्रतियोगित्वम् । प्रागभावादिदशायामसतापि घटादेस्तत्प्रतियोगित्वदर्शनात् । कालान्तरे

---

[1] प्रत्यक्षप्रमाकल्पनमित्यत इति पाठेन भाव्यमिति भाति

(वे टि) सत्त्वस्य चेदानीमनुपयोगादिति भाव ॥ अभावज्ञानेति ॥ नन्वभावज्ञानोपयोगिज्ञानविषयत्वमधिकरणस्याप्यस्ति । अत कथं तत् प्रतियोगित्वमिति चेन्न । तज्ज्ञानहेतुभूतज्ञानविषयत्वविशेषस्यैव प्रतियोगित्वरूपत्वादिति भाव । नन्वभावज्ञानोपयोगिज्ञानविषयत्वरूपप्रतियोगित्व कथमसति सम्भवति । असत प्रतीतेरभावादित्यत आह ॥ असतोपीति ॥

(द्वै द्यु) ॥ यावतेति ॥ यस्मादित्यर्थ । नन्वय घट इतिवदिदमनिर्वचनीयमिति प्रत्यक्षाभावात्कथमनिर्वचनीयार्थे प्रत्यक्षस्य प्रामाण्यमित्यत आह ॥ बाधकेति ॥ अनुवादादिति ॥ अभिलापादित्यर्थः । अभिलापकशब्दजन्यबोधसमानविषयकत्वमभिलप्यमानप्रत्ययस्येति नियमात् । मिथ्यापदार्थस्य रजतान्वितत्वेन शाब्दबोधे भानात् अनूद्यमानप्रत्ययस्याप्यनिर्वचनीयविषयकत्वमिति भाव । ननु शाब्दबोधस्य मिथ्यात्वविषयकत्वात्कथ तदभिलाप्यबाधकप्रत्ययस्यानिर्वचनीयत्वविषयकत्वमित्यत आह ॥ यावदुक्त भवतीति ॥ अनिर्वचनीयमितिपदेन यादृशविशिष्टस्वरूप असदभिमत बोध्यते तदेव मिथ्यापदेन बोध्यते । तथैव लोकानुभवादित्यभिमान ।

ननु अग्निर्माणवक इति वाक्यप्रयोक्तरि तद्वाक्येन यथाश्रुतेन जायमानबोधसमानविषयकज्ञानस्यादर्शनात्प्रकृते तादृशवाक्यप्रयोगमात्रेण तस्य तज्ज्ञान कथं कल्प्यत इत्यत आह ॥ न चाप्रतीतमिति ॥ अनूद्यते स्वकीयप्रतिपत्तिविषयतया प्रतिपाद्यते । आप्तेन यथार्थवक्त्रा । अय भाव । यदि रजत मिथ्येत्येव शब्दस्तेन प्रयुज्येत तदा तथा ज्ञानरहितोऽपि व्यपदेशमात्र करोतीति वक्तुं शक्यते । न चैवम् । किं तु रजत मम मिथ्यैवाभादिति मिथ्यात्वविशिष्टरजतविषयिणी स्वप्रतीतिमेव शब्देन बोधयति । वाक्यप्रयोगकारणीभूतं च ज्ञान बाधकप्रत्ययविषयकानुव्यवसायो वा गुरुमतवद्बाधकज्ञानमेव वा रजत मिथ्या जानामीत्याकारम् । नोभयथाऽपि काचित्क्षतिरिति ।

ननु स्वकीयबाधकज्ञानस्य रजतविषयकमिथ्यात्वप्रकारकत्वमाप्तेन यदुक्तं तत्तथाऽस्तु । तथापि तत्प्रत्ययस्य भ्रान्तित्वेन रजतानिर्वचनीयत्व न सेत्स्यतीत्यत आह ॥ न चेति ॥ बाधकप्रत्ययत्वमेव भ्रान्तित्वाभावे हेतुं सूचयति बाधकपदेन । अस्य भ्रान्तित्वे एतद्विरुद्धार्थावगाहिन पूर्वप्रत्ययस्यैतद्बाधकत्वापत्त्या अस्य बाध्यत्वमेव स्यान्न बाधकत्वमिति भाव । ननु प्रत्यक्षप्रमाणोपन्यासप्रस्तावे एतत्कथनमयुक्तम् । अस्य शुक्तित्वादिरूपलिङ्गवाक्यादिजन्यत्वादित्यत आह ॥ नापीति ॥ लोके घटादेरनुमितिशाब्दबोधानन्तर घटो मे प्रत्यभादिति न परीक्षकादिव्यवहार । किं तु तर्कित इत्यादिरूप एव । प्रत्यक्षानन्तरमेव घट प्रत्यभादिति व्यवहार । अत उक्तवाक्यं तज्ज्ञानं प्रत्यक्षत्वेनैव बोधयतीति लिङ्गादिजन्यत्वाङ्गीकारे तद्विरोध इति भाव । अत एवोक्तबाधकप्रतीतेर्लिङ्गजन्यत्वाभावे हेत्वन्तरोपन्यासायासनिरासाय जन्यतया बाधकप्रतीत्यनुमापक मिथ्यैव रजतमित्येतावन्मात्र वाक्य विहाय बाधकप्रत्यय प्रत्यक्षत्वेनावगाहमानेनानुव्यवसायेन वाक्यार्थज्ञानमुद्रया जन्य बाधकप्रत्ययस्य प्रत्यक्षत्वेनैव शब्दविधया बोधक वाक्यमुपात्तम् ।

ननु केवलसन्निकर्षादिदशाया बाधकप्रत्ययस्यानुत्पन्नत्वाच्छुक्तित्वादिव्यावर्तकधर्मदर्शनोत्तरमेवोत्पन्नत्वात्कथं तस्य प्रत्यक्षत्वमिति चेन्न । शुक्तित्वादिसाक्षात्कारस्य रजतहेत्वज्ञाननिवृत्तावेवोपक्षीणत्वेनाज्ञाननिवृत्त्या रजते

(द्वै द्यु) निवृत्ते चक्षु सन्निकर्षेणैव रजताभावज्ञानाभ्युपगमात्। अत्र रजते मिथ्यात्व रजततादात्म्यवच्छुक्तिनिष्ठ निरवच्छिन्नवृत्तिकाभावप्रतियोगित्वम्। रजततादात्म्य शुक्त्यंशे पूर्वानुभवजनितसंस्काराद्भासते। अद्वैतमते उपनीत भानाभावेऽपि तदंशे स्मृत्यात्मकमेव बाधकज्ञान। सुरभि चन्दनमिति ज्ञानस्यापि सौरभांशे स्मृत्यात्मकत्वस्य चन्द नांशे साक्षात्कारत्वस्य स्वीकारात्। प्रतियोगिभूतरजतांशेऽपि स्मरणात्मकमभावांशे शुक्त्यंशे निरवच्छिन्नत्वांशे चाक्षुषमेव। अत इद प्रत्यक्षात्मकमिति ज्ञेयम्। यद्यप्यभाव परमते षष्ठप्रमाणरूपानुपलब्धिप्रमाणगम्यस्तथाप्यभा वस्य प्रत्यक्षतामतमाश्रित्यैव शङ्केति **अद्वैतचन्द्रिकायामुक्तम्**। अतो नापसिद्धान्त।

यद्वा ॥ **बाधकप्रत्ययसमनन्तरमिति** ॥ **मिथ्यैवेति** ॥ नेद रजतमिति बाधकप्रत्ययस्येद रजत मिथ्ये-त्याकारकत्व परेषा यद्यप्यसम्मत तथापि बाधकप्रत्ययोत्तर द्वित्रक्षणानन्तर मिथ्यैव रजत प्रत्यभादिति वाक्य भ्रान्त्युत्थित प्रयुङ्क्ते। तद्वाक्य मिथ्यात्ववद्रजत पूर्वज्ञानविषयीभूतमिति बोध जनयति। एवकारेण रजते मिथ्यात्वायोगो व्यवच्छिद्यते। तथा च तद्वाक्यप्रयोगहेतुभूत तत्समानविषयक ज्ञान तस्यापेक्षितम्। तत्र रजते भ्रमात्मकज्ञानविषयत्वावगाह्यनुव्यवसायाधीनसंस्कारेण पूर्वतनभ्रमरूपज्ञानविषयत्व भासते। रजते मिथ्यात्वोप-नायकमन्यन्नास्तीति बाधकप्रत्यय एव मिथ्यात्वविषयकतया तदुपनायकोवश्य वाच्य इत्युक्तानुवादबलाद्बाधक-प्रत्ययस्य मिथ्यात्वविषयकत्वमवश्य वाच्यमिति नेद रजतमिति प्रत्यक्षमेव तस्मिन्मिथ्यात्वे प्रमाणम्। तस्य मिथ्यात्वावगाहित्वादिक तूक्तरीत्यैवेति भाव।

ननु तादृशवाक्यप्रयोक्ता न स्ववाक्याधीनबोधसमानविषयकज्ञानेन वाक्य प्रयुङ्क्ते। किं तु एकपदार्थ-निष्ठप्रकारतानिरूपितापरपदार्थनिष्ठविशेष्यताशालिबोधत्वेन स्ववाक्यसाध्यबोध इष्टसाधनता गृहीत्वा तत्साधनतया विप्रलिप्सयैव। तथा च प्रकृतवाक्यप्रयोगनिर्वाहाय न बाधकज्ञानस्य मिथ्यात्वविषयकत्व कल्पनीयमित्यत आह ॥ **न चेति** ॥ **आप्तेन** अविप्रलम्भकेन। तस्य तत्त्व प्रमाणान्तरसिद्धमिति भाव। नन्वस्तु बाधकप्रत्ययस्य मिथ्यात्वविषयकत्वम्। तस्यापि भ्रमत्वान्नानिर्वचनीयसिद्धिरित्यत आह ॥ **न च बाधकेति** ॥ अन्यथाविज्ञा-तस्य सम्यग्विज्ञानस्यैव बाधत्वादिति भाव। ननु प्रत्यक्षमनिर्वचनीये प्रतिज्ञायैतदुपन्यासो न युक्तस्तस्यानुमित्या-दिरूपत्वादित्यत आह ॥ **नापि लिङ्गादीति** ॥ तथा चानुमितित्वादिव्यापकलिङ्गादिजन्यत्वाभावान्नानुमितित्वा दिकमिति भाव। लिङ्गाद्यननुसन्धानदशायामुत्पत्तेरनुभवसिद्धत्वान्न तज्जन्यत्वमिति हृदय ॥ **अनुमीयत इति** ॥ पूर्ववाक्याना पूर्वोक्तरीत्या प्रथमव्याख्याने उक्तप्रत्यय शाब्दबोधविषयो भवति यद्यपि तथाप्याप्तवाक्येनानिर्वच-नीयविषयकत्वेन बोध्यमानत्वलिङ्गादपि तद्वाक्यानुपूर्व्यश्राविणा प्रत्ययस्यानिर्वचनीयविषयकत्वमनुमीयत इत्याशये-नैवमुक्ति। पूर्ववाक्याना द्वितीयव्याख्याने तु न कोपि क्लेश इति ध्येयम्।

अनुकृष्टस्य **न मान**मित्यस्याभिप्रायमनुवदन्नेवाशङ्कते ॥ **नन्विति** ॥ **एव तर्हीति** ॥ वाच्यमसदित्यस्य नास्तीत्यत्रैव पर्यवसानादित्यर्थ ॥ **पदत्वव्याघात इति** ॥ अर्थवदधातुरप्रत्यय प्रातिपदिकमित्यनेन प्रातिपदिक-सञ्ज्ञासिद्धावेव स्वाद्युत्पत्त्या पदत्व वाच्यम्। तथा चार्थवत्त्वाभावे पदत्वमेव न स्यादित्यर्थ. ॥**असत्त्वस्य विद्यमा-**

(द्वै ग्र ) **नत्वादिति** ॥ तथा च मिथ्यापदं तद्बोधकमेवेति भाव । शशविषाणादीनां तत्पदेन बोधात्कथमुक्तार्थकत्वमित्यत आह ॥ **न हीति** ॥ शशविषाणादीनां तत्समभिव्याहृतपदादिना बोध्यत्वेपि न शशविषाणत्वादिना तद्बोध्यत्वमित्यर्थ । विपक्षे बाधकमाह ॥ **तथा सतीति** ॥ तर्हि शशविषाणादिपदसमभिव्याहृतमिथ्यापदेन किं प्रतीयत इत्यत आह ॥ **किं नामेति** ॥ तथा च प्रकृतेऽनुवादकवाक्यस्य कीदृशोर्थे पर्यवसन्न इत्यत आह ॥ **तथा चेति** ॥ प्रतियोगिप्राधान्यविवक्षयाह ॥ **नास्ति रजतमिति** ॥ अभावप्राधान्यविवक्षयाह ॥ **रजतात्यन्ताभाव इति** ॥ **स्वयमसत इति** ॥ सर्वैरपि रूपैरसत इत्यर्थ । तेन शङ्कस्य मते सतोपि व्यावृत्तिरूपेणासत्त्वात्तस्य प्रतियोगित्वाङ्गीकारात्कथमेतदिति चोद्यानवकाश ॥ **किमिह कथं** का कथन्तेत्यर्थ ॥ **धर्मिसत्तासापेक्षमिति** ॥ तथात्वे स्वप्रागभावध्वंसकालेऽसतां घटादीनां प्रतियोगित्वेन भानाभावप्रसङ्गादिति भाव ।

ननु घटादीनां ध्वंसप्रागभावकालेऽसत्त्वेपि पूर्वोत्तरकालयो सत्त्वादेव प्रतियोगित्वोपपत्ति । न च कालान्तरसत्त्व नेदानीमुपयुज्यत इति वाच्यम् । प्रतियोगिताया अपि घटसमानकालिकत्वाभ्युपगमात् । न हि प्रतीतिकाले प्रतियोगिता सत्त्वेनावभासते । येन प्रतियोगिनं विना सत्त्व स्यात् । इदानीं घटो ध्वस्त इत्यादौ एतत्कालीनत्वस्य ध्वंस एव भानात् । प्रागभावादिप्रतीतौ भानमात्रेण प्रतीतिकाले सत्ताभ्युपगमे घटस्यापि प्रतीतिकाले सत्त्व स्यात् । असतस्तु सर्वथा कालासम्बद्धस्य कथं प्रतियोगित्वोपपत्ति । परिणामवादरुचीनां तु न कोपि दोष. । तस्यैव पूर्वं परतश्च कारणात्मना सत्त्वाभ्युपगमात् । एवं च प्रागभावादिप्रतियोगित्वदृष्टान्तेन नासत प्रतियोगित्व वक्तु शक्यमित्यत आह ॥ **अभावज्ञानेति** ॥ यद्वा प्रतियोगित्व स्वरूपसम्बन्धविशेषोऽभावविरहात्मकत्व वा । नोभयथाप्य तस्तत्सम्भवति । तस्य स्वरूपाभावात् । असदभावस्य केवलान्वयित्वेन तदभावाप्रत्ययादित्यत आह ॥ **अभावज्ञानेति** ॥ अधिकरणज्ञानस्यापि कारणत्वात्तत्रातिव्याप्तिपरिहाराय **विशेषेति**। **विशेषेति**पाठाभावपक्षेप्युक्तप्रयोजनानुरोधात् ग्राह्यमेव । अधिकरणीयविषयताभिन्नत्वस्य तदर्थत्वात् । न चाधिकरणत्वस्य केवलान्वयितया तद्विषयताभिन्नत्व विषयताया दुर्घटमिति वाच्यं । अभावविषयताघटितधर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदिका या आधेयत्वसंसर्गावच्छिन्नप्रकारत्वाप्रयोजकविषयता तस्या एव प्रतियोगितापदार्थत्वात् । न चैव घटत्वाभावव्याप्यपटत्ववानिति परामर्शेन घटत्वाभाववानित्यनुमित्युत्पत्त्या नादृशघटत्वाभावविषयताघटितधर्मावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदकीभूतविषयत्वादिकमादाय पटत्वे अभावोपनीतभान प्रत्यभावज्ञानस्य हेतुतयाऽभावे चातिव्याप्ति । लौकिकप्रत्यक्षनिष्ठत्वस्य कार्यताया निवेशे चातीन्द्रियाभावप्रतियोगिन्यव्याप्तिरिति वाच्यम् । नञुल्लेखप्रयोजकीभूता याऽभावप्रतीतिनिरूपितविलक्षणविषयता तान्निरूपिताधेयत्वसंबन्धावच्छिन्नप्रकारत्वान्यप्रकारताप्रयोजकविषयताया एव प्रतियोगितात्वात् । सा चाभावनिष्ठनिषेधत्वरूपधर्मावच्छिन्नाभावनिष्ठमुख्यविशेष्यता प्रतियोग्यधिकरणनिष्ठप्रकारतानिरूपिता नञुल्लेखप्रयोजिका । उक्तानुमित्युपनीतभानविषयताया तूक्तप्रयोज्यत्वं नास्ति । अभावादिशब्दोल्लेखकप्रतीतावभावस्य विधित्वरूपरूपान्तरेण भानात् । अत एवोक्त **तत्वसङ्ख्यानटीकायां** 'स्वरूपेण हि भावाभावौ विधिनिषेधात्मानौ । रूपान्तरेण तु निषेधविधिरूपौ । तत्रापातजाया संविदि स्वरूपमेवावभासते । द्वितीयादिप्रतीतौ रूपान्तरं । तथा हि प्रतीति ।

(द्वै द्यु) घटोस्ति, स न शुक्ल । नास्ति घट, अस्त्यत्र घटाभाव इति' इति । अतीन्द्रियाभावप्रतियोगिन्यपि नञ्पदाधीनशाब्दप्रतीतीयाभावविषयतानिरूपितोक्तप्रकारताप्रयोजकीभूता या प्रतियोगिवाचकपदशक्तिज्ञानीयप्रति योगिविषयता तस्या एव प्रतियोगितारूपत्वान्न तस्या अव्यसङ्ग्रह । प्रयोजकत्व च स्वरूपसम्बन्धविशेष । एत ज्ज्ञानेऽस्य विषयत्वादभावांशे अस्य प्रकारत्वमिति प्रतीतिसिद्धि ।

यद्वोक्तप्रकारतासमानाधिकरणविषयतैव प्रतियोगितास्तु । तस्या स्वरूपपरिचयायैवाभावज्ञानोपयोगि-ज्ञानीयत्वमुक्तम् । प्रतियोगिनोऽभावांशे तस्या एव ससर्गत्व स्वीक्रियते । यदि चाभेदस्य ससर्गतानङ्गीकर्तृनये नीलो घट इत्यादिबुद्धौ नीलादीना सम्बन्धानवच्छिन्नविशेषणतावत्प्रतियोगिनोऽभावांशे ससर्गानवच्छिन्नैव प्रकारता स्वीक्रियते तदा तस्या संसर्गत्व मास्त्वेव । परन्तु प्रतियोगिपदप्रवृत्तिनिमित्तत्वमेव । प्रतियोगिताया स्वरूपसम्बन्ध त्वाङ्गीकारेपि प्रतियोगिस्वरूपभूतविषयत्वाभिन्नत्वेन प्रतियोगिताया विषयतारूपत्व दुष्परिहरमेव । परन्तु प्रतियोगितास्वरूपाखण्डधर्मान्तरकल्पनमधिकम् । यद्यपि मन्मतेऽपि तादृशविषयताया प्रतियोगितात्वरूपधर्माङ्गीका[illegible] काचित्क्षतिस्तथापि प्रयोजनाभावादेव तदभाव ।

नन्वसतो ज्ञानाविषयत्वात्कथमुक्तरूपमपि प्रतियोगित्व तस्येत्यत आह ॥ **असतोपीति** ॥ **उपपादयिष्य** इति ॥ **असतः प्रतीति विनेत्यत्रेत्यर्थ** ।

(गु. टि) ननु इदं नीलमितिवत् इदमनिर्वचनीयमिति प्रत्यक्षानुपलम्भात्कथ प्रत्यक्षस्य प्रमाणीक रणमित्यत प्रत्यक्षानुपलम्भेनोपपादनानपेक्षस्य प्रत्यक्षस्य तत्र प्रमाणत्वासम्भवेपि उपपादनसापेक्षस्य नेद रजतमित्यादिप्रत्यक्षस्य तत्र प्रमाणत्वं स्यादेव । तथा हि । नेदं रजतमिति ज्ञानानन्तर मिथ्यैव रजत प्रत्यभादित्यनुवादान्यथानुपपत्त्या बाधकज्ञानस्य शुक्तिरजतमिथ्यात्वविषयकत्वसिद्धया तदनिर्वचनीयत्वविषयक-त्वसिद्धया तत्र प्रामाण्यसम्भवादिति भावेन तदुपपादयति ॥ **मिथ्यैव रजतमिति** ॥ ननु मिथ्यैव रजत प्रत्यभादित्यनुवादस्य मिथ्यात्वविषयकत्वेन तदन्यथानुपपत्त्या तन्मूलभूतबाधकप्रत्ययस्य मिथ्यात्वविषयकत्वसिद्धया मिथ्यात्वे प्रामाण्यप्राप्तावपि नानिर्वचनीयत्वे प्रामाण्यप्राप्ति । तन्नियामकस्यानिर्वचनीयविषयकत्वस्यासिद्धत्वा-दित्यतो मिथ्याशब्दानिर्वचनीयशब्दयो पर्यायत्वान्मिथ्यात्वविषयकत्वेनैवानिर्वचनीयत्वविषयकत्वसिद्धेर्नानुपपत्ति-रित्यभिप्रेत्य तयो पर्यायतामुपदर्शयति ॥ **यावदुक्त भवतीति** ॥ ननु बाधकप्रत्ययस्य रजतमिथ्यात्वा विषयकत्वेपि तदनुवादोपपत्तेर्नानुवादान्यथानुपपत्त्या बाधकप्रत्ययस्य तन्मिथ्यात्वविषयकत्वसिद्धिरित्यत आह ॥ **न चाप्रतीतमिति** ॥ अप्रतीतेति हेतुगर्भं विशेषणम् । अन्यथा आप्तत्वानुपपत्तिप्रसङ्गादिति भाव । ननु बाधकप्रत्ययस्य भ्रमत्वेप्यनुवादसम्भवेन तदन्यथानुपपत्तेरेवाभावान्नोक्तरीत्या बाधकज्ञानस्य रजतमिथ्यात्व-विषयकत्वसिद्धिरित्यत आह ॥ **न चेति** ॥ अन्यथाविज्ञातस्य सम्यग्विज्ञानस्यैव बाधकत्वादिति भाव । ननु बाधकप्रत्ययस्य प्रमात्वेपि तस्य लिङ्गादिजन्यत्वेनापि अनुवादोपपत्त्या कथं तेनोक्तविधप्रत्यक्षकल्पनमित्यत आह ॥ **नापि लिङ्गादिजन्य इति** ॥ व्याप्त्याद्यनुसन्धानविधुराणामपि जायमानत्वान्न तस्य लिङ्गादिजन्यत्वमिति भाव ।

(गु टि) ॥ **भ्रान्त्युत्थितस्येति** ॥ भ्रान्तित्वनिश्चयवत इत्यर्थ ॥ **अनुमीयत इति** ॥ भ्रान्त्युत्थितः अनिर्वचनीयविषयकप्रत्ययवान् तदा तद्वाचकशब्दप्रयोक्तृत्वात् सम्प्रतिपन्नवदित्यनुमीयत इत्यर्थः ॥ **निरर्थकत्वे चेति** ॥ अर्थवदधातुरप्रत्यय प्रातिपदिकमिति प्रातिपदिकसञ्ज्ञाया सुप्तिङन्तं पदमिति पदत्वं सिद्ध्येत् । निरर्थकत्वे च तन्न सिद्ध्यदिति भाव ॥ **तथा सतीति** ॥ पौनरुक्त्यापातादित्यर्थ । **नास्ति रजतमिति** प्रतियोगिप्राधान्येन मिथ्याशब्दार्थमभिधाय अभावप्राधान्यमाश्रित्यापि तदर्थमाह ॥ **रजतात्यन्ताभावोऽस्तीति** ॥ **किमिह कथ** का कथन्तेत्यर्थ । धर्म्यभावे कथं धर्म इति पराभिसन्धिमुद्घाटय दूषयति ॥ **न हीति** ॥ रूपादिकं यथा धर्मिसत्तासापेक्षं न तथा प्रतियोगित्वम् । घटप्रागभावादिदशायामसतोऽपि घटादे तत्प्रतियोगित्वदर्शनात् । कालान्तरे सत्त्वस्येदानीमनुपयोगादिति भाव । नन्वभावज्ञानोपयोगिज्ञानविषयत्वमविकरणस्याप्यस्ति । अत. कथ तत् प्रतियोगित्वमित्यतस्तज्ज्ञानहेतुभूतज्ञानविषयत्वविशेषस्यैव प्रतियोगित्वरूपत्वाङ्गीकारेण तज्ज्ञानहेतुभूतज्ञानविषयत्वमात्रस्य तद्रूपत्वानङ्गीकारान्नानुपपत्तिरित्याह ॥ **अभावज्ञानेति** ॥ नन्वसत प्रतीतेरभावात्तदपि कथमित्यत स्त्रैलक्षण्यज्ञानान्यथानुपपत्त्या तस्या उपपादयिष्यमाणत्वान्नानुपपत्तिरित्याह ॥ **असतोपीति** ॥

### मिथ्याशब्दो वदतीति प्रयोगे कारणाभिधानम्

(टी.) ननु पप्रपात्र यदि वदनक्रियावाची तदा शब्दस्य कर्मतैव । अथ शाब्दप्रतीतिवाची तदा करणतैव । तत्कथं शब्दो वदतीति व्यपदेशः । इत्थ । अवान्तरव्यापारवतो हि कारणस्य करणत्वं । अन्यथा अतिप्रसङ्गात् । तत्र स्वक्रियां प्रति सर्वस्य प्राधान्येन कर्तृत्वात्करणेपि शब्दे तद्विवक्षया वदतीति व्यपदेशो युज्यते । प्रधानक्रियां प्रति करणत्वमुल्लङ्घ्य किमवान्तरव्यापारे कर्तृत्वं विवक्ष्यत इति चेत् [1] प्राधान्यनिर्देशेन वाचकत्वपक्षकक्षीकरणसूचनार्थं । मिथ्याशब्देनानिर्वचनीय देवदत्तो वदतीत्यस्य वाचकावाचकपक्षसाधारण्यात् । [वदतिर्वाचकत्वे प्रयुज्यत इति चेत्सत्यम् । न तु तन्नियमः । शाब्दप्रतीतिमात्रेपि प्रयोगदर्शनात् ।]

### मिथ्याशब्देन अनिर्वचनीयावाचकेनाप्यनिर्वचनीयव्यवहार इति शङ्कानिरास

द्वितीयपक्षेपि मिथ्याशब्द इत्येवोत्तरम् । न हि तीरपुरुषादेरवाचकेनापि नदीसिंहादिशब्देन देवदत्तस्तद्वदतीति विना प्रमाणेन कल्प्यते । अपि तु वक्तुराप्तत्वनिश्चये सति वाच्यार्थानुपपत्त्यादिदर्शनेनैव । न च तथा मिथ्येतिशब्दो यस्यासौ मिथ्याशब्दो भ्रान्तेरुत्थितोऽनिर्वचनीय तेन वदतीत्यत्र किञ्चिन्मानमस्ति । अनिर्वचनीयत्वाद्रजतस्य मुख्यार्थानुपपत्तावमुख्या वृत्तिराश्रीयत इति चेन्न । परस्पराश्रयप्रसङ्गात् । सिद्धे शुक्तिरजतादेरनिर्वचनीयत्वे मिथ्याशब्दस्य तत्परत्वकल्पन तेनैव चानिर्वचनीयत्वकल्पनमिति । प्रमाणान्तरेणानिर्वचनीयताप्रतिपत्तौ तु किमनेन । तच्च निरसिष्यते ।

---

[1] प्राधान्येन निर्देशो इति (वि. टि) पाठ ।

(वि टि) ॥ वदतिरिति ॥ इक्श्तिपौ धातुनिर्देशे इति वचनात् वद व्यक्तायां वाचीति धातुरित्यर्थ ॥ अत्रेति ॥ मिथ्याशब्दोऽनिर्वचनीयं वदतीत्यत्र चेतिवाक्य इत्यर्थ ॥ कर्मतेति ॥ तथा च मिथ्याशब्द वदतीति प्रयोग स्यात्। अनभिहिते कर्मणि द्वितीयेति द्वितीयाया अनुशासनादिति भाव ॥ शाब्दप्रतीति वाचीति ॥ वदतिरित्यनुषङ्ग ॥ करणतैवेति ॥ तथा च मिथ्याशब्देनानिर्वचनीय वदतीति प्रसङ्ग । कर्तृकरणयोस्तृतीयेति करणे तृतीयाया अनुशासनादिति भाव ॥ अन्यथेति ॥ व्यापाररहितकारणमात्रस्यापि करणत्वे व्यापारस्यापि करणत्वापत्तेरित्यर्थ । नन्वस्तु व्यापारवत एव कारणस्य करणत्व । तावतोक्तदोषोद्धार कथमित्यत आह ॥ तत्रेति ॥ एव सति स्वव्यापाररूपक्रिया प्रति कारकमात्रस्य स्वातन्त्र्येण कर्तृत्वादित्यर्थ । स्वतन्त्र कर्तेति पाणिनिस्मरणादिति भाव ॥ करणेपीति ॥ शाब्दप्रतीतिरूपफलापेक्षया करणस्यापि सत. शब्दस्य स्वव्यापाररूपक्रियाकर्तृत्वविवक्षयेत्यर्थ ॥ प्रधानक्रियां प्रतीति ॥ उद्देश्यत्वेन शाब्दप्रतीतिरूपप्रधानक्रिया प्रतीत्यर्थ । अवान्तरव्यापार इति विषयसप्तमी ॥ प्राधान्येन निर्देश इति ॥ वदतीति प्राधान्येन निर्देश इत्यर्थ । ननु मिथ्याशब्देन देवदत्तोऽनिर्वचनीय वदतीत्यप्राधान्येन निर्देशेपि वाचकत्वपक्षकक्षीकरणस्य सूचितत्वसिद्धेस्तथा निर्देश कुतो न कृत इत्यत आह ॥ मिथ्याशब्देनेति ॥ शाब्दप्रतीतिमात्रेपीति ॥ देवदत्तो गङ्गाशब्देन तीर वदतीत्यादौ लक्ष्येपि वदतिशब्दप्रयोगदर्शनादित्यर्थ ।

नन्ववाचकेनापि मिथ्याशब्देन भ्रान्त्युत्थितोऽनिर्वचनीयं व्यवहरतीति कृत्वेति द्वितीयपक्षे आकरे दूषणोत्तयदर्शनात् न्यूनत्वमित्याशङ्क्याह ॥ द्वितीयपक्षेपीति ॥ तस्यैवोत्तरत्वमुपपादयितुमाह ॥ न हीति ॥ अत्र नद्या घोष, पुरुषोऽय सिंह इत्यादिवाक्येष्विति शेष ॥ तद्वदतीति ॥ तीरपुरुषादिकमित्यर्थ । अन्यत्र कृप्तलक्षणाकल्पनमेव वक्तुमाकाङ्क्षामुत्थापयति ॥ अपि त्विति ॥ वाच्यार्थानुपपत्त्यादीत्यादिपदेन तात्पर्यानुपपत्तिपरिग्रह । ननु प्रकृतेपि तत्सत्त्वात्किं लक्षणा न कल्प्यत इत्यत आह ॥ न च तथेति ॥ नन्ववाचकेनापि मिथ्याशब्देन भ्रान्त्युत्थितोऽनिर्वचनीय व्यवहरतीतिद्वितीयपक्षोत्तरत्व कथ [1]मिथ्याशब्दस्येत्याशङ्क्य तदुपपादयितुमाह ॥ मिथ्येति शब्दो यस्यासाविति ॥ भ्रान्तेरुत्थितः सञ्जातबाध । तेन मिथ्याशब्देन । नन्वस्तु मिथ्याशब्दस्यासदेव वाच्योऽर्थ । तथापि शुक्तिरजतादेरनिर्वचनीयत्वेन तत्र भ्रान्त्युत्थितेन प्रयुज्यमानमिथ्याशब्दस्य वाच्यार्थानुपपत्त्यैव लक्षणाऽश्रयणमित्यभिप्रेत्य शङ्कते ॥ अनिर्वचनीयत्वादिति ॥ तत्परत्वकल्पनमिति अनिर्वचनीयरजतादिपरत्वकल्पनमित्यर्थ । ननु न शुक्तिरजतादेर्मिथ्याशब्दव्यवहारविषयत्वान्यथानुपपत्त्याऽनिर्वचनीयत्वं ब्रूम । येन परस्पराश्रय स्यात । किं तु मानान्तरेणेत्यत आह ॥ मानान्तरेणेति ॥ किमनेन शुक्तिरूप्याद्यनिर्वचनीयत्वे मिथ्याशब्दव्यवहारविषयत्वस्यासाधकत्वेन कि तदुपन्यासेनेत्यर्थ । तथा हानिरिति भाव । तर्ह्यनिर्वचनीये तदेव मानान्तर मयोपन्यसनीयमित्यत आह ॥ तच्चेति ॥

(रा टि) ॥ कर्मतैवेति ॥ तथा च मिथ्याशब्दमिति स्यात् ॥ शाब्दप्रतीतीप्रतीत्यर्थत्वे मिथ्याशब्देनेति स्यादित्यर्थ ॥ करणत्वमिति ॥ क्रियानिष्पादकत्व

(रा टि) व्यापारहीनस्यापि करणत्वे सदा तत क्रियोत्पादप्रसङ्गादित्यर्थ ॥ **वाचकत्वपक्षकक्षीकरणेति** ॥ अनिर्वचनीयवादिनो मत इति योज्यम् । अत एवाग्र **निराकरोती**ति वाचकत्वपक्षापाकरणपरतया पूर्वं तद्वाक्य योजितमिति भाव ॥ **शाब्दप्रतीतिमात्र इति** ॥ करीरपदेन घट वदति चैत्र इत्यादौ घटशब्देन प्रत्याययतीत्यपि दर्शनादिति भाव । यद्वा सिंहपदेन चैत्रं वदति मैत्र इत्यादौ चैत्रं बोधयतीत्यपि दर्शनादिति भाव ॥ **द्वितीयपक्षेपीति** ॥ **अवाचकेनापी**ति पक्ष इत्यर्थ । मूलवाक्यार्थमग्रे विवक्षुरुपोद्घातमाह ॥ **न हीत्यादिना** ॥ **तदिति** ॥ तीरादिकमित्यर्थ । अनुपपत्त्यादीत्यादिपदेन सम्बन्धप्रयोजनयोर्ग्रह । मूलार्थमाह ॥ **न चेत्यादिना** ॥ **तेनेति** ॥ मिथ्येतिशब्देनेत्यर्थ ॥ **किञ्चिन्मानमिति** ॥ मुख्यार्थबाधादित्यर्थ । शङ्कते ॥ **अनिर्वचनीयत्वादिति** ॥ ॥ **मुख्यार्थेति** ॥ असत्त्वादिरूपेत्यर्थ. ॥ **अमुख्येति** ॥ अनिर्वचनीयत्वरूपामुख्यार्थे वृत्तिराश्रीयते मिथ्या शब्दस्य मिथ्यैव रजत प्रत्यभादित्यनुवादवाक्य इत्यर्थ· ॥ **तेनैवेति** ॥ अनुवादवाक्यगतमिथ्याशब्देनैवेत्यर्थ । प्राक्तथैवोक्तेरिति भाव ॥ **किमनेनेति** ॥ मिथ्याशब्दात्तत्सिद्धिकथनेनेत्यर्थ ॥ **निरसिष्यत इति** ॥ अनुपदमिति भावः ।

वे टि) ॥ **तदा शब्दस्य कर्मतैवेति** ॥ तथा च चैत्रो मिथ्याशब्दमनिर्वचनीयपरत्वेन वदतीति प्रयोगापत्तिरित्यर्थ ॥ **अथ शाब्दप्रतीतिवाचीति** ॥ देवदत्तो घटशब्देन घट बोधयतीत्यर्थे घट वदतीति प्रयोगादिति भाव ॥ **तदा करणतैवेति** ॥ तथा च मिथ्याशब्देनानिर्वचनीयं वदतीति प्रयोग स्यादिति भाव । शाब्दप्रतीतिवाचित्वमभ्युपेत्य परिहर्तुमाह ॥ **अवान्तरेति** ॥ **अन्यथेति** ॥ दार्वसयुक्तकुठारादेश्छिदिक्रियाजनकत्वप्रसङ्गादित्यर्थ ॥ **तत्र स्वक्रियां प्रतीति** ॥ यथा कुठारस्य छिदिक्रिया प्रति करणत्वेपि दारुसयोगलक्षणावान्तरव्यापाररूपस्वजन्यक्रिया प्रति कर्तृत्व । कुठारो दारुणा सयुज्यत इति व्यवहारात् । अत एव हता रामशर इत्यादिकमुपपद्यते । तद्वच्छाब्दप्रतीतिं प्रति करणत्वेपि शब्दस्यावान्तरव्यापार प्रति कर्तृत्वापेक्षयाय व्यपदेश इत्यर्थ ॥ **प्राधान्यनिर्देशेनेति** ॥ कर्तृत्वनिर्देशेनेत्यर्थ । मिथ्याशब्दस्य वदतीति कर्तृत्वनिर्देशेन कथमनिर्वचनीयवाचकत्वपक्षकक्षीकरणसूचनमित्यत आह ॥ **मिथ्याशब्देनेति** ॥ देवदत्तो घटशब्देन घट वदति गङ्गा शब्देन तीर वदति सिंहशब्देन क्रूरं वदतीत्यादिप्रयोगादस्य व्यवहारस्य वाचकावाचकपक्षसाधारण्यात् तथा प्रयोगे मिथ्याशब्दस्यानिर्वचनीयवाचकत्व न ज्ञायेत । तदभावेपि तस्य सम्भवात् । मिथ्याशब्द इति प्रयोगे तु तद्वाचकत्व ज्ञायते । अन्यथा करणस्य शब्दस्य कर्तृतया प्राधान्येन निर्देशवैयर्थ्यप्रसङ्ग इति भाव ॥ ननु मिथ्याशब्देना ...य वदतीत्युक्तेपि मिथ्याशब्दोऽनिर्वचनीयवाचक इति ज्ञातु शक्यत एव । घटशब्देन घट वदतीति वदतेर्वा ...गादित्यभिप्रेत्य शङ्कते ॥ **वदतिरिति** ॥ कुतो न नियम इत्यत आह ॥ **शाब्दप्रतीतिमात्रेपीति** । ...देनानिर्वचनीय वदतीत्यस्य मिथ्याशब्दस्यानिर्वचनीयावाचकत्वेपि सम्भवान्न वाचकत्वपक्ष ...नुपपत्त्यादिदर्शनस्य वाक्याप्रामाण्येनाप्युपपत्त्याऽमुख्यार्थप्रत्यायकत्व न सम्भवतीत्यत ...**सतीति** ॥ यथोक्त **कर्मनिर्णये** 'विरोधादमुख्यवृत्तिर्वाऽऽसत्त्वनिश्चये । आम...

...इति । वाच्यार्थानपपत्त्यादी...

(वे टि) मिथ्याशब्दपदं शब्दपरतया व्याख्यातम्। इदानीं लक्षकत्वपक्षकक्षीकरणसूचकत्वसिद्ध्यै बहुव्रीहिणा पुरुषपरमित्याह ॥ **मिथ्येतिशब्दो यस्यासाविति** ॥ नन्वस्तु मिथ्याशब्दस्यासदेव वाच्यार्थस्तथापि शुक्तिरजतादेरनिर्वचनीयत्वेन तत्र भ्रान्त्युत्थितेन प्रयुज्यमानस्य मिथ्याशब्दस्य वाच्यार्थानुपपत्त्यैव लक्षणाश्रयणमित्यभिप्रेत्य शङ्कते ॥ **अनिर्वचनीयत्वादिति** ॥ **मुख्यार्थानुपपत्ताविति** ॥ मिथ्याशब्दस्यासत्त्वरूपमुख्यार्थानुपपत्तावित्यर्थ ॥ **तेनैवेति** ॥ मिथ्याशब्दस्यानिर्वचनीयपरत्वकल्पनेन तद्व्यवहारमूलप्रत्यक्षकल्पने तेनानिर्वचनीयसिद्धिरित्यर्थ । नन्वनुमानादिना शुक्तिरूप्यादेरनिर्वचनीयत्वे सिद्धे मुख्यार्थानुपपत्तावमुख्यवृत्तिराश्रीयत इत्याशङ्क्य दूषयति ॥ **प्रमाणान्तरेणेति** ॥ **अनेन** प्रत्यक्षोपपादनेनेत्यर्थ । पुरुषदोषोय न प्रमेयदोष इत्यत आह ॥ **तच्चेति** ॥

(द्वै द्यु) ॥ **वदतिरिति** ॥ वदधातुरित्यर्थ । **वदनक्रिया** उच्चारणरूपक्रिया ॥ **कर्मतैवेति** ॥ शब्दमुच्चारयति वदतीति प्रयोगादिति भाव ॥ **शाब्दप्रतीतिवाचीति** ॥ तदनुकूलव्यापाररूपतद्घटितार्थवाचीत्यर्थ । ॥ **करणतैवेति** ॥ विक्लृत्यनुकूलव्यापाररूपपाके काष्ठाना करणत्वेन काष्ठै पचतीतिवत् मिथ्याशब्देनानिर्वचनीयं वदतीति प्रयोग स्यादिति भाव । दृष्टान्ते दार्ष्टान्तिके च धात्वर्थव्यापारनिरूपितकरणत्व काष्ठशब्दनिष्ठं तन्निष्पाद्यनिष्पादकत्वरूप पारिभाषिकमेव । धात्वर्थकोटिप्रविष्टविक्लृत्तिप्रतीत्यादिरूपफलान्वित मुख्यमेव वा द्रष्टव्य ॥ **तत्कथमिति** ॥ शब्दे कर्तृत्वस्य सर्वथाऽयोगादिति भाव ॥ **अवान्तरेति** ॥ उर्ध्वाधोदेशसयोगादिरूपावान्तरव्यापारविशिष्टस्यैव कुठारादेश्छिदाकरणत्वस्य दृष्टत्वादित्यर्थ ॥ **अन्यथेति** ॥ प्रागभावेन छिनत्तीति प्रसङ्गादित्यर्थ. । **प्राधान्येन** । आश्रयत्वेन । इद कर्तृत्वोपपादक । **कर्तृत्वात्** प्रकृतधात्वर्थकर्तृत्वात् ॥ **तद्विवक्षयेति** ॥ शब्दनिष्ठशक्तिज्ञानविषयत्वादिव्यापारविवक्षयेत्यर्थ ॥ **युज्यत इति** ॥ यथा विक्लृत्त्यनुकूलचैत्रादिनिष्ठव्यापारो यदि धात्वर्थस्तदा तत्र काष्ठानामुक्तरीत्या करणत्वात्काष्ठै पचतीति प्रयोग यदा तु काष्ठनिष्ठक्षिप्रप्रज्वलनरूपव्यापारो यदि धात्वर्थस्तदा तदाश्रयत्वेन कर्तृत्वात् काष्ठ पचतीति प्रयोग तथा शाब्दप्रतीत्यनुकूलचैत्रनिष्ठशब्दोच्चारणादिरूपवदधात्वर्थव्यापारनिरूपितकरणतावत शब्दस्यापि तादृशप्रतीत्यनुकूलव्यापारभूतस्य शक्तिमत्त्वादिना शीघ्रस्मृतिविषयत्वादेराश्रयतया कर्तृत्वात् शब्दो वदतीति व्यवहारो युज्यत इत्यर्थ ॥ **वाचकत्वपक्षेति** ॥ मिथ्याशब्दस्यानिर्वचनीयवाचकत्वरूपप्राग्विकल्पितकल्पमङ्गीकृत्य पूर्वपक्षिण प्रत्यवस्थानसूचनार्थमित्यर्थ । शक्तिस्मृतिविषयत्वादेर्व्यापारत्वेनैव धात्वर्थतया कथमनेन वाचकत्वपक्षावलम्बनमेवेदानी पूर्वपक्षिण इति ज्ञातु शक्यमित्यत **प्राधान्यनिर्देशेनेति** । अनुमेयत्वरूपज्ञाप्यत्वमित्थम्भूतलक्षणतृतीयार्थभूत कक्षीकरणान्वयि । यद्वा तृतीयार्थतल्लिङ्गकत्वमनुमित्यनुकूलव्यापाररूपसूचनपदार्थघटकानुमितावन्वेति । व्यापारश्च मानसो विमर्शात्मक । तन्निर्वाहकश्चाय व्यपदेश इति भाव । यथा चैत्र पचतीति विहाय काष्ठ पचतीति केनचिदभिहिते श्रोतुर्विमर्शो जायते । अय मुख्यकर्तृव्यापारतात्पर्यं विहाय किमर्थममुख्यकरणादिनिष्ठव्यापारतात्पर्येण धातु प्रयुङ्क्त इति । तत अय काष्ठनिष्ठो य प्रकृतविक्लृत्त्यनुकूलोऽतिशयस्तद्बोधतात्पर्यवान् पाकमुख्यकर्तृचैत्रतुल्यतया प्राधान्येन तन्निर्देशकर्तृत्वात् । शरवृत्त्यतिशयबोधतात्पर्येण हन्ता रामशर इत्यादिवाक्यप्रयोक्तृवत् । यो यादृश-

(द्वि. द्यु) फलमुख्यकर्तृतुल्यतया कर्तृत्वेन तदनन्तरकारणनिर्देशकर्ता प्रेक्षावान् स तन्निष्ठप्रकृतफलानुकूलातिशय बोधतात्पर्यवानिति सामान्यमुखी व्याप्तिः । तादृशातिशयः कीदृशः स्यादिति विमर्शे अन्यस्यासम्भवात् क्षिप्रप्रज्वलनादिकमेव स इति निश्चिनोति । तद्वत्प्रकृतेपि शाब्दप्रतीतिरूपफलं प्रति मुख्यतया निर्वाहकवाक्यप्रयोक्तृतुल्यतया मिथ्याशब्दस्य कर्तृत्वेन निर्देशकर्तृत्वादयं पूर्वपक्षी मिथ्याशब्दनिष्ठानिर्वचनीयशाब्दबोधौपयिककिञ्चिदतिशयबोधनतात्पर्यवानिति निश्चयो जायते । ततः तादृशातिशयस्तद्वाचकत्वमेव भवेत् । लक्षणादीनामनुपपत्तिज्ञानादिविलम्बितोपस्थितिकानामतिशयरूपत्वासम्भवात् । शक्तेरवश्यं प्राथमिकग्रहविषयत्वेन तत्सम्भवादिति निश्चयो जायत इति क्रमेण प्राधान्यनिर्देशस्य वाचकपक्षाङ्गीकाररूपकक्षीकरणज्ञापकत्वं तदनुमितौ लिङ्गत्वं च निर्वहतीति भावः । अङ्गीकारोपि तद्बोधतात्पर्यमेवेति नोक्तविरोधः । अनुमित्यवयपक्षे करणतृतीयैव । धूमेन वह्न्यनुमानाय यतत इतिवदिति द्रष्टव्यम् । मिथ्याशब्देनेत्युक्तौ वाचकत्वस्यैव कुतो विशिष्य न लाभ इत्यत आह ॥ **मिथ्याशब्देनेति** ॥ ॥ **साधारण्यादिति** ॥ कर्तृत्वेन निर्देशाभावे उक्तरीत्या विमर्शद्वारानुमितिर्नैव जायते । अनुमितावुक्तलिङ्गास्फूर्तेर्विमर्शबीजाभावाच्च । शाब्दप्रतीतिकरणत्वं तु लाक्षणिकालाक्षणिकपदसाधारणम् । तेन च न शब्दस्य वाचकत्वसिद्धिः । तत्प्रयोगेण च प्रयोक्तुर्न वाचकत्वपक्षाभिप्रायत्वसिद्धिरिति भावः ।

ननु तत्पदस्य तद्वाचकत्वे सति घटपदेन घटं वदतीति प्रयोगात् घटे घटपदवाच्यत्वसिद्धिवत् मिथ्याशब्देन अनिर्वचनीयं वदतीत्युक्तावपि तत्कर्मकवदधात्वर्थान्वितस्वार्थज्ञानकरणत्वलिङ्गेन मिथ्याशब्दस्यानिर्वचनीयवाचकत्वसिद्धौ तत्प्रयोगाद्वाचकत्वपक्षाङ्गीकारसिद्धिश्च भवतीति गूढाभिसन्धिराशङ्कते ॥ **वदतिरिति** ॥ **वाचकत्वे** वाचकत्वे सति । गूढाभिसन्धिरेवाभिप्रायमजानान इव परिहरति ॥ **सत्यमिति** ॥ वाचकत्वे सति प्रयुज्यता नाम । तावता नास्माकं काचित्क्षतिरिति भावः । नियमबोधकैवकाराप्रयोगेऽपि सर्वं वाक्यं सावधारणमिति न्यायान्नियमपरमेव मद्वाक्यम् । अतोऽवतारिकोक्तरीत्या अस्मदभिमतसिद्धिरिति तदभिप्रायस्फुटीकरणे अस्याभिप्रायमाविष्करोति ॥ **न त्विति** ॥ तथा च भवदुक्तनियमासिद्धेरुक्तशङ्का न युक्तैवेति भावः । कुत इत्यतो व्यभिचारादित्याह ॥ **शाब्दप्रतीतिमात्र इति** ॥ तत्पदवाच्यविषयकत्वलक्ष्यविषयकत्वादिविशेषमपहाय तज्जन्यशाब्दप्रतीतिसामान्यघटितार्थे वदतेर्भूरिप्रयोगदर्शनादित्यर्थः । **मात्रेणेति** तृतीयान्तपाठे तेन निमित्तेनेत्यर्थः । अध्ययनेन वसतीत्यादौ फलस्यापि निमित्तत्वादिति भावः ।

एतेन लाक्षणिकं पदं नानुभावकमित्यभियुक्तोक्तेर्लाक्षणिकपदस्य शाब्दप्रतीतिकरणत्वाभावेन करणत्वबोधकेन **मिथ्याशब्देनानिवचनीयं वदतीति** निर्देशेनापि वाचकत्वपक्षकक्षीकरणसूचनसम्भवादुक्तकुसृष्ट्यादरणमूलकृतामयुक्तमेवेत्यपि निरस्तं । देवदत्तो गङ्गापदेन तीरं वदति बोधयतीत्यादिप्रामाणिकव्यवहारबलेन लाक्षणिकपदस्यापि करणतायाः सिद्धत्वात् । सिद्धविषयस्य युक्त्याऽपह्नोतुमशक्यत्वात् ।

॥ **वदतिर्वाचकत्वे इति** ॥ **वाचकत्वे** इत्येतन्न सति सप्तम्यन्तम् । किं तु विषयसप्तमी । तथा च वदतिर्वाचकत्वरूपविषये प्रयुज्यते वाचकत्ववाचक इति यावदिति व्याख्यानमसत् । एतच्छङ्कनस्य पूर्वोक्तसा-

(द्वै घु ) धारण्यदूषणद्वारा शब्दो वदतीति प्रयोगासामञ्जस्यासम्पादकतया वाचकत्वस्यैव धातुमुख्यार्थत्वे शब्दस्यैव मुख्यकर्तृत्वप्राप्त्या पूर्वोक्तवैपरीत्यस्यैव सम्पादकतया च असङ्गतत्वापत्ते । न चैतद्वाक्यस्योक्तार्थकत्वे तटस्थस्यैवेयमाशङ्का । तथा हि । ननु पूर्वोक्तरीत्या काष्ठ पचतीति प्रयोगवत् एतत्प्रयोगसमर्थनं भवतामयुक्तम् । वदतेर्वाचकत्ववाचकतया तन्मुख्यकर्तृभूतमिथ्याशब्दे कर्तृत्वव्यवहारस्य मूलकृत्कृतस्य स्वत एव युक्तत्वादिति तस्याभिप्राय इति वाच्यम् । तथात्वे सत्यमित्यादिपरिहारग्रन्थासङ्गतिप्रसङ्गात् । सत्यमित्यनेन वदतेर्वाचकत्वार्थकत्वस्य स्वयमङ्गीकृतत्वस्य प्राप्त्या तेन शङ्कादार्ढ्ये सति अन्यत्रापि तत्प्रयोगप्रदर्शकेणोत्तरवाक्येन तदपरिहारात । न ह्यन्यत्र प्रयोगा वर्तन्त इत्येतावता मुख्यार्थप्रयोगो न कर्तव्यो येनेद सङ्गत स्यादिति उक्तरीत्यैव व्याख्या युक्ता ।

ननु भवद्व्याख्याने वदतेर्वाचकत्ववाचकत्व नास्त्येवेति टीकाकृदभिप्राय इत्यागतम् । अन्यथा तेषामुक्त रीत्यनुसरणस्य असङ्गतत्वापत्ते । तथा च स न युक्त । गङ्गापदं नदीं वक्ति ब्रूते न तीरमिति प्रामाणिकव्यवहारानुरोधेन वचब्रूञादीना वाचकत्वार्थकत्वस्याविवादतया तत्समानार्थकवदतेरपि तदर्थकत्वप्राप्ते । गोपद गा वदति नाश्वमित्यादिव्यवहारस्यापि सत्त्वात् शक्तिवादादौ **गदाधरप्रभृतिभिः** उक्तधातूना शक्त्यर्थकत्वस्यैवाश्रयणादिति चेन्न । चैत्रो वदति मैत्रो वदति वक्ति ब्रूते परे वदन्ति सङ्गिरन्ते इत्यादीना प्रयोगाणा बहुलमुपलम्भात् पुरुषकर्तृकव्यापार एव तत्धातूना मुख्यार्थे । गोपद गा ब्रूत इत्यादीना प्रयोगाणा विरलाना काष्ठ पचतीत्यादिवत् उक्तरीत्योपपन्नत्वान्न शक्तिर्मुख्यार्थे । प्रयोगप्राचुर्यस्यैव तद्वाचकत्वनियामकत्वात । अन्यथा काष्ठस्थाल्यादिव्यापाराणामपि पचिमुख्यार्थत्वप्रसङ्गात् । शक्तिवादे उक्तधातूना शक्तिमुख्यार्थकत्व नाश्रितमेव । अवान्तरव्यापार शक्तिरेवेत्यभिप्रायेण यदा तादृशप्रयोग तद्वाक्यार्थविचारपराण्येव तद्वाक्यानि । मुख्यार्थत्वाभिप्रायकत्वे त्वनुपादेयान्येव । ननु शक्तेरवान्तरव्यापारत्वे शब्दो वदतीति वाक्येनैव शाब्दबोधानुकूलशक्तिमत्त्वस्य शब्दमर्यादया लाभात् किमर्थं प्राग्वाचकत्वपक्षकक्षीकरणसूचनार्थमित्युक्तम् । वाचकत्वपक्षलाभायेत्येव वक्तव्य स्यादिति चेन्न । स्वरूपसच्छक्ते शब्दानुपयोगितया तद्रूत्त्वेन ज्ञानविषयताया एव धातुबोध्यत्वात । तद्विषयशक्तेरपि तथात्वेपि व्यापारत्वेनैव धातुबोध्यतया शक्तित्वेनालब्धतया तल्लाभस्यानुमानफलत्वेन पूर्वोक्तिसम्भवात् ॥ **एतदेवोत्तरमिति** ॥ तथा चोक्तिलाघवेनास्यैवोभयपक्षदूषणपरत्वात्स्वायत्त इति न्यायेन **मिथ्या शब्दोऽनिर्वचनीयवाचक इत्यत्र चे**त्येव कुतो नोक्तमिति शङ्कानवकाश ॥ **तेनेति** ॥ मिथ्याशब्देनेत्यर्थ । एतेन तृतीयान्तमबहुव्रीहिसमासापन्नमेव मौलं मिथ्याशब्दपदमावर्तत इत्युक्त भवति ॥ **प्रमाणान्तरेणेति** ॥ वक्ष्यमाणानुमानादिनेत्यर्थः **किमनेन** [1]तदुपजीव्यानिर्वचनीयविषयकत्वसिद्धिकप्रत्यक्षप्रमाणस्यैव प्रथममुपन्यासेन । **किं** न किमपि । अनिर्वचनीयसिद्धिर्न भवतीति भाव ।

(गु टि ) नन्वत्र वदति किं वचनक्रियावाची किं शब्दजन्यप्रतीतिवाची । नाद्य. । तथा सति क्रिया प्रति कर्मत्वेन कर्मणि द्वितीयेति द्वितीयाप्राप्त्या शब्द वदतीति प्रयोगापत्ते । न द्वितीय । श

[1] तदुपजीवकानिर्वचनीय इति पाठेन भाव्यमिति भाति.

(गु टि) प्रतीतिं प्रति शब्दस्य करणत्वेन कर्तृकरणयोस्तृतीयेति तृतीयाया मिथ्याशब्देनानिर्वचनीय वदतीति स्यात्। उभयथापि शब्दो वदतीत्यनुपपन्नमिति भावेन शङ्कते ॥ नन्विति ॥ शाब्दप्रतीतिवाचीति द्वितीय पक्षमेवाङ्गीकुर्म। न चैव तृतीयाप्रयोगप्रसङ्ग। प्रधानक्रियाया करणस्यापि शब्दस्य प्रतिपादनरूपावान्तरक्रियाया कर्तृत्वेन तद्विवक्षया मिथ्याशब्दो वदतीति कर्तृत्वव्यपदेशो युक्त। देवदत्त काष्ठै स्थाल्यामोदन पचतीत्यादौ देवदत्तकर्तृकाया पचनक्रियाया काष्ठाना करणत्वेपि ज्वलनलक्षणायामवान्तरक्रियाया कर्तृत्वविवक्षया काष्ठानि ज्वलन्तीति प्राधान्यव्यपदेशदर्शनात्। अन्यथा काष्ठानि ज्वलन्तीति प्रयोगाभावप्रसङ्गात्। न च सिद्धे क्रियाद्वैविध्ये अवान्तरक्रियाप्राधान्यविवक्षया कर्तृत्वव्यपदेश समर्थनीय। क्रियाद्वैविध्यमेव कुत सिद्धमिति वाच्यम्। अवान्तरव्यापारवत कारणस्यैव करणत्वदर्शनेन [1]कारकत्वेनैवावान्तरव्यापारसिद्ध्या क्रियाद्वैविध्यस्यावश्यकत्वादित्याशयेनाह ॥ **अवान्तरव्यापारवतो हीत्यादिना** ॥ **अन्यथेति** ॥ अवान्तरव्यापारवत्त्वाभावेपि कारकत्वे कालादेरपि कारकत्वं स्यादित्यतिप्रसङ्गादित्यर्थ ॥ **शाब्दप्रतीतिमात्रेपीति** ॥ तथा च मिथ्याशब्देनानिर्वचनीय वदतीत्यस्यानिर्वचनीयावाचकत्वेपि सम्भवान्न वाचकत्वपक्षज्ञानमित्यर्थ। मूले पक्षद्वयनिरासाप्रतिभासादुक्तरीत्या विकल्पेन ग्रन्थोत्थानानुपपत्तिमाशङ्क्य आद्यपक्षनिरासकत्वेन योजितस्य मूलग्रन्थस्यैव तदुत्तरत्वान्नानुपपत्तिरित्याशयेनाह ॥ **द्वितीयेपीति** ॥ अत्र पक्षे पूर्वोक्तयोजनाया बाधितत्वात्प्रकारान्तरेण योजयति ॥ **न हीत्यादिना** ॥ वाक्यार्थानुपपत्त्यादिदर्शनस्य वाक्याप्रामाण्येनाप्युपपत्त्या अमुख्यार्थप्रत्यायकत्व न भवतीत्यत उक्तम् ॥ **वक्तुराप्तत्वनिश्चये सतीति** ॥ यथोक्तं **कर्मनिर्णये** विरोधादमुख्यवृत्तिर्वा आप्तत्वनिश्चये। आप्तत्वानिश्चये प्रामाण्यमेव न भवतीति। **तात्पर्यवादिमतमाश्रित्य वाक्यार्थानुपपत्त्यादीति**। आदिपदेन तात्पर्यानुपपत्तिपरिग्रह। ननु प्रकृतेपि रजतस्यानिर्वचनीयत्वेन मिथ्याशब्दमुख्यार्थस्यासत्त्वस्यासम्भवेन मुख्यार्थानुपपत्त्यादिरूपज्ञापकप्रमाणसद्भावेनावाचकेनापि मिथ्याशब्देनानिर्वचनीयव्यवहारस्सम्भवतीति शङ्कते ॥ **अनिर्वचनीयत्वादिति** ॥ **मुख्यार्थानुपपत्ताविति** ॥ मिथ्याशब्दस्यासत्त्वरूपमुख्यार्थानुपपत्तावित्यर्थ ॥ **तेनैवेति** ॥ मिथ्याशब्दस्यानिर्वचनीयपरत्वकल्पनेन तद्व्यवहारमूलप्रत्यक्षकल्पने तेनानिर्वचनीयत्वसिद्धिरित्यर्थ। ननु मिथ्याशब्दस्यानिर्वनीयत्वपरत्वकल्पनस्य शुक्तिरजतादेरनिर्वचनीयत्वसिद्ध्यधीनत्वेपि शुक्तिरजतादेरनिर्वचनीयत्वसिद्धेर्न मिथ्याशब्दस्यानिर्वचनीयत्वपरत्वकल्पनाधीनत्वम्। प्रमाणान्तरेणैव तस्यानिर्वचनीयत्वसिद्धे.। ततश्च परस्परसिद्धिसापेक्ष्याभावान्नान्योन्याश्रय इत्याशङ्क्याह ॥ **प्रमाणान्तरेणेति** ॥ **किमनेनेति** ॥ प्रत्यक्षोपपादनेनेत्यर्थ। अस्तु तर्हि तदेव प्रमाणमित्यत आह ॥ **तच्चेति** ॥ **निरसिष्यते** अनुपदमेवेति शेष.।

### अनिर्वचनीयस्यानुमानसिद्धत्वशङ्का तन्निरासश्च

**(टी) माभूत्प्रत्यक्षेणानिर्वचनीयार्थसिद्धिः। विवादपदमनिर्वचनीयम्। बाध्यत्वात्। यन्नैवं न तद्बाध्यं यथात्मेत्यनुमानेन भविष्यतीत्यत आह**

---

[1] रणत्वनैवावान्तरव्यापारसिद्ध्या इति पाठेन भाव्यमिति भाति।

(टी.) अनुमानस्य चाप्रसिद्धविशेषणः पक्षः।

चशब्दः प्रत्यक्षनिराकरणेनानुमाननिराकरणसमुच्चये वर्तते।

### अनिर्वचनीयसाधकानुमाने अप्रसिद्धविशेषणत्वदोषसमर्थनम्

एतदनुमानप्रवृत्तेः प्रागनिर्वचनीयस्य क्वाप्यप्रसिद्धत्वेनायमनुमानस्य पक्षोऽप्रसिद्धविशेषणो भवति। ननु विशिष्टस्य पक्षत्वं। तत्कथमप्रसिद्धविशेषणः पक्ष इति निर्देशः स्यात्। न हि तद्विशिष्टस्य तद्विशेषणं भवति। आत्माश्रयप्रसङ्गात्। सत्यम्। पक्षपदेन तदेकदेशो धर्मी लक्ष्यत इत्यदोषः। यद्विशेषणेनायं पक्षस्तदप्रसिद्धमिति वा।

### अप्रसिद्धविशेषणत्वस्यासाधकत्वहेतुत्वसमर्थनम्

अथ कथमप्रसिद्धविशेषणत्वमसाधकत्वे हेतुः? व्याप्तिपक्षधर्मताविरहात्। न ह्यप्रतीतेन कस्यापि व्याप्तिश्शक्यग्रहा। सन्दिग्धसाध्यधर्मवांश्च पक्षः। न चाप्रसिद्धविशेषणोल्लेखी सन्देहो युज्यते।

### केवलव्यतिरेकिणि अप्रसिद्धविशेषणत्वस्य दूषणत्वसमर्थनम्

न च वाच्यं केवलव्यतिरेकिणो नाप्रसिद्धविशेषणत्वं दूषणमिति। तथा सत्यन्यत्रासम्भवेन तत्कथाया एव वृथात्वापातात्। दूषणत्वोपयुक्तप्रकारानिरासे च केवलव्यतिरेकितामात्रस्यानुपयोगित्वात्। व्यतिरेकव्याप्तिस्तत्र ग्रहीष्यत इति चेन्न। प्रतियोगिप्रतीतिमन्तरेण व्यतिरेकस्यापि प्रत्येतुमशक्यत्वात्। एवं सति केवलव्यतिरेकिभङ्गः स्यादिति चेन्न। सामान्यप्रसिद्ध्या तत्प्रवृत्तिसम्भवात्। तदभावे तद्भङ्गस्येष्टत्वात्।

(वि टि) नन्वनिर्वचनीये प्रत्यक्षवन्मानान्तरस्य निरासे कर्तव्ये अनुमानमात्रस्याप्रसिद्धविशेषणत्वदूषणोक्तिरयुक्तेत्याशङ्क्याह॥ **मा भूदिति॥ प्रत्यक्षेणेति॥** सञ्जातबाधस्य मिथ्यैव रजतं प्रत्यभादित्यनुवादमूलभूतप्रत्यक्षेणेत्यर्थः॥ **विवादपदमिति॥** अधिष्ठानान्यत्वे सति दोषप्रयुक्तभानमित्यर्थः॥ **अनिर्वचनीयमिति॥** सदसद्विलक्षणमित्यर्थः॥ **बाध्यत्वादिति॥** अव्याप्यवृत्त्यन्यत्वे सति स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वादित्यर्थः। अप्रसिद्धविशेषणत्वस्यानुमानदूषणत्वेन समुच्चेतव्याभावेन चशब्दानुपपत्तिमाशङ्क्याह॥ **चशब्द इति॥** एतच्चोपलक्षणम्। पूर्वोक्तन्यायेन यस्मादित्यर्थेऽपि वर्तत इति द्रष्टव्यम्। तथा चायमर्थः। यस्मादनुमानस्य पक्षोऽप्रसिद्धविशेषणो भवति तस्मादनुमानमपि नानिर्वचनीयसाधकमिति। ननु साध्यधर्मविशिष्टस्यैव धर्मिणः पक्षशब्दार्थत्वेन साध्यस्य च तद्विशेषणत्वे विशिष्टविशेषणस्य विशेषणवृत्तित्वनियमेनाऽऽत्माश्रयत्वप्रसङ्गादिति पृच्छति॥ **ननु विशिष्टस्येति॥ तदेकदेशः** पक्षपदार्थैकदेशः॥ **लक्ष्यत इति॥** एवंविधस्थलीयलक्षणाया निरूढलक्षणात्वेन प्रयोजनाभावो न दोषायेति भावः॥ **यद्विशेषणेनेति॥ यद्विशेषणेन** सिषाधयिषितधर्मरूपेण प्रवृत्तिनिमित्तेन **अयं** बुद्धिस्थो यः कश्चिद्धर्मी **पक्षः** पक्षपदेनाभियुक्तैर्व्यवह्रियते तत् विशेषणमप्रसिद्धमिति वा तदर्थ इत्यदोष इत्यर्थः।

(वि टि ) अयमाशय । चूताद्यनेकवृक्षसमुदायस्य वनशब्दार्थत्वेपि 'वने चूत' इत्यादिप्रयोगे वनशब्दो-यथा मुख्यार्थ एव सिषाधयिषितसाध्यरूपविशेषणतद्धर्मिरूपविशेष्यतदुभयसम्बन्धरूपसमुदायस्य पक्षशब्दार्थ-त्वेप्यप्रसिद्ध विशेषण सिषाधयिषितधर्मरूप यस्मिन्नुक्तसमुदाये पक्षशब्दार्थेऽस्ति सोयमप्रसिद्धविशेषण पक्ष इति सप्तम्यर्थे बहुव्रीह्याश्रयणात्पक्षशब्दो मुख्यार्थ एव । न चैवमात्माश्रयदोष । साध्यरूपविशेषणस्यापि पक्षशब्दार्थ-भूतोक्तसमुदायप्रविष्टत्वादिति वाच्यम् । वने चूत इत्यादिवत् पक्षे साध्यमिति यथाधितप्रत्ययात्सिद्धविषयत्वेन तस्या दोषत्वादिति ।

नन्वप्रसिद्धविशेषणत्वं कथ हेतुदुष्टत्वे कारणम् । हेत्वाभासानन्तर्गतत्वादित्याशयेन पृच्छति ॥ **अथ कथ-मिति** ॥ हेत्वाभासानन्तर्गतत्वेप्युपाधिवद्व्याप्यत्वासिद्ध्यादिसम्पादकत्वेन हेतुदुष्टत्वे कारणत्वमुपपद्यत एवेत्याशये-नोत्तरयति ॥ **व्याप्तीति** ॥ **अप्रतीतेनेति** ॥ साध्येन निरूपितेति शेष । यद्यप्यसाधकत्वमात्रं प्रसिद्धं तथापि प्रकृतसाध्यासाधकत्व प्रकृतसाध्यप्रसिद्धिविरहादप्रसिद्धमिति भाव । पक्षताविरहमुपपादयति ॥ **सन्दिग्धेति** ॥ यद्यपि सन्देहघटितपक्षता न सार्वत्रिकी । घनगर्जितादिस्थलेऽभावात् । किञ्च वादिप्रतिवादिनो स्वपक्षनिर्णय-वत्त्वेन सशय एवासम्भवी । तथापि प्राचीनरीत्या वादकथाया सशयस्य पक्षत्वप्रयोजकत्वसम्भवादियमुक्तिरिति ध्येयम् ॥ **न चाप्रसिद्धेति** ॥ संशयस्य कोटिद्वयोपस्थितिसाध्यत्वादिति भाव ॥ **तथा सतीति** ॥ गृहीतसाध्य निरूपितव्याप्तिकत्वादन्यस्यान्वयित्वस्याभावेनान्वयिनि साध्याप्रसिद्धेरेवासम्भवेनागृहीतसाध्यनिरूपितव्याप्तिकतया व्यतिरेकिण्येव तद्दूषणत्वमुपेयम् । तत्रापि तदनभ्युपगमे साध्याप्रसिद्धिदूषणत्वकथाया एवोच्छेदापातादिति भाव । यद्वा यदि साध्याप्रसिद्धिर्व्यतिरेकिणि न दूषणं तदा तुल्यन्यायतया अन्वयिन्यपि तद्दूषणत्वस्यासम्भवापातेन साध्याप्रसिद्धिदूषणकथाया एव निर्मूलत्वापातादिति भाव ॥ **दूषणत्वोपयुक्तेति** ॥ व्याप्तिग्रहविघटकत्वरूपदूषण-त्वोपयुक्तप्रकारस्याविशिष्टत्वे साध्याप्रसिद्धिरन्वयिन्येव दूषण, न तु व्यतिरेकिणीत्यस्यासम्भवदुक्तिकत्वादिति भाव । ननु साध्याप्रसिद्धिरन्वयिन्येव दोष । ता विना साध्यनिरूपितव्याप्तेर्गृहीतुमशक्यत्वात् । व्यतिरेकिणि तु साध्यप्रसिद्धिं विनापि हेत्वभावनिरूपितव्याप्ति सुग्रहेति तत्र स न दोष इत्याशयेन शङ्कते ॥ **व्यतिरेकव्या-प्तिरिति** ॥ ननु व्यतिरेकव्याप्तिग्रहार्थमपि साध्यप्रसिद्ध्यपेक्षणे व्यतिरेकित्वभङ्गप्रसङ्ग । यत्र साध्य प्रसिद्धं तस्यैव दृष्टान्तत्वसम्भवात्तत्र हेतोरवृत्तावसाधारण्यं स्यादित्यभिप्रेत्य शङ्कते ॥ **एवं सतीति** ॥ **सामान्यप्रसि-द्ध्येति** ॥ इच्छा अष्टद्रव्यातिरिक्तद्रव्याश्रिता अष्टानाश्रितत्वे सति गुणत्वादित्यादिना सामान्यतोऽधिकरणविशेषा-गोचरत्वेन साध्यप्रसिद्धावपि केवलव्यतिरेकिप्रवृत्तिसम्भवादित्यर्थ ।

(रा टि.) ॥ **विशिष्टस्य पक्षत्वमिति** ॥ साध्यधर्मविशिष्ट पक्ष इत्युक्तेरिति भाव । व्याप्त्यादिविरहं व्यनक्ति ॥ **न ह्यप्रतीतेति** ॥ **अन्यत्रेति** ॥ केवलान्वयिन्यन्वयव्यतिरेकिणि चेत्यर्थ ॥ **दूषणत्वोपयुक्तप्रकारेति** ॥ व्याप्त्यादिविरहरूपो य प्रकारो दूषणत्वोपयुक्तस्तस्यानिरास इत्यर्थ ।

(वे टि ) अन्यस्याप्रसिद्धविशेषणत्वस्यानुक्तत्वात्कथ चशब्द इत्यत आह ॥ **चशब्द इति** ॥ **विशिष्ट स्येति** ॥ साध्यविशिष्टस्येत्यर्थ ॥ **न हीति** ॥ न हि दण्डविशिष्टस्य दण्डो विशेषणम् । स्वविशेषणत्वप्राप्त्या

(वे टि) आत्माश्रयप्रसङ्गादित्यर्थः । एवमप्रसिद्धं विशेषणं यस्येति समासे उपपत्तिमभिधायाप्रसिद्धं विशेषणं यस्मिन्निति सप्तम्यर्थे बहुव्रीहिरिति मुख्यार्थत्वेपि नानुपपत्तिरित्याह ॥ **यद्विशेषणेनेति** ॥ **अथेति** । तस्य पृथग्घे त्वाभासत्वाभावादिति भाव. । उत्तरमाह ॥ **व्याप्तीति** ॥ क्रमेण तदुपपादयति ॥ न **हीत्यादिना** ॥

केषाञ्चिन्मतमाशङ्कय निराकरोति ॥ **न च वाच्यमिति** ॥ **अन्यत्रासम्भवेनेति** ॥ अन्वयव्यतिरेकिणि केवलान्वयिनि च सपक्षसत्त्वेन साध्यप्रसिद्धेः सत्त्वादप्रसिद्धविशेषणत्वस्य तत्रासम्भवे केवलव्यतिरेकिण्यपि तस्यादूषणत्वेऽप्रसिद्धविशेषणत्वरूपदूषणस्यैवापलापापातादिति भाव । दूषणान्तरमाह ॥ **दूषणत्वेति** ॥ अप्रसिद्धविशेषणत्वे हि व्याप्तिपक्षधर्मताविरह इत्युक्तम् । केवलव्यतिरेकिणि तददूषणत्वं वदता दूषणत्वोपयुक्तव्याप्त्यादिराहित्यरूपप्रकारनिरासः कर्तव्यः । व्याप्त्यादिकमुपपाद्यमिति यावत् । तदकरणं इत्यर्थः । यद्वा केवलव्यतिरेकिणि अप्रसिद्धविशेषणत्वं किं दूषणत्वोपयुक्तव्याप्त्यादिराहित्याभावाददूषणं किं वा केवलव्यतिरेकित्वादेव । नाद्यः । दूषणत्वोपयुक्तव्याप्त्यादिराहित्यानिरासात् । न द्वितीयः । केवलव्यतिरेकित्वमात्रस्याप्रयोजकत्वादिति । दूषणान्तरमाह ॥ **दूषणत्वेति** ॥ ननु दूषणत्वोपयुक्तव्याप्त्यादिराहित्यमसिद्धमेव । साध्याप्रसिद्धावन्वयव्याप्तेर्ग्रहीतुमशक्यत्वेपि व्यतिरेकव्याप्तिग्रहसम्भवात् । तथा सिषाधयिषाविरहसहकृतसाधकमानाभावरूपपक्षत्वस्यापि सम्भवात् पक्षधर्मत्वोपपत्तिरित्यभिप्रेत्य शङ्कते ॥ **व्यतिरेकेति** ॥ साध्याभावे हि साधनाभावनिरूपितव्याप्तिग्रहः साध्याभावग्रहे सति स्यात् । स चायुक्त. । साध्यस्याप्रसिद्धत्वे तदभावस्यापि ज्ञातुमशक्यत्वादित्याह ॥ **प्रतियोगीति** ॥ **सामान्यप्रसिद्ध्येति** ॥ निरात्मकत्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि व्यतिरेकिधर्मत्वाद्घटवदिति सामान्यतः क्वचित्सात्मकत्वप्रसिद्धौ प्रतियोगिप्रसिद्ध्या व्यतिरेकस्य ग्रहीतुं शक्यत्वेन व्यतिरेकव्याप्तिग्रहसम्भवादित्यर्थः । **तदभावे** सामान्यतः प्रसिद्ध्यभावे । अत एव शशविषाणोल्लिखिता भूरित्यादौ सामान्यत. प्रसिद्ध्यभावान्न केवलव्यतिरेकित्वमिति भाव ।

(द्वै द्यु) **चशब्दस्य** प्रत्यक्षसमुच्चायकत्वे तत्र पक्षाद्यभावात्तत्पक्षस्याप्रसिद्धविशेषणत्वकथनमसङ्गतमित्यत आह ॥ **चशब्द इति** ॥ तथा चानुमानस्य पक्षोऽप्रसिद्धविशेषणश्चेति योजनोक्ता भवति । समुच्चितानि प्रत्यक्षनिराकरणानुमाननिराकरणागमनिराकरणानि विशेषाभावकूटविधया **न चानिर्वचनीये किञ्चिन्मानमित्युक्त**मानसामान्यनिराकरणे हेतवो भवन्तीति तेषां परस्परसमुच्चयकथनं युक्तमिति भाव । पक्षपदस्य साध्यधर्मविशिष्टधर्मिपरतया अप्रसिद्धं विशेषणं यस्येति बहुव्रीहिविग्रहघटकयत्पदार्थत्वस्यापि तस्यैव प्राप्त्या यस्य विशेषणमित्युक्तौ विशिष्टसम्बन्धिविशेषणमित्युक्तं स्यात् । विशिष्टविशेषणत्वं च विशेष्यविशेषणत्वे सति विशेषणविशेषणत्वं । तदयुक्तम् । आत्माश्रयप्रसङ्गेन प्रमाणं विना स्ववृत्तित्वनिर्वाहस्य स्वस्मिन् स्वविशेषणत्वस्य वक्तुमशक्यत्वादित्याशयेन शङ्कते ॥ **नन्विति** ॥ **पक्षत्वे** पक्षपदबोध्यत्वे । पक्षपदस्य सपुत्रस्य गमनमित्यादिवाक्यघटकसपुत्रेत्यादिप्रातिपदिकवद्विशिष्टविषयकबोधजनन एव सामर्थ्यं इत्यर्थः । सर्वसम्मतत्वाभिप्रायेणैव निर्देशः । न तु तत्र विवादसूचनाय । धर्मिमात्रशक्तत्वे वह्न्यनुमितौ ह्रदः पक्ष इति अमुख्यार्थकप्रयोगोपि प्रामाणिकः स्यात् । हेत्वाभास-

(द्वै द्यु) स्याप्यमुख्यया वृत्त्या हेतुपदव्यवहार्यत्ववत्पक्षाभासस्यापि तस्यामुख्यया वृत्त्या पक्षपदव्यवहार्यत्वमेव। इत्थं च निश्चिते इति शेषो वा। अनुक्तस्यापि स्वरविशेषव्यङ्ग्यत्वं वा। धर्मशास्त्रस्य प्रामाण्ये इदमित्थमेवेत्यादावित्येति बोध्य॥ सत्यमिति॥ पक्षपदस्य मुख्यवृत्त्या विशिष्टविषयकबोधजननसामर्थ्यं वर्तत इत्येतत्सत्यमित्यर्थ। तर्हि कथमस्योपपत्तिरित्यत आह॥ पक्षपदेनेति॥ तदेकदेश इति शक्यसम्बन्धप्रदर्शनाय॥ अदोष इति॥ नैयायिकमते विशिष्टसत्ताभावाभावात्मकविशिष्टसत्ताया गुणवृत्तित्वसत्त्वेपि गुणे विशिष्टाभावो नास्तीति वाक्यस्य कथमपि प्रामाण्याभावेन तन्निर्वाहाय नञ्पदस्यानुयोगितारूपाभावत्वविशिष्टविषयकबोधजनकत्वमेव। न तु कदापि तदुपलक्षितबोधजनकत्वम्। तेन तद्वाक्येन नियमेन विशिष्टसत्ताभावाभावत्वावच्छिन्नगुणनिरूपिताधेयता प्रत्याय्यते। सा च बाधितेति तद्वाक्यस्याप्रमाण्यमेव। नैव प्रकृते। किं तु लक्षणया विशेष्यमात्रबोधकत्वस्यापि विद्यमानत्वादुक्तनिर्देशप्रामाण्य युक्तमेवेति भाव। विशेषणोपलक्षितान्वयस्य वैयर्थ्यादेकदेशलक्षणैवाश्रिता।

ननु कथमिद विशिष्टे विशेषणासत्त्वमभ्युपगम्य समाधानम्। विशिष्ट विशेषणविशेष्योभयोपादानक वा विशेष्यमात्रोपादानकं वा विशेषणतत्सम्बन्धनिमित्तकं वा द्रव्यान्तरमिति ते मतम्। तत्र विशेषणसत्त्वे कथमात्मा-श्रय। किं च कपालसंयुक्ततृणादेस्तदुपादानकघटेपि प्रतीत्या तत्र तत्सत्त्ववत् विशेष्यीभूतचैत्रादिवृत्तेर्दण्डस्य विशिष्टसत्त्वमावश्यकम्। किं च रूपविशिष्टचैत्रे रूपाभावे तादृशविशिष्टस्यारूपिद्रव्यत्वेन चाक्षुषत्वानुपपत्ति। क्रियाविशिष्टस्य क्रियाभावे तस्योत्तरदेशसयोगाभावात्तत्र प्रतीत्यनुपपत्ति गगनादिवत् स्थिरत्वापत्तिश्च। प्रमेयत्व-विशिष्टस्याप्रमेयत्वे तस्यासत्त्वापत्ति। घटाभावविशिष्टस्य घटाभावराहित्ये घटवत्त्वं स्यात्। भावाभावान्यतरव-त्त्वनियमात्। दण्डविशिष्टे दण्डानङ्गीकारे दण्डी न दण्डीति दण्डिनि दण्डो नास्तीति प्रतीत्यापत्तिश्च। तस्मादि-दमयुक्तमिति चेन्न।

विशिष्ट नाम न विशेष्यादत्यन्तभिन्नम्। किं तु भिन्नाभिन्न सविशेषाभिन्नं च। तत्र भिन्नाभिन्नस्थले विशेष्यवृत्तिधर्मा सर्वेपि विशिष्टाख्ये परिणामविशेषे प्रमया प्रतीयन्त एवेति तत्र विशेष्यवृत्तिधर्मा रूपादय सन्त्येवेति न केपि पूर्वोक्तदोषा। परं तु विशेष्ये अप्रतीयमाना अपि केचिदुत्पत्तिनाशादयो धर्मा प्रतीतिबला दङ्गीक्रियन्ते। तदर्थमेव भेदाङ्गीकार सर्वसम्मत एव। पर तु युक्त्यन्तरमनुरुद्ध्य नैयायिकवैलक्षण्येन विशेषाः-ङ्गीकारवादिभिरपि विशिष्टान्वयस्थले विशेष्यस्य समभिव्याहृतपदार्थे यादृशोऽन्वय तत्र विशेषणस्य प्यन्वय तादृश एव प्रतीयत इत्यवश्यमभ्युपेयम्। विशेषणे तादृशान्वयस्य बाधग्रहदशायां विशिष्टान्वयस्यानुभवविरुद्धत्वात्। भूमौ दृढतर किञ्चिदंशेन निखातदण्डगृहीतृपुरुषे दण्डीति विशिष्टावगाहिप्रत्ययकालेपि दण्डस्य चलनाभावदशाया पुरुषमात्रचलने दण्डश्चय चलति दण्डविशिष्टो न चलतीति दण्डी सन्न चलतीति व्यवहारात्। तत्र दण्डकर्तृ-कचलनकालीनतदाश्रयकर्तृकचलननिषेधेन तद्वाक्यसामञ्जस्याच्च। अन्यथा दण्डविशिष्टचलनप्रतीत्या तन्निराकरण-वाक्यस्याप्रामाण्य स्यात्। तद्विशिष्टे तन्नास्तीति वाक्यस्याप्ययमेवाभिप्राय। विशेषणस्य स्वविशिष्टविशेष्य-वृत्तित्व नास्त्येवेति दण्टविशिष्टवृत्तित्वनिषेधतात्पर्यकं दण्डिनि दण्डो नास्तीति वाक्य प्रमाणमेव। तादृशपरिणा-

(द्वै घु) मविशेषभूतवस्तुनि तन्निषेधक तु बाधितत्वादयुक्तमेव। क्वचित्प्रमाणसत्त्वे तद्विशिष्टेपि तत्सत्ता स्वीक्रियते। यथा प्रमेयत्वविशिष्टे प्रमेयत्वम्। घटात्यन्ताभावविशिष्टे घटात्यन्ताभाव । एवं चोक्तविशिष्टान्वयपरित्यागेन समाधानं युक्तमेव।

केचित्तु अस्य व्यवहारस्य नैयायिकमतानुसारेणैव कृतत्वात् तन्मते विशिष्टस्यानतिरिक्तत्वात् तद्री त्यैवैतच्छङ्कापरिहारौ। न च तन्मते सिषाधयिषाविरहविशिष्टसिद्ध्यभाववत एव पक्षपदार्थत्वान्न साध्यविशिष्ट-धर्मिणि पक्षपदार्थत्वमिति वाच्यम्। सन्दिग्धसाध्यधर्मवत्त्व पक्षत्वमित्यस्य यथाश्रुतार्थमनुसरता वह्निसाध्यके ह्रदादे पक्षपदव्यवहार्यत्वमनभ्युपगच्छता प्राचां मते साध्यवैशिष्ट्यस्यैव पक्षपदार्थशरीरविनिष्टत्वात्। अत एवानुपद तथैव वक्ष्यतीत्याहु ।

पक्षपदस्य मुख्यार्थत्वमनुसृत्याह ॥ यद्विशेषणेनेति ॥ अनेनाप्रसिद्ध विशेषण यस्येत्यत्र षष्ठ्यर्थो नाधेयत्वम्। किं तु निर्वाहकत्वम्। विशिष्टनिर्वाहकत्वस्य विशेषणेप्यक्षतत्वात्। न च विशिष्टान्वयस्थले विशेष णान्वयस्य त्वयोक्तत्वात् विशेषणे स्वनिर्वाहकत्व बाधितमिति वाच्यम्। विशेषणसम्बन्धपरिणतद्रव्यात्मकविशि-ष्टान्वयरूपतदुपलक्षितान्वयस्यैवाङ्गीकारात्। सति तात्पर्ये तत्पदस्य तादृशान्वयबोधजननाङ्गीकारे बाधकाभावात्। न चाधेयतान्वयपक्षोप्युक्तरीत्या युज्यत इति तत्पक्षे एकदेशलक्षणाङ्गीकारो व्यर्थ इति वाच्यम्। तत्र पौनरुक्त्या-परपर्यायरूपवैयर्थ्यस्योक्तत्वात्। तद्विशेषणे तदाश्रयधर्मिनिरूपिताधेयत्वमशयस्यानाहार्यस्य कदाप्यनुत्पत्त्या तद्विशेषणे तदाश्रयवृत्तित्वस्याजिज्ञासितत्वेन च फलानुत्पत्तेरानुभाविकत्वेन प्राचां मते जिज्ञासारूपाकाङ्क्षा-भावेन नव्यमते समभिव्याहाररूपाकाङ्क्षाभावेन व्युत्पत्तिवादरीत्या कारणान्तरकल्पनेन वा तस्योपपादितत्वात्। अत एव घटो घट इति वाक्यस्य कर्म गच्छति पक्ता पचतीत्यादेश्चाप्रामाण्यमुक्तम्। तत्धर्मविशिष्टाख्यवस्तु-निर्वाहकत्वस्य विशेष्ये तत्धर्माश्रयत्वभानमात्रेणालब्धत्वेन तत्र तद्बोधनं युक्तमेवेत्यवधेयम्।

यद्वा अनेनाप्रसिद्ध विशेषण यत्रेति विग्रहो विवक्षित। तत्र घटकत्व सप्तम्यर्थ। विशेषणान्वयरूपविशि-ष्टान्वयस्वीकारेपि विशेषणस्यापि स्वाविषयकप्रतीत्यविषयतत्कत्वरूपघटकत्वस्यानापेन क्षतिविरहात्। स्वस्मिन् स्वघटितत्वव्यवहारस्यानानुभविकत्वेन घटकत्वस्य भेदघटितत्वे विशेषणान्वय एतत्कल्पे नास्त्येव। किं तु तदुप लक्षितान्वय एवेति द्रष्टव्यम्।

अप्रसिद्धविशेषणताया दूषणत्व परिहरिष्यामीत्याशयवान् पर प्रत्येव दूषणताप्रकार पृच्छति ॥ अथेति॥ ॥ व्याप्तीति ॥ तद्रूपत्वेन ज्ञानविरहादित्यर्थ। तथा च व्याप्यत्वासिद्धि पक्षासिद्धिश्चेति भाव ॥ न हीति ॥ निरूपकीभूतसाध्याग्रहादिति भाव। साध्यवदन्यावृत्तित्वस्वव्यापकसाध्यकत्वादिरूपव्याप्तेरग्रहादित्यर्थकत्वमात्रं सिद्धान्तिवचनस्य ज्ञात्वा वक्ष्यमाणरीत्या व्याप्तिसामान्यग्रहाभिप्रायमज्ञात्वा केवलव्यतिरेकिणि तयोरनङ्गत्वात्त-दग्रहोऽकिञ्चित्कर एव। पक्षतापि सिषाधयिषाविरहसहकृतसाधकमानाभाव। अतो न तत्रापि साध्यप्रसिद्धि-रुपयोगिनीत्याशयेन शङ्कते ॥ केवलव्यतिरेकिण इति ॥ किं केवलव्यतिरेकिसामान्ये दूषणत्वं नास्तीति

(द्वै द्यु) केवलव्यतिरेकिपद प्रयुञ्जानस्य तवाभिप्राय उत केवलव्यतिरेकिविशेष इति । नाद्य । तथोक्तेरेव निर्दलत्वादित्याह ॥ अन्यत्रेति ॥ केवलान्वयिनि अन्वयव्यतिरेकिणि चेत्यर्थ । सपक्षसत्त्व एव तयोस्तथात्वादिति भाव । तत्कथायाः शास्त्रकृता तव्द्युत्पादनस्य ॥ वृथात्वापातादिति ॥ कुत्रापि तदुद्भावनायोगादित्यर्थ । तथा च सामान्यत केवलव्यतिरेकिण इत्युक्तिरसङ्गतैवेति हृदयम् । द्वितीयं निराचष्टे ॥ दूषणोपयुक्तेति ॥ अनिरासे तन्निरासाभावे। तत्सम्पादकविशेषणदाने अकृते सति । केवलव्यतिरेकितामात्रस्य तादृशविशेषणसाहित्यरहितकेवलव्यतिरेकित्वस्य नुपयुक्तत्वात् । अस्मदुक्तदूषणपरिहार प्रतीत्यादि । तथा च तादृशदूषणपरिहारक्षम[1]विशेषोपपादनपूर्वकमेवाशङ्का कर्तव्या । न तु केवलव्यतिरेकित्व कथनीयमिति भाव ।

केचित्तु दूषणोपयुक्तप्रकारस्य अनिरासे सम्यक् अनिरासे । केवलव्यतिरेकितामात्रस्यानुपयोगादित्यर्थ । केवलव्यतिरेकित्वकथनेनापि कथञ्चिदन्वयव्यतिरेक्यादिहेतुभिन्नहेतुविशेषपरिचयद्वारा कथञ्चिच्छङ्कापरिहारसम्भवेपि म[illegible]ङ्निरासकव्यैव वक्तव्यत्वादिदमयुक्तमेवेति भाव इति व्याचक्रु ।

नन्वस्मत्प्रयुक्तकेवलव्यतिरेकिपद नासत्सपक्षकहेतुत्वावच्छिन्नरूढम् । किं तु केवलव्यतिरेकव्याप्तिमत्त्वेन गृह्यमाणपरम् । तेन व्यतिरेकव्याप्तिबलेनैवानुमितिसम्भवादन्वयव्याप्तिग्रहाभावेपि न दोष इत्युपपादितं भवति । पक्षे साध्यस्य निश्चये तस्यैव सपक्षत्वापातेन केवलव्यतिरेकित्वभङ्गापत्त्या रूढ्यर्थमहिम्ना सिद्ध्यभावरूपपक्षता लक्ष्यते । रूढेरप्यनिवारणात् । अतोऽस्मदुक्तमुपयुक्ततममेवेत्याशयेन शङ्कते ॥ व्यतिरेकेति ॥ उपलक्षण चैतत् । पक्षधर्मताग्रहोप्यत्र द्रष्टव्य । अन्यथा दोषद्वयमध्ये एकस्य दार्ढ्ये तेनैव प्रकृतहेतुदुष्टताप्राप्तौ व्याप्तिग्रहसम्पादन स्याकिञ्चित्करत्वापत्ते ॥ प्रत्येतुमित्यादि ॥ साध्यप्रतियोगिकाभावत्वेन गृहीतुमशक्यत्वादित्यर्थ । अयमपि दोष सामान्यतो व्याप्तिपदप्रयोगेणैव पूर्वमुक्त एव । भवता तु अन्वयव्याप्ते. साध्यघटितत्वस्य झडिति बुद्ध्यारोहेण अन्वयव्याप्तिमात्रप्रस्तावभ्रमेण दोषपरिहारोद्योग कृत इति भाव ।

एवं सति केवलव्यतिरेकिण्यपि पक्षातिरिक्ते साध्यप्रतीतिरावश्यिकीत्यागतम् । अन्यथा साध्यप्रसिद्ध्यावश्यकत्वे तस्यावृत्तित्वेन ग्रहे हेतो पक्षवृत्तित्वेन तदभावस्य तदभावव्यापकत्वग्रहायोगात् व्यतिरेकव्याप्तिशरीरनिविष्टसाध्याभावनिष्ठप्रतियोगिवैयधिकरण्यग्रहायोगाच्च साध्यप्रकारकानुमित्यनुपपत्तेश्च तस्य वृत्तिमत्त्वग्रह आवश्यकश्चेत् पक्षान्तर्भावेन तत्सत्त्वे अनुमानवैयर्थ्यापत्ते । तथा च नियमेन सपक्षप्राप्त्या केवलव्यतिरेक्युच्छेदप्रसङ्ग इति तटस्थः शङ्कते ॥ एवं सतीति ॥ वादिशङ्कया नैतत्फक्किकावतार । स्वपक्षे दूषणमनुद्भूत्यैव वादिनैतच्छङ्कनस्यानुचितत्वात् ॥ सामान्येति ॥ नैरात्म्य किञ्चिन्निष्ठाभावप्रतियोगि व्यतिरेकिधर्मत्वादित्याद्यनुमानादिना सामान्यप्रसिद्ध्येत्यर्थ । सामान्यप्रसिद्धिर्नाम यावन्त उभयवृत्तिधर्मा तत्तदवच्छिन्नधर्मिकतत्तत्संशयाविरोधिज्ञान ॥ तत्प्रवृत्तीति ॥ व्याप्त्यादिज्ञानरूपानुमानप्रवृत्तीत्यर्थ । प्रतियोगितावच्छेदकविशिष्टप्रतियोगिग्रहमात्रस्याभावबुद्धावपेक्षितत्वेन व्यक्तिविशिष्टवृत्तित्वेन तन्निश्चयस्यानपेक्षितत्वादिति भाव । तथा च स्वविशेष्यकसाध्याभावग्रहविरोधिग्रहविषयस्यैव सपक्षत्वेन तदभावान्न केवलव्यतिरेकिविलय इति भाव ।

[1] विशेषणोपादान इति पाठेन भाव्यमिति भाति

(गु टि) एव प्रत्यक्ष निराकृत्यानुमानमपि निराचिकीर्षुस्तावत् कि निरवकाश सावकाश वेति कल्पद्वयं मनसि निधायाद्यमुत्थाप्य दूषयति ॥ **मा भूदिति** ॥ नन्वनेनैवानुमानेनानिर्वचनीयत्वरूपपक्षविशेषणस्य प्रसिद्धत्वात्कथमप्रसिद्धविशेषणत्वमित्यत एतदनुमानसाध्यानिर्वचनीयत्वप्रसिद्धेर्नैतदनुमानप्रवृत्त्युपयुक्तत्वम् । तथा सति 'अनिर्वचनीयत्वप्रसिद्धावेतदनुमानप्रवृत्ति एतदनुमानप्रवृत्तौ च तेनानिर्वचनीयत्वप्रसिद्धिरित्यन्योन्याश्रयप्रसङ्गादित्याशयेनाह ॥ **एतदनुमानादिति** ॥ **तदेकदेश** इति लक्षणाबीजभूतशक्यसम्बन्धकीर्तनम् । अत्र पक्षे पक्षशब्दस्य लक्षणा आश्रयणीया भवतीत्यपरितोषात्पक्षान्तरमाह ॥ **यद्विशेषणेनेति** ॥ ततश्च अप्रसिद्ध विशेषण यस्मिन्निति मुख्यार्थ एव पक्षशब्द इति भाव ॥ **अथेति** ॥ अतिप्रसङ्गेन स्वतोऽसाधकत्वहेतुत्वासम्भवात् एतदुन्नेयदोषान्तराप्रतिभासेन तदुन्नायकत्वेनाप्यसाधकत्वे हेतुत्वासम्भवादिति भाव । दोषान्तरोन्नायकत्वेनैवास्य हेतुत्वमित्यभिप्रेत्य सिद्धान्तयति ॥ **व्याप्तीति** ॥ ननु साध्यस्याप्रसिद्धत्वे कथ व्याप्तिपक्षधर्मताविरह इत्यतो व्याप्तिविरहं ताव दुपपादयति ॥ **न हीति** ॥ ससम्बन्धिकपदार्थज्ञानस्य सम्बन्धिज्ञानाधीनत्वेन तदभावे असम्भवादिति भाव । पक्षधर्मताविरहमप्युपपादयति ॥ **सन्दिग्धेति** ॥ **न चेति** ॥ कोटिप्रसिद्धे सन्देहकारणत्वेन तदभावे तस्यासम्भवादिति भाव । गूढाभिसन्धि केषञ्चिन्मतमुपन्यस्यति ॥ **न चेति** ॥ आशयमजानान परिहरति ॥ **तथा सतीति** ॥ केवलव्यतिरेकिण्यप्रसिद्धविशेषणत्वस्य दूषणत्वाभाव इत्यर्थ । **अन्यत्र** केवलान्वयिन्यन्वयव्यतिरेकिणि चेत्यर्थ । **तत्कथायाः** अप्रसिद्धविशेषणत्वस्य दूषणत्वकथाया । तत्र सपक्षसद्भावादिति भाव । किञ्च व्याप्तिपक्षधर्मताविरहोन्नायकत्वेनाप्रसिद्धविशेषणत्वस्य दूषणताया उपपादितत्वाद्दूषणत्वोपयुक्तप्रकारनिरासपूर्वकमेव तददूषणत्वस्य शङ्कनीयत्वेन दूषणत्वोपयुक्त प्रकारमनिरस्यादूषणत्वशङ्काया राज्ञामाज्ञामात्रत्वेन निर्दलत्वाच्चेत्याह ॥ **दूषणत्वोपयुक्तेति** ॥ इदानी शङ्किता स्वाभिप्रायमुद्घाटयति ॥ **व्यतिरेकेति** ॥ उपलक्षणमेतत् । पक्षधर्मताया अपि सन्देहघटितत्वाभावान्न तद्विरहोपीति द्रष्टव्यम् । तस्या व्याप्तौ साध्याभावसाधनाभावयोरेव सम्बन्धित्वेन तज्ज्ञानस्य तज्ज्ञानाधीनत्वेपि साध्यसाधनयोरसम्बन्धित्वेन तज्ज्ञानस्य तज्ज्ञानाधीनत्वाभावेन साध्याप्रसिद्धावपि व्यतिरेकव्याप्तिज्ञानस्याप्रत्यूहत्वादिति भाव । व्यतिरेकव्याप्तौ साध्याभावसाधनाभावयोरेव सम्बन्धित्वेन साध्यसाधनज्ञानस्य सम्बन्धिज्ञानत्वेन तज्ज्ञानेऽनपेक्षायामपि तत्सम्बन्धिभूतसाध्याभावज्ञानार्थतया प्रतियोगिज्ञानत्वेन साध्यज्ञानस्यापेक्षितत्वात् असति तस्मिन् प्रतियोगिज्ञानाभावेन तदधीनसाध्याभावज्ञानासम्भवेन सम्बन्धिज्ञानविरहान्न व्यतिरेक व्याप्तिग्रहोपि सम्भवतीत्याशयेनाह ॥ **प्रतियोगिप्रतीतिमन्तरेणेति** ॥ **एवं सतीति** ॥ केवलव्यतिरेकिणि सपक्षाभावेनाप्रसिद्धविशेषणत्वावश्यम्भावेन व्याप्तिपक्षधर्मताविरहध्रौव्यादिति भाव । किं सम्प्रतिपन्नप्रमाणभावाना केवलव्यतिरेकिणा भङ्ग आपाद्यत्वेनाभिमत उत तदन्येषामिति विकल्प मनसि निधायाद्य दूषयति ॥ **सामान्यप्रसिद्ध्येति** ॥

अयमाशय । ये हि सम्प्रतिपन्नप्रमाणभावा केवलव्यतिरेकिणस्तेषु सामान्यतोऽन्वयव्याप्तिरेवाभिधातव्या । तथा हि । प्राणादिमत्त्वेन जीवच्छरीरस्य सात्मकत्वे साध्ये यद्यत् कार्यवत् तत्तत् कारणवत् यथा अङ्कुरवती भूमिर्बीजगर्भेति, तथा गन्धवत्त्वेन भुवोऽन्यभेदसाधने यत् यदसाधारणधर्मवत् तत् तदन्यतो भिद्यते यथा

(गु टि) अवादीति, एवमीश्वरस्य सर्वकर्तृत्वेन सार्वज्ञ्यसाधने यो यस्य कर्ता स तस्य कारण प्रयोजनञ्च जानाति यथा कुलाल इति, एव शब्द पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रित पृथिव्यादिवृत्तौ बाधकोपपन्नत्वे सति गुणत्वात् इत्यदौ यो यद्वृत्तौ बाधकोपपन्नत्वे सति गुण स ततोन्यद्रव्यवृत्ति यथा गन्ध इत्यादिरूपेण सामान्यतो व्याप्तिरभिधातव्या। यद्वा सामान्यतो विशेषणप्रसिद्धिं विधाय केवलव्यतिरेकी प्रयोक्तव्य। यथा ज्ञानतारतम्य क्वचिद्विश्रान्त तारतम्यवादित्यनेन सामान्यत सार्वज्ञ्यसिद्धौ तस्येश्वरसम्बन्ध केवलव्यतिरेकिणा साध्यते, यथा च इच्छादय क्वचिदाश्रिता गुणत्वाद्रूपवत् यश्चेच्छादीनामाश्रयस्स एवात्मेति सामान्येनात्मसिद्धौ तत्सम्बन्धो जीवच्छरीरस्य केवलव्यतिरेकिणा साध्यते। एवमन्यत्रापि यथासम्भवं द्रष्टव्यम्।

क्वचित्पक्षैकदेश एव विशेषणप्रसिद्धिमाश्रित्य केवलव्यतिरेकी प्रवर्तते। यथा पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वात् न यदेव न तदेव यथा जलादीत्यत्र घटादावेव विशेषणप्रसिद्धेर्नाप्रसिद्धविशेषणता। न चैवं सपक्षसम्भवेन केवलव्यतिरेकित्वभङ्ग। घटादे पक्षैकदेशत्वात्। न चांशे सिद्धसाधनता। एकैकत्र प्रसिद्धावपि आपरमाणो. आच भूगोलकादसिद्धेरिति।

द्वितीय दूषयति ॥ तदभाव इति ॥ एतेष्वन्यतमस्याप्यभावे तद्भङ्ग इष्ट एवेत्यर्थ। यदत्र जीवच्छरीर सात्मक प्राणादिमत्त्वादिति व्यतिरेकिविशेषमात्रपरतया शङ्कासमाधानाभिप्रायवर्णनं दार्शनिकम्मन्येन कृत तत्तु एतद्ग्रन्थविवरणरूपोदाहृततात्पर्यसुधाग्रन्थादर्शनतदर्थाज्ञानग्रन्थद्वयैकवाक्यताननुसन्धानमूलकमिति स्पष्टमेवेत्ययुक्तत्वादुपेक्ष्यम्। तदनुसारेण केवलव्यतिरेकिमात्रविषयकत्वसिद्ध्या तद्विशेषविषयकत्वाश्रयणस्य तद्विरुद्धत्वात्।

### केवलव्यतिरेकिणि व्याप्तिग्रहस्य सुशकत्वशङ्का तन्निरासश्च

**(टी) अभावः केवलव्यतिरेकिणा साध्यः। तथा सत्यभावाभावो भाव एवेति सुशको व्याप्तिग्रह इति कश्चित्। तदसत्। अभावाभावस्य भावत्वेपि [प्रतिषेधाकारबुद्धेरनिवारणात्।][1] प्रतिषेधस्य च प्रतियोगिसापेक्षतानियमात्।**

### सामान्यतोऽनिर्वचनीयत्वसाधकानुमान तन्निरासश्च

**[सत्त्वासत्त्वे एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनी धर्मत्वात् रूपरसवदित्यनुमानेन सामान्यतोऽनिर्वचनीयत्वप्रसिद्धौ शुक्तिरजतादिधर्मिविशेषाश्रयता तस्य केवलव्यतिरेकिणा साध्यते। अतो न दोष इति चेन्न। अभिधेयत्वादौ व्यभिचारात्। तस्यापि पक्षतुल्यत्वे व्याघातात्। अभिधेयत्वादिक किञ्चिन्निष्ठात्यन्ताभावप्रतियोगीत्यत्र तस्य किञ्चिदादिशब्दाभिधेयत्वात्। किं च सकलधर्माणां यत्किञ्चिन्निष्ठात्यन्ताभावप्रतियोगितासाधने [2]सकलधर्मात्यन्ताभावाधिकरणत्वे व्यभिचारः। तस्यापि पक्षत्वे सकलधर्मवत्त्व कस्यचिद्विरुद्धमापद्येत। अविरुद्धत्व चोपाधिः। न च सत्त्वासत्त्वे अपि न विरुद्धे। अनिर्वचनीयार्थप्रतीतेः प्रागविरोधाप्रतीतेः। तदिदमप्रसिद्धविशेषणत्व परसिद्धमिति**

---

[1] तत्र प्रतिषेधाकारबुद्धेरनिवारणात् इति (वि टि) पाठ। [2] धर्मात्यन्ताभावाधिकरणत्वेन इति (वि टि) पाठ।

(टी) ज्ञातव्यम्। अन्यत्र तद्दूषणन्त्वस्याचार्यैरेवोपपादितत्वात्। स्वमतेन तु स्वव्याघातादिदूः मूहनीयम्।

(वि टि) ननु साध्यप्रसिद्धिस्तत्रैवाङ्गं यत्र भाव साध्य। तज्ज्ञान विना तद्व्यतिरेकानिरूपणात् यत्राभाव साध्यस्तत्र साध्यस्याप्रसिद्धावपि तदभावरूपस्य भावस्य हेत्वभावव्याप्यतानिरूपणसम्भवात्। तथा प्रकृतानुमानेपि साध्यत्वाभिमतानिर्वचनीयत्वस्य सदसद्भेदरूपतया आकाशमितरभिन्नमित्यत्रेव न साध्यप्रसिद्ध्य पेक्षेति वदन कस्यचिन्मतं दूषयितुमुपन्यस्यति ॥ अभाव इति ॥ साध्याभावव्यापकाभावप्रतियोगित्वमेव व्यतिरेकिणि गमकतौपयिकरूपम्। तच्च न स्वरूपसत्तथा। व्यतिरेक्याभासोच्छेदापत्ते। किं तु ज्ञातमेव। तज्ज्ञानमपि न वस्तुगत्या साध्याभावव्यापकाभावप्रतियोगित्वज्ञानत्वेन तथा। यत्र पटादौ घटाभावत्वमारोप्य तद्व्यापकत्व लोष्टत्वादि गृहीत तत्र लोष्टत्वाद्यभावेन घटाननुमानापातात्। किं तु साध्याभावत्वेन ज्ञायमानाभावव्यापकाभ प्रतियोगित्वज्ञानत्वेन। एवञ्च साध्याप्रसिद्धौ गमकतौपयिकरूपज्ञानमेव दुर्लभमित्यभावसाध्यकव्यतिरेकिण्यपि साध्यप्रसिद्धिरावश्यिकीत्यभिप्रायेण दूषयति ॥ तदसदिति ॥ तत्रेति ॥ साध्याभावत्वेनाभिमते साध्याभावत्व प्रकारकबुद्धेरावश्यकत्वादित्यर्थ ॥ प्रतिषेधस्य चेति ॥ प्रतिषेधज्ञानस्य प्रतियोगिज्ञानसापेक्षत्वनियमादित्यर्थ ॥ अभिधेयत्वादाविति ॥ अभिधेयत्वज्ञेयत्वादे केवलान्वयित्वेनात्यन्ताभावप्रतियोगित्वरूपसाध्यस्य तत्राभावादिति भाव ॥ पक्षतुल्यत्व इति ॥ प्रयोगाविषयत्वे सति पक्षलक्षणलक्षितत्व इत्यर्थ। व्याघातमेवोपपादयति ॥ अभिधेयत्वादीति ॥ ननु धर्ममात्रस्यापि यत्किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वसाधने क्वाभिधेयत्वादौ व्यभिचार इत्यत आह ॥ किञ्चेति ॥ यद्यप्यभिधेयत्वादावुक्तव्याघातान्नेय शङ्कोन्मिषति तथापि विस्मृतव्याघातदोषस्येय शङ्केति ध्येयम् ॥ धर्मात्यन्ताभावाधिकरणत्वेनेति ॥ [1]भावाभावात्मकसकलधर्मात्यन्ताभावाधिकरणत्वाभावेनेत्यर्थ ॥ सकलधर्मवत्त्वमिति ॥ सकलधर्मात्यन्ताभावाभावरूपस्य तस्य सकलधर्मरूपत्वादिति भाव ॥ अविरुद्धत्वञ्चेति ॥ परस्परप्रतिषेधनात्मकत्वमित्यर्थ। तेन गोत्वादौ साध्याव्यापकत्वशङ्का नेति ध्येयम्। ननु सत्त्वासत्त्वयोरुभयोरपि भावरूपत्वेन तत्रैव साधनव्यापकत्वमित्याशङ्क्य निराह ॥ न चेति ॥ अनिर्वचनीयेति ॥ तथा च अनिर्वचनीयार्थे सिद्धे अविरोधसिद्धि। सिद्धे चाविरोधे साध्यप्रसिद्ध्या अनिर्वचनीयार्थसिद्धिरित्यन्योन्याश्रय इत्यर्थ ॥ परसिद्धमिति ॥ दोषतयेति शेष। अन्यत्र प्रमाणलक्षणे। नन्वेव बाध्यत्वानुमान स्वरीत्यैवादुष्टमिति निष्प्रत्यूहमनिर्वचनीयार्थसाधकं स्यादित्याशङ्क्याह ॥ स्वमतेन त्विति ॥ ऊहनीयमिति ॥ अनिर्वचनीयत्व यदि निर्वचनानर्हत्व तदा स्वव्याघात। परेणैव अनिर्वचनीयशब्देन सदसद्विलक्षणत्वादिना निर्वचनात्। यदि चानात्मत्वमसत्त्व वा तदा सिद्धसाधनम्। एव बाध्यत्वमपि यदि ज्ञाननिवर्त्यत्व तदाऽसिद्धि। शुक्तिकायाथात्म्यज्ञानानन्तरं रजत निवृत्तमित्यननुभवात्। यदि बाधकप्रमाविषयत्व तदा ब्रह्मणि व्यभिचार. तस्य सर्वप्रत्ययवेद्यत्वाङ्गीकारात्। यदि च निषेध्यत्वेन बाधकधीविषयत्व तदा घटादौ व्यभिचार.। यदि स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्व तदा संयोगादौ व्यभिचार इत्यादिकमूहनीयमित्यर्थ।

---

[1] भावाभावात्मकसकलधर्मात्यन्ताभावाधिकरत्वेनेत्यर्थ इति पाठेन भाव्यमिति भाति।

(रा टि) अभावसाधने सिद्धमिष्ट किमित्यत आह ॥ तथा सतीति ॥ पृथिवी इतरभिन्ना गन्धवत्त्वा-न व्यतिरेकिणा जलादित्रयोदशान्योन्याभावसाधने हि साध्यस्याभावरूपत्वेन तदभाव इतरत्व भावरूपमिति त्र पृथिवीतरत्व तत्र गन्धवत्त्वाभाव इति व्याप्तिग्रह सुग्रह एवेति साध्याप्रसिद्धेर्दोषतोपयुक्तव्याप्तिविरहरूप-कारनिरासोऽभावसाध्यव्यतिरेकिणि सम्भवतीत्यर्थ ॥ प्रतिषेधाकारबुद्धेरिति ॥ साध्याभावत्वेन ज्ञानस्यानिवा-रणादित्यर्थ । अन्यथा व्यतिरेकव्याप्तौ साध्याभावस्य भावत्वेन सिषाधयिषितसाध्याभावत्वेन ज्ञानाभावे यत्र सुखाभाव दु खत्वेन भ्रान्त्वा [1]तद्व्याप्यत्वेन मुखप्रसादाभाव गृहीत्वा तदभावेन मुखप्रसादेन सुखमनुमिनोति। तत्र सुखानुमान न स्याद्दु खाभावानुमानमेव स्यात् । [2]व्यापकस्य दु खत्वेन भ्रातस्य सुखाभावस्य सुखाभावा-त्मकमिदं दु खमिति ज्ञात्वा [3]तद्व्याप्यत्वेन प्रसादाभावज्ञाने तदभावेन मुखप्रसादेन सुखानुमानं भवति । अभा-वस्य भावत्वादस्तु तथा बुद्धि । तत किमित्यत प्रतियोगिभूतसाध्यप्रसिद्धिरपेक्षितैवेति भावेनाह ॥ प्रतिषे-धस्येति ॥ पूर्वं सामान्यप्रसिद्ध्या व्यतिरेकिसम्भवादित्युक्ते सामान्यप्रसिद्धिसम्पादकमनुमानमाह ॥ सत्त्वा सत्त्वे इति ॥ द्विवचनान्तम् । एकस्मिन् धर्मिणि निष्ठौ यावत्यन्ताभावौ तत्प्रतियोगिनी । रूपरसौ वायुनिष्ठात्यन्ता भावप्रतियोगिनौ यथा तथेत्यर्थ. । अनेन सत्त्वासत्त्वहीन किञ्चित्सिध्यतीति भाव । अत्र विशेषचर्चा वादाव-लीव्याख्याने ॥ सामान्यत इति ॥ धर्मिविशेषानालिङ्गिततयेत्यर्थ ॥ व्यतिरेकिणेति ॥ प्रागुक्तेनेति भाव । व्याघात व्यनक्ति ॥ अभिधेयत्वादीति ॥ व्यभिचारस्थलसम्पादनायाह ॥ सकलेत्यादि साधन इत्यन्तम् ॥ सर्वे धर्मा किञ्चिन्निष्ठात्यन्ताभावप्रतियोगिनो धर्मत्वाद्गन्धरूपरसवदिति साधने सर्वधर्मात्यन्ताभावाधिकरणं किञ्चि त्सिद्ध्यतीति तन्निष्ठात्यन्ताभावाधिकरणत्वे व्यभिचार इत्यर्थ ॥ अविरुद्धत्वञ्चेति ॥ परस्परनिषेध्यनिषेधात्मकत्व रूपमित्यर्थ । रूपरसयोस्तादृशत्वेन साध्यव्यापकत्वात्सत्त्वासत्त्वयोश्चान्योन्यनिषेधात्मकत्वेन साधनाव्यापकत्वाच्चेति भाव ॥ न विरुद्धे इति ॥ परस्परनिषेध्यनिषेधात्मके न भवत इत्यर्थ । तथा च साधनव्यापकत्वमेवेति भाव ॥ अन्यत्रेति ॥ आश्रयसाध्यव्यधिकरणासिद्ध्यो न दूषणमिति प्रमाणलक्षणादाविति भाव ॥ व्याघाता-दीति ॥ सत्त्वं नेत्युक्तावसत्त्व प्राप्तम् । तदपि नेत्युक्तौ व्याघात । तथाऽसत्त्वं नेत्यत्रापि ध्येयम् । आदिपदेन व्याप्त्यादिराहित्यग्रह ।

(वे टि) ॥ अभाव इति ॥ यथा इद ज्ञानमप्रमाणमसमर्थप्रवृत्तिजनकत्वादित्यत्र प्रामाण्यरूपसाध्या-भावस्य हेत्वभावेन व्याप्तिर्ग्राह्या । तच्च भावरूपमेवेति न तत्र प्रमाण्याभावरूपसाध्यग्रहणापेक्षा । अभावग्रहे हि प्रतियोगिग्रहणापेक्षा । न तु भावग्रहेऽपि । तथा प्रकृतानुमानेऽपि साध्यत्वाभिमतानिर्वचनीयत्वस्य सदसद्भेदरूप-तया तदभावस्य सत्त्वासत्त्वरूपत्वेन भावरूपतया हेत्वभावव्याप्यत्व साध्यस्याप्रसिद्धत्वेऽपि सुग्रहमेव । प्रतियोगि-गिज्ञानानपेक्षणादिति भाव ॥ प्रतिषेधाकारबुद्धेरिति ॥ साध्याभावरूपत्वेनाभिमते भावरूपेऽपि व्याप्ये साध्या

---

[1] तद्व्यापकत्वेन इति पाठेन भाव्यमिति भाति । [2] व्याप्यस्य इति पाठेन भाव्यमिति भाति ।

[3] तद्व्यापकत्वेन इति पाठेन भाव्यमिति भाति ।

(वे टि ) भावत्वप्रकारकबुद्धेरावश्यकत्वादित्यर्थ । अन्यथा साध्याभावत्वेनोपस्थितव्यापकाभावप्रतियोगित्वरूपस्य व्यतिरेकिणि गमकतौपयिकस्याज्ञानेनानुमित्यनुपपत्ते । न च वास्तवसाध्याभावव्यापकाभावप्रतियोगित्वज्ञानमेव व्यतिरेक्यनुमितौ गमकतौपयिकम् । तच्च व्याप्यत्वेनाभिमतस्याभावस्य साध्याभावत्वेन,ज्ञानेपि सम्भवतीति वाच्यम् । तथा सति व्यतिरेक्याभासविलोपापत्ते । तथा हि । यत्र घटादौ पटाभावत्वमारोप्य तद्व्यापकतया लोष्ठत्वादिक गृहीतं तत्र लोष्ठत्वाद्यभावेन पटाननुम नापातात् । न ह्यत्र साध्यस्य पटस्य घटो वास्तवोऽभाव । तथा च साध्याभावत्वेनोपस्थितव्यापकाभावप्रतियोगित्वज्ञानमेव प्रयोजकं वाच्यम् । तच्च साध्यस्याप्रसिद्धौ प्रतियोगिज्ञानाभावेनानुपपन्नमिति भाव ।

केचित्तु व्याप्ये साध्याभावत्वप्रकारकबुद्धेरनिवारणादित्यर्थ । ननु नेद व्यतिरेकिणि गमकतौपयिकं ममाभिप्रेतम् । किं त्वन्यदेव । तथा हि । यस्याभावस्य व्यापकतया हेत्वभावो गृहीतस्तदभावेन तदभाव सिद्ध्यति । न चातिप्रसङ्ग । व्यापकाभाववत्तया ज्ञाने व्याप्याभावज्ञानावश्यम्भावादिति चेत्तर्हि 'इदमप्रामाण्याभाववत् तद्व्यापकसमर्थप्रवृत्तिजनकत्वाभावशून्यत्वात् यद्यद्व्यापकशून्य तत्तदभाववद्यथा सम्प्रतिपन्नम्' इत्यन्वयित्वमेव स्यान्न व्यतिरेकित्वम् । तथा च व्यतिरेक्यनुमान पृथगभिलषेनोक्तमेव प्रयोजकमङ्गीकार्यं । तत्र च व्याप्यत्वेनाभिमतस्याभावस्य साध्याभावत्वेन ज्ञानमावश्यकमिति साध्याज्ञाने साध्याभावत्वप्रकारकज्ञानासम्भवेन व्याप्तिग्रहानुपपत्तेरिति भाव इत्याहु ।

किं च सर्वत्राभाव एव केवलव्यतिरेकिणा साध्य । उत क्वचिद्भावोपि । नाद्य । वह्न्यभावादेर्धूमाभावादिव्याप्यत्वग्रहे वह्न्यादेर्भावस्यापि सिद्ध्यविरोधात् । भावरूपसात्मकत्वादेरपि सिद्ध्यविरोधाच्च । इयास्तु विशेष । यदत्र साध्यप्रसिद्धिरप्यङ्गमिति । न द्वितीय । तत्र साध्याभावस्य हेत्वभावव्याप्यत्वग्रहे साध्यप्रसिद्धे र्वाच्यत्वात् । अपि चैव केवलव्यतिरेकिपरार्थानुमानविलोपप्रसङ्ग । साध्याप्रसिद्धौ प्रतिज्ञाद्यसम्भवात् । न च सामान्यत प्रसिद्ध्या प्रतिज्ञादिक सम्भवतीति वाच्यम् । तर्हि तेनैव स्वार्थानुमानेपि केवलव्यतिरेकिप्रवृत्त्युपपत्तौ किमनेनेत्यलम् ।

व्याघातमुपपादयति ॥ **अभिधेयत्वादाविति** ॥ **तस्येति** ॥ यन्निष्ठात्यन्ताभावप्रतियोगित्व साध्य तस्य किञ्चिदादिशब्दाभिधेयत्वव्याघात इत्यर्थ ॥ **सकलधर्माणामिति** ॥ केवलान्वयिधर्माणा पक्षसमत्वे व्यतिरेकिधर्माणा सुतरा तथात्वात्**सर्वधर्माणा**मित्युक्तम् । **केचित्तु** ननु धर्ममात्रस्यापि किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वसाधने काभिधेयत्वादौ व्यभिचार इत्यत आह **किं च सकलधर्माणामिती**त्यप्याहु । सर्वे धर्मा किञ्चिन्निष्ठात्यन्ताभावप्रतियोगिन धर्मत्वादिति साधने यन्निष्ठाभावप्रतियोगित्व तत्र सर्वधर्माभावाधिकरणत्वरूपधर्मसत्त्वेन तत्र व्यभिचार इत्यर्थ । ननु सर्वे धर्मा इति सर्वधर्मात्यन्ताभावाधिकरणत्वरूपधर्मस्यापि पक्षीकृतत्वान्न तत्र व्यभिचार इत्यत आह ॥ **तस्यापीति** ॥ सर्वधर्मात्यन्ताभावाधिकरणत्वस्यापि यत्किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वसाधने यन्निष्ठाभावप्रतियोगित्व साध्यते तस्य भावत्वाभावत्वनित्यत्वानित्यत्वचेतनत्वाचेतनत्वादिसकलधर्मवत्त्वमङ्गी-

(वे टि) कर्तव्यम् । तच्च विरुद्धमित्यर्थः । ननु व्यतिरेकिधर्मत्वादिति हेतुरिति न प्रमेयत्वादौ व्यभिचार इत्यत आह ॥ **अविरुद्धत्वं चोपाधिरिति** ॥

नन्वविरुद्धत्वं यदि परस्परविरहव्याप्यत्वाभावः । तदा गोत्वाश्वत्वादौ साध्याव्याप्तिः । तयोर्महिष्यादिनिष्ठात्यन्ताभावप्रतियोगित्वेपि परस्परविरहाव्याप्यत्वात् । यदि च परस्परविरहरूपत्वाभावस्तदा रूपतद्ध्वंसादौ साध्याव्याप्तिः । तयोर्वाय्वादिनिष्ठात्यन्ताभावप्रतियोगित्वेपि परस्परविरहरूपत्वात् । न च रूपध्वंसस्य रूपविरहरूपत्वेपि रूपस्य ध्वंसविरहरूपत्वं कथमिति वाच्यम् । अभावप्रतियोगिकाभावान्तरानङ्गीकारेण रूपध्वंसविरहस्य रूपात्मकत्वाङ्गीकारादिति चेन्न । प्रतिषेध्यप्रतिषेधानात्मकत्वस्य विवक्षितत्वात् । प्रतिषेधश्चात्यन्ताभाव एवेति न कश्चिद्दोषः ।

नन्वेवमपि साधनव्यापकोऽयमुपाधिः । अनिर्वचनीयवादिनो मते सत्त्वासत्त्वयोरपि उक्तरूपपरस्परविरहात्मकत्वाभावात् । अनिर्वचनीयरूपतृतीयकोटे सत्त्वादित्यत आह ॥ **न च सत्त्वासत्त्वे अपीति** ॥ उपलक्षणमेतत् । घटत्वाघटत्वे एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनी । धर्मत्वाद्रूपरसवदित्याभाससमानयोगक्षेमत्वं च ज्ञातव्यम् ॥ **स्वमतेन त्विति** ॥ यद्यनिर्वचनीयत्वं निर्वचनानर्हत्वं तदा व्याघातः । विवादास्पदशब्देनैव शुक्तिरूप्यस्य निर्वचनात् । अन्यथा मूकतापत्तेः । यदि च सदसद्विलक्षणत्वं तदा सद्विलक्षणमित्युक्तेऽसत्त्वस्य प्राप्तौ पुनरसद्विलक्षणमित्युक्ते व्याघातः । एवमसद्विलक्षणमित्युक्ते सत्त्वस्यैव प्राप्ते पुनः सद्विलक्षणमित्युक्ते व्याघात इत्यर्थः । शुक्तिरूप्यस्य सद्वैलक्षण्यमस्माभिरङ्गीकृतमेवेति सिद्धसाधनत्वादिकमादिशब्दार्थः ।

(द्वै द्यु) केवलव्यतिरेकी भावसाध्यकाभावसाध्यकभेदेन द्विविधः । तत्र भावसाध्यकस्थले साध्यप्रसिद्धिं विना कथमपि व्याप्तिग्रहो न घटत इति तत्राऽवश्यिकी साध्याप्रसिद्धेर्दूषणता । अभावसाध्यकस्थले त्वभावाभावरूपभावव्यापकत्वेन गृहीताभावप्रतियोगिहेतुमत्ताज्ञानान्मुख्यविशेष्यीभूतसाध्यविधेयकानुमितिरेव जायते । अत एवेतरत्वव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवीति परामर्शादिना 'पृथिव्यामितरभेद' इत्याद्यनुमितिस्तान्त्रिकैरभ्युपगता । एवञ्च प्रकृते सदसद्वैलक्षण्यरूपानिर्वचनीयत्वस्याभावत्वात्तत्साध्यकस्थले तदभावस्य सत्त्वासत्त्वरूपप्रतियोगितावच्छेदकस्वरूपतया तद्व्यापकत्वेन गृहीताभावप्रतियोगिबाध्यत्वावगाहिपरामर्शाद्भिमतेऽनिर्वचनीयत्वमित्येवानुमितिः स्यात्तावता क्षत्यभावादिति वदतः **कस्यचिन्मतमुत्थापयति** ॥ **अभाव इति** ॥ यत्रेति शेषः ॥ **तथा सतीति** ॥ तत्रेत्यादि । तादृशस्थल इत्यर्थः । **तथा सति** अभावस्य साध्यत्वे सतीत्यर्थः ॥ **अभावाभाव इति** ॥ साध्यात्मकाभावस्याभाव इत्यर्थः ॥ **भाव एवेति** ॥ साध्यीभूताभावीयप्रतियोगितत्वावच्छेदकान्यतररूपः साध्याघटितमूर्तिक इत्यर्थः । न तु भावात्मक इति यथाश्रुतोऽर्थः । तथात्वे [1]ध्वंसव्यापकीभूताभावप्रतियोगिसामान्यत्वादिलिङ्गेन सामान्ये ध्वंसभेदादिसिद्धेस्तादृशस्थलासङ्ग्राहकतया न्यूनतापत्तेः । इदानीं साध्यानुपस्थितिकाले अनुमितिसामग्रीनिर्वाहमात्रस्य कर्तव्यतया साध्याभावस्य भावरूपत्वनिर्भरे बीजाभावाच्च ॥ **अभावाभावस्येति** ॥

---

[1] अत्र ध्वंसस्य व्याप्यता तादात्म्येनेति ज्ञेयम् ।

(द्वै यु ) भावत्वेपि भेदात्यन्ताभावरूपसाध्यवैलक्षण्यानुरोधात् यथायोग प्रतियोगितावच्छेदकप्रतियोग्यन्यतरात्मकत्वे अङ्गीकृतेपि। अपिशब्दो वक्ष्यमाणार्थे युक्तिसूचनार्थ । तत्प्रकारश्चानुपदमेव व्यक्तीभविष्यति। प्रतिषेधाकारबुध्येः साध्याभावत्वेन प्रतियोगितदवच्छेदकत्वावगाहिपरामर्शस्य । अनिवारणात् तत्साध्यकतल्लिङ्गकान्वयिपरामर्शानधीनानुमितिसामान्यसामग्रीघटकताया इत्यादि । अनिवारणात् वारणस्य कर्तुमशक्यत्वात् ।

अय भावः। अभावसाध्यकस्थले स्वाभावरूपस्य प्रतियोगिनस्तत्त्वावच्छेदकस्य वा स्वाभावत्वेनैवावगाहिपरामर्शस्यैव कारणताऽवश्यमभ्युपेया। न तु प्रतियोग्यादे तदन्यरूपेणावगाहिन·। येषा मते अभावाभावस्य न भावात्मकत्वम्। किं तु प्रतियोगिसमनियताभावान्तरत्वमेव। तन्मते भवदुक्तपरामर्शस्य साध्यीयव्यतिरेकव्याप्त्यवगाहित्वाभावेन तेनानुमित्यजननस्यानुभवसिद्धतया येषा द्वितीयाभावस्य प्रतियोगिस्वरूपत्व तन्मतेपि तथैवाङ्गीकर्तव्यम्। अनुभवकलहायोगात्। तथा चोक्तपरमर्शस्य कारणत्वायोगात्तल्लिङ्गकानुमितिसामान्येपि प्रतिषेधाकारबुध्येरावश्यकत्वमिति ॥

नन्वेतदयुक्तम्। येषा मते द्वितीयाभावस्य प्रतियोगिस्वरूपत्वम् । तन्मते प्रतिषेधानाकारपरामर्शादनुमितेरानुभाविकतया द्वितीयाभावस्य प्रतियोगिस्वरूपत्वानङ्गीकर्तृभिरप्यनुमितिस्तादृशपरामर्शादङ्गीकार्या। अन्यथा अनुभववैषम्यायोगादिति ममापि वक्तुं शक्यत्वादित्यत्रापीदमेवोत्तरमभावाभावस्य भावत्वेपीति। तन्मतेऽपीत्यर्थ ।तदन्यमतसमुच्चये अपिशब्द । प्रतिषेधाकारबुद्धिरित्यस्योक्त एवार्थ । अनिवारणात् अपरित्यागात्। अनुमित्युपधायकत्वस्येत्यादि ।

अयमाशय । अभावाभावस्य भावत्वमतेपि तदतिरिक्तताभत इव प्रतिषेधाकारपरामर्शस्य फलोपधायकत्व स्वीकृतमेव। तथा च मतद्वयसिद्धत्वादयमनुभवो निर्विवाद इति तादृशपरामर्शस्यैव सर्वत्र फलजनकत्वमावश्यकम्। लाघवात्। यथा साध्ये केवलान्वयित्वग्रहकालीनानुमित्यनुरोधात् व्यापकताज्ञानकारणत्वस्यावश्यकत्वे साध्याभाववदवृत्तित्वाद्युपस्थितिकालेपि हेतुव्यापकत्वादिज्ञानान्तरकल्पनेनैवानुमिति स्वीक्रियते। यत्र हेतुव्यापकत्वघटितविषयकज्ञानाभाव अनुभवसिद्धस्तत्रानुमितिर्न स्वीक्रियत एव। प्रवृत्यादिकार्यस्यानुभवसिद्धत्वे विशेषदर्शनाधीनमानसेनैव तन्निर्वाहात्। अन्यथा साध्याभावघटितज्ञानस्यापि कारणत्वे भिन्नविषयकप्रत्यक्षादिनिष्ठप्रतिबन्धकताना तादृशपरामर्शघटित ामग्र्या कल्पने अतिगौरवापत्ते.। साध्याभाववदवृत्तित्वज्ञानकाले व्यापकताज्ञानकल्पन तु फलमुखगौरवरूपत्वान्न दोषावहम्। अन्यथा ज्ञानद्वयोत्तर विशिष्टज्ञानकल्पने गौरवप्रसङ्गेन विशिष्टज्ञानत्वेन हेतुत्वासिद्ध्या मीमांसका एव विजयेरन्निति ।

तत्सर्वमप्यविशिष्ट प्रकृतेपीति प्रकृते तथा कल्प्यते। न चेतरत्वव्यापकीभूताभावप्रतियोगीति परामर्शकाले साध्यानुपस्थितेरानुभाविकतया तत्काले प्रतिषेधाकारपरामर्शकल्पनाया बाधितत्वेनागत्योक्तपरामर्शकारणताया आवश्यकतया फलमुखत्वेनोक्तसर्वगौरवमदोषमेवेति वाच्यम्। तादृशपरामर्शकाले साध्यानुपस्थितिदशाया-

(द्वै. द्यु) मुक्तानुमित्यनुभवस्यैवाभावात्। न च तादृशानुमितिर्दीधितिकृत्प्रभृतिभिरङ्गीकृतैवेति वाच्यम्। तदुक्तार्थ एव विवदमान प्रति तदनुभवस्याप्रमाणीकर्तव्यत्वात्।

यद्वा अभाव केवलव्यतिरेकिणेति ग्रन्थ प्रकारान्तरेण व्याख्यायते। तथा हि। भक्तिपादीय**सुधायां** साध्याप्रसिद्धेर्दूषणत्वनिरासप्रस्तावने नैयायिकमतोपन्यासावसरे व्याप्तिप्रसिद्ध्यर्थं साध्यप्रसिद्ध्यपेक्षाया केवलव्यतिरेकिभङ्गमाशङ्क्य 'सम्प्रतिपन्नप्रमाणभावेषु केवलव्यतिरेकिषु सामान्यप्रसिद्ध्या तदुपपत्ति' इत्युक्त्वा कैश्चिद्ग्रन्थै सामान्यप्रसिद्धिप्रकारमभिधाय **तदेकदेशिमत**मपि तद्दूषणपरिहारार्थमुपन्यस्त **अभावो वा केवलव्यतिरेकिणा साध्य** इति। तत्र **वा**कारेण भावसाध्यकस्थले केवलव्यतिरेकित्व नास्त्येव। अत पूर्वोक्तभावसाध्यकस्थले पूर्वोक्तसामान्यप्रसिद्ध्यादिश्रमो न कार्य। किं त्वभावसाध्यकस्थलमेव केवलव्यतिरेक्युदाहरणमतो न केवलव्यतिरेकिभङ्ग इत्याशय उन्नीयते। तत्रोत्तरत्र सुधाया साध्याप्रसिद्धेर्दूषणत्वनिराकरणावसरे तदवान्तरभेदनिराकरणानवसरात्तन्मत तत्र न दूषितम्। अत्र ग्रन्थे पुनर्नैयायिकमतमवलम्ब्यैव परानुमानस्य साध्याप्रसिद्धि दूषणाभिधानावसरे तद्व्यवस्थापनाय केवलव्यतिरेकिभङ्गमाशङ्क्य सुधोपन्यस्त नैयायिकोक्त समाधान तस्यैव तन्मते सयुक्तिकत्वमित्यभिप्रेत्याभिधाय तदेकदेशिमत पूर्वमतदार्ढ्याय दूषयितुमभाव इत्यादिग्रन्थ। **अभावः** अभाव एव। तथा च भावसाध्यक केवलव्यतिरेकी नास्त्येवेति साध्याप्रसिद्धेस्तत्र दूषणत्वमनपवादमेवेति भाव। नन्वभावस्य साध्यत्वेपि साध्यप्रसिद्धिं विना व्याप्तिग्रहायोगात्कथं तत्र साध्याप्रसिद्धेर्दूषणत्वाभाव इत्यत आह ॥ **तथा सतीति** ॥ अभावमात्रस्य केवलव्यतिरेक्यनुमानसाध्यत्वे सतीत्यर्थ ॥ **सुशक इति** ॥ केवलव्यतिरेकिसामान्य इत्यादि। तथा च न केवलव्यतिरेकिभङ्ग इति भाव ॥ **अभावाभावस्येति** ॥ प्रतिषेधेत्यादे पूर्वोक्त एवाभिप्राय।

यद्वा न्यायवाक्याधीनाया परार्थानुमितिरूपाया प्रतिषेधात्मकाभावसाध्यककेवलव्यतिरेकिलिङ्गजन्य बुद्धेर**निवारणात्** वारयितुमशक्यत्वादित्यर्थ। तथा च तत्रापि (अभावसाध्यकेपि) साध्याभावावगाहित्वेन ज्ञानस्यावश्यकत्वे सामान्यप्रसिद्ध्यादरणरूपपूर्वमतमपहाय केवलव्यतिरेकिभङ्गापादन दुष्परिहरमिति व्यर्थमभावमात्रस्य केवलव्यतिरेकिसाध्यकत्वानुसरणमिति।

यद्वा अभावाभावस्येत्यादिना तदुपपाद्यपरप्रक्रियोपलक्ष्यते ॥ **प्रतिषेधेति** ॥ भावसाध्यकस्थलेपि साध्याभावव्यापकत्वावगाहिपरामर्शस्या**वारणात्**। अनुमितिकारणताया इति शेष। अयं भाव। अभावाभावस्य भावत्वमते चाभावसाध्यकस्थले साध्यप्रसिद्धिं विना व्यतिरेकव्याप्तिग्रहसम्भवेपि भावसाध्यकस्थलेपि कदाचिद्व्यतिरेकव्याप्त्याऽनुमित्युत्पादनस्य वारयितुमशक्यत्वेन केवलव्यतिरेकिणा अभाव एव साध्य इति नियमो न युक्त। न च तत्र व्यतिरेकिपरामर्शकाले अनुमितिरेव न जायत इति वक्तु शक्यम्। एकप्रकारेण जायमानज्ञानाना कारणत्वाकारणत्वविभागस्यानुभवविरुद्धत्वात्। ननु व्यतिरेकव्याप्त्या तत्रानुमितिजननेपि अन्वयव्याप्तिज्ञानेनाप्यनुमितिजननात्तस्य न केवलव्यतिरेकित्वमिति चेत् किं जलभेदव्याप्यगन्धवान् घट इति ज्ञानादभावानु-

(द्वै द्यु) मिति कदापि न जायत इति वक्तुमुद्यतोऽसि। न चाभावसाध्यके प्रथमत साध्यानुपस्थित्या प्रथमत तज्जन्यानुमित्यङ्गत्व व्यतिरेकव्याप्तेरेवेति तस्य केवल यतिरेकित्व नैवं भावसाध्यकस्येति वाच्यम्। सर्वपुरुषाणा प्रथमतस्तथैवानुमिते केवलव्यतिरेकितानियामकत्वे कस्यचित्पुरुषस्य जलपरमाणुभेदव्याप्यगन्धवान् पृथिवीपरमाणुरित्याप्तवाक्यजन्यात् शाब्दात्तन्मूलकान्मानसाद्वा अन्वयिपरामर्शात्प्रथमतोऽनुमिति। एवमन्यानुमितिरन्यस्येति क्रमेण सर्वेषामप्यभावाना सर्वपुरुषीयप्राथमिकव्यतिरेकव्याप्तिग्रहमूलकानुमितिविषयत्वाभावेन केवलव्यतिरेकिमात्रोच्छेदप्रसङ्ग। कस्यचित्पुरुषस्य तथाभावस्य तन्नियामकत्वे तु वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमवान् पर्वत इति वाक्याधीनव्यतिरेकिपरामर्शादेव कस्यचित्पुरुषस्य प्रथमतोऽनुमितिसत्त्वेन भावसाध्यकस्यापि केवलव्यतिरेकिताया दुर्वारत्वात्। न चैव सत्यन्वयव्यतिरेकित्वकेवलव्यतिरेकित्वादिव्यवस्था कथं सङ्गच्छत इति वाच्यम्। यदा यस्यान्वयव्यतिरेकव्याप्तिद्वयप्रमया यल्लिङ्गकानुमिति स तस्यान्वयव्यतिरेकी। यस्य यदा व्यतिरेकव्याप्तिप्रमयैव यल्लिङ्गकयत्साध्यकानुमिति स तस्य केवलव्यतिरेकी। एव केवलान्वयी निर्वाच्य इति व्यवस्थोपपत्ते। वस्तुतोऽन्वयव्याप्त्यसत्त्व न केवलव्यतिरेकितानियामकम्। केवलव्यतिरेकित्वाभिमतेषु सर्वेषु तत्सत्त्वस्यावश्यकतया तादृशस्थलस्यैवाप्रसिद्धे। तस्माद्भावाभावसाध्यकस्थलयोरविशेषात्सर्वसम्प्रतिपन्नभावसाध्यककेवलव्यतिरेकिसामान्यभङ्गपरिहाराय सामान्यप्रसिद्ध्यादरणमेव युक्तमिति।

अत्रेद बोध्यम्। **अभावः केवलव्यतिरेकिणे**त्यादिग्रन्थस्यानिर्वचनीयत्वसाध्यकप्रकृतनिर्वाहकत्वविवक्षापूर्वक मतान्तरोत्थापनपरत्वेन पूर्वव्याख्यानमात्रादरणे प्रतियोगिप्रतीतिमन्तरेणेति वाक्योत्तरत्वमेव स्यात्। व्याप्तेरशक्यप्रतिपत्तिकत्वाभिधाने प्रतियोगिप्रतीतिमन्तरेण व्याप्तिग्रहोपपादकस्यैतन्मतस्य झडिति तत्रैव सङ्गतत्वात्। तद्विहाय व्यतिरेकिभङ्गरूपतटस्थशङ्कया व्यवधानेन पुनस्तन्मतोत्थापने बीजाभाव। अत उत्तरत्र सामान्यप्रसिद्धिशङ्काया एव कर्तव्यतया तत्पक्षस्यैव युक्तताया शिष्यान् प्रति प्रतिपादनाय सामान्यप्रसिद्धिरूपसमाधानानन्तरमेतत्पक्षोपन्यासस्योक्तविन्यासेन टीकाभिप्रेतत्वावगमादुक्तद्वितीयव्याख्या युक्ता। एतद्व्याख्यानमात्रादरेण परानुमाने प्रतियोगिप्रतीतिमन्तरापि व्याप्तिग्रहोपपत्तिशङ्काया उक्तव्याख्याननिवर्त्याया दृष्टत्वे तन्निरास विना मौलदूषणसमर्थनायोगात् तद्विहाय नैयायिकमतसौष्ठवमात्रविचारस्य गङ्गावालुकपरिगणनवदसङ्गतत्वापत्ते प्रथमावतारिका पूर्वोक्तसर्वार्था अपि टीकाभिप्रेता इत्यवगम्यते। बह्वभिप्रायाणामस्मदादिबुद्ध्यविषयाणा सर्वज्ञकल्पटीकाकृद्वाक्येषु सर्वेषु सम्भावितत्व प्रमितत्वमपि। **चन्द्रिकातत्प्रकाशकृतां** महात्मना वचनैस्तथावगमात्। वचनानि तु **न्यायामृते**

> चित्रै पदैश्च गम्भीरैर्वाक्यैर्मानैरखण्डितै।
> गुरुभाव व्यञ्जयन्ती भाति श्रीजयतीर्थवाक्॥ इति।

**चित्रैः** उक्तरीत्या विन्यासविशेषशालिभि नानार्थबोधनसमर्थैश्च। गर्भिणीपक्षे अलसभावेन मन्थरगतिशालित्वादिवैचित्र्योपेतै। **गम्भीरै**र्बह्वभिप्रायशालिभि। गर्भिणीपक्षे स्वरविशेषपूर्वक मन्द नि सरद्भि। **अखण्डितैः** प्रतिवादि

(द्रै द्यु) भिर्दूषयितुमशक्यै । **मानैः** स्वप्रतिपादनीयप्रत्यक्षादिप्रमाणै । गुर्विणीपक्षे ग्तौ नखदन्तादिभिरखण्डितैर्मा- नैर्गोपनीयस्थलविशेषै कुचाधरादिभि । गर्भिणीगमननिषेधात् । **गुरुभाव** गुरूणा मूलकारप्राचीनटीकाकारस न्न्यायरत्नावल्याद्यादिकृता भाव । **व्यञ्जयन्ती** प्रकटीकुर्वती । सुधादिषु सन्न्यायरत्नावल्याद्युपपत्तेरपि प्रदर्शितत्वात् । तथा **गुरुर्बहु यो भावः** [1]स्वाभिप्राय त **व्यञ्जयन्ती** शिष्यान् बह्वभिप्रायकमिदं वाक्यमिति द्योतयन्ती । विन्यास- विशेषादिभि शिष्याणा तदवगमात् । गर्भिणीपक्षे तु **गुरोर्गर्भधारणप्रयुक्तशरीरगौरवशालिन्या स्वस्या ।** वोतो गुणवचनादित्यनेन ङीषो विकल्पितत्वात् । **भावं** गर्भरूप पदार्थं धर्मं वा । विशेषणमात्रसाम्यादप्रस्तुतग- र्भिणीप्रतीत्या गर्भो निगूढो यथा चिह्नमात्रानुमेय तथा टीकाभावोऽपीति ध्वन्यते । तथा **सुधापरिमले चन्द्रिकाप्रकाशकृतां** वाक्य

'यद्यपि

प्रतिवाक्य प्रतिपदमनेकाकूतगर्भिता ।
प्रतिभाति सुधाऽथापि ग्रन्थाल्पत्वाय नोच्यते' ॥ इति ।

तेषामेव **भावदीपिकायां** वचनम् ।

टीकावाक्यस्य गाम्भीर्यं मर्शं मर्शं पुरो मन ।
न गाहतेऽथापि ग्रन्थबहुत्वादुपरम्यते ॥ इति ।

तस्मादुक्तसर्वव्याख्या युक्ता एवेति ।

**प्रतिषेधेत्यस्य** चरमव्याख्यानातिरिक्तपूर्वतनप्रधानव्याख्यापक्षेषु साध्याभावत्वेन ज्ञानस्यावश्यकत्वे किमा- गतमित्यतस्तटस्थशङ्कासमाधानाभ्यामुपपादितव्यतिरेकव्याप्त्यग्रहरूपपूर्वार्थोपपादकत्व सारयति ॥ **प्रतिषेध- स्येति** ॥ हेत्वभावनिष्ठप्रकृतसाध्यानुमित्यौपयिकव्यापकतानिरूपकतावच्छेदकरूपविशिष्टसाध्याभावज्ञानस्येत्यर्थ । **प्रतियोगिसापेक्षतानियमात्** तादृशरूपघटकप्रतियोगिग्रहाधीनत्वनियमात् । तेन वस्तुत प्रतिषेधरूपाभावस्य नैयायिकादिरीत्या प्रतियोगिसापेक्षत्वोपपादनस्य प्रकृतानुपयोगेपि ज्ञाने लक्षणाया तु प्रमेयत्वाभावत्वादिना तद्‌ज्ञाने प्रतियोगिग्रहस्यानपेक्षायामपि न क्षति । प्रमेयत्वादेरनुमितिकारणग्रहविषयहेत्वभावनिष्ठव्यापकता निरूपकतानवच्छेदकत्वात् ।

**प्रतिषेधाकारेति** भागस्य चरमव्याख्यानपक्षे तु, ननु भावस्थले साध्याभावघटितव्यतिरेकव्याप्ति ज्ञानस्यानुमितिजनकत्वानङ्गीकारे का क्षतिरित्यत आह ॥ **प्रतिषेधस्येति** ॥ साध्याभावव्यापकहेत्वभाव- प्रतिषेधस्य तद्रूपहेतो । **प्रतियोगिसापेक्षत्वनियमात्** साध्याभावप्रतियोगि वा व्याप्तिप्रतियोगि वा यत्साध्यं तत्सापेक्षत्व तद्विनाऽनुपपद्यमानत्व तस्य नियमात् । तन्नियमस्याभावसाध्यकस्थले भवतैवाङ्गीकृतत्वादित्यर्थ । तथा चाभावसाध्यकस्थल इव भावसाध्यकस्थलेपि साध्यं विनाऽनुपपद्यमानत्वग्रहाधीनानुकूलतर्कसचिवपरामर्श-

[1] मूलाभिप्राय. इति पाठेन भाव्यमिति भाति,

(द्वै द्यु) सद्भावे तदनङ्गीकारो निर्बीज । निर्निमित्त तथाङ्गीकारेऽभावसाध्यकस्थलेपि व्यतिरेकिपरामर्श कारणत्व न स्यादिति भाव ।

यद्वा **प्रतिषेधस्य** प्रतिषेधावगाहिपरामर्शघटितसामग्र्या **प्रतियोगिसापेक्षत्वनियमात् कारणताद्वारा** स्वनिरूपकीभूतानुमितिरूपकार्यप्रधाननियमस्याभावसाध्यकस्थले भवतैवाङ्गीकृतत्वादित्यर्थ । पर्यवसितभावस्तु पूर्वोक्त एव ज्ञातव्य ।

वादी सामान्यप्रसिद्धिमाशङ्कते ॥ **सत्त्वासत्त्व इति** ॥ सत्त्वासत्त्वे परस्परसमानाधिकरणाभावप्रतियोगिनी धर्मद्वयात्मकत्वात् रूपरसोभयवदित्यर्थो **लघ्वद्वैतचन्द्रिकादिशा**ऽवसेय ।

निष्कर्षस्तु सत्त्वासत्त्वोभयत्वविशिष्ट स्वप्रयोजकापेक्षाबुद्धिविषयौ यौ धर्मौ तत्तदवच्छिन्नप्रतियोगिताका-भावकूटत्वावच्छिन्नाधिकरणताक तदवच्छिन्नाभावाधिकरणतासमानाधिकरणतदवच्छिन्नाभावाधिकरणताक वा द्वित्वविशिष्टधर्मत्वात् रूपरसोभयवदिति । अत्र शुद्धात्मघटोभयविषयकापेक्षाबुद्ध्यधीनोभयत्वविशिष्टे आत्मव्यतिरे-काप्रसिद्ध्या व्यभिचारवारणाय घटशशविषाणे इति विकल्पाख्यापेक्षाबुद्ध्यधीनतादृशद्वित्वविशिष्टे तन्मते असत्प्र-तियोगिकाभावानङ्गीकारेण व्यभिचारवारणाय वा धर्मपद कालसम्बन्धितादात्म्यमात्रवदर्थकम् । आत्मन शश विषाणादेश्च कालसम्बन्धानङ्गीकारात् तत्तादात्म्यवतोरुभयत्वविशिष्टयोर्वारणमित्याहु । धर्मत्वमविवक्षितमेतत्तात्पर्य-ग्राहकमेवेत्यपि **केचित्** ।

अत्र सत्त्वासत्त्वोभयत्व किञ्चिन्निष्ठात्यन्ताभावप्रतियोगितावच्छेदक अत्यन्ताभावप्रतियोगितावच्छेदकं वा धर्मपर्याप्तोभयत्वात रूपरसोभयत्ववत् । प्रतियोगितावच्छेदकता स्वरूपसम्बन्धावच्छिन्ना ग्राह्या । अत प्रत्येक सदसतोरुभयाभाववत्त्वेपि न सिद्धसाधनावसर इत्यपि **केचिन्निष्कर्षयन्ति** ।

॥ **सामान्यत इति** ॥ सत्त्वाभावासत्त्वाभावयोरेकत्रानुमानेन तदुत्तरमानसबोधेन वा सिद्धौ सत्त्वा-भावविशिष्टासत्त्वाभावरूपस्य वा तदनतिभिन्नार्थरूपसदसद्वैलक्षण्यात्मकानिर्वचनीयत्वस्य वा सामान्यत सिद्धिरि-त्यर्थ । ननु सदसती एकधर्मिनिष्ठभेदप्रतियोगिनी इति साक्षादेव सदसद्वैलक्षण्यरूपानिर्वचनीयसिद्धिं विहाय कुतो वक्रतेति चेन्न । सत्त्वाभावविशिष्टासत्त्वाभावस्यापि सदसद्वैलक्षण्यपदव्यवहृतिगोचरतया सत्त्वासत्त्वयोरनुगत-तया कथञ्चिन्निर्वक्तु शक्यत्वेन लाघवेनोक्तरीत्यनुसरण कृतम् । सदसतीत्युक्तरीत्यनुसरणे भेदद्वयसिद्ध्या अनिर्वच-नीयसिद्धिर्न स्यात् । अधिकप्रयत्ने गौरव स्यादिति तत्पक्षोपेक्षणात् ॥ **अभिधेयत्वादाविति** ॥ अभिधेयत्वप्रमे यत्वोभयत्वविशिष्टे इत्यर्थ ॥ **तस्यापीति** ॥ **पक्षतुल्यत्वे इति** ॥ 'न हि पक्षे पक्षसमे वा व्यभिचार.' इति प्राचीनोक्तेरित्यर्थ ।

॥ **व्याघातादिति** ॥ तमुपपादयति ॥ **तस्यापीति** ॥ **किञ्चिदादीति** ॥ तथा च स्वयमुक्तसाध्यसाध-नाय यत्किञ्चिच्छब्देन तमभिधाय पुनस्तन्निराकरणे स्वकीयतत्प्रतिपादनव्याघातरूपस्वक्रियाविरोध इत्यर्थ । किं चाभिधेयत्वप्रमेयत्वरूपयत्किञ्चित्केवलान्वयिधर्माणा पक्षतुल्यत्व सर्वेषां वा । नाद्य । उर्वरितेष्वेवानैकान्त्यापातात् ।

(द्वै ग्रु) द्वितीये तु सर्वेषां केवलान्वयिधर्माणां पक्षतुल्यत्वेऽपि परस्परविरुद्धानां व्यतिरेकिधर्माणामपि मिलित्वा किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वमावश्यकम्। अन्यथा तदुभयस्मिन्नेव व्यभिचारप्रसङ्गात्। तथा च घटत्वाभावाधिकरणे तादृशयत्किञ्चिद्व्यक्तौ घटत्वव्याप्यतत्समनियतधर्माभावानामावश्यकत्वम्। एवमघटत्वतत्समनियततद्व्याप्यधर्माभावानामपि तत्रैव सत्त्वमावश्यकम्। केवलान्वयिभूतप्रमेयत्वघटत्वाघटत्वान्यतराधिकरणतैतदुभयस्मिन् व्यभिचारवारणाय तत्तदभावोऽपि तत्रैव स्वीकृतः स्यात्। तथा च तन्निष्ठसर्वधर्माभावाधिकरणत्वे किञ्चिन्निष्ठाभावप्रतियोगित्वाभावाद्व्यभिचार इत्याह ॥ **किञ्चेति** ॥ न च तस्यैकत्वादुभयधर्मपदेन तद्ग्रहणायोगात्कथं व्यभिचार इति वाच्यम्। सर्वधर्माभावाधिकरणतापदेन तन्निष्ठाघटत्वाभावाधिकरणताघटत्वाभावाधिकरणतैतदुभयस्मिन् एवमन्यान्यप्युपादाय व्यभिचार इत्यत्र तात्पर्यात् ॥ **तस्यापीति** ॥ तादृशोभयस्यापीत्यर्थः ॥ **विरुद्धमिति** ॥ अघटत्वाभावस्य घटत्वाभावस्य चाभावे एकस्मिन् सति तत्र घटत्वमघटत्वं एवमपटत्वाभावस्य पटत्वाभावस्य चाभावे तस्मिन्नेव च सति पटत्वमपटत्वं चेति क्रमेण सर्वविरुद्धधर्मवत्त्वमेकस्यापद्येतेत्यर्थः।

वस्तुतः प्रमेयत्वादौ व्यभिचारवारणाय तद्घटितोभयस्यापि पक्षत्वे न केवलं व्याघातः। अपि तु सर्वधर्माणां कुत्राप्यभावेन सर्वधर्मत्वावच्छिन्नाभावस्यापि केवलान्वयितया तादृशाभावप्रमेयत्वैतदुभयस्मिन्नुक्तसाध्याभावाद्व्यभिचारः। तस्यापि पक्षत्वे प्रमेयत्वाभावसर्वधर्माभावत्वावच्छिन्नाभावयोः एकस्मिन् स्वीकारे सर्वधर्माधिकरणत्वमेकस्य विरुद्धमापद्येतेत्याह ॥ **किञ्चेति** ॥ **सर्वधर्माधिकरणत्वेने**ति यथाश्रुतविवक्षया। हेतोरुक्तोभयधर्मत्वपर्यन्तविवक्षाया तु तद्घटितोभयेनेत्यर्थ इति सारम्। **सर्वधर्माणां** यावन्तो धर्मास्तेषां यथाश्रुते। निष्कर्षे तद्घटितोभयेषाम्। अन्यथा तत्र तत्रैव व्यभिचारः स्यादिति भावः।

एतेन 'सर्वधर्माणां पक्षत्वापादनमसङ्गतम्। व्यतिरेकिधर्मेषु सिद्धत्वेन सिद्धसाधनतया पक्षीकर्तुमशक्यत्वात्। साधनपदस्याङ्गीकारार्थकत्वेनोक्तदोषपरिहारेऽपि सर्वधर्माभावो नाम धर्मत्वावच्छिन्नाभावरूपः तत्सामान्याभाव एव। तत्र व्यभिचारवारणाय तत्रोक्तसाध्यादरे एकस्य विरुद्धसर्वधर्मवत्त्वं नापादयितुं शक्यम्। धर्मसामान्याभावस्य धर्ममात्रविरोधितया यत्किञ्चिद्धर्मसत्तामात्रेण धर्मसामान्याभावाधिकरणत्वासम्भवात्। अन्यथा घटसामान्याभावाधिकरणत्वाभाववति सर्वघटवत्त्वं स्यात्' इति परास्तम्।

ननु धर्मपदस्य भेदप्रतियोगितावच्छेदकत्वरूपव्यतिरेकित्ववद्धर्मपरतयैव हेतुशरीरे सार्थक्यम्। न च तथात्वेपि व्यतिरेकिधर्मघटितोभयात्मकत्वस्य प्रमेयत्वघटत्वोभयस्मिन् सत्त्वेनोक्तसाध्याभावाद्व्यभिचार इति वाच्यम्। व्यतिरेकिधर्ममात्रघटितोभयात्मकत्वस्य विवक्षितत्वात्। तथा च केवलान्वयिधर्माणां किञ्चिन्निष्ठाभावप्रतियोगित्वानङ्गीकारान्न पूर्वोक्तव्याहत्यादीत्यत आह ॥ **अविरुद्धत्वं चोपाधिरिति** ॥ चस्त्वर्थे। उपाध्यन्तराकथनेन समुच्चायकत्वायोगात्। तुशब्दार्थविशेषस्तु परस्परात्यन्ताभावात्मकत्वरूपविरोधघटितत्वम्। तेन सहानवस्थानरूपविरोधनिवेशे घटत्वस्तम्भत्वयोरेकनिष्ठात्यन्ताभावप्रतियोगिनोरुक्तविरोधशालित्वाद्व्यभिचारः। परस्परविरहव्याप्यत्वं चेदपि स एव दोषः। परस्पराभावानात्मकत्वं चेत् रूपतत्प्रागभावरूपतद्ध्वंसयोः परस्परध्वंसप्रागभावा-

(द्वै धु ) त्मकयोरेकवायुनिष्ठात्यन्ताभावप्रतियोगिनाऽव्यभिचार इति निरस्तम् । न चोक्तरूपविरोधनिवेशेऽपि संयोगतदत्यन्ताभावयोरेकवृक्षवृत्तिपरस्परात्मकात्यन्ताभावप्रतियोगिनोर्व्यभिचार । नैयायिकमतरीत्या दूषणकथनावसरे शुद्धसिद्धान्तसिद्धतद्व्याप्यवृत्तित्वाभावस्यानाश्रयणीयत्वात् । तथात्वेपि वा रूपात्यन्ताभावाभावात्मकघटीयतद्रूपरूपात्यन्ताभावयोरेकपटनिष्ठात्यन्ताभावप्रतियोगिनोर्व्यभिचार इति वाच्यम् । सत्त्वासत्त्वयोरुक्तरीत्याऽत्यन्ताभावप्रतियोगितयाऽर्थान्तरवारणाय पूर्वोक्तपरिष्कारे कूटत्वावच्छिन्ननिरूपकताकाधिकरणतायामनवच्छिन्नत्वस्य निविष्टतया संयोगतदत्यन्ताभावात्मकोभयस्मिन् व्याप्यदलस्यैवाभावात् । यद्वोभय स्वप्रयोजकापेक्षाबुद्धिविषयौ यौ धर्मौ तद्धर्मावच्छिन्नाभावनिरूपितानवच्छिन्नाधिकरणतासमानाधिकरणतद्धर्मावच्छिन्नाभावनिरूपितानवच्छिन्नाभावाधिकरणताकत्वरूप वा तद्धर्मावच्छिन्नाभावकूटत्वावच्छिन्ननिरूपितानवच्छिन्नाधिकरणताकत्वरूपं वा यत्साध्य तद्वत् तत् स्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितावच्छेदको यो धर्म तदवच्छिन्नप्रतियोगितानिरूपितानुयोगितावच्छेदक च यत्स्व तदवच्छिन्नतदवच्छिन्नविषयकापेक्षाबुद्धिजन्योभयत्वविशिष्टभिन्नत्वरूपाविरुद्धत्ववदित्यादिरीत्या परिष्करणादरे सर्वदोषाभावात् । तद्रूपरूपाभावोभयोपादाने तद्रूपत्वस्य रूपाभावत्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितानवच्छेदकत्वेनोक्तभिन्नत्वरूपाविरोधाक्षते । सत्त्वासत्त्वयोरप्रामाणिकात्यन्ताभावनियमपक्षेऽपि परस्परविरहात्मकत्वमुपपादितमधस्तात् । तत्रैव रूपघटितपरिष्कारे तत्पक्षेऽपि न दोष इत्यलम् ।

यद्वा चशब्द पक्षेतरत्वात्मकसत्त्वासत्त्वोभयभेदस्योभयत्वानाश्रयत्वरूपस्य चोपाध्यन्तरस्य समुच्चायक. । व्याप्तिबाधानुपपत्त्यादिरूपानुकूलतर्कस्य परेण स्वग्रन्थे लिखितस्याग्रेऽर्थापत्तिनिरासेनार्थतो निरस्ततया पक्षेतरत्वस्योपाधिताया आवश्यकत्वात् ।

यद्वा चशब्द उपाधिश्चेति भिन्नक्रमेण योजितः सन्न्यायामृतोक्ताभाससाम्यादिदूषणान्तरसमुच्चायक । अनुकूलतर्कसद्भावे पक्षे साध्यव्यापकनामङ्गेनोपाधेरप्ययोगादुपाधि वदताऽनुकूलतर्काभावसूचनद्वाराऽऽभाससाम्यस्यापि सूचितत्वात् । तानि च घटत्वाघटत्वे किञ्चिन्निष्ठात्यन्ताभावप्रतियोगिनी धर्मत्वात् रूपरसवत् कल्पितत्वमकल्पितत्वानधिकरणानात्मनिष्ठात्यन्ताभावप्रतियोगि अनात्मनिष्ठात्यन्ताभावप्रतियोगिधर्मत्वात् अकल्पितत्ववदित्यादीन्यनुमानानि चेतनाचेतनत्वसुनिरूपत्वदुर्निरूपत्वादिकमेकस्यैव स्यादित्यादीनि दूषणान्तराणि द्रष्टव्यानि ।

यदत्र केनचिदुक्त 'धर्मत्वमात्रेणोक्तसाध्यं साधयतो मम घटत्वाघटत्वयोरप्युक्तसाध्यवत्त्वमिष्टमेव। न हि क्षिति सकर्तृकेत्यनुमानस्याङ्कुर सकर्तृकमित्यनेनाभाससाम्यम् । न च घटाघटविलक्षणत्व वास्तव येन विरोधः स्यात् । न हि वस्तुनो दुर्निरूपस्य किञ्चिदपि रूपं वास्तव भवति । कल्पितत्वपक्षकानुमानमपि मदिष्टमेव । सत्त्वासत्त्वयोरपि नोक्तरूपविरोध । अनिर्वचनीयार्थ एवाभावद्वयस्य सत्त्वात्' इत्यादि ।

तल्लघूत्तया दूषयितुमुपलक्षणतया यत्किञ्चिदाशङ्कते ॥ न चेति ॥ सत्त्वासत्त्वे अपि यथा रूपरसादिकं न विरुद्ध तथा सत्त्वासत्त्वे अपीत्यर्थ । तथा चोपाधि साधनव्यापक इति भाव । उपलक्षणं चैतत् । कल्पि-

(द्वै द्यु ) तत्त्वाकलिपतत्त्वादिधर्मा अपि ग्राह्या । तेन पूर्वोक्ताभाससाम्याद्युद्धार । **न विरुध्येते अपीति** योजना। अपिशब्देनोक्तार्थोपपादकमतान्विकरत्वमपि लभ्यते। सर्वं सङ्गृह्यैकोक्त्या दूषयति ॥ **अनिर्वचनीयार्थेति** ॥ अनिर्वचनीयरूपो योऽर्थोऽसदन्य कालसम्बन्धी वा तत्प्रतीते प्रागित्यर्थ । असन्मतेऽपि शशविषाणादिशब्देनासत इवानिर्वचनीयसदसद्विलक्षणादिशब्दैस्तादृशासत एव प्रतीतिसम्भवात् । प्राक्पदलभ्यतत्प्रतीतिदौर्लभ्यमयुक्तमिति शङ्कापनोदायेदमुदितम् । कालसम्बन्धासदन्यत्वोपपाद्याना सत्त्वाभावाधिकरणतासमानाधिकरणासत्त्वाभावाधिकरणतादीना अविरोधसम्पादकाना तदभावे उपपादयितुमशक्यत्वात् । न च सद्विलक्षणत्वविशिष्टासद्विलक्षणत्वरूपेण प्रतीयमानस्य कालसम्बन्धवत्त्वेनाऽपि प्रतीयमानस्य तस्यैवासत्त्वे कालसम्बन्धोऽसदन्यत्वमसत्यत्यागतमिति कथ तेन तद्व्यावृत्तिरिति वाच्यम् । वस्तुत सद्रूपकालसम्बन्धवत्त्वादेरेव विवक्षिततया तत्प्रतीतौ भासमानयोस्तयोरप्यसत्त्वेऽनिवारणात् । वस्तुत सद्रूपत्वं च सत्तावत्त्वमेव । तत्र सत्तासंसर्गस्य ससर्गविधयैव निवेशान्न कोऽपि क्षुद्रोपद्रव ।

॥ **अविरोधेति** ॥ सत्त्वासत्त्वाभावयोरुक्तविरोधाभावस्य अभाससाम्यादिना प्रासाप्रयोजकत्वव्याप्तिग्राहकतर्काभावमूलकहेतुनिष्ठन्याप्त्यभावरूपविरोधस्य च योऽभावस्तस्याप्रतीते सर्वलौकिकवैदिकानामपीत्यर्थ । असिद्धेरित्युक्तौ प्रतिवादिमात्र प्रति असिद्धत्वस्य झडिति प्रतीत्या परार्थन्यायप्रयोगासम्भवेऽपि स्वार्थानुमितिसामग्री सम्भाव्येत । अतोऽप्रतीतेरिति सामान्येनोक्तम् । तेन सर्वथाऽनाहार्यप्रतीतेरभावात्स्वार्थानुमितिरेव न घटते । कुतस्तन्मूलकपरार्थन्यायप्रयोगादिकमिति लभ्यते ।

अयमभिप्राय । उपाधिर्हि पक्षादिप्रविभागोत्तरमुपस्थित सत्प्रतिपक्षस्योत्थापक । व्याप्तिग्रहवेलायामुपस्थिता व्यभिचारोन्नायको भवतीत्यन्यत्राभिहितम् । तत्रोपाध्युद्भाव्यस्य विरुद्धत्वरूपसत्प्रतिपक्षहेतोरसिद्धिग्रह केन भवति । न तावत्प्रमाणान्तरेण । त्रैकालिकनिषेधरूपासत्त्ववतदभावरूपसत्त्वयोर्भवता पक्षीकृतयोर्घटत्वतदभावादीनामिव विरोधग्रहस्यैव प्रमाणान्तरेण जननात् । न हि कुत्रापि विरोधग्रहो न सम्भवति । तथात्वे लोकाना विरोधाविरोधग्रहाधीनसर्वप्रवृत्तिनिवृत्त्याद्युच्छेदप्रसङ्गात् । न हि प्रमाणानि स्वशक्तिमपहाय त्वदिच्छामात्रेण कार्यं जनयन्ति । तथा सत्यनुमानस्येव प्रत्यक्षस्यानुमितिजनकत्वमप्यापद्येत । मम तादृशग्रह आनुभविक इति चेत् उन्मादवत्पुरुषाणा दोषविशेषाधीनमानसस्येवानुमानशब्दादिजन्यानुमितिशाब्दादिना स्वयमपि प्रवृत्त्यादिक लोकव्यवहारसदृशमेव शब्दात्प्रत्येमि लिङ्गात्प्रत्येमीति व्यवहार चानुतिष्ठत व्यवहारविशेषज्ञाप्योक्तज्ञानधर्मिकप्रत्यक्षवैलक्षण्याद्यनुभववतोऽपि चार्वाकस्य प्रत्यक्षातिरिक्ते अप्रामाण्यभ्रमस्य मानसस्य दोषविशेषेणाऽग्रहापरपर्यायेच्छादिनाऽऽहार्यरूपतया जायमानस्येव त्वज्ज्ञानस्यापि तादृशभ्रमरूपत्वसम्भवेन तस्योक्तानुमित्यादिकार्यनिर्वाहकत्वात् । व्यवहारादेस्तु तन्मूलकाहार्यभ्रमान्तरद्वारैव निर्वह्निर्वह्निमानित्यादिव्यवहारस्येव सम्भवात् । आग्रहादिशून्यलौकिकाना धूमानुमानादिसामग्र्या इवोक्ताविरोधग्रहसामग्र्या कदाप्यभावात् । अत एवोक्तमाचार्यै

(द्वै द्यु) ईशशक्तेरचिन्त्यत्वान्महोन्मत्तैः प्रवर्तितम् । इति ।

उन्मत्तैरिति तत्सदृशदोषविशेषकथनेन परकीयप्रक्रियाया लौकिकपरीक्षकबुध्यगोचरत्वकथनेनाऽग्रहादिमूलकत्व-मुच्यते । तस्मात्स्वार्थानुमाने प्रवृत्तस्याविरोधग्रहः सम्भवतीति न सङ्गच्छते । नाप्येतेनैव । उपाध्युन्नेयसत्प्रति-पक्षहेतोरसिध्युत्तरमेवोक्तानुमानैः तत्सजातीयानुमानान्तरैर्वाऽनिर्वचनीयार्थसिद्धेः सम्पादनीयतयाऽन्योन्याश्रयात् । न च प्रतिहेतौ सन्दिग्धासिद्धत्वेन दुर्बलतया बाधकत्वायोगेन स्थापनानुमानेन साध्यसिद्ध्या निश्चितासिद्धो-भवतीति वाच्यम् । अन्यत्र घटत्वतदभावादावनुत्पन्नस्य विरोधसंशयस्यात्रैवोत्पत्तौ बीजाभावात् सर्वत्र तदुत्पत्तौ तन्मूलनिश्चयाधीनप्रवृत्त्यादिकार्यविलोपप्रसङ्गात् । अनुकूलतर्कानुत्थाने सन्दिग्धोपाधेरपि दूषकत्वाच्च । व्याप्तिग्रह-वेलायामुपाधिस्फूर्तेरावश्यकतया व्याप्तिनिश्चयस्याप्ययोगाच्च । घटत्वाघटत्वादीनामाभाससाम्ये उपस्थिते अतात्वि-कत्वादिग्रहाधीनतच्छमनस्यापि कुत्रापि तद्ग्रहाभावदशायामयोगाच्च । स्वाप्नादावपि कल्पिताकल्पितवैलक्षण्यस्य शुक्तिरजते रजतारजतवैलक्षण्यस्य च लोकानामनुभवविरुद्धत्वात् । इत्थं च स्वार्थानुमित्यनुपपत्तौ परार्थानुमान स्यापि वादिनं प्रत्यनिर्वचनीयसिद्धेः प्राक् प्रयोक्तुमशक्यतया 'उभयोरपि कल्पितत्वेनाविरोध', 'स्वरूपतोऽतात्वि-कस्य न हि किञ्चिदपि रूपं वास्तवं भवति' 'अस्या प्रसक्तेरिष्टत्वात्' इति त्वदुक्तेरकिञ्चित्करत्वमेव । त्वदनुमान-साध्यीभूतसत्त्वाभावाधिकरणताऽसत्त्वाभावाधिकरणतासत्त्वासत्त्वैतच्चतुष्टय पक्षीकृत्यैकधर्मिनिष्ठात्यन्ताभावप्रतियोगि-त्वस्य धर्मचतुष्टयत्वादिहेतुना रूपरसगन्धस्पर्शैतच्चतुष्टयदृष्टान्तेन साधने सदसद्विलक्षणविलक्षणत्वादिकस्याप्येवरीत्या सिद्ध्यापत्त्या सप्तभङ्गित्वस्य जगति सिद्ध्यापत्तेश्च । अतात्विकत्वादेरसिद्धतया तेन समाहितुमशक्यत्वाच्च ।

अथ मिथ्यात्वबोधकश्रुतीनामुपक्रमादिलिङ्गानुगुण्येन स्वार्थतात्पर्ये निश्चिते तद्विरुद्धप्रमाणानामबाधकत्व-निश्चयात्सर्वोऽप्ययमर्थकलापोऽन्यथानुपपत्तितन्मूलकस्वार्थानुमितिगोचरो भवत्येव । प्रतिवादिनं प्रत्यपि श्रुतिबलेन प्रत्यक्षमाभासीकृत्यान्यदुपपाद्यत इति चेन्न । श्रुत्यर्थनिर्णयार्थं प्रवृत्तस्योपपत्तिविरोधादिपरिहारायानिर्वचनीयत्वादि-तृतीयप्रकारकल्पना प्रतियोग्यभावादिविरोधपरिहाराय विषमसमानसत्ताकनानाभावादिलोकासिद्धबहुतरपदार्थ-कल्पना चेति गौरवसहनेन श्रुतीनां मिथ्यार्थकत्वमेव ग्राह्यमुत कल्पनागौरवमपहाय सत्यत्वाद्युक्तार्थकत्वमेवेति तात्पर्यसन्देहकवलितत्वेन श्रुतितात्पर्यनिश्चयोपायाभावात् । प्रत्युतोक्तगौरवानुसन्धानेन मिथ्यात्वं यदि दुःखादे-रित्याद्यनुव्याख्यानसुधाद्युक्तदिशा मिथ्यात्वपरत्वाभावस्यैव निश्चयात् । एवं प्रतिवादिबोधनमप्युक्तम् । उक्तबाध-कपरिहारमन्तरेण त प्रत्युपपत्तिविरुद्धाया श्रुतेरुपन्यस्तुमशक्यतया तत्परिहारस्य श्रुत्यर्थनिश्चयात्प्राक् कर्तुम-शक्यतया अन्योन्याश्रयेण साधनोपायाभावात् । तदेतदभिप्रेत्योक्तं सुधायां

'शिष्योऽपि प्राक् प्रबोधात् प्रतिवादितुल्य एव' इति । 'अन्योन्याश्रयमनुत्तीर्णं कथं त्वदभ्युपगममात्रेण स्वतर्कस्य विरुद्धता प्रतिपद्येत' इति । 'श्रुतीनामद्यापि गहननिविष्टत्वात्' इति च ।

तस्मात्साध्याप्रसिद्धिर्दुर्वारैवेति स्थितम् । प्रतिवादिवाक्यादिना वा कस्यचिदुपदेशादिना वा कथञ्चित्सा-ध्यस्योपस्थित्या तदभावग्रहपूर्वकव्यतिरेकव्याप्तिनिश्चय सम्भवतीति नाप्रसिद्धविशेषणता दूषणमिति सुधाया

(द्वै चु) व्यवस्थापितत्वात् अद्वैतमतेपि तद्दूषणत्वस्य तत्र तत्र तैरुक्तत्वात्कथमिदं दूषणमुक्तमित्यत आह । ॥ तदिदमिति ॥ तत् परेण स्वग्रन्थे आशङ्क्य सामान्यप्रसिद्ध्युपपादनादिना परिहृतम् । इदमेतन्मूलेनाचार्यैरुक्त इदानीमस्माभिर्व्याख्यातम् । परसिद्धं नैयायिकसिद्धमित्यर्थः । इदमित्येव पूर्वोक्तार्थकेन तत्पदेनैतदपि परिहृतं 'स्वमतसिद्धदूषणमपहाय नैयायिकसिद्धस्वपरिहृतदूषणमात्राभिधाने अथा । इति सूत्रस्य प्रथमप्रतिपन्नश्रौतार्थमुल्लङ्घ्य चरमप्रतिपन्नार्थिकार्थप्रतिपादकपरभाष्यकारस्येव ग्रन्थकृतोऽकुशलत्वं स्यात्' इति । परेण स्वग्रन्थे अप्रसिद्धविशेषणत्वमाशङ्क्य स्वसिद्धं तद्दूषणत्वरूपं समाधानमपहाय पराभिमतरीत्यैव समाधातु सामान्यप्रसिद्ध्यादे प्रदर्शितत्वात्तस्यैव दोषस्यादौ व्यवस्थापने परस्यात्यन्ताकुशलत्वं प्रकटीकृतं भवतीत्याचार्यैस्तदेव स्फुटमभिहितमित्यभिप्रायात ॥ अन्यत्रेति ॥

आश्रयव्याश्रयासिद्धी साध्यासिद्धिश्च दूषणम् ।
केषाञ्चिन्न च ते दोषा व्याप्तौ सत्यां कथञ्चन ॥

इत्यनेन भक्तिपादीयानुव्याख्यान इत्यर्थः ॥ आचार्यैरेवेति ॥ तेन 'आचार्यैरत्राप्रसिद्धविशेषणताया कण्ठत उक्तत्वात् तस्य दूषणत्वमेव भवद्भिर्व्यवस्थापनीयम् । बाधकभयान्नैयायिकसिद्धत्वाभिधानं भवतामयुक्तम्' इति शङ्का परिहृता । एवकारस्तु स्थानान्तरस्थाचार्यवाक्यमपि न बलादसदानुगुण्येन योज्यते । किं तु कण्ठत एवोक्तमिति सूचयति ॥ स्वव्याघातादिकमिति ॥ आदिपदेन प्रमाणबाधपरिग्रहः ॥ ऊहनीयमिति ॥ मूलार्थतयेति शेषः ।

अप्रसिद्धविशेषणत्वमित्यस्याप्रमितविशेषणकत्वमित्यर्थो लभ्यते । प्रेत्युपसर्गेण सिद्धौ प्रमितित्वलाभात् । अप्रमितविशेषणकत्वं च द्वेधा । साध्यतावच्छेदकस्य साध्ये अभावः प्रकृतानुमितेः प्राक् साध्यतावच्छेदकविशिष्टस्य सामान्यतोऽपि क्वचिदप्रमितत्वम् । तत्राद्य सर्वमतेऽपि दूषणम् । अस्मन्मतेऽपि तस्य प्रतिज्ञाविरोधान्तर्गतत्वात् । तत्र द्वितीयस्याप्रमितत्वविशेषणत्वेन प्राचां बहुतरव्यवहारात्तत्पदेन तस्यैव झडिति प्रतिभासादुक्तरीत्या पराचातुर्यप्रकटनाय प्रथमतस्तदेवास्माभिर्व्याख्यातमत एवेदमित्युक्तम् । स्वमते तु प्रकृतानुमितेः प्राक् क्वचिदप्यप्रमितत्वस्यादूषणत्वे किं विश्वं सद्सद्भिलक्षणमित्यनुमानस्यापि साधकत्वमुत व्याप्त्यभाव इत्यादिविकल्पेष्वाद्यपक्षदूषणत्वेन

अन्यत्सदसतोर्विश्वमिति च व्याहतेरमा ।

इत्यनुव्याख्यानस्य प्रवृत्त्या तद्रीत्या सुज्ञानमित्यस्माभिर्न प्रदर्शितम् । शिष्यैर्मूलार्थतयैवोह्यमित्यर्थः ।

एतेन 'परसिद्धमात्रदूषणस्य प्रथमत अभिधाने उक्तप्रयोजनसद्भावेन प्रथमतस्तस्योचितत्वेप्यनन्तरमवश्यं वक्तव्यस्य स्वमतसिद्धदूषणस्यानभिधाने मूलकृता न्यूनता । उक्तरीत्या मूलेन स्वव्याहत्यादेरपि लाभे सम्भवति पूर्वमूलेषु नानायोजनाभेदं प्रदर्शितवता टीकाकृतामत्र प्रद्वेषे बीजाभाव ' इति पूर्वपक्षानवकाशः । मूलकृतोक्तत्वात् उक्तरीत्या टीकाकृतापि योजितत्वात् । स्वव्याहतिप्रकारश्च निर्वचनाविषयत्वमनिर्वचनीयत्वमित्युक्ते अनेनैव

(द्वै घु) रूपेण निर्वचनात्स्वकीयनिर्वचनक्रियाव्याघात । सदसद्विलक्षणमित्युक्तो विश्रमसन्नेत्युक्ते सदित्येवोक्त स्यात् 'द्वौ नञौ प्रकृतमर्थं सातिशय गमयत' इति न्यायात् । पुनस्तन्निषेधे कथं न स्वव्याहतिरित्यादिरन्यत्र टीकाकृत्प्रदर्शित एव । उक्तन्यायार्थस्तादृशवाक्यात्पुनस्तल्लाभप्रकारश्च कर्मनिर्णयटीकातोऽवगन्तव्य । विस्तृति भयान्नेह प्रपञ्चयते ।

सद्विलक्षणत्वसामान्ये असत्त्वस्यैव गृहीतत्वात् असद्विलक्षणत्वसामानाधिकरण्याभावग्राहकप्रमाणविरोध । प्रत्येकमप्रसिद्धसद्विलक्षणत्वासद्विलक्षणत्वोभयत्वावच्छिन्नत्वस्य साध्यत्वेपि मिथ्यैव रजतमभादिति बाधप्रमया असत्त्वस्यैव गृहीतत्वेन तदवच्छिन्नभेदसाधने पुन प्रमाणबाध एवेति द्रष्टव्यम् । ननु कथ स्वव्याहत्यादिकम् । प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्व बाध्यत्वम् । तदभावोऽबाध्यत्व सत्त्वम् । तद्वान् सन् । तद्विलक्षणत्व च बाध्यत्वमेव । असत्त्व च सत्तादात्म्यशून्यत्व । तदवच्छिन्नभेद सत्तादात्म्यमेव । तथा च बाध्यत्वे सति सत्तादात्म्य साध्य पर्यवसन्नम् । तस्य भावाभावरूपत्वाभावादित्यत आह ॥ आदीति ॥ वक्ष्यमाणदोषा आदिपदग्राह्या ।

(गु टि) ॥ अभाव इति ॥ निरात्मकत्वाद्यभाव इत्यर्थ । अयमाशय । अप्रसिद्धविशेषणत्वं हि व्याप्तिग्रहप्रतिबन्धकत्वेन दूषणमभिमतम् । तच्च यत्र भाव केवलव्यतिरेकिणा साध्यते तत्रैव भवति । तत्र साध्याभावस्याभावतया भावरूपसाध्यात्मकप्रतियोगिज्ञानाधीनत्वेन साध्याप्रसिद्धौ भावरूपसाध्यात्मकप्रतियोगिज्ञानाभावेन दुर्ज्ञानतया तदज्ञाने च सम्बन्धिज्ञानाभावेन ससम्बन्धिकपदार्थरूपव्यतिरेकव्याप्तेर्दुर्ग्रहत्वात् । न तु यत्राभाव केवलव्यतिरेकिणा साध्यस्तत्रापि । तत्राभावरूप यत्साध्य तदभावरूपस्य भावस्यैव व्यतिरेकव्याप्तिं प्रति सम्बन्धित्वेन ज्ञातव्यतया तद्ग्रहे अभावरूपसाध्यात्मकप्रतियोगिज्ञानानपेक्षणेन साध्याप्रसिद्धावपि तज्ज्ञानसम्भवेन व्याप्तिग्रहस्य सुशकत्वात् । तथा चाप्रसिद्धस्य [1]व्यतिरेकिणा साधनासम्भवेपि तादृशाभावस्य साधन मविकलम् । यस्य भावस्य व्यापकतया हेत्वभावो गृहीतस्तद्भावस्य व्यापकाभावाभावरूपेण हेतुना पक्षे सिद्धिसम्भवात् । व्यापकाभाववत्तया ज्ञाते व्याप्याभावज्ञानावश्यम्भावात् ।

तथा हि । पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वादित्यत्र इतरत्वस्य जलत्वादेर्व्यापक पृथिवीत्वाभावो गृहीत इति पृथिवीत्वाभावभावरूपेण पृथिवीत्वेन पृथिव्यामितरान्योन्याभावोऽप्रसिद्ध एव सिद्ध्यति । प्रतियोगिज्ञानस्य वृत्तत्वात् । प्रत्यक्षेण भूतले घटाभाववत् । न च विशेषणज्ञानसाध्यत्वाद्विशिष्टज्ञानस्य साध्याप्रसिद्धौ कथं तद्विशिष्टज्ञानमिति वाच्यम् । 'भूतले घटाभाव' इति घटाभावविशेष्यकप्रत्ययानन्तर 'घटाभाववद्भूतलम्' इति तद्विशेषणकप्रत्ययवत् पक्षविशेषणकसाध्यविशेष्यकप्रतीत्यनन्तर साध्यविशेषणकपक्षविशेष्यकप्रत्ययस्योपपन्नत्वात् ।

---

[1] भावस्य व्यतिरेकिणा इति पाठेन भाव्यमिति भाति

(गु टि) ननु साध्याभाव यापकाभावाभावरूपहेतुमत्तया पक्षज्ञानस्य व्यतिरेकिगमकतौपयिकत्वात् साध्य प्रसिद्धिं विना च तादृशप्रतिसन्धानासम्भवान्न तत्राप्रसिद्धसाध्यसिद्धि । वस्तुगत्या य साध्याभावस्तद्व्यापकाभाव-प्रतियोगिमत्तया ज्ञानस्यैव तद्गमकतौपयिकत्वे च व्यतिरेक्याभासानुपपत्तिरिति चेन्न । योऽभावो यस्याभावस्य व्यापकत्वेन गृहीतस्तदभावाभावेन तस्य व्याप्यस्याभाव पक्षे साध्यत इत्यनुगतानतिप्रसक्तस्य गमकतौपयिकत्वा दिति दिक् ।

॥ प्रतिषेधाकारबुद्धेरिति ॥ व्यतिरेकिणि साध्यस्याभावतया तदभावस्य वस्तुतो भावत्वेपि तस्य साध्या-भावत्वेन ज्ञानमावश्यकम् । साध्याभावत्वेन ज्ञायमानसाध्याभावव्यापकाभावप्रतियोगिरूपहेतुमत्तया पक्षज्ञानस्य व्यतिरेकिणि गमकतौपयिकत्वात् । न च साध्यप्रसिद्धिं विनैतादृशप्रतिसन्धान भवतीति कथ न तस्य दोषत्वम् । न च वस्तुनो य साध्याभावस्तद्व्यापकाभावप्रतियोगिहेतुमत्तया ज्ञानमेव लाघवात्तत्र गमकम् । न तूक्तरूपम् । गौरवात् । तच्च व्याप्यत्वेनाभिमतस्य भावस्य साध्याभावत्वेनाज्ञानेपि सम्भवतीति न साध्यप्रतीतिसापेक्षत्वमिति वाच्यम् । तथा सति यत्र घटादौ पटाद्यभावत्वमारोप्य तद्व्यापकतया लोष्ठत्वादि गृहीत तत्र लोष्ठत्वाद्यभावेन पटाद्यनुमानप्रसङ्गेन व्यतिरेक्याभासविलयप्रसङ्गात् । न च योऽभावो यस्याभावस्य व्यापकतया गृहीतस्तदभावा-भावरूपेण हेतुना तस्य व्याप्यस्याभाव पक्षे साध्यत इत्येतदेव तत्र गमकम् । व्यापकाभाववत्तया ज्ञाते व्याप्या-भावज्ञानावश्यम्भावादिति वाच्यम् । तथा सति विवादपद पृथिवीत्वाभाववत् तद्व्यापकशब्दाश्रयत्वाभावरहितत्वात् यत् यद्व्यापकशून्यं तत्तदभाववत् यथा सम्प्रतिपन्नमित्यन्वयित्वप्रसङ्गेन व्यतिरेकित्वभङ्गप्रसक्ते । तथा च व्यति-रेकिण पृथक्त्वमभिलषता पूर्वोक्तमेव प्रयोजकं तत्राङ्गीकार्यम् । तत्र च व्याप्यतया अभिमतस्य भावस्य साध्या-भावत्वेन ज्ञातव्यत्वात् साध्यज्ञानाभावे च तदसम्भवाद्व्याप्तिग्रहानुपपत्तिरेवेति युक्तमप्रसिद्धविशेषणत्वस्य दूषणत्व-मित्यन्यत्र विस्तर ।

एव तर्हि जीवच्छरीर सात्मकं प्राणादिमत्त्वादित्यादाविव विवादपदमनिर्वचनीयं बाध्यत्वादित्यत्रापि सामा-न्यत सदसद्विलक्षणत्वरूपसाध्यप्रसिद्धिसम्भवान्नाप्रसिद्धविशेषणत्वस्य दूषणत्वमित्याशयेन शङ्कते ॥ सत्त्वासत्त्व इति ॥ यौ धर्मौ तौ एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनौ यथा रूपरसावित्यनुमानार्थ । अत्र च भिन्नाधिकरणनिष्ठात्य-न्ताभावप्रतियोगितया अर्थान्तरतानिरासायैकत्वेन धर्मी विशेषित । रूपमात्रस्य रसमात्रस्य वा दृष्टान्ततयोपादाने तस्यैकधर्मिनिष्ठरूपात्यन्ताभावप्रतियोगित्वस्य रूपे तादृशरसात्यन्ताभावप्रतियोगित्वस्य रसे सत्त्वेपि एकधर्मिनिष्ठौ यावत्यन्ताभावौ तत्प्रतियोगित्वस्य रूपे वा रसे वा अभावेन दृष्टान्तस्य साध्यवैकल्यप्रसङ्गादुभयस्य दृष्टान्ततयोपादा-नम् । न च एको यो धर्मी तन्निष्ठो योऽत्यन्ताभावस्तत्प्रतियोगित्वस्य साध्यार्थत्वेन विवक्षितस्य रूपमात्रे रसमात्रे वा सत्त्वान्न साध्यवैकल्यमिति वाच्यम् । तथा सति [1](पक्षीकृतयो सत्त्वासत्त्वयोरेकधर्मिनिष्ठौ यौ सत्त्वासत्त्व-योरत्यन्ताभावौ तत्प्रतियोगित्वेपि) एकधर्मिनिष्ठो योऽत्यन्ताभाव सत्त्वस्य वा असत्त्वस्य वा तत्प्रतियोगित्वस्य

---

[1] अत्र कुण्डलितो भागोऽधिक इति भाति

(गु टि) सत्त्वासत्त्वयोरन्यतरस्मिन् सत्त्वेपि पक्षीकृतयो सत्त्वासत्त्वयोस्तदभावेनेष्टापत्त्या तादृशसाध्यार्थस्य विवक्षितुमशक्यत्वात्। विस्तरस्तु **नयनप्रसादिन्यां** द्रष्टव्य ।

॥ **केवलव्यतिरेकिणेति** ॥ विवादपदमनिर्वचनीय वा अन्यत्वादात्मवदिति व्यतिरेकिणेत्यर्थ । नन्वभिधेय त्वस्यापि पक्षतुल्यत्वात्कथं व्यभिचार. । 'न हि पक्षे पक्षतुल्ये वा व्यभिचार' इति हि प्राचा वाच । तत्कथमेतदित्यत आह ॥ **तस्यापीति** ॥ व्याघातमेवोपपादयति ॥ **अभिधेयत्वादीति** ॥ **तस्येति** ॥ यन्निष्ठात्यन्ताभावप्रतियोगित्व साध्य तस्य किञ्चिदादिशब्दाभिधेय वाद्व्याघात इत्यर्थ । किञ्च पक्षतुल्य वादिना अभिधेयत्वादौ व्यभिचार परिहृतवतस्तव धर्ममात्रस्य यत्किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वमित्यभिमतम् । केवलान्वयिधर्माणामपि किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वे व्यतिरेकिधर्माणा तथात्वस्य कैमुतिकन्यायसिद्धत्वात् । तथा च धर्मात्यन्ताभावाधिकरणत्वे व्यभिचार । तत्र हेतूकृतस्य धर्मत्वात् । साध्यस्यासत्त्वात् । तथा च व्यभिचार इत्याह ॥ **किञ्च सकलधर्माणामिति** ॥ तस्यापि पक्षतुल्यत्वात्कथं व्यभिचार इत्यत आह ॥ **तस्यापीति** ॥

॥ **अविरुद्धत्वश्चेति** ॥ रूपरसयोरेकधर्मिनिष्ठात्यन्ताभावप्रतियोगित्वरूपसाध्यवत्त्वात् सहावस्थितत्वेनाविरुद्धत्वरूपोपाधेरपि सत्त्वेन साध्यव्यापकत्वात साधनवति पक्षे वक्ष्यमाणरीत्या उपाधेरभावेन साधनाव्यापक त्वादविरुद्धत्वमुपाधिश्चेत्यर्थ । न च गोत्वाश्वत्वादौ महिष्यादिरूपैकधर्मिनिष्ठात्यन्ताभावप्रतियोगित्वरूपसाध्यसत्त्वेपि सहानवस्थितत्वेन विरुद्धत्वसत्त्वेन तत्र साध्याव्यापकत्वमिति वाच्यम्। [1]प्रतिषेध्यप्रतिषेधभावरूपविरोधस्यैवोपाधितया अभिमतत्वेन गोत्वाश्वत्वादौ तादृशविरोधाभावस्यापि सत्त्वेन तदनवकाशात् । न च घटतद्ध्वंसयोरेकधर्मिनिष्ठात्यन्ताभावप्रतियोगित्वेपि उक्तोपाधिविरहात् तत्र साध्याव्यापकत्वमिति वाच्यम् । प्रतियोगितदत्यन्ताभावत्वरूपविरोधाभावस्य विवक्षितत्वेन तदनवकाशात् । न च संयोगतदत्यन्ताभावयो प्रतियोगितदत्यन्ताभावत्वलक्षणस्य विरोधस्यैव सत्त्वात्साध्याव्यापकत्वमिति वाच्यम्। प्रदेशभेदेन वृत्तेरनुभूयमानत्वेन संयोगस्यात्यन्ताभावसमानाधिकरण इत्यावयोरसमतत्वेन तदप्रसङ्गादिति भाव ।

साधनव्यापकत्वमाशङ्क्य परिहरति ॥ **न चेति** ॥ **अनिर्वचनीयेति** ॥ तथा चान्योन्याश्रय इति भाव ॥ **परसिद्धमिति** ॥ अप्रसिद्धविशेषणत्वदूषणतावादिनो नैयायिकस्य सिद्धमित्यर्थ । न तु मायिसिद्धमित्यर्थ । तन्मतेपि तददूषणत्वादिति भाव ॥ **अन्यत्रेति** ॥

'आश्रयसाध्यव्यधिकरणासिद्धयो न दूषणम्'

'आश्रयव्याश्रयासिद्धी साध्यासिद्धिश्च दूषणम् ।'

इत्यादिना **प्रमाणलक्षणानुव्याख्यानादावित्यर्थ** ॥ **स्वव्याघातादीति** ॥ यद्यनिर्वचनीयत्व निर्वचनानर्हत्वं तदा स्वव्याघात । तत्किमिति पृष्टे इदमित्युक्तौ तेनैव शब्देन तस्य निरुक्तत्वात् । अन्यथा मूकत्वप्रसङ्गात् । यदि च सदसद्विलक्षणं तदा सन्न भवतीत्युक्ते असत्त्वमेव लब्धम् । सत्त्वप्रतिक्षेपरूपत्वादसत्त्वस्य । पुन असन्न

[1] प्रतिषेध्यप्रतिषेधभावरूपविरोधाभावस्यैवोपाधितया इति पाठेन भाव्यमिति भाति ।

(गु टि ) भवतीत्युक्ते कथं न स्वव्याहति । एवमसन्न भवतीत्यभिहिते सत्त्वमेवाभिहितम्। पुनः सन्न भवती त्युक्तौ कथं न स्वव्याहति ' इति सुधोपपादितप्रकारेण व्याघातो द्रष्टव्य ।

अयमस्या सुधाया आशय । असन्न भवतीति निषेधविशिष्टसन्निषेधस्य विशेषणभूतनिषेधविषयकत्वस्य लाघवमूलकसविशेषणे हीतिन्यायसिद्धत्वात् निषेधनिषेधरूपातिशयलाभाय च नञ्द्वयसार्थक्यसम्भवात् निषेध निषेधे सत्त्वविधिरेव सिद्धो भवति। तथा चाय प्रयोग । सत् असन्न भवतीति वाक्यलभ्य एकेन नञर्थेन विशिष्टतया तद्वाक्यप्रतिपाद्यत्वे सति तन्नञर्थविशिष्टान्वयितद्वाक्यप्रतिपाद्यनञर्थान्तरत्वात् । यद्वस्तुस्वरूप एकेन नञर्थेन विशिष्टतया तद्वाक्यप्रतिपाद्यत्वे सति नञर्थविशिष्टान्वयितद्वाक्यप्रतिपाद्यनञर्थान्तरवत् तत्तलभ्यम् । यथा अघटो न भवतीति वाक्यलभ्यो घट । तत्र हि अघट इति नञर्थेन निषेधेन विशिष्टो घट एवोच्यते । तद्विष-यश्च द्वितीयो निषेधो विशेषणीभूतेन निषेधेनैव सम्बद्ध्यते । विशिष्टविषययोर्विधिनिषेधयोर्विशेषणोपसङ्क्राम-कत्वस्य 'लोहितोष्णीषा ऋत्विज प्रचरन्ति' 'न जीर्णमलवद्वासा स्नातक स्यात्' इत्यादौ प्रसिद्धत्वात्। ततश्च निषेधे निषिद्धे घट एवोक्तो भवतीति। स्वव्याघातादीत्यादिपदेन मानव्याहतताया परिग्रह । यत्तु आदिपदेन व्याप्तिविरहपरिग्रह इति 'तत्तु न केवल प्रमाणव्याहतेयं प्रतिज्ञा अपि तर्हि स्वव्याहतापि' इत्यादि शब्दव्याख्यानरूपटीकाग्रन्थादर्शनमूलकत्वादुपेक्ष्यम् । तदनुसारेण प्रमाणव्याहतताया एव आदिशब्दार्थतया दार्शनिकम्मन्येन परेण व्याख्यातत्वादिति द्रष्टव्यम् ।

बाध्यत्वानुमानेन मिथ्यात्वसिद्धावनिर्वचनीयत्वसिद्धिरिति शङ्का तन्निरासश्च

(टी ) अस्तु तर्हि विवादपद मिथ्या बाध्यत्वादित्यनुमान शुक्तिरजतादेरनिर्वचनीयत्वे मान । मिथ्यात्वस्यासति प्रसिद्धत्वेनाप्रसिद्धविशेषणतानवकाशात् । न चैवमनिर्वचनीयत्वासिद्धिः । समान खलु सत्यविवेकलक्षण मिथ्यात्वमसत्यनिर्वचनीये च । तस्मिन्ननेनानुमानेन सिद्धे निर्विशेषस्य सामान्यस्य प्रतिपत्तुमशक्यत्वेन नेदमसत्प्रतीतत्वादित्यनेनासत्त्वे प्रतिक्षिप्तेऽनिर्वचनीयत्वस्य प्रसिद्धे रित्यत आह

**न च धूमत्ववन्मिथ्यात्वमित्युभयसम्प्रतिपन्नं सामान्यमस्ति ।**

चशब्दोऽनुमानान्तरदूषणसमुच्चयार्थः । इतिशब्दो निर्देशार्थो मिथ्यात्वाख्यमिति । स्यादे-तदेवम् । यदि मिथ्यात्व नाम सामान्यमसदनिर्वचनीययोरुभयवादिसम्प्रतिपन्नं स्यात् । नैतदस्ति । प्रागितोऽनिर्वचनीयस्यैवाप्रसिद्धत्वात् । न चाश्रयासिद्धौ सामान्य सिद्ध भवति । बाष्पारोपितधूमस्यै-वाप्रसिद्धत्वेन तत्र धूमान्तरे च धूमत्वसामान्यसिद्धिवत्। अन्यथा तत्रापि प्रसज्ज्येत। अतो मिथ्यात्वे साधितेऽसत्त्वस्यैव प्रतिपत्तौ सत्यां पुनस्तन्निषेधे सत्प्रतिपक्षतया द्वयोरप्रामाण्यापत्तिः । असत्प्रतीतेरु-पपादयिष्यमाणत्वादसत्त्वप्रतिक्षेपानुपपत्तिश्च ।

बाध्यत्वानुमानस्य ईश्वरसाधककार्यत्वानुमानवैलक्षण्योपपादनम्

'टी (ननु सर्वज्ञासर्वज्ञकर्त्रोः कर्तृत्वसामान्यस्य प्रागसिद्धेः कार्यत्वादिना क्षित्यादिकर्तृमात्रसिद्धावीश्वरसिद्धिरेव सति दुर्लभा स्यात्। न स्यात्। न हि क्षित्यादिकर्तृताव्यतिरिक्तमीश्वरत्व मिषाधयिषितम्। यदर्थं पुनरारम्भो भविष्यति। सर्वज्ञत्वादेरपि तदन्तर्भावात्। ये तु कार्यत्वादिना कर्तृमात्रसिद्धिमङ्गीकृत्य सार्वज्ञ्यादिसिद्धौ पुनः परिशेषेण प्रयतन्ते तेषां कथमिति चेन्न। यतोऽस्त्यत्र प्रमेयविशेषः। यन्मिथ्यात्वसाधने यथाऽसत्त्वस्यैव प्रतीतिर्न तथा कर्तृत्वसाधनेऽसार्वज्ञ्यादिप्रतीतिर्येन सत्प्रतिपक्षता स्यात्। यः कर्ता नासौ सर्वज्ञ इत्यस्त्येवेति चेन्न। प्रकृते मिथ्यात्वस्यैवासत्त्वेन तेन तदसाधनात्। अस्य चाश्रयासिद्ध्यादिना निराकरणात्।)

(वि टि)॥ मिथ्येति॥ सद्विविक्तमित्यर्थः। उक्तानुमानेन सद्विविक्तत्वसिद्धावपि असद्विविक्तत्वासिद्धेः सदसद्विविक्तत्वरूपानिर्वचनीयत्व सिद्धिरित्याशङ्क्य परिशेषात्तत्सिद्धिरभिप्रेत्याह ॥ न चैवमिति ॥ प्रतीतत्वादिति ॥ अपरोक्षप्रतीतिविषयत्वादित्यर्थः। ननु 'न च धूमत्ववत्' इत्यत्र दूषणान्तरसमुच्चयार्थकचशब्दोऽनर्थकः। विवादपदं मिथ्येत्यनुमाने दूषणस्य प्रागनभिधानादित्याशङ्क्याह ॥ चशब्द इति ॥ यद्वा 'न च धूमत्ववत्' इति वाक्यं कथमनुमानान्तरनिरासकत्वेन व्याख्यायते। पूर्वोक्तदूषणसमुच्चयार्थकचशब्दानुपपत्तेरित्यत आह ॥ चशब्द इति ॥ नन्वत्र किमितिशब्दः प्रकारार्थः किं वा हेत्वर्थः। नाद्यः। मिथ्यात्वे प्रकारत्वकीर्तनस्य व्यर्थत्वात्। न द्वितीयः। मिथ्यात्वस्य प्रकृते साध्यत्वेनाहेतुत्वात्। न चोभयसम्प्रतिपन्नं सामान्यमित्यनेन सम्बध्यते। तथा चोभयसम्प्रतिपन्न सामान्यरूपत्वाद्धेतोरिति वाक्यार्थसम्पत्तेर्हेत्वर्थत्वे नानुपपत्तिरिति वाच्यम्। व्यवहितान्वयापत्तेरित्याशङ्क्याह ॥ इतिशब्द इति ॥ निर्देशार्थत्वमेव दर्शयति ॥ मिथ्यात्वेति ॥ मूले सामान्यमसदनिर्वचनीयसाधारणमित्यर्थः।

व्याचष्टे ॥ स्यादेतदेवमिति ॥ प्रागित इति ॥ मिथ्यात्वानुमानप्रवृत्तेः प्रागित्यर्थः ॥ न चाश्रयेति ॥ यद्यपि धर्मिसत्तानिरपेक्षज्ञेयत्वादिकमिव सद्विविक्तत्वमप्यसदनिर्वचनीययोः सामान्यं भवितुमर्हति तथापि न चानिर्वचनीये किञ्चिन्मानमित्युक्तरीत्या अनिर्वचनीये मानाभावेन साध्यमानं सद्विविक्तत्वमसत्त्वमेव पर्यवस्यतीत्यत्र तात्पर्यमिति ध्येयम् ॥ अत इति ॥ यतो न मिथ्यात्वमसदनिर्वचनीयसाधारणमत इत्यर्थः ॥ प्रतीतौ सत्यामिति ॥ प्रतीतिस्वरूपयोग्यतयेदमुदितमिति ध्येयम् ॥ पुनस्तन्निषेध इति ॥ पुनःशब्दस्त्वर्थः। तथा च बाध्यत्वानुमानस्य शुक्तिरजतादेरसत्त्वमादायैव पर्यवसिततया तत्रैव शुक्तिरूप्यादौ 'नेदमसत् प्रतीतत्वात्' इति तन्निषेधसाधने तु तृतीयप्रकाराभावात् सत्त्वमादायैव पर्यवसानस्य वक्तव्यतया परस्परप्रतिरोधेन बाध्यत्वप्रतीतत्वानुमानयोर्द्वयोरपि प्रतीत्यजनकत्वेनाप्रामाण्यापत्तिरित्यर्थः। पूर्वं परस्परप्रतिरोधेन मिथ्यात्वप्रतीतिरेव दुर्लभेत्युक्तम्। सम्प्रति भवतु तत्प्रतीतिः। तथापि नानिर्वचनीयसिद्धिः। प्रतीतत्वहेतुना असत्त्वप्रतिक्षेपानुपपत्तेरित्याह ॥ असत्प्रतीतेरिति ॥ असतोऽपरोक्षप्रतीतेरित्यर्थः।

(वि टि) नन्वनिर्वचनीयाभावेनासदनिर्वचनीयसाधारणमिथ्यात्वाभाववत् सर्वज्ञेश्वररूपाश्रयाभावेन सर्वज्ञासर्वज्ञसाधारणं कर्तृत्वमेव नास्तीति कार्यत्वहेतुना क्षित्यादौ कर्तृमात्रसिद्ध्यनन्तरं तस्य परिशेषेणेश्वरत्वसार्वज्ञ्यादेः सिद्धिरिति न स्यादिति शङ्कते ॥ **ननु सर्वज्ञेति** ॥ सत्यम्। परिशेषेणेश्वरादिसिद्धिमिच्छतो दूषणमिदम्। न त्वस्माकम्। अस्माभिर्योग्यायोग्यसकलतदुपादानादिगोचरापरोक्षज्ञानादिमत्त्वस्यैवेश्वररूपत्वाङ्गीकारेण तत्सिद्धेरेव तत्सिद्धित्वोपगमादित्याशयेन परिहरति ॥ **न स्यादिति** ॥ **ये त्विति** ॥ एतन्मतेपि दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यान्नोक्तरीत्या प्रतिबन्द्यवतारः। अत्र हि दार्ष्टान्तिके प्रथमतो बाध्यत्वानुमानेन सिषाधयिषितमिथ्यात्वस्योक्तरीत्या अनिर्वचनीये मानाभावेनासत्त्वरूपेणैव पर्यवसितस्य तस्य द्वितीयेन प्रतीतत्वानुमानेन निषेधे तन्निषेधस्य सत्त्व एव पर्यवसानात् बाध्यत्वप्रतीतत्वहेत्वोः परस्परविरुद्धार्थज्ञापकत्वेन प्रतिपक्षतापर्यवसानवत् दृष्टान्ते कार्यत्वरूपप्रथमहेतुना क्षित्यादौ सिषाधयिषितकर्तृमात्रस्य क्षित्यादिकर्तृत्वरूपद्वितीयहेतुना सिषाधयिषितसर्वज्ञत्वादेस्तदविरुद्धार्थत्वेन कार्यत्वक्षित्यादिकर्तृत्वहेत्वोः प्रतिपक्षतया पर्यवसानाभावाद्वैषम्यमिति परिहारं वक्तुमाह ॥ **यतोऽस्त्यत्रेति** ॥ ननु क्षित्यादिकर्तृसाधककार्यत्वानुमानतत्कर्तृसार्वज्ञ्यादिसाधकक्षित्यादिकर्तृत्वानुमानयोः परस्परविरहरूपसाध्यासाधकत्वेपि तद्विरहव्याप्यसाध्यसाधकत्वेन परस्परप्रतिपक्षता भविष्यतीत्यभिप्रेत्य शङ्कते ॥ **यः कर्तेति** ॥ व्याप्तेः साधनाङ्गत्वेन तदुपन्यासेनापि साधनमुपन्यस्तप्रायं भवतीति तन्मात्रोपन्यासः। एवमपि तद्दृष्टान्तस्य दार्ष्टान्तिकाननुगुण्यशङ्काया दुष्परिहरत्वमभिप्रेत्य तदननुगुणत्वमेवोपपादयितुं **प्रकृते** दार्ष्टान्तिके बाध्यत्वानुमानसिद्धमिथ्यात्वस्यैवासत्त्वरूपतया पर्यवसितत्वेन **तेन** तथा पर्यवसितमिथ्यात्वेन स्वनिषेधस्यासत्त्वाभावस्य परेणासाधनात्, किन्तु प्रतीतत्वेनैव तत्साधनात् क्षित्यादौ कर्तृसाधककार्यत्वानुमानेन च दृष्टान्ते तत्सिद्धकर्तृत्वेनैव तत्सिद्धकर्तृसार्वज्ञ्यादिनिषेधसाधनादित्याह ॥ **प्रकृत इति** ॥ ननु भवतु दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यम्। न हि तावन्मात्रमुपाध्यादिवदनुमानस्याभासतासम्पादकम्। तथा चासर्वज्ञकर्तृसाधककार्यत्वानुमानसार्वज्ञ्यसाधकक्षित्यादिकर्तृत्वहेत्वोः स्थितमेव प्रतिपक्षत्वमित्यत आह ॥ **अस्य चेति** ॥ सार्वज्ञ्यादिसाधकक्षित्यादिकर्तृत्वरूपहेतोश्च क्षित्यादिकर्तृसिद्धेः प्रागाश्रयासिद्ध्या क्षित्यादिकर्तृत्वरूपहेत्वसिद्ध्या च दुष्टत्वेनातुल्यबलत्वतया न सत्प्रतिपक्षत्वम्। तत्सिद्ध्यनन्तरञ्च कार्यत्वानुमानफलस्य सिद्धतया तत्प्रतिबन्धकत्वाभावेन न प्रतिपक्षत्वमित्युभयथापि सत्प्रतिपक्षत्वशङ्कानवकाश इति भाव.।

(रा टि) ॥ **असति प्रसिद्धत्वेनेति** ॥ प्रतिवादिमत इति योज्यम्। यद्वा सद्विविक्तत्वरूपमिथ्यात्वाभिप्रायेणैवमुक्तिः ॥ **तस्मिन्निति** ॥ सत्यविवेकरूपे मिथ्यात्व इत्यर्थः ॥ **अनुमानान्तरेति** ॥ अनिर्वचनीयत्वसाध्यकानुमानान्मिथ्यात्वसाध्यकानुमानान्तरेत्यर्थः। निर्देशार्थ इत्युक्तं व्यनक्ति ॥ **मिथ्यात्वाख्यमिति** ॥ मूलं व्याचष्टे ॥ **स्यादेतदिति** ॥ **प्रागित इति** ॥ त्वदनुमानात्प्रागित्यर्थः ॥ **पुनस्तन्निषेध इति** ॥ नेदमसत् प्रतीतत्वादिति प्रागुक्तानुमानेनेत्यर्थः ॥ **असत्त्वप्रतिक्षेपेति** ॥ प्रतीतत्वहेतुनेति योज्य ॥ **प्रागिति** ॥ **ईश्वरसिद्धेः** प्रागित्यर्थः ॥ **कार्यत्वादिनेति** ॥ आदिपदेन

(रा टि.) कार्यायोजनधृत्यादे पदात् प्रत्ययत: श्रुते ।

इत्यादिनोदयनोक्तहेत्वन्तरग्रह ॥ एव सतीति ॥ कर्तृत्वसामान्यस्य सर्वज्ञासर्वज्ञयोरसिद्धत्वे सतीत्यर्थ । निराह ॥ **न स्यादिति** ॥ तदन्तर्भावात् कर्तृतान्तर्भावादित्यर्थ । उपादानादिगोचरापरोक्षज्ञानादिमत्त्वरूपत्वात्कर्तृत्वस्येति भाव ॥ **परिशेषेणेति** ॥ क्षित्यादिकर्ता न देवदत्तादि अल्पज्ञत्वाल्पशक्तित्वादे । अतोऽन्य कश्चित्सार्वज्ञ्यादिमानिति परिशेषेणेत्यर्थ ॥ **सत्प्रतिपक्षतेति** ॥ कार्यत्वहेतो परिशेषप्रमाणेन सहेत्यर्थ । कर्तृत्वसाधनेऽसार्वज्ञ्यस्य तदन्तर्गतत्वेनाप्रतीतावपि तदविनाभूततयाऽस्ति प्रतीति । अत प्रतिपक्षता परिशेषेण सार्वज्ञ्यादिसाधकेनेति भावेन शङ्कते ॥ **यः कर्तेति** ॥ तर्हि कार्यत्वानुमाने प्रतिपक्षतानिरास कथमित्यत आह ॥ **अस्येति** ॥ कार्यत्वहेतुसिद्ध कर्ता न सर्वज्ञ कर्तृत्वात् य कर्ता नासौ सर्वज्ञ इत्यस्येत्यर्थ । कर्तुरसिद्धावाश्रयासिद्धि । सिद्धौ च परिशेषादिसहकृत सर्वज्ञमेव कर्तार कार्यत्वं गमयतीति बाधेन च निराकरणादित्यर्थ ।

(वे. टि ) ॥ **अमत्त्वप्रतिक्षेपानुपपत्तिश्चेति** ॥ तथा च परिशेषानुमानानुपपत्तावर्थान्तरमेवेति भाव । ननु 'क्षित्यादिकं सकर्तृकं कार्यत्वात्' इति कर्तृमात्रसिद्धौ 'अय कर्ता नासर्वज्ञ क्षित्यादिसर्वकर्तृत्वात् व्यतिरेकेण देवदत्तवत्' इति परिशेषेणेश्वरसिद्धिरिष्टन्या । सा चायुक्ता । सर्वज्ञासर्वज्ञकर्त्रो कर्तृत्वसामान्यस्य प्रागीश्वरसिद्धेरसिद्धे । तथा च क्षित्यादिक सकर्तृकमित्युक्ते कर्तुरसर्वज्ञस्यैव प्रतीते नासर्वज्ञ इत्युक्ते सत्प्रतिपक्ष इत्यभिप्रेत्य शङ्कते ॥ **नन्विति** ॥ नन्वीश्वरसिद्ध्यर्थं पुनरनुमानान्तरारम्भाभावेपि तस्य सार्वज्ञ्यादिसिद्ध्यर्थमुक्तप्रकारेण पुनरारम्भ. स्यादित्यत आह॥ **सर्वज्ञत्वादेरिति** ॥ **तदन्तर्भावात्** क्षित्यादिसर्वकर्तृत्वान्तर्भावात् । सर्वकर्ता ह्यनेनानुमानेन सिद्ध । क्षित्यादिपदेन जन्यमात्रस्य पक्षत्वात् । न च सपक्षाभावप्रसङ्ग । घटस्यैव सपक्षत्वात् । जन्यत्वेन रूपेण पक्षस्यापि तस्य घटत्वेन रूपेण सपक्षत्वाविरोधात् । कर्तृत्व च कार्यक्रियाकारकफलाभिज्ञानतदिच्छाप्रयत्नपूर्वकस्पन्द । ततश्च सर्वकर्तृत्वे सर्वज्ञ सत्यकाम सत्यसङ्कल्प समस्तशक्तिसमन्वित एव सिद्ध्यतीति भाव । नन्वनेनानुमानेन सार्वज्ञ्यादिसिद्धेर्विष्णुतत्त्वनिर्णयादौ दूषितत्वेन कथं तेन तत्सिद्धिरिति चेन्न । आगमानपेक्षोक्तानुमानेनेश्वरादिसिद्धेस्तत्र दूषितत्वात् । तत्सापेक्षस्य तु तस्य तत्साधकत्वाविरोधादिति भाव ॥ **कर्तृमात्रसिद्धिमिति** ॥ अस्मिन्पक्षे ज्ञानप्रवेश विना प्रयत्नघटितमेव कर्तृत्व विवक्षितमिति द्रष्टव्य ॥ **मिथ्यात्वसाधन इति** ॥ मिथ्यात्वसाधनेऽसत्त्वस्यैव प्रतीतौ नेदमसदित्युक्ते यथा सत्प्रतिपक्ष तथा न सकर्तृत्वसाधनेऽसार्वज्ञ्यादिप्रतीति । येन विमतो नासर्वज्ञ इति साधने सत्प्रतिपक्ष स्यादित्यर्थ । ननु सकर्तृत्वसाधनेऽसार्वज्ञ्यादिप्रतीत्यभावेप्यनेनानुमानेन कर्तृमात्रसिद्धावपि विमत कर्ता न सर्वज्ञ कर्तृत्वात् य कर्ता नासौ सर्वज्ञ यथा कुलाल इत्यनुमानादसार्वज्ञ्यप्रतीतौ पश्चात्परिशेषानुमाने सत्प्रतिपक्ष एवेत्यभिप्रेत्य शङ्कते ॥ **यः कर्तेति** ॥ **प्रकृत इति** ॥ यथा त्वया सामान्यत कर्तृसिद्धौ कर्तृत्वेनासार्वज्ञ्य साध्यते न तथास्माभि सामान्यतो मिथ्यात्वसिद्धौ मिथ्यात्वेनासत्त्व साध्यते । मिथ्यात्वस्यैवासत्त्वेन साध्याविशिष्टयापत्ते । तथा च प्रमेयवैषम्यमेवेति भाव । ननु तर्हि कर्तृत्वेनासार्वज्ञ्यसाधने साध्याविशिष्ट्याभावात्तेन तत्प्रतीतौ परिशेषानुमाने सत्प्रतिपक्षता स्यादिति न सार्वज्ञ्यसिद्धिरित्यत

(वे टि) आह ।। **अस्य चेति** ।। विमतो न सर्वज्ञ कर्तृत्वादित्यनुमानस्येत्यर्थ । विमत ईश्वर सिद्धो न वा । नेतिपक्षे आश्रयासिद्धि । सिद्धत्वे तस्य क्षित्यादिकर्तृत्वेनैव सिद्धौ सार्वज्ञ्यसाधकपरिशेषानुमानरूपस्य च तस्य सार्वज्ञ्याभावे क्षित्यादिकर्तृत्वमेव न स्यादित्यनुकूलतर्कोपेतत्वेन प्राबल्यात्तद्बाध इत्यर्थ । यद्यसर्वज्ञ स्यात्तर्हि क्षित्यादे कर्ता न स्यादिति प्रतिकूलतर्कबाध । सर्वकार्यक्रियाकारकफलाभिज्ञानाभावे चिकीर्षाऽसम्भवेन प्रयत्नानुपपत्तौ तद्घटितकर्तृत्वस्याप्यनुपपत्ते । तथा चासार्वज्ञ्यसाधकानुमानस्योभयथापि दुर्बलत्वेन सामान्यसिद्धिपरिशेषाभ्या सार्वज्ञ्यसिद्धिरप्रत्यूहेवेति भाव ।

**केचित्तु** ननु क्षित्यादिकर्तृसाधककार्यत्वानुमानतत्कर्तृसार्वज्ञ्यादिसाधकक्षित्यादिकर्तृत्वानुमानयो परस्परविरहरूपसाध्यासाधकत्वेपि तद्विरहव्याप्यसाध्यसाधकत्वेन परस्परप्रतिपक्षता सम्भवतीत्यभिप्रेत्य शङ्कते ।। **यः कर्तेति** ।। एवमपि प्रमेयवैषम्यमेवेत्युपपादयितु प्रकृते बाध्यत्वानुमानसिद्धस्य मिथ्यात्वस्यैवासत्त्वरूपतया **तेन** तथापरिचमितमिथ्यात्वेन स्वनिषेधस्य परेणासाधनात् प्रतीतत्वेनैव तत्साधनात् क्षित्यादौ कर्तृसाधककार्यत्वानुमाने च तत्सिद्धकर्तृत्वेनैव सार्वज्ञ्यनिषेधसाधनादित्याह ।। **प्रकृत इति** ।। ननु भवतु प्रमेयवैषम्यम् । न हीद हेत्वाभासतापादकमुपाध्यादिवत् । तथा चासर्वज्ञकर्तृसाधककार्यत्वानुमाने सार्वज्ञ्यसाधकक्षित्यादिकर्तृत्वहेतो स्थितमेव सत्प्रतिपक्षत्वमित्यत आह ।। **अस्य चेति** ।। सार्वज्ञ्यसाधकक्षित्यादिकर्तृत्वहेतोश्च क्षित्यादिकर्तृसिद्धे प्रागाश्रयासिद्ध्या क्षित्यादिकर्तृत्वरूपहेत्वसिद्ध्या च दुष्टत्वेनातुल्यबलतया न सत्प्रतिपक्षत्वम् । तत्सिद्ध्यनन्तर च कार्यत्वानुमानफलस्य सिद्धतया तत्प्रतिबन्धकत्वाभावेन न सत्प्रतिपक्षत्वमित्युभयथापि सत्प्रतिपक्षत्वशङ्कानवकाश इति भाव इत्याहु ।

अत्र बाधवत्सत्प्रतिपक्षस्यापि साक्षात्प्रतिबन्धकत्वेन ग्राह्याभावावगाहित्वस्यैव सर्वैरङ्गीकृतत्वेन ग्राह्यविरहव्याप्यावगाहित्वेन सत्प्रतिपक्षत्वशङ्कैव कथमिति चिंत्यम् ।

(द्वै द्यु) ।। **अस्तु तर्हीति** ।। **विवादपदमिति** ।। असत्त्वानिर्वचनीयत्वाभ्या विप्रतिपत्तिविषयीभूत शुक्तिरजतादिकमित्यर्थ । ननूक्तविवादस्य कोट्यप्रसिद्ध्या अयुक्तत्वस्य पूर्वमेवोक्तत्वात्कथमुक्तविवादविषयत्वेन पक्षनिर्देश इति चेन्न । तादृशविवादस्य भ्रान्तिमूलकत्वरूपायुक्तत्वकथनेऽपि तत्स्वरूपानपलापात् । न च सद्विविक्तत्वस्य साध्यतया निर्देशात्तत्कोटिकविप्रतिपत्तिविषयत्वमेव व्याख्येयमिति वाच्यम् । **बौद्धमायावादिनोर्मायावादिसिद्धान्तिनोर्वा** तथा विवादायोगात् । **गुरुभिर्भास्करेण** वा सह तथा विवादसम्भवेऽपि अनिर्वचनीयत्वसाधने तत्प्रदर्शनस्यानुपयोगात् । पूर्वानुमाने अनिर्वचनीयत्वस्यैव साध्यत्वेन निर्देशानुरोधात्तादृशविवादस्यैवेदानी सत्त्वेन तत्परित्यागेनाप्रक्रान्तविवादेनानुमानप्रवृत्त्ययोगाच्च । न चानिर्वचनीयत्वकोटिकविप्रतिपत्तौ सत्यविवेकसाधनायोगः । अनाकाङ्क्षितत्वादिति वाच्यम् । असद्भिन्नत्वे सति सदन्यत्वेनानिर्वचनीयत्व साधयितुमुपोद्घातविधया तत्कथनात् । न चोक्तहेतोरेवानिर्वाच्यत्वेन साध्यावैशिष्ट्यमिति वाच्यम् । प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियो-

(द्वै घु) गित्वरूपात् अन्यस्यैवानिर्वचनीयत्वस्य साध्यत्वसम्भवात्। केचित्तु भ्रान्तिप्रतिपन्नस्य सत्यत्ववादि-नैयायिकैः सह सत्त्वानिर्वचनीयत्वरूपभावद्वयकोटिकविप्रतिपत्ताविदमनुमानमित्याहुः।

वस्तुतस्तु स्वार्थानुमित्ययोगस्योक्तत्वेन तस्यैवोपपत्तिः शङ्क्यते। अन्यथा तत्त्ववादिनं प्रति सद्विविक्तत्व-साधकत्वे सिद्धसाधनप्रसङ्गात्। तत्र विवादपदमिदानीमावयोर्भेदनिर्वाच्यत्वासत्त्वाभ्यां विवादविषयीभूतं शुक्ति-रजतादिकमित्यर्थः। तथा च विवादपदमनिर्वचनीयं वा यत्वादिति पूर्वानुमाने अत्र च पक्षविशेषपरिचायकमेव विवादपदपदम्। पक्षता तु इदं रजतमिति ज्ञानीयप्रकारताश्रयत्वेनैव। भ्रमान्तरप्रकारतापन्नानां तत्कालोपस्थि-तानां पक्षसमत्वाद्वा समूहालम्बनानुमितेरुद्देश्यतया तेषामपि पक्षत्वाद्वा न व्यभिचारशङ्केति ध्येयम्।

॥ बाध्यत्वादिति ॥ पूर्वानुमाने असद्व्यावृत्तं स्वप्रकारकबुद्धिविषयताव्यापकानवच्छिन्नवृत्तिकाभावप्रति-योगित्वदोषप्रयुक्तभानत्वादिरूपं बाध्यत्वं वाच्यम्। अन्यथाऽसति व्यभिचारापत्तेः। साध्यं तु सदसद्विलक्षण-त्वमेव। सत्त्वासत्त्वे इत्यनेन सामान्यप्रसिद्धेरभिहितत्वात्। सत्त्वं तु नोक्तबाध्यत्वरूपहेत्वभावरूपम्। तदवच्छि-न्नभेदस्य साध्यरूपस्य हेतुसिद्ध्यैव सिद्धत्वात्। तद्विशिष्टसद्भेदस्य पूर्वमसिद्धस्य साध्यत्वसम्भवेऽप्यनतिप्रयोजनक-तया साध्यशरीरे विशेषणाशवैयर्थ्यापरिहारात्। किं तु सर्वं परमार्थं पदविनाशीत्यादिबुद्धिविशेषविषयत्वादिरूप-मिति। यत्तु 'स्वप्रकारकेत्याद्युक्तबाध्यत्वं हेतुः त्रैकालिकनिषेधप्रतियोगित्वरूपसत्त्वावच्छिन्नप्रतियोगिकभेदः साध्य' इति। तदसत्। यतः परेणासतोऽप्यत्यन्ताभावप्रतियोगित्वस्य स्वमतनिष्कर्षे अनङ्गीकृतत्वेन तादृशसत्त्वावच्छिन्न-भेदसाधनेनैगसत्त्वावच्छिन्नभेदस्यापि सिद्ध्या पुनस्तद्भेदस्य साध्यकोटौ निवेशायोगात्। प्रतिपन्नोपाधौ त्रैकालि-कनिषेधप्रतियोगित्वरूपस्वप्रकारकेत्याद्युक्तबाध्यत्वेनोक्तसत्त्वावच्छिन्नभेदरूपत्रैकालिकनिषेधप्रतियोगित्वसाधनापत्त्या महानसीयवह्निना वह्निसाधनवत्साध्याविशिष्टताया दुर्वारत्वापातश्च। तस्य भेदत्वेन साध्यत्वान्न साध्यावैशिष्ट्य-मित्यपि न सत्। तत्सन्देहे हेतुसन्देहस्य वह्निसन्देहे महानसीयवह्निसन्देहस्येवौचित्याऽवर्जितत्वेन दुर्वारत्वे परामर्शायोगरूपदूषकताबीजस्यापरिहारात्।

एतदनुमाने पुनर्बाध्यत्वं सत्त्वप्रकारकप्रमाविषयत्वाभावदोषानधीनसत्त्वप्रकारकप्रतीतिविषयत्वाभावादि-कमसत्साधारणमेव वाच्यम्। अन्यथा व्यतिरेकव्याप्तावात्मनो दृष्टान्तत्वसम्भवेऽपि असद्रूपसपक्षगामित्वाभावे हेतोरसाधारण्यापत्तेः। एतेन 'अनुमानद्वये बाध्यत्वस्यैव हेतुत्वाभिधानमनुचितम्। साधारण्यासाधारण्ययोरन्य-तरस्यान्यतरानुमाने आवश्यकत्वात्' इति परास्तम्। शब्दैक्येप्युक्तरीत्याऽर्थभेदात् ॥ अनिर्वचनीयत्वे मानमिति ॥ पूर्वोक्तरीत्या परम्परया मानमित्यर्थः। अन्यथैतदनुमानेन सद्विविक्तत्वस्यैव सिद्ध्याऽनिर्वचनीयत्वे मानत्वोत्तयसङ्गतेः।

केचित्तु उक्तानुमानेनासत्त्वाभावव्याप्यप्रतीतत्वलिङ्गसहितेन सद्भिन्नमसद्भिन्नं चेति समूहालम्बनरूपानुमि-तिरेव जायते। एतदनुमानात्प्राक् स्वार्थानुमानेन सद्भेदस्यासिद्धत्वेन सिद्धसाधनानवकाशात्। असत्त्वे प्रतिक्षिप्ते इत्युत्तरवाक्येपि सत्त्वप्रतिक्षेपकाल एवासत्त्वे प्रतिक्षिप्ते इत्यर्थः। तथा च सद्भेदासद्भेदोभयस्यैवानिर्वचनीयत्वरूप

(द्वै द्यु) तयोक्तानुमानमेव साक्षादनिर्वचनीयत्वे मानमिति भाव इत्याहु । तच्चिन्त्यम् । एतत्पक्षस्यार्थापत्ति-पक्षानतिभिन्नतयेदानीमेतदभिप्रायकथनायोगात् । उक्ताभिप्रायकत्वे सद्विविक्तत्वस्य सामान्यरूपता विनाऽपि प्रकृतानुमाननिर्वाहेण तस्य सामान्यरूपत्वोपपादनखण्डनयोरकिञ्चित्करत्वापत्ते ।

**परे** तु असत्त्वरूपैकविशेषबाधग्रहसहितैतदनुमानेनैव प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपानिर्व-चनीयत्वसामानाधिकरण्यविशिष्टसद्भेदवदिदमनुमितिर्जायते । महानसीयवह्न्यादिबाधग्रहसहितवह्निव्याप्यधूमपराम-र्शात् पर्वतीयवह्निमानित्यनुमितिवत् । तथा चैतदनुमानमेवानिर्वचनीयत्वे साक्षान्मानमित्याहु । तदपि चिन्त्यम् । **अतो मिथ्यात्वे साधिते** इत्याद्युत्तरग्रन्थानानुगुण्यात् ।

पूर्वानुमानसिद्धसद्विविक्तत्वावच्छिन्नेऽसद्विविक्तत्वस्य साधनादनिर्वाच्यत्वसिद्धि । सद्भेदस्य सामान्यरूपत्वा-भिधानं तु व्याहतिपरिहारायेत्यपि न चारु । तथात्वे एकस्य सद्भेदप्रमोपधायकत्वप्राप्त्या उत्तरत्रोभयाप्रामा-ण्यापादनासङ्गते ।

**विवादपदमनिर्वचनीयमिति** पूर्वानुमानप्रसञ्जितदोषमत्रोद्धरति ॥ **मिथ्यात्वस्येति** ॥ उक्तानु-मानस्यैव साक्षादनिर्वचनीयत्वसाधकत्व पराभिप्रेत मन्वान पूर्वोक्ताशयमविद्वानाशङ्कते ॥ **न चेति** ॥ **असि-द्धेरिति** ॥ असत्साधारणस्यानिर्वचनीयत्वरूपत्वाभावादिति भाव । परम्परयाऽनिर्वचनीयत्वसाधकत्वरूपस्वाभि-प्रायमाविष्करोति ॥ **समानमिति** ॥ **निर्विशेषम्येति** ॥ विशेषधर्मप्रकारकज्ञानासहितस्य केवलसामान्यधर्म-प्रकारकज्ञानस्य विशेषार्थिप्रवृत्त्याद्यनुपयुक्तत्वेनेति पर्यवसितार्थ । इद च विशेषजिज्ञासाद्वारा वक्ष्यमाणविशेष-सिद्ध्यनुकूलतयाऽभिहित ॥ **अनिर्वचनीयत्वस्य सिद्धेरिति** ॥ सद्भिन्नत्वरूपसामान्यधर्मवत्त्वे सत्यसत्त्वाभावरूप-लिङ्गेन ज्ञाननिवर्त्यत्वरूपस्य वा प्रतिपन्नोपाधावित्यादिरूपस्य वा अनिर्वचनीयत्वस्य तदुभयावृत्तिधर्मत्वादिना सामान्यत सिद्धिरित्यर्थ ।॥ **मिथ्यात्वं नामेति** ॥ सद्विविक्तत्वरूपमित्यर्थ ॥ **सामान्यमिति** ॥ अनिर्वचनी यत्वासत्त्वयोर्व्यापकताविशिष्ट सदित्यर्थ । तेन स्वरूपतस्तस्योभयवादिसम्प्रतिपन्नत्वेऽपि न क्षति ॥ **उभयवा-दीति** ॥ स्वार्थानुमानासम्भवविवक्षाया तु भ्रमविषयीभूतेषु सर्वेष्वप्यनिर्वचनीयत्वसिद्धियत्नप्राग्दशावच्छिन्नतदुत्तरद-शावच्छिन्नावेव ग्राह्यौ । पुरुषस्यैकत्वेऽपि तस्य दशाभेदेनैव वादित्वप्रतिवादित्वव्यवहारात् । अत एवोक्त **सुधायां** 'प्राक्प्रबोधाच्छिष्योपि प्रतिवादितुल्य एव' इत्यादि ।

॥ **प्रागित इति** ॥ भ्रमप्रतिपन्नप्रकारेषु अनिर्वचनीयत्वसिद्धे पूर्वमित्यर्थ ॥ **अनिर्वचनीयत्वस्यैवाप्रसि-द्धत्वादिति** ॥ असद्व्यावृत्त यद्यद्धर्मवता निरुच्यते तादृशतादृशानिर्वचनीयत्वस्वरूपस्यैव सत्त्वेनाग्रहादित्यर्थ । एवकारेण भ्रमप्रकारमात्रेषु प्रसिद्धत्वाभावेपि स्वरूपतस्तत्सत्त्वप्रसिद्धिं निराकरोति ॥ **न चाश्रयेति** ॥ तादृशधर्म-स्यैवाप्रसिद्धौ तदाश्रयेऽपि कालसम्बन्धित्वादिरूपासद्व्यावृत्तरूपेणाप्रसिद्धिरित्यर्थ । **अनिर्वचनीयस्यैवेति** पाठे तादृशधर्मविशिष्टवस्तुन एव सामान्यत कालसम्बन्धित्वादिरूपासद्व्यावृत्तधर्मपुरस्कारेणाग्रहादित्यर्थ. । तादृशस्य

(द्वै. द्यु) वस्तुन अलीकव्यावृत्तरूपेणाग्रहे प्रकृतसत्यविवेकरूपधर्मस्यासत्त्वतद्व्यधिकरणानिर्वचनीयत्वरूपधर्मद्वय-सामानाधिकरण्यरूपस्य तद्द्वयव्यापकत्वरूपस्य वा सामान्यत्वस्य गृहीतुमशक्यत्वादिति भाव ।

॥ **आश्रयासिद्धाविति** ॥ यादृशरूपविशिष्टधर्मिणमन्तरा यादृशधर्मस्य तत्साधारण्यादिना सामान्यता न सम्भवति तादृशधर्माश्रयधर्मिग्रहाभाव इत्यर्थ । **सामान्य** तत्साधारण्यादिसामान्यत्वविशिष्टम् । **सिद्ध** ज्ञात भवतीत्यर्थ । यथाश्रुत तु न सङ्गच्छते । शशविषाणनरविषाणरूपाश्रययो स्वरूपाभावरूपासिद्धिसम्भवेऽपि सत्यविवेकलक्षणसामान्यस्य तत्र सत्त्वात् असद्रूपाश्रयाभावेऽप्यसति [1] सति च ज्ञेयत्वशशविषाणत्वादिरूपसामान्यस्याङ्गीकृतत्वाच्च । उक्तव्याख्याया तु न दोष । धूमत्वादेर्धर्मस्य कालसम्बन्धित्वादिधर्मविशिष्टधर्मिमात्रसापेक्षत्वात् पर्वतीयधूमबाष्पारोपितधूमादिनिष्ठतत्तद्व्यक्तित्वादीन् प्रति सामान्यधर्मत्वज्ञानं प्रति तत्तद्धूमेषु कालसम्बन्धित्वज्ञानमपेक्षितम् । बाष्पारोपितधूमे कालसम्बन्धित्वादिसत्त्वग्रहाभावान्न तस्य तान् प्रति सामान्यधर्मत्वग्रह । ज्ञेयत्वाभावप्रभृतीना तु स्वस्वाश्रयीभूतधर्मिमात्रसापेक्षत्वनियमात् धर्मिस्वरूपमात्रग्रहे तत्र सदात्मके असदात्मके चाभावज्ञेयत्वादीना वृत्तित्वग्रहेण तस्य सामान्यरूपत्वग्रह । प्रकृते च सद्विवेकस्यासत्त्वतद्व्यावृत्तानिर्वचनीयत्वोभय प्रति सामान्यधर्मत्वज्ञान प्रति असत्त्वाश्रयीभूतधर्मिणो असत्त्वेन ज्ञानस्य अनिर्वचनीयत्वाश्रयधर्मिणस्तु असद्व्यावर्तककालसम्बन्धित्वादिरूपेण ज्ञानस्यावश्यकतयैतदनुमानात्प्राक् केषामपि तादृशग्रहाभावेन सदसदुभयज्ञानस्यैव सत्त्वेन तस्य सामान्यरूपत्वज्ञान दुर्घटमित्यभिप्रायस्य लाभात् ।

॥ **अन्यथेति** ॥ उक्तरीत्यनङ्गीकारे । **तत्रापि** धूमत्वेपि । **प्रसज्येत** बाष्पारोपितधूमव्यक्तित्वपर्वतीय धूमव्यक्तित्वे प्रति सामान्यत्वग्रह प्रसज्येतेत्यर्थ । लोकानामिति शेष । तेन परस्योन्मत्तवद्दोषविशेषाधीनभ्रमसत्त्वेऽपि न क्षति ।

एतावता किं सामान्यसिद्धिपरिशेषानुमानयोर्दूषणमभिहितं स्यादित्यत आह ॥ **अत इति** ॥ मिथ्यापदार्थतावच्छेदकसद्विविक्तत्वस्य परस्परव्यावृत्तासत्त्वानिर्वचनीयत्वसाधारण्यस्यैतावत्कालमगृहीतत्वादित्यर्थ । **मिथ्यात्वे साधिते** विवादपद मिथ्येतिशब्दाभिलाप्यानुमित्या मिथ्यापदार्थतावच्छेदके विषयीकृते । असत्त्वस्यैव विषयीकृतत्वप्राप्त्या । मिथ्यात्वस्य सामान्यत्वग्रहरहितैर्लौकिकपरीक्षकैरसदलीकमिथ्यापदाना पर्यायेणैव व्यवहारादिति भाव । अन्यथा घट पृथिवीरूप द्रव्यं, करका तु जलरूप द्रव्यमितिवत् शुक्तिरजतमनिर्वचनीयरूपं मिथ्या, शशविषाण त्वसद्रूप मिथ्येति लौकिकपरीक्षकव्यवहारप्रसङ्ग इत्यर्थ ॥ **पुनस्तन्निषेध इति** ॥ नेदमसदिति पर्यायशब्दान्तरप्रयोगेण तन्निषेधसाधन इत्यर्थ ॥ **सत्प्रतिपक्षतयेति** ॥ पर्वतोऽग्निमान् धूमात्, पर्वतो वह्न्यभाववान् पाषाणमयत्वादित्यनुमानयोरिवेत्यर्थ ॥ **अप्रामाण्यापत्तिरिति** ॥ अनुमितिरूपप्रमानुपधायकत्वापत्तिरित्यर्थः । सशयाकाराऽनुमितिर्भवति न वेत्यत्रेदानीमनिर्भरसूचनायाबोधकत्वापत्तिर्नोक्ता । द्वयोरपि भ्रमजनकत्वापत्तिस्तु नार्थ । विरुद्धयोरुभयो प्रामाण्यवदप्रामाण्यस्यापि व्याहतत्वेनान्यतरप्रामाण्यावश्यम्भावात् ।

---

[1] अत्र सति च इत्येतदधिकमिति नाति । सति शशविषाणत्वाभावात् ।

(द्वै द्यु) नन्वपरीक्षकैर्मिथ्यापदार्थतावच्छेदकासत्पदार्थतावच्छेदकयोरैक्यस्य गृहीतत्वेऽपि यस्य परीक्षकविशेषस्य भ्रान्त्युत्थितेन मिथ्यापदे व्यवह्रियमाणे शुक्तिरजतादावसत्यसम्भाव्यमानप्रतीतत्वलिङ्गेनासत्त्वाभावनिश्चयो जातस्तस्यासत्त्वमेव मिथ्यापदार्थतावच्छेदकमिति स्वीयप्राथमिकग्रहे अप्रामाण्यधीपूर्वकं मिथ्यापदार्थतावच्छेदके असत्त्वतदभावोभयाधिकरणवृत्तित्वरूपसामान्यधर्मत्वग्रहः सामान्यतो जायत एव। बलवल्लिङ्गदर्शनेऽपि प्राथमिकज्ञानापरिवर्ते भ्रान्त्युच्छेदादिकमुद्दिश्य परीक्षाया प्रवृत्त्यभावप्रसङ्गः। तथा चासत्त्वाभावग्रहसहितसद्विविक्तत्वरूपमिथ्यात्वसाधकानुमानेनैवासत्त्वव्यधिकरणधर्मसामानाधिकरण्यविशिष्टसद्विविक्तत्ववदिति रूपेणानुमितिर्जायते। सा चासत्त्वव्यधिकरणसद्विविक्तत्वसमानाधिकरणधर्मत्वेनानिर्वचनीयत्वं विषयीकरोति। तस्यैवानिर्वचनीयत्वात्मकत्वात्। अथ वा असत्त्वाभावसाहित्यविशिष्टप्रथमानुमानसिद्धमिथ्यापदार्थतावच्छेदकवत्त्वरूपव्यतिरेकलिङ्गेन सामान्यव्याप्तिज्ञानादिना वा सदसदुभयावृत्तिधर्मत्वादिना अनिर्वचनीयत्वानुमितिर्भवत्येव। एतेन ज्ञाननिवर्त्यत्वादिरूपानिर्वचनीयत्वस्याप्येतदनुमानात्प्राक् क्वचित्सिद्धावेतदनुमानवैयर्थ्यं असिद्धौ पुनरप्रसिद्धविशेषणतेति शङ्कानवकाश इत्यत आह ॥ असत्प्रतीतेरिति ॥ उपपादयिष्यमाणत्वादिति ॥ अर्थापत्तिनिराकरणप्रस्ताव इत्यादि ॥ असत्त्वप्रतिक्षेपानुपपत्तिश्चेति ॥ तथा च त्वन्मतमूलाऽग्रहरूपदोषविशेषशून्यानां केषामपि परीक्षकाणां स्वरसतो लोकरीत्या मिथ्यात्वेन व्यवह्रियमाणे असत्त्वाभावबुद्धिर्न जायते। तथात्वे लोकानां सदसत्त्वव्यवहारवत् असद्भिन्नमिदं मिथ्येति तृतीयप्रकारस्यापि व्यवहारस्य प्रसङ्गः। न हि परीक्षापि लोकानुभवातिक्रमेणैव कर्तव्या। तथात्वे तस्योन्मत्तप्रलापतुल्यत्वापत्तेः। किं त्वविप्रतिपन्नलोकानुभवस्य विषयव्यवस्थैव कर्तव्या। इत्थं चोक्तरीत्याऽपि नानिर्वचनीयत्वसिद्धिरिति भावः।

नन्वेवं सति सामान्यसिद्धिपरिशेषाभ्यां कस्याप्यपूर्वार्थस्यासिद्धिप्रसङ्गः। सामान्यानुमानसाध्यस्य प्रसिद्धविशेषात्मकत्वेन पर्यवसन्नत्वेन परिशेषेण पुनस्तत्प्रतिषेधे सत्प्रतिपक्षतया भवदुक्तरीत्योभयाप्रामाण्यापत्तेः। अतस्तत्र यः परिहारः स प्रकृतेऽपि तुल्य इत्याशयेनोदाहरणतया तावदेकस्थलमुद्धाव्याशङ्कते ॥ नन्विति ॥ असिद्धेरनिश्चयात् ॥ दुर्लभेति ॥ सर्वज्ञकर्तुरनुपस्थित्या जायमानाऽनुमितिः सकर्तृकत्वत्वेनासर्वज्ञकर्तृकत्वमेव क्षित्यादाववगाहते। परिशेषे प्रवृत्तस्य पुनस्तन्निषेधे उभयाप्रामाण्यमेव स्यादित्यर्थः। अतस्तत्र सामान्यत्वज्ञानं सकर्तृकत्वे अस्तु वा न वा। वस्तुतस्तादृशसामान्यरूपसकर्तृकत्वपुरस्कारेण कर्त्रवगाहिनीमनुमितिं प्रत्यसर्वज्ञकर्तृकत्वरूपविशेषधर्मावच्छिन्नाभावग्रहस्याविरोधित्वं वाच्यम्। एवं सद्विविक्तत्वरूपसामान्यधर्मप्रकारकानुमितिं प्रति सद्भेदविशिष्टासत्त्वरूपविशेषधर्मावच्छिन्नभेदग्रहो वा वस्तुतः तद्व्याप्यासत्त्वावच्छिन्नप्रतियोगिकभेदग्रहो वा सद्विविक्तत्वस्यानिर्वचनीयत्वासत्त्वोभयनिरूपितसामान्यत्वाग्रहवेलायामप्यविरोधीत्यवश्यं वक्तव्यम्। तथा च सामान्यसिद्धिपरिशेषाभ्यां अनिर्वचनीयसिद्धिरिति भावः। सद्विविक्तत्वरूपमिथ्यात्वरूपमसत्त्वादतिरिक्तं वस्तु अनिर्वचनीयत्वासत्त्वयोर्व्यापकमित्यभिमानः। दृष्टान्तासम्मत्योक्तिं तावत् खण्डयति ॥ न हीति ॥ पुनरारम्भः परिशेषाय प्रसक्तप्रतिषेधावसरः। तर्हि क्षित्यादिकर्तुः सर्वज्ञत्वासिद्ध्या कथमीश्वरसिद्धिरित्यत आह ॥ सर्वज्ञत्वादेरपीति ॥ उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वस्यैव प्रथमानुमानसाध्यतया तेनैवेश्वरस्य सिद्धत्वादिति

(द्वै घु ) भाव. । उदाहरणान्तरसम्भवान्न प्रमेयखण्डनं भवतीत्याशयेन शङ्कते ॥ ये त्विति ॥ हविरादिजन्या दृष्टद्वारा जीवकर्तृकत्वमादाय सिद्धसाधनतावारणायाननुगममिया स्वोपादानेन्द्रियं विहायादृष्टद्वारा कृतिमत्पुरुष-जन्यत्व प्रसाध्येश्वरसिद्धयेऽसर्वज्ञकर्तृकत्व निषेधयतामित्यर्थ ।

भवदुक्तस्थले सामान्यविशेषरूपद्वयसत्त्वादुक्तन्यायसम्भवेऽपि प्रकृते असत्त्वसद्विविक्तत्वयोरैक्यमेव । न सामान्यविशेषभाव । तत्प्रमाणस्य तदधिकरणवृत्तित्वग्रहसहिततदनधिकरणवृत्तित्वग्रहस्य भवदभिमतानिर्वचनीया-पस्थिते पूर्वमसत्त्वेन पूर्वोपपादितरीत्या मिथ्यात्वस्यैवासत्त्वरूपत्वम् । एतदुपपादनार्थमेव मूले मिथ्यात्वस्या-सत्त्वादिकं प्रति सामान्यरूपत्वग्रहो निराकृत । तथा च प्रथमानुमानसिद्धासत्त्वावच्छिन्नभेदस्यैव द्वितीयानु-मानेन साधने सत्प्रतिपक्षत्व अस्माभि पूर्वमुक्तम् । त्वया तु अस्मदभिप्रायमबुद्ध्वा अपूर्वविशेषोपस्थिते प्राक् सामान्यरूपावच्छिन्नग्रहं प्रत्युपस्थितविशेषरूपावच्छिन्नाभावग्रहस्यैव विरोधित्वमस्मदभिमतमिति मन्वानेनेयं प्रति-बन्दिरभिहिता । अतो नेद युक्तमित्याशयेनोभयत्र वैलक्षण्य पूर्वग्रन्थाभिप्रेतं स्फुटीकुर्वन्नुक्तदोष निराह ॥ नेत्यादिना ॥ ईश्वरानुमानप्रमेयीभूतभवदनुमानप्रमेयीभूतसाध्ययो विशेषः विशेषनिषेधार्थं प्रवृत्तानुमा-नान्तरप्रतिबध्यग्रहविषयत्वाभावतद्ग्रहविषयत्वरूपवैलक्षण्यमस्तीत्यर्थ । तदेवोपपादयति ॥ मिथ्यात्वेति ॥ सर्वैर्लौकिकैस्त्वदितरवैदिकै प्रेक्षावद्भिश्च मिथ्यालीकानृतासदादिशब्दाना पर्यायेणैव प्रयोगेणासदादिपद-मिथ्यापदार्थतावच्छेदकैक्यस्यैव सर्वैर्गृहीतत्वान्मिथ्येत्युक्तेऽसत्त्वस्यैव प्रतीति । तयो सामान्यविशेषभावे यत्किञ्चित्पृथिवी न घट इतिवत् यत्किञ्चिन्मिथ्या नासत् नालीकमित्यादिव्यवहारस्य क्वचिदपि लोके अभियुक्तशास्त्रे चापत्ते । सत्त्वासत्त्वातिरिक्ततृतीयप्रकारमिथ्यात्वरूपसामान्यधर्माश्रयस्य लोकानुभवसिद्धत्वे तद्व्यवहारे बीजाभाव इति भाव ॥ न तथेति ॥ कर्तृत्वस्यैतन्मते ज्ञानाद्यघटिततया कृत्याश्रयत्वमात्रेणैव कर्तुरनुमानेन प्रतीति । तथा च कृत्याश्रयजन्यक्षित्यादावसर्वज्ञजन्यत्वाभावसाधने तादृशकर्तरि असर्वज्ञभेदसाधने वा प्रथमानुमानसाध्याभावसाधनाभावान्न सत्प्रतिपक्षत्वमिति भाव ।

ननु लोके कर्तृत्वेन प्रतीयमानेषु सर्वेषु असार्वज्ञ्यस्यैव भूयोदर्शनेन सकर्तृकत्वस्यासर्वज्ञकर्तृकत्वव्याप्य त्वेन गृहीतत्वात् क्षित्यादौ सकर्तृकत्वरूपव्याप्यग्रहबलादसर्वज्ञकर्तृकत्वबुद्धि प्रथमानुमितिद्वितीयक्षणे जायत एव। तथा च तत्रासर्वज्ञकर्तृकत्वाभावसाधने सत्प्रतिपक्षता स्यात्। साध्यव्यापकत्वेन गृहीतधर्माभावसाधकस्यापि साध्यग्रह प्रति परम्परया झडिति विरोधित्वेन सत्प्रतिपक्षरूपत्वस्य भवतैवेदानीं स्वीकृतत्वात् । अन्यथा भवदुक्तस्यासत्त्वाभाव-साधकहेतो सत्प्रतिपक्षरूपत्वाभावप्रसङ्गात् । अतस्तत्र भवद्भिरेतावदेव वक्तव्यम् । सर्वेषा तादृशव्याप्तिग्रहो न जायत एव । भूयोदर्शनमात्रस्यानुकूलतर्काभावे व्याप्त्यनिश्चायकत्वात् । केषाञ्चिद्भ्रान्ताना तथा व्याप्तिभ्रम सम्भवेपि उक्तानुमित्यनन्तर तादृशव्याप्तिस्मरणनियमाभावेन सकर्तृकत्वेन सेत्स्यमाने क्षित्यादावसर्वज्ञकर्तृकत्वा भावसिद्धिद्वारा ईश्वरसिद्ध्यनन्तरमुक्तव्याप्तिग्रहे अप्रामाण्यबुद्धिरुदेतीति । तथा मयाप्येतावदुच्यते । अनिर्वच-नीयोपस्थिते प्राक् मिथ्यात्वासत्त्वयो· व्याप्तिग्रह एव केषाञ्चिन्न जायते । अनुकूलतर्काद्यभावात् । केषाञ्चिद्भ्रा-

(द्वै यु) न्ताना तद्भ्रमसम्भवेपि तस्य मिथ्यात्वानुमितिकाले स्मरणानियमेन मिथ्यात्वानुमित्यनन्तरं नियमेनासत्त्वग्रहे बीजाभावेन मिथ्यात्वेन सिद्धेऽसद्भेदसाधनेनानिर्वचनीयसिद्ध्यनन्तरं तत्राप्रामाण्यग्रहो भविष्यतीत्याशङ्का **मिथ्या-त्वे साधितेऽसत्त्वस्यैव यथा** प्रतीतिरित्यादिकस्योक्ताभिप्रायमज्ञात्वा व्याप्तिबलेनासत्त्वस्यैव प्रतीतिरित्यन्यथा-भिप्रायग्रहपूर्विकामाशङ्का स्वाभिप्रायाविष्करणेन निराकर्तुमनुवदति ॥ **यः कर्ता नासाविति** ॥ इदं वाक्यं यत्सकर्तृकं तदसर्वज्ञकर्तृकमेवेति व्याप्तिप्रदर्शनोपक्षीणं ज्ञेयम् ॥ **इत्यस्त्येवेति** ॥ मिथ्यात्वासत्त्वयोर्यथा व्याप्तिग्रहो वर्तते तथाऽत्राप्यस्त्येव । अतस्तन्मूलवैषम्यप्रदर्शनमयुक्तमिति हृदयम् । व्याप्तिसदसद्भावकृत एवासत्त्वोपस्थितिनियमो-ऽसर्वज्ञकर्तृकत्वोपस्थित्यभावश्चेति वैषम्यमनुमानद्वये सिद्धान्त्यभिप्रेतमित्यभिमानं शङ्कस्य वर्तत इत्येतमर्थमस्त्ये-वेत्यत्रत्यैवकारो ध्वनयति अत्राप्यस्त्येव तत्र को विशेष इति रीत्या । अन्यथेश्वरानुमाने सत्प्रतिपक्षोपपादन-मात्रतात्पर्यकत्वे व्याप्तिरस्तीत्येतावता पूर्तावेवकारानर्थक्यप्रसङ्गात् । तत्रैव परिहारमनुक्त्वा प्रकृतानुमाने तद्वैषम्यबोधकस्य **प्रकृत** इत्युत्तरग्रन्थस्यासङ्गतिप्रसङ्गाच्च ।

पराभिमानं निराकृत्य समाधत्ते ॥ **प्रकृत इति** ॥ **मिथ्यात्वस्यैवासत्त्वेनेति** ॥ पूर्वोक्तरीत्या असत्प-दार्थतावच्छेदकत्वेनासत्त्वरूपत्वेनेति वार्थ । **तेन** सद्विविक्तत्वरूपमिथ्यात्वेन । **तदसाधनात्** व्याप्तिबलेनासत्त्व-ग्रहस्यानङ्गीकारात् । तथा च सद्विविक्तत्वसाधनमेवासत्त्वसाधनरूपमिति पुनस्तन्निषेधे सत्प्रतिपक्षतैव स्यादिति भाव । ननूक्तपरोक्तदूषणायासत्त्वमिथ्यात्वयोरैक्यस्येदानीमभिप्रेतत्वे मूले तथैव वक्तव्यम् । किमर्थं तस्य सामान्य-रूपतानिराकरणम् । अनुपयुक्तत्वादित्यत आह ॥ **अस्य चेति** ॥ **मिथ्यात्वस्यैवासत्त्वेने**ति पूर्ववाक्ये एवकारेणा-सत्त्वे [1]मिथ्यात्वसामान्यरूपत्वावच्छिन्नान्यस्य तादात्म्यं व्यवच्छिद्यते । प्रथमान्तातिरिक्तविशेषणसङ्गतैवकारेणा-न्ययोगव्यवच्छेदात् मिथ्यात्वान्यस्मिन्नसत्पदार्थतावच्छेदकत्वस्य वाऽसत्त्वरूपत्वस्य वा निराकरणेऽसत्तदन्य-साधारणसामान्यरूपे मिथ्यात्वतादात्म्यस्यार्थतो व्यवच्छिन्नत्वात् । एवञ्च पूर्ववाक्ये तस्य प्रक्रान्तत्वेन वा एतन्मू-लव्याख्यावसरे तस्य बुद्धिस्थत्वेन वाऽस्येति मिथ्यात्वस्यासत्त्वान्यसामान्यधर्मतादात्म्यं परामृशति । तथा च मिथ्यात्वस्य सामान्यरूपतयाऽसत्त्वान्यतादात्म्यम् । **आश्रयासिद्ध्यादिना** असदन्यानिर्वचनीयरूपाश्रयस्या-सदन्यत्वेनासिद्ध्या **आदि**पदोपात्तेन च तत्प्रयुक्तसामान्यरूपत्वनिराकरणेन च निराकरणादित्यर्थ । सामान्य-रूपतानिराकरणं विना मिथ्यात्वस्यासत्त्वरूपताया व्यवस्थापयितुमशक्यत्वात्तदर्थं सामान्यरूपतानिराकरणं मूलकृतो युक्तमिति भाव । एतत्पक्षे मूलं नानुपयुक्तमिति पञ्चम्यर्थं प्रति साध्यसमर्पकत्वेनाध्याहर्तव्यम् ।

यद्वा मिथ्यात्वस्यैवासत्त्वरूपत्वं कुत इत्यत **अस्य चेति** । सामान्यरूपत्वस्येत्यर्थ । मिथ्यात्वस्यैवासत्त्वे-नेति पूर्वेणैव पञ्चम्यर्थान्वय । निराकरणस्य तद्धेतुताया उपपादितत्वात् । मूलानुपयुक्तत्वपरिहारस्त्वार्थिको अवसेय ।

यद्वा **अस्य चे**त्यस्य मिथ्यात्वस्यासत्त्वरूपत्वस्य चेत्यर्थ । अव्यवहितपूर्ववाक्ये कण्ठत एवोपात्तत्वेन प्रकृतत्वात् । सिद्ध्यर्थमिति शेष । एवार्थश्चः । तथा च मिथ्यात्वस्यासत्त्वरूपत्वस्य सिद्ध्यर्थमेव मूलेनाऽश्रया-

[1] मिथ्यात्वान्यस्य सामान्यरूपस्य वा तदन्यस्य वा तादात्म्यं, इति पाठेन भाव्यमिति भाति ।

(द्वै द्यु) सिद्ध्यादिप्रदर्शनादिना मिथ्यात्वस्य सामान्यरूपताया निराकरणात्। मिथ्यात्वस्यैवासत्त्वेनेति पूर्वेणान्वय। अन्यत्पूर्ववत्।

यद्वा य कर्तेति वाक्यस्यैतावानेव भाव। मिथ्यात्वसाधने व्याप्तिबलादसत्त्वस्यापि सिद्धि पूर्वानुमानफलरूपैवेति पुनरसत्त्वस्य प्रतिक्षेपे सत्प्रतिपक्षत्व त्वदनुमानस्य। नैवमीश्वरानुमानस्य। सकर्तृकत्वेनासर्वज्ञकर्तृकत्वस्याप्रतीत्याऽसर्वज्ञकर्तृकत्वसिद्धेस्तत्फलत्वाभावेन तत्प्रतिक्षेपकानुमानस्य सत्प्रतिपक्षत्वाभावे प्रमेयविशेषकृतमनुमानस्य वैलक्षण्यं प्राप्तमितीश्वरानुमानप्रतिबन्दीदान न घटत इति यद्वचनाऽभिप्रेत तन्न सङ्गच्छते। अत्र य कर्ता नासौ सर्वज्ञ इति व्याप्तिसद्भावेनात्रापि भवदुक्तरीत्या प्रमेयसाम्यादिति [1]स्वाभिप्रायमुद्धाट्य प्रमेयवैषम्यमुपपादयति ॥ मिथ्यात्वस्यैवेति ॥ तथा च प्रकृते साक्षात्साध्य एव सत्प्रतिपक्षत्व नैवमीश्वरानुमाने। अतो वैषम्यं युक्तमिति भाव। वैषम्यसाधनेन किमागतमिति चेत प्रतिबन्ध्यादिदातुरयमभिप्राय। यद्यस्मदनुमानं उक्तजातीयदूषणबलादसाधकं स्यात् ईश्वरानुमानमप्यसाधक स्यात्। न चैवम्। तस्मात्तद्वदिदमप्यसाधक न भवतीति। न चात्र व्याप्त्यभाव। विशेषव्याप्त्यभावेऽपि यदविशिष्टस्यैकस्य यद्भवति तदन्यस्यापि तद्भवतीति सामान्यव्याप्तिसत्त्वात्। प्रदर्शिता चेय रीति सुधायामेव आभाससाम्योपपादनप्रस्तावे। तथा च तत्परिहारे आपादकासिद्धिं वक्तु तयोर्विशेष उपपादनीय इति तदुपपादनं युक्तमेवेति।

ननूक्तानुमानस्येश्वरानुमानवैषम्यस्योक्तरीत्योपपादनेनापत्तिपरिहारो न घटते। तद्व्यक्तित्वकृतवैषम्यस्य सर्वत्र सम्भवेन एतादृशापादनमात्रोच्छेदप्रसङ्गात्। किं तु येन यज्जातीयदूषणभूषणवत्त्वान्यतरादिना सजातीय यत्तत् साधकत्वासाधकत्वान्यतररूपेण तत्सजातीयमिति व्याप्तिमाश्रित्येदमापाद्यते। ईश्वरानुमानेपि पूर्वोक्तरीत्या सत्प्रतिपक्षताया उपपादितत्वात्। सत्प्रतिपक्षे भवदुपपादितरीत्या अवान्तरवैचित्र्यस्याकिञ्चित्करत्वादित्यत आह ॥ अस्य चेति ॥ चस्त्वर्थे। प्रकृतत्वादीश्वरानुमानप्रतिपक्षानुमानमस्येति परामृशति ॥ आश्रयेत्यनेन प्रतिपक्षोत्थापनामूलभूतव्याप्त्यादिपरिग्रह। व्याप्तिमाश्रित्यानुमान प्रवर्तत इति प्रेक्षावद्व्यवहारात्। आदिपदेन स्थापनानुग्राहकस्य प्रतिपक्षबाधकस्य 'य सर्वज्ञ सर्वविद्यस्य ज्ञानमय तप· तस्मादेतद्ब्रह्म नामरूपमन्न च जायते' इत्याद्यागमस्य ग्रह.। तथा चायमर्थ। ईश्वरानुमानप्रतिपक्षस्य स्वोपष्टम्भकव्याप्तिपक्षधर्मत्वाभावागमबाधादिना निराकरणात्। अस्मदुक्तसत्प्रतिपक्षस्योक्तरीत्या निराकरणायोगेन दृढत्वरूपविशेषसत्त्वान्न मिथ्यात्वानुमानेश्वरानुमानयो· सत्प्रतिपक्षितत्वेनापि साम्यमिति।

ईश्वरानुमानप्रतिपक्षनिरासस्त्वित्थम्। पूर्वोक्तयथाश्रुतव्याप्तिबलेन क्षित्यादिकर्तार पक्षीकृत्य क्षित्यादिकर्ता असर्वज्ञ कर्तृत्वात्सम्मतवदिति अनुमानेन असर्वज्ञत्वस्य क्षित्यादिकर्तरि सिद्धत्वात् पुन तन्निषेधे अनुमानान्तरेण कृते सत्प्रतिपक्षत्व परस्परानुमानयोरित्यभिप्रायो वा तद्वाक्यपर्यवसिता सकर्तृकत्वे असर्वज्ञकर्तृकत्वव्याप्तिमवष्टभ्य क्षित्यादावसर्वज्ञकर्तृकत्वसिद्ध्या पुनस्तन्निषेधे सत्प्रतिपक्षत्वमिति वाऽभिप्रायो भवेत्। नोभयमपि सम्भवति। सह-

[1] स्वाभिप्रायमुद्धाटयति परे, इति पाठेन भाव्यमिति भाति

(द्वै घु) चारदर्शनेपि व्याप्तिग्राहकतर्काभावेन व्याप्त्यसिद्धया असर्वज्ञत्वनाहशकर्तृकत्वसाधकानुमानयोरनुत्थिते । य सर्वज्ञ इत्याद्यागमबाधश्च । यो यदपेक्षया अधिकपदार्थकर्ता स ततोऽधिकविशेषज्ञ इति सामान्यव्याप्तिमूलक-प्रबलानुमानबाधश्च । सार्वज्ञ्य विना क्षित्यादिकर्तृत्वमेवानुपपन्नमित्यनुकूलतर्कोपेतत्वेन स्थापनाया प्राबल्याच्च । किं च सर्वज्ञत्वतत्कर्तृकत्वसाधकानुमानप्रतिपक्षभूतेनानुमानान्तरेणैतदनुमानसाध्यग्रहप्रतिरोधमात्र क्रियते किं वा क्षित्यादिकर्तृत्वतन्निष्ठसकर्तृकत्वयो व्यापकत्वेन गृहीतसर्वज्ञत्वतत्कर्तृकत्वाभावसाधकत्वेन [1]क्षित्यादौ सर्वज्ञत्व सकर्तृकत्वानुमितिप्रतिरोध क्रियते । आद्ये प्रथमस्येश्वरानुमानस्य न काचिद्धानि । तत्र अस्मदादिवैलक्षण्येने-श्वरस्यापि सिद्धे । द्वितीये क्षित्यादिकर्ता न सर्वज्ञ इत्यस्याश्रयासिद्धि । क्षित्यादिकमसर्वज्ञकर्तृक सकर्तृकत्वा-दित्यनुमानस्य पक्षे हेत्वसिद्धि । प्रतिपक्षानुमाने प्रथमानुमानस्यैवालब्धशरीरत्वात् । तथा चानयोर्दुर्लभत्वेन न सर्वज्ञत्वतत्कर्तृकत्वसाधकानुमानप्रतिबन्धकतेति । **आदिपदेनेश्वरानुमानस्याऽगमसाहाय्यकथनेनैतदनुमानस्येश्वरा-**साधकत्वस्य स्वयमेव **विष्णुतत्वनिर्णये** उक्तत्वादत्र तस्य साधकत्वोक्त्या विरोध इत्यपि निरस्तम् । आगम-साहित्यासाहित्यदशाभेदेनोक्तिद्वयव्यवस्थाया व्यञ्जितत्वादिति ।

**केचित्तु** कि कर्तृत्वस्यैवासर्वज्ञत्वादिरूपत्वादसर्वज्ञत्वनिषेधकेन सत्प्रतिपक्ष उतोक्तरीत्या परम्परया । नोभय-थाप्येतत्साम्यं प्रकृतानुमानस्येति वक्तुमाद्य तावन्निराह ॥ **मिथ्यात्वसाधन इत्यादिना** ॥ द्वितीय शङ्कते ॥ **य इति** ॥ तथापि वैषम्यमुपपादयति ॥ **प्रकृत इति** ॥ तथा च वैषम्यमेवेति भाव । **अस्य च** मिथ्यात्व-साधकानुमानस्य च । **आश्रयासिद्ध्यादिना** आश्रयासिद्धिमूलका सामान्यासिद्धि । तन्मूलक चासत्त्वमिथ्या-त्वयोरैक्यस्थापनम् । ततश्चासत्त्वनिरासकहेतुना सत्प्रतिपक्ष इति क्रमेण निराकरणादित्यर्थ । ईश्वरानुमानवैषम्यो-पपादनमात्रेण प्रकृते यद्येनाविशिष्टमित्यभिप्रेतापादकस्य परिहृतत्वेनेश्वरानुमानसदसत्त्वविचारस्यानवसरात्स न कृत इति व्याचक्षते ।

ननु सत्त्वावच्छिन्नभेद एव यद्यसत्त्व स्यात्तदा भवेदस्य सत्प्रतिपक्षत्वम् । तदेव न । किं तु निरुपाख्य-त्वम् । उपाख्यत्व तु अखण्डो धर्म असद्व्यावृत्त । तदभावो निरुपाख्यत्वम् । शब्दवृत्त्यविषयत्व वा तत् । ब्रह्मणो वाच्यत्वाभावेऽपि लक्षणागोचरत्वान्नासत्त्वापत्ति. ।

एतेन 'यद्यसत्त्वमर्थक्रियाकारित्वाभाव तर्हि तदवच्छिन्नभेदो अर्थक्रियाकारित्वमेव । तदा शुक्तिरूप्ये रजतो-चितक्रियारहिते प्रत्यक्षबाध । तस्यापि कथञ्चिदर्थक्रियाकारित्वमिति पक्षस्तु निराकरिष्यते । तथात्वेपि वा सौग-ताभिमतस्यासत्त्वस्यानेनैनिराकरणाभाव । तेनापि शुक्तिरजते भवदुक्तरीत्या यथाकथञ्चित् ज्ञानावच्छेदकतया अर्थक्रियाकारित्वस्यानिवारितत्वात् । असत्त्वेनाभ्युपगते जगति अर्थक्रियाकारित्वस्याभ्युपगतत्वाच्च । नाप्यपरो-क्षप्रतीत्यविषयत्व प्रतीत्यविषयत्व वा । तदवच्छिन्नभेदस्या परोक्षप्रतीतिविषयत्वरूपतया स्वार्थानुमापकस्य सिद्धसा-धनता । प्रतीतत्वस्य धर्मादावपि भावेन व्यभिचार । अपरोक्षतया प्रतीतत्वस्य हेतुत्वे साध्यावैशिष्ट्यम् । असत्त्वस्य प्रतीतत्वाभावरूपत्वे स्फुट साध्यावैशिष्ट्यम् । सर्वस्याप्यस्य शून्यवाद्यभिमततया शून्यवाद्युक्ताद्वैलक्षण्यस्य शुक्तिरजते

[1] क्षित्यादिकर्तृत्वतन्निष्ठसकर्तृकत्वानुमितिप्रतिरोध इति पाठेन भाव्यमिति भाति

(द्वै ध्रु ) जगत्यप्यसिद्ध्याऽर्थान्तरात् । शुक्तिरजतादावुक्तग्रहवता लौकिकाना मतान्तरानुयायिना चालीकम सदिति व्यवहारस्य सत्त्वेन भवदभिमतानुमानेनापि तस्यैव धर्मस्य सिद्धिप्राप्त्या पूर्वोत्पन्नग्रहेऽप्रामाण्यग्रहानुत्पादनेनैतत्साधनस्याकिञ्चित्करत्वाच्च । नापि सत्त्वेन प्रतीत्यनर्हत्वम् । तच्च सत्तादात्म्याभाव । तेन गुरुत्वादाव ीन्द्रिये इद सदिति प्रात्यक्षिकप्रतीत्यभावेऽपि न क्षति । तस्यापि फलाद्यवच्छिन्नसद्रूपचित्येवाध्यस्तत्वेन सत्तादात्म्याक्षते । एवं च शुक्तिरजतादेरसत्त्वग्रहवता तादृशसत्तादात्म्यस्यासिद्धत्वेन प्रतीतत्वप्रत्यक्षप्रतीतत्वादिलिङ्गैस्तादृशासत्त्वाभावरूपसत्तादात्म्यानुमितिर्विशेषग्रहवता परीक्षकाणामुपपद्यते इति वाच्यम् । तत्र सत्तादात्म्यस्य भेदप्रतियोगितावच्छेदकसत्त्वघटितत्वे तदघटितत्वे वा दूषणाना पूर्वमुपपादितत्वादिति निरस्तम् ।

निरुपाख्यत्वरूपासत्त्वाभावरूपसोपाख्यत्वस्यैव साध्यत्वेन तस्य च भेदप्रतियोगितावच्छेदकसत्त्वापेक्षया अतिरिक्तत्वेन व्याघातादिविरहादित्यत्राप्येतदेवोत्तर ॥ **अस्य चेति** ॥ मिथ्यात्वान्यनिरुपाख्यत्वनिष्ठस्य प्रकृतसाध्यरूपभेदप्रतियोगितावच्छेदकत्वेनाभिमतासत्त्वतादात्म्यस्य पूर्वोक्तरीत्या परामर्श । चोप्यर्थ । असत्त्वव्यवहारगोचरव्यावृत्ताश्रयासिद्ध्यादिना **निराकरणादि**त्यर्थ । आदिपदेन प्रमाणाभावपरिग्रह । पञ्चम्या पूर्वेणान्वय । यदवच्छिन्नभेद प्रतीतत्वेन साध्य मिथ्यात्वस्यैव तादृशासत्त्वरूपत्वेनेत्यर्थ ।

इदमुक्त भवति । सोपाख्यत्व नाम कश्चिदखण्डो धर्म सद्व्यवहारगोचरेष्वेव स्वीक्रियते उतान्येष्वपीति । आद्येऽपि परीक्षादिप्रवृत्तावपि यन्नासद्व्यवहारभागि किं तु सर्वथैव यत्सद्व्यवहारालम्बनं तत्रैव उत कदाचित्सद्व्यवहारगोचरेष्वपि । आद्ये शुक्तिरजतादेरतथात्वेन घटादेरेव तथाभूततया परीक्षादिनाऽसदेव रजतमभादिति तद्भेदग्रहवता तत्र निरुपाख्यत्वस्यैव गृहीतत्वेन तत्र तदवच्छिन्नभेदसाधने सत्प्रतिपक्ष एव । द्वितीये शशविषाणादेरपि शब्दादिना सत्त्वेन प्रतीतिसम्भवात् निरुपाख्यत्वस्य यस्य सर्वथा सत्त्वेन प्रतीतिरपरोक्षप्रतीतिर्वा नास्ति तादृशासद्विशेषे पर्यवसन्नत्वेन तद्भेदसाधने शशविषाणादिरूपासद्विशेषभेदसाधनवदर्थान्तरत्वात् । शून्यवादिलौकिकादिसिद्धालीकादिव्यवहारविरोधिधर्मस्यासाधनात् । उक्तधर्मस्य सत्त्वेन प्रतीतिविषयत्वाभावापरोक्षप्रतीतिविषयत्वाभावसमनियतत्वेन तदभावस्य सत्त्वेन प्रतीतिविषयत्वापरोक्षप्रतीतिविषयत्वमात्रे पर्यवसानात् । तृतीये सोपाख्यत्वस्य सर्वसाधारण्यापत्त्या तदभावरूपनिरुपाख्यत्वस्यैवासिद्धिप्रसङ्ग एवेति न तदवच्छिन्नभेदसिद्धि । उपाख्यत्वस्याप्युक्तप्रतीतिविषयत्वाद्यतिरिक्ताखण्डधर्मरूपत्वे मानाभावाच्चेति ।

अथ शब्दवृत्तिविषयत्वरूपोपाख्यत्वाभावरूपासत्त्वाभाव साध्यत इति चेन्न । तथात्वेपि तस्य शब्दवृत्तिविषयत्वरूपस्यासत्ख्यातिवादिना सौगतविशेषेण पुरुषान्तरेण चेद रजतमिति व्यवहाराद्यनुपपत्त्या स्वीकृतत्वेनासत्त्वालीकत्वादिव्यवहारविरोध्यनिर्वचनीयत्वासिद्ध्या पूर्ववदर्थान्तरतापत्ते । न च तस्यासत्त्वविरोध जानत परीक्षकस्य तज्ज्ञाने असत्त्वबुद्धिव्यवहारादयो निवर्तन्त इति वाच्यम् । सद्विविक्तत्वरूपासत्त्वसामानाधिकरण्यस्य भवतैवाङ्गीकृतत्वेन तदन्यस्य सत्त्वाभावाद्यतिरिक्तस्योपाख्यत्वविरोधिनो असत्त्वरूपधर्मस्य **आश्रयासिद्ध्या** शुक्तिरजतादिवैलक्षण्येन तद्धर्माश्रयग्राहकप्रमाणाभावेन **आदि**पदोपात्तव्याहत्यादिना **निराकरणा**देव तदप्ययुक्तमित्यर्थकतयै-

(द्वै सि.) तदेव वाक्यमुत्तरम्। तादृशधर्माश्रयसद्विलक्षणे प्रत्यक्षाप्रसक्तौ तस्य शुक्तिरजतादिवैलक्षण्यासिद्ध्या-पत्त्येन्द्रियसन्निकर्षासम्भवेन च प्रत्यक्षाभावादत एव लिङ्गाभावाच्छब्देनापि तदवोधने प्रमाणसामान्यस्यैवाभावेन धर्मिणं विहाय तादृशधर्मस्येतरव्यावृत्ततया बुद्धावनारोहे तदवच्छिन्नभेदसाधनायोग । अवृत्तित्वेन तादृशधर्मग्रहे तदभावस्य केवलान्वयितया तत्साधन प्रमेयत्वादिसाधनवदकिञ्चित्करम्। अर्थान्तरप्रसङ्गात्। भेदसाधनार्थं तादृशधर्माश्रयस्य शब्देनैव व्यवहृततया अस्य शब्दविषयत्वविरोधोक्तेर्व्याहतत्वाच्च। न च शब्दजन्यानुभवाविषयत्वेऽपि लक्षणया योगवृत्त्या वा विकल्पसम्भवेन व्यवहारनिषेधयो सम्भवान्न व्याहतिरिति वाच्यम्। अस्याग्रे निराकरिष्यमाणत्वादय पक्षोऽप्यसमञ्जस इति भाव । उत्पत्तिमत्त्वाभाव कालसम्बन्धाभावो वा यद्यसत्त्वं तदभाव उत्पत्तिमत्त्वकालसम्बन्धित्वरूप इति त्रैकालिकनिषेधप्रतियोगित्वादिरूपहेतुसाध्यत्वेन गृह्यमाणे कालसम्बन्धघटितोत्पत्ते कालसम्बन्धस्य च व्याहतत्वादिना च पूर्वमेव निराकृतत्वात् सौगतमतावैलक्षण्याच्च। प्रतीतत्वमापरोक्ष्येण प्रतीतत्व सत्त्वेन तथा प्रतीतत्वमित्येतेषा नित्येषु घटत्वसत्त्वादिषु व्यभिचार इत्येषा दिक्।

कश्चिदनिर्वचनीयस्थापनाय बहूक्त्वाऽनिर्वचनीयं साधितमित्यभिमानेन 'तस्मादेवमनिर्वचनीयत्वप्रसिद्धौ भेदे अनिर्वचनीयत्वादिविकल्पस्य तन्मूलकप्रश्नादेश्चोपपन्नत्वाद्विकल्पेन दूषणमपि सम्भवतीति बोध्यम्' इत्यन्तेनोपसंहृत्य **न च धूमत्ववन्मिथ्यात्वमित्यादिमूलटीके** कटाक्षीकृत्योक्तवान्। 'मिथ्याशब्दस्य सद्विलक्षणत्वमेवार्थं । तच्चात्यन्तासदनिर्वाच्यसाधारणम्। न च सामान्यस्य सदसदुभयवृत्तित्वायोग । पटात्यन्ताभावप्रतियोगिताया सदसत्साधारण्यस्य त्वयैव वाच्यत्वात्। प्रतियोगिता प्रतियोगिभेदेन भिद्यन्ते। अतो नैकस्योभयसाधारण्यमिति चेत् पूर्वोक्ताभावप्रतियोगित्वरूपमिथ्यात्वस्याप्यनुभयसाधारण्यमक्षतमेव। किञ्च किं बहुना धूमत्वसाम्यमपि व्यावहारिकप्रातिभासिकसाधारण्यमेव' इति।

स प्रष्टव्य । किमनेनैतद्ग्रन्थस्य दूषणमुक्तं भवतीति। आश्रयासिद्ध्या सामान्य न सम्भवतीत्युक्तिखण्डनद्वारा सामान्यसिद्धिपरिशेषादे स्थापनमिति चेत्। न ह्येतट्टीकाया मूले चासति सति च कोऽपि धर्मो मिलित्वा नास्तीत्युक्तम्। ज्ञेयत्वादेरेवाङ्गीकृतत्वात्। अत एव सैद्धान्तिकानामपि परस्परविप्रतिपत्तिगोचर प्रामाणिकप्रतियोगिकोऽपि भवत्यत्यन्ताभाव इति पक्षमाश्रित्य पटात्यन्ताभावप्रतियोगिताया सदसत्साधारण्यप्रदर्शनमचातुर्यमूलकमेव। न च तद्युक्तमपि। एकस्यैव पटात्यन्ताभावस्य प्रतियोगिताया सदसदुभयसाधारण्यस्य प्रामाणिकप्रतियोगिकाभाववादिसैद्धान्तिकेनाप्यनङ्गीकृतत्वात्। प्रतियोगितावच्छेदकीभूतपटत्वस्य सदसदुभयवृत्तित्वस्य तेनाऽप्यनङ्गीकृतत्वात्। पटात्यन्ताभावप्रतियोगिता सत्सु पटेष्वेव स्वीकृता। दण्डजन्यपटो नास्तीति प्रतीतिसिद्धाभावप्रतियोगिता त्वसति तेन स्वीकृता। किं तु टीकामूलयो पूर्वोक्तास्मद्व्याख्यारीत्या स्वरसत एव ग्रन्थलभ्योऽनिर्वचनीयस्यासद्विलक्षणत्वादिनाऽसिद्धे सद्विविक्तत्वस्यानिर्वचनीयासदुभयसामान्यत्वग्रहो न सम्भवतीत्यादिरूपोऽभिप्राय । अत एव टीकायामनिर्वचनीयस्यैवाभावादिति विहाय **प्रागितो अनिर्वचनीयस्यैवासिद्धत्वादिति**, न चाश्रयाभावे सामान्यं भवतीत्यनुक्त्वा **न चाश्रयासिद्धौ सामान्यं सिद्धं भवतीति** चोक्तम्। एव

(द्वै द्यु) बहुष्वेतत्प्रघट्टिकास्थवाक्येषु ज्ञातत्वावच्छिन्नबोधकसिद्धपदप्रयोग एव कृत । मूलेपि **न च धूमवत्त्ववन्मिथ्यात्वमिति सामान्यमस्तीत्यनुक्तवोभयसम्प्रतिपन्नमित्यनेन** सामान्यत्वाभिमतस्यानिर्वचनीयत्वसिद्धे प्राग्ज्ञातत्वनिराकृतावेव निर्भर कृत । तस्मात्स्वमतेन तस्य वस्तुत सामान्यरूपत्वोपपादनमुक्तमूलटीकाशयापरिज्ञानविजृम्भितमेव । यदपि प्रतियोगिता प्रतियोगिभेदेन भिद्यत इत्यादिना तस्य सामान्यरूपत्वाभावशङ्कन तत् कस्य रीत्येति वक्तव्यम् । अप्रसिद्धविशेषणत्वोपपादनमारभ्य नैयायिकरीत्याऽस्य ग्रन्थस्य प्रवृत्तत्वात्तस्यैव रीत्येति न तावद्युक्तम् । घटात्यन्ताभावप्रतियोगिताया सदसत्साधारण्यस्य नैयायिकानभिमतत्वेन पूर्वं तस्य तत्प्रतिबन्धगोचरत्वात् तन्मतानुसरणे नैयायिकं प्रति पूर्वोक्तत्वदुक्तिरसङ्गता । नापि मन्मतरीत्या । मन्मते सर्वस्यापि धूमत्वादे प्रत्याश्रय भिन्नत्वेऽपि विशेषशक्त्या सामान्यव्यवहारनिर्वाहकत्वप्रयुक्तसामान्यरूपत्वस्याङ्गीकृतत्वेनाश्रयभेदेन भेदस्य सामान्यरूपत्वाखण्डकत्वात् । एकस्योभयवृत्तित्वाभावशङ्काया प्रकृते अनुपयोगात् । घटत्वपटत्वादिधर्मान्तरेषु कृतरीतेरत्रापि सम्भवात् । नापि तटस्थस्य सिद्धान्तिमतानभिज्ञस्य कस्यचिदाशङ्केयमिति साम्प्रतम् । तथात्वे सिद्धान्तिमतप्रदर्शनपूर्वक त प्रति स्वोक्तस्योक्तप्रतियोगित्वस्य सामान्यरूपताव्यवस्थापनस्यैव कर्तव्यतया मिथ्यात्वस्याप्यनुभयसाधारण्यादिति मिथ्यात्वस्योभयसाधारण्याभावरूपसामान्यत्वाभावकथनस्यानुपयोगात्पूर्वोक्तार्थव्याहतत्वाच्चायुक्तमेव। तद्वाक्ये सद्विलक्षणत्वरूपमिथ्यात्वमुपक्रम्य पूर्वोक्तप्रतियोगित्वरूपमिथ्यात्वेत्युक्तिस्तु त्रैकालिकनिषेधाप्रतियोगिरूपसद्वैलक्षण्य तादृशप्रतियोगित्वरूपमेवेत्याशयश्चेत्कथञ्चिद्युक्ता । किञ्च किं बहुनेत्यादिना यदुत्तरमूलटीकादूषणमुत्प्रेक्षित तदाभासत्वव्युत्पादनमुत्तरमूलटीकाव्याख्यावसरे स्फुटीभविष्यतीत्यलम् ।

(गु टि) नन्वप्रसिद्धविशेषणत्वेनानुमान प्रागेव दूषितमिति कथ तच्छङ्कापरिहार इत्यत पूर्वानुमानदोषस्यात्राप्रसक्तिं दर्शयति ।। **मिथ्यात्वस्येति** ।। **उपपादयिष्यमाणत्वेनेति** ।। 'असत प्रतीतिं विना असद्वैलक्षण्यज्ञानानुपपत्ते' इत्यादिनेति शेष । ततश्चेह सामान्यसिद्धेरसत्त्वमादायैव पर्यवसानसम्भवेनानिर्वचनीयमादाय पर्यवसानस्याकल्पनीयत्वान्नानेनाप्यनुमानेनानिर्वचनीयसिद्धिरिति भाव ।

नन्वेवं परिशेषात्प्राक् क्वाप्यप्रसिद्धविशेषस्याप्रसिद्ध्या असदाश्रयसामान्याभावेन सामान्यसिद्धे सामान्यविषयकत्वासम्भवेन प्रसिद्धविशेषमात्रविषयकत्वापत्तौ तद्विशेषप्रतिषेधकपरिशेषस्य सामान्यसिद्धिविरोधित्वेन परस्परप्रतिबन्धकत्वात्सामान्यसिद्धिपरिशेषाभ्यामपूर्वविशेषसिद्धि क्वापि न स्यादित्यवश्यमसदाश्रयसामान्येऽङ्गीकर्तव्ये तत्रत्यदूषणाभावे वा गवेषणीये स एव न्यायोऽनिर्वचनीयत्वसाधनेपीत्याशयवानुदाहरणविशेषमाश्रित्य शङ्कते ।। **नन्विति** ।। स्वमते साधनद्वयाभावेन सामान्यविशेषयोर्नेदमुदाहरणमित्यभिप्रेत्य समाधत्ते ।। **न स्यादिति** ।। यन्मते साधनद्वय तन्मतीयैतद्दूषणपरिहारोपायो ममापि सम इत्यभिप्रेत्य पुन शङ्कते ।। **येत्विति** ।। मिथ्यात्वसाधननिराकरणे ईश्वरसाधननिराकरणमपि स्यादित्यापादयता हि आपाद्यापादकयोर्विशेषव्याप्तेर्वक्तुमशक्यत्वेन यदविशिष्टस्यैकस्य यद्भवति तदविशिष्टस्यापरस्यापि तद्भवतीति सामान्यव्याप्तेरेव वक्तव्यतया प्रकृते च विशेषान्नेदमापादनं तन्मतेपि सङ्गच्छत इत्याह ।। **न यत इति** ।। अविशेषवादिना हि कर्तृत्वस्यैवासार्वज्ञ्यरूपत्वेन तत्साधनस्यैव तत्साधनत्वात् सामान्यसिद्धित्वाभिमतस्यासार्वज्ञ्यप्रतिषेधसाधकेन प्रतिपक्ष इत्येवं-

(गु. टि ) रूपेणाविशेष इत्यभिप्रेत आहोस्वित् सामान्यसिद्ध्या कर्तृसिद्धिमङ्गीकृत्य कर्तृत्वस्यासार्वज्ञ्यव्याप्तत्वात्तत्सिद्धक्षित्यादिकर्तृपक्षकतत्सिद्धकर्तृत्वहेतुकासार्वज्ञ्यसाधकानुमानस्य असार्वज्ञ्यप्रतिषेधसाधकेन प्रतिपक्ष इत्येवरूपेण वा । आद्ये अविशेषव्याप्तावपि मया त्रैकालिकनिषेधप्रतियोगित्वरूपपराभिप्रेतमिथ्यात्वातिरिक्तासत्त्वानङ्गीकारेण, लोके असाव्यावहारिकत्वेन च मिथ्यात्वसाधने असत्त्वस्यैव प्रतीत्या तत्साधकस्यैव तत्साधकत्वात् असत्त्वप्रतिषेधसाधकेन तत्प्रतिरोधस्य वक्तु शक्यत्वेपि बुद्धिपूर्वप्रवृत्तिरूपकर्तृत्वस्य सर्वविषयकज्ञानाभावरूपेण वा सर्वविषयकाज्ञानरूपेण वा असार्वज्ञ्येन अभेदस्य वादिप्रतिवादिभ्यामनङ्गीकारात् असाव्यावहारिकत्वाच्च अनुमितेर्व्यापकतावच्छेदकप्रकारतानैयत्येन च कर्तृसाधने तत्प्रतीतेरसम्भवेन तत्साधकस्य तत्साधकत्वाभावेन सामान्य सिद्धेरसार्वज्ञ्यप्रतिषेधसाधकेन प्रतिपक्षायोगेन तत्पक्षस्यैवायोग इत्याह ॥ **यन्मिथ्यात्वेति** ॥ द्वितीय शङ्कते ॥ **यः कर्तेति** ॥ तर्हि उक्तरीत्या मिथ्यात्वस्यैवासत्त्वरूपत्वेन मिथ्यात्वेनासत्त्वासाधनेन सामान्यसिद्ध्युपजीवनेन प्रवृत्तस्य प्रतिरोधादिना अनिराकरणात् । सामान्यसिद्धत्वेन पराभिमतमिथ्यात्वसाधनस्यैव च आश्रयासिद्धौ सामान्याभावेनासत्त्वमात्रविषयकत्वापत्तावसत्त्वप्रतिषेधकप्रतिरोधादिना निराकरणान्न साम्यलेशोपीति भावेन समाधत्ते ॥ **न प्रकृत इति** ॥

न चैव न्यायसाम्याभावेपि कर्तृसामान्यसिद्ध्युपजीवनप्रवृत्तासार्वज्ञ्यानुमानस्य तत्प्रतिषेधकानुमानविरोध कथं वस्तुतः समाधेय इति वाच्यम् । वैषम्योपपादनमात्रेण प्रकृततर्करूपबाधकपरिहारे तत्समाधिकथनस्यानवसरग्रस्तत्वादिति भाव ।

अन्ये तु क्षित्यादिकर्तृपक्षकासार्वज्ञ्यानुमाने कर्ता यदि सिद्धस्तर्हि धर्मिग्राहकमानेन सर्वज्ञत्वेनैव सिद्धत्वादसार्वज्ञ्यसाधने धर्मिग्राहकप्रमाणबाध । असिद्धत्वे चाऽश्रयासिद्धिरित्याहु ।

तन्न क्रम । यत्तावदुक्त क्षित्यादिकर्ता किं सिद्ध इत्यादि तत्र सिद्ध इत्येवोत्तरम् । न चैव धर्मिग्राहकमानविरोध । 'कार्यत्वेन कर्तृमात्रसिद्धिमङ्गीकृत्य सार्वज्ञ्यादिसिद्धौ परिशेषेण प्रयतन्ते' इत्यादिपूर्वग्रन्थपर्यालोचनया स्वरूपमात्रस्यैव तेन सिद्धत्वे सार्वज्ञ्यस्य धर्मिग्राहकमानासिद्धत्वात् । अन्यथा क्षित्यादिकर्तृत्वादसर्वज्ञो नेति परिशेषानुमानेपि कर्तु सिद्धत्वे धर्मिग्राहकमानेन तस्यासर्वज्ञतयैव सिद्धत्वाद्धर्मिग्राहकमानविरोध. असिद्धत्वे चाऽश्रयासिद्धिरिति साम्येनेश्वरसिद्धेर्दौर्लभ्य तदवस्थमेव स्यात् । न च धर्मिग्राहकमान नासर्वज्ञविषयकम् । प्रकृतेपि तुल्यमित्युक्तत्वादित्यास्ता तावत् ।

### मूलोक्तस्य धूमत्वदृष्टान्तस्यायुक्तत्वशङ्कापरिहारौ

(टी ) **नन्वसदनिर्वचनीये द्वे अपि न स्तः । ततो नरखरविषाणयोर्विषाणत्ववदिति निदर्शनीयम् । धूमस्तु बाष्पारोपित एव नास्ति । न त्वितरः । तत्कथ धूमत्ववदित्युदाहृतम् । मैवम् । [असदितिनिर्देशस्य प्रतियोगिप्रधानत्वे व्यत्ययभावमात्रे दृष्टान्तत्वोपपत्तेः । निषेधप्रधानत्वे तु तस्य सत्त्वेन सुतरां युक्तत्वात् । बाष्पधूलीमशकमालाद्यारोपितधूमेषु धूमत्ववदिति वा व्याख्येयम् ।]**

धूमत्वस्य बाष्पारोपितधूमवृत्तित्वाङ्गीकारे दोषकथनम्

(टी) ननु बाष्पारोपितधूमेपि धूमत्वसामान्याङ्गीकारे को दोष इति चेत् तदा पर्वतस्याग्निमत्त्वे साध्ये प्रयुज्यमानं धूमवत्त्वं बाष्पारोपितधूमेन निरग्निकेपि ह्रदादौ वर्तमानेन निमित्तेनाग्निव्यभिचारि स्यात्। न च तेन तदग्निं व्यभिचरति। निःशङ्कं लोकव्यवहारहेतुत्वादित्याह।

न च बाष्पारोपितधूमेन धूमवत्त्वं व्यभिचरति।

आभासविवेकस्य वह्निं प्रति प्रयोजकत्वशङ्कातत्परिहारौ

बहुलोर्ध्वतादिवदाभासविवेकोपि वह्निं प्रति प्रयोजक इति चेत्। तत्किं प्रयोक्तॄणां लौकिकानामभिप्रायमनुरुद्ध्येदमाश्रीयते किं वा स्वाभ्युपगतसामान्यनिर्वाहार्थम्। नाद्यः। तदभावात्। लौकिका हि धूमवत्त्वस्यानैकान्त्ये चोदिते धूम एवासौ न भवतीति प्रतिवक्तारो भवन्ति। अन्यथा तदन्यत्त्वे सतीत्यवक्ष्यन्। न द्वितीयः। त्वदभ्युपगमस्यैव निर्मूलत्वात्। भ्रान्तिप्रतिपन्नानामनिर्वचनीयत्वस्याद्याप्यसिद्धत्वात्।

(वि टि) नन्वसत इवानिर्वचनीयशब्दालम्बनत्वेन पराभिमतस्याप्यनिर्वचनीयस्यासद्विलक्षणत्वे मानाभावेनोक्तरीत्या असत्त्वेनैव निश्चितत्वादसदनिर्वचनीययोर्मिथ्यात्वस्य सामान्यरूपतानिराकरणानुगुणत्वेन सामान्यरूपतानिर्वाहप्रयोजकव्यक्तयोर्ययोरुभयोरप्यसत्त्व तयोरेव नरविषाणखरविषाणयोर्विषाणत्ववदिति दृष्टान्ते प्रदर्शनीये कथमाचार्येण आरोपितानारोपितयोर्धूमत्ववदिति दृष्टान्तीकृतमिति शङ्कते ॥ नन्वसदनिर्वचनीये द्वे इति ॥ असदितिशब्दस्यात्यन्ताभावप्रतियोग्येव स्वरससिद्धार्थ । तत्रासच्छब्दस्य किं प्रतियोगिपरत्वमुतात्यन्ताभावपरत्वमिति विकल्प्याद्य आह ॥ असदितिनिर्देशस्येति ॥ व्यक्त्यभावमात्र इति ॥ तथा च व्यक्त्योरन्यतरसत्त्वेप्यन्यतरासत्त्वेनाप्येकस्य तदुभयसामान्यरूपतानुपपत्तौ धूमत्ववदिति दृष्टान्तप्रदर्शनमुपपद्यते। न हि दृष्टान्ते सर्वसाम्यमपेक्षितमिति भाव । द्वितीय आह ॥ निषेधप्रधानत्वे त्विति ॥

नन्वसदितिशब्दान्नियमेनात्यन्ताभावप्रतियोगिन एव प्रतीतेरसच्छब्दस्य प्रतियोगिप्राधान्यमेव युक्तम्। एवञ्च धूमत्ववदित्यस्य यथाकथञ्चिद्व्यक्त्यभावमात्रेण तदाश्रितसामान्याभावे दृष्टान्तोक्तित्वे यदि कश्चिन्न परितुष्यति तदा त प्रति प्रकारान्तरमाह ॥ बाष्पधूलीति ॥ धूमत्वसामान्येति ॥ प्रसिद्धधूमत्वस्यैव बाष्पारोपितधूमधर्मत्वस्याप्यङ्गीकार इत्यर्थ ॥ न चेति ॥ तेन बाष्पारोपितधूमेन। तत् धूमवत्त्वम्। अग्निं व्यभिचरति। धूमदर्शनानन्तर नि शङ्क वह्न्यर्थिप्रवृत्तिदर्शनात्। अन्यथा तन्न स्यादित्यर्थ । ननु धूममात्रं न वह्निव्याप्यम्। घटनिहितदूतनीतधूमे व्यभिचारात्। किं तु बहुलोर्ध्वतादिविशिष्ट एव वह्निव्याप्य इति यथोपेयते एवमप्रातिभासिकधूम एव वह्निव्याप्य । न तु धूममात्रम्। न च लोकाना धूमदर्शनेन नि शङ्कवह्न्यर्थिप्रवृत्त्यनुपपत्ति । इष्टापत्तेरित्याशयेन शङ्कते ॥ बहुलेति ॥ लौकिका हीति ॥ बहुलोर्ध्वतादिक तु प्रयोक्तृलौकिकाभिप्रायगोचर एवेति वैषम्यमिति भाव । ननु नासदभ्युपगमो निर्मूल । अनिर्वचनीयार्थसिद्धेरेव तन्मूलत्वात्। अन्यथा

(वि. टि.) बाष्पारोपितधूमे धूमत्वप्रतीतिव्यवहारयोर्निरालम्बनत्वप्रसङ्गात् प्रसिद्धान्यधूमत्वकल्पने गौरवादनुगत-व्यवहाराभावप्रसङ्गाच्चेत्याशङ्कयाह ॥ **भ्रान्तिप्रतिपन्नानामिति** ॥ धूमादीनामिति शेष ।

(रा टि) **शशविषाणं गोविषाण वोच्यते** इत्युक्ति धूमत्ववन्मिथ्यात्वमित्याद्युक्तिं चाक्षिप्य समाधत्ते ॥ **नन्वसदनिर्वचनीये इत्यादिना** ॥ **असदितिनिर्देशस्येति** ॥ **असदनिर्वचनीये द्वे अपि न स्त** इतिवाक्य-गतनिर्देशस्येत्यर्थ ॥ **व्यक्त्यभावमात्र इति** ॥ न तूभयव्यक्त्यभाव इत्यर्थ ॥ **निषेधप्रधानत्व इति** ॥ अत्य-ताभावनिर्देशरक्ष इत्यर्थ । परिष्कारपूर्वक मूलवाक्यार्थं वदन्नेवावतारयति ॥ **तदा पर्वतस्येत्यादिना** ॥ **तेनेति** ॥ बाष्पारोपितधूमेन ह्रदे वर्तमानेन। **तत्** धूमवत्त्वमित्यर्थ ॥ **निश्शङ्केति** ॥ धूमवत्त्वस्येति योज्यम् ॥ **आभास-विवेकोपीति** ॥ बाष्पारोपितधूमस्तु नाभासविविक्त इति भाव । शुक्तिरजतादेरनिर्वचनीयत्वमेव मदभ्युपगमस्य मूलमित्यत आह ॥ **भ्रान्तीति** ॥ [1]यद्वा न मिथ्यात्वसामान्यस्यानिर्वचनीयरूपव्यक्त्यभावोऽसिद्ध । भ्रान्तिविष-याणामनिर्वचनीयत्वादित्यत आह ॥ **भ्रान्तीति** ॥ **अद्यापीति** ॥ न केवलमनिर्वचनीयत्वसाधकानुमानात्प्रागूर्ध्वं वा । किं तु मिथ्यात्वानुमानदशायामपीत्यर्थ ।

(वे टि) रजतमसदित्यस्य रजतमत्यन्ताभावप्रतियोगि रजतात्यन्ताभावोऽस्तीति वाऽर्थ । तत्रोभयत्रा-प्युपपत्तिमाह ॥ **असदितिनिर्देशस्येति** ॥ **व्यक्त्यभावमात्र इति** ॥ यथा बाष्पारोपितधूमरूपव्यक्त्यभावेन तत्र धूमान्तरे च धूमत्वसामान्यमसिद्धं तथाऽनिर्वचनीयासद्रूपव्यक्त्यभावेन मिथ्यात्वसामान्यमप्यसिद्धमिति व्यक्त्यभाव-मात्रे दृष्टान्त इत्यर्थ । असदितिनिर्देशस्य प्रतियोगिप्राधान्ये उपपत्त्यन्तरमाह ॥ **बाष्पेति** ॥ मूले धूमत्ववदिति-सामान्येनोक्तत्वादिति भाव । बाष्पारोपितधूमेन धूमवत्त्व व्यभिचरतीति धूमस्याग्निव्यभिचारे तृतीयया निमित्त-त्वमुक्तम् । तन्न युक्तम् । वह्निमति बाष्पारोपितधूमेन धूमवत्त्वस्याग्निव्यभिचाराभावादित्यत आह ॥ **निरग्निके-पीति** ॥ **लोकेति** ॥ वह्न्यर्थीत्यर्थ । नन्वस्तु बाष्पारोपितधूमेपि धूमत्वसामान्यम् । न चैव धूमवत्त्वस्य व्यभि-चारापत्त्या नि शङ्क वह्न्यर्थिप्रवृत्त्यनुपपत्ति. । यथा धूममात्रस्य शान्ताग्नावपि सत्त्वेन व्यभिचारान्न धूममात्रं वह्निव्याप्यम् । किं तु बहुलोर्ध्वतादिविशिष्टम् । तथा धूममात्रस्य बाष्पारोपितधूमे व्यभिचाराद्धूममात्रं न वह्नि-व्याप्यम् । आभासविविक्त एव धूमो वह्निव्याप्य. । तेनैव नि शङ्क लोकप्रवृत्तिरित्यङ्गीकर्तव्यमित्यभिप्रेत्य शङ्कते ॥ **बहुलोर्ध्वतादीति** ॥ ननु बाष्पारोपितधूमो नात्यन्तासन्। येन तत्र धूमान्तरे च धूमत्वसामान्य न स्यात् । किं त्वनिर्वचनीय । भ्रान्तिप्रतिपन्नत्वात् । तथा च व्यावहारिके प्रातिभासिके च धूमे धूमत्वसामान्यमङ्गीकर्तव्य-मिति न निर्मूलोऽभ्युपगम इत्यत आह ॥ **भ्रान्तिप्रतिपन्नानामिति** ॥ धूमादीनामिति शेषः ।

(द्वै. द्यु) ननु धूमत्वदृष्टान्तेनेद लभ्यते । यथा धूमत्वरूपसामान्यस्योचिताश्रयस्यैकस्य सत्त्वेन सिद्ध्या अन्यस्य तथात्वेनासिद्ध्या तदुभयसाधारण्यं धूमत्वस्य न गृह्यते तथा मिथ्यात्वरूपधर्मस्याप्यसदनिर्वचनीययोर्मध्ये एकस्य सत्त्वेन ग्रहविषयत्वादपरस्यानथात्वादुभयनिरूपितसामान्यरूपत्वग्रहो न घटत इति । तदयुक्तम् । क्षमते

[1] यद्वा मिथ्यात्व इति पाठेन भाव्यमिति भाति ।

(द्वै धु) तस्याभावात्। उभयासम्प्रतिपत्तेरपि स्वमतासम्प्रतिपत्त्यैव निर्वाह्यत्वादित्याशयेन शिष्य. शङ्कते ॥ **नन्विति** ॥ **न स्तः** सत्त्वेन ग्रहाविषयावित्यर्थ । स्वमत इत्यादि ॥ **निदर्शनीयमिति** ॥ दृष्टान्ते अत्यन्तानुरूप्यस्य भूषणत्वात्तद्विहाय किञ्चिद्विरूपशालिनो दृष्टान्तपथानुसरणे बीजाभावादिति भाव । उपात्तस्य कथं तद्वैरूप्यमित्यतस्तदुपपादयति ॥ **धूमस्त्विति** ॥ **नास्ति** सत्त्वेन ग्रहाविषय । **इतरः** वास्तवधूम । **न तु** सत्त्वेन ग्रहाविषयो न। किं तु तथात्वेन ग्रहविषय एवेत्यर्थ ॥ **असदितिनिर्देशस्येति** ॥ मूले न्यूनताभङ्गायासदनिर्वचनीययोरिति पूरणीयतया तद्घटकासत्पदस्येत्यर्थ ॥ **प्रतियोगीति** ॥ त्रैकालिकनिषेधप्रतियोगीत्यर्थ. ॥ **व्यक्त्यभावमात्रे इति** ॥ भवदुक्तपर्यन्त तात्पर्याभावेन सामान्यत्वग्रहे यादृशरूपेणाश्रयग्रहोपेक्षित· तदभावमात्र इत्यर्थ । **स च ग्रह** प्रकृते असद्विलक्षणत्वेनानिर्वचनीयविषयक इति पूर्वमुपपादितम्। दृष्टान्तदार्ष्टान्तिकभावे सर्वात्मना आनुरूप्यनियमाभावसूचनायैव मूले धूमत्वमेवोपात्तमिति हृदयं ॥ **निषेधप्रधानत्व इति** ॥ नञ प्रसज्यप्रतिषेधत्वे धात्वर्थसत्ताप्रतियोगिकाभाव एव प्रतीयते। अन्यदधिक पूर्वमेवावेदित ॥ **सुतरामिति** ॥ असत्पदार्थभूताभावस्य सत्त्वादनिर्वचनीयस्यासत्त्वादित्यर्थ ।

नन्वेतदयुक्तम्। सद्विविक्तत्वस्यासदनिर्वचनीयसाधारण्यमभ्युपेत्यासद्भेदसाधनेनानिर्वचनीयस्य साधितत्वेनासत्पदेनालीकस्यैव प्रक्रान्ततया तत्साधारण्यमेव मिथ्यात्वस्य खण्डनीयम्। अनलीकाभावसाधारण्यखण्डनस्यानुपयुक्तत्वात्। शुक्तिरजतादिमात्रेऽनिर्वचनीयत्वविवादस्य जगत्सत्तामभ्युपगम्य प्रवृत्ततयेदानीं मिथ्यात्वस्याभावसाधारण्यस्य तेन वक्तुमशक्यतया तत्खण्डनस्यानुक्तोपालम्भनरूपत्वापत्तेश्चेति चेन्न। यतोऽप्यत्र निगूढो ग्रन्थकृतोऽभिप्राय । उत्तरत्र भावाभावविलक्षणत्वरूपानिर्वचनीयत्वे आगमप्रामाण्य निराकरिष्यति। पूर्वमपि तस्याप्रक्रान्तत्वे अन्यत्र प्रत्यक्षानुमाने निराकृत्य प्रमाणसामान्याभावबोधनाय तत्राऽऽगममनिराकृत्यात्र प्रत्यक्षादिकमनिराकृत्यागममात्रनिरासे प्रमाणसामाण्याभावस्य कुत्राप्यनिरूपितत्वेन **न चानिर्वचनीये किञ्चिन्मानमित्यस्यानुपपादितत्वेनासङ्गतिप्रसङ्गात्**। अतो भावाभावविलक्षणत्व सत्यासत्यविलक्षणत्व मिथ्यात्वादिक यद्यदनिर्वचनीयत्वमभिमत तत्सर्वं आदित एव प्रक्रान्तम्। तथा च भावाभावविलक्षणत्वरूपसाध्येप्यप्रसिद्धविशेषणता तुल्या। **सत्त्वासत्त्व** इत्यनुमानेपि सत्त्वासत्त्वशब्दौ विकल्पेन भावत्वाभावत्वपरावपि।

प्रत्येक सदसत्त्वाभ्या विचारपदवी न यत्।
गाहते तदनिर्वाच्यमाहुर्वेदान्तवादिन ॥

इति परोक्तावपि सत्त्वासत्त्वशब्दावेवमेव। तथा च प्रकृतानुमाने सद्विविक्तत्वरूपमिथ्यात्वसाधकानुमानवाक्यमपि विकल्पेन भावविलक्षणत्वरूपप्रकृतोपयोगिपारिभाषिकमिथ्यात्वतात्पर्यकमपि। तादृशपारिभाषिकमिथ्यात्वस्येदानीं परेणाभावस्वीकारे बाधकाभावेन तस्याभावानिर्वचनीयोभयसाधारण्यमङ्गीकृत्यानिर्वचनीयसिद्ध्यर्थं सत्त्वेन प्रतीयमानत्वहेतुना असत्पदार्थभूताभावविलक्षणत्वसाधनपक्षेऽपि तस्योभयसाधारण्य निराकृत्य सत्प्रतिपक्षोऽप्यस्य मूलस्याभिप्रेत एव। तथा चैतत्पक्षे दृष्टान्तदार्ष्टान्तिकयोरानुरूप्यं सुतरामित्युक्त युक्तमेव। अत एव **निषेधप्रधा-**

(द्वै द्यु) **नत्वे** इत्यनेनाभावसामान्यग्रहण कृतम्। अन्यथा अत्यन्ताभावस्यैव ग्रहणेऽत्यन्ताभावभावोभयवैलक्षण्यस्य प्रागभावादौ सत्त्वस्य सर्वाङ्गीकृतत्वेनानिर्वचनीयत्वरूपत्वाभावात् अप्रसिद्धविशेषणत्वाद्यसङ्गतेश्च। एव **चासदिति निर्देशस्ये**त्यनेनानुमानवाक्यस्थस्यात्र पूरितस्य च सर्वस्यासच्छब्दस्य ग्रहणम्। **केचित्तु** अनुमानवाक्यस्थासच्छब्द एव **निर्देशस्ये**त्यनेन विवक्षित। उभयस्मिन् सदसतो सम्प्रतिपन्न सम्यग्ग्रहविषयीभूतमित्यर्थकस्यो**भयसम्प्रतिपन्नपदस्या**वृत्त्यैव विवक्षितार्थसिद्धावत्र पूरणे प्रयोजनाभावात्। अनुमाने त्वेकस्यासच्छब्दस्यार्थनिरूपणे सच्छब्दस्तद्विरुद्धार्थकतया गृह्यत एवेति तदर्थोऽपि न निरूपित इत्याहु। इत्थ चैतादृशानिर्वचनीयाभिप्रायेण **सुतरा**मित्येतद्युक्तमेवेति।

प्रतियोगिप्राधान्यपक्षेऽप्यानुरूप्याऽग्रहेप्याह॥ **बाष्पधूलीति**॥ **धूमत्ववदि**ति मूले सामान्यत एवोक्तत्वादुक्तव्याख्यानेऽपि न किञ्चिद्बाधकमिति भाव। ननु पृथिवीवज्जल गन्धवन्नेत्यनेन यथा पृथिवी गन्धवती तथा जल गन्धवन्नेति यथा बोधस्तथाऽनेनापि वाक्येन धूमत्व यथोभयसम्प्रतिपन्न सामान्य न तथा मिथ्यात्वमपीत्यर्थो लभ्यते। तथात्वे धूमत्वस्य व्यतिरेकदृष्टान्तत्वमेव। तथात्वे न कोऽपि क्लेश। तथा च धूमत्वस्यान्वयदृष्टान्तत्वेन व्याख्यान कृत्वोक्तप्रयासकरणं विफलमिति चेन्न। एव सति बाष्पारोपितधूमसाधारण्याभावस्यैतन्मूलेनालाभे तत्रापि तत्स्वीकारेण दृष्टान्तासम्मतिशङ्कानुदयेन बाष्पारोपितधूमे धूमत्वस्वीकारे दण्डप्रदर्शकस्योत्तरमूलस्यानुत्थानप्रसङ्गेन व्यतिरेकदृष्टान्तत्वपक्षे मिथ्यात्वे सामान्यत्वाभावसाधकस्याश्रयाभावरूपहेतोर्दृष्टान्तमाहिम्ना लब्धत्वाभावेन पृथक् तदनुक्त्या मूलकृता न्यूनतापातेन च तत्परिजिहीर्षया टीकाकृतैव व्याख्यातत्वात्। उत्तरमूले बाष्पारोपितधूमे धूमत्वाङ्गीकारे बाधकोक्तिबलादेव पूर्व बाष्पारोपितधूमाभावप्रयुक्तो धूमत्वस्य तत्साधारण्याभाव इत्ययमर्थो लभ्यत इतीदानीं न मूलस्य न्यूनतेत्यवधेयम्।

प्रयुज्यमान पञ्चम्यन्तप्रतिपाद्य धूमवत्त्वं धूमः। **निमित्तेने**ति मूलस्थधूमपदोत्तरतृतीयार्थविवरण॥ **निःशङ्कमिति**॥ तथा च स्फुटत्वान्मूले व्यभिचाराभावे हेत्वनुक्तिर्न दोषायेति भाव॥ **बहुलोर्ध्वतादिवदिति** विच्छिन्नमूले शान्ताग्नौ धूमे च व्यभिचारवारणाय। सिद्धत्वादेव लोकाना न तथा प्रयोग इति भाव॥ **प्रतिवक्तार इति**॥ **अन्यथेति**॥ धूमवत्त्वादितिहेतुवाक्यं प्रयुञ्जानाना बहुलोर्ध्वतादिविशिष्टधूमबोधतात्पर्येणेवाऽभासान्यत्वविशिष्टधूमबोधतात्पर्येणापि धूमपदप्रयोगस्य सत्त्व इत्यर्थ। **अवश्यन्निति**। धूमवत्त्वादित्युक्तौ लौकिकाना वैदिकाना स्फुटतया बहुलत्वादिविशेषबोधकपदप्रयोगं विहाय धूमादित्येवोक्तिरित्यर्थमविदुषा केनचिद्व्यभिचारे चोदिते बहुलत्वादिकं हेतुविशेषण, परं तु स्फुटत्वादस्माभिर्नोक्तमिति यथा वदन्ति तथा केनचिदविदुषा बाष्पारोपितधूमेन व्यभिचारे चोदिते आभासान्यत्वविशेषणमपि हेतुकोटिनिविष्टम्, परं तु स्फुटत्वादस्माभिर्नोक्तमिति वदेयुरित्यर्थ। ननु लौकिकाना तत्सदृशाना मदन्यवादिना चाभासविवेकरूपविशेषणादान धूम एवासौ न भवतीत्यादिक स्वपरीक्षामूलकम्। न ह्येतत् परीक्षकाणा तादृशविशेषणदाने बाधक भवति। उक्तविशेषणदातॄणा परीक्षकत्वादित्यभिप्रायक द्वितीयपक्ष प्रतिषेधति॥ **न द्वितीय इति**॥ **त्वदभ्युपगमस्यैवेति**॥

(द्वै यु) **निर्मूलत्वात्** निष्प्रामाणिकत्वात। एवकारो लौकिकप्रतीतेर्निर्मूलत्वमपाकरोति। प्रत्युत लौकिकादिप्रतीतेरेव प्रत्यक्षादिप्रमाणमूलत्वात्तेषामेव परीक्षकत्व तवैवापरीक्षकत्वमिति भाव।

एतेन यत्केनचिदभिहित 'किं च किं बहुना, धूमत्वादिसामान्यमपि व्यावहारिकप्रातिभासिकसाधारणमेव। यत्तु व्यावहारिकप्रातिभासिकसाधारणधूमत्वसामान्य नाभ्युपगन्तु युक्तम्। तथा सति वह्नौ साध्ये धूमादेर्व्यभिचारापत्तेरिति तन्न। परीलोर्ध्वतादिवद्व्यवहारकालाबाध्यत्वादेरपि हेतुविशेषणत्वाभ्युपगमात्। तार्किकाभिज्ञैस्तदननुसरण त्वनिर्वचनीयानभ्युपगमेनैव। अपरीक्षकैस्तदननुसरणं तु यथायथं वा-पाऽरोपित धूमादेरसत्त्वनिश्चयादन्यथा वेति न परीक्षकैस्तथा वर्तितव्यमिति दिक्' इति। तदपास्त भवति। त्वदभ्युपगमस्यैव निर्मूलत्वकथनेन तवैवापरीक्षकत्वसूचनात्। कुतो मदभ्युपगमस्य निर्मूलत्वमित्यत आह ॥ **भ्रान्तीति** ॥ सर्वेषा लौकिकानामित्यादि। **अद्यापीत्यनेन** त्वद्वाक्ये श्रद्धाधीनाऽग्रहाभावकालमुपलक्षयति। **असिद्धत्वात्** स्वार्थानुमानेन प्रत्यक्षादिनेति शेष। अय भाव। प्रत्यक्षेणानुमानेनाऽऽप्तवाक्यादिना वा बाधबुद्धिमता भ्रान्तत्वेन व्यवहारो लोके नास्तीति सर्वलोकसम्मतम्। न च तेषा बुद्धिरनिर्वचनीयत्वस्वरूपतृतीयप्रकारावगाहिनी। भ्रान्तिकाले सत्त्वेन बाधोत्तर च सत्त्वेन लोकैर्व्यवह्रियमाणत्वेनानिर्वचनीयत्वस्य लौकिकप्रमाणागम्यत्वात्। न हि तत् त्वद्वाक्याधीनश्रद्धादिकं विना घटत्वादिवत्प्रत्यक्षेण चक्षुरादिवदनुमानेन [1]तन्मूलकविवक्षितार्थे ज्ञानवदाप्तोपदेशेनापि प्रतीयते। अत

एकस्य प्रतिभात तु कृतकान्नातिरिच्यते।

इति न्यायेन त्वत्प्रतीतेरेवोन्मत्तप्रतीतेरिव भ्रान्तित्व वक्तु युक्तमिति त्वदभ्युपगम एव निर्मूलक इति।

यद्वा न केवल त्वदभ्युपगमो निर्मूल इति कृत्वा तादृशविशेषण न देयम्। तद्दानेऽपि व्यभिचारस्य परिहर्तुमशक्यत्वात्। अतस्तत्र धूमत्वानङ्गीकार एव युक्त इत्याशयेनाह ॥ **भ्रान्तीति** ॥ केषाञ्चिदिति शेष। **असिद्धत्वादित्यत** पर **चशब्दोऽध्याहर्तव्य**। **अनिर्वचनीयत्वस्य** व्यवहारकालबाध्यत्वस्य। **अद्येति** ब्रह्मज्ञानप्राक्कालोपलक्षणम्। **अपिरभिव्याप्तौ**। सर्वस्मिन्नपि तादृशपूर्वकाल इत्यर्थ। **अद्येति** वर्तमानकाल। **समुच्चायकेनापिना** पूर्वोत्तरकालावुच्येते इति वा। सर्वस्मिन् ब्रह्मज्ञानपूर्वकाल इत्यर्थ। योग्यतया बाधानुदयेनेत्यध्याह्रियते। **असिद्धत्वात्** अप्राप्तत्वात्। तथा च ब्रह्मज्ञानपूर्वकाले बाधानुदयेन केषाञ्चिद्भ्रान्तिप्रतिपन्नानां व्यवहारकालबाध्यत्वस्याप्राप्तत्वात् तदभावादिति यावत्। व्यभिचारवारणद्वारा स्वाभ्युपगमनिर्वाहरूपद्वितीयपक्षनिर्वाहो न भवति। न केवलं स्वाभ्युपगमस्य निर्मूलत्वमिति। तथा च ब्रह्मज्ञानपूर्वकालेऽसञ्जातबाधभ्रमविषयबाष्पारोपितधूमे वह्निव्यभिचारो दुर्वार इति भाव।

ननु व्यवहारकालबाध्यत्व नाम मूलाज्ञानोपादानकत्व विवक्षितम्। उक्तधूमस्य ब्रह्मज्ञानेन बाधेपि मूलानोपादानकत्वान्न व्यभिचार इति चेन्न। ब्रह्मज्ञानपूर्वकाले बाधानुदये तस्य तूलाज्ञानोपादानकत्वस्यैव युक्तत्वेन

[1] आप्तोपदेशेनापि प्रतीयते इति पाठेन भाव्यमिति भाति।

(द्वै द्यु) मूलाज्ञानोपादानकत्वे मानाभावात् । न चाविद्यातिरिक्तदोषजन्यत्वान्न तूलाज्ञानोपादानकत्वमिति वाच्यम् । पूर्वं बाधानुदयेन तज्जनकानां दोषत्वस्यैवासिद्धे । न च साक्षात् तूलाज्ञानोपादानकस्य बहिष्ठत्वेनाध्यक्षता न दृष्टेति वाच्यम् । तमस इव त्वन्मते उपपत्ते. । न च यत्पुरुषस्य तादृशभ्रमो जात. तस्य बाधानुदयेऽपि तदन्यस्याधिष्ठानतत्वज्ञानवत तत्प्रतीतधूमे बाधितत्वग्रहात्तस्य व्यवहारकालबाध्यत्व वर्तत एवेति न व्यभिचार । विशेषणशरीरे तत्पुरुषीयत्वादेरनिविष्टत्वादिति वाच्यम् । तथात्वे सर्वस्मिन् प्रपञ्चे इदानीं तत्वविचारकस्य बाधबुद्धयुदयेन तादृशविशेषणाक्रान्तधूमादीनामेवाप्रसिद्धे । व्यवहारकाले मिथ्यात्वेनापरोक्षीकृतत्वनिवेशे तु चैत्रारोपितधूमे मैत्रेण मिथ्यात्वेनापरोक्षीकृतत्वायोगादसञ्जातबाधभ्रमगोचरे तत्र व्यभिचारो दुर्वार एव । न च तादृशभ्रमगोचर एव नास्तीति वाच्यम् । सन्निपातादिरोगेण जायमानभ्रमगोचराणामेव सत्त्वात् । सन्निपातेन तस्य मृतत्वेन तस्य बाधबुद्धयनुत्पत्ते । न च तेषां प्रातीतिकाना प्रतीत्यपगमे स्थित्ययोगेन नष्टत्वाद्विनाशित्वरूपबाध्यत्वमस्त्येवेति वाच्यम् । धूमादेर्व्यावहारिकस्यापि विनाशित्वेन असिद्धयापत्ते ।

अपि च व्यवहारकालाबाध्यत्वरूपसत्त्वविशिष्टार्थग्राहकत्वरूपव्यावहारिकप्रामाण्यावगाहिज्ञानाभावे बाष्पारोपितधूमार्थं प्रवृत्त्याद्यनुपपत्त्या प्रामाण्यभानाय साक्षिणा ज्ञानग्राहकेण ज्ञानांशे विशेषणतया भासमानधूमरूपार्थे व्यवहारकालाबाध्यत्वभाननिर्वाहाय प्रथमज्ञानेऽपि धूमांशे व्यवहारकालाबाध्यत्वारोपस्यावश्यकतया बाष्पारोपितधूमेपि व्यवहारकालाबाध्यत्वरूपविशेषणस्य सत्त्वात् तेन व्यभिचार एव । न च तत्र तस्याऽरोपितत्वेन न वस्तुतस्तस्य तदधिकरणत्वमिति वाच्यम् । प्रसिद्धधूमेप्याध्यासिकसम्बन्धातिरिक्तसम्बन्धाभावेन तत्र तद्विशेषणवत्त्वाभावापातात् । स्वसमानसत्ताकतादृशविशेषणवत्त्वं तादृशसंसर्गवत्त्व च प्रातीतिकधूमेपि । तत्र प्रतीयमानव्यवहारकालाबाध्यत्वससर्गस्य प्रातीतिकत्वात्तत्ससृष्टरूपेण तस्यापि प्रातीतिकत्वात् शब्दानुमानाभासेभ्योपि अनिर्वचनीयख्यात्यङ्गीकारे तु अय धूमो व्यवहारकालाबाध्य इति वाक्याभासजनिते बोधे आनुमानिके च बाष्पारोपितधूमे भासमानस्य व्यवहारकालाबाध्यत्वस्य स्वरूपत एव कल्पितत्वाच्च । अत्र नोक्तरूप प्रामाण्यम् । किं तु मिथ्यात्वेनाज्ञायमानधूमाद्यवगाहित्वरूपमित्याद्युक्तावपि सद्रजतं सन् धूम· इत्यादिव्यवहारनिर्वाहायोक्ताबाध्यत्वरूपसत्त्वारोपो धूमादावारोपिते आवश्यक । अत्यन्ताबाध्यत्वरूपसत्त्वस्य प्रत्यक्षागोचरतायास्त्वयैव भाषितत्वात् । न च तत्रोक्तयोग्यानुपलब्ध्यनुपपत्तिरूपदोषस्यात्रापि साम्यात् व्यवहारकालाबाध्यत्वमपि कथ प्रत्यक्षविषय इति वाच्यम् । तर्हि 'सन् घट' इत्यादिव्यावहरिकावगाहिप्रत्ययस्य सद्रजतमित्यादिप्रातीतिकावगाहिप्रत्ययस्य गतिं भवानेव विभावयतु । अर्थक्रियाकारित्वादेरपि शक्तिरूपतयाऽनीन्द्रियत्वेन तद्भानेनापि तादृशप्रतीतेर्निर्वोढुमशक्यत्वात् ।

न च रूपादिहीनत्वेपि सद्रूपब्रह्मण. चक्षुरादिगम्यत्वाङ्गीकारात्ततादात्म्यभानमात्रेण सन् घट इति प्रत्ययोपपत्तौ घटादावपि सत्त्वसम्बन्धो न भासत इति वाच्यम् । अबाध्यत्वरूपसत्त्वपुरस्कारेण ब्रह्मणो अधिष्ठानतया अभाने सद्रूपविशिष्टब्रह्मतादात्म्याभानेन सन् घट इति प्रतीतेरनुपपत्तिरेव । वस्तुत सदात्मकब्रह्मतादात्म्यभानमात्रात्सदित्याकारकत्वे वस्तुतो ज्ञानाऽनन्दादिरूपब्रह्मतादात्म्याध्यासबलात् ज्ञान घट आनन्दो घटः इत्याकारक-

(द्वै द्यु) त्वापत्त्या तादृशव्यवहारापत्ति घटे सत्त्वमित्यादिव्यवहारानुपपत्तिश्च। एतेन 'सद्रूपविशिष्टब्रह्मतादात्म्याध्यासमात्रेण घट सन् इत्यादिप्रतीतिव्यवहारयोरुपपत्तौ घटेपि सत्त्वसंसर्गो नाध्यस्यते' इति निरस्तम्। उक्तप्रतीतिव्यवहारयोरनिर्वाहापरिहारात्। सर्वत्र तत्धर्मोपहिततादात्म्याध्यासस्थले तत्धर्मसंसर्गाध्यासस्याप्यभावप्रसङ्गेनेदमादौ रजतत्वसंसर्गाध्यासस्य तत्र विनिगमकाभावद्रूपभवदुक्तयुक्तेश्चासम्बद्धत्वापाताच्च। सद्रूपोपहितस्याधिष्ठानतया भानाङ्गीकारे तु अबाध्यत्वस्य भानानुपपत्तिस्तव दुर्वारैव।

अथ 'मानान्तरेण बुद्ध्युपारूढाबाध्यत्व सन् घट' इति बुद्धौ भासते। सिद्धान्ते ज्ञानस्य सन्निकर्षत्वाभावेऽपि तस्य स्मृत्यात्मकत्वाङ्गीकारात्। न च ज्ञानद्वयात्मकता। स्मृत्यात्मकाविद्यावृत्तिप्रमाणवृत्तिद्वयावच्छिन्न चिद्रूपज्ञानस्यैकत्वात्। तत एव सत्तादात्म्यस्यापि घटे सिद्ध्युपपत्ति। अत्युद्बुद्धसंस्कारवशात्प्रत्यक्षवन्नियमतो भानेन तत्रापि प्रत्यक्षाभिमान' इति चेत्तर्हि व्यवहारकालाबाध्यत्वस्याप्येषैव गतिरस्तु। अपि च व्यवहारकालाबाध्यत्वस्य प्रसिद्धधूमादौ यादृशप्रत्ययबलात्सिद्धि तथैव प्रातीतिकेपि सिद्धिर्भवत्येवेति सुस्थो व्यभिचार।

नन्वद्वैतचन्द्रिकायां व्यावहारिकरजततादात्म्यस्य प्रातीतिके आरोप प्राचीनोक्त निराकर्तुं 'रजतत्व व्यावहारिकरजतनिष्ठमेव प्रातीतिकेपि स्वीक्रियते। न च प्रातीतिकाद्व्यावहारिकस्य यत्कार्यं तदापत्ति। व्यावहारिकत्वविशिष्टस्यैव कारणत्वाभ्युपगमात्। प्रातीतिकं तु न कुत्रापि कारणम्। चिद्रूपात्तद्विषयकज्ञानादेव कार्योत्पत्तिसम्भवात्। अत एव प्रतीतविषयकाद्व्यावहारिकविषयकाच्चैकजातीय कार्यमुत्पद्यते। संयोगविशेषणत्वादिससर्गस्थले तु व्यावहारिकप्रातीतिकसाधारणमेकं संयोगत्वविशेषणतात्वादिक। अपरं व्यावहारकसयोगादिमात्रनिष्ठ स्वीक्रियते। तत्र व्यावहारिकधूमादिनिष्ठवह्न्यादिव्याप्तिशरीरे व्यावहारिकमात्रवृत्तिरूपावच्छिन्नससर्गो निविष्ट। तेन वह्निविशेषाधिकरणे धूमस्याऽरोपितस्थले मिथ्यात्वघटकतदभावस्य तत्र सत्त्वेपि तस्य प्रतियोगिव्यधिकरणत्वाभावेन प्रतियोगिव्यधिकरणस्वसमानाधिकरणाभावाप्रतियोगित्वस्य धूमे सत्त्वेपि न वह्नेर्धूमव्याप्यता। साध्यसामानाधिकरण्यशरीरे व्यावहारिकसंसर्गस्य निविष्टतया व्यावहारिकसम्बन्धस्य प्रातीतिकधूमप्रतियोगिकसम्बन्धत्वविरहात् तद्घटितसाध्यसामानाधिकरण्यविरहात्। यत्र वह्निसमानाधिकरणे बाष्पे धूमत्वभ्रमस्तत्स्थले तादृशधूमत्वाश्रयप्रतियोगिकत्वस्य बाष्पीयसंयोगे सत्त्वेपि धूमत्वविशिष्टप्रतियोगिकत्वविरहाद्व्याप्तिघटकसामानाधिकरण्यशरीरे च साध्यतावच्छेदकविशिष्टप्रतियोगिकसम्बन्धस्यैव निवेशान्न तत्रापि व्याप्तिप्रसङ्ग। किं च साध्यसामानाधिकरण्यमपि व्यावहारिकविशेषणतयैव निविष्टमिति प्रातीतिकघटितस्य व्यावहारिकविशेषणतयाऽवृत्तित्वान्नातिव्याप्ति' इत्युक्तम्।

तथा च तद्रीत्या व्यावहारिकसयोगेन धूमत्वविशिष्टवन्निष्ठात्यन्ताभावप्रतियोगितावच्छेदकसाध्यतावच्छेदकस्य साध्यतावच्छेदकावच्छिन्नाभावसामानाधिकरण्यस्य हेतुतावच्छेदकावच्छिन्नानुयोगिकविशेषणतया वर्तमानस्य वा व्यभिचाररूपत्व स्वीक्रियते। तथा च बाष्पे धूमत्वस्यारोपेपि तद्विशिष्टप्रतियोगिकत्वस्य तदीयव्यावहारिकसयोगे अभावात्साध्याभावसामानाधिकरण्यस्य बाष्पनिष्ठस्य धूमत्वावच्छिन्नानुयोगिकव्यावहारिकविशेषण-

(द्वै द्यु) तया अवृत्तित्वाच्च न व्यभिचारप्रसक्ति । आभासान्यत्वविशेषणदानस्यापि अत्रैव तात्पर्यम् । अतो बाष्पारोपितधूमे धूमत्वाङ्गीकारे न कोपि दोष इति चेत् अत्रापि वक्तव्यम् । अयमपि प्रकार किं लोकव्यवहारानुसारेणाश्रीयते उत स्वाभ्युपगमनिर्वाहाय । तत्राद्य दूषयति ॥ **नाद्य इति** ॥ **अन्यथा** धूमवत्त्वमङ्गीकृत्य सम्बन्धकृतवैलक्षण्येन व्यभिचारवारणस्याभिप्रेतत्वे ॥ **तदन्यत्व इति** ॥ शङ्ककस्याभिप्रेतसयोगविशेषणतादिनिष्ठ यत्संसर्गतावच्छेदकं सयोगत्वविशेषणत्वत्वादिक बुद्धिस्थत्वात्तदिति परामृशति । **तदन्यत्वे** तद्भेदे सति व्याप्तिघटकससर्गतावच्छेदके विद्यमाने । सति ससमी चेय । विद्यमाने सतीत्यर्थ । **इति एव क्रमेण** । व्यावहारिकसयोगादिनिष्ठवैजात्यपुरस्कारेणैव व्याप्तिशरीरे व्यभिचारशरीरे च सयोगादिर्निविष्टोऽतो न व्यभिचार इत्येव क्रमेणैवेत्यर्थ । **अवश्यन् वदेयु** । न 'स्वयं धूमो न भवति इति वदेयुरित्यर्थ । अन्यथा द्रव्य प्रमेयादित्युक्ते केनचिद्गुणे व्यभिचारे चोदिते संयोगेनाय हेतुरित्यनुक्त्वा प्रमेय एवाय न भवति गुणत्वादिरिति वदेयुरिति लोकाना मूर्खत्वापत्तिरिति भाव । द्वितीय निराचष्टे ॥ **नेति त्वदभ्युगमस्यैवेति** ॥ **एवकार** अत्यन्ताप्रामाणिकत्व कैमुत्य वा बोधयति । लोकप्रतीतिविरुद्धस्य बाष्पारोपिते धूमत्वाभ्युपगमस्यैवात्यन्तमप्रामाणिकाभ्युपगमरूपत्वे तन्निर्वाहाय कल्पनीयोय सर्वलोकप्रतीत्यसिद्धस्तद्विरुद्धश्च प्रकार सुतरामप्रामाणिक इति द्वितीयोपि प्रकारो न सम्यगिति भाव. । ननु भ्रान्तिप्रतिपन्नाना प्रातीतिकत्वेनासत्त्वायोगात् अनिर्वचनीयत्वस्य सिद्धत्वात्तत्र धूमत्वादिके प्रतीतिबलात्सिद्धे व्याप्त्यव्याप्त्यादिव्यवस्थासिद्धये सर्वोपि प्रकारोऽन्यथानुपपत्त्यासिद्ध इत्यत आह ॥ **भ्रान्तीति** ॥ प्रेक्षावतामसिद्धत्वादित्यर्थ । तेन भ्रान्तानामविचारेण तत्सिद्धावपि तज्ज्ञानस्य भ्रमत्वात्तद्विषयीभूतार्थनिर्वाहाय सर्वापि कल्पना निर्मूलेति सिद्ध्यति ।

ननु प्रेक्षावता कुतो न सिद्ध्यतीति चेच्छृणु । भ्रान्तिविषये सद्विविक्तत्वेन प्रतीयमाने उपपत्त्यादिकं रजतत्वादिक तत्ससर्गादिक च परिकल्पयन्त तत्काल एव रजतत्वधूमत्वावच्छिन्नस्य लोकसिद्धविप्रतिपन्नव्याप्तिकस्य स्वसाध्येन सह व्यभिचारादिप्रसङ्गरूपबाधकस्फूर्तेर्झडिति सम्भवेन तत्परिहाराय ससर्गतावच्छेदकेषु वैजात्यादिरूपाप्रामाणिकपरम्पराकल्पनागौरवानुसन्धानस्याऽवश्यकतया कथमनिर्वचनीयत्वसिद्धि स्यात् । वक्ष्यमाणरीत्या प्रतीतस्याप्यसत्त्वाङ्गीकारपक्ष एव लाघवसम्भवात् । लघुपक्षानादरेण गुरुपक्षस्य प्रकृते अङ्गीकारे गौरवस्य बाधकत्वमेवोच्छिद्येत । न हीदमनिर्वचनीयसिद्ध्युत्तरकालिक येन फलमुखत्वेनादूषण स्यादिति ।

किं च व्यभिचारशरीरे व्याप्तिशरीरे च धूमत्वविशिष्टप्रतियोगिकत्वनिवेशे धूमत्वावच्छिन्नप्रतियोगिकव्यावहारिकसम्बन्धस्याप्रसिद्ध्याऽप्रसिद्धि । सयोगादेर्धूमत्वाश्रयप्रतियोगिकत्वमात्रोपगममात्रेण सर्वस्यापि धूमप्रकारकप्रत्ययस्य प्रामाण्यादिव्यवस्थोपपत्तौ धूमत्वावच्छिन्नप्रतियोगिताकत्वस्य सयोगेऽङ्गीकारे मानाभावात् । स्वाभ्युपगमनिर्वाहाय विना प्रमाणं पदार्थकल्पनेऽतिप्रसङ्गात् ।

अस्तु वा तत्स्वीकार तथापि हेतुतावच्छेदकविशिष्टवैशिष्ट्यागाहिपरामर्शतदुपलक्षितावगाहिपरामर्शाधीनानुमित्यौपयिकव्याप्त्योर्भिन्नतया आद्याया हेतुतावच्छेदकविशिष्टप्रतियोगिकससर्गस्य द्वितीयाया तदुपलक्षित-

(द्वै ष्ट्र.) संसर्गस्यैव निवेशो युक्त । उभयत्र व्याप्त्योरेकजातीयत्वे सर्वत्र विशिष्टप्रतियोगिकसम्बन्धनिवेशे चैत्रत्व-साध्यमैत्रान्यत्वसामानाधिकरण्योपलक्षितचैत्रमैत्रोभयवृत्तिदण्डहेतुकानुमितेस्सल्लिङ्गकपरामर्शाधीनत्वापत्ति । सर्वत्र हेतुतावच्छेदकोपलक्षितप्रतियोगिकसम्बन्धनिवेशे च पूर्वोक्तस्थल एवोक्तसामानाधिकरण्यविशिष्टस्य सद्धेतुतया तत्रानुमितिजनकपरामर्शप्रामाण्यस्य दुर्लभत्वापत्ति । तथा च धूमत्वोपलक्षितस्य वह्निनिरूपितव्याप्तिशरीरे तदुपलक्षित-प्रतियोगिकसम्ब धस्यैव निवेशस्याऽवश्यकतया तद्विरोधिव्यभिचारस्यापि तथात्वावश्यकतया बाष्पे धूमत्वभ्रमस्थले धूमत्वोपलक्षितस्य बाष्पस्य व्यावहारिकसयोगेनैव ह्रदादौ सत्त्वाद्व्यभिचार एव। साध्याभावसामानाधिकरण्यस्याप्यु पलक्षितहेतुकव्यभिचारशरीरे हेतुतावच्छेदकावच्छिन्नत्वेनानिविष्टत्वात् । तदाश्रयत्वमात्रेण निविष्टत्वात् । अन्यथो-क्तोपलक्षितदण्डस्य चैत्रत्वादिव्यभिचारानिर्वाहापातात् । न च धूमत्वाश्रये साध्याभावसामानाधिकरण्य न व्याव-हारिकविशेषणतयाऽस्तीति वाच्यम् । धूमत्वाश्रये बाष्पे वह्न्यभावसामानाधिकरण्यस्य व्यावहारिकसम्बन्धेन सत्त्वात् । न च व्यावहारिकससर्गेण हेतुतावच्छेदकाश्रयो व्याप्तिशरीरे व्यभिचारादिशरीरे निविष्ट । संसर्गश्च तादात्म्य समवायो वेत्यन्यदेतत् । इत्थ च बाष्पे धूमत्व प्रातीतिकसम्बन्धेनैव स्तीति न तमादाय व्यभिचारप्रस क्तिरिति वाच्यम् । तथात्वे बाष्पे धूमत्वारोपस्थले तत्र विद्यमानवह्ने धूमव्याप्यतावारणाय व्यवहारिकसम्बन्धेन साध्यतावच्छेदकवत्त्वस्य साध्ये निवेश विहाय तत्रत्यसयोगे विशिष्टधूमप्रतियोगिकत्वाभावाभ्युपगमेन तादृशधूम-सामानाधिकरण्यस्य वह्नौ व्यावहारिकसम्बन्धेनासत्त्वोक्त्या परिहारस्यानुचितत्वापातात् । तादृशधूमत्वा-श्रयीभूतबाष्पसामानाधिकरण्यस्य व्यावहारिकसम्बन्धेनैव सत्त्वेन तत्र विशिष्टनिरूपितसामानाधिकरण्यस्य प्रातीति-कार्थघटितत्वेनैव व्यावहारिकसम्बन्धाभावे त्वयोपपादनीये बाष्पधूमत्वयोरुभयोरपि व्यावहारिकत्वेन प्रातीति-कतदुभयसंसर्गमुपादाय विशिष्टस्य प्रातीतिकार्थघटितत्वस्यैव तद्बीजतया तद्द्वारेणैवोक्तदोषवारणस्योचितत्वात् ।

किं च बाष्पे धूमत्वभ्रमानन्तर तादृशबाष्पसयोगेनैव ह्रदे यत्र धूमाभासस्य प्रतीति तदधिकरणे वह्ने सर्वथा-ऽनारोपस्तत्रैव व्यभिचार । तादृशाऽभासधूमे व्यावहारिकसम्ब धेनैव त्वया धूमत्वस्याङ्गीकृतत्वात् तादृशधूमस्य व्यावहारिकसयोगेनैव ह्रदे प्राप्ते । न च प्रातीतिके कथं व्यावहारिकसम्बन्ध । धूमत्वस्य प्रातीतिकानुयोगिक-त्वेन प्रातीतिकत्वस्यैव प्राप्तेरिति वाच्यम् । भ्रमबाधयोर्वैयधिकरण्यमाशङ्क्य तत्परिहाराय 'भ्रमे हि व्यावहारिक-रजतत्वस्य व्यावहारिक. ससर्ग प्रातीतिकरजते भासते । बाधकज्ञाने व्यावहारिकमिथ्यात्वस्य व्यावहारिक-सम्बन्धभानवत्' इति ग्रन्थेन परेणैवोपपादितत्वेन प्रातीतिकानुयोगिकत्वस्य सम्बन्धप्रातीतिकत्वे अतन्त्र त्वावगमात् । न च प्रातीतिकतादात्म्यससर्गेण धूमत्वोपलक्षितबाष्पप्रतियोगिकत्वस्य तत्संयोगे सत्त्वेपि व्यावहा-रिकतादात्म्येन धूमत्ववत्प्रतियोगिकत्व न बाष्पसयोग इति वाच्यम् । तादृशधूमतादात्म्यापन्नबाष्पप्रतियोगिकत्वे सयोगस्य तादृशधूमप्रतियोगिकत्वानपायात् । अन्यथा नीलघटवति भूतले घटवन्नीलवच्चेति प्रतीतिर्न स्यात् । नीलस्य सयोगाप्रतियोगित्वात् । न च सयोगद्वयमेव प्रतीतिद्वयनियामकमिति वक्तु शक्यम् । दृष्टान्ते दार्ष्टान्तिके चोभयत्राप्यनुभवबाधात् । न च तत्प्रतियोगिकव्यावहारिकतादात्म्यवत्त्वमेव तत्प्रतियोगिकसंसर्गे तत्प्रतियोगि-कत्वनियामकमिति वाच्यम् । 'पूर्वं विद्यमानशुक्तिनिष्ठतादात्म्ये रजतप्रतियोगिकत्वमात्र जायते । न तु तादा-

(द्वै द्यु) त्यमप्युत्पद्यते' इत्यपि त्वया भाषितत्वात्। प्रतियोगित्वेपि व्यावहारिकत्व नियामकमित्युक्तौ तु उक्तस्थले बाष्पसंयोगस्य धूमाप्रतियोगिकत्वेन धूमासम्बद्धतया धूमवानिति प्रतीत्यनुपपत्ति । व्यधिकरणसम्बन्धेन धूमप्रकारकत्वे प्रात्यक्षिकभ्रमस्य तवान्यथाख्यातित्व स्यात् । धूमवद्ह्रदरूपविशिष्टविषयकत्वाभावे ज्ञानाना विशिष्टविषयकत्वेनैव मिथो वैलक्षण्यात् भ्रमे रजतमिद इद रजतमिति ह्याकारकतानिर्वाहाय 'रजतादाविदमादितादात्म्य प्रातीतिक जायते' इत्यादिसिद्धान्तभङ्ग स्यात् । न च बाष्पीयसयोगे धूमप्रतियोगिकत्व प्रातीतिकमुत्पद्यत इति वाच्यम् । तावतापि व्यावहारिकससर्गस्य धूमसंसर्गत्वानपायात् ।

व्याप्त्यादिशरीरेऽपि व्यावहारिकवृत्तिवैजात्यावच्छिन्नस्य ससर्गविधयैव निविष्टत्वात् प्रतियोगित्वानुयोगित्वादावप्यवान्तरवैजात्यमङ्गीकृत्य तादृशविजातीयप्रतियोगितया धूमविशिष्टो यो विजातीय सयोग विजातीयानुयोगितासम्बन्धेन तद्विशिष्टत्व व्याप्त्यादिशरीरे निविष्टमित्याग्रहकरणेपि बाष्पे धूमभ्रमोत्तर यत्र तादृशधूमस्य तदधिकरणे भ्रमेण धूमवन्निष्ठाभावप्रतियोगी वह्निरित्यादिव्यभिचारभ्रमस्तस्य व्याप्तिग्रहप्रतिबन्धकत्वानुभवानुरोधात् तत्प्रतीतिविषयविशिष्टशरीरप्रविष्टप्रतियोगित्वादिससर्गाणा वैजात्यवत्त्वमेव वाच्यम् । अन्यथा समवायससर्गघटितव्याप्तिग्रहे सयोगससर्गघटितव्यभिचारग्रहवत्तद्ग्रहस्याप्रतिबन्धकत्वापत्ते । तथा च धूमसाध्यकवह्नेरिव वह्निसाध्यकधूमस्यापि व्यभिचारो दुर्वार । न चोक्तव्यभिचारस्य प्रातीतिकधूमप्रतियोगिकत्वादिघटितत्वेन प्रातीतिकत्वान्न व्यावहारिकसम्बन्धेन तद्वत्त्व हेतोरिति वाच्यम् । उक्तप्रतियोगिकत्वादिससर्गाणा व्यावहारिकमात्रवृत्तिवैजात्यवत्त्वे तेषा प्रातीतिकत्वस्य वाङ्मात्रत्वात् । वह्न्यादौ धूमादिव्यभिचारस्य व्यावहारिकसम्बन्धेनैवावगाहिज्ञानस्यैव प्रतिबन्धकताया दृष्टत्वात् । चैत्रेण धूमे वह्न्यभाववद्वृत्तित्वमारोपितमित्यादिमैत्रव्यवहारमूलभूतस्य प्रातीतिकसम्बन्धेन व्यभिचारप्रकारकधूमविशेष्यकस्य वह्न्यभाववद्वृत्तित्वविशिष्टधूमविषयकज्ञानवांश्चैत्र इत्याकारकनिर्णयस्य मैत्रे सत्त्वेन तस्य व्याप्तिग्रहोदयेन व्यावहारिकवृत्तिवैजात्यावच्छिन्नसंसर्गकव्यभिचारज्ञानस्य प्रतिबन्धकत्वस्य क्लृप्ततयोक्तबाष्पारोपितधूमस्थले व्यभिचारज्ञानप्रतिबन्धकत्वानुभवानुरोधेन व्यावहारिकससर्गेण व्यभिचारविशिष्टहेतुरूपविशिष्टविषयकत्वस्यावश्यकत्वे व्यावहारिकसम्बन्धेनोक्ताव्यभिचारस्य हेतावावश्यकत्वात् । न च प्रातीतिकव्यावहारिकसाधारणरूपावच्छिन्नसंसर्गेण व्यभिचाराद्यवगाहिनिर्णय एव व्याप्तिग्रहविरोधी । हेतोर्दुष्टत्वव्यवहारे तु व्यावहारिकसम्बन्धेनैव तद्वत्त्व तन्त्रमिति वाच्यम् । द्रव्यत्वावच्छिन्नग्रहस्य वह्नित्वावच्छिन्नप्रतियोगिकाभावप्रकारकबुद्धावविरोधित्ववदुक्तसामान्यरूपविशिष्टसंसर्गकव्यभिचारग्रहस्य व्यावहारिकससर्गमात्रवृत्तिवैजात्यविशिष्टससर्गावच्छिन्नप्रतियोगिताकव्यभिचाराभावघटितव्याप्तिग्रहाविरोधित्वात् । न च व्याप्तिशरीरेऽपि सामान्यरूपविशिष्टससर्गावच्छिन्नव्यभिचाराभावो निविष्ट इति वाच्यम् । प्रातीतिकव्यभिचारस्योक्तसामान्यरूपविशिष्टससर्गेण धूमादौ सत्त्वेन धूमादौ वह्निव्याप्तेर्दुर्लभत्वापत्ते । न च तेन सम्बन्धेन तस्य मिथ्यात्वात्तत्सम्बन्धावच्छिन्नतदभावोऽपि तत्र सुलभ इति वाच्यम् । व्यभिचारिण्यप्युक्तरीत्या व्यभिचाराभावसत्त्वात्तस्यापि व्याप्यतापत्ते । न च व्यावहारिकमात्रवृत्तिरूपविशिष्टससर्गेण प्रतियोगिवैयधिकरण्यमभावे निविष्टमिति वाच्यम् । तर्हि आगतं व्यावहारिकससर्गेणैव व्यभिचारग्रहो व्याप्तिग्रहविरोधीति । तस्मात् पूर्वोक्तदोषो दुर्वार ।

(द्वै द्यु) न च व्यावहारिकव्यभिचारविशिष्टत्व हेतोर्दुष्टत्वे नियामकम्। उक्तस्थले तु प्रातीतिकपदार्थ-घटितत्वाद्व्यभिचार प्रातीतिक एवेत्युक्तमिति वाच्यम्। ससर्गातिरिक्तस्थले व्यावहारिकमात्रवृत्तिवैजात्यस्य त्वयाऽनङ्गीकृतत्वेन व्यभिचारे जातिरूपव्यावहारिकत्वाद्यभावात् व्यवहारकालाबाध्यत्वस्यैव तथात्वे तेनैव सर्वनिर्वाहे व्यर्थो व्यावहारिकससर्गमात्रवृत्तिवैजात्याभ्युपगम.। व्यावहारिकस्याप्युक्तदिशा प्रातीतिकससर्गताया उपपादित-तया तदससर्गतया वह्न्यादौ धूमादिव्याप्त्यादे परिहर्तुमशक्यतया ततोऽस्यार्थस्यावश्यमनुसरणीयत्वात्। अत्र चासञ्ज्ञातबाधभ्रमविषयीभूतव्यभिचारादिकमादाय पूर्वोक्तदोष सर्वोप्यनुसन्धेय। प्रतिवादिन प्रति साधने त्वनिर्वचनीयसिद्धावुक्तव्यवस्थासिद्धिस्तत्सिद्धौ चोक्तबाधकाभावेनानिर्वचनीयसिद्धिरित्यन्योन्याश्रयोऽप्रामाणिकत्व चेत्येवमाद्या दोषा स्फुटा एव। 'कपालादीना व्यावहारिकत्ववता घटादिरूपस्योचितार्थक्रियाकारित्वम्। प्राती तिक तु न कुत्रापि कारणम्। सर्वत्र चिद्रूपज्ञानस्यैव कारणत्वम्' इत्यादिवचनानि स्वयमेव पूर्वत्रोत्तरत्र च प्रातीतिकानामप्यर्थक्रियाकारित्वनिरूपणाद्व्याहतानि। एकत्रारोपितयो प्रातीतिकयोरपि व्याप्तिसम्भवात् तत्र व्यावहारिकसम्बन्धनिवेशायोगात् सर्वत्र व्याप्त्यादावेकजातीयत्वम्। स्वाप्नदण्डेन कपालादिना स्वाप्नघटाद्युत्पत्त्या व्यावहारिकत्वविशिष्टानामेव तेषा कारणत्वमित्यप्ययुक्तमित्यादिकमनुसन्धेयमित्यलम्। तस्मात्साधूक्तम् **न च बाष्पारोपितधूमेन धूमवत्त्वं व्यभिचरतीति।**

ननु स्वाप्नधूम सिद्धान्ते सत्य एव। न चासौ वह्निनियत। स्वप्ने वह्न्यभाववत्यपि धूमदर्शनात्। तथा च तमादाय व्यभिचार वारयितु स्वाप्नधूमवृत्तिवैजात्यावच्छिन्नभेदो निवेश्य। तत्स्थाने परेणाभासान्यत्वविशेषणं दीयते। स्वाप्नधूमे व्यभिचारोद्भावने अपरीक्षकै लौकिकै स धूम एव न भवतीत्युत्तवोक्तविशेषणादानेपि परीक्ष-कत्वेन यथा लौकिकप्रतीतेरप्रामाण्य भवतोच्यते तथा तेनापि लौकिकप्रतीतेरप्रामाण्योक्तौ किं बाधकमिति चेन्न। यत इदमत्र समाधानम्। येषु ज्ञानेषु लौकिकानामविप्रतिपन्नभ्रमत्वसम्प्रतिपत्तिस्तद्विषयीभूतधूमादिकमादाय व्यभिचारे केनचिच्चोदिते अविपालगोपालानारभ्य न केऽपि लौकिका परीक्षकाश्च तत्धर्म तत्राभ्युपेत्य व्यभि-चारवारणाय विशेषणदानाय प्रयतन्ते। किं तु तत्धर्मावच्छिन्नभेदमेव तत्राभ्युपेत्य। स्वप्नेपि येषु भ्रमत्वाभिमान तेपि तथैव वदन्ति। किं तु स्वाप्नप्रमेयाणा विशेषश्रुतिसूत्रस्मृत्यादिभि प्रत्यक्षादिप्रमाणाद्यबाधितसत्त्व स्वीकुर्वता मया स्वाप्नप्रत्यये लौकिकाना यो धर्म्यंशे विभ्रमत्वग्रहस्तन्मात्रस्य भ्रमत्व कल्प्यते बाधकाभावात्। स्वाप्नपदार्थेषु न धूमत्वादिक धूमपदशक्यतावच्छेदकतया लौकिकपुरुषैरवगत तत्र स्वीक्रियते। केवल बाह्यधूमाद्यभेदारोप-स्तन्नियतस्तन्मूलक एव। तत्र धूमादिपदप्रयोगो रजतभ्रमवत शुक्तौ रजतपदप्रयोगवत्। स्वप्नोत्थितस्य तद्बोधनाय तथाप्रयोगस्तु चित्रलिखितसिंहादौ सिंहशब्दप्रयोगवत् विशेषसादृश्यनिबन्धनो गौण। अत एव धूममिव सादृश्यमितिप्रयोग। अन्यथैकमात्रवृत्तिरूपावच्छिन्नप्रवृत्तिनिमित्तकचैत्रपदतत्तृणादिसङ्केतितपदविशेषादीना स्वप्न-दृष्टतत्तदर्थेषु व्यवहाराणा प्रेक्षावत्सम्बन्धिना दुरुपपादत्वप्रसङ्गात्। मानोरथिकस्वाप्नाना प्रसिद्धजलपुष्पादिभि सादृश्यात्तन्मूलकत्वेन गौण्या प्रवृत्तजलपुष्पादिशब्देन पूजाविधाननिषेधादिबोधकवचनसामर्थ्यात्पुण्यपापनिर्वाह-कत्वशुभाशुभसूचकत्वादिकमपि युक्तं गुडतिलधेन्वादिदानपरवाक्यानुसारेण धेन्वाकारगुडादीनामिवेति कथमपि

(द्वै शु) बाधकविरहात्। तथा च स्वाभ्युपगमनिर्वाहाय सर्वलोकाविदितविशेषण हेतुकोटौ निवेश्य सर्वसिद्धस्य धूमत्वावच्छिन्नव्याप्तिग्रहस्य विना प्रमाणं भ्रमत्वं न कल्प्यत एव। सर्वलोकप्रतीतेर्विना प्रमाणं स्वाभ्युगमनिर्वाहाय भ्रमत्वकल्पने सर्वव्यवस्थायाः स्वेच्छाधीनत्वापातात्। परेण तु स्वाभ्युपगमनिर्वाहमात्रानुरोधेन सार्वलौकिकप्रतीतेर्भ्रमत्वं कल्प्यते। स्वार्थानुमितिसामग्रीसमवधानदशायामेव प्रेक्षावतामुक्तबाधकस्य स्फूर्त्याऽऽवश्यकत्वेन तन्निरासकलघूपायान्तराभावेन बहुतरकल्पनागौरवादिति बाधकप्रतिसन्धानादिगौरवतर्कपराहत्या स्वार्थानुमित्यादेरनुत्पत्तिप्रकारस्याऽवेदितत्वात्। न च सदसद्वैलक्षण्यरूपानिर्वचनीयत्वग्रहकाले रजतत्वादिधर्मस्य प्रातीतिकरजतवृत्तित्वादिग्रहपूर्वकं रजतादेः स्वसाध्यव्यभिचारादिस्फूर्तौ बीजाभाव इति वाच्यम्। अपरोक्षप्रतीतिविषयत्वेऽसद्वैलक्षण्यमात्रस्यानुपपादकतया तन्निर्वाहायोत्पत्त्यादिमद्रजतादिस्वरूपवत्त्वस्फूर्त्यावश्यकत्वे तदनुषङ्गयुक्तबाधकस्फूर्तेरावश्यकत्वात्। अतो युक्तमेव परं प्रत्युक्तदूषणाभिधानमिति। एतदपि त्वदभ्युपगमस्यैवेत्येवकारेण न तु त्वदन्येषामित्यर्थद्वारा स्वाभ्युपगमव्यवच्छेदकेन सूचयामासेत्यलम्।

(गु टि) असच्छब्दे नञः पर्युदासार्थत्वे सद्भिन्नस्य शशविषाणादेरसच्छब्देन प्राप्त्या तस्यानिर्वचनीयस्य चाभावेन मिथ्यात्वसामान्याश्रयत्वेन पराभिप्रेतयोरुभयोर्दार्ष्टान्तिके अभावेपि धूमत्वसामान्यानाश्रयत्वेनोदाहृतयोर्बाष्पारोपितधूमसद्धूमयोर्बाष्पारोपितधूमस्यैकस्यैवासत्त्वेपि आश्रयगतैकत्वद्वित्वाविवक्षया आश्रयाभावप्रयुक्तसामान्याभाववत्त्वमात्रेण साधारण्याभिप्राये दृष्टान्तदार्ष्टान्तिकभावोपपत्ते। नञः प्रतिषेधार्थकत्वे असच्छब्देन सन्निषेधस्य प्राप्त्या तस्य च सत्त्वेनानिर्वचनीयस्याभावेन दार्ष्टान्तिकेपि दृष्टान्तवदेकसत्त्वस्यापरासत्त्वस्य च सम्भवेन सुतरां दृष्टान्तदार्ष्टान्तिकभावोपपत्तिरित्याशयेनाह ॥ **असदितिनिर्देशस्येत्यादिना** ॥ असदितिनिर्देशस्य प्रतियोगिप्रधानत्वे उपपत्त्यन्तरमाह ॥ **बाष्पेति** ॥ मूले **धूमत्ववदिति** सामान्येनोक्तेरिति भावः।

ननु न धूममात्रं वह्निव्याप्यम्। तस्य शान्ताग्नावपि सत्त्वेन व्यभिचारात्। किं तु बहुलोर्ध्वताऽऽदिविशिष्टम्। तथा तन्मात्रमपि न वह्निव्याप्यम्। तस्य बाष्पारोपितधूमेऽपि सत्त्वात्। किं तु आभासविविक्तत्वविशिष्टमेव। तच्च न बाष्पारोपितधूमस्थल इति न तत्र व्यभिचार इति शङ्कते ॥ **बहुलोर्ध्वतादीति** ॥ ननु बाष्पारोपितधूमो नात्यन्तासन्। तथा सति प्रतीतिविरोधात्। किं तु भ्रान्तिप्रतिपन्नतया अनिर्वचनीय एव। तथा च व्यावहारिके प्रातिभासिके च धूमे धूमत्वसामान्याङ्गीकारस्य तन्मूलकत्वान्न निर्मूलत्वमित्याशङ्क्याह ॥ **भ्रान्तिप्रतिपन्नानामिति** ॥ अन्यथा अन्योन्याश्रयापत्तेरिति भावः।

## सदसद्वैलक्षण्ये निरवकाशागमप्रमाणाभावनिरूपणम्

**(टी) अस्त्वागमस्तर्ह्यनिर्वचनीयार्थे मानमिति चेत्। स किं सदसद्विलक्षणमेतदिति निरवकाशतया विवक्षितार्थस्य प्रतिपादको भवेत्। उतानिर्वचनीयमेतदित्यादिरूपः। नाद्योऽनुपलम्भादित्याह**

(टी) न च भावाभावविलक्षणं क्वचिदागमो वक्ति

चशब्दः प्रमाणान्तरनिराकरणसमुच्चये। क्वचित् प्रदेशे। निरवकाशागमपक्षनिराकरणसूचनायानिर्वचनीयमिति लक्ष्यप्रक्रमं विहाय भावाभावविलक्षणमिति [1]लक्षणानुवादः कृतः। तर्हि सदसद्विलक्षणमिति वक्तव्यम्। तस्यैवानिर्वचनीयलक्षणत्वेन परैरङ्गीकृतत्वात्। मैवम्। यतोत्र न भावाभावशब्दौ [2]रूढ्या विधिनिषेधयोरभिधायकौ। किं तु योगेन सदसत्परौ। विधिनिषेधपरत्वेपि केनापि प्रकारेण निर्वक्तुमशक्यमनिर्वचनीयम्। सदसद्विलक्षणत्वं तूपलक्षणत्वेनोच्यत इति परैरङ्गीकृतत्वाददोषः। अत एव 'उभयविलक्षणं चेदनिर्वचनीयत्वं ब्रह्मण एवापतितम्' इति भिन्नाभिन्नविलक्षणत्वेनानिर्वचनीयत्वं वक्ष्यति। प्रसिद्धातिक्रमस्तूत्तरार्थः। तच्च दर्शयिष्यामः।

(वि टि) क्वचिच्छब्दाऽऽगमशब्दसमानाधिकरण्यानुपपत्तिमाशङ्क्याह॥ क्वचिदिति॥ वेदवेदानुसारिसदागम इत्यर्थः। ननु प्रस्तुतसदसद्विलक्षणार्थरूपलक्ष्यवाचकानिर्वचनीयपदे विद्यमाने लक्षणतोऽनुवादः प्रयोजनाभावादनुपपन्न इत्याशङ्क्याह॥ निरवकाशेति॥ भावाभावशब्दयोर्विधिनिषेधार्थपरत्वं मन्वानः शङ्कते॥ तर्हीति॥ रूढ्योः समुदायशक्तिविषययोरित्यर्थः॥ विधिनिषेधयोरिति॥ अस्तीतिप्रथमप्रतीतिविषयो विधिः नास्तीतिप्रथमप्रतीतिविषयो निषेधः तयोरित्यर्थः॥ योगेनेति भवतेर्ण उपसङ्ख्यानमिति कर्तरि णप्रत्यये भवतीति भावः सन्, न भावः असन्निति योगेनेत्यर्थः। यद्वा सत्तावाचिनो भवतेर्ण्यन्तात् कर्मणि घञि भाव्यते यः स भावः, न भाव्यते यः सोऽभाव इति व्युत्पत्तेरित्यर्थः। ननु रूढिप्राबल्याद्भावाभावशब्दौ विधिनिषेधपरावेवेति यदि कश्चिद्ब्रूयात्तदापि न दोष इत्याह॥ विधिनिषेधपरत्वेपीति॥ अदोष इत्यनेन सम्बध्यते। ननु भावाभावशब्दयोर्विधिनिषेधपरत्वे लक्षणतोऽनुवाद इत्युक्तमयुक्तं स्यात्। परैः सदसद्विलक्षणत्वस्यैव तल्लक्षणत्वाङ्गीकारादित्याशङ्क्याह॥ केनापीति॥ तथा च सदसद्विलक्षणत्ववद्विधिनिषेधविलक्षणत्वमपि तल्लक्षणमिति लक्षणतोऽनुवादो नायुक्त इति भावः॥ अत एवेति॥ सदसद्विलक्षणत्वमनिर्वचनीयलक्षणमित्यस्योभयविलक्षणत्वाद्युपलक्षणत्वादेवेत्यर्थः। ननूभयविलक्षणत्वमात्रस्य तल्लक्षणत्वेपि प्रसिद्धसदसद्विलक्षणत्वरूपलक्षणातिक्रमे किं कारणमित्याशङ्क्य वक्ष्यमाणप्रयोजनानुरोधात्तदतिक्रम इत्याह॥ प्रसिद्धेति॥

(रा टि.)॥ प्रमाणान्तरेति॥ प्राक्प्रत्यक्षानुमानयोर्निरासात्प्रमाणान्तरेत्युक्तः॥ लक्ष्यप्रक्रममिति॥ लक्षणधर्मितया अनिर्वचनीयासिद्धेरेवेत्युपक्रमेऽभिहितं विहायेत्यर्थः॥ योगेनेति॥ भवतीति भावः सन्निति सः नेत्यभावोऽसन्निति योगेनेत्यर्थः॥ दर्शयिष्याम इति॥ अनुपदमेवेति भावः।

(वे. टि)॥ क्वचित्प्रदेश इति॥ शाखादावित्यर्थः। ननु न चानिर्वचनीयं क्वचिदागमो वक्तीति वक्तव्यम्। न चानिर्वचनीये किञ्चिन्मानमिति तस्यैव प्रक्रान्तत्वात्। न च भावाभावविलक्षणत्वस्यानिर्वचनी-

---

[1] लक्षणतोऽनुवाद इति श्रीविजयीन्द्रतीर्थीयः पाठः। [2] रूढयो इति श्रीविजयीन्द्रतीर्थीयः पाठः।

(वे टि) यल्लक्षणत्वात्तदुक्तिरिति वाच्यम्। लक्ष्यप्रक्रम विहाय लक्षणानुवादे प्रयोजनाभावादित्यत आह॥ **निरवकाशेति** ॥ **तस्यैवेति** ॥

> प्रत्येक सदसत्त्वाभ्या विचारपदवी न यत्।
> गाहते तदनिर्वाच्यमाहुर्वेदान्तवादिन ॥

इति तदुक्तेरिति भाव ॥ **विधिनिषेधयोरिति** ॥ नञर्थानुल्लिखिततदुल्लिखितधीविषययो प्रसिद्धभावाभावयोरित्यर्थ ॥ **योगेनेति**॥ भवतीति भाव सन्, न भवतीत्यभावोऽसन्नित्यर्थ ॥ **केनापि प्रकारेणेति** ॥ तथा च भावाभावविलक्षणत्वमप्यनिर्वचनीयलक्षणमिति भाव । ननु 'प्रत्येकं सदसत्त्वाभ्याम्' इत्यादितदुक्ते. का गतिरित्यत आह ॥ **सदसद्विलक्षणत्व त्विति** ॥ **अत एवेति** ॥ सदसद्विलक्षणत्वमनिर्वचनीयलक्षणमित्यस्योभयविलक्षणत्वाद्युपलक्षणत्वादेवेत्यर्थ । ननु प्रसिद्धलक्षणातिक्रमेणाप्रसिद्धलक्षणानुवादेन किं प्रयोजनमित्यत आह ॥ **प्रसिद्धेति** ॥ **उत्तरार्थः** उत्तरग्रन्थोपक्षेपार्थ ।

(द्वै घु) ॥ **क्वचित्प्रदेश इति** ॥ कस्यामपि शाखायामित्यर्थ । ननु **न चानिर्वचनीये किञ्चिन्मानमिति** लक्ष्यस्यैव प्रक्रान्तत्वादिदानी तथैव वक्तव्यम्। **न च भावाभावविलक्षणमिति** लक्षणोक्तिपूर्वकनिर्देशे किं बीजमित्यतस्तद्व्यञ्जयन्नाह ॥ **निरवकाशेति** ॥ **योगेनेति** ॥ भवतीति भाव सन्। स न भवतीत्यभावोऽसन्नित्यर्थ ॥ **विधिनिषेधपरत्वेपीति** ॥ ननु विधिनिषेधपरत्वे भावरूपाभावरूपतत्वद्वयविलक्षणत्वमेवोक्त स्यात्। तच्चासत्यतिव्याप्तत्वात् कथमनिर्वचनीयलक्षणत्वेनाभिमतम्। किञ्चास्यापि लक्षणस्य पूर्वमेव प्रक्रान्ततया· पूर्वोक्तरीत्याऽऽवश्यकत्वे तस्यासत्येव सत्त्वेन न तस्याप्रसिद्धविशेषणत्वव्याहत्यादीति। मैवम्। निषेधपदस्य प्रकृते भावभिन्नपरत्वेन भावतद्भिन्नोभयवैलक्षण्यस्यासत्यप्ययोगेन पूर्वोक्ताप्रसिद्धविशेषणत्वादिसङ्गते । न च 'भावाभावशब्दौ रूढ्या न विधिनिषेधपरौ' इति पूर्वनिषिद्धार्थस्यैवैतद्वाक्यार्थत्वेनाङ्गीकार सूच्यते। न हीद निषेधपदस्य भावभिन्नार्थत्वे युज्यते। मौलाभावपदस्य योगेन भावभिन्नपरत्वेपि तत्र रूढेरभावादिति वाच्यम्। अत्रानुवादे रूढ्येत्यंश विहाय विधिनिषेधपरत्वेपीत्युक्तिस्वारस्यादेवाव्यवहितपूर्ववाक्यप्रक्रान्तयोगमात्राङ्गीकारपूर्वकं रूढेरविवक्षितत्वलाभेनोक्तबाधकानवकाशात् ॥ **परैरङ्गीकृतत्वादिति** ॥ अत एवानिर्वचनीयवादार्थे **ब्रह्मानन्देना**भिहित 'न चाज्ञानस्य प्रागभावरूपत्वे भावाभावविलक्षणत्वचैतन्यविषयकत्वादिसिद्धान्तव्याघात इति वाच्यम्। परेषामज्ञानस्य भावस्यापि ध्वसप्रागभावत्वसविषयत्वादिवत् भावाभावविलक्षणत्वसविषयत्वादिसत्त्वेपि प्रागभावत्वाविरोधात्' इति। एवम**द्वैतसिद्धौ** सत्त्वासत्त्वे समानाधिकरणाभावप्रतियोगिनीत्यनुमानस्याऽभासनिरासप्रस्तावे 'नित्यानित्यत्वकल्पितत्वाकल्पितत्वादिकमपि पक्षीकृत्यैव साध्यमनुमेय स्यादित्याशङ्क्यानिर्वचनीयवादिनस्त्वेष्टत्वादित्यादिना ता शङ्का निराकृत्य 'न हि स्वरूपत कल्पितस्य किञ्चिदपि रूप वास्तवम्' इत्याद्यभिधानं सङ्गच्छते। अन्यथा तस्यापसिद्धान्त स्यात्। एव **विवरणेपि** अविद्यानिवृत्त्यभावसाधकपूर्वपक्षिहेतोरनादित्वस्य प्रागभावे व्यभिचारवारणाय भावत्वे सतीति तेनानादित्वविशेषणे दत्ते 'अनिर्वचनीयत्वाद-

(द्वै. सि. गु) ज्ञानस्य' इत्यभिहित भावाभावविलक्षणत्वरूपानिर्वचनीयत्ववक्त्वादसिद्ध भावत्वविशेषणमित्याशयेन । अन्यथा तदुक्तिस्तत्रानुपयुक्ता स्यात् । एवमुत्तरत्रापि 'अभाववैलक्षण्यादात्मवदज्ञानस्यानिवृत्तिरिति चेन्न । सद्वैलक्षण्यात्प्रागभाववन्निवृत्ति किं न स्यात्' इति । तत्र सत्पद भावपरमेव । अन्यथा घटादिकं विहाय प्रागभावपर्यन्तं दृष्टान्तानुसरणवैयर्थ्यापत्ते । भावपद विहाय सत्पदोपादानं लक्षणवाक्यघटकसत्पद भावपर विकल्पेन भवतीति सूचनायेति स्वरसतोऽवगम्यत इति ध्येय । अदोषः अनुक्तोपालम्भरूपदोषाभाव । पराभिप्रेतमिदमित्येतदाचार्यस्यापि सम्मतम् । अतो नेद द्वितीयव्याख्यान तदनभिमतमित्याशयेनाह ॥ अत एवेति ॥ प्रसिद्धेति ॥ तन्मते प्रचुरव्यवहारविषयकल्पातिक्रम इत्यर्थ ॥ **उत्तरार्थ इति** ॥ नासदासीदिति श्रुतेरेतत्कल्पे किञ्चित्स्वारस्यस्य परीतिमादाय सम्भवेन तदादाय स्वकीयोत्तरग्रन्थोत्थितौ किञ्चित्सदलपक्षनिराकरणरूपमुत्तरवाक्यस्य पौष्टयं तत्सम्पादक इत्यर्थ ।

(गु टि) ॥ **क्वचित्प्रदेश इति** ॥ शाखोपशाखारूप इत्यर्थ । ननु **न चानिर्वचनीय क्वचिदागमो वक्ति** इत्येव वक्तव्यम् । **न चानिर्वचनीये किञ्चिन्मानम्** इति लक्ष्यप्रक्रमानुसारात् । **भावाभावविलक्षण न वक्ति** इति तु कथम् । न चाय तल्लक्षणानुवाद । लक्ष्यानुवाद विहाय लक्षणानुवादस्य असति प्रयोजने अयुक्तत्वादित्यत प्रयोजनसद्भावाल्लक्षणानुवादो युक्त इत्याह ॥ **निरवकाशेति** ॥ **तस्येति** ॥

प्रत्येकं सदसत्त्वाभ्या विचारपदवीं न यत् ।
गाहते तदनिर्वाच्यमाहुर्वेदान्तवेदिन ॥

इति तदुक्तेरिति भाव ॥ **योगेनेति** ॥ भवतीति भाव सन् । न भवतीत्यभावोऽसन्निति योगेनेत्यर्थ ॥ **केनापि प्रकारेणेति** ॥ तथा च भावाभावविलक्षणत्वमप्यनिर्वाच्यलक्षणमेवेति भाव । तर्हि 'प्रत्येक सदसत्त्वाभ्याम्' इति तदुक्ते का गतिरित्यत आह ॥ **सदसद्विलक्षणन्त्विति** ॥ **अत एवेति** ॥ सदसद्विलक्षणत्वस्य केनापि प्रकारेण निर्वक्तुमशक्यत्वोपलक्षणत्वादेवेत्यर्थ । अन्यथा भिन्नाभिन्नत्वादिना ब्रह्मणो निर्वक्तुमशक्यत्वेपि सत्त्वासत्त्वाभ्या तदभावेन ब्रह्मणोऽनिर्वचनीयत्वापादनस्यानुपपत्तिप्रसङ्गादिति भाव । ननु तथापि प्रसिद्धलक्षणस्यैव मूलकारेणानुवदनीयत्वात्तत्परित्यागेनाप्रसिद्धलक्षणानुवादे किं निमित्तमित्यत आह ॥ **प्रसिद्धेति** ॥ **उत्तरार्थः** उत्तरशङ्काग्रन्थोपपादनार्थ इत्यर्थ ॥ **तच्चेति** ॥ उत्तरार्थत्व तु शङ्काग्रन्थ एव वक्ष्याम इत्यर्थ ।

## नासदासीदित्यागमस्य आगमतया सदसद्वैलक्षण्यपरत्वाभावसमर्थनम्

**(टी) ननु नासदासीदित्याद्यागमोऽनिर्वचनीयामविद्यां वक्ति । सदसती प्रतिषिद्ध्य तम आसीदिति महाप्रलयेऽविद्यावस्थानस्योक्तत्वात् । न चासतः सत्त्वप्रसक्त्यभावेन तन्निषेधायोगादनुपपन्नार्थं वाक्यं नानिर्वचनीयामविद्यां गमयितुमलमिति साम्प्रतम् । अत्र सदसच्छब्दयोर्भावाभावपरत्वेनाङ्गीकृतत्वात् । भावाभाववैलक्षण्येनाप्यनिर्वचनीयत्वसिद्धेः । अतः कथ 'न भावाभावविलक्षण क्वचिदागमो वक्ति' इति । तत्राह**

(टी) 'नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमापरो यत्' इत्यत्र च।

चशब्देन भावाभावविलक्षणं न वक्तीत्येतदनुकृष्यते। इदं खलु वाक्यं प्रलये सदसतोरभावं तमसश्च भावं प्रतिपादयदनुभूयते। न पुनस्तमः सदसद्विलक्षणमिति। ननु सदसतोरभावेऽवस्थितस्य तमसो बलात्सदसद्वैलक्षण्यमापाद्यत इति। सत्यम्। न तर्हीदं वाक्यमविद्यानिर्वचनीयतायामागमयितव्यम्। पदार्थसंसर्गमात्रस्याऽऽगमार्थत्वेन सामर्थ्यलब्धस्यातदर्थत्वात्। यथोक्तं

यश्चार्थादर्थो न स चोदनार्थः। इति।

(वि टि)॥ नन्विति॥ यद्यप्येवमपि विवादपदस्य शुक्तिरजतादेरनिर्वचनीयत्वे नेदं मानमुपन्यस्तं स्यात्तथापि यथाकथञ्चिदनिर्वचनीयसाधनस्यैव प्रकृतोपयोग इत्यभिप्रायेण, अविद्यानिर्वचनीयत्वे साधिते तदुपादेयशुक्तिरूप्याद्यनिर्वचनीयत्वमपि साधितप्रायमित्यभिप्रेत्य वा अविद्यानिर्वचनीयत्वे प्रमाणोपन्यासोयमिति नासङ्गतिरिति ध्येयम्॥ न चासतः सत्त्वप्रसक्तीति॥ यद्यप्यस्त्येवासतः शशविषाणमस्तीति शब्दाभासादिना सत्त्वप्रसक्तिः तथाप्यसत्त्वेनोपस्थित एव तत्र सत्त्वप्रतिषेधार्थं तत्प्रसक्तिरपेक्षिता। सा चासम्भाविनी। असत्त्वेन विरोधिरूपेणोपस्थितेरिति शङ्काभिप्रायः॥ इदं खल्विति॥ विलक्षणमितीत्यस्यानन्तरं प्रतिपादयदनुभूयत इत्यनुषङ्गः। तस्मात्तमसः सदसद्विलक्षणत्वस्यापदार्थत्वादवाक्यार्थत्वाच्च नासदासीदित्यादिवाक्यं शब्दविधया तत्र प्रमाणमिति न परेण वक्तुं शक्यमिति भावः। ननु तमःशब्दार्थभूताऽविद्या यदि निषेध्यसदसदर्थान्तर्गता तदा नासदासीदित्यादिवाक्यं व्याहतभाषित्वादप्रमाणं स्यात्। यदि च तदनन्तर्गता तदा सिद्धं नः समीहितम्। सदसद्विलक्षणस्यैवानिर्वचनीयशब्दार्थत्वादित्यभिप्रेत्य पुनस्तस्यैव वाक्यस्य तत्र मानत्वं शङ्कते॥ ननु सदसतोरिति॥ सामर्थ्यबललब्धस्येति॥ असदादिनिषेधसहकृतमहाप्रलयावस्थितत्वप्रतिपादनान्यथानुपपत्तिरूपसामर्थ्यलब्धस्येत्यर्थः।

(रा टि) ॥ भावाभावेति॥ विधिनिषेधादिरूपभावाभावपरत्वेनेत्यर्थः॥ आगमयितव्यमिति॥ आगमतया वक्तव्यमित्यर्थः॥ सामर्थ्येति॥ अन्यथानुपपत्तिलब्धस्येत्यर्थः॥ यथोक्तमिति॥ मीमांसकैः। चोदनार्थः शब्दार्थः।

(वे टि)॥ अनिर्वचनीयामविद्यामिति॥ तथा च शुक्तिरूप्यादावनिर्वचनीयत्वकोटिप्रसिद्ध्यभावेप्यविद्यायां तत्प्रसिद्धिरिति भावः। अथवाऽविद्यानिर्वचनीयत्वे सिद्धे तदुपादेयशुक्तिरूप्यादेरनिर्वचनीयत्वं सेत्स्यतीति तत्रैव कोटिप्रसिद्धिरिति भावः। यदुक्तं प्रसिद्धातिक्रमस्तूत्तरार्थं इति तद्दर्शयितुमाह॥ न चासतस्सत्त्वेति॥ सृष्टिकाले सत्त्वप्रसक्त्यभावेनेत्यर्थः। यद्यप्यस्त्येवासतोपि शशविषाणमस्तीतिशब्दाभासादिना सत्त्वप्रसक्तिः तथाप्यसत्त्वेनोपस्थित एव तत्र सत्त्वप्रतिषेधार्थं तत्प्रसक्तिरपेक्षिता। सा चासम्भाविनी। असत्त्वेन विरोधिरूपेणोपस्थितेरिति शङ्काभिप्रायः॥ भावाभावपरत्वेनेति॥ अभावस्य तु सृष्टिकाले सत्त्वप्रसक्त्या तन्निषेध उपपन्न इति भावः।

(गु टि) ॥ अनिर्वचनीयामविद्यामिति ॥ तथा चानिर्वचनीयत्वस्याविद्यायामेव प्रसिद्धत्वान्नाप्रसिद्धिरिति भावः । यदुक्तं प्रसिद्धातिक्रमस्तूत्तरार्थः इति तत्प्रतिपादयितुमाह ॥ न चासतः सत्त्वेति ॥ भावाभावपरत्वेनेति ॥ अभावस्य सत्त्वेन प्रसक्तिरस्त्येवेति न प्रतिषेधानुपपत्तिरिति भाव । अत्र वाक्ये तम सन्न भवति असन्न भवतीति सत्त्वादिप्रकाराणामनिषेधादाह ॥ सदसदभावाभिधानेनेति ॥ यदि तमस सत्त्वमसत्त्व वा स्यात्तर्हि तमस एव सतोऽसतो वा सत्त्वेन तदभावाभिधान न स्यादिति भाव. ।

नासदासीदित्यागमस्य परिशेषतया सदसद्वैलक्षण्यपरत्वाभावसमर्थनम्

(टी) माभूदिदं वाक्यमनिर्वचनीयाविद्यायामागमतया प्रमाणम् । परिशेषतया तु भविष्यति । तथा हि । तम आसीदिति महाप्रलये तमसोऽविद्यापरपर्यायस्यावस्थानमभिहितम् । तस्य च प्रसक्तानां सत्त्वादिप्रकाराणां नासदासीदित्यादिना सदसदभावाभिधानेन प्रतिषेधे सत्यन्यत्राप्रसङ्गात्परिशिष्यमाणे तमसोऽनिर्वचनीयत्वे बुद्धिर्भविष्यतीत्याशङ्कयास्य वाक्यस्यार्थान्तरं विवक्षुस्तत्सिद्धये पराभिमतार्थेऽनिष्टप्रसङ्गं तावदाह

पारिशेष्येणानिर्वचनीयत्वाङ्गीकारे 'आनीदवातं स्वधया तदेकम्' इति तदानीं परिशिष्टत्वाद्ब्रह्मण एवानिर्वचनीयत्वं स्यात्

यद्यस्य वाक्यस्योक्तविधया परिशेषप्रमाणत्वेन तमसोऽनिर्वचनीयत्वमङ्गीक्रियते तदा परमार्थतयाऽङ्गीकृतस्यैव ब्रह्मणोप्यनिर्वचनीयत्वं स्यात् । तस्यापि तमोवत् 'आनीदवातम्' इतिवाक्येन तदानीं प्रलये परिशिष्टत्वावगमात् । उभयोरपि परिशिष्टत्वेनावगतयोरन्यतरस्मिन्नेव परिशेषेणानिर्वचनीयत्वापाते नियामकाभावात् । ब्रह्मणः पारमार्थिकत्वे प्रमाणमस्तीति चेन्न । तमसोऽपि तस्य वक्ष्यमाणत्वात् । अतो नैतद्वाक्य प्रसिद्धसदसत्प्रतिषेधपरमिति । तदेकं सर्वोत्तम ब्रह्म अवात वातप्रेरणया विनैव स्वधया सुखेनैव न तु सुखप्राप्त्याद्यर्थं आनीदचेष्टतेति श्रुत्यर्थः । ननु महाप्रलये ब्रह्मणोऽवस्थान परस्य सम्मतमेव । तत्कि तत्समर्थनाय 'आनीदवातम्' इति वाक्यमुपादीयते । मैव । यदीदमनुदाहृत्यातिप्रसङ्गोऽभिधीयेत तदैतद्वाक्यप्रकृतस्यैव सन्निहितत्वादनेन सत्त्वादिप्रतिषेधस्य क्रियमाणत्वान्नातिप्रसङ्ग इति परः परिहर्तुमुत्सहेतापि । तन्निरासायैतत्प्रकरणगतवाक्येनैव ब्रह्मणोऽवस्थानमुपपादनीयम् ।

(वि टि) ॥ परिशेषतया त्विति ॥ यद्यपि महाप्रलये परेण 'सदेव सोम्येदमग्र आसीत्' इत्यादिवाक्यान्तरबलेन सद्ब्रह्मावस्थानाङ्गीकारात् 'नो सदासीत्' इत्यस्य सन्मात्रनिषेधकत्वायोगात्तद्विशेषनिषेधकत्वे च ब्रह्मण इव तमसोपि तद्विशेषत्वेनैव तदाऽवस्थानोपपत्तेर्न परिशेषावतारस्तथापि तदाच्छादनेन वा 'असदेवेदमग्र आसीत्' इति श्रुत्यन्तरेण वेय शङ्केति ध्येयम् ॥ अन्यत्राप्रसङ्गादिति ॥ सदसद्रूपत्वे विरोधेनाप्रसङ्गादिति

(वि टि) भावः। नन्वस्तु ब्रह्मणोऽप्यनिर्वचनीयत्वम्। तावतापि तमसोऽनिर्वचनीयत्वाक्षतेरित्याशङ्कयाह॥ **परमार्थतया अङ्गीकृतस्यैवेति**॥ एवकारं परमार्थतयेत्यनेन सम्बद्ध्यते। ननु परिशेषस्योभयसाधारण्याद्ब्रह्मण एवेत्यवधारणानुपपत्तिरित्याशङ्कयावधारणमप्यर्थत्वेन व्याचष्टे॥ **ब्रह्मणोपीति**॥ **तस्येति**॥ पारमार्थिकत्वे प्रमाणस्येत्यर्थः। भवेदेवमापादनं यदि वाक्यशेषप्रतिपन्नं ब्रह्म स्यात्। तदेव कथमित्यतो वाक्यशेषस्यार्थमाह॥ **तदेकमिति**॥ इदं वाक्यं सर्वेणापि ब्रह्मपरमेव वाच्यम्। अनन्याधीनचेष्टावत्त्वस्य तस्मिन्नेव सम्भवात्। अन्यथा 'न परः किञ्चनास' इति तदा तदुत्तमान्यनिषेधायोगादिति भावः॥ **ननु महाप्रलय इति**॥ विप्रतिपन्न एवार्थे तन्निर्णयाय प्रमाणमुपन्यसनीयम्। न त्वन्यत्रेति भावः॥ **एतत्प्रकरणगतेति**॥ एवं च प्रलये ब्रह्मसत्त्वस्याविप्रतिपन्नत्वेप्युक्तरीत्या आपादनसमर्थनरूपप्रयोजनसत्त्वान्न तदुपादानं व्यर्थमिति भावः।

(रा टि) **सत्त्वादिप्रकाराणां** श्रुतौ सदसद्ग्रहणं भावाभावत्वनित्यानित्यत्वभिन्नाभिन्नत्वादिप्रकाराणामुपलक्षणमिति भावः॥ **विवक्षुरिति**॥ उत्तरवाक्य इति भावः। व्याचष्टे॥ **यदीत्यादिना**॥ **उक्तेति**॥ तथा हीत्यादिना उक्तविधयेत्यर्थः॥ **वक्ष्यमाणत्वादिति**॥ अनृतं परिणामतः इत्यादौ विश्वं सत्यं वशे विष्णोरित्यादौ चेति भावः। श्रुत्यर्थमाह॥ **तदेकमिति**॥ एतद्वाक्ये ब्रह्मणोऽप्रकृतत्वशङ्कानिरासार्थं तदुदाहरणमिति भावेन तत्सार्थक्यमाह॥ **यदीदमित्यादिना**।

(वे टि) अस्मिन्वाक्ये तमः सन्न भवत्यसन्न भवतीति सत्त्वादिप्रकाराणामनिषेधादाह॥ **सदसद्भावाभिधानेनेति**॥ यदि तमसः सत्त्वमसत्त्वं वा स्यात्तर्हि तमस एव सतोऽसतो वा सत्त्वेन तदभावाभिधानं न स्यादित्यर्थः॥ **अन्यत्रेति**॥ सदसद्रूपत्वे विरोधेनाप्रसङ्गादित्यर्थः॥ **यदीदमिति**॥ पारिशेष्येणानिर्वचनीयत्वाङ्गीकारे तदानीं ब्रह्मणः परिशिष्टत्वेन ब्रह्मण एवानिर्वचनीयत्वं स्यादिति यद्यतिप्रसङ्गोऽभिधीयेत, तदा नायमतिप्रसङ्गं प्राप्नोति। युक्तस्तमसस्सदसत्त्वप्रतिषेधः। तस्यैवैतद्वाक्यप्रकृतत्वेन सन्निहितत्वात्। न ब्रह्मणः। तस्यानेन वाक्येनाप्रकृतत्वेनासन्निहितत्वात्। एतत्प्रकरणगतवाक्यप्रकृतस्यैव सत्त्वादिप्रतिषेधस्य क्रियमाणत्वादिति परं परिहर्तुमुत्सहेतापीत्यर्थः। अपिशब्देन तत्परिहारस्याशक्यत्वं द्योतयति। तथा हि। नासदासीदिति सदसत्प्रतिषेधे यत्प्रलये स्यात्तस्य सर्वस्यानिर्वचनीयत्वं बलादापद्यत एवेति।

(द्वै द्यु)॥ **परिशेषप्रमाणत्वेनेति**॥ परिशेषप्रमाणोत्थापकत्वेनेत्यर्थः। निमित्ते तृतीया अङ्गीकारेऽन्वेति। तथा च मूले परिशेषपदं परिशेषोत्थापकपरम्। तस्माद्भावे व्यजिरयुक्तं भवति। **तमस इति** शेषोक्तिः॥ **ब्रह्मणोऽपीति**॥ अनेन एवकारोऽप्यर्थ इत्युक्तं भवति। वाक्यस्य वस्तुतः परिशिष्टत्वकारणत्वायोगादितिपदोत्तरमध्याह्रियमाणतृतीयान्तश्रुतिपदोत्तरतृतीयाया ज्ञाप्यत्वरूपहेतुत्वार्थकत्वमङ्गीकृत्य लब्धमर्थमाह॥ **परिशिष्टत्वावगमादिति**॥ ॥ **नियामकाभावात्**॥ ब्रह्मव्यावृत्तहेत्वभावात्। ब्रह्मण्यनिर्वचनीयत्वाभावे सदसदभावाधिकरणकाले सत्त्वरूपहेतोस्तत्रैव व्यभिचारित्वप्राप्तेरिति भावः। पारमार्थिकत्वेन [1]प्रमाणप्रमितत्वमपि हेतुविशेषणम्। तथा च न व्यभिचार इत्याशयेन शङ्कते॥ **ब्रह्मण इति**॥

---

[1] प्रमाणाप्रमितत्वमपि इति पाठेन भाव्यमिति भाति।

(द्वै द्यु) ननु च ब्रह्मणो निर्धर्मकत्वेन भावत्वानधिकरणत्वात्तच्छून्यकाले ब्रह्मसत्त्वमङ्गीकृत्य व्यभिचारवारणाय विशेषणदानशङ्कासम्भवेपि सदसद्वैलक्षण्यपक्षे कथमियमाशङ्का। ब्रह्मण सत्त्वेन सदभावकाले तस्य सत्त्वमभ्युपगम्य व्यभिचारवारणाय विशेषणदानायोगात्। न च भावाभावविलक्षणत्वकल्प एवेयमाशङ्केति वाच्यम्। पूर्वकल्पे ब्रह्मणोऽनिर्वचनीयत्वपरिहारस्यास्फुटस्यानाशङ्कितत्वेन न्यूनतापातात्। मैवम्। सत्त्वरूपधर्मोपहितस्य प्रलये अभावएव वर्तत एव। तदा सद्रूपब्रह्मसत्त्वेऽपि सत्त्वोपहिततासम्पादकभेदकल्पकस्य जीवस्य तदानी शरीरेन्द्रियादिविकलत्वेन सत्त्वोपहितस्य तदानीमसत्त्वात्। सन्नास्तीत्यनेनापि तथैव बोधोदयात्। अत एव माधवेन 'सत् सत्त्वेनानिर्वाच्यं नासीत्' इत्युक्तम्। आनीदवातमिति वाक्येन ब्रह्मण सत्त्वोपहिततया तत्कालवृत्तित्वानवबोधेन ब्रह्मत्वेनैव बोधेन तद्वाक्यस्य व्याहतार्थकत्वाभावात्। इत्थं च प्रकृतहेतुना तत्राप्यनिर्वचनीयत्वापत्तौ उक्तहेतुविशेषण युक्तमेव ॥ तमसोऽपीति ॥ वक्ष्यमाणत्वादिति ॥ विश्वं सत्यमित्यादिप्रमाणोदाहरणेनेति भाव.। तथा च पक्षे हेत्वसिद्धिरिति भाव ।

ननु सदसदभावकाले वा भावाभावाभावकाले वा स्थितिमत्त्व हेतु पारमार्थिकत्वेनाप्रमितत्वरूपविशेषणाघटित एव स्वसाध्यप्रयोजक। तदन्यतरात्मकत्वे स्वस्वाधिकरणकाले तदभावसत्त्वायोगेन साध्याभावे प्रकृतहेतूच्छित्तिरूपविपक्षबाधकतर्कोदयात्। प्रकृतहेतुशरीरे व्याप्यतावच्छेदककोटौ अनुपयुक्तमधिकविशेषण प्रक्षिप्य कथमाशङ्का। तदभ्युपगमेन च कथ समाधानमिति चेन्न। यतस्तदभाववति तस्य सत्त्वं परस्पर न्यूनाधिकसत्ताकत्वेन घटितम्। अन्यथा विरोधप्रसङ्गात्। तथा चाधिकसत्ताकस्य स्वान्यूनसत्ताकस्य वा स्वविरोधिनोऽधिकरणे येन रूपेण प्रतीयते य स वस्तुतस्तद्रूपवानित्येव व्याप्ति पराभिमता। न तु तदभाववति विद्यमानस्तद्विलक्षण इति। तथा सति प्रातिभासिकघटाभाववति विद्यमानस्य घटस्य घटविलक्षणत्वग्रहापातात्। इत्थं च तादृशाविद्यासमसत्ताकस्याधिकस्य वा सतोऽसतश्चाभावस्याधिकरणेऽविद्याऽसत्त्वाद्वस्तुतस्तद्रूपत्वाभावेन तत्तद्विलक्षणत्वम्। अत एवोक्तमद्वैतसिद्धौ 'न हि स्वरूपत कल्पितस्य किञ्चिदपि रूप वास्तव भवति' इति। अत एवाभावो नास्तीति निषेधोपि न व्याहत। न्यूनाधिकसत्ताकवस्तुद्वयावगाहित्वात्। सर्वेभ्यो दर्शपूर्णमासाविति वाक्ये पश्वादीना सर्वपदेन पशुत्वादिरूपविशेषरूपेणैव बोधकत्ववन्नेह नानेति वाक्यस्थकिञ्चनेतिपदेन घटत्वादिरूपविशेषरूपेणैव सर्वं ब्रह्मणि मिथ्यात्वसिद्धये निषिध्यते। शुद्धाद्वैते अभावत्वरूपेणोपस्थितस्याप्यभावबोध आवश्यक। तथापि न व्याहत स निषेधो यथा तद्वत्। अत एवानादिजीवब्रह्मविभागादे प्रलये सत्त्वपक्षे नाभावनिषेधानुपपत्ति। भावरूपाविद्याया सत्त्वेपि तदभावानिषेधवत्। अनिर्वचनीयत्वस्योभयत्रापि साम्यात्। इत्थञ्चोक्तरीत्या पराभिप्रेतव्याप्तेरधिकसत्तादिघटितत्वेनानिर्वचनीयसिद्धे प्रागसिद्धत्वमेवेत्याशयेन यो यदभावाधिकरणवृत्ति स तद्विलक्षण इति लोकसिद्धव्याप्तिमालम्ब्यैव ब्रह्मणोऽनिर्वचनीयत्वमापादितम्। तदुपरि स्वाभिप्रेतव्याप्त्यनुसारेणेदमाशङ्कित ब्रह्मणः पारमार्थिकत्व इत्यादिना। तस्यायमभिप्राय। ब्रह्मण प्रमाणबलेन पारमार्थिकत्वेन तदधिकसत्ताकस्य वा तदन्यूनसत्ताकस्य वा वस्तुन एवाभावाद्ब्रह्मणि तादृशसत्ताघटितहेतुर्नास्तीति न व्यभिचारो नाप्यनिर्वचनीयत्व ब्रह्मण आपाद्यत इति पराभिप्राय तुष्यत्विति न्यायेनाङ्गीकृत्यैव तदभिप्रायमनुरु-

(द्वै द्यु) रुद्ध्यापि स्वाभ्युपगतनिर्वाहकरणेन समाधानस्याधिक्यलाभाय **तमसोपीत्याद्यभिहितम्**। अविद्याया अपि प्रमाणेन पारमार्थिकत्वावगमात् अधिकसत्ताकत्वादिघटितहेतुस्तत्रासिद्ध एवेति भाव । एतद्वाक्यद्वयस्य पूर्वव्याख्यान यथाश्रुतरीतिमनुरुद्ध्य प्रवृत्तमत्रैव पर्यवस्यतीति न पूर्वोत्तरविरोधोऽपीति ॥ **प्रसिद्धेति** ॥ भावाभावयोरपि प्रसिद्धयोगलभ्यत्वात्सदसच्छब्दौ प्रसिद्धार्थाविवेति भाव ॥ **वातप्रेरणां विनैवेति** ॥

सुप्तास्तत्र यतो जीवा सर्वे ब्रह्मशिवादिका ।

इत्युक्तेस्तस्यान्यप्रेरणादौ व्यापाराभावादिति भाव ॥ **अचेष्टतेति** ॥ अचेष्टयत् तदा नियम्य कालादिकं न्ययामयदित्यर्थ । चेष्टतिरन्तर्णीतणिजर्थ । तेन स्वकीयचेष्टाया कदापि वातप्रेरणानधीनत्वाद्विशिष्योक्तिरयुक्तेति शङ्कानवकाश । **यद्वा** तात्कालिकपदार्थविषयिणीं वातप्रेरणा विना स्वयमेव तत्प्रेरणार्थमचेष्टतेत्यर्थ । इद चावातमित्यनेन वातासहितमित्यर्थकेन श्रौतपदेन लभ्यते । **यद्वा** यथा लोकाना चेष्टा वातप्रेरणया न तथा ब्रह्मचेष्टा । किं त्वानन्दोद्रेकेणेति ब्रह्मचेष्टास्वभावोक्तिरेवेय । न तु प्रलयकालमात्रवृत्तिचेष्टानिष्ठविशेषधर्मपरेति ध्येयम् । स्वधयेत्युक्तिसामर्थ्यलभ्यार्थप्रदर्शनं **न तु सुखप्राप्त्याद्यर्थमिति** । न तु स्वधापदोत्तरमवधारणपूरणेन व्याख्यानम् । कस्याप्यर्थस्यानुपपत्त्यभावेन प्रयोजनाभावात् ॥ **उत्सहेतापीति** ॥ स्वाभ्युपगतब्रह्माधिकरणप्रलयापेक्षयैतद्वाक्यप्रतिपाद्यकालस्य वैलक्षण्यमभ्युपेत्येत्यर्थ ॥ **एतत्प्रकरणेति** ॥ ब्रह्मानधिकरणत्वाधिकरणत्वकृतवैलक्षण्याभ्युगमपूर्वशङ्कैव नोदेतीति भाव ।

(गु. टि) ॥ **अन्यस्येति** ॥ सदसत्त्वस्य विरुद्धत्वेनाप्रसङ्गादित्यर्थ ॥ **यदीदमिति** ॥ पारिशेष्येणानिर्वचनीयत्वाङ्गीकारे तदानीं ब्रह्मण परिशिष्टत्वेन ब्रह्मण एवानिर्वचनीयत्व स्यादिति यद्यतिप्रसङ्गोऽभिधीयेत तदा नायमतिप्रसङ्ग प्राप्तो भवति । युक्तस्तमस प्रतिषेध । तस्यानेन वाक्येन प्रकृततया प्रतिषेधेन सन्निहितत्वात् । न तु ब्रह्मण । तस्यास्मिन् प्रकरणे अश्रुतत्वेन प्रतिषेधेनासन्निहितत्वात् एतत्प्रकरणप्रकृतस्यैव सत्त्वादिप्रतिषेधस्य तेन क्रियमाणत्वादित्यर्थ ।

**नासदासीदिति श्रुत्युक्तसदसद्वैलक्षण्य मूर्तामूर्तवैलक्षण्यमेवेति श्रुत्या समर्थनम्**

**(टी) यदि तर्हि प्रतीतोऽर्थोऽनुपपन्नः कोऽर्थोऽस्य ब्रह्मतमसोस्सदसद्वैलक्षण्यस्येत्यतः श्रुत्यन्तरेण तं दर्शयति**

**मूर्तं सदिति सम्प्रोक्तममूर्तमसदुच्यते ।**
**मूर्तामूर्तेतरद्ब्रह्म न सत्तन्नासदुच्यते ॥ इति पैङ्गिश्रुतिः ।**

**ब्रह्मेत्युपलक्षणम्** । **प्रकृत्याख्य तमोपीति ज्ञातव्यम्** ।

(वि टि.) ॥ **सदसद्वैलक्ष्ण्यस्येति** ॥ सदसतोर्वैलक्षण्य येन नासदासीदित्यादिना वाक्येन प्रतिपाद्यते तत्सदसद्वैलक्षण्य तस्येत्यर्थ ॥ **श्रुत्यन्तरेणेति** ॥ तथा च श्रुत्यन्तरेणैवैतच्छ्रुत्यर्थवर्णनान्नार्थान्तरपरत्वशङ्का कार्येति

(वि टि ) भाव । पैङ्गिश्रुतिरित्यङ्गीकारप्रदर्शनं मन्दमतीना तदज्ञानप्रयुक्ततदसत्त्वशङ्कानिरासाय । व्याख्येयश्रुतेर्यावान् विवक्षितोऽर्थस्तस्य सर्वस्य सम्मुखमप्रतीतेः कथं सिद्धान्त्यभिमतार्थसिद्धिरित्यत आह ॥ **ब्रह्मेत्युपलक्षणमिति** ॥ श्रुत्यन्तर्गतब्रह्मपदमित्यर्थ ॥ **प्रकृत्याख्यमिति** ॥ 'आदित्यवर्णं तमस परस्तात्' 'आसीदिद तमोभूतम्' इति श्रुतिस्मृत्योस्तम शब्दस्य प्रकृत्यर्थत्वदर्शनादिति भाव । यद्यपि 'मम योनिर्महद्ब्रह्म' इत्यादौ प्रकृतावपि ब्रह्मशब्दप्रयोगो दृश्यते तथापि 'मुख्यामुख्ययोर्मध्ये मुख्ये सम्प्रत्यय ' इति न्यायेन ब्रह्मण एव ब्रह्मशब्दमुख्यार्थत्वात्तस्यैव ग्रहणं प्राप्तमिति 'मूर्तं सदिति सम्प्रोक्तम्' इति श्रुत्या तस्यैव मूर्तामूर्तविलक्षणत्वमुक्तम् । न तु प्रकृतेरपीत्यतस्तस्या अपि तल्लाभायात्र ब्रह्मेत्युपलक्षणमित्युक्तमिति भाव । वस्तुतस्तु ब्रह्मशब्दस्य ब्रह्मणीव प्रकृतावपि मुख्यत्वात्तेनोभयग्रहणमित्यत्र तात्पर्यम् ।

(वे टि ) ॥ **सदसद्वैलक्षण्यस्येति** ॥ सदसतोर्वैलक्षण्य येन नासदासीदित्यादिना प्रतिपाद्यते तत्सदसद्वैलक्षण्य तस्येत्यर्थ ।

(द्वै द्यु ) ॥ **प्रतीतोऽर्थ इति** ॥ लोकप्रसिद्ध्यादिना झडिति प्रतीत इत्यर्थ । श्रुतौ **न सत्तन्नासदुच्यते** इति, नासदासीदित्यादावर्थत

अनादिमत्पर ब्रह्म न सत्तन्नासदुच्यते ।

न सन्न चासन् भगवान् साक्षात्सदसत पर ॥

इत्यादिषु पुराणवाक्येषु शब्दमर्यादया **चोच्यते** इत्यर्थ । एतच्छ्रुत्या श्रुतिविशेषमुपादाय 'एतच्छ्रुत्या एव मुच्यते' इत्यनुक्तत्वाद्बाधकं विना सङ्कोचे सत्य ज्ञानमित्यादावपि सत्यपदस्य कालविशेषसत्त्वार्थकत्वापत्त्याऽतिप्रसङ्गेनैतच्छ्रुतेर्ब्रह्मणि सदसद्वैलक्षण्यबोधकवाक्यसामान्यविषयकत्वे आवश्यके नासदासीदित्यादिवाक्यविषयकत्वमावश्यकम् । न च **उच्यते** इतिपदस्वारस्याद्वचनवृत्त्या सदसद्वैलक्षण्यप्रतिपादकवाक्यगतिरेवोच्यतेऽनया श्रुत्येति वाच्यम् । श्रौतार्थापत्तिबललब्धार्थस्यापि ब्रह्मसत्त्वविरोधिनयोक्तश्रुतेरेतद्वाक्यगत्यप्रदर्शकत्वे ब्रह्मसत्त्वविरोध्येतच्छ्रुत्यतिविरोधापरिहारकनयाऽकृतार्थत्वप्रसङ्गेनैतद्विषयकत्वस्याप्यावश्यकत्वात् । उच्यत इत्यस्य प्रतिपाद्यत इत्येतावन्मात्रार्थत्वेन बहुश प्रयोगदर्शनेन तदस्वारस्यस्याप्यभावात् । एवं च नासदासीदितिवाक्यस्थसदसत्पदयोर्ब्रह्मानुरोधेन मूर्तामूर्तपरत्वावश्यकत्वे तद्वाक्यप्रतिपाद्यतमस्यप्ययमेवार्थ श्रुत्यभिप्रेत । अन्यथा सकृदुक्तशब्दस्यार्थद्वयकल्पने गौरवात् । अतस्तमोऽप्येतच्छ्रुत्या ब्रह्मपदेनोपलक्ष्यते । तुल्यन्यायादित्याशयेनाह ॥ **ब्रह्मेत्युपलक्षणमिति** ॥ **प्रकृत्याख्यमिति** ॥ भौतिकतमोव्यावृत्त्यर्थमिदम् । तदपि नासदासीदितिश्रुतौ न सती नासती मायेत्यादिस्मृतौ च तथोच्यत इत्यर्थ ।

## नासदासीदिति श्रुत्युक्तमूर्तामूर्तवैलक्षण्य पञ्चभूतवैलक्षण्यमेवेति श्रुत्या समर्थनम्

(टी ) **नन्वसर्वगतपरिमाणं मूर्तं ततोन्यत्सर्वममूर्तम् । तथा च भावाभावात्मकस्य सर्वस्यापि मूर्तामूर्तान्तःपातित्वात्ततो विलक्षणत्वे ब्रह्मप्रकृत्योरनिर्वचनीयत्वतादवस्थ्यमिति चेत् । मैवम् ।**

(टी) मूर्तशब्दस्य पृथिव्यप्तेजोविषयत्वेनामूर्तशब्दस्य च वाय्वाकाशपरत्वेन सर्वस्य तदन्तर्भावाभावात्। ब्रह्मप्रकृत्योश्च पञ्चमहाभूतविलक्षणत्वस्योपपन्नत्वादिति भावेन सदसच्छब्दौ श्रुत्यन्तरेण व्याख्याति।

'यदन्यद्वायोश्चान्तरिक्षाच्चैतत्सत्' इति माध्यन्दिनश्रुतिः।

'वायुरन्तरिक्षश्चासत्' इति श्रुतिशेषः।

(वि टि.) ॥ अनिर्वचनीयतातादवस्थ्यमिति ॥

यद्यपि ब्रह्मण

'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायण स्थित।'

'महान्तं विभुमात्मानम्'

इति श्रुत्या सर्वगतत्वोक्तेर्न स्यात्तस्यामूर्तविलक्षणत्वरूपानिर्वचनीयत्वतादवस्थ्य तथापि मूर्तं सदिति सम्प्रोक्तमिति श्रुतिगतब्रह्मशब्दार्थादन्यस्यैव तद्गतमूर्तामूर्तशब्दार्थस्य ग्राह्यत्वात्तादृशसकलभावाभावविलक्षणतयाऽस्त्येव ब्रह्मणोप्यनिर्वचनीयतातादवस्थ्यम्। अन्यथा सर्वगतपरिमाणत्वपरश्रुतिविरोधेनोक्तार्थे पैङ्गिश्रुतेरप्रामाण्यापत्तेरिति शङ्काभिप्राय इति ध्येयम्।

भवेदनिर्वचनीयतातादवस्थ्य ब्रह्मप्रकृत्यो यदि पैङ्गिश्रुतिगतमूर्तामूर्तशब्दयोस्तद्गतब्रह्मशब्दार्थभूतप्रकृतिपरब्रह्मान्यत्सर्वमर्थ स्यात्। किं तु मूर्तशब्दस्य पृथिव्यादिभूतत्रयपरत्वेनामूर्तशब्दस्य वाय्वाकाशरूपभूतद्वयपरत्वेन तद्गतब्रह्मशब्दार्थयो परब्रह्मप्रकृत्यो पञ्चमहाभूतविलक्षणत्वमेव पैङ्गिश्रुत्यर्थ। एवञ्च सर्वस्यापि भावाभावात्मकप्रपञ्चस्य पञ्चमहाभूतेष्वेवान्तर्भावाभावेन पराभिमतसर्वभावाभाववैलक्षण्यरूपानिर्वचनीयतातादवस्थ्यं कथमिति वक्तु पैङ्गिश्रुतिगतमूर्तामूर्तशब्दौ श्रुत्यन्तरानुरोधेन नासङ्कुचितार्थौ ग्राह्यौ। किं तु सङ्कुचितार्थौ। अन्यथा श्रुत्यन्तरविरोधापत्तेरित्याचार्याभिप्राय वक्तुमाह ॥ मैवमिति ॥ ननूक्तरीत्या सच्छब्दस्य भूतत्रयपरत्वेप्यसच्छब्दस्य तदतिरिक्तसर्वार्थकत्वेन ब्रह्मप्रकृत्योरनिर्वचनीयतातादवस्थ्यापरिहार इत्यत तच्छ्रुतिशेष पठति ॥ वायुरन्तरिक्षश्चेति ॥

(वे टि) ॥ भावाभावात्मकस्येति ॥ असर्वगतपरिमाणं मूर्तं पृथिव्यादि। अन्यत्सर्वं सर्वगतपरिमाणमाकाशादि सर्वथा परिमाणशून्य गुणादि अभावश्चामूर्तमित्यर्थ ॥ ततो विलक्षणत्व इति ॥ भावाभाव विलक्षणत्वस्यैव प्राप्तेरित्यर्थ ॥ सदसच्छब्दौ श्रुत्यन्तरेण व्याख्यातीति ॥ नन्वनयैव श्रुत्या सदसच्छब्दार्थव्यवस्थापनसम्भवे किं प्राचीनश्रुत्युदाहरणेनेति चेन्न। अनया सदसच्छब्दार्थनिर्णयेपि तद्वैलक्षण्येन निमित्तेन ब्रह्मादि सदसद्विलक्षणमित्युच्यत इत्यत्र प्रमाणान्तरस्य वक्तव्यत्वात्। अत एव

मूर्तामूर्तेतरद्ब्रह्म न सत्तन्नासदुच्यते।

(वै. टि) इति श्रुतिशेषोदाहरणमिति भाव ।

(द्वै यु) उक्तश्रुते प्रसिद्धमूर्ततद्भिन्नपरत्वाङ्गीकारे सर्वप्रपञ्चस्य तदन्तर्भावेण सदसद्विलक्षणत्वरूपप्रतीतार्थ एव स्वस्यापि पर्यवसानात्सदसच्छब्दार्थान्तरप्रदर्शनपूर्वक तदुक्तेर्गतिचिन्तनमयुक्त स्यात् । अतो न प्रसिद्धमूर्तादिरेतच्छ्रुत्या बोध्यत इत्याशयेनाह ॥ मैवमिति ॥ श्रुतिशेष इति ॥ स्ववाक्यानन्तर शेषभ्रान्तिवारणाय श्रुतीत्युक्तम् । ननु श्रुतौ कुत शेष । 'यत्रानवसरोऽन्यत्र' इत्याद्युक्तेरनुपपत्तिं विनाऽध्याहारायोगात् इति चेत् ।

अत्र केचित् 'यतोऽत्राप्यनुपपत्तिर्वर्तत एव । तथा हि, न तावदियं श्रुतिर्वाय्वन्तरिक्षभिन्नेषु सत्यता विधातुमुपक्रान्ता । तत्सत्ताकथनस्यानुपयुक्तत्वात् । तन्मात्रसत्यत्वस्य श्रुत्यन्तरविरुद्धत्वात । अतो ब्रह्मप्रकृत्यादिषु सदसदन्यत्वादिबोधकश्रुतिगतिप्रदर्शनाय तत्तद्वाक्यस्थसदसच्छब्दव्याख्यानार्थमेव प्रवृत्तेति वाच्यम् । तत्र सच्छब्दमात्रव्याख्यातात्पर्यकत्वे न्यूनतैव । तथा च प्रतिपादकतया सदसच्छब्दयोर्बुद्धिस्थत्वे सति प्रतिपाद्यतयोपस्थितपञ्चमहाभूताना मध्ये पृथिव्यादित्रयस्य वाय्वन्तरिक्षभिन्नत्वेनोपादान कृत्वा असच्छब्दघटकनञर्थभेदप्रतियोगिसमर्पकसत्पदवाच्यताकथनेन तयोरसत्पदबोद्ध्यता स्फुटतया लभ्यत इति सिद्धवत्कृत्य कण्ठत श्रुत्यनुक्त तदभिप्रेतमेव वाक्य शाब्दबोधनिर्वाहाय पूरणीयमेवेति न कश्चिद्दोष इति । यदि त्वियमानुपूर्वी देशान्तरे क्वचिदुपलभ्यमाना भवेदत एवाद्वैतसिद्धौ 'यदन्यद्वायोश्चान्तरिक्षाच्चैतत्सद्वायुरन्तरिक्ष चासत् इति श्रुतेश्च' इत्युक्तमित्युच्यते तदा श्रुतिशेषः इत्यस्य श्रुत्यन्तभाग इत्यर्थ इति व्याख्यातुं शक्यते । तथाप्येतादृशाऽनुपूर्वीसत्त्वे अवश्यवक्तव्यस्य तस्यानुदाहरण किमर्थमचार्यैं कृतमिति महान्त प्रष्टव्या ' इत्याहु. ।

अन्ये तु 'श्रुतिशेष इति प्रसिद्धमाध्यन्दिनश्रुतिशेष इत्यर्थ । यद्यपि 'द्वे वाव ब्रह्मणो रूपे । मूर्तं चैवामूर्तं च । यच्च सच्च त्यच्च तदेतन्मूर्तं यदन्यद्वायोश्चान्तरिक्षाच्च । एतन्मर्त्यमेतत्स्थितमेतत्सत् । तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रस एष तपति सतो ह्येष रस । अथामूर्तं वायुश्चान्तरिक्ष च । एतदमूर्तम् । एतद्यदेतत्त्य । तस्यैतस्यामूर्तस्यैतस्य यत एतस्य त्यस्यैष रसो य एष एतस्मिन् मण्डले पुरुष तस्य ह्येष रस इत्यधिदैवतम्' इत्येव प्रसिद्धमाध्यन्दिनश्रुतौ पाठ श्रूयते तथापि मूलमर्थग्राहकम् । टीकायामपि इत्यभिप्रायक श्रुतिशेष इत्यर्थ । मूलेपि इत्यर्थिका श्रुतिरित्यर्थ । न त्वेवप्रकारानुपूर्वीकेति । एतन्मर्त्यमेतत्स्थितमित्यनेन व्यवहितत्वादिति ध्येयम् । मूर्तं चामूर्तं चेति विभक्तयोर्मध्ये वाय्वन्तरिक्षान्यभूतत्रयस्य मूर्तपदार्थतया गृहीतस्य मर्त्यस्थितसदादिरूपतायास्तत्तत्पदेन विधानात्तत्तच्छब्दवाच्यत्वसिद्धौ अथामूर्तं च वायुश्चान्तरिक्ष चेति वाय्वन्तरिक्षयोर्भिन्नत्वेनामूर्तपदार्थत्वे स्थिते सदन्यार्थकासत्पदाभिधेयत्वस्यापि श्रुत्यभिप्रेतत्वप्राप्ते । न च मूर्तभिन्नत्व तदन्यसर्वसाधारणम् । अत. कथ वाय्वन्तरिक्षयोरेव तत्पदव्यवहार्यतेति वाच्यम् । अब्राह्मणमानयेत्यादौ ब्राह्मणभिन्नत्वेन क्षत्रियादिमनुष्यस्यैवग्रहणनियमेन सजातीयग्राहकतास्वाभाव्यस्य शब्दे सत्त्वेनैवोपपत्ते । अत एव यदन्यद्वायोरित्यत्राप्यन्यपदेनावशिष्टभूतत्रयस्यैव ग्रहणम् । अस्माद्गोरन्योऽन्वेष्टव्य इतिवत् । न तु तद्भिन्नसामान्यस्य । तथात्वे उत्तरत्राऽदित्यस्य तद्रसत्वो-

(द्वै. द्यु.) कत्यसङ्गत्यापत्तेः । आदित्यस्य वाय्वन्तरिक्षभिन्नत्वेन मूर्तत्वेन मूर्तत्वप्राप्त्या स्व प्रति स्वस्य रसत्वायोगात् । विना निरवकाशबाधकं सामान्यग्रहणस्यौत्सर्गिकत्वेन सङ्कोचायोगात् । एवं न्यायामृतस्थ यदन्यद्वायोश्चान्तरिक्षाच्चैतत्सदिति वायुरन्तरिक्षं चासदिति श्रुतेश्चेति वाक्यमपीत्यभिप्रायकश्रुतेश्चेत्यर्थकतया योज्यम् । अत एव पृथगितिशब्दः निरन्तरवाक्यत्वे तद्वैयर्थ्यापत्तेः । अद्वैतसिद्धिकृता तु मध्यस्थेतिशब्दोऽधिकः पठित इति भ्रमेण श्रुतिपाठमेव तथा भ्रान्त्वा मध्यस्थेतिशब्दं विहायानुवादः कृतः । मूले काण्वश्रुतिव्याख्ययैव माध्यन्दिनस्यापि व्याख्येयत्वाभिप्रायेणोपलक्षणतयेयमेवोदाहृता । अतोत्र न तदुपेक्षाविचारावसर इत्यवधेयम्' इति वदन्ति ।

परे तु अप्रसिद्धशखान्तरपाठ एवायम् । अत एव माध्यन्दिनश्रुतिरित्यनुक्त्वा माध्यन्दिनायनश्रुतिरिति नामान्तरग्रहणं कृतम् । अन्यथैतत्समानभूतव्याख्यानकाण्वश्रुतिपरित्यागे बीजाभावप्रसङ्गात् । श्रुतिशेष इति टीकापि इत्यानुपूर्वीरूपः श्रुतेः शिष्टो भाग इत्यर्थिका । टीकाकृतामपि सर्वज्ञकल्पत्वादेवमुक्तिर्युज्यते । न्यायामृते तु मध्ये किञ्चिदानुपूर्व्यव्यवधानमपि सम्भावितमित्याशयेन वा उक्तरूपनिरन्तरानुपूर्वीसत्त्वेऽवश्यमुदाहर्तव्यस्य तद्भागस्य मूलेऽनुदाहरणे बीजाभावः स्यात् । अतो नेयं निरन्तरानुपूर्वीति निश्चित्यैव वा मध्ये इतिशब्दं पठित्वा श्रुतिद्वयं व्यवच्छिद्य पठितम् । टीकाया शेष इत्यस्याध्याहारार्थकत्वे न्यायमृते श्रुतित्वेन तत्समकक्षतया मध्ये इतिशब्दं प्रक्षिप्य पाठाभावप्रसङ्गात् । अस्या अपि श्रुतेः शाब्दमर्यादयैव स्फुटं स्वाभिमतार्थबोधकत्वे मूलकृता प्रसिद्धकाण्वमाध्यन्दिनश्रुतिपरित्यागे बीजाभावप्रसङ्गाच्च । प्रसिद्धश्रुतौ मूलोक्तानुपूर्व्यभावेन टीकाया तच्छेषपूरणानुपपत्तेश्च' इति प्राहुः ।

### श्रुतिद्वयसिद्धस्य नासदासीदिति श्रुत्यर्थस्य निरूपणम्

**(टी) ततश्चायं श्रुत्यर्थो भवति । तदानीं प्रलये असदमूर्तं वाय्वन्तरिक्षाख्यं नासीत् । सच्च मूर्तं पृथिव्यप्तेजोरूपं नो आसीत् । रजःशब्दोपलक्षितं गुणत्रयं च नासीत् । यत्परः परं सर्वगतमव्याकृतं व्योम तच्च मूर्तसम्बन्धाभावान्नो आसीदिति । सदसच्छब्दयोर्भावाभावपरत्वे प्रसिद्धमूर्तामूर्तविषयत्वे वा सर्वस्य तदन्तर्भावात्पुना रजःप्रभृतेः प्रतिषेधोऽनर्थकः स्यादित्यनिष्टान्तरसूचनार्थं प्रागधिकांशोदाहरणं कृतम् । अन्यथा नासदासीन्नो सदासीत्तदानीमित्येतावदेवोदाहरिष्यत् ।**

### विनापि श्रुत्यन्तरोदाहरणं पञ्चभूतवैलक्षण्यरूपार्थलाभे तदुदाहरणवैयर्थ्यशङ्का तन्निरासश्च

**ननु प्रतीतार्थे बाधितेऽर्थान्तरमावश्यकमेव । तत्किं श्रुत्युदाहरणेन । मैवम् । बाधकेनार्थान्तरमेव लभ्यते । न तु तद्विशेषोपीति तत्राश्रयणीयमेव श्रुत्यन्तरम् ।**

(वि. टि.) पूर्त्यर्थकात् पॄ इत्यतो 'ॠदोरप्' इति कर्मण्यप्प्रत्यये परशब्दनिष्पत्तेर्योग्यतया परिमाणेन पूर्णमित्यर्थो लभ्यत इति परं सर्वगतमित्युक्तम् । यद्वा परमुत्कृष्टमित्यर्थः । उत्कर्षश्च परिमाणकृत एव प्रकृत इत्यभिप्रेत्य सर्वगतमित्युक्तम् । अव्याकृतमपरिणममानमित्यर्थः । न चैवंविधाकाशे मानाभावः । 'आकाशवत्सर्वगतश्च

(वि. टि.) नित्य ' 'स यथाऽनन्तोऽयमाकाश एवमनन्त आत्मा वेदितव्य.' इत्यादिश्रुतेरेव मानत्वादिति भाव । नन्वेवविधस्याऽकाशस्य सर्वदा सर्वत्र सत्त्वात् 'नासदासीत्' इति कथमसत्त्वप्रतिपादनमित्यत आह ॥ **मूर्तसम्बन्धाभावादिति** ॥ यद्यपि प्रलये पारिभाषिकमूर्तसम्बन्धाभाववत्तथाविधामूर्तसम्बन्धाभावोऽप्यस्ति तथापि लाघवान्मूर्तसम्बन्धाभावस्यैव तदसत्त्वोपपादकत्वमभिप्रेत्य तथोक्तमिति ध्येयम्। यद्यपि चान्याभावोऽन्यासत्त्वव्यवहारे न हेतु । अतिप्रसङ्गात् । न हि व्योमशब्दो मूर्तसम्बन्धपर येन तथा स्यात् । तथापि **परो व्योमे**तिशब्दमहिम्ना सर्वसम्बद्धव्योमलाभात्तन्निषेधे अलङ्कृतपूर्वश्चैत्रो नास्तीतिवद्विशिष्टनिषेधो विशेषणनिषेधप्रयुक्त उपपद्यत इति भाव ।

ननु 'नासदासीन्नो सदासीत्तदानीम्' इत्येतावदेव प्रागुदाहर्तव्यम् । तावतैव प्रकृतार्थसिद्धेरित्याशङ्क्याधिकांशोदाहरणस्य सदसच्छब्दयो पररीत्या भावाभावपरत्वे प्रसिद्धमूर्तामूर्तपरत्वे वा सर्वस्य तदन्तर्भावात्पुना रज प्रभृतिप्रतिषेधानर्थक्यरूपानिष्टान्तरसूचकत्वेन सार्थक्यं वक्तुमाह ॥ **सदसच्छब्दयोरिति** ॥ ननु नित्यनिर्दोषतया वेदस्य प्रामाण्यावधारणात्तन्निर्वाहाय प्रतीतार्थबाधेऽर्थान्तरपरत्वमावश्यकम् । अन्यथा तत्प्रामाण्यानिर्वाहात् । तथा चार्थान्तरपरत्वसिद्ध्यर्थं श्रुत्युदाहरण व्यर्थमिति शङ्कते ॥ **ननु प्रतीतार्थ इति** ॥ सामान्यतोऽर्थान्तरपरत्वनिर्णयसम्भवेपि अर्थविशेषनिष्ठत्वज्ञापकश्रुत्युदाहरणं विना तद्विशेषपरत्वनिश्चयासम्भवात्तदुदाहरणमावश्यकमिति परिहरति ॥ **बाधकेनेति** ॥ तत्रेत्यत प्राक् अत इति शेष ।

(रा टि ) श्रुतिद्वयेन सिद्धमर्थमाह ॥ **ततश्चायं श्रुत्यर्थ इति** ॥ **प्रसिद्धमूर्तामूर्तेति** ॥ प्रागुक्तसर्वगतपरिमाणादिरूपेत्यर्थ ॥ **अधिकांशेति** । **परो यदि**त्यन्तोदाहरणमित्यर्थ. ॥ **प्रतीतार्थ इति** ॥ पराभिमतरूप इत्यर्थ ॥ **श्रुतीति** ॥ **मूर्तं सदिति**श्रुत्युदाहरणेनेत्यर्थ ॥ **बाधकेनेति** ॥ प्रतीतार्थ इत्यनुकर्ष ।

(वे टि ) ॥ **अर्थान्तरमावश्यकमेवेति** ॥ अपौरुषेयत्वेनाप्रामाण्यासम्भवादिति भाव । **तत्रे**त्यत· प्रागत इति शेषः ।

(द्वै द्यु ) ॥ **ततश्चेति** ॥ एतद्वाक्यपूर्ववाक्ययोर्विसवादपरिहाराय सामर्थ्यात्पञ्चमहाभूतविलक्षणत्व नासदासीदिति श्रुत्यर्थ इति उक्तश्रुतिद्वयेन लब्धे सतीत्यर्थ । **भवति** पर्यवसितो भवति ॥ **मूर्तसम्बन्धाभावादिति** ॥ अत्र **मूर्त**शब्द प्रसिद्धार्थक एव । न तु तेजोबन्नमात्रपर । मूर्तसम्बन्धाभाव एवाव्याकृतस्य लय इत्यर्थ । ॥ **अनर्थक इति** ॥ विशेषहेत्वभावादिति भाव ।

**यदत्र** केनचिदुक्तम् । 'किं चागमोप्यनिर्वचनीये प्रमाणम् । तथा हि ।

नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत् ।
किमावरीव. कुहकस्य शर्मन्नम्भ· किमासीद्गहन गभीरम् ॥
न मृत्युरासीदमृत न तर्हि न राञ्या अह्न आसीत्प्रकेत. ।

(द्वै द्यु) आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास ॥
तम आसीत्तमसा गूळ्हमग्रे प्रकेतं सलिलं सर्वमा इदम् ।
तुच्छेनाभ्वपिहितं यदासीत्तमसस्तन्महिना जायते कम् ॥
कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत् ॥

इति श्रुत्या सदसतोर्निषेधपूर्वकं तमःसत्त्वकथनेन तस्य सदसद्विलक्षणत्वरूपानिर्वचनीयत्वलाभात्। नन्विदमयुक्तम्। एवं सति परमार्थतयाऽङ्गीकृतस्य ब्रह्मणोऽप्यनिर्वाच्यतापत्तेः। तस्याप्यानीदवातमिति वाक्येन प्रलये परिशिष्टत्वावगमादिति चेन्न। 'सदेव सोम्येदमग्र आसीत्' 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुत्यन्तरेण ब्रह्मणः पारमार्थिकत्वावगतौ तद्विरोधेनार्थापत्तेः ब्रह्मांशे प्रवृत्त्ययोगात्। न चैवं 'नो सदासीत्' इत्याद्यभिधानविरोधः। ब्रह्मणस्तदानीं सत्त्वादिति वाच्यम्। आनीदवातमिति श्रुत्येकवाक्यतया ब्रह्मान्यसत एव निषिद्धत्वात्। न च सिद्ध्यसिद्धिभ्यां व्याघातः। ब्रह्मान्येत्यंशपूरणेन नो सदासीदित्यस्य व्याख्यानसम्भवात्। न चैवमपि नासदासीदित्यंशविरोधः। उक्तप्रतियोगित्वरूपमिथ्यात्वस्य तमःसाधारण्यादिति वाच्यम्। अत्रत्यासत्पदस्य सत्तादात्म्यशून्यपरत्वात्। न च

मूर्तं सदिति सम्प्रोक्तममूर्तमसदुच्यते ।
मूर्तामूर्तेतरद्ब्रह्म न सत्तन्नासदुच्यते ॥

इति पैङ्गिश्रुतौ सदसत्पदयोर्मूर्तामूर्तवाचकताया उक्तत्वात् यदन्यद्वायोश्चान्तरिक्षाच्चैतत्सदिति माध्यन्दिनश्रुत्याऽसत्पदस्य वाय्वन्तरिक्षवाचकताया उक्तत्वेन ब्रह्मान्यत्वेनेत्यध्याहारस्यासत्पदस्य सत्तादात्म्यशून्यलक्षणायाश्च कल्पनामपेक्ष्योक्तभागद्वयस्य मूर्तामूर्तनिषेधपरत्वमेव युक्तमाश्रयितुमिति वाच्यम्। सदसच्छब्दयोः पारमार्थिकापारमार्थिकपरतया लौकिकवैदिकप्रयोगप्राचुर्येण श्रुतिमात्रसिद्धमूर्तामूर्तपरत्वकल्पनस्यायुक्तत्वात्। अध्याहारतो लक्षणाया अजहन्निरूढलक्षणयोर्जहल्लक्षणायाश्च जघन्यत्वाच्च। श्रुतेर्यया कयाचिद्वृत्त्या तद्बोधकत्वमात्रेण उपपन्नतया तयोस्तद्वाचकत्वकल्पने मानाभावाच्च। न चोक्तासन्निषेधे अप्रसक्तप्रतिषेधापत्तिः। सतो निषेधेन तस्यापाततः प्राप्तिसम्भवात्। न चैवं तुल्ययुक्त्या तमोन्यत्वेन सदभावो नो सदासीदित्यस्यार्थः स्यादिति तमसोपि नानिर्वाच्यता स्यादिति वाच्यम्। तथा अध्याहारे मानाभावात्। तमःपारमार्थिकताग्राहकप्रमाणाभावात्। अधिकमग्रे वक्ष्यामः।

यत्तु 'उक्तव्याख्याने तदानीमित्यस्य वैयर्थ्यम्। रजआदेरपि सन्निषेधेनैव निषेधलाभात् पृथग्ग्रहणानौचित्यं च। तस्यापि पारमार्थिकत्वासम्प्रतिपत्तौ असन्निषेधेनैव निषेधलाभः' इति। तदसत्। तदानीमित्यनुक्तौ कालान्तरे सदसन्निषेधसहितस्य कालान्तरसत्त्वस्यानिर्वाच्यत्वासाधकतया तन्निषेधाधिकरणकाले तत्सत्त्वाभिधानस्यावश्यकत्वात्। सत्त्वं च परमार्थत्वं असत्त्वं सत्तादात्म्यशून्यत्वं इति तुच्छपरमार्थयोरेव प्रकृतनिषेधविषयत्वेन रजआदिनिषेधस्यावश्यकत्वाच्च तदानीमित्यस्य रजःप्रभृतिनिषेध एवान्वय इत्यपि वदन्ति। अत्र च सदसत्पदयो-

(द्वै द्यु ) र्भावाभावपरता मदभ्युपगतेति परोक्तिस्तु न श्रद्धेया । अनादेर्जीवेशभेदादे प्रलयकालसत्त्वाभ्युपगमेन तस्यासदनभिमतत्वात् ।

यत्तु 'रज.पदं रज प्रभृतिगुणत्रयपरम्' इति। तदसत् । तमसो गुणत्रयात्मकत्वेन तत्सत्त्वे गुणनिषेधासम्भवात् ।

गुरुचरणास्तु 'नासदासीदित्यस्यासदन्यदासीदिति नो सदासीदित्यस्य सदन्यदासीदित्यर्थ । न च नञाद्यर्थस्य नोद्देश्यत्वम् । तथा सति न पृथिवी निर्गन्धेत्यतो पृथिवीभिन्नं निर्गन्धमित्यादिप्रत्ययप्रसङ्गादिति वाच्यम् । असन्न भवतीति व्युत्पत्त्या इह ब्रह्मण आसीदिति तदुद्देश्यत्वाविरोधात् नशब्देनाय समास । उक्तप्रसिद्धव्यति क्रमापेक्षया वैरूप्यानुसरणस्यापि युक्तत्वाच्च । न चैवं प्रलये सदसद्रूपत्वमात्रेणोक्तनिषेधद्वयोपपत्तेरनिर्वाच्यत्वासिद्धिरिति वाच्यम् । सद्विलक्षणे कालसम्बन्धाभिधानेनैव तत्सिद्धे । न चैवमसदन्यस्य सत्त्वाभिधानमसङ्गतम् । निरर्थकत्वादिति वाच्यम् । सदन्यस्मिन्कथ कालसम्बन्ध इत्याशङ्कानिरासार्थत्वेन तदभिधानस्य सार्थक्यात्' इत्याहुरिति ।

तदसत् । यत्तावदुक्त 'सदेव सोम्येदमित्यादिश्रुतिभिर्ब्रह्मण सत्यत्वावगमान्न तस्यानिर्वचनीयत्वमापतति' इति तत्समाधानं टीकायामुक्तमेव तमसोपीत्यादिना । ब्रह्मसत्यताबोधकाना स्वार्थपरत्व जगत्सत्यताबोधकाना तु न तथेति वैषम्य तु उत्तरत्र निराकरिष्यते । अपि च जगत्सत्यताबोधकवाक्यविरोधपरिहारोत्तरमेव श्रौतार्थापत्त्यवकाश । तत्परिहारश्चावान्तरसत्यत्वादिपरत्वादिभि । तत्र बीज त्वविद्यातत्कार्यानिर्वचनीयत्वसिद्धिरिति स्फुटा चक्रकापत्ति । अन्यथा ब्रह्मणोऽप्येतद्वाक्यबलादनिर्वचनीयत्वोपगमेनैव तत्सत्यत्वबोधकश्रुतीनामपि अर्थान्तरपरिकल्पनसम्भवेन तद्विरोधेनार्थापत्तिप्रवृत्त्यनुपपत्त्युक्तययोग । विशेषाभावात् । प्रत्यक्षादिप्रमाणान्तरेणानिर्वचनीयसिद्ध्यभावस्योक्तत्वात् । सिद्धत्वे आगमोदाहरणस्य वैयर्थ्यात् ।

यदपि सतो ब्रह्मण प्रलये सत्त्वान्निषेधानुपपत्तिमाशङ्क्य 'आनीदवातम्' इतिश्रुत्यैकवाक्यतया ब्रह्मान्यसत एव निषेध इति । तदसत् । सिद्ध्यसिद्धिभ्या व्याघातात् । न च ब्रह्मान्येत्यंशपूरणेन नो सदासीदित्यस्य व्याख्यानसम्भव इति वाच्यम् । एवमपि ब्रह्मान्यसतो रूपान्तरेण सिद्ध्यसिद्धिभ्या व्याघातपरिहारेपि ब्रह्मान्यत्वविशिष्टसद्रूपप्रतियोग्यसिद्ध्या पुनस्तव निषेधानुपपत्तिरेव । न च ममेव प्रतियोग्यप्रसिद्धावप्यभाव सम्भवति । तवाद्वैतसिद्धावसत प्रतियोगिताया निराकरणात् । 'असत प्रतियोगित्वव्यवहार पररीत्या । न तु सिद्धान्त.' इत्यद्वैतचन्द्रिकायां बहुवारमुक्तत्वाच्च । न हीद किञ्चिल्लक्षणादिक परिष्क्रियते येन पररीत्येदमिति वक्तु शक्येत । श्रुतेर्वास्तवार्थवर्णनप्रस्तावात् । अत एवासत्पदस्य सत्तादात्म्यशून्यार्थकत्ववर्णनमप्यपास्तम् । असत एव त्वन्मते तथात्वेन निषेधप्रतियोगित्वस्य तत्रायोगात् ।

न च ब्रह्मान्यत्वेन सन्नास्तीति निषेधो व्यधिकरणधर्मावच्छिन्नाभावविषयक इति वाच्यम् । तथात्वे ब्रह्मान्यत्वेनेत्यंशपूरणेनेत्यनुक्त्वा ब्रह्मान्येत्यंशपूरणेनेत्युक्तेरसङ्गते । व्यधिकरणधर्मावच्छिन्नाभावस्य सौन्दलमा-

(द्वै द्यु) त्रोत्प्रेक्षितस्य श्रुत्यर्थत्ववर्णनायोगाच्च । न च परोक्षब्रह्मविषयस्याप्यनिर्वचनीयत्वाङ्गीकारात् ब्रह्मान्यत्वविशिष्टमतस्तादृशत्वान्निषेधप्रनियोगित्व युक्तमिति वाच्यम् । तथात्वे श्रुत्यभिप्रेतत्वेनास्यैव निष्कृष्टपक्षत्वापत्त्या 'परोक्षभ्रमोऽप्यधिकरणप्रकारक' इत्यादीना 'शशविषाणं नास्तीतिवाक्यादीना विकल्पजनकत्वम्' इत्यादीना च त्वदाचार्योक्तीना त्वदुक्ताना च दत्तजलाञ्जलित्वप्रसङ्गात् । 'प्रलये ब्रह्मान्यत्सत् वर्तते' इति तत्त्ववादिभ्रमविषयस्य तादृशानिर्वचनीयस्य निषेधायोगाच्च । अपि च प्रसिद्धतेजोबन्नादिरूपानिर्वचनीयनिषेध विहायास्यैवानिर्वचनीयस्य निषेधे बीजाभाव । किं च ब्रह्मान्यत्वविशिष्टपारमार्थिकत्वब्रह्मान्यज्ञानब्रह्मान्यानन्दरूपाणा तादृशानिर्वचनीयानाम निषेधेनास्यैव निषेधे बीजाभाव । अस्तु वा तद्यथा तथा। ब्रह्मान्यसन्निषेधस्य सर्वकालसाधारणतया प्रलय एव विशिष्य तन्निषेधोक्तिरयुक्तैव । सत्तादात्म्यशून्यनिषेधस्यापि सार्वदिकत्वेन तत्राप्युक्तदोष एव ।

यदपि 'असत्पदस्य सत्तादात्म्यशून्यपरत्वम्' इति । तदप्यसत् । सत्प्रतियोगिकत्वविशिष्टतादात्म्यत्वावच्छिन्नाधिकरणत्वस्य सत्यभावेनास्य सत्साधारण्यात्तन्निषेधानुपपत्ते । सत्प्रतियोगिकतादात्म्याभाववदर्थकत्व स्वीकृत्य ब्रह्मण्यपि तादृशतादात्म्यस्याद्विष्टत्वमङ्गीकृत्य स्वीकारेपि सत्पदनञुभयघटितपदाधीनशाब्दबोधविषयत्वस्यासत्यङ्गीकारापत्त्या असति पदवृत्तिविषयत्वाभावरूपस्वसिद्धान्तस्य शशविषाणादिपदादसद्बोधानुपपत्तिप्रदर्शकस्वकीयपूर्वग्रन्थस्य च विरोध । श्रुतिवाक्यस्य तदंशे विकल्पजनकत्वापातेन शशविषाणमित्यादिवाक्यतुल्यतापातश्च । अपि च सत्पदस्य पारमार्थिकसदर्थकताया लौकिकवैदिकप्रसिद्ध्यनुसारेण त्वयैव भाषितत्वेनासत्पदघटकसत्पदस्य सत्तादात्म्यवत्परत्वे लक्षणाऽऽपात ।

यदपि मूलोक्तश्रुतिद्वयानुसारेण पञ्चमहाभूतपरत्व सदसत्पदयोराशङ्क्योक्त 'सदसत्पदयो पारमार्थिका पारमार्थिकयो लौकिकवैदिकप्रयोगप्राचुर्येण श्रुतिमात्रसिद्धमूर्तामूर्तपरत्वकल्पनायोग । श्रुते यया कयाचिद्वृत्त्या तद्बोधकत्वमात्रेणोपपन्नतया तयोस्तद्वाचकत्वकल्पने मानाभाव' इति तदपि न सम्यक् । यदि श्रुत्यन्तरे सदसच्छब्दयोर्मूर्तामूर्तपरतया प्रयोगमात्र स्यात्तदैव कल्पयितु शक्येतापि । न चैव। तादृशश्रुतिद्वयस्य मूर्तामूर्तविलक्षणपरतया ब्रह्मतमसो सदसद्विलक्षणत्वबोधकश्रुतिगतिप्रदर्शनपरत्व समर्थित प्राक् टीकाव्याख्यावसरे । तथा च श्रुत्यभिप्रेतार्थविरुद्धकथने तथैव तच्छ्रुतिविरोध ।

मूर्तं सदिति सम्प्रोक्तममूर्तमसदुच्यते ।

इति सम्प्रशब्दाभ्यामुच्यत इत्यनेन च तयो शक्तेरेव बोधितत्वेन मानाभावहेतोरसिद्धिश्च । प्रचुरप्रयोगाभावमात्रेण श्रुतिबोधितशक्त्यपलापेऽप्रसिद्धार्थकनानार्थोच्छेदप्रसङ्ग । द्वितीयश्रुत्यापि शक्तिर्वा निरूढलक्षणा वा सिद्ध्यति सत्पदस्य । श्रुत्या वाय्वन्तरिक्षान्यस्य सत्पदबोद्ध्यत्वविधानसामर्थ्यात् । लक्षणामात्रस्य विधानं विनापि पदान्तराणामिवास्यापि सम्भवेन तद्विधानवैयर्थ्यापत्ते । प्रथमवाक्येनैकवाक्यत्वसन्धाने तु शक्तिरेव सिद्ध्यति । तस्मात् युक्तमेवानयोर्यया कयाचिद्वृत्त्या बोधकत्वमिति । भवन्मत एव ब्रह्मान्येत्यध्याहारोऽसत्पदस्थल एव प्रसिद्धार्थपरित्यागेन लक्षणा च ।

(द्वै ग्रु) यदत्रोक्तम् 'अध्याहारतो लक्षणाया अजहल्लिरूढलक्षणयोर्जहल्लक्षणायाश्च जघन्यत्वात्' इति तदसङ्गतम्। जघन्यत्वं यत पश्चाद्भावित्वम्। तत्र पदशक्यार्थस्य प्रथममुपस्थिति। तत्र बाधाद्यवतारे तच्छक्यस्य चोपस्थितत्वात्तत्सम्बन्धरूपलक्षणाया उपस्थिति। तेनाप्यनिर्वाहे अश्रुतपदतद्वृत्त्यनुसन्धानरूपाध्याहारकल्पनेत्य स्यैव सर्वसिद्धत्वेनाध्याहारस्यैव परमजघन्यत्वात्। सत्तादात्म्यस्य सद्धटितत्वेपि वाच्यार्थस्य विशेष्यतयाऽप्रवेशेन जहल्लक्षणैव। असत्पदस्य लक्षणेति तु न युक्तम्। तस्य पदद्वयघटितत्वेन वाक्यरूपत्वात्। सत्पदस्य मतान्तर-रीत्या कथञ्चिदजहल्लक्षणावत्त्वेपि असत्पदस्य त्वद्रीत्या श्रुत्युक्तलक्षणाया अनादितात्पर्यविषयतया निरूढत्वेन त्वदुक्तलक्षणायाश्च स्वबुद्धिमात्रकल्पितत्वेनास्या एव जघन्यत्वम्।

यदपि लोकप्रसिद्धौ निर्भरकरणेन सदसत्पदयो श्रुत्युक्तार्थनिराकरण तदपि मन्दम्। तथात्वे तम पदस्य लौकिकवैदिकप्रयोगप्राचुर्येण प्रसिद्धतमस एवात्र बोध्यतापत्ते। न त्वविद्याया। तस्या तमोवत्तम इति गौण्यैव तत्पदबोद्धयत्वसम्भवे शक्तिकल्पने मानाभावात्। तस्य मूलाविद्योपादानकत्वस्य [1]त्वसिद्धत्वेपि घटशब्दस्य मृदीव तम शब्दस्याविद्याया प्रवृत्त्ययोग एव मुख्यया वृत्त्या। एव रज शब्दस्य लौकिकवैदिकप्रयोगप्राचुर्येण पासुशक्तत्वेन तत्परत्वमेव प्रसिद्धिश्रद्धालुना त्वयाऽभ्युपेयमिति 'रजासि लोका' इति या स्ववचनानु-सारेण रज पदस्य लोकपरत्वेन त्वदाचार्याणा व्याख्या सापि तवायुक्ता स्यात्।

यदपि असन्निषेधस्याप्रसक्तप्रतिषेधकत्वमाशङ्क्य समाधान 'सतो निषेधेन तस्यापातत प्राप्तिसम्भवात्' इति। तन्मन्दम्। प्रथमत सन्निषेधे कथञ्चिदेव सम्भाव्येत। प्रथमतोऽसत एव निषेधे कथ तदुत्तरभाविसन्निषेध तत्प्रापक। ब्रह्मान्यत्वेन सन्नास्तीतिनिषेधे रूपान्तरेण सत एव प्रसक्ति स्यात्। न तु सामान्यतोऽसत। दक्षिणेन न पश्यतीत्युक्तौ वामेन पश्यतीतिवत्। तथा चासत प्रसक्त्यसङ्गतिश्च। अपि च प्राप्तिरपि असत्तदानी' मासीदित्याकारा वक्तव्या। न तु रूपान्तरेण। रूपान्तरेण प्रसक्तस्य रूपान्तरेण निषेधस्य वैयर्थ्येनायुक्तत्वात्। तथा च तस्याऽऽहार्यत्वात्कथ श्रुतिरेतादृशनिर्दलपक्षनिराकरणाय प्रवर्तते। अत एवासत सत्त्वेन प्रतीतिनिराकरणा-वसरे गुरुचन्द्रिकायामुक्तं 'तद्धैक आहुरिति श्रुत्या नासत सत्त्वप्रतीतिरनूद्यते। तत्प्रतीतेराहार्यत्वेन तन्निरा-करणस्य श्रुत्या कर्तुमनुचितत्वात्। न ह्यय निर्वह्निर्वह्निमानित्याहेत्युक्त्वा सचेतसस्तन्निराकरणाय प्रवर्तन्ते-इति। न च सत्तादात्म्यशून्य आसीदिति ज्ञान कथमाहार्यरूपम्। आसीदित्यस्य सत्तादात्म्यवदित्यर्थकत्वाभा-वात्प्राक्कालसम्बन्धवदित्येतावन्मात्रार्थकत्वादिति बाच्यम्। सत्पदस्य त्रैकालिकनिषेधाप्रतियोग्यर्थकतया तत्ता-दात्म्यशून्यत्वेन भासमानस्य त्रैकालिकनिषेधप्रतियोगित्वेन भासमानतुल्यतया तत्र पूर्वकालसम्बन्धावगाहिधियोपि बह्न्यधिकरणत्वाभाववान्वह्निमानिति धिय इव आहार्यताया दुर्वारत्वात्। अन्यथाऽद्वैतचन्द्रिकोक्तमपि असत्य-प्रकालसम्बन्धावगाहिधिय आहार्यत्व दुरुपपाद स्यात्। किञ्चैतादृशमसत्तया श्रुतेस्तन्निषेधार्थं प्रवृत्तावसत सत्त्वेन प्रतीति श्रुत्यनुमतैव जातेति अद्वैतसिद्ध्यादीना तन्निराकरणाय प्रवृत्ताना दत्तजलाञ्जलित्व स्यात्। अपि च नो

1 सिद्धत्वेपि इति पाठेन भाव्यमिति भाति।

(द्वै. द्यु ) सदासीदित्यस्य तव मते ब्रह्मान्यसन्नास्तीत्यर्थकतया ब्रह्मान्यसन्नास्तीत्युक्तौ विशेषणसामर्थ्याद्ब्रह्मस्वरूपं सदस्तीत्येव बुद्धिरुदेति । न तु सत्तादात्म्यशून्यमस्तीति । सत्तादात्म्यवन्नास्तीति पूर्वमनिषिद्धत्वेन तर्हि सत्तादात्म्यशून्यस्यादिति बुद्धौ बीजविरहात् । सत्पदस्य सत्तादात्म्यवदर्थकत्वे प्रसिद्धार्थपरित्यागापत्त्या लक्षणाप्रसङ्गेनाविद्यायास्तादृश्या सत्त्वेन निषेधानुपपत्त्या रज प्रभृतेरनेनैव निषिद्धत्वापत्त्या पुनस्तन्निषेधवैयर्थ्यापत्तिभिया च परमार्थसत्त्वस्यैव त्वयाङ्गीकृतत्वात् ।

यदपि तमोन्यत्त्वेन सदभावोऽपि नो सदासीदितिश्रुत्यर्थ स्यात्तुल्ययुक्त्या । तथा च तमसो नानिर्वाच्यतासिद्धि स्यादित्याशङ्क्य 'तथाद्ध्याहारे मानाभावात्तम.पारमार्थिकताग्राहकप्रमाणाभावात्' इति तत दत्तोत्तरमेव ।

यदपि तत्सत्यताग्राहकप्रमाणाना तात्पर्यान्तराभिप्रायेण 'अधिकमग्रे वक्ष्याम' इति तन्निराकरणं तत्रैव भविष्यति ।

यदपि यत्त्वित्यादिनाऽनूद्य तदसदित्युक्त्वा आवश्यकत्वादित्यन्तेन समाधान तदयुक्तमेव । कालान्तरसदसन्निषेधसहितस्य कालान्तरेऽविद्यासत्त्वस्य तदनिर्वाच्यतासाधकत्वाभावेन साधकतासिद्ध्यर्थत्वे तदानीमित्यस्य वर्ण्यमानेपि यदीय श्रुतिरविद्यानिर्वाच्यत्वमेव मुख्यतया प्रतिपादयितु प्रवृत्ता तदा सृष्टिकालमादायाप्येतदुपपादनसम्भवेन प्रलयपर्यन्तानुधावनानौचित्यं तस्या । किञ्च नासदासीन्नो सदासीदित्यनन्तर तम आसीदित्युक्त्यैव तमसोऽनिर्वाच्यत्वसिद्धिसम्भवे रजआदिनिषेधकोत्तरवाक्यस्य सर्वस्यापि वैयर्थ्यापत्ते । यदि च प्रलयनिरूपणार्थमेव प्रवृत्ता तमोनिर्वाच्यतासिद्धिस्त्वार्थिकी तदा ब्रह्मान्यसदसन्निषेधयो सार्वदिकत्वेन विशिष्याऽदित एव तदुभयोक्तिरनौचिती । उभयोर्मुख्यार्थत्वे वाक्यभेद एव । अपि च ब्रह्मान्यसन्निषेधाधिकरणकाले विद्यमानस्य तमसो ब्रह्मात्मकत्वमेव कुतो न पर्यवस्यति । तत्सत्यताग्राहकप्रमाणान्तरानुग्रहोप्येव सति कृत स्यात् । तदनुसारेणैव सर्वं कल्पनीय स्यात् । किञ्च विशेषनिषेधस्य सामान्याभ्युपगमतात्पर्यसहितस्यैव लौकिकवैदिकप्रयोगेषु स्वरसत सिद्धस्याभ्युपगमे ब्रह्मान्यसतोऽसतश्च प्रलये निषेधे कालान्तरे तत्सत्त्वाभ्युपगमप्रसङ्ग । तत्त्यागे च वाक्यस्वारस्यभङ्ग एव । एवमसत एव प्रथमतो निषेधायोग । अमुख्यत्वात् । मन्मते तु पृथिव्यादीना सृष्टिकालेऽसत्त्वात्तत्स्वारस्यात्याग । एवमाकाशवाय्वादिक्रमेण पूर्वस्मात्पूर्वस्मादुत्तरोत्तरोत्पत्त्या प्रथमत एवासत्पदेन अन्तरिक्षवायुनिषेधोपपत्ति । तत्पदस्योभयसाधारणरूपावच्छिन्ने वा पृथग्वा शक्तिरित्यन्यदेतत् । इत्थञ्च सदसत्पदयोर्भवदुक्तार्थकत्वानुपपत्तौ भावाभावार्थकत्वस्यैव कथञ्चित्सम्भवदुक्तिकत्वेनानुसरणीयतया तत्र रजआदे पृथङ्निषेधानुपपत्तिरूपदूषण युक्तमेवेति सत्य चेत्यादिनावश्यकत्वादित्यन्तेन रज प्रभृते पृथक् निषेधसार्थक्यवर्णनमयुक्तमेव ।

तदानीमित्यस्य रजआदिनिषेध एवान्वय इति मतान्तरोत्थापनमप्ययुक्तम् । अनुयोगिसमर्पकपदाभावेन पूर्वभागस्याबोधकतापत्ते । न चाऽख्यातार्थाभावबोधने सप्तम्यन्तानुयोगिबोधकपदानपेक्षेति वाच्यम् । वैयर्थ्येत्याहृतिभयेन सामान्यत सत्त्वनिषेधस्य सदसतो कर्तुमशक्यतया प्रकृते कालविशेषबोधकपदस्यावश्यकत्वात् ।

(द्वै. द्यु) यदपि 'अत्र सदसत्पदयोर्भावाभावपरता मदभिप्रेतेति परोक्तिस्तु न श्रद्धेया । अनादेर्जीवेश-भेदादे प्रलयकाले सत्त्वाभ्युपगमेन तस्यासदनभिमतत्वात्' इति । तदप्यसारम् । भावरूपत्वेन व्यवह्रियमाणाया अप्यविद्याया वास्तवतद्रूपाभावेन भावाभावविलक्षणत्वरूपानिर्वचनीयत्ववदनादिजीवेशादिभेदादीनामपि तथा-त्वेनानिर्वचनीयत्ववत्तम.सत्त्वेपि भावनिषेधवदभावनिषेधस्यापि सम्भवात् । न च भावनिषेधोप्यनुपपन्नस्तमस एव सत्त्वादतो दृष्टान्तोऽप्यसम्मत इति वाच्यम् । तथात्वे प्रकृतवाक्येनैव तम सत्त्वप्रतीतेर्भावनिषेधोऽनुपपन्न इति पुरस्स्फूर्तिकदूषणमनुक्त्वा तद्वाक्याप्रतिपाद्यस्वाभ्युपगतजीवेशभेदसत्त्वेनाभावनिषेधानुपपत्तितात्पर्यकपङ्क्ते सन्दर्भा-शुद्धतापत्ते । न चासत्पदेनाभावस्यैव प्रथमं श्रुत्युपात्तत्वेन तत्रैव दूषणं सन्दर्भशुद्धम् । आदिपदेनाविद्यादेरपि गृहीतत्वेन भावनिषेधपक्षेऽप्यनुपपत्तेरुक्तत्वलाभान्न सन्दर्भाशुद्धिरिति वाच्यम् । एवमपि नेह नानेत्यादिश्रुतेरिव अस्या अपि श्रुतेर्भावाभावनिषेधपरत्वेपि व्याहत्यभावस्य भावाभावविलक्षणत्वस्य चानिर्वचनीयलक्षणतायाश्च टीकाव्याख्यानसमय एव समर्थितत्वेन तथैवोक्तश्रुतियोजनाया सदसत्पदयोर्योगेन प्रसिद्धभावाभावपरतामुपेत्याद्ध्या-हारलक्षणादिरूपक्लेश विना सम्भवेन त्वत्पूर्वाचार्याभिमतत्वे बाधकाभावेन त्वदुक्तेरेवाश्रद्धेयत्वात् ।

न च मिथ्यात्वश्रुतिरवान्तरार्थेऽनुपपत्तिज्ञानसहिता अखण्डब्रह्मणि पर्यवस्य तीति तत्र व्याहतिसत्त्वेऽपि न दोष इति वाच्यम् । तथात्वेऽवान्तरबोधविषयतया मिथ्यात्वासिद्धिप्रसङ्गात् । तद्वदस्या अप्यखण्डार्थताया वक्तुं शक्यत्वाच्च । माधवाचार्येणैतच्छ्रुतिव्याख्यानावसर एव स्वधाशब्दितमायासहितं एकं द्वितीयरहितमासीदिति द्वितीयाभावस्व धासाहित्ययो पारमार्थिकापारमार्थिकत्वप्रयुक्तव्याहत्यभावमभ्युपेत्य व्याख्यानाच्च । दुर्वद्वैतचन्द्रिकायामपि तथैवोपपादितत्वाच्च । न चास्य पक्षस्य परेणानुल्लिखितत्वम् । प्रत्युत माधवेन 'प्रलये कारणस्वरूपमाह ॥ नास-दिति ॥ निरुपाख्य नासीदित्यर्थ । सत् रूपविशिष्ट नो आसीदित्यर्थ । तथा च कारणमनिर्वाच्यमासीदित्यर्थ'। इत्येवोक्तम् । तथा च कथं तदनुक्तस्य दूषणमिति वाच्यम् । परानुक्तस्यापि तत्पक्षे सम्भावितस्य दूषणे बाधका-भावात् ।

माधवपक्षे सन्निषेधोपपत्ति प्रागेवाभिहिता । न च तन्मते कारणं सद्रूप नासीदित्यभिमतमिति वाच्यम् । तस्यार्थत्वेन कारणपदाद्ध्याहारे गौरवात् । भावाभावपरत्वेऽपि रजआदे पुनर्निषेधस्य गत्यन्तराभावे पूर्वोक्तार्थ-त्वादिना कुरुपाण्डवन्यायेन वा सम्भवेन तस्यापि बाधकत्वाभावात् । सैद्धान्तिकदूषणं तु श्रुत्यन्तरोक्तरीत्या सर्वस्याप्यवैयर्थ्येनार्थसम्भवे विवरणार्थकत्वादिकमयुक्तमित्याशयेनैवेति न तद्विरोधोऽपि ।

यदपि 'अविद्याया गुणत्रयात्मकत्वेन तत्सत्त्वे रज पदोपलक्षितगुणत्रयनिषेधानुपपत्तिर्भवद्व्याख्याने' इति दूषण तदसम्मतापरिज्ञानमूलम् । गुणत्रयस्यास्मन्मते प्रकृतिपरिणामत्वेन सृष्टिकाल एव [1]तदुपपत्तेस्तदभावस्यैव सम्मतसिद्धत्वात् । प्रकृतेस्तदुपादानत्वादेव तत्सत्त्वे गुणनिषेधानुपपत्तौ सर्वकार्यस्य त्वन्मते अविद्योपादानकत्वेन तत्सत्त्वे रजआदिशब्दोपात्तलोकादीना निषेधानुपपत्तिस्तवापि दुर्वारा स्यात् । अम्भ किमासीदित्यादेर्यथा न

1 तदुत्पत्तेस्तदभावस्यैव इति पाठेन भाव्यमिति भाति ।

(द्वै. द्यु) पौनरुक्त्यादि तथाऽरम्भणाधिकरणटीकायामेव सम्यग्व्याख्यातम् । तस्माद्यथाश्रुताद्वैतसिद्ध्यनुसारि-त्वदीयव्याख्यानमयुक्तमेव ।

नापि तट्टीकायामेव वस्तुतस्त्वित्यादिनाऽद्वैतचन्द्रिकाकृतोक्त गुरुचरणास्त्वित्यादिनाऽत्र त्वयोदाहृत व्याख्यानं युक्तम् । तम आसीदिति दूरस्थवाक्यस्थतमसोऽत्र नासदित्यादितात्पर्यविषयतया कर्तृत्वेनान्वये ब्रह्म-णोऽपि तथा कर्तृत्वेनान्वयप्रसङ्ग । विनिगमकाभावात् । सत्यताग्राहकप्रमाणतदभावकृतवैषम्यस्य निराकरिष्य-माणत्वात् ।

अपि च सदन्यदासीदसदन्यदासीदित्यर्थकत्वेन सदाद्यर्थस्योद्देश्यतापरिहाराय नसमासाद्याश्रयणे न असत् आसीत् नो सत्' इति प्रसिद्धपदपाठविरोध । स्वाभिमतसिद्धिमात्रेच्छया प्रसिद्धपदपरित्यागे पदपाठस्यैव वैयर्थ्यप्रसङ्ग । अन्यथोपनिषदोऽपि पदपाठप्रसङ्ग । [1]क्वचित्तत्परित्यागमकृत्वा पदान्तरमप्यङ्गीकृत्य व्याख्यानान्तर-करण तत्पौराणवाक्यादिना तादृशार्थाधिगतो सत्यामेव । न च प्रकृते प्रकृतवाक्यव्याख्यानरूपपुराणादिवाक्य भवदुक्तैकपद्यज्ञापकमस्ति । अन्यथा सर्वस्य स्वेच्छामात्रनियम्यतापातेन प्रकारान्तरेणापि श्रुत्यर्थसम्भवेन भवद-भिमतासिद्धिप्रसङ्ग ।

तथा हि ना सदा आसीदिति छेद । तथा च **तदानीं** प्रलये **सदा ना** सर्वकालेऽपि **यो ना** पुरुष न तु कदाचिदपि पुसामर्थ्यविधुर स आसीत् । ननु असदेवेदमग्र आसीदिति श्रुत्या असत **एव** कारणतया सत्त्व प्रतीयत इति श्रुतितात्पर्यभ्रममूलकामाशङ्का निरस्यति ॥ **नोऽसदासीदिति** ॥ श्रुतितात्पर्यभ्रम-प्राप्तनिरासकत्वेन व्याख्यान 'सलिलमासीदिति श्रुत्यर्थभ्रमप्राप्त निरस्यति । अम्भ इति' इत्यवतारितवतो वेदभाष्य-कृतोऽपि सम्मतम् । ननु रजआदिसर्वपदार्थनाशे तदात्मकदेहनाशात्कथ पुरुषस्याप्यवस्थानम् । स्वरूपेणावस्थान त्वसदादिसाम्यान्न विशिष्य वक्तु योग्यमित्यतो वा आह ॥ **नोऽसदिति** ॥ न उ इति छेद । तेन ओदिति प्रकृतिभावाभाव । असन्नेवासीदित्यर्थ । ननु तर्हि रजआदिकमासीत्किमित्यपेक्षायामाह ॥ **रज इत्यादि** ॥ स पुरुष क । किं जीव इत्यत आह ॥ **आनीदवातमिति** ॥ वातपदोपलक्षितपञ्चमहाभूतविकृतदेहरहितं ब्रह्मै-वासीदित्यर्थ. । तेन ब्रह्मैव पूर्वोक्त. पुरुष इत्यर्थ । रजआदीनामभावे उपादानकारणाभावात्कथ जगदुत्पत्तिरित्यत आह ॥ **तम आसीदित्यादि** ॥

एवं ना आस दासीत् न असत् आसीदिति छेद । दासवन्तो भृत्यवन्तो ब्रह्मादयो दासिनस्तेषा प्रेरकत्वात **दासीत्** रश्मिप्रेरक इति यथा । एतादृशो **नः** अस्माकं रक्षकत्वादिना अस्मत्सम्बन्धी **ना** पुरुष **आस** न पर किञ्चनासेत्यत्रेव भूभावाभाव सहनीय. । **रजः** लोकादिक **असत्** ए परमात्म-स्वरूपे सदपि **नो आसीत्** तदिच्छयैवेति । अन्यत्समानमिति । अत्र स्वराद्यनुपपत्तिर्बाहुलिकत्वादिना परिहर्तुं शक्यत एव स्वाभ्युपगतनिर्वाहाय तव प्रसिद्धपदपरित्यागवत् । एव व्याख्यातुरपि स्वाभ्युपगतनिर्वाहायोक्तरीत्य-

---

[1] क्वचित्तत्परित्यागं कृत्वा इति पाठेन भाव्यमिति भाति

(द्वै धु) ङ्गीकारे बाधकाभावस्य त्वन्न्यायेनैव सिद्धत्वादिति । ननु न मया स्वाभ्युपगतनिर्वाहाय प्रसिद्धपदपाठस्त्यज्यते । किं तु 'नसती नासती माया' इत्यादिवाक्यान्तरानुरोधेनेत्थ व्याख्यायत इति चेदेवमपि तत्स्मृतेरर्थलब्धार्थानुवादित्वसम्भवेन पदैक्यज्ञापने अन्यथासिद्धत्वात् । स्मृतिश्रद्धाया 'न सत्र चासन् सदसन् साक्षात्सदसत पर.' इति स्मृत्यनुरोधात्तमोवाक्यापेक्षया ब्रह्मवाक्यस्य सन्निहितत्वेन तदैकवाक्यतया ब्रह्मण एव सदसद्वैलक्ष्यण्यमापद्येत ।

एतेन 'आग्नेयं चतुर्धा करोति, पुरोडाश चतुर्धा करोति, इनिवदुपमहारेणैव समीहितसिद्धि' इति निरस्तम् । ब्रह्मणोऽपि तथात्वापत्तेर्दुर्वारत्वात् । सत्त्वग्राहकप्रमाणकृतवैषम्य त्वयुक्तमेव । तमस्यपि साम्यात् । न च तेषा व्यावहारिकसत्तावगाहित्वाद्वैषम्यमिनि वाच्यम् । प्रत्यक्षेणानिर्वचनीयत्वस्य कुत्रापि निश्चयायोगेनानुमानादीना तर्काप्रतिष्ठानादित्युक्तरीत्या व्यवस्थापकत्वाभावेनागमेनैव क्वचिदनिर्वचनीयता गृहीत्वोक्तव्यावहारिकत्वादिव्यवस्थाया कल्पनीयाया जगदनिर्वचनीयमनृतमित्यादीना सावकाशनाया वक्ष्यमाणतया लक्षणप्रतिपादकत्वादस्या एव श्रुते प्रथमतोऽनिर्वचनीयत्वव्यवस्थापकत्वे वक्तव्ये ब्रह्मण्यपि तत्प्रसङ्गापत्तिरूपबाधकस्यानुसन्धाने ब्रह्माविद्ययो सत्त्वग्राहकप्रमाणतौल्ये अस्या एवानिर्वचनीयत्वमस्य नेति निश्चयदौर्घट्येन व्यावहारिकसत्त्वादिव्यवस्थाया इतरेतराश्रयादिपराहतत्वात् । प्रमाणतौल्यं त्वग्रे दर्शयिष्यते ।

अपि चासदन्यस्य सदन्यत्वैक्यलाभेऽनिर्वचनीयसिद्धि स्यात् । न च तत्सम्भवति । पृथक् क्रियासम्बन्धेन भेदस्यैवावगते । अन्यथा पृथक् क्रियापदसम्बन्धानुपपत्ते । न हि नीलघटोस्तीत्यर्थे नीलोस्ति घटोऽस्तीति प्रेक्षावान् प्रयुङ्क्ते । प्रत्युतैकवस्तुबोधनाय तथा प्रयोक्ताऽपहसनीयो भवति । तथा चासञ्जातविरोध्युपक्रमबलाद्भेदस्यैवावगतेरुपसंहारेणापि तत्सिद्धि कथं स्यात् । आग्नेयवाक्ये च तयोर्नैरन्तर्यापन्नत्वेन विरुद्धरूपेणानुपस्थापकतया चोपसहारबलेनाग्नेयपुरोडाशयोरैक्यावगतावप्युक्तरीत्या क्रियाद्वयसम्बन्धबलात्सद्भिन्नत्वासद्भिन्नत्वरूपविरुद्धधर्माभ्यामुपस्थितयोर्भेदस्यैव झडिति प्रतिभानात् । न ह्यनिर्वचनीयसिद्धे प्राक् तयोरविरुद्धत्वग्राहक प्रमाणम् । अनेनैवाविरुद्धत्वसिद्ध्यपेक्षाया स्फुट इतरेतराश्रय । इत्थ चात्र वस्तुद्वयभेदावगतौ उपसहारस्थब्रह्मतमोवाक्यद्वयानुरोधेन यथासङ्ख्यन्यायेन ब्रह्मण. सत्त्वमविद्याया असत्त्व प्रतीयेत । न तु सदसद्विलक्षणत्व शाब्दप्रमात्वं वेति व्यर्थस्ते प्रयास ।

यदपि 'नशब्देनाय समास उक्त । प्रसिद्ध्यतिक्रमापेक्षणवैलक्षण्यानुसरणस्यापि युक्तत्वाच्च' इत्यभिहितम् । तदसत् । प्रसिद्ध्यतिक्रमो हि न तावत्पलाण्डुभक्षणवत्स्वातन्त्र्येण पापसाधनम् । किं तु बहुप्रसिद्धविषयस्यैव प्रथमं बुद्धिगोचरत्वान्निर्निमित्त तत्परित्यज्यार्थान्तरानुसरण व्याख्यातुरज्ञानादिकमनुमापयति । तत्र सदसत्पदयो पारमार्थिकापारमार्थिकयो प्रसिद्धिवत् नासदित्यादौ भिन्नपदत्व बहुप्रसिद्धतया प्रागेव बुद्धिस्थम् । उत्तरत्र सर्वत्र निषेधार्थकताया नोनञादीना विद्यमानत्वात्तत्प्रायपठितत्वेन नो न इत्यादीनामपि प्रथम श्रूयमाणाना निषेधार्थकत्वमेव बुद्धिस्थम् । एव नो इत्यस्य निषेधार्थकत्वमेव बहुशो दृष्टम् । न

(द्वै. द्यु ) तु भेदार्थकत्वमिति तदेवादौ बुद्धिस्थम् । तथा च तत्सर्वपरित्यागस्य कथं युक्तता । सदसच्छब्दे प्रसिद्धार्थपरित्यागस्य कथमयुक्तता । प्रत्युत 'त्यजेदेकं कुलस्यार्थे' इति न्यायेन बहुपरित्यागापेक्षया एतत्परित्याग एव श्रेयान् । तच्छास्त्रीयाभिधानरूपवाक्यानुसारेण तच्छास्त्रीयवाक्यार्थस्य वर्णनीयतया व्याकरणे गुणवृद्ध्यादिपदै स्वरविशेषाणामिव वेदशास्त्रे उक्तश्रुतिप्रसिद्ध्या पञ्चमहाभूतानामेव प्रतिपाद्यत्वस्य वक्तु युक्तत्वाच्च । अन्यथा प्रसिद्धिमात्रनिर्भरे 'प्रकेत सलिल सर्वमा इदम्' इत्यत्र 'षद्लृ गतौ तस्मादिलच्प्रत्यय ' इत्यादिरीत्या सलिलपदस्याप्रसिद्धार्थवर्णनमयुक्तं स्यात् । न च सर्वकार्यलयकाले तमस जलभूताभेदो बाधित इति तत्र प्रसिद्धपरित्याग इति वाच्यम् । इहापि सदन्यस्मिन् आसीदिति क्रियार्थबाध कुतो न पश्यति । परमार्थभिन्ने कालसम्बन्ध प्रतीयते । स चानिर्वचनीयवादिना न बाधित इति तु न वाच्यम् । अनिर्वचनीयसिद्धे प्राक् पारमार्थिकभेदस्य कालसम्बन्धविरुद्धत्वेन सर्वलोकावगतत्वेन तदवच्छिन्ने तदन्वयस्य योग्यताग्रहविरहात् । अन्यथा सलिलपदमुख्यार्थजलाभेदान्वयोपि स्यात् । अविशेषात् । किं चासदस्ति असदासीदसद्भविष्यतीत्यादिव्यवहाराभावात्तथा व्यवहर्तरि भ्रान्तत्वव्यवहाराच्च कालसम्बन्धप्रयोजकरूपावच्छिन्ने वा कालसम्बन्धे वा सत्पदस्य लोकप्रसिद्धिरवश्य वाच्या । तथा चात्रत्यसत्पदस्य तादृशार्थकत्वे तादृशसदन्यस्मिन्नन्वयप्रयोजकरूपविरहनिश्चयान्न आसीदिति क्रियान्वय । यदि च तदन्यस्वनिरुच्यमानपारमार्थिकत्वावच्छिन्नवाची सच्छब्द । तादृशसदन्यत्व च न कालसम्बन्धविरोधीत्युच्यते । तदा सच्छब्दस्य प्रसिद्धार्थपरित्यागो दुर्वार एव । एव सच्छब्दस्यासीदिति क्रियायाश्चैकधातुजत्वात्स धातुर्यदि पारमार्थिकसत्तावाची तदा आसीदित्यनेन कालसम्बन्धबोधने प्रसिद्धत्याग एव । यदि कालसम्बन्धवाची तदा तद्धातुनिष्पन्नशब्दस्याबाध्यत्वावच्छिन्नार्थकत्वे प्रसिद्धार्थत्याग एव । अबाध्यविलक्षणे कालसम्बन्धावगाहिबोधस्य प्रागाहार्यत्वमुपपादितमेवेति तादृशबोधोऽपि न घटत एव ।

एतेन 'सद्विलक्षणे कालसम्बन्धबोधनमात्रेणानिर्वचनीयसिद्धि ' इति परास्तम् । शून्यवादिनाऽपि बाध्यत्वे सति कालसम्बन्धस्य जगति स्वीकृतत्वेन तन्मात्रस्य त्वन्मतेऽनिर्वचनीयत्वरूपत्वाभावात् । तन्मताविशेषेऽपि तथात्वमेवानिर्वचनीयत्वमित्यङ्गीकारस्य पूर्वमेव दूषितत्वाच्च । नासदासीदित्यशंस्यैयर्थ्याच्च । न च सद्विलक्षणस्य कथ कालसम्बन्ध इति शङ्कानिरासकत्वेन तत्सार्थक्यमिति वाच्यम् । असदन्यस्य सत्त्वोक्तिमात्रेण तन्निरासायोगात् । उक्तवाक्यद्वयबलेन सदन्यस्मिन्नसदन्यत्वलाभात्तन्मात्रेण कालसम्बन्धाभावशङ्कानिरास इति तु न वाच्यम् । सदसदिति अनाहार्यलोकव्यवहाराभावात्सत्त्वाच्छिन्नभेदरूपासत्त्वावच्छिन्नभेदसत्त्वावच्छिन्नभेदयोर्विरुद्धत्वग्रहेणैकत्र तयोर्ज्ञातुमशक्यत्वात् । न चासत्त्वं सत्तादात्म्यशून्यत्वमेव । न तु सद्भेद । तथा च तादृशासद्भेद सद्भिन्ने न लौकिकैर्विरुद्धत्वेनावगत इति वाच्यम् । तर्ह्यत्रत्यासत्पदस्य तादृशासद्बोधकत्व स्वघटकसत्पदस्य पूर्वोक्तरीत्या लक्षणया वाक्यलक्षणापक्षेऽसदिति समुदायस्य वा लक्षणयैव निर्वाह्यमिति सदसत्पदयो प्रसिद्धार्थत्यागो दुर्वार एव । एव सदन्यस्य कथ कालसम्बन्ध इति शङ्कायास्तयोर्विरुद्धत्वग्रहवत एव सम्भवेन तद्बीजभूतविरोधमनिराकृत्य तत्तुल्यतया सर्वलोकावगतासदन्यत्वोक्तिमात्रेण तच्छङ्कानिरासासम्भवाच्च । उत्तरवाक्योत्थिततच्छङ्कानिरासकत्वस्य पूर्ववाक्येऽनुचितत्वाच्च । 'असन्न भवतीति व्युत्पत्त्या इह ब्रह्मण उद्देश्यत्वाविरोधात्' इति वाक्ये ब्रह्मण इति

(द्वै सि) न लग्नम्। तस्मादृश्यत्वे नमसोऽनिर्वचनीयत्वसिद्धौ बीजाभावात्। एवं 'सद्विलक्षणस्य कथं कालसम्बन्ध' इत्याशङ्कापरिहारकन्यायोगाच्च। न ह्यन्यस्यासद्विलक्षणत्वेऽन्यस्य कालसम्बन्धः सिद्ध्यतीति। एवं त्वदुक्तरीतौ स्वग्रन्थे त्वदुक्तः नञः पर्युदासपक्षे सदसद्विलक्षणत्वरूपानिर्वचनीयत्वं शाब्दमित्यप्ययुक्तं चेति दिक्।

तस्मात्परामिमताथानामयुक्तत्वादाचार्योक्त टीकाकृदुपपादित एव श्रुत्यर्थः महद्भिरादरणीय इति स्थितम्॥

(गु टि) अर्थान्तरमावश्यकमेवेति॥ अपौरुषेयत्वेन निर्दोषतया सर्वथा निर्विषयत्वलक्षणाप्रामाण्यस्य वक्तुमशक्यत्वादिति भावः। तत्रेत्यत्र पूर्वमत इति शेषः।

श्रुतिपुराणादिगतानिर्वाच्यादिशब्दानामनिर्वाच्यबोधकत्वाभावस्य स्मृत्या समर्थनम्

(टी) ननु श्रुतिपुराणादिषु प्रपञ्चस्यानिर्वचनीयत्वमुच्यते। अचिन्त्यत्वमतर्क्यत्वमज्ञेयत्वं च। न च तत्र चिन्ताद्यविषयत्वमेवार्थः। तथा सति प्रमाणानां निर्विषयताऽऽपत्तेः। अतस्सदादिप्रकारैरचिन्त्यत्वाद्येव तदर्थः। किं च प्रपञ्चोऽनृतोऽसन्नसत्य इत्यपि सन्ति वाक्यानि। न चासत्त्वमेव तदर्थः। तथात्वे प्रतीतिविरोधात्। अतस्तान्यनिर्वचनीयवचनानि। तत्कथमनिर्वचनीयं नागमो वक्तीति द्वितीयपक्षनिरासाय तद्वचनार्थं सोपपत्तिकया स्मृत्यैव दर्शयति

अद्भुतत्वादनिर्वाच्यं ब्रह्म चिच्चेत्यमेव च।

अद्भुतत्वादाश्चर्यत्वादेव चेत्यमनिर्वाच्यमुच्यते। न तु सदादिप्रकारैर्निर्वक्तुमशक्यत्वात्। कुतः। न केवलं चेत्यमनिर्वाच्यमुच्यते। किं तु, ब्रह्म तदितरचेतनश्च। न च ब्रह्मादेरनिर्वाच्यताऽङ्गीकारार्हा। अतस्तत्र यथाऽद्भुतत्वादेव सा व्याख्येया तथा चेत्यस्यापि। प्रकरणात्।

अचिन्त्यं तत एवैतत् ।

एतत् ब्रह्म चिच्चेत्यं च। ततः अद्भुतत्वादेव। अचिन्त्यमुच्यते। न तु सदादिप्रकारैर्मनोवृत्त्यविषयत्वात्।

अतर्क्याज्ञेयमेव च।

तत इति वर्तते। तेनैवकारस्य सम्बन्धः। अतर्क्यं च तदज्ञेयं चातर्क्याज्ञेयम्। ततः अद्भुतत्वादेव। न तु सदादिप्रकारैरनुमातुं प्रत्यक्षेण वा ज्ञातुमशक्यत्वात्। मनोवृत्तेः प्रत्यक्षत्वेपि बाह्यान्तरत्वभेदेन पृथगुपादानम्।

(वि टि)॥ प्रतीतिविरोधादिति॥ अपरोक्षप्रतीतिविषयस्य सत्त्वनियमादिति भावः॥ अनिर्वचनीयवचनानीति॥ अङ्गीकार्याणीति शेषः॥ द्वितीयपक्षनिरासायेति॥ उतानिर्वचनीयमेतदित्यादिरूप इति द्वितीयपक्षनिरासायेत्यर्थः॥ सोपपत्तिकयेति॥ अद्भुतत्वोपपत्तिसहितयेत्यर्थः। स्मृत्यैवेत्येवकारेणाऽधुनिकास-

(वि टि.) दाचुदितव्याख्यानवदनादरणीयता निराचष्टे ॥ **आश्चर्यत्वादेवेति** ॥ प्रमाणानुभवाभ्या प्रागपरिचिताशेषवत्तया विशिष्याऽऽख्यातुमशक्यत्वादेवेत्यर्थ । ननु स्मृत्याप्यनिर्वचनीयत्वेऽद्भुतत्वस्य हेतूकरणात्कथं तस्यानिर्वाच्यशब्दव्याख्यानरूपत्वमित्यत आह ॥ **अनिर्वचनीयमुच्यत इति** ॥ न चास्या स्मृतेरनिर्वचनीयशब्दव्याख्यानरूपत्वेपि कि मानमिति वाच्यम् । अद्भुतत्वरूपधर्मस्य ब्रह्मचित्साधारण्येनोपपादनस्यैव मानत्वादिति भाव । तथा च श्रुतिपुराणाऽऽदिगतानिर्वाच्यशब्दस्य ब्रह्मणि चिति चेत्ये च प्रवृत्तावद्भुतत्वमेव प्रवृत्तिनिमित्तम् । न तु पररीत्या सत्त्वादिप्रकारैर्दुर्वचत्वम् । मानाभावात् । किञ्च सत्त्वादिधर्मखण्डनद्वारा अनिर्वाच्यत्वस्य ब्रह्मचित्साधारणतया चेत्यमेवानिर्वचनीयमिति पराभिप्रेतार्थासिद्धिप्रसङ्ग इति भाव ॥ **न त्विति** ॥ प्रतिषिद्धमेवार्थं विवरीतुमाकाङ्क्षामुत्थापयति ॥ **कुत इति** ॥ अत्र यत इनि शेष ॥ **न चेति** ॥ न च ब्रह्मणोपि सदादिप्रकारैर्निर्वक्तुमशक्यत्वेनानिर्वाच्यत्वाङ्गीकारे परस्य किमनिष्टमिति वाच्यम् । परेणैवविधप्रपञ्चानिर्वचनीयत्वस्य कुलधर्मत्वेनाङ्गीकृतस्य बाध्यत्वव्याप्यत्वेनैवाङ्गीकृतत्वात्तादृशानिर्वाच्यत्वस्याबाध्ये ब्रह्मणि स्वीकर्तुमशक्यत्वादिति भाव ॥ **अत इति** ॥ यत उक्तरीत्या ब्रह्मणि श्रुता अनिर्वाच्यता सत्त्वादिप्रकारैर्निर्वक्तुमशक्यत्वरूपा असम्भाविनी अत इत्यर्थ । यद्यपि श्रुतिपुराणादिबलाच्चेत्यस्यैव परोऽनिर्वाच्यत्वं वदतीति तद्विघटनाय तत्रैवानिर्वाच्यशब्दप्रवृत्तौ निमित्तकथनार्थं स्मृतिरुदाहर्तव्या तथापि ब्रह्मचित्साधारण्येन तदुदाहरण परस्यात्यन्तानिष्टप्रसङ्गज्ञापनायेति ध्येयम् । ब्रह्मचितोऽनिर्वाच्यशब्दस्याद्भुतत्वपुरस्कारेण प्रवृत्तावपि तस्य चेत्ये प्रवृत्ति सदादिप्रकारैर्निर्वक्तुमशक्यत्वपुरस्कारेणेति कि न स्यादित्यत आह ॥ **प्रकरणादिति** ॥ ब्रह्मचित्साधारणानिर्वाच्यशब्दार्थनिरूपणपरैकश्रुत्युपात्तानिर्वचनीयशब्दस्य भिन्नार्थत्वाश्रयणायोगात् **चिच्चेत्यमेव चेति** चशब्दानुपपत्तेश्चेति भाव । नन्वतर्क्याज्ञेयमिति विशिष्टशब्दस्याद्भुतत्वं प्रवृत्तिनिमित्ततयोच्यत इति भ्रान्तिनिरासायाह ॥ **अतर्क्यं च तदज्ञेयं चेति** ॥ यद्यपि विशेषणं विशेष्येण बहुलमिति विशेषणवाचिशब्दस्य विशेष्यवाचिशब्देनैव समास उच्यते तथापि बहुलग्रहणाद्विशेषणवाचिनोरपि समासोपपत्तिरिति ध्येयम् । अत्र तर्कशब्देनानुमानमभिप्रेत्याह ॥ **अनुमातुमिति** ॥ ननु चिन्ताज्ञानयोरुभयोरपि प्रत्यक्षत्वादज्ञेयमित्यनेनैव विवक्षितार्थलाभात्स्मृतावचिन्त्यमज्ञेयमिति पृथगुपादान कथमित्यत आह ॥ **मनोवृत्तेरिति** ॥ चिन्ताख्यमन परिणामस्येत्यर्थ ॥ **बाह्यान्तरत्वभेदेनेति** ॥ बाह्यान्तरकरणजन्यत्वरूपविशेषेणेत्यर्थ । यद्यपि हरिं चिन्तयामि, हरिं स्मरामि, इत्यनुभवाच्चिन्ताया न साक्षात्कारत्व तथापि संस्कारप्रत्यासत्तिकमनोरूपेन्द्रियजन्यत्वेन सामान्यलक्षणादिजन्यज्ञानवत्साक्षात्कारत्व दुर्वारम् । अन्यथा यथार्थचिन्ताया क्लृप्तप्रमाणफलत्वाभावेन तत्कारणस्य प्रमाणान्तरत्वापत्ति । साक्षात्कारत्वाननुभवस्तु ज्ञानलक्षणादिप्रत्यासत्तिजन्य ज्ञान इवोपपन्न इति भाव ।

(रा टि) ॥ **द्वितीयपक्षेति** ॥ **उतानिर्वचनीयमेत**दिति प्राग्विकल्पितपक्षेत्यर्थ । **अचिन्त्यमित्यनेना**ज्ञेयमित्यस्य गतार्थत्वमाशङ्क्य निराह ॥ **मनोवृत्तेरिति** ॥

(वे टि) ॥ **तान्यनिर्वचनीयवचनानीति** ॥ अनृत ऋतविविक्त. असन् सद्विविक्त असत्य सत्यविविक्त इत्यर्थ । **द्वितीयपक्षनिरासायेति** ॥ **उतानिर्वचनीयमेतदित्यादी**रूप इति द्वितीयपक्षनिरासायेत्यर्थ· ॥ **अनि-**

(वे टि) वाच्यताऽङ्गीकारार्हेति ॥ अप सिद्धान्तादिति भाव ॥ मनोवृत्त्यविषयत्वादिति ॥ मन करणकवृत्त्य विषयत्वादित्यर्थ । नन्वज्ञेयमित्युक्त्याऽचिन्त्यमित्येतद्गतार्थमित्यत आह ॥ मनोवृत्तेरिति ॥

(द्वै द्यु) ॥ द्वितीयपक्षेति ॥ न च भावाभावविलक्षणमिति मूलावतारिकाग्रन्थे विकल्पितद्वितीय पक्षेत्यर्थ ॥ सोपपत्तिकयेति ॥ ब्रह्मविद्ग्रहणेन स्मृतावुपपत्ति सूचिता । प्रकटीकरोति च तद्व्याख्याया स्वयमेवेति ध्येयम् । अज्ञेयपदाचिन्त्यपदयोरर्थभेद प्रकटयति ॥ मनोवृत्तेरिति ॥

(गु टि) ॥ द्वितीयपक्षनिगमायेति ॥ तत्तानिर्वचनीयमिति सावकाशागम इति द्वितीयपक्षेत्यर्थ ॥ अनिर्वचनीयताऽङ्गीकारार्हेति ॥ तथा सति तस्य परमार्थत्वेनाङ्गीकृत त्वेनापसिद्धान्त इति भाव । नन्वज्ञेयमित्यनेन प्रत्यक्षाज्ञेयत्वे उक्ते तदन्तर्गतमनोवृत्त्यविषयत्वस्यापि लब्धत्वेन अचिन्त्यमिति पृथक्कदुक्तिरयुक्तेत्यत पृथक्कदुक्तिमुपपादयति ॥ मनोवृत्तेरिति ॥

ब्रह्मातिरिक्तप्रपञ्चानृतत्वादिप्रतिपादकश्रुतिवचनाना स्मृत्या अर्थनिरूपणम्

(टी) अस्त्वेवं यत्र ब्रह्मणा महानिर्वाच्यत्वादि प्रपञ्चस्योच्यते । यत्र तु ब्रह्मैवर्तमन्यदनृतमित्याद्युक्तिः तत्र कथमित्यत आह

ऋ गताविति धातोस्तु पूर्वावगतवत्सदा ।
स्थितेर्ब्रह्मर्तमित्युक्तमनृतं परिणामतः ॥
प्रकृतिप्राकृतं प्रोक्तं . ।

॥ धातोरिति ॥ धातुव्याख्यानात् । गत्यर्थानामवगत्यर्थत्वेन निष्ठाप्रत्ययस्य भूतार्थत्वेन तस्य च विशेषानुक्त्या अनादितालाभे सति ऋतमनादितोऽवगतमित्युक्त भवति । न च परिणामित्वे अस्यैव पूर्वावगतत्व मुख्यतो युज्यत इति पूर्वावगतवत्सदा स्थितिरुक्ता भवति । प्रकृतिश्च प्राकृतं च प्रकृतिप्राकृतम् । तुशब्दोऽवधारणे । ततश्च परिणामित्वापरिणामित्वाभ्यामेव ब्रह्मजगती ऋतानृते 'तदेवर्तम्' 'अनृतेन हि प्रत्यूढाः' इत्यादौ प्रोक्ते । न तु सत्त्वासत्त्वाभ्यामित्युक्त भवति ।

असत्तदशुभत्वतः ।

ससाररूपत्वेनाशुभत्वत एव । तथा परमानन्दरूपत्वेन शुभत्वात् ब्रह्म सत्प्रोक्तमित्यपि ज्ञातव्यम् ।

असतां बुद्धिगम्यत्वादसत्यमिति चोच्यते ॥

एवं सतां बुद्धिगम्यत्वाद्ब्रह्म सत्यमित्युच्यत इत्यपि द्रष्टव्यम् ।

प्रकृत्यादि सतामपि बुद्धिगम्य । किं विशिष्याभिधीयते असतामिति नियमाभिप्रायेणेति भावेन सदसद्विवेकमाह

(टी.) नियमेन बहिश्चित्तास्तेसन्तो ब्रह्मणि स्थिताः ।

तेसन्त इत्यत्राकारप्रश्लेषभावाभावाभ्यां यच्छब्दाध्याहारेण च द्वे वाक्ये द्रष्टव्ये । ब्रह्मणि स्थितास्तन्निष्ठबुद्धयः ।

(वि टि.) उच्यत इत्यस्यानन्तरं तत्र वाक्य इति शेष ॥ गत्यर्थानामिति ॥ भुजोऽनवन इत्यादिज्ञापकाद्धातूनामनेकार्थत्वे सिद्धे ज्ञानरूपविशेषार्थत्वस्यापि 'ये गत्यर्थास्ते ज्ञानार्था' इत्यभियुक्तव्याख्यानेन सिद्धेरिति भाव । ननु पूर्वावगतवत्स्थितिमात्रस्येतरसाधारणत्वात्कथ ऋतमित्यनेन ब्रह्ममात्रोक्तिरित्यत आह ॥ तस्य चेति ॥ भूतकालस्य चेत्यर्थ ॥ विशेषानुक्त्या ॥ अवध्यनुक्त्या । ननु ऋतपदस्योक्तरीत्यात्वनादितोऽवगतमित्यर्थ । तथापि पूर्वावगतवत्सदा स्थितिरपि तस्यार्थ इति कथं स्मृत्योच्यते । कथञ्च पूर्वावगतवत्सदा स्थितिर्ब्रह्मासाधारणी । अनादिप्रकृत्यादिसाधारण्यादित्याशङ्क्याह ॥ न चेति ॥ न च युज्यत इति सम्बन्ध । इतिशब्दो हेतौ । यस्मात्प्रकृत्यादिवद्ब्रह्मण परिणामित्वे परिणामपरिणामिनोरभेदाद्ब्रह्मण एवानादितोऽवगतत्व मुख्यतो न युज्यते, यतश्चानादितोऽवगतत्व ब्रह्मणीव प्रकृत्यादौ न मुख्य तस्माद्ब्रह्मण एव सदा स्थितिस्तदर्थत्वेन स्मृत्योक्तेति भाव । ननु प्रकृतिप्राकृतमित्यत्र न तावदितरेतराश्रयो द्वन्द्व । द्विवचनापत्ते । नापि समाहार । यत्रैकवद्भावो विशेषविहितस्तत्रैव समाहारात् । नापि तत्पुरुष । समानाधिकरणस्य प्रकृतिप्राकृतयोर्भेदेनासम्भवात् । समानाधिकरणतत्पुरुषस्याभेदार्थत्वनियमात । नाप्यसमानाधिकरणतत्पुरुष । तदर्थस्य प्रकृतिसम्बन्धरूपस्य बोधने प्रयोजनाभावादित्याशङ्क्याह ॥ प्रकृतिश्चेति ॥ समाहारद्वन्द्व एवाभिमत । न चैकवद्भावानुपपत्ति । सर्वो द्वन्द्वो विभाषयैकवद्भवतीति स्मरणादिति भाव ॥ तुशब्दस्त्विति ॥ ऋ गताविति धातोस्त्विति तुशब्द इत्यर्थ । पदार्थमुक्त्वा वाक्यार्थमाह ॥ ततश्चेति ॥ नन्वनया स्मृत्या किंवाक्यगतऋतानृतशब्दयोर्व्याख्या कृतेत्यत आह ॥ तदेवर्तमिति ॥ व्याख्येयत्वेन क्रमप्राप्तस्य श्रुत्यादिगतासच्छब्दस्य व्याख्यानरूपा स्मृतिं व्याचष्टे ॥ संसाररूपत्वेनेति ॥ इत्यपि ज्ञातव्यमिति ॥

सदानन्दस्वरूपत्वाच्छुतत्वाद्ब्रह्म सत्स्मृतम् ॥

इत्यादेरिति भाव । श्रुत्यादिगतासत्यशब्दव्याख्यानरूपा स्मृतिं व्याख्यातप्रायत्वान्न व्याचख्याविति ज्ञातव्यम् ॥ एवमिति ॥

सताञ्च बुद्धिगम्यत्वाद्ब्रह्म सत्यमुदाहृतम् ।

इत्यादेरिति भाव । ननु सदसद्बुद्धिगम्यत्वमात्रस्य ब्रह्मणि प्रकृत्यादावविशेषात्सद्बुद्धिगम्यत्वेन ब्रह्मैव सत्य असद्बुद्धिविषयत्वेन प्रकृत्यादिकमसत्यमिति विशिष्याभिधाने किं कारणमिति पृच्छति ॥ प्रकृत्यादीति ॥ प्रायेण सद्बुद्धिविषयत्व सत्यत्वम् । असद्बुद्धिविषयत्वञ्चासत्यत्वमित्यभिप्रेत्य तयो सदसच्छब्दार्थघटितमूर्तित्वेन तन्निरूपणाधीननिरूपणत्वात्सदसच्छब्दार्थौ विवेचयतीत्याह ॥ नियमेति ॥ नियमेन बहिश्चित्तानां ब्रह्म-

(वि टि.) निष्ठत्वमेवानुपपन्नम् । तथा चापार्थकमिदं वाक्यमित्यत आह ॥ तेसन्त इत्यत्रेति ॥ द्वे वाक्ये इति ॥ 'नियमेन ये बहिश्चित्तास्तेऽसन्त परिकीर्तिता । नियमेन ये ब्रह्मणि स्थितास्ते तु सन्त' इत्यावृत्त्या द्वे वाक्ये द्रष्टव्ये इत्यर्थ ।

(ग टि) ऋवर्णमात्रस्य धातुत्वादाह ॥ धातोरिरितीति ॥ अस्यैवेति ॥ ब्रह्मण इत्यर्थ । पूर्वावगतवत्सदा स्थितेरिति फलितार्थोक्तिरिति भावेनाह ॥ इति पूर्वावगतवदित्यादि । द्वन्द्वैकवद्भाव इत्याह ॥ प्रकृतिश्चेति ॥ सर्वो द्वन्द्वो विभाषयैकवद्भवतीति युक्तेरिति भाव । तुशब्द स्थितेरित्यनेन परिणामत इत्यनेन वा अन्वीयत इति भावेनावधारणार्थं व्यनक्ति ॥ ततश्चेत्यादिना ॥ अवधारणार्थस्यैवमन्वये सतीत्यर्थ । शङ्कते प्रकृत्यादि सतामपीत्यादि ॥ नियमेनेत्यादि तूत्तर ॥ द्वे वाक्ये इति ॥ नियमेन ब्रह्मणि स्थितास्ते सन्त । नियमेन बहिश्चित्तास्ते त्वसन्त इति द्वे वाक्ये इत्यर्थ ।

वे टि ) ऋ इत्येतस्यैव धातुत्वेन ऋ गतावित्यस्य धातुत्वाभावात् ऋ गताविति धातोरिति कथमुक्तमित्यत आह ॥ धातोरिति धातुव्याख्यानादिति ॥ ननु पूर्वावगतवत्स्थितिमात्रस्येतरसाधारण्यात्कथमृतमित्यनेन ब्रह्मोक्तमित्यत आह ॥ तस्येति ॥भूतकालस्येत्यर्थ । विशेषानुक्त्या अवध्यनुक्त्या । ननु ऋतशब्दस्योक्तरीत्याऽस्त्वनादितोऽवगतत्वमर्थ । तथापि पूर्वावगतत्वेन सदा स्थितिरपि तस्यार्थ कथं स्मृत्योच्यते । कथ च पूर्वावगतवत्सदा स्थितिर्ब्रह्मासाधारणी । अनादिप्रकृत्यादिसाधारण्यादित्याशङ्क्याह ॥ न चेति ॥ परिणामित्वापरिणामित्वाभ्यामिति ॥ ब्रह्मणोऽनादितोऽवगतत्वेऽपरिणामित्वस्य लाभादिति भावः ॥ शुभत्वादिति ॥

सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।

इति वचनादिति भाव ॥ सत्यमित्युच्यत इति ॥ सद्भिर्धार्यते यते तत्सत्यमिति निर्वचनादित्यर्थ । ननु सदसद्बुद्धिगम्यत्वमात्रस्य ब्रह्मणि प्रकृत्यादौ चाविशेषात्सद्बुद्धिगम्यत्वेन ब्रह्मैव सत्यमिति असद्बुद्धिगम्यत्वेन प्रकृत्यादिकमेवासदिति विशिष्याभिधाने किं कारणमिति पृच्छति ॥ प्रकृत्यादीति ॥ नियमेति ॥ (अत्र नियमशब्देन नैरन्तर्यं विवक्षितम् । तथा च प्रकृत्यादौ कदाचित्सद्बुद्धिगम्यत्वसत्त्वेपि न नित्य सद्बुद्धिगम्यत्वलक्षणं सत्यत्वम् । तथा ब्रह्मण्यसद्बुद्धिगम्यत्वस्य कदाचित्सत्त्वेपि न नित्य तद्बुद्धिगम्यत्वलक्षणासत्यत्वमित्यभिप्रायेणेति भाव) ॥ सदसद्विवेकमिति ॥ सत्यासत्यशब्दार्थयो सदसच्छब्दार्थघटितमूर्तिकत्वेन तन्निरूपणाधीननिरूपणतया सदसच्छब्दार्थौ विवेचयतीत्यर्थ. । ननु नियमेन बहिश्चित्ताना ब्रह्मनिष्ठत्वमेवानुपपन्नम् । तथा चापार्थकमिदं वाक्यमित्यत आह ॥ तेसन्त इत्यत्रेति ॥ द्वे वाक्ये इति ॥ 'ये नियमेन बहिश्चित्तास्तेऽसन्त । ये नियमेन ब्रह्मणि स्थितास्ते सन्त' इति द्वे वाक्ये इत्यर्थ । ब्रह्मण सर्वाश्रयत्वेनासतामपि ब्रह्मणि स्थितत्वमित्यत आह ॥ ब्रह्मणि स्थितास्तन्निष्ठबुद्धय इति ॥

(द्वै. द्यु ) ॥ इत्याद्युक्तिरिति ॥ आदिना 'तदेवर्तं तदु सत्यमाहु' इत्यादीना सङ्ग्रह । तत्राप्येवकारेण जगति सत्यत्वव्यवच्छेदात् ॥ धातोरिति ॥ ऋ गतावित्यस्य समुदायस्य धातुत्वाभावादित्थं व्याख्या-

(द्वै द्यु) तम्। तथा च ऋ गतावित्यस्माद्धातुव्याख्यानादित्यर्थ उक्तो भवति। यद्वा मूले ऋ गतावित्यत्रेतिशब्दस्य ऋ गतावित्यानुपूर्व्या निपातार्थत्वात्स्वव्याख्यातत्वरूपभेदसंसर्गेणैव धातुपदार्थेऽन्वय। धातुव्याख्यानादिति टीका तु पर्यवसितार्थपरैव। तेन न धातुपदस्य लक्षणारूपो दोष। व्याख्यानद्वयेपि पञ्चम्यर्थप्रयोज्यताया शाब्दबोधविषयरूपोक्तपदार्थैकदेशे शाब्दबोधेऽन्वेति। व्याख्यानस्योक्तशाब्दबोधप्रयोजकत्व शक्तिग्राहकतया परम्परयेत्यवधेय॥ गत्यर्थानामिति॥ तथैवाभियुक्तव्यवहारादिति भाव॥ निष्ठाप्रत्ययेति॥ क्तक्तवतू निष्ठेति क्तस्य निष्ठासञ्ज्ञाविधानात् क्तप्रत्ययस्येत्यर्थः॥ भूतार्थत्वेनेति॥ अतीतकालघटितार्थकत्वेनेत्यर्थ॥ लाभ इति॥ शाब्दबोधविषये सतीत्यर्थ॥ विशेषानुक्त्यादिनेति॥ प्रमाणान्तरेणैतदपेक्षयैव भूतत्वमित्येवरीत्या अवधिविशेषस्यानुक्त्येत्यर्थ। आदिना प्रमाणान्तरानुगुण्यादिपरिग्रह॥ अनादितोऽवगतमित्युक्तं भवतीति॥

अय भाव.। ऋधातोर्ज्ञानमर्थ। क्तप्रत्ययस्य प्रकृतशब्दप्रयोगाधिकरणकालवृत्तिध्वंसप्रतियोगिकालवृत्तित्वं विषयत्वावच्छिन्न चार्थ। तादृशकालवृत्तित्व ज्ञाने अन्वेति। तस्य च विषयतायामेकदेशभूतायामपि व्युत्पत्तिवैचित्र्येणान्वय। तथा च यदा यदा ऋतशब्दप्रयोज्यो बोधस्तदा तदा तत्तत्कालपूर्ववृत्तिज्ञानविषयीभूतमित्यर्थो लभ्यते। तत्तत्पदव्यक्तीना पुरुषबुद्धिक्रमोपहितवर्णात्मकाना भिन्नत्वेपि वेदानामिव तद्धटकपदानामपि सजातीयानुपूर्व्या· स्वतन्त्रकर्तृकत्वाभावेनापौरुषेयतया ऋतशब्दप्रयोगमहिम्नाऽनादिकालतोऽवगतमिति पर्यवस्यतीति।

अनादितोऽवगतत्व तु शाब्दबोधविषयीभूतमेव। तत्तत्कालीनऋतशब्दाधीनबोधे क्तप्रत्ययेन तत्तत्कालापेक्षया पूर्वेषा सर्वेषा कालाना तादृशपूर्वत्वेन भाने प्रमाणान्तरबाधाभावात् ब्रह्मानादित्वग्राहकप्रमाणान्तरानुगुण्याच्च। अत एवेत्युक्त भवतीति शब्दविषयत्वमेवोक्तम्। एकस्या अवगतिव्यक्ते· सर्वपूर्वकालसम्बन्धाभावेऽपि 'सर्व एव शुभ काल' इत्यादौ एकैकस्मिन्नेकैकशुभत्वान्वय इव यथायोगं एकैकस्मिन् ज्ञाने एकैककालसम्बन्धे नित्यज्ञाने वा सर्वपूर्वकालान्वये बाधकाभावात्। पूर्वकालीनज्ञानेषु ब्रह्मणो विषयताप्यस्तित्वेनैवेति लभ्यते। ज्ञानानामसति बाधके स्वसमानकालसम्बन्धित्वेन स्वविषयावगाहित्वस्वाभाव्यात्। तादृशविषयताया एव मुख्यत्वेन प्रकृते क्तप्रत्ययेन तस्यैव बोधयितुमुचितत्वात्। 'अस्तीत्येवोपलब्धव्य.' 'अस्ति ब्रह्मेति चेद्वेद' इति प्रमाणान्तरानुगुण्याच्च। ज्ञाने प्रतीयमानाऽस्तिता च धर्म्यंश इव तद्योग्यत्वाद्धर्मांशेऽपि। बाधकप्रमाणाभावात्। ज्ञानमपि प्रमात्मकमेव। मुख्यत्वात्। असति बाधके मुख्यस्यैव प्रथमत. शब्देन बुद्धावारोहात्। तथा चैतत्कालोच्चारितवैदिकऋतपदेन यावन्त एतत्पूर्वकालास्तत्तत्कालसम्बन्धिन्यो यावत्योऽस्तित्वेन गुणपूर्णतादिविशिष्टब्रह्मविषयिण्य प्रमास्तत्तद्विषयीभूतं विशिष्टमिति बोधो जायते। यथा अनन्तपदेन परिच्छेदराहित्ये लब्धेपि प्रमाणान्तरानुसारेण गुणै परिच्छेदाभावो लभ्यत इत्याशयेन 'महागुणत्वाद्यमनन्तमाहु' इति निरुक्तिर्भागवते तथेयमपि निरुक्ति. स्मृतिकृता कृता। अतो न कोपि क्षुद्रोपद्रव.।

(द्वै द्यु) पूर्वाविगतवत्सदा स्थितेरित्यनेन ऋतशब्दबोध्यान्वयप्रयोजकधर्मस्य तदन्वययोग्यतारूपस्योक्ति। पूर्वाविगतवत्सदा स्थित्यभावे यदा यदा ऋतशब्दस्तद्बोध्यस्य समस्ततत्पूर्वकालसम्बन्ध्यस्तित्वप्रकारकविशिष्टब्रह्मविषयकप्रतिपत्तिसामान्ये प्रमात्वस्य दुर्घटत्वापत्ते। पूर्वाविगतवदित्यत्र 'तत्र तस्येव' इति सूत्रात् षष्ठ्यन्ताद्वति। तथा च गोवद्गवयस्य रूपमिति वाक्येन गोरूपसदृशं गवयरूपमिति धीर्जायते। तथा यत्किञ्चित्पूर्वकालीनाविगतिविषयनिष्ठस्थितिसादृश्यस्य ब्रह्मनिष्ठसार्वकालिकस्थितौ धीर्जायते। स्थितिश्च कालसम्बन्ध एव। ब्रह्मनिष्ठयत्किञ्चित्कालसम्बन्धसादृश्यं तन्निष्ठसर्वकालसम्बन्धेषु यादृशयादृशधर्मवद्ब्रह्मनिष्ठत्वं तस्य तादृशतादृशधर्मवद्ब्रह्मनिष्ठत्वात्मकमेव। सादृश्यस्य तन्निष्ठभूयोधर्मात्मकत्वेनासति बाधके सम्भवतां सर्वेषां ग्रहणात्। न च तत्क्षणसम्बन्धवद्ब्रह्मवृत्तित्वमेतत्क्षणसम्बन्धरूपस्थितौ नास्तीति वाच्यम्। सम्भवतामित्यनेनैतच्छङ्काया परिहृतत्वात्। तेषां धर्मत्वाभावाच्च। तद्भेदशालिनामेव धर्मत्वात्। उपपादितमेतदन्यत्र।

न च पूर्वाविगतस्य स्थितेरित्येव वक्तव्यम्। वतिर्निरर्थक इति वाच्यम्। पूर्वाविगतनिष्ठस्थितिमात्रेण ऋतपदबोद्ध्योक्तधर्मासिद्ध्या तस्य योग्यतारूपत्वाभावेन तदुक्तिवैयर्थ्यात्। कुत एतदिति चेत्। पूर्वाविगतस्य प्रकृत्यादेरिदानीं सदा च स्थितत्वेपि तत्परिणामभूतविकारविशेषाणां तेन भेदाभेदशालिनामुत्पत्तिविनाशशालित्वेन तन्नाशेन विशिष्टस्यापि नाशेन एतत्काल उच्चरितऋतशब्दबोध्यस्यैव तत्पूर्वतननिखिलकालसम्बन्धियावत्प्रमीयाणां स्वकालेऽस्तित्वेन विषयतानामेकस्मिन्नपि विशिष्टेऽभावात्। ब्रह्मणि तु विकारादिरहिते विद्यमानधर्माणां तेनात्यन्ताभिन्नत्वात्तद्विशिष्टानामपि परस्परमत्यन्ताभिन्नत्वात्सार्वदिकत्वाच्च तादृशप्रमाविषयत्वस्यैकविशिष्टे सम्भवात्। न च ज्ञानवद्ब्रह्मेतिप्रमाविषयत्वमानन्दविशिष्टब्रह्मणि नास्ति। तथात्वे तज्ज्ञानस्यानन्दविशिष्टब्रह्मविषयकत्वापत्ते। तथा च तादृशयावत्प्रमाविषयत्वं कथमेकविशिष्ट इति वाच्यम्। विशेषणविषयकत्वघटितविशिष्टविषयकत्वव्यवहारस्य तज्ज्ञानेऽभावेपि वस्तुतो विशिष्टानामत्यन्ताभिन्नत्वेनैकस्मिन् सर्वतादृशप्रमाविषयत्वे बाधकाभावात्। प्रकृत्यादौ तु नैवम्। तादृशपरिणामविशेषविशिष्टानां धर्मिणा भिन्नाभिन्नानामपि परस्परं भिन्नत्वात्।

यद्वा तादृशयावत्कालसम्बन्धिन्यो यावत्य समानविषयिण्य स्वसमानकालसम्बन्धावगाहिन्य प्रमास्तद्विषयीभूतमिति ऋतपदेन बोध। असति बाधके सङ्कोचे कारणाभावात्। तथात्वे च ब्रह्मस्वरूपैकैकविशिष्टेऽस्तित्वेनानादित प्रमासत्त्वं लभ्यते। तच्च ब्रह्मणि सर्वथा विकाररहिते घटते। प्रकृत्यादौ तु यत्किञ्चित्परिणामधर्मविशिष्टे स्वकालेऽस्तित्वावगाहिज्ञानस्य प्रमात्वेपि तन्नाशादिना तदभावदशापन्नतादृशज्ञाने प्रमात्वस्य बाधितत्वान्न तस्य ऋतपदार्थता। न च प्रकृतित्वपराधीनत्वादिधर्मानादाय प्रकृतावपि तादृशप्रमाविषयत्वसम्भवेन तत्रापि ऋतपदव्यवहारप्रसङ्ग इति वाच्यम्। सर्वधर्मघटिततादृशप्रवृत्तिनिमित्तवतो ब्रह्मण एव तत्पदव्यवहारभागित्वात्। बहुधनवत एव धनीति व्यवहारगोचरत्ववत् 'असाधारण्येन व्यपदेशा भवन्ति' इति न्यायेन ब्रह्मण्येवैतद्व्यवहारस्य तदेवर्तमित्यादौ सिद्धत्वेनाऽरोपे सति निमित्तानुसरणमिति न्यायेन स्मृतिकृता तस्यासाधारण्यमात्रोपपादनार्थं प्रकृतत्वाच्च। अत एव ऋतपदप्रवृत्तिनिमित्तकोटौ प्रकृत्यादिव्यावृत्तं पूर्वोक्तं सर्वं निवेश्य-

(द्वै धु) मेव। इत्थं च पूर्वावगतस्य स्थितेरित्युक्तिमात्रेण ऋतपदप्रवृत्तिनिमित्तसत्ताया अनुपपादनात्तदुपपादनाय वति सार्थक एव।

ननु तत्प्रयोगेण कथमेतदुपपादितं भवतीति चेत्। इत्थम्। 'पूर्वकालस्थितो राजा इदानीं वर्तते' इत्यनेन पूर्वोत्तरकालवर्तिराजैक्यमात्र प्रतीयते। न तु पूर्वकाले यादृशौदार्यादिगुणविशिष्टो राजा तादृशगुणविशिष्टस्य राज्ञ इदानीं स्थिति। 'पूर्ववदिदानीं वर्तते' इत्यनेन तु राज्ञ पूर्वनिष्ठकालसम्बन्धसदृशैतत्कालसम्बन्धबोधे सादृश्यघटकतया पूर्वकालसम्बन्धे वक्तृतात्पर्यविषयतावशाद्यादृशधर्मवद्राजनिष्ठ व तादृशधर्मवद्राजनिष्ठत्वमुत्तरकालसम्बन्धे भासत इति राजन्येतत्काले तादृशौदार्यसिद्धिर्भवतीत्यनुभवसिद्धत्वात्। चैत्र त्वं पूर्वोऽसि, न तु पूर्ववदसि। तमेव चैत्र पश्यामि, न तु पूर्ववत्पश्यामि, मैत्र तु पूर्ववत्पश्यामि, इत्यादिलौकिकव्यवहारतज्जातीयशास्त्रीयव्यवहाराणामुक्तरीत्याऽर्थबोधकानां सुप्रसिद्धत्वाच्च पूर्वावगतवदिति वतिप्रत्ययान्तसमभिव्याहारेण पूर्वोक्तरीत्या विवक्षितार्थसिद्धिरिति। परिणामस्तु प्रकृत्यादौ ऋतपदार्थतावच्छेदकमुख्यधर्माभावोपपादनद्वारा अनृतपदव्यवहार्यतोपपादनायाभिहित। न तु अनृतपदार्थतावच्छेदकतयेति द्रष्टव्यम्।

एतदेव स्फुटीकरोति॥ **न चेत्यादिना**॥ **उक्ता भवतीति**॥ ऋतपदेन स्वप्रवृत्तिनिमित्तनिर्वाहकतया आक्षिप्ता भवतीत्यर्थ। अत्र यद्यपि ब्रह्मणि ऋतपदवाच्यत्वमुपपाद्य प्रकृत्यादौ तदन्यत्वादिना [1]ऋतपदव्यवहार एव उपपादनीय। पूर्वावगतवत्सदा स्थितिस्तु ऋतशब्दार्थयोग्यतानिर्वाहाय प्रमाणकृतोपात्ता। अत एव तस्य हेतुविभक्त्यन्तेन निर्देश। तथा च तत्सिद्धेरेव प्रकृते मुख्यफलत्वख्यापक **उक्ता भवतीति** निर्देशो न घटते। तथापि तस्य प्रकृतप्रमाणप्रवृत्तिफलत्वाभावेपि जगत्यनृतादिपदव्यवहारोपपादनाय रीत्यन्तर विहाय यदुक्तरीत्यैव ब्रह्मणि ऋतशब्दप्रवृत्तिप्रदर्शनं कृतम् तत्फलाभिधानपूर्वक तादृशस्थितेर्योग्यत्वरूपत्वप्रदर्शनार्थमिद वाक्य प्रसक्तमिति नासङ्गति.।

एतेनैतदपि परिहृतं भवति। 'ऋतशब्दस्य ब्रह्मण्युपपत्तये उक्तप्रयासो विफल.। भावनिष्ठान्तत्वेपि ब्रह्मणो ज्ञानरूपतया ऋतशब्दवाच्यत्वसम्भवात्। जगतस्तदन्यत्वेनानृतपदवाच्यतासम्भवाच्च। न च जीवानामपि ऋतपदवाच्यतापत्ति। जीवानामपरिणामित्वेन रमाया अपि तथात्वेन भवदुक्तनिरुक्तावप्युक्तदोषसाम्यात्। न च तेषामनृतपदव्यवहारागोचरत्वेन तद्विरुद्धऋतशब्दवाच्यत्वेपि बाधकाभाव.। प्रकृतवाक्ये ब्रह्मण एकस्यैव ग्रहण तच्छब्दवाच्येष्वपि ब्रह्मण अपरायत्तप्रवृत्तिनिमित्तत्वेन तस्यैव मुख्यत्वनिमित्तेनेति वाच्यम्। ऋतशब्दस्य ज्ञानार्थकत्वेप्युक्तसमाधानसम्भवात्। न च जडज्ञाने ऋतपदप्रवृत्ति स्यादिति वाच्यम्। भवदुक्तरीत्या निर्वचनपक्षेपि मुख्यत्वानुरोधेन ऋतपदार्थशरीरे प्रमात्वादिनिवेशवत् अत्रापि तदनुरोधेन नित्यत्वमात्रस्य निवेशनीयत्वेन ऋतपदस्य नित्यज्ञानत्वावच्छिन्नार्थकत्वेन सर्वसामञ्जस्यात्' इति।

उक्तरीत्या निर्वचने तदुपपादकतया ब्रह्मण अनादित एकप्रकारेणैव स्थितिलाभेन निर्विकारत्वनित्यानन्द

---

[1] अनृतपदव्यवहार इति पाठेन भाव्यमिति भाति

(द्वै. द्यु.) नित्यज्ञानादिबहुगुणानां ब्रह्मणि क्रमेणान्वयस्यैव युक्तत्वात्। वेदानां भगवद्गुणोत्कर्षप्रतिपादनार्थमेव प्रवृत्तत्वेन तद्घटकशब्दानामपि तदनुसारेणैव तात्पर्यकल्पनात्। अन्यथा भागवतोक्तानन्तशब्दनिरुक्तिरपि व्यर्था स्यात्। नाशाभावमात्रेण तच्छब्दप्रवृत्तिसम्भवात्।

॥ प्रकृतिश्चेति ॥ सर्वा द्रष्टो विभाषयैकवद्भवतीति वचनात् प्रकृतिप्राकृतमिति साध्विति भावः। ॥ ततश्चापरिणामित्वपरिणामित्वाभ्यामिति ॥ अनयोरुक्तरीत्या परम्परया प्रवृत्तिनिमित्तनिर्वाहकतया परम्परया तच्छब्दव्यवहारबीजत्वबोधनाय निमित्ततृतीयाप्रयोगः। वाच्यकोटौ निवेशाभिप्राये अपरिणामित्वपरिणामित्वबोधके ऋतानृतपदे इत्यवक्ष्यत ॥ न तु सत्त्वेति ॥ अत्रापि निमित्ते तृतीया। परं तु बाधकाभावात्प्रवृत्तिनिमित्ततयैव निमित्तत्वबोधिका। निमित्ततृतीयात्वेन साम्यात्साक्षात्परम्पराकृतवैलक्षण्येपि न वैगुण्यम्। एतेन

अविकारादृतं ब्रह्म विकारादनृतं जडम्।

इति परिणामार्थकविकारपदं प्रयुज्यैकस्मिन्नर्थद्वयनिबन्धनसम्भवे एतावदुक्तिर्विफलेति शङ्कानवकाशः। तयोः साक्षाद्रूढ्या योगेन वा तत्पदार्थतावच्छेदकत्वायोगेन पूर्वमुपपादितरीत्या बह्वर्थलाभायैतावदुक्तेरावश्यकत्वात् ॥ इत्यपि ज्ञातव्यमिति ॥ इदानीं जगति प्रयुज्यमानानिर्वचनीयानृतासदादिपदार्थनिरूपणपरायामस्यां स्मृतौ ब्रह्मणि सत्पदं निरुच्यैव तदन्यत्त्वादिना जगति असदादिपदं निर्वाच्यमिति नास्ति। अत एवैकेनैव निमित्तेन जगद्ब्रह्मणोरनिर्वाच्यादिपदानि निरुक्तानि। ब्रह्मग्रहणं चैतद्ग्रहणवद्युक्तिसूचनायैव। अनृतपदस्य जडे निर्वचनार्थमेव ब्रह्मणि ऋतपदं निरुक्तम्। एवं च स्मृतिकृता सत् सत्यमिति पदद्वयं ब्रह्मण्यनिरुच्य [1]सत्पदासत्पदयोर्जगति निर्वचनेपि न क्रमभङ्गदोषः। नापि न्यूनता। तथा चात्रोत्तरत्र च ज्ञातव्यं द्रष्टव्यमिति च टीका न मूले एतदध्याहार्यमित्यभिप्रायिका। स्फुटत्वादप्रकान्तत्वेनानावश्यकत्वाच्च। प्रमाणकृताऽनुक्तत्वेपि ब्रह्मणि सत्पदं कथं प्रवर्तते शुभत्वेन प्रवृत्तावपि तस्य शुभत्वं कुत इति, एवमसत्पदस्योक्तरीत्या निर्वचने सत्पदस्यैतत्पदार्थप्रविष्टभेदप्रतियोगिसमर्पकत्वाभावेन कश्चिद्विशिष्य ब्रह्मणि प्रयुज्यमानसत्पदार्थतावच्छेदकं जगत्साधारणं किमिति च शङ्कया मनःखेदो न कर्तव्यः। स्मृत्या सूचितमस्मदुक्तरीत्या ज्ञातव्यमिति शिष्यान् प्रत्येवाभिहितम्। अत एवेत्यध्याहर्तव्यमित्यनुक्त्वा ज्ञातव्यं द्रष्टव्यमित्येवाभिहितम् ॥ सदसद्विवेकमिति ॥ असत्पदार्थस्य सत्साधारण्ये पुनर्विशिष्योक्तिरयुक्ता स्यादिति सत्स्वरूपनिरूपणपूर्वकं तद्विवेकोक्तिरावश्यिकीति भावः। तथा च सत्पदार्थकथनमपि असत्पदनिर्वचनोपयोगितयैव प्रमाणे प्राप्तम्। न ब्रह्मणि सत्पदनिर्वचनाय येनाप्रकान्तोक्तिः स्यात्। परं त्वन्यार्थमुपात्तेनाप्यनेन सूचितमत्पदनिर्वचनमस्माभिर्दर्शितमिति हृदयम्। सत्यासत्यपदे तु सदसदुपपादके। यातें कर्मणि क्तप्रत्ययान्ते अयसयादित्वेन भसञ्ज्ञाश्रवणात्पदसञ्ज्ञाप्रयुक्तजश्त्वप्रवृत्त्या न सत्यमित्यादिरूपोपपत्तिरिति द्रष्टव्यम्।

(गु. टि.) ननु ऋ गतावित्यस्य धातुव्याख्यानत्वेन धातुत्वाभावात् ऋ गतावित्यस्य धातुत्वोक्तिरयुक्तेत्यत आह ॥ धातोरिति धातुव्याख्यानादिति ॥ गत्यर्थानामवगत्यर्थत्वेनेति ॥ धातूनामनेकार्थत्वादिति

[1] असत्पदासत्पदयोर्जगति इति पाठेन भाव्यमिति भाति।

(गु टि) भाव ॥ निष्ठाप्रत्ययस्येति ॥ क्तप्रत्ययस्येत्यर्थ । कित्त्वान्न गुण इति भाव । ननु पूर्वावगतवत्स्थितेरितरसाधारण्यात्कथमनेन ब्रह्मोक्तिरित्यत आह ॥ अस्यैवेति ॥ शुभत्वादिति ॥

सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।

इति वचनादिति भाव । सतामिवासतामपि सर्वाधारे ब्रह्मणि स्थितत्वात्सल्लक्षणस्यासत्स्वतिव्याप्तिरित्यतो व्याख्याति ॥ तन्निष्ठबुद्धय इति ॥

अनृतादिशब्दाना प्रपञ्चानिर्वाच्यत्वबोधकत्वाभावे प्रपञ्चसत्यत्वस्य प्रमितत्वरूपकारणोक्ति

(टी) कस्मादेवमनृतत्वाद्युक्तेरन्यार्थवर्णनम् । ब्रह्मवत्सत्यत्वेन प्रमितत्वादित्याह

विश्वं सत्यं ।

प्रमितमिति शेषः । न च सत्यत्वेपि परमात्मनोऽस्याविशेषश्शङ्कनीयः । एतत्सत्ताया अपि तदधीनत्वादित्याह

.. वशे विष्णोः .. ।

तदधीनसत्ताकमपि तेन नोत्साद्यत इत्याह

नित्यमेव ।

न च तथात्वे भागे प्रत्यक्षादिविरोधश्शङ्कनीय इत्याह

प्रवाहतः ॥

प्रवाहतो नित्यत्वेपि नावान्तरवैचित्र्यमित्याह

न काप्यनीदृशं विश्वं ।

क्वापि काले । तथात्वेपि न प्रलयाद्यागमविरोधश्शङ्कनीय इत्याह

तत्तत्कालानुसारतः ।

यस्मिन्काले यादृशेन भवितव्यं तथाभावस्तन व्यत्यास इत्युक्तं भवति । यदि तर्हीत्थम्भूतं जगत् कथं केचिद्वैपरीत्येनाहुरित्यत आह

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ॥

त आसुराः ।

अत्र 'विश्वं सत्यं वशे विष्णोर्नित्यमेव प्रवाहतः' इत्यस्यासत्यमनीश्वरमप्रतिष्ठमिति विपरीतोक्तिः। आसुरा इति मिथ्याज्ञानित्वे हेतुः। किमर्थं ते तथाहुरित्यत आह

स्वयं नष्टा जगतः क्षयकारिणः। इत्यादिव्यासस्मृतौ।

(वि टि) ननु विश्व सत्यमिति वाक्ये **प्रमितमि**त्यश्रवणात्कथ सत्यत्वेन प्रमितत्व हेतूक्रियत इत्यत आह ॥ **प्रमितमिति** ॥ सन् घट इत्यादिप्रत्यक्षेण विश्व सत्यमित्यादिश्रुत्या अर्थक्रियाकारित्वादिलिङ्गेन च यत प्रमितमत इत्यर्थ ॥ **अविशेष इति** ॥ स्वातन्त्र्यादिनेति शेष ॥ **एतत्सत्ताया अपीति** ॥ जगत्सत्ताया इत्यर्थ ।

द्रव्य कर्म च कालश्च स्वभावो जीव एव च ।
यदनुग्रहत सन्ति न सन्ति यदुपेक्षया ॥

इत्यादेरिति भाव ॥ **तदधीनेति** ॥ यथेष्टविनियोगार्हेत्यर्थ । यद्यपि यदधीनसत्ताक यत्तत्तेनोत्साद्यत इति नियमाभावो लोकत एव सिद्ध तथापि परमात्मनि लोकवदेव कादाचित्कत्वप्रसक्तिरपि नास्तीति भाव ॥ **प्रत्यक्षादिविरोध इति** ॥ घटादीना प्रत्यक्षादिना नाशदर्शनादिति भाव ॥ **प्रवाहेण नित्यत्वेपीति** ॥ सजातीयप्रागभावव्याप्यध्वसप्रतियोगित्वेऽपीत्यर्थ ॥ **अवान्तरवैचित्र्यमिति** ॥ कल्पभेदेन घटादिपदार्थाना विलक्षणाकारत्वमित्यर्थ ॥ **अनीदृशमिति** ॥ 'धाता यथापूर्वमकल्पयत्' इत्यादिश्रुतेश्चेत्यपि द्रष्टव्यम् ॥ **यादृशेनेति** ॥ यादृशावस्थाविशेषविशिष्टेनेत्यर्थ ॥ **इत्थम्भूतमिति** ॥ उक्तरीत्या सत्यत्वादिना प्रमाणसिद्धमित्यर्थ ।

(रा टि.) **कस्मादि**तिप्रश्नस्योत्तरमाह ॥ **ब्रह्मवदिति** ॥ **इति शेष इति** ॥ सत्यतया प्रमितमिति तदर्थ इति भाव ॥ **भाग इति** ॥ अनित्यवस्तुभाग इत्यर्थ ॥ **प्रलयेति** ॥ यत्प्रयन्तीत्याद्यागमेत्यर्थ ।

(वे टि) ॥ **ब्रह्मवदिति** ॥ अन्यथा ब्रह्मानृतत्वाभिधायकवाक्यस्याप्यर्थान्तरवर्णन त्वया न क्रियेतेति भाव ।

(द्वै द्यु) न्यायप्रदर्शनपूर्वक व्याख्यानार्थ स्मृते प्रवृत्तत्वात्तल्लाभायाह ॥ **प्रमितमितीति** ॥ **अविशेष इति** ॥ तथा च तस्योपनिषत्सत्यस्य सत्यमिति वचनविरोधप्रसङ्ग स्यात्तत्परिहारायोक्तवचनमवान्तरसत्यत्वपरमेवेति भाव ॥ **तदधीनत्वादिति** ॥ इत्थ च सत्यस्य सत्यताप्रदमिति श्रुत्यर्थ ।

'द्रव्य कर्म च कालश्च स्वभावो जीव एव च ।
यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया ॥'

इति स्मृत्यनुगृहीतत्वेनास्यैवार्थस्य प्रामाणिकत्वादितरस्य त्वोत्प्रेक्षिकत्वादिति भाव ॥ **न तेनोत्साद्यत इति** ॥ स्वरूपसत्त्वापहारो न क्रियत इत्यर्थ । न सन्ति यदुपेक्षयेति वाक्यस्यार्थवादत्वपरिहाराय कारणकार्यादिसमस्तरूपै प्रपञ्चोच्छेदो वक्तव्य । अन्यथा पूर्वभागस्याप्यर्थवादत्वप्राप्त्या तदुक्तरीत्या भवदभिप्रेत श्रुत्यर्थोपि न स्यादिति शङ्कभावान्न निर्दलशङ्कानिराकारकमिदमिति ज्ञातव्यम् । **मूले नित्यमेवेति** सर्वथा सत्त्वापहाररूपबाध्यत्वरहितमेवेत्यर्थ. । न सन्ति यदुपेक्षयेति भगवच्छक्तेर्दुर्घटकारित्वतात्पर्यक ॥ **भाग इति** ॥ लोकव्यवहारगोचर इत्यर्थ ॥ **प्रत्यक्षादीति** ॥ चक्षुरादिनाशोऽनुमानसिद्ध इत्याशयेनादीति ॥ **शङ्कनीय इति** ॥ घटादिरूपेणासत्त्वस्यानुभवसिद्धत्वात्कारणरूपेणापि सत्ताकल्पने मानाभावात्सर्वात्मना स्वरूपोच्छेद एवेति शङ्काभाव. । **मूले**

(द्वै द्यु )प्रवाहतः इत्यनेन कारणस्वरूपस्यापि बाधे जगत्प्रवाहोच्छेदापत्त्या 'अनाद्यनन्तं जगदेतदीदृक् प्रवर्तते' इति श्रुतिविरोधापत्त्या कारणोच्छेदो न युक्त इति युक्ति सूचिता भवतीत्याशय । नन्विदानी जातस्य वसिष्ठादेरुत्तरकल्पे सत्ताया भवदनङ्गीकारादनाद्यनन्तमिति श्रुतिरुपचरितार्थैवावश्य वक्तव्येति न तदनुरोधेन कारणसत्ता कल्पनीयेत्याशयेनाशङ्क्य निषेधति ॥ प्रवाहत इति ॥ नित्यन्वेऽपि नित्यत्वाङ्गीकारपक्षेऽपि । अवान्तरवैचित्र्य उत्तरकल्पे वसिष्ठाद्यसत्त्व भवदङ्गीकृतमित्यर्थ । तथा चानाद्यनन्तमिति श्रुतिरमुख्यार्थपरेति हृदयम् । मूले अनीदृश वसिष्ठादिरहितमित्यर्थ । तथा च वसिष्ठाद्यसत्त्वमसिद्धमिति न तदनुरोधेन श्रुतिरुपचरितार्थेति भाव ॥ प्रलयादीति ॥ महदादीना प्रलये नाशाद्वसिष्ठादीनामपि मुक्तत्वात्तदभाव इत्याद्यर्थकश्रुतीत्यर्थ ॥ तथाभावस्य न व्यत्यास इति ॥ तादृशविश्वभवनस्येत्यर्थ । तथा चैतदीदृगिति श्रुतौ जगदन्तरस्य तत्सादृश्यमेवोच्यते । तच्च महदादिकान्तर वसिष्ठाद्यन्तर चादायोपपद्यत एवेति न श्रुतिरुपचरितार्था । निरुपादानोत्पत्त्यभावात् पुनस्तत्सजातीयोत्पत्त्याद्यर्थं च कारणादिसत्ता आवश्यकीति भाव ॥ केचिद्वैपरीत्येनेति ॥ तद्वाक्यानामप्यागमत्वाविशेषेण प्रामाण्यात्तद्विरुद्धभवदुदाहृतश्रुतीनामनिर्णायकत्व वा तस्य व्याख्यानरूपतया प्राबल्ये तदनुरोधेन नेयत्व वेति भाव ॥ अप्रतिष्ठमिति ॥ ज्ञानोच्छेद्यमित्यर्थ । तथा च प्रवाहतो नित्यत्वविरुद्धार्थकत्वलाभ । ननु य एवमाहुस्ते असुरा इति तत्स्वरूपकथनेऽपि तद्वाक्यप्रामाण्यभावे पूर्वोक्तदोषो न परिहार्यत इत्यत आह ॥ आसुरा इति ॥ असुराणा मिथ्याज्ञानित्व प्रसिद्धमेवेति तदुक्त्या मिथ्याज्ञानमूलकत्वात्तद्वाक्याप्रामाण्यमुपपादितमेव भवति । मिथ्याज्ञानिन इत्युक्तौ तु तत्रापि कारणशङ्का स्यादेवेति मूलकारणमेवोक्तमिति भाव । ननु परप्रयोजन विना तदुक्ते प्रयोजनान्तराभावात् तत्साफल्यस्य ज्ञानद्वारैव वक्तव्यतया मन्वादिवाक्यवत्प्रामाण्यमेवेत्याशयेन पृच्छति ॥ किमर्थमिति ॥ मूले स्वय नष्टाः स्वभावतो ज्ञानादिगुणविरुद्धधर्मवन्त । जगतः क्षयकारिणः मिथ्याज्ञानजननद्वारा तमोरूपार्थसम्पादका इत्यर्थ ।

अथ च दैत्यहनिस्तमसि स्थिरा नियतसंस्थिति ।

इत्याद्युक्ते । तथा च प्रयोजनभ्रमेण तैस्तथाभिधानेऽपि वस्तुतो निष्प्रयोजनत्वान्न तद्वाक्यप्रामाण्यमिति भाव ।

एतेन 'सत्यत्वे परमात्मना अविशेष इत्यादिशङ्कानिरासस्य विश्वसत्यताव्यवस्थापनेऽनुपयुक्तत्वम् । अस्थापादनपरतया तन्निरासकतया कथञ्चिद्दृशे विष्णोरित्यशसार्थक्येऽपि तदुत्तरभागस्य प्रकृतेऽनुपयोग एव । प्रसङ्गात् स्मृतौ तदुक्तिसम्भवेऽपि मूले तदुदाहरणमनुपयुक्तमेव । उपयोगसत्त्वे तट्टीकाप्ययुक्ता । तथा व्याख्यानाकरणात्' इति चोद्यानवकाश ।

यदत्र केनचित्प्रलपितम् । यत्तु

अद्भुतत्वादनिर्वाच्य ब्रह्म चिन्त्यमेव च ।
अचिन्त्यं तत एवैतदतर्क्यज्ञेयमेव च ॥
ऋ गताविति धातोस्तु पूर्वावगतवत्सदा ।

(द्वै द्यु) स्थितेर्ब्रह्मनमित्युक्तमनृतं परिणामत ॥
प्रकृतिप्राकृत प्रोक्तमसत्तदशुभत्वत ।
असता बुद्धिगम्यत्वादसत्यमिति चोच्यते ॥
नियमेन बहिश्चित्तास्ते सन्तो ब्रह्मणि स्थिता ।
विश्व सत्य वशे विष्णोर्नित्यमेव प्रवाहत ॥
न क्वाप्यनीदृशं विश्व तत्कालानुसारत ॥

इति व्यासस्मृतिबलात्पुराणादौ क्वचिज्जगति प्रयुक्तानामसदनृतानिर्वाच्यादिशब्दानामन्यार्थतया तादृशस्मृतिबला-दपि जगतो नानिर्वाच्यत्वम् । जगदसत्यत्ववादिनामसुरत्वोक्तेश्चेति । तदयुक्तम् ।

न सती नासती माया माया नैवोभयात्मिका ।
अनिर्वाच्या ।

इति बृहन्नारदीये प्रयुक्तस्यानिर्वाच्यशब्दस्यादृश्रुतत्वादनिर्वाच्यतापरत्वे न सतीत्यादिपूर्वार्धेन [1]तस्य सत्त्वादि-निषेधासङ्गते । तथा च मायाशब्दितजडप्रकृतेरनिर्वाच्यत्वावगतौ कथ जगतस्तद्वारणीयम् ।

एव ऋ गतावित्यनुशिष्टाद्धातोर्निष्ठाया निष्पन्नस्य ऋतशब्दस्य पूर्वावस्थितज्ञानविषयार्थकत्वे कथं परिणामितामात्रेण प्रकृते सत्त्वाभाव । तस्यानाद्यनन्तत्वाभ्युपगमात् । सादित्वेपि पूर्वपूर्वतनज्ञानविषयत्वे किं बाधकम् । यदि च भावनिष्ठाप्रत्ययस्तथापि ज्ञानरूपत्वाभावमात्रेण प्रकृत्यादेरनृतपदवाच्यत्वोपपत्तौ पूर्वावगतत्वा-भिधान तल्लाभाय निष्ठाप्रत्ययस्य भूतार्थकत्वानुसरण चायुक्तम् । न च मनोवृत्तिरूपज्ञानव्यावृत्त्यर्थं तदिति वाच्यम् । भूतत्वाभिधानमात्रेण तद्व्यावृत्ते । अनादित्वस्य निष्ठाऽवाच्यत्वात् ब्रह्मरूपज्ञाने उक्तभूतत्वाभावाच्च ।

यत्तु विशेषानुक्त्या अनादितोऽवगतमितरुक्त भवतीति । तदसत् । शब्दप्रयोगस्यैवावधितया भानस्य व्युत्पत्तिसिद्धतया विशेषानुक्त्यसिद्धे । यत्काले हि क्त प्रयुज्यते तदधिकरणक्षणवृत्तिध्वसप्रतियोग्युत्पत्तिकत्वस्यैव तदर्थत्वात् । तथापि तदेवर्तमित्यादिस्थले जीवज्ञानव्यवच्छेदानुपपत्ते । तथा च यथाकथञ्चिद्विवक्षितलाभो न मुख्यया वृत्त्येति स्थिते अविद्यादौ प्रयुक्तानामनृतादिपदाना रूढित्यागे हेत्वभावान्नैतद्युक्तम् । ब्रह्मणि प्रयुक्तस्य ऋतशब्दस्य क्वचिद्रूढित्यागो न दोषाय । अन्यथा 'ऋतं सत्य पर ब्रह्म' 'तदेवर्तं तदु सत्यमाहु' इत्यादौ सत्यादिपदाना पौनरुक्त्यापातात् । वस्तुतस्तु 'यो होताऽसावध्वर्यु' इत्यादाविव प्रथमपदानुरोधेन द्वितीयस्यै-वार्थान्तरकल्पना युक्ता । एतेन परिणामादनृतत्व प्रकृत्यादीनामिति निरस्तम् । एवं

यद्यन्योऽस्ति पर कोपि मत्त पार्थिवनन्दन ।
तदैषोऽह भावानन्यो वक्तुमेवमपीष्यते ॥

---

1 तदर्थस्य इति पाठेन भाव्यमिति भाति.

(द्वै ग्रु) यदा समस्तदेहेषु पुमानेको व्यवस्थित ।
तदा हि को भवान् कोहमित्येतद्विफल वच ॥
त्व राजा शिविका चेय वय वाहा पुरस्सरा ।
अय च भवतो लोको न सदेतन्नृपोच्यते ॥

इत्यत्रासच्छब्दस्य परिणामिपरत्वे देहशिबिकादीना परिणामित्वेपि ततो विलक्षणत्वेन सर्वानुभवसिद्धत्वेन त्वदभिमतजीवस्यैवाहंशब्दवाच्यस्यैव सत्त्वेनाहमस्मीति वक्तु शक्यतया तादृशवचनवैफल्योक्तेरसङ्गत्यापत्ते । मन्मते देहासत्त्वादहमस्मीति वक्तुमशक्यत्वादहङ्कारस्य चापि तादृशत्वान्निरुपाधिकात्मतत्वस्य चानहङ्कारत्वात्स्वष्टुस्तवाप्यस्तीति सदृशमात्रस्य सन्दिग्धत्वात्सोहमस्तीति निर्देशायोग्यत्व स्पष्टमेव । कर्तृत्वाद्युपलक्षित शुद्ध चैतन्य तु सर्वानुगतमितरव्यावृत्तत्वमर्थविषयकप्रश्नप्रतिवचनविषयो न भवतीति व्यपदेनातिशुद्धचैतन्यविवक्षाया यद्यन्योस्तीत्यादिकमपि त्वया कथमुपपादनीयम् । मत्त इत्यत्रासच्छब्देन जीवपरिग्रहे तस्मादन्यस्य परमात्मन सत्त्वेन तन्निषेधायोगात् । शास्त्रदृष्ट्यान्तर्यामिपरिग्रहे स्वान्तर्याम्यपेक्षयोत्कृष्टस्यान्यस्याभावेपि स्वस्यायमहमित्युपदेशे किं बाधकम् ।

एतेन सच्छब्दस्य शुभवाचितामभ्युपेत्य प्रकृत्यादीनामसत्पदप्रतिपाद्यत्वोपपादनमपि निरस्तम् । तस्यात्यन्तमसङ्गतत्वात् ।

वृक्षाद्दारु ततश्चेयं शिबिका तदधिष्ठिता ।
वृक्षसञ्ज्ञा क याता स्यात् दारुसञ्ज्ञाऽथ वा नृप ॥

इत्युपक्रम्य

'एव छत्रशलाकाना पृथग्भाव विमृश्यत ।
क यात छत्रमित्येष न्यायस्त्वयि तथा मयि ॥'

इत्यादिना कारणव्यतिरेकेण कार्यसत्ता निराकुर्वत तस्य हेतूपपादकोत्तरसन्दर्भेण विरोधात् । 'यदग्ने रोहित रूप तेजसस्तद्रूपं यच्छुक्ल तदपा यत्कृष्ण तदन्नस्य अपागादग्नेरग्नित्व त्रीणि रूपाणीत्येव सत्य' इति श्रुत्युक्तरीत्यैवात्र भगवता पराशरेणोपबृंहितमिति नानुमेयश्रुतिमूलत्वमेतस्य । परिणामविक्रियाशून्यस्य परमार्थोपपादन च परिणामित्वादिना परिच्छिन्नत्वप्राप्त्या देहादेरसत्त्वोपपादनाय चासत्त्व परिणामित्व असत्पदार्थ इति बोधनाय । प्रसिद्धयतिक्रमे हेत्वभावात् । अनेकार्थताया अन्याय्यत्वाच्च ।

एवमसब्दुद्धिगम्यत्वाज्जगतो असत्त्ववचनमित्यप्ययुक्त । लक्षणाद्यापत्ते । उक्तरीत्या सन्दर्भविरोधाच्चेति । एव

भ्रान्तिज्ञानेन पश्यन्ति जगद्रूप कुयोगिन ।
ज्ञानस्वरूपमखिलं जगदेतदबुद्धय ॥

(द्वै द्यु) अर्थस्वरूप पश्यन्तो भ्राम्यन्ते मोहसम्प्लवे ।
ये तु ज्ञानविद शुद्धचेतसम्तेऽखिल जगत् ॥
ज्ञानात्मकं प्रपश्यन्ति त्वद्रूप परमेश्वर ।

इत्यादिस्मृतयो ह्यनिर्वाच्यता जगतोऽनुगृह्णन्तीत्यन्यत्र विस्तर ।

एवमुपपत्तिरहितत्वान्न्यायानुगृहीतश्रुतितन्मूलकस्मृतिकोटिविरुद्धत्वात् धातोरिति धातुव्याख्यानपरनिर्देशात् 'अनृत परिणामत प्रकृतिप्राकृत प्रोक्तम्' इत्येकस्मिन्पद्ये विवक्षितार्थनिबन्धनाशक्ते पूर्वावगतवत्सदेत्यत्र सदा स्थितिरुक्ता भवतीति विवक्षितार्थमनुक्त्वा अवगतवदित्यनुपयुक्तवनिनिर्देशात् परमानन्दरूपत्वेन ब्रह्मण सत्पदार्थनिर्वाहकशुभत्वानुक्त्या प्रक्रमभङ्गान्न्यूनतापत्तेश्च एवमसता बुद्धिगम्यत्वादित्यादावप्युक्तदोषात् पुनरस्य सत्पदस्याभिधानेन पौनरुक्त्यापाताच्चैतानि वचनानि श्रीकृष्णद्वैपायनप्रणयनच्छायारहितानि मध्वककविकल्पितान्येवत्युक्तार्थे न्यायतया आगमतया च न निर्णायकानि' इति ।

तत्तुच्छम् । 'न सतन्नासदुच्यते' इत्युदाहृतश्रुतौ ब्रह्मपदस्य प्रकृत्यान्यतमउपलक्षकत्वस्य टीकोक्तस्य समर्थितत्वेन न सतीत्यादिना पृथिव्यादिशुद्धपञ्चमहाभूतभेदस्य नोभयात्मकेत्यनेनोपलक्षणपरेण नानाभूतविकृतभौतिकभेदस्यानिर्वाच्यपदार्थभूतसम्यङ्निरुक्तिगोचरत्वाभावे तन्निर्वाह्याद्भुतत्वे वा हेतुत्वेन पूर्वार्धे उक्तत्वेन तद्वचनस्योक्तबाधकत्वायोगात्प्रत्युतानुगुण्यस्यैव सत्त्वाच्च । न च नपुंसकलिङ्ग-दसत्पदे भूतवाचिनीति वाच्यम् । मूर्तं सदिति नपुंसकान्तोपादानस्यातन्त्रत्वेन प्रातिपदिकमात्रस्य शक्तिप्रदर्शनपरत्वात् । अन्यथा न सन् न चासन्निति पुलिङ्गान्तसदसत्पदघटितवाक्यस्य ब्रह्मणि गतिप्रदर्शकत्वाभावापत्ते । प्रत्युत तवैवेद वचनमननुगुणम् । यतो न सतीत्यत्र सच्छब्दस्य परमार्थपरत्व नासतीत्यत्रासच्छब्दस्य परमार्थभिन्नपरत्वमेव वाच्यम् । तथा च सद्भिन्ने सद्भेदावच्छिन्नप्रतियोगिताकभेदबोधतात्पर्यकवाक्यं व्याहत्या बोधमेव न जनयेत् ।

नन्वसत्पद सत्तादात्म्याभाववत्पर कालसम्बन्धाभाववत्पर वेति चेत् । तथात्वे स्वारसिकलक्षणाप्रसङ्गात् । न हि सत्पद सत्प्रतियोगिकत्वोपलक्षिततादात्म्यवन्मुख्यवाचक । तस्य शक्यतावच्छेदकत्वे गौरवात् । तत्पर्यायसत्यशब्दस्यापि तथात्वापातेन सत्य ज्ञानमित्यादौ सदेव सोम्येत्यादौ तयोर्मुख्यार्थत्वानुरोधेनोक्ततादात्म्यार्थकत्वप्राप्त्या तेन जगत इव ब्रह्मणोपि पारमार्थिकत्वस्यासिद्धिप्रसङ्गाच्च । एतेन कालसम्बद्धार्थकत्वमपि निरस्तम् । न चाबाध्यार्थकत्वमपि तस्याङ्गीक्रियत इति वाच्यम् । अनेकार्थताया अन्याय्यत्वात् । पुनरुक्तब्रह्मवाक्येन तत्सत्यत्वासिद्धिप्रसङ्गश्च । विनिगमकाभावेन निर्णायकाभावात् । एवं अलीकस्य शाब्दप्रतीतिविषयत्वाभावस्य त्वया व्यवस्थापितत्वेन सत्तादात्म्याभाववत्त्वेन कालसम्बन्धाभाववत्त्वेन चासत्पदाबोध्यत्वात् व्यधिकरणप्रकारकबोधजनकताया एवोक्तवाक्यस्याश्रयणीयतया नदीतीरे पञ्च फलानीतिवाक्यवत् स्फुटमप्रामाण्यप्रसङ्गश्च । न सतीति भागस्य सत्तादात्म्यवतीत्यर्थाङ्गीकारे स्वाभिप्रायनिर्वाहायैवास्य जघन्यलक्षणाप्रसक्ति । तथात्वे सत्यं ज्ञानमित्यादेरपि शून्यवाद्यभिप्रायानुसारेण ब्रह्मासत्त्वलाक्षणिकत्वापत्ति ।

(द्वै द्यु) किञ्च भवत्पक्षे नैवोभयात्मिकेत्यस्य सर्वथाऽसङ्गतिः। सदसदुभयात्मकवस्तुन एवाप्रसिद्धतया तदात्मकत्वाप्रसक्त्या तद्भेदकथनायोगात्। न च घटादिकं देशकालव्यवस्थया सदसदुभयात्मकं प्रसिद्धमिति वाच्यम्। पूर्वं सदसदादिपदेन परमार्थसत्तदन्ययोरेव प्रसक्त्याऽत्रोभयपदेन किञ्चित्कालदेशसम्बन्धिकिञ्चिद्देशकालासम्बन्धिरूपसदसदुभयस्य प्रसक्त्यभावेन ग्रहणायोगात्। नञ्समभिव्याहारेण सत्सामान्यभेदस्यैव लाभेन सदसदुभयभेदस्यापि लाभेनपौनरुक्त्यापाताच्च। स्वोक्तस्य सङ्कुचितार्थकत्वभ्रमनिरासाय तदुक्तिरिति तु न सत्। सत्पदस्य शुद्धसदादिलाक्षणिकत्वं विना तथार्थबोधकत्वायोगेन व्युत्पन्नानां लक्षणाग्रहे बीजाभावात्। अव्युत्पन्नानां तु नैवोभयात्मिकेत्युक्तावपि उभयपदस्य यत्किञ्चिदुभयलाक्षणिकत्वग्रहसम्भवेन तद्भ्रान्तिनिरासोपायाभावात्।

एवं किन्तु अनिर्वाच्येत्यस्य सदसद्विलक्षणार्थकत्वे पूर्वार्धेन पौनरुक्त्यम्। यदि निर्वक्तुमशक्येत्यर्थः तदा मिथ्यात्वादिना निर्वक्तव्यत्वात् सर्वरूपैर्निर्वक्तुमशक्यत्वेन सदसत्त्वाभ्यामित्यस्याध्याहारप्रसङ्गः। सन्मते निरित्यनेनैव सम्यक्त्वलाभः। अपि च पुनर्मायापदं भवन्मते व्यर्थम्। अनुयोगिसमर्पणस्य एकेनैव सिद्धेः। नञ्भेदात्पुनस्तदुक्तिरिति न वाच्यम्। तथात्वे नञ्त्रयसत्त्वेन तृतीयमायापदप्रयोगप्रसङ्गः। अर्धजरतीयानुपपत्तेः। नैवोभयात्मिकेत्यत्रैवकारस्याधिक्याच्च। न चैतद्दोषद्वयं भवतोऽपि समानमिति वाच्यम्। **माया न सती** स्वतः कार्यरूपा न भवति शुभसम्पादकतया शुभरूपा च न भवति। **नासती** कारणरूपा च न भवति बन्धकतयाऽशुभरूपा च न भवति। किं तु **मायाना** मायोपपदादन्तर्णीतणिजर्थादनतेः कर्तरि क्विपि मायान् मायाप्रवर्तको हरिः। तज्जलानित्यत्र जलानितिशब्दवदयं शब्दः। तेन श्रीहरिणैव कारणरूपा भवति परिणतत्वेन कार्यरूपा च भवति। एवं केषाञ्चित्सत्त्वगुणप्रचुरदेहादिसम्पादकताद्वारा मोक्षोपयोगित्वाच्छुभरूपा केषाञ्चिन्मिथ्याज्ञानप्रापकशरीरारम्भकतया नित्यनिरयप्रापकतयाऽशुभरूपा। अत **एवानिर्वाच्या** एवमेवेति व्यवस्थासहितत्वेन वक्तुमशक्येत्यर्थान्तरेऽप्यस्य वाक्यस्य तात्पर्याभ्युपगमेन सर्वस्यापि सार्थक्यात्। न च वाक्यभेददोषः। योजनाभेदेनार्थद्वयबोधकत्वेन तस्य भूषणत्वात्। अत एव **महाभाष्ये**ऽग्निपरापि चत्वारि शृङ्गेति ऋक् शब्दशास्त्रप्रशंसापरत्वेनापि व्याख्याता। न च स्वतः पदाध्याहारदोषः। **तैत्तरीयारण्यके**ऽपि पठिते 'अन्धो मणिमविन्दत' इति वाक्येऽन्धादिपदानि यथा स्वतश्चक्षुरङ्गुलिहीनादिपराणि। मणिमविन्दत आवयत् असश्चतेत्यादिपदसमभिव्याहारात् तद्वदुभयात्मकत्वबोधकपदसमभिव्याहारात्तादृशार्थस्य निरूढव्यवहारसिद्धत्वात्। न चोदक्षरता। व्यक्ताव्यक्तत्वाभ्यां सदसत्पदयोः कार्यकारणवाचकतया **आकरे** उक्तत्वात् शुभाशुभवाचकतायाश्च सर्वसिद्धत्वात्। न च मायाया सदसदुभयात्मकत्वमप्रामाणिकम्।

सदसद्रूपया चासौ गुणमय्याऽगुणो विभुः। इति भागवते
अव्यक्तं कारणं यत्तत्प्रधानमृषिसत्तमैः।
प्रोच्यते प्रकृतिः सूक्ष्मा नित्यं सदसदात्मिका॥

(द्वै घु) इति विष्णुपुराणे चोभयात्मकत्वोक्त । तस्मान्मायाया अनिर्वाच्यत्व न सतीत्य दिवाक्येनोच्यत इत्येतद सङ्गतमेव ।

वस्तुतस्तु अय श्लोको **नारदीये** नापलभ्यते एव । परन्तु **स्कान्द**वचनम् । तत्रापि किं त्वनिर्वाच्येति नोत्तरार्धादिभाग ।

अनिर्वाच्या यया सर्वभेदाभास व्यवस्थिति ।

इत्युत्तरार्धपाठ इति केचित् । तत्रानिर्वाच्येत्येतावपर्यन्तमुक्तार्थम् । ययेत्यस्य भिद्यन्त इति **भेदाः** परस्पर-भिन्ना **आभासाः** आ सम्यक् प्रकाश्यन्ते प्रमाविषयीभूता घटादिपदार्थास्तेषा **व्यवस्थिति**रुत्पत्त्यादि-व्यवस्थितिर्यन्मूलेत्यर्थ । पराभिमतार्थे अनाभासभेदाप्रसिद्ध्याऽऽभासेति व्यर्थम् । मन्मते प्रमितत्वेन सत्यत्वात्त-दुत्पत्तौ कारणापेक्षा आवश्यकीति ज्ञापन तत्प्रयोजनम् ।

मायापदस्य भगवत्प्रज्ञापरत्वेनैव पूर्वार्धयोजनाया **भेदस्याभासः** सम्यक् ज्ञान प्रमेति यावत् । तस्या **व्यवस्थितिः** विशेषेणावस्थान मुक्तावपि स्थितिरित्यर्थ । भेदरक्षकत्वेन विषयाबाधनिर्वाहकत्वादिति व्यास्येयम् । 'परमेश्वरेण ज्ञातत्वाद्रक्षितत्वाच्च तदद्वैत न स्यात् भ्रान्तिकल्पितमित्यर्थ ' इति मायामात्रपदस्य **भगवत्पादै**र्व्याख्याता-तत्वादिति ध्येयम् । **भेदबुद्धिप्रदायिनी**ति पाठेप्ययमेवार्थ । प्रेत्युपसर्गबलान्मुक्तावपि भेदधीप्रापकत्व पारमेश्व-रप्रज्ञाया उच्यत इत्याद्यवधेयम् ।

यदपि 'ऋतपदेन पूर्वकालिकज्ञानविषयतामात्रलाभात् न तेन जडादिव्यावृत्तिलाभ ' इति 'यथाकथञ्चिदेव तल्लाभे न मुख्यवृत्ति ' इति । तदप्यसत् ।

सर्वत्रासौ समस्त च वसत्यत्रेति वै यत ।
ततस्स वासुदेवेति विद्वद्भि परिपठ्यते ॥

इति विष्णुपुराणोक्तवासुदेवपदप्रवृत्तिनिमित्तवासकर्तृत्ववासाधिकरणत्वस्य गतिकर्मत्वरूपदेवपदार्थतावच्छेदकस्य च घटादावपि सत्त्वेन पूर्वोक्तानन्तपदार्थतावच्छेदकनाशराहित्यस्य जीवादिसाधारण्येन पयोधरत्वादेर्घटादि-साधारण्येन च घटादावपि वासुदेवानन्तपयोधरादिपदप्रयोगप्रसङ्गात् । न च

वर्णागमो वर्णविपर्ययश्च तथा परौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविध निरुक्तम् ॥

इत्युक्ते धातोर्निरतिशयतया सम्बन्धात्सर्वभूतेषु स्वातन्त्र्येण नियामकतया वासकर्तरि सर्वभूताना निरति-शयाधारभूते धातोरित्यस्योपलक्षणत्वेनानन्तपदार्थतावच्छेदकस्य गुणघटितत्वे अत्यन्तातिशयलाभात्षाड्गुणाकरे हरौ वासुदेवानन्तादिशब्दाना मुख्यवृत्ति सर्वजीवनप्रदपयोधारके मेघ एव तच्छब्दस्य मुख्यवृत्तिरिति वाच्यम् । तर्हि ऋतशब्दस्यापि पूर्वोक्तरीत्या ब्रह्ममात्रमुख्यवृत्तौ कुतस्ते प्रद्वेष । ऋतशब्दस्य भावनिष्ठान्तत्वमभ्युपेत्य यद्दूषणदान तत्पूर्वावगतवदिति ज्ञानविषय एव बहुश प्रयुज्यमानावगतशब्दघटितमूलविरोधेन शङ्कितुमशक्य-

(द्वै यु) त्वादनुक्तोपालम्भनरूपत्वाच्चायुक्तमिति स्फुटमेव । यत्तु विशेषानुक्त्यानादित इत्यारभ्य तदर्थत्वादित्यन्त तत्तुच्छम् । विशेषानुक्त्येत्यस्य पूर्वोक्तार्थकत्वेन त्वद्भ्रान्तिगोचरार्थदूषणस्याकिञ्चित्करत्वात् । यदपि तथा च यथाकथञ्चिदित्यारभ्य पौनरुक्त्यापातादित्यन्त तदप्ययमङ्गतम् । ऋतशब्दस्य मुख्यवृत्तेरेवोपपादितत्वेन यथाकथञ्चिद्विवक्षितार्थलाभाभावात् । अविद्यादौ प्रयुक्तानृतादिपदाना रूढित्याग इत्यप्यसत् । अविद्यादावेव त्वदुक्त मिथ्यात्व विहाय परिणामित्वादिना स्मृत्युक्तरूढेर्बलवत्त्वात् । प्रकृतिप्राकृत प्रोक्तमिति प्रशब्देन बलवद्विद्वद्रूढेः प्रदर्शितत्वात् । ऋत सत्य पर ब्रह्मेत्यादौ ऋतशब्दस्योक्तार्थत्वेन ब्रह्मशब्दस्येव तत्र मुख्यवृत्तेरेव सत्त्वेनामुख्यवृत्त्यनाश्रयणात् । ऋत च सत्य चाभीद्धात्, ऋत च स्वाध्यायप्रवचने च, सत्य च स्वाध्यायप्रवचने च इत्यादौ शतशो ऋतसत्यादिपदानामन्यत्रापि प्रयोगेण ऋतपदस्य परमार्थरूढिरित्यस्यासिद्धेश्च । कोशादीनामपि बहुप्रयोगानुसारित्वात् । एतेन वस्तुत इत्यपि परास्तम् । स्वत एव तयोरर्थभेदसत्त्वात् । कृष्णल स्रपयेदिति विध्युद्देशगतस्यापि धातो प्रथम प्राप्तस्यापि सुवर्णकृष्णलमिति चरमवाक्यानुसारेणोष्णीकरणरूपामुख्यार्थताया अङ्गीकृतत्वेन त्वदुक्तनियमासिद्धेश्च ।

एतेनैतेनेत्यादि निरस्तमित्यन्तं निरस्तम् । यदपि एवमित्यादि विष्णुपुराणादिवचनोदाहरणपूर्वकं दूषणं तदपि न लग्नम् । इत्यत्रासच्छब्दस्येत्यस्यासङ्गते । एतच्छ्लोकद्वयेऽसच्छब्दाभावात् । अन्यत्र यत्र कुत्रचिद्विद्यमानस्यासच्छब्दस्यैव परिणामिपरत्वस्य प्रकृतपुराणवाक्यासङ्गतौ बीजत्वाभावात् । अनृतपदस्यैव परिणामिपरताया [1]उक्तत्वेनापरिणामिपरताया अनुक्तत्वाच्च । अनृतपदस्य परिणामिपरत्वेऽसच्छब्दस्यापि तत्पर्यायस्य तथात्वरूपाशुभत्वावच्छिन्नपरत्व प्राप्तमेव । तथा च जगति प्रयुक्तानृतासदादिपदाना परिणाम्यादिपरत्वे जगत असत्त्वासिद्ध्या वक्ष्यमाणासङ्गतिरिति क्लेशेन कथञ्चिदेतदुक्तिसम्बन्धेपि जगत सत्यत्वेनैतद्विष्णुपुराणवाक्यासङ्गति । तथा हि, विष्णुपुराणे द्वितीयांशस्थत्रयोदशाध्यायस्थमिद वाक्यम् । तत्र पूर्वसन्दर्भे भरतरूपावधूत प्रति राज्ञोक्तमुपन्यासपूर्वकं 'युवा पीवा दृश्यसे । अत किमध्वगमनमात्रेण श्रान्तोमि' इति । तदुत्तरत्वेन भरतेनोक्त 'न मयि श्रान्तत्वादिक पीनत्वादिक वास्ति' इति । स्वस्मिन् शरीराभिमानाभावविवक्षयाऽवधूतोक्तमबुध्वा लोकदर्शनमनुसरता राज्ञा 'प्रत्यक्षं दृश्यसे' इत्यादिग्रन्थेन तदुक्ते प्रत्यक्षबाधेऽभिहिते, आत्मन शरीरान्यत्वाच्छरीरे उपलभ्यमानधर्माणा पीवरत्वादीनामात्मनि प्रत्यक्षसिद्धत्वाभिधान तवासङ्गतमितिभावेन 'प्रत्यक्ष भवता भूप' इत्यादिश्लोकै पादोपरि जङ्घादिस्थितिक्रमेण शरीरोपर्येव विकारादिस्थिति आत्मनश्च स्वभावत प्रकृतिविलक्षणत्वं गुणत्रयानात्मकत्व च प्रदर्श्य तदभिमानाभावात्स्वस्य श्रान्त्यभावोपि दर्शित 'पराशर उवाच' इत्यन्तै श्लोकै । तत्प्रकरणे एते श्लोका

कर्मवश्या गुणाश्चैते सत्वाद्या पृथिवीपते ।
अविद्यासञ्चित कर्म तच्चाशेषेषु जन्तुषु ॥

[1] उक्तत्वेनासच्छब्दस्य परिणामिपरत या इति पाठेन भाव्यमिति भाति ।

(द्वै यु) आत्मा शुद्धोऽक्षरः शान्तो निर्गुणः प्रकृतेः परः ।
प्रवृद्ध्यपचयौ नास्य एकस्याखिलजन्तुषु ॥
यदा नोपचयस्तस्य न चैवापचयो नृप ।
तदा पीवानसीति त्वं कया युक्त्या त्वयेरितम् ॥' इति ।

तेषामयं भावः । प्रथमश्लोके सर्वप्राणिनां कर्मबद्धत्वेऽभिहिते शङ्का भवति । तर्हि 'एको देवः सर्वभूतेषु गूढः' 'न कर्मणा वर्धते नो कनीयान्' इत्यादिश्रुतिर्बाध्येत । सर्वत्र विद्यमानात्मन एकत्वकर्मबद्धत्वश्रवणादित्यत आह ॥ आत्मेति ॥ आत्मा परमात्मा । तच्छब्दस्य तत्रैव मुख्यत्वात् । आत्मा स्वामी वा सर्वजीवनियामकत्वेन हृदयस्थित इत्यर्थः । अखिलजन्तुष्वित्यनेन जीवानां नियम्यतया ग्रहणात् सर्वजीवेषु एकस्य जीवस्य नियामकतया स्थित्ययोगात् प्रकृतिपरत्वलिङ्गाच्च अत्रात्मपदं परमात्मपरमेव । न चाखिलजन्तुष्वित्यस्य सप्राणदेहेष्वित्यर्थो युक्तः । पूर्वश्लोके तत्पदेन जीवानामेव कर्मबद्धत्वलिङ्गेन प्रकान्तत्वात्तत्परित्यागे प्रकृतहानापत्तेः । जन्तुशब्दस्य प्राणभृत्स्वेव प्रयोगेण प्रकृते तत्परित्यागे प्रसिद्धार्थत्यागापत्तेश्च । तथा च शङ्कितश्रुतयः परमात्मपरा इति भावः ॥ यदेति ॥ तस्य तत्प्रतिबिम्बभूतस्य जीवस्य यदा यस्मात् नोपचयः नैवापचयः स्वरूपत उपचयापचयाभाव इत्यर्थः ।

अल्पं तेजस्तथैवाल्पं जीवरूपं हि संसृतौ ।
तदेव सुमहत्तेजः करोतीशो विमुक्तिगम् ॥

इतिवचनेन मुक्तौ स्वरूपोत्साहस्य विद्यमानत्वेन संसारे तदभावः । अपचयस्य तु सर्वथा तदभाव इत्याशयेन न चैवापचय इत्युक्तम् । नित्यः सर्वगतस्थाणुरित्यादेर्नित्यसर्वगतेश्वरप्रतिबिम्बत्वेन जीवविषयत्वेन गीताभाष्ये व्याख्यानात् एवमुत्तरत्र 'भृत्यश्चाहं प्रतिबिम्बेन सोऽस्मि' इत्यादिश्रुत्युदाहरणेन प्रतिबिम्बत्वस्य दर्शितत्वाच्च तस्येत्यस्योक्तव्याख्यानं नावमत्यर्हम् । युक्ताश्च बिम्बधर्माः प्रतिबिम्बे सति चाविरोध इत्यनेन द्वितीयाध्याये गीताभाष्य एव प्रमाणान्तराविरुद्धबिंबधर्माणां प्रतिबिम्बे उपपादितत्वात् । ईश्वरप्रतिबिम्बत्वयुक्त्या स्वरूपतो वृद्ध्याद्यभावोपपादनाय प्रतिबिम्बरूपाभेदबोधकतत्पदेन जीवनिर्देशः कृतः । 'यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि नो इतराणि' इत्यादौ वेदे, लोके 'हरशिरसि शिरांसि यानि रेजुः शिव शिव तानि लुठन्ति गृध्रपादे' इत्यत्र, एवं 'ये पूर्वभुक्ताः शालयः तानेवेदानीं भोक्ष्ये' इत्यादौ पूर्वोक्तार्थसादृश्यरूपाभेदमात्रतात्पर्येण तच्छब्दप्रयोगसत्त्वात्प्रतिबिम्बस्यापि सादृश्यगर्भितत्वान्न लोकवेदातिक्रम इत्यवधेयम् ।

आत्मेत्येतच्छ्लोकस्य जीवपरत्वेन योजनायां अखिलजन्तुषु स्वकीयकर्मनिर्मितनानादेहेषु एकस्य एकरूपस्य शरीरपरिमाणादिरहितस्येत्यर्थः । शरीरपरिमाणत्वेऽनित्यत्वापत्त्या पूर्वार्जितकर्मभोगाद्यभावप्रसङ्गेन कृतहानाकृताभ्यागमप्रसङ्गसूचनाय पूर्वश्लोके अविद्यासञ्चितं कर्मेत्याद्युक्तम् । शिष्टं सुगममिति ।

(द्वै द्यु) ततो राजा अयं ज्ञानीति मत्वा तत्प्रसादेच्छया तत्पादग्रहणपूर्वकं 'त्वं कृत्रिमवेषेण सञ्चरसि। त्वदागमनकारणमपि न जानामि। अतस्त्वत्स्वरूपाज्ञानप्रयुक्तमदपराधं क्षमस्व' इत्याशयेन

'कथ्यतां को भवानत्र जाल्मरूपधरस्थितः ॥'

इत्यादिग्रन्थेन पप्रच्छ। तस्मिन् राज्ञि करुणया अर्थविशेषबोधौपयिकजिज्ञासाजननाय प्रश्नद्वयोत्तरं स्फुटमेवेत्यभिधाय मदीयाकृत्रिमरूपं त्वदाद्यकृत्रिमरूपापेक्षया यद्यपि व्यावृत्तं तथापि [1]तादृशधर्मव्यावर्तकधर्मवत्त्वेनेदानीं त्वां प्रति मया निरूपयितुमशक्यम्। मया निरूपणे कृतेऽपि तवानुत्पन्नज्ञानत्वेन त्वद्बुद्ध्यावनारोहात्। यत्स्वाभाविकमात्मन्यपरायत्तस्वामित्वाभिमानेन भासमानं तन्निश्चयस्त्विदानीं त्वया ज्ञातरूपनिश्चयतुल्यत्वादनावश्यक इत्याशयेन 'कोहमित्येतद्वक्तुं भूप न शक्यते' इति मुनिरुक्तवानित्येतमर्थं 'ब्राह्मण उवाच' इत्यादिनोक्तम्। तदनन्तरं यो धर्मो व्यावर्तकतया वर्तते तद्वत्तया प्रतिपादने किं बाधकम्। अनृतवादित्वाभावात्। सोहमित्यादिशब्दोच्चारणस्यापि दोषत्वाभावादित्यभिप्रेत्य शरीरात्मनोः स्पष्टविवेकग्रहशून्येन राज्ञा 'योस्ति सोहम्' इत्यादिनाऽभिहिते स्वाभिप्रायमाविष्कर्तुं शरीरेन्द्रियादितादात्म्यमात्मनो निराकृत्य बहिस्त्वया परिदृश्यमानसर्वधर्मा नात्मीया अतस्तद्वत्तया निरूपणं न कर्तव्यमित्युक्तम्।

'पिण्डः पृथग्यतः पुंसः शिरःपाण्यादिलक्षणः।
ततोऽहमिति कुत्रैतां सञ्ज्ञां राजन् करोम्यहम् ॥'

इत्यन्तेन। अहंशब्दप्रवृत्तिनिमित्ताहेयत्वस्यैतेषु कथञ्चिदप्यभावात्तच्छब्देनैतद्विशिष्टमत्स्वरूपप्रतिपादनमयुक्तमिति भावः। तदुत्तरत्र 'यद्यन्योस्ति' इत्यादयः श्लोकास्तेषामियं गमनिका। तर्हि शिबिग्रहणवेलायां यादृशजात्यादिमत्त्वेन भवान् ज्ञातः तज्जातीयजीवापेक्षया तव वैलक्षण्यमात्मसम्बन्धिस्वाभाविकधर्मैरेव निरूपयेत्यभिप्रायवन्तं प्रत्याह।

यद्यन्योऽस्ति परः कोपि मत्तः पार्थिवसत्तम।
तदैषोहमहं चान्यो वक्तुमेवमपीष्यते ॥
यदा समस्तदेहेषु पुमानेको व्यवस्थितः।
तदा हि को भवान्सोहमित्येतद्विफलं वचः ॥'

अस्याद्योर य इत्यादाविवान्यपदं सजातीयान्यपरम्। तथा चैवमपि शरीरधर्मेण निरूपयितुमशक्यत्वेपि मत्तोन्यः परापरदर्शित्वादिना मत्सजातीयः मत्तः परो ज्ञानादिनोत्तमोऽपि वा। अथ वा मत्तोन्यः परावरदर्शित्वेन लोकश्रेष्ठो यद्यस्ति निकटे यद्यस्ति तदाहमेष एतादृशः स्वाभाविकधर्मोपेतः अयं चान्यः अन्यधर्मोपेत इति वक्तुमिष्यते तथेच्छा भवति। नञ्ज्ञ नस्य तस्य सद्भावेपि मद्वाक्यश्रवणादिना हर्षादिसम्भवात्। तत्संवादेन मद्वाक्ये त्वद्दृष्टान्तो [illegible]मनिश्च[illegible] वाच। यदा समस्तदेहेषु समीपस्थितत्वदादिसर्वदेहेषु पुमान्

[1] तादृशरूपव्यावर्तक इति पाठेन भाव्यमिति भाति।

(द्वै द्यु) जीव जात्येकवचनम्। एकः एकविध आत्मानात्मविवेकज्ञानशून्यत्वरूपैकधर्मोपेत इति यावत्। तदा को भवानिति त्वत्प्रश्नवाक्य सोऽहमित्येतदुत्तरवाक्य च विफलमेव। उत्तरवाक्यस्य निश्चितप्रामाण्यार्थकबोधानुपधायकत्वेन वैफल्ये प्रश्नवाक्यस्य वैफल्य सहजत एव प्राप्तमिति भाव। सोऽहमित्यस्य जीवान्तरव्यावृत्तौ तादृशस्वाभाविकधर्मविशिष्टोऽहमित्यर्थ।

अथ वा यद्यन्योऽस्तीत्यादेरिय गमनिका। ननु तर्हि शरीरतादात्म्यमात्मनि नास्ति तर्हि शरीररूपोपाधिकृतभेदेनैवात्मनि भेदस्तवाभिसहित किं। नेत्याह ॥ यद्यन्य इति ॥ परः परदेहे प्रतीयमान अन्यः स्वभावतान्य। यद्वा परोऽन्यः मुख्यभेदविशिष्ट। स्वाभाविकत्वस्यैव मुख्यत्वात्। तल्लाभ परो धार्मिक इत्यादौ धर्मे पारम्यलाभवत्। तदेत्यादेरुक्त एवार्थ। विफलत्व प्रश्नोत्तरयो प्रमाया अनिर्वाहकतया बोध्यम्।

अथ वा पूर्वग्रन्थे ब्राह्मण उवाचेत्यनन्तर

श्रूयता कोऽहमित्येतद्वक्तु भूप न शक्यते।

इति श्लोक श्रूयते। यद्यपि तत्र यो भवान् त्वत्कथ्यतामिति राजप्रश्न प्रति सोऽहमित्यस्यैवोत्तरत्वेन तादृशानुपूर्व्या अशक्यता वक्तव्या। न तु कोऽहमित्यानुपूर्व्या। तस्या किंशब्दघटितत्वेन प्रश्नरूपत्वात्। तथापि किंशब्द छान्दसत्वात्तच्छब्दार्थ। एवमुत्तरत्रापि

यत्त्वेतद्भवता प्रोक्त कोऽहमित्येतदात्मन।
वक्तु न शक्यते श्रोतु तन्ममेच्छा प्रवर्तते ॥
योऽस्ति सोऽहमिति ब्रह्मन् कथ वक्तु न शक्यते।
आत्मन्येष न दोषाय शब्दोऽहमिति यो द्विज ॥

इति राजसम्बन्धिवाक्यघटकानुवाद्यभागस्थकिंशब्दस्याप्ययमेवार्थ। अत एव सोऽहमिति राज्ञा तद्विवरणमेव कृतम्। इतरव्यावर्तकधर्मवत्तया मत्स्वरूपप्रतिपादनमशक्यमिति भाव।

यद्वा कोऽहमित्यस्याह को वा कीदृशव्यावर्तकधर्माद्युपेतो वा इति हेतोरेतदिद विविच्य वक्तु न शक्यते। मत्स्वरूपस्यैव परमेश्वरेण प्रकृत्यादिभिर्बद्धत्वेन मया सम्यग्गृहीतुमशक्यत्वादिति भाव। तथा च व्याख्यानद्वयेपि स्वस्वरूपस्य सम्यगज्ञानात्सम्यग्वक्तुमशक्यत्व फलितम्। सम्यक् तदभिप्रायं ज्ञातुकामेन राज्ञा अभिहित यो धर्मोऽनुभवसिद्धो वर्तते तत्पुरस्कारेण सोऽहमिति वक्तव्यम्। न ह्यहशब्दप्रयोग एव दोष। अत कथमेतदित्याशयेन योऽस्ति सोऽहमित्याद्यभिहितम्। तत 'ब्राह्मण उवाच

शब्दोऽहमिति दोषाय नात्मन्येष तथैव तत्।
अनात्मन्यात्मविज्ञान शब्दो वा भ्रान्तिलक्षण ॥
जिह्वा ब्रवीत्यहमिति दन्तौष्ठ तालुक नृप।
एते नाहंयत सर्वे वाङ्निष्पादनहेतव ॥

(द्वै ग्र)

किंहेतुभिर्वदत्येषा वागेवाहमिति स्वयम् ।
तथापि वाङ्नाहमेतद्वक्तुमित्थं न युज्यते ॥
पिण्डः पृथग्यतः पुंसः शिरःपाण्यादिलक्षणः ।
ततोहमिति कुत्रैतां सञ्ज्ञां राजन्करोम्यहम् ॥
यद्यन्योस्ति परः कोऽपि ।

इत्यादिसमग्राध्यायो भरतवाक्यरूपः । तस्यायमभिप्रायः । अनुभवसिद्धा धर्मा शरीरात्मविवेकस्य स्फुटतरज्ञानाभावेन कृष्णोहमिति व्यवहारविषयीभूता केचन शरीरधर्मा अहं कर्तेत्यादिप्रतीतिसिद्धाः शरीरादिकं प्रति स्वातन्त्र्यापरायत्तकर्तृत्वादयस्ते सर्वेपि न मदीयाः । ये मदसाधारणा न ते इदानीं मदनुभवसिद्धाः परमेश्वरशक्त्या आवृतत्वात् । अतः कथं तत्पुरस्कारेण वक्ष्यामीति । अत एव त्वं राजा शिबिकेत्यादिसमस्तोत्तरप्रबन्धेन राजत्वभृत्यत्वादिनिखिलधर्माणां स्वभावतः आत्मीयत्वाभावं सविस्तरमुपपाद्याध्यायान्ते तदुपसंहरति।

एवं व्यवस्थिते तत्वे मयाहमिति भाषितम् ।
पृथक्करणनिष्पाद्यं शक्यते नृप ते कथम् ॥ इति ।

तथा चेत्थं योजना । **अनात्मनि** परमात्मभिन्ने जीवे **आत्मविज्ञानं** परमात्मधर्मज्ञानं । **एवमनात्मनि** जडे शरीरादौ **आत्मविज्ञानं** । **शब्दो वा** तत्प्रतिपादकशब्दो वा । **भ्रान्तिलक्षणः** भ्रान्तेर्लक्षणं यत्र सः । शब्देऽपि ज्ञानद्वारा भ्रान्तिलक्षणमन्यथावगाहित्वं वर्तत एव । तत्र शरीरतदिन्द्रियादीनां आत्मभिन्नत्वं सयुक्तिकमुपपाद्य तत्राहशब्दार्थत्वाभावमाह ॥ **जिह्वेत्यादि** ॥ **एतेहं** अहंशब्दार्था न भवन्तीत्यर्थः । **वागेव** यदि **स्वयमहमिति** यदि वाक् मुख्यतया अहंशब्दार्थभूता कर्त्री। तदा **किंहेतुभिर्वदति** किंकरणैर्वदति । अस्या एव कर्तृत्वे कारणान्तराभावादिति भावः । **तथापि** एवं भेदसत्वेपि **वाङ्नाहमेतदित्थं वक्तुं न युज्यते** न शक्यते । स्फुटतरभेदज्ञानस्य सर्वसाधारण्येनाभावादिति भावः । एवं शरीरधर्मवति आत्मत्वनिरूपणं अहंपदेन कर्तुं न शक्यमित्युपपाद्य स्वातन्त्र्येण कर्तृत्वादिविशिष्टतया प्रतीयमानस्य तादृशधर्मविशिष्टस्याहंपदार्थत्वं त्वया निरूपणीयमित्याशङ्क्य तेषां परमात्मधर्माणां जीवे भ्रान्त्या प्रतीयमानत्वेपि तद्विशिष्टस्य नाहंपदबोध्यजीवाभेदः इत्याशयेन शरीरे नियामकतया जीवातिरिक्तः किमर्थमसावङ्गीकार्य इत्यतो विपक्षे बाधकमुखेन तं साधयति ॥ **यदीति** ॥ **एवमपि** शरीरादिभिन्नस्य जीवस्य शरीराधिष्ठातृत्वेपि । **अन्यः** जीवाद्विलक्षणः । **मत्तः** इत्युपलक्षणं अस्मदाद्यपेक्षया । **परः** प्रेरणास्वातन्त्र्यादिना उत्तमः । **कोपि** इदानीं भवदादिभिरनिर्धारितस्वरूपो **यद्यस्ति तदा** तदैवैषोहं **अयं चान्य** इति वक्तुमिष्यते । सर्ववचनानां साक्षात्परंपरया वा परमात्मज्ञानोपयोगितया साफल्येन ज्ञानिनां तत्रेच्छोदेतीत्यर्थः । **यदा समस्तदेहेषु एकः पुमान्** प्रधानपुरुषः परमात्मा **अव्यवस्थितः** नियामकतया न **स्थितस्तदा** परतन्त्रस्वरूपज्ञानमात्रेणैतावत्कालमनुत्पन्नस्योत्तरोत्पत्तौ बीजाभावात् परतन्त्रस्य ज्ञातस्य फलदाने सामर्थ्याभावात्को भवानितित्वदीयप्रश्नवाक्यस्य सोहमिति मदीयोत्तरवाक्यस्य परमफलापर्यवसायित्वेन वैयर्थ्यमेवेति भावः ।

(द्वै द्यु.) अथ वा सर्वनियामकस्य स्वतन्त्रस्य सत्त्वे

द्रव्य कर्म च कालश्च स्वभावो जीव एव च ।
यदनुग्रहत सन्ति न सन्ति यदुपेक्षया ॥

'नित्य नित्यात्मना यतो नियामयति' इत्यादिप्रमाणानुसारेण तन्नियततया सर्वव्यवस्थासम्भवात् लक्षण-विशेषणवत्तया स्वस्वरूपान्यस्वरूपप्रतिपादकवचनाना प्रामाण्यमम्भवात्तथा वक्तुमिच्छा स्यात् । अन्यथा 'अनव-स्थितेरसम्भवाच्च' इति न्यायेन कस्यापि नियामकत्वाभावात् तेन सर्वव्यवस्थाया असिद्धया सर्वस्याऽकस्मिकत्वा-पत्त्या इतरव्यावर्तकस्वस्वरूपलक्षणप्रश्नप्रतिवचनादिप्रमात्मकफलानिर्वाहकमेव स्यात् । कश्चितव्यावर्तकधर्मस्य कालान्तरे अकस्माद्व्यावृत्तिप्रतियोगिन्यपि सम्भवेन व्यावृत्तेरपि नाशादिसम्भवेन तादृशवचनप्रामाण्यानिर्वाहादिति भाव । अस्तु कश्चन परमात्मा तथापि मम राजत्वादिवत्स्वशरीरादिस्वामित्व स्वनिष्ठमपरायत्तमेव कुतो न स्यादित्याशङ्क्य तदप्यस्वाभाविकमेवेत्याह ।

त्व राजा शिबिका चेय वय वाहा पुर सरा ।
अय तु भवतो लोको न सदेतन्नृपोच्यते ॥ इति ।

'सद्भावे साधुभावे च' इति वचनात् सत् स्वाभाविकत्वेन सम्यक् न भवतीत्यर्थ । तदेवोपपादयति

वृक्षाद्दारु ततश्चेय शिबिका त्वदधिष्ठिता ।
क्व वृक्षसञ्ज्ञा याता स्याद्दारुसञ्ज्ञाऽथ वा नृप ॥
वृक्षारूढो महाराजो नाय वदति ते जन ।
न च दारुणि सर्वस्त्वा ब्रवीति शिबिकागतम् ॥
शिबिका दारुसङ्घातो रचनास्थितिसम्भव ।
अन्विष्यता नृपश्रेष्ठ तद्भेदे शिबिका त्वया ॥
एवं छत्रपताकाना पृथग्भावो विमृश्यताम् ।
क्व यात छत्रमित्येव न्यायस्त्वयि तथा मयि ॥
पुमान्स्त्री गौरयं वाजी कुञ्जरो विहगस्तरु ।
देहेषु लोकसञ्ज्ञेयं विज्ञेया कर्महेतुषु ॥
पुमान्न देवो न नरो न पशुर्न च पादप ।
शरीराकृतिभेदास्तु य एते कर्मयोनय ॥
वस्तु राजेति यल्लोके यच्च राजभटात्मकम् ।
तथान्यच्च नृपेत्थं तु न सत्सङ्कल्पनामयम् ॥
यत्तु कालान्तरेणापि नान्यसञ्ज्ञामुपैति वै ।

(द्वै घु) परिणामादिसम्भूत तद्वस्तु नृप तच्च किं ॥

त्व राजा सर्वलोकस्य पितु पुत्रो रिपो रिपु ।

पत्न्या पति पिता सूनो किं त्वा भूप वदाम्यहम् ॥ इत्यादि ।

**क याता स्यात्** शिविकावस्थायामिति शेष । कुतो वृक्षादिसञ्ज्ञापगम इत्यत शिबिकास्थिते त्वयि वृक्षारूढ इति दारुस्थित इति व्यवहाराभावादित्याह ॥ **वृक्षेति** ॥ ते त्वा ते तव जन इति वा सम्बन्ध । **रचनास्थितिसंस्थितः** रचनास्थित्या निर्माणाधीनसंस्थानविशेषादिना सत्तावानित्यर्थ । **सम्भव** इति पाठेऽप्ययमेवार्थ । **एष न्यायः** शिविकादिव्यवहारतदभावयोर्नियामकीभूतागन्तुकत्वन्याय । **त्वयि मयि** राजशरीरावच्छिन्ने वाहकशरीरावच्छिन्ने । तादृशशरीराणामस्वाभाविकत्वोपपादनाय **कर्मयोनय** इति । कर्मनिमित्तका इत्यर्थ । पूर्वोक्तार्थानुवादपूर्वकमेतन्न्यायमन्यत्रातिदिशति ॥ **वस्त्विति** ॥ **सङ्कल्पनामय** सङ्कल्पना सम्यक्स्वानुकूला या कृति तन्मय तत्प्रचुर तत्प्रधानकमेवेत्यर्थ । ननु **न सदिति** असत्त्व प्रतिज्ञाय तद्धेतुत्वेन कल्पनामयत्वोक्तिर्न युक्ता । असत कृत्यनधीनत्वात्प्रत्यक्षबाधाच्चेत्यत स्वाभिप्रायमाविष्करोति ॥ **यत्त्विति** ॥ **तद्वस्तु** वस्तुशब्दवाच्य हे **नृप तत्** तादृशपराधीनविशेषादिविक्रियारहितम् । **कि** आक्षेपे । ईश्वरातिरिक्त न किमपीत्यर्थ । असत्पदार्थनिरूपणाय तत्प्रतियोगिबोधकतद्घटकसत्पदप्रयोगे कर्तव्ये तत्पर्यायवस्तुपदप्रयोगेण परिणामादिरहितमेव मुख्यत्वात्परमार्थपदसत्पदऋतपदवस्तुपदादिव्यवहारालम्बनम् । तदन्यत्तु परिमाणादिमत्त्वेनामुख्यत्वादसदनृतावस्त्वादिपदेन व्यवह्रियते इति रीत्या पुराणादावनृतत्वाद्युक्तेर्गतिस्सूचिता । जीवे इदानीं प्रतीयमानास्सर्वे धर्मा अव्यवस्थितत्वाद्देहानुबन्धिन एवेत्याह ॥ **त्व राजेति** ॥

एव च त्वदुदाहृतविष्णुपुराणं नैतद्व्याससूत्रविरुद्धार्थकम् । प्रत्युत तदनुकूलमेवेत्येतदवष्टम्भेन त्वद्दूषणमयुक्तमेव । प्रत्युत तवैव परान्यपदयोरन्यतरवैयर्थ्यम् । मन्मते समस्तवाक्ययोजनाया दर्शितत्वेन कस्यापि वैयर्थ्यासङ्गत्यभावयो स्फुटत्वात् । सर्वस्य मिथ्यात्वात्मैकत्वाभिप्रायक एव चेदय सन्दर्भस्तदा जगतो मिथ्यात्वमुपपाद्यात्मैकत्व निरूपणीयम् । जिह्वादीना शरीरादीनामहमर्थातिरिक्तत्वोपपादनस्य पूर्वसन्दर्भकृतस्य शरीरादीना कर्महेतुत्वादिनोत्तरसन्दर्भकृतस्यास्वाभाविकत्वोपपादनस्य क्वोपयोग । न हि शरीरादिवैलक्षण्यमात्रेण आत्मन एकत्व तेषा मिथ्यात्व वा सिद्ध्यति । लोकायतातिरिक्तसमयिना तदङ्गीकाराभावप्रसङ्गात् । अपि चाहमर्थस्यापि त्वन्मते अनात्मत्वेन तद्वैलक्षण्यस्य शरीरे उपपादनेऽपि स्वाभिमतात्मवैलक्षण्यासिद्धे । आत्मनि अहमर्थवैलक्षण्यस्यावश्य वक्तव्यस्यानुक्त्याऽसङ्गतिश्च । एतदध्यायोपसहारवाक्ये

एव व्यवस्थिते तत्त्वे मयाहमिति भाषितुम् ।

पृथक्करणनिष्पाद्य शक्यते नृप ते कथम् ॥

इत्यत्र शरीरात्मादीना सर्वेषा तत्त्वत्वमुक्त्वा आत्मसम्बन्धिप्रतिनियतस्वाभाविकधर्माणामशक्यज्ञानत्वेनैवाहमित्याद्युक्त्यशक्यताया स्फुटप्रतिभासादैक्यमूलकत्वाप्रतिभासाच्च । तथात्वे पृथक्करणेति पुरुषव्यापारस्य तत्र निष्पादनहेतु-

(द्वै द्यु) त्वोक्त्यसङ्गति । पृथक्करणेऽपि त्वदभिमतनिरुपाधिकात्मतत्वस्य त्वदुक्तरीत्यैव निर्देशायोग्यत्वस्यापरिहारात् । अपि च त्वदुक्तरीत्या अहमित्यादिवचनवैफल्ये 'अहं ब्रह्मास्मि' 'तद्योह सोऽसौ' 'यो सौ सोऽहं' 'तत्वमसि' इत्यादीनामुपदेशाना वैयर्थ्यापत्ति । तेषा सार्थक्ये तद्रीत्यापि सम्भवेन हमादिशब्दघटितोपदेशस्यानर्थक्यकथनासङ्गति । न चानया वाचोभङ्ग्या जगन्मिथ्यात्वोपपादनपूर्वकमात्मैकत्वमेव सिद्ध्यतीत्याशयेनैवमुक्तिरिति वाच्यम् । उक्तोक्त्या तदलाभस्य दर्शितत्वात् ।

अपि चाख्यातस्य तादात्म्यार्थकत्वस्य त्वदुरुणोक्तत्वात्तेनैवासत्त्वावरणाज्ञानाभावापिहितचैतन्यस्य सत्तारूपतया असघात्वर्थनाय जडत्वहेतुसमर्थने उक्तत्वेन तादृशसत्तातादात्म्यस्य मिथ्याभूतवस्तुन्येव सम्भवेनाहङ्कारादावसीत्यादिनिर्देशायोग्यत्वकथनस्यासङ्गतत्वात् । आत्मान्यमिथ्यात्वम्यैवाहमस्मीति निर्देशायोगबीजत्वप्राप्त्या तदनुक्त्या चैतन्यैक्यकथनस्यासङ्गतत्वाच्च । अभेदस्य भास्कररीत्याऽपि सम्भवात् । अत्र कारणव्यतिरेकेण कार्यासत्त्वमुच्यत इत्यसङ्गतम् । शिबिकावस्थाया वृक्षावस्थाद्यपगमप्रयुक्ततत्सञ्ज्ञापगमोक्त्या कार्यव्यतिरेकेणैव कारणाभावस्य लाभात् । यदपि यदग्नेरित्यादि तदपि वाचारम्भणश्रुतिव्याख्यावसरे उक्तश्रुतेरप्यर्थप्रकटनेन निराकरिष्याम । परिणामविक्रियाशून्येत्याद्यसङ्गतम् । परिणामविक्रियाशून्यत्वस्य पारमार्थिकत्वोपपादकत्वे शशविषाणादिरूपासतोपि तथात्वापातात् । सत्स्वरूपत्वस्यापि नियामकत्वे स्वरूपवत्वरूपतत्सम्बन्धात्मकविक्रियाया अवर्जनीयतया विक्रियाशून्यत्वानुपपत्ति । यदपि प्रसिद्ध्यतिक्रम इत्यादि तदपि मन्ददग्धनम् । बाधके सत्यर्थान्तरानुसरणस्य न्याय्यत्वात् । जगत्सत्यताग्राहकप्रमाणानामेव बाधकत्वात् । अन्यथा ब्रह्मण सदसद्विलक्षणत्वबोधकपूर्वोदाहृतवाक्येष्वपि सदसच्छब्दयोरर्थान्तराभावप्रसङ्गात् । लक्षणासन्दर्भविरोधौ न स्त एवेति तद्व्याख्यना एव प्रदर्शितम् ।

यदप्येवमित्यादिना विष्णुपुराणगतस्थानान्तरगतवाक्यानि स्वोपयोगितयोदाहृत्य जगतोऽनिर्वचनीयत्वकथन तदप्यसङ्गतम् । तत्र पूर्ववाक्यानि

> परमार्थस्त्वमेवैको नान्योस्ति जगत पते ।
> तवैष महिमा येन व्याप्तमेतच्चराचरम् ॥

इत्यादीनि । तत्र धरण्यामुद्धृताया मुनिभिर्वराहरूपस्य हरे स्तुति क्रियते। तद्धटकैतद्वाक्ये परमार्थ इत्यस्योत्तमोर्थस्त्वमेवेत्यर्थ । तदुपपादकतया तवैष महिमेत्युक्ते । न हि चराचरव्याप्तमाहात्म्यं अबाध्यत्वस्योपपादकम् । निष्क्रियस्य तस्य माहात्म्यादेरयोगात् । न चैतत्तस्यानुपपादकमेव तूष्णीं कथितमिति वक्तु युक्तम् । त्वमेव परमार्थो नान्यः इत्युक्तौ कुत इत्याकाङ्क्षाया आवश्यकत्वेन तदर्थत्वेनैतस्याप्रवृत्तौ न्यूनतापातात् । तथा च माहात्म्यस्य चराचरव्याप्तत्वेपि न निरुपचरितोत्तमत्व युक्तम् । येन नान्योस्तीतिनिषेध. सङ्गच्छेत । तदप्यन्यवत्पाञ्चभौतिकदेहग्रहणपरित्यागादिनेतरयोगिजनसाधारण्यात् । न चैतत्स्वरूपमेव । तस्यादृश्यत्वेनापरिच्छिन्नत्वेन दृग्विषयत्वधरण्युद्धरणरूपक्रियाद्ययोगादित्याशङ्क्य निषेधति ॥ यदेतदिति ॥

(द्वै घु) यदेतद्दृश्यते मूर्तं रूपं ज्ञानात्मनस्तव ।

भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥ इति ।

**आत्मशब्दो** देहवाची । ज्ञानात्मकदेहवतस्तव **मूर्तं** धरण्युद्धरणादिक्रियाविशिष्टं **रूपं दृश्यते** प्रत्यक्षविषयीक्रियते । **एतद्रूपमयोगिनः** भगवति मनोयोगतत्साध्यदिव्यचक्षुरादिरहिता । **कुयोगिन** इति पाठे कुत्सितज्ञानादिविशिष्टा अयोग्या इत्यर्थः । **भ्रान्तिज्ञानेन** ज्ञायते अनेनेति करणव्युत्पत्त्या भ्रान्तिजनकचक्षुरादिना **जगद्रूपं** पञ्चभूतात्मकमिति यावत् । **पश्यन्ति** साक्षात्कुर्वन्ति जानन्ति वा । **ज्ञानेने**त्यस्य यथाश्रुतार्थकत्वे विषयीकुर्वन्तीत्यर्थः । नन्वस्यावतारस्य को विशेषः । अन्येषां कूर्मवराहऋषभादीनां देहत्यागदेहहननादिना भौतिकदेहवत्त्वस्यैवावगमादित्यत आह ॥ **ज्ञानेति** ॥ अखिलं समस्तभगवन्मूलरूपावतारादिदेहादिकं **ज्ञानस्वरूपमेव** । **अबुद्धय** सम्यग्ज्ञानरहितास्तु अर्थस्वरूपं पञ्चमहाभूतादिरूपात्मकं यज्जगत् तदात्मकं पश्यन्तो जानन्तो मोहसमुदाये परिभ्रमन्ते । न च

भवतो यत्परं रूपं तन्न जानाति कश्चन ।

अवतारेषु यद्रूपं तदर्चन्ति दिवौकसः ॥

इत्यादिना धरणीकृतस्तोत्रे परशब्देन देवतागम्यत्वागम्यत्वादिना मूलावताररूपवैलक्षण्यस्यावगमात्तस्य च लीलागृहीतभौतिकाभौतिकदेहवत्त्वेनैव निर्वाह्यत्वात्कथं सर्वरूपाणां ज्ञानात्मकत्वमित्यत आह ॥ **ये त्विति** ॥ **परमेश्वरे**त्यचिन्त्यशक्तिरूपैश्वर्योक्तिः । विदे विचारार्थत्वात् तुशब्दस्य विशेषार्थत्वात् । ये भगवतः पूर्वोक्ताचिन्त्यशक्तित्वादिधर्मानुसन्धानपूर्वकविशेषविचारवन्तस्ते अखिलं त्वद्रूपं ज्ञानात्मकमेव पश्यन्ति निश्चयेनैव पश्यन्ति । उक्तवाक्यं तु विशेषविचाररहितानामेव भ्रामकम् । देवपूज्यरूपप्रलयकालवृत्तिसर्वभक्षणकर्तृरूपयोरचिन्त्यशक्तिविशेषबलादेव देवगम्यत्वागम्यत्वोपपत्तेः । कुत एतदित्यतस्तेऽखिलं जगदित्युक्तम् । ये त्विति यच्छब्दयोगात्ते इत्यस्य स्वतो लब्धत्वादत्रत्य युष्मच्छब्दषष्ठ्येकवचनम् । तुशब्दो हेत्वर्थकोऽपि । यस्मादखिलं जगत् ते त्वत्सकाशादुत्पन्नं तस्मादित्यर्थः ।

अयं भावः । अवताररूपेषु लोकपालनाद्यर्थं मूलरूपेण शरीरादिरहितेन कर्तुमशक्यत्वाल्लीलया शरीरग्रहणं कार्यम् । मूलरूपस्य तदशक्तौ प्रथमतो जगदुत्पत्त्यनुपपत्तेः । न च तदर्थमपि शरीरग्रहणमिति वाच्यम् । शरीरञ्च प्रवृत्त्याद्यर्थमेवाङ्गीकार्यम् । तथा तच्छरीरग्राहकप्रवृत्त्यादिनिर्वाहार्थमन्यशरीरापेक्षायामनवस्था । आदिसृष्टावनुपपत्तिश्च । अतस्तन्निर्वाहायाचिन्त्यशक्त्याद्यभ्युपगमे आवश्यके तेनैव प्रमाणप्रमितसर्वनिर्वाहसम्भवाद्यर्थं इतरयोगिन इव शरीरान्तरादिग्रहणमवताररूपेष्विति ।

यद्वा कुतः अवताररूपाणां भौतिकत्वज्ञानस्य भ्रमत्वमुच्यत इत्यतो ज्ञानिप्रत्यक्षस्य विचारपूर्वकस्य बाधकत्वादित्याशयेनाह ॥ **ये त्विति** ॥ अर्थस्तु पूर्ववदेव ।

(द्वै यु) यद्वा अज्ञानिदर्शनमुक्त्वा ज्ञानिना भगवत्स्वरूपज्ञानप्रकारमाह ॥ ये त्विति ॥ ते इत्येतत्पृथ-मेव । ये शुद्धचेतसोऽत एव ज्ञानविदो ज्ञानात्मकभगवत्स्वरूपवेत्तारस्ते पुरुषा अखिलं जगत् ज्ञानात्मकं त्वद्रूपं त्वदावासस्थानं त्वज्जन्यं पश्यन्तीत्यर्थः । कार्यकारणयोरभेदव्यपदेशः आयुर्वै घृतमित्यादौ दृष्टः । एतदुत्तरश्लोके या गङ्गा सैव भवद्गम्यो ग्राम इति गङ्गातटस्थग्रामतात्पर्येणाधाराधेययोरप्यभेदव्यपदेशो दृष्टः । न च मुख्यार्थपरित्या-गेनोक्तगौणार्थादरणस्यायुक्तता इति । चिज्जडयोर्मुख्यतादात्म्यस्य बाधितत्वेन आरोपाधिष्ठानतया कथञ्चित्तादा-त्म्यस्य वा बाधाया सामानाधिकरण्यस्य वा परेणापि वक्तव्यतया तस्याप्यमुख्यत्वात् । न च तर्हि भवदुक्तार्थ-ग्रहणे किं विनिगमकमिति वाच्यम् । 'देवा ऊचुः

नमो नमस्ते विश्वेश त्वं ब्रह्मा त्वं पिनाकधृक् ।
इन्द्रस्त्वमसि पवनो वरुणः सविता यमः ॥
वसवो मरुतः साध्या विश्वेदेवगणो भवान् ।
योऽयं तवागतो देव समीपं देवतागणः ॥
स त्वमेव जगत्स्रष्टा यतः सर्वगतो भवान् ।'

इति वाक्येन, स्थानान्तरस्थितेन

सर्वस्मिन्सर्वभूतस्त्वं सर्वः सर्वस्वरूपधृक् ।
सर्वं त्वत्तस्ततस्तत्त्वं नमः सर्वात्मने नमः ॥
सर्वात्मकस्त्वं देवेश सर्वभूतस्थितो यतः ।
कथयामि ततः किं ते सर्वं वेत्सि हृदि स्थितम् ॥

इति वाक्येन अत्रैवोत्तरत्र सर्वकारणत्वसर्वस्थितत्वादिना सर्वात्मकत्वोक्तिगत्युक्तेः । न च सर्वकारणत्वतत्स्थितिभ्या वास्तवसर्वात्मकत्वमेवोच्यते । न तु तदुक्तेर्गतिरुच्यते । तथा प्रतीत्यभावादिति वाच्यम् । कार्यकारणयोः कथञ्चित्त-दुक्तिसम्भवेपि आधाराधेययोस्तादात्म्यस्यादृष्टत्वेन तथाभिप्रायस्य वक्तुमशक्यत्वात् । स्थितेरपि तादात्म्यसम्बन्धेन सम्बद्धत्वरूपत्वे तस्यैव सर्वात्मकत्वेन स्वस्मिन् स्वस्य हेतुत्वायोगाच्च ।

यदधीना यस्य सत्ता तत्तदित्येव भण्यते ।
सर्वान्तर्यामिको विष्णुः सर्वनाम्नाऽभिधीयते ॥
एषोहं त्वमसौ चेति न तु सर्वस्वरूपतः ।

इत्यादिस्मृत्यानुगुण्याच्चोक्तार्थस्यैव युक्तत्वाच्च । भवदुदाहृतवाक्ये जगद्ब्रह्मतादात्म्यप्रतिपादनद्वारा कारणब्रह्म-व्यतिरेकेण जगदसत्यतातात्पर्ये यदेतद्दृश्यते मूर्तमित्यत्र मूर्तपदेन जगद्ग्रहणे तस्य जगद्रूपताज्ञानस्य भ्रान्तित्व-कथनासङ्गतिः । ब्रह्मग्रहणे तवेत्युक्तस्वस्वरूपसम्बन्धित्वमूर्तत्वदृश्यत्वानामनुपपत्तिः । निरुपाधिके तदनुपपत्तेः । सोपाधिकस्य कथञ्चिद्ग्रहणे तस्यापि दृश्यत्वादिना मिथ्यात्वेन जगदन्तःपातितया तज्ज्ञानस्य भ्रान्तित्वकथना-

(द्वै ष्ठु) सङ्गति । न च मन्मते शुद्धान्यविषयकं सर्वं ज्ञानं भ्रम एवेति नेदं बाधकमिति वाच्यम्। तर्हि ये त्वित्या-दिना ब्रह्मणो निखिलात्मकत्वज्ञानस्यापि तथात्वेन तत्स्तवानुपपत्ते । अखण्डार्थविषयज्ञानतात्पर्यकं तदित्यप्यसत् । पूर्वस्यापि तथात्वेन तन्निन्दानुपपत्ते । अश्रुतकल्पनापत्तेश्च । तस्मात्तत्रोक्तरीत्याऽवताररूपस्यैव प्रसक्तौ वक्तव्याया-मुत्तरत्र जगद्ब्रह्मणोस्तादात्म्यकथन कथमुपपन्नम्। तवैष महिमा येनेत्यनेन जडाजडात्मकनिखिलप्रपञ्चस्य ब्रह्मशक्त्युपजीवकत्वरूपतन्महिमाव्याप्तत्वोक्त्या जगद्ब्रह्मणोर्भेदस्यैवोपपादितत्वाच्च । ज्ञानस्वरूपस्यापि जगत अर्थस्वरूपस्यापि सत्त्वेन तज्ज्ञानस्य भ्रमत्वायोगेन ज्ञानस्वरूपमित्यादिवाक्यार्थासङ्गतिश्च । अर्थपद परमार्थपरमिति तु न सत्। ज्ञानस्यैव परमार्थत्वेन तत्स्वरूपत्वे परमार्थस्वरूपत्वानपायात्। न च ज्ञानस्वरूपमित्यनेन ज्ञानात्मके ब्रह्मणि आरोपिततया तादात्म्यमुच्यते। अर्थस्वरूपमित्यनेन तु स्वरूपत परमार्थत्व निषिद्ध्यत इति युक्तम् । एकवाक्यस्थस्वरूपपदद्वयस्य विना प्रमाण लक्षणादिनाऽर्थद्वयकल्पनापत्ते । अर्थपदस्य परमार्थवाचित्वाभावा-त्तस्यापि लक्षणापत्ति । एवमत्रार्थपदस्य परमार्थवाचित्वे पूर्वत्र विद्यमाने

आधारभूत विश्वस्याप्यणीयासमणीयसा ।
प्रणम्य सर्वभूतस्थमच्युत पुरुषोत्तमम् ॥
ज्ञानस्वरूपमत्यन्त निर्मल परमार्थत ।
तमेवार्थस्वरूपेण भ्रान्तिदर्शनत. स्थितम् ॥

इति पराशरकृतप्रणतिश्लोके एतत्सजातीये अर्थपदस्य परमार्थपरत्वाभावापातेन ज्ञानस्वरूपब्रह्मणोऽपि मिथ्यात्वा पत्त्या शून्यवादापात । न च परमार्थत इति पूर्ववाक्यविरोधान्न तथा वक्तु शक्यमिति वाच्यम् । तर्ह्यत्रापि ज्ञान-स्वरूपमिति पूर्ववाक्यविरोधान्न त्वदुक्तार्थोपपत्ति । तादात्म्यार्थकतया पूर्ववाक्य सावकाशमिति चेत् तर्ह्यत्रापि भ्रान्तिकल्पितेतरार्थेषु मुख्यार्थत्वेन दोषाभावोक्तिपरतया पूर्ववाक्यसावकाशत्व किं पाणिपिहितम्। तस्मात्त्वन्मत-प्रतिपादकत्वमस्य वाक्यस्य नास्तीति कुतो जगतोऽनिर्वचनीयतानुग्राहकत्वम् ।

विज्ञानं परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिन ।
एवमेवमिद विश्व न भेदि सकल जगत् ॥
वासुदेवाभिधानस्य स्वरूपं परमात्मन ।

अत्र विज्ञानं ज्ञानात्मकं ब्रह्म उत्तमोऽर्थ । तत्र द्वैतिनः मूलरूपावताररूपादिषु सामर्थ्यवैलक्षण्यादिग्रहवन्त इत्यर्थ । इदं विश्व न भेदि परमात्मविश्लेषविधुरम् । सकलं जगत् स्वरूपं स्व स्वातन्त्र्योपेत स्वात्मकं रूप स्वरूपं यत्र तादृश तदधिष्ठानमित्यर्थ ।

सितनीलादिभेदेन यथैक दृश्यते नभ ।
भ्रान्तिदृष्टिभिरात्माऽपि तथैक सन् पृथक् पृथक् ॥

इत्यत्र आत्मा परमात्मा पृथक् स्थानभेदेन नाना ।

(द्वै. द्यु) एक समस्त यदिहास्ति किञ्चित्तदुच्यते नास्ति पर ततोऽन्यत् ।
सोह स च त्व स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ॥

इत्यत्र एकः सर्वोत्तम । पर उत्कृष्टम् । कुत इत्यत सर्वान्तर्यामित्वादित्याह ॥ सोहमित्यादि ॥ एतदात्मस्वरूप एतज्जीवजातान्तर्यामि । भेदमोह परमात्मरूपेषु भेदभ्रमं कस्यचित्परमात्माधिष्ठितत्वं कस्यचिन्नेति वैलक्षण्यभ्रम जगत परमात्मविश्लेषभ्रम वेत्यर्थ । एव

मही घटत्व घटत कपालिका कपालिकाचूर्णरजस्ततोणु ।
जनैस्स्वकर्मस्तिमितात्मदृष्टिभि सदृश्यते ब्रूहि किमत्र तत्वम् ॥

इत्यत्र स्वकर्मस्तिमितात्मदृष्टिभिः स्वकर्मप्रतिबद्धपरमात्मग्रहवद्भिरित्यर्थ । सदृश्यते समित्युपसर्गमहिम्ना मुख्यत्वेन दृश्यते । तत्व स्थितम् । कुत इत्यत अस्थिरत्वस्यानुभाविकत्वादित्याह ॥ महीत्यादि ॥ अस्य वाक्यस्य मिथ्यात्वपरत्वे ज्ञानोच्छेद्यत्वमेव दर्शनीयम् । न त्वेकैकापगमे एकैकस्य स्थिति । एवमुदाहृतवाक्येषु स्वपरपक्षसाधकबाधकान्यूह्यानि । ग्रन्थगौरवभयान्नेह प्रपञ्च्यते । एवमन्यान्यपि वाक्यानि योज्यानीत्यलम् ।

इत्थ च न कुत्रापि त्वद्विस्तरस्यावकाश । एवमित्युपसंहारवाक्यं टीकाव्याख्यानेनैव सर्वदोषाणामुद्धृतत्वाददूषितमेव । प्रत्युत स्वोदाहृतबृहन्नारदीयवाक्येषु लाक्षणिकनिर्देशोपयुक्तार्थानुक्त्यनुपयुक्तार्थोक्त्यादीना त्वद्रीत्या व्याख्यानपक्षे दर्शितत्वान्मुक्तोपसृप्यव्यपदेशादानन्दमयोऽभ्यासादित्यादौ लाक्षणिकनिर्देशस्य त्वयाऽप्यङ्गीकृतत्वात्तद्बलात्कृष्णद्वैपायनाप्रणीतत्वाचार्यकल्पितत्वोक्तिस्त्वन्मौर्ख्यस्यैवाविपालगोपाल ज्ञापिका । मध्वकुकवीत्युक्तेस्तु तमसि तद्घटकर्तृकस्वजिह्वाछेद एव तव फल भवतीति सर्वं चतुरस्रम् ।

भगवद्गीतावचनै प्रपञ्चसत्यतासमर्थनम्

(टी.) प्रपञ्चानिर्वचनीयताभिधायिनां वाक्यानामुक्तार्थान्तरपरतासमर्थनार्थं तत्सत्यतां भगवद्गीताभिः श्रुतिभिश्च दृढीकरोति

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत्कामहैतुकम् ॥
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥

इत्यादि च गीतासु । ते असुराः असत्यत्वादप्रतिष्ठं ज्ञानबाध्यम् । तत एवानीश्वरम् । न च यतो यतो जातमसावसावीश्वर इति वाच्यम् । यतोऽपरस्परसम्भूतम् । एकस्मादेकस्य नोत्पत्तिरिति यावत् । सत्यं न चेत्किमसदेव । परस्परसम्भूतं न चेत्किं नित्य स्वतो वा जातम् । आद्यस्योत्तरम् । अन्यत्

(टी) सदसद्भ्यामिति शेषः। द्वितीयस्य कामहैतुकं काम इति तत्कारणमविद्योपलक्ष्यते। अत्र जगदसत्यतावादिनामसुरत्वाद्युक्त्या तत्सत्यताऽवगम्यते॥

(वि टि) नन्वसुरोक्तत्वमात्रेण कथं तदर्थस्यासत्त्वमित्यत आह॥ **आसुरा इति**॥

सम्यग्ज्ञानं तु देवानां मनुष्याणां विमिश्रकम्।
विपरीतं तु दैत्यानां ॥

इत्यादिस्मृतेरिति भावः। आहुरित्यत्रैतावता किमुत्तरं जातमित्याकाङ्क्षायामेवमुत्तरं जातमित्यभिप्रेत्य तच्छब्दं व्याचष्टे॥ **ते असुरा इति**॥ **असत्यत्वादिति**॥ वक्ष्यमाणरीत्या सदसद्विलक्षणत्वादित्यर्थः। असत्यमिति हेतुगर्भं विशेषणम्। यद्वा सद्विविक्तत्वादित्यर्थः॥ **न चेति**॥ ज्ञानबाध्यत्वादनीश्वरत्वसाधने बाध इति शङ्काभिप्रायः। भवेदेवमनीश्वरत्वसाधने बाधः यद्येकस्यान्यस्मादुत्पत्तौ नियामकं पश्याम इत्यभिप्रेत्य शङ्कां निराचष्टे॥ **यत इति**॥ किमन्यदित्यत्र किंशब्दमवतारयति॥ **सत्यं न चेदिति**॥ **द्वितीयस्येति**॥ उत्तरमित्यनुषज्यते॥ **तत्कारणमिति**॥ कामकारणमित्यर्थः। ननु जगदसत्यतावादिनश्चेज्जगदीदृशमाहुस्तर्ह्यस्तु जगदपि तथा। न ह्ययथार्थवादिन इत्यत्र किमपि नियामकमस्तीत्यत आह॥ **अत्रेति**॥ असुराणां मिथ्याज्ञानित्वादिति भावः।

नन्वत्र न जगन्मिथ्यात्ववादिनां निन्दा क्रियते। किन्तु जगदत्यन्तासत्त्ववादिनाम्। तथा हि। **असत्त्व**मिति जगतोऽत्यन्तासत्त्ववादस्यानुवादः। **अप्रतिष्ठ**मिति क्षणिकत्ववादस्य **अनीश्वर**मिति निरीश्वरत्ववादस्य **अपरस्परसम्भूत**मिति स्वभाववादस्य **किमन्यत्कामहैतुक**मिति विज्ञानवादस्य। अत्र पक्षे **कामहैतुक**शब्देन विज्ञानमुच्यते। स्वार्थे कप्रत्यय इति चेन्न। त इत्याहुरित्यस्य प्रतिविशेषणमावृत्तिप्रसङ्गात्। किमन्यदित्यस्य वैयर्थ्यापत्तेश्च। **असत्य**मिति सत्यभिन्नार्थकासत्यशब्देन मिथ्यावादस्याप्यनुवादे बाधकाभावाच्च। न चोत्तरत्र वैदिकमतानुवाददर्शनेनेहापि तन्मात्रार्थकत्वमेवाश्रयितुं युक्तमिति वाच्यम्। **अनीश्वर**मिति निरीश्वरमीमांसकसाङ्ख्यमतानुवाददर्शनेन तदसिद्धेः। त्वयापि पर्यायेण वेदाप्रामाण्यस्यैवोक्त्या तत्तुल्ययोगक्षेमत्वाच्च।

वस्तुतस्तु कृत्स्नस्यापि श्लोकस्य मिथ्यामतानुवादत्वमेव युक्तम्।

येऽभिमानेन मन्यन्ते परमेशोऽहमित्यपि।
मिथ्या जगदिदं सर्वं भ्रमजत्वान्न तिष्ठति॥
मिथ्यात्वान्नेश्वरोऽस्यास्ति परेभ्यो न च जायते।
स्वस्मिन्नपि तथाऽन्यस्मिन्नियन्ताऽन्य इतीरिते॥
प्रद्विषन्त्यसुरास्ते तु सर्वे यान्त्यधरं तमः।
अयोग्यत्वात्सकामत्वाल्लोभित्वादात्मसमर्पणे॥
तत्त्ववेदिषु कोपाच्च तमस्तेषां न दुर्लभम्।

(वि टि) इति ब्रह्मवैवर्तवचनानुगुण्यादिति ।

(रा टि) ॥ उक्तार्थान्तरेति ॥ अद्भुतत्वादवाच्यमित्याद्युक्तार्थत्यर्थः । नात्र सत्यता प्रतीयत इत्यत आह ॥ अत्र जगदित्यादि ॥

(वे टि) ते आसुरा इति ॥

प्रवृत्तिञ्च निवृत्तिञ्च जना न विदुरासुरा ।

इति पूर्वमसुराणा प्रकृतत्वादित्यर्थः । अन्योन्याश्रयमिश्रऽपरस्परसम्भूतत्व सर्वैरप्यङ्गीकार्यमित्यत आह ॥ एकस्मादेकस्येति ॥ प्रपञ्चस्येच्छाहेतुकत्वानङ्गीकारादाह ॥ काम इतीति ॥ नन्वत्र जगदसत्यत्वादिना बौद्धानामासुरत्वाद्युच्यते । नास्माकम् । अस्माभिर्जगत्सत्यत्वाङ्गीकारादिति चेन्न । बौद्धानामपि सांवृतसत्यत्वाङ्गीकारस्य वक्ष्यमाणत्वात् । परमार्थतो जगदसत्यत्वस्य त्वन्मतेपि साम्यादिति भाव ।

(द्वै द्यु) ॥ दृढीकरोतीति ॥ असत्यत्ववादिनिन्दया जगत्सत्यता दृढीकृता भवतीत्यर्थ ॥ त आसुरा इति ॥

प्रवृत्तिञ्च निवृत्तिञ्च जना न विदुरासुरा ।

इति पूर्वं तेषामेव प्रक्रान्तत्वादिति भाव । तत एव बाध्यत्वादेव । पालनादिना नियामकस्यैवेश्वरत्वाज्जगतो मिथ्याभूतस्य पालनाभावादनीश्वरत्वमिति भाव । अपरस्परेण सम्भूतमित्यर्थस्यानुपयोगाद्बाधितत्वाच्च नञो विशिष्टपदयोगमभिप्रेत्य पर्यवसितमाह ॥ एकस्मादिति ॥ सर्वस्य प्रत्ययस्य भ्रान्तित्वे उत्पत्त्यादिप्रतीतेरपि भ्रान्तित्वापत्त्या उत्पत्त्यभाव एव पर्यवसान तद्वाक्यस्येति भाव । लौकिकैः सदसत्प्रकारयोर्द्वयोरेव ज्ञातत्वादसत्यमित्युक्ते सद्भिन्नत्वस्यैव बुद्ध्यारूढतया तस्यार्थक्रियाशून्यत्वेन कथमेतदुत्पत्तिसहमिति पृच्छति ॥ सत्य न चेदिति ॥ उत्पत्तिप्रतीते सर्वथा भ्रान्तित्व उतान्यजन्यत्वाद्वे । आद्यमनुपपन्नम् । नहि कुत्राप्युत्पत्त्यभावेन तत्स्वरूपस्यैव सर्वथा शशविषाणादिवदसत्त्वे प्रधानाभावादारोपानुपपत्ति । द्वितीय तु सर्वथाङ्गीकारानर्हं । व्याहते. स्फुटत्वादित्याशयेन पृच्छति । ॥ परस्परेति ॥ आद्यस्येति ॥ अन्यदेव हि गाम्भीर्यमित्यादाविव प्रसिद्धवैलक्षण्यबोधकान्यशब्दप्रयोगमहिम्नैव सदसद्वैलक्षण्यबोधो झडिति भवत्येव । बोधस्तु नान्यपदलक्षणया । सदसतो पुर स्फूर्तिकत्वेन तद्वाचकपदयोरेव बुद्धिसन्निहितत्वादित्याशयेनाह ॥ सदसद्भ्यामिति ॥ द्वितीयस्येति ॥ आयुर्वै घृतमित्यत्र कार्यकारणयोरभेदोपचारस्य दृष्टत्वात्कामपद तत्कारणाविद्यालक्षकमित्याह ॥ काम इतीति ॥ न च लाक्षणिकप्रयोगे बीजाभाव । अविद्येत्युक्तौ अनिर्वचनीयोपादानभूता परसिद्धा अनिर्वचनीयाऽविद्या काचिदस्तीति भ्रम. स्यात् । स मा भूदिति तथा लक्षणानुसरणात् । तदनुसरणे तु मन्मते सत्यभूतकामादिहेतुत्वेनाङ्गीकृताविद्याया एव परैर्जगदुपादानत्वानिर्वचनीयत्वादिना भाषितत्वमित्यस्य लाभसम्भवात् ।

नन्वविद्याहेतुकत्वोक्तौ उत्पत्तिरेवोक्ता स्यात् । तथा च कथ पूर्वोक्तानुत्पत्तिसमर्थनम् । न चानेन पूर्वोक्तिश्चेतनजन्यत्वाभावरूप स्वाभिप्राय स्फुटीकृतो भवति । चेतनाजन्यत्वस्यैवानीश्वरत्वोपपादकतया प्रयुक्तस्य तस्य तथाभिप्रायस्यैवोचितत्वादिति वाच्यम् । तथात्वे तदर्थं अपरस्परेति सामा-

(द्वै छु) न्यत एकस्मादेकस्योत्पत्तिनिषेधासङ्गते । भवदुक्तरीतौ घटादौ दण्डादिहेतुकत्वानिवारणापत्त्या तल्लाभाय विवरणवाक्ये जगति चेतनजन्यत्वाभावस्यैव पूर्वोक्ताभिप्रायविषयतया वर्णनीयतापत्त्या अविद्याहेतुकत्ववर्णनासङ्गत्यापातेन तदलाभाद्विपरीतप्रतीतेरेव जायमानत्वाच्चेति चेन्न। एकस्मादेकस्योत्पत्तिप्रतीतिर्भ्रान्ति । अत केनापि कस्याप्युत्पत्तिर्नास्तीति परमार्थरीत्योच्यते । व्यवस्था तदुपत्त्यादे स्वाप्नपदार्थानामिव काल्पनिकीत्यस्यार्थस्याविद्याहेतुकत्वोक्तिबललब्धत्वेन सर्वसामञ्जस्यात् ।

अत्र यत्केनचिदुक्तम् । 'यानि त्वसत्यमप्रतिष्ठं ते जगदाहुरनीश्वरमित्यादीनि तानि नाद्वैतदर्शनविरोधीनि । **असत्यमि**त्यस्य न सत्य यस्मिन्निति व्युत्पत्त्या शून्यवादस्य, **अप्रतिष्ठित**मिति स्थैर्यनिषेधेन क्षणभङ्गवादस्य, **अनीश्वर**मिति नास्तिकवादस्य, **अपरस्परसम्भूत**मिति स्वभाववादस्य, **किमन्यद्वाच्य** काम्यन्त इति **कामा** इष्टास्तद्धेतुकं यस्य यदिष्ट परमाण्वादि तद्धेतुकमित्यनेन स्वबुद्ध्युन्नीतकारणकमित्यवैदिकानामन्येषा निन्दितत्वेऽपि ब्रह्मवादस्यानिन्दितत्वात् । न **चासत्यमि**त्यस्य सत्यभिन्नार्थमाश्रित्य वैदिकमतदूषणमपि शक्यमुपपादयितुमिति वाच्यम् । एव सति [1]जगद्बुद्धिगम्यं न भवतीति वदन्तीत्यादित्वन्मतदूषणस्याऽपि वक्तु शक्यत्वात् । यदि न्यायानुगृहीतश्रुतिविरोधान्नैवमित्युच्यते तर्हि तुल्यं प्रकृतेऽपि । प्रसिद्ध्यतिक्रमे बीजाभाव । उदाहृतस्मृत्यन्तर ममाऽपि तुल्यमित्यन्यत्र विस्तर । **यत्तु** 'काम इति तत्कारणाविद्या लक्ष्यते' इति तदसत् । मतान्तरानिरासान्न्यूनताप्रसङ्गात् । **यच्च** 'सत्य न चेत्किमसदेव । परस्परसम्भूतं न चेत्कि स्वतो जातम् । आद्यस्योत्तरमन्यत् सदसद्भ्यामिति शेष. । द्वितीयस्योत्तर कामहेतुकम्' इत्यपव्याख्यान तदसत् । सदसद्भ्यामित्यस्याध्याहारे मानाभावात् किंपदास्वारस्याच्च । **अपरस्परसम्भूतत्वस्य** विश्वस्याहेतुत्वेऽप्यव्याघाताच्च । **यदप्यप्रतिष्ठितमित्यस्य** ज्ञानोच्छेद्यमित्यर्थवर्णन तदनक्षरार्थ इति स्पष्टमेव' इति ।

तदसारम् । त्वदुक्तरीत्या असत्यपदार्थाङ्गीकारे त्वन्मतशून्यमतयोरविशेषस्याग्रे वर्णनेन शून्यवादिनिरासकसूत्राणामेव त्वन्मतनिरासकत्वस्य च प्रतिपादितत्वेन त्वन्मतनिन्दाया [2]अपह्नुतत्वेन त्वत्प्रयासवैफल्यात् । अपि **चासत्यमि**त्यनेन सद्भिन्नस्यैव स्फुरणात्प्रसिद्धिश्रद्धालुना त्वया तथैवादर्तव्यम् । न तु बहुव्रीहिलभ्योऽर्थ । तस्याप्रसिद्धत्वात् । अनृतासत्यादिपदघटितस्मृत्यन्तर तु व्यासस्मृत्यैवान्यथा व्याख्यातमिति नास्माकं प्रसिद्ध्यतिक्रमे बीजाभाव । जगदसत्यताग्राहकप्रमाणप्राबल्यादेवमास्थीयत इति चेत् । तत्राप्यसत्यानृतपदानामप्रसिद्धार्थकत्वस्य एतद्वाक्यस्थसत्यपदमुख्यार्थकत्वानुरोधेनानुसरणे कुतो न सम्मति. । वाचारम्भणादिश्रुत्यनुसाराच्चानि मुख्यार्थानीति चेन्न । अत्रापि विश्व सत्यमित्यादिवाक्यानुग्रहेण प्रसिद्धसत्यविवेकपरत्वमेवासत्यपदस्य । न चैतेषा वचनानामनुवादकत्वादिना दौर्बल्यमिति वाच्यम् । तस्य निराकरिष्यमाणत्वात् ।

---

[1] त्वदुक्तरीत्या जगदसद्बुद्धिगम्य भवतीति इति पाठेन भाव्यमिति भाति ।

[2] अपि कृतत्वेन इति पाठेन भाव्यमिति भाति ।

(द्वै द्यु) एवं कामपदस्य काम्यन्त इति कामा इत्यर्थाङ्गीकारे तव प्रसिद्धार्थपरित्यागो दुर्वारः। इच्छाया एव प्रसिद्धार्थत्वात्। प्रसिद्धार्थपरित्यागे आवश्यके योगापेक्षया लक्षणैव ज्यायसी। प्रसिद्धशक्यार्थस्य प्रथमतो बुद्धिस्थत्वेन तद्बाधग्रहे प्रतिसम्बन्धिन उपस्थितत्व,तत्सम्बन्धरूपलक्षणोपस्थित्या तदधीनबोधस्य शीघ्रत्वात्। योगाश्रयणे तु प्रसिद्धार्थबाधोत्तरं पुनर्नानावयवघटकपदवृत्तिज्ञानाधीनशाब्दबोधस्य मन्थरगामित्वात्।

किं च काम्यन्त इत्यनेनापि कामनविषयस्रक्चन्दनादीनामेव स्वभोग्यतया प्रसिद्धानामेव लब्धतया स्वाभोग्यतया कामनाया अविषयतया परमाण्वादीनां कथं लाभः। न च तेऽपि कारणतयाऽस्य प्रतिपाद्यत्वप्रकारकेच्छाविषया इति वाच्यम्। तर्हि सामान्यवाचकपदस्यात्यप्रसिद्धलक्षणापत्तिः। किञ्च सामान्यरूपेण विशेषबोधने वा विशेषरूपेणैव तद्बोधे वा त्वदभिमतेश्वरस्याविवाय अश्र तथात्वेन तत्कारणत्ववादस्यापि निन्दितत्वप्रसङ्गः। न च स्वकामनाविषयपरं कामपदमिति वाच्यम्। कामपदस्य सामान्यवाचित्वेऽपि स्वघटितार्थबोधाय लक्षणाया आवश्यकत्वात्। स्वपदेन तवापि ग्रहणसम्भवेन वैदिकत्वेन त्वदभिमतकारणवादस्यापि निन्दाया अवारणाच्च। न च प्रमाणं विना स्वेच्छानुसारेणैव वदन्तीति तात्पर्यमस्तीति वाच्यम्। उक्तवाक्यात्तदलाभेनोदक्षरताया स्फुटत्वात्।

यदपि 'टीकाकृतोक्तपदव्याख्याने मतान्तरानिरासान्न्यूनता' इति कथनं तदसत्। तैर्नानामतनिन्दापरत्वेनैतच्छ्लोकस्य [1]व्याख्यातत्वेन तत्पक्षे न्यूनताप्रसङ्गाभावात्। तर्हि सर्वमतविषयतया व्याख्यानस्याकृतत्वादेव न्यूनतोच्यत इति चेत्। तर्हि अप्रतिष्ठितादिपदस्य टीकाव्याख्यानपक्षे विज्ञानवादाद्यलाभेन तत्र न्यूनतामनुक्त्वाऽत्रैवोक्तौ बीजाभावात्। न चाप्रतिष्ठितादिपदस्यान्यार्थवर्णनेऽपि कामहेतुकपदमात्रस्यासदुक्तरीत्यार्थवर्णने सर्ववैदिकमतलाभो भवति। तस्याप्यन्यार्थवर्णने तल्लम्भकपदान्तराभावेन न्यूनतादोषस्तत्पदानुषङ्गश्चेति तत्रैवोद्भावित इति वाच्यम्। तर्हि तेनैव सर्ववैदिकमतलाभे तवासत्यमित्यादिपूर्वभागस्य सर्वस्याप्याधिक्येन वैयर्थ्यापातात्। शून्यवाद्यादिभिरपि स्वेच्छानुसारेणैव जगत्कारणस्योक्तत्वात्। न च विशेषरूपेणाऽपि तन्मतोपन्यासार्थं पूर्वभाग इति वाच्यम्। जैनमतस्य सप्तभङ्गिजगद्वाचित्वेन नैयायिकसाङ्ख्यादिमतानामपि परमाणुप्रकृत्यादिकारणकत्वादिविशेषरूपेणानुपन्यासेन त्वत्पक्षेऽपि न्यूनतापातात्। सर्वोपन्यासनियमाभावान्न न्यूनतेति वाच्यम्। तर्हि सर्वमतोपन्यासनियमाभावादेवैकमतविषयतया टीकोक्तव्याख्याने कथं न्यूनता। किञ्चैकमतस्यापूर्वस्योपन्यासे तत्सम्भवदुक्तित्वविषय एवोत्सर्गतो जिज्ञासोदयेन तदुपपादकतयैव पदानां व्याख्यानं युक्तम्। न तु कस्याप्यनुपपादनेन नानामतपरतया व्याख्यानम्।

किञ्च जगति प्रयुक्तासत्यादिपदानामन्यार्थप्रदर्शनपूर्वकं प्रवृत्ते व्याससमृतिवाक्ये असत्यमप्रतिष्ठं त इत्यादिपदानां सद्भिन्नार्थकत्वमेव। प्रसिद्ध्यनुरोधात्। न हि तत्र प्रसिद्ध्यतिक्रमे बीजमस्ति। प्रत्युत जगतोऽसत्यत्वे तत्र प्रयुक्तासत्यादिपदानामर्थान्तरवर्णनस्यानुपयोगप्रसङ्गेन सत्यत्वाभिमतेरेव स्मृतिकर्तुरावश्यकतया मतान्तरानु-

[1] अव्याख्यातत्वेन इति पाठेन भाव्यमिति भाति।

(द्वै द्यु) वादकवाक्ये स्वाभिमतविरोध्यर्थकत्वस्यैव युक्तत्वाच्च। तथा च तादृशवाक्यसवादानुरोधेन टीकोक्तव्याख्यैव युक्ता। अत एव मूले प्रसिद्धाऽपि गीता अनन्तर पठिता। तन्निर्णयाय व्यासस्मृतिरादौ पठिता।

यदपि 'अध्याहारे मानाभावात्' इति तदसत्। तथाऽप्यन्यत्किं वक्तव्यमिति व्याख्याने वक्तव्यपदाध्याहारस्याऽवश्यकत्वेन तत्र मानस्य वक्तव्यतापातात्। न चात्र किंपदस्याक्षेपार्थकतयाऽऽक्षेप्येन भाव्यम्। पूर्वोक्तान्यमतान्तरस्वरूपस्याभावरूपाक्षेपायोगेनेदानीं गौरवेण तत्कथनस्यैवाऽऽक्षेप्यतया तल्लाभान्यथानुपपत्तिरेव मानमिति वाच्यम्। अस्मत्पक्षेऽपि टीकाव्याख्यावसर एव तदध्याहारबीजस्य दर्शितत्वात्।

न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव।

इति श्रुतिघटकान्यपदस्य सदसदन्यार्थकत्वं वर्णयता त्वया वक्तव्यरीतेरेव मयाऽप्याश्रयणाच्च। न च भवद्व्याख्याने किंपदास्वारस्यमिति वाच्यम्। तस्यार्जुनप्रश्नरूपतया किंशब्दस्वारस्यापरित्यागात्। लोके अपूर्वार्थे आपाततो बाधितवत्प्रतीयमाने श्रुते अतिकौतुकेन तत्स्वरूपजिज्ञासया किमित्युक्तिमात्रस्य प्रश्नार्थकस्य सर्वानुभवसिद्धत्वात्। प्रत्युत किमित्यादि तवैवास्वरसम्। यतो लोके किञ्चित्सम्भावितस्यानुपपत्त्यादि प्रदर्श्य कैमुत्यन्याय तदपेक्षयानुपपन्नार्थे प्रदर्शयन्ति। यथा

पण्डिता अपि मुह्यन्ति किमन्ये प्राकृता जना।

इति तद्वैपरीत्येन। तथा च परमाणुकारणकत्वादिवाद आत्मस्वरूपधर्माद्यङ्गीकारवेदप्रामाण्याद्यभ्युपगमादिना वेदानुसारिणं किञ्चिदंशे स्वविरुद्ध प्रथमत प्रदर्श्य अत्यन्तवेदविरुद्धत्वेन तदपेक्षया निकृष्टविज्ञानवादादिकमनन्तर वक्तव्यम्। एव मतान्तरोक्ततत्कारणकत्व जगत्यप्रदर्श्य 'किं वक्तव्य कामहेतुक वदन्तीति' इत्युक्तेर्लोकव्यवहारमर्यादातिक्रमेणास्वारस्यमपि।

यदपि 'अप्रतिष्ठितमित्यस्य बाध्यत्वार्थकत्वे उदक्षरत्वम्' इति तदसत्। अतोऽन्यदार्तमित्यत्रार्तपदस्य ज्ञानबाध्यार्थकत्वाङ्गीकारेऽप्युदक्षरत्वापत्त्या त्वद्गुर्वादिकृतव्याख्यानस्याप्यसङ्गत्यापत्ते। न च पीडितमात्र तदर्थ। पीडा च तत्स्वरूपोपघातव्यापार। शब्दानामुत्सर्गतो मुख्यार्थबोधकत्वस्वाभाव्यात्। कारणकार्यादिसकलरूपैर्जगदुपघातप्रयोजकज्ञानमेव मुख्यपीडेति नोदक्षरत्वमिति वाच्यम्। अत्रापि एकरूपापगमेऽप्यन्तत एकरूपेण स्थितिरूपप्रकृष्ट स्थित्यभावबोधने कारणात्मनाप्युच्छेदलाभेन ज्ञानोच्छेद्यत्वस्य पर्यवसितत्वात्। अन्यथाऽप्रतिष्ठितपदेन स्थिरत्वाभावमात्रबोधनेन त्वदभिमतविज्ञानवादस्याप्यलाभप्रसङ्गात्। भगवता श्रीकृष्णेनापि अन्यत् आर्तमित्यादिश्रुतीनामुक्तरीत्याऽपार्थमाश्रित्यैव वदन्तीति त्वन्मतरीतिसूचनायान्यदिति अप्रतिष्ठमिति च त्वन्मतानुसारिपदप्रयोग· कृत। तथैव व्याख्यात टीकाकृतापि।

यदप्यपरस्परेति तदपि मन्दम्। अपरस्परसम्भूतत्वव्याघातेन कामहेतुकत्वस्य टीकायामनवतारितत्वेनानुभवबाधतात्पर्येणैवावतारितत्वेनाव्याहत्युक्तेरसङ्गते। न च परस्परसम्भूतत्वस्यैव दुष्टत्वेन तदभावस्यादुष्टत्वेन

(द्वै घु ) तस्य निन्द्यत्वोक्तिरयुक्तेति वाच्यम् । परस्परपदस्य व्यक्तिघटितवचनत्वाभावेन जातिघटितवचनत्वेन कर्मण शरीर शरीरात्कर्मेत्येवक्रमेणैकस्मादेकोत्पत्तेष्टीकाकारोक्ताया लाभेन तदभावस्य प्रमाणबाधेन निन्दाऽऽपादकत्वात् । त्वदुक्तरीत्या स्वभाववादपरत्वे परासम्भूतमित्यस्यैव वक्तव्यतया अपरस्परेत्यस्यानुपयोगित्वेनासङ्गत्यापत्ते । अत्रत्यासत्यपदस्यासद्बुद्धिगम्यार्थकत्वे मोक्षवादिभि सर्वैरपि जगति तथाभावाभ्युपगमेन भगवत स्वमतनिन्दकत्वप्राप्त्या तादृशार्थस्य शङ्कितुमपि अशक्यत्वेनैव सति त्वदुक्तरीत्येति त्वदुक्तेरत्यन्तासङ्गतत्वम् । अपि चोक्तवाक्यस्य नानामतपरत्वे एता दृष्टिमित्यस्य जात्येकवचनत्वापत्त्याऽस्वारस्यम् ।

अस्तु वा त्वदुक्तरीत्यैवोक्तगीतावाक्यार्थ । तावताऽपि त्वन्मतस्यैतद्वाक्यनिन्द्यत्वमव्याहतमेव । दृष्टिसृष्टिपक्षे जगतो विज्ञानसमकालिकत्वेन विज्ञानवादाविशेषात् । न चानादिदृश्यषट्कमप्यङ्गीकृत मत्पक्ष इति वाच्यम् । तावताऽपि जगत्पदप्रसिद्धार्थभूतपरिदृश्यमानजगतो विज्ञानसमकालिकतया तादात्म्येनैकजातीयास्थिरत्वोक्तिप्रयुक्तनिन्दाया अपरिहारात् । एवमनीश्वरवादिनिन्दापि त्वन्निन्दारूपैव । एकजीववादे सर्वस्यैकजीवकल्पितत्वेनेश्वरस्यापि स्वप्नदृष्टराजादिवत् स्वाविद्याकल्पितत्वेन भवदङ्गीकारात् । बहुजीववादेऽपि सर्वेषा मुक्त्या चरममुक्तानन्तरं मायाया अपि गतत्वेन तदुपाधिकेश्वरस्यापि निवृत्तत्वापरिहारात् । न हि स्वरूपत परिकल्पितो निवर्त्य श्रीकृष्णसम्मत ईश्वररूपो भवति । तेन हि

> यो मामजमनादिञ्च ।
> यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर ।
> उत्तम. पुरुषस्त्वन्य. परमात्मेत्युदाहृत ।
> ईश्वर सर्वभूताना हृद्देशेऽर्जुन तिष्ठति ।

इत्यादिनेश्वरस्यानादित्वाव्ययत्वसर्वोत्तमत्वादिकथनात् । एकजीवसम्बन्धिज्ञाननिवर्त्यस्य तदज्ञानकल्पितस्य त्वदङ्गीकृतत्वात् । एवं स्वभाववादनिन्दापि त्वन्निन्दैव । अविद्यारोपस्य स्वत एवाङ्गीकारात् । न च तस्यानादित्व मयाऽङ्गीकृतम् । न तु स्वतो जातत्वमिति वाच्यम् । आरोपसामान्यस्यापि दोषजन्यत्वेन दण्ड विना घटाङ्गीकारवत् उक्तानादित्वस्याप्यप्रामाणिकस्वभाववाद एव पर्यवसानात् । अन्यथा प्रमाया इव भ्रमस्यापि स्वतस्त्वापत्ते. । कामहेतुकत्वोक्तिस्तु स्फुट त्वन्निन्दिका । त्वया जीवाविद्याकल्पित एव सर्वप्रपञ्च ब्रह्म तु तत्स्वरूपत्वात्तथोच्यत इति, अम्बरादिकमीश्वरमायाकल्पित दु खादिक जीवाविद्याकल्पितमिति च, मायाब्रह्मणी सितासितरज्जुवत् जगत्कारणमिति च, मायैव जगत्कारण ब्रह्म तु तदधिष्ठातृत्वात्तथोच्यत इति च स्वेच्छानुसारेण सर्वश्रुत्यादिसिद्धेश्वरकारणत्वादेरुपचरितत्वादिकल्पनया तत्कारणकत्वं विहाय जगदुत्पत्तेरङ्गीकृतत्वात् । एव च व्यर्थ एव तस्य वाक्यस्यार्थान्तरकथनप्रयासो मूलटीकोक्तीर्न किञ्चिदपि बाधकमीक्षितुमीष्ट इति स्थितम् ।

(गु टि ) ॥ ते आसुरा इति ॥

> प्रवृत्तिञ्च निवृत्तिञ्च जना न विदुरासुरा ।

(गु टि) इति तेषामेव प्रकृतत्वादिति भाव । अन्योन्याश्रयापत्त्या परस्परसम्भूतत्वाभाव सर्वैरप्यभ्युपगन्तव्य । तत्कथमासुराणामेवेद विशिष्याभिधानमित्यतोऽभिप्रायमाह ॥ एकस्मादेकस्येति ॥ तै प्रपञ्चस्याविद्याहेतुकत्वोक्तावपि कामहेतुकत्वानुक्तेरसदनुवादोयमित्यत कामपदमविद्यापरत्वेन व्याख्याति ॥ काम इतीति ॥ लक्षणाहेतुभूत शक्यसम्बन्धकथन तत्कारणमिति । कामकारणमित्यर्थ । उदाहृतवाक्ये जगत्सत्यताया अनुक्तत्वात्तदुदाहरणानुपपत्तिमाशङ्क्य तदनुक्तावपि तदवगमकत्वात्तदुपपत्तिरित्याशयेनाह ॥ अत्रेति ॥

श्रुत्या प्रपञ्चसत्यत्वसमर्थनम्

(टी.) विश्व सत्य मघवाना युवोरिदापश्चन प्रमिनन्ति व्रतं वां ।

हे मघवानौ धनादिमन्तौ इन्द्राबृहस्पती । युवयोर्विश्वं सत्यमेव । न केवलमहमेवं प्रतिपन्नः । किं तु आपोऽपि वां सत्यजगत्सर्जनादिकं कर्म जानन्तीति द्विरूप परमेश्वर प्रत्युच्यते ।

प्र घा न्वस्य महतो महानि सत्या सत्यस्य करणानि वोचम् ।

नु इदानीमस्य महतस्सत्यस्य परमेश्वरस्य महान्ति सत्यानि [1]कर्माणि प्रावोचमेव । कर्मणां सत्यत्व विषयसत्यतामन्तरेण नोपपद्यत इति विश्वसत्यतासिद्धिः ।

सत्यस्सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये ।

सः जगत्सृष्ट्यादिलक्षणः । अस्य परमेश्वरस्य महिमा सत्यः । त विप्रप्रधानेषु यज्ञेषु शवः-सुखमुद्दिश्य स्तौमि ।

कविर्मनीषी परिभूस्स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यस्समाभ्यः

इत्यादिश्रुतिभिश्च

कविः सर्वज्ञः । मनसामीष्ट इति मनीषी । परिभवति सर्वानिति परिभूस्सर्वोत्तमः । स्वयमेव भवतीति स्वयम्भूः स्वतन्त्रः परमेश्वरः । शाश्वतीभ्यस्समाभ्यः सर्वदा । अर्थान् महदादीन् । याथातथ्यत एव व्यदधात् । न तु मिथ्याभूतान् ।

इत्येव श्रुतिस्मृतिभिः प्रपञ्चस्य सत्यतावगमात् तदनिर्वाच्यतापराणां वाक्यानामर्थान्तरपरत्वस्यैव युक्तत्वात् नागमोऽनिर्वचनीये मानमिति स्थितम् ।

(वि टि.) व्याचष्टे ॥ हे मघवानावित्यादि ॥ युवयोः विश्वमिति ॥ यश्चिकेतेति श्रुत्यन्तरानुसाराद्युष्मत्सृज्य विश्वं सत्यमेवेत्यर्थ ॥ आपोऽपीति ॥ अबभिमानिन्यो देवता अपीत्यर्थ । व्रतशब्दार्थ सत्यजगदिति । न च विश्व सत्यमिति श्रुतौ विश्वशब्दस्य व्रतशब्दसामानाधिकरण्येन युवयो सम्बन्धि सर्वं व्रतं सत्य सफलमित्यर्थ । 'सत्या सन्तु यजमानस्य कामा' इत्यादौ सत्यशब्दस्य तदर्थपरत्वदर्शनादिति वाच्यम् । तथा सति

[1] करणानि प्रावोचमेव । करणाना इति वि ती पाठ

(वि टि ) **वामित्यस्य** वैयर्थ्यापातेन सामानाधिकरण्येनान्वयासम्भवादिति भाव. ॥ **इदानीमिति** ॥ निपातानामनेकार्थत्वादिति भाव । **करणानि** कर्माणि । व्यवहिताश्चेति स्मरणात् प्रशब्दस्य क्रियासम्बन्ध दर्शयन् घशब्द व्याचष्टे ॥ **प्रावोचमेवेति** ॥ ननु करणानामेवानया श्रुत्या सत्यत्वसिद्धावपि न जगत्सत्यत्वसिद्धि । न च तथापि सर्वजगन्मिथ्यात्व विघटितमेवेति वाच्यम् । तथापि त्वदभिमतसर्वजगत्सत्यत्वासिद्धेरित्यत आह ॥ **करणानामिति** ॥

यद्यपि 'न तस्य कार्यं करणञ्च विद्यते' इति श्रुत्या परमेश्वरस्य करण निषिद्ध्यते तथाप्युदाहृतश्रुत्यनुसारेणासत्यकरणमेव तथा निषिद्ध्यते । अन्यथा 'सत्य सो अस्य महिमा' 'एष नित्यो महिमा ब्रह्मणस्य' इति श्रुतिविरोधादिति भाव । एतच्छङ्कानिरासार्थमेव 'सत्य सो अस्य' इति श्रुतिप्रगृहीतिरिति ता व्याचष्टे ॥ **सत्यजगदिति** ॥ **मनसामीष्ट इति** ॥ अधीगर्थदयेशामिति कर्मणि षष्ठीति भाव ।

'सत्यं तथ्य मतं सम्यक्' इति कोशकारस्मरणात्सत्यवाचिनस्तथ्यशब्दस्य भावप्रधानस्य पदार्थानतिक्रमार्थकयथाशब्देन अव्यय विभक्तीत्यादिनाऽव्ययीभावसमासे स्वार्थे ष्यञि याथातथ्यशब्दो निष्पद्यते । तत सार्वविभक्तिकस्तसि । एवञ्च तथ्यभावानतिक्रमेणार्थान् सर्वपदार्थान् व्यदधादित्यर्थलाभात्तेषा पदार्थाना मिथ्यात्वव्यवच्छेदो लभ्यत इति भाव ।

ननु सादृश्यार्थकयथाशब्दस्य यथाऽसादृश्ये इत्यव्ययीभावनिषेधेपि सुप्सुपेति समाससम्भवात् यथातथाशब्दाद्गुणवचनात् ब्राह्मणादिभ्यश्चेति कर्मणि ष्यञ्प्रत्यये यस्येति चेत्यकारलोपे आदिवृद्धौ सार्वविभक्तिकतसिप्रत्यये च सति याथातथ्यत इति निष्पद्यते । तस्य च 'धाता यथापूर्वमकल्पयत्' इति श्रुत्यानुगुण्यात्पूर्वकल्पीयार्थसादृश्येनैवार्थान् व्यदधादित्यर्थलाभात्कथ त्वदुक्तार्थलाभ । कथ वा अव्ययीभावसमासेपि त्वदुक्तार्थलाभ । यथाशब्दस्य पदार्थानतिक्रमार्थत्वं तथाशब्दस्य सादृश्यार्थकत्वञ्चाङ्गीकृत्य समासेपि सादृश्यमनतिक्रम्यार्थान् व्यदधादित्यर्थस्यैव लाभादिति चेन्न । विनिगमनाविरहेणास्मदुक्तार्थपरत्वस्यापि त्यागानर्हत्वात् । न च 'अन्यायश्चानेकार्थत्व' इति न्यायविरोधेनानेकार्थपरत्वमयुक्तमिति वाच्यम् । यत्रैकार्थत्वे विशिष्य प्रमाणमस्ति तत्रैव तन्न्यावतारात् ।

त्रयोऽर्था सर्ववेदेषु दशार्था. सर्वभारते ।

इति स्मृत्यैव वेदस्यानेकार्थपरत्वस्योपगमाच्चेति ।

इयता प्रबन्धेन प्रतिपादित पराभिमतानिर्वचनीये आगमप्रमाणाभावमुपसंहरति ॥ **एव स्मृतिभिरिति** ॥ **तदनिर्वाच्यतापराणामिति** ॥ तदनिर्वाच्यतापरत्वेन पराभ्युपगतानामित्यर्थ. ।

(रा टि ) ॥ **धनादिमन्ताविति** ॥ आदिपदेन यशसो मखस्य च ग्रह । तथैव **कर्मनिर्णयोक्ते** । **युवोरित्यस्यार्थ** युवयोरिति । **चनशब्दार्थ** अपीति । अब्देवा अपीत्यर्थ. । **व्रतपदार्थ** कर्मेति । **नु इत्यस्यार्थ.** इदानीमिति । व्यवहिताश्चेतिपाणिन्युक्तेराह ॥ **प्रावोचमेवेति** ॥ घशब्दार्थ एवेति । मूलेऽडभावश्छान्दस इति भावेन **प्रावोच**मित्युक्तम् । एकवचनं बहुवचनार्थे राज्यपदं च प्राधान्यपरमिति भावेनोक्तं ॥ **विप्रप्रधानेष्विति** ॥

(रा टि.) ईशावास्योक्तार्थमाह **कविरित्यादिना** ॥ **मनसामीष्ट इति** ॥ अधीगर्थदयेशां कर्मणीति षष्ठी । मनसा नियामक इत्यर्थः । श्रुतिभिश्चेत्युपलक्षणमित्युपेत्य तृतीयान्तस्य शेषोक्त्यान्वयमाह ॥ **इत्येवं श्रुतिस्मृतिभिरित्यादिना** ॥ स्मृतयश्च वक्ष्यमाणा । यद्वा **गीतास्वित्यादि**सप्तम्या फलितार्थोक्तिस्स्मृतिभिरित्यादि ।

(वे टि.) 'मघवन् यशस्वि मखपते धनवन्निति वा' इति **कर्मनिर्णयानुसारेण** मघवच्छब्दस्यार्थमाह ॥ **धनादिमन्ताविति** ॥ **आपोऽपीति** ॥ अबभिमानिदेवता अपीत्यर्थः । चनेत्यस्यापीत्यर्थः । प्रेत्युपसर्गस्य वोचमित्यनेन सम्बन्धः । छन्दसि परेपि व्यवहिताश्चेति स्मरणात् । घेत्यस्य एवेत्यर्थः । अडभावश्छान्दस इति भावेनोक्तं **प्रावोचमेवेति** ॥ **जगत्सृष्ट्यादीति** ॥ तथा चास्या अपि श्रुतेः प्राचीनश्रुतिवदेव जगत्सत्यत्वपरत्वमपीति भावः । श्रुतौ **गृण** इत्यस्य कर्मानुक्तेराह ॥ **तमिति** ॥ महिमानमित्यर्थः । **विप्रराज्ये** इत्यस्य **यज्ञे**ष्वित्यनेन सामानाधिकरण्यसिद्ध्यर्थं वचनव्यत्यासेनाह ॥ **विप्रप्रधानेष्विति** ॥

एवम्भूतोपि सार्वज्ञ्यात्कविरित्येव शब्द्यते ।
ब्रह्माऽदिसर्वमनसा प्रकृत्या मनसोपि तु ।
ईशितृत्वान्मनीषी स परिभूस्सर्वतो वरः ।
सदाऽनन्याश्रयत्वाच्च स्वयम्भूः परिकीर्तितः ।
स सत्यं जगदेतादृङ्नित्यमेव प्रवाहतः ।
अनाद्यनन्तकालेषु प्रवाहैकप्रकारतः ।
नियमेनैव ससृजे भगवान्पुरुषोत्तमः ।

इतीशा**वास्यभाष्यानुसारेण** श्रुतिं व्याचष्टे **कविः सर्वज्ञ इत्यादिना** ।

(द्वै. द्यु.) ॥ **धनादिमन्ताविति** ॥ तस्य मघस्य धननामत्वादिति भावः । **आदिपदेन** कर्मनिर्णयोक्तरीत्या यशआद्युपग्रहः ॥ **इन्द्राबृहस्पती इति** ॥ तयोरुत्तरार्धे 'अच्छेन्द्राब्रह्मणस्पती' इति प्रस्तुतत्वादिति भावः ।

बृहस्पतिः पुरोधाश्च ब्रह्मा च ब्रह्मणस्पतिः ।

इति वचनाद्ब्रह्मणस्पतिरित्यस्य बृहस्पतिरिति व्याख्या । **इदित्यस्यार्थ** एवेति । **आपोऽपीति** कर्माभिमानिन इत्यर्थः । अप्शब्दस्य कर्मपरतया **ईशावास्यभाष्ये** व्याख्यातत्वात् ॥ **सत्यानीति** ॥ श्रुतौ **सत्या** इति शसोऽडादेशः पूर्वसवर्णो वेति भावः ॥ **प्रावोचमेवेति** ॥ घशब्दोऽवधारणे । श्रुतौ प्रेत्येतद्वोचमित्यनेन सम्बध्यते । छन्दसि परे व्यवहिताश्चेति स्मरणात् । अडभावः छान्दस इति प्रावोचमित्युक्तमिति ध्येयम् । ननु कर्मणां सत्यत्वेपि जगत्सत्यत्वस्य किमायातमित्यत आह ॥ **कर्मणामिति** ॥ **विषयेति** ॥ विषयस्य मिथ्यात्वे तस्य कृतिकर्मत्वानुपपत्त्या तत्कर्मकत्वव्द्यापाररूपकृतिरप्यसत्या स्यादिति भावः । तथा चाऽविद्यकस्य कृतिविषयत्वायोगात्कृतिविषयत्वेन जगत्सत्यतासिद्धिरिति श्रुतावुपपत्तिरुक्ता भवति । पूर्वश्रुतौ ये कर्मसाक्षिणो देवास्तैरपि प्रमितस्वसर्जकत्वरूपोपपत्तिरभिहितेति

(द्वै द्यु) ध्येयम् । वचनव्यत्ययमादृत्य विप्रराज्ये विप्रप्रधानकेष्वित्युक्तम् । शव इति धृत्वा सुखमिति व्याख्या । प्रतियोगे द्वितीया । सुखोद्देश्यकत्वेन स्तोत्रस्यैतद्यावर्तकरूपलक्षण भव ीत्याशयेन फलितमाह ॥ उद्दिश्येति ॥ अनेन स्वोक्तार्थसाक्षितया ब्राह्मणप्रमितत्वरूपलिङ्गोक्त्या फलोक्त्या च सत्यत्वे तात्पर्यमवसीयते ॥ मनमामीष्ट इति ॥ मनश्शब्द तत्स्थितेच्छाविषयपर । तथा च स्वाभिमतानामिति यावत् । ईष्टे समर्थ । अधीगर्थदयेशा कर्मणीति मनसामिति षष्ठीति ध्येयम् । समाभ्य इति ल्यब्लोपे पञ्चमी । सना अनुसृत्येत्यर्थ ॥ याथातथ्यत इति ॥ 'यथार्थं तु यथातथम्' इत्यमरोक्ते यथातथपद यथार्थवाचि । भावे-ष्यञ् । तृतीयार्थे तसि । तृतीया वैशिष्ट्ये । तथा च याथार्थ्ययुक्तानकरोदित्यर्थ । 'द्रव्य कर्म च कालश्च स्वभावो जीव एव च' 'सत्यस्य सत्यम्' इत्यादिवचनै स्वभावस्यापि ईशाधीनत्वावगमात् जगत्स्वभावत्वेपि याथार्थ्यस्य तद्विशिष्टत्वेन जगत्करण युक्तमिति भाव । एवेत्यस्य व्यवच्छेद्यमाह ॥ न मिथ्याभूतानिति ॥

नन्ववधारणस्य श्रुतावभावात्कुतस्तत्पूरणेन व्याख्यानमिति चेन्न । अस्य विशेषणसामर्थ्यलब्धार्थप्रदर्शनपरत्वेन पूरणाकरणात । तथा हि, सत्योत्पादने सार्वज्ञ्यमपेक्षितम् । तस्य भोगयोग्यतया तन्निर्माणार्थं भोक्तृजीवतत्प्रयोजकादृष्टतदुचितदेशकालादिसर्वपदार्थज्ञानस्य साक्षात्काररूपस्य निश्चितप्रामाण्यकस्यापेक्षितत्वात् । अनुमित्याद्यात्मकत्वे लिङ्गादिप्रतिसन्धानविलम्बेन कर्मविशेषादिज्ञानानुदयेन तत्काले स्वापेक्षितकार्यजनकत्वायोगेन द्वितीयविशेषणस्य स्वाभीष्टकरणसामर्थ्यस्याभावप्रसङ्गात् । तथा च प्रथमविशेषणसामर्थ्याद्द्वितीयविशेषणसिद्धिरित्यनन्तर तदुक्ति. । ननु

> ब्रह्मादिसर्वजगता प्रकृत्या मनसोऽपि च ।
> ईशितृत्वान्मनीषी स ॥

इति ईशावास्यभाष्यविरोध इति चेन्न । तत्राप्युक्तोपयोग्यधिकार्थलाभाय यथाश्रुतार्थमविहायैवार्थान्तराङ्गीकारे बाधकाभावेन प्रकृते तदनुसरणे विरोधाभावात् । इदमपि सत्यत्वस्यैवोपपादकम् । सत्यार्थकरणसामर्थ्याभावे हि मायिकवज्जगत् रञ्जनादिना स्वोदरभरणार्थं सृजेत् । मिथ्याभूताना साक्षात्स्वपरानुपयोगित्वात । अन्यथैन्द्रजालिकस्य स्वोदरभरणार्थं भिक्षाटनादौ प्रवृत्तिर्न स्यात् । अविद्यबलादेव सार्वज्ञ्यस्य वक्तव्यतया तदीयविक्षेपशक्तिबलात्तदाकारप्रतिभास ईश्वरस्य भवतीत्याशङ्कापरिहाराय परिभूरिति । तथा च सर्वपरिभावकत्वादविद्यारूपदोष कथ सहेतेत्युक्त भवति । ननु स्वस्य सार्वज्ञ्यादिसम्पादकत्व तस्या गुणत्वेन तन्निरासो न क्रियत इति चेन्न । तत्सम्बन्ध विना स्वस्यासार्वज्ञ्यनिरासकत्वाभावे सर्वपरिभावकत्वेन सर्वोत्तमत्वानुपपत्ते । नन्वेतादृग्गुणा· कस्यचिदनुग्रहादिना साध्याश्चेत्कथ सर्वपरिभावकत्वेन सर्वोत्तमत्वमित्यत स्वयम्भूरिति स्वातन्त्र्यमुक्तम् । इद सत्यतोपपादकमपि भवति । अचिन्त्यशक्तिरूपैतदुपपाद्यपरमैश्वर्यवत्त्वेन दुर्घटतया प्रतीयमानस्य जगत उत्पादकत्वस्य सम्भवादित्याशयेन परमेश्वर इति तल्लब्धार्थ उक्त । मायिकसर्जने मायासाधनादेरेवापेक्षितत्वेन स्वातन्त्र्यादिगुणानामनुपयोग । सार्वज्ञ्यादेर्मायिकत्वे स्वयम्भूत्वानुपपत्ति । स्वयमिति विशेषोक्तिबलेनान्यनैरपेक्ष्येण सार्व-

(द्रै द्यु ) इत्यादिगुणवत्तया स्थितिरूपभवनस्योक्ते । समाभ्य इत्यनेनापि सत्यता लभ्यते । सत्यभूतकारणादिद्वारा कार्योत्पादने विलम्बस्यापेक्षितत्वात् । मिथ्याभूतस्य तु मायामात्राधीनत्वेन विलम्बे बीजाभावात् । परमार्थबोधकवस्त्वादिशब्दपर्यायार्थशब्देनापि महदादीना सत्यता लभ्यते । अत एवार्थशब्देनैव सत्यतालाभात्तदीयस्वभावभूतमपि याथार्थ्यमीशाधीनमिति बोधनाय टीकायां याथातथ्यतो व्यदधादिति क्रियया सह योजितम् । न त्वर्थेष्वन्वयसूचनाय यथार्थानर्थानित्याद्युक्तम् । अर्थपदस्य परमार्थपरत्व 'अर्थस्वरूप भ्राम्यन्त' इत्यादौ परेणाप्यङ्गीकृतमिति । एतेन 'सत्यत्वपक्षे विशेषणानुपयोग । स्वोक्तार्थे तदुपयोग ' इत्यद्वैतचन्द्रिकोक्तिरनादर्तव्यैव । त्वदुक्तार्थे विशेषणानुपयोगस्याऽधुनिकोक्तनिरासावसरे दर्शयिष्यमाणत्वात् । मूले आदिपदेन 'यच्चिकेत सत्यमित्तन्न मोघ' 'सत्यमेनमनु विश्वे मदन्ति' इत्यादीनामन्यत्राचार्योदाहृताना ग्रहणम् । स्फुटत्वाट्टीकाया तदनुक्तिरिति द्रष्टव्यम् । उक्तमूलवाक्यस्य केन सहैकवाक्यत्वमित्याकाङ्क्षापूरणाय विशिष्टार्थमुपसंहरति ॥ एवमित्यादिना ॥

यदत्र केनचित्, उक्तं मिथ्यात्वानुमानस्य श्रुतिबाधमाशङ्क्याद्वैतसिद्ध्यद्वैतचन्द्रिकाद्युक्तमुक्तम् । 'ननु प्रत्यक्षबाधाभावेऽपि श्रुत्यैव बाधोस्तु । तथा हि

विश्व सत्य मघवाना युवोरिदापश्चन प्रमिनन्ति व्रत वा ।
अच्छेन्द्राब्रह्मणस्पती हविर्नोऽन्न युजेव वाजिना जिगातम् ॥

इति ऋक्संहिताद्वितीयाष्टकवाक्येन देवप्रमितत्वरूपतात्पर्यलिङ्गसहितेन सत्यतावगमादिति चेन्न । तत्र हि विश्व सत्यमिति वाक्येन विश्वपरमार्थत्वाबोधनात् । तथा हि । हे इन्द्रब्रह्मणस्पती भवतौ मघवन्तौ धनवन्तौ । मघमिति धननामसु पाठात् । विश्व सर्वम् । सत्य सद्भावत्वात् फलावश्यम्भावित्वाद्वा कर्म । युवयोरित् युवयोरेव । युवामेवोद्दिश्य सर्वाण्यनुष्ठेयानीत्यर्थ. । आपो व्यापनशीला देवता । च नेत्येतन्निपातद्वयम् । 'न हि देवो न मर्त्यो महस्तव क्रतु पर ' इत्यादौ महेतिशब्दवत् 'ददाति मह्यं यादुरी' इत्यादौ यादुरीत्यादिवदेकपद्यमध्यापकसम्प्रदायसिद्धम् । युवयोर्व्रतं सकलं कर्म च न प्रमिनन्ति न हिंसन्ति । मी हिसाया क्र्यादि । किं तु अनुमोदन्त इति यावत् । नोऽस्माकम् । हविर्दध्यादिकम् । अन्न च पुरोडाशादि । अच्छा अभिलक्ष्य । वाजिना वेगवन्तावश्वाविव । युजा युक्तौ । आ जिगातमागच्छतेत्येतत्परत्वेन स्तुतिपरस्यैतद्वाक्यस्य विश्व सत्यत्वे तात्पर्याभावात् ।

शाक्मना शाकोऽरुण सुपर्ण आ यो मह. शूर सनादनीळ ।
यच्चिकेत सत्यमित्तन्न मोघ वसु स्पार्हमुत जेतोऽत दाता ॥

इत्यपीन्द्रस्तुतिपरतया न विश्वसत्यत्वतात्पर्यवती । तथा हि, शाक्मना शक्य एव शाक्म तेन शाक्मना बलेन । शाकः स्वशक्त्यैव कर्तुं शक्त । अरुणः सुपर्णः कश्चिच्छोभनपर्ण पक्षी । आ गच्छतीत्यध्याहार उपसर्गश्रुते । यो महो महान् । शूरः विक्रान्त । सनात् पुराण. । अनीळः अनीड नीडास्वीकर्ता । न हीन्द्रोऽग्निवत् कुत्रचिद्धिघते नीड करोतीति एक सुपर्ण इत्यादिरूपकेणेन्द्रमाह । स इन्द्र इदमिदानीं कर्तव्यमिति यज्जानाति

(द्वै द्यु ) तत्सत्यमित् सफलमेव। न मोघं न विफलं। स्पार्हं स्पृहणीयं वसु धनं जेता जयति शत्रुभ्यः सकाशात्। उत अपि दाता ददाति स्तोतृभ्यः। जेता दातेति तृन्नन्तेन न लोकेत्यादिना षष्ठीप्रतिषेधः। न च विश्वं सत्यमित्यादौ सत्यशब्दस्याप्रसिद्धार्थता। 'यो वै धर्मः सत्यं वै तत्। तस्माद्धर्मं वदन्तमाहुः सत्यं वदतीति' इति श्रुतौ धर्मशब्दस्य सत्यशब्दसमानार्थकत्वोक्तेः। न च वैदिकलौकिकप्रसिद्धिभ्यां सत्यशब्दस्य परमार्थपरतैव युक्तेति वाच्यम्। अन्यपरवाक्ये प्रमाणान्तरविरुद्धार्थपरताया अयुक्तत्वात्। उपक्रमादिसमग्रतात्पर्यलिङ्गसचिवस्याद्वैतवाक्यस्यैव प्राबल्यात्। एवं

प्र घा न्वस्य महतो महानि सत्या सत्यस्य करणानि वोचम्

इत्यत्रापि सत्यपदं सफलपरमेव। सत्यसङ्कल्प इत्यादौ तत्प्रयोगात्।

'सत्यं सो अस्य महिमा' इत्यादावपि महिमशब्दस्य 'स्वे महिम्नि प्रतिष्ठितः' इत्यादाविव परमानन्दरूपस्वरूपमहिमपरत्वात्तथात्वे परमार्थत्वरूपसत्यत्वं विवक्षितुं शक्यम्। महिमशब्दस्य जगत्सृष्ट्यादिपरत्वे तु सत्यपदं सफलपरमेव।

कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः

इत्यत्र यतः कविः क्रान्तमतीतं सर्वं दृष्टवान्, यतश्च मनीषी मनसा ईष्टे ऊहापोहकुशलः, यतश्च पूर्वसृष्टिविरुद्धसृष्टिमिच्छतामसुराणां परिभवसमर्थः, यतश्च स्वयमन्यनैरपेक्ष्येण पूर्वसृष्टप्रकारेण जगद्भावनसमर्थस्ततो हेतोर्याथातथ्यतः यादृशतादृशभावं प्रतिसन्धाय व्यदधादित्यर्थः। परमते तु तथागत इत्यादौ तथाशब्दस्यैव सत्यार्थताया अमरटीकादावुक्ततया यथाशब्दस्य तद्धितस्य च वैयर्थ्यं स्यादित्यन्यत्र विस्तरः' इति।

तदयुक्तम्। सत्यशब्दस्य कर्मपरताया अप्रसिद्धत्वेनाबाध्य एव बहुप्रसिद्ध्या शक्तिमत्त्वेन च तदर्थकताया एव युक्तत्वात्। एवं विश्वशब्दस्य जगत्येव प्रसिद्धत्वेन कर्मत्वसमनियतसर्वत्वावच्छिन्नपरत्वमप्ययुक्तम्। न च सत्यपदस्य धर्मपरत्वमुदाहृतश्रुतिसिद्धमिति मुख्यं तत्रापीति वाच्यम्। सदसत्पदस्थले पञ्चमहाभूतेषु तत्प्रयोगस्य श्रुतिसिद्धस्य 'लक्षणयाऽपि सम्भवात्' इति त्वयैव भाषितत्वेन तद्रीतेरत्रापि वक्तुं शक्यत्वात्।

मह्यं ददाति यादुरीत्यादौ दुरी आदरवती या इति व्याख्यानमध्यापकसम्प्रदायसिद्धं यादुरीत्येकपदं परित्यज्य कृतं यदि ऋष्यादिमतेन वा पुराणादिप्रमाणानुसारेण वा प्रवृत्तं तदा तत्रोभयोस्तुल्यबलत्वात् तत्र षोडशिग्रहणवत् उभयमपि विकल्पेन युक्तम्। यदि त्वादृशस्यैव कस्यचिद्ग्रन्थकृतः स्वेच्छानुसारेण व्याख्यानं तदा तदप्ययुक्तमेव पूर्वप्रदर्शितातिप्रसङ्गात्। इत्थं च चनेत्यत्र भिन्नपदत्वमाश्रित्य व्याख्यानमशुद्धमेव। भवदुक्तरीतावपि आपश्चन आपोपि व्रतं कर्म वा भवदुद्देश्यकं जानन्तीत्यर्थसम्भवे भिन्नपदत्वस्य प्रमिनन्तीत्यस्यानुशिष्टत्वेपि तत्र प्रयोगाप्राचुर्येणाप्रसिद्धहिंसार्थकतया व्याख्यानस्यायुक्तत्वात्।

नन्वद्वैतचन्द्रिकाच्छाययैतद्वाक्यस्य देवसम्बन्धिजगत्सत्यत्वाभावपरताया अद्वैतसिद्धिकृदभिप्रेतत्वावगमात्तत्र भिन्नपदाश्रयणं तस्य युक्तम्। ततस्तदनुसार्यस्मद्व्याख्यानमपीदं युक्तमिति चेन्न। यादृशव्याख्याने भिन्न-

(द्वै द्यु ) पदत्वमावश्यक तादृशव्याख्यान कण्ठतोऽप्रदर्श्य यत्र तदनावश्यकत्व तादृशव्याख्याने भिन्नपदाद्या-श्रवणस्याद्वैतसिद्धिकृत एवायुक्तत्वेन तदनुसारित्वद्व्याख्यानस्य सुतरामयुक्तत्वात् ।

एव यच्चिकेतेत्यत्र यत्कर्तव्यतया जानातीत्यङ्गीकारे कर्तव्यत्वेनेति पदाध्याहारप्रसङ्ग सत्यपदस्य फलाविसवादिरूपलाक्षणिकार्थप्रसङ्गश्च स्यात् । तदपेक्षया यच्चिकेत जानाति तत्सत्यमबाध्यमित्यर्थ एव युक्त । अध्याहाराभावात् सत्यपदप्रसिद्धार्थात्यागात् । अबाधितज्ञानवत्त्वरूपोत्कर्षलाभाच्च । न च सत्यसङ्कल्प इत्यादौ सफलेऽपि सत्यपद प्रयुक्तमिति वाच्यम् । एवमपि क्वचिदेव तस्य प्रयुक्तत्वेन लक्षणयाऽपि तस्य सम्भवेनाप्रसिद्धत्वेन तस्य मुख्यार्थत्वायोगात् ।

एव 'मत्य सो अस्य महिमा' इत्यादौ महिमपद विनिगमकाभावादानन्दादिवज्जगत्कर्तृत्वादिपरमपि । 'जन्माद्यस्य यत ' इति भगवता सूत्रकारेण तस्य ब्रह्मलक्षणत्वेनाभिधानात् । प्रसिद्धानामेव लक्षणत्वात् । अत्र च सो इत्यनेन प्रसिद्धार्थकेन तेषा तदुपपाद्यपूर्णानन्दादिलक्षणानाञ्च ग्रहणात् । तथा च सत्यपदमप्यबाध्यार्थकमेव । स्वरूपानन्दादाववश्य त्वयाऽनुसर्तव्यत्वात् ।

वस्तुत 'सत्यसङ्कल्प ' इत्यत्रापि सत्यपदमबाध्यार्थकमेव । सङ्कल्पस्य तद्विषयकत्वात् । सत्यस्य सङ्कल्प इति षष्ठीतत्पुरुषाभिप्रायेण विषयविषयिणोरभेदोपचारेण कर्मधारयविवक्षया वा तत्प्रयोग । यथार्थज्ञान मिथ्या-ज्ञानमिति प्रयोगवत् । सङ्कल्पविषयस्य परम्परया तत्साध्यता विनाऽबाधितत्व न निर्वहतीति तस्य सफलत्वमर्थतो-ऽधिगम्यते । अन्यथा मिथ्यासङ्कल्प इति व्यवहारानुसारेण मिथ्यैष व्यवसायश्चेत्यादिप्रयोगात् बाध्यार्थकत्व-समकक्षतया वैयर्थ्यार्थकत्वस्य प्राप्त्या मिथ्यादिपदेन पुराणादौ जगतो मिथ्यात्वमुच्यते' इति त्वदभ्युपगमोऽनु-पपन्न स्यात् । किं च पूर्वश्रुत्यो कथं चित्त्वदुक्तोऽर्थ अस्मन्मतरीत्या वक्तु शक्यते । त्वन्मते त्वयुक्त एव । इन्द्रबृहस्पतिरूपदेवताद्वयस्यैव गृहीतत्वेन तयोरपि जीवत्वेनाविशेषात्सर्वकर्मणा तदुद्देश्यकत्वस्य, कर्तव्यत्वेन तदीयज्ञानसामान्ये साफल्यस्य च बाधितत्वात् । न चैतद्यथायोग्य ग्राह्यमिति वाच्यम् । विश्वपदवैयर्थ्यापत्ते । यच्चिकेत सत्यमिदित्यवधारणसाहित्येन सामान्योक्तिपूर्वक न मोघमिति वैफल्यव्यवच्छेदानुपपत्तेश्च । न च स्तुतौ तात्पर्यान्न वास्तवत्वचिन्ताऽवसर इति वाच्यम् । उक्तवाक्यया सर्वस्वाभिधेयत्यागेन देवताप्राशस्त्यमात्र-लाक्षणिकत्वापत्ते. । ॐमिति चेत् । तस्य सत्यशब्दस्याबाधितार्थकत्वेऽप्युक्तक्रमसम्भवेन म्लेच्छगुरूक्तब्राह्मणा-चारविरुद्धाचारकर्तव्यतावदसदुक्तार्थविरुद्धत्वमात्रेण त्वदुक्तार्थस्योपादेयत्वापातात् ।

एतेन लौकिकवैदिकप्रसिद्ध्यनुरोधेन सत्यशब्दस्याबाधितार्थकत्वमस्त्वित्याशङ्क्य 'अन्यपरवाक्ये प्रमाणान्त-रबाधितसत्यार्थकत्वमयुक्तम् । उपक्रमादिसच्चिदाद्वैतश्रुतिप्राबल्येन विश्वसत्यतायास्तद्विरुद्धत्वात्' इति समाधानाभि-धानमप्ययुक्तम् । त्वदुक्तार्थकत्वेऽपि प्रमाणान्तरविरोधस्य दर्शितत्वात् । मिथ्यात्वप्रतिपादकश्रुतेरेवाभावस्य वाचारम्भणादिवाक्यार्थप्रतिपादनेन दर्शनीयतया तत्प्राबल्यस्य कफोणिगुडायितत्वाच्च । न चेन्द्रादयोऽपि न जीवा

(द्वै द्यु) इति वाच्यम्। तथात्वेऽनेकेश्वरापातेन जगद्विलयापातात्। तेषा जीवत्वेनास्मदविशेषस्य त्वद्ग्राष्ये शतश उक्तत्वाच्च।

यदपीशावास्यश्रुतिव्याख्याने कवि क्रान्तमतीतं सर्वं दृष्टवानिति कविशब्दव्याख्यान तदनागतवर्तमान रूपाशेषार्थविषयकज्ञानालाभेन कविशब्दमुख्यार्थत्यागाच्च हेयम्।

यदपि मनीषीत्यस्य ऊहापोहकुशल इति व्याख्यानं तदत्यन्ताशुद्धम्। तस्यानुमितितर्कादिरूपस्य साक्षाज्जगद्द्रष्टरि 'य सर्वज्ञ स सर्ववित्' इत्यादिश्रुतिसिद्धे परमेश्वरेऽसम्भवात्।

परिभूरिति सामान्यत उक्त्या सर्वोत्तमत्वलाभेन न विहायासुरपराभावकत्वमात्रार्थकत्वकथनानौचित्यम्।

यदपि स्वयम्भूरित्यस्यान्यनैरपेक्ष्येण जगद्भावनसमर्थ इति स्वातन्त्र्यार्थकत्वपरित्यागेन व्याख्यान तण्णिजर्थस्य अधिकस्य निवेशादश्रुतस्य जगत सम्बन्धाच्च स्वेच्छयोक्तार्थकरणे क्लिष्टम्। स्वयमेव भवतीति व्युत्पत्त्याऽन्यनैरपेक्ष्येण सत्तारूपस्वातन्त्र्यलाभेन तदेव युक्तम्।

यदपि याथातथ्यत इत्यस्य 'यादृशतादृशभाव प्रतिसन्धाय' इति व्याख्यान तत्र वक्तव्यम्। किं यथा तथा इति समुदायात् ष्यञ्, किं तथापदमात्रात्, किं वा यथातथ इति समासात्। नाद्य। यथापदस्य सादृश्यार्थकत्वेन तथापदस्याऽपि तदुपस्थापितसादृश्यादिरूपप्रकारपरामर्शितया तदुभयार्थयोर्भिन्नवाक्ययोरेव 'यथा घटस्तथा पट' इत्यादौ निविष्टत्वेनैकार्थीभावरूपसामर्थ्याभावेन समासानुपपत्त्या तदुभयघटितस्य प्रातिपदिकत्वाभावेन ष्यञोऽनुपपत्ते। न द्वितीय। यथापदस्य वृद्ध्यभावप्रसङ्गात्। तथापदस्यैव तद्भावप्रसङ्गाच्च। यादृशतादृशभावरूपार्थस्याप्रसेश्च। नापि यथातथ इति प्रातिपदिकात्। यथापदस्य सादृश्यार्थकत्वे अव्ययीभावस्य 'यथाऽसादृश्ये' इत्यनेन निषिद्धत्वात्समासान्तरस्याप्राप्ते सुप्सुपेति कथञ्चित्समासे वक्तव्ये यथार्थवाचियथातथपदस्य कोशादिसिद्धत्वात् तदर्थकत्वे समासोस्तु। न तु अन्यार्थे। घटस्य यादृश प्रकार तादृशप्रकारोपेत पट इत्यर्थे घटस्य यथा तथा पट इत्यप्रयोगात्। न हि हामकर्तृत्व निमित्तीकृत्य तत्र निरुक्तौ वर्णागमादिना निष्पन्नस्य हंसवाचिहसशब्दस्य हासकर्तृत्वादियोगलभ्यार्थमादायान्यत्र वर्णागमादिना तादृशरूपमुपपद्यते। किञ्च यादृशतादृशभावमिति व्याख्याने केषामित्याकाङ्क्षाया पूर्वकल्पीयपदार्थानामित्यध्याहारप्रसङ्ग। अध्याहारेऽपि पूर्वसृष्टाना पदार्थाना यथातथाभाव प्रतिसन्धायेति अद्वैतचन्द्रिकोक्तस्य, यादृशतादृशभावमिति त्वदुक्तस्य च कथमनेन लाभ। तथात्वे यथातथापदयो परस्परमनन्वितार्थत्वेनासमर्थसमासत्वापत्ते।

अद्वैतसिद्धिकारस्तु दूषणार्थं न्यायामृतानुवादावसरे तदनुदाहृतामेव यथातथार्थान्व्यदधादिति श्रुतिमुदाहृत्य पूर्वसृष्टिप्रकारेण सर्जनसमर्थ इति व्याख्यातवान्। तस्यान्यथानुवादरूपदोष स्फुट एव। यदपि तद्व्याख्याने उक्तशङ्कापरिहारायार्थतौल्येन श्रुत्यन्तरमेवोदाहृतमित्यभिहितम्। तदपि न सम्यक्। उपस्थितवाक्य याथातथ्यत इत्यादेरुपपादनसाकाङ्क्ष विहाय तदुपपादनमकृत्वा श्रुत्यन्तरग्रहणे बीजाभावात्। तस्मान्न्यायामृतवाक्ये तस्य भ्रान्तिरेव। नापि तद्व्याख्यानोक्तमपि युक्तम्। तादृशश्रुतेरनुपलम्भात्।

(द्वै द्यु) यदपि मन्मते यथापदस्य वैयर्थ्यकथनं तथा तद्धितस्यापि तदत्यन्तमसङ्गतम्। यथार्थवाच्युक्तशब्दशरीरे तद्वाचियथाशब्दस्याप्रविष्टत्वात्। अन्यथा मापतिशब्दादिघटितत्वेन लोके रमापत्यादिशब्दानामप्रयोगप्रसङ्गात्। न च सत्यसदुक्तरीत्या सर्वसार्थक्येनार्थान्तरे श्रुतेर्यथार्थबोधकत्वतात्पर्ये स्वल्पाक्षरघटितपदोपादान विशिष्टप्रयोगेऽप्यावश्यक विहाय श्रुतावधिकोपादान निर्बीजमिति दूषणवाक्यतात्पर्यमिति वाच्यम्। यथार्थकत्वे कस्यापि वैयर्थ्याभावेन सर्वानुपूर्व्या अपि सफलत्वात्। अन्यथा सत्य ज्ञानमित्यत्र सत्यपदशरीरनिविष्टेन सत इत्यशेनैव यथार्थवस्तुबोधनसम्भवे यमित्यस्य वैयर्थ्यापातेन सत् शुभ यापयतीत्यादिरीत्याऽर्थस्य प्राप्त्या ब्रह्मण सत्ता न सिध्येत्। एव 'त्वमहमस्मि भगवो देवते' इत्यादौ 'अथ योऽन्या देवतामुपास्ते' इत्यत्र च देवतापदस्य देवार्थकत्व न स्यात्। देवपदेनैव तद्बोधने ते तामित्यनयोर्वैयर्थ्यप्रसङ्गात्। उक्तदोषेणैवार्थान्तरस्य कथञ्चित्कर्तव्यतापाताच्च। तस्मादुक्तरीत्या दूषणाभिधानमसङ्गतमेव। तद्धितस्तु भावार्थकतया सार्थक। तदुपपादित व्याख्यानावसर एवेति न तद्वैयर्थ्यशङ्कापीति न किञ्चिदेतदित्यन्यत्र विस्तर।

ननु सत्यत्वश्रुतयोऽनुवादिका एव। अत कथ ताभि सत्यत्व सिद्ध्यतीति चेन्मैवम्। सत्यत्वस्य त्रिकालाबाध्यत्वरूपस्य प्रत्यक्षेणागृहीतत्वे तद्ग्राहकतया श्रुतीनामनुवादकत्वायोगात्। ननूपक्रमादितात्पर्यलिङ्गोपेताद्वैतश्रुतिविरोधान्न तत्तात्पर्यकत्व युक्तमिति वाच्यम्। श्रुत्यर्थविचारप्रवृत्तस्योक्तरीत्या विरोधस्फूर्तौ मिथ्यात्वश्रुतिप्राबल्यग्रहस्यैवानुदयात्। न चोपक्रमादिभि स्वार्थतात्पर्येऽवधृते तात्पर्यवद्वाक्यबोध्यनिषेधप्रतियोगिसमर्पकतयाऽर्थक्रियाकारित्वादिलिङ्गाभासादिप्राप्तसत्त्वानुवादकत्वेन तच्छेषत्वनिश्चय इति वाच्यम्। निर्णीतार्थकाना खलूपक्रमादीना प्रकरणतात्पर्यनिश्चायकत्व वाच्यम्। तदेव न घटते। द्वितीयवस्तुसामान्यनिषेधे स्वस्यापि मिथ्यात्वप्राप्त्या बोधकत्वं न स्यादित्युपपत्तिविरोधे प्राप्ते तस्यानिर्वचनीयत्वरूपतृतीयप्रकारसिद्धे प्रागपरिहार्यतया तस्य च प्रत्यक्षस्वार्थानुमितिभ्या असम्भवस्य स्फुटं निरवकाशतया तद्बोधकागमाभावस्य च प्रदर्शितत्वेन प्रेक्षावता तैस्तत्सिद्ध्यभावात्। उक्तवाक्यार्थानुपपत्त्यैव तत्कल्पनस्य तदर्थावधारणोत्तरकालिकस्येतरेतराश्रयेण प्रेक्षावता दुर्घटत्वात्। अत सत्यत्वबोधकागमै· स्वार्थबोधनकाले तादृशागमप्राबल्यमूलकविरोधानुपस्थित्या एतेषा प्रत्यक्षानुमानादिविरोधव्याहत्याद्यभावेन स्वर्गकामादिवाक्यवत् स्वार्थनिश्चायकत्वात् निर्णीतार्थकैनद्विरोधेनाद्वैतागमानामेतदविरोध्यर्थान्तरपरत्वस्यावश्यकत्वात्।

न च स्तुतिपरवाक्यस्थसत्यादिशब्दैर्विश्वसत्यता न सिद्ध्यतीति वाच्यम्। किमत्र स्तुतिपरवाक्यघटकपदाना प्रसिद्धार्थकत्वाभाव इति नियम इति सत्यपदस्य प्रसिद्धार्थकत्वाभावेन कथञ्चिदन्यार्थपरत्वम्। किं वा प्रसिद्धार्थकत्वेऽपि तद्वाक्यस्य तत्र तात्पर्याभावात्। नाद्य। येनाश्रुत श्रुत भवतीत्यादिषु सर्वत्रार्थवादवाक्येषु विद्यमानपदानामपि प्रसिद्धार्थत्यागेनात्यन्ताप्रसिद्धार्थकत्वापातात्। न द्वितीय। तात्पर्याभावो नाम सर्वथा तत्प्रमानुकूलशक्तिरूपतात्पर्याभावो वा प्राधान्येन तत्प्रतिपत्त्यनुकूलशक्तिरूपतात्पर्याभावो वा। नाद्य। तादृशवाक्येन तादृशप्रमोदयस्यानुभवसिद्ध-

(द्वै. द्यु) प्रकार उक्त एव। तन्निष्ठप्रपञ्चमिथ्यात्वासिद्धिश्चेष्टापत्तिः। ननु जगत्सत्यत्वेऽखण्डार्थबोधस्य निष्प्रयोजनत्वं स्यात्। सत्यस्यानिवृत्तिदर्शनादिति चेन्मिथ्यात्वेऽपि तुल्यम्। तादृशानां शुक्तिरजतशशविषाणादीनां नष्टमिति प्रत्ययाभावेन नाशादर्शनात्। ननु तादृशबाधग्रहे जगत्प्रतीतिरेव निवृत्तिरिति चेत्। सप्रयोजनत्वश्रुतिप्रामाण्यादन्धादीनामिव नैयायिकाभिमतमुक्तात्मनामिव च विद्यमानजगतोऽप्यदर्शनसम्भवात्। न च सत्यत्वमिथ्यात्वोभयश्रुतीनामखण्डार्थद्वारत्वेऽवान्तरतात्पर्यानुरोधादुभयसिद्धौ वस्तुनि विकल्पापत्तिरिति वाच्यम्। एतद्दोषस्य तवापि तुल्यत्वात्। अर्थक्रियाकारित्वाद्यनुरोधाय मिथ्यात्वश्रुतीनामेव स्तुत्यर्थतया अवान्तरबोधविषयीभूत येवपास्खननवाक्यादीनामिव तात्पर्याभावस्य वक्तुं युक्तत्वाच्चेत्यलम्।

तथा च श्रुतीनां प्रत्यक्षागृहीतसत्त्वपरत्वे अद्वैतसिद्धिकृदुक्ता 'क्रियासमभिव्याहारेण श्रुतीनां षड्विधतात्पर्यलिङ्गोपेतानां प्राबल्यात्सत्यत्वप्रतिपादिकानां तदविरोधिव्यावहारिकसत्यपरत्वं वा विशेषणोऽपि देवसम्बन्धि जगत सत्यत्वादिना निषेधायानुवादकत्वं वा स्तुतिपरत्वं वा अस्तु। श्रुतीनामपि व्यावहारिकप्रामाण्यमस्तु। सत्यकामत्वादिप्रतिपादिका अपि सगुणपरश्रुतयोऽपूर्वार्थका अपि स्वार्थतात्पर्यवदद्वैतश्रुतिविरोधेनैव न स्वार्थपराः। जगत्सत्त्वपराः श्रुतयोऽध्यासे सामानाधिकरण्यपरतया योज्याः' इत्यादय प्रत्युक्ताः। तात्पर्यस्यैव दूषितत्वात्। व्यावहारिकप्रामाण्याध्याससामानाधिकरण्यादेरद्याप्यसिद्धत्वाद्दूष्यत्वाच्च।

घटादिविश्वसत्यत्वस्य प्रत्यक्षसिद्धत्वेपि श्रुतेर्नानुवादकत्वम्। धर्माद्यंशे प्रत्यक्षेणाप्राप्तत्वात्। तथा च विश्वत्वावच्छेदेन सत्त्वसिद्धिसम्पादकत्वान्न श्रुतेर्वैयर्थ्यम्।

ननु विश्वत्वं नाम नानुगतधर्मोऽस्ति येन तदवच्छेदेन श्रुतेस्तद्बोधकत्वं स्यात्। न च तावन्मात्रवृत्तित्व्यासज्यवृत्तिधर्म एवानुगत इति वाच्यम्। तदवच्छिन्ने सत्त्वादिबोधस्य स्वरूपतो [1]घटत्वादिधर्मितावच्छेदकतदभावसंशयनिवर्तकत्वानुपपत्तेः। अनुभवसिद्धा च संशयनिवृत्तिः। न च घटत्वपटत्वाद्यवच्छिन्नोपस्थापकमेव विश्वसर्वादिपदम्। तथा च धर्मत्वावच्छिन्ने सत्यताबोधकत्वं युक्तमिति वाच्यम्। तथा सति घटत्वाद्यवच्छिन्ने अनुवादकत्वं धर्मत्वाद्यवच्छिन्ने विधायकत्वमिति विरुद्धद्वयापातात्।

अपि च परमाण्वादौ धर्मादावप्यर्थक्रियाकारित्वादिलिङ्गेन सत्यताया गृहीतत्वादनुवादकत्वं दुर्वारम्। न च धर्मादिस्वरूपस्यागमेतरेणाप्राप्तेरागमोपजीवने च स्वानुपजीविप्रमाणप्राप्तार्थबोधकत्वरूपमनुवादकत्वमागमस्य नास्त्येवेति वाच्यम्। धर्मादिस्वरूपांशे आगमोपजीवनेऽपि तत्सत्यत्वांशे आगमानुपजीवनात्तादृशानुमानप्राप्तविश्वसत्यत्वबोधकश्रुतीनामनुवादकत्वमेव।

अपि च धर्मादिस्वरूपबोधकश्रुतिभिरेव तत्सत्ता सिद्ध्यति। तज्जन्यबोधे सत्त्वघटितप्रामाण्यस्य ज्ञानग्राहकेण गृहीतत्वात्। न ह्यावयोर्मते प्रामाण्यस्वतस्त्वे विप्रतिपत्तिः। तथा च ताभिरेवानुवादकत्वं विश्वसत्यत्वप्रतिपादकश्रुतीनां नेह नानेति प्रतिषेधार्थम्। न तु विश्वसत्यत्वविधानार्थम्। विश्वसत्यतां विना कस्याप्यनुपपत्त्यभावात्।

[1] घटत्वादिधर्मितावच्छेदककसत्यत्वतदभावसंशयनिवर्तकत्वानुपपत्तेः इति पाठेन भाव्यमिति भाति

(द्वै द्यु) किं चाखण्डात्मसाक्षात्कारस्य मोक्षहेतुत्वमभिधीयते 'एकधैवानुद्रष्टव्य' 'तमेवं विदित्वाऽति मृत्युमेति' 'प्रपञ्चोपशमं शिवमद्वैत चतुर्थं मन्यन्ते' 'स आत्मा स विज्ञेय' इत्यादौ।

अत एव 'यदि षड्विधतात्पर्योपेतत्वेनाद्वैतश्रुतिप्राबल्यात्प्रत्यक्षादिविरोध द्वैतसत्यत्वादिश्रुतिविरोध चाव धूयाद्वैतश्रुति' स्वार्थमवबोधयति तर्हि तत्त्वमस्यह ब्रह्मास्मीत्यादिरपि विशिष्टाद्वैतमेव बोधयतु। नेह नानेति श्रुतिरपि प्रपञ्चनिषेधबोधमात्रेण पर्यवसन्ना स्यात्। न तु तत्रानुपपत्तिज्ञानसाहित्येन तद्द्वारकाखण्डार्थबोधेन। अनुपपत्तिरूपतर्कस्यापि स्वतात्पर्यबलेनाकिञ्चित्करीकरणात्। किञ्च 'एकमेवाद्वितीयं' 'स आत्मा तत्त्वमसि' 'ऐतदात्म्यमिद सर्वं' 'तत्सत्यम्' इत्यादिरूपेण बहुवारमभ्यासस्थले यदि स्वतन्त्रद्वितीयादिराहित्यमर्थ स्यात् तर्हि बहुस्थलेषु मुख्यार्थत्यागापत्तिरिति तर्कोत्थापकतया खल्वभ्यासस्य तात्पर्यग्राहकत्वम्। तत्रापि यदि अन्त-तोऽखण्डार्थलक्षणा तर्हि किमपराद्ध सजातीयद्वितीयादिरहितलक्षणया। कस्यचित्पदस्य बोधद्वयतात्पर्याद्यभावेन लाघवात्

एक एवाद्वितीयोऽसावश्वमेध' क्रतूत्तम.।

इति भारतादौ 'एको रुद्रो न द्वितीयोऽवतस्थे' इति सगुणवाक्यादावखण्डार्थबोधकत्वाभावेपि उक्तलक्षणादर्शनेन तादृशलौकिकव्यवहारदर्शनेन तादृशलक्षणाया निरूढत्वेन शक्तितुल्यतया तस्या एव युक्तत्वाच्च' इत्यपास्तम्।

उदाहृतश्रुतिभिरखण्डार्थबोधस्यैव मोक्षहेतुतावगमेन प्रामाण्यशरीरस्यानधिगताबाधितसप्रयोजनार्थाव गमकत्वरूपतया तन्निर्वाहाय बोधद्वयेपि तात्पर्यस्योररीकरणात् तत्राऽद्यबोधस्याभ्यासानुसारात् द्वितीयस्य फला-नुसारात् आद्यस्य व्यावहारिक प्रामाण्य, अन्त्यस्य तु तात्त्विक प्रामाण्यम्। इत्थं च मोक्षोपयोगिज्ञानविषयत्वा-भावाज्ज्ञातत्वेपि न विश्वसत्यत्वे श्रुतितात्पर्यम्। अत एवापूर्वत्वसफलत्वोपपत्तीना क्रमेण प्रामाण्यशरीरनिविष्टा-नधिगतत्वसप्रयोजनत्वाबाधितत्वनिर्वाहकतया तात्पर्यलिगत्वं। नैकैकस्य।

अत एव 'दैवप्रमितत्वाद्युपपत्तिबलात्सत्यत्वश्रुति स्वार्थपरा' इति प्रत्युक्तम्।

एतेन 'अपौरुषेयश्रुते सादिप्रत्यक्षापेक्षाविरहेण निरपेक्षानुवादित्वेन दैवात्तत्सवादेपि न दोष। देवता-धिकरणे त्वत्सिद्धान्तरीत्या मानान्तराविरुद्धदेवताविग्रहसिद्धे य कुक्षिसोमपातम इत्याद्यन्यार्थकमन्त्रार्थवादा-देरिव सत्यताया अपि सिद्धि' इति प्रत्युक्तम्। निरपेक्षत्वेपि प्रयोजनविरहेण तत्र तात्पर्यायोगात्। प्रबलाद्वैत-श्रुतिविरोधेन देवताधिकरणन्यायानवताराच्च' इति चेत्।

**अत्रोच्यते**। विश्वत्व नाम सर्वजगन्निष्ठव्यासज्यवृत्तिधर्मविशेष एव। तदवच्छेदेन सत्यत्वबोधने तदवच्छे-दकत्वेन गृहीततादृशधर्मस्य घटत्वाद्यवच्छिन्ने ज्ञानात्सत्यत्वसंशयो न भवति। एवं धर्मान्तरस्यापि ज्ञाने। न च घटत्वावच्छिन्ने तादृशधर्माग्रहदशाया विश्व सत्यमित्यादिवाक्यजन्यबुद्धेर्घटादिधर्मिकतादृशसशयविरोधित्वमनु-भवसिद्धं न स्यादिति वाच्यम्। तादृशधर्माग्रहदशायामिष्टत्वात्। अन्यथा विश्वादिपदं तदादिपदवत् बुद्धिविषय-

(द्वै ग्रु) तावच्छेदकावच्छिन्नोपस्थापकमित्यङ्गीकारे सर्वं प्रमेयं विश्वं प्रमेयमित्यादिवाक्यै यावन्तो घटत्वपटत्वादय स्वरूपतोऽस्वरूपतो वा तत्तदवच्छिन्ननिखिलविषयकबुद्धिरेव नियमेन जायते वा कतिपयधर्मावच्छिन्नविषयिणी वा। आद्ये सर्वपदाधीनबुद्धिप्राक्काले सर्वेषामतीतानागतव्यक्तीना तद्व्यक्तित्वादिनाऽप्युपस्थितेस्तेषा तत्कालीनशक्तिग्रहो-पयोगिबुद्धिविषयतावच्छेदकत्वनिर्वाहायावश्यकतया वाक्यजन्यबोधस्याप्यावश्यकतादृशत्वकतया सर्वेषा विशेषरूपेण ज्ञातत्वात्सार्वज्ञ्यापत्ति.। न चेष्टापत्ति । तदुत्तर स्वरूपतस्तदवच्छिन्नगोचरव्यवहारापत्ते । सर्वपदजन्यबोधात्प्राक् तावद्धर्मावच्छिन्नोपस्थापकसामग्र्यभावेन शक्तिग्रहासम्भवाच्च। न द्वितीय । तदादिपदघटितवाक्यवत् सर्वं कपालजन्य एतत्कपालजन्य इति वाक्येन घटमात्रे तद्घटमात्रे वा तादृशविधेयावगाहिबोधापत्ते । एकद्विमात्र-बोधमात्रनिर्वाहाय सर्वपदघटितवाक्यस्य कुत्राप्यप्रयुज्यमानतयेष्टापत्ते कर्तुमशक्यत्वात्। न च धर्मत्रयमारभ्यैव सर्वपदस्य बोधकत्वम्। तन्निर्वाहाय किञ्चिन्नियामक कल्प्यत इति वाच्यम्। तथा सति पृथिव्यादिचतुष्टयमात्र-बोधाय प्रयुज्यमान सर्वं स्पर्शवदिति वाक्य प्रमाण स्यात्। न हि कश्चित्तथा प्रयुङ्क्ते। तथा प्रयोगाङ्गीकारे त्वत्पक्षे मुख्यार्थकत्व दुर्वारम्। मन्मते विशेष्यवाचकपदासमभिव्याहृतसर्वपदस्य केवलान्वयिव्यासज्यवृत्तिधर्मा-वच्छिन्नबोधकत्वात् अन्यत्र तु विशेष्यतावच्छेदकव्यापकव्यासज्यवृत्तिधर्मावच्छिन्नबोधकत्वादुक्तप्रयोगो नास्त्येव। अस्ति चेत् कथञ्चित्तन्मात्रवृत्तिव्यासज्यवृत्तिधर्मावच्छिन्नलाक्षणिकतया वा तादृशविशेष्यवाचकपदाध्या-हारेण वा निर्वाह इति तादृशप्रयोगस्यामुख्यत्व सर्वसम्मतं सङ्गच्छते। अत एव सर्वेभ्यो दर्शपौर्णमासाविति वाक्ये सर्वपद प्रकान्तपशुत्वपुत्रत्वाद्यन्यतमरूपावच्छिन्नत्वव्यापकव्यासज्यवृत्तिधर्मावच्छिन्नपरम्। एतेभ्य इति विशेष्यपद वा स्फुटत्वाच्छ्रुतावनुक्तमपि बोद्धृणा प्रतीयते। न हि तत्र सर्वपदमसङ्कुचितार्थकमिति कस्यापि प्रेक्षावत प्रत्यय। त्वन्मते तु मुख्यार्थात्यागेन सङ्कुचितत्वानुपपत्ते.। न च सर्वपदस्य मुख्यार्थकत्वेपि तस्य सर्वबोधकत्वात्तेन सर्वेषामबोधेन सङ्कुचितत्वव्यवहार इति वाच्यम्। घटादिमात्रबोधकतदादिपदस्थलेऽपि तादृश-व्यवहारापत्ते। अनन्तानन्तनिखिलरूपेण विशिष्टतत्तद्वस्तुबोधस्य कस्याप्यनुदयेनासङ्कुचितार्थकसर्वपदप्रयोगस्यैव लोकेऽलीकत्वापत्ते। सर्वं प्रमेय परमार्थमित्याकारा या प्रमा तदवच्छिन्नभेदस्यैव मिथ्यात्वनिरुक्तौ त्वया निविष्टताया उक्तत्वेन तच्छब्दोल्लेख्यबुद्धे घटत्वपटत्वाद्यवच्छिन्ने परमार्थत्वावगाहित्वप्राप्त्या तस्य प्रमात्वोक्तेर-सङ्गतेश्च। तादृशधियो ब्रह्मत्वमात्रावच्छिन्नमात्रविषयत्वे धर्मत्रयादिबोधकत्वम् न त्वेकद्व्यादिबोधकत्वमिति नियमभङ्ग । तत्त्यागेपि सिद्धसाधनता । ब्रह्ममात्रविषयकबुद्ध्यवच्छिन्नभेदस्य जगति त्वया मयाप्यङ्गी-कृतत्वात्।

न च सर्वेभ्य इत्यत्र विशेष्यपदाध्याहारे कथ सङ्कुचितार्थत्व। शक्त्या स्वार्थात्यागादिति वाच्यम्। शुद्धस्य केवलान्वयिधर्मत्वावच्छिन्नबोधकतया विशेष्यसमभिव्याहारे तत्त्यागेन विशेष्यतावच्छेदकव्यापकसर्वत्वमात्रबोध-कत्वेन तथा व्यवहारोपपत्ते। न च तादृशसर्वत्वस्य जन्यतानवच्छेदकतया पशुत्वादेश्च तदर्थतानवच्छेदकतया कथ तदवच्छिन्ननिरूपितकारणता यागे प्रतीयेत। ता विना कथं तदनुष्ठाने प्रवृत्तिरिति वाच्यम्। तदुपलक्षित-निरूपितकारणताया एव तत्र प्रतीयमानत्वात्। अन्यथा पशुत्वादेस्तदजन्यपशुपुत्रादिसाधारणतया जन्यतान

(द्वै द्यु) वच्छेदकत्वेन तवाप्यगते। न च पश्वादिनिरूपितप्रत्येककारणत्वाबोधेन तादृशसर्वत्वाश्रयनिरूपितैककारणताबोधेन विधेयभेदाभावाद्विधेयभेदमाशङ्क्यैकपदोपात्तत्वरूपसमाधानस्य वार्तिककृदुक्तस्यासङ्गतिरिति वाच्यम्। वाक्याना फलीभूतबोध एव पर्यवसितत्वेन तादृशबोधेऽनुष्ठानोपयोगिपश्वादिवृत्तिवैजात्यावच्छिन्नकार्यतानिरूपितकारणताभानस्य तव ममाप्यावश्यकतया तमादायैव शङ्काया एकपदोपात्तत्वेन समूहालम्बनशाब्दजनकत्वरूपदोषाभाववत्त्वरूपसमाधानस्य च सङ्गते।

किञ्च भवन्मतेऽपि सर्वपदस्योपस्थितकतिपयरूपावच्छिन्नबोधकत्वे यत्र सर्वं सत्यमिति वाक्येन यादृशरूपावच्छिन्नाना बुद्धिस्थता तत्रैव सत्यत्वग्रहोदयेन तदन्यरूपावच्छिन्ने सत्यत्वादिसशयानिवृत्तिस्तादृशवाक्यजन्यबोधोत्तरमिष्टैवेति, ममापि तत्र विश्वत्वाग्रहकाले तादृशसशयाङ्गीकारे किं बाधकम्। पर तु तादृशकेवलान्वयिसर्वत्वग्रह सर्वरूपावच्छिन्नेषु सर्वदा वर्तत एव। अत्यन्ताभावाप्रतियोगिव्यासज्यवृत्तिधर्मत्वेनैव तत्पदार्थतावच्छेदकत्वात्। न तु तत्तद्धर्मावच्छिन्नसमुदायत्वेन। असर्वज्ञदुर्ज्ञेयत्वप्रसङ्गात्। नापि व्यासज्यवृत्तिधर्मत्वेन। द्वित्वत्रित्वादीनामव्यावृत्ते। तथा च तादृशसंशय प्रायो न भवत्येव। तवैव पर स दुर्वार।

अपि च सर्वा पृथिवी गन्धवतीत्यादिवाक्येन घटत्वावच्छिन्नपृथिवी गन्धवती पटत्वावच्छिन्नपृथिवी गन्धवतीति बोधस्त्वयाङ्गीकार्य। तथा च घटत्वसामानाधिकरण्येन गन्धावगाहित्वात्तत्समानाधिकरण्येन सशयानिवृत्तिप्रसङ्ग। मन्मते तु गन्धव्याप्यत्वेन गृहीतसर्वत्ववत्पृथिवीत्वस्य घटे ग्रहादेव तत्सशयानुदय। घटे पृथिवीत्वाग्रहकाले तादृशवाक्यस्य तत्सशयानिवर्तकतायास्तवापि सम्मतत्वात्। तस्माद्विश्वत्वरूपैकधर्मावच्छेदेन सत्यत्वबोधकत्वे न काचिदनुपपत्ति।

यदपि विश्वपदस्य घटत्वादिरूपेण बोधकत्वपक्षे 'घटादौ परमाण्वादौ च सत्त्वबोधने घटाद्यशेऽनुवादकत्वमन्याशे विधायकत्व स्यात्' इत्यभिहितं तत्तुच्छम्। स्वमतेऽपि नेह नानेति नेति नेतीत्यादिश्रुत्या शुक्तिरजतादे ब्रह्मण्यारोपितक्षणिकत्वादेर्मिथ्यात्वबोधने तदंशे सिद्धत्वेनानुवादकत्वमितराशे विधायकत्वमित्युक्तदोषसाम्यात्। न च तासा श्रुतीना तात्पर्यबलात्सिद्धार्थं विहायासिद्धार्थबोधकत्व यद्वा प्रपञ्चसत्त्वमात्रनिषेधकत्वम्। तेनैव तन्मिथ्यात्वसिद्धौ घटादीना मिथ्यात्वबोधने तात्पर्याकल्पनात्। अतो नानुवादकत्वमिति वाच्यम्। अस्या अपि श्रुते सिद्धघटाद्यंशं विहायासिद्धपरमाण्वाद्यश एव सत्यत्वबोधकत्वाङ्गीकारात्। विश्व एव सत्यत्वबोधनेन सर्वसत्त्वसिद्धौ विशिष्यापि घटादौ परमाण्वादावपि तद्बोधने तात्पर्याकल्पनादिति साम्यात्। न च धर्मादावनुमानादिना सत्त्वप्राप्तिरस्तीति वाच्यम्। प्रपञ्चमिथ्यात्वस्यापि दृश्यत्वानुमानादिना ब्रह्मसत्यत्वस्यापि भ्रमाधिष्ठानत्वबाधावधित्वादिलिङ्गेन प्राप्तत्वेन तन्मिथ्यात्वसत्यत्वश्रुतीनामप्यनुवादकत्वप्रसङ्गात्।

श्रुतिसाहित्य विना मिथ्यात्वसत्यत्वे न सिद्ध्यत। अनुमानस्य दुष्टत्वात्।

उपाधिप्रतिपक्षौ तु क नामातीव दुर्वचौ।

(द्वै द्यु) इत्युक्ते । तत्साहित्ये तु स्वोपजीवकेन न स्वस्यानुवादकत्वमिति चेत् समं धर्मादिसत्त्वानुमानस्येति न तत्सत्त्वश्रुतेरनुवादकत्वम् ।

यच्च 'अनुमानेन ब्रह्मसत्त्वसिद्धावपि न तद्द्वारकाखण्डार्थबोधकत्वमनुमानस्य । तत्सत्यमिति श्रुतेश्च तद्द्वारकाखण्डार्थबोधकत्वान्नानुवादकत्वम्' इति । तत्तुच्छम् । सत्यत्वांशे अनुवादकत्वापरिहारात् । धर्मादिसत्त्वश्रुतेरपि तथा वक्तुं शक्यत्वाच्च । अनुमित्यभिलापकब्रह्म सत्यमिति शब्देन तात्पर्यवशादखण्डार्थबोधसम्भवेन अखण्डार्थस्यापि सिद्धत्वेनानुवादकत्वापरिहाराच्च । न च श्रुतिजन्यबोध एवाज्ञाननिवर्तको न लौकिकवाक्याधीन । अतोऽज्ञाननिवर्तकबोधजनकत्वात् न श्रुतेरनुवादकत्वमिति वाच्यम् । विश्वसत्यत्वश्रुतेरपि तथैवेत्यवेहि । न च जडे नाज्ञानमिति वाच्यम् । धर्मं न जानामीत्यनुभवेन तत्रापि तस्यावश्यकत्वात् । न च धर्मस्वरूपबोधकैरेव तत्सत्यत्वावगमात्तेनास्यानुवादकत्वम् । अन्यथा सत्त्वघटितप्रामाण्यस्य स्वतस्त्व न स्यादिति वाच्यम् । त्रिकालाबाध्यत्वस्येव व्यवहारकालाबाध्यत्वस्यापि प्रत्यक्षेणानुपलब्ध्या वा गृहीतुमशक्यत्वस्य त्वन्न्यायेन सिद्धतया तद्घटितस्य प्रामाण्यस्य स्वतो ग्राह्यत्वस्य वक्तुमशक्यत्वात् । अज्ञातमिथ्यात्वकघटविषयकत्वरूपप्रामाण्यग्रहस्यैव प्रवृत्त्युपयोगितायास्त्वयोक्तत्वाच्च ।

अपि च धर्माद्यंशेऽपि त्रिकालाबाध्यत्वघटितप्रामाण्य धर्मादिस्वरूपबोधकश्रुतिजन्यबोधनिष्ठं चेत्सिद्ध न समीहितम् । तेनैव धर्मादीना पारमार्थिकसत्त्वसिद्ध्या मिथ्यात्वश्रुतेर्बाध । व्यावहारिकसत्त्व घटक चेत् तदगृहीतपारमर्थिकसत्त्वावगाहिन्या विश्व सत्यमित्यादिश्रुते कथमनुवादकत्वम् । अपि च ब्रह्मस्वरूपबोधकब्रह्मादिपदजन्यबोधे तत्सत्त्वविषयकत्वभावात् तत्सत्यमित्यादिश्रुतेरनुवादकत्व दुर्वारमेव ।

यदपि 'जगत्सत्यत्वादिज्ञानस्य निष्प्रयोजनत्वम् । तत्सत्यता विना कस्याप्यर्थस्यानुपपत्त्यभावात्' इति तदपि न । ता विना तत्प्रेरकत्वादिभगवद्गुणाना सत्यत्वासिद्ध्या मिथ्याज्ञानस्यानर्थहेतुत्वेन तादृशगुणविशिष्टभगवज्ज्ञाने मोक्षहेतुत्वस्य श्रुत्युक्तस्यानुपपत्ते सत्त्वात् । तथा हि श्वेताश्वतरश्रुतिः

पृथगात्मान प्रेरितार च मत्वा जुष्टस्तेनामृतत्वमेति । इति ।

जुष्ट इति तृतीयाया सुपा सुलुगिति स्वादेश । जुषी प्रीतिसेवनयोरिति धातो स्वसेवितेन तेन परमात्मना तत्प्रसादद्वाराऽमृतत्वमेतीत्यर्थ । यद्वा मत्वा ज्ञात्वा साक्षात्कृत्य वा । तेन साक्षात्कारेण साक्षात्कृतपरमात्मना वा । जुष्टः प्रीतस्तुष्ट । प्रारब्धकर्माद्यपगमेनोत्तरत्रालेपेनेत्यर्थ ।

ननु तद्वाक्यस्य त्वन्मते प्राक् प्रेरकत्वेन पृथक्त्वेन चोपलभ्यमानमात्मानमखण्डस्वरूप ज्ञात्वेत्यर्थ. । एकधैवानुद्रष्टव्यमिति कैवल्यरूपपारिभाषिकैकत्वावच्छिन्नवाच्येकशब्दोत्तर धाप्रत्ययान्तशब्दघटितया श्रुत्या शुद्धात्मज्ञानस्यैव मोक्षहेतुत्वावगमात् । यद्वा प्रेरकत्वादिगुणविशिष्टं ज्ञात्वेत्यर्थ । सगुणज्ञानस्य मोक्षं प्रति परम्परोपयोगस्य मयाप्यङ्गीकृतत्वात् । अत एव जुष्ट इत्युक्तम् । तेन प्रेरकत्वादिगुणवत्तया ज्ञातेन परमात्मना

(द्वै श्व) जुष्ट ब्रह्मलोकप्रापणादिना प्रीत तत्समाप्त्यनन्तरममृतत्वमेतीत्यर्थ । तथा च तस्य ब्रह्मलोकादिहेतुत्व मेव श्रूयते । तथोत्तरत्रापि

उद्गीतमेतत्परम तु ब्रह्म तस्मिस्त्रय स्वप्रतिष्ठाक्षर च ।
अत्राऽन्तरं वेदविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ता ॥
तदिवात्मत्व प्रसमीक्ष्य देही एक कृतार्थो भवते वीतशोक ।
यदात्मतत्वेन तु ब्रह्मतत्व दीपोपमेनेह युक्त प्रपश्येत ॥

इत्युत्तरवाक्यैरभेद एवोच्यते ।

श्रुत्यर्थस्तु, प्रेरितार मत्वा मुच्यत इति यदुक्त **तदुद्गीतमात्रं** । न तु मुक्ते साक्षात्कारणबोधकम् । **परम** शुद्धं तु ब्रह्म वेदविदो **विदित्वा** वेदान्तवाक्यस्य तात्पर्यज्ञानद्वारा निश्चित्य साक्षात्कृत्य शुद्धब्रह्मणि **लीनाः** उपाधिमात्रोच्छेदेन शुद्धब्रह्मणैकीभूता **योनिमुक्ता** जन्महीना भवन्तीति साक्षान्मुक्तिकारणोक्तिरित्यर्थ । कीदृश परमं तत्राह । **तस्मिन्परमे त्रयं** स्थूलसूक्ष्मपञ्चीकृतभूतानि **स्वप्रतिष्ठ** अनादि **अक्षर** अव्याकृत चेत्येतानि सन्ति । **अत्र** एतेषु **आन्तर** अधिष्ठान । श्वेताश्वतरीयोक्तवाक्य प्रथमाध्याये । तदिवात्मत्वमिति वाक्य द्वितीयाध्यायस्थम् ।

**युक्तः** त्रिरुन्नतमित्यादिना पूर्वोक्तयोगविशिष्ट सन् । **दीपोपमेन** स्वप्रकाशेन येनात्मनस्तत्वेनानारोपितरूपेणाभिन्न ब्रह्मणस्तत्व प्रपश्येत् तत्तु तदखण्डमेव प्रकर्षेण श्रवणाद्युत्तर सम्यग्वेदान्तवाक्येन ईक्षित्वा एको द्वितीयशून्य कृतार्थ भवति तदेव ब्रह्म प्राप्नोति भू प्राप्ताविति स्मृतेरिति । तथा चाखण्डात्मज्ञानस्यैव मोक्षहेतुत्वमनया श्रुत्योच्यत इति चेन्न ।

मते पूर्वं पृथक्त्वेन ज्ञातमित्याद्यव्याख्यानस्य श्रौताक्षरासंस्पर्शिनो हेयताया स्फुटत्वात् । पृथगात्मानमित्यस्य द्वितीयव्याख्यानमस्तु नाम । तथाप्युद्गीतमित्यादेस्त्वदुक्तोऽर्थोऽसङ्गत एव । तथा च पृथगात्मानमित्य नेन भेदज्ञानेनामृतत्वप्राप्तेरन्तत उक्तावपि तस्य तत्कारणत्व सिद्ध्यत्येव । एतदन्यथासिद्धिनिर्वाहकस्य मध्ये कारणान्तरस्याखण्डसाक्षात्कारादेरङ्गीकारे मानाभावात् ।

ननूद्गीतमेतदित्यादे कुतो नोक्तार्थ इति चेन्न । यत उद्गीतमित्यस्योद्गीतमात्रमित्यर्थकल्पनेऽश्रुतकल्पनमात्रान्तर्भाव । प्रेरकत्वपृथक्त्वज्ञानस्य मोक्षहेतुत्व स्वयमेवाभिधाय पुनस्तन्निषेधे व्याहतिप्रसङ्गात् । न च ब्रह्मलोकप्राप्त्यादिरूपफलमेवोच्यत इति वाच्यम् । तथा सति जुष्टो भवतीत्येव वक्तव्य स्यात् । न तु तेनामृतत्वमेतीति । अनुपयोगात् । वस्तुतस्तस्यैव मुख्यतया फलत्वप्रतीतेश्च । न च परम्परया तत्फलमिति वाच्यम् । तावतापि भेदज्ञानादे सप्रयोजनत्वप्राप्त्या व्रीह्यवघातप्रोक्षणादिवाक्यवत् जगत्सत्यत्वादिप्रतिपादकवाक्याना स्वार्थे तात्पर्या

(द्वै श्रु ) नपायात्  न चेद न स्वमतं। किं त्वन्यमनमेवानूद्यत इति वाच्यम्। सादिमनानामनादिश्रुत्या अनुवादानौचित्यस्य त्वयैव भाषितत्वात्।

श्रुतिप्राप्तस्यैव श्रुत्या निषेधे श्रुत्योरेव व्याहतिप्रसङ्ग। श्रुतिनात्पर्याज्ञानप्राप्त निषिद्ध्यत इत्यपि न सत्। इति गुह्यतम शास्त्रमित्यादिना परमाप्ततमेन भगवता स्वप्रियमर्जुन प्रति क्षराक्षरादिविलक्षणत्वादिविशिष्टस्वस्वरूपस्यैव शास्त्रपरमतात्पर्यविषयताया तज्ज्ञानस्य मोक्षहेतुतायाश्चोक्तत्वेन तस्य श्रुतिनात्पर्याज्ञानाप्राप्तत्वात्। न चाखण्डार्थबोधस्य मोक्षहेतुत्वश्रवणात्तस्याप्यन्योर्थे कल्प्यत इति वाच्यम्। तादृशश्रुतेरेवाभावात्। एकधेति श्रुतौ धाप्रत्ययबलेन सप्रकारकज्ञानस्यैव प्राप्ते। अधिकस्याखण्डार्थभङ्गे वक्ष्यमाणत्वात्। भेदस्य निन्दितत्वे तज्ज्ञानस्य ब्रह्मलोकप्राप्तिकारणत्वस्याप्ययोगाच्च। तस्याऽपुनरावृत्तिसम्पादकतया महाफलरूपत्वात्।

एव स्वप्रतिष्ठेत्यस्यानादिरिति व्याख्यानमुदक्षरम्। ब्रह्मान्यस्य सर्वस्य विनाशित्वादक्षरत्व बाधितम्। लीना ब्रह्मणीत्यत्राधिकरणसप्तम्या तत्परा इति तदासक्तिरूपतद्भक्त्युक्त्या च स्फुट भेदावगमात् 'उपाधिविनिर्मोकेण ब्रह्मणैकीभूता' इति व्याख्यानमसङ्गतमिति स्फुटमेव। त्रयमित्यस्य सूक्ष्मस्थूलेत्यादिव्याख्याप्यप्रामाणिकी। घटादित्रयस्यापि ग्रहणसम्भवात्। अत्राऽन्तरमित्यस्याधिष्ठानमित्यर्थोप्यप्रामाणिक उदक्षरश्च। द्वितीयमन्त्रेपि आत्मनस्तत्त्वेनाभिन्नं ब्रह्मरूपमिति व्याख्यानमसत्। अभिन्नमित्यश्रुतकल्पनस्य स्फुटत्वात्। तदखण्डमेवेति व्याख्यापि तथैव। इवशब्दस्यावधारणार्थतया व्याख्यानात्।

तस्मान्नायं श्रुत्यर्थ। किं तु पृथक्त्वतत्प्रयोजकप्रेरकत्वादिगुणविशिष्टात्मज्ञानस्य मोक्षहेतुत्वेऽभिहिते शङ्कोदेति। किमय राजादिवत्स्वप्रेरक आत्मा कश्चन देवादि स्यात्। तज्ज्ञानस्यापि मोक्षहेतुत्वमनेनोच्यते उत कस्यचिन्नियतस्यैव। नियतोऽपि स कश्चिद्ब्रह्मान्यो बहिष्ठश्च स्यात् तदा 'ब्रह्मविद् प्नोति पर' इति श्रुति 'यो वेद निहित गुहायाम्' इति श्रुतिश्च बाध्यत इत्याशङ्क्य स्वाभिप्राय व्यनक्ति। उद्गीत मोक्षहेतुज्ञानविषयत्वेनोत्कृष्टतया गीत प्रतिपादित एतदात्मरूप वस्तु। 'दक्षिणान्न वनुते यो न आत्मा' इत्यादिवद्विधेयापेक्षया प्रकृते नपुसकलिङ्गता। परमं तु ब्रह्म परमेव ब्रह्म। न त्वन्य कश्चन। येन ब्रह्मविदित्यादिश्रुतिविसंवाद स्यात्।

ननु प्रेरकत्वादिरूपगुणविशिष्ट पूर्वमुक्त। ब्रह्म तु शुद्ध। अतः कथ तयोरैक्यमित्याशङ्क्यैतदन्यच्छुद्धमप्रामाणिकं। तदेवैतादृशमित्याह॥ तस्मिन्निति॥ त्रयं ऊर्ध्वाधरमध्यरूपलोकत्रयान्तर्गतं सर्वं भूतभवद्भविष्यदात्मक सर्वम्। स्वप्रतिष्ठाक्षरमित्येकपद बहुव्रीहि। तादृशलोकत्रयादिप्रतिष्ठापकाक्षरशब्दवाच्यश्रीतत्त्वसहित च नियम्यतया स्थितमित्यर्थ। यद्वा स्वप्रतिष्ठपदेनैव श्रीतत्त्व गृह्यते स्वातन्त्र्यात्स्वशब्दवाच्य पर प्रतिष्ठा यस्येति व्युत्पत्त्या। ब्रह्माक्षर नाशरहितमित्यर्थ। 'यदूर्ध्वं गार्गि दिवो यदर्वाक् यदन्तरा द्यावापृथिवी यच्चान्यद्भूत भवद्भविष्यच्चेत्याचक्षते आकाश एव तदोत च प्रोत च एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इति श्रुतिरेवोक्त व्याख्याने मानम्। तर्हि किं राजादिवद्बहिरेव स्थितमित्याकाङ्क्षा शमयन्मन्त्रवर्णविरोधापनुत्तये गुहानिहितत्वमपि

(द्वै द्यु) दर्शयितुमाह । तत्र एतेषु । आन्तरमन्तरमिति वा पदच्छेद । तथान्वे अन्त स्थितमन्त स्थित्वा रमण-करमिति च क्रमादर्थ ।

अन्त· स्थित्वा रमणकृदन्तर समुदाहृत ।

इत्युक्ते । 'य पृथिवीमन्तरो यमयत्येष त आत्मा' इति श्रुतेरुक्त एवान्तरपदार्थो नाधिष्ठानत्वादि । **वेदविदः** तात्पर्यज्ञानिन । **विदित्वा तत्पराः** श्रवणादिमाहात्म्यज्ञानेन विषयवैराग्यपूर्वक तदासक्त्यात्मकस्नेहरूपभक्ति-मन्त· । ततो **ब्रह्मणि लीनाः** तदेकध्यानरता अपरोक्षज्ञानद्वारा **योनिमुक्ताः** जन्मादिराहित्यरूपमुक्तिभाजो भवन्तीति प्रथमाध्यायस्थवाक्यार्थ ।

द्वितीयाध्यायस्थवाक्यस्य तु **यदा** यत्काले **आत्मतत्वेन** आत्मन स्वामिन तत्वेन नियामकत्वोपयुक्त-पूर्णगुणत्वादिना **ब्रह्मतत्व** परब्रह्मस्वरूप **प्रपश्येत्** निश्चिततया जानाति विषयीकरोति वा **तेन दीपोपमेन** करणत्वार्थकतृतीयाबलाद्दीपसदृश निर्मल मनो लभ्यते । अर्थान्तरपक्षेपि दीपसदृशं निर्मलमविच्छिन्नधार ध्याना-त्मकज्ञान लभ्यते । अनन्तर देही **तदा** तत्काले **आत्मत्व** स्वामित्व स्वध्येयगुण तदन्तर्भूतस्वयोग्यगुणाश्चेत्यर्थ । आत्मत्वस्य तृणजीवमारभ्य सर्वजीवसाधारण्येनावश्यकत्वेन च प्राधान्यात्तस्यैव स्वशब्देन ग्रहण । **प्रसमीक्ष्य** अपरोक्षीकृत्य तद्विशिष्टेश्वरमपरोक्षीकृत्येत्यर्थ । ब्रह्मणोऽपरिच्छिन्नत्वात्तज्ज्ञानोपासनादि न साकल्योपेतम् । योग्यतानुसारित्वरूपाल्पत्ववदेवेति बोधनायाल्पत्वार्थकेवशब्दप्रयोग. । तस्य प्रसमीक्ष्येत्यनेनान्वय । भुक्तमिवेति यथा । गुणगुणिभेदवारणायाखण्डार्थविषयकज्ञानवारणाय शाब्दापरोक्षवारणाय करणप्रकारादीनामुक्ति । **एकः** पूर्वोत्तराघविनाशाश्लेषादिबलान्नानाजन्मादिसम्पादककर्मादिकृतवैषम्यरहितत्वेनैकप्रकारोपेत । ततो **वीतशोकः** भगवत्प्रसादद्वारा शोकसाधनलिङ्गदेहभङ्गवान् । **कृतार्थः** निष्पादितस्वरूपानन्दाविर्भावरूपप्रयोजनवान्भवतीत्यर्थ । 'यदा पश्यः पश्यते रुक्मवर्णम्' इति श्रुत्या प्राय सवादादुक्त एवार्थ ।

इय च परेण स्वग्रन्थे यथा पठित्वा व्याख्याता तदनुसारेण द्वितीयाध्यायस्थश्रुतिव्याख्या प्रदर्शिता। वस्तुत द्वितीयाध्याये

> यथैव बिम्बं मृदयोपलिप्त तेजोमय भ्राजते तत्सुधातम् ।
> तदिवाऽत्मतत्व प्रसमीक्ष्य देही एक कृतार्थो भवते वीतशोक· ॥
> यदाऽऽत्मतत्वेन तु ब्रह्मतत्व दीपोपमेनेह युक्त प्रपश्येत् ।
> अजं ध्रुवं सर्वतत्वैर्विशुद्धं ज्ञात्वा देव मुच्यते सर्वपाशै ॥

इति मन्त्रद्वयपाठ· पुस्तकेषु दृश्यते । तत्राद्वैतचन्द्रिकाकारोक्त यदाऽऽत्मतत्वेन तदिवाऽत्मतत्वमित्यनयो पर-स्परान्वितार्थकत्वमयुक्तम् । तदुक्तरीत्या परस्परान्वितार्थकत्वे यथैव बिम्बमित्येतद्दृष्टान्तवाक्यस्यान्वयाभाव. । तत्पूर्वं

(श्वे ३) पञ्चात्मके योगगुणे प्रवृत्ते न तस्य रोगो न जरा न मृत्यु । इत्यारभ्य
गन्ध शुभो मूत्रपुरीषमल्प योगप्रवृत्तिं प्रथम वदन्ति ।

इत्यनेन योगप्रवृत्तिफलकथनस्य समापितत्वेन तन सहान्वयाप्रतीते । अज ध्रुवमिति चरमवाक्यस्य पूर्वेण सहान्वितार्थकत्वाभावादसङ्गतिश्च स्यात्। अतो नाय योजनाप्रकार ।

किं तु जरामरणाभावरूपमोक्षात्मकफल योगस्य यदुक्त तदसम्भावितम्। अहमज्ञो दु खीत्याद्यबाधितप्रतीतिसाक्षिकाज्ञत्वदु खित्वादिस्वभावस्य जरामरणाभावोपलक्षितसर्वदु खनिवृत्तिरूपमोक्षायोगात्। मोक्षस्य योग फलत्वे ज्ञानमात्रसाध्यत्वबोधकश्रुतिविरोधश्चेत्याशङ्कापरिहाराय 'अज्ञानादिक जीवस्यास्वाभाविकं। योगपरिपाकवता ब्रह्मज्ञानद्वारैव मोक्षो योगफलत्वेनाभिसंहित । अतो न कश्चिद्दोष ' इति प्रतिपादयितु मन्त्रद्वयम्।

तदर्थश्च बिम्बपद लक्षणया आदर्शादिरूपस्वच्छद्रव्यपरम्। लक्षणाबीजभूतसम्बन्धस्तु बिम्बसदृशग्राहित्वम्। तेन स्वच्छत्वलाभाल्लाक्षणिकप्रयोगसाफल्यम्। तदिति श्रवणाद्यदिति लभ्यते । यथाशब्दस्य यथास्थितरूपेणेत्यर्थ । तथा च यद्बिम्ब स्वच्छद्रव्य मृदयोपलिप्त मृत्तिकयोपलिप्त। हलन्ताट्टाप्। मृदयोभ्यामुपलिप्तमिति वा। मृदय शब्दौ निबिडातिनिबिडद्रव्योपलक्षणौ। अय शब्दस्य सलोपश्छान्दस । द्विरूपकोशसिद्धायशब्दो वाऽयम्। तदेव द्रव्य सुधात सुधौतम्। औकारस्याऽकारश्छान्दस । धावते शुद्ध्यर्थादौणादिक कर्मणि डाजज्वा । सम्यक् प्रक्षालितम्। तेजोमय प्रकाशप्रधान सद्यथा यथास्थितरूपेण भ्राजते स्फुरति। आत्मतत्वमपि तदिव स्वरूपत स्वच्छमविद्याकामकर्मादिभिरस्वाभाविकैरावृत तदपगमे स्वप्रकाशतया स्फुरति। प्रसमीक्ष्य सान्निद्ध्यात्पूर्वोक्तात्मतत्वादिविषयकस्फुटनिश्चय सम्पाद्य। एकः त्रिविधजीवेषु मध्ये प्रधान मुक्तियोग्य इति यावत्। वीतशोक सन् कृतार्थः निष्पन्नयोगफलरूपमुक्तिमान् भवतीत्यर्थ ।

ननु जीवस्वरूपनिश्चयस्यैव मोक्षकारणत्वमुक्त स्यात्। तच्च श्रुत्यन्तरविरुद्धम्। अस्वाभाविकानामपि दु खहेतूना सत्त्वात्कथं वीतशोकत्वमपीत्यत आह ॥ यदाऽऽत्मतत्वेनेति ॥ दीपोपमेन समाधिपरिपाकसिद्धयोज्ज्वलेन मनसा। विशेष्यानुक्तावपि करणत्वार्थकतृतीयाप्रयोगमहिम्नैव तल्लभ्यते। आत्मतत्वेन जीवस्वरूपेण। सर्वतत्वैस्तत्वाभिमानिदेवैश्च। विशेषणे तृतीया। प्रेरकत्वेन तद्विशिष्ट प्रथमाध्यायोक्तप्रेरकत्वस्वभिन्नत्वविशिष्ट तदुपपादकाजत्वादिविशिष्ट ब्रह्मतत्व यदा पश्यति तदा ज्ञानकाले ज्ञात्वा ज्ञानोत्तर सर्वपाशैर्मुच्यते भगवत्प्रसादद्वारा सर्वैर्दु खहेतुभिरेव मुच्यते। अतो नोक्तानुपपत्तिरिति भाव । भगवत्प्रसादस्य श्रुत्यन्तरानुरोधादध्याहारः। ज्ञानकाल इत्यनेन ज्ञानोत्पत्तिमारभ्य मोक्षपर्यन्तस्यापि कालविशेषस्य विवक्षितत्वात् ज्ञात्वेत्यनेन ज्ञानोत्पत्त्युत्तरकालस्य विवक्षितत्वात्तदा ज्ञात्वेत्यनयोर्न विरोध । अन्यथा

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिता ।
अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥

(द्वै घु ) इत्येवञ्जातीयकेष्वपि यदाशब्दानुरोधादध्याह्रियमाणतदाशब्दस्यानन्तर्यार्थकाथशब्दस्य च विरोधापत्ते । दीपोपमेनेत्येतदात्मतत्त्वेनेत्यस्य विशेषणं वा । करणस्य बहिरेव योग्यतया लाभ । अविद्याद्यसंसृष्टरूपतयोज्ज्वलेनेत्यर्थ । तेन न केवलं बन्धदशाया ब्रह्मणो जीवप्रेरकत्वम् । किं तु शुद्धस्वरूपेणावस्थानरूपमुक्तावपि प्रेरकत्व लभ्यते । ब्रह्मतत्त्वमित्युक्त्या अनारोपितब्रह्मस्वरूपं प्रेरकत्वादिगुणविशिष्टम् । न तु मायाशबलत्वेन परपरिकल्पितमारोपितरूपमिति लभ्यते ।

यद्वा जीवज्ञानस्यैव मोक्षहेतुत्वशङ्कावारकतया यदात्मतत्त्वेनेत्यर्थं तदा वीतशोक इत्यनेनान्वितम् । दुःखहेतुसत्त्वात्कथ दुःखनिवृत्तिरिति शङ्कापरिहारायेश्वरे प्रेरकत्वोपयुक्तगुणज्ञानस्याप्यावश्यकत्वबोधनाय चोक्तार्थविवरणपर द्वितीयार्धम् । अज शरीरतोऽप्युत्पत्त्यादिरहित । ध्रुव निर्विकारतयैकप्रकारेणावस्थित । देव जगत्सृष्टिस्थितिसंहारनियमनादिरूपक्रीडाविशिष्टम् । संहारादिप्रयुक्तदोषवतो ज्ञान कथ निर्दोषस्वरूपाभिव्यक्तिरूपमोक्षसाधनमित्याशङ्क्य सर्वतत्त्वैर्विशुद्धमित्युक्तम् । सर्वै स्वकीयासाधारणधर्मैरपि निर्दोषमेव । संहारादेरपि लोकदुःखनिवर्तकत्वेन तदुपकारकत्वादित्यर्थ । यथाहु

स्वाप प्रापयति श्रमापहृतये कल्पावसाने च य । इति ।

सोऽय विहार इह मे तनुभृत्स्वभावसम्भूतये भवति भूतिकृदेव भूत्या. । इति चेति

अत्राऽद्यश्रुतिस्थमृदयेत्यादेर्ज्ञानोत्तमशिष्येण विज्ञानात्मनाम्नैवं व्याख्या कृता 'जकारस्थाने दकार । तथा च मृदयेत्येतन्मृजयेति पद भवति । मृजया मार्जकेन शुद्धिसाधनद्रव्येणोपलिप्त सदनन्तर सुधातं प्रक्षालित सत् यथा भ्राजते' इति । एव 'सुधातमित्येतत् छान्दसम्' इत्येवोक्तम् । एव तद्विवाऽऽत्मतत्त्वमिति पाठो न धृत । तद्वाऽऽत्मतत्त्वमिति पाठ धृत्वा वाशब्द उपमार्थतया व्याख्यात । 'तद्वत्स तत्त्व प्रसमीक्ष्येति पाठेऽप्ययमेवार्थ ' इत्युक्तम् । तत्त्वशब्दस्यैवाऽऽत्मतत्त्वपरत्वमिति तद्भाव ।

अस्माभिस्त्वाधुनिकेषु केषुचित्पुस्तकेषु तद्विवेतिपाठस्यैव दृष्टत्वात् ब्रह्मानन्देनेवशब्दस्यैव धृतत्वेन तमेव धृत्वा व्याख्यातम् । उक्तरीत्या पाठद्वयसत्त्वे वाशब्द उपमार्थ प्रथमपाठे । द्वितीयपाठे तत्त्वपदमेवात्मतत्त्वपरमनुसन्धेयमस्मद्व्याख्यायामपि ।

उक्तपरकृतव्याख्यायामुपलिप्तमित्यस्य वैयर्थ्यम् । मृदया सुधातमित्यनेनैव पूर्णत्वात् । मन्मते तु पूर्वं स्वच्छमेवाऽऽदर्शादिक मृदा लिप्त न प्रकाशते । प्रक्षालनानन्तर च प्रकाशते । जीवस्वरूपमपीदानीं मृदादिस्थानीयैरज्ञानादिभिरावृत । तदपगमे तु ज्ञानानन्दादिस्वाभाविकरूपविशिष्ट स्फुरतीत्यर्थलाभाय सार्थकं भवति ।

अत्राद्वैतचन्द्रिकाकारस्य प्राचीनाचार्यविरोधोऽपि । उक्तविज्ञानात्मना तद्वाऽऽत्मतत्त्वमित्येतस्य पूर्वार्धशेषत्वेन व्याख्याया. कृतत्वात् । यदाऽऽत्मतत्त्वेनेत्यस्य तु तदनन्वितत्वेन स्वातन्त्र्येण व्याख्यातत्वात् । अनेन तु तदीयपाठमपहाय पाठान्तरमेवेवशब्दघटित धृत्वोक्तवाक्यद्वयस्य परस्परान्वितार्थकत्वेन व्याख्यानादित्यपि द्रष्टव्यम् ।

(द्वि. द्यु) तस्माद्वेदज्ञानादेर्मोक्षहेतुत्वात्तत्प्रतिपादनस्य सप्रयोजनत्वात्तत्र युक्तं श्रुतेस्तात्पर्यम् ।

अपि च भगवतो जगत्कर्तृत्वादिगुणविशिष्टत्वप्रतिपादकवाक्यानां वेदेषु सत्त्वात्तस्यापूर्वत्वादुक्तरीत्या सप्रयोजनत्वादुपपत्तिसिद्धत्वेन अबाधितत्वेन च तत्तात्पर्यस्याऽवश्यकत्वात्तदनुगुणतया तच्छेषभूतजगत्सत्यताप्रतिपादकानां यूपाऽऽहवनीयादिवाक्यवत्स्वार्थेतात्पर्यमक्षतमेव । प्रत्युत तद्विरुद्धाद्वैतवाक्यानामेव दौर्बल्यम् । तेषामुपासनाविधिशेषत्वान्न स्वार्थपरत्वमिति त्वखण्डार्थभङ्गे निगमिष्यते । सत्यत्वश्रुतीनां सप्रयोजनत्वप्रतिपादनेन अत एवेत्यनेन यद्दूषणमाशङ्क्य निराकृतं परेण तदपि समर्थितम् । अत एव न निषेधवाक्यैकवाक्यता । तेषामेवैतद्विरोधेन स्वार्थपरत्वाभावात् । एतेनैव निरपेक्षत्वादपि नानुवादित्वमित्यपि समर्थितम् । शक्त्यादिग्रहमादाय सापेक्षत्वोपपादने ऐक्यवाक्यस्यापि तथात्वाऽऽपत्तेः ।

अपि च घटादीनां सत्त्वस्य प्रत्यक्षसिद्धत्वेऽपि तद्दार्ढ्यार्थित्वान्न श्रुतेर्वैयर्थ्यम् । न च प्रत्यक्षसिद्धेऽर्थे न वाक्यसापेक्षत्वम् । तथात्वे अनुवादकवाक्यस्यैवाभावप्रसङ्गात् । प्रत्यक्षमात्रेण वाक्यं विना प्रवृत्त्यभावापातश्चेति वाच्यम् । यत्र बलवत्तरवादिविप्रतिपत्त्यादिना अप्रामाण्यसंशयस्तत्र दार्ढ्याय प्रमाणान्तरसंवादापेक्षणात् । अत एव देहभिन्नात्मसत्त्वबोधिका 'अस्तीत्येवोपलब्धव्य' इतिश्रुतिरात्मसत्यत्वबोधनाय प्रवर्तते । न च देहभिन्नात्मन प्रत्यक्षत्वं नास्ति । तथात्वे चार्वाकादेस्तत्र विप्रतिपत्तिरेव न स्यादिति वाच्यम् । प्रत्यक्षसिद्धे विप्रतिपत्त्यभावे गुणगुण्यभेदस्योपादानोपादेयाद्यभेदस्य प्रत्यक्षबलेन व्यवस्थापनीयत्वेन तस्याऽवश्यकत्वे नैयायिकानामत्यन्तभेदे विवादानुपपत्तेः । तस्मादस्फुटप्रत्यक्षसिद्धे विप्रतिपत्तिर्भवत्येव । प्रत्यक्षस्यास्फुटत्वं च स्वप्रकारविरुद्धकोटिव्यावर्तकधर्मसाहित्याविषयकत्वं जातिविशेषो वा ।

न चैवमनुवादकवाक्याभावप्रसङ्गः । 'अग्निर्हिमस्य भेषजम्' इत्यादेरेव सत्त्वात् । न चात्र स्वभाववादेनाप्रामाण्यबुद्धिवारणाय तदिति वाच्यम् । तन्मात्रमधिकृत्य तद्वादस्याप्रसक्त्योक्तवाक्यस्य तदनिवर्तकत्वात् । किञ्च स्वभाववादेऽपि कारणकार्यभावाद्युपेतं जगत् स्वत एवाविर्भूतं स्वत एव लीनं कूलपतनादिवत् । न त्वीश्वरादिमूलकमित्यभिप्रायः । अन्यथा स्वतृप्तये भोजनादौ प्रवृत्तिर्न स्यात् । तथा चाग्नेर्हिमनिवारणकारणत्वे विवादाभाव एव । विवादसत्त्वे प्रत्यक्षसिद्धे विवादो नास्तीति त्वदुक्तिरसङ्गता स्यात् ।

न च सादिवादिविप्रतिपत्तिनिरासायानादिवेदप्रवृत्तिरयुक्तेति वाच्यम् । वादानामपि प्रवाहतोऽनादित्वात् । श्रुतेरपि सर्गाद्यकाले ईश्वरसृष्टत्वात् । केवलमानुपूर्वीव्यत्यासाभावादपौरुषेयत्वव्यवहारः । अन्यथा सादिप्रत्यक्षसिद्धानुवादिन्यपि श्रुतिः कथं स्यात् । एतेन 'प्रवाहतोऽनादिशून्यवादादिप्राप्तजगन्मिथ्यात्वानुवादिनी मिथ्यात्वश्रुतिः किं न स्यात्' इति न्यायामृतोक्तपक्षः सिद्ध्यत्येव । तस्मात्सत्यत्वश्रुतीनामनुवादकत्वाभावाद्युक्तं तदुदाहरणमिति स्थितम् ।

एतत्सर्वमनिर्वचनीयस्य सर्वथाऽप्रामाणिकत्वकथनोत्तरं सत्यत्वश्रुत्युदाहरणेन मिथ्यात्वश्रुतीनां व्याहतिपरिहारोपायाभावसूचनद्वारा दौर्बल्यसूचनेन 'विश्वं सत्यं वशे विष्णोः' इत्यादिप्रमाणोदाहरणेनेश्वरस्वरू-

(द्वै द्यु) पप्रतिपादनशेषतया सत्यत्वश्रुतीनां सूचनेन सूचितम्। **टीकाकृतापि अथापि** उक्तरीत्या श्रुतीनां सत्यत्वप्रतिपादकतया तत्परत्वेऽपि अनिर्वचनीयं क्वचित्सम्भावितमित्यर्थकेन **अथापि स्यादितिशङ्कावाक्येन** सूचितमिति न न्यूनता। अन्यथा लाघवान्नन्विन्येवोच्येतेति सर्वं चतुरस्रम्।

यदपि **गुर्वद्वैतचन्द्रिकायां याथातथ्यत** इत्यस्य 'तथ्यं सत्यभूतमुपादानमनतिक्रम्येत्यर्थ। तेनोपादानसत्तातिरिक्तसत्ता नास्तीत्यर्थ। यथाशब्दोऽनतिक्रमार्थ' इति व्याख्यातं तत्तु यथेति यथापदोत्तरं वृद्धिप्रयोजकष्यञोऽभावेन तदनुपपत्तेरुपादानवाचकपदाश्रवणाच्चायुक्तमेवेति बालानामपि सुबोधमिति स्फुटमेवेति शिवम्।

(गु टि) 'मघवन्यशस्विन् धनवन् मखपते' इति कर्मनिर्णय मनसि निधाय मघवानावित्येतद्व्याख्याति ॥ **धनादिमन्ताविति** ॥ 'द्विवचनश्रुतेरपि न निरवकाशत्वम्। विष्णोरेव द्विरूपत्वात्' इति भगवत्पादोक्त मनसि निधायाह ॥ **द्विरूप प्रतीति** ॥ अस्या श्रुतौ सत्यत्वानुक्तेरस्या सत्यत्वे प्रमाणत्वेनोदाहरणानुपपत्तिमाशङ्क्य आगमतया तत्साधकत्वाभावेपि अर्थतस्तदवगमकत्वाद्युक्तमुदाहरणमित्यभिप्रेत्य तदुपपादयति ॥ **कर्मणामिति** ॥ **जगत्सृष्ट्यादिलक्षण इति** ॥ अत्रापि पूर्ववत्सत्यत्वावगमकत्वादुपयोग इति द्रष्टव्यम्। कर्मानुक्तेरुक्त तमिति। महिमानमित्यर्थ।

एवम्भूतोपि सार्वज्ञ्यात्कविरित्येव शब्द्यते।

इत्यादीशावास्यभाष्योदाहृतप्रमाणानुसारेण कविर्मनीषीति श्रुतिं व्याख्याति ॥ **कविः सर्वज्ञ इत्यादिना** ॥

अनिर्वचनीयत्वे अर्थापत्तिप्रमाणनिराकरणम्

(टी) **अथापि स्यात्। अर्थापत्त्या शुक्तिरजतादेरम्बरादेर्वा अनिर्वाच्यता सेत्स्यति। तथा हि। यदत्यन्तामन्न तत्प्रतीयते यथा नरविषाणम्। यच्चात्यन्तसन्न तद्बाध्यते यथाऽऽत्मा। तदिहोभयान्यथानुपपत्त्या अनिर्वचनीयतैवाश्रयितु युक्तेति। तत्राह**

## न चार्थापत्त्या अनिर्वचनीयत्वसिद्धिः।

**अर्थापत्तिः खलु नानुमानाद्भिद्यते। अनुमानञ्चाप्रसिद्धविशेषणतया निराकृतमिति नार्थापत्त्या च शुक्तिरजतादेरम्बरादेर्वाऽनिर्वाच्यतासिद्धिः।**

(वि टि) अर्थापत्ते पृथक्प्रामाण्याभिमानी शङ्कते ॥ **अथापीति** ॥ **अनुमानादिति** ॥ विमतं सदसद्विलक्षणं बाध्यत्वे सति प्रतीयमानत्वादित्येवरूपादित्यर्थ ॥ **अप्रसिद्धविशेषणतयेति** ॥ ननु भवतु विशिष्टमप्रसिद्धम्। सद्वैलक्षण्यमसद्वैलक्षण्यञ्च प्रत्येक सिद्धमेव। बाध्यत्वप्रतीतत्वहेतुभ्या तदुभयमेकत्र सिद्ध पक्षधर्मताबलात्सदसद्विलक्षणत्वरूपमेव पर्यवस्यतीति चेन्न। सदसद्वैलक्षण्ययो परस्परविरोधेनैकत्र तदुभयसिद्धेरेवाभावादिति भाव.।

(रा टि) ॥ उभयेति ॥ प्रतीतिबाधान्यथानुपपत्त्येत्यर्थः । अम्बरादेर्बाधो नेह नानेत्यादिश्रुतिसिद्धो मिथ्यात्वानुमानैर्वा सिद्ध इति भाव । प्रागुक्तदोषेण निराह ॥ अर्थापत्तिः खल्विति ॥ विवादपद सदसद्विलक्षण प्रतीतत्वे सति बाध्यत्वादित्यादिरूपेण प्रयोगसम्भवान्नानुमानाद्भिद्यत इत्युक्तम् ।

(वे टि) ननु तर्हि विमतमनिर्वचनीय बाध्यत्वे सति प्रतीयमानत्वादित्यनुमानेन तत्सिद्धिरित्यत आह ॥ अनुमानञ्चेति ॥असिद्धविशेषणत्वेत्युपलक्षणम् । विशेष्यवैयर्थ्यञ्चेत्यपि ज्ञातव्यम् । यद्वा नेदमसत्प्रतीतत्वात् नेद सद्बाध्यत्वादिति सत्त्वासत्त्वप्रतिक्षेपे इदमनिर्वचनीयमनुपपन्नसत्ताऽसत्ताकत्वादित्यनुमानेन तत्सिद्धिरस्त्वा-दित्यत आह ॥ अनुमानञ्चेति ॥ अस्मिन्व्याख्याने शुक्तिरूप्यपक्षकत्वेऽसत्त्वस्यैवोपपन्नत्वात् अम्बरादिपक्षकत्वे सत्त्वस्यैवोपपन्नत्वात्स्वरूपासिद्धो हेतु । न च प्रतीतत्वाद्बाध्यत्वात्कथमसत्त्व सत्त्व वा शुक्तिरूप्यजगतोरिति वाच्यम् । असतोपि प्रतीतिसम्भवेन सतोपि बाध्यत्वसम्भवेन व्याप्त्यभावादित्येवम्परतयोत्तरग्रन्थो नेय ।

(द्वै द्यु.) ॥ अर्थापत्त्येति ॥ परेण व्यवहारे भट्टनय इति वादिना अर्थापत्ते पृथक्प्रमाणिनत्वात्त-न्मतानुसारेणाऽशङ्का । अत स्वमतेऽस्या अनुमानाबहिर्भावेन तद्दूषणेन दूषितत्वेपि न पौनरुक्त्यावकाश ॥ यदिति ॥ असत्पदमभावप्रतियोग्यर्थकं प्रागभावादिप्रतियोगिघटादिबाधकतापि भवतीत्यतोऽत्यन्तेत्युक्तं ॥ यथा नरविषाणमिति ॥ प्रत्यक्षातिरिक्तप्रमाणानङ्गीकर्तुरपि लोकायतस्य परबोधनाय युक्त्याद्युपन्यासो यथा स्वमतसिद्धलोकरीत्यभिसन्धिपूर्वक तथा नरविषाणमित्यादिशब्दोऽपि विकल्पजननद्वारा प्रकृतोपयोगी भवत्वि-त्यभिसन्धिना परस्य व्यवहार । अतोऽसत्प्रतीतिमनङ्गीकुर्वत कथ तद्बोधेच्छया वाक्यप्रयोग इति शङ्कानवकाश । विकल्पाख्यवृत्तीच्छयैव तत्प्रयोगात् । विकल्पे प्रतीतिभेदाशे परस्य भ्रम इत्यवसेयम् । अत्यन्तसत् बाध्यत्व-सामान्यशून्य न बाध्यते त्रैकालिकनिषेधप्रतियोगित्वप्रकारकप्रमागोचरत्वरूपबाध्यत्ववन्न भवतीत्यर्थ । यद्वा ज्ञानोच्छेद्यत्वस्वरूपबाध्यत्ववन्न भवतीत्यर्थ । अतो न यथाश्रुते साध्यावैशिष्ट्यमिति शङ्कावकाश । स्वमत-मनुरुद्ध्यानुमानपक्षोक्तदूषणेनेदमपि दूषित भवतीत्याशयेन मूले हेत्वनुक्तिरित्यभिप्रेत्याह ॥ अर्थापत्तिरिति ॥ ॥ अनुमानञ्चेति ॥ विमतं सदसद्विलक्षण बाध्यत्वे सति प्रतीतत्वादिति व्यतिरेक्यनुमानमित्यर्थ ।

(गु टि) ननु तर्हि विमतमनिर्वचनीय बाध्यत्वे सति प्रतीयमानत्वादित्यनुमानेन तत्सिद्धिरस्त्वित्यत आह ॥ अनुमानञ्चेति ॥

### अनिर्वचनीयत्वसाधकत्वेनाभिमतार्थापत्तेर्व्याप्त्यभावोपपादनम्

(टी) अथ वाऽत्यन्तासतो नरविषाणादेरपि तत्पदात्प्रतीतिसम्भवेनासन्न प्रतीयत इति व्या-प्त्यभावाच्छुक्तिरजतादेरत्यन्तासत्त्वेनैवोपपत्तेः, तथा अन्यथाविज्ञातस्य सम्यग्विज्ञानगोचरत्वस्य बाध्य-त्वस्य सतश्चिदानन्दात्मनोऽपि सम्भवेन सन्न बाध्यत इति व्याप्त्यभावादम्बरादेस्सत्त्वेनैवोपपत्ते-र्नार्थापत्त्याऽनिर्वचनीयतासिद्धिरिति व्याख्येयम् ।

(वि टि) अस्तु वाऽर्थापत्तिर्मानान्तरम् । तथापि बाध्यत्वप्रतीतत्वयोरन्यथाप्युपपत्त्या न तदवतारसम्भव इत्याह ॥ **अथ वेति** ॥ अयमाशय । कल्पनीयत्वाभिमतव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वेन प्रमा ह्यर्थापत्ति । न हि सा प्रकृते सम्भवति । कल्पनीयत्वाभिमतसदसद्विलक्षणत्वरूपानिर्वचनीयत्व विनापि बाधप्रतीत्योरुपपत्ते । न ह्यन्यथाविज्ञातस्य जडत्वादिरूपेण विज्ञातस्य सम्यग्विज्ञानगोचरत्वरूपबाध्यत्वस्य ज्ञानत्वनित्यत्वादिरूपेण प्रमितेविषयत्वरूपबाध्यत्वस्य सदात्मन्यसम्भवोऽस्ति । न च नरविषाणादिशब्दजन्यप्रतीतिविषयत्वस्यात्यन्तासति नरविषाणादावसम्भव । ततश्च सच्चेन्न बाध्येत असच्चेन्न प्रतीयेतेत्यापादने व्याप्त्यभावाच्छुक्तिरजतादेरम्बरादेश्च सत्त्वासत्त्वयोरन्यतरेणैवोपपत्तेर्बाध्यत्वप्रतीतत्वयोर्न सदसद्वैलक्षण्यकल्पकत्व युक्तम् । न च बाध्यत्वमिह ज्ञान निवर्त्यत्व प्रतिपन्नोपाधिस्थनिषेधप्रतियोगित्व वा विवक्षितम् । अतो न बाध्यत्वस्य सत्त्वेनाप्युपपत्तिरिति वाच्यम् । निरसिष्यमाणत्वादिति भाव ।

(रा टि) अर्थापत्त्याभासोऽयमिति भावेनाऽभासता व्यनक्ति ॥ **अथ वेति** ॥ एतेनार्थापत्तेर्मानान्तरत्वान्न प्रागुक्तदोष इति परास्तम् ।

विज्ञातस्यान्यथा सम्यग्विज्ञान ह्येव तन्मतम् ।

**इत्यनुव्याख्यानोक्त**बाध्यत्वनिर्वचन हृदि कृत्वाऽऽह ॥ **अन्यथा विज्ञातस्येति** ॥ ज्ञानचिकीर्षाकृतिमत्त्वादिना विज्ञातस्य निर्गुणत्वादिना सम्यग्विज्ञातत्वस्य परमतेपि सत्त्वादिति भाव ।

वे टि) एव वस्तुगतिमभिधायार्थापत्ते पृथक्प्रामाण्यपक्षेप्याह ॥ **अथ वेति** ॥ **अत्यन्तासत्त्वेनैवेति** ॥ तथा चार्थापत्तेरन्यथैवोपपत्तिर्दूषणमित्यर्थ ॥ **सतश्चिदात्मनोपीति** ॥ सत्योप्यात्मा देहाद्यात्मना विज्ञातो वेदान्तजनितविज्ञानविषय इति परेणाप्यङ्गीकार्यम् । अन्यथाऽविद्याया निवृत्त्यनुपपत्तेरिति भाव ।

(द्रै द्यु) तस्या पृथक्प्रामाण्यमङ्गीकृत्याप्येनद्दूषणपरत्व मूलस्याह ॥ **अथ वेति** ॥ **तत्पदादिति** ॥ नरविषाणमिति पदादित्यर्थ । तस्यापि सुबन्तत्वरूपपदत्वमस्त्येव । समासशक्तिपक्षे शक्तिमत्त्वरूपपदत्वमपि । एतच्चाग्रे विवेचयिष्यते । यद्वा **तत्पदा**दित्यस्य तदितिपदादित्यर्थ । तस्य च सर्वनामत्वान्नरविषाणबोधकत्वमक्षतमेवेति भाव । यद्यपि ज्ञाननिवर्त्यत्वादिरूपमेव बाध्यत्वं पराभिमत तथापि तद्वक्ष्यमाणरीत्या जगत्यसिद्धम् । अर्थापत्तिश्च जगतोऽप्यनिर्वचनीयत्वसाधकत्वेन पराभिमता । अतस्तत्साधारणमेव बाध्यत्व निर्वाच्यम् । तच्चान्यथा विज्ञातस्येत्यादिरूपमेवेति सिद्धवत्कृत्याऽऽह ॥ **तथेति** ॥ **चिदात्मन इति** ॥ क्षणिकत्वादिना गृहीतस्य स्थिरत्वादिना ग्रहविषयताया सत्त्वादित्यर्थ ॥ **अम्बरादेरिति** ॥ आगमनिराकरणावसरे अद्वैतत्वादनिर्वाच्यमित्यादिना जगत्सामान्यानिर्वचनीयत्वबोधकवाक्यगत्युक्त्या जगत्सामान्यस्यापि प्रसक्तत्वेनार्थापत्तिशङ्कापि तत्सामान्यविषयिण्येवोचितेत्याशयेन मूलकारैस्तत्सामान्यमेव प्रस्तावितम् । अत एव 'न च बाध्य जगत्' इति वक्ष्यते । अतस्तदनुसारेणाम्बरादेरित्युक्तम् ।

(गु. टि) अर्थापत्ते. पृथक्प्रामाण्यमङ्गीकृत्याप्याह ॥ अथ वेति ॥

असत. प्रतीत्यनङ्गीकारे बाधकोक्ति.

(टी.) अत्यन्तासतः प्रतीत्यनङ्गीकारे बाधकश्चाह

असतः प्रतीतिं विनाऽसद्वैलक्षण्यज्ञानानुपपत्तेः

यदि परोऽसन्न प्रतीयात्तदा शुक्तिरजतादेरसद्वैलक्षण्यं न जानीयात्। वैलक्षण्यज्ञानस्य प्रतियोगिज्ञानसापेक्षतानियमात्। न हि केनाप्यविदिताद्घटाद्वैलक्षण्य पटस्य ज्ञातुं शक्यते।

(वि. टि.) ॥ असद्वैलक्षण्य न जानीयादिति ॥ इदमुपलक्षणम्। असत्प्रतीत्यभावे तत्प्रतीतिनिषेधानुपपत्ति असदादिपदप्रयोगानुपपत्तिश्चेत्यपि द्रष्टव्यम्।

(रा टि.) ॥ बाधकश्चेति ॥ न केवल नरविषाणादिपदाच्चत्प्रतीतिरूपसाधकमस्ति किं तु बाधकश्चेत्यर्थ ।

(वे टि) ॥ बाधकश्चेति ॥ अत्यन्तासतो नरविषाणादेरपि तत्पदात्प्रतीतिसम्भवेनेति साधकस्योक्तत्वाच्चशब्द इति ज्ञातव्यम्।

(द्वै द्यु) ॥ बाधकश्चेति ॥ ननु 'कुतोऽर्थापत्त्या नानिर्वचनीयत्वसिद्धिरित्यत आह' इति उत्तरग्रन्थावतरणे ऋजुमार्गेण सम्भवति कुतस्तन्मूलार्थे स्वयमेव हेतुमध्याहृत्य [1]व्याख्याय 'असत्प्रतीत्यनङ्गीकारे बाधकमाह' इत्यस्य लाभो भवति। स चानुपपन्न। मूलेऽसत्प्रतीतौ साधकस्यानुक्तत्वात्। अध्याहारे बीजाभावेन स्वोक्तव्याख्यारीत्याऽध्याहारस्याकिञ्चित्करत्वेनाध्याहारेण तल्लाभस्य वक्तुमशक्यत्वादिति चेन्न। 'असत प्रतीतिं विना' इत्युत्तरमूलस्याऽसत्प्रतीत्यनङ्गीकारेऽनिष्टप्रसञ्जकत्वेनासत्प्रतीतिमात्रसाधनोपयोगेप्यर्थापत्तौ साक्षाद्दूषणाप्रसञ्जकत्वेन मध्ये साक्षात्तद्दूषणाध्याहारस्यावश्यकत्वे तत्रासत्प्रतीतिसाधकमनुपन्यस्य तत्र व्याप्तिभङ्गस्य कर्तुमशक्यत्वेन तत्साधनाध्याहारस्याप्यावश्यकत्वेन 'बाधक चाह' इत्यवतारिकासङ्गते.।

एव 'न च बाध्य जगत्' इति मूलेन सद्विलक्षणत्वसाधकबाध्यत्वस्य जगत्यसिद्धिरुक्ता। सा बाध्यत्वरदार्थसामान्यविषयिणी न सङ्गच्छते। अन्यथा विज्ञातस्येत्यादिबाध्यत्वस्यासिद्ध्यभावेन बाधितत्वात्। अत· पराभिमतबाध्यत्वविशेषविषयत्वस्यावश्यकत्वे तदुपरि शङ्का भवत्येव। जगति विद्यमानं यदन्यथाविज्ञातस्येत्यादिबाध्यत्वं तेनैव सद्विलक्षणत्व सिद्ध्यत्विति। तच्छङ्कानिरासस्योत्तरत्राकरणेन तन्निरासोऽत्रैव मूलकृतामभिमत। पर तु स्फुटत्वाच्छिष्यैरेवोह्य इत्याशयेन स्वशब्देन नोक्त। अतस्तन्निराकरणमप्यत्रैवाध्याहृत्य व्याख्यातमिति न किञ्चिदसमञ्जसम्।

॥ प्रतियोगिज्ञानेति ॥ क्वचिद्विकल्पत्वेन क्वचिज्ज्ञानत्वेन कारणत्वे गौरवात् घटादिस्थले विकल्पासम्भवेन ज्ञानत्वेन कारणताया उभयसिद्धत्वेन सर्वत्रैव तथैव कारणत्वकल्पनादिति भाव।

---

[1] व्याख्या। तया इति पाठेन भाव्यमिति भाति।

(द्वै द्यु ) ननु तद्विषयकत्वमेव कारणतावच्छेदकमस्तु। ज्ञानत्वनिवेशे प्रयोजनाभावात्। तथा च विकल्पस्याप्युक्तरूपेण कारणत्वं प्राप्तमेव। न च संस्कारेच्छादिबलादपि तदापत्तिरिति वाच्यम्। उद्बुद्धसंस्कारस्थले प्रतियोगिस्मरणस्येच्छादिस्थले च तत्कारणतया च प्रतियोगिज्ञानस्याऽवश्यकतया तत्रेतरसामग्रीसत्त्वे तद्वैलक्षण्यग्रहोत्पत्ते किञ्चित् क्षणविलम्बेन तत्राप्यानुभाविकतया क्षणादिविलम्बस्य शपथैकनिर्णयत्वेन तत्र तादृशसंस्कारेच्छादिभिरेव कार्योत्पत्त्यङ्गीकारेण ज्ञानान्तरस्य तत्राकल्पनात्।

यदि चानुद्बुद्धसंस्कारस्थले कार्यवारणाय तदन्यत्वमत्र निवेशनीयम्। तच्चानुद्बुद्धसंस्कारत्वं न जाति। किन्तु तत्तदुद्बोधकाभावविशिष्टसंस्कारत्वमेव। तथा च तदवच्छिन्नभेदनिवेशे महागौरवाल्लाघवात् ज्ञानत्वजातिरेव निवेश्या। इत्थं च पूर्वोक्तस्थलेषु ज्ञानोत्पत्तिविलम्बेन कार्यस्य विलम्ब तत्र प्रतियोगिस्मरणादिकल्पनादिसिद्ध एव। फलमुखगौरवस्यादोषत्वादिति विभाव्यते तदा शशविषाणादिविषयकज्ञानासम्भवेन तत्र विकल्पस्यैवाभ्युपगन्तव्यतया तत्साधारणवैजात्यस्यैव जनकतावच्छेदकत्वाभ्युपगमेन तस्य विकल्पज्ञानोभयमात्रवृत्तित्वस्वीकारेण संस्कारान्यत्वस्यानिविष्टत्वेन गौरवानवकाश। इत पूर्वं वैजात्यस्यासिद्धावप्युक्तकारणतावच्छेदकघटकतयैव तत्सिद्धिसम्भवात्। एवं चेच्छादिभ्य कार्योत्पत्त्यनभ्युपगमेऽपि न क्षति। तथा च 'असत प्रतीतिं विना असद्वैलक्षण्यज्ञानानुपपत्ते' इत्येतदयुक्तमिति चेत् न।

विकल्पस्य ज्ञानातिरिक्तत्वे मानाभावात्। यथा घटवद्भूतलमिति वाक्यजन्यबोधोत्तर घटवद्भूतल जानामि शाब्दयामीति प्रत्ययस्तथा शशविषाणमस्तीति वाक्यजन्यवृत्त्युत्तरमपि शशविषाण शाब्दयामि जानामीत्यनुव्यवसायस्य सर्वसिद्धतया तादृशवृत्तौ ज्ञानत्वतद्व्याप्यशाब्दत्वयोरेव सत्त्वावगमाच्च। विकल्पाख्यधर्मस्य तत्राङ्गीकारे ज्ञानविकल्पोभयसाधारणवैजात्याङ्गीकारे च तथैव विकल्पयामीत्याद्यनुव्यवसायापत्ते। न च तत्र दोषवशात्तद्धर्माग्रहो ज्ञानत्वादिधर्मग्रहश्च भवतीति युक्तम्। तादृशबोधे कुत्रापि तद्ग्रहाभावेपि तत्र तद्धर्ममङ्गीकृत्य दोषवशात्तदग्रहनियमेन प्रतीयमानधर्मापलापेन तद्ग्रहस्य दोषमूलकत्वमिति च कल्पने घटस्य पटत्वं पटस्य घटत्वमङ्गीकृत्याप्युक्तरीत्या समाधानस्य वक्तुं शक्यत्वेन सर्वव्यवस्थोच्छेदप्रसङ्ग। न ह्यज्ञातशशविषाणासत्त्वकपुरुषस्य घटवद्भूतलमिति वाक्याच्छशविषाणमस्तीति वाक्यस्य प्रवृत्त्यादिकार्यजनने मात्रयाऽपि विशेषोऽनुभूयते। न च तद्वाक्यस्य विकल्पाख्यज्ञानातिरिक्ताप्रामाणिकवृत्त्यन्तरजनकत्वं कल्पयितुं सम्भावनापि स्यात्। तत्रासत्त्वग्रहदशायां तु घटादावसत्त्वग्रहदशायां घटवद्भूतलमित्यादिवाक्यगतिरेवात्रापीति न तत्रापि विशेष।

न च 'वृत्तय पञ्चतय्य क्लिष्टाक्लिष्टा प्रमाणविपर्ययविकल्पनिद्रास्मृतय' इति भगवता **पतञ्जलिना** योगसूत्रे वृत्तिविभागमभिधाय 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्प' इत्यनेन विकल्पाख्यवृत्ते प्रमाणविपर्ययस्मृतिभ्य पृथगभिधानात् ज्ञानानाञ्चैतदन्यतमात्मकत्वाज्ज्ञानवैलक्षण्य विकल्पस्य निद्रावद्युक्तम्। वस्तुशून्य इत्यनेनासद्विषयकत्वस्यैव विकल्पलक्षणत्वेनाभिहितत्वेन शशविषाणमित्यादिवृत्तेर्विकल्पत्वं सिद्धमिति वाच्यम्।

(द्वै चु) तत्र 'विकल्पो न ज्ञानम्' इत्यनुक्तत्वेन ज्ञानविशेषस्य प्रमाणविपर्ययसञ्ज्ञाकरणवदसन्मात्रावगाहिज्ञान-व्यक्तेर्विशेषस्य विकल्पसञ्ज्ञाकरणसम्भवेन तदुक्तिमात्रेण लोकसिद्धज्ञानत्वानुभवस्य असत्त्वकल्पनाऽयोगात्।

वस्तुतस्तद्भाष्ये शब्दज्ञानेति सूत्रं धृत्वा 'स [1]च प्रमाणोपारोही। न विपर्ययोपारोही' इत्याद्यभिधाय 'तद्यथा पुरुषस्य चैतन्य पुरुषस्वरूपमिति तथा प्रतिषिद्धवस्तुधर्मा निष्क्रिय पुरुषस्तिष्ठति बाण स्थास्यति बाण स्थित इत्युदाहृत भवति। व्यपदेशवृत्ति यथा चैत्रस्य गौ' इत्यनेन गोचैत्रयोर्विशेषणविशेष्यभाववदत्र भेदाभावान्मुख्यविशेषणविशेष्यभावो नास्तीति दर्शितम्। एवं तट्टीकायां वाचस्पतिना 'व्यवहाराविसंवाद'द-विपर्ययत्व विशेषणविशेष्यभावाय भेदाभेदयोर्विकल्पितत्वान्न प्रामाण्यम्' इत्यभिहितम्। तथा च मतान्तरे प्रमाण-त्वेन सिद्धज्ञानान्येव कयाचिद्विवक्षया विकल्पत्वेनोदाहृतानि। न तु शशविषाणमित्यादिप्रतीति। तथा च पतञ्जलिश्रद्धाया वस्तुपदस्य मुख्यार्थकत्वाद्वस्तुशून्य इत्यस्य मुख्याविषयक इत्यर्थ। भेदप्रयुक्तसम्बन्धस्योत्सर्गतो भेदाक्षेपकतया मुख्यत्वेन स्वरूपभूतचैतन्यादिसम्बन्धानाममुख्यत्वात्तदवगाहिप्रत्ययस्य वस्तुशून्यत्वकथनसम्भव। पतञ्जल्युक्तिमात्रस्यादर्तव्यत्वे त्वया तदुक्तसाङ्ख्यशास्त्रप्रामाण्यस्याभ्युपगन्तव्यत्वस्य आनन्द ब्रह्मण इत्यादि-वाक्याना व्यावहारिकप्रामाण्यभावस्याप्यापातेन तदुक्तेरकिञ्चित्करत्वाच्च। निद्राया अपि सुखमस्वाप्समिति परामर्शप्रयोजकज्ञानात्मकत्वस्यापि तद्भाष्य एवोक्तत्वेन निद्रादृष्टान्तस्याप्यसङ्गतेश्च। तस्मादसत्प्रतीत्यैव तज्ज्ञानमुपपादनीयमिति।

यदत्र केनचित्प्रलपितम् यत्तु 'अत्यन्तासतो नरविषाणादेरपि तत्पदात्प्रतीतिसम्भवेन नासत्प्रतीयत इति व्याप्त्यभावाच्छुक्तिरजतादेरत्यन्तासत्त्वेनैवोपपत्ते तथाऽन्यथाविदितस्य सम्यग्ज्ञानगोचरत्वरूपबाध्यत्वस्य सतश्चि-दात्मनोऽपि सम्भवेन सन्न बाध्यत इति व्याप्त्यभावादम्बरादे सत्त्वेनैवोपपत्ते न ख्यातिबाधान्यथानुपपत्त्या अनिर्वचनीयत्वसिद्धि' इति। तन्न।

नरविषाणादिशब्दादत्यन्तासत प्रतीत्यसिद्धे। नरशब्दस्य नरसम्बन्ध्यर्थकतया विषाणशब्दस्य शृङ्गमा-त्रवाचितया तयोश्चात्यन्तासत्त्वविरहेण तदन्यस्याशब्दार्थतया तत प्रतीत्ययोगात्। न चैकार्थीभावलक्षणसामर्थ्य-मेव तत्प्रयोजकम्। तच्च विशिष्टैकार्थप्रतिपादकत्व विनाऽनुपपन्नमिति नरसम्बन्धित्वविशिष्टशृङ्गरूपार्थस्य तत्सा-त्प्रतीतिरावश्यिकीति वाच्यम्। तथा सति तादृशवाक्यजन्यबोधस्य निर्विकल्पतया संशयाद्यविरोधापत्ते। न हि विशेषदर्शनशून्यस्य तादृशवाक्यजन्यबोधोत्तर शृङ्ग नरीय न वेति संशयो जायते। ननु संशयजनकशक्ते कुण्ठितत्वा-पादनमेव प्रतिबन्धकता। सा चोक्तवाक्यजन्यबोधस्यानुभवबलादङ्गीक्रियते। अतो न दोष इति चेन्न। तादृशप्रत्यया-नन्तर शशीयत्वेन शृङ्ग जानामीत्यनुभवापलापापत्ते। अर्थान्तरसन्निकृष्टसमुदायात्तदर्थासन्निकृष्टार्थान्तरबोधस्यायु-क्तत्वाच्च। न ह्येतद्वाक्यश्रवणात्पूर्वमुक्तविशिष्टज्ञानमस्ति येन तत्र तद्वाक्यशक्तिर्गृह्यते। इतरान्वितशक्तिवादेऽप्यन्वयवि-शिष्टस्यैव पदशक्यता। मन्मते विशिष्टस्यानतिरिक्तत्वेऽपि विशेषणप्रकारेण तस्य भानमिति न कश्चिदनुपपत्ति.। न

---

[1] न प्रमाणोपारोही इति पाठेन भाव्यमिति भाति।

(द्वै द्यु) च दण्डविशिष्टे दण्डाभावाद्विशिष्टप्रत्ययो नियमेव भ्रम स्यादिति वाच्यम्। दण्डविशिष्टो दण्डशून्य इत्यस्य सन्नेतसामनुचितत्वात्। न चैव दण्डी दण्डवानिति प्रतीत्यापत्तिरिति वाच्यम्। प्रकारान्तरेण तद्वारणे नास्माक क्षति। अविरुद्धत्वात्। अनिर्वाच्यवादेऽप्येकार्थीभावस्योपपादकत्वात् दण्डविशिष्टे दण्डवतो भेदाभावेन विशिष्ट-प्रतीतेरभावात्। अन्यथा घटो घट इति प्रतीत्यापत्तेर्दुर्वारत्वात्। परस्परनिरूप्यनिरूपकभावापन्नस्वघटकपदार्थ-विषयनाशालिरोधघरनारूपसामर्थ्यस्यैव समासशास्त्रे आश्रयणसम्भवाच्च परोक्षे अन्यथाख्यात्यभ्युपगमेऽपि बाध-काभावात्।

बाध्यत्व नोक्तरूपम्। अबाध्यत्वव्यतिरेक स्वाधिकरणनिष्ठाभावप्रतियोगित्व ज्ञानत्वेन ज्ञानजन्यनाशप्रति-योगित्व वा। आपादकं सत्त्वमपि स्वप्रकारकधीविषयताव्यापकाभावप्रतियोगित्वाभाव इति नात्मन उक्तबाध्यत्व सत्त्वव्याहतिप्रसङ्गात्। किं च शृङ्गार्थिना शृङ्ग क्वास्तीति पृष्टे यत्र 'गिरिदर्यां शशशृङ्गमस्ति' इत्युक्त तत्र शृङ्गत्वान-वगाह्यखण्डासदवगाहिप्रत्ययस्य जनने तद्वाक्यजन्यबोधानन्तर शृङ्गार्थिनो गिरिदरीप्रवृत्तिर्न स्यात्। तत्र शृङ्गत्वभाने चान्यथाख्यातिर्दुर्वारैवेति किमनेन दुष्टकुचोद्येन।

यत्तु 'असत्प्रतीत्यभावे असद्वैलक्षण्यज्ञानानुपपत्ति' इति तदसत्। न ह्यसद्वैलक्षण्यमसत्प्रतियोगिको भेद किं तु सत्तादात्म्यमात्रमित्युक्तत्वात्। ननु तत्साधन व्यर्थमिति चेन्न। शून्यवादिना परमार्थसतोऽनङ्गीकारात्तत्ता-दात्म्यशून्यत्वाविरोधिनोऽनिर्वाच्यत्वस्य साधने तच्छून्यतामादाय जगतस्तेन तदन्येन वाऽर्थान्तरतोद्भाव्येतेति तन्निरासाय तदावश्यकत्वात्। न चासत्ख्यात्यनभ्युपगमे तत्खण्डनादौ प्रवृत्त्ययोग। असत्प्रतीयत इति परोक्त-प्रतिज्ञाया अप्रामाण्यसमर्थनरूपे खण्डने विजयार्थप्रवृत्तिसम्भवात्। शशशृङ्गं असदिति वाक्यात्तु जायत एव प्रतीति। सा तु व्यधिकरणप्रकारकत्वाद्विपर्यय एव। उक्तप्रतिज्ञाया अप्रामाण्यसमर्थन च प्रतीयमानत्वाच्छेदेन सत्तादात्म्यसाधनेनाप्युपपद्यते। 'शशशृङ्गमलीकम्' इत्यादौ शशशृङ्गपद तद्वाक्यपरं अलीकपद चाप्रमाण-वाक्यार्थक। अन्यथा सत्यभेदविशिष्टार्थकत्वे भेदस्य भावाभावविलक्षणस्याभ्युपगमापत्ते। तथा च

भावाभावस्वरूपत्वान्नान्योन्याभावता पृथक्।

इति विरुद्ध्येत। लक्षणया तस्य सद्वृत्तिधर्मविशिष्टपरत्वे मुख्यार्थपरताद्दशवाक्यार्थप्रतीत्यनुपपत्ति। वस्तुतः सत्यवचा इत्यादौ प्रमाणेऽपि सत्यपदप्रयोगात् तत्समानार्थकऋतशब्दोऽपि तदर्थक। तेनालीक त्वप्रियेऽनृत इति न कोशविरोध। निराश्रयस्यैव धर्मस्य स्वीकारे घटत्वादेरपि घटादतिरिक्त आश्रय स्यात्। तत्रापि तस्य घटादतिरिक्त आश्रयो न सन्नित्यनुभवात्। अत्रापि ऋतभेदस्याश्रयो न सन्नित्यनुभवात्। किञ्चाविषयस्य ख्यातिर्वा न वा। ख्यातिविषये विषयभेदस्य वक्तुमशक्यत्वादिति तस्याख्यातौ तत्खण्डनायोग। न च शशशृङ्गमसदिति मुख्यार्थ-पर वाक्यमप्रमाणं स्यादिति वाच्यम्। इष्टत्वात्। न च नञतिरिक्तयादृशपदसमुदायाद्योऽर्थ प्रतीयते तादृशस-मुदायतद्घटितसमुदाययोरन्यतराप्रामाण्ये तदितरप्रामाण्यमिति नियमभङ्गापत्तिरिति वाच्यम्। अविषयो न सन्निति वाक्ये तवाप्यवगते विषयभेदे आश्रयादेर्लक्ष्येन सत्त्वे तदसत्त्वे च वाक्यप्रामाण्यस्य दूरस्थत्वात्। किञ्च

(द्वै षु ) शशविषाणादिशब्दादखण्डार्थप्रत्यये नीलघटादिशब्दादपि तदापत्ति । इष्टापत्तौ च नीलत्वघटत्वाना-श्रयतया नीलघटपदेन तदुल्लेखायोग इत्यन्यत्र विस्तर ' इति ।

तन्मन्दम् ।

अत्यन्तासत्यपि ज्ञानमर्थे शब्द करोति हि ।

इति त्वदीयोक्ते असद्विषयकपरोक्षज्ञानस्य त्वत्प्राचीनैरङ्गीकृतत्वेन नरविषाणादिपदादसद्विषयकविकल्पाख्य-वृत्तिपक्षस्य बहुशस्त्वद्गुरुणा अद्वैतचन्द्रिकायामभ्युपगतत्वेन च तस्य सर्वथानुपपन्नत्वे तदभ्युपगमस्य त्वदा-चार्यप्रेक्षावत्त्वापादकत्वप्राप्त्या शशविषाणादिपदेन ज्ञानस्य विकल्पस्य वोत्पत्तौ कस्याश्चिद्गतेरवश्य त्वया वाच्यतया मन्मतेऽपि तद्रीतिसम्भवेन मा प्रत्येतद्दूषणस्यासङ्गतत्व त् । न हि नरविषाणादिपदैर्विकल्पोत्पत्तिर प्यगृहीतपदवृत्तिकस्य जायते । अनुभवविरोधात् । येन तत्र गतिर्मया न वक्तव्येति वक्तु शक्येत । अपि च 'नरविषाणमसत्' 'शशविषाण यदस्ति तदानय' इत्यादिवाक्यैर्नरविषाणपदेन सर्वनामतत्पदादिना च ज्ञानं जायत इत्यनुभवसिद्धम् । अन्यथा 'गिरिदर्यां नरशृङ्गमस्ति तदानय' इति वाक्यश्रवणोत्तर गिरिदरीगमनप्रवृत्त्य-भावप्रसङ्गात् ।

स च बोध व्यधिकरणप्रकारकोऽन्यथाख्यातिरूप इति विशिष्टानिर्वचनीयविषयक इति विशिष्टासद्विष-यक इति त्रय पक्षा. प्राप्ता । तत्र न तावदन्यथाख्यातिपक्षस्त्वया वक्तु शक्य । अन्यथाख्यात्यङ्गीकारे अपसिद्धान्तापत्ते । अपरोक्षप्रतीतेरेवान्यथाख्यातित्वाभावो मत्सिद्धान्त इति न वाच्यम् । तस्यैव तथात्वाभ्यु-पगमे बीजाभावात् । तत्रापि व्यधिकरणरजतत्वप्रकारकशुक्तिविषयकत्वोपपत्ते । अत्र यदनिर्वचनीयवादार्थे ब्रह्मानन्देनोक्तं तदुत्तरत्रोद्धाव्य दूषयिष्याम ।

किञ्च ज्ञानाना वैलक्षण्य विषयवैलक्षण्यनिबन्धनम् ।

अर्थेनैव विशेषो हि निराकारतया धियाम् ।

इत्युक्ते । अन्यथा साकारवादापत्ते । तथा चेद रजत रजतमिदमिति च द्व्याकारत्वनिर्वाहाय परस्पराध्यास । ततो रजतस्येदमीवेदमो रजते तादात्म्यमुत्पद्यत इति हि ते मतम् । [1]तथा च शशविषाणमस्तीतिबोधस्य । एव 'गौर्वि-षाणी' 'शशो ह्रस्व ' इति समूहालम्बनप्रमातो 'गौर्ह्रस्व ' 'शशो विषाणी' इति समूहालम्बनभ्रमे विषयताकृतवैलक्षण्य स्यैव परोक्षभ्रमे विशिष्टभानानङ्गीकर्त्रा त्वयाऽभ्युपगन्तव्यतापत्त्या साकारवादापत्तिर्दुर्वारा । एवमपरोक्षभ्रमेऽपि रजतापरोक्ष्यानुरोधेन शुक्तौ रजतोत्पत्तेरङ्गीकर्तव्यत्वेऽपि रजत इदतादात्म्योत्पत्तिस्वीकारवैयर्थ्यप्रसङ्गेन परस्पराध्या-ससिद्धान्तभङ्गप्रसङ्ग । रजतमिदमित्याकारस्य तादात्म्येनेदम्प्रकारतानिरूपितविशेष्यताया रजते स्वीकारमात्रेण सम्भवेन तादात्म्यान्तरोत्पत्ते तन्निर्वाहककार्यकारणभावादेश्च कल्पनेऽतिगौरवप्रसङ्गात् । तादृशप्रकारकत्वस्य दोषविशेषस्य तन्निर्वाहकतायास्तादात्म्योत्पत्तिपक्षेऽप्यावश्यकत्वात् ।

---

[1] अविषय सन् सोऽसन्निति वाक्ययोस्त्वाप्यवाप्यवगते विषयभेदे अविषयस्य सत्त्वेन वा असत्त्वेन वा ज्ञाने वाक्य-प्रामाण्यस्य इति पाठेन भाव्यमिति भाति । [2] तथा न इति पाठेन भाव्यमिति भाति ।

(द्वै द्यु) इत्थं च घटादौ सत्तादात्म्यमपि घट सन्नित्याकारानुभवानुरोधान्न सिद्ध्यतीति सत्प्रतियोगिकतादात्म्यस्य मिथ्यात्वलक्षणे निवेशे असम्भव स्यात्। सत्प्रतियोगिकतादात्म्यशून्यत्वरूपत्वदभिमतासत्त्वस्याप्रसिद्धिर्वा। सिद्धत्वे तस्य केवलान्वयित्वप्राप्त्या सर्वासत्त्वप्रसङ्गश्च। न च सदनुयोगिकतादात्म्यमेव निवेश्यमिति वाच्यम्। 'सत्प्रतियोगिकत्वोपलक्षिततादात्म्यमेव निवेश्यते। अतो न चिद्भिन्नत्ववैयर्थ्यम्' इति विप्रतिपत्तिव्याख्यानस्थत्वद्गुरूक्तस्यासङ्गतत्वापत्तेर्दुर्वारत्वात्। अपि च सदनुयोगिकतादात्म्य सत्येव वर्तत इति तच्छून्यत्वस्य जगति सत्त्वाज्जगतोऽसत्त्वापात। न च तादात्म्य द्विष्ठमिति वाच्यम्। तथात्वे शुक्तिरूप्ययोरेकस्यैव तादात्म्यस्य परस्परसंसर्गतया भानसम्भवेनेदम्प्रतियोगिकतादात्म्यान्तरोत्पत्तिस्वीकारवैयर्थ्यापत्ते। सदनुयोगिकतादात्म्यप्रतियोगित्वशून्यस्यैवासत्त्वे सतोप्यसत्त्वप्रसङ्ग। सत्सदिति प्रत्ययाभावेन सदनुयोगिकतादात्म्यप्रतियोगित्वस्य सत्यसत्त्वात्। न च 'ब्रह्म आनन्द' इति प्रत्ययादानन्दात्मकसतो ब्रह्मात्मकसदनुयोगिकतादात्म्यप्रतियोगित्वं प्राप्तमिति वाच्यम्। ब्रह्मत्वानन्दत्वोपहितयो कल्पितत्वेन सद्रूपत्वाभावात्। तस्यापि सद्रूपत्वे आनन्दरूपसत्प्रतियोगिकत्वविशिष्टतादात्म्यस्यैव ब्रह्मरूपसति सत्त्वेन चिद्भिन्नत्वव्यावृत्तिसम्भवे तदुपलक्षिततादात्म्यनिवेशासङ्गतेर्जागरूकत्वात्।

किञ्च व्यधिकरणप्रकारकज्ञानोपगमे अपरोक्षप्रतीत्यनुरोधेन रजतमात्रोत्पत्ति स्वीक्रियताम्। न तु तादात्म्यस्य। इदन्निष्ठशुक्लरूपादितादात्म्यस्यैतत्संसर्गतया भानसम्भवात्। तथा च संसृष्टरूपेणापीदमोऽनध्यस्तत्वप्राप्त्या

अध्यस्तमेव हि परिस्फुरति भ्रमेषु नान्यत्कथञ्चन परिस्फुरति भ्रमेषु।
इदमर्थवस्त्वपि भवेद्रजते परिकल्पित रजतवस्त्विदमि॥

इत्यादिसङ्क्षेपशारीरकायुक्तिविरोध स्यात्।

एतेन 'इदं रजतमिति भ्रमे कदाचिदनिर्वचनीयरजते लौकिकपारमार्थिकरजततादात्म्य भासते' इत्यद्वैतचन्द्रिकोक्त प्राचीनाभिप्रायवर्णनमपि परास्तम्। लौकिकरजतस्य तादात्म्येनात्र भाने व्यधिकरणप्रकारकत्वस्यापरोक्षभ्रमेऽप्यङ्गीकारापत्त्याऽनिर्वचनीयख्यात्यसिद्ध्यापत्ते। तत्रैवान्यत्रापि लौकिकसन्निकर्षाननुयोगिनोपि लौकिकरजतस्येदमश एव भानोपपत्तेस्तत्राप्यनिर्वचनीयरजतोत्पत्तिवैयर्थ्यञ्च। न च तत्राप्यपरोक्षप्रतीतिनिर्वाहायानिर्वचनीयरजतोत्पत्ति अलौकिकरजते अलौकिक्येव विषयतेति वाच्यम्। रजते विषयताद्वयाननुभवात्। रजत साक्षात्करोम्येवेत्यनुभवात्। मन्मते ज्ञानस्यासन्निकर्षत्वेन तस्य प्रत्यक्षीयालौकिकविषयत्वस्य वक्तुमशक्यत्वाच्च। यत्र लौकिकरजतस्यापीन्द्रियसयोग तत्रोक्तभ्रमाङ्गीकारे तत्रानिर्वचनीयरजतोत्पत्तिर्व्यर्थैवेत्यध्यस्तमेव स्फुरतीत्यस्यायुक्ततैव। न चात्र रजताद्युत्पत्त्यनङ्गीकारे तत्र भ्रमविषयत्रैकालिकनिषेधप्रतियोगित्वावगाहिबाधबुद्धेर्भ्रमत्त्वापत्ति। भ्रमे प्रतीयमानस्य कस्यापि तथात्वाभावादिति वाच्यम्। तर्हि परोक्षभ्रमबाधेपि दीयता

(द्वै द्यु) इष्टि । तत्र विशेष्ये प्रकाराभावमात्रग्राहकत्वेन भ्रमहेत्वज्ञाननिवर्तकत्वतज्जातीयकार्यान्तरोत्पत्त्यादि-विरोधित्वादिरूपबाधकत्वाङ्गीकारेऽपरोक्षभ्रमबाधस्यापि तथात्व किं त्वद्भयादपगच्छति ।

किञ्च नरविषाणादिशब्दैर्व्यधिकरणप्रकारकसन्मात्रविषयकबोधजननाङ्गीकारे नरविषाणमस्तीति बोधस्य विषाणे नरीयत्वांश एव भ्रमत्व । न त्वस्तित्वांश एव भ्रमत्वमित्यायातम् । तथा च नरविषाण नास्तीति बाधस्य सर्वांशे प्रमात्मकस्य धर्मितावच्छेदकांशे प्रकारांशे च भ्रमत्वापत्ति । तथा च भ्रमस्यैव बाधापेक्षया सम्यक्त्व स्यात् । अत्रेष्टापत्तिं कृत्वा लोकमर्यादोल्लङ्घने उन्मत्तवदुपेक्षणीयत्वापत्ते । तत्र विषाणे नरीयत्वाभावबोधन समासघटकपदार्थस्यासमस्यमानपदार्थेऽन्वये समासस्यासाधुत्वापत्तेर्हेयम् । न च नञर्थातिरिक्तार्थान्वय एवासाधुत्वमिति वाच्यम् । त्वदुक्त्यतिरिक्तनियामकानुपलम्भात् । शशविषाणमसत् अलीक तुच्छ त्रिकालवृत्त्यभावप्रति-योगीत्यादावगतिप्रसङ्गाच्च ।

यत्तु 'शशविषाणमलीकमिति वाक्ये शशविषाणपद तद्वाक्यलक्षकम् । अलीकपदमप्रमाणपरमेव' इति तत्तु च्छम् । वह्नित्वेन गुञ्जापुञ्जावगाहिबोधजनकस्य ह्रदो वह्न्यभाववानिति वाक्यस्याप्रामाण्यसत्त्वात् 'वह्न्यभाववान् ह्रद शशविषाणवदसन्' इति वाक्यस्य प्रामाण्यापत्ते । न चेष्टापत्ति । सर्वलौकिकविरुद्धार्थे इष्टापत्ते. कर्तुमशक्य-त्वात् । न च तादृशशब्दघटितवाक्यसामान्यलक्षकमिति वाच्यम् । तथात्वेऽपि गवादिलक्षकशशपदघटितस्य तीक्ष्णतात्पर्यकखरपदघटितस्य शशविषाण सत् खरविषाणं च सदिति वाक्यस्य चाप्रामाण्याभावेन बाधात् । न च शशसम्बन्धित्वावच्छिन्नप्रकारतानिरूपितविषाणत्वावच्छिन्नविषयताशालिबोधतात्पर्यकतादृशानुपूर्वीसामान्यलक्षक शशविषाणादिपदमिति वाच्यम् । तद्धर्मावच्छिन्नत्व न सम्बन्धित्वीय प्रकारतानिरूपिता न विशेष्यतेत्यादिबाध-ग्रहदशाया शशविषाणमसदित्यादिवाक्याना सर्वानुभवसिद्धप्रमाजनकत्वाभावप्रसङ्गात् । त्वदुक्तरीतेरप्रामाणिक-तया तदनुरोधेनेष्टापत्ते कर्तुमशक्यत्वात् ।

किञ्च केनचिच्छशशृङ्ग सदित्युक्ते शशशृङ्गमसत् अत एतद्वाक्यमप्रमाणमित्याप्तो वदति । तद्वाक्यस्थश-शृङ्गादिपदस्य भवदुक्तलाक्षणिकत्वे तद्वाक्याप्रामाण्ये तद्वाक्याप्रामाण्यस्यैव हेतूक्तत्वप्राप्त्या साध्याविशिष्टया-पत्ते । तथा केनचिच्छशशृङ्गमसदिति केनचित्सदिति चोक्तौ संशयेन का प्रमेति पृष्ट. प्रत्याहासदिति ज्ञान प्रमाण अन्यदप्रमाणमिति । तत्र व्यधिकरणप्रकारकत्वरूपाप्रामाण्यस्योभयत्र तुल्यत्वेन तथा वक्तुर्भ्रान्तत्वापत्ते । न हि तथा वक्ता भ्रान्त इति कोऽपि प्रेक्षावान् वदति । विचारज्ञास्तथा वदन्त्येवेति चेत् सर्वलोकविरूद्धस्य विचारस्यैवाभासत्वेन तथा विचारकाणामेव भ्रान्तत्वात् ।

एतेन नञतिरिक्तयादृशेत्याशङ्कयोक्तनियमस्याप्रयोजकत्वकथन शशशृङ्गमलीकमिति मुख्यार्थवाक्यस्याप्रा-माण्ये इष्टापत्तिकरण च स्वमौर्ख्यज्ञापकमेवेत्यतिरोहितमेव । अलीकपदमुख्यार्थस्य कस्यचिदङ्गीकारे असत्प्रती-तिर्दुर्वारैव । सद्भिन्नत्वेनैव ततो बोधोदयात्तस्य च लोकाना भ्रमत्वानभिमानात् । अन्यथा तस्य मुख्यार्थस्यैवा-भावप्रसङ्गेन सत्तादात्म्यशून्यत्वमेवासत्त्वमिति तत्र तत्पदार्थतावच्छेदकनिर्वचनानुपपत्ते । न चानिर्वचनीयमेव

(द्वै द्यु.) तत्पदमुख्यार्थोऽस्त्विति वाच्यम् । व्यधिकरणप्रकारकत्वमेव भ्रमत्वमिति वदतस्तार्किकस्य मतेऽनिर्वचनीयाभावात् । मन्मते तथाऽस्त्विति चेत् तर्हि शशविषाणमिति वाक्य मुख्यार्थकमेवास्तु किमनेन सर्वानुभवविरुद्धार्थकत्वव्यसनेन ।

अस्तु तर्हि शशविषाणादीनामनिर्वचनीयत्वमेवेति चेत्तर्हीदानीं स्वीकृतान्यथाख्यातिपक्षपरित्याजनेनेष्टासिद्धे । किञ्चानिर्वचनीयवादेऽपि यदि शशविषाणमित्यादिवाक्य व्यधिकरणप्रकारेण सद्बोधकमेवेत्याग्रहस्तर्हि शशविषाणसद्भाव मन्यमानेन केनचित्कि शशविषाणमिति प्रश्ने कृते तादृशेन केनचिद्भ्रान्तेन कनकमयं तदिति लक्षणे अभिहिते लक्षणवाक्यस्य त्वन्मते प्रश्नविषयस्वरूपमात्रपरत्वात् तेन प्रश्नवाक्यस्थविषाणपदबोध्यसद्व्यक्तिस्वरूपमात्रविषयकाखण्डार्थबोधजनकत्वप्रसङ्गेन तस्य व्यधिकरणप्रकारकत्वाभावेनाप्रमात्वविरहात्तद्वाक्यप्रामाण्यापत्तिर्दुर्वारा । न हि तद्वाक्यप्रामाण्य कस्यचित्प्रेक्षावत सम्मतम् । न च द्वारीभूतबोधस्य भ्रमत्वान्न तस्य प्रामाण्यमिति वाच्यम् । तथा सति विष भुङ्क्ष्वेति लौकिकवाक्यस्य तत्त्वमसीत्यादिवैदिकवाक्याना फलीभूतबोधमादाय [1]व्यावहारिकपारमार्थिकप्रामाण्ययोरभावप्रसङ्गाभावात् ।

किञ्च नञ्घटितसमुदायतदघटिततत्समुदाययोरेकस्य प्रामाण्येऽन्यस्याप्रामाण्यमिति नियमस्य विना बाधकं परित्यागे सर्वानियमस्याप्युच्छेदप्रसङ्ग । न चाविषय सन्निति सोऽसन्निति वाक्ययोर्व्यभिचार एवोक्तनियमे बाधक । अविषयस्य ख्यायमानत्वे तत्र विषयभेदस्यायोगेन विषयभेदावच्छिन्ने सत्त्वासत्त्वावगाहिवाक्यद्वयजन्यबोधयोरपि अविषयत्वांशे भ्रमत्वनियमादिति वाच्यम् । मन्मते व्यधिकरणप्रकारकत्व न भ्रमत्वम् । किं तु असत सत्त्वेनावगाहित्वं सतोऽसत्त्वेनावगाहित्वमित्यस्याप्रामाणिकप्रतियोगिताकात्यन्ताभावविचारे व्यवस्थापितत्वेनाविषयोऽसन्निति वाक्यं प्रमाणमेव । विषयभेदस्यैवासत्त्वेन तदवच्छिन्नस्याप्यसत्त्वानपायात् अविषय सन्निति वाक्यमप्रमाणमेवेति कुत्रापि व्यभिचाराभावात् ।

न च भवन्मते असत्पदस्य सत्यभेदावच्छिन्नार्थकत्वे स भेदो धर्मिस्वरूपो न वा । नाद्य । असद्धर्मिकभेदस्यासत्त्वापत्ते । न द्वितीय ।

भावाभावस्वरूपत्वान्नान्योन्याभावता पृथक् ।

इति सिद्धान्तभङ्गस्य प्रसङ्गता । असत्पदस्य सद्वृत्तिधर्मावच्छिन्नलाक्षणिकत्वेन शशविषाणमसदिति वाक्यप्रामाण्योपपादने मदुक्तरीत्या लक्षणया प्रामाण्योपपादने कुत प्रद्वेष । असत्पदमुख्यार्थाभावप्रसङ्गश्चेति वाच्यम् । भावाभावस्वरूपत्वादित्यस्य यो ऽन्योन्याभावधर्मी तत्स्वरूपत्वादित्यर्थ । धर्मिता च संयोगसम्बन्धेन कुण्डबदरयोर्यादृशाधाराधेयभाव प्रत्याय्यते तद्विलक्षण घटरूपादिनिष्ठाधाराधेयभाव । तादृश एव भेदघटयोराधाराधेयभाव प्रत्याय्यते । अतो भेदस्य घटादिधर्मतया घटस्वरूपेणैव सहभाननियमेन घट एवायमिति तन्निष्ठतद्व्यक्तित्वादिवत्प्रतीयमानत्वाद्धर्मिस्वरूपत्वमभिहितम् । अत्यन्ताभावादे केवलतत्स्वरूपावगाहिप्रत्ययान्तराभावान्नञुल्लेख्यप्रती-

[1] व्यावहारिकपारमार्थिकप्रामाण्ययोरभावप्रसङ्गात् इति पाठेन भाव्यमिति भाति.

(द्वै धु) तेस्तु प्रतियोग्यधिकरणप्रतीतिविलम्बितत्वेन वस्तुप्रतीतावेव प्रतीत-स्वरूपतत्साधकाभावाद्बिना प्रमाणमधिकरणस्याभावरूपत्वकल्पने नानाधिकरणेष्वभावत्वकल्पने गौरवम्। प्रागभावत्व असत्वादिविशिष्टरूपेण नानाधिकरणानामुत्पत्तिनाशकल्पने च गौरवान्तरम्। अत्यन्ताभावस्याप्यधिकरणोत्पत्तिनाशादिना रूपान्तरेणोत्पत्तिनाशकल्पने गौरवञ्चेति संसर्गाभावस्य पृथक्त्वमाश्रितम्। उक्तयुक्त्यादीनां च 'न्यावृत्तिश्च स्वरूपता' नान्योन्याभावता पृथक्' इत्यादीनां तत्र तत्राचार्योदाहृतप्रमाणानामनुग्राहकत्वमित्युपपादितमभ्यस्तात्।

तथा चासत एवाभावात्तद्धर्मिका घटादौ यादृशो भेदस्तादृशो नास्त्येव। अत एव घटादिनाशे रूपादिवत्तद्धर्मिकभेदो नश्यत्येव। परं तु नष्टघटप्रतियोगिकभेदस्य विद्यमानघटात्मकस्य सत्त्वादेव न तस्य नष्टघटात्मकत्वापत्तिः। नष्टघटस्वरूपस्यैवाभावात् न तस्याप्येतदात्मकत्वमिति सिद्धान्तः। इत्थं च असत्स्वरूपस्यैवाभावेन तद्धर्मिकभेदाभावे सति अलीकादिपदानि सदवृत्तिधर्मरूपसद्विलक्षणत्वावच्छिन्नबोधकानि। तादृशधर्मश्च त्रैकालिकनिषेधप्रतियोगित्वम्।

यद्वा असत्पदमात्रं तादृशधर्मत्वेन तद्बोधकं भवति। अलीकादिपदानि तु तादृशप्रतियोगित्वत्वावच्छिन्नत्वेनैव तद्बोधकानि स्युः। असुरा इत्यत्र सुराहितकारित्वरूपसुरविरुद्धत्वावच्छिन्नबोधकासुरपदस्य दैत्येष्वेव मुख्यत्वम्। तद्भिन्नत्वेन घटादीनां कदाचिद्बोधकत्वेऽपि प्रचुरव्यवहारातिक्रमेण तत्रामुख्यत्वमेव। भवन्मते अज्ञानाविद्यादिपदानां भावरूपाविद्यायामेव मुख्यत्वं यथा तथाऽसत्पदं मुख्यार्थकत्वेपि नामुख्यार्थकम्। एतदेवाभिप्रेत्य **स्वकण्टकोद्धारे** असन्निष्ठो भेदो धर्मितावच्छेदकीभूतासत्त्वस्वरूप इत्यभिहितम्।

यद्वा असत्पदं सद्भेदावच्छिन्नबोधकमेव भवतु। तादृशभेदस्तु पूर्वोक्तधर्मिरहित एव। किं त्वभावान्तरवत्तादृशप्रतियोगित्वरूपासत्त्ववच्च बौद्धविशेषणत्वरूपसम्बन्धवानेव। भावाभावस्वरूपत्वादिति वाक्यं तु प्रागभावादिवद्भावभिन्न एव न भवत्यत्यन्तं भेदः, किं तु धर्मिसत्त्वे तदात्मक इत्येतावन्मात्रपरम्। उक्तभेदस्य धर्मिण एवाभावात्किमात्मकत्वं स्यात्। तथात्वेऽपि भावाभावविलक्षणत्वाभावाद्यथाश्रुतं मूलं न विरुद्ध्यते। एतदेव परिभावयितुं धर्मिस्वरूपत्वादिति विहाय भावाभावस्वरूपत्वादित्यभिहितम्। क्वचिद्बाधकसत्त्वे सङ्कोचस्य सर्वैरपि क्रियमाणत्वात्। अन्यथा सत्तादात्म्यशून्यत्वं असत्त्वमिति त्वदुक्तौ सत्तादात्म्ये अनवस्थाभयेन सत्तादात्म्यान्तरास्वीकारात् तस्याश्च स्वस्मिन्नसत्त्वात् असत्त्वपरिहाराय सत्तादात्म्यवत्सत्तादात्म्यैतदन्यतरत्वाभाव इति इति सङ्कोचस्त्वाभिमतो न स्यात्।

किञ्चाभावमात्रस्याधिकरणस्वरूपत्वं त्वयाङ्गीक्रियते। तत्र त्वन्निरुक्तसत्तादात्म्यशून्यत्वरूपासत्त्वस्याभावरूपस्य किमधिकरणात्मकत्वम्। तत्रासद्रूपाधिकरणस्यासत्त्वेवाभावात्। तत्र या गतिर्धर्मधर्मिभावादौ सैव प्रकृते गतिरस्तु। न च सत्तादात्म्यशून्यत्वमेव मम नास्ति। कस्य धर्म्यादिचिन्तेति। परं त्वसत्पदेन तद्बोधः व्यधिकरणप्रकारक एव जायत इति वाच्यम्। तर्हि अभावांश एव सत्तादात्म्यस्य प्रतियोगितया भानेंऽशे व्यधिकरणप्रकारकत्वमभ्युपेयम्। तथा सति सत्तादात्म्यशून्यत्वमेवासत्त्वमित्यत्रैव त्वया निरुक्तस्य व्याहतिर्दुर्वारा।

(द्वै यु,)'एव नासदासीदिति श्रुते परोक्तभावाभावविलक्षणत्वार्थकत्वोक्तिर्न श्रद्धेया' इत्यभिधाय श्रुतिस्थासत्पदस्य सत्तादात्म्यशून्यार्थकत्ववर्णनमप्यश्रद्धेयं स्यात् । श्रुतेस्तथात्वे व्यधिकरणप्रकारकबोधजनकत्वेनाप्रामाण्यावारणात् । न च मानान्तरेण तदुक्तिरिति वाच्यम् । तस्यैव निष्कृष्टमतत्वेन तत्रासद्बोधनिर्वाहाय तत्रासदादिपदशक्त्यादेस्तत्राभ्युपगमस्यावश्यकतया तत्खण्डनप्रयास स्वारूढवृक्षच्छेदनप्रयासतुल्य । तस्यानिष्कृष्टत्वे स्वमतेनानिर्वचनीये प्रमाणोदाहरणावसरेऽबाधितश्रुत्यर्थमनभिधाय बाधितार्थवर्णनं शिष्यप्रतारणाय वा स्यात् बालभाषणतुल्य वा ।

किं चैतन्मतेऽलीकादिपदाना कश्चिदर्थो वर्तते न वा । नो चेत्पदत्वव्याघात. । न चाप्रियत्वाद्यवच्छिन्ने शक्तत्वात्पदत्वोपपत्ति । सत्तादात्म्यशून्यत्वादिबोध लक्षणया सम्पादयतीति वाच्यम् । 'अलीक त्वप्रियेऽनृते' इति कोशविरोधापत्ते. । सत्तादात्म्यशून्यत्वस्य प्रसिद्ध्या तत्र लक्षणाग्रहादेर्भ्रान्तानामेव वक्तव्यतयाऽसदर्थकालीकपदप्रयोक्तृणा वैदिकाना लौकिकाना भ्रान्तत्वप्रसङ्गश्च । इष्टापत्तौ च सर्वेषा तत्कल्पनापेक्षया तवैव तत्कल्पन वरम् । वर्तते चेदसत्यपि पदशक्तिरागतैव । न च तान्यनिर्वचनीयशक्तान्येवेति वाच्यम् । अर्थापत्त्यवतरणात्प्राक् अनिर्वचनीयस्यासिद्धत्वेनालीकपदव्यवहारोच्छेदप्रसङ्ग । सिद्धत्वे लोकानामलीकपदव्यवहारमूलज्ञानेनालीकपदेन च तस्य सिद्धत्वेन व्यर्थस्तत्रार्थापत्त्याद्युपन्यास । न च त्रैकालिकनिषेधप्रतियोगित्वावच्छिन्नवाचीन्येव तानीति वाच्यम् । किं तादृशप्रतियोगित्वमनिर्वचनीयत्वसमनियतमुत व्यापकमन्यत्रापि वर्तते । न द्वितीय । तदाश्रयस्यासत प्रतीतिं विना तद्वृत्तित्वासिद्ध्या तत्प्रतीत्यावश्यकत्वापत्ते. । न प्रथम । तन्मात्रेणानिर्वचनीयसिद्ध्या सत्तादात्म्याशसाधनवैयर्थ्यापत्ते । न च शून्यवादिना परमार्थसदनङ्गीकारात्सत्तादात्म्यशून्यत्वाविरोधिनोऽनिर्वाच्यत्वस्य साध्यत्वे तेन तदन्येन वा अर्थान्तरतोद्भाव्येतेति तत्साधन सार्थकमिति वाच्यम् । तथापि स्वार्थानुमितौ तत्साधनस्याकिञ्चित्करत्वप्रसङ्गात् । उक्तप्रतियोगित्वे सत्तादात्म्यशून्यत्वाविरोधित्वग्रहसद्भावेऽपि बाधकाभावात् । परमार्थसद्वस्तुमात्रस्य बौद्ध प्रति साधनमात्रेण कृतार्थतया तं प्रत्यपि सत्तादात्म्यसाधनस्यानुपयोगात् । अन्यथा केनचिद्वाच्यत्वशून्यत्वोक्तौ तदविरोधित्वग्रहनिरासाय तदपि साधनीयं स्यात् । इतराव्यावर्तकत्वेन सत्तादात्म्यवाच्यत्वयो केवलान्वयित्वे विशेषाभावात् । 'मिथ्येति नासत्त्व साध्यते किं त्वनिर्वचनीयत्वम्' इति त्वत्पूर्वाचार्योक्त्यसङ्गतेश्च । असत्त्वाख्यधर्मस्यैवेदानीं त्वया प्रसिद्धीकृतत्वात् ।

यत्त्वित्यादिनाऽनूद्योक्तत्वादित्यन्तेन दूषणाभिधानं तु हेयम् । त्वदाचार्यै. 'प्रत्येक सदसत्त्वाभ्या विचारपदवीं न यद् । गाहते तदनिर्वाच्यम्' इति 'न सन्नासन्न सदसत्' इति असद्भेदव्यवहारस्य शतश कृतत्वेन तत्र प्रतियोगिज्ञान विना तद्भेदज्ञानानुपपत्तिरूपदोषस्य सञ्जतत्वात् । अन्यथा असत्पदार्थतावच्छेदकस्यैवाप्रसिद्धौ सत्तादात्म्यवदर्थकसत्पदादिक विहाय बुद्धिपूर्वक व्यधिकरणधर्मप्रकारकबोधजनकनञ्द्वयप्रयोगे स्फुटमप्रेक्षावत्त्वप्रसङ्गात् ।

एतेन 'असतोऽप्रतीतावपि असत्प्रतीयत इति परोक्तप्रतिज्ञाया व्यधिकरणप्रकारकबोधजनकत्वरूपाप्रामाण्यसमर्थनरूपखण्डनाय विजयार्था प्रवृत्ति । खण्डनं च प्रतीतिविषयत्वावच्छेदेन सत्तादात्म्यसाधनेनापि भवति' इति

(द्वै द्यु) निरस्तम्। व्यधिकरणप्रकारकत्वव्यवस्थापनस्यैव खण्डनरूपत्वे स्वपूर्वाचार्यवचनाना 'न सती नासती माया' इत्यादिपुराणश्रुतिवाक्याना असतोऽप्रतीतावपीत्यादिस्ववाक्यस्यातथात्वस्यावर्जनीयत्व। स्वपूर्वाचार्यवचनश्रुतिपुराणस्ववाक्यादेरप्यखण्डकत्व प्रथमत एव स्वगले पतितमित्यपसिद्धान्तादिना निगृहीतस्य कुत परविजयावसर। न हि प्रतीयमानसामान्य सत्तादात्म्यवदिति प्रतिज्ञाय तूष्णीं स्थितौ परस्य जयो भवति। किं तु असत प्रतीत्यङ्गीकारे तस्य प्रतीतिविषयत्वोपयुक्तधर्माभावाद्युपन्यासेन तथा प्रयोगे चागत स्ववाक्यस्याप्रामाण्यम्। अपि च त्वया प्रतीयमानत्वावच्छेदेन सत्तादात्म्यमाधने परेणापि सत्तादात्म्य न प्रतीयमानत्वव्यापकमिति प्रतिज्ञायामसत्पदप्रयोग विहाय यथा त्वया व्यवहार क्रियते तदनुसारेण तथा व्यवहार कर्तुं शक्यत इति कथ परपराजय।

यदपि 'सत्यवचा इत्यादौ प्रमाणेपि प्रयोगात्सत्यपद प्रमाणवाचीति तत्समानार्थक ऋतशब्दोपि तद्वाचीत्यतोऽनृतशब्दस्याप्रमाणवाचित्वात्तद्वाचित्वेन विहितालीकपदमप्यप्रमाणवाच्येव। अतोऽलीक त्वप्रिये अनृत इति न कोशविरोध' इति तन्मन्दम्। सत्यस्य वचो यस्येति विग्रहाश्रयणेन वा सत्यपदस्य तद्विषयके लक्षणयैव वा तादृशव्यवहारोपपत्तौ तत्रापि शक्तिकल्पने मानाभावात्। अन्यथा लक्षणोच्छेदप्रसङ्गात्। तस्मादलीकादिपदानामसद्वाचकत्वानुरोधेनासत्प्रतीतिरङ्गीकर्तव्यैव। किं चाऽवृत्तमिथ्यात्वकरजताद्यनवगाहित्वरूपप्रामाण्यक ज्ञान प्रवर्तकमिति ते मतम्। तत्र शशविषाणाज्ञाने बाधबुद्ध्युत्तरमपि तादृशप्रामाण्यस्याव्याहतत्वात्तत्र विषाणार्थिन प्रवृत्त्याद्यापत्ति। प्रामाण्यभावबुद्धेर्भ्रमत्वापत्तिश्च। शशविषाणमस्तीति वाक्यजन्यबोधोत्तर विशिष्टशशविषाणविशेष्यकास्तित्वप्रकारकज्ञानवानहमित्यनुव्यवसायविरोधश्च। व्यधिकरणप्रकारकत्वे अनुव्यवसायानादरे तु 'शशीयत्वेन विषाण प्रत्येमीत्यनुभवविरोधादखण्डासद्विषयकत्वमित्यनुपपन्नम्' इति त्वद्दूषणमप्ययुक्त स्यात्।

यत्तुक्त 'निराश्रयस्यैव धर्मस्य स्वीकारे घटातिरिक्तो घटत्वाश्रयोऽसन्निति प्रतीत्यनुरोधात् घटत्वादेरपि घटातिरिक्ताश्रय स्यात्' इति तन्मन्दम्। किमनया प्रतीत्या घटे विद्यमानस्यैव घटत्वस्यासद्वृत्तित्वमापाद्यते उतान्यादृशस्य। नाद्य। आपादकाभावात्। उक्तप्रतीतिर्हि घटातिरिक्तस्य घटत्वाश्रयस्यासत्त्व विषयीकुर्वाणा विशेषणीभूते घटत्वेप्यसत्त्व विषयीकरोत्येव। असति बाधके [1]विशिष्टविषयकत्वस्य त्यागायोगात्। न तु तस्य सत्त्वम्। घटातिरिक्तसंसृष्टघटत्वस्य घटातिरिक्ते घटत्वमसत् घटातिरिक्ते घटत्वं नास्तीति निर्विवादप्रमान्तरानुरोधेनासत्त्वस्य सिद्धत्वेन तत्र सत्त्वावगाहित्वे भवदुक्तप्रतीतेर्भ्रमत्वस्यैव प्राप्त्या तेन विषयसिद्ध्यनापादनात्। प्रमात्मकप्रतीतेस्त्वसद्घटत्वावगाहितया तस्य सद्घटावृत्तित्वात्। न द्वितीय। अत्र प्रतीयमानघटत्वतदाश्रयादीना सर्वेषामप्यसत्त्वेन तस्य वृत्तित्वापादनायोगात्। एव ज्ञेयभिन्नमसदिति प्रमा ज्ञेयभेदेऽप्यसत्त्वमवगाहते। सत्यसति कुत्रापि ज्ञेयभेदो नास्तीति प्रतीत्या तदसत्त्वस्यैव प्रमान्तरसिद्धत्वात्। तथा च ज्ञेयभिन्ने कथ ज्ञेयत्वमिति शङ्कानवकाश।

---

1 विशिष्टविषयकविधिनिषेधयोर्विशेषणविषयकत्वस्य इति पाठेन भाव्यमिति भाति।

(द्वै. द्यु) न चैवंरीत्याऽनृत 'ऋतभिन्नमसत्' इति प्रतीतिबलाद्दतभेदाश्रयम् । एवं ज्ञेयत्वादिकं चासति न सिद्धयेदिति वाच्यम् । अनृतासदादिशब्दाना पर्यायत्वेन तत्पदोल्लेखिप्रतीत्या सद्भेदपुरस्कारेणैवासतो भानेन तन्निष्ठसद्भेदे असत्त्वावगाहिन [1]असत्त्वे सत्त्वं नास्तीति प्रमान्तरस्याभावेन सत्यभूतसद्भेदाश्रयत्वमेवासत सेत्स्यति । एवं 'एतावन्तं कालं यच्छशविषाणमभनिषि तदसदेव' इति प्रतीत्या ज्ञानतद्विषयत्वादौ तावत्कालसत्त्वस्य तद्विषयीभूतशशविषाणादावसत्त्वस्यैव विषयीकृतत्वात् एतज्ज्ञानविषये शशविषाणे विषयत्वं नास्तीति तदसत्त्वग्राहकप्रतीत्यन्तराभावाच्च तन्निष्ठज्ञेयत्वादीना सत्त्वमेव सिद्धयति । न च युक्त्या शशविषाणादौ विषयत्वं नास्ति असति असत्त्वं नास्तीति प्रमोदेतीति वाच्यम् । तादृशयुक्तिजन्यबोधे असतो भानाभानाभ्यां व्याहत्या असति ज्ञानविषयत्वाभावावगाहित्वे तस्य प्रमात्वस्यैवासिद्धे । एवमसत्त्वेन भासमाने असत्त्वाभावावगाहित्वे आहार्यत्वप्राप्त्या तस्य युक्तिजत्वप्रमात्वयोरयोगाच्च । न च सद्भेद एव नास्तीति त्वया वक्तु शक्यम् । तथात्वे सर्वसत्यतापातात् । अनिर्वचनीयस्याप्यसिद्धतया पारमार्थिकव्यावहारिकसाधारणसत्त्वावच्छिन्नभेद एव सिद्ध इति वक्तुमशक्यत्वेन पारमार्थिकसत्त्वस्यैव केवलान्वयित्वप्रसक्ते । असदनृतादिपदाना पदत्वव्याघातात् भ्रममात्रजनकत्वप्रसक्त्या प्रेक्षावता तत्पदव्यवहारायोगापाताच्च । न च सत्तादात्म्यशून्यत्वमेवासत्पदार्थतावच्छेदकमिति वाच्यम् । तर्हि तस्य सत्त्वयावृत्तेरसदाश्रयत्वस्यैव प्राप्त्याऽसतो विषयतादेर्दुर्वारतैव ।

किञ्च सत्तादात्म्यशून्यत्वेपि यथा सत्तादात्म्यस्य विषयत्वादिकं तथाऽसतोपि चेत्किं बाधकम् । न च सत्तादात्म्यवत्सत्तादात्म्यैतदन्यतरत्वाभाव एवाविषयत्वादौ प्रयोजक इति वाच्यम् । कुत एतदभ्युपगम । सत्तादात्म्यस्य विषयतादेरनुभवसिद्धत्वादिति चेन्न । अत्राप्यनुभवस्य तुल्यत्वेनैतद्धटितान्यतमत्वाभाव एव प्रयोजकोऽस्तु । एतदन्यतमत्वाभावाश्रय क इति चेत् यस्य ज्ञानं नास्ति स एवेत्यवेहि । मास्त्वेव वा तदभावस्तत एव ज्ञानविषयत्वं केवलान्वय्यस्तु । न च सत्तादात्म्यं सत्स्वरूपत्वाज्ज्ञानविषय इति वाच्यम् । सत्तादात्म्यशून्ये सत्तादात्म्यस्वरूपाङ्गीकारवत् मदभिमतासत्यप्यङ्गीकर्तुं शक्यत्वात् । तस्मादसतोपि ज्ञानविषयत्वं युक्तमेव ।

ज्ञानविषयत्वासत्त्वादिराश्रयं विना कथं तिष्ठति इति चेत् । तिष्ठतीत्यस्य कोऽर्थ । यदि कालसम्बन्धस्तर्हि नैयायिकनये गगनादेरिवास्तु । कालसम्बन्धे देशवृत्तित्वस्याप्रयोजकत्वात् । अत एव ध्वसप्रागभावयो. प्रतियोगिसमानदेशत्वादाश्रयनाशजन्यरूपादिनाशो देशे विशेषणतया अवर्तमान एव कालवृत्ति । अत एव रूपनाशवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं पृथिवीलक्षणमिति नैयायिकसिद्धान्त सङ्गच्छते । यदि च तद्धर्मता कथं स्यात् निरूपकाभावादिति तदा निरूपकाभावेपि प्रातीतिकी धर्मताऽस्तु । सयोगसमवायाद्यवच्छिन्नधर्मत्वादीना परस्परसमवायान्तरवैचित्र्यवदत्रापि तदुभयवैलक्षण्यसम्भवात् ।

प्रातीतिकत्वं त्वनुभवादिसिद्धमभावादिनिष्ठ[2]धर्मितासाधारणं घटादिघटत्वादिनिष्ठधर्मतावैजात्यमेव । अनुभवानादरे तु रूपादिनिष्ठघटधर्मताघटादिनिष्ठभूतलधर्मताऽभावनिष्ठभूतलधर्मत्वादीनामपि वैलक्षण्यासिद्धिप्रसङ्ग ।

---

[1] असत्यवृत्तिसद्भेदे सत्त्वं इति पाठेन भाव्यमिति भाति ।  [2] धर्मता इति पाठेन भाव्यमिति भाति.

(द्वै द्यु) एतदभिप्रायेणैव सुधायां जिज्ञासाधिकरणे 'बौद्ध एव धर्मधर्मिभाव' इति असत्स्थले उपपादितम्। लिङ्गपादसुधायां च 'अभावस्थले प्रतीतिक एव सम्बन्ध' इत्युपपादितम्।

स च धर्मधर्मिभाव विशेषणविशेष्यभावशब्देन प्राचीननैयायिकैर्व्यवहृत। चक्षु संयुक्ते भूतले घटाभावस्य विशेषणत्वात्तादृशविशेष्यत्वादिना घटाभाववद्भूतल भूतले घटाभाव इति विलक्षणप्रतीतिजनकतया उपपादित। फलीभूतज्ञानीयप्रकारताविशेष्यतयोर्ज्ञानपूर्वमपि विद्यमानयो सम्बन्धत्व तत्राभिमतमिति चेदस्तु का क्षति। प्रकृतेप्यसद्विषयकज्ञानीयविशेष्यत्वप्रकारत्वयोरेव धर्मधर्मिभावरूपताभ्युपगमसम्भवात्। असति धर्मिताया अपि विशेष्यतारूपत्वात्। न चोक्तप्रकारत्वादीना धर्मधर्मिभावात्मकत्वे इद रजतमिति प्रत्ययानुरोधाद्रजतत्व शुक्तिधर्म स्यादिति वाच्यम्। नेद रजतमिति बाधानुरोधेन तस्य धर्मधर्मिभावरूपत्वाकल्पनात्। अभावासदादिस्थले तु बाधानुदयेन तत्कल्पनात्। अत एव पातञ्जलयोगसूत्रभाष्ये टीकाकृता वाचस्पतिना 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्प' इति सूत्रभावविवरणावसरे 'साङ्ख्यमते भावाभावयो वस्तुकृतसम्बन्धाभावात् बुद्ध्या विकल्पित एव सम्बन्ध। स चाबाधित एव लौकिकानामिति तत्प्रत्ययो न विपर्यय किन्तु विकल्प एव' इत्युपपादितम्।

यदत्र नव्यनैयायिकैः 'अभावप्रतीतौ तत्तत्कालीनतत्तद्भूतलादिक सम्बन्धितया भासते' इत्युच्यते तदुत्तरत्र निराकरिष्याम। इत्थ च सत्तादात्म्यशून्यत्वरूपासत्त्वस्य निराश्रयस्यैव तद्धर्मत्ववदनुभवबलाद्विषयत्वात्यन्ताभावप्रतियोगितादीनामपि तथात्वे न किञ्चिदसमञ्जसम्। संविदेव हि भगवती सर्वत्र शरणमिति।

यदपि 'नरविषाणादिशब्दादत्यन्तासत प्रतीत्यसिद्धे' इत्यादि तदप्ययुक्तम्। नरविषाणमित्यादिसमासनिष्ठैकार्थीभावरूपसमासशक्त्या वा तदनङ्गीकारेऽपि तादृशपदसमभिव्याहाररूपाकाङ्क्षाबलेन वा तात्पर्यग्रहादिरूपदोषमहितेन विशिष्टबोधसम्भवात्। तज्ज्ञाननिष्ठविशिष्टनिरूपितविषयितानिरूपकस्याभावत्वादेव तस्यासद्विषयकत्वसम्भवात्।

यदत्रोक्त 'अखण्डासद्विषयत्वे बोधस्य निर्विकल्पकत्वापत्ति। शृङ्ग नरीय न वेति संशयनिवृत्त्यनुपपत्ति। शशीयत्वेन शृङ्ग जानामीत्यनुभवालापापत्ति' इति तदसत्प्रतीतिसिद्धान्तापरिज्ञानात्। तथा हि, नरविषाण नरस्य विषाणमित्यादिवाक्येन नरपदादीना स्वार्थे शक्तिज्ञानादिसहकृतेन जायते यो बोध तत्रासत्त्वबोधकासहकृतत्वे असत्पदादिसत्त्वे वा तदसत्त्वे वा तादृशसामग्रीबलात्तत्र सत्त्व भासते। एतत्तत्त्व चाप्रामाणिकप्रतियोगिकात्यन्ताभावविचारेऽभिहितम्। तथा च सत्त्वविशिष्टशशविषाण प्रत्येमीत्यनुभवसिद्धा काचन विषयिता वर्तते। सा दोषप्रयोज्या। भ्रमस्य दोषजन्यत्वनियमात्। शशप्रकारितानिरूपिता विषाणविषयितापि तथैव दोषप्रयोज्या। तत्र संसर्गमात्रस्यासत्त्वम्।

न चैव व्यधिकरणप्रकारकत्वप्रसङ्गेनापसिद्धान्त। भ्रमे भासमानसंसर्गप्रतियोगित्वं चेद्व्यधिकरणत्वं तादृशव्यधिकरणप्रकारकत्वमिष्टमेव। सुधायां प्रत्यक्षस्थले 'समीपस्थयोराम्रपनसयोर्यत्राऽऽम्रे पनसतादात्म्य भासते

(द्वै घु ) तत्र तत्तादात्म्यमात्रमसत् । प्रकारीभूतपनसस्य चक्षुसन्निकृष्टस्यैव भानात् । उत्तरत्र तादात्म्यमात्रस्य एक एवाय चूत नेमावेकौ इति बाधितत्वानुभवात्' इत्यनेन सत्प्रकारकस्य संसर्गासत्त्वमात्रेण भ्रमत्वस्योपपादितत्वात् । अत्रापि 'नास्ति कुत्रापि शशविषाणं' 'विषाण नैव शशीयम्' इति ससर्गस्य तद्घटितविशिष्टस्य च बाधितत्वानुभवात् । तादृशससर्गे बाधानुभवात्प्राक् तद्बुद्धे न 'विषाण शशीयम्' इति बुद्धिविरोधित्व वर्तत एवेति न तस्यानुपपत्ति । नापि शशीयत्वेन विषाणमनुभवामीत्यनुभवविरोध ।

न च ससर्गोऽपि सन्नेव स्यात् । तत्सबन्धावच्छिन्नतत्प्रकारनिष्ठप्रतियोगिताकाभाव एव विशेष्ये बाधबुद्ध्या विषयीक्रियतामिति वाच्यम् । अत्यन्ताभावस्याप्रामाणिकप्रतियोगिकत्वनियमस्यैव पूर्वमुपपादितत्वेन धर्मसम्बन्धादिनिष्ठप्रतियोगितावच्छेदकत्वादिप्रक्रियाया अप्रामाणिकत्वस्य व्यवस्थापनीयतया तत्र विषाणे शशीयत्व नास्तीति भासमानात्यन्ताभावस्याप्रामाणिकससर्गप्रतियोगित्वेनैव पर्यवसानेन संसर्गासत्त्वस्यैव सिद्धे । तत्ससृष्टशशीयत्वविषाणादीनामपि तत्सिद्धे ।

प्रामाणिकप्रतियोगिताकात्यन्ताभावस्याभ्युपगमपक्षेऽपि अत्र भासमानससर्गस्यान्यत्र सत्त्वावगाहिमानान्तरस्याभावात् 'विषाणमपि सत्' 'शशीयत्वं च सत्' 'पर तु नानयोस्सम्बन्धस्सन्' इति सम्बन्धासत्त्वस्यैव प्रत्ययाच्च । ननु 'सम्बन्धोपि सन्' 'परन्तु नानयोरस्ति' इति सम्बन्धेपि सत्यत्वावगाहिप्रत्ययोऽस्तीति चेत् अस्तु । तथापि 'नानयो सन्' इति तत्प्रतियोगिकतदनुयोगिकसंसर्गासत्त्वविषयीकरणस्य तत्प्रत्ययेऽनिवारणात् । न च संसर्गनिष्ठतत्प्रतियोगिकत्वादावसत्त्व विषयीक्रियतामिति वाच्यम् । प्रथमप्रत्यये भासमानार्थेषु मध्ये कस्यचिदसत्त्वावगाहिप्रतीत्या तत्राभासमानप्रतियोगित्वादौ तद्विषयीकरणायोगात् । प्रतियोगित्वादीना विशिष्टबुद्धिविषयताङ्गीकारे तस्यासत्त्वेप्यसदभिमतसिद्धे । प्रत्यक्षे असन्निकृष्टससर्गभानायोगेन दोषबलादेव असत्संसर्गभानवत् शाब्दे अयोग्यान्वयभानाय पदेषु दोषबलाच्छक्त्यन्तराधानस्याऽवश्यकत्वे तादृशशक्तेरसद्विषयकत्वस्यैव युक्तत्वात् । सत्ससर्गस्य कस्यचिद्भानाङ्गीकारे विनिगमकाभावेन सर्वेषामपि सत्सम्बन्धाना भानप्रसङ्गात् । न चात्रापि तथा । असत्त्वयमिति प्रभेदाभावेनात्र विद्यमानसासर्गिकविषयतानिरूपकं नास्तीत्यस्यैवासत्ससर्गभानपदार्थत्वाद्विनिगमनाविरहाप्रसक्ते । सत्सु विनिगमनाविरहादेवास्य पक्षस्याश्रितत्वेनात्र तस्याप्रसक्ते । अन्यथा नैयायिकनये सम्बन्धघटकतया कालासिद्धिप्रसङ्गात् ।

ननु यदि योग्येतरान्वितार्थे पदाना शक्तिरिति अयोग्यान्वयबोधार्थं पदे शक्त्यन्तराधानस्वीकारे तादृशान्वयवदर्थानामेव पदशक्यत्वादयोग्यान्वयसाहित्येन बोध्यमानार्थेऽपि शक्त्यन्तराधानप्राप्त्या तत्र बोध्यमानाना सर्वेषा असत्त्वस्यैव प्राप्त्या असन्मात्रस्यातिवादप्रसङ्ग इति मैवम् । तत्रापि प्रत्यक्षस्थले शक्त्यन्तराधानस्याऽवश्यकत्वे उक्तदोषतौल्यात् । शब्दस्थले शक्त्यन्तराधानस्यावश्यकतया सर्वांशेऽपि प्रातिभासिकभानस्य व्यधिकरणप्रकारकत्वस्य चापत्तेस्तौल्याच्च । यदंशे बाधितत्वानुभव तन्मात्रे शक्त्यन्तराधानेन समाधानस्येहापि साम्यात् ।

(द्वै द्यु ) अपि चान्वयांशे शक्ते कुब्जत्वात्स्वरूपसत्येवोपयोगिनी। प्रकारांशे तु ज्ञातैवेति तव मतस्थिति। तत्र विषाणादौ तत्पदशक्तेर्भासमानान्वयप्रतियोगिविषयिण्या अन्यादृश्या एव भाने विषाणं विषाणपदवाच्य मित्यादे कारणीभूतज्ञानस्य सर्वानुभवविरुद्धभ्रमत्वापत्तेरवश्य पदान्तरसन्निधानेनाऽधेयशक्तिस्वीकार आवश्यके तत्स्थाने दोषसहकारेणासद्विषयकतादृशशक्त्यन्तराधानमेव युक्तम्। उत्तरकाले शशविषाणादे स्वरूपतो बाधितत्वानुभवात्। सिद्धान्तरीतिस्त्वन्यत्र प्रकटीकृता तत एवानुसन्धेया। तस्माच्छाब्दभ्रमेऽसत सदवगाहित्व-मेव प्रत्यक्षादिप्रमाणामसदवगाहित्ववादिना युक्तम्। असत सत्त्वेनावगाहित्व मतश्च असत्त्वेनावगाहित्वमित्येकरूप-भ्रमत्वस्य सर्वसाधारण्यात्। प्रत्यक्षेऽनिर्वचनीयत्वावगाहित्वाद्बाधितार्थावगाहित्व शाब्दानुमित्यादौ व्यधिकरणप्रका-रकत्वमभ्युपगम्यान्यादृशभ्रमत्वमित्यङ्गीकारे तच्च भ्रमप्रमाभिन्नवृत्त्यन्तरमित्यङ्गीकारे चाप्रामाणिकद्वैविध्यकल्पना-प्रयुक्तगौरवं स्फुटमेव।

इदमत्रावधेयम्। सिद्धान्ते शशविषाणं नास्तीत्यादिवाक्याना सर्वसिद्धप्रामाण्य दुरुपपादम्। नञर्था-भावांशे प्रतियोगितया शशविषाणभानस्य दुरुपपादत्वात्। तथा हि, किं शशविषाणयोरन्वय सहजशक्त्या भासते उताऽहितशक्त्या अथ वा शक्तिं विनैव अथ वा लक्षणया। नाद्य। पदाना योग्येतरान्वय एव सहज-शक्ते सत्त्वेनात्र प्रतीयमानान्वयस्य तथात्वाभावात्। न द्वितीय। दोषाणामेवायोग्यशक्त्याधायकत्वेन तदधीन-बोधस्याप्रमाणत्वेन क्लृप्तयोक्तवाक्याप्रामाण्यापातात्। न तृतीय। शक्तिं विना समभिव्याहाररूपाकाङ्क्षाबला-देव अन्वयभानाङ्गीकारे पदवृत्तिविषयस्यैव शाब्दे भानमिति नियमस्य त्यक्ततयाऽन्वये शक्तेरेवासिद्धिप्रसङ्गात्। अत एव न चतुर्थ। सर्वत्र लक्षणयैव सम्भवे तत्र शक्तेरेवासिद्धिप्रसङ्गादपसिद्धान्ताच्चेति।

इदमत्र तत्त्वम्। शशविषाणपदात् प्रतियोग्युपस्थित्यनन्तर नञर्थान्वयबोधो वाच्य। तत्र समभिव्याहार-विशेषशशाद्यर्थतात्पर्यज्ञानादीनामेव हि शक्त्यन्तराधायकत्वम्। दोषस्य अननुगतत्वात्। तत्र नञाद्यसमभिव्याहा-रस्थले सत्त्वेनैव तादृशान्वयादिक भासते। ज्ञानसामान्यसामग्र्या सत्त्वभासस्यौत्सर्गिकत्वात्। निषेधबोधकसाम-ग्रीसमावेशे तु प्रतियोग्युपस्थापकसामग्र्या सत्त्वासत्त्वौदासीन्येनैव प्रतियोगी प्रथमतो भासते। अनन्तरं च निषेधबुद्ध्या विषयीक्रियत इत्युक्तमप्रामाणिकप्रतियोगिकात्यन्ताभावविचारे। तथा दोषप्रयोज्यसत्त्वविषयतैव भ्रमत्वनियामिका। अत उक्तस्थले समभिव्याहारादिभिराहितशक्त्यैव फलीभूतबोधे प्रतियोगिकोटिनिविष्टतया [1]योग्यान्वयभानेऽपि सत्त्वेन तस्य विषयीकरणात्तस्य भ्रमत्वाभावान्न तद्वाक्यस्याप्रामाण्यप्रसक्तिरिति।

ननु तथापि शशविषाणादिक संसृष्टरूपेणासदित्युक्तम्। तथात्वे संसृष्टत्वविशिष्टस्यासत्त्व शुद्धस्य सत्त्व-मित्येकस्यैव सदसदात्मकत्वमभ्युपगतं स्यात्। न चैतद्युक्तम्। अत्यन्तासत सत्तादात्म्ये अत्यन्तासत्त्वविरोधात्। तत्र शुद्धतादात्म्ये बीजाभावाच्च। अतस्तत्र शुद्धतादात्म्यापन्नतयोत्पत्तेरावश्यकत्वे अनिर्वचनीयवाद एव पर्यवसानं स्यात्। बाधितस्य सत्तादात्म्यापन्नतयोत्पत्तेरेव तन्सिद्धान्तादिति चेन्मैवम्। यत शशविषाणमित्यादिबोधे विशिष्ट-

[1] अयोग्यान्वयभानेपि सत्त्वेन तस्याविषयीकरणात्तस्य इति पाठेन भाव्यमिति भाति.

द्वै यु )व्यवहारनिर्वाहिकैका विषयिता। शश विषाणमित्यादिबोधे व्यवहारनिर्वाहिकाश्चापरा ।ताश्चैकज्ञानस्वरूपा अपि विशेषशक्त्या अशाशिभावापन्ना भवन्ति। समूहालम्बने तु महाविषयतांशभूता काश्चन विषयिता वर्तन्ते। अतस्तासा वैलक्षण्यादिव्यवस्था घटते। विषयिताना ज्ञानस्वरूपत्वेव,दिना नैयायिकेनाप्येकज्ञानात्मक[1]विषयताना प्रकारताविशेष्यतारूपत्वव्यवस्थावत् अद्वैतिनामप्येकब्रह्मात्यन्ताभिन्नाना सत्यज्ञानानन्दादीना कल्पितभेदेन घटादौ सदशो भासते आनन्दाशो न भासते इति व्यवस्थावच्च [2]तत्राशभूतविषयतामात्रनिरूपकाणा शशादीना सत्त्वमेव। विशिष्टव्यवहारनिर्वाहकाशिभूतविषयितानिरूपकविशिष्टासत्ससर्गविषयितानिरूपकमसदेव। तादृश च न शुद्धविषाणादितादात्म्यापन्नम्। येनानिर्वचनीयवाद स्यात्। तत्र विशिष्टोपत्तौ मानाभावात्। नष्टपदार्थावगाहिशाब्दबोधस्थले विशेष्यस्याभावेन व्यवहारान्तरगोचरसूक्ष्मावस्थामात्रेणोत्पत्तिकल्पने मानाभावेनानिर्वचनीयपदार्थोत्पत्तेर्वक्तुमशक्यत्वात्। तत्रानिर्वचनीयोत्पत्त्यङ्गीकारे [3]तदानीमुत्पन्नमिदानीं नष्टमिति प्रतीत्यापत्तेः तद्ग्रहप्रतिबन्धकान्तरकल्पने उत्पत्तिविनाशनत्स मग्रयादिरूपानन्तपदार्थकल्पने गौरवात् [4]त्रैकालिकनिषेधप्रतियोगिना कालसम्बन्धघटितोत्पत्त्यङ्गीकारे व्याहतेश्च तस्यानिर्वचनीयवादस्य दुष्टत्वात्। एव ससृष्टरूपेण विषाणादिक मिथ्येति प्राचा व्यवहारस्याप्ययमेवार्थ । [5]सासर्गिकविषयतागर्भिताशिविशेषरूपविषयितानिरूपकमसदिति। इदमेव ह्यसद्विषयकत्व ज्ञानस्य। [6]सन्मात्रनिरूपिताशविशेषरूपविषयताङ्गीकारान्नासन्मात्रख्यात्यापत्ति। न वा शशादिपदेन तदुल्लेखानुपपत्ति.।

अनुमतमेतत्तार्किकाणामपि। यतस्तैर्नीलपर्वत काञ्चनमय इति ज्ञाने धर्मितावच्छेदकिताया प्रकारितान्यत्वे पर्वतो नीलो न वेति सशयप्रतिबन्धकत्वानुरोधेन पर्वतो नील इति ज्ञानान्तरविषयितासजातीया नील प्रकारितानिरूपितपर्वतविशेष्यिता विशेषणज्ञानजन्यतावच्छेदकत्वानुरोधेन पर्वतत्वनिरूपिता काचन प्रकारिता तन्निरूपिता च काचनानवच्छिन्नविशेष्यिता पर्वतनिरूपिताऽसा च परस्परमवच्छेद्यावच्छेदकभावापन्नत्व तज्ज्ञानस्य समूहालम्बनवैलक्षण्याय स्वीक्रियते। एव तज्ज्ञानीयविषयतात्वरूपसामान्यधर्मावच्छिन्ननिरूपितनिरूपकतापर्याप्त्यधिकरणमसत्। प्रत्येक विषयितानिरूपकाणि सन्तीत्यपि स्वीकृतम्। इत्थं च तदीयावच्छेद्यावच्छेदकभावस्य निराकरिष्यमाणत्वात् तत्स्थाने विषयितानामशाशिभावो मया स्वीकृत। तदभिमतपर्याप्तेर्विचारावसरत्वात् विषयितानिरूपक तु विशिष्टमिति प्रमाया स्वीकृतम्। भ्रमविषयितानिरूपक तु नास्तीति तदसत् इति। ते तु भ्रमविषयितानिरूपकतापर्याप्त्यधिकरणमप्रसिद्धमिति नास्तीति च शतश कालासम्बद्धे त्रैकालिकनिषेधप्रतियो-

[1] विषयिताना प्रकारिताविशेष्यिता इति पाठेन भाव्यमिति भाति

[2] तत्राशभूतविषयिता इति पाठेन भाव्यमिति भाति

[3] तदाना नष्टमिदानीमुत्पन्नमिति इति पाठेन भाव्यमिति भाति

[4] त्रैकालिकनिषेधप्रतियोगिन इति पाठेन भाव्यमिति भाति

[5] सासर्गिकविषयिता इति पाठेन भाव्यमिति भाति

[6] सन्मात्रनिरूपिताशविशेषरूपविषयिता इति पाठेन भाव्यमिति भाति

(द्वै. भू.) गिनि नादृशविषयितानिरूपकत्व व्यवहरन्त तन्मूलभूतज्ञानवन्तोपि 'असत्र 'ज्ञानविशेषतानिरूपकं' इति स्वव्याहतमेव वदन्तो 'विषयत्व सत्त्वव्याप्यम्' इत्यादिरीत्या स्ववचनमेव व्याकुर्वते। मन्मते तु सार्वलौकिकवैदिक-व्यवहारतन्मूलभूताबाधितानुभवानुरोधेन तादृशविषयितानिरूपकेऽत्यन्ताभावप्रतियोगित्वादिना ज्ञानविषयत्वमेव स्वीक्रियत इति न किञ्चिदसमञ्जसम्।

एतेन 'किञ्च न शशशृङ्गादिशब्दात्' इत्यादिकं निरस्तम्। शशादिशब्दोल्लेखप्रयोजकीभूतशशादिनिरूपित-विषयितानामपि समर्थितत्वात्। विस्तरस्तु दूषणावसरे दूरीकरिष्यत इत्यलम्।

तस्मान्न व्यधिकरणप्रकारकबोधजनकत्व युक्तं शशविषाणमस्तीति वाक्यानाम्। न ह्यनिर्वचनीयबोधजनक-त्वम्। तत्सिद्धेः कुत्राप्यव्याप्यभावेन 'यदसत्र तत्प्रतीयते' इति व्याप्तेः शशविषाणादौ भ्रमज्ञानस्यार्थापत्तेः प्राक् सुस्थिरत्वात्। तस्यानिर्वचनीयत्वसाधनाय प्रयत्नेऽनवस्था। शशविषाणादिरूपानिर्वचनीयोत्पत्त्यङ्गीकारस्य गौरवा दिना दूषितत्वाच्च।

यदपि स्वमते तद्विशिष्टे तत्सत्तामभ्युपगम्य विशिष्टानिर्वचनीयमाने 'विशेषणीभूतशशीयत्वादेरपि भानम्' इति समाधानं तत्तुच्छम्। त्वन्मते उक्तरीत्याश्रयणेऽबाध्यत्वविशिष्टेऽप्यबाध्यत्वप्राप्त्या द्वैतहानिप्रसङ्गात्। न ह्यबाध्यत्वधर्मसम्बन्धसाम्ये शुद्धादस्य विशेषः। तादात्म्यस्योभयत्र साम्यात्। तदुपलक्षितस्वरूपं न विशिष्टमिति चेत् तद्धर्मसम्बन्धसाम्ये विशिष्टस्वरूपस्य न तथात्वमिति वचनस्य रिक्तत्वात्। तस्माद्व्यधिकरणप्रकारकत्वानिर्व-चनीयविषयकत्वयोरयोगाच्छशविषाणमित्यादिवाक्यजन्यबोधोऽसद्विषयक एवेति स्थितम्। एवं पूर्वं शशविषाणा-देरुपस्थितत्वे तदुत्तरतत्पदस्य तच्छक्ततात्प्युपपद्यते। तत्पदस्य बुद्धिस्थविषयत्वावच्छिन्नशक्तत्वात्। असतोऽपि तथात्वे तच्छक्तत्वे बाधकाभावाद्विषयितानिरूपकत्ववच्छक्तिनिरूपकत्वेऽपि बाधकाभावादित्यन्यत्र विस्तरः।

यस्त्वत्र वैयात्येनान्यथाविज्ञातस्येत्यादिटीकादूषणोद्यमः स चोत्तरटीकाऽपरिज्ञानमूलक एवेति।

(गु. टि.) ॥ बाधकञ्चेति ॥ प्राचीनसाधकोक्त्या बाधकोक्तेः समुच्चयद्योतकश्चशब्दः।

असतः अपरोक्षप्रतीत्यनङ्गीकारे बाधकोक्तिः

(टी.) अथैवं ब्रूयात् 'अस्त्येवामतोऽपि परोक्षप्रतीतिगोचरता। अपरोक्षप्रतीतिगोचरतां तु न मन्ये' इति। तत्रापि 'असतः प्रतीतिं विनाऽसद्वैलक्षण्यज्ञानानुपपत्तेः' इत्येवोत्तरम्। यद्यत्यन्तासतोऽ-परोक्षप्रतीतिविषयता न स्यात् तर्हि प्रातिभासिकतयाऽर्थक्रियानर्हस्य रजतस्य यदसत्प्राति-भासिकवैलक्षण्यं तदपरोक्षज्ञानं भ्रान्तस्य नोपपद्येत। तथा चाप्रवृत्तिः प्रसज्येतेति।

(वि. टि.) ॥ तर्हीति ॥ यद्यप्यसद्वैलक्षण्यज्ञानं नासदपरोक्षप्रतीतिसापेक्षम्। स्तम्भे पिशाचवैलक्षण्या-परोक्षज्ञानवत्प्रतियोगिज्ञानमात्रेणोपपत्तेः। यद्यपि चाप्रामाण्यशङ्काशून्यं प्रवृत्तिविषये इष्टतावच्छेदकवैशिष्ट्यावगा-हिज्ञानमेव प्रवर्तकं तथापि प्रतियोगिविशिष्टासद्वैलक्षण्यापरोक्षज्ञानस्यानुभवसिद्धतया असतोऽप्यपरोक्षप्रतीतिविषयत्वं

[1] ज्ञानविशेष्यिता इति पाठेन भाव्यमिति भाति

(वि.टि.) दुर्वारमित्यत्र इष्टतावच्छेदकवैशिष्ट्यावगाहिज्ञानवदनाभासविषयत्वज्ञानमपि निष्कम्पप्रवृत्त्यङ्गम् । अन्यथा असदेव रजतं, प्रतीतं रजतं प्रातिभासिकमेवेति ज्ञानदशायामपि प्रवृत्त्यापत्तिरित्यत्र च तात्पर्यम् ।

(रा टि) पूर्वमसद्वैलक्षण्येत्यत्र षष्ठीतत्पुरुषमाश्रित्यासत्प्रतीत्यनङ्गीकारे बाधकोक्तिपरतया व्याख्यायाधुनाऽसच्च तद्वैलक्षण्यञ्चेति कर्मधारयमाश्रित्य ज्ञानपदञ्चापरोक्षज्ञानपरं वैलक्षण्यप्रतियोगि च प्रातिभासिकमिति चोपेत्यासतोऽपरोक्षप्रतीत्यनङ्गीकारे बाधकोक्तिपरतयाऽप्यवतार्य व्याचष्टे ॥ तत्राप्यसत इत्यादिना ॥ शुक्तिरूप्ये प्रतीतस्य प्रातिभासिकवैलक्षण्यस्यासत्त्वोपपादनायार्थक्रियानर्हस्येति हेतुगर्भविशेषणम् । तत्र हेतुः प्रातिभासिकतयेति । ननु प्रातिभासिके शुक्तिरूप्ये प्रातिभासिकवैलक्षण्यमसदस्तु तथापि तद्भ्रान्तस्य न प्रतीयत एव येनासतस्तस्यापरोक्षधीरस्तीति स्यादित्यत आह ॥ तथा चेति ॥ तस्याऽभाने सतीत्यर्थः । अर्थक्रियानर्हं प्रातिभासिकं शुक्तिरूप्यं तथैव चेद्भ्रान्तः प्रतीयात्तदा तत्र न प्रवर्तेतेत्यर्थः ।

(वे टि) असतो वैलक्षण्यमसद्वैलक्षण्यमिति विग्रहाङ्गीकारेण व्याख्यायेदानीमसच्च तद्वैलक्षण्यञ्चेति विग्रहमभिप्रेत्यापि व्याचष्टे ॥ यद्यत्यन्तासत इति ॥ प्रातिभासिकतयाऽर्थक्रियानर्हस्य रजतस्येत्यनेन रजते प्रातिभासिकवैलक्षण्यप्रतीतिरावश्यिकी । अन्यथा प्रवृत्त्यनुपपत्तेरित्युक्तं भवति ।

इदमत्राऽऽकूतम् । शुक्तिरूप्यादिकं परेण प्रातिभासिकमङ्गीक्रियते । तच्च प्रतीतिवेलायां किं प्रातिभासिकत्वेन प्रतीयते उत तद्विलक्षणत्वेन । नाद्य । रूप्यस्य प्रातिभासिकत्वज्ञाने प्रवृत्त्यभावापत्तेः । न हि प्रातीतिकं क्वचिदर्थक्रियासूपयुज्यमानं दृष्टम् । द्वितीये तत्प्रातिभासिकवैलक्षण्यं सदुतासदिति प्रष्टव्यम् । नाद्यः । प्रातिभासिके प्रातिभासिकवैलक्षण्यस्य सत्त्वायोगात् । न द्वितीय । प्रातिभासिके प्रातिभासिकवैलक्षण्यस्यासतो भ्रान्तिरूपापरोक्षज्ञानविषयत्वेऽसतोऽपरोक्षज्ञानविषयत्वप्राप्तेः । न च तत्र प्रातिभासिकवैलक्षण्यं नासत्प्रतीयते । किं त्वनिर्वचनीयमेवेति वाच्यम् । तथात्वे प्रातिभासिकवैलक्षण्यस्यापि शुक्तिरूप्यवत्प्रातिभासिकत्वेन तत्प्रतीतेरावश्यकत्वे तदपि किं प्रातिभासिकत्वेन प्रतीयते । उत तद्वैलक्षण्येनेत्यादिप्रकारेण दूषणाभिधाने तत्राप्यनिर्वचनीयत्वाङ्गीकारेऽनवस्था स्यादिति ।

केचित्तु 'यद्यप्यसद्वैलक्षण्यज्ञानं नासदपरोक्षप्रतीतिसापेक्षम् । स्तम्भे पिशाचवैलक्षण्यापरोक्षज्ञानवत्प्रतियोगिज्ञानमात्रेणोपपत्तेः । तथापि प्रतियोगिविशिष्टासद्वैलक्षण्यापरोक्षज्ञानस्यानुभवसिद्धतया असतोऽप्यपरोक्षप्रतीतिविषयत्वं दुर्वारमित्यत्र तात्पर्यम्' इत्याहुः । तच्चिन्त्यम् । न ह्यत्रासद्वैलक्षण्यापरोक्षज्ञानेऽसदपरोक्षज्ञानं प्रतियोगिज्ञानत्वेनापेक्ष्यत इत्युच्यते । येनेदमुपपन्नं स्यात् । अपि तूक्तरीत्या रजतेऽसदेव प्रातिभासिकवैलक्षण्यमिदं रजतमिति साक्षात्कारे विषय इत्यसतोऽपि प्रातिभासिकवैलक्षण्यस्यापरोक्षप्रतीतिरागतेति । किञ्च यदि प्रतियोगिविशिष्टासद्वैलक्षण्यापरोक्षज्ञाने प्रतियोगिनोऽसतोऽपि विषयत्वं तर्हि स्तम्भे पिशाचवैलक्षण्यापरोक्षज्ञाने पिशाचस्याप्यपरोक्षं स्यात् । न च परोक्षज्ञानविषय एव पिशाचस्तटस्थस्सन्नपरोक्षज्ञानविषयवैलक्षण्यं व्यावर्तयतीति वाच्यम् ।

(वै टि) असदपि पदार्थप्रतीतितटस्थं सत् वैलक्षण्यं व्यावर्तयतीत्युपपत्तावसतोऽपरोक्षज्ञानाप्राप्तेः। तस्मादिदम-साम्प्रदायिकमेव तात्पर्यकल्पनमिति।

ननु रजतसाक्षात्कारे रजते प्रातिभासिकवैलक्षण्यं न विषयः। येनासतोऽप्यपरोक्षज्ञानं स्यात्। अपि तु रजतत्वमात्रम्। प्रवृत्तिविषये इष्टतावच्छेदकवैशिष्ट्यावगाहित्वं तस्यैव प्रवर्तकत्वादन्यस्य नुपयोगादिति चेन्न। इदं रजतं प्रातिभासिकमिति ज्ञानेपि प्रवृत्त्यभावेन। न ह्यस्य साक्षात्प्रवृत्तौ प्रतिबन्धकत्वं प्रवृत्तिविषयाभावानवगाहि-त्वात्। अपि तु प्रवृत्तिजनकप्रातिभासिकवैलक्षण्यज्ञानविघटकत्वेनैव। तथा च प्रवर्तकापरोक्षज्ञाने रजतत्वादिवद-सदपि प्रातिभासिकवैलक्षण्यं प्रकारत्वेन प्रतिभासत इत्यङ्गीकार्यमिति भावः।

(द्वै यु) तदेतत्सर्वमभिप्रेत्य असतः परोक्षप्रतीतिविषयतामाश्रित्य शङ्कते ॥ अथैवमिति ॥ अस्त्येवेत्येव-कारस्तस्याऽवश्यकत्वमाह ॥ अपरोक्षेति ॥ न मन्य इति ॥ तस्येन्द्रियसन्निकर्षाधीनत्वेन सति तदयोगादिति भावः। असच्च तत् वैलक्षण्यं चेति कर्मधारयः। वैलक्षण्यपदं प्रातिभासिकवैलक्षण्यपरमित्याशयेनाह ॥ यदीति ॥ इष्टापत्तिरित्यत आह ॥ तथा चेति ॥ अयं भावः। परमते न तावद्रजतत्वप्रकारकज्ञानमात्रं प्रवर्तकं प्रातिभासिकरजत-साधारणम्। तस्येष्टताऽनवच्छेदकत्वात्। न च प्रकृते इष्टत्वं इष्टसाधनत्वरूपमेव। सुखदुःखाभावयोरन्यतरत्वाभा-वेन साक्षादिष्टत्वाभावात्। साधनता च स्वरूपयोग्यतैव। न तूपधायकत्वम्। उपधायकत्वस्य फलोत्पत्तेः प्राक् सर्वत्र प्रतिबन्धकसत्त्वादिशङ्कया सन्दिग्धत्वेन तन्निश्चयायोगेनेष्टसाधनत्वनिश्चयाधीनप्रवृत्तिविलयप्रसङ्गात्। तथा च स्वरूपयोग्यता कोमलदण्डादिवत्प्रातिभासिकरजतेऽपि स्वीक्रियत इति अनतिप्रसक्तत्वात्कथं रजतत्वं नेष्टसाधनतावच्छेदकमिति वाच्यम्। दण्डेन कोमलतादशाया घटाजननेपि दृढत्वदशाया तेनैव घटोत्पत्तेरानु-भाविकत्ववदसञ्जातबाधग्रहविषयेणापि प्रातिभासिकरजतेन कदाचिदपि रजतोचितार्थक्रियाऽजननेन तत्र स्वरूपयो-ग्यताया मानाभावात्। अन्यथा द्रव्यत्वप्रमेयत्वादीनामपि रजतसाध्यार्थक्रियासाधनतावच्छेदकत्वापातात्। तस्मा-त्प्रातिभासिकभेदविशिष्टरजतत्वमेवेष्टसाधनतावच्छेदकं वाच्यम्। अतस्तत्र रजते प्रातिभासिकवैलक्षण्यभानं स्वीकर्तव्यम्। तच्च न पारमार्थिकम्। अद्वैतहानेः। रजते आरोपितस्य ब्रह्मस्वरूपत्वायोगात्। नापि व्यावहारि-कम्। 'इदं प्रातिभासिकमेव न वास्तवम्' इति ब्रह्मप्रमेतरबाध्यत्वात्। नापि प्रातिभासिकम्। यत्र तस्यारोपस्तस्य रजतस्य [1]प्रातिभासिकतयाऽज्ञानावच्छेदकतया तदवच्छिन्नाज्ञानपरिणामत्वायोगात्। शुक्त्यवच्छिन्नाज्ञानपरिणा-मत्वाङ्गीकारे साक्षात्तदवच्छिन्नचित्यारोपितत्वापत्त्या रजतधर्मत्वायोगः। [2]अन्यथैककपालावच्छिन्नचिदारोपितयो घटकपालरूपयोः परस्परधर्मिधर्मभावापत्तेः। इत्थं च सत्तात्रयाभावादसत्त्वमेव वक्तव्यमिति असतः प्रातिभासिक-वैलक्षण्यस्यापरोक्षप्रतीतिविषयत्वमागतमेव। एवं तत्र रजते भासमानं प्रातिभासिकवैलक्षण्यं सत्त्वेन भासते न वा। आद्ये तत्र भासमानं सत्त्वमपि सत्त्वेनैव प्रतीयत इत्यङ्गीकारे तदप्येवं तदप्येवमित्यनवस्था। द्वितीये चाऽगत्यैवासतोऽप्यपरोक्षप्रतीतिः। सत्त्वेनाप्रतीयमानत्वादेव तस्यासत्त्वसिद्धेरिति।

---

[1] प्रातिभासिकतयाऽज्ञानानवच्छेदकतया इति पाठेन भाव्यमिति भाति

[2] अन्यथैककपालावच्छिन्नचिदारोपितयो इति पाठेन भाव्यमिति भाति.

(द्वै द्यु) अत्र वदन्ति। इद रजतमिति भ्रमे रजते प्रातिभासिकवैलक्षण्यभानाङ्गीकारे बीजाभावः। रजतत्वमात्रस्येष्टतावच्छेदकत्वात्। न च प्रातिभासिकरजतादेरपि रजतोचितार्थक्रियाकारित्वापत्ति। इष्टापत्ते। अन्यथा स्वाप्नकामिनीसम्भोगादेर्व्यावहारिकधातूत्सर्जनादिजनकत्वस्य स्वाप्नवृक्षादे स्वसमानसत्ताकफलादिकार्यजनकत्वस्य चानुपपत्ते। एव बहि प्रतीनवशोरगादेर्भयकम्पादिजनकत्वाभावापत्ते। न च तत्र तज्ज्ञानमेव जनकमिति युक्तम्। मन्मते प्रातिभासिकाकाराविद्यावृत्तेस्तत्प्रतिबिम्बितत्वविशिष्टचिद्रूपज्ञानस्य च प्रातिभासिकतया तावतापि प्रातिभासिकस्यार्थक्रियाकारिताया अवर्जनीयतया विनिगमनाविरहेण विषयीभूतोरगादेरपि कारणत्वाक्षते। न चैकौषधिविशेषे आरोपितादौषधिविशेषाद्रोगविशेषनिवृत्त्यापत्तिरिति वाच्यम्। क्वचित्तथाभावोपलम्भेन तत्स्थलीयरोगनिवृत्तेर्यादृच्छिकत्वकल्पनापेक्षया तज्जन्यत्वस्यैव कल्पयितुमुचितत्वेनेष्टत्वात्। क्वचित् स्थलान्तरेपि तेन कार्यजननाभावस्य व्यावहारिकेणापि तेन कार्याजननवददृष्टविशेषादिना प्रतिबन्धेनैवोपपत्ते।

अथ वा रजतत्वससर्ग एव व्यावहारिकप्रातिभासिकसाधारणे एक वैजात्यम्। तदवच्छिन्नसंसर्गस्तु नेष्टतावच्छेदकतावच्छेदक। व्यावहारिकससर्गमात्रनिष्ठ अपरवैजात्यम्। तदवच्छिन्नस्त्विष्टजनकतावच्छेदकतावच्छेदक। तेन सम्बन्धेन रजतत्वभानादेव प्रवृत्ते। न च प्रातिभासिके रजते भासमानो रजतत्वससर्ग कथ व्यावहारिक स्यात्। प्रातिभासिकानुयोगिकत्वादिति वाच्यम्। प्रातिभासिकानुयोगिकत्वस्य सम्बन्धाव्यावहारिकतायामतन्त्रत्वात्। अन्यथा प्रातिभासिकरजतनिष्ठव्यावहारिकवैलक्षण्यस्यापि प्रातिभासिकत्वापत्त्या व्यावहारिकवैलक्षण्यस्याप्यसिद्धिप्रसङ्गात्।

यद्वा व्यावहारिकसत्त्वविशिष्टरजतत्वमेवेष्टतावच्छेदकमस्तु। व्यावहारिकत्वमधिष्ठानगत स्वय व्यावहारिकमेव रजते भासत इति प्रवृत्त्युपपत्ति। तथा च प्रवृत्त्यनुरोधात्प्रातिभासिकवैलक्षण्य न भासत एव। अवश्यमित्थमेवाभ्युपेयम्। अन्यथा तस्य भेदत्वमात्ररूपेणेष्टतावच्छेदककोटिप्रविष्टत्वेऽतिप्रसङ्गात्प्रातिभासिकत्वावच्छिन्नप्रतियोगिकभेदत्वेनैव तथात्वस्याऽवश्यकत्वे तेनैव रूपेण प्रवर्तकज्ञाने भानस्याऽवश्यकत्वप्राप्त्या प्रातिभासिकत्वाद्यनुपस्थितिदशाया प्रतियोगितावच्छेदकविशिष्टज्ञानाभावेन तद्वैलक्षण्यास्फूर्त्या प्रवृत्त्यभावापत्ते।

यदपि 'प्रातिभासिकवैलक्षण्यभानपक्षे तस्य रजतावच्छिन्नाज्ञानकार्यत्वाद्ययोगादसत्त्वमेव' इति तदप्यसत्। तस्य शुक्त्यज्ञानकार्यताया एवाभ्युपगमात्। न च तस्य रजतधर्मत्वायोग इति वाच्यम्। तदवच्छिन्नाज्ञानकार्यस्य तद्धर्मत्वमिति नियमाभावात्। तथात्वे रूपादीनामपि घटादीनामिव मूलाज्ञानकार्याणा तद्धर्मत्वानुपपत्तिप्रसङ्गात्। मूलाज्ञानस्य चिन्मात्राश्रितत्वेन घटाद्यनवच्छिन्नत्वात्। न च प्रातिभासिक इय व्यवस्थेति युक्तम्। स्वाप्नाना सर्वेषा मूलाज्ञानकार्यत्वात्।

नन्वेव कपालघटतन्त्वादीनामविशेषेण चित्यारोपितत्वेन तन्तोरपि घटनादात्म्यवारणाय तदवच्छिन्न ज्ञानपरिणतत्वमेव तत्तादात्म्यनियामक वाच्यम्। अवस्थाऽज्ञानानामप्यनादितया पूर्वं विद्यमानाना भाविकपालाद्यवच्छि

(द्वि यु ) न्तत्वे बाधकाभाव त् । अन्यथा नित्यत्वेन संयोगाद्यभावस्याऽऽगन्तुकमूलाद्यवच्छिन्नत्वाभावापत्ते । न चोक्तरीत्या अवस्थाऽज्ञानजन्यत्वे प्रातिभासिकत्वापत्ति शुक्तिरजतादेरिति वाच्यम् , अवच्छेदकनियम्यत्वायावस्थाऽज्ञानसहितमूलाज्ञानपरिणामत्वाभ्युपगमेन शुक्तिरजतादेर्मूलाज्ञानमात्रजन्यत्वाभ्युपगमेन वैलक्षण्यसम्भवादिति चेत् । मैवम् । मूलाज्ञानपरिणामत्वमात्रेणोपपत्तावत्रस्थाऽज्ञानपरिणामकत्वस्याप्यङ्गीकारे गौरवात् । कपालादेस्तद्दशाज्ञानावच्छेदकत्वेऽपि तत्स्वभावस्यैवाश्रयणीयतया घटाद्यवच्छेदकतायामपि तस्यैव नियामकत्वसम्भवात् । एव च तदवच्छिन्नाज्ञानजन्यत्वस्य तद्धर्मताया तत्तादात्म्ये वा प्रयोजकत्वविरहान्न प्रातिभासिकवैलक्षण्यस्य रजतावच्छिन्नाज्ञानजन्यत्वाभावेन तद्धर्मत्वाभाव आपादयितु शक्य । प्रातिभासिकवैलक्षण्यविशिष्टरजतस्यैव शुक्त्यज्ञानकार्यत्वोपगमात् भीषणत्वादिविशिष्टस्यैव भुजङ्गस्य रज्ज्वज्ञानकार्यतावत् ।

यदप्युक्तं 'तद्वैलक्षण्यं कथ भासते' इति तत्र सत्त्वेनैव तस्य भानाङ्गीकारात् । वस्तुतस्तु प्रातिभासिकवैलक्षण्य न भासते । रजतमेव सत्त्वेन भासते । सद्रजतमिति प्रतीतेरिति वस्तुस्थिति । न च तत्सत्त्वस्यापि सत्त्वेन भानेऽनवस्थाभयेन तत्र सत्त्वस्याप्रतीतौ तदसदेवेति प्राप्तमेवेति वाच्यम् । अधिष्ठानवृत्तिसत्त्वस्य तत्र स्वरूपत एव भानाङ्गीकारेणानवस्थाभावात् । अधिष्ठानवृत्तिसत्त्वस्य व्यावहारिकत्वात् । अन्यथा सत्त्वस्यापि पुन सत्त्वेन भानावश्यकत्वे त्वन्मतेऽप्यनवस्थाया दुर्वारत्वापत्ते । तस्मादयुक्तमेवोक्त सर्वमिति ।

अत्रोच्यते । यत्तावदुक्त 'प्रातिभासिकरजते रजतोचितक्रियास्वरूपयोग्यत्वं स्वीक्रियते' इति तदसत् । तथात्वे तत्र प्रातिभासिकत्वग्रहोत्तरमपि इष्टसाधनत्वव्याप्यरजतत्वग्रहानपायेनेष्टसाधनत्वग्रहद्वारा प्रवृत्त्यापत्तेर्दुर्वारत्वात् । न च प्रातिभासिकत्वस्य कोमलदण्डत्वस्येवानुपधायकत्वव्याप्यतया तन्निश्चयेन न प्रवृत्ति । अनुपधायकत्वनिश्चयस्य प्रवृत्तिविरोधित्वादिति वाच्यम् । स्वाप्नकामिनीसम्भोगतादृशरजतादौ उपधायकत्वस्य त्वयैव भाषितत्वेन प्रातिभासिकत्वस्य त्वन्मतेऽनुपधायकत्वव्याप्यत्वस्य वक्तुमशक्यत्वात् । न च तत्र मिथ्यात्वग्रह एव प्रवृत्तिविरोधीति वाच्यम् । मिथ्यात्वस्य [1]कार्येऽनुपधायकत्वस्य तज्जनकत्वस्य वा भाव प्रत्यव्याप्यत्वे तद्ग्रहविरोधित्व एव बीजाभावात् । अन्यथा मिथ्यात्वाभावग्रहस्यापि विरोधितापातात् । अविशेषात् । न चानुभवबलादेव तस्य तथात्वमस्त्विति वाच्यम् । अनुभवस्य कारणत्वाभावग्रहसम्पादकतयैव विरोधिताया । अनुभवसिद्धत्वेन स्वातन्त्र्येण विरोधिताया एवानुभवविरोधित्वात् ।

एतेन 'अज्ञातमिथ्यात्वकरजतादिज्ञानत्वमेव प्रवर्तकतावच्छेदकम् । अतोऽबाध्यत्वस्य तत्तुल्यन्यायापन्नव्यवहारकालाबाध्यत्वस्य वा प्रत्यक्षागोचरतया घटादिज्ञानेषु तद्धटि प्रामाण्यस्य साक्षिणा गृहीतुमशक्यत्वात्प्रवृत्त्यनुपपत्तिरूपो दोषो नास्ति' इति समाधान निरस्तम् । मिथ्यात्वस्य प्रवृत्तिप्रयोजकेष्टसाधनत्वाव्यावर्तकत्वेन [2]तत्तज्ज्ञाननिवेशे बीजाभावस्योक्तत्वात् । किं चाज्ञ मिथ्यात्वकरजतज्ञानमेव प्रवर्तकमित्यस्य पुरोवर्तिरजत-

---

[1] कार्योपधायकत्वस्य तज्जनकत्वस्य वा अभावं प्रत्यव्याप्यत्वे तद्ग्रहस्य प्रवृत्तिविरोधित्व इति पाठेन भाव्यमिति भाति ।

[2] तद्ज्ञाननिवेशे इति पाठेन भाव्यमिति भाति ।

(द्वै घु )विशेष्यकमिथ्यात्वप्रकारकज्ञानाभावेनैकक्षणावच्छिन्नत्वघटितसामानाधिकरण्यप्रत्यासत्त्या विशिष्ट रजतज्ञानमिति निष्कर्ष अङ्गीकर्तव्य । अन्यथा पुरुषान्तरसम्बन्धिन तत्पुरुषीय कालान्तरीण रजतमिथ्यात्वज्ञान चादाय तज्ज्ञानत्वावच्छिन्नभेदनिवेशे प्रवर्तकतावच्छेदकधर्मशरीरस्यैव दुर्लभत्वापत्ते । अत्यन्ताभाव निवेश्य तस्य व्याप्यवृत्तित्वाङ्गीकारे मिथ्यात्वग्रहदशायामपि प्रवृत्त्यापत्ते । तत्कालतत्पुरुषनिवेशे चाननुगमापत्ते । इत्थ च मिथ्यात्वविषयकत्वस्यैव ज्ञाने अप्रामाण्यरूपतया तस्य विषयमिथ्यात्वग्रह एव पर्यवसानादप्रामाण्यज्ञानानास्कन्दितरजतादिज्ञानमेव प्रवर्तकं न प्रामाण्यनिश्चयापेक्षेति स्फुट प्रामाण्यस्वतस्त्वसिद्धान्तपरित्याग ।

न चाज्ञातमिथ्यात्वकत्व भावरूपाज्ञानघटितमेव । तथा च रजतविषयकत्वादिक ज्ञानग्राहकसाक्षिवेद्यम् । रजतादेर्ज्ञानावच्छेदकतया साक्षिभास्यत्वात् । [1]मिथ्यात्वज्ञान त्वज्ञानावच्छेदकतया साक्षिभास्यम् । 'सर्वं ज्ञाततयाऽज्ञाततया वा साक्षिवेद्यम्' इति विवरणोक्तेरिति विशिष्टप्रामाण्यावगाहित्व ज्ञानग्राहकस्य प्राप्तमिति नापसिद्धान्त इति वाच्यम् । यतो रजतादिग्रहोत्तर 'इदं मिथ्यात्वेन न जानामि । रजतं तु पश्यामि' इति व्यवहारमूलभूतग्रहस्तव नैयायिकस्य च समान । परं त्वय भावरूपाज्ञानविषयत्वे युवयोर्विप्रतिपत्तिगोचर । न चाय प्रामाण्यनिश्चयरूप । तथात्वे तस्येदमित्थमेवेति विषयावधारणप्राप्त्या विषयसशयानुपपत्तिप्रसङ्गात् । तन्मूलज्ञानप्रामाण्यसंशयाभावात् । तथा चास्य प्रामाण्यनिश्चयरूपता भवताऽङ्गीकृता कथमुपपद्यते । न च प्रामाण्यनिश्चयोत्तरमपि तन्नाशोत्तर पुन सशय स्वत प्रामाण्यवादिन सिद्ध इति वाच्यम् । स्यादिद यदि प्रामाण्यविषयक स्यात् । न चैवम् । तथात्वे नैयायिकस्य प्रथमतस्तादृशाकारज्ञानस्य सिद्धत्वेन प्रामाण्यपरतस्त्वविचारारम्भस्यैव साहसिकत्वापत्ते । न च तादृशाकारज्ञान नैयायिकस्यासिद्धमिति वाच्यम् । प्राथमिकप्रत्यक्षे यो यो धर्मो न भासते तेन रूपेण न जानामीति ग्रहोत्पत्तौ विवादाभावात् । अन्यथा घटदर्शनोत्तर घटत्वेनेम जानामि न पटत्वेनेति प्रत्ययस्याप्यभावप्रसङ्गात् । पटत्वेनेममद्राक्षं न वेति सशयस्य अद्राक्षमेवेति विपर्ययस्य चाप्यापातात् । न च रजतं प्रमिणोमीत्येव मन्मते प्राथमिकज्ञानाकार । [2]तन्नैयायिकसिद्ध इति वाच्यम् । मिथ्यात्वेनागृहीतरजताद्यवगाहित्वस्यैव प्रामाण्यरूपत्वे तद्ग्रहावश्यकत्वे तन्मूलकतादृशाकारत्वस्यापि नैयायिकस्य प्राप्त्याऽस्य स्वतो ग्राह्यत्वविप्रतिपत्तिगोचरप्रामाण्यरूपत्वाभावस्यैवोच्यमानत्वात् । न च भावरूपाज्ञानस्य तन्मते अभावात् कथं तद्घटितप्रामाण्यभान नैयायिकस्योच्यत इति वाच्यम् । प्रामाण्यशरीरे भावरूपाज्ञानस्य तत्त्वेन निवेशे तत्स्वरूपस्यैव नैयायिकस्यासिद्ध्या तत्र स्वतस्त्वपरतस्त्वविवादस्य दूरोत्सारितत्वापत्त्या ज्ञानविरुद्धत्वेन निवेशनीयत्वेनोक्तदोषस्य दृढत्वात् ।

किं चाज्ञात यन्मिथ्यात्व तदाश्रयरजतावगाहित्वं प्रामाण्यमुत मिथ्यात्वेनाज्ञातविषयीभूतरजतावगाहित्वं वा । नाद्य । सत्यरजतज्ञाने लोकाना [3]प्रामाण्यव्यवहारप्रसङ्गात् । न च तदपि वस्तुतो मिथ्येति वाच्यम् ।

---

[1] मिथ्यात्व त्वज्ञानावच्छेदकतया इति पाठेन भाव्यमिति भाति

[2] स नैयायिकसिद्ध इति पाठेन भाव्यमिति भाति, [3]प्रामाण्यव्यवहाराभावप्रसङ्गात् इति पाठेन भाव्यमिति भाति,

(द्वै द्यु) तस्य त्वत्सिद्धान्तत्वेऽपि लोकानां सत्यरजते मिथ्यात्वाभावस्यैव गृहीतत्वेन प्रामाण्यव्यवहाराभावप्रसङ्गात्। भ्रम एव पूर्वक्षणे इदं प्रमाणमिति व्यवहारप्रसङ्गाच्च। अज्ञातरूपमात्रावगाहिनि ज्ञाने [1]उक्ताप्रामाण्याभावापाताच्च। न द्वितीय। रजतभ्रमकाले तस्य मिथ्यात्वेनाज्ञाततयोक्तधर्मस्य भ्रमसाधारणस्य प्रामाण्यरूपत्वायोगात्। अपि चेद मिथ्या न वेति सन्देहदशायामपि भावरूपाज्ञानस्य त्वन्मते निर्विवादतया तद्धटितोक्तप्रामाण्यनिश्चयात्प्रवारण-प्रसङ्ग। किं चोक्तरूप यदि प्रामाण्य तर्हि तुल्ययुक्त्या सत्यत्वेन मिथ्यात्वाभावेन वाऽगृह्यमाणरजताद्यव-गाहित्व भ्रमत्व स्यादिति प्रामाण्यग्रहवेलाया निश्चयेनाप्रामाण्यभानप्रसङ्ग। तथा च युगपत्प्रवृत्त्यप्रवृत्त्योरापत्ते। अप्रामाण्यस्वतस्त्व च स्यात्। एवं चोक्तरीत्याऽनुपपत्तौ प्रवर्तकप्रामाण्यशरीरेऽपि विषये प्रातिभासिकवैलक्षण्य-निवेशावश्यकत्वे तद्धानिर्निर्वाहायापि रजतभ्रमप्रमादौ रजते प्रातिभासिकवैलक्षण्यभानाभ्युपगमस्यावश्यकता।

ननु रजतादिज्ञानत्वमेव प्रवर्तकतावच्छेदकमस्तु। रजतमात्रस्येष्टस्वरूपयोग्यत्वात्। न च तत्र मिथ्यात्व-ग्रहोत्तरमपि प्रवृत्त्यापत्तिरिति वाच्यम्। रजताभावप्रत्यक्षस्यैव रजतमिथ्यात्वग्रहरूपतया तेन रजतोपादानाज्ञान नाशपूर्वकं रजतस्य नाशितत्वादेव न तत्र नष्टघटादाविव प्रवृत्तिरिति चेन्न। अनुमानशब्दादिना मिथ्यात्वनिश्चयोत्तर प्रवृत्त्यापत्तेरवारणात्। दोषाधीनरजतप्रतीतेरनुवृत्तत्वेन रजतस्यानष्टत्वात्।

यदपि 'प्रातिभासिकादपि यदृच्छया कार्यदर्शनात्तस्यापि स्वरूपयोग्यत्वम्' इति। तदप्यसत्। यदृच्छ-यैवेदं जातं नानेनेत्यबाधितानुभवविरोधेन तस्याकारणत्वात्। अन्यथा यदृच्छयेत्यस्याभावप्रसङ्गात्। तस्मात्केव-लरजतादेर्न कारणत्वमिति प्रातिभासिकवैलक्षण्यं जनकतावच्छेदककोटौ निवेशनीयमेव। न च स्वाप्नकामिन्या धातूत्सर्गकारणत्व न स्यादिति वाच्यम्। इष्टापत्ते। तज्ज्ञानस्यैव कारणत्वात्। न च विनिगमकाभाव। कामि-न्यसत्त्वदशायामपि उत्कटरागादिना कामिनीस्मरणादिनापि तदुत्पत्त्या ज्ञानकारणताया क्लृप्तत्वात्। अन्यथा स्वाप्नशरीर एव कामिन्याश्लेषादिसत्त्वात् तत्रैव धातूत्सर्गं विहाय बहिः शरीरे तथात्वे बीजाभाव। अत एव रजतत्वापेक्षया रजतज्ञानत्वस्य कारणतावच्छेदकत्वे गौरवमप्यकिञ्चित्करम्। एवं स्वप्नफलादिकमपि साक्षादेवा-विद्याकार्यं न वृक्षादिद्वारेति न कस्यापि प्रातिभासिकस्य कारणत्वम्। अन्यथा स्वप्ने जलसेकादिरूपक्लृप्तसह-कार्यभावे तदुत्पत्त्यभावापत्ते। न च यादृशजातिविशेषविशिष्टस्य स्वप्न एव भान तज्ज्ञानकारणताया अक्लृप्तत्वेन सुखदु खकार्यविशेषे तस्यैव कारणत्व लाघवात्सिद्ध्यतीति वाच्यम्। जागरे कदाचिदप्यननुभूते तत्कारणसंस्कारा-भावेन स्वप्ने दर्शनस्यैवाभावात्। 'देशे दिगन्तरे च प्रत्यनुभूतं पुन पुन प्रत्यनुभवति' इति श्रुतेश्च। 'स्मृतिरूप परत्र पूर्वदृष्टावभासोऽध्यास' इति वदद्भिस्त्वदाचार्यैरपि अध्यासस्य कारणत्रयजन्यताया नियमनाच्च।

कथञ्चिदङ्गीकारेऽपि सजातीयेषु ज्ञानकारणकत्वदर्शने तत्कार्यविशेषेषु तज्ज्ञानकारणकत्वस्यैव कल्पयितु मुचितत्वात्। अन्यथाऽतीतलिङ्गमौनिश्लोकादिस्थले ज्ञानकारणत क्लृप्त्या सर्वत्र लिङ्गज्ञानत्वशब्दज्ञानत्वादिना सर्व-सिद्धा ज्ञानकारणता न स्यात्। वर्तमानलिङ्गादिस्थले विनिगमनाविरहेण लिङ्गादिकारणताया अप्यावश्यकतापत्ति

[1] उक्तप्रामाण्याभावापाताच्च इति पाठेन भाव्यमिति भाति,

(द्वै यु) किञ्च स्वप्नमात्रदृष्टवस्त्वधीनत्वेन भवदुक्तसुखादिकार्यविशेषे तस्य तज्ज्ञानस्य वा कारणत्वं न कल्प्यते। अन्यत्र तस्याक्लृप्तत्वात्। स्वाप्नान्वयव्यतिरेकप्रतीतेर्भ्रमत्वेन कारणत्वासिद्धेः। किं तु कार्यमात्रजनकत्वेन क्लृप्ता-दृष्टविशेषादेरेवेति वक्तुं शक्यम्।

न च रजतादिज्ञानस्यापि प्रातिभासिकत्वात्तस्य जनकत्वेपि प्रातिभासिकस्यापि कारणत्वमागतमेवेति वाच्यम्। ज्ञानस्य बाधवैधुर्येण प्रातिभासिकत्वस्यासिद्धेः। न च 'रजतं तज्ज्ञानं चोच्छिन्नम्' इति बाधप्रत्ययोऽस्त्येवेति वाच्यम्। तस्य ज्ञाने विनाशावगाहित्वेन त्रैकालिकनिषेधप्रतियोगित्वानवगाहनात्। तथात्वे 'रजत-ज्ञानमपि कदाचिदपि नास्ति' इति बुद्ध्यापत्तेः। न हि तथानुभवो लोकानाम्। अन्यथेदमाकारज्ञानमुच्छिन्न-मिति व्यवहारानुसारादिदमाकारवृत्तेरपि प्रातिभासिकत्वापत्तेः। न चोच्छिन्नमित्यस्य नष्टार्थकत्वे रजते [1]तदन्यथा-नुपपत्तिः। तस्य सिद्धान्ते असत्त्वादिति वाच्यम्। मन्मते रजतनाशाप्रतीतेः तादृशव्यवहारसत्त्वे यथासम्भव-मुक्तवाक्ये उच्छिन्नपदस्यार्थद्वयेन सामञ्जस्यात्। न च शुक्त्यज्ञानस्य ब्रह्मज्ञानेतरबाध्यतया प्रातिभासिकस्य रजताद्युपादानतयाऽर्थक्रियाकारित्वमस्तीति वाच्यम्। अस्य रजतानिर्वचनीयत्वसिद्ध्युत्तरकालिकत्वात्। अज्ञा-नस्वरूपस्यैव ममासिद्धेश्च। अस्तु वा कस्यचित्प्रातिभासिकस्य तद्यथायथम्। रजतादीनामभिमतकटकादिकार्य-विशेषजनकताव्याप्यशरीरे तु प्रातिभासिकव्यावर्तकविशेषणमावश्यकमेव। प्रातिभासिकरजतस्य तादृशकार्यविशेषं प्रति कदाप्यकारणत्वात्। सत्यरजतादिप्रतीत्युत्तरेष्टसाधनताग्रहमूलकप्रवृत्तेरभ्रान्तिमूलकत्वस्य सर्वसिद्धत्वात्।

यदपि 'सर्वत्र पूर्वं प्रातिभासिकत्वग्रहानियमात्तदवच्छिन्नभेदो न गृहीतुं शक्यः' इति। तदसत्। प्राति-भासिकवैलक्षण्यपदेन प्रातिभासिकव्यावृत्तिप्रयोजकस्य तदवृत्तिधर्मविशेषस्य विवक्षितत्वात्। तच्च व्यावहारिकसत्त्वं तत्समनियतं तद्व्याप्यधर्मान्तरं वेत्यन्यदेतत्।

यदपि 'तादृशवैलक्षण्यस्य रजते भानपक्षे शुक्त्यज्ञानकार्यत्वात्प्रातिभासिकत्वमेव' इत्यभिहितम्। तदसत्। तस्य रजताज्ञानकार्यस्यापि शुक्त्यज्ञानोपादानकस्य रजतधर्मत्वाङ्गीकारेऽपि तस्य तत्कालोत्पन्नस्य रजतनिष्ठेष्टसाधन-तावच्छेदककोट्यप्रविष्टतया तज्ज्ञानेनेष्टसाधनत्वग्रहायोगेन प्रवृत्त्यनुपपत्तिः। तत्साधारणरूपेण प्रातिभासिकवैल-क्षण्यस्य जनकतावच्छेदककोटौ निवेशे रजतत्ववत्तस्यापि प्रातिभासिकनिष्ठतया तद्घटितधर्मस्य जनकतावच्छेदक-त्वायोगः। तत्रापि प्रातिभासिकवैलक्षण्यस्य प्रातिभासिकतादृशवैलक्षण्यव्यावर्तनाय जनकतावच्छेदककोटौ निवेशे तद्ग्रहं विना पुनः प्रवृत्त्ययोगात् तत्रापि पुनस्तादृशवैलक्षण्यान्तराङ्गीकारे जनकतावच्छेदककोटौ अनवस्थित-विशेषणपरम्परानिवेशेन तस्य दुर्ग्रहतया प्रमाधीनप्रवृत्तिविलयापत्तेः। तस्मात्तस्यासत्त्वमङ्गीकृत्य मन्मते असद्रज-तभानपक्षे वक्ष्यमाणरीत्या दोषः परिहर्तव्य इति असत्। प्रातिभासिकवैलक्षण्यस्यापरोक्षविषयता दुर्वारैव। अपि च रजते भासमानप्रातिभासिकवैलक्षण्यं प्रातिभासिकं नोपगन्तुं शक्यम्। स्वस्मिन् स्वसमानसत्ताकस्वभेदस्याभ्यु-

---

[1] तदनुपपत्ति इति पाठेन भाव्यमिति भाति।

(द्धे द्यु) पगन्तुमशक्यत्वात्। अन्यथा घटेपि स्वसमानसत्ताकघटभेदस्य सत्त्वापातात्। प्रातिभासिकस्य प्रातिभासिकवैलक्षण्याविरोधप्राप्त्या घटवृत्तिरूपज्ञानस्य रसज्ञान इवेव प्रातिभासिकत्वबुद्धेस्तद्विलक्षणत्वग्रहानिवर्तकतापत्तेः। तस्य व्यावहारिकत्वपारमार्थिकत्वे तु पूर्वमेव निरस्ते इति बलादसत्त्वमेवापतितम्।

यदपि 'इदंवृत्तिसत्त्वससर्गो रजते अध्यस्यते। सत्त्वस्य तत्संसर्गस्य वा सत्त्वेन भानं तु नापेक्षितम्। अन्यथा तवापि तद्दोषप्रसङ्ग' इति। तदसत्। रजतत्वमात्रस्य जनकतावच्छेदकत्वेऽतिप्रसङ्गात्तत्कोटौ सत्त्वस्य निवेशे तत्र व्यावहारिकप्रातिभासिकसाधारणरूपावच्छिन्नसंसर्गेण सत्त्वनिवेशे प्रातिभासिकरजतस्यापि कारणत्वप्रसङ्गात् व्यावहारिकमात्ररूपावच्छिन्नसंसर्गेण तन्निवेशे रजते तेन सम्बन्धेन सत्त्वाप्रतीत्या कारणत्वग्रहायोगेन प्रवृत्त्यभावापातात्। अतो व्यावहारिकप्रातिभासिकसाधारणरूपावच्छिन्नसंसर्गेण भानमङ्गीकृत्य प्रातिभासिकव्यावर्तकरूपभानेनैव प्रवृत्तिनिर्वाहे कर्तव्ये उपपादितरीत्या असतोऽपरोक्षप्रतीतिविषयत्वं दुर्वारम्।

किं चेदन्त्वरजतसंसर्गस्य वा सत्त्वरजतसंसर्गस्य वा रजते भासमानप्रातिभासिकवैलक्षण्यस्य वा सत्त्वेन [1]भानाङ्गीकारे सत्तादात्म्यापन्नस्वरूपस्य सत्त्वेन प्रतीत्यर्हत्वस्याभावेन सद्रूपत्वस्याप्यभावेनासत्त्वस्यावर्जनीयतया असतोऽपरोक्षप्रतीतिविषयता दुर्वारा। सत्त्वेन प्रतीत्यङ्गीकारे तत्र भासमानसत्त्वसंसर्गस्य तत्संसृष्टसत्त्वस्य वा सत्त्वेन भानानङ्गीकारे पुनस्तदवस्थः प्रसङ्गः। पुनस्तस्यापि तथात्वाङ्गीकारे अनवस्था। यत्र पर्यवसानं तस्यैवासत्त्वम्। न चेयमनवस्था प्रामाणिकी। येनानवस्थितविषयधाराया भानं स्वीकर्तुमुचितम्। न चेदं रजतमिति भ्रमे तादृशसंसर्गादौ [2]सत्त्वाभावेऽपि तत्संसर्गः सन्निति प्रतीत्यन्तरबलात्तत्र सत्त्वसिद्धिरिति वाच्यम्। एतदतिरिक्ततन्मात्रावगाहिप्रत्यक्षाभावात्। शाब्दानुमित्योस्तु शशविषाणसत्त्वावगाहिप्रत्ययाविशेषपरिहारस्याशक्यत्वात्। न चेदन्त्वरजतत्वयोः संसर्गे यत्सत्तादात्म्यं वर्तते तत्र सत्तादात्म्यान्तरं न स्वीक्रियत एव। तदसत्त्वं दुर्वारमिति न शङ्कयम्। स्वस्यैव स्वाधारत्वसम्भवादिति वाच्यम्। अत्यन्ताभेदे आधाराधेयभावानुपपत्तौ कथञ्चिदुपहितानुपहितभेदमङ्गीकृत्य तत्स्वीकारे तादृशभेदस्यापि भ्रमे प्रतीतिं विना सिद्ध्ययोगाद्भेदसम्बन्धादिष्वप्युक्तदोषो दुर्वारः। इदन्त्वरजतसंसर्गे सत्तादात्म्यभाने तत्र संसर्गाध्यासस्यावश्यकतया तत्संसर्गविषय एव पुनरुक्तदोषात्।

एतेन सत्तादात्म्यसदेतदन्यतरत्त्वशून्यत्वमेवासत्त्वमङ्गीकृत्य 'सत्तादात्म्ये सत्तादात्म्याभानेऽपि नासद्भानम्' इति जल्पनमपि निरस्तम्। उक्तसंसर्गादावपि सत्त्वसंसर्गमादाय दोषस्य दुर्वारत्वात्। अन्यतरत्वेन निवेशे यद्यदसतोऽपरोक्षप्रतीतिविषयता मया स्वीक्रियते तत्सर्वं निवेश्यान्यतमत्वेन परिष्कारस्य कर्तुं शक्यत्वेनापरोक्षप्रतीतिविषयत्वेनासत्त्वप्रतिक्षेपद्वाराऽनिर्वचनीयत्वासिद्धेः।

यदप्यभिहितं 'सत्त्वस्य सत्त्वेन भानावश्यकत्वे तवाप्येष दोषः समानः। नो चेन्ममापि नास्ति' इति। तदसत्। मम मते सत्त्वे सत्त्वस्य स्वतः सिद्धाधाराधेयभावाङ्गीकारेण प्रतीतावपि स्वांशे प्रकारतया स्वरूपत एवाङ्गीकारेण कुत्रापि दोषाभावात्। न चैवं भवन्मते इत्युपपादितमेव।

---

[1] भानानङ्गीकारे इति पाठेन भाव्यमिति भाति [2] सत्त्वाभानेपि इति पाठेन भाव्यमिति भाति.

(द्वै द्यु) यदत्र गुरुचन्द्रिकायामभिहित 'मन्मते सत्ता सतीति न प्रतीति । अतः सत्ताया सत्त्वास्वीकार' इति । तदसत् । सतीति प्रत्ययाविषयत्वे सद्विलक्षणत्वस्यावर्जनीयतया तुच्छत्वापत्तेर्दुर्वारत्वात् । सत्तादात्म्यमादाय तद्वारणे तेनैव घटादाविव सत्त्वप्रतीतेरवर्जनीयतया तादृशप्रत्ययानङ्गीकारस्यानुचितत्वात् । नन्वनवस्थादोषादिमन्धाने घटादिरूपसर्वपदार्थे व्यवस्थापनमशक्य स्यादत आपातत एव रजतादिप्रतीतिकार्यमुपपादनीयमिति तत्र कुत एतद्युक्त्यनुसन्धानेन प्रातिभासिकवैलक्षण्यभानसिद्धिरिति चेन्न । घटादिविशिष्टेपूक्तदोषस्य निरसिष्यमाणत्वात् अर्थापत्त्या शक्तिरजतादेरनिर्वचनीयत्वसिद्धिवेलाया उक्तबाधकस्फूर्त्यावश्यकत्वे असत्त्वपक्षान्यथाख्यातिपक्षपरित्यागपूर्वकमेतत्कल्पस्वीकारे बीजाभावात् । सर्वत्र बाधकसाम्यात् । वस्तुत असत्त्वपक्षस्यानुपद वक्ष्यमाणरीत्या दुष्टत्वाभावाच्च ।

ननु शुक्तिरजतादिप्रतीतौ भवन्मते रजतादौ सत्ता भासते न वा । द्वितीये रजते इष्टसाधनत्वानुमापकलिङ्गासिद्धि । रजतज्ञाने सद्रजतावगाहित्वरूपप्रामाण्यनिश्चयायोग । तथा च प्रवृत्त्यभाव । आद्ये रजते भासमानसत्त्वे सत्त्वसंशयकालेऽपि प्रवृत्त्यादिवारणाय सत्त्वेपि सत्त्वनिश्चय आवश्यक । तत्राप्येव तत्राप्येवमितिरीत्याऽनवस्थापत्ति । यदि च तत्रासत्त्वग्रह एव विरोधी न तत्र सत्त्वग्रहापेक्षेति ब्रूषे तर्ह्यसत्त्वेनागृह्यमाणरजतादिज्ञानत्वं प्रवर्तकतावच्छेदक जातमिति ममापि तथैवास्त्विति कुतो मम प्रवर्तकप्रामाण्यशरीरे प्रातिभासिकवैलक्षण्यनिवेश कुतस्तरा तद्भाननिर्वाहाय रजते प्रातिभासिकवैलक्षण्यभानम् । अत पूर्वोक्तप्रवर्तकप्रामाण्यशरीरे विषये प्रातिभासिकवैलक्षण्यमित्याद्यसमञ्जसमिति चेन्न । यतो मन्मते भ्रमप्रतीते रजतत्वादिधर्माणामनङ्गीकारेण तन्मात्रस्येष्टसाधनत्वव्याप्यतया सत्यरजतादौ तन्मात्रेणेष्टसाधनत्वप्रमोदयेनाभ्रान्तस्य प्रवृत्तिनिर्वाह । व्यवसाये तत्प्रामाण्यावगाहिन्यनुव्यवसाये च रजतादिरूपविषयस्य सत्त्वेन भानम् । सत्त्वे च सत्त्व स्वरूपत एव भासत इति सदर्थावगाहित्वरूपप्रामाण्यभानेनैव प्रवृत्त्यादिनिर्वाह । प्रामाण्यशरीरे च विषये सत्त्वस्यैव निविष्टत्वेनासति सत्त्वेन भानस्थले च तत्र भासमानसत्त्वस्य वस्तुतोऽसत्त्वेन सत्त्वविशिष्टावगाहित्वरूपप्रामाण्यस्याऽपादयितुमशक्यतया प्रामाण्यशरीरेऽपि विशेषणानवस्थाविरहात् । यत्र तु गृहीते प्रामाण्ये पुनर्दोषादिवशात्सत्त्वसन्देहस्तत्र पुनर्विषयनिश्चयतत्प्रामाण्यनिश्चययोर्निर्वाहाय प्रमाणान्तरान्वेषणम् । न पुनरसत्त्वेनागृह्यमाणविषयज्ञानत्व प्रवर्तकतावच्छेदकम् । तथात्वे प्रामाण्यस्वतस्त्वभङ्गापत्तेरुक्तत्वात् । भ्रमे तु यादृशी प्रमीयविषयता सन्निकर्षादिप्रयोज्या तादृश्येव दोषप्रयोज्या स्वीक्रियते । तन्निरूपक त्वसदिति । तथा च तादृशभ्रमात्मकेष्टसाधनताज्ञानप्रामाण्यभ्रमादिना भ्रमस्थले प्रवृत्तौ न किञ्चिद्बाधकम् । तव मते तु सत्यरजतज्ञानोत्तरप्रवृत्त्यादीनामेवाभ्रान्तस्य निर्वाहाय पूर्वोक्तप्रातिभासिकवैलक्षण्यादिनिवेशस्य जनकतावच्छेदकप्रामाण्यशरीरादावावश्यकत्वात् पूर्वोक्तसर्वदूषणान्यपरिहार्याणीति मूलटीकोक्त युक्ततममेवेत्यलम् ।

(गु टि) असतो वैलक्षण्यमिति विग्रहमाश्रित्य व्याख्याय असच्च तद्वैलक्षण्यञ्चेत्यपि विग्रहमाश्रित्य व्याख्याति ॥ यद्यत्यन्तासत इति ॥ प्रातिभासिकतयेति ॥ अत्यन्तासत् यत् प्रातिभासिकवैलक्षण्य तदपरोक्षज्ञानमित्यर्थ. ।

(गु. टि) रजते प्रातिभासिकवैलक्षण्यस्यात्यन्तासत्त्वोपपादनाय प्रातिभासिकतया अर्थक्रियानर्हस्येत्युक्तम्। अयमर्थः। रजत प्रातिभासिकम्मन्यमानस्यापि मते तत्किं प्रातिभासिकतया प्रतीयते उत तद्वैलक्षण्येन। न प्रथम। तथा प्रतीत्यनुपलम्भात्। तथा प्रतीतौ प्रवृत्त्यभावप्रसङ्गाच्च। न हि प्रातिभासिक कदाचिदनेनार्थक्रियामुप-युक्त दृष्टम्। येन तद्भाव प्रतीत्यापि प्रवर्तेत। द्वितीये तत्प्रातिभासिकवैलक्षण्य सदुतासदिति। नाद्य। तथा सति रजतस्य प्रातिभासिकत्वानुपपत्ते। न हि यस्य प्रातिभासिकवैलक्षण्यं सत्तत्प्रातिभासिकमिति सम्भवति। न द्वितीय। तथा सति प्रातिभासिके प्रातिभासिकवैलक्षण्यस्यासतो भ्रान्तिरूपापरोक्षज्ञानविषयत्वे असतोऽपरोक्षज्ञान-प्राप्तेरिति।

### असत अपरोक्षज्ञानाङ्गीकारे सर्वज्ञानेष्वनाश्वासशङ्का तन्निरासश्च

(टी) **किंनिबन्धनश्चायमसतोऽपरोक्षप्रतीतिगोचरताऽनङ्गीकारः। क्वचिज्ज्ञानस्यानालम्बनत्वेऽन्यत्राप्यनाश्वासप्रसङ्ग इति चेत् तत्किं परोक्षप्रतीतेरसद्विषयत्वे नानाश्वासप्रसङ्गः। समानश्चायं प्रसङ्गः प्रातिभासिकविषयप्रत्ययाङ्गीकारेऽपि। बाधकाद्विवेक इति चेत् सम प्रकृतेऽपि।**

(वि टि) असतोऽपरोक्षप्रतीतौ साधकमुक्त्वा बाधकमपि निराकर्तुं पृच्छति ॥ **किंनिबन्धनश्चेति** ॥ ॥ **अनालम्बनत्व इति** ॥ असद्विषयत्व इत्यर्थ. ॥ **अनाश्वासेति** ॥ अप्रामाण्यशङ्केत्यर्थ। तथा च निष्कम्प-प्रवृत्ति क्वापि न स्यादिति भाव। असद्विषयकापरोक्षज्ञानाङ्गीकारेऽन्यत्राप्यनाश्वास· स्यादित्युक्त तुल्य परोक्ष-ज्ञानेपीत्याह ॥ **तत्किमिति** ॥ असद्विषयत्वे अङ्गीकृते सतीत्यन्वय। अनाश्वासप्रसङ्ग किं न। अनाश्वासप्रस-ङ्गोऽन्यत्रापि भवत्येवेत्यर्थ ॥ किञ्चेद रूप्यमिति ज्ञानस्य प्रातिभासिकविषयकत्वेऽप्यनिप्रसङ्गस्तुल्य इत्याह ॥ **समान इति** ॥ **बाधकात्** नेदं रूप्यमित्येवरूपात् ॥ **प्रकृतेपीति** ॥ असद्विषयकत्वेपीत्यर्थ।

(रा टि) ननु तत्र प्रतीतं प्रातिभासिकवैलक्षण्यमप्यनिर्वचनीयमेव नासदित्यत 'तुष्यतु दुर्जन.' इति भावेनापरोक्षज्ञानानङ्गीकारबीजान्याशङ्क्य निराह ॥ **किंनिबन्धनश्चायमिति** ॥ **तदिति** ॥ तत्किं नानाश्वास-प्रसङ्ग इत्यन्वय। वेदान्तादिशब्दजन्यपरोक्षज्ञानेष्यनाश्वासप्रसङ्गादसद्विषयपरोक्षधीरपि नाभ्युपेया स्यादिति भाव। एवं वदता प्रातिभासिकगोचरा भ्रान्तिरूपधीरपि नोपेया स्यादित्याह ॥ **समानश्चेति** ॥ **अय** अप्राति-भासिकज्ञानेऽनाश्वासप्रसङ्ग इत्यर्थ ॥ **सम प्रकृतेपीति** ॥ असतोऽपरोक्षज्ञानाङ्गीकारेपि बाधके सत्यनाश्वासस्त-दभावे त्वाश्वास इति बाधकादसद्विषया धीरिति विवेक इत्यर्थ।

(द्वै. द्यु) एव विपक्षे बाधकेनासतोऽपरोक्षप्रतीतिं समर्थ्य अप्रयोजकत्वादपि असत्त्वमपरोक्षप्रतीतिविषय-त्वाभावव्याप्य सत्त्वमसद्विलक्षणत्वं सत्तादात्म्यपर्यवसन्नं वा अपरोक्षप्रतीतिविषयताव्यापकमिति च पक्ष निराकुरुते ॥ **किंनिबन्धन इति** ॥ **अनाश्वास इति** ॥ इद रजतमित्यपरोक्षज्ञाने असद्रजतस्य विषयत्वाङ्गीकारे निर्विषय-कत्वमेवागतम्। विषयो नास्तीत्यस्य सद्विषयकत्वमित्यस्याभिन्नार्थकत्वात्। तथा चापरोक्षज्ञानत्वस्य निर्विषयक-त्वसामानाधिकरण्ये घटादिप्रत्यक्षेष्वपि तादृशधर्मसाधारणधर्मदर्शनेन विशेषादर्शनेन च निर्विषयकत्वस-न्देहेन

(द्वै द्यु ) तद्विषयासिद्ध्या घटादिगोचरप्रवृत्त्यादिकार्यविलयापात इति अनुकूलतर्कसत्त्वान्नाप्रयोजकतेति भाव । न च रजतस्यासत्त्वेऽपि शुक्तेरेव विषयीभूताया सत्त्वात्कथ तादृशज्ञानस्य निर्विषयत्वप्रसक्तिरिति वाच्यम् । विशिष्टैकार्थविषयकैकज्ञाने एकस्य सत्त्वमेकस्यासत्त्वं न वक्तु शक्यम् । सदसदुपरागाभावेन सदसदुभयघटितविशिष्टायोगात् । अत एकस्य प्रकारीभूतरजतस्यासत्त्वे तदुपरक्त सर्वमसदेवेति प्राप्तमिति पराभिमानात् । तमेव 'न च वयम्' इत्यादिनाऽनुपदमेव निराकरिष्यति ।

परमुखेनैव समाधिं वाचयितु प्रतिबन्दीं सूचयन् उत्तरयति ॥ **तत्किमिति** ॥ अनाश्वासप्रसङ्गो न इति यत् तत्किं केनोपपाद्य तदेवाऽऽलोचयेत्यर्थ । बाधकाद्विवेक इत्यादि त्वयोच्यमान ममापि सममिति हृदयम् । असत परोक्षप्रतीते प्राक् व्यवस्थापितत्वान्न कश्चित्क्षुद्रोपद्रव । अपरोक्षस्थल इव परोक्षस्थलेपि अनिर्वचनीयस्यैव भानमिति व्यधिकरणप्रकारकत्वमेव परोक्षज्ञानस्येति वा आग्रहकरणेप्याह ॥ **समानश्चेति** ॥ **प्रत्ययेति** ॥ अपरोक्षप्रत्यक्षेत्यर्थ । तस्यैव प्रकान्तत्वात् ।

यद्वा बाधितप्रत्ययसामान्यस्य प्रातिभासिकविषयकत्वमङ्गीकृत्यासद्विषयकप्रत्ययानङ्गीकारेऽपीत्यर्थ । शुक्तिरजतादिप्रत्यये व्यवहारकालबाध्यार्थक्रियानर्हपदार्थविषयकत्वसत्त्वे पूर्वोपपादितरीत्या घटादिप्रत्यये अनाश्वासेन घटादौ प्रवृत्त्याभावप्रसङ्ग सम इत्यर्थ ॥ **बाधकादिति** ॥ व्यवहारकालीनबाधग्रहविषयीभूतार्थविषयकज्ञानत्वस्यैवार्थक्रियानर्हार्थविषयकत्वव्याप्यताग्रहेण घटादिज्ञाने तद्वैलक्षण्यग्रहात्तज्ज्ञानोत्तर प्रवृत्त्याद्युपपत्तिरित्यर्थ ॥ **समं प्रकृतेपीति** ॥ मन्मते यदशे बाधित तस्यासत्त्व तद्विषयकत्वाशे ज्ञानस्याप्रामाण्यमिति नियमाङ्गीकारेण घटादिज्ञानेषु वैलक्षण्यात्तदुत्तर प्रवृत्त्याद्युपपत्तिरित्येतन्मतेऽपि समानमित्यर्थ ।

(गु टि ) किञ्चासतो रजतस्यापरोक्षप्रतीतिविषयत्वे बाधकाभावेनाप्रयोजकतया यदसत्तन्नापरोक्षतया प्रतीयत इति व्याप्त्यसिद्ध्या असत्त्वेनापरोक्षप्रतीतिविषयत्वाभावापादनानुपपत्त्या नापरोक्षप्रतीतिविषयत्वेनासत्त्वाभावसिद्धिरित्याशयेन असतोऽपरोक्षप्रतीतिविषयत्वानङ्गीकारे निमित्तं पृच्छति ॥ **किंनिबन्धनश्चेति** ॥ इद रजतमिति प्रतीतेर्निरालम्बनत्वे अय घट इत्यादिप्रतीतेरप्यविशेषेण निरालम्बनत्वापत्त्या तत्प्रसङ्गस्यैव विपक्षे बाधकत्वेन अप्रयोजकत्वाभावात् 'यदसत् तन्नापरोक्षतया प्रतीयते' इति व्याप्तिसिद्ध्या असत्त्वाभावसिद्धिरित्याशय । तर्हि असत परोक्षप्रतीतिविषयत्वेपि परोक्षज्ञानमात्रे असद्विषयकत्वशङ्काप्रसङ्गस्यैव विपक्षे बाधकत्वस्य वक्तु शक्यत्वेन अप्रयोजकत्वानापत्त्या 'यदसत् तन्न परोक्षतया प्रतीयते' इति व्याप्तिसिद्ध्या तन्मूलक परोक्षप्रतीतिविषयत्वस्याप्यनङ्गीकर्तव्यत्वापत्त्या परोक्षप्रतीत्यङ्गीकारेण असद्वैलक्षण्यज्ञानोपपादनानुपपत्तिप्रसङ्गादित्याशयेनाह ॥ **तत्किमिति** ॥

किञ्चैवं प्रातिभासिकविषयत्वे अय घट इत्यादिप्रतीतेरपि तदापत्त्या तत्प्रसङ्गस्यैव विपक्षे बाधकत्वेन अप्रयोजकत्वाभावेन 'यत्प्रातिभासिक तदपरोक्षतया न प्रतीयते' इति व्याप्तिसिद्ध्या रजतस्य प्रातिभासिकत्वे अपरोक्षतया प्रतीतिविषयत्वाभावापादनोपपत्त्या अपरोक्षप्रतीतिविषयत्वेन प्रातिभासिकत्वाभावसाधनस्य वक्तुं

(गु.टि) शक्यत्वेन अपरोक्षप्रतीतेरसद्विषयत्वानङ्गीकारवत् प्रातिभासिकविषयत्वस्याप्यनङ्गीकर्तव्यत्वेन प्रातिभासिकस्य तदङ्गीकारोऽप्यनुपपन्नः स्यादित्याशयेनाह ॥ **समानश्चेति** ॥ ननु च इदं रजतमिति प्रतीतेः प्रातिभासिकविषयत्वेपि न घटादिप्रतीतेः प्रातिभासिकविषयत्वं प्रसज्यते । बाधकभावाभावाभ्यां विशेषेण तत्प्रमजन्ममूलभूता विशेषव्याप्त्यसिद्धेः । ततश्च नापरोक्षप्रतीतिविषयत्वेनाप्रातिभासिकत्वसिद्धिरिति भावेन शङ्कते ॥ **बाधकादिवेक इति चेदिति** ॥ हन्त तर्हि बाधकभावाभावाभ्यां विशेषेण प्रमजन्ममूलभूताविशेषव्याप्त्यसिद्ध्या इदं रजतमिति प्रतीतेरसद्विषयत्वेपि घटादिप्रतीतेरसद्विषयकत्वप्रमजनानवकाशेन असतोपि रजतस्य इदं रजतमित्यपरोक्षप्रतीतिविषयत्वोपपत्त्या नापरोक्षप्रतीतिविषयत्वेन शुक्तिरजतस्यासत्त्वाभावसिद्धिरिति सममेवेत्याशयेनाह ॥ **सम प्रकृतेपीति** ॥

### रजतज्ञानस्य सविषयत्वसमर्थनम्

(टी.) न च वयं शून्यवादिन इव रजतज्ञानं निरालम्बनं ब्रूमः । शुक्तिविषयताऽङ्गीकारात् । केवलं स्वविषयं शुक्तिकाशकलमत्यन्तासद्रजततया अवगाहत इत्यसद्विषयमुच्यते । रजतज्ञानस्य शुक्तिकाविषयत्वं संविद्विरुद्धमिति चेन्न। रजतज्ञानस्येति कोर्थः। यदि रजतविषयस्येति तदाऽसिद्धिः। यदि रजतमितिज्ञानस्येति तदा परस्यैव संविद्विरोधः । यदिदं रजतमित्यभानिषि सा शुक्तिकैवेति प्रतीतेः । यदाकारं यद्विज्ञानं तत्तद्विषयमिति तु प्रमितिनिष्ठेयं व्यवस्था ।

एतेन 'अपरोक्षज्ञानस्येन्द्रियसमुत्थत्वात् इन्द्रियाणाञ्चार्थसन्निकृष्टानामेव ज्ञानहेतुत्वात् असता च सन्निकर्षायोगान्नासद्विषयापरोक्षज्ञानम्' इति परास्तम् । शुक्तिसन्निकृष्टेनेन्द्रियेण दोषवशाद्रजततया तज्ज्ञानजननाङ्गीकारात् ।

(वि. टि) नन्वसद्विषयकज्ञानाभ्युपगमे शून्यवाद्यभिमतज्ञाननिरालम्बनत्वमनुमतं स्यादित्यत आह ॥ **न च वयमिति** ॥ **शुक्तिविषयतेति** ॥ असन्मात्रविषयकज्ञानाभ्युपगम एव निरालम्बनतानुमतिरिति भावः । नन्वेवमसतः प्रतीतिर्नोपपादिता स्यात् । अधिष्ठानस्य यथार्थत्वादित्यत आह ॥ **केवलमिति** ॥ **स्वविषयं** स्वविशेष्यं ॥ **अत्यन्तेति** ॥ दोषवशादिति भावः ॥ **अवगाहत इति** ॥ रजतज्ञानमित्यनुषङ्गः ॥ **संविद्विरुद्धमिति** ॥ संवित्स्वभावविरुद्धमित्यर्थः । अन्यज्ञानस्यान्यविषयकत्वायोगादिति भावः ॥ **असिद्धिरिति** ॥ रजतस्यासद्रूपतया भ्रमविषयत्वासम्भवादिति भावः ॥ **रजतमिति ज्ञानस्येति** ॥ रजताकारज्ञानस्येत्यर्थः । परस्य संविद्विरोधमुपपादयति ॥ **यदिदमिति** ॥ ननु यदि रजताकारं ज्ञानं तदा रजतविषयकत्वं दुर्वारम् । यदाकारं यज्ज्ञानं तत्तद्विषयमिति व्याप्तेरित्याह ॥ **यदाकारमिति** ॥ **प्रमितीति** ॥ प्रमामात्रनिष्ठेत्यर्थः ॥ **एतेनेति** ॥ भ्रान्तेः शुक्तिविषयकत्वकथनेनेत्यर्थः ॥ **अर्थसन्निकृष्टानामिति** ॥ यथावदर्थसन्निकृष्टानामित्यर्थः ॥ **ज्ञानहेतुत्वादिति** ॥ अपरोक्षज्ञानहेतुत्वादित्यर्थः ॥ **तज्ज्ञानेति** ॥ शुक्त्यपरोक्षज्ञानेत्यर्थः । तथा च विशेष्येन्द्रियसन्निकर्षः कारणम् । न तु विशेषणेन्द्रियसन्निकर्षोपि । न चैवमतिप्रसङ्गः । दोषस्य नियामकत्वादिति भावः ।

(रा टि) क्वचिज्ज्ञानस्यानालम्बनत्व इति यत्परेणाऽऽपादकमुक्त तदसिद्धमित्याह ॥ **न वयमित्यादिना** ॥ 'यत्सन्निकृष्टकरणेन यज्ज्ञानमुत्पद्यते स तस्य विषय' इति लक्षणमुपेत्याह ॥ **शुक्तिविषयतयेति** ॥ तर्ह्यसद्विषयत्ववादो रिक्त स्यादित्यत आह ॥ **केवलमिति** ॥ इतरासहाय स्वविषयमेवेत्यर्थ । शुक्तिज्ञानमन्यत् रजतज्ञानं चान्यदिति ज्ञानद्वैविध्यनिरासायैतदुक्ति । केवलं रजततयाऽवगाहते न तु रजनमपीति वा रजतसन्निकृष्टकरणेन जायत इति वाऽर्थ ॥ **सविद्विरुद्धमिति** ॥ रजतसविदिति न स्यात शुक्तिसविदित्येव स्यादिति शुक्तिकासवित्त्वं रजनसवित्त्वविरुद्धमापद्यत इत्यर्थ ॥ **असिद्धिरिति** ॥ उक्तविषयत्वस्य तत्राभावादिति भाव ॥ **अमनिषीति** ॥ ज्ञानवानभूवमित्यर्थ । नन्विद रजतमिति रजनोल्लेखितया रजताकारत्वाद्रजतविषय स्यादेव । 'यद्यदाकार तत्तद्विषय' इति व्याप्तेरित्यत आह ॥ **यदाकारमिति** ॥

(वे टि) ॥ **न च वयमिति** ॥ तथा च क्वचिज्ज्ञानस्यानालम्बनत्व इत्युक्तमसिद्धमिति भाव । केचित्तु नन्वसद्विषयज्ञानाभ्युपगमे शून्यवाद्यभ्युपगतज्ञाननिरालम्बनत्वमनुमतं स्यादित्याशङ्क्याह ॥ **न चेति**॥ इत्याहु । शुक्ते सत्त्वात्तद्विषयकत्वे कथमसद्विषयकत्वमित्यत आह ॥ **केवलमिति** ॥ **सविद्विरुद्धमिति** ॥ रजतज्ञानानुव्यवसायसविद्विरुद्धमित्यर्थ । तेन ज्ञाने रजतविषयत्वस्यैव भानादिति भाव । **सविद्विरुद्ध** सवित्स्वभावविरुद्धमित्यप्याहु ॥ **तदाऽसिद्धिरिति** ॥ रजतस्य यत्सन्निकृष्टेत्यादिरूपविषयत्वाभावेन ज्ञाने रजनविषयकत्वस्यैवाभावादिति भाव ॥ **रजतमितिज्ञानस्येति** ॥ रजतोल्लेखिज्ञानस्येत्यर्थ । ननु यदाकार यद्विज्ञानं तत्तद्विषयमिति व्याप्त्या रजतज्ञानस्यापि रजनोल्लेखित्वरूपतदाकारत्वे रजतविषयत्व दुर्वारमिति नासिद्धिरित्यत आह ॥ **यदाकारमिति** ॥

(द्वै. द्यु) ननु नोक्तरीत्या साम्यमुपपादयितु शक्यम् । मन्मते रजनादेर्मिथ्यात्वावगाहिप्रत्यय एव बाध । मिथ्यात्व च प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वे सति सत्तादात्म्यापन्नत्वम् । तादृशमिथ्यात्वे बाधकप्रत्ययेन विषयीकरणीये रजतादौ निषेधप्रतियोगित्व तत्तादात्म्यानुयोगिनि सत्त्वमवश्य विषयीकरणीये । तेन विना विशिष्टमिथ्यात्वावगाहित्वासिद्धे । तथा च भ्रमविषयीभूतेष्वेव कस्यचित्प्रातिभासिकत्वात् कस्यचिदतथात्वाज्ज्ञानत्वे प्रातिभासिकमात्रविषयकत्वव्याप्तिग्रहो न घटते । मात्रार्थानन्तर्भावेण व्याप्तिग्रहो [1]प्रवृत्त्यादिविरोधी । घटादिविषयकज्ञाने किञ्चिदशे प्रातिभासिकविषयकत्वग्रहेण घटादौ तत्संशयेऽपि बाधकभावाभावाभ्या अन्यतरनिर्णयोपपत्ते । न चैव भवता वक्तु शक्यम् । उक्तयुक्त्येद रजतमिति ज्ञानेष्वसन्मात्रविषयकत्वस्याऽवश्यकत्वे बाधबुद्ध्याऽपि सर्वत्रासत्त्वस्यैव विषयीकर्तव्यतया तद्दृष्टान्तेन ज्ञानत्वेऽसन्मात्रविषयकत्वरूपनिरालम्बनत्वव्याप्तिग्रहेण घटादिज्ञानोत्तर तत्र निश्चयस्यैव जातत्वेन बाधकभावाभावयोरकिञ्चित्करत्वात्प्रवृत्त्यनुपपत्तिर्दुर्वारैवेति परस्य पूर्वोक्ताभिमानमूलकामाशङ्का निरसितुमभिमानमेव निराकरोति ॥ **न च वयमिति** ॥ चोऽवधारणे ।

---

[1] न प्रवृत्त्यादिविरोधी इति पाठेन भाव्यमिति भाति ।

(द्वै द्यु) इति नैव ब्रूम इति वा निरालम्बनमेवेति वा सम्बन्ध । शून्यवादिवैलक्षण्यरूपविशेषार्थं सन्वयमित्यनेन सम्बद्ध्यते ।

यद्वा सम प्रकृतेपीत्यन्तग्रन्थेन पराभिमानमङ्गीकृत्यैव समाहितम् । इदानीमभिमानमेव निराकरोति ॥ **न चेति** ॥ नापीत्यर्थ ॥ **शुक्तीति** ॥ **केवलमिति** ॥ शुद्ध । न तु भासमानरजततादात्म्यापन्नमिति अनिर्वचनीयमतवैषम्योपपादनम् । यद्वा स्वजनकसन्निकर्षानुयोगित्वरूपा विषयता शुक्तावेव । न रजतेऽपि इत्येतत्सूचनाय केवलमित्यभिहितम् । एतच्च रजतज्ञानस्येति शङ्कोत्थापनाय । अन्यथा शुक्तिरजते इति समूहालम्बनस्य शुक्तिविषयकत्वदर्शनात्कथं संविद्विरोध इति शङ्का स्यात् । केवलपदेन रजतविषयकत्वव्यवच्छेदपूर्वकशुक्तिविषयकत्वोक्तौ तत्सम्भवात् ॥ **रजतज्ञानस्येति** ॥ **शुक्तिविषयत्वं** केवलशुक्तिविषयत्वम् । यद्वा **रजतज्ञानस्य 'इद रजतम्'** इति रजतमात्रविषयकत्वेनानुभूयमानज्ञानस्येत्यर्थ । तेन समूहालम्बनव्युदास. ।

॥ **संविद्विरुद्धमिति** ॥ अनुव्यवसायविरुद्धमित्यर्थ इत्येके ।

अत्र ब्रूमो य एवार्थो यस्या संविदि भासते ।
वेद्य स एव नान्यद्धि वेद्य वेद्यस्य लक्षणम् ॥
इद रजतमित्यत्र रजत चावभासते ।
तदेव तेन वेद्य स्यान्न च शुक्तिरवेदनात् ॥
तेनान्यस्यान्यथा ज्ञान प्रतीत्यैव पराहतम् ।
परस्मिन् भासमाने हि न पर भासते यत ॥

इति **संविद्विरुद्धत्वस्वरूपोपदर्शकनयवीथीवाक्यानुसारेण** विचारसहत्वस्वभावविरुद्धमित्यर्थ इत्यन्ये ॥ **असिद्धिरिति** ॥ स्वजनकसन्निकर्षानुयोगित्वरूपविषयतानिवेश इत्यादि । रजतसन्निकर्षस्य मतद्वयेऽप्यनङ्गीकारात । परमते ज्ञानस्य सन्निकर्षत्वविरहात् । मन्मतेऽपि [1]'यदत्र पूर्वं यदनुभूत तत्संस्कारादिना तत्रैव तद्भासते' इति नियमात् साक्षात्कारत्वाख्यजातिस्थानापन्नविलक्षणविषयतायास्तदप्रयोज्यत्वाद्विनिगमनाविरहेण नानारजतभानापत्तेश्च नालौकिकसन्निकर्षस्य तत्र हेतुता । केवलमारोप्यमाणसजातीयस्मरणादेस्तद्भ्रमे स्वातन्त्र्येणैव हेतुत्वस्य सर्वमाणारोपस्थले कल्पनादिति भाव ॥ **रजतमिति ज्ञानस्येति** ॥ तादृशव्यवहारानुकूलशक्तिमज्ज्ञानस्येत्यर्थ ॥ **यदिदमिति** ॥ इदविषयकरजतशब्दोल्लेखादिप्रयोजकविषयिताश्रयज्ञानवानहमित्यर्थ । सेति विधेयापेक्षया स्त्रीलिङ्ग । यदिदमित्यत्र तु सामान्यापेक्षया नपुसकता । अभिलापकवाक्ये इदपदार्थविषयकत्व तत्सन्निकर्षजन्यत्व यदि प्रतीयते तदा तदन्वयव्यतिरेकज्ञान तत । यदि च तत्प्रयोज्या विषयतैव तदा तज्ज्ञानं भ्रमानुव्यवसायात्मकमेवेति विवेक ।

---

[1] 'यत्र इति पाठेन भाव्यमिति भाति

(द्वै द्यु) ननूत्पन्नानां घटादिज्ञानानां 'इदं घटस्य ज्ञानं न पटस्य' 'पटस्य ज्ञानं न घटस्य' इति व्यवस्थार्थं यन्निरूपितोल्लेखाकारापरपर्यायविषयितावद्यज्ज्ञानं तत्तन्निष्ठस्वजनकसन्निकर्षाश्रयत्वरूपविषयताकमिति व्याप्तिरङ्गीकर्तव्या। तथा च घटशब्दादिव्यवहारानुकूलतादृशविषयितानिवेशबलात् घटाद्यनुयोगिकस्वकरणसन्निकर्षजन्यत्वमनुमाय 'घटस्य ज्ञानम्' इत्यादि व्यवहरतीति वक्तव्यम्। तच्चेदानीं न घटते। रजतोल्लेखिज्ञानस्य रजतसन्निकर्षाजन्यत्वेन व्यभिचारादित्यत आह ॥ यदाकारमिति ॥ प्रमितीति ॥ तथा चाबाधितनिरूपितविषयितैव हेतुरित्यर्थः। यद्वा यदुल्लेखवत् यज्ज्ञानं तद्वस्तुतस्तन्निरूपिततादृशोल्लेखाख्यविषयितावदित्येव व्याप्तिः शङ्ककस्याभिमता। यदुल्लेखवत्त्वं यत्तात्पर्यकशब्दव्यवहारानुकूलविषयितावत्त्वम्। समाधानं तु [1]अबाधितत्वनिरूपकत्वं तादृशविषयिताया देयम्। अद्ये घटस्य ज्ञानमित्यत्र तत्सन्निकर्षजन्यत्वरूपविषयत्वं षष्ठ्यर्थः। द्वितीये तु तन्निरूपितविषयितैवेति विवेकः। तद्विषयमिति वाक्यस्याप्युक्तानुसारेणार्थद्वयम्। प्रथमकल्पे नित्यज्ञाने व्यभिचारवारणाय जन्यत्वं देयमिति भावः।

असतोऽपरोक्षत्वे परोक्तबाधकान्तरमाशङ्क्य निराकरोति ॥ एतेनेति ॥ 'यदि [2]रजतज्ञानस्येति तदासिद्धिः' इति ग्रन्थेन शुक्ताविव रजते विषयत्वाभावोपपादनेनेत्यर्थः ॥ परास्तमिति ॥ ज्ञाने सन्निकर्षप्रयोज्याया रजतविषयिताया अनङ्गीकारादिति भावः। ननु सन्निकर्षाप्रयोज्यत्वे साऽऽकस्मिकीति प्राप्तम्। तथा च विनिगमकाभावात्सर्वपदार्थोल्लेखोऽपि स्यादित्यत आह ॥ शुक्तीति ॥ रजततया तज्ज्ञानजननाङ्गीकारात् रजतोल्लेखिशुक्तित्वाविषयकज्ञानाङ्गीकारात्। तथा च सन्निकर्षाप्रयोज्यापि दोषप्रयोज्यैव सा विषयिता। तस्यानुगतस्य तादृशभ्रमहेतुत्वाङ्गीकारान्न रजतभ्रमे रङ्गोल्लेखः। अन्यथा तवाप्यगतिः स्यादिति भावः।

अत्र वदन्ति। असद्रजतस्य भानं न स्वीकर्तुमुचितम्। अपरोक्षप्रतीतिविषयितानिरूपकत्वस्य तज्जनकसन्निकर्षाश्रयत्वव्याप्यत्वात्। असति चेन्द्रियसन्निकर्षायोगात्। न चाबाधितत्वमपि व्याप्यकोटौ निवेश्यमिति वाच्यम्। सामान्यत एतस्य व्याप्यत्वे तादृशसन्निकर्षस्यैकस्यैव प्रयोजकत्वम्। अन्यथा प्रयोजकान्तरकल्पनापत्तिः। असति दोषस्यापि सम्बन्धाभावेन तस्य प्रयोजकत्वासम्भवेनाऽकस्मिकत्वापत्तिश्चेत्यनुकूलतर्कसचिवव्याप्तिग्राहकप्रमाणेनाबाधितत्वाघटितस्यैव व्याप्यत्वेन निश्चितत्वात्।

न च सुरभि चन्दनमिति विशिष्टज्ञानीयविषयितानिरूपकत्वस्य सौरभे सत्त्वेऽपि करणसन्निकर्षाभावाद्व्यभिचारः। संयुक्तसमवायसत्त्वेपि तस्य चक्षुःसन्निकर्षत्वविरहात्। कालिकादिसम्बन्धमादाय सन्निकर्षस्याव्यावर्तकत्वेन 'करणसन्निकर्षसत्त्वादस्मिन् ज्ञाने अयं विषयस्तदभावादयं न विषयः' इत्यादिव्यवस्थाया असिद्ध्यापत्त्या स्वप्रयोजकसम्बन्धस्यैव सन्निकर्षपदार्थत्वादिति वाच्यम्। तत्रापि करणनिरूपितस्य ज्ञानलक्षणसन्निकर्षस्य सत्त्वात्। न चात्रापि तथास्त्विति वाच्यम्। सत्यरजतविषयकस्मृतिसंस्कारयोरेव सत्त्वेनासद्रजते सन्निकर्षस्या-

---

[1] अबाधितत्वनिरूपकत्वं इति पाठेन भाव्यमिति भाति। [2] रजतविषयस्येति इति पाठेन भाव्यमिति भाति।

(द्रै ष्टु ) योगात् । न च विभ्रमान्तरगोचरासद्रजतगोचरसंस्कारादिरेव सन्निकर्षोऽस्तु । प्राथमिकविभ्रमेऽपि जन्मान्तरीयासद्रजतगोचरसंस्कारादिरेव तथास्तु । संसारस्यानादित्वात् । फलबलेन जन्मान्तरीयसंस्कारोद्बोधकस्यापि कल्पनादिति वाच्यम् । इदं रजतमिति प्रत्ययस्य तत्कालोत्पन्नानिर्वचनीयरजतावगाहित्वेनाप्युपपत्त्या जन्मान्तरीयसंस्काराद्युद्बोधकस्य कल्पनाया अप्रामाणिकत्वात् । एतज्जन्मन्येव दृष्टापूर्वचैत्रादेर्यत्र प्रथमतो विभ्रमस्तत्रागतेश्च ।

किञ्च प्रत्यक्षीयलौकिकविषयता तज्जनकेन्द्रियनिरूपितलौकिकसन्निकर्षवत्त्वव्याप्येति नियम । असन्निकृष्टानामपि प्रत्यक्षे भानवारणाय लौकिकविषयतासम्बन्धेन प्रत्यक्ष प्रति इन्द्रियसन्निकर्षस्य कारणत्वावधारणात् । रजते च लौकिक्येव विषयता । रजत पश्यामि साक्षात्करोमि इत्याद्यनुभवात् । यत्र लौकिकी विषयता तद्विषयकत्वावच्छेदेनैव चाक्षुषत्वसाक्षात्कारत्वयोरनुव्यवसायगम्यत्वात् । अन्यथा सुरभि चन्दनमिति प्रत्यक्षोत्तर सौरभ पश्यामि साक्षात्करोमीत्याकारकस्य चन्दनं पश्यामीत्यादाविवापत्ते ।

वस्तुतस्तु यत्र सुरभि चन्दनमिति ज्ञानं सौरभांशे स्मरणात्मक चन्दनांशे प्रत्यक्षात्मकमेव स्वीक्रियते । तत्र सौरभं स्मरामीत्येवानुव्यवसायस्वीकारात् । न चैतदलौकिकमिति वाच्यम् । सौरभस्मरणस्य विशिष्टप्रत्यक्षहेतुतयाऽवश्यमभ्युपगन्तव्यतया ज्ञानादीना ज्ञातैकसत्त्वेन तदनुव्यवसायस्यावश्यकत्वात् । न च तदंशे उद्बुद्धसंस्कारस्यैव हेतुत्वान्न स्मरण तत्राङ्गीकार्यमिति वाच्यम् । तर्हि संस्कारस्यातीन्द्रियतया फलमात्रकल्प्यत्वेन स्मृतिरूपकार्याभावे तत्कल्पकस्यैवाभावेन संस्कारोद्बोधस्यैवासिद्ध्यापत्ते. । न च सौरभस्य प्रत्यक्षे भानानुपपत्तिरेव तत्कल्पिकेति वाच्यम् । असन्निकृष्टभानस्य वा तत्क्षणतदद्दृष्टादीनामेव सन्निकर्षघटकत्वादिसिद्ध्यापत्त्या वा संस्कारस्यासिद्धे· । न चोक्तरीत्या सुरभि चन्दनमित्यत्र [1]स्मरणत्वस्वीकारे जातित्वानुपपत्ति· । चाक्षुषत्वादिना साङ्कर्यादिति वाच्यम् । तस्य दोषत्वे मानाभावात् । संशयत्वनिश्चयत्वयोरव्याप्यवृत्तिजात्योर्नैयायिकैकदेशिनामिवानयोरप्यांशिकत्वस्वीकारे बाधकविरहात् । तथा च विषयताया लौकिकत्वमनिवेश्यैव व्याप्यत्वाङ्गीकारेऽपि न व्यभिचार. । परन्तु तत्र स्मरणानुभवरूपक्रमिकज्ञानद्वयाङ्गीकारे सौरभवत्त्वेन चन्दन जानामीत्यादिविशिष्टज्ञानानुभवविरोधेनैकज्ञानमेवाङ्गीकृत्य तत्रांऽशिकजातिद्वयस्वीकारात्प्रत्यक्षत्वाश्रयस्य तस्यैव सौरभे विषयतया सत्त्वात् व्यभिचारवारणाय प्रत्यक्षत्वावच्छिन्नाधिकरणतैव व्याप्यत्वेनाङ्गीकर्तव्या । तत्र स्मरणत्वावच्छिन्नाधिकरणताया एव सत्वान्न व्यभिचार ।

वस्तुतस्तु तत्र स्मरणात्मकप्रत्यक्षात्मकवृत्तिद्वयप्रतिफलितचैतन्यैक्याज्ज्ञानैक्येऽपि वृत्त्योर्भिन्नत्वात्प्रत्यक्षात्मकवृत्तेर्व्याप्यकोटावाकाराख्यविषयताया [2]निवेशात्प्रत्यक्षत्वावच्छिन्नानधिकरणत्वानिवेशेऽपि क्षत्यभाव । तथा भवन्मते लौकिकविषयतया विषयतासामान्येन वा रजते प्रत्यक्षसत्त्वादिन्द्रियलौकिकसन्निकर्षाभावात् व्यभिचारो दुर्वार स्यादिति नासङ्गान युक्तम् । न चोक्तव्याप्तौ भ्रमत्वघटकविषयताभेदो निवेश्यता । असन्निकृष्टमानापत्ति

[1] स्मरणस्वीकारे स्मरणत्वस्य जातित्वानुपपत्ति इति पाठेन भाव्यमिति भाति

[2] निवेशात्प्रत्यक्षत्वावच्छिन्नाधिकरणत्वानिवेशेपि इति पाठेन भाव्यमिति भाति ।

(द्वै द्यु) वारणं तु दोषविशेषस्य हेतुत्वेन निर्वहति। प्रत्यक्षविषयता इन्द्रियसन्निकर्षदोषैतदन्यतरप्रयोज्येति नियमोऽस्त्विति वाच्यम्। सङ्कोचे बीजाभावेन सामान्यत एव विषयता निवेश्य व्याप्तिग्रहात्। असति दोषसंसर्गस्यायोगेन व्यधिकरणतया तत्र दोषस्य प्रयोजकताया विचारासहत्वात्। तस्मात् व्यापकसन्निकर्षाश्रयत्वं असतो व्यावर्तमान व्याप्यमपरोक्षप्रतीतिविषयत्व व्यावर्तयति।

अपि चेष्टतावच्छेदकपुरोवर्तिवैशिष्ट्यावगाहिज्ञानस्य प्रवर्तकतयाऽसद्रजतरजतत्वयोर्भाने तस्येष्टतावच्छेदकत्वाभावेन तज्ज्ञानात्प्रवृत्त्यनुपपत्ति। तस्मात्तत्रानिर्वचनीयरजतोत्पत्तिरेव स्वीकर्तव्येति।

अत्रोच्यते। रजतस्योत्पत्त्यङ्गीकारेऽप्येतद्दूषणादवस्थ्यात्। तथा हि, तत्र रजतस्य चाक्षुषत्वमङ्गीक्रियते न वा। आद्ये तत्रैव विषयतासम्बन्धेन लौकिकविषयतासम्बन्धेन वा चाक्षुषप्रत्यक्षाधिकरणे इन्द्रियसन्निकर्षाभावात् त्वदुक्तनियमस्य व्यभिचारापत्ति।

न च रजतोत्पत्तिद्वितीयक्षणे इन्द्रियसंयोग। तदुत्तरक्षणे रजतचाक्षुषम्। तस्मिन्नेव क्षणे रजत पश्यामीत्यनुव्यवसायोऽपि। मन्मते साक्षिण एव ज्ञानग्राहकतया तस्य पूर्वमेव सत्त्वेन चाक्षुषोत्पत्तिकाल एव तत्सम्बन्धेन रजताकारत्वसम्भवात्। एतेन रजतसन्निकर्षेण तत्प्रत्यक्षोपगमे रजततत्सन्निकर्षतत्प्रत्यक्षतदनुव्यवसायाना क्रमिकत्वप्राप्त्या रजतस्मरणादितृतीयक्षणे तादृशानुव्यवसायानुभवविरोधोऽपि परास्त। तत्स्मरणक्षण एव रजतोत्पत्तेस्तद्द्वितीयक्षणे तत्संयोगस्य तृतीयक्षण एव रजतव्यवसायकाल एवोक्तरीत्याऽनुव्यवसायस्य मयाऽपि स्वीकृतत्वात्। त्वन्मतेऽपि विशिष्टवैशिष्ट्यगोचरजन्यप्रत्यक्षस्य विशेषणतावच्छेदकप्रकारकनिर्णयजन्यत्वेनानुव्यवसायस्य व्यवसायरूपविषयजन्यत्वेन च तृतीयक्षण एवानुव्यवसायस्यावश्यकतया मन्मत इव त्वन्मतेऽपि व्यवसायकाल एवानुव्यवसाय स्वीकृत्य क्षणैकविलम्बप्रयुक्तानुभवविरोधस्य वक्तुमशक्यत्वादिति वाच्यम्। प्रातिभासिकरजतस्य प्रथमादिक्षणे प्रत्यक्षविषयत्वमपहाय तृतीयक्षण [1]इव चाक्षुषाङ्गीकारे प्रातिभासिकत्वस्यैवानुपपत्ते। स्वकालत्वव्यापकस्वोपादानाज्ञानाश्रयपुरुषप्रत्यक्षकत्वरूपप्रतिभासमात्रशरीरवत एव प्रातिभासिकत्वात्। अन्यथा सत्यरजतस्याऽपि प्रातिभासिकत्वापत्ते। न चाविद्यातिरिक्तदोषप्रयुक्तभानत्व मूलाविद्याकार्यत्व वा प्रातिभासिकलक्षणमस्तु। तच्च तृतीयक्षण एव तत्प्रत्यक्षाङ्गीकारेऽप्यविरुद्धमिति वाच्यम्। तृतीयक्षण एव इन्द्रियसन्निकर्षजन्यत्वे घटादाविवान्त करणवृत्तित्वस्यैव प्राप्त्या [2]भ्रमत्वविद्यातत्प्रयुक्तस्यातिरिक्तदोषजन्यत्वस्यैवासिद्ध्यापत्ते। अविद्याभ्रमरूपसाक्षात्कारातिरिक्ते साक्षात्कारे इन्द्रियसंयोगस्य कारणत्वमभ्युपगम्य विषयतासम्बन्धेन तादृशसाक्षात्कार प्रतीन्द्रियसंयोगस्य व्यापकत्वाभ्युपगमे कथमसद्रजतभाने नैयायिकरीत्या देशान्तरस्थरजतभाने वाऽनुपपत्ति। तत्र विषयतया भ्रमान्यसाक्षात्काररूपव्याप्यस्यैवाभावात्। एवं चाक्षुषं प्रति चक्षुसंयोगस्य कारणत्वम्। एवमिन्द्रियान्तरस्थलेऽपि परिकल्प्याविद्यावृत्तौ चाक्षुषत्वाभावेऽपि साक्षात्कारत्वमभ्युपगम्य चाक्षुष प्रति चक्षुसंयोगस्य व्यापकत्वकल्पनेऽपि नास्माकं काचित्क्षति। नियमशरीरनिविष्टचाक्षुषत्वस्य चक्षुस्संयोगाव्यवहितोत्तर-

[1] एव इति पाठेन भाव्यमिति भाति

[2] भ्रमत्वासिद्ध्या इति पाठेन भाव्यमिति भाति.

(द्वै घ) त्वरूपत्वेऽविद्यावृत्तावपीदंचक्षुःसंयोगाव्यवहितोत्तरत्वसत्त्वा[1] व्यभिचारः । ज्ञानिरूपत्वे मन्मते चाक्षुषत्वादिजातेरेवानङ्गीकारादङ्गीकारेऽपि भ्रमे तदनभ्युपगमेन त्वदुक्तनियमव्यभिचारस्य परिहर्तुं शक्यत्वेनाऽसद्रजतमाने बाधकाभावात् ।

ननु मम चाक्षुषेदंवृत्त्यवच्छिन्नचिति रजतस्य तादात्म्येनाध्यस्तत्वात्तस्य तादृशचिद्रूपचाक्षुषविषयत्वादेव पश्यामीत्यनुभवोपपत्तिः । तव तु उक्तज्ञानस्य चाक्षुषत्वाभावे कथं रजतं पश्यामीत्यनुभवः उपपद्यत इति चेत् तावतापि तादृशचाक्षुषविषयरजते इन्द्रियसंयोगाभावेन व्यभिचारपरिहाराय तत्र चाक्षुषत्वानङ्गीकारस्यैव युक्तत्वात् । दृशिप्रयोगस्य शब्दजन्यापरोक्षज्ञानेपि 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' 'तमसः पारं दर्शयामास योऽस्माकमविद्यायाः परं पारं दर्शयति' इत्यादावङ्गीकृतत्वेन पश्यामीत्यादिव्यवहारस्याप्यपरोक्षज्ञानसामान्यविषयकत्वसम्भवेन रजतचाक्षुषासाधकत्वात् । अन्यथा व्याप्यकोटौ भ्रमान्यत्वस्य निवेशे अन्तःकरणवृत्तेरेव वा आकाराख्यविषयतासम्बन्धेन व्याप्यत्वस्याङ्गीकारे गौरवात् । मन्मते तथैव निर्वाहस्योक्तत्वाच्च ।

अपि चाविद्यावृत्ते सन्निकर्षं विनोत्पत्तिवदन्तःकरणवृत्तेरपि तथैवोत्पत्तिसम्भवेनोक्तनियमस्याप्रयोजकत्वम् । एतेन रजतादेः चाक्षुषं नाङ्गीक्रियत इति प्राचीनकल्पितद्वितीयपक्षाङ्गीकारोऽपि निरस्तः । अविद्यावृत्तिवदन्तःकरणवृत्तेरपि सन्निकर्षं विनैवोपपादनस्य सम्भवेन रजतविषयकत्वावच्छेदेन चाक्षुषत्वाभावेऽपीदमाकारचाक्षुषवृत्तिविषयत्वादेव रजतं पश्यामीति व्यवहारानुभवयोरुपपत्ते रजतविषयकज्ञानस्य चाक्षुषत्वाङ्गीकारे बाधकाभावात् । रजतविषयकत्वावच्छेदेन चाक्षुषत्वावगाहित्वस्य रजतं पश्यामीत्यनुभवे ममाप्यसिद्धेः । इदंविषयकचाक्षुषे रजतनिरूपितोल्लेखितावगाहित्वस्यैवाङ्गीकृतत्वात् ।

किं चासतोऽपरोक्षविषयत्वं नास्तीत्यत्र कीदृशमसत्त्वं निविष्टम् । निरुपाख्यत्वादीनां तदप्रसिद्ध्या सिद्ध्युत्तरकालीनानामापरोक्ष्याभावसाधनायोपन्यासायोगात् । त्रैकालिकनिषेधप्रतियोगित्वस्य तथात्वे तु शुक्तिरजते तथात्वं त्वयाऽप्यङ्गीकृतमिति कथं तस्यापरोक्षप्रतीतिविषयत्वाङ्गीकारः । न च चिति तादात्म्येन तदुत्पत्तेर्मयाऽङ्गीकृतत्वात्तत्सम्बन्धेन मन्मते तस्यापरोक्ष्यम् । उत्पत्तिरहितत्वे सति तादृशनिषेधप्रतियोगित्वस्य त्वयाङ्गीकारात् ज्ञानेन सह विषयविषयिभावनिर्वाहकसन्निकर्षायोगात् तन्न घटते । व्याप्यमपि तादृशप्रतियोगित्वे सत्युत्पत्तिराहित्यरूपं सत्तादात्म्यशून्यत्वरूपमेव वाऽसत्वमिति न कोपि दोष इति वाच्यम् । त्रैकालिकनिषेधप्रतियोगिनः कालसम्बन्धरूपोत्पत्तिस्वीकारस्य उक्तप्रतियोगित्वरूपबाध्यत्ववतस्तच्छून्यत्वरूपसत्तादात्म्यस्य च व्याहतत्वात् । व्याहतोत्पत्तिस्वीकारापेक्षया साक्षात्करणसन्निकर्षस्यैवाङ्गीकारेण ज्ञानविषयत्वोपपादनसम्भवेनान्तर्गडूत्पत्तिस्वीकारस्य प्रयोजनाभावात् । दोषाणां रजतोत्पत्तौ वाऽसद्रजतेन सहैवेन्द्रिये सन्निकर्षोत्पत्तौ वा हेतुत्वमित्यत्र विनिगमकस्य कालत्रयनिषेधप्रतियोगिनः कालसंसर्गाङ्गीकारे व्याहतिरूपस्य सत्त्वात् । न च चित एव ज्ञानत्वेन तद्विषयत्वं तादात्म्यरूपमेवेति ज्ञानविषयत्वाङ्गीकारे चिति तादात्म्येन रजतोत्पत्तिरवर्जनीयेति वाच्यम् ।

---

[1] क्व व्यभिचार इति पाठेन भाव्यमिति भाति

(द्वै सु.) आकाराख्यविषयत्वानां वृत्तिनिरूपितानां तवाप्यावश्यकत्वेन चित्तादात्म्यस्य विषयतारूपत्वसिद्धेरग्रे निराकरिष्यमाणत्वाच्च । शुक्तिरजतादेरनिर्वचनीयत्वरूपतृतीयप्रकारसिद्धेः प्राक् 'नेह नानास्ति किञ्चन' इत्यादीनां व्याहतिपरिहारोपायाभावेन तेषां स्वार्थानिर्णायकत्वेन गहननिविष्टतया अद्वैतसिद्धेरप्यभावेन स्वार्थानुमाने प्रवृत्तस्य [1]त्वत्प्रतिक्रियामवलम्ब्य व्याहत्युद्धारे अन्योन्याश्रयस्यासकृदावेदितत्वाच्च ।

ननु दोषाणां भ्रमप्रयोजकत्वं उभयसिद्धम् । तत्र रजतप्रकारतानिरूपितेदंविषयताशालिचाक्षुषत्वस्य तत्कार्यतावच्छेदकत्वापेक्षया रजतत्वमेव कार्यतावच्छेदकमस्तु । लाघवात् । कार्यतावच्छेदकस्तु तादात्म्यादिसम्बन्धोऽस्तु । यथायथं विषयात्मकरणादिनिष्ठदोषाणां कारणत्वानुरोधेन रजतोत्पत्तिसिद्धिरिति चेन्न । सन्दिग्धस्थल एव लाघवस्यावकाशो न तु विषयबाधनिश्चयस्थले । तस्यानुमानरूपतया बाधितार्थाननुमापकत्वात् । इत्थं च बाधप्रमासिद्धत्रैकालिकनिषेधप्रतियोगित्वस्य व्याहतितर्कानुग्रहेणोत्पत्त्यभावव्याप्यत्वेन निश्चितस्य प्रबलबाधकस्य रजते गृहीतत्वात्कथं लाघवेन तत्सिद्धिः । बाधेन तदविषयीकरणे भास्करसिद्धोत्पत्तिमेव स्वीकृत्य तस्य तत्कालोत्पन्नव्यजनवातादिवत्सत्त्वस्यैव स्वीकर्तुं शक्यत्वे मिथ्यात्वस्यैवासिद्धिप्रसङ्गात् । 'अध्यक्षसिद्धस्य रजतस्योत्पत्तिमत्त्वे विनाशित्वे च घटादिवत्तादृशरजतज्ञानवच्चोत्पत्तिनाशयोः प्रतीतिप्रसङ्गः' इति तर्कपराहतत्वेन च लाघवमात्रेण न रजतोत्पत्तिसिद्धिः । लाघवमात्रेणार्थसिद्धौ लाघवात्साध्यसामानाधिकरण्यज्ञानत्वादिना अनुमितिहेतुत्वं स्वीकृत्य व्यभिचारग्रहेऽप्यनुमितेरेष्टव्यतापातात् । त्रैकालिकनिषेधप्रतियोगिनि उत्पत्त्यङ्गीकारतुल्यन्यायत्वात् । एवं साध्याभाववदवृत्तित्वरूपव्याप्तिज्ञानकारणत्वापेक्षया व्यापकताज्ञानस्य कारणत्वे 'अभावो न हेतुसमानाधिकरणः' इत्यादिभिन्नविषयकबहुप्रत्यक्षेषु अनुमितिसामग्रीत्वेन प्रतिबन्धकत्वाकल्पनाल्लाघवमिति युक्त्या तत्कारणतासिद्धिवत्पक्षांशे भासमानधूमे घटकालीनत्वावगाहिपरामर्शस्य कारणत्वे धूमो न घटकालीन इत्यादिभिन्नविषयकप्रत्यक्षेषु अनुमितिसामग्रीत्वेन प्रतिबन्धकत्वाकल्पनाप्रयुक्तलाघवेन तस्यापि कारणत्वापातात् । निश्चितव्यभिचारकत्वाल्लाघवं तत्राकिञ्चित्करं चेत्प्रकृतेऽपि व्याहतिरूपबाधकसाम्यात्कथं लाघवेन रजतत्वमवच्छेदकं स्यात् ।

न च रजते उत्पत्तिप्रत्ययः किं रजतप्रतीतिसमये आपाद्यते उत बाधसमये । नाद्यः । प्रतीतिसमये स्थिरशुक्तितादात्म्येन ग्रहस्यैव विरोधित्वात् । नाशप्रत्ययस्तु तदा तस्यानष्टत्वादेव नापादयितुं शक्यः । न द्वितीयः । बाधसमये उत्पत्तेरन्तरितत्वादेव न तद्ग्रहः । नाशग्रहं प्रति तु तत्र तदत्यन्ताभावग्रहस्यैव विरोधित्वात् न शुक्तौ रजतनाशग्रह इति वाच्यम् । एकस्मिन्नेवेदम्पदार्थे नाशात्यन्ताभावयोः स्वीकारे अत्यन्ताभावनाशाविरोधप्राप्त्या तद्ग्रहस्य कपाले घटात्यन्ताभावग्रहस्य घटनाशग्रहं प्रतीवाप्रतिबन्धकत्वात् । प्रकृत एव प्रतिबन्धकत्वकल्पनस्य त्वप्रामाणिकत्वात् । ननु रजतात्यन्ताभावग्रहकालीनस्तन्नाशग्राहकसामग्र्यभावः तद्ग्रहाभावव्याप्यत्वेन तत्प्रतिबन्धक इत्युच्यते । 'निषेधप्रतियोगित्वधीः प्रतिबन्धिका' इत्युक्तेरत्रैव तात्पर्यमिति चेन्न ।

---

[1] त्वत्प्रक्रियामवलम्ब्य इति पाठेन भाव्यमिति भाति.

(द्वै घु) तद्ग्राहकसामग्र्यभावस्यैव तद्ग्रहाभावव्याप्यतया तत्रात्यन्ताभावग्रहकालीनत्वाशस्य वैयर्थ्येन तत्तात्पर्येणापि तादृशोक्तेरसङ्गतत्वात्।

ननु चक्षुःसंयुक्तविशेषणतादिकाले तद्ग्राहकसामग्र्यभावस्योपपादयितुमशक्यत्वात्। तदत्यन्ताभावग्रह सामग्री प्रकृते दोषविधया स्वाभावघटितसामग्रीविघटिकेत्येतल्लाभाय तदुक्तिरिति चेन्न। कपालस्थघटनाशादिग्रहे अदृष्टस्यात्रैव दोषविधया प्रतिबन्धकत्वस्य कल्पनायोगात्। एतेन 'उत्पन्न बनघटत्वे प्रतीतिकाले मिथ्यात्ववदावृते अनुमानादिरूपप्रमाणवृत्त्या ज्ञायेत एव' इत्यपि प्रत्युक्तम्। तत्सिद्ध्युत्तरकालीनत्वादेतत्कल्पनस्य घटादावदृष्टस्यात्रैव कल्पनापत्तेश्च प्रमाणवृत्त्या तदभावावपि आवृत्तौ ज्ञायेत इत्यपि वक्तुं शक्यत्वाच्च। उत्पन्नत्वादिग्राहकाणामेव प्रामाण्यमित्यस्याव्याप्यसिद्धेः।

यदपि 'स्थिरीभूतशुक्तितादात्म्यग्रहस्तदुत्पत्तिग्रहविरोधी' इति तदपि न। स्थिरीभूतमृत्तादात्म्यग्रहेण घटादेः स्थिरान्तःकरणाविद्यातादात्म्यादिग्रहेण ज्ञानादेश्चोत्पत्तिग्रहप्रतिबन्धापत्तेः। अत्रैव तत्कल्पने चादृष्टस्यैव कल्पनापत्तिः। अनन्तानां तरक्षणतरकालीनवायुसंयोगादीनां प्रतिबन्धकतामाय विनिगमनाविरहान्महागौरवम्। अपि च दोषाणां भवन्मते रजतत्वावच्छिन्नं तज्ज्ञानत्वावच्छिन्नं प्रति च कारणत्वकल्पनाधिक्याद्गौरवम्।

ननु मन्मते दोषाणां ज्ञानं प्रति कारणत्वं न कल्प्यत एव। न च शुक्तिविशेष्यकरजतज्ञानत्वावच्छिन्नस्याऽऽकस्मिकत्वापत्तिः। [1]बाधाभावकार्यतावच्छेदकतयैव तदवच्छिन्नस्योत्पत्तिसम्भवात्। न च सर्वदा तदुत्पत्त्यापत्तिः। इन्द्रियसन्निकर्षरजतसंस्कारादेस्तत्सहकारित्वाभ्युपगमात्। न च रजतप्रागभावस्य रजतं प्रति कारणतायाः क्लृप्तत्वात्तेनैव रजतोत्पत्तिरस्तु। दोषस्य तु रजतज्ञानत्वमेव कार्यतावच्छेदकं स्यात्। तादृशरजतोत्पत्तिं प्रति तज्ज्ञानोत्पादकसामग्र्या व्यापकत्वाभ्युपगमेन तत्सहितरजतसामग्र्येव रजतजनिका। अतः सर्वदा न रजतोत्पत्त्यापत्तिरित्यपि वक्तुं शक्यत्वेन विनिगमकाभावात् दोषकार्यतावच्छेदकत्वं रजतज्ञानत्वस्य दुर्वारमिति वाच्यम्। रजतज्ञानत्वापेक्षया रजतत्वस्य कार्यतावच्छेदकत्वे लाघवस्यैवात्रापि नियामकत्वात् इति चेन्न।

विषयानुपाधिकस्य रजतादिप्रवृत्तिप्रयोजकधर्मस्य ज्ञान एवाऽऽकारे व्यवस्थापिततयाऽत्रापि चाग्रे किञ्चिद्व्यवस्थापनीयतया तादृशवैजात्यस्यैव कार्यतावच्छेदकत्वाङ्गीकारे अत्रापि गौरवानवकाशात्। यत्र शुक्लपटादि घटसजातीयाकारतया सम्पादयित्वा व्यवस्थापितं तत्र रक्तपित्तादिदोषवशात् रक्तघटभ्रमोत्पत्तिस्तत्र [2]रक्तघटत्वस्य कार्यतावच्छेदकत्वे गौरवात् तादृगस्थले ज्ञानवृत्तिवैजात्यस्यैव कार्यतावच्छेदकत्वस्य युक्तत्वेन तत्सजातीयतयाऽन्यत्रापि तथैवाभ्युपगमस्य युक्तत्वाच्च। पूर्वं वैजात्यस्यासिद्धावपि दोषकार्यतावच्छेदकतयैव लाघवाज्ज्ञाने वैजात्यं सिद्ध्यतु। ज्ञानोत्पत्तिविनाशादेरुभयसिद्धत्वेन तत्र धर्मकल्पने लाघवात्। रजतत्वस्य कार्यतावच्छेदकत्वे तदाश्रयीभूतरजतोत्पत्तितदुपादानतत्प्रागभावाद्यनन्तकल्पनाप्रयुक्तगौरवात्। धर्मिकल्पनातो धर्मकल्पनाया ज्याय-

---

[1] ज्ञानत्वस्य बाधाभावकार्यतावच्छेदकतयैव इति पाठेन भाव्यमिति भाति   [2] रक्तघटभ्रमत्वस्य इति पाठेन भाव्यमिति भाति।

(द्वै ध्य) स्यात्। न च लाघवाद्रजतत्वस्य पूर्वसिद्धस्यैव जन्यतावच्छेदकत्वसिद्धौ तदनुरोधीद गौरव फलमुखत्वान्न दोषावहम्। असिद्धधर्मस्य तज्जन्यतावच्छेदकत्वस्य च कल्पनापेक्षया सिद्धधर्मस्यैव जन्यतावच्छेदकत्वकल्पनस्य स्वन्यायेनैव युक्तत्वमिति वाच्यम्। रजतत्वस्य कार्यतावच्छेदकत्वग्रहवेलायामेवोक्तगौरवप्रतिसन्धानस्य प्रेक्षावतामवर्जनीयतया तस्य फलमुखत्वाभावात्। उक्तगौरवमनादृत्य जाते कार्यतावच्छेदकत्वमात्रे लाघवमात्रेण उक्तकार्यकारणभावाङ्गीकारे सुवर्णत्वघटत्वादीनामपि दोषकार्यतावच्छेदकत्वानिवारणात्। रजतोत्पत्तिस्थले अनन्ततत्तद्रूपावच्छिन्नोत्पत्तिं स्वीकृत्य तत्र सुवर्णादेस्तत्त्वादेर्वाऽऽवृतत्व कल्पनीय स्यात्।

न चैव सर्वत्राप्येव वक्तु शक्यत्वेन फलमुखगौरवस्य अदोषत्वोच्छेद स्यादिति वाच्यम्। यत्रानन्यथासिद्धेन स्वव्याहतिप्रबलप्रमाणान्तरबाधशून्येन योऽर्थ सिद्धयति तस्य च यावता विना नोपपत्तिस्तदुपयुक्तप्रमेयाङ्गीकारे गौरवस्यादोषत्वम्। तत्र पूर्वप्रमाणफलमेव मुखं यत्कल्पनायामर्थापत्तिप्रमाणरूप तादृशगौरवस्यैव फलमुखगौरवप्रामाणिकगौरवपदार्थत्व त्। गौरवरूपतर्कस्यादोषत्व तु श्रुतदृष्टार्थापत्तिसिद्धार्थाभावमादाय विपर्ययपर्यवसायित्वेन। यथा यागस्य स्वर्गसाधनत्वस्य निर्वाहायापूर्वकल्पने यथा समासप्राबल्यान्निषादस्थपतेर्यागाधिकारसिद्धौ तन्मात्रोपयोगिविद्याकल्पने। लोके व्यापारद्वारा साक्षाद्वोभयथा कारणाना दृष्टत्वेन यागस्य क्षणिकत्वग्रहस्य कारणत्वग्रहाविरोधितया श्रुत्या कार्यकारणभावग्रहो निराबाध एव सामान्यतो जायत एवेति न तत्र पूर्वमपूर्वकल्पनाप्रयुक्तगौरवानुसन्धानम्। एव निषादस्थपते न यागाधिकार इति प्रबलप्रमाणरूपबाधकविरहात्स्वव्याहत्यादिविरहाच्च वाक्यस्वरसतस्तद्बोधे पूर्वं विद्याकल्पनादिप्रयुक्तगौरवाननुसन्धानम्। अतस्तदनन्तरमेव तन्निर्वाहाय कल्प्यमाना विद्या गौरवान्न तद्बाधनायेष्टे। उपजीव्यविरोधात्। एव विशिष्टज्ञानाभावस्यानुमिति पूर्वमनिश्चितत्वेन सन्दिग्धत्वे बहुस्थलेषु विशिष्टज्ञानस्य जनकत्वे सिद्धे तस्य ज्ञानद्वयसाधारणरूपापेक्षया विशिष्टज्ञानत्वस्य लाघवानुसन्धानं कारणतावच्छेदकत्व व्यवस्थापयति। तन्निर्वाहाय क्वचित्सन्दिग्धस्थले अनुमितिरूपकार्येण विशिष्टज्ञानकल्पनम्। तत्र प्रागभावाद्यङ्गीकारे गौरव कार्यलिङ्गकप्रबलानुमानसिद्धार्थे विपर्ययापर्यवसायित्वान्न दूषणम्। क्वचिदनुमितौ विशिष्टज्ञानाभावस्यैव पूर्वं निश्चये वा तत्समकक्षापन्नरूपान्तरविशिष्टज्ञानान्तररूपप्रतिबन्देरुपस्थितौ वा तन्मात्रस्य तन्निश्चयो न भवत्येव। अन्यथाऽऽभाससमानयोगक्षेमत्वस्यानुमानदूषणत्वाभावापातात्। अत एव तादृशानुभवपक्षमवलम्ब्य त्वया ज्ञानद्वयस्यापि कारणत्वं विहाय व्याप्त्युद्बुद्धसस्कारसहितपक्षधर्मताज्ञानस्यानुमितिकारणत्वमङ्गीकृतम्। एवमन्यत्रापि द्रष्टव्यम्। इत्थं च दोषाणा रजतकारणत्वग्राहकप्रमाणाभावादुक्तप्रतिबन्देरपरिहाराच्च रजतोत्पत्तिसिद्धेरेवाभावात् न फलमुखत्वं गौरवस्येति तद्दोषता दुर्वारैव।

न च ज्ञानाना वैलक्षण्यस्य विषयवैलक्षण्यनिबन्धनत्वाद्रजतज्ञानत्वसिद्धये रजतत्वस्य कार्यतावच्छेदकत्वम्। न सुवर्णादीना। बीजाभावादिति वाच्यम्। लाघवमात्रेणेदानीं रजतत्वस्य कार्यतावच्छेदकत्वव्यवस्थापननिर्भरेणैव रजतोत्पत्तिं व्यवस्थापयितु परेण प्रारब्धतया तत्र ज्ञाने सुवर्णज्ञानत्वमावृतमिति वा सुवर्णत्वस्य तत्र

(द्वै धु) सत्त्वेऽपि आवृतत्वादेव तदाकारज्ञानं न जातं किन्तु रजताकारमेव जातमिति वा वक्तुं शक्यत्वेन सुवर्णत्वादिप्रतिबन्दिदानस्य युक्तत्वात् । उक्तनियमावष्टम्भेन तत्कल्पनं तु तादृशनियमनिरासेन निरसिष्यते ।

किञ्च मास्तु ज्ञाने वैजात्यम् । तथापि रजतत्वस्य कार्यतावच्छेदकत्वेऽपि ज्ञानवृत्तिधर्मस्याप्रमात्वस्य दोषकार्यतावच्छेदकत्वमवश्यमभ्युपेयम् । अन्यथा बाधाभाववादे ज्ञानसामान्यसामग्रीघटकतया दोषस्याप्रमात्वावच्छिन्नसामग्रीकोटावनिवेशे अप्रमात्वस्य परतस्त्वानुपपत्त्याऽपसिद्धान्तापत्तेः । न च रजतरूपविषयजननद्वारा तज्जनकत्वात्तस्य परतस्त्वोपपत्तिरिति वाच्यम् । रजततद्विषयवृत्त्योरेककालीनत्वेन कार्यकारणभावानापन्नतया तद्द्वारा दोषकार्यत्वोक्तेरयोगात् । घटद्वारा दण्डस्यापि घटप्रमाप्रयोजकतया प्रमात्वस्यापि परतस्त्वापत्तेश्च । न च शुक्तिरूपेदंविशेष्यकरजतज्ञानं तादृशबाधाभावकार्यं अप्रमारूपं भवतीति तस्य बाधाभावकार्यतयैव परतस्त्वोपपत्तिरिति वाच्यम् । तादृशज्ञानत्वज्ञानमात्रेण तत्राप्रमात्वव्यवहारानुदयेन बाधितरजतावगाहित्वस्यैवाप्रमात्वरूपतया तस्य दोषकार्यतावच्छेदकत्वस्याऽवश्यकत्वात् । तथा च रजतत्वस्यापि कार्यतावच्छेदकत्वं गौरवान्न युक्तमेव ।

न च दोषजन्यावगाहित्वमेवाप्रमायाः परतस्त्वमिति वाच्यम् । उत्सर्गेण ज्ञानस्वभावभूतं प्रामाण्यं तिरस्कृत्याविद्यमानाप्रमात्वाद्याधायकत्वे हि तस्य दोषत्वम् । अप्रमात्वस्य तज्जन्यतावच्छेदकत्वेन तत्प्रयोज्यतया परतस्त्वम् । प्रामाण्यस्य तु [1]किञ्चिज्जन्यतावच्छेदकतया स्वतस्त्वमिति विशेषः सङ्गच्छते । इदानीं त्वप्रमात्वस्यापि किञ्चिज्जन्यतावच्छेदकत्वेन प्रामाण्याविशेषापत्त्या चाकचक्यादेरप्यप्रमाविषयजनकत्वेन प्रमाविषयीभूतघटादिजनकदण्डादितोऽविशेषापत्त्या च तत्प्रयोजकत्वस्य तेषां दोषत्वस्य च साङ्केतिकत्वापत्त्या अप्रामाण्यस्वतस्त्ववादिसाङ्ख्यमतप्रवेशेनापसिद्धान्तो दुर्वार एव । न हि भट्टेन सङ्केतमात्रं क्रियते । येन 'व्यवहारे भट्टनयः' इति वदतस्तवापसिद्धान्तोऽपि न स्यात् । प्रमेयवैलक्षण्याभावे उक्तसङ्केतमात्रेण प्रमाप्रमयोरुक्तस्वतस्त्वपरतस्त्वादिगोचरत्वप्राचीनव्यवहारस्य निष्प्रयोजनतया बालभाषितत्वापत्तेश्च ।

अपि च भ्रमस्य दोषकार्यत्वे अविद्यातिरिक्त[2]दोषजन्यप्रातीतिकत्वरूपत्वद्वाचार्योक्तप्रातिभासिकलक्षणस्यासम्भवापातः । ज्ञानरजतयोः समानकालिकत्वेन विषयाजन्यतया विषयद्वारा प्रयोजकत्वस्याप्यभावेन जन्यपदस्य प्रयोज्यार्थकत्वेऽप्यसम्भवानिस्तारात् ।

अपि च भ्रममात्रवृत्तितावदन्यतमत्वस्य अखण्डभेदरूपस्य तावन्मात्रविषयकबुद्धिविषयतायाः समानाकारनानाज्ञाननिरूपितायाश्चैकाया अखण्डायाः रजतत्वतुल्यतया कार्यतावच्छेदकत्वं सम्भवत्येव । न च तयोः स्वरूपतो भानाभावेन कार्यतावच्छेदककोटौ रजतत्वतुल्यतयाऽवच्छेदकत्वप्रतिबन्द्ययोग इति वाच्यम् । तयोरपि स्वरूपतो भाने बाधकाभावात् । जात्यतिरिक्तस्य स्वरूपतो भानाभावनियमस्य मिथ्यात्वलक्षणे सर्वं प्रमेयं परमार्थ-

---

1 ज्ञानसामान्यसामग्रीजन्यतावच्छेदकतयेत्यर्थः ।

2 दोषाजन्य इति पाठेन भाव्यमिति भाति ।

(द्वै द्यु) मिति बुद्धे ज्ञाननिवर्त्यत्वाभावरूपपारमार्थिकत्वस्यापि स्वरूपत प्रतियोगितावच्छेदकत्व वदता त्वयैव त्याजितत्वात्। किं चैकस्यैकेनैव दोषेण रजतभ्रमे मानाभावेन दोषत्वस्याप्यखण्डधर्मस्याभावेन चाकचक्यत्वादिनैव कारणत्वे वाच्ये तस्य रजतत्वावच्छिन्नं प्रति वा प्रातिभासिकरजतादौ तत्तत्पुरुषनिरूपितत्वस्वीकारेण तत्पुरुष निरूपितरजतत्वावच्छिन्न प्रति वा कारणत्वे दोषान्तरजन्यरजते व्यभिचाराद्रजतत्वमात्रस्य जन्यतावच्छेदकत्वे रजतावयवजन्यरजतेऽपि व्यभिचारात्तत्तद्दोषविशिष्टत्वस्य कार्यतावच्छेदककोटावावश्यकत्वे नत्तद्दोषजन्यरङ्गवङ्गाद्य सङ्ग्रहापत्त्या रजतत्वादिकमनिवेश्य तत्तद्दोषविशिष्टत्वमात्रस्य कार्यतावच्छेदकत्वसिद्धेरवर्जनीयतया तस्य ज्ञान-मात्रवृत्तित्व मयाऽभ्युपेयते। रचतज्ञानस्योत्पन्नत्वाद्यनुभवात्। रजते तदननुभवेन दोषकार्यत्वस्यासिद्ध्या कथ रजतत्वस्य दोषकार्यतावच्छेदकत्वानुरोधेन रजतोत्पत्तिसिद्धि।

यदपि 'रजतस्य दोषजन्यत्वे रजतावयवादिकसरजतकारणाना कार्यतावच्छेदककोटौ तत्तदवयववैशिष्ट्यस्य निवेशाद्गौरव आशङ्क्यानन्तदोषाणा कार्यतावच्छेदककोटौ रजतादिप्रकारतानिरूपितससर्गतानिरूपितत्वविशेष्य-तात्वयो विशेष्यतानिरूपितत्वसंसर्गतात्वयो [1]संसर्गतानिरूपकत्वप्रकारतात्वयोश्च विशेष्यविशेषणभावे विनिगम-नाविरहेणानन्तकार्यकारणभावापत्त्या महागौरव ज्ञानकार्यत्वपक्षे। रजतकार्यत्वपक्षे च कतिपयकार्यकारणभावतद-वच्छेदकाद्याधिक्याद्गौरवम्। एव बाधाभावकार्यत्वमपि रजतत्वादिनैवेति ततोऽप्यनिर्वचनीयसिद्धि। इदविशेष्यता-निरूपितससर्गतानिरूपितस्वप्रकारताकचाक्षुषसमवायसम्बन्धेन वा तादृशचाक्षुषसम्बन्धेन वा रजतत्वविशिष्टस्यैव कार्यत्वे प्रथमे प्रकारताया रजतत्वावच्छिन्नत्वानिवेशेन द्वितीये तस्य च समवायस्य चानिवेशेन ज्ञानकार्यत्वा-पेक्षया लाघवात्' इत्याद्यभिहित तदप्येतेनैव निरस्तम्। दोषविशिष्टत्वेनैव तादृशज्ञानाना कार्यतया भवदुक्तकार्य-कारणभावादेस्तत्राभावात्। बाधविशिष्टान्यत्वस्य बाधाभावकार्यतावच्छेदकत्वोररीकरणेऽतिलाघवेन त्वदुक्तकार्यका-रणभावासिद्ध्या रजतोत्पत्त्यसिद्धे। पूर्वोक्तघटसुवर्णादीनामप्युक्तसम्बन्धेन कार्यत्वमादाय विनिगमनाविरहस्य दुर्वारत्वाच। तत्र ज्ञाने सुवर्णविषयकत्वसत्त्वेऽपि तदाकारत्वमावृतमिति कल्पनागौरवादेस्त्वद्रीत्या फलमुखत्वे-नादोषत्वात्।

अपि च रजतज्ञानस्य बाधाभावकार्यत्वस्याप्यभावे तस्याऽकस्मिकत्वापत्ति। [2]न च तादृशसम्बन्धेन रजतोत्पादकसामग्रीबलात्तादृशचाक्षुषोत्पत्ति। तत्सम्बन्धोत्पत्तिं विना तेन सम्बन्धेन तदुत्पत्तेरसिद्धेरिति वाच्यम्। समवायस्य नित्यत्वेन सम्बन्धोत्पत्तिं विना सम्बन्धिरूपाद्युत्पत्तिदर्शनेन सम्बन्ध्युत्पत्ते संबन्धोत्पत्त्यव्याप्यत्वात्। प्रकृतसम्बन्धरूपचाक्षुषस्य सम्बन्धविशेषेणाकार्यत्वे आत्मनि तदीयसम्बन्धविशेषनियमासिद्धिप्रसङ्गात्। अथ कथञ्चिज्ज्ञानत्वावच्छिन्न प्रत्यात्मन कार्यकारणभावबलेन समवायनियमोपपादानेऽपि रजतप्रतियोगिकशुक्त्यनु-योगिकतादात्म्यं प्रति दोषस्य कारणत्वाकल्पने तत्सम्बन्धनियमासिद्धि तस्यावृत्तित्व वा स्यात्। आद्ये घटादेरपि रजततादात्म्यवत्त्वस्यापत्त्या घटादिष्वपि कार्यतावच्छेदकसम्बधेन कार्याधिकरणेषु तेन सम्बन्धेन कारणाभावाद्य-

[1] ससर्गतानिरूपितत्वप्रकारतात्वयोश्च इति पाठेन भाव्यमिति भाति. [2] न च न इति पाठेन भाव्यमिति भाति

(द्वै.घु ) भिचार । तस्यावृत्तित्वे सम्बन्धिनोऽप्यवृत्तित्वं स्यात् । सम्बन्ध अवृत्तिमन्नेन सम्बन्धेन किञ्चिद्वृत्तिरित्यस्यासङ्गतत्वात् । तादात्म्यस्य जन्यस्य कारणं विनाऽनुपपन्नत्वेन दोषेतरस्य कारणत्वाप्रसक्तेस्तादात्म्यं प्रति दोषस्य कारणत्वे तु इदमनुयोगिकत्वरजतप्रतियोगिकत्वतादात्म्यत्वादीनां मिथो विशेष्यविशेषणभावे विनिगमकाभावेन बहुकारणत्वापत्त्या रजतोत्पत्तिपक्षे रजतकारणत्वतादृशबहुतरतादात्म्यस्थलीयकार्यकारणभावकल्पनाविरहाद्गौरवम् । ज्ञानसम्बन्धनियमाय तत्र गतिकल्पनस्योभयमतेऽपि साम्यात् ।

एतेन 'रजतावयवादीनां रजतं प्रति कारणत्वे व्यभिचारवारणाय रजतादेर्दोषकार्यतावच्छेदकता सम्बन्धेन विशेषणतासम्बन्धेन वा वाच्या । ध्वंसादेस्तु समवायेन संयोगादिना वाच्या । बाधानवतारे तत्र तेन सम्बन्धेन तद्विशिष्टबुद्धिरिष्टैव । तथापि तद्विशिष्टबुद्धेरिष्टत्वात्' इत्यपि परास्तम् । तत्कारणत्वतत्सम्बन्धकारणत्वयोरुभयोः कल्पनागौरवस्य दुर्वारत्वात् । तादात्म्येन रजतस्यानुत्पत्तौ तादात्म्येन रजतप्रकारकत्वानुपपत्तिः । तदुभयतादात्म्यस्यालीकतापत्त्या अपरोक्षप्रतीतिविषयत्वानुपपत्तेः । अन्यदीयतादात्म्येन प्रकारत्वे व्यधिकरणप्रकारकत्वेनान्यथाख्यातेरेव प्राप्त्या व्यर्थः प्रयासः । न ह्यन्यथाख्यातिमतेऽपि सर्वसम्बन्धे प्रकारस्य विशेष्यतावैयधिकरण्यमस्ति । कालिकादिना तत्सामानाधिकरण्यात् । व्यधिकरणसम्बन्धेन भाने सर्वेषां ज्ञानानां विशिष्टविषयकत्वनियमभङ्गेन भ्रमस्य द्व्याकारतासिद्धये परम्पराध्यासस्वीकारानुपपत्तिश्च । न चायं न तादात्म्येन रजतावगाहीति वाच्यम् । नेदं रजतमिति बाधधीप्रतिबध्यत्वतादृशशाब्दादिप्रतिबन्धकत्वयोरनुपपत्तेः अस्या अपि प्रतिबन्धकत्वकल्पनमप्रामाणिकं गौरवपराहतम् । एवं ध्वंसादिस्थलेऽप्यूह्यम् ।

न च अन्यसम्बन्धघटितबाधानवतारदशायां तथापि तादृशप्रतीतेर्दुर्वारतेति वाच्यम् । बाधाभावमात्रस्य सामग्रीत्वाभावेन तेन सम्बन्धेन रजतादिप्रकारकज्ञानकार्याद्यभावेन तादृशज्ञानासिद्धौ तत्सामग्र्या अप्यकल्पनात् । न हि बाधाभावमात्रं सामग्री । तथात्वे संयोगेन घटप्रत्यक्षकाले साक्षात्परम्पराऽरूपतदितरसकलसम्बन्धघटितबाधग्रहानियमेन कस्यचित् व्यधिकरणसम्बन्धस्यावश्यं भानापत्त्या शुद्धप्रमामात्रविलोपप्रसङ्गः । अन्यथाख्यातिवादिनो मते त्वन्मते दर्शितबाधकाभावेन तादृशापत्ताविष्टापत्तेः कर्तुं [1]शक्यत्वाच्च ।

यदपि 'रजतोत्पत्तौ रजतावयवादिक्लृप्तकारणानां व्यभिचारवारणाय कार्यतावच्छेदके स्वस्ववैशिष्ट्यनिवेशादनन्तघटपटादिस्थले गौरवं मन्मते । त्वन्मते तु ततोऽपि महागौरवम् । तथा हि, गोत्वघटत्वादिप्रत्यक्षेषु सास्नाकम्बुग्रीवाद्यवच्छिन्नेन्द्रियसंयोगवत्समवायस्य ब्राह्मणत्वादिप्रत्यक्षे शुद्धमातापितृजत्वनिश्चयस्य शुक्तित्वादिप्रत्यक्षे नीलपृष्ठत्वादिनिश्चयस्य उत्पलनैल्यादिप्रत्यक्षे सौरभवत्संयुक्तसमवायस्येत्यादिबहुहेतुतायां भ्रमस्थले व्यभिचारवारणाय कार्यतावच्छेदककस्थले स्ववैशिष्ट्यं निवेश्यम् । तथा च कार्यतावच्छेदककोटिप्रविष्टचाक्षुषत्वघटत्वादिविषयकत्वैः सह विशेष्यविशेषणभावे विनिगमनाविरहेण अनन्तकार्यकारणभावः । मन्मते तत्र भ्रमस्याविद्यावृत्तित्वेन तत्र चाक्षुषत्वानङ्गीकारेणैव व्यभिचाराप्रसक्तेस्तत्र कारणवैशिष्ट्यानिवेशेन गौरवानवकाशात्' इति ।

---

[1] अशक्यत्वाच्च इति पाठान्तरम्

(द्वै द्यु) तदप्यसारम्। मन्मते चाक्षुषत्वस्य भ्रमेऽनङ्गीकारेऽपि क्षतिविरहस्योक्तत्वात्। त्वन्मतरीत्याऽप्युक्तलाघवानुसारेण भ्रमस्थले चाक्षुषान्यवृत्तिमात्राङ्गीकारेणोपपत्तौ रजतादिविषयोत्पत्तेरसिद्धेः। नैयायिकमतेऽपि विषयताऽवच्छेदकखण्डेनैव लौकिकविषयतात्वेन भ्रमविषयताव्यावृत्तेन विषयत्वसम्बन्धेन प्रत्यक्षस्य कार्यत्वे व्यभिचारानवकाशेन कारणवैशिष्ट्यानिवेशात्। न च रजतत्वघटत्वादौ भ्रमीयविषयताया लौकिकत्वाभावे रजतत्वं साक्षात्करोमीति प्रत्ययानुपपत्तिः। तन्निष्ठलौकिकविषयतायास्तत्र नियामकत्वादिति वाच्यम्। दोषविशेषप्रयोज्यविषयताया अपि तत्र नियामकत्वाङ्गीकारात्। कारणवैशिष्ट्यनिवेशे कार्यतावच्छेदककोटौ पुनर्विषयविशेषविषयिकत्वचाक्षुषत्वादेरनिवेशेन गौरवानवकाशाच्च। भ्रमविषयेऽपि चाक्षुषत्वस्य त्वदङ्गीकृतत्वेन तत्पक्षे तवाप्येतद्दोषस्य दुर्वारत्वाच्च। तदेतत्सर्वं परगीतिमनुरुद्ध्योक्तम्।

वस्तुतः सिद्धान्ते कार्यताकारणतादिनिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वनिरासपूर्वकमनतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्यैवाग्रे व्यवस्थापनीयतयोक्तविशेष्यविशेषणभावापन्नपदार्थघटितसमनियतानन्तधर्माणां कार्ये विद्यमानानां तस्यापरिहार्यतया कस्य कल्पनाप्रयुक्तगौरवलाघवविचारावकाश इति तु तत्त्वम्।

यदपि 'पित्ताधिक्यन्यूनत्वाभ्यां शङ्खे पीतिमोत्कर्षापकर्षयोर्दर्शनात्तत्र पीतस्य पित्तगतस्यैव भानाङ्गीकारे पुरुषान्तरस्यापि दर्शनप्रसङ्गेन तस्यातीन्द्रियत्वावधारणात् शङ्ख एव पीतो जायत इत्यवश्यं वाच्यम्। कार्यगतोत्कर्षापकर्षयोः कारणगतोत्कर्षापकर्षमूलत्वात्' इति तन्न। दोषातिशयतन्न्यूनत्वाभ्यां उत्कृष्टापकृष्टपीतरूपावगाहित्वमात्रसजातीयविषयताशालित्वस्यैवाङ्गीकारात्। त्वन्मत इव मन्मतेपि तदपेक्षाबुद्धिजन्यद्वित्वपरत्वादिवत्तत्पुरुषीयपित्तगतपीतिम्नस्तत्पुरुषीयाध्यक्षयोग्यताङ्गीकाराद्वा सर्वसामञ्जस्ये पीतोत्पत्तेरप्रामाणिकत्वात्।

यदपि 'रजतरङ्गादीनामेकत्र विभ्रमस्थले नानापदार्थोत्पत्तिस्त्वाधिका। तत्समसङ्ख्याकज्ञानोत्पत्तिस्तूभयसिद्धेति त्वमते गौरवमाशङ्क्य अन्यथाख्यात्यसत्ख्यातिवादिमतेऽपि यत्रैकत्रैककाले बहूनां पुरुषाणां रजतभ्रमस्तत्र बहूनां ज्ञानानां कल्पनया गौरवम्। मन्मते तु तत्रैकस्या एव रजतव्यक्तेस्तत्तत्पुरुषीयसाक्षितापन्नशुक्त्यावच्छिन्नचिद्भास्यत्वोपपत्तेः। न च तत्तदन्तःकरणावच्छेदेन चैतन्यगताविद्यापरिणामस्य रजतादेरैक्यानुपपत्तिरिति वाच्यम्। एकस्या एवाविद्यायास्तदन्तःकरणावच्छेदेन सम्भवात्। नानाविद्याभिरप्येकशुक्त्यवच्छिन्नचिन्निष्ठाभिरेकरजतादिपरिणामस्याप्यैक्यसम्भवात्। किञ्च प्रथमप्रवृत्तोपयुक्तयुक्तिभिर्भ्रमविषयोत्पत्त्यावश्यकत्वे व्यक्तिकल्पनारूपगौरवस्य चरमस्य फलमुखत्वेनादोषत्वम्। अन्यथाऽनुमितौ विशिष्टज्ञानत्वेन हेतुताकल्पने ज्ञानद्वयोत्तरं विशिष्टज्ञानकल्पने परेषां गौरवं स्यात्। एतेन रजतादेरुत्पत्त्यनन्तरं तस्य चाक्षुषाद्युत्पत्त्यभ्युपगमपक्षेऽविद्यावृत्तिकल्पनपक्षे चोभयोत्पत्तिकल्पने गौरवमित्यादिकं परास्तम्। अस्मदुपगतरजताद्युत्पत्तिक्षण इव तदुत्तरक्षणेऽपि चाक्षुषस्योपगमाच्च। सामग्रीसत्त्वे कार्योत्पत्तेर्दुर्निवारत्वात्' इति।

तदप्यकिञ्चित्करम्। त्वदुक्तस्थले रजतैक्येऽपि तज्ज्ञानैक्याङ्गीकारे चैत्रमैत्रज्ञानयोरभेदावगाहिबुद्धेरापत्तेः। न हि तत्र ज्ञानैक्यमनुभूयते। न च स्वीयज्ञाने चैत्रेण मैत्रीयत्वं नानुभूयते। तस्यावृतत्वादिति वाच्यम्। तत्काले

(द्वै धु) चैत्रेणैकेन नेत्रे निमीलिते मैत्रादीना दर्शनस्य तथैव सत्त्वेन चैत्रदर्शनस्यापि सत्त्वेन 'इदानीं रजत पश्यन्नेतवास्मि' इति चैत्रस्यानुभवापत्ते । तेषु पुरुषेषु कस्यचिद्बाधग्रहे उत्पन्नेऽन्येषामपि रजतभानानुपपत्ते । बाधेन सर्वसम्बन्धिज्ञाननाशस्यावश्यकत्वात् । अन्यथा तस्यापि भ्रमानुच्छेदप्रसङ्ग । उक्तरीत्या रजतोत्पत्तेर्दूषितत्वेन फलमुखत्वाभावेन सर्वस्याप्युक्तगौरवस्य दूषकत्वाच्च । अविद्यास्वरूपादेर्निराकरिष्यमाणत्वे तत्परिणामत्वाद्युक्तेरयोगाच्च ।

किञ्च एकेनानुगतेन दोषेण बहुषु शुक्तिशकलेषु रङ्गरजतवङ्गनागादिविषयक एक एव [1]भ्रमस्तत्र परस्परविलक्षणत्वेनानुभूयमानाना तत्रैक्यस्य वक्तुमशक्यत्वात्तत्र नानापदार्थोत्पत्तिकल्पने दोषस्य तत्तद्व्यक्तिरूप नानापदार्थकारणत्वकल्पने च महागौरवम् । मम तु तत्र ज्ञानस्यैकत्वेन तद्बहुत्वाभावात्तद्दोषस्य तन्मात्र प्रति कारणताकल्पनाच्चातिलाघवम् । न च रजतत्वावच्छिन्न प्रति चाकचिक्यरूपानुगतदोषस्थले कार्यकारणभावलाघवानुरोधे युक्त्याऽनिर्वचनीयोत्पत्तिसिद्धौ अन्यत्रापि तत्कल्पनं प्रामाणिकत्वान्न दोषावहमिति वाच्यम् । एतत्स्थले उक्तलाघवानुसारेणानिर्वचनीयोत्पत्तिनिरासे अन्यत्रापि तथाभाव कुतो न स्यात् । अन्यतरमध्ये भवदभिमतार्थधिय एव प्राथमिकत्वस्य त्वया शपथेन व्यवस्थापनीयत्वात् ।

न च 'सच्च त्यच्चाभवत्' इत्यादितैत्तरीयश्रुतौ 'सत्य चानृतं च सत्यमभवत्' इति अनृतशब्दितप्रातिभासिकस्योत्पत्ति श्रूयते । 'प्राणा वै सत्यम्' इति श्रुतौ सत्यशब्दस्य व्यावहारिकेऽपि प्रयोगेण तद्विरुद्धप्रातिभासिकस्यानृतशब्दार्थत्वात् । न च सत्यानृतशब्दयो प्रमाणाप्रमाणवाक्यपरत्वमिति वाच्यम । तस्य 'सच्च त्यच्चाभवत्' इत्यादिना व्यावहारिकसृष्टे पूर्वं उक्तत्वेन पुनस्तत्कथनवैयर्थ्यात् । अन्यथा रूपादेरपि पुन सृष्टिकल्पनापत्ते । इत्थं चोक्तश्रुत्यनुगृहीतानामस्मदीययुक्तीना बलवत्त्वात्सर्वेऽपि त्वदुक्तदोषा आभासीभवन्तीति वाच्यम् ।

उक्तश्रुतीना तैत्तरीयभाष्ये आचार्योदाहृतप्रमाणानुसारेणान्यपरत्वात् । अनिर्वचनीये शक्तिग्राहकप्रमाणाभावेन तत्परत्वे मानाभावाच्च । व्यावहारिकविरुद्धत्वेन तत्पदार्थत्वे पारमार्थिकस्यापि तत्पदार्थत्वापत्ते । प्रमाणाप्रमाणवाक्यरूपशास्त्ररूपवाक्यबलेनैव सर्वेषा पुरुषार्थसाधनानुष्ठानादिषु प्रवृत्तिदर्शनेन तेषा लोकहिताहितजनकेषु प्राधान्यात् तद्विवक्षया रूपादिकं विहाय अस्यैव ब्राह्मणपरिव्राजकन्यायेन पृथगुक्तिसम्भवाच्च । अन्यथोक्तवाक्ये सत्पदेनैव सर्वव्यावहारिकप्रातिभासिकाना सत्तादात्म्यापन्नाणा गृहीतत्वेन त्यदादिसर्वपदादिवैयर्थ्यं स्यात् । विवक्षाविशेषेण सार्थक्ये प्रकृतेऽपि तथाऽस्तु । तस्मात्कस्या अपि श्रुतेरनुग्राहकत्वाभावाद्भवदुक्तयुक्तीना तर्काप्रतिष्ठानादितिन्यायेन त्वद्रीत्या मद्रीत्या क्वाभाच्च नानुमानापेक्षेति न्यायेनाऽभासत्वान्नानुभवसिद्धासत्ख्यातिबाधकत्वमन्यथाख्यातिबाधकत्व वा । न चेन्द्रियेणासन्निकृष्ट सद्रजत भासत इति वाच्यम् । अञ्जनसहकृतेन्द्रियेण निखातधनप्रत्यक्षादिवत् योगसहकारेण देशकालविप्रकृष्टपदार्थप्रत्यक्षवच्च दोषसहकारेण देशकालविप्रकृष्टपदार्थप्रत्यक्षोपपत्तेस्तद्भासकत्वमेव युक्तम् । दृष्टानुसाराल्लाघवाच्च । सामान्यलक्षणाया गदाधरेणासन्निकृष्टस्यापि

---

[1] भ्रमो यत्र इति पाठेन भाव्यमिति भाति.

(द्वै वृ) पर्वतधूमसंयोगस्य लौकिकप्रत्यक्षे संसर्गविधया भानाभ्युपगमाच्च। पदार्थकरणकशाब्दस्याऽकरे निरस्तत्वेन मानसोपनीतादिभाननिर्वाहाय ज्ञानलक्षणासन्निकर्षस्याऽवश्यकत्वे तेनापि तद्भानस्य युक्तत्वाच्च। अतो न त्वदुक्तबाधकाना अन्यथाख्यातिपक्षेऽवकाश । किं त्वन्यत्राऽचार्योक्तानामेवेत्यन्यत्र विस्तर ।

यदपि 'पुरोवर्तिरजतत्वरूपेष्टतावच्छेदकोभयवैशिष्ट्यावगाहिज्ञानस्य प्रवृत्तिकरणत्वादसद्रजतावगाहित्वे प्रवृत्त्यनुपपत्ति' इति तदप्यसत्। सत्यरजतावगाहिज्ञाने यादृशी रजतशब्दादिप्रयोगप्रयोजकीभूता शक्तिरूपा विषयिता तादृश्येव दोषप्रयोज्यविषयिता भ्रमेपि स्वीक्रियते। अथ वा सत्यरजतज्ञानतदन्यरजतभ्रमेषु रजतज्ञानत्वाख्यवैजात्य रजतार्थिप्रवृत्तिजनकतावच्छेदकं स्वीक्रियते। तत एव प्रवृत्त्यादिकमुपपद्यत इति किमनिर्वचनीयरजतोत्पत्तिस्वीकारेण। अन्यथा यादृशकामिनीव्यक्तिविशेषस्यैव तद्व्यक्तित्वेनेष्टत्व तत्र [1]तद्व्यक्तेरन्यभ्रमेण प्रवृत्तिर्न स्यात्। तद्व्यक्तित्वस्यैकमात्रवृत्तित्वेन भ्रमोत्पन्नानिर्वचनीयव्यक्तावभावेन तत्रेष्टतावच्छेदकपुरोवर्तिवैशिष्ट्यावगाहित्वाभावात्प्रवृत्त्यनुपपत्ति। न हि प्रातिभासिकव्यावहारकसाधारण्यस्य रजतत्वे स्वीकारवत्तद्व्यक्तित्वस्यापि प्रातिभासिकव्यावहारिकोभयसाधारण्यमुक्तिसम्भवम्। तथात्वे तस्योभयादिवृत्तित्वेन जातिरूपत्वस्यैवापत्ते । तत्सजातीय तद्व्यक्तित्वान्तरं जायते चेत् तस्येष्टतावच्छेदकत्वेनागृहीतत्वात्। अत एव 'रजतत्वसमवायत्वादीना भ्रमविषय उत्पत्तौ तस्यापूर्वव्यक्तेरिष्टतावच्छेदकत्वेनागृहीतत्वात्प्रवृत्त्यनुपपत्ति' इति त्वयैवाभिहितम्। न च कामिनीशरीरनिष्ठ वैजात्यमेवेष्टतावच्छेदकमिति वाच्यम्। तत्र तस्य कथञ्चिदुचितसम्भवेऽपि तद्रजतत्वतद्रूपादेर्यत्रेष्टतावच्छेदकता तत्रोक्तानुपपत्तेर्दुर्वारत्वात्।

ननु तद्रजतत्वं तद्व्यक्तित्व प्रातिभासिकव्यक्तौ व्यावहारिकसम्बन्धेन वर्तते। न चोभयवृत्तित्वानुपपत्ति । स्वसमानसत्ताकधर्मिद्वयावृत्तित्वस्यैवोभयावृत्तिपदार्थत्वाङ्गीकारादिति चेन्न। उक्तरीत्या कल्पनाया प्रातिभासिकोत्पत्तिसिद्ध्युत्तरकालिकतया प्रथमत एव उक्तबाधकबलेन ज्ञानवृत्तिक्लृप्तधर्मेण प्रवृत्त्यादेरन्यथासिद्धत्वग्रहेण प्रातिभासिकोत्पत्तेरेवासिद्धे । अन्यथाऽन्योन्याश्रयात्। यत्र तद्व्यक्तित्वतद्रूपादेरिष्टतावच्छेदकस्य नाशोत्तर कालान्तरे [2]अज्ञाततन्नाशकस्य तदवच्छिन्नारोपात्प्रवृत्तिस्तत्रागतेश्च। न हि नष्टं तद्व्यक्तित्वादिकमारोप्यमाणे व्यावहारिकसम्बन्धेन वर्तते इत्युक्तिसह सचेतसा। न वा तद्व्यक्तिनाशेऽपि तन्निष्ठं तत्स्वरूप तद्व्यक्तित्वादिक न नश्यतीत्यपि युक्तम्। तस्याखण्डस्याश्रयातिरिक्तस्य नित्यस्य सद्भावे मानाभावात्। तद्रूपस्थले सर्वथानुपपत्तेश्च। न च नष्टमपि तद्रूप संस्कारात्मना विद्यमान प्रातिभासिके वर्तते इति वाच्यम्। तद्घटादिरूपतज्जनकस्यात्राभावेनात्र तदुत्पत्त्याद्ययोगेन तत्संसर्गायोगात्। अन्यथा व्यधिकरणप्रकारकत्वापत्ते । संस्कारावस्थाया अपरोक्षभाने अनुपयोगात्। संस्कारात्मना स्थितस्येष्टतानवच्छेदकत्वात्। अन्यथा पाकेन तद्रूपनाशेऽपि तद्घटे प्रवृत्तिप्रसङ्गात्। अप्रामाणिकबहुकल्पनापत्तेश्च। तस्मात्तादृशस्थले ज्ञानवृत्तिवैलक्षण्यादेव प्रवृत्त्यादेरावश्यकत्वेन सर्वत्रापि तथात्वौचित्येन व्यर्थमनिर्वचनीयरजताद्युत्पत्तिकल्पनम्।

---

[1] तद्व्यक्तेरन्यत्र भ्रमेण इति पाठेन भाव्यमिति भाति। [2] अज्ञाततन्नाशस्य इति पाठेन भाव्यमिति भाति

(द्वै द्यु) अथापि स्यात्। ननु रजतभ्रमेण रजतस्वरूपस्य लब्धात्मनो विषयीकृतत्वादेव सिद्धि। न च तस्योत्पन्नस्य [1]सत्त्ववता शुक्त्यादिवत्सत्त्वे कुतस्तद्विलक्षणा प्रातीतिकी सत्ता। यावत्स्वप्रतिभास स्वसत्ताया [2]शुक्त्यादिसाधारण्यादिति वाच्यम्। सत्यस्य सत्यमित्यादिश्रुत्या सत्तायामपि [3]तादात्म्यस्योक्तत्वेन तारत्वादिरूपाखण्डोपाधिसत्त्वेषूत्कर्षापकर्षस्यानुभवबलादेव स्वीकारात्। अत एव स्वाम्न[4]शुक्तेस्तदारोपितरजतयोरुभयो प्रातिभासिकत्वेऽपि तत्रारोपितरजतनिष्ठोक्तरूपसत्ताया न्यूनत्वात् 'अधिष्ठानविषमसत्ताकवस्त्ववभासो भ्रम' इति भाष्यकारीयतात्पर्यविषयीभूतभ्रमलक्षणस्य नाव्याप्तिरिति चेन्न। यद्रजतममनिष सा शुक्तिकैवेत्युत्तरकालीनानुभवेन पूर्वज्ञाने महत्त्वादिविशिष्टशुक्तिविषयकत्वस्यैव विषयीकृतत्वेनानुभवसिद्धे। असत्त्वग्रहविरोधिग्रहविषयत्वस्यैव सति नानातादृशधर्मेषु कल्पने गौरवादप्रमाणिकत्वात् श्रुतेरर्थान्तरपरत्वात् सत्यतोत्कर्षपरत्वे श्रुतौ पञ्चमीप्रयोगापत्तेस्तस्या प्रामाण्यायोगाच्च।

अथापि स्यात्। 'ज्ञानवैलक्षण्यात् प्रवृत्त्याद्यभ्युपगमेऽपि प्रातिभासिकरजतोत्पत्तिर्दुर्वारा। ज्ञानाना वैलक्षण्य विषयवैलक्षण्यनिबन्धनमेव। न तु स्वत· कारणविशेषादिति वा। अन्यथाऽय घट इत्यादिज्ञानाना कारणसामर्थ्यादिना घटाद्याकारतासम्भवेन घटपटादिज्ञानाना मिथो वैलक्षण्यसम्भवेन घटादीना ज्ञानतादात्म्यापन्नतद्धर्मत्वप्राप्त्या साकारवादप्रसङ्गेन बहिर्विषयविलोपापत्त्या बाह्या एव विजयेरन्। अत एवोक्तमुदयनाचार्यैः

अर्थेनैव विशेषो हि निराकारतया धिया। इति।

इत्थ च इद रजतमिति भ्रमस्येद च रजत चेति समूहालम्बनतो वैलक्षण्यसिद्धये तद्विषयविलक्षणरजततादात्म्यापन्नशुक्तिरूप्यविशिष्टविषयकत्वमवर्जनीयमिति तन्निर्वाहायानिर्वचनीयरजतोत्पत्तिरावश्यकी' इति।

मैवम्। उक्तनियमबलेनानिर्वचनीयरजतोत्पत्तेरसिद्धे। यत उदयनाचार्याणामपि प्रमात्मकज्ञानानामेव वैलक्षण्यं विषयवैलक्षण्यनिबन्धनमभिमतम्। अन्यथा अन्यथाख्यातेस्तत्सम्मततया तत्र विशिष्टस्याप्रसिद्धतया भानायोगेनेद रजतमिति धिय इद च रजतं च तादात्म्य चेति समूहालम्बनतो वैलक्षण्यानुपपत्ते। रजतप्रकारतानिरूपितशुक्तिविषयतयैव तत्रेतरवैलक्षण्यनिर्वाह·।

वस्तुत. प्रमाया अपि न सर्वत्र विषयवैलक्षण्येन वैलक्षण्यम्। रक्तदण्डवान् पुरुष इत्याकारस्य रक्तदण्डत्वावच्छिन्नप्रतियोगिताकत्वविशिष्टसंयोगेन पुरुषाश एव दण्डविशेषणतापन्नरक्तदण्डत्वादेरवगाहिनो रक्तदण्डत्वविशिष्टवैशिष्ट्यावगाहि[5]ज्ञानात् विशेष्ये विशेषण तत्र च विशेषणान्तरमिति रीत्या पुरुषे रक्तदण्डावगाही स्वावच्छिन्नप्रतियोगिकत्वविशिष्टसंयोगेन पुरुषे स्वातन्त्र्येण रक्तदण्डत्व चावगाहमानश्च य समूहालम्बनप्रत्यय.

---

[1] सत्त्ववता इत्येतदधिकं लेखकप्रमादायत्तमिति भाति [2] शुक्त्यादिसत्तासाधारण्यादिति इति पाठेन भाव्यमिति भाति।

[3] तारतम्यस्योक्तत्वेन तारत्वादिरूपाखण्डोपाधिवत्सत्त्वेषू इति पाठेन भाव्यमिति भाति

[4] शुक्तितदारोपित इति पाठेन भाव्यमिति भाति। [5] ज्ञानस्य इति पाठेन भाव्यमिति भाति.

(द्वै द्यु) तस्य विषयतावैलक्षण्यं विना निर्वोढुमशक्यत्वात्। ज्ञानद्वयेऽपि पुरुषे दण्डस्य दण्डे च रक्तत्वदण्डत्वयोः पुरुषे च स्वावच्छिन्नप्रतियोगिकत्वविशिष्टसंयोगेन रक्तदण्डत्वस्य भानाविशेषात्। अत प्रथमे रक्तदण्डत्ववृत्तिपुरुषविशेष्यतानिरूपितप्रकारतादण्डविशेष्यतानिरूपितप्रकारतयोरवच्छेद्यावच्छेदकभाव। समूहालम्बने च न स इति विषयतावैलक्षण्यमेव तन्निर्वाहकम्। किञ्च विषययो परस्परं भेदस्य ज्ञानभेदप्रयोजकत्वे घटपटाविति समूहालम्बनस्य भेदापत्ति।

ननु यदन्यार्थविषयकज्ञानं यत् तत् तद्विषयकज्ञानभिन्नमिति न व्याप्ति। येनोक्तसमूहालम्बने व्यभिचार स्यात्। किन्तु यज्ज्ञानं यज्ज्ञानाद्भिन्न तत्तद्विषयभिन्नविषयकमित्येव। भेदोऽपि न वास्तव। किन्तु तदपर्याप्तविषयतापर्याप्त्यधिकरणत्वरूप। तेन 'मेयत्ववान् वह्नि' [1]'अभिधेयत्ववांश्च वह्नि' इति ज्ञानयोर्न व्यभिचार। न च नैयायिकाना विशिष्टस्य विशेष्यविशेषणतत्सम्बन्धानतिरिक्तत्वात्प्रमेयत्वविशिष्टवह्न्यपर्याप्तत्वं नाभिधेयत्वविशिष्टवह्निविषयताया इति वाच्यम्। यत प्रत्येक विशेष्यताप्रकारतारूपविषयताना तद्व्यक्तित्वेन प्रत्येकवृत्तितद्व्यक्तित्वावच्छिन्नपर्याप्तत्वेऽपि तज्ज्ञानीयविषयतात्वेन विशेष्यविशेषणसंसर्गादिघटितविशिष्टपर्याप्ततया तादृशविशेष्यविशेषणसंसर्गादिसाधारणव्यासज्यवृत्तिधर्मस्य तत्पर्याप्त्यनुयोगितावच्छेदकत्व स्वीक्रियते। यद्यपि विशिष्टद्वयविषयकसमूहालम्बनस्थले तज्ज्ञानविषयतात्व तादृशविषयताद्वयसाधारणमतो विषयतात्व ज्ञानविषयतात्ववदतिप्रसक्ततया न पर्याप्त्यवच्छेदकं तथापि तत्र मुख्यविशेष्यताद्वयनिरूपितविषयिताद्वयस्य परस्परभिन्नत्वात्तत्तद्विषयितानिरूपितविषयतात्वमेव पर्याप्तिप्रतियोगितावच्छेदकम्। [2]भ्रमविषयिताया अप्युक्तपर्याप्तिर्वर्तत एव। परन्तु [3]प्रमीयविषयितापर्याप्त्यनुयोगितावच्छेदको यो व्यासज्यवृत्तिधर्मस्तदवच्छिन्ननिरूपकताकाधिकरणता देशकालयो: स्वीक्रियते। पर्वते प्रमेयवह्नि' 'इदानीं प्रमेयवह्नि' इति प्रत्ययात्। भ्रमविषयतापर्याप्त्यवच्छेदकतादृशधर्मावच्छिन्नाधिकरणता तु न कुत्रापि। 'इदानीं काञ्चनमयवह्नि' 'पर्वते काञ्चनमयवह्नि इति प्रमाभावात्। इत्थ च यज्ज्ञानभिन्नज्ञानत्व यत्र तत्र तज्ज्ञाननिष्ठयत्किञ्चिन्मुख्यविषयितानिरूपितविषयतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकभिन्नस्वीयतादृशपर्याप्त्यनुयोगितावच्छेदककत्वमिति भ्रमप्रमासाधारण्येनायं नियम। तेन यथाश्रुते प्रमेयवान् अभिधेयवानिति ज्ञानयोर्विषयवैलक्षण्यस्योपपादयितुमशक्यत्वेऽपि उक्तनिष्कर्षे न दोष। प्रमेयत्वप्रमेयतदाश्रयघटितत्रित्वाभिधेयत्वघटितत्रित्वयो तत्तत्पर्याप्त्यवच्छेदकयोर्भिन्नत्वात्। एव रक्तदण्डवान् पुरुष इति विशिष्टवैशिष्ट्यज्ञानीयविषयतापर्याप्त्यवच्छेदकं रक्तदण्डत्वरक्तदण्डरक्तदण्डत्वावच्छिन्नप्रतियोगिकसंयोगपुरुषवृत्तित्वैको व्यासज्यवृत्तिधर्म, समूहालम्बने च विशेष्ये विशेषणमिति या पुरुषविषयता तत्पर्याप्त्यवच्छेदक रक्तत्वावच्छिन्नप्रतियोगितानिरूपकत्वाघटितसमुदायत्व, परम्परासम्बन्धावच्छिन्नरक्तदण्डत्वप्रकारतानिरूपितपुरुषविषयतापर्याप्त्यवच्छेदक तु तादृशदण्डत्वसम्बन्धपुरुषघटित दण्डाघटितमेव समुदायत्वमितिरीत्या त्रयाणा

---

[1] 'अभिधेयत्ववान् वह्नि' इति पाठेन भाव्यमिति भाति   [2] भ्रमविषयताया इति पाठेन भाव्यमिति भाति

[3] प्रमीयविषयता इति पाठेन भाव्यमिति भाति.

(द्वैगु) विलक्षणत्वान्न तत्राप्युक्तनियमस्य व्यभिचार । उक्तनियमानुरोधेनैव नव्यैः प्राचीनोक्तमवच्छेदकताख्य-विषयताया विशिष्टवैशिष्ट्यबोधे स्वीकारेण तस्य विशेष्ये विशेषणमिति ज्ञानाद्वैलक्षण्यमनादृत्य विशेषणतावच्छेद-कस्य परम्परासम्बन्धभानादिना तद्वैलक्षण्यमुररीकृतम् । प्राचीनपक्षे ज्ञानद्वये भासमानविषयाणां न्यूनाधिकभावाभावे-नोक्तपर्याप्त्यवच्छेदकवैलक्षण्यस्य वक्तुमशक्यत्वात् । इत्थं च अन्यथाख्यात्यङ्गीकाराभावपक्षे भ्रमविषयरजतादि-घटितसमुदायत्वरूपपर्याप्त्यवच्छेदकमनिर्वचनीयोत्पत्तिं विना न निर्वहति । असति सङ्ख्यारूपसमुदायोत्पत्ते-रयुक्तेरिति चेन्न ।

त्रैकालिकनिषेधप्रतियोगिनो विप्रतिषिद्धोत्पत्त्यङ्गीकारापेक्षयोत्पत्तिमनपेक्ष्यैव तत्र सङ्ख्यादिरूपसमुदाय-त्वस्य गुणादिसाधारण्यानुरोधेनापेक्षाबुद्धिविशेषविषयत्वरूपसमुदायत्वस्य वा उक्तानुरोधेनैवान्यथाख्यातिपक्षस्यैव वाऽङ्गीकर्तुमुचितत्वेनानिर्वचनीयोत्पत्त्यसिद्धेः ।

वस्तुतस्तूक्तनियम एव न सङ्गच्छते । तादृशपर्याप्त्यवच्छेदकरूपस्यैव दुर्निरूपत्वात् । न च विशेष्य-विशेषणोभयसाधारणव्यासज्यवृत्तिधर्म एव स इत्युक्तमिति वाच्यम् । तथात्वे घटवद्भूतलमिति ज्ञानीयविषयता-पर्याप्त्यवच्छेदकीभूतघटघटत्वसमवायसंयोगभूतलत्वभूतलवृत्तिषट्कत्वस्य किञ्चिद्देशवृत्तितानवच्छेदकतया भ्रम-विषयतापर्याप्त्यवच्छेदकरूपाविशेषेण भ्रमविशिष्टाप्रसिद्धिवत् प्रमाविशिष्टस्याप्रसिद्ध्यापातात् । अन्यथा घटघट-त्वसंयोगादिषट्कवदिदमिति प्रत्ययापत्तेः । न च विशेष्यविशेषणभावापन्नपदार्थेषु पर्याप्तो विलक्षण एव व्यासज्य-वृत्तिधर्मः । स चाधेयतानवच्छेदकोऽप्याधेयतापर्याप्त्यवच्छेदको भवतीति वाच्यम् । विशेषणतद्विशेषणादौ आधे-यत्वाभावे तदतिप्रसक्तस्य व्यासज्यवृत्तिधर्मस्य तत्पर्याप्त्यवच्छेदकत्वायोगात् । तत्पर्याप्तेरपि तदात्मकस्वरूप-सम्बन्धरूपत्वात् । अन्यथा गगनघटोभयत्वस्याप्याधेयतावच्छेदकत्वापत्तेः । कालिकेन वह्न्यभाववान्ह्रदो विशेष-णतया वह्न्यभाववानिति ज्ञानाद्विशेषणतया वह्न्यभाववान्ह्रदः कालिकेन वह्न्यभाववानिति ज्ञानस्य वैलक्षण्यानु-पपत्तेश्च । उभयत्र विषयसाम्यात् ।

अथोक्तधर्मो न सङ्ख्यादिरूपः । किन्तु घटवद्भूतलमित्यादिज्ञानीयविषयता यादृशी तादृग्विषयतारूपा । न च समानविषयतायाः कथं स्वसमानविषयतान्तरपर्याप्त्यवच्छेदकत्वमिति वाच्यम् । द्वित्वं प्रति द्वित्वान्तरस्ये-वावच्छेदकत्वोपपत्तेरिति चेन्न । ज्ञानभेदेन विषयताभेदे मानाभावेन समानाकारज्ञानीयविषयतैक्येन तस्यावच्छे-द्यावच्छेदकभावायोगात् । ज्ञानभेदेन विषयताभेदेऽपि तादृशविषयतानां प्रत्येकव्यक्तौ वृत्तित्वेन तादृशविशेषण-विशेष्यनिखिलसाधारणपर्याप्तिं प्रत्यवच्छेदकत्वायोगात् । न च [1]तादृशविषयिताया अप्येतादृशी पर्याप्तिर्वर्तते सैव तस्यावच्छेदिका तस्या अपि तत्पूर्वं विद्यमानाऽन्येति वाच्यम् । जन्यघटितविशिष्टे प्रथमतः उत्पन्नज्ञानीय-विषयतायाः पर्याप्तेर्वक्तुमशक्यत्वात् । न चैश्वरीयज्ञानविषयत्वं तत्राऽद्यक्षणे वर्तत इति वाच्यम् । तत्पर्याप्तेरेव वक्तुमशक्यत्वात् । न च तत्समानकाले योगिनामपि तज्ज्ञानसत्त्वात्तद्विषयत्वयोः परस्परावच्छेद्यत्वमिति वाच्यम् ।

[1] तादृशविषयतायाः इति पाठेन भाव्यमिति भाति.

(द्वै.द्यु ) तादृशावच्छेद्यावच्छेदकभावे मानाभावात् । अन्यथा समानकालीनरूपरसयोरप्यवच्छेद्यावच्छेदकभावापत्ते । अत एव साध्यसामानाधिकरण्यावच्छेदकरूपवत्त्वमिति लक्षणस्य स्वरूपसम्बन्धरूपावच्छेदकत्वघटनया परिष्कारखण्डनावसरे 'समानकालीनयो रूपरसयोर्नावच्छेद्यावच्छेदकभाव ' इत्युक्तम् । विशेषनिरुक्तौ दीधितिकृता एतन्न्यायेनैव द्वित्वस्य द्वित्वान्तरावच्छेदकत्वमप्यपास्तम् । आद्यद्वित्वेऽगते । अस्तु वैतद्यथा तथा । उक्तविषयतारूपधर्मस्य विशेष्यविशेषणरूपाधेयानाधेयसाधारण्यात्कथ व्यासज्यवृत्तिधर्मोक्तपक्षदोषनिस्तार । न च वह्निमत्पर्वतवानयं देश इति प्रमाबलादेव वह्निविशिष्टपर्वतरूपविशिष्टे आधेयतापर्याप्ते सत्त्वात् उक्तविशिष्टवृत्तिधर्मस्याधेयतापर्याप्त्यवच्छेदकत्वम् । वह्निमद्भ्रदवानिति प्रमाभावात् भ्रमीयविषयतारूपपर्याप्त्यवच्छेदकधर्मस्य नाधेयतापर्याप्त्यवच्छेदकत्वमिति वाच्यम् । वह्निमत्पर्वतवानिति ज्ञानस्य पर्वतांश एवाधेयत्वाद्यवगाहित्वात् विशिष्टातिरिक्तत्वादिनैव सर्वोपपत्तौ उक्ताप्रामाणिककल्पनायोगाच्च । किं चोक्तरीत्या तत्समानाकारज्ञानान्तरविषयताया एतज्ज्ञानीयविषयतापर्याप्त्यवच्छेदकत्वे घटवद्भूतलमिति विशिष्टवैशिष्ट्यावगाह्येतज्ज्ञानीयविषयताया पर्याप्तिं प्रति तत्समानाकारज्ञानान्तरविषयताया अवच्छेदकत्वम् । विशेष्ये विशेषणमिति रीत्या जायमानैतज्ज्ञानीयविषयताया पर्याप्तिं प्रति तु तत्समानाकारज्ञानान्तरविषयताया अवच्छेदकत्वमित्येतावन्मात्रेणोपपत्त्या उक्तनियमानुरोधेन नव्यानां विशिष्टवैशिष्ट्यबोधे अधिकावगाहित्वासिद्धेश्च । किञ्च घटवद्भूतलमिति समानविषयकज्ञानेषु घट इत्यादिसमानाकारज्ञानेषु च परमते च सोयं देवदत्त इत्यादिनानावाक्यजन्यबोधेषु एकस्वरूपमात्रावगाहिषु बोधेषु चिन्मात्ररूपाखण्डार्थविषयकेषु 'सत्य ज्ञान' 'यथा महामत्स्य ' 'तत्वमसि' इत्यादिपदार्थशोधकवाक्यमहावाक्यजन्यनानाबोधेषु विषयवैलक्षण्याज्ज्ञानवैलक्षण्यमिति यथाश्रुतनियमस्योक्तरीत्या नैयायिकमतानुसारेण कृतनिष्कर्षस्य च विशिष्टातिरिक्ततावाद्यद्वैतिरीत्या तज्ज्ञानविषयातिरिक्तविषयकत्व विषयवैलक्षण्यमिति निर्ष्कर्षस्य च व्यभिचारापरिहारात् । विषयताया विषयतान्तरपर्याप्त्यवच्छेदकत्वपक्षस्योक्तरीत्याऽसम्भवदुक्तिकतया तत्पक्षे नैयायिकनये व्यभिचारपरिहारस्यानादरणीयत्वात् ।

अथ वैलक्षण्य प्रवृत्तिविशेषनिर्वाहकत्वसंशयविशेषनिवर्तकत्वानिवर्तकत्वादिरूपम् । तथा च यज्ज्ञानं यज्ज्ञानानिवर्त्यसंशयनिवर्तकत्ववत् यज्ज्ञानानिर्वाह्यप्रवृत्तिनिर्वाहकत्ववद्वा तत् तज्ज्ञानविषयविलक्षणविषयकमिति नियमपर्यवसानम् । नैयायिकमते तु साध्यार्थं पूर्ववदेव । अद्वैतसिद्धान्ते तूक्तनियमानुसारादेव विशिष्टाङ्गीकाराद्यथाश्रुत एव । तथा च पूर्वोक्तसमानाकारज्ञानेषु परस्परानिवर्त्यसशयानिवर्तकत्वान्न व्यभिचार । दण्डपुरुषसंयोगा इति ज्ञानानिवर्त्यस्य पुरुषो दण्डी न वेति सशयस्य निवर्तके दण्डी पुरुष इति विशिष्टज्ञाने उक्तहेतुसत्त्वात्समूहालम्बनविषयविलक्षणविशिष्टविषयकत्वरूपसाध्यस्यापि सत्त्वादन्यत्रापि एवमेव सत्त्वान्न कुत्रापि व्यभिचार । एव प्रवृत्तिजनकत्वस्य हेतुत्वे तज्जननशक्तिरूपस्वरूपयोग्यत्वमेव विवक्षणीयम् । अनुपधायकसङ्ग्रहानुरोधात् । समानाकारकज्ञानद्वयमध्ये एकस्याप्रामाण्यज्ञानास्कन्दितत्वे तदनिवर्त्यसशयनिवर्तके समानाकारज्ञानान्तरे व्यभिचारवारणाय अप्रामाण्यज्ञानानास्कन्दितत्व यज्ज्ञाने निवेश्यम् । उक्तज्ञानस्य यज्ज्ञानपदे-

(द्वै धु) नोपादानाभावात् न व्यभिचारः । इत्थं चेदं च रजतं चेति समूहालम्बनानिवर्त्यसंशयनिवर्तके इदं रजतमिति भ्रमे तद्विषयविलक्षणरजतविशिष्टेदंपदार्थरूपविलक्षणविषयकत्वस्याऽवश्यकतया तन्निर्वाहाय रजतोत्पत्तिरावश्यकी' इति चेन्न ।

एवमपि सत्यज्ञानादिवाक्यजन्याखण्डार्थबोधस्य भ्रमणि सत्यत्वादिसंशयनिवर्तकतया महावाक्यार्थबोधस्य तु जीवेशभेदसंशयादिनिवर्तकतयोक्तवैलक्षण्यशालिनोश्चिन्मात्रविषयकयोर्विषयवैलक्षण्याभावात् व्यभिचारो दुर्वार एव ।

किञ्च इदं रजतमिति भ्रमे द्व्याकारत्वानुरोधेन ज्ञानवैलक्षण्यानुरोधेन विषयवैलक्षण्यसिद्ध्या परस्पराध्यासस्त्वया समर्थितः । तत्रेदं रजतमिति भ्रमस्यैकत्वेनैकस्मिन्नेव ज्ञाने आकारद्वयाङ्गीकारात्तदाकारज्ञानानिवर्त्यसंशयनिवर्तकत्वतदनिर्वाह्यप्रवर्तकत्वयोरभावेन हेत्वसिद्ध्या विषयवैलक्षण्यासिद्ध्या परस्पराध्यासासिद्ध्यापत्तेः ।

समानाकारज्ञानीयविषयैक्यमभ्युपेत्य '[1]तद्विषयतातिरिक्ता या विषयता तन्निरूपकविशिष्टातिरिक्तविशिष्टनिरूपितेति विषयतामन्तर्भाव्यैव नियमपरिकल्पने ज्ञाने अर्थातिरिक्तेन विषयितारूपेण विशेषणेन विशिष्टत्वं तादृशविषयतानां च स्वसम्बन्धमनपेक्ष्यैव परस्परव्यावृत्तत्वग्रहस्तावदावश्यक इत्यागतम् । अन्यथा विषयवैलक्षण्यसिद्धिं विना विषयितानां तदाश्रयज्ञानानां च परस्परवैलक्षण्यग्रहाभावापत्त्या परस्पराश्रयप्रसङ्गेन विषयवैलक्षण्यसिद्धिरयुक्ता स्यात् । तथा च 'अर्थेनैव विशेषः' इत्ययुक्तमेव ।

ननु सन्त्येव ज्ञानेषु स्वतो विशेषाः । तेऽपि अर्थविशेषसम्बन्धनिबन्धना एव । न तु करणसामर्थ्यनिबन्धनाः । करणसामर्थ्यनिबन्धनत्वे ज्ञानेष्वेव स्वजनकसामर्थ्येन तत्तादात्म्यापन्नघटाद्याकारसम्भवेन बहिर्विषयविलोपापत्तिः । अतो भ्रमेऽनुभवसिद्धाऽकारपदवाच्य[2]विषयतानिर्वाहाय तादृशविशिष्टद्वयस्यावश्यकतेति चेन्न । भ्रमस्थले अविद्याया एव ज्ञानार्थोभयरूपतया युगपत्परिणामाङ्गीकारेण ज्ञानस्याद्यक्षणे निर्विषयत्वायोगेन तत्र विषयताया अपि तेन सहोत्पन्नत्वेन समानकालिकत्वेन प्रयोज्यप्रयोजकभावस्य विनिगमकाभावेन वक्तुमशक्यत्वेन त्वन्मते तथा नियमस्य वक्तुमशक्यत्वात् । अनुमित्यादिज्ञाने विषयस्याकारणतया करणबलेनैव विलक्षणाकारताया आवश्यकत्वाच्च । न चैवं साकारवादनिरासानुपपत्तिः । त्वदीयनियमस्य साकारवादित्वेनैव तेनानङ्गीकारेण त्वया तथा नियमाङ्गीकारेऽपि तन्निरासानुपपत्तितौल्यात् ।

तस्मात्तन्निरासः स्वव्याघातादिरूपप्रकारान्तरेण कर्तव्यः । तथा हि 'घटादिज्ञानं साकारम् । न तु स्वभिन्नविषयकम्' इत्यादिरूपं सहोपलम्भनियमादियुक्तिजज्ञानं स्वभिन्नविषयकमुत न वा । आद्ये अनुमित्यात्मकस्य स्वस्यैव स्वभिन्नघटज्ञानादिविषयकत्वप्राप्त्या 'ज्ञानसामान्यं साकारम्' इत्यस्य व्याहतिः । स्वभिन्नज्ञाना-

---

[1] यज्ज्ञानीया या विषयिता सा तद्विषयितातिरिक्ता या विषयिता तन्निरूपकविशिष्टातिरिक्तविशिष्टनिरूपितेति विषयितामन्तर्भाव्यैव इति पाठेन भाव्यमिति भाति

[2] विषयितानिर्वाहाय इति पाठेन भाव्यमिति भाति.

(द्वै षु सविषयकत्वे ज्ञानसामान्य विषयाभिन्नमित्यादिशब्दाभिलाप्याकारस्यानुमित्यभिन्नत्वे घटज्ञानादौ स्वविषयाभेदासिद्ध्या पुनस्तादृशार्थस्य व्याहृति । अतो ज्ञानभिन्नो विषयोऽङ्गीकर्तव्य इति ।

अत्रेदं रजतमिति भ्रमोत्तर 'इदं रजत' 'रजतमिदं' 'इद रजतताद्रात्म्यवत्' 'रजत चेदतादात्म्यवत्' इति नानाव्यवहारानदभिलापकारणीभूतनानाकारा अङ्गीकर्तव्या इति तदनुरोधात्तादात्म्यवत्तादात्म्यततादात्म्यवत्तादात्म्यादेरप्यध्यासापत्तिरिति अनन्तताद्रात्म्यादेरुत्पत्त्यापत्ति । न चैतत्त्विष्टम् । तादात्म्यतादात्म्यादेस्त्वयाऽनङ्गीकृतत्वात् । न च तत्र तादात्म्यवत्तादात्म्यवदित्याकारता नास्त्येव । इद रजतमित्याकारस्यैव तादृशसर्वव्यवहारहेतुत्वोपपत्तेरिति वाच्यम्, तेनैवाकारेण रजतमिदमिति व्यवहारस्यापि सम्भवेन रजते इदतादात्म्याध्यासस्याप्यसिद्धि । न च विनिगमकाभाव । रजतस्य भ्रम त्पूर्वं असिद्धत्वेन तदध्यासे अधिष्ठानत्वायोगादज्ञानाद्यनवच्छेदकत्वाच्च । तथापि तत्कल्पने तन्निर्वाहकेकार्यकारणभावादिकल्पनागौरवस्यैव विनिगमकत्वादिति ज्ञेयम् ।

किञ्च ज्ञानवैलक्षण्ये विशिष्टविषयवैलक्षण्यमिति नियमाङ्गीकारे शशविषाणमस्ति नरविषाणमस्तीति वाक्यद्वयजन्यबोधप्रमादाय यथाश्रुते निष्कर्षे च सर्वत्र व्यभिचार । तत्रान्यथाख्यातेरसत्ख्यातेर्वाऽभ्युपगतत्वेन विशिष्टविषयस्य तत्रोत्पत्त्यनङ्गीकारात् । तत्राप्यनिर्वचनीयोत्पत्तिरेव स्वीक्रियत इत्यस्यान्योन्याश्रयादिदुष्टत्वात् । न च तत्र विकल्पाख्यवृत्तिरेव स्वीक्रियते । अतो न तज्ज्ञानम् । ज्ञानत्वनिवेशेनैवोक्तनियमस्वीकारान्न व्यभिचार इति वाच्यम् । विकल्पानामपि परस्पर प्रवृत्त्यादिकार्यवैलक्षण्यदर्शनेन विलक्षणत्वात्तस्य विषयवैलक्षण्य विना विषयतावैलक्षण्येनैव निर्वाहवत् ज्ञानस्थलेपि तथैव निर्वाहसम्भवात् अत्र विषयवैलक्षण्यस्याप्रयोजकत्वेनासिद्धे ।

किञ्च विकल्पे व्यभिचारदर्शनेन ज्ञानस्थल एवेतिवत् भ्रमे व्यभिचारदर्शनेनाबाधितज्ञानानामेवाय नियम भ्रमे तु दोषबलादेव विलक्षणविषयतेत्यङ्गीक्रियताम् । किमनुभवविरुद्धरजतोत्पत्तिकल्पनया । तद्युक्तिभ्रमस्थले उक्त दोषो न विस्मर्तव्य । न च भ्रमस्य विषय विनैव विलक्षणविषयताशालित्वे प्रमायामपि तथाभावशङ्कयाऽर्थसिद्धि कथं स्यादिति वाच्यम् । भ्रमविषयस्यार्थक्रियानर्हत्वे प्रमाविषयेपि तथाभावशङ्कया प्रवृत्त्युच्छेदस्तवापि कुतो न स्यात् । बाधाबाधाभ्या व्यवस्थेति तु समानम् । [1]ज्ञानज्ञेययोस्तादात्म्यस्यैव विषयत्वाद्रजतोत्पत्ति विना विषयिविषयभावानुपपत्तिरिति तु निराकरिष्यते । तस्मात्केनापि प्रकारेणानिर्वचनीयोत्पत्ते साधयितुमशक्यत्वादनिर्वचनीयमप्रमाणिकमेवेति स्थितम् । अत्र यज्ज्ञानान्निर्वाह्यप्रवृत्त्यादिनिर्वाहक यद्यथार्थज्ञान तत्तद्विषयविलक्षणविषयकमिति नियम । विषयवैलक्षण्यं च भेदविशेषाभयस्थलानुरोधेन तदनिष्पाद्यकार्यनिष्पादकत्वम् । तथा च दण्डपुरुषसंयोगा इति समूहालम्बनानिर्वाह्यविशिष्टविषयकप्रवृत्तिनिर्वाहके दण्डी पुरुष इति ज्ञाने तद्वैलक्षण्यसत्त्वात्तद्विषयविलक्षणदण्डिरूपविशिष्टविषयकत्वस्यावश्यकतया दण्डिरूपविशिष्टस्य सिद्धि । दण्ड्यादीना शुद्धानिर्वाह्यकार्यनिर्वाहकत्व । शुद्धानिर्वाह्यकार्यकारित्वं च 'दण्डी प्रैषानन्वाह' 'लोहितोष्णीषा ऋत्विज सञ्चरन्ति'

[1] ज्ञाने ज्ञेययोस्तादात्म्यस्यैव इति पाठेन भाव्यमिति भाति

(द्वे द्यु) इत्यादिश्रुतिभिर्विशिष्टस्य विनियोगात् शुद्धानिबाधापूर्वमेव द्व्यणुकत्वादिना सिद्धम् । न च दण्डसंयोगादेः पुरुषनिष्ठजनकतायामवच्छेदकत्वाङ्गीकारेणोपपत्तौ किं विशिष्टरूपेण तत्परिणामकल्पनयेति वाच्यम् । तथात्वे तन्तुसंयोगादिकस्यैव कारणतावच्छेदकत्वादिना तन्त्वतिरिक्तपटादिनिर्वर्तनादिविलक्षणकार्यसम्भवे द्रव्योत्पत्तेरेवासिद्ध्या परमाणुपुञ्जवादापत्ते. । तस्मात्परम्परविलक्षणकार्यनिर्वाहकत्वविलक्षणप्रतीतिभ्यां तदङ्गीकार इव विशिष्टद्रव्यव्युत्पत्तिः सिद्धान्तेऽङ्गीकृता । अधिकमन्यतोऽवगन्तव्यमित्यलम् ।

(गु टि) एवं प्रसङ्गमूलभूतविशेषव्याप्तेरभावात् बाधकभावाभावाभ्यां विशेषेण अविशेषव्याप्तेरप्यसिद्धेः घटादिप्रतीतेरसद्विषयत्वशङ्काप्रसङ्गं निरस्य इदं रजतमितिप्रतीतेर्निरालम्बनत्वाभावेनाऽपादकस्यैवासिद्धेर्न घटादिप्रतीतेस्तत्प्रसङ्गावकाश इत्याशयेनाह ॥ न च वयमिति ॥ यावद्धि अस्मिन् प्रत्यये भासते तस्य सर्वस्याप्यसत्त्वे निरालम्बनत्वं स्यात् । न चैवमङ्गीक्रियत इत्यर्थः । तत्कथमित्यत आह ॥ शुक्तीति ॥ तस्याश्च सत्त्वादिति भावः । तर्हि कथमिदं रजतमिति प्रतीतेरसद्विषयत्वमित्यत आह ॥ केवलमिति ॥ संविद्विरुद्धमिति ॥ भासमानत्वातिरिक्तालम्बनत्वभावात् अन्यावभासिज्ञाने अन्यावभासनं विचार्य संविद्विरुद्धमित्यर्थः । एवञ्च संविद्विरुद्धत्वस्वरूपं नयवीथ्यां स्पष्टम् ।

> अत्र ब्रूमो य एवार्थो यस्यां संविदि भासते ।
>
> वेद्यः स एव नान्यः स्याद्वेद्यो वेद्यस्य लक्षणम् ॥ १ ॥
>
> इदं रजतमित्यत्र रजतञ्चावभासते ।
>
> तदेव तेन वेद्यं स्यान्न च शुक्तिरवेदनात् ॥ २ ॥
>
> तेनान्यस्यान्यथा भानं प्रतीत्यैव पराहतम् ।
>
> परस्मिन् भासमाने हि न परं भासते यतः ॥ ३ ॥ इति,

यच्च संविद्विरुद्धमित्यस्य तदनुव्यवसायरूपसंविद्विरुद्धमित्यर्थकथनं तत्तु संविद्विरुद्धस्वरूपोपदर्शकोदाहृतनयवीथ्यदर्शनमूलकत्वेनायुक्तत्वादुपेक्ष्यम् ॥ असिद्धिरिति ॥ शुक्तिसंनिकृष्टकरणजन्यत्वेन शुक्तिविषयत्वस्यैव सिद्ध्या रजतसंनिकृष्टकरणाजन्यत्वेन रजतविषयत्वाभावसिद्धेरिति भावः । ननु 'यदाकारं यद्विज्ञानं तत्तद्विषयम्' इति व्याप्त्या रजतज्ञानस्य रजताकारत्वेन तद्विषयत्वसिद्धेर्नासिद्धिरित्यत 'यदाकारा या प्रमितिः सा तद्विषया' इत्येव व्याप्तौ रजताकारत्वेन रजतप्रमितेस्तद्विषयत्वसिद्धावपि तद्भ्रमस्य रजताकारत्वेन तद्विषयत्वासिद्ध्या असिद्धिरेवेत्याशयेनाह ॥ यदाकारमिति ॥

### वियदादिजगतो ज्ञाननिवर्त्यत्वशङ्का तन्निरासश्च

(टी) न वयमन्यथाविज्ञातस्य सम्यग्विज्ञानगोचरत्वं बाध्यत्वं ब्रूमः । येन सतस्तदस्तीति व्याप्तिभङ्गः स्यात् । किं नाम । ज्ञाननिवर्त्यत्वमित्यत आह

(टी.) न च बाध्यं जगदित्यत्र किञ्चिन्मानम् ।

न तावज्ज्ञाननिवर्त्यत्वमम्बरादौ प्रत्यक्षसिद्धं । अप्रतीतेः । न चानिर्वचनीयत्वहेतुसिद्धम् । परस्पराश्रयप्रसङ्गात् । दृश्यत्वादयस्तु निरसिष्यन्ते । 'ज्ञाते द्वैतं न विद्यते' इत्याद्यागमस्यान्यपरत्वमन्यत्रोपपादितम् । ज्ञानान्मोक्षाभिधानस्यान्यथैवोपपादितम् । अतो ज्ञाननिवर्त्यत्वं चेद्बाध्यत्वं तर्हि तस्य वियदादावभावात्कल्प्यानुपपत्त्या तत्र सद्विलक्षणत्वप्रतिपत्तिः स्यात् ।

(वि टि) ननु 'सत्वेन बाध्येन' इत्यत्र बाध्यत्वं सत्त्वेऽप्युपपन्नमिति यदुक्तं तन्न । बाध्यत्वमिह ज्ञाननिवर्त्यत्वमेव विवक्षितम् । न नूक्तम् । न च सदसदात्मनोर्ज्ञानेन निवृत्तिरिति कथं सत्त्वेपि बाध्यत्वमुपपन्नं स्यादित्यशङ्कानिरासार्थं न च बाध्यं जगदित्यत्र किञ्चिन्मानम् इत्युक्तम् । तदवतारयति ॥ न च वयमिति ॥ ॥ अनिर्वचनीयहेतुसिद्धमिति ॥ अनिर्वचनीयत्वरूपहेतुसिद्धमित्यर्थः ॥ परस्पराश्रयेति ॥ अनिर्वचनीयत्वसिद्धेर्ज्ञाननिवर्त्यत्वरूपबाध्यत्वसिद्ध्यधीनत्वादित्यर्थः । ननु दृश्यत्वादिहेतुनैवाम्बरादेर्ज्ञाननिवर्त्यत्वसिद्धेः क्व परस्पराश्रयप्रसङ्ग इत्यत आह ॥ दृश्यत्वादयस्त्विति ॥ निरसिष्यन्त इति ॥ दृश्यत्वादीनामम्बरादौ ज्ञाननिवर्त्यत्वसाधकतानिरासं करिष्यत इत्यर्थः ॥ ननु 'विकल्पो विनिवर्तेत' इति माण्डूक्यश्रुत्यैव वियदादेर्ज्ञाननिवर्त्यत्वं सेत्स्यतीत्यत आह ॥ ज्ञाते द्वैतमिति ॥ विकल्पो भेदप्रपञ्चो यद्यज्ञानादिना केनचित्कल्पितः स्यात्तर्हि निवर्तेत । न च निवर्तते । तस्मान्न कल्पित' इत्ययमेव मतो वाद । श्रुत्यादिषूपदेशात् । द्वैतं न विद्यत इति वादस्तु अज्ञाने तत्त्वाज्ञानदशाया अज्ञानिनामेवायं वाद इत्यन्यत्र तद्भाष्यादावुक्तमित्यर्थः ।

ननु 'तमेवं विदित्वाऽतिमृत्युमेति' इत्यादौ ज्ञानान्मोक्षः प्रतीयते । मोक्षश्च बन्धनिवृत्तिरेव । बन्धश्च नाज्ञानादतिरिच्यते । तच्च वियदादिसकलजगदुपादानमिति ज्ञानादज्ञाननिवृत्तौ तदुपादेयस्य सर्वस्य जगतोपि निवृत्तिरिति प्रपञ्चमात्रे ज्ञाननिवर्त्यत्वसिद्धिरित्यत आह ॥ ज्ञानादिति ॥ बन्धस्यापि न ज्ञानान्निवृत्तिः । किं तु भगवत्प्रसादादेव । 'यमेवैष वृणुते तेन लभ्य' 'यस्य प्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेण' इत्यादिश्रुतेः । ज्ञाननिवर्त्यत्वेपि गरुडध्याननिवर्त्यविषस्येव सेतुदर्शननिवर्त्यब्रह्महत्यादेरिव सुहृद्दर्शननिवर्त्यदुःखादेरिव च सत्यत्वोपपत्तेश्चेत्याद्यन्यथैवान्यत्रोपपादितमित्यर्थः । न च तथापि प्रपञ्चस्य ज्ञाननिवर्त्यत्वं दुर्वारम् । 'तदा विद्वान्नामरूपाद्विमुक्त' इत्यादिश्रुत्यैव नामरूपात्मकप्रपञ्चस्य ज्ञाननिवर्त्यत्वादेरभिधानादिति वाच्यम् । 'निगडाद्विमुक्त' इत्यत्रेव प्रपञ्चस्यानिवृत्तावपि विश्लेषमात्रेण ज्ञानाद्विमुक्तत्वोपपत्तेः । यद्वा 'यो विद्वांस्तदीयनामरूपनिवृत्तिमात्रप्रतिपादनपरत्वेन सकलप्रपञ्चस्य ज्ञाननिवर्त्यत्वप्रतिपादनपरत्वासिद्धेश्चेति । उपसंहरति ॥ अत इति ॥ कल्प्यानुपपत्त्येति ॥ एतच्चोपलक्षणम् । तस्य सत्त्वेप्युक्तरीत्या अन्यथोपपत्त्येत्यपि द्रष्टव्यम् ।

(ग टि) शङ्कते ॥ न वयमिति ॥ परस्परेति ॥ अनिर्वचनीयत्वसिद्धावुक्तरूपबाध्यत्वसिद्धिः ।

(रा टि.) तत्सिद्धौ च तत्सिद्धिरित्येवमित्यर्थः ॥ निरसिष्यन्त इति ॥ 'दृश्यत्वाद्यनुमानेष्वप्येत एव दोषा' इत्यत्रेति भाव. ॥ अन्यत्रेति ॥

द्वैतं न विद्यत इति तस्मादज्ञानिना मतम् ।

इत्याद्याख्यायान्तानुव्याख्यानतत्त्वनिर्णयादावित्यर्थ । ननु 'विद्वानमृत इह भवति' 'दृष्ट्वैव तं मुच्यते' इत्यादौ ज्ञानान्मोक्षोक्तिस्सर्वस्याऽविद्यकत्वं विना न युक्ता । ज्ञानस्य साक्षादज्ञानस्यैव निवर्तकत्वेन तन्निवृत्तिद्वारैव बन्धनिवृत्ते र्वाच्यत्वादित्यत आह ॥ज्ञानादिति ॥

इत्याद्युक्तिबलेन च । ज्ञानस्वभावतोऽपि स्यान्मुक्ति । इति ।
इत्युक्तेर्बन्धमिथ्यात्वं नैव मुक्तिरपेक्षते । इति ।
अतो यथार्थबन्धस्य विना विष्णुप्रसादत । अनिवृत्तेस्तदर्थं हि जिज्ञासा

इत्यादौ सत्यस्यापि बन्धस्य विष्णुप्रसादद्वारा निवृत्तिरित्युपपादितमित्यर्थ ।

(वे टि) अनिर्वचनीयहेतुसिद्धमिति ॥ अनिर्वचनीयत्वहेतुसिद्धमित्यर्थ । परस्पराश्रयप्रसङ्गादिति ॥ सिद्धेऽनिर्वचनीयत्वे तेन बाध्यत्वसिद्धि । तत्सिद्धौ तदन्यथानुपपत्त्याऽनिर्वचनीयत्वसिद्धिरिति परस्पराश्रयप्रसङ्गादित्यर्थ । ननु दृश्यत्वादिहेतुभिरेवाम्बरादेर्ज्ञाननिवर्त्यत्वसिद्धे क्व परस्पराश्रयप्रसङ्ग इत्यत आह ॥ दृश्यत्वादयस्त्विति ॥ ननु 'विकल्पो विनिवर्तेत' इत्यादिश्रुतिरेव ज्ञाननिवर्त्यत्वे मानमित्यत आह ॥ ज्ञाते द्वैतमिति ॥ 'विकल्पो भेदप्रपञ्च यद्यज्ञानादिना केनचित्कल्पित स्यात्तर्हि निवर्तेत । न च निवर्तते । तस्मान्न कल्पित.' इत्ययमेव सता वाद ।श्रुत्यादिषूपदेशात् । 'द्वैत न विद्यत' इति वादस्त्वज्ञाते तत्त्वाज्ञानदशायाम् । अज्ञानिनामेवायं वाद इत्यन्यपरत्वं माण्डूकोपनिषद्भाष्यादावुपपादितमित्यर्थ । ननु 'तरति शोकमात्मवित्' इत्यादिना ज्ञानान्मोक्षोऽभिधीयते । दुःखादिबन्धनिवृत्तिर्हि मोक्ष । न चाज्ञानोपादानकस्य साक्षाज्ज्ञाननिवर्त्यत्वम् । 'ज्ञानमज्ञानस्यैव निवर्तकम्' इति व्याप्ते । तथा चात्मज्ञानेनाऽज्ञाने निवृत्ते तदुपादानको बन्ध स्वयमेव निवर्तेत इत्यात्मज्ञानान्मोक्षाभिधानान्यथानुपपत्त्या वियदादिप्रपञ्चस्याज्ञानोपादानकस्य ज्ञाननिवर्त्यत्वसिद्धिरित्यत आह ॥ ज्ञानादिति ॥ बन्धस्यापि ज्ञानान्निवृत्तिर्नास्त्येव । किन्तु भगवत्प्रसादात् । 'यस्य प्रसादात्' इति श्रुते । ज्ञाननिवर्त्यत्वेपि गरुडध्यानरूपज्ञाननिवर्त्यविषस्येव सेतुदर्शननिवर्त्यपापस्येव सुहृद्दर्शननिवर्त्यदुःखस्येव सत्यत्वोपपत्तेश्चेत्यन्यत्रान्यथैवोपपादितमिति भाव ॥ कस्यानुपपत्त्येति॥ एतच्चोपलक्षणम् । तस्य सत्त्वेप्युक्तरीत्याऽन्यथोपपत्त्या चेत्यपि द्रष्टव्यम् । ननु 'ब्रह्म वेद ब्रह्मैव भवति' इति ब्रह्मभावरूपमोक्षो ब्रह्मज्ञानादभिधीयते । न चासौ बन्धस्य ज्ञाननिवर्त्यत्वं विनोपपद्यते । अनिवृत्तबन्धस्य ब्रह्मभावासम्भवात् । अतो ज्ञानिनो मोक्षाभिधानानुपपत्तिप्रसूतार्थापत्त्यैव जगति ज्ञाननिवर्त्यत्वसिद्धिरित्यत आह ॥ ज्ञानादिति ॥ सत्य मोक्षो बन्धनिवृत्तिमपेक्षत इति । सा च भगवत्प्रसादेनैव । न ज्ञानेनेत्यन्यत्रोपपादितमिति भाव ।

(द्वै शु.)॥ अनिर्वचनीयत्वहेतुनेति ॥ एतदन्येन सदसद्विलक्षणत्वादिनेत्यर्थः । तेनास्यापि मिथ्या-पदार्थतावच्छेदकतया ऽनिर्वचनीयत्व[1]रूपत्वेनैव भावने भावाविशिष्टतेति परास्तम् ॥ इत्याद्यागमस्येति ॥ आदिपदेन 'विद्वान् नामरूपाद्विमुक्तः' 'तस्य विद्या विरता हृदि यस्मिन् निवेशिते' इत्यादेः सङ्ग्रहः ॥ अन्यत्रेति ॥ विष्णुतत्त्वनिर्णयादावित्यर्थः ।

ननु 'दृष्ट्वैव न मुच्यते नापरेण' इति श्रुत्या विनाशरहितदर्शनेन बन्धापगमरूपमुक्तिर्विदुष उच्यते । सा च विद्यया सत्यस्य बन्धस्य आत्मनो विश्लेषेण न घटते । सत्यस्य ज्ञानेन विश्लेषस्य कुत्राप्यदृष्टत्वात् । अतो ऽधिष्ठानज्ञानेन शुक्तिरजतादेः प्रतीतिरूपनिवृत्तिरिव निवृत्तिर्वाच्येति रीत्या ज्ञानान्मोक्षाभिधानं जगतो ज्ञाननिवर्त्य-त्वम् श्रुतार्थापत्त्या सिद्धमित्याशयेनाह ॥ ज्ञानान्मोक्षाभिधानमिति ॥ अन्यथेति ॥ सत्यस्यापि पापस्य सेतुदर्शनेन विनाशरूपनिवृत्तिदर्शनात् ज्ञानेन बन्धापगमरूपमुक्त्यभिधानं बन्धसत्यत्वेनाप्युपपन्नमिति श्रुतार्थापत्तेः अन्यथोपप-त्तिरूपो दोषोऽस्तीति इत्यर्थः ॥ अत इति ॥ जगति तत्सत्त्वे प्रमाणसामान्यस्याभावादित्यर्थः । तस्याभावादित्यनेन सम्बन्धः ॥ ज्ञाननिवर्त्यत्वं चेदिति ॥ स्वाधिष्ठानसाक्षात्कारक्षणत्वव्यापकस्वप्रतीतिपूर्वत्वाभावकत्वादिरूपवक्ष्य-माणत्रैकालिकनिषेधप्रतियोगित्वपर्यवसितं चेदित्यर्थः । चेदित्यनेनान्यथाविज्ञातस्य सम्यग्विज्ञानगोचरत्वस्य सिद्ध-त्वेऽपि न तस्य सद्विलक्षणत्वव्यापकत्वमित्यर्थं सूचयति ।

(गु टि.) यत्तु अनिर्वचनीयहेतुसिद्धमिति प्रतीकमुपादाय अनिर्वचनीयत्वहेतुसिद्धमिति व्याख्यानं तत्तु स्वकीयपुस्तकपाठदर्शनेन अयुक्तत्वादुपेक्ष्यम् । सार्वजनीनचिरन्तनाचिरन्तनपुस्तकेषु अनिर्वचनीयत्वहेतु-सिद्धमित्येव पाठदर्शनेन स्वपुस्तके अन्यथापाठस्य लेखकदोषमात्रमूलकत्वावधारणात् ।

॥ परस्पराश्रयप्रसङ्गादिति ॥ सिद्धे अनिर्वचनीयत्वे तेन बाध्यत्वसिद्धिः । तत्सिद्धौ च तदन्यथानु-पपत्त्या अनिर्वचनीयत्वसिद्धिरिति परस्पराश्रयप्रसङ्गादित्यर्थः । ननु दृश्यत्वादिहेतुभिरेवाम्बरादेर्ज्ञाननिवर्त्यत्व-सिद्धेः क्व परस्पराश्रयत्वप्रसङ्ग इत्यत आह ॥ दृश्यत्वादयस्त्विति ॥ 'दृश्यत्वाद्यनुमानेष्वप्येत एव दोषाः' इत्यादिनेति शेषः । ननु

> विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।
> उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥

इति [2]श्रुतिः । 'विकल्पः प्रपञ्चः यदि केनचित्कल्पितः स्यात्तदा निवर्तेत' इति यद्युपनिबन्धात् निवर्तेतेति लिङ्श्रवणाच्चात्र तर्क एवोपनिबद्धः । तर्कस्य च न वस्तुस्थितिः । तर्कस्य च न च निवर्तते तस्मान्न कल्पित

---

[1] रूपत्वेनानेनैव इति पाठेन भाव्यमिति भाति

[2] श्रुतिर्ज्ञाननिवर्त्यत्वे मानमित्यत आह ॥ ज्ञानादिति ॥ विकल्पः इति पाठेन भाव्यमिति भाति

[3] तर्कस्य च न स्वार्थपरतेति वस्तुस्थितिः इति पाठेन भाव्यमिति भाति,

(गु टि) इति विपर्ययपर्यवसानमावश्यकम्। अन्यथा तर्काभासत्वप्रसङ्गात्। अतोऽज्ञानिना मते द्वैतं न विघात इत्येवमर्थपरत्वं तु तत्त्वनिर्णयाद् बुधपादिनमित्यर्थः।

ननु 'तरति शोकमात्मवित्' इत्यादिना ज्ञानान्मोक्षः श्रूयते। बन्धनिवृत्तिर्हि मोक्षः। तस्य च ज्ञानसाध्यत्वमज्ञानोपादानकत्वेनोपपद्यते। ज्ञानेन ज्ञाननिवृत्तौ उपादाननिवृत्त्या बुधादेयनिवृत्तेरावश्यकत्वादज्ञानोपादानकबन्धनिवृत्तिसौलभ्यात्। न सत्यत्वे। यतो 'ज्ञानमज्ञानस्यैव निवर्तकम्' इति व्याप्त्या ज्ञानस्य साक्षादज्ञाननिवर्तकत्वस्य अज्ञाननिवृत्तिद्वारा तत्कार्यनिवर्तकत्वस्य सिद्धत्वेन बन्धस्य सत्यत्वे ज्ञाननिवर्त्यत्वानुपपत्तेरित्यत। सत्यस्यापि पापस्य सेतुदर्शनेन नाशविषस्य च गरुडध्यानेन निवृत्तिदर्शनेन ज्ञानस्याज्ञानमात्रनिवर्तकत्वासिद्ध्या सत्यस्यापि ज्ञाननिवर्त्यताया अनुव्याख्यानाद् बुधादित्वेन अन्यथानुपपत्तेरेवाभावात्तया दुःखादिरूपबन्धस्य मिथ्यात्वसिद्धिरित्याशयेनाह ॥ ज्ञानान्मोक्षाभिधानमिति ॥

## मूले जगत्पदग्रहणकृत्यम्

(टी) ननु ज्ञाननिवर्त्यत्वं साक्षात् शुक्तिरजतादेरपि नास्ति। यथोक्तं 'न हि नाशोऽसतो भवेत्' इति। अतः किं जगद्ग्रहणेन। मैवम्। न हि ज्ञाननिवर्त्यत्वं नाम ज्ञानेन विनाशः परस्याभिमतः। तेन 'अधिष्ठानयाथात्म्यज्ञानेनाविद्यायां विलीनायां तदुपादानकं रजतं स्वयमेव निवर्तते' इत्यङ्गीकृतत्वात्। किंनाम। प्रतिपन्नोपाधौ निषेधप्रतियोगित्वम्। न च तच्छुक्तिरजतादौ नास्तीति शक्यते वक्तुम्। नात्र रजतमभूदिति प्रतिषेधस्य प्रमितत्वात्। ततः सार्थकं जगद्ग्रहणम्।

शुक्तिरजताद्येवार्थापत्त्या यदि सदसद्विलक्षणतया सिषाधयिषितम्। तदैतद्दूषणं न घटत इति चेत्। मा घटिष्ट। प्रागुक्तदूषणेनार्थापत्तेर्दूषितत्वात्।

(वि टि) ननु 'न च बाध्यं जगदित्यत्र किञ्चिन्मानम्' इति वाक्ये जगद्ग्रहणं व्यर्थम्। अत्यन्तासत शुक्तिरजतादेरस्माभिर्ज्ञाननिवर्त्यत्वानभ्युपगमेन तद्दृष्टान्तेन वियदादेरनिर्वचनीयत्वसाधनायोगेन 'न च बाध्यं शुक्तिरजतमित्यत्र किञ्चिन्मानम्' इत्येव वाक्यविन्यासौचित्यादिति शिष्यः पृच्छति ॥ ननु ज्ञाननिवर्त्यत्वमिति ॥ न हीति ॥ परेण ज्ञानाज्ञानयोरेव विरोधाभ्युपगमेन जगद्रूपोपादेयप्रपञ्चस्य ज्ञाननिवर्त्यत्वानङ्गीकारादिति भावः ॥ किन्नामेति ॥

तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः।
अविद्या सह कार्येण नासीदस्ति भविष्यति ॥

इति परोक्तेरिति भावः। निषेधप्रतियोगित्वमेवोपपादयति ॥ नात्रेति ॥ तदा दूषणमिति ॥ शुक्तिरजतादावुक्तरीत्योक्तबाध्यत्वस्य सत्त्वात्कल्पकसत्त्वेन तदभावप्रयुक्तसद्वैलक्षण्यासिद्धिरूपमित्यर्थः ॥ प्रागुक्तेति ॥ असत्त्वेपि प्रतीत्युपपत्त्या असद्वैलक्षण्यासिद्धिरिति प्रागुक्तेत्यर्थः।

(रा टि.) ज्ञाननिवर्त्यत्व ज्ञाननाश्यत्वमिति मत्वा शङ्कते शिष्य ॥ नन्विति ॥ यथोक्तमिति ॥ 'कश्चात्र बाध उद्दिष्टो न हि नाश' इति पृथगधिकरणानुव्याख्याने इति योज्यम्। अभिमत इत्यस्य किन्त्वा-मेत्यादिनाऽन्वय । अनभिमतत्वोपपादन तेनेत्यादि ॥ अविद्यायामिति ॥ शुक्त्यवच्छिन्नचैतन्याऽवरकाविद्या-यामित्यर्थः ॥ प्रतिपन्नोपाधाविति ॥ उपाधित्वेनाधिष्ठानत्वेन प्रतिपन्ने ज्ञाते शुक्तिकादौ यो निषेधस्तत्प्रतियो गित्वेनेत्यर्थ ॥ अर्थापत्त्येति ॥ प्रागुक्तख्यातिबाधान्यथानुपपत्तिरूपार्थापत्त्येत्यर्थ ॥ एतद्दूषणमिति ॥ निषेध-प्रतियोगित्वरूपज्ञाननिवर्त्यत्वलक्षणबाध्यत्वे मान नेति दूषणमित्यर्थ । 'नात्र रजतमभूत्' इति प्रतिषेधप्रमितेरुक्तत्वा-दिति भाव ॥ प्रागुक्तेति ॥ असति अपरोक्षप्रतीतेरप्युपपादितत्वया 'असच्चेन्न प्रतीयेत' इतिख्यातिभङ्गव्याहत्या-दिदूषणेनेत्यर्थ ।

(वे टि) ननु तदङ्गीकारबलेनाप्यज्ञानस्य तदुपादानकस्य वाऽधिष्ठानयाथात्म्यज्ञानविनाश्यत्वमेवावगम्यत इति पृच्छति ॥ किं नामेति ॥ पराभिप्रायकथनेनोत्तरयति ॥ प्रतिपन्नेति ॥

तत्त्वमस्यादिवाक्यार्थसम्यग्धीजन्ममात्रत ।
अविद्या सह कार्येण नासीदस्ति भविष्यति ॥

इति तद्वचनादिति भाव ॥ न घटत इति ॥ तत्रोक्तरीत्या बाध्यत्वसत्त्वेन तदभावप्रयुक्तसद्वैलक्षण्यासिद्धिरूप-मिदं दूषणमित्यर्थ ॥ प्रागुक्तेति ॥ रजतस्यात्यन्तासत्त्वेनोपपत्तेरित्युक्तान्यथैवोपपत्तिरूपदूषणेनेत्यर्थ ।

(दि बु) परोक्तलक्षणवाक्यस्थनिवर्त्यपदस्य ध्वंसप्रतियोग्यर्थकत्वाभिमानिन शङ्कामुद्भाव्य निरस्यति नन्वित्यादिना ॥ यथोक्तमिति ॥ अनुव्याख्याने श्रुतिपाद इत्यर्थ । जगद्ग्रहणेनेति । जगत्पदस्य सत्यजगत एवोपस्थापकत्वेन सत्यस्य रूप्यादेरनुपस्थापनात् 'तत्र बाध्यत्वं नास्ति' इत्युक्तौ 'शुक्तिरजतादौ तद्वर्तते' इति व्यञ्जनया लभ्यते। विशेषनिषेधस्य शेषविध्यनुज्ञारूपत्वात्। तच्चायुक्तम्। मिथ्याशब्दोऽनिर्वचनीय-मित्यारभ्य प्रकान्तस्य शुक्तिरजतस्याग्रहण न्यूनत्वं चेति भाव ।

ननु पूर्ववाक्ये 'रजतादेरपि नास्ति' इत्युक्तौ अपिपदेन जगतोऽपि ग्रहणेन तत्र ज्ञानजन्यनाशप्रतियो-गित्वं नास्तीत्यागतम्। तदनुपपन्नम्। स्वमतेपि सेतुदर्शनादिना ब्रह्महत्यादिनाशस्य भगवत्साक्षात्कारेणाप्रारब्ध-मोक्षपरिपन्थिसर्वकर्मनाशस्याङ्गीकारात्।

ज्ञानाग्नि सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन ।
कश्चिज्ज्ञानं जनयन् भस्म कुर्यात् ।

इत्यादिवचनात्। 'ज्ञानेन मोहो नष्ट.' इति प्रतीत्या मोहशब्दितज्ञानादेर्दु खादेश्च नाशाङ्गीकारेण बहुस्थलेषु बाधात्। न चैतदतिरिक्तजगत एवापिपदेन समुच्चय इति वाच्यम्। ज्ञाननिवर्त्यत्वरूपधर्मस्य जगत्सामान्ये सद्विलक्षणत्वसाधनाय परेणोपन्यस्ततयैतत्सामान्ये ज्ञाननिवर्त्यत्वमेतन्मूलेन प्रतिक्षेप्यम्। अन्यथा यत्किञ्चिज्जगति

(द्वै. घु ) तत्प्रतिक्षेपेऽपि अन्यत्र तेन सद्विलक्षणत्वरूपानिर्वचनीयत्वसिद्ध्या 'अनिर्वचनीयत्वस्य सर्वत्राप्रसिद्धत्वादेव' इत्युक्तमयुक्तं स्यात । तथा चैतद्वाक्यस्थजगत्पदस्य सर्वजगत्परत्वावश्यकत्वे एतदुपरि शङ्ककस्य

'यदि अपिशब्देन वियदादिघटादि[1]मात्रग्रहस्तर्हि ज्ञाननाश्येषु कर्मादिषु ज्ञाननाश्यत्वे प्रमाणसत्त्वात सामान्यतो माननिराकरणमयुक्तमित्येव शङ्कनीयम् । कण्ठत उक्तार्थ एव बाधकरूपत्वात् । तद्विहाय वैयर्थ्यनिकार्थ एव तच्छङ्काया 'जगत्पदस्यासद्ग्राहकत्वमप्युपलक्षणत्वादिना स्वीक्रियते' इत्युक्त्याऽपि परिहरणीयतया दुर्बलाया एव करणस्यानुचितत्वादिति चेन्न ।

यत. शङ्ककस्य यथाश्रुत ज्ञानजन्यनाशप्रतियोगित्वं [2]पराभिमतं लक्षणत्वेन न भिमतम् । तस्योत्तरज्ञान नाश्यपूर्वज्ञाने स्मृतिनाश्यसंस्कारे चातिव्याप्ते पराभिप्रायविषयत्वायोगात् । परन्तु ज्ञानत्वव्याप्यधर्मावच्छिन्न जनकताकध्वंसप्रतियोगित्वम् । स्मृतेः संस्कारनाशकत्वे मानाभावान्नातिव्याप्ति । उत्तरज्ञानस्य तु नोत्तरज्ञानत्वेन तत्तद्व्यक्तित्वादिना वा नाशकत्वम् । किन्तु योग्यविभुविशेषगुणवृत्तिप्रतियोगितासम्बन्धेन नाशत्वावच्छिन्न प्रति स्वाव्यवहितपूर्वक्षणवृत्तित्वसामानाधिकरण्योभयसम्बन्धेन योग्यविशेषगुणत्वेन गुणत्वेन वा स्वाव्यवहितपूर्वत्व-सम्बन्धेन कालिकविशेषणताविशिष्टपूर्वत्वसम्बन्धेन वस्तुत्वेन वा कारणत्वस्याङ्गीकारेण तद्व्यापकधर्मेणैव । उत्तर-गुणत्वादे सामान्यत अनुगतत्वाभावात् । अत्रोक्तकार्यकारणभावेषु द्वितीयतृतीयपक्षयोरपेक्षाबुद्धेस्तृतीयक्षणे नाशवारणाय स्वोत्पत्त्यधिकरणक्षणध्वंसोत्पत्त्यधिकरणक्षणसम्बद्धत्वतादात्म्योभयसम्बन्धेनापेक्षाबुद्धित्वेन प्रतिबन्ध-कत्वं कल्प्यते ।

यद्वा साक्षात्कारत्वघटितधर्मावच्छिन्नकारणताकनाशप्रतियोगित्व तत् । भ्रमज्ञानस्य शुक्तिसाक्षात्का रस्य च साक्षात्कारत्वेनैवाभानापादकाज्ञाननाशकत्वम् । अन्यथा परोक्षज्ञानेनाऽपि तन्निवृत्त्यापत्ते । न च सेतुदर्शनजन्यनिवृत्तिप्रतियोगिब्रह्महत्यादावतिव्याप्ति । सेतु दृष्ट्वेति वचनाच्चाक्षुषत्वेनैव तस्य जनकत्वेन साक्षा-त्कारत्वेनाजनकत्वात् । यद्यपि दृशि साक्षात्कारसामान्येपि प्रयुज्यते तथाप्यन्धो घटं पश्यतीति स्वारसिकप्रयो-गाभावात् दृशिश्चाक्षुष एव निरूढ इति प्रथमोपस्थितिलाघवात्तस्यैव ग्रहणं युक्तम् । न च शुक्तिज्ञानमपि चाक्षुष त्वेनैव निवर्तकम् । अन्यथा शुक्तिस्पार्शनेऽपि तत्राऽरोपितरजतनिवृत्त्यापत्तेरिति वाच्यम् । तत्र त्वगिन्द्रियेण शुक्तित्वप्रकारकस्पार्शनानुदयेन द्रव्यत्वादिप्रकारकेदन्त्वावगाहिचाक्षुषस्येवाऽधिष्ठानतत्त्वाप्रकारकत्वेन तस्यानिवर्त-कत्वेऽपि क्षत्यभावात् । अन्यथा त्वचावह्निमत्यक्षेऽपि चक्षुषा वह्न्यन्यत्वग्रहापत्ते । कचिद्भिन्नेन्द्रियजन्यप्रत्यक्षस्या-प्रतिबन्धकत्वानुभवश्च तस्याप्रामाण्यग्रहानुरोधात तत्र व्यञ्जकाभावेनाधिष्ठानतत्त्वास्फुरणाद्वा । स्फुरणे तु भ्रमनिवृ-त्तिर्भिन्नेन्द्रियजन्यज्ञानेनापीष्टैव । तथैवानुभवात् । न चोपादानसाक्षात्कारत्वावच्छिन्नजनकताकनाशप्रतियोगिनि तत्प्रागभावेऽतिव्याप्तिरिति वाच्यम् । प्रागभावानङ्गीकारात । तथात्वे नाशत्वेन जन्यताया विवक्षणात् ।

---

[1] अत्र मात्रशब्द' कात्स्न्र्यवाची

[2] पराभिमतलक्षणत्वेन नाभिमतम् । इति पाठेन भाव्यमिति भाति,

'द्वैधे तु' यद्वा इतरनिरपेक्षसाक्षात्कारजन्यनाशप्रतियोगित्वं तत्। सेतुदर्शनादेः पापनिवर्तकत्वं छत्रपादुकाद्यभावसहकृतसेतुगमनादेर्नियमजन्यादृष्टसहकृतस्यैव। अन्यथा तन्नियमविधानवैयर्थ्यापत्तेः। न च ब्रह्मसाक्षात्कारस्यापि श्रवणादिनियमादृष्टसहकृतस्यैवाज्ञाननिवर्तकत्वान्मतेऽस्य तदयोगः। श्रवणादिनियमादृष्टादेः साक्षात्कारोत्पत्तावेव हेतुत्वात्, अन्यथा भाषाप्रबन्धादिना अर्थज्ञानसम्पादनेन साक्षात्कारापत्तेः। न च सेतुदर्शनस्थलेऽपि तथैवास्त्विति वाच्यम्। नियमं विनाऽपि सेतुगमनमात्रेण तद्दर्शनस्य सत्त्वेन व्यभिचारेण नियमादृष्टस्य तत्राहेतुत्वात्। तत्र दर्शनमात्रस्य पापनिवर्तकत्वे दैवादागतयवनादेरपि तत्प्रसङ्गात्।

ननु भवन्मतेऽपि भाषाप्रबन्धान्तर्गतेनाद्वैतपरेण तत्त्वमस्यादिवाक्यसमानार्थकेन वाक्येनात्मापरोक्षसम्भवेन तत्र श्रवणादिनियमादृष्टाभावात् व्यभिचारः। न चापरोक्षप्रतीतिर्नोदेतीति युक्तम्। ज्ञानापरोक्ष्यस्य त्वन्मते विषयीभूतब्रह्मस्वभावाधीनत्वात् तत्त्वमस्यादिवाक्याधीनाखण्डाकारवृत्तेरिव भाषाप्रबन्धजन्यवृत्तेरप्यपरोक्षत्वस्यावर्जनीयत्वात्। न च भाषया ज्ञानमेव न जायत इति युक्तम्। सर्वानुभवापलापापत्तेः। न च साक्षात्कारे वैजात्यमज्ञाननिवर्तकतावच्छेदकं स्वीकृत्य तदवच्छिन्नं प्रति श्रवणादिनियमादृष्टस्य कारणत्वाङ्गीकारान्न व्यभिचार इति वाच्यम्। सेतुदर्शनस्थलेऽपि तथैवाङ्गीकारसम्भवेन तत्रोक्तव्यभिचारायोगात्। दैवादागतयवननिष्ठदर्शने उक्तवैजात्यस्याभावेन तद्दोषस्यापि वारणसम्भवाच्चेति चेन्न। आत्मनो ध्यानसहकृतमनोजन्यसाक्षात्कारविषयत्वाभ्युपगमपक्षे उक्तव्यभिचारानवकाशेन तद्रीत्यैव एतल्लक्षणसम्भवात्। सेतुदर्शनेन पापनिवृत्तौ नियमादृष्टस्य सहकारित्वमात्रत्वेन सर्वोपपत्तौ तत्र साक्षात्कारे वैजात्याङ्गीकारे मानाभावात्। सर्वलक्षणेषु तन्निवर्त्यतदभिन्नतत्प्रयुक्तान्यतमत्वं विवक्षणीयम्। तेन साक्षाज्ज्ञाननिवर्त्याज्ञानतदुपादानकेषु अज्ञानप्रयुक्तानादिद्वयेष्वपि नाव्याप्तिः।

एवं क्रमेण लक्षणत्रयम्। एतच्च सत्यवस्तुव्यावृत्तं मिथ्यानिष्ठमेव' इति परामिमान इत्यभिमतम्।

तदुपर्युक्तशङ्का सङ्गच्छत एव। तदुपरि समाधानग्रन्थस्य तु एतेषामपि लक्षणानां अनुपदं वक्ष्यमाणरीत्या मिथ्यात्वलक्षणत्वायोगात् परामिमतमन्यदेव। तत्र जगद्ग्रहणं सार्थकमिति भावः।

यद्वा नैतान्यपि लक्षणानि पराभिमततया शङ्केन ज्ञायन्ते। एतेषां विचारासहत्वात्। तथा हि, आद्यस्य द्वितीयस्य च सेतुदर्शनजन्यनाशप्रतियोगिपापेऽतिव्याप्तिः। तस्य साक्षात्कारत्वेन निवर्तकत्वात्। तस्य ज्ञानत्वव्याप्यत्वाच्च। न च सेतुदर्शनस्य चाक्षुषत्वेन निवर्तकत्वमिति न द्वितीयलक्षणातिव्याप्तिरिति वाच्यम्। अन्धस्यापि तत्स्थानं प्रति भक्त्यादिपूर्वं गत्वा ब्रह्महत्यादिनिवृत्तिदर्शनेन चाक्षुषस्पार्शनसाधारणसाक्षात्कारत्वस्यैव जनकतावच्छेदकत्वौचित्यात्।

इतोऽप्यक्षुषे व्यवहाराविक्यमात्रेण चाक्षुषस्यैव ग्रहणे 'दृष्ट्वैव तं मुच्यते नापरेण' 'द्रष्टव्यः श्रोतव्यो मन्तव्यः' इत्यादिश्रुतावपि दर्शिग्रहणात् ब्रह्मचाक्षुषत्वेनैव प्रकृतेऽज्ञानादिनाशकत्वापत्त्या जगत्युक्तलक्षणाभावः स्यात्। न च 'विद्वान् नामरूपाद्विमुक्तः' 'तमेव विद्वानमृत इह भवति' इति श्रुतौ ज्ञानसामान्यग्रहणान्न चाक्षुषस्यैव हेतुत्वं युक्तमिति वाच्यम्। सामान्यस्य विशेषवाक्यानुसारेणैव पर्यवसानस्य कर्तव्यत्वात्। अन्यथा

(द्वै सु ) परोक्षज्ञानाऽपातवाक्यजनितज्ञानेनाऽपि मुक्त्यापत्तेः । न च रूपहीनं ब्रह्म कथं चाक्षुषे स्फुरतीति वाच्यम् । चित्रावयविनि रूपानङ्गीकारपक्षे तदीयमहत्त्वादेरेव शक्तिविशेषेण चाक्षुषादिकाङ्गत्ववत्तत्रापि महत्त्वे वा चक्षुःसंयोगे वा तादृशशक्तिस्वीकारेणोपपत्तेः । न च 'यच्चक्षुषा न पश्यति' 'न चक्षुषा पश्यति कश्चिदेनं' इत्यादिश्रुतिविरोधात् कथं तच्चाक्षुषमिति वाच्यम् । नीरूपस्यापि ब्रह्मणः कालवच्चाक्षुषस्य त्वया भाषितत्वेन श्रुतिविरोधस्य त्वयैव परिहर्तव्यत्वात् । 'सत्त्वोपहितं दृश्यते । शुद्धं तु न दृश्यते' इति मयोच्यत इति चेत् द्रष्टव्य इत्यादिश्रुतिस्वारस्याय 'केवलचक्षुषा न दृश्यते । उपनिषदर्थश्रवणमनननिदिध्यासनावमितमनःसंयुक्तेन चक्षुषा दृश्यते' इत्यपि विरोधस्य परिहर्तुं शक्यत्वात् । एतेन ब्रह्मण औपनिषदत्वोक्तिरपि न प्रतिकूला । सगुणस्य दिव्यचक्षुषा दर्शनस्य 'दिव्यं ददामि ते चक्षुः' इत्यादिना गीतादावभिहितत्वेन तद्वन्निर्गुणस्यापि तथात्वौचित्याच्च । एवमपि तच्चाक्षुषानङ्गीकारे 'यद्वाचाऽनभ्युदितं' 'यतो वाचो निवर्तन्ते' 'यन्मनसा न मनुते' इत्यादिश्रुतिभिः वाङ्मनसागोचरत्वावगमेन शाब्दापरोक्षविषयत्वं मानसापरोक्षविषयत्वं च न स्यात् । तत्र सङ्कोचेऽत्र किं न स्यात् । प्रत्युत दृशिग्रहणसामर्थ्याच्चाक्षुषविषयत्वाभ्युपगम एव युक्त इत्युक्तम् ।

एवं प्रियवस्तुदर्शनस्पर्शनसाक्षात्कारमात्रेण तद्विरहजनितदुःखनिवृत्तिदर्शनात्तत्रापि तद्वस्तुसाक्षात्कारत्वावच्छिन्नकारणताकनाशप्रतियोगिदुःखेऽतिव्याप्तिः । एवं

> तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयते एवमेव हैवंविदि सर्वे पाप्मानः प्रदूयन्ते । इति श्रुत्या
>
> ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन ।

इत्यादिवचनैर्ब्रह्मसाक्षात्कारत्वेनाप्रारब्धकर्मनाशकत्वस्योभयमतसिद्धत्वात्तादृशकर्मस्वतिव्याप्तिश्च ।

एतेन तृतीयलक्षणमप्यपास्तम् । प्रियवस्तुसाक्षात्कारातिरिक्तासाधारणकारणान्तरस्य दुःखनिवृत्तौ, ब्रह्मसाक्षात्कारातिरिक्तासाधरणकारणान्तराणां अप्रारब्धनिवृत्तौ अनुपलम्भेन [1]तत्र तत्रातिव्याप्तेरनिवारणात् । साधारणकारणविवक्षाया तु अज्ञाननिवृत्तेरपि कार्यत्वेनादृष्टेश्वरायपेक्षया अज्ञानशुक्तिरजतादिषु लक्षणगमनासम्भव । मोक्षस्यापीश्वराधीनत्वश्रवणात् ब्रह्मसाक्षात्कारसाध्याज्ञाननिवृत्तिमादाय जगत्यप्युपपादयितुं अशक्यत्वाच्च ।

अपि च 'प्रारब्धनाशात्प्रतिभासनाश' इति स्मृत्या सविलासाज्ञाननाशे ब्रह्मसाक्षात्कारेण जननीये प्रारब्धकर्मरूपप्रतिबन्धाभावरूपासाधारणकारणस्य श्रवणात्तन्निरपेक्षसाक्षात्कारजन्यत्वाभावाज्जगत्यव्याप्तिः । एवं चित्रलिखितसिंहचाक्षुषसाक्षात्कारेणेतरनिरपेक्षे रोगविशेषनिवृत्तिदर्शनात् कूर्मेक्षणमात्रेण तच्छिशुक्षुधानिवर्तनदर्शनाच्च तत्राप्युक्तलक्षणातिव्याप्तिरेव । एवं दूरदेशगमनादिनियमादृष्टस्य साक्षात्कारे नातिशयाधायकत्वम् । साक्षादेव पापनिवृत्तौ हेतुत्वम् । ब्रह्मसाक्षात्कारे श्रवणादिनियमादृष्टस्योपयोगो न तज्जन्यफले उपयोग इत्यस्य नियन्तुमशक्यत्वेन सेतुदर्शननिवर्त्यपापातिव्याप्तेरपरिहार्यश्चेति ।

---

[1] तस्योभयस्मिन्नप्यतिव्याप्ते इति पाठेन भाव्यमिति भाति ।

(द्वैतद्यु) यत्तु 'अत्र लक्षणे साक्षात्कारत्वावच्छिन्नकारणतेत्यस्य साक्षात्कारत्वव्याप्यकारणतेति विवक्षणात् शुक्तिचाक्षुषत्वेन तन्निवर्त्यत्वेऽपि शुक्तिरूप्ये न बाध्यत्ववैकल्यम्' इति । तदप्यसत् । उक्तस्थलेष्वतिव्याप्तेरपरिहारात् इतरनैरपेक्ष्येणेति विवक्षोत्तर साक्षात्कारत्वव्याप्यत्वस्य कारणतायां निवेशे प्रयोजनाभावाच्चेति ।

एवं गुरुचन्द्रिकोक्तरीत्या आधुनिकपरिष्कृतलक्षणद्वयमप्यनभिमतम् । विचारासहत्वात् । तथा हि' ज्ञानप्रयुक्तत्वावच्छेदकीभूतध्वंसत्वनिरूपकत्वं ज्ञानप्रयुक्तस्वसमानसत्ताकस्वनिष्ठतादात्म्यप्रतियोगित्वावच्छिन्नप्रतियोगिताकाभावकत्वं तत्प्रतियोगित्वं वा लक्षणम् । 'ज्ञानात् सर्वं दृश्यं नष्टम्' इति विद्वद्व्यवहारानुरोधेन तत्त्वज्ञानस्य तदधिकरणचरमक्षणस्य वा सर्वेतरसकलदृश्यनाशरूपत्वाभ्युपगमात् तन्निष्ठध्वंसत्वरूपानुयोगितानिरूपकत्वं सर्वदृश्येषु वर्तत इति लक्षणसङ्गतिः । द्वितीये जगन्मात्रस्य ब्रह्मनिष्ठतादात्म्यप्रतियोगित्वात्तस्य जगत्समसत्ताकत्वात्तदवच्छिन्नप्रतियोगिकाभावो ज्ञानप्रयुक्त एव । तत्प्रतियोगित्वं जगति । शुक्तिरूप्यनिष्ठतत्समसत्ताकशुक्त्यनुयोगिकतादात्म्यप्रतियोगित्वावच्छिन्नप्रतियोगिताकाभावोऽपि बाधप्रयुक्त इति तत्प्रतियोगित्वं शुक्तिरूप्यादाविति लक्षणसङ्गतिः । घटादिनिष्ठकपालाद्यनुयोगिकतादात्म्यप्रतियोगित्वावच्छिन्नप्रतियोगिकाभावस्य [1]मुद्गरपातादिप्रयुक्तस्याभावप्रतियोगिनि मिथ्यात्वाव्यवहारात् ज्ञानप्रयुक्तेति । रजतेऽपि शुक्तितादात्म्यस्य जगत्यपि ब्रह्मतादात्म्यस्य परम्पराध्यासानुरोधादावश्यकतया ज्ञानप्रयुक्ततदवच्छिन्नाभावप्रतियोगिनि ब्रह्मणि शुक्तौ च तद्वारणाय स्वसमानसत्ताकेति तादात्म्यविशेषणम् । स्वसमानसत्ताकत्वं ब्रह्मान्यविषयकज्ञानबाध्यत्वतदभाववत्त्वान्यतररूपेण स्वसजातीयत्वम् । अत एतदर्थापत्त्यादिप्राक् सत्तात्रैविध्यादेरथापि अप्रसिद्धावपि नोक्तबाध्यत्वाप्रसिद्धिरिति ।

तत्राऽद्यलक्षणं पूर्वोक्तक्रमेण सेतुदर्शनादिनिवर्त्यपापादिष्वतिव्याप्तम् । न च पूर्वोक्तसर्वस्थलेषु सेतुदर्शनादिना पापादिस्थूलरूपं विलीनमेव भवति । सत्कार्यवादाभ्युपगमेन सृष्टिप्रलयादावनुगतं किञ्चित्कार्यरूपं संस्कारादिसमस्माकमपि साङ्ख्यानामिवानुमतम् । तस्य च साङ्ख्यमतेनानुच्छेदः । अस्मन्मते च 'विद्वान्नामरूपाद्विमुक्तः' 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' इत्यादिश्रुतिप्रामाण्यात् ज्ञानेन ध्वंसरूपोच्छेदः स्वीक्रियते । तथा चेदानीं पापादिनिरूपितं ध्वंसत्वं न कुत्रापि । येन सेतुदर्शनादिकार्यतावच्छेदकं स्यात् । शुक्तिरजतादेस्तु बाधोदयात् प्राक् चक्षुर्निमीलनादिना तिरोधानमेव । बाधेन तु नाश एव । पुनरप्रतीतेः । तत्र ज्ञानप्रयुक्ततावच्छेदकध्वंसत्वनिरूपकत्वस्य शुक्तिरजतादौ सत्त्वात्तत्र मिथ्यात्वव्यवहारः । पूर्वोक्तातिव्याप्तिस्थलेषु ज्ञानप्रयुक्ततावच्छेदकध्वंसत्वनिरूपकत्वस्य सेतुदर्शनात्तिरोहितत्वज्ञानेऽप्यगृहीतत्वान्न मिथ्यात्वव्यवहारापादनमिति वाच्यम् । इदानीमपि 'सेतुदर्शनेन पापादिकं नष्टं' 'अपरोक्षदर्शनेनाप्रारब्धकर्मादि नष्टम्' इत्यादिविद्वद्वैदिकव्यवहारप्रामाण्यानुरोधेनेदानीं तस्य नाशस्यैवाभ्युपगमात् । तिरोधानमात्राङ्गीकारे शुक्तिरजतादीनामपि नष्टमुत्सन्नमित्यादिलौकिकप्रतीत्यतिरिक्तप्रमाणाविषयत्वेन तस्य च तिरोधानविषयताया स्वदभिमतत्वेन ध्वंसासिद्ध्या तत्रो-

[1] मुद्गरपातादिप्रयुक्तस्य प्रतियोगिनि इति पाठेन भाव्यमिति भाति

(द्वै. सु) कबाध्यत्वासिद्ध्या सद्विलक्षणत्वसिद्ध्ययोगात्। किञ्च जगत्यपि तादृशनाशः कथ मिद्ध्यति। 'नामरू-पाद्विमुक्त' इत्यादिश्रुते तद्विश्लेषमात्रविषयकत्वेनोपपत्ते। मुचेस्तादृशध्वंसार्थकत्वाऽग्रहे

रथस्थ केशव दृष्ट्वा सर्वपापैः प्रमुच्यते।

इत्यादिप्रमाणानुसारेण पापादेरपि दर्शनेन ध्वसो दुर्वार। [1]अर्थवादवाक्यमेव दर्शनम्नुतिपरम्। न स्व र्थपरमिति चेत्। विद्वानित्यादिवाक्यमपि तथा किं न स्यात्। स्तुतेरपि फलपर्यवसान विना निरर्थकत्वात् ब्रह्मज्ञानफल-दर्शकमिद स्वार्थपरमित्येतदपि तादृशकेशवदर्शनफलपरमिदमपि स्वार्थपरमेवेति समानमेव। तादृशार्थवादेन विधि-सिद्धेस्तस्य निष्फले अयोगात्। तस्मादयुक्तमेवाऽद्यलक्षणम्।

द्वितीयमपि न युक्तम्। रजतनिष्ठशुक्त्यनुयोगिकतादात्म्यप्रतियोगित्वावच्छिन्नाभावस्य तदधिकरणत्वस्य वा शुक्तौ सदा विद्यमानस्यैव बाधेन विषयीकरणमात्रस्य कृतत्वेन तादृशाभावस्य ज्ञानप्रयुक्तत्वोक्तेरत्यन्तासम्भावि-तत्वात्। जगदभावस्यात्मस्वरूपस्य, तदन्यत्वेऽपि तत्र सर्वदाऽऽवृतत्वेन विद्यमानस्य ज्ञानप्रयुक्तत्वायोगात्। अन्यथा तस्य त्रैकालिकत्वानुपपत्त्या त्रैकालिकेत्यादिलक्षणासम्भवापत्ते। न हि तद्विषयत्वमात्रेण तत्प्रयुक्तत्वम्। चरम-वृत्तिविषयस्यात्मनस्तत्प्रयुक्तत्वापातात्। न च 'ज्ञानाद्रजतमुच्छिन्नं' 'विद्वान्नामरूपाद्विमुक्त' इत्यादिप्रतीति-श्रुतिभ्य सार्वकालिकाभाव प्रति ज्ञानस्य प्रयोजकत्वमवगम्यते। धनवान् सुखीत्यादौ धनसुखयोरिवोद्देश्यताव-च्छेदकविधेयभावमहिम्ना विद्वत्तानामरूपविमोचनरूपोक्ताभावयो प्रयोज्यप्रयोजकभावबोधनेन सार्वकालिकेऽप्या-गन्तुकप्रयोज्यत्व स्वीक्रियते। प्रमाणावगते कथन्तायोगादिति वाच्यम्। ध्वसार्थकत्वस्यैव तत्र स्फुटमवभासेन त्वदुक्तार्थस्य कथमप्यलाभात्। अन्यथोक्तरथस्थं केशव दृष्ट्वेति वाक्यस्यापि तादृशार्थकताया दुरपह्नवतयोक्तातिव्याप्तेर्दुर्वारत्वापातात्। यदपि साजात्यघटकतया ब्रह्मान्यविषयकज्ञानबाध्यत्व निविष्टं तदप्येतद्रूपश्चेत् आत्मा-श्रयः। एतत्सजातीयान्तरघटितश्चेत् अनवस्था। शुक्त्यादिव्यावृत्तमन्यादृशश्चेत् तस्यैव ज्ञानमात्र निवेश्य सर्वसा-धारण्येन परिष्कर्तुं शक्यत्वात्प्रयासस्य बकबन्धतुल्यात्।

तस्मात् [2]ज्ञानप्रयुक्तं स्वस्वीयसंस्कारोभयध्वंसकत्वमेव लक्षणं पराभिमतमिति शङ्ककस्याभिमतम्। चरम-क्षणस्य सस्वेतरसकलदृश्यनाशत्वं स्वीक्रियते। यद्वा तत्वसाक्षात्कारस्य स्वेतरदृश्यनाशरूपत्वं स्वनाशत्वं च स्वद्वितीयक्षणावच्छेदेन स्वीक्रियते। तथा च ज्ञायप्रयुक्तस्य चरमनाशस्य सर्वपदार्थतत्संस्कारनाशरूपत्वात्सर्वत्रापि लक्षणसङ्गति। शुक्तिसाक्षात्कारेण रजतस्य संस्कारसहितस्य नाशात्तत्रापि लक्षणसङ्गति। सर्वेषामपि पदार्थानां स्वसूक्ष्मावस्थारूपसंस्काराभ्युपगमान्न घटादावप्रसिद्ध्याऽव्याप्तिः। सेतुदर्शनजीवन्मुक्तिकालीनब्रह्मसाक्षात्कारा-दिभि पापाप्रारब्धकर्मप्रभृतीना स्वरूपेण नाशेपि संस्काररूपेणावस्थानान्न तेष्वतिव्याप्तिः। विदेहकैवल्यप्रापक-चरमसाक्षात्कारस्यैव सकलदृश्योच्छेदकत्वात्।

---

[1] तद् अर्थवादवाक्यमेव इति पाठेन भाव्यमिति भाति  [2] ज्ञानप्रयुक्तस्वस्वीय इति पाठेन भाव्यमिति भाति

(द्वै. सु.) न च 'विद्वान्नामरूपाद्विमुक्त' इति श्रुतौ मुचे प्रयोगबलात् [1]संस्कारनामरूपनाशस्य ज्ञानप्रयोज्यत्वाङ्गीकारे

यस्य केशव दृष्ट्वा सर्वपापैः प्रमुच्यते ।
सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यामपोहति ।
एवं हैवास्य सर्वे पाप्मानः प्रदूयन्ते ।

इति श्रुतिबलात् पापादीनामपि ससंस्काराणामेव नाशसिद्ध्यापत्त्या तत्रातिव्याप्ति पूर्वोक्तलक्षणेष्विवात्रापि दुर्वारेति कथमेतल्लक्षणं शङ्काभिमतमिति वाच्यम् । 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' इति श्रुतौ सर्वपदस्यासङ्कुचितवृत्त्यनुरोधेन स्थूलसूक्ष्मसर्वबन्धनाशस्य ज्ञानप्रयुक्तत्वावगमात् तत्समाख्यया विद्वानित्यादिश्रुतीनामपि तादृशार्थकत्वात् प्रकृते संस्कारसहितस्य ज्ञानेन नाशसिद्धावपि पापादिपदानां स्थूलावस्थापन्नवस्तुवाचितया सर्वपदसमभिव्याहारेऽपि संस्कारनाशासिद्ध्या तत्प्रतिबन्देरनवकाशेन पूर्वोक्तातिव्याप्तेरत्रानवकाशादित्यभिप्रायात् ।

अत्रोत्तरज्ञाननाश्ये पूर्वविशेषगुणेऽतिव्याप्तिवारणाय स्वीयसंस्कारनिवेशः । [2]स्मृतिनाश्यस्वसंस्कारकानुभवातिव्याप्तिवारणाय स्वनिवेशः । स्मृते संस्कारानाशकत्वे स्वेति न देयम् । ज्ञानप्रयुक्तस्वसंस्कारध्वंसकत्वमात्रस्य सम्यक्त्वात् । एवं चैतल्लक्षणं स्वमते कुत्रापि जगति नास्ति यथा तथा शुक्तिरजतादावपि नास्तीति किं जगद्ग्रहणेनेति शङ्का युक्तैवेति मन्तव्यम् ॥ नैवमिति ॥ न हीति ॥ हीत्यनेन पराभिमतत्वाभावे बाधकानां स्फुटत्वं सूचयति ।

तथा हि । यस्य क्षणस्य [3]सर्वदृश्यप्रतियोगिकत्वं ध्वंसत्वं स्वीक्रियते तस्य स्वप्रतियोगिकत्वं स्वीक्रियते न वा । आद्ये तस्य स्वप्रतियोगिकध्वंसत्वाङ्गीकारे ध्वंसप्रतियोगिनोरेककालवृत्तित्वायोगात् स्वात्मकप्रतियोग्यधिकरणकालस्य स्वात्मकध्वंसवत्त्वाङ्गीकारे सव्याहतिः । प्रतियोग्यधिकरणकालवृत्तेर्ध्वंसत्वाङ्गीकारे तस्य पारिभाषिकतापत्तेः ।

न च प्राभाकरमते ज्ञानप्रागभावध्वंसयोरात्मस्वरूपतया ज्ञानाधिकरणकालस्यैवात्मरूपतत्प्रागभावध्वंसवत्त्वाङ्गीकारात्तत्र विरोधः सम्मत इति वाच्यम् । ज्ञानेच्छाधर्मादिकालेऽपि तन्नाशभविष्यत्त्वयोः प्रतीतिप्रामाण्यवारणायात्मन्यनुयोगितारूपध्वंसत्वप्रागभावत्वयोः सामग्रीनियम्यत्वानादित्वयोः स्वीकारात् तद्विशिष्टाधिकरणकालस्य प्रतियोग्यधिकरणत्वाभावनियमाक्षतेः । न च प्रकृतेऽपि तथाऽस्त्विति वाच्यम् । सर्वदृश्यनिरूपिताया एवानुयोगितायाः स्वनिरूपितत्वात्तद्विशिष्टस्वनिरूपिताधिकरणतावत्कालस्य दृश्यत्वरूपप्रतियोगितावच्छेदकविशिष्टस्वनिरूपिताधिकरणत्वस्वीकारध्रौव्येण व्याहतेरपरिहारात् । न च तत्क्षणरूपध्वंसे दृश्यत्वतादृशानुयोगितयोः सत्त्वेऽप्यन्यतरस्य कालनिरूपिताधेयतावच्छेदकत्वानङ्गीकारात् न व्याहतिरिति वाच्यम् । तादृशानुयोगित्वाव-

---

[1] ससंस्कार इति पाठेन भाव्यमिति भाति । [2] स्मृतिनाश्यस्वीयसंस्कारकघटाद्यतिव्याप्ति इति पाठेन भाव्यमिति भाति ।
[3] सर्वदृश्यप्रतियोगिकध्वंसत्वं इति पाठेन भाव्यमिति भाति ।

(द्वै यु) च्छिन्नाधिकरणतानङ्गीकारे विरोधिनोऽभावात् सर्वदृश्यानामपि तत्क्षणस्येवानुवृत्तिप्रसङ्ग । तत्काले दृश्य-
त्वावच्छिन्ननिरूपकताकविलक्षणाधिकरणता न स्वीक्रियते इत्येतदसङ्गतमेव । तदुपलक्षिताधिकरणतातिरिक्तद्वित्वविशि-
ष्टाधिकरणताया मानाभावात् । अङ्गीकारे वा प्रकृते तत्सत्त्वाभावे बीजाभावात् । आधेयदृश्ये दृश्यत्वमात्रातिरिक्तनियामकस्य निरूपयितुमशक्यत्वात् ।

स्वस्य स्वप्रतियोगिकध्वंसत्वानङ्गीकारे तस्य ध्वंसान्तरानङ्गीकारे आत्मवदनुवृत्तिप्रसङ्गेन नित्यत्वं स्यात् । ध्वंसाभावेऽपि नानुवृत्तिरित्येतद्बालभाषणम् । अननुवृत्तिपदार्थानिरूपणात् । ध्वंसान्तराङ्गीकारे तस्याप्युच्छेदाभावे पुनर्दृश्यसामान्योच्छेदरूपमोक्षासिद्धि । उच्छेदे तस्याप्येवमित्यनवस्था ।

आत्मैव सर्वदृश्यनाश इति चेत् तत्र विद्यमानसर्वदृश्यध्वंसत्वरूपानुयोगितायाः ध्वंसाङ्गीकारानङ्गीकारयोरुक्तदूषणगणापरिहारात् । उत्तरोत्तरध्वंसानां नाशकसामग्र्यनिरूपणाच्च ।

यत्तु 'चरमक्षणध्वंसवृत्तिर्वा स्वस्वेतरसर्वदृश्यप्रतियोगिकध्वंसत्वमङ्गीक्रियते । तथापि न क्षतिः । प्रतियोग्यधिकरणकालपूर्वस्य प्रतियोग्यधिकरणकालपूर्वकालसामान्यस्य वा तद्ध्वंसत्वविशिष्टाधिकरणत्वाभाव इति वादिद्वयसिद्धनियमेन निखिलातिप्रसङ्गवारणसंभवे ध्वंसान्तरकल्पने लाघवेन त्वदुक्तनियमस्यानादरणीयत्वात्' इति । तत्तुच्छम् । नियमो हि तद्ग्राहकप्रमाणानुसारेणैव कल्प्य । न त्वस्मनोनुसारेण । इत्थं च लोके यदि कश्चिदपि ध्वंसत्वविशिष्टः सन् प्रतियोग्यधिकरणकाले वर्तमानस्तदधिकरकालपूर्वसामान्येऽवर्तमान उपलभ्येत तर्हि तदनुसारेणास्मदुक्तनियमं परित्यज्य भवदुक्तनियमः स्यात् । न चैतत्कुत्रापि दृष्टचरम् । 'प्रतियोगितद्ध्वंसौ मिलिताविदानीं स्तः' इति कस्यापि प्रत्ययाभावात् ।

न च प्रतियोगिनः प्रागभावनाशकतामते प्रागभावतद्ध्वंसरूपप्रतियोगिनोरेकक्षणे मेलनमस्तीति वाच्यम् । तन्मते प्रतियोगिनस्तद्ध्वंसरूपत्वाभावेनातिरिक्तस्यैव द्वितीयक्षणे उत्पत्त्यङ्गीकारेणास्मदुक्तनियमाक्षते । अन्यथा स्वस्यैव स्वोपघातकतापत्ते । न च प्रकृतस्थलानुसारेणैव त्वदुक्तनियमस्त्यज्यत इति युक्तम् । तथा सति सर्वव्यवस्थाया स्वाभ्युपगमनिबन्धनत्वापत्ते । न च चरमक्षणादिरूपध्वंसस्य ध्वंसान्तराकल्पनालाघवमेवैतन्नियामकमिति युक्तम् । अन्यत्रापि तथात्वापत्ते । न च ज्ञात्वा देवमिति श्रुत्या सर्वदृश्यानां युगपन्नाशावगमात्तन्निर्वाहाया-द्वितीयत्वादिश्रुत्युक्ताद्वितीयत्वादिनिर्वाहाय चैतत्सर्वं कल्प्यत इति वाच्यम् । ज्ञात्वा देवमिति श्रुतौ पाशशब्दितदुःखसाधनानामेव नाशश्रवणेन सर्वनाशानवगमात् । अन्यथा पाशपदवैयर्थ्यापत्ते । न चात्मव्यावृत्त्यर्थं पाशपदमिति युक्तम् । तत्सम्बन्धं विना जडानां दुःखाजनकत्वात् जडवदात्मनोऽपि दुःखप्रयोजकतया पाशपदेनापि तद्व्यावृत्तेः । ज्ञात्वेत्यादिश्रुतिभि ज्ञानोत्तरमेव दृश्यनाशावगमेन ज्ञानस्य सर्वदृश्यनाशरूपताया अनेन वाक्येनाप्रत्ययाच्च ।

समानकालीनत्वस्य त्वाप्रत्ययार्थस्य क्वचिददृष्टत्वेन 'तत्समानकालिकत्वस्य मोचनशब्दितनाशे बोधनेन तत्त्वज्ञानतादृशनाशयोरैक्यं प्रतीयते । समानकालीनयो , एकस्यापि वा रूपभेदेन प्रयोज्यप्रयोजकभाव स्वीकि-

(द्वै द्यु) यते' इत्येतन् स्वमनोरथाहये श्रुतिमातु कचाकर्षणमात्रम्। 'कर्मणा ज्ञानमातनोति ज्ञानेनामृतीभवति' इत्येवञ्जातीयकश्रुतिपुराणादेर्बहुश उपलम्भेन तेन कार्यकारणभावस्यैव प्रतीत्या तदभेदाप्रत्ययात् उक्तप्रयोज्यप्रयोजकभावाभ्युपगमश्च स्वेच्छामात्रमूलक. ।

अत एव 'विद्वान्नामरूपाद्विमुक्त' इत्यादौ ज्ञानसामग्रीवल्लक्षकं विद्वत्पदम् । नामरूपविमोचनरूपज्ञाने तत्प्रयोज्यत्वमुद्देश्यतावच्छेदकविधेयभावमहिम्ना भासते । एवं ज्ञात्वेत्यादिस्थलेऽपि । एवं च त्वाप्रत्ययस्य प्रचुरप्रयोगसिद्धोत्तरकालिकत्वस्याप्यपरित्याग' इत्यपि प्रत्युक्तम् । स्वेच्छामात्रेण निर्निमित्त लक्षणाङ्गीकारे ब्रह्मपरवाक्यस्यापि शून्ये लक्षणाया उक्तवाक्य एव[1] मुक्त इत्यादेरपि महानिरूपमोक्षलक्षकत्वादेरपि सम्भवेन लाघवेन शून्यवादस्यैव श्रुत्यभिमतत्वप्रसङ्गात् । 'नामरूपाद्विमुक्त परात्पर पुरुषमुपैति दिव्यम्' इत्यनेन नामरूपविमोचनोत्तर पुरुषप्राप्तिरूपक्रियाश्रवणात्तस्यैव सर्वद्वयनाशत्वे तदुत्तरत्र क्रियाश्रवणानुपपत्तेश्च । अधिकमन्यत्रानुसन्धेयम् ।

अद्वितीयश्रुतीनामनिर्वचनीयसिद्धे प्राग्व्याहत्या अलब्धात्मना नैतच्छ्रुत्यनुग्राहकत्वम् । 'अणोरणीयान्' इत्यादिश्रुतीनां व्याहत्यभावात्परेषां भ्रमकारणत्वादिश्रुतीनामिव पूर्वार्थत्वात्स्वार्थपरत्वनिश्चयात्तदुपपादकतया प्रमाणान्तरसिद्धाचिन्त्यशक्तिराश्रीयत इति नास्माकं त्वन्मत इव प्रकृतवाक्यार्थसिद्ध्यर्थमेवाप्रामाणिकव्याहतपरम्पराश्रयणमित्याद्याकरे व्यक्तम् ।

लाघवायैव प्रवृत्ते लोकसिद्धं प्रतियोगिध्वंसयोरसमानकालिकत्वनियमं परित्यज्य नियमान्तराश्रयणे लोकसिद्ध कारणस्य साक्षात् व्यापारघटितसम्बन्धेन वा कार्याव्यवहितप्राक्क्षणवृत्तित्व परित्यज्योभयसिद्ध कारणस्य कार्योत्तरकालानुत्पन्नत्वमात्रनियममङ्गीकृत्याभेदे प्रयोज्यप्रयोजकभावादिकमिव व्यवहितस्य फलोपधायकत्वमभ्युपेत्य यागस्वर्गयोः कार्यकारणभावोपपादनसम्भवेन अपूर्वकल्पनाया निर्मूलत्वापत्त्या तद्विलयापत्तेश्च । ध्वंसान्तराकल्पने लाघवमिति चेत्[2] तदभावाकल्पने लाघवमिति वक्तुं शक्यत्वाच्च । तत्त्वज्ञानस्य चरमक्षणानां तत्कालीनान्त्यवायुसंयोगान्यकर्तीनां च सर्वद्वयध्वंसत्वं कल्प्यत इत्यत्र विनिगमकाभावादतिरिक्तध्वंससिद्धेश्च ।

यदत्र 'प्रतियोगिप्रागभावयोरिव ध्वंसप्रतियोगिनोरप्यभेदो व्याहत' इत्याशङ्क्य 'प्रतियोगिदेशनियमाय कल्प्यमानकारणताकप्रागभावस्य प्रतियोगिभेदकधर्मवत्त्वेनैव सिद्धे' इत्युक्त तदत्यन्तमसङ्गतम् । ध्वंसरूपकार्यं प्रति लाघवात्[3] प्रतियोगिरूपप्रागभावस्यैव तद्देशनियमाय कल्पनीयतया प्रतियोगिध्वंसयोरपि भेदवत्त्वेनैव सिद्धेः ।

अत्र यदुक्तम् 'अधिकं तत्त्वरत्नपरीक्षायां द्रष्टव्यम्' इति तत् तत्खण्डनावसर एवाधिकनिरासेन निराकृतं भविष्यति ।

यदपि 'तस्य स्वध्वंसत्वं न घटते । प्रतियोगिजन्याभावस्यैव ध्वंसत्वात्' इत्याशङ्क्य 'अनुयोगिताविशेष एव ध्वंसत्वं प्रतियोगिन्यपि कालविशेषावच्छेदेन स्वीक्रियते । जन्याभावत्वस्य ध्वंसत्वे कपालरूपजन्यघटरूपा-

---

[1] विमुक्त इति पाठेन भाव्यमिति भाति [2] तदभावकल्पने इति पाठेन भाव्यमिति भाति

[3] कल्प्यमानकारणताकप्रतियोगिरूपप्रागभावस्यैव इति पाठेन भाव्यमिति भाति

(द्वै ध्रु) द्वावतिव्याप्ते । भावभिन्नत्वनिवेशे घटादीनां स्वप्रागभावध्वंसत्वानुपपत्ते ' इति । तन्न । प्रतियोगिनि कालविशेषावच्छेदेन ध्वसत्वाभ्युपगमे प्रतियोगिध्वसयोरेककालसत्त्वेन विराधितया ध्वमसद्भावेऽपि प्रतियोग्यनुवृत्तरुत्तरक्षणेषु प्राप्त्या तादृशध्वसत्व पारिभाषिक स्यात् । अन्यथा प्रतियोगिनि सर्वदा विद्यमानप्रमेयत्वाभिधेयत्वादीनां तद्ध्वसत्वरूपत्व किमिति नोच्यते । न च प्रतियोगिनि यदा ध्वसत्व तदुत्तरक्षणे प्रतियोग्यननुवृत्तिरिति न प्रमेयत्वादीनां तथात्वमिति वाच्यम् । तथात्वे उत्तरक्षणे प्रतियोग्यभावेऽवश्य वाच्ये तस्यैव ध्वसत्व सर्वसम्मतमस्तु । किमर्थमेकस्मिन् क्षणे प्रतियोगिनि ध्वसत्वस्याप्रामाणिकस्याभ्युपगम । यथोक्तम् 'अभूत्वा भवनमुत्पत्ति । भूत्वाऽभवन ध्वंस ' इति ।

त्वदीयचरमक्षणे तत्वज्ञाने वा ध्वसत्वाभ्युपगमे उत्तरत्र क्षणस्यैवाभावेन त्वन्मते तत्र तदभावस्य वक्तुमशक्यत्वे तादृशतत्वज्ञानचरमक्षणतन्निष्ठध्वंसत्वादिरूपप्रपञ्चसम्बन्धेन न शुद्धात्मरूपेणावस्थानरूपमोक्षसमस्ति ।

न चोपादानगतोत्तरावस्था ध्वस इति मते कपालाद्यभिन्नतादृशावस्थाविशेषस्य ध्वसत्वे घटकपालयोरैक्याद्घटेपि ध्वसत्वमागतमिति वाच्यम् । परिणामिन एकत्वेऽपि तादृशावस्थाविशेषघटादिरूपपरिणामानामत्यन्तविलक्षणत्वात्परिणामिनापि भेदाभेदसत्त्वेनोक्तस्यानुपपत्ते । अन्यथा कपालमृत्पिण्डादिना जलाहरणाद्यापत्ते ।

लक्षणदूषणमप्ययुक्तम् । भावप्रतियोगिकध्वंसस्यैवैतल्लक्षणलक्ष्यत्वात् । अन्यथा घटाभावभवात्मक घटे अव्याप्त्या 'नित्यससर्गाभावत्वमत्यन्ताभावत्वं न । किं त्वनुयोगिताविशेष एव' इति घटस्यैव घटात्यन्ताभावत्वं स्वीकर्तव्य स्यात् । अविशेषात् । एतेन 'चरमक्षणतत्सम्बन्धयोरेव परस्पर ध्वसत्वम्' इति प्रत्युक्तम् । प्रतियोगिध्वसयोः समानकालीनत्वायोगाप्रामाणिकत्वादिरूपपूर्वोक्तदोषाणामविशेषात् । तस्मात् ध्वसस्य तत्वज्ञानजन्यतापक्षाश्रयणेन परिष्कारो न युक्त एव ।

अपि च संस्कारस्य संस्काराभावादनादिजीवेशतद्विभागादीनां संस्काराभ्युपगमे बीजप्रमाणयोरभावाच्च तेषां स्वीयसंस्काराप्रसिद्ध्या ज्ञानप्रयुक्तस्वस्वीयसंस्कारोभयध्वंसकत्वलक्षणस्याव्याप्ति । सामान्यधर्मावच्छिन्नप्रतियोगिताकध्वसाभ्युपगमाभावे असम्भवश्च । तस्मादुक्तमयुक्तम् ।

एतेन 'ज्ञानप्रयुक्तोच्छेदप्रतियोगित्व वा तत् । उच्छेदश्च स्वस्वीयसंस्काराधिकरणकालनिष्ठतादृशान्यतराधिकरणकालपूर्वत्वाभाव एव । तत्प्रतियोगित्व च परम्परया तन्निरूपकत्वम् । तथा च स्वस्वीयसंस्काराधिकरणकालनिष्ठतदन्यतराधिकरणकालपूर्वत्वाभावकत्वं पर्यवसितम्' इति परास्तम् । अनादिदृश्यसंस्कारतत्वज्ञानतत्समानकालिकवायुसंयोगादिष्वव्याप्ते । तत्वज्ञानतत्समानकालिकानामुत्तरक्षण एवोच्छेदेन तन्नाशोत्तरविद्यमानतत्सूक्ष्मरूपसंस्कारप्रसिद्ध्यभावात् । अपि चोच्छेदरूपतादृशाभावस्य नाशो वर्तते न वा । नाद्य । तन्नाशस्यापि नाशान्तराभ्युपगमे अविश्रान्तनाशधारापत्त्या न कदापि शुद्धात्मस्वरूपमोक्षाशा । क्वचिद्विश्रान्तौ तस्यैव नाशाभावेनात्मस्वरूपारोपिततया सिद्ध्या न निष्प्रपञ्चब्रह्मरूपावस्थितिरिति पूर्वोक्त एव दोषः । अविद्यानिवृत्त्यु-

(द्वि थु) त्वमपि प्रतीयमानानां तेषां उच्छेदकाभावादात्मस्वरूपमात्रानुबन्धित्वाच्च कदाचिदप्यनिवृत्तेश्च। नद्वितीय। [1]तस्यैव नाशेनोत्तरत्रापि अनुवृत्त्या स्वदेनोऽदये तस्मिन् स्वक्षीयेत्यादिलक्षणगमनायोग। स्वाधिकरणक्षणे ताद्दशान्यतराधिकरणीभूतक्षणपूर्वत्वसत्त्वात्।

दृश्याधिकरणक्षणे दृश्याधिकरणक्षणपूर्वत्वाभाव एवोच्छेद इति सामान्यतो दृश्यत्वेन निवेशेन परिष्कारे तादृशोच्छेदरूपाभावस्य नाशान्तरपक्षद्वयेऽप्युक्तलक्षणव्याहते तद्रूपस्य दृश्यस्य तन्नाशरूपदृश्यस्य वाऽनुच्छिन्नतया सत्त्वात्।

ननु तादृशोच्छेदस्य ध्वंसो नास्त्येव। ध्वंसाप्रतियोगित्वरूपं पारिभाषिकं नित्यत्वं घटत्वादीनामिवेष्टम्। परन्तु चरमक्षणावधि। तदुत्तरं कार्यजनकादृष्टाभावान्न कस्याप्युत्पत्तिरिति क्षणानामप्यनुत्पत्ति। इत्थं च न स्वत्वेन घटितलक्षणस्य व्याप्ति। स्वाधिकरणस्य चरमक्षणस्य स्वाधिकरणीभूततत्क्षणनिरूपिततत्पूर्वक्षणप्रसिद्धपूर्वत्वाभाववत्त्वात्। नापि दृश्यत्वेन सामान्यतो निवेश्य कृतपरिष्कारस्य स्वरूपाप्रसिद्धिरूपव्याहति। न चोच्छिद्यमानपदार्थानां ध्वंसप्रतियोगित्वनियम। घटत्वादीनां तु नोच्छेदोऽप्यपि सिद्धोऽसत्सम्मतश्च। येन तत्रोक्तनियमस्य व्यभिचारः स्यात्। तथा चोच्छिद्यमानत्वादेव ध्वंसप्रतियोगित्वस्यावर्जनीयतया पूर्वोक्तसर्वदोषो दुर्वार एवेति वाच्यम्। स्वाप्नस्याप्रशुक्तिरजतादीनामुक्तोच्छेदशालिनामपि घटादीनां मुद्गरपातादिनेव ध्वंसानुपलम्भेन व्यभिचारेणोक्तनियमस्यैवायोगादिति चेन्न। मुद्गरपातद्वितीयक्षणे घटानुपलब्धिवत् शुक्तिसाक्षात्काराद्द्वितीयक्षणे जाग्रद्द्वितीयक्षणे वा शुक्तिरजतस्वाप्नस्याप्रावनुपलब्धे अविशेषाद्घटो नष्ट उच्छिन्नो ध्वस्तो गत इत्यादिवत् स्वाप्नस्याप्रबन्धादिकं शुक्तिरजतादिकं च नष्टमुत्सन्नं गतं ध्वस्तमिति व्यवहाराविशेषात् एकस्य ध्वंसो अन्यस्य नास्तीत्युक्तेरविवेचनीयत्वान्नि तव साहसत्वात्। न हीतोऽन्यत् घटध्वंससाधकस्य शृङ्गमस्ति। शुक्तिसाक्षात्काराद्द्वितीयक्षणे रजताभावसत्त्वे तस्यैव ध्वंसरूपत्वम्। पूर्वक्षणे सत्तादात्म्यापन्नतया विद्यमानो यस्तद्द्वितीयक्षणे प्रतीयमानः तत्प्रतियोगिकाभावस्यैव ध्वंसत्वात्। घटादिस्थलेऽप्येतदतिरिक्तविशेषादर्शनात्। तथा च कथमुक्तनियमस्य व्यभिचारः। कथं वा तमवष्टभ्य प्राप्तदूषणपरिहारः स्यात्।

ननु शुक्तिरूप्यादौ ध्वस्तं गतमित्याकारो मुख्यार्थालम्बनः सार्वजनीनः प्रत्ययो नास्त्येव। तथात्वे त्वया तदसत्त्वं नाङ्गीक्रियेत। कश्चित्कव्यवहारस्तज्ज्ञानध्वंसविषयक। तथा चाधिष्ठानसाक्षात्कारोत्तरं प्रतीयमानाऽभावो न ध्वंसः। तत्कालेऽविद्यमानस्य तदुत्तरक्षणे प्रतीयमानस्यैव ध्वंसत्वात्। अयं तु पूर्वमपि विद्यमान एव रजतप्रतीत्यवगमे प्रतीयते। अतोऽत्यन्ताभाव एव स। घटादौ तु नैवम्। व्यवहारकाले तदुत्तरं ध्वंसस्यैव प्रतीतेर्निर्विवादत्वादिति मत एवैतन्निरुक्ते कृतत्वात्। तत्रोक्तस्वाप्नस्याप्रशुक्तिरजतादावुक्तव्यभिचारो युक्त एवेति चेन्न। तर्हि अधिष्ठानसाक्षात्कारो रजतप्रतीतिमात्रविरोधी रजतप्रतीतावपगतायां पूर्वसिद्धरजताभावः स्वयमेव प्रतीयत इत्यागतम्। तथा च रजताधिकरणक्षणनिष्ठरजताधिकरणक्षणपूर्वत्वाभावे ज्ञानस्योपयोगाभावेन तादृशो-

---

[1] तस्यैवनाशेन इति पाठेन भाव्यमिति भाति।

(द्वैधु)च्छेदस्य ज्ञानप्रयुक्तत्वाभावात्तत्त्वज्ञानस्थलेऽप्येवं रीत्या सत्त्वादुक्तलक्षणस्यासम्भव एव। न च ज्ञानेन रजतप्रतीतिनिवृत्तौ प्रतीतिमात्रशरीरस्य रजतस्य निवृत्तिप्राप्त्या रजतक्षणे तदधिकरणक्षणपूर्वत्वाभावो लभ्यत इत्यस्त्येव ज्ञानस्योपयोग इति वाच्यम्। रजतप्रतीत्यप्रतीतिदशायामेव रजतस्य क्षणसम्बन्धः सम्बन्धयोरङ्गीकारे द्वितीयक्षणे विद्यमानतत्सम्बन्धस्य तद्धर्मरूपतयोक्तनियमस्य व्यभिचारायोगात्। प्रतीत्यधीनस्य तात्कालिकस्य वा क्षणसम्बन्धस्य रजतेऽनङ्गीकारे च रजताधिकरणक्षणाप्रसिद्ध्याऽव्याप्तिरसम्भवो वा स्यात्।

अस्तु वा ध्वंसाभावत्वमस्य। तथापि स्वीयसंस्काराधिकरणक्षणनिष्ठतदन्यतराधिकरणक्षणपूर्वत्वाभावकत्वरूप[1]संस्काराघटितं चोच्छिद्यमानत्वं शुक्तिरूप्यादौ घटादौ च क्रमेण स्वीयसंस्कारसत्त्वेन क्षणिकत्वस्य स्वाभाववत्त्वोत्तरक्षणकत्वस्य च व्याप्यं दृष्टमिति शुक्तिरूप्यादेरिव घटादेरप्युच्छेदानन्तरक्षणे घटादावपि स्वप्युच्छेदपरम्पराप्राप्त्या ध्वंसलक्षणोक्तदोषः सामान्यतो दृश्यत्वेन घटादिलक्षणस्य स्वरूपेण लक्षणस्य दुर्वार एव।

न चैव समारदशायां स्वाधिकरणक्षणेषु स्वनिष्ठतन्त्वाधिकरणक्षणपूर्वत्वव्यभिचारदर्शनेन तादृशव्याप्त्यसिद्धौ तद्बलात् त्वदभिमतानुच्छेद्यसिद्धिप्रसङ्ग। विपक्षे बाधकाभावेन सहचारदर्शनमात्रस्य प्रयोजकतया तत्र व्याप्त्यनभ्युपगमे प्रकृतेऽपि तथाऽस्त्विति कुतस्त्वदुक्तदूषणावकाश इति वाच्यम्। 'तीर्त्वा हि सर्वान् शोकान् हृदयस्य भवति' 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' इत्याद्यनेकश्रुतिबाधितत्वेन तादृशनियमानङ्गीकारात्। त्वदभिमतोच्छेदबोधकस्य कस्यापि वाक्यस्याभावेन त्वदुत्प्रेक्षामात्रस्य 'अनाद्यनन्तं जगदेतदीदृक् प्रवर्तते नात्र विचार्यमस्ति' 'गौरनाद्यन्तवती' इत्यादिजगदनुच्छेदबोधकप्रमाणानुगृहीताव्यभिचारसहचारदर्शनगृहीतनियमबाधकत्वायोगात्। प्रामाणिकपरित्यागस्यैव विपक्षे बाधकत्वात्। न हि कार्यकारणभावादिरेव सर्वत्र व्याप्तिग्राहक। रसरूपसङ्ख्यापरिमाणपृथिवीत्वद्रव्यत्वादीना व्याप्त्यसिद्धिप्रसङ्गात्। अत उक्तदूषण युक्तमेव।

अपि च तत्त्वज्ञानतत्क्षणतन्निष्ठनाशक्षणपूर्वत्वाभावरूपोच्छेदादीना ध्वंसाप्रतियोगित्वं स्वीकृत्य तदुत्तरक्षणादिरूपदृश्यानुत्पत्तिमात्रेण तेषूक्तोच्छेदोपगमे तस्य प्रमेयत्वादिवत् तन्स्थित्यविरोधेन तैस्तत्समानकालिकपदार्थैर्ब्रह्मण. संसृष्टतयैवावस्थानान्निष्प्रपञ्चब्रह्मानन्दप्रकाशरूपमोक्षासिद्धि।

नन्वस्त्वेतद्दूषणम्। लक्षणस्य तु किमागतमिति चेत्। यद्धर्मज्ञानं सदिति व्यवहारविरोधि तद्धर्मस्यैव मिथ्यापदार्थतावच्छेदकत्वेन तदितरस्यातथात्वात् प्रमेयत्वादिवत्तदविरोधिनोऽस्य धर्मस्य मिथ्यापदप्रवृत्तिनिमित्तत्वायोगात् लक्षणत्वानुपपत्तिरेव। मिथ्यापदार्थतावच्छेदकस्यैव निर्वाच्यत्वात्। अन्यथा जडत्वमेव मिथ्यात्वमिति कुतो नोच्येत। इतरभेदानुमापकत्वपक्षेपि सर्वथा ध्वंसाप्रतियोगिन सत्प्रतीतिगोचरस्यापरिच्छिन्नब्रह्मवदमिथ्यात्वप्राप्त्या अलक्ष्यताया अवर्जनीयतया तत्साधारणस्यैतल्लक्षणस्यातिव्याप्तिरेवेति दूषणं पर्यवस्यति।

किञ्च 'तदा विद्वान्' 'ततः परं न भेदोऽस्ति' इत्यादिश्रुत्यादिव्यवहाराणा 'तत्त्वज्ञानोत्तर किमपि नास्ति' इत्यादिरवद्व्यवहाराणा च प्रामाण्य न वा। आद्ये तेनैव तत्त्वज्ञानोत्तरोत्तरक्षणादिसिद्धेस्त्वल्लक्षणव्याहति.। अन्त्ये

[1] अस्मन्मते संस्काराभावात्तदघटितोच्छेदस्य व्यापकत्वमुपादाय दोषविरह इति भावः।

द्वै.श्रु./मुक्त्यनन्तरं किमपि नास्तीत्यप्रामाण्ये तदुत्तरकालादिसद्भावप्राप्त्या पुनरुक्तव्याहतिः। न चैतद्वाक्यानामुक्तोच्छेदे लक्षणया तात्पर्याङ्गीकारान्नाप्रामाण्यमिति वाच्यम्। उक्तलक्षणया बोधस्य कीदृशार्थमादाय पर्यवसानमिति वादिना शिष्येण वा पृष्टे 'तदनन्तरं किमपि द्वैतं नास्ति' इत्युत्तररूपत्वद्वाक्यस्यैवेदानीमुक्तविकल्पेन दूषणदानात्। अन्यथा तव मूकत्वं स्यात्। श्रुतीनामपि प्रतीयमानद्वारीभूतबोधविषयीभूतार्थे व्यवहारिकप्रामाण्यस्याप्यभावे कर्मादिप्रतिपादकवाक्यानां भ्रममात्रलक्षणया तद्बोधकत्वमात्रमादाय कर्मादावपि व्यावहारिकप्रामाण्यत्यागस्याविशेषेणाऽऽपत्त्या स्फुट एव नास्तिकवादः।

नन्वङ्गीक्रियत एवासद्वाक्यस्य श्रुतीनां च व्यावहारिकप्रामाण्यम्। तदर्थमाविद्यकोपि मुक्त्युत्तरकाल स्वीक्रियते। यदा व्यवहारः क्रियते तदा तद्विषयस्य स्वर्गनरकादिवत्सत्त्वात्। तत्त्वज्ञानेन सोप्युच्छिद्यत एवेति उक्तोच्छेदनिर्वचनमपि नानुपपन्नमिति चेन्न। तर्हि व्यवहारदशायामेवोक्तनिर्वचनस्य कर्तव्यतया व्यवहारकाल एव बद्धपुरुषाविद्याकल्पितत्वज्ञानादिरूपदृश्याधिकरणकाले व्यवहारदशायामेव बद्धपुरुषाविद्याकल्पितक्षणत्वकालत्वादिरूपदृश्याधिकरणकालपूर्वत्वस्य व्यावहारिकस्यैव सत्त्वात्कथं लक्षणसङ्गतिः। अन्यथा लक्षणान्तरेष्वपि व्यवहारदशापन्नपदार्थानादाय दोषा न परिहर्तव्याः स्यात्। न चानयोर्मात्रयापि विशेषोस्ति।

न च स कालो बद्धपुरुषाविद्याकल्पितोपि न मायाचित्सम्बन्धाद्यात्मकः। स एव लक्षणे निविष्ट इति वाच्यम्। तर्हि शुक्तिरजतादिवत्तस्य प्रातिभासिकत्वस्यैव प्राप्त्योक्तश्रुतीनामप्रामाण्यं दुर्वारम्। व्यवहारकाले बाधाभावान्न दोष इति चेन्न। उक्तोच्छेदबोधकश्रुतियुक्त्यादिभिरेव बाधितत्वात्। अन्यथा शून्यवाद्यविद्याकल्पितार्थेषु शून्यवादिवाक्यानामपि व्यावहारिकप्रामाण्यानपाये त्वद्वाक्यानामपि व्यावहारिकप्रामाण्यवत्त्वेनाविशेषात्तत्खण्डनादौ प्रवृत्त्याद्यनुपपत्तेः। एवमिदानीं मुक्त्युत्तरकालस्य कल्पितत्वे इदानीं तदुपलम्भप्रसङ्गः। भविष्यत्त्वेन कल्पनायां भविष्यत्काले तदुपलब्धिप्रसङ्गात् त्वदुक्तार्थव्याहतेः। अन्यथा सत्कारणत्वाभाववादिकल्पितार्थनिराकरणाय 'तद्वैक आहुः' इत्यादिश्रुतिप्रवृत्त्यनुपपत्तेरित्यादिबहुदोषदुष्टत्वान्न किञ्चिदेतत्।

एतेन 'ब्रह्माधिकरणकालस्य ब्रह्माधिकरणकालपूर्वत्वाभावसत्त्वात्तस्यापि उच्छेदापत्तिः। 'सदेव सोम्येदमग्र आसीत्' इत्यादिश्रुतिस्मृतीनां व्यावहारिकप्रामाण्यरक्षणाय ब्रह्मणोऽपि कालवृत्तित्वाभ्युपगमात्' इति दूषणमाशङ्क्य परिहृतं 'तदन्योन्याभाववत् तदधिकरणकालस्य तदधिकरणकालपूर्वत्वानधिकरणत्वमुच्छेद इत्युक्तावुक्तदोषाभावात्। ब्रह्मज्ञानोत्तरत्वस्यापि शुद्धे ब्रह्मण्याविद्यकस्याभ्युपगमेन तस्य च ब्रह्माधिकरणकालतया तत्पूर्वभावस्य च तदत्यन्तभिन्ने काले क्वाप्यभावात्' इति निरस्तम्। आविद्यकतत्कल्पनापक्षासङ्गतेरुक्तत्वात्। क्षणादीनां स्वाभाविकत्वे नैयायिकरीत्या कालोपाधिरूपसमानकालिकबहुक्षणानां अभावेन स्ववृत्तित्वस्यैव सत्त्वात्। अन्योन्याभावरूपविशेषणोपादाने उक्तोच्छेदस्य तत्र वक्तुमशक्यत्वादनुपयोगाच्च तद्विशेषणदानस्यासङ्गतत्वाच्च। न च तत्त्वज्ञानोत्तरत्वादेराविद्यकस्य ब्रह्मणि कल्पने तदुपहितकालस्य ब्रह्मस्वरूपत्वप्राप्त्या तद्रूपकालस्य ब्रह्माधिकरणीभूतस्य ब्रह्माधिकरणकालपूर्वत्वाभावादुच्छेदापत्तिवारणाय तदन्योन्याभावनिवेशसार्थक्यम्। भेदमात्रनि-

(द्वि थु) वेशे उपहितस्य केवलेन मेदाभेदसत्त्वात्तद्दोषतादवस्थ्य स्यात्। अतोऽन्योन्याभावपदमत्यन्तभेदार्थकमिति वाच्यम्। ब्रह्मण्याविद्यकस्योत्तरकालसम्बन्धस्य कल्पनेनैव तत्त्वज्ञानोत्तरत्वप्रतिपादकश्रुतीनां प्रामाण्यसम्भवे कालत्वस्य ब्रह्मणि कल्पने मानाभावात्। अभेदे [1]आधाराधेयभाववारणाय पुनस्तत्र भेदकल्पनाया आवश्यकत्वे प्रथमत एव भिन्नकालसम्बन्धस्यैव कल्पयितुमुचितत्वात्। अन्यथा मासारिककालत्वस्यापि वैरूप्यपरिहाराय ब्रह्मण्येव कल्पनापत्त्या सर्वत्रासम्भव एव स्यात्। मुक्तौ जडाभावादेव लक्षणसङ्गतिरिति चेत्तर्हि स्वपदेन ब्रह्मग्रहणस्य कर्तुमशक्यत्वादेव सर्वदोषवारणसम्भवात् तदुपपादनस्यानुपयोगापत्ते.।

न च भिन्नकालकल्पने उक्तविवक्षया ब्रह्मोच्छेदरूपदोषस्य परिहारायोगादेव कल्प्यत इति वाच्यम्। स्वविवक्षानिर्वाहाय गौरवाश्रयणस्यानुचितत्वात्। एतद्दोषस्य स्वान्यूनसत्ताकस्वाधिकरणकालस्य स्वाधिकरणकालपूर्वत्वाभाव इति विवक्षयापि परिहर्तुं शक्यत्वात्। मिथ्यात्वसिद्धे प्रागन्यूनसत्तादिप्रक्रियाया इव त्वदुक्ताविद्योत्तरत्वादिकल्पनाप्रक्रियाया अप्यसिद्धत्वेन प्रतिवादिन तदसिद्धिरूपदोषस्योभयत्र तौल्यात्। तस्मान्न किञ्चिदेतत्।

यत्तु 'उच्छेदस्तूच्छिद्यमानधर्मपरिपतितेषु जायते। अस्ति वर्धत इत्यादिषु षट्सु भावविकारेषु परस्परसामानाधिकरण्यस्योचितत्वेनोपचयोत्पत्त्यादियुक्ते दृश्यवर्गे विद्यमानश्चरमक्षणसम्बन्धो ध्वस। स न स्वतथाविधात्मनिष्ठ इति न तस्योच्छेदापत्ति। एव च दृश्याधिकरणक्षणनिष्ठ दृश्याधिकरणक्षणपूर्वत्वाभाव एवाधिकरणात्मा चरमदृश्यस्य ब्रह्मसाक्षात्कारस्य चरमो विकार एक एवाविद्यातत्प्रयुक्तनद्वृत्तीनामुच्छेदरूप'। तन्तुनाश इव पटतदवयवतद्विकाराणाम्। न चोच्छेदस्याप्युच्छेदावश्यम्भाव। भावविकाराणा पुन सजातीयभावविकारान्तराभावात। अन्यथोत्पत्तेरप्युत्पत्त्यन्तरमित्यनवस्थापत्त' इति।

तदपि एतत्परिष्कारस्य पूर्वमेव दूषितत्वादकिञ्चित्करम्।

उत्पत्तेरप्युत्पत्तिव्यवहारस्य अस्तित्वस्याप्यस्तित्वव्यवहारस्य लोके सत्त्वादनवस्थाभावात्तस्यैव स्वाश्रितत्व प्रमेयत्वादिवदङ्गीक्रियते। नाशादेर्नाशव्यवहाराभावात्स्वान्यस्य स्वस्य वोच्छेदस्याश्रयो न भवत्येव। अतस्तद्दृष्टान्तेनोक्तोच्छेदस्य स्वीयोच्छेदरूपत्वाभावेन तस्यानुच्छिद्यमानत्वरूपध्वस.प्रतियोगित्वस्यैव प्राप्त्या पूर्वोक्तदोषानिस्तारात्। तन्तुनाशदृष्टान्तस्तु विषम। तस्य पटादिप्रतियोगिकत्वेऽपि स्वप्रतियोगिकत्वाभावेन बाधकाभावात्। प्रकृते चोक्तोच्छेदरूपनाशस्य प्रतियोगिसम्बन्धित्ववत्स्वसम्बन्धित्वे स्वस्यापि स्वप्रतियोगित्वप्राप्त्या तत्रोक्तदोषाणां जागरूकत्वात्। न चैतन्मते चरमक्षणसम्बन्धस्यैव ध्वसत्वेन तस्य प्रतियोगिसमानकालिकत्वस्यावर्जनीयत्वेन प्रतियोगिध्वसयोरैक्याङ्गीकारेऽभिहितानां भावाभावयोरेकक्षणवृत्तित्वानुपपत्त्या व्याहत्यादिदोषाणामेतत्पक्षे नावकाश इति वाच्यम्। एवमपि परेण दृश्याधिकरणक्षणे दृश्याधिकरणक्षणपूर्वत्वाभावस्यैवोच्छेदरूपतया पर्यवसानस्य कृतत्वेन तत्र पूर्वोक्तदोषस्यानिस्तारात्।

---

[1] आधाराधेयभावाभाववारणाय इति पाठेन भाव्यमिति भाति,

(द्वै. सु) मित्यभिप्रेत्य ब्रह्मनिष्ठतत्तादात्म्यरूपसम्बन्धस्यापि तद्व्रजन्यतया कालोपाधित्वेन तयो समानकालिकत्वेन परस्परं कालिकेनाऽऽधाराधेयभावप्रतिपादन प्रत्युक्तम् । देशविषया तदधिकरणे पृष्टे कालविषया तदधिकरणकथनस्य असङ्गतत्वात् । देशविषयाऽधिकरणशून्यस्य कालिकेन वृत्त्यदृष्टे, कथञ्चित् क्वचित्सत्त्वेऽपि तस्य प्रकृते तथात्वे मानाभावात् । तथात्वे पूर्वमधिकरणात्मेत्यनेन तादृशोच्छेदस्याधिकरणात्मकत्वकथनादुक्तचरमवृत्तितत्तादात्म्यया परम्परवृत्तित्वेन परम्परात्मकत्वप्राप्त्यैकतरमात्रपरिशेषापातेन त्वदुक्तेरसङ्गत्यपरिहारात् ।

'ब्रह्मसाक्षात्कारनिष्ठदृश्याधिकरणकालपूर्वत्वाभावरूपोच्छेदं प्रति तत्वज्ञानजनकसामग्र्येव कारणम् । [1]स्वस्य वा समानकालिकस्यापि प्रयोजकत्वम्' इत्यप्ययुक्तम् । एकसामग्रीनियम्ययो प्रतियोगितन्नाशयो कुत्राप्यदृष्टत्वेन एकसामग्रीनियम्यत्वे तस्य तदुच्छेदरूपत्वस्यैवात्यन्तासङ्गतत्वात् । अन्यथा स्वस्यैव स्वोच्छेदरूपत्वं कुतो न कल्पयसि । अविशेषात् । समानकालिकयो प्रयोज्यप्रयोजकभावाङ्गीकारेऽपि तत्पक्षे कारणानिरूपणेनाकारण-कार्योत्पत्तिप्रसङ्ग । अनादित्वे तस्य प्रयोजकत्वोक्तेरत्यन्तमयोग. । उत्तरकालिकस्य पूर्ववर्तिनं प्रति प्रयोजकत्वा-दर्शनात् । उच्छेदरूपत्वस्योच्छेद्यात्प्राक्कालिकत्वप्राप्त्या 'प्रतियोग्यधिकरणकालपूर्वकालस्य तद्ध्वंसाधिकरणत्वा-भाव' इति भवदुक्तनियमस्यापि परित्याग कृत इति सम्यक् परीक्षकरीतिरनुसृता । रूपभेदेन स्वस्यैव कार्य-कारणभावोपपादनमप्यसङ्गतम् । स्वस्य स्वं प्रति स्वरूपयोग्यत्वस्य कथञ्चित्सम्भवेऽपि स्वस्य स्वोपधायकत्वस्य व्याहतत्वात् । पूर्ववृत्तितानिर्वाहकेण केनचिद्रूपेण स्वस्यैव पूर्ववृत्तित्वं मतं चेत् तादृशं रूपमन्त.करणत्वादिक-मेवेति स्वसामग्रीकरणतापक्ष एव पर्यवसानम् । तत्र च दोषोभिहित एवेति न किञ्चिदेतत् ।

यदपि 'उक्तरूपोच्छेद उक्तविकारान्तरसमानाधिकरणो न तथाविधात्मनिष्ठ इति न तस्योच्छेदापत्ति' इति । तदप्यसत् । स्वाधिकरणकालनिष्ठस्वाधिकरणकालपूर्वत्वाभावस्योच्छेदरूपत्वे तस्यात्मनिष्ठस्य विकारान्तरा-सामानाधिकरण्येऽपि उच्छेदरूपत्वं किं गच्छति । तत्स्वरूपे विकारान्तरसमानाधिकरण्यस्यानिविष्टत्वात् । अन्यथा तत्समानाधिकरणमन्यदेव किञ्चित्प्रकृत उच्छेद इत्यस्यैव युक्तत्वे एतावदायासस्य वैफल्यापत्ते ।

यदपि आत्मन उच्छेदवारणाय तस्य कालासम्बन्धमुपेत्य तथात्वेऽपि परमार्थसत्त्वमभ्युपेत्य 'गगनादीना तथात्व न्यायवित्सम्मतम्' इत्यभिहित तत्तु तथात्वे त्रैकालिकनिषेधप्रतियोगित्व शशविषाणादे सत्त्वापत्तेर्वार-यितुमशक्यत्वादनुपादेयम् । अत एव साध्यतावच्छेदकसम्बन्धधर्मिकोभयाभावघटितलक्षणमपहाय प्रतियोगिता-धर्मिकोभयाभावघटितलक्षणमनुसृत दीधितिकृता । अत एव भट्टाचार्येणापि गगनादीना कालसम्बन्धित्वे पारमार्थिकत्वानुपपत्तिरित्यवतारितम् । तत्सङ्ध्वंसघटितलक्षण तत्सजातीयमुच्छेदघटितलक्षण च परिष्कर्तुमयुक्तमिति ।

ननु परस्यायुक्तभाषित्वादेवोक्तरीत्या बाधकसत्त्वेपि तल्लक्षण कथ न सम्मतमिति शङ्कायन इत्यत आह ॥ तेनेति ॥ अधिष्ठानयाथात्म्यज्ञानेन स्वजन्यपटुतमसंस्कारसहिताधिष्ठानापरोक्षज्ञानेन । विलीनायां नष्टायां ।

---

[1] स्वस्येव इति पाठेन भाव्यमिति भाति ।

(द्वै चु.) स्वयमेव तत्राऽस्वाधीननाशप्रतियोगिता विनैव । निवर्तते नास्ति नासीन्न भविष्यतीति बाधबुद्धिविषयीभूत भवतीत्यर्थः । तदुपादानकत्वमप्यत्रैव नियामकम् । न तु नाश इति सूचनाय तदुपादानकत्वोक्ति ॥ इत्यङ्गीकृतत्वा-दिति ॥ अत एवाद्वैतचन्द्रिकायां ज्ञाननिवर्त्यत्वलक्षणव्याख्यावसरे मूलोदाहृतविवरणवाक्यव्याख्यायां 'अज्ञानस्य निवृत्ति । तत्प्रयुक्तस्य तु बाध एव' इत्यभिहितम् । यद्वा अविद्यायां विलीनायामित्यस्य त्रैकालिकनिषेधप्रति-योगित्वेन गृह्यमाणायामित्यर्थः । स्वयमेवेत्यादेर्नाशं विनेति पूर्वोक्त एवार्थः । तत्रैवोक्तविवरणवाक्ये 'निवृत्ति-पदमत्यन्ताभावपरमपि । वार्तिकानुसारात्' इत्यादिना मूलोदाहृतवार्तिकमवतार्य तदर्थोक्ते । वार्तिके तु

'तत्त्वमस्यादिवाक्यार्थसम्यग्धीजन्ममात्रत. ।
अविद्या सह कार्येण नासीदस्ति भविष्यति ॥' इति ।

'अज्ञानस्याव[1]र्तमानत्वेऽप्यतीतकार्यासहितरूपेणातीतत्वादासीदित्यस्य प्रसक्त्या नासीदिति निषेधसम्भव इति भाव । अदृष्टादिकारणसत्त्वादग्रे भाविनः यज्जातीयकार्यस्य प्रसक्त्या तज्जातीयस्यादृष्टाद्यभावाज्ज्ञानप्रयुक्ता-दभावो न भविष्यतीत्यनेन बोध्यत इत्यर्थ ' इत्यद्वैतचन्द्रिकायामेवास्यार्थ स्पष्ट । तरङ्गिण्या तु 'अभावे कालत्रयसम्बन्धो बोध्यते' इति श्लोकार्थ उक्त । तेषा मतेन अर्थ एव मुख्यविशेष्यतया भासत इत्यभ्युपेयम् । तथा चोक्तश्लोकद्वयेऽपि अज्ञानप्रयुक्तजगदादीनां नाशाभावप्राप्तेर्न नाशघटितलक्षणं तस्य परमसिद्धान्ते सम्मतम् । इदं नो नास्ति कूटस्थस्य स्यादिन्दुः यत्परैर्ध्वंसाद्यभ्युपगमेन कथञ्चित्कृतलक्षणानामनादरणीयत्वमेवेति भाव । तर्हि किं तल्लक्षणमित्यत आह ॥ प्रतिपन्नोपाधाविति ॥

नन्वेतदयुक्तम् । परै स्वग्रन्थेऽत्यन्ताभावघटनया प्रकारान्तरेण परिष्कृतत्वात् । तथा हि 'ज्ञाननिव-र्त्यत्वं च' मिथ्यात्वम् । न चोत्तरज्ञाननिवर्त्ये पूर्वज्ञानेऽतिव्याप्ति मुद्गरघातनिवर्त्यघटादावव्याप्तिश्चेति वाच्यम् । ज्ञानप्रयुक्तावस्थितिसामान्याभावकत्वस्य विवक्षितत्वात् । अवस्थितिर्द्वेधा । स्वरूपेण कारणात्मना च । सत्कार्य-वादाभ्युपगमात् । एवं च घटादे स्वरूपेणावस्थित्यभावस्य मुद्गरपातादिप्रयुक्तत्वेऽपि कार्यकारणात्मनाऽवस्थिति-साधारणोक्तावस्थितिसामान्याभावस्य ब्रह्मज्ञानप्रयुक्तत्वान्नाव्याप्ति । न वा सिद्धसाधनम् । अत एव न वियदादे ब्रह्महत्यादेरिव सेतुदर्शनादिना ब्रह्मज्ञानेन नाशसिद्धावपि मिथ्यात्वासिद्ध्याऽर्थान्तरम् । तुच्छस्यावस्थितिसामान्या-भावसत्त्वेऽपि तस्य ज्ञानप्रयुक्तत्वाभावान्न तत्रातिव्याप्ति । शुक्तिरजतादेरपरोक्षप्रतीत्यन्यथाऽनुपपत्त्या प्रतिभास-कालेऽवस्थित्यङ्गीकारान्न बाधकं विना तद्विरह इति न साध्यविकलता । न च घटादेरेकावस्थितिविशेषविरहस्य ज्ञानाप्रयुक्तत्वेन घटावस्थितिसामान्यविरहस्य ज्ञानाप्रयुक्तत्वाद्विशेषाभावातिरिक्तसामान्याभावानभ्युपगमे घटादाव-व्याप्तिर्दुर्वारैव । ज्ञानप्रयुक्तविरहप्रतियोग्युपादानकत्वविवक्षाया तादृशाज्ञानोपादानके घटादावव्याप्तिविरहेऽप्यनाद्य-विद्यादावव्याप्तिर्दुर्वारैवेति वाच्यम् । यथा मण्याद्यसमवधानकालीनस्य कारणाभावप्रयुक्तदाहाभावस्य तत्तत्कालीन-तत्तद्दाहाभावत्वेन मण्याद्यप्रयुक्तत्वेऽपि तत्समवधानकालीनतत्तदभावस्य दाहसामान्याभावत्वेन तत्प्रयोज्यत्वं

[1] 'अज्ञानस्य वर्तमानत्वेऽपि अतीतकार्यसहितरूपेणातीतत्वादासीदित्यस्य इति पाठेन भाव्यमिति भाति ।

(द्वै सि) एवं घटादीनां स्वरूपेणावस्थितिविरहस्य ब्रह्मज्ञानप्राक्कालीनस्य तत्त्वेन तदप्रयोज्यत्वेऽपि स्वसमानविषयकाज्ञानतत्प्रयुक्तान्यतरत्वावच्छिन्नप्रतियोगिताकाभावत्वेन तत्प्रयोज्यत्वस्य निष्प्रत्यूहत्वात्। 'विद्वान्नामरूपाद्विमुक्त' इति श्रुत्या 'धनवान् सुखी' इत्यत्र सुखे धनप्रयोज्यत्ववत् नामरूपसामान्यविरहरूपमुक्तौ विद्वत्ताया प्रयोजकत्वावगमात् 'शुक्त्यादे तत्त्वज्ञानादिदानीं तदज्ञानतत्प्रयुक्तान्यतरन्नास्ति' इति सार्वजनीनानुभवाच्च। अस्मिन्पक्षे अभावद्वैताभ्युपगमाच्च न [1]शङ्कान्तरावकाश।

अथ वा ज्ञानप्रयुक्तोऽधिष्ठानतत्त्वज्ञानव्यापको योऽवस्थितिसामान्यस्य स्वस्वीयसंस्कारान्यतरस्याभावस्तत्प्रतियोगित्व तत्। भवति च 'या याऽप्रामाण्यज्ञानादिशून्यसाक्षात्कारिप्रमा सा स्वसमानविषयकाज्ञानक्षणावृत्ति' या या स्वजन्यपटुतमसंस्कारसहितोक्तप्रमा सोक्ताज्ञानतत्संस्कारक्षणावृत्ति'। सहितान्तोपादानादुक्तसहितान्यशुक्त्यादिप्रमाया उक्तसंस्कारक्षणवृत्तित्वेऽपि न व्यभिचार। अत एव जीवन्मुक्तनिष्ठब्रह्मप्रमाऽपि तादृशक्षणवृत्ति। या योक्तप्रमा सा सोक्तस्वसमानविषयकाज्ञानतत्प्रयुक्ततत्संस्कारान्य[2]तरवत्कालपूर्वभिन्ना। तथा च तादात्म्येनोक्तप्रमा प्रति स्वाधिकरणक्षणवृत्तित्वसम्बन्धेनोक्ताज्ञानतत्संस्कारान्यतरस्याभाव उक्ताज्ञानप्रयुक्ततत्संस्कारान्यतरस्य स्वाधिकरणकालपूर्वत्वसम्बन्धावच्छिन्नाभावश्च व्यापक इति अज्ञानतत्प्रयुक्त[3] तत्संस्कारेषु सत्त्वाल्लक्षणसमन्वय। तथा च तादात्म्यसम्बन्धेन स्वजन्यपटुतमसंस्कारसहितप्रमा प्रति तादृशोक्तज्ञान प्रति वा व्यापको योऽभाव, तन्निरूपिता या स्वसमानविषयकत्वकालिकविशेषणतोभयसम्बन्धावच्छिन्नप्रतियोगिता या च तादृशी स्वप्रयोजकाज्ञानसमानविषयकत्वस्वाधिकरणकालपूर्वत्वोभयसम्बन्धावच्छिन्ना प्रतियोगिता तदन्यतरावच्छेदकस्वस्वीयसंस्कारान्यतरत्वकत्वमिति निष्कर्ष। प्रतियोगिता च स्वव्यधिकरणसम्बन्धा[4]नवच्छिन्ना ग्राह्या। प्रयोजन तु [5]स्वयमूह्यम्। 'एतेन दण्डादिनिवृत्तस्य घटावस्थाविशेषस्य ज्ञाननिवर्त्यत्वेऽपि ज्ञानप्रयुक्तावस्थाविशेषविरहमादाय अन्यतरत्वेन लक्षणसमन्वये अर्थान्तरत्वापत्ति' इति निरस्तम्। यादृशज्ञानप्रयुक्तो अवस्थाविरहविशेष तादृशज्ञानस्य तदीयावस्थान्तराधिकरणकालपूर्वत्वादिमत्त्वे उक्तलक्षणासम्भवात्तादृशकालपूर्वं ज्ञानादिशून्यत्वे च मिथ्यात्वेनैव सिद्ध्याऽर्थान्तरानवकाशात्।

न च साक्षात्कारिप्रमेत्यादिनियमो न सम्भवति। सन् घट इत्यादिप्रमाया, न स्फुट इत्यादिप्रमायाः आपातवेदान्तजन्यप्रमायाश्च त्वन्मते ब्रह्मप्रमात्वेन स्वीकृताया स्वसमानविषयकाज्ञानकालवृत्तित्वेन व्यभिचारात् विशेष्यताख्यविषयतामादायैव ज्ञानाज्ञानयोः समानविषयकत्वं त्वया वाच्यम्। न समानप्रकारकत्वमादाय। अखण्डार्थकवेदान्तजन्यज्ञानतन्निवर्तनीयाज्ञानयोस्तदभावात्। तच्चोक्तप्रमयोरस्तीति वाच्यम्। सन्

---

1 अवस्थित्यभावे लक्षणगमनाय तस्याप्यभावान्तरं तस्याप्येवमेवमिति रीत्याऽनवस्थाशङ्केत्यर्थ।

2 तमवत्कालपूर्वभिन्ना इति पाठेन भाव्यमिति भाति

3 तयो संस्कार इति विग्रह।

4 व्यधिकरणधर्मावच्छिन्नप्रतियोगितामादायार्थान्तरवारणायाऽदीति।

5 अज्ञानस्य घटादिवदविषयत्वेन कालवृत्तित्वाभावेन वा गगनादेरिव पर्यवसानप्रयुक्तार्थान्तरवारणकमित्यर्थः। वस्तुतस्तु जगतोऽज्ञानाप्रयुक्तत्वेनैवार्थान्तरम्।

द्वैधम् । घट इत्यादिप्रमाया घटाद्युपहितसद्विषयकत्वेन मूलज्ञानस्य शुद्धविषयकत्वेन समानविषयकत्वस्य दूरनिरस्त-त्वात् । उक्तप्रमाया शुद्धस्य भानेऽपि स्वविषयनिरूपकत्वस्य मन्थककोटौ निवेशान्नानुपपत्तिः । ज्ञानेच्छयोरिव ज्ञानाज्ञानयोरपि समानाश्रययोर्विषयताभेदे नानाभावेन वृत्तिनिरूपिताकारान्यविषयतया एवाज्ञाननिरूपितत्वो-पपत्तेः । साक्षात्कारत्वं च परोक्षान्यज्ञानत्वं निरूपकान्यदेवेत्यन्यदेतत् । एवं च मूलाज्ञानीया या जीवत्वब्रह्म-त्वोपलक्षितविषयिता तन्निरूपकत्वस्य न स्फुटं तत्त्वज्ञानादावस्तीति न दोषः । अधिकं शास्त्रारम्भसमर्थनटी-कायां द्रष्टव्यम् । आपातत्वेऽप्यन्यजन्यप्रमायाश्च नापरोक्षत्वम् । तथात्वेऽपि नाप्रतिबद्धापरोक्षत्वम् । तदेव च लक्षणे निविष्टम् ।

यद्वा ज्ञानेन हि अज्ञानतत्कार्यमात्रनिष्ठस्य मान्यस्यात्यन्ताभावः स्वोत्पत्तिद्वितीयलक्षणावच्छिन्नः साध्यते । स चाभावः स्वान्यसर्वद्वैतस्य विरोधी क्षणिकः । साध्यत्वं च प्रयोज्यतारूपमन्यद्वेति न कश्चिद्दोषः । क्षणिकश्चायं न्यायविदां क्षणिकशब्दवत् सदाप्यन्यवच्च । अतोऽस्य त्रैकालिकत्वमसिद्धम् । अस्तु वा त्रैकालिकत्वम् । उक्तक्ष-णसम्बन्धेन स एव सर्वद्वैतविरोधी ।

यत्तु 'अत्यन्ताभावस्य स्वप्रतियोगिना दैशिक एव विरोधो न कालिकः' इति तन्न । कालिकसम्बन्धेन प्रतियोग्यधिकरणे कालिकसम्बन्धेन वृत्तावपि कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य कालिकसम्बन्धेन प्रतियोग्यधिकरणे स्वरूपसम्बन्धेनावृत्तित्वरूपविरोधस्य सर्वसम्मतत्वात् । 'विद्वान्नामरूपाद्विमुक्तः' इति श्रुतिसिद्धा-भावस्य पुरुषोत्प्रेक्षामात्रसिद्धत्वाभावाच्च उक्तात्यन्ताभावस्य ध्वंसप्रतियोगित्वानुपगमेन नानवस्थितध्वंसधारापत्तिः । एवं चैतल्लक्षणानां जागरूकत्वात् भवदुक्तपर्यवसानायोगः ।

अथैतल्लक्षणान्यनुपपन्नान्येव । आद्यलक्षणस्य सर्वाद्वैतमते अयोगः घटादौ ज्ञानानिवर्त्यावस्थाविशेष-सद्भावविरोधिन एतद्धर्मस्य मिथ्यात्वरूपत्वायोग इति दूषणद्वयं स्वयमेवाभिहितम् । किञ्च शुक्तिरजतादाव-व्याप्तिः, तदीयकारणत्वस्य रूपाज्ञानस्य ज्ञाननिवर्त्यत्वे मानाभावात् । न च 'शुक्त्यादेस्तत्त्वज्ञानात्तदज्ञान-तत्प्रयुक्तान्यतरन्नास्ति' इति सर्वजनसिद्धानुभव एव मानमिति वाच्यम् । शुक्त्यवच्छिन्नचिद्विषयकाज्ञानस्य रजतोत्पत्त्यर्थमेव कल्पनीयस्यानीन्द्रियत्वेन तदभावस्य प्रत्येतुमशक्यत्वेनोक्तप्रतीतेः पुरुषाश्रिताज्ञानाभावादिविषय-कत्वात् तस्य च रजताद्यनुपादानत्वेन तदभावस्य प्रत्येतुमशक्यत्वेनोक्तप्रतीतेः तत्र मानत्वायोगात् । न च चिदै-क्यात्तदवच्छिन्नाज्ञानमपि साक्षिभास्यम् । तथात्वे पुरुषान्तरनिरूपिताज्ञानस्यापि भानापत्तेः । आरोपे सति निमित्तानुसरणमिति न्यायस्य सर्वसम्मतिपन्नस्थलविषयत्वात् । एवं 'येन रूपेण भासमाने प्रयोज्यता भासते तद्रूपावच्छेद्यत्वं तत्र भासते' इत्यवश्यमभ्युपेयम् । अन्यथा 'मण्यसमवधानकालीनदाहाभावः मणिप्रयुक्तः' 'मणिमान् कारणाभावप्रयुक्तदाहाभाववान् तत्तत्कालीनतत्तद्दाहाभाववान्' इत्यादिस्वारसिकप्रयोगस्य 'धनवान् प्रमेयवान् गुणवान्' इति प्रयोगस्य चापातात् । तस्मिन्नेव दाहाभावादौ रूपान्तरेण प्रयोज्यतायास्त्वयैवोपपादि-तत्वात् । एवं च 'नामरूपाद्विमुक्तः' 'मुच्यते सर्वपाशैः' इत्यादौ नामत्वावच्छिन्नाभावरूपत्वावच्छिन्नाभावोपलक्षित-

(द्वै सु) तत्पाशत्वावच्छिन्नाभावानामेव बोधनेन त्वदुक्ताज्ञानतत्प्रयुक्तान्यतरत्वावच्छिन्नप्रतियोगिताकाभावत्वेनानुपस्थितत्वेनोप[1] स्थितिरूपस्य तु ज्ञानप्रयोज्यतानवच्छेदकत्वेन तत्र प्रयोज्यत्वे जनकभावत्वे वस्य वक्तुमनुचितत्वात्। तदत्रापि मानाभाव एव। न च नामत्व रूपत्व वा तदन्यतरत्व वाऽज्ञ.तदन्यदुक्तमर्वेषामपि येन तदवच्छिन्नाभावत्वमपि प्रयोज्यतावच्छेदकमिति वक्तु शक्यं स्यात्। तथा परम्परमेव न्यायतः न स्यात्तत्वस्यापि अव्याकृते अनादिदृश्येषु चावृत्ते। 'तदेदं तर्ह्यव्याकृतमासीत्। तन्नामरूपाभ्यां व्याक्रियते' 'नामरूपे व्याकरवाणि' इत्यादिश्रुतिभि पञ्चीकृतभूतमात्रविकारवृत्तित्वावगमात्। एव ज्ञात्वेत्यादिश्रुतौ सर्वपाशपदेन तत्तत्पाशत्वावच्छिन्नाभाव एव प्रतीयते। सर्वपदसमभिव्याहारात्। सर्वपदस्य पस्थिततत्तद्रूपावच्छिन्नवाचितया 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यादाविवाद्वैतचन्द्रिकायां वार्तिककारादिसम्मत्या व्यवस्थापितत्वात्। अन्यथा पाशत्वव्यापकव्यासज्यवृत्तिसर्वत्वधर्मावच्छिन्नाभावस्य सर्वदा संसारिषु विद्यमानस्यापुरुषार्थत्वेन ज्ञानफलत्वोक्त्ययोगात्। न चोक्तस्थले अज्ञानतत्प्रयुक्तान्यतरत्वावच्छिन्नाभावत्वेन बोधो लक्षणयेति वक्तु युक्तम्। बाधकाभावात्। स्वाभ्युपगतनिर्वाहाय लक्षणाश्रयणेऽतिप्रसङ्गस्याभिहितत्वात्। मणिसमवधानस्थलेऽपि तन्निष्ठमणिसमवधानोत्तरदाहाभावाधिकरणतातन्निष्ठाधेयत्वयोर्मणिप्रयोज्यत्वस्योभयसिद्धस्योपगमेनैव 'इदानीं अत्र दाहाभावो मणिप्रयुक्त' इत्यादिव्यवहारस्य सविशेषणे हीति न्यायेनोपपत्तौ अनाद्यभावे मणिपूर्वकालीने रूपान्तरेण तत्प्रयुक्ततायाः अप्रामाणिकतया तद्दृष्टान्तेनात्रापि तथोक्तेरत्यन्तासङ्गतत्वात् प्रकृते ज्ञानप्रयुक्ततादृशाधिकरणतापरिष्कारस्त्वसम्भवदुक्तिक। तस्य सर्वभावोच्छेदकत्वेन तत्प्रयोजकत्वोक्तेरयोगात्। तादृशाधिकरणतारूपभावस्यैव सत्त्वेन मोक्षायोगश्च।

द्वितीयलक्षणमप्ययुक्तम्। पूर्वोक्तरीत्याऽनादिदृश्यसंस्कारादिष्वव्याप्ते। स्वसंस्कारासिद्ध्या स्वपदेन तेषा ग्रहणायोगात्। ज्ञान ज्ञानयोरेकामाकारताख्यविषयतामङ्गीकृत्य नियमे व्यभिचार परिहृत्य लक्षणपरिष्कारोऽप्यसङ्गत। अज्ञानस्य शुद्धचिति शुक्त्याद्यवच्छिन्नचिति च सम्बद्धतया तादात्म्यरूपविषयतायाः कथञ्चिदुक्तिसम्भवेऽप्याकाराख्यगौणविषयताया मानाभावात्। न च 'अत्राहमज्ञ' 'अहं घट न जानामि' इति प्रत्ययबलात्तत्सिद्धिरिति वाच्यम्। तत्र घटविषयकज्ञानविरुद्धत्वपुरस्कारेणाविद्यात्वरूपजात्यवच्छिन्नावगाहिताया. अनुरादिपदाधीनप्रत्ययवत्त्वदाचार्यैरभ्युपगतत्वेनाज्ञानस्य तादृशविषयतानिरूपकत्वासिद्धे.। न च विनिगमकाभावात्समभिव्याहृतपदार्थभूतघटादिविषयकत्वमज्ञान एव प्रतीयतामिति वाच्यम्। घट जानामीच्छामीतिप्रतीतिभिस्तेषा सविषयकत्वसिद्धेरेव विनिगमकत्वात्। न च 'अत्र मम मोह' इति प्रतीत्या मोहशब्दिताज्ञानस्य सविषयकत्वसिद्धिरिति वाच्यम्। तत्र मोहशब्दस्य तत्कार्यमिथ्याज्ञानवाचित्वात्। अत एव 'अत्रैव मा भगवन्मोहान्तमापीपत्' इति श्रुतौ याज्ञवल्क्यस्य मोहप्रापकत्वाभिधानं मैत्रेय्या सङ्गच्छते। अन्यथाऽनाद्यविद्यायाः याज्ञवल्क्यवचनानधीनत्वेन तत्कथनासङ्गतिप्रसङ्गात्।

---

[1] स्थितरूपस्य इति पाठेन भाव्यमिति भाति।

(द्वै. बु.) तमो मोहो महामोहस्तामिस्रः क्रोध एव च ।

अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥

इति स्मृतौ तमःशब्दिताविद्यात्वापेक्षया अतिरिक्तस्य विपर्ययस्य मोहशब्देनाभिधानात् ।

तमस्तु शार्वरं विद्यान्मोहश्चैव विपर्ययः ।

तदाग्रहो महामोहः ॥

इति स्मृत्यन्तरे मोहशब्दस्य विपर्ययपरत्वेन व्याख्यातत्वाच्च ।

अस्तु वा पुरुषनिष्ठाज्ञानस्य कथञ्चित्सविषयकत्वोपगमः । विषयनिष्ठाभानापादकाज्ञानस्य रजतोत्पत्तिनिर्वाहमात्रप्रयोजनानुरोधेन कल्प्यस्य सविषयकत्वं त्वप्रामाणिकमेव । तथा चोक्तलक्षणे स्वसमानविषयकत्वघटितोभयसम्बन्धस्य स्वप्रयोजकाज्ञानसमानविषयकत्वघटितोभयसम्बन्धस्य च व्यधिकरणतया व्यधिकरणसम्बन्धानवच्छिन्नोक्तोभयसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्ध्या असम्भवः । तदनिवेशे व्यधिकरणसम्बन्धावच्छिन्नोक्तप्रतियोगिताशालित्वेऽपि न मिथ्यात्वम् । तादात्म्यरूपविषयता निवेश्य परिष्कारे तु सन् घट इति प्रतीतौ शुद्धस्यापि भानात्तत्र मूलाज्ञानस्य तादात्म्यरूपविषयतासत्त्वात्तत्समानकालिकत्वाच्च व्यभिचारो दुर्वारः । समानप्रकारत्वादिकं तु न निवेशनार्हम् । अखण्डाकारवृत्तेस्तथात्वाभावेन मूलाज्ञानस्यापि शुद्धचिद्विषयकत्वेनातथात्वेन विरोधायोगात् । लक्षणे च तादृशसम्बन्धावच्छिन्नप्रतियोगितायाः व्यधिकरणसम्बन्धानवच्छिन्नत्वायोगेन मूलाज्ञानतत्प्रयुक्तादौ लक्षणगमनायोगात् । एतेन 'जीवत्वब्रह्मत्वोपलक्षितनिरूपितविषयतायाश्चरमवृत्तिमूलाज्ञाननिरूपितत्वं स्वीक्रियते । 'न स्फुटः' इत्यादिप्रमाया सा नास्ति' इत्येतदपि परास्तम् । ताटस्थ्येन तदवच्छिन्नविषयताया एव तदुपलक्षितविषयतारूपतया मूलाज्ञानीयविषयतायास्तथात्वे मानाभावात् । अधिकं त्वत्कृतशास्त्रारम्भटीकाख्यग्रन्थस्य खण्डने विवेचयिष्यामः ।

'अप्रतिबद्धापरोक्षप्रमैव लक्षणे निवेश्या' इत्यप्ययुक्तम् । प्रारब्धकर्मरूपप्रतिबन्धकाभावनिवेशे शुक्तिप्रमायाः सङ्ग्रहेण तत्र लक्षणगमनायोगः । सामान्यतः अप्रतिबद्धत्वं स्वजन्यकार्यप्रतिबन्धकाभावकालीनत्वादिकं तु न निवेशनार्हम् । शुक्त्यादिप्रमाजन्यकार्यान्तरप्रतिबन्धकान्तरादृष्टादेः कचिन्निश्चयस्य सर्वत्र संशयस्य च सम्भवेन तत्रोक्तमिथ्यात्वस्य दुर्ग्रहत्वापत्तेः । नापि स्वजन्याज्ञाननिवृत्तिप्रतिबन्धकत्वेन । एतत्पक्षे ज्ञानस्याज्ञाननाशकत्वस्य त्यक्तत्वेन तथानिवेशासम्भवात् । अन्यथा निवर्तकस्य निवृत्तिपूर्वकालसत्त्वावश्यकत्वेन तयोरेकक्षणे मेलनप्राप्त्या कालिकेन तयोर्विरोधाभावेनासम्भवापत्तेः ।

एवं पूर्वोक्तरीत्या शुक्त्यादौ एकस्यैव पुरुषस्य कालभेदेन सजातीयभ्रमजनकनानाऽज्ञानेषु या या पटुतमेत्यादित्वदुक्तनियमस्य व्यभिचारात्तादृशप्रातिभासिकेषु लक्षणगमनायोगः । एवं ब्रह्मज्ञानाबाध्यसज्ञातबाधभ्रमविषयेषु प्रातिभासिकेषु यादृशप्रातिभासिकनिवर्तकमेकमेवापेक्षात्मकं [1]जातं तेष्वपि लक्षणगमनायोगः । न

---

[1] ज्ञानं इति पाठेन भाव्यमिति भाति

(द्वै.यु) चैवमुक्तस्थले स्वसमानविषयकपटुतमसंस्कारसहितप्रमाया अप्रसिद्धावपि प्रसिद्धतादृशप्रमान्यापकोक्तोभय-सम्बन्धावच्छिन्नप्रतियोगितामादाय लक्षणसङ्गतिरिति वाच्यम्। तर्हि एतादृशधर्मस्य तन्निवर्तकप्रमानुत्पत्त्याऽपि तत्र निर्वोढु शक्यस्य सत्यत्वाविरोधितया मिथ्यात्वरूपत्वानुपपत्तेः। न चोक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताया समाना-धिकरणसम्बन्धावच्छिन्नत्वानुसारात्तत्प्रतियोगिन्यज्ञानप्रयुक्तत्वसिद्ध्या मिथ्यात्वसिद्धिरिति वाच्यम्। [1]ज्ञाननिवृत्तिं विना तन्मात्रेण तदसिद्धेः। सत्यत्ववादिनाऽपि अज्ञानप्रयुक्तभयादीना मिथ्यात्वानङ्गीकारात् मिथ्यात्वासिद्धेश्च। न ह्यज्ञानत्वमेव मिथ्यात्वं। नापि तत्तत्प्रयुक्तान्यतरत्वम्। उक्तदोषात्। तथात्वे वा तत्साधनस्यैव वक्तव्यतयोक्त-प्रयासासङ्गतेः। अपि च चरमवृत्तावज्ञानप्रयुक्तस्य जगतः स्वाव्यवहितपूर्वकालिकत्वसम्बन्धघटितोभयसम्बन्धाव-च्छिन्नप्रतियोगिताकाभावस्य चरमवृत्त्यधिकरणक्षणस्य नैयायिकाभिमतचरमध्वंसमहाकालरूपक्षणानामिवानिवृत्त-त्वेन स्थितावपि तदुत्तरकालानुत्पत्त्यापि सम्भवेनोक्तप्रतियोगित्व जगति तादृशकालसम्बन्धितया स्थिरत्वेनाप्युप-पन्नमिति न मिथ्यात्वरूपम्। एवमन्यान्यप्यत्र लक्षणे दूषणान्यूह्यानीत्यलम्।

तृतीयमप्येतेनैव परास्तम्। द्वितीयक्षणावच्छिन्नत्वेन साध्यस्याभावस्य तत्क्षणस्य च स्थिरत्वावारणात्। तस्य सर्वदृश्यविरोधित्वमप्यसङ्गतम्। स्वस्वाधिकरणक्षणस्ववृत्तितादृशविरोधित्वादिधर्माणां स्वकालेऽनुवृत्तेः। एवं तस्य ज्ञानप्रयोज्यत्वमप्यप्रामाणिकं इत्युक्तमेव। कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य विरोधव्यवस्थाप्य-मप्यसङ्गतम्। तस्य कालावृत्तित्वेऽपि जगतः कालसम्बन्धं विना गगनादिवत्त्वन्मतसिद्धब्रह्मवत् स्थितिसम्भवेनार्था-न्तरानिस्तारात्। एवमन्यदपि गुरुचन्द्रिकाद्युक्तमनयैव दिशा निरसनीयमित्यलम्। एवं चोक्तलक्षणानामप्ययो-गात् त्रैकालिकनिषेधप्रतियोगित्व एव पर्यवसानं कृतमिति चेन्न।

[2]एवमन्यथाऽनुवादकत्वानिस्तारात्। विवरणे हि त्रैकालिकनिषेधप्रतियोगित्वरूपं बाध्यत्वं अभिधाय ज्ञाननिवर्त्यत्वस्य बाध्यत्वरूपतायाः पृथगभिधानात्। न हि परोक्तमयुक्तं भवति इत्येतावता तस्यान्यथानुवादो युक्तः। न च 'एतन्मूलेन जगति निराकार्यं बाध्यत्वं न ज्ञाननिवर्त्यत्वरूपम्। किन्तूक्तरूपम्। तत्र जगद्ग्रहणं सार्थकम्' इति टीकाभाव इति वाच्यम्। तथात्वे ज्ञाननिवर्त्यत्वरूपबाध्यत्वाश्रयणेनैतन्मूलावतरणस्य तत्रैव सम्भावितप्रमाणनिरासस्य चासङ्गत्यापत्तेः। न हि ज्ञाननिवर्त्यत्वं तन्नाश इति पराभिमतमित्यारभ्य ज्ञाननिवर्त्य-त्वस्यैवात्र पर्यवसानस्य स्फुटप्रतिभासाच्चेति चेत्।

अत्रोच्यते। यद्यपि विवरणे लक्षणद्वयमेवाभिहितं तथापि ज्ञाननिवर्त्यत्वं प्रथमलक्षणार्थभूतत्रैकालिक-निषेधप्रतियोगित्वसमकक्षापन्नमेव तदभिमतम्। न तु नाशघटितम्। त्रैकालिकनिषेधप्रतियोगिनः स्वाधिकरण-कालोत्तरकालासम्बन्धरूपनाशस्य विप्रतिषिद्धत्वेन लक्षणयोः परस्परव्याहतिप्रसङ्गात्। उक्तरीत्या तद्वाक्यैरप्यत्य-न्ताभावस्यैव रजतादेरवगमेन रजतादेर्ध्वंसानुक्तेः। मतभेदेन लक्षणद्वयपरत्वे तदभिमतस्य नाशस्य वक्तव्यतापा-

---

[1] अज्ञाननिवृत्तिं इति पाठेन भाव्यमिति भाति [2] एवमप्यन्यथा इति पाठेन भाव्यमिति भाति

(द्वैधु तात् नात्यन्ताभावस्योक्ति । लोकेऽपि रजतादेर्नाशाननुभवाच्च । इत्थं च प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वमसत्त्वापत्त्यमेव किञ्चिन्निर्वाच्यम् । नच स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्व तादृशत्रैकालिकनिषेधप्रतियोगित्वेन समानविषयत्व इक अन्यद्वा किञ्चित् । चित्सुखेन स्वात्यन्ताभाव एवेति लक्षणकरण त्वेतदर्थरूपतयैव स्तु । तस्यान्मस्तु ज्ञानेन बाधज्ञानेन निवर्त्यं, यत्र स्वयं प्रतीयते तत्सामानाधिकरण्यनिवर्त्यं तद्विशेष्यकप्रतीतिगोचरा न भवति । न तु वस्तुत अपूर्वं स्वासम्बन्धोपपत्त्येत्यर्थकरणे एतत्परिचितयोरुक्तलक्षणयो सुज्ञानत्वात् । एतादृशलक्षणानि शुक्तिरजतादौ अस्म क सम्मतानीति जगद्ग्रहणस्य सार्थक्यमिति टीकाशयात् । अत एव ज्ञाननिवर्त्यत्वलक्षणेनैतन्मूलकत्वात्तस्य प्रथमलक्षणे पर्यवसान कथयता परपरिष्क्रियमाणाना असामञ्जस्यमपि ध्वनितम् 'ज्ञाने द्वैत न विद्यते' इत्यादीनि परमते वाचारम्भणश्रुत्यैकरूप्यायोक्तार्थतात्पर्यकाणि भवन्तीति टीकाया सूक्त्या निराकृतानि । इत्थ च किन्नामेति टीकाया प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वमित्यस्य तत्पर्यवसित किञ्चिदित्यर्थ । लाक्षणिकनिर्देशस्य तु ज्ञाननिवर्त्यत्वस्योक्तपर्यवसाने पूर्वोक्तरीत्या युक्तिसूचनमेवेति नान्यथाऽनुवादशङ्कापीति सर्वं चतुरस्रम् ।

शुक्तिरजतादौ कुतस्तदङ्गीकार्यं । येन तद्वा तत्पर्यवसितमन्यद्वा तत्र स्यादित्यत आह ॥ **नात्रेति** ॥ अभूदित्युपलक्षणम् । नास्ति न भविष्यति इत्यपि ग्राह्यम् । त्रिकालग्राहकेण साक्षिणैवात्यन्ताभावे कालत्रयसम्बन्धावगाहित्वसम्भवात् । भूतकाले निषेधाकारप्रदर्शनं तु तादृशप्रतीतिकाल एव सत्ताया प्रसक्तत्वादिति ध्येयम् ॥ ॥ **प्रागुक्तेति** ॥ असद्वैलक्षण्यसाधकापरोक्षप्रतीतिगोचरत्वस्यान्यथोपपत्तिरूपदूषणेनेत्यर्थ ।

गुरु टि शिष्य शङ्कते ॥ **नन्विति** ॥ ननु पराङ्गीकारबलेनापि अज्ञानस्य तदुपादानकस्य च अधिष्ठानयाथात्म्यज्ञाननिवर्त्यत्वमेवावगम्यत इति पृच्छति ॥ **किन्नामेति** ॥ पराभिप्रायकथनेनोत्तरयति ॥ **प्रतिपन्नेति** ॥

तत्त्वमस्यादिवाक्यार्थसम्यग्धीजन्ममात्रत ।<br>
अविद्या सह कार्येण नासीदस्ति भविष्यति ॥

इति वचनादिति भाव ॥ **न घटत इति** ॥ तत्रोक्तरीत्या बाध्यत्वेन तदभावप्रयुक्तसद्वैलक्षण्यासिद्धिरूपमिदं दूषणमित्यर्थ ॥ **प्रागुक्तेति** ॥ रजतस्यात्यन्तासत्त्वेनैवोपपत्तेरित्युक्तान्यथैवोपपत्तिरूपदूषणेनेत्यर्थ ।

ज्ञाननिवर्त्यत्वस्य मिथ्यात्वाङ्गीकारे दूषणाभिधानम् ।

(टी. किं च जगति सत्त्वानुपपत्त्यर्थमुपन्यस्त बाध्यत्व परेण सत्यमङ्गीक्रियते मिथ्या वा । आद्ये अपसिद्धान्तादिप्रसङ्गात् द्वितीय एवाङ्गीकार्य इत्याह ।

---

[1] सम्बन्धत्वसम्बन्धोपपत्त्या इत्यर्थ ।

(टी.) बाध्यत्वमपि हि तेषां मिथ्या ।

अपिशब्दो युक्तिसमुच्चयार्थ । न केवल जगत् । किं तु बाध्यत्वमपीति वा । तेषां इति सत्य त्वाङ्गीकारेऽपसिद्धान्तादिक सूचयति । किमत इत्यत आह ।

तस्य च मिथ्यात्वेऽबाध्यत्वमेव सत्य स्यात् ।

यदा जगतो बाध्यत्वमपि मिथ्या तदा आत्मवन्मिथ्याभूतबाध्यत्वेन जगतोऽबाध्यत्वमेव सत्यं स्यात् । तथा च न केवल प्रमाणाभावेन जगतो बाध्यत्वाभावः । किं नाम परन्यायेनापि । न केवल बाध्यत्वाभावात्तदनुपपत्त्या सद्विलक्षणत्वासिद्धिः । प्रत्युत अबाध्यत्वस्य सत्यत्वात्सत्यत्वमेव सिद्ध्यति ।

ननु बाध्यत्वं मिथ्येत्यनेनैव जगति बाध्यत्वासिद्धिरुक्ता । तत्किमुत्तरेण वाक्येन । मैवम् । न हि मिथ्येत्यसत्त्व परोऽङ्गीकुरुते । परन्यायेन चेह दूषणमुपक्रान्तम् । अतो व्याप्तिबलेनैव बाध्यत्वाभावमबाध्यतासत्यतया सत्यत्व चोपपादयितुमुत्तरो ग्रन्थः । अत एव 'तस्य च मिथ्यात्वे बाध्यत्वाभावः' इति नोक्तम् ।

अनिर्वचनीयस्य निराक्रियमाणत्वान्मिथ्यात्वमसत्त्वमेव पर्यवस्यतीति बाध्यत्वासिद्धिः पूर्ववाक्येनैव शक्योपपादनेति चेत् सत्यम् । मार्गान्तरमेतदित्यदोषः ।

(वि टि) सत्यमपि बाध्यत्व किं ब्रह्मस्वरूप उत ततोऽन्यत् । नाद्य । सोपाधिकस्य भ्रमकालानिश्चितस्य तस्य निरुपाधिकभ्रमकालनिश्चितब्रह्मस्वरूपत्वायोगादिति आद्यपक्षदूषण आदिपदेन सूचयन् द्वितीय दूषयति ॥ अपसिद्धान्तादीति ॥ नचाभावद्वैतपक्षे नेद दूषणमिति वाच्यम् । तस्यैवायुक्तत्वात् । अन्योन्याभावरूपभेदस्यापि विशेषहेत्वभावेन सत्यत्वापत्ते । नेह नानेति श्रुतौ किञ्चनेति सर्वनाम्ना ब्रह्मव्यतिरिक्तस्य सर्वस्याप्यभावप्रतीते । तदेतदभिप्रेत्याप्याह ॥ अपसिद्धान्तादीति ॥ युक्त्यन्तराभिधानेनापि युक्तिसमुच्चयस्य ज्ञातु शक्यत्वेन अपिशब्दस्य नातिप्रयोजनता मन्वान आह ॥ न केवलमिति । यद्यपि जगद्ग्रहणेन बाध्यत्वमपि गृहीत तथापि परेण बाध्यत्वस्य जगदनिर्वचनीयतासाधकतया पृथगुपादानात्पृथगुक्तम् ॥ यदेति ॥ विमत जगत् सत्याबाध्यत्वाभाववत् मिथ्याभूतबाध्यत्ववत्त्वात् आत्मवत् इति प्रयोगो द्रष्टव्य । 'न च बाध्य जगदित्यत्र किञ्चिन्मानम्' 'बाध्यत्वमपि हि तेषा मिथ्या' इति पूर्ववाक्यद्वयार्थानुवादपूर्वकं जगदबाध्यत्वसत्यत्वसाधनस्य प्रयोजनमत्राह ॥ तथा चेति ॥ परन्यायेनापीति ॥ बाध्यत्व मिथ्येति परोक्तेनेत्यर्थ । जगत्सत्य सत्याबाध्यत्वाकत्वात् आत्मवत् इति प्रयोगमभिप्रेत्याह ॥ प्रत्युतेति ॥ मिथ्याशब्दस्यापह्नववचनत्व मन्वान· 'तस्य च' इत्युत्तरवाक्यवैयर्थ्यं शङ्कते । ॥ नन्विति ॥ तत्किमुत्तरेणेति ॥ तस्यापि जगद्बाध्यत्वाभावप्रतिपादनपरत्वादिति भाव ॥ न हि मिथ्येति ॥ न हि मिथ्याशब्दस्यासत्त्वमर्थ इति परोऽङ्गीकुरुत इत्यर्थः । न हि परानङ्गीकारमात्रेण तस्य तदर्थत्वासिद्धिरिति

(वि टि.) तद्वैयर्थ्यतादवस्थ्यमित्यत आह ॥ परन्यायेनेति ॥ व्याप्तिबलेनेति ॥ 'यद्यत् मिथ्याभूतबाध्यत्वकं तत्तत् सत्यभूताबाध्यत्वकं यथा आत्मा' इति व्याप्तिबलेनेत्यर्थः ॥ बाध्यत्वाभावमिति ॥ तद्रूपमित्यर्थः । पररीत्यैव च दूषणमुपक्रान्तमित्यत्र ज्ञापकमाह ॥ अत एवेति ॥ उपायस्य उपायान्तरादूषकत्वादिति परिहरति ॥ सत्यमिति ॥

(ग. टि.) ॥ अपसिद्धान्तादीति ॥ 'एकमेवाद्वितीयम्' इत्यादिश्रुतिविरोधः । ब्रह्मणः सद्वितीयत्वम् इत्यादिरादिशब्दार्थः । युक्तिसमुच्चयार्थ इत्युक्तं व्यञ्जयन्नुत्तरवाक्यार्थं चाह ॥ न केवलमित्यादिना ॥ उत्तरेणेति ॥ तस्य चेत्यनेनेत्यर्थः ॥ परन्यायेनेति ॥ मिथ्याशब्दोऽनिर्वचनीयं वदतीत्यादिना तथैव प्रक्रमादिति भावः । ॥ व्याप्तिबलेनेति ॥ अत एवेति ॥ व्याप्तिबलेनोपपादनीयत्वादेवेत्यर्थः ॥ तस्य चेति ॥ तथोक्तौ सत्यत्वं नोपपादितं स्यादिति भावः ॥ मार्गान्तरमेतदिति ॥ तस्य चेत्यादिनाऽबाध्यत्वसत्यत्वोक्तिमुखेन बाध्यत्वाभावकथनमित्यर्थः ।

(वे टि.) ॥ आद्य इति ॥ बाध्यत्वं सत्यं चेत् तद्ब्रह्मान्यद्ब्रह्ममात्रं वा । आद्ये सदद्वैतसिद्धान्तभङ्गप्रसङ्गः । द्वितीये सोपाधिकस्य भ्रमकालानिश्चितस्य बाध्यत्वस्य निरुपाधिकभ्रमकालनिश्चितब्रह्ममात्रत्वानुपपत्तिरिति दूषणमपसिद्धान्तादीत्यादिशब्देनाह । ननु भावाद्वैतपक्षे नेदं दूषणमिति चेन्नैवम् । दृश्यत्वादेस्तत्रैव व्यभिचारापत्त्या भेदस्याप्यन्योन्याभावरूपतयाऽभावत्वेनाविशेषात्सत्यत्वापत्त्या च तस्य पक्षस्यायुक्तत्वात् । एतदप्याहादिपदेन ॥ सूचयतीति ॥ तेषां हीत्यस्य ब्रह्मातिरिक्तसर्वमिथ्यात्ववादिनामित्यर्थत्वादिति भावः । अपिशब्दो युक्तिसमुच्चयार्थ इत्येतद्दर्शयति ॥ तथा चेति ॥ परन्यायेनापीति ॥ बाध्यत्वाभाव इति वर्तते । परन्यायेन बाध्यत्वं मिथ्येति परोक्तेत्यर्थः । तथा च अबाध्यत्वं स्यात् इत्येतद्बाध्यत्वाभावः प्राप्त इति व्याख्यातं भवति । ननु जगति सत्त्वानुपपत्त्यर्थमुपन्यस्तस्य बाध्यत्वस्याभाव एव तन्मिथ्यात्वेन साधनीयः । न त्वबाध्यत्वसत्यत्वम् । तस्य प्रकृतानुपयोगादित्यतो बाध्यत्वाभावसाधनप्रयोजनानुवादपूर्वकमबाध्यत्वसत्यतासमर्थनप्रयोजनमाह ॥ न केवलमिति ॥ जगत्सत्यं सत्याबाध्यत्वकत्वादात्मवदित्यनुमानमभिप्रेत्याह ॥ प्रत्युतेति ॥ तत्किमुत्तरेणेति ॥ अत्रापि बाध्यत्वाभावस्यैव प्रतिपादनात् । न चाबाध्यत्वसत्यत्वमपि जगत्सत्यतासिद्ध्यर्थं प्रतिपाद्यत इति सार्थक्यम् । बाध्यत्वाभावोपपादनस्य सद्विलक्षणत्वासिद्ध्युपयुक्तत्ववदबाध्यत्वसत्यत्वेन जगत्सत्यताकथनस्य सद्विलक्षणत्वासिद्ध्यनुपयुक्तत्वादिति शङ्कितुर्हृदयम् । यद्वा तस्य चेत्युत्तरवाक्ये बाध्यत्वाभाव एव प्रतिपाद्यत इति भ्रान्तः शङ्कते ॥ नन्विति ॥ न हीति ॥ येन बाध्यत्वं मिथ्येत्युक्ते पूर्ववाक्ये तदसिद्धिरुक्ता स्यादिति भावः । ननु तथाप्यस्मन्मते मिथ्यात्वमसत्त्वमेवेति बाध्यत्वं मिथ्येत्युक्ते तदसिद्धिरुक्ता स्यादित्यत आह ॥ परन्यायेनेति ॥ ॥ अत इति ॥ यतो बाध्यत्वमपि मिथ्येत्युक्त्या न बाध्यत्वासिद्धिरुक्तेत्यर्थः ॥ व्याप्तिबलेनैवेति ॥ यन्मिथ्याभूतबाध्यताकं न तद्बाध्यम् । यन्मिथ्याभूतबाध्यताकं तत्सत्यभूताबाध्यताकम् । यत्सत्यभूताबाध्यताकं तत्सत्यम् । यथात्मेति व्याप्तिबलेनेत्यर्थः ॥ सत्यत्वं चोपपादयितुमिति ॥ तथा च जगति सद्वैलक्षण्यसाधने सत्प्रतिपक्षतारूपदोषान्तरकथनेनापि सार्थक्यमिति भावः । उभयोपपादनं विवक्षितमित्यत्रावष्टम्भकमाह ॥ अत एवेति ॥

(द्वै सि.) ॥ अपसिद्धान्तादीति ॥ जगद्धर्मतया ब्रह्मानिरुक्तत्वादित्यर्थः । आदिपदेन दृश्यत्वादिहेतुना तत्र व्यभिचारः एकमेवाद्वितीयमित्यादिश्रुत्यर्थानुपपत्तिश्च ग्राह्या । उक्तप्रतियोगित्वरूपबाध्यत्वस्य सत्त्वरूपतया भावाद्वैतपक्षेऽपि तस्याभिमतत्वादिति भावः ॥ आत्मवदिति ॥ मिथ्याभूतस्ववृत्तिबाध्यत्वकत्वबाध्यत्वयोः शुद्धात्मन्येव व्याप्तिग्रहादिति भावः । न च निर्धर्मके तत्र कथं व्याप्तिग्रह इति वाच्यम् । स्वसमानसत्ताकधर्माभाववत्त्वस्यैव तत्त्वात् । अन्यथा शुद्धत्वपारमार्थिकत्वादेरप्यसिद्धयापाताद्वित्याशयात् ।

ननु मिथ्याभूतस्वनिष्ठबाध्यत्वकत्वेन हेतुना जगत्यबाध्यत्वसाधने सिद्धसाधनम् । तत्र बाध्यत्वस्य तदभावस्य चोभयोर्मिथ्यात्वेन स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वनिर्वाहाय तदभावस्य तत्र सत्त्वात् । न चाव्याप्यवृत्तित्वमात्रे पर्यवसानं न मिथ्यात्व इति वाच्यम् । अधिकरणताद्यनवच्छिन्नत्वाभ्युपगमात् । न [1]च विरोधः । न्यूनाधिकसत्ताकत्वेन विरोधपरिहारे अन्यतरस्य प्रातिभासिकत्वं पारमार्थिकत्वं वा स्यात् इति वाच्यम् । उभयोः समसत्ताकत्वेऽपि विरोधानङ्गीकारात् । तदुक्तं 'विरुद्धमिति कः न सम्प्रत्ययः' इति । न चैवं शास्त्रवैयर्थ्यम् । एकस्यार्थस्य साधने बाधने वा कृतेऽन्यतरापरिहारादिति वाच्यम् । एकतरनिर्णयस्यापरबुद्धिविरोधद्वारा प्रवृत्त्यादिकार्यनिर्वाहाय तदुपपत्तेः । न च सत्यभूताबाध्यत्ववत्त्वं साध्यमिति वाच्यम् । आत्मातिरिक्तस्य सर्वस्य मिथ्यात्वेनात्मन्यपि सत्यभूताबाध्यत्वाभावेन व्याप्त्यसिद्धेरिति चेन्न ।

आत्मनिष्ठाबाध्यत्वस्य मिथ्यात्वे तत्रोक्तलक्षणनिर्वाहाय तदभावरूपबाध्यत्वस्य तत्र स्वीकारापत्त्या ब्रह्मजगतोरविशेषापत्त्या 'ब्रह्म सत्यं, जगन्मिथ्या' इति विशेषो न स्यात्। एवं जगति ब्रह्मणि विद्यमानस्यासत्त्वाभावस्य जैनोक्तसप्तभङ्गित्वाभावस्यापि मिथ्यात्वनिर्वाहानुरोधेन तदभावरूपासत्त्वसप्तभङ्गित्वयोरप्यापत्तेः । न च ब्रह्मणि जगति वा तेषामन्य एवाभावास्तन्मिथ्यात्वसिद्धयेऽनुसर्तव्याः । तदभावपरम्परयाऽनवस्थापत्तेः । न च

अनवस्थादयो दोषाः सत्तां निघ्नन्ति वस्तुनः ।
अद्वैतिना ते सुहृदो जगतस्तत्प्रसञ्जकाः ॥

इति खण्डनोक्तेर्नानवस्थादयोऽस्माकं दोषा इति वाच्यम् । अनवस्थाभयेन मूलभूतमिथ्यात्वस्यैव हानिप्राप्त्या मूलक्षतेः । तस्माज्जगति बाध्यत्वस्य मिथ्यात्वसिद्ध्यनुरोधेनाङ्गीक्रियमाणो बाध्यत्वाभावः तत्र सत्य एव स्वीकर्तव्यः । ब्रह्मणि बाध्यत्वस्य मिथ्यात्वसिद्धयेऽङ्गीक्रियमाणतदभाववत् । स च ब्रह्मस्वरूपमेवेत्यङ्गीकर्तव्यम् । अन्यथाऽद्वैतहानिप्रसङ्गात् । तावताऽपि बाध्यत्वाभावस्य यादृशसम्बन्धेन ब्रह्मणः सत्यत्वाभ्युपगमस्तद्वज्जगतोऽपि तदवर्जनीयमेवेत्यभिप्रायात् ।

तथा चाधिकसत्ताकाभावस्य न्यूनसत्ताकाभावस्य च न विरोधित्वम् । किन्तु समसत्ताकस्येति मतेनैव परेण सर्वेषां मिथ्यात्वं स्वाधिकसत्ताकाभावघटितमेव निर्वाच्यमित्युक्तदूषणं घटते परन्यायेनैव दूषणस्योपक्रान्तत्वात् । यद्व-

---

[1] नैव सति विरोध इति पाठेन भाव्यमिति भाति ।

(द्वै. सु.) स्थले 'न केवलं प्रमाणाभावेन । किन्तु परन्यायेनलापि' इति ।

ननु समसत्ताकयोर्भावाभावयोरेकत्र सत्ताऽभ्युपेयत एव । मिथ्यात्वमपि स्वान्यूनसत्ताकस्वसमानाधिकरणाभावप्रतियोगित्वमेव । अतो ब्रह्मणि जगति बाध्यत्वाबाध्यत्वे द्वे अपि मिथ्या स्वप्नप्रतीतरजततदभावोभयवत् । न च ब्रह्मजगतोरविशेष इति । ब्रह्मण अबाध्यत्वोपलक्षितस्वरूपस्य बाधावधिरूपस्य ज्ञानानिवर्त्यत्वात् । अन्यथा बाधस्य निरवधिकत्वापत्ते । जगतस्तु स्वरूपमप्युच्छिद्यतेऽतो विशेष । न च घटतदभावग्रहयो परस्परप्रतिबन्धकत्वानुपपत्ती रूपरसग्रहयोरिवेति वाच्यम् । सामानाधिकरण्यग्रहदशायां प्रतिबन्धकत्वोपपत्ते । कालिकसम्बन्धावच्छिन्नकपालावत्वावच्छिन्नाभावस्य तदभावरूपगगनाभावस्य चानवच्छिन्नसामानाधिकरण्यदशायामपि ग्रहस्य परस्परप्रतिबन्धकत्वोपलम्भात् । अत एवाव्याप्यवृत्तित्वग्रहस्योत्तेजकता । रूपरसादीनामपि सामानाधिकरण्यग्रहदशायां प्रतिबन्धकत्वमिष्टमेव । परन्तु पटुतमसंस्कारवशान्नियमेन सामानाधिकरण्यं भासत एवेत्य प्रतिबन्धकत्वानुभव । असामानाधिकरण्यग्रहकाले प्रतिबन्धकताया स्ववादीष्टत्वात् । मया तु सामानाधिकरण्यासामानाधिकरण्यौदासीन्येन तत्प्रत्ययानङ्गीकारात् तादृशग्रहकाले न प्रतिबन्धकत्वापादनमस्माकम् । न चैकस्मिन्नुभयो सत्त्वे रूपपरिमाणयोरिवोभयोरेकदैव प्रत्यक्ष स्यान्नैव वा स्यात् । कथमेकस्यैव ग्रह स्यादिति वाच्यम् । बाध्यत्वस्यावृतत्वात् । अत एव तदनुपलम्भरूपसामग्रीबलादबाध्यत्वस्य प्रत्यक्षमनुपलब्धिरूपप्रमित्यन्तरं वा युक्तम् । सर्वत्र समसत्ताकाभावस्यैव मिथ्यात्वोपपादकत्वमित्यत्र निर्बन्धाभावादधिकसत्ताकाभावमादायैव जगन्निष्ठासत्त्वाभावसप्तभङ्गित्वाभावादीनां मिथ्यात्वोपपत्त्या न जगति सप्तभङ्गित्वासत्त्वाद्यापत्ति । स्वान्यूनसत्ताकाभावस्यैव मिथ्यात्वघटकत्वात् । एवं च ब्रह्मणि बाध्यत्वाभावस्य बाध्यत्वसामान्याभावरूपसत्त्वानाश्रयत्वादात्मदृष्टान्तो न युज्यते । किञ्चित्कालाबाध्यत्वब्रह्मज्ञानेतराबाध्यत्वरूपसत्यत्वस्य निवेशे तादृशाबाध्यत्वस्य जगत्यस्माकं सम्मतत्वात् सिद्धसाधनमर्थान्तरता चेति चेन्न ।

समसत्ताकयोर्भावाभावयोरेकत्र समावेशस्य विचारासहत्वात् । तथा हि, किं सर्वत्र मिथ्यात्वशरीरे तस्यैव निवेशे सम्भवत्यधिकसत्ताकाभावान्तरकल्पनं व्यर्थमिति सर्वत्र समसत्ताकाभावाङ्गीकार उत तस्य मिथ्यात्वाघटकत्वेऽपि तत्रापि प्रमाणसद्भावात् । नाद्य । तथात्वे ब्रह्मजगन्निष्ठासत्त्वाभावसप्तभङ्गित्वाभावादीनां तत्समसत्ताकतत्प्रतियोगिभूतासत्त्वसप्तभङ्गित्वेनैव मिथ्यात्वस्योपपादनीयतापत्त्या सर्वस्यासत्त्वाद्यापत्ति असति च सत्त्वापत्तिश्च । पटे घटत्वाभावस्य मिथ्यात्वनिर्वाहाय तदभावरूपघटत्वस्य तत्राङ्गीकारापत्त्या पटे घटत्वं घटे पटत्वं इति सर्वसाङ्कर्यापत्तेश्च । तन्निष्ठघटत्वाभावाभावस्य घटत्वादतिरिक्तत्वे पटे घटत्वाभावो नास्तीति वाक्यस्याप्रामाण्यं घटत्वं नास्तीति वाक्यस्य प्रामाण्यमिति व्यवस्थाभावप्रसङ्गोऽप्रामाणिकाभावान्तरकल्पनाप्रसङ्गश्च ।

अपि च शुक्तौ रजताभावस्य रजतसमानसत्ताकस्यैव रजतमिथ्यात्वघटकत्वप्राप्त्या बाधज्ञानस्यापि प्रातिभासिकविषयत्वेन प्रामाण्यानुपपत्ति । तत्रान्यादृशाभावमाने तत्प्रतियोगित्वेन मिथ्यात्वव्यवहारानुपपत्ति । अपि चैकस्य साक्षात्कारेणापरस्य तन्मूलाज्ञानस्य च निवृत्तौ रजताभावसाक्षात्कारेण रजततदुपादानाज्ञानयोरिव रजतप्रत्यक्षेण

(द्वै. शु.) तदभावस्तदुपादानाज्ञाननिवृत्त्या तस्य पुनः रजतभ्रमादिविषयकत्वं च न तु तत्रैवानन्तनिवृत्तिरेव स्यात्। पुनः रज्ञानान्तरेण रजताभावान्तरोत्पत्तिकल्पनेऽनन्तप्रामाणिकतादृशाभावकल्पना स्यात्। नन्वस्ति नास्ति नासीत् भविष्यतीति कालत्रयासम्बद्धत्वेन प्रतीत्यनुपपत्तेश्च। न चैतदंशे एकस्य तेनाभावस्य तिरोभाव एव स्वीक्रियत इति वाच्यम्। तथात्वे वह्नावहित्वभ्रमवेलायां वह्नित्वस्य तिरोधानप्राप्त्या दाहानुत्पत्तिप्रसङ्गात्। अपि च बाध्यत्वाबाध्यत्वयोः उभयोस्तुल्यत्वे तत्र बाध्यत्वबोधकशून्यत्वादिवाक्यस्याबाध्यत्वबोधकतत्त्वमस्यादिश्रुतीनां च प्रामाण्ये अविशेषेण तन्निराकरणाद्यनुपपत्तिश्च। न च मद्वाक्यतादृशश्रुतीनामबाध्यत्वोपलक्षितस्वरूपपरत्वं विशेष इति वाच्यम्। बाध्यत्वोपलक्षितस्वरूपपरत्वस्य तद्वाक्येऽपि तौल्यात्। बाध्यत्वोपलक्षितं कथं स्वरूपं भवतीति चेत् तर्हि तत्राबाध्यत्वस्य त्वयाङ्गीकारेऽपि तदपरित्यागात्तवापि कथं तत्सिद्धिः। अबाध्यत्वमपि मयाङ्गीकृतमिति चेत् सर्वमिथ्यात्ववादिना तेन तस्य मिथ्यात्वसिद्धये तत्रापि बाध्यत्वं स्वीकृतमेवेति समं स्यात्।

किञ्चैकस्मिन्नधिकरणे उभयोर्निरवच्छिन्नवृत्तिकत्वे तयोः परस्पराभावात्मकत्वं पारिभाषिकं स्यात्। अतस्तज्ज्ञानयोः प्रतिबध्यप्रतिबन्धकभावोऽप्ययुक्त एव। अन्यथा प्रमेयत्वाभिधेयत्वयोर्भावाभावात्मकत्वं तज्ज्ञानयोः परस्परप्रतिबन्धकत्वं च स्यात्। अविशेषात्। असामानाधिकरण्यस्यापि स्वातन्त्र्येण सामानाधिकरण्यविरोधित्वे तद्ग्रहसाहित्यासाहित्ययोरपि प्रमेयत्वग्रहवदकिञ्चित्करत्वमेव। रूपरसयोः सामानाधिकरण्यासामानाधिकरण्यौदासीन्येन प्रत्ययानुत्पत्तिरप्ययुक्ता। तथात्वे तत्र कदापि सामानाधिकरण्यसंशयानुदयप्रसङ्गात्। निःसाक्षिकनिरवधिकबाधाभावात् ब्रह्मस्वरूपसिद्धिरित्ययुक्तम्। त्वन्मते धर्मसामान्याभावावगाहिबाधबुद्धिवत्किमपि नास्तीति बाधसम्भवात्।

निःसाक्षिकत्वं तु तवाप्यवर्जनीयम्। चरमवृत्तिक्षण एवाज्ञानाभावाङ्गीकारेणाज्ञानोपहितचिद्रूपसाक्षिणो अभावात्। शुद्धचितस्तु ग्राहकत्वादिधर्मविधुरत्वात्। न च वृत्त्युपहितचिदेव वृत्तिग्राहिकेति वाच्यम्। वृत्तेरज्ञानवदनादित्वाभावेनोत्पत्स्यमानस्य तस्य साक्षिणि प्रथमक्षणे उपधानेन साक्षित्वसम्पादकत्वे द्वितीयक्षणे स्वस्यैव नाशेन ग्राहकत्वायोगात्। अन्यथा स्वोपहितसाक्षिणा प्रतीतिमात्रशरीरस्वस्य सिद्ध्यङ्गीकारे आत्माश्रयापत्तेः। वृत्तिबाधस्य निःसाक्षिकताया दुर्वारत्वाच्च। तस्याः स्वयमेव बाधत्वमिति न वाच्यम्। शून्यमतेऽपि प्रथमक्षणे स्वस्वान्यसर्वबाधस्यात्मैव साक्षी। ततो न किञ्चिदिति सुवचत्वात्। कालिकसम्बन्धावच्छिन्नाकाशाभावत्वावच्छिन्नाभावतदभावयोः तादृशाभावत्वादिना रूपेण नैकस्मिन्नधिकरणे निरवच्छिन्नवृत्तित्वम्। तादृशवृत्तित्वमेव मिथ्यात्वघटकयोर्वाच्यम्। अन्यथा तद्वदेव मिथ्यात्वासिद्धिप्रसङ्गात् दृष्टान्तो विषमः।

तस्मात्स्वाधिकसत्ताकाभाव एव मिथ्यात्वघटकः। तज्ज्ञानं स्वोपादानाज्ञाननिवर्तकतया स्वनिवर्तकम्। स्वप्रतीतिकाले आवृतम्। स्वज्ञानं तु न तन्निवर्तकम्। अतो रजतनिवर्तकतदभावो व्यावहारिकः। जगन्निवर्तकस्तु पारमार्थिको ब्रह्मस्वरूपभूत इत्येव कथञ्चिदुक्तिसहम्।

(द्वै. बु. नापि प्रमाणान्तरानुसारेणेति पूर्वोक्तद्वितीय पक्ष. । मिथ्यात्वस्याधिकसत्ताकाभावेनैवावश्यमुपपादनीयत्वेसमसत्ताकस्वसमानाधिकरणाभावान्तरे मानाभावात् । स्वप्नप्रतीतगजाभावस्य जाग्रत्कालाबाधितत्वेन व्यावहारिकस्यापि स्वप्ने भाने बाधकाभावेन स्वाप्नगजतदभावयोरुभयोरपि प्रातिभासिकत्वासिद्धे । उपपादितं चैतदन्यत्र। तस्य दृष्टान्तेनैतत्साधनं युक्तम् ।

नन्वेवमपि जगदबाध्यं बाध्यत्ववत् बाध्यबाध्यत्ववत्त्वादात्मवदि[1]ति युक्त स्यात् । तन्न घटते । आत्मनि बाध्यत्वस्य प्रातिभासिकत्वेन तद्बाधकबाध्यत्वाभावस्य व्यावहारिकस्यैवोररीकरणात् तत्र सर्वथाऽबाध्यत्वस्याभावेन तद्घटितसाध्यवैकल्य सुस्थिरम् । साध्याप्रसिद्धिश्चेति चेन्न । जगत् अबाध्यत्वोपलक्षितस्वीयकेवलरूपकं बाध्यत्वप्रकारकभ्रमगोचरत्वादात्मवदिति प्रयोगे दृष्टान्तासिद्धिसाध्याप्रसिद्ध्योभावादुक्तवाक्यस्यात्रैव तात्पर्यात् । न च जगत केवलरूपमात्मैवेति सिद्धसाधनमिति वाच्यम् । तस्य केवलात्मस्वरूपत्वे आत्मनोऽपि जडत्वस्य जगतोऽपि सच्चिदानन्दात्मकत्वस्याप्यापत्ते । एतद्द्वारकंकेवलरूपत्वस्य निर्वक्तुमशक्यत्वात् । साध्ये केवलरूपत्वं नाम किमितिचेत् आत्मस्थलेऽपि त्वया व्यवह्रियमाणं यादृशं तादृशस्यैव मयाऽपि निर्वक्तुं शक्यत्वात् । न चासति प्रतिपन्नोपाधिघटितबाध्यत्वाभावेन तत्र बाध्यत्वज्ञानं भ्रम एवेति तत्र व्यभिचार इति वाच्यम् । असतस्त्वन्मते [2]अधिष्ठानत्वायोगेन तत्र तद्भ्रान्तेर्वक्तुमशक्यत्वात् मन्मते असत प्रतीत्यङ्गीकारेण प्रतिपन्नोपाधिघटितबाध्यत्वस्य तत्रापि सत्त्वेन तत्र तज्ज्ञानस्य भ्रमत्वाभावेन हेतोरेवाभावात् । बाध्यत्वमत्र त्रैकालिकनिषेधप्रतियोगित्वमात्रं विवक्षितम् । तेन कस्यचिदसतोऽन्यत्रानारोपितस्य तादृशबाध्यत्वभ्रमविषयत्वेऽपि न व्यभिचार । न चैवमपि शुक्तिरूप्ये मन्मते व्यभिचार । जगतीव तत्रापि प्रतीयमानबाध्यत्वस्य मिथ्यात्वेन तत्प्रकारकभ्रमविषयत्वात् इति वाच्यम् । व्यवहारकालबाध्यबाध्यत्वभ्रमविषयत्वस्य विवक्षितत्वात् । शुक्तिरूप्यादौ तज्ज्ञानस्य सर्वेषां व्यवहारकालाबाध्यत्वात् । जगति मिथ्यात्वरूपबाध्यत्वस्य व्यवहारकाल एव बाधितत्वात् । अन्यथा तदर्थं प्रवृत्त्याद्यनुपपत्तिप्रसङ्गात् । देहात्मैक्यारोपानङ्गीकारान्न तत्र व्यभिचार । अन्यथा तत्र बाध्यत्वग्रहस्य व्यवहारकालाबाध्यत्वेन तन्मूलकप्रवृत्त्यनुपपत्त्या तत्र हेतुसत्त्वावश्यकत्वेन व्यभिचारापत्ते ।

वस्तुत. मिथ्याभूतस्वविशेष्यकप्रतीतिविषयबाध्यत्वकत्वलिङ्गेन बाध्यत्वाभाव एव जगत्यात्मदृष्टान्तेन साध्यते। शुद्धत्वात्मत्वादिवत्कल्पितोऽपि स [3]शुद्धात्मा साधारणत्वेनैव स्वीक्रियते। अतो जगति परेण तदनङ्गीकारात् न सिद्धसाधनम् । यद्यपि जगत्यबाध्यतादात्म्याध्यासे तदीयाबाध्यत्वस्यापिसम्बन्ध तत्राध्यस्यते ।अत एव सन् घट इत्यादिप्रत्ययस्य घटादावबाध्यत्वावगाहित्वम् । अस्य लौकिकप्रत्यक्षरूपत्वानङ्गीकारेऽपि परोक्षरूपतया अङ्गीकृतत्वात् । तथा च पुनः सिद्धसाधनमिति तथापि स्वोपहिततादात्म्याप्रयोज्यस्वरूपसम्बन्धेन ब्रह्मणीव जगत्यपि साधनान्न सिद्धसाधनम् । नन्वथापि शुक्तिरूप्ये परमतेऽनैकान्त्यम् । तन्निष्ठबाध्यत्वस्यापि परमते मिथ्यात्वात् । पक्षकोटि

---

[1] स्युक्त स्यात् । इति पाठेन भाव्यमिति भाति [2] असद्विशेष्यकबाध्यत्वप्रकारकभ्रमे तस्याधिष्ठानत्वसिद्धये तस्याज्ञानावच्छेदकत्व वक्तव्यम् । तच्च नास्तीति भाव । [3] शुद्धात्मसाधारण्येनैव इति पाठेन भाव्यमिति भाति.

(द्वै.यु ) निक्षेपे च त्वन्मते बाध इति चेन्न। मिथ्यात्वेनोभयसिद्धभिन्नत्वविशेषणस्याधिकस्य निवेशात्। तूलाज्ञानादिरूपपरसिद्धपदार्थेषु परेणानिर्वचनीयत्वस्य मया चासत्त्वस्याङ्गीकृतत्वादत्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वेनोभयसिद्धत्वान्न व्यभिचार । न च तन्मात्रस्य कुत्रापि व्यभिचाराभावादितराशस्य वैयर्थ्यम्। अस्य परिचायकत्वेन तत्तद्भेदकूटस्य निवेश एव तात्पर्यमित्युक्तावपि न एव दोष । तन्मात्रस्य व्यभिचारानुपलम्भादिति वाच्यम्। व्याप्तिग्रहौपयिकस्य व्यभिचारावारकस्यापि सार्थकत्वस्य पूर्वमुपपादितत्वेन तद्ग्राहकतया सार्थक्यात्। अन्यथा तन्मात्रस्य सत्यत्वेऽप्रयोजकत्वशङ्काया निरासानुपपत्ते । तन्निवेशे तु परस्परविरुद्धयोरेकतरमिथ्यात्वेऽपरस्य [1]तत्सत्यत्वमिति सर्वलोकावगतसामान्यनियमस्य विना प्रामाण भङ्गप्रसङ्ग इत्यनुकूलतर्कोत्थापनद्वारा व्याप्तिग्रहसम्भवात्। यद्वा शुक्तिरजतमिथ्यात्वे मिथ्यात्व प्रमाणाभावेन निराकृत्याय हेतु प्रयोक्तव्य इत्याशय ।

यद्वा मिथ्यात्वेनोभयसिद्ध स्वस्मिन् प्रतीयमानमिथ्यात्व तत्सम्बन्धित्वमेव हेतु । तथा च न कुत्रापि व्यभिचारो नापि विशेष्यदलवैयर्थ्यम्। वस्तुत शुक्तिरूप्यादिनिष्ठमिथ्यात्वादीनामपि जगदन्त पातितया पक्षकोटिनिक्षिप्ततया तत्र सत्यत्वसन्देहस्यैव सत्त्वेन तद्दशाया शुक्तिरूप्ये मिथ्याभूतस्वप्रतीयमानमिथ्यात्वकत्वरूपहेतुग्रह एव न घटते। विशेषणतावच्छेदकस्य सन्दिग्धत्वेन तद्घटितहेतुग्रहायोगात्। प्रतियोगितावच्छेदकविशिष्टप्रतियोगिनिर्णयाभावेन तदवच्छिन्नहेतुप्रतियोगिकाभावसन्देहस्याप्ययोगेन सन्दिग्धव्यभिचारस्याप्यभावात्। कथञ्चित् तत्सन्देहाहितसन्देह सम्भवतीत्युक्तावपि तस्य व्याप्तिग्रहाविरोधित्वात्। उक्तानुकूलतर्कस्य बाधकत्वाच्चेति सारम्।

नन्वबाध्यत्वसाधनेऽपि तत्सत्यत्वस्यानेनासिद्ध्याऽर्थान्तरम्। 'अबाध्यत्वस्य सत्यत्वात्सत्यत्वमेव सिद्ध्यति' इत्युत्तरत्र कथनायोगश्च। तत्सिद्ध्युपायाभावात्। तस्य साध्यकोटौ निवेशे दृष्टान्ते साध्यवैकल्यमुक्तमेवेति चेन्न। तत्साधकस्यैव तत्सत्यताग्राहकत्वात्। अन्यथा सत्य ज्ञानमित्यनेन ब्रह्मणि सत्यत्वबोधने तत्सत्यताया प्रमाणान्तरान्वेषणपरम्परया ब्रह्मसत्ताया जगतीवाऽरोपितत्वशङ्कानिवृत्तिर्न स्यात्। साध्यकोटौ अबाध्यत्वे सत्यत्वनिवेशेऽपि न दृष्टान्ते साध्यवैकल्यम्। परेण ब्रह्मस्वरूपभूताबाध्यत्वस्यैव केवलं कल्पितभेदेन धर्मताया अङ्गीकृतत्वात्। अत एवोक्त पञ्चपादिकायाम्। 'आनन्दो विषयानुभव सत्यत्व चेति सन्ति धर्मा । अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्ते' इति। 'केवल भेदोपहितरूपेण मिथ्यात्वम्' इति। अतो नार्थान्तरादिकम्। नापि ग्रन्थविरोध ।

ननूत्तरत्र 'अबाध्यत्वस्य सत्यत्वात्सत्यत्वमेव सिद्ध्यति' इति ग्रन्थेन सत्यभूताबाध्यत्वेन सत्यत्वसाधनं प्रतीयते। तत्कथ सङ्गच्छते। अबाध्यत्वस्यैव सत्त्वेन तेनैव तत्साधने साध्याविशिष्टतापातादिति चेन्न। अत्र पञ्चम्यर्थो न ज्ञाप्यत्वम्। किन्तु प्रयोज्यत्व सिद्धिपदार्थभूतप्रमान्वयि। विषयसत्त्वस्य तत्प्रमानिर्वाहकत्वान्न दोष । अथ वा सत्यत्व सद्विलक्षणत्वाभाव इत्यर्थ । तथा च घटभेदाभावसाधनवद्दोषाभावात्।

---

[1] सत्यत्वमिति इति पाठेन भाव्यमिति भाति

(द्वै. बु.) ननु मिथ्याभूतमिथ्यात्वकत्वेऽपि जगति मिथ्यात्वमेवास्त्वित्यप्रयोजकोऽयं हेतुः। न च लोके यत्र प्रतीयमानयद्धर्मस्य मिथ्यात्वं तन्निष्ठतदभावस्याबाध्यत्वरूपसत्यत्वत्त्वमिति सामान्यतो व्याप्तेः सत्त्वेन तज्जातीयेऽत्रैव तद्वैषम्यकल्पने अप्रामाणिकाभ्युपगमप्रसङ्गः। अन्यथा धूमान्तराणां अग्निकारणकत्वेऽपि पर्वतीयधूमस्य तत्कारणकत्वं न स्वीक्रियत इति वदन्तं प्रत्युत्तराभावप्रसङ्गेनानुमानकथोच्छेदप्रसङ्गात्। सामान्यतोऽवधृतकार्यकारणभावत्यागे प्रामाणिकार्थत्यागवदत्रापि तत्सत्त्वात्। विरुद्धधर्माणां स्वभावतः सर्वलोकैरुक्तनियमैरवधृतस्वभावत्वात्। अन्यथा पूर्वं अपरिचितस्यापि पदार्थस्य शब्दादिनाऽधिकरणविशेषे मिथ्यात्वग्रहवतस्तदभावसत्यताग्रहपूर्वकप्रवृत्तेरनुभवसिद्धाया अपलापप्रसङ्गात्।

अत एव 'ब्रह्मातिरिक्ते सत्यताया' कुत्राप्यनङ्गीकारात् तत्सत्यताघटितव्याप्तिर्ममासिद्धा' इत्यपास्तम्। लोकानुभवसिद्धस्य विना प्रमाणेन भ्रान्तत्वकल्पनया सिद्धान्तविशेषाङ्गीकारेण प्रवृत्तौ वाद्यन्तरेणाप्रयोजकत्वव्यभिचारादीनामदूषकत्वं मया ऽभ्युपगम्यत इत्युक्तौ तवोपायाभावेन निरुत्तरत्वप्रसङ्गात्। [1]तवापि 'यत्र यो मिथ्या तत्र तदधिकरणमवृत्तिकतदभावः' इति व्याप्तेरङ्गीकृतत्वेन व्यावहारिकबाध्यत्वस्य मिथ्यात्वे तदभावस्य सत्यत्वेनैव पर्यवसानादिति वाच्यम्। लोकेऽपि यदभावावृत्तियद्धर्मावच्छिन्नस्य यत्र येन सम्बन्धेन मिथ्यात्वं [2]तत्र तद्धर्मावच्छिन्नाभावः सत्यः। यदभावसाधारणयद्धर्मावच्छिन्नस्य यत्र येन सम्बन्धेन मिथ्यात्वं तत्र तादृशाभावोऽपि तेन सम्बन्धेन मिथ्यैवेति व्याप्तिः। अत एव कालिकसम्बन्धेनाभावत्वप्रमेयत्वाद्यवच्छिन्नस्यात्मनि मिथ्यात्वे तदवच्छिन्नाभावोऽपि तेन सम्बन्धेन मिथ्यैव। अन्यथा कालिकसम्बन्धावच्छिन्नाभावत्वावच्छिन्नाभावस्यात्मनि कालिकेन सत्त्वापत्तेः। एवं च नेह नानेति श्रुत्या प्रसक्तै सर्वैः सम्बन्धैः दृश्यत्वावच्छिन्नस्य ब्रह्मणि मिथ्यात्वबोधनेन जगन्निष्ठबाध्यत्वतदभावादीनां मिथ्यात्वस्यैव प्राप्तेः लोकानुभववैषम्यानङ्गीकारेण भवदीयस्य विपक्षे बाधकतर्कस्यानुत्थितेरिति चेन्न।

यत्राधिकरणे यस्य येन सम्बन्धेन सत्त्वं तत्रानवच्छिन्नवृत्तिकस्य तत्र विद्यमानस्य [3]वा अभावस्य तत्सम्बन्धावच्छिन्नप्रतियोगितया तत्साधारणधर्मो नावच्छेदकः' इत्येव नियमः। अभावीयवृत्तिश्च भावाभावसाधारणविशेषणतापक्षे विशेषणतासम्बन्धेन स्वीयानुयोगितावच्छेदकसम्बन्धेन वा यथामतं निवेश्यम्। अतो न कश्चिद्दोषोऽद्रव। इत्थं च कालिकसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नाभावस्य कालिकेनात्मावृत्तित्वाद्दोषाभावः। प्रकृते तु दृश्यत्वावच्छिन्नस्य येन सम्बन्धेन प्रसक्तिस्तेनैव सम्बन्धेन तदवच्छिन्नाभावबोधने श्रुतेस्तात्पर्ये बोध्यमानाभावसाधारणदृश्यत्वस्य तादृशप्रतियोगितावच्छेदकत्वायोगेन वाक्यार्थस्य व्याहतेराकरे बहुधा दर्शितत्वात्। अन्यथा 'अत्र किमपि स्वरूपसम्बन्धेन नास्ति' 'अभावः स्वरूपसम्बन्धेन नास्ति' इत्यादिवाक्येषु लौकिकपरीक्षकयोः प्रामाण्यबुद्धिः स्यात्। न च तथा लोकानामभिमानः। अनुभवविरोधात्। यदि च नानापदेन घटत्वपटत्वादि.

---

[1] त्वयापि इति पाठेन भाव्यमिति भाति

[2] तत्र तेन सम्बन्धेन तद्धर्मावच्छिन्नाभावः इति पाठेन भाव्यमिति भाति।

[3] चाभावस्य इति पाठेनभाव्यमिति भाति

(द्वैधु) धर्मावच्छिन्नानामुपस्थापनेन 'घटत्ववच्छिन्नाभावो ब्रह्मणि' 'एवं पटत्वावच्छिन्नाभावो ब्रह्मणि' इति बोध-स्तदापि सर्वमिथ्यात्वसिद्धये 'घटत्वावच्छिन्नाभाववान् [1]तत्त्वावच्छिन्नाभाववान्' इति बोधस्तदा व्याहतिरेव । लोके भावाभावयोरनवच्छिन्नसंसर्गेणैकत्रैक ग्रहाविषयत्वात् । अन्यथा धनेच्छया प्रवर्तमानं प्रति तदभावबोधकत्वं तत्प्रवृत्तिनिरोधाय प्रेक्षावता न स्यात् । तदभावबाधेऽपि तद्ग्रहानिवृत्तौ तदिच्छाया [2]अनुच्छेदानुपपत्ते । भिन्न-भिन्नविषयकनानाबोधाङ्गीकारे वाक्यभेदापत्ति वाक्यस्य प्रामाण्यचिन्तायामुभयत्र प्रामाण्यग्रहानुपपत्ति । अन्यथा परमतनिराकरणादौ प्रवृत्त्यनुपपत्ते । 'घटाभाववान् घटाभावाभाववान्' इति बोधो यदि घटान्याभाव-विषयकस्तदा तस्य मिथ्यात्वसिद्धये पुनस्तदभावान्तरस्यैव तस्यापि तस्यापीत्यनवस्थितविषयधारापत्त्या सर्वमिथ्या-त्वग्रहस्य जन्मसहस्रेणाप्यभावप्रसङ्ग ।

[3]न च 'घटाभाववान् तदधिकसत्ताकतदभाववान्' इति बोध । तस्य बाधिकसत्ताकस्य पारमार्थिकत्वेनैव प्रतीतत्वात्तन्मिथ्यात्वबोधनायाभावान्तरं तस्य बोधनीयमिति वाच्यम् तदा तादृशाभावस्याधिकरणीभूतब्रह्माभिन्नत्वे शुद्धाद्वैतासिद्धि । अधिकसत्ताकत्वे प्रतीयमानाभावतत्प्रतियोगिनोरेकावगाहार्थज्ञानगोचरत्वायोगश्च । तादृशा-भावाधिकरणतातत्सम्बन्धानामपि मिथ्यात्वबोधनाय तदभावस्यापि बोधनीयतया आहार्यत्वं दुर्वारमेव । 'घट-संयोगशून्य संयोगेन घटवान्' इत्यस्यापि व्याहतत्वात् । तादृशाभावस्य ब्रह्मात्मकतया सत्यत्वमित्युक्ता-वपि शुद्धस्य तथात्वेऽप्युक्तवाक्यबोधिताभावत्वोपहितस्य तदधिकरणत्वादीनामपि मिथ्यात्वबोधनस्यावश्यकत्वेन स एव दोष । तेषामप्यत्यन्ताभेदे आधाराधेयभावसम्बन्धत्वादीनामयुक्तत्वेन तदुपहितस्य ब्रह्मान्यत्वस्यावश्य-कत्वात् ।

पारमार्थिकत्वाकारेण दृश्यसामान्याभावबोधकत्वस्य व्यधिकरणधर्मावच्छिन्नाभावपक्षमङ्गीकृत्याभ्युपगमेपि तादृशाभावसम्बन्धादीनामपि पुनस्तेन रूपेणाभावान्तरादिमानाङ्गीकारेऽनवस्था । 'तेन रूपेण दृश्यसामान्यं नास्ति' इति बुद्धेरपि तादृशव्यधिकरणधर्मविशिष्टदृश्यरूपप्रतियोगिग्रहविरोधित्वोपपत्तये प्रातिभासिकतादृशाभा-वमादाय श्रुतेमिथ्यात्वापर्यवसानवारणाय च तादृशाभावांशे पारमार्थिकत्वावगाहित्वमावश्यकम् । पारमार्थि-कत्वेन तस्याप्यभावग्रहे प्रतियोगिबुद्धिविरोधित्वाभावस्य लौकिकपारमार्थिकत्वादिधर्मेण घटाभावाभावग्रहस्यानु-भवसिद्धत्वात् तादृशाभावस्य पारमार्थिकत्वप्राप्तौ व्याहतेरवर्जनीयत्वात । किञ्च पारमार्थिकत्वस्यानन्दादिव-दब्रह्मासाधारणधर्मत्वग्रहे तदवच्छिन्नाभावबोधनस्यानुपयोग । प्रपञ्चस्य सत्यत्वेऽपि सम्भवात् । पारमार्थिक इत्याकारकबुद्ध्यवच्छिन्नाभावबोधने तासामननुगतत्वेन विनिगमकाभावेन श्रुते तदवच्छिन्नाभावेषु तात्पर्ये [4]वाक्यभेद । त्रैकालिकनिषेधप्रतियोगित्वाभावरूपधर्मेण तदभावबोधने तस्यापि तेन रूपेणाभावबोधनं विना-ऽखण्डब्रह्मासिद्धिप्रसङ्गात् तदभावस्यापि बोधने अधिकरणीभूतब्रह्मणोऽप्यभावबोधकत्वापत्त्या शून्यवादसाधकता-

---

[1] घटाभावत्वावच्छिन्नाभाववान्' इति इति पाठेन भाव्यमिति भाति

[2] अनुच्छेदापत्ते इति पाठेन भाव्यमिति भाति

[3] ननु च इति पाठेन भाव्यमिति भाति

[4] अननुगतरूपेण नानार्थबोधे तात्पर्यविषयकत्वादिति भाव. ।

(द्वै. सि.) एतेर्व्याहतेरावश्यकत्वात्। तस्मात्कथमपि तादृशश्रुतीनां सर्वनिषेधकत्वं न युक्तम्। तदभिप्रायेणैव गुरुचरणैरुक्तं 'समानमेतद्यावज्जीवमहं मौनीत्यादिवाक्यप्रामाण्यचिन्तायाम्' इति।

ननु अस्मन्मते भावाभावयोर्विरोध एव नास्ति। कुतो व्याहत्यादि। तथा हि, किं तद्बुद्ध्योः परस्परप्रतिबन्धकत्वानुरोधेन सोऽङ्गीकर्तव्यः उतैकज्ञानस्यापरस्मिन् भ्रमत्वज्ञापनानुरोधेन उतैकज्ञानस्यापरोपादानभूताज्ञाननिवर्तकत्वानुरोधेन अथ वा तयोरेकज्ञानस्य स्वविषयापेक्षयाऽन्यूनसत्ताकविषयकत्वस्यापरज्ञाने स्थापकत्वानुरोधेन। नाद्यः। मध्याह्नसमवधानकाले बहावव्याप्यवृत्तिशक्तेरेवाभ्युपगमेन मन्मते कस्यापि कुत्राप्यप्रतिबन्धकत्वात्। न द्वितीयः। [1]सन्मात्रनिष्ठस्वान्यूनसत्ताकाभावप्रतियोगित्वविशिष्टविषयकधीत्वस्यैव भ्रमत्वरूपत्वेन स्वविरोधिस्वाभावनिष्ठविशेष्यताकस्वप्रकारकधीत्वस्य भ्रमरूपत्वाभावेन तच्छरीरनिर्वाहाय तज्ज्ञापनाय वा स्वाभावे स्वविरोधानपेक्षणात्। अत एव परस्परसमानाधिकरणयोरपि स्वाश्रयगजतदभावयोर्बाध्यबाधकधीविषयत्वमुक्तमद्वैतसिद्ध्यादौ सङ्गच्छते। तयोः परस्परसामानाधिकरण्यज्ञानेन परस्परमेकदैव मिथ्यात्वग्रहोदयात्। तस्यैव बाधकत्वपदार्थत्वात्। नापि तृतीयः। तथात्वे एकाश्रये परस्थित्यावश्यकत्वेन विरोधवार्ताया एवाभावात्। नापि चतुर्थः। तद्विषयकप्रमाणस्य तत्परत्वादिरूपप्राबल्यमात्रेण तन्निर्वाहेण विरोधानपेक्षणात्। न च भावाभावावविरुद्धाविति व्यवहारापत्तिः। मिथ्यात्ववादिनामिष्टत्वात्। लोकानां वाद्यन्तराणां च तद्विरुद्धत्वव्यवहारस्य मया भ्रान्तिमूलत्वाङ्गीकारात्। न हि वाद्यन्तरसम्मतमेवाभ्युपेयमिति नियमः। प्रतितन्त्रसिद्धान्ताभावप्रसङ्गादिति चेन्न।

एवमपि लोकमर्यादातिक्रमेऽतिप्रसङ्गस्य प्रागभिहितत्वेन भावाभावज्ञानयोः परस्परज्ञानकाले परस्परानुत्पत्त्यन्यतरप्रामाण्यादेः स्वव्याहत्याद्युपेतार्थे वाक्यतात्पर्याभावादिसकलमर्यादापालनस्यावश्यकत्वेन व्यवस्थाभावे जयपराजयसाधनबाधनादिव्यवहारानुपपत्त्या व्याहत्यादेर्दूषणतात्वस्यावश्यकत्वे एतादृशोक्तिशतेनापि व्याहतेरपरिहारात् व्याहतवाक्यवदस्या अपि श्रुतेर्मदुक्तार्थे प्रामाण्यायोग एव।

किञ्चाभावज्ञानकाले तत्प्रतियोगिज्ञानजनकनिष्ठशक्तिविघटकत्वाङ्गीकारे तदेव प्रतिबन्धकत्वम्। प्रकृते च परीक्षकबुद्धिभिः उक्तवाक्यप्रामाण्यचिन्तायामेकस्याभावस्य भ्रमणि विषयीकरणे तदभावग्रहजनकशक्तिविघटनेन तदभावग्रहानुपपत्तौ तन्मिथ्यात्वं न सिद्ध्यत्येव। एवं दृश्यसामान्यस्य मिथ्यात्वग्रहाय तदभावे गृहीते तन्मिथ्यात्वनिश्चयाय तदभावग्रहे परस्परं स्वान्यूनसत्ताकाभाववति स्वप्रकारकत्वरूपभ्रमत्वग्रहस्योभयत्राप्युत्पत्त्या व्यावहारिकप्रामाण्यस्यापि श्रुतेरसिद्धिप्रसङ्गः। न च तादृशानुपपत्तिज्ञानेनैवाखण्डार्थधीर्जायत इति वाच्यम्। लोके 'भूतले घटो नास्ति' 'तदभावो नास्ति' 'अभावसामान्यं नास्ति' इति व्याहतवाक्येनाखण्डभूतलादेर्ज्ञानस्य जननेन प्रामाण्ये व्याहतिमात्रोच्छेदापत्त्या तादृशवाक्यस्य तादृशबोधजनकत्वरूपाप्रामाण्यस्यैव त्वयाप्यनुसरणीयत्वेन लौकिकवैदिकवाक्ययोर्व्युत्पत्तावविशेषेणात्रापि तादृशबोधजननायोगात्। तादृशानुपपत्तिज्ञानेनार्थान्तरपर-

[1] मात्रशब्दः कार्त्स्न्यवाची। तेन घटादिनिष्ठाभावप्रतियोगिव्यावहारिकरजतप्रमाया नातिव्याप्तिः।

(द्वै सु.) त्वाङ्गीकारे 'प्रजापतिरात्मनो वपामुदखिदत्' इति वाक्येनानुपपन्नस्यान्नवपोत्खननस्येव व्यावहारिकमिथ्यात्वस्याप्यसिद्धिप्रसङ्गश्च। [1]न्यूनसत्ताकत्वादिकं यदि ब्रह्मज्ञानेतराबाध्यत्वरूपं सत्वादिरूपं नहि ब्रह्मादिपदार्थाज्ञानिनां लोकानां भ्रमत्वव्यवहारोच्छेदप्रसङ्गश्च । अन्यादृशं तु लोकावगतिविपर्यासं दुर्वचम् । [2]लोकाना यत्र यस्य पारमार्थिकत्वं जानन्ति तत्तदभावस्यावृत्तित्वं गृहीत्वैव भ्रमत्वं गृह्णन्ति । तथैव व्यवहरन्ति 'अत्र घटाभावो न वर्तते । अतोऽत्रैतावत्कालपर्यन्तं मम घटाभावभ्रमोऽभूत्' इति । न तु 'घटाभावोऽत्र न्यूनसत्ताकः' इति ।

किञ्च स्वाधिकसत्ताको वा स्वसमानसत्ताको वाऽभावः प्रतियोगिनो न विरुद्ध इत्युक्तश्रुत्या 'सदेव सोम्येदमग्र आसीत्' इत्यादिश्रुत्यैकवाक्यतापन्नया जगत्तदभावयोः सामानाधिकरण्यबोधने प्रत्यक्षेण संयोगतदभावयोरवच्छेदकभेदेनेवानयोः श्रुतिबलादेकत्रानवच्छिन्नवृत्तिरेव सिद्ध्यति एकत्र सङ्ख्यापरिमाणयोरिव । परन्तु एकत्र विद्यमानयोस्तादृशपदार्थयोरुक्तश्रुतिबलात्कश्चित्प्रतियोग्यनुयोगिभावास्य सम्बन्ध सिद्ध्यति । न चैतावता निष्प्रपञ्चतासिद्धिरागता । भावापेक्षयाधिकस्यैवाभावान्यपदार्थ[3]स्यैवेति तच्छ्रुत्या सिद्धे । न च तयोः परस्परसामानाधिकरण्यमात्रेण तयोर्मिथ्यात्वं सिद्ध्यति । 'घटतदभावौ निरवच्छिन्नवृत्तिकावेवैकत्र तिष्ठतः' इति विप्रलम्भकवाक्याद्भ्राम्यतो घटे मिथ्यात्वबुद्ध्यापत्तेः । न चेष्टापत्तिः । तस्य शुक्तिरजतादाविव घटे प्रवृत्त्यभावप्रसङ्गात् । अपि च सामानाधिकरण्यसत्त्वे तज्ज्ञानोत्तरमनुपपत्तिग्रहे बीजाभावेन तन्मात्रपर्यवसन्नतया अखण्डार्थबुद्धेस्तद्वाक्यादनुदयप्रसङ्गः । अन्यथा सगुणवाक्यादप्यखण्डार्थबोधद्वारा तत्सिद्धिः स्यात् ।

[4]नन्वत्र प्रतियोग्यभावयोरेकत्र ज्ञाने उभयत्र समसत्ताकत्वधीरन्यतरस्मिन्नधिकसत्ताकत्वधीर्वा जायत इति वाच्यम् । किं तावता । तन्निष्ठतद्व्यक्तित्वादिज्ञानवत्त्वस्यानुपपत्तिग्रहरूपत्वाभावात् । अधिकसत्ताकत्वादेर्दुर्ग्रहत्वस्योक्तत्वात् । मिथ्यात्वसिद्धेः प्राक् तदसिद्धेश्च । 'एकतरप्रमाणस्य प्राबल्यमन्यतरसत्ताया न्यूनत्वज्ञापकम्' इत्ययुक्तम् । समानाधिकरणपदार्थेषु मध्ये [5]कस्यचित्पदार्थे प्रमाणविशेषस्याधिक्येन प्रवृत्तेरन्यत्र तन्न्यूनसत्ताकत्वज्ञापकत्वे विधिपरवाक्यानुसारेण तत्समानाधिकरणधर्मान्तराणां न्यूनसत्ताकत्वापातः । प्रतियोग्यनुयोगिभावस्य नियामकत्वेऽपि अव्याप्यवृत्त्यभावस्थलेऽपि एकस्मिन्प्रमाणविशेषप्रवृत्तावपरस्य तथात्वप्रसङ्गः । शुक्तित्वग्राहकप्रमाणबलाद्रजतस्य तथात्वासिद्धिप्रसङ्गश्च । अधिकमुक्तं वक्ष्यते चेति दिक् ।

तस्माद्बाध्यत्वाबाध्यत्वयोरेकत्र निषेधग्राहकमानस्य सर्वथाऽसम्भवात्पूर्वोक्तानुकूलतर्कसाचिव्येनोक्तानुमानेन जगत्सत्यत्वसिद्धिर्दुर्वारैव । एतदेव परिभावयितुमुत्तरत्र व्याप्तिबलादित्युक्तम् । व्याप्तेरुक्तरीत्याऽनुकूलतर्कादि-

[1] अन्यूनसत्ताकत्वादिकं इति पाठेन भाव्यमिति भाति

[2] लोका यत्र यस्य पारमार्थिकत्वं जानन्ति तत्र तदभावस्यावृत्तित्वं इति पाठेन भाव्यमिति भाति ।

[3] स्येति इति पाठेन भाव्यमिति भाति ।

[4] न चात्र इति पाठेन भाव्यमिति भाति.

[5] कस्मिंश्चित्पदार्थे इति पाठेन भाव्यमिति भाति ।

(गु टि) माह ॥ **न केवलमिति** ॥ जगत् सत्यं सत्याबाध्यत्ववत्त्वात् इत्यनुमानमस्मिन् विवक्षायाम् ॥ **अन्यूनेति** ॥ ॥ **तत्किमुत्तरवाक्येनेति** ॥ अत्रापि बाध्यत्वाभावस्यैव प्रतिपादनात् । न चाबाध्यत्वसत्यत्वमपि जगत्सत्यता सिद्ध्यर्थं प्रतिपाद्यत इति सार्थक्यम् । बाध्यत्वाभावोपपादनस्य सद्विलक्षणत्वासिद्ध्युपयुक्तत्ववत् अबाध्यत्वसत्यत्वेन जगत्सत्यताकथनस्य सद्विलक्षणत्वासिद्ध्यनुपयुक्तत्वादिति भावः ।

यद्वा पूर्ववाक्ये बाध्यत्वस्य मिथ्यात्वं प्रतिपादितम् ; नच बाध्यत्वं न मिथ्यात्वं पर्यवसितम् । बाध्यत्वाभावस्य सत्यत्वमेवेति विवक्षितलाभस्तत्रैव जातः । अत उत्तरवाक्यमनुपयुक्तम् । तेनैव तत्साधनयोगादिति भावः । ननु तथापि अस्मन्मते मिथ्यात्वमसत्त्वमेवेति बाध्यत्वं मिथ्येत्युक्ते तदसिद्धिरुक्ता स्यादित्यत आह ॥ **परन्यायेनेति** ॥ ॥ **अत इति** ॥ यतो बाध्यत्वं मिथ्येत्युक्त्या न बाध्यत्वासिद्धिरुक्तेत्यर्थः ॥ **व्याप्तिबलेनेति** । यन्मिथ्याभूत-बाध्यताकं न तद्बाध्यम् । यन्मिथ्याभूतबाध्यताकं तत्सत्यभूताबाध्यताकम् । यत्सत्यभूताबाध्यताकं तत्सत्यं यथा आत्मा इति व्याप्तिबलेनेत्यर्थः ॥ **सत्यत्वञ्चोपपादयितुमिति** ॥ तथा च जगति सद्विलक्षण्यसाधने सत्प्रतिपक्ष-तारूपदोषान्तरकथकत्वेनापि सार्थक्यमिति भावः । उभयोपपादनं विवक्षितमित्यत्रोपष्टम्भकमाह ॥ **अत एवेति** ॥

**जगतः सच्छब्दार्थविकल्पानुपपत्त्या सद्विलक्षणत्वानुपपत्तिसमर्थनम् ।**

(टी) न केवलं बाध्यत्वाभावाज्जगति सद्विलक्षणत्वानुपपत्तिः । किं तु सच्छब्दार्थविकल्पानुपपत्तेश्चेति भावेन विकल्पमाह ।

## सद्विलक्षणत्वं च सज्जातिविलक्षणत्वं सन्मात्रविलक्षणत्वं वा

इह केचिज्जातिरेव पदार्थ इत्यातिष्ठन्ते । अपरे तु जातिविशिष्टा व्यक्तिरिति मन्यन्ते । अन्ये तु स्वरूपमेवेति सङ्गिरन्ते । तत्राद्ये मते सत् सत्ता जातिः । द्वितीये सत्ताविशिष्टा व्यक्तिः । तदुभयाभिप्रायेणोक्तं सज्जातीति । सतो जातिः सज्जातिः । तथा सत्त्वं जातिर्यस्य तत्सज्जातीति । तृतीयमतानुसारेणोक्तं सन्मात्रेति । सन्मात्रं स्वरूपेणैव सत् । न जात्या । अत्र सच्छब्दार्थ एव विकल्प्यते । वैलक्षण्योक्तिस्त्वनुवादमात्रं दूषणोक्तिसौकर्यायेति ज्ञातव्यम् । ननु सत्यमबाध्यमिति परेणाङ्गीकृतम् । तदपि कस्मान्न शङ्क्यते । सत्यम् । तथा सति 'यदबाध्यं न तद्बाध्यते' इति व्याप्यव्यापकभावानुपपत्तिः स्फुटैवेति निर्दलत्वेन शङ्कानर्हत्वात् । आद्यपक्षद्वयं दूषयति ।

## जात्यङ्गीकारे सद्बहुत्वम्

[ सच्छब्दार्थत्वेन सच्छब्दप्रवृत्तिनिमित्तत्वेन वा सत्ताजात्यङ्गीकारे सतां बहुत्वमनेकत्वमङ्गीकर्तव्यं स्यात् । लक्षणव्याघातप्रसङ्गेनैकस्मिन्नुपदेशादिना सङ्गतिग्रहणाद्युपपत्त्या वैयर्थ्यप्रसङ्गेन च जातिवादिभिर्जातेरनेकाश्रयताश्रयणात् । सद्बहुत्वं च सदद्वैतवादिनामनिष्टम् ।]

टी। अथ बहूनि व्यावहारिकाणि सन्ति सन्तीति नेदमनिष्टमिति चेत्। एवं तर्हि जगदेव सदिति न सद्विलक्षणम्। अथ सद्बहुत्वमनङ्गीकृत्य शशविषाणादिप्रतिषेधवदयं प्रतिषेधः क्रियत इति चेन्न। तथा सति जातिजातिमद्वैलक्षण्यसाधनेऽर्थान्तरतादिप्रसङ्गात्। तृतीयं दूषयति।

## सन्मात्रविलक्षणत्वं चेत्सिद्धसाधनता

चेच्छब्दो यद्यर्थे। सद्विलक्षणत्वशब्दार्थस्तर्हीति शेषः। सिद्धसाधनता अर्थापत्तेरिति शेषः। कथमित्यत आह।

## ब्रह्मवैलक्षण्याङ्गीकारात्

सत्तासम्बन्धमन्तरेण स्वरूपत एव सत् ब्रह्मैव परेणाङ्गीकृतम्। तद्वैलक्षण्यं च तद्विपरीतलक्षणयोगो वा तल्लक्षणराहित्यं वा तत्तादात्म्याभावो वा। तत्सर्वं जगत्यस्माभिरङ्गीकृतमेवेति कथं न सिद्धसाधनता। सद्भावादिना जगतो यत्सत्त्वमङ्गीक्रियते तदभावः सद्विलक्षणत्वमिति चेन्न। सद्भावादिना प्रतिपन्नोपाधौ निषेधात्तद्दत्त्वलक्षणस्य सत्त्वस्याङ्गीकृतत्वात्। तत्र च दोषस्योक्तत्वात्। तदेवं नानिर्वचनीये प्रमाणमस्तीति स्थितम्

(वि टि)॥ सच्छब्दार्थेति॥ बाध्यत्वानुपपत्त्या जगति परेण यत्सद्विलक्षणत्वमुच्यते तत्सच्छब्दार्थस्य विकल्पासहत्वाचेत्यर्थः। ननु सच्छब्दस्य नियतैकार्थत्वेनाऽचार्यकृतविकल्पानुपपत्तिरित्याशङ्क्य तदुपपत्तये मतभेदमाह॥ केचिदिति॥ तान्त्रिकेषु भट्टमतानुसारिण इत्यर्थः॥ जातिरिति॥ अनन्तासु व्यक्तिषु शक्तिकल्पने गौरवात् सामान्यलक्षणाभावेन प्रतिव्यक्तिशक्तिग्रहासम्भवात् निर्विकल्पकोपस्थितव्यक्तौ शक्तिग्रहासम्भवेन जातिविशिष्टव्यक्त्युपस्थितेरावश्यकत्वात् नागृहीतविशेषणन्यायेन जातिविशिष्टे शक्तिग्रहे जातावपि शक्तेरावश्यकत्वात् व्यक्तेराक्षेपादिना लाभसम्भवाच्च जातिरेव पदार्थ इत्यर्थः॥ अपरे त्विति॥ गौतममतानुसारिण इत्यर्थः। जातिविशिष्टेत्युपलक्षणम्। यथासम्भवमाकृतिविशिष्टेत्यपि ज्ञेयम्।

तेषामयमाशयः। व्यक्तीनामानन्त्येपि शक्यतावच्छेदकैक्येन शक्त्यैक्योपपत्तेः। सामान्यलक्षणया सकलव्यक्त्युपस्थितौ शक्तिग्रहसम्भवात्। पौढप्रकाशकयावत्तेज प्रतियोगिकसंसर्गाभावरूपतमःप्रतीत्यनुरोधेन प्रसिद्धधूमव्यक्तौ वह्निसम्बन्धावगमेपि 'धूमो वह्निव्यभिचारी न वा' इति संशयानुरोधेन च सामान्यलक्षणाया अप्यवश्यमभ्युपेयत्वात्। न हि प्रतियोगिज्ञानं विना अभावज्ञानं सम्भवति। न च धर्मिज्ञानं विना अप्रसिद्धधूमविषयकः संशयः। निर्विकल्पकोपस्थितायामपि व्यक्तौ शक्तिग्रहसम्भवेन जातौ व्यक्त्यतिरिक्तविशेषणान्तराभावेन च व्यक्तिविशिष्टत्वेनोपस्थितावेव शक्तिग्रहस्याऽवश्यकतया नागृहीतविशेषणान्यायस्य वैपरीत्यापातात्। व्यक्तेराक्षेपेण

(वि टि.) लाभे प्राधान्यानुपपत्तेः । प्रकृत्यर्थान्वितस्वार्थाबोधकप्रत्ययार्थभूतकर्मत्वान्वयानुपपत्तेः जातिव्यक्त्योर्युगप-दुपस्थिते आनुभविकत्वेन शक्यार्थव्यवहितप्रतीत्यभावेन च लक्षणानुपपत्तेश्चेति ।

॥ स्वरूपमेवेति ॥ व्यक्तिस्वरूपमेव पदार्थः । न जातिर्न वा जातिविशिष्टव्यक्तिरित्यर्थः । तेषां तु 'प्रत्ययार्थभूतकर्मत्वादीनां व्यक्तावेवान्वयदर्शनात् स्वरूपमात्रे शक्त्यङ्गीकारेऽपि येन रूपेणोपस्थिते स्वरूपे यस्य पदस्य शक्तिग्रहः तस्य तेनाकारेण तदुपस्थापकत्वस्वाभाव्येन पदात्तत्प्रकारकप्रतीत्युपपत्तेः । स्पर्शमणिसम्बन्धेनायः-पिण्डादौ अयस्त्वसुवर्णत्वयोर्विनाशोत्पत्तिदर्शनेन अनुगतजात्यभावेऽपि नव सुवर्णरजतघटादिषु अनुगतघटा-कारबुद्धिवत् अनुगतधर्मं विनापि घटोऽयमित्यनुगतप्रतीत्युपपत्त्या च पराभिमतजातौ मानाभावाच्च' इत्या-शय इति ।

नन्वेवमाचार्यकृतविकल्पस्य न्यूनतेत्याशङ्क्य तन्त्रावृत्तिभ्यामुभयपरत्वान्न न्यूनतेत्याह ॥ तदुभयेति ॥ सच्छब्दस्य भावप्रधानत्वमभिप्रेत्याह ॥ तथा सत्त्वमिति ॥ नन्वत्र सत्ताजातिर्वा जातिविशिष्टव्यक्तिर्वा सन्मात्रं वेति सच्छब्दार्थ एव विकल्पनीयः । तद्वैलक्षण्यं किमर्थमुच्यत इत्यत आह ॥ दूषणोक्तिसौकर्यायेति ॥ केवल-सच्छब्दार्थविकल्पने सिद्धान्तिकर्तृकबहुदूषणदानेन मन्दोत्साहः परो झटिति प्रकृतदूषणं न जानीयादिति तत्स्फुर-णायेत्यर्थः ॥ तथा सतीति ॥ व्याप्यव्यापकभावस्य भेदगर्भत्वादिति भावः । सच्छब्दार्थत्वेनेति भट्टमते । सच्छब्दप्रवृत्तिनिमित्तत्वेनेति न्यायमते ॥ अनेकत्वमिति ॥ अवस्थाद्वयविशिष्टस्यैव पिण्डस्य यत्र विनाशस्तत्रापि चैत्रत्वादिजात्यङ्गीकारादिति भावः ॥ लक्षणव्याघातप्रसङ्गेनेति ॥ नित्यत्वे सत्येकत्वे सत्यनेकसमवेतत्वरूप-तल्लक्षणव्याघातप्रसङ्गेनेत्यर्थः ॥ वैयर्थ्यप्रसङ्गेनेति ॥ जात्यङ्गीकारस्य विफलत्वप्रसङ्गेनेत्यर्थः । सद्बहुत्वापादन-मिष्टमित्याशङ्क्याह ॥ सद्बहुत्वश्चेति ॥ ननु सदद्वैतमित्यस्य परमार्थसदैक्यमित्यर्थः । एवञ्च सत्ताजातिनिर्वाहाय अनेकसत्पदार्थाङ्गीकारेऽपि नाद्वैतहानिरित्याशयेन शङ्कते ॥ अथेति ॥ न सद्विलक्षणमिति ॥ स्यादिति शेषः । ननु यथा शशविषाणादेः प्रतिषेधेऽपि न तस्य सत्त्वम् । तथा जगति सत्ताजातिमद्वैलक्षण्याङ्गीकारेऽपि न सत्ताजाति-मदङ्गीकारप्रसङ्ग इति शङ्कते ॥ अथेति ॥ अर्थान्तरत्वादिप्रसङ्गादिति ॥ 'जगत् ब्रह्मवत्सत्यं न वा' इति विप्रति-पत्तौ सत्ताजातिमद्वैलक्षण्यसाधनस्य प्रकृतानुपयुक्तत्वादिति भावः । सत्ताभावेन तद्वैलक्षण्यसाधने सिद्धसाधनमादि-पदार्थः । अर्थापत्तिरनुमानान्तर्भूतेत्यभिप्रेत्य सिद्धसाधनतोक्तिरित्याशयेनाह ॥ अर्थापत्तेरिति ॥ सन्मात्रवैलक्षण्य-साधने ब्रह्मवैलक्षण्याङ्गीकारेण सिद्धसाधनतोक्तिरसङ्गतेत्यत आह ॥ सत्तासम्बन्धमन्तरेणेति ॥ विशब्द-लक्षणशब्दयोर्नानार्थत्वेनैवानेकार्थाश्रयणेनापि तत्सिद्धसाधनतादोषानिस्तार इत्याह ॥ तद्वैलक्षण्यश्चेति ॥ तद्विप-रीतेति ॥ ब्रह्मविपरीतेत्यर्थः । ननु प्रपञ्चसत्यत्ववादिना यत्सत्त्वं प्रपञ्चेऽभ्युपगम्यते तदभावरूपसद्विलक्षणत्वमेव साध्यत इति न सिद्धसाधनतेति शङ्कते ॥ सद्वादिनेति ॥ तत्र चेति ॥ प्रतिपन्नोपाधौ निषेधानर्हत्वरूपसत्त्वा-भावसाधने च 'न च बाध्यं जगदित्यत्र किञ्चिन्मानम्' इत्यत्र मानाभावरूपदोषस्योक्तत्वादित्यर्थः । अनिर्वचनीये साधकप्रमाणदूषणं निगमयति ॥ तदेवमिति ॥

(ग टि०) सच्छब्दार्थेति ॥ सर्वत्र बाध्येनेत्यर्थापत्तिशरीरप्रविष्टसच्छब्दार्थेत्यर्थः । एवं चाग्रे व्याप्य-व्यापकभावानुपपत्त्युक्तिः स्वरसेति ज्ञेयम् ॥ इहेति ॥ शब्दार्थविषये ॥ आतिष्ठन्त इति ॥ अङ्गीकुर्वन्तीत्यर्थः । मतेत्यनुवादः. जातिरिति विधिः । सर्वत्र बाध्येनेत्यत्र सत्त्व जातिरित्यर्थः ॥ व्यक्तिरिति ॥ सच्छब्दार्थ इति योज्यम् ॥ सतो जातिरिति ॥ सन्निष्ठो जातिरूपो धर्म इति तत्पुरुष इति भावः । बहुव्रीहिमुपेत्याह ॥ सत्त्व जातिर्यस्येति ॥ दूषणेति ॥ सिद्धसाधनत्वादिवक्ष्यमाणदूषणोक्तिसौकर्यायेत्यर्थः । अन्यथा ब्रह्मवैलक्षण्याङ्गी-कारात्' इत्याद्युक्तेरयोग इति भावः । मन्दबुद्ध्यनुरोधेन व्याचष्टे ॥ सच्छब्दार्थत्वेनेति ॥ लक्षणव्याघातेति ॥ 'नित्यमेकमनेकानुगतं सामान्यम्' इति लक्षणव्याघातप्रसङ्गेन इत्यस्य अनेकाश्रयताश्रयणादित्यन्वयः । हेत्वन्तरमाह । एकस्मिन्नुपदेशादिनेति ॥ व्याकरणान्यवहारादिपदार्थः ॥ सङ्गतिग्रहणादीति ॥ व्याप्तिकार्यकारणग्रहा-दादिपदार्थः ॥ वैयर्थ्येति ॥ सङ्केतग्रहणादेरिति वा जात्यङ्गीकारस्येति वा योज्यम् । अनेकत्र सङ्केतग्रहणा-वश्यमिति यावत् ॥ सन्ति सन्तीति ॥ आद्यं शत्रन्तं कारकपदम् । द्वितीयं क्रियापदम् । सतामेव बहुत्वम् । न सद्विलक्षणानामिति मूलार्थमुपेत्याह ॥ एव नहीति ॥ अर्थान्तरतादीति ॥ गगनादेरिव ब्रह्मण इव च सत्त्वेना-प्युपपत्त्या त्वदभिमतसत्त्वासत्त्वासिद्धेरिति भावः । आदिपदेन सिद्धसाधनत्वग्रहः । जातेरधिकरणात्मकत्वेन तद्वै-लक्षण्यादेरिष्टत्वात् ॥ तद्विपरीतलक्षणेति ॥ परिच्छिन्नसत्ताकत्वादिरूपेत्यर्थः ॥ तत्र चेति ॥ तादृशसत्त्वाभाव-साधनपक्षे च 'न च बाध्यं जगदित्यत्र किञ्चिन्मानम्' 'बाध्यत्वमपि हि तेषां मिथ्या' इत्यादिना दोषस्योक्तत्वा-दित्यर्थः ।

(वे टि०) सच्छब्दस्य नियतैकार्थत्वेनाऽऽचार्यकृतविकल्पानुपपत्तिमाशङ्क्य तदुपपत्तये मतभेदमाह ॥ केचि-दित्यादिना ॥ निर्विकल्पकोपस्थितव्यक्तौ शक्तिग्रहासम्भवेन जातिविशिष्टव्यक्तिग्रहस्यावश्यकत्वान्नागृहीतविशे-षणान्यायेन जातिविशिष्टव्यक्तिग्रहे जातावेव शक्तिः । व्यक्तेराक्षेपादिना लाभ इति भावः ॥ अपरे त्विति ॥ निर्विकल्पकोपस्थितायामपि जातौ शक्तिग्रहासम्भवेन जातौ व्यक्त्यतिरिक्तविशेषणान्तराभावेन च व्यक्तिविशिष्टत्वे-नोपस्थितजातावेव शक्तिग्रहस्यावश्यकतया नागृहीतविशेषणान्यायस्य वैपरीत्यापाताद्व्यक्तेराक्षेपलभ्यत्वेऽप्राधान्य-प्रसङ्गाच्च प्रकृत्यर्थान्वितस्वार्थविबोधकप्रत्ययार्थभूतकर्मत्वाद्यन्वयानुपपत्तेश्च जातिविशिष्टव्यक्तिरेव शक्येति भावः । अन्ये त्विति ॥ क्षीरविक्रयादिना ब्राह्मणत्वशूद्रत्वयोः स्पर्शमणिसम्बन्धेनायःपिण्डादावयस्त्वसुवर्णत्वयोश्च विनाशो-त्पत्तिदर्शनेन सुवर्णरजतमृद्घटादिष्वनुगतधर्माभावेऽप्यनुगताकारबुद्धिवद्घटोऽयं घटोऽयमित्यनुगतप्रतीत्युपपत्त्या च नित्या-नुगतजातौ मानाभावेन स्वरूपमात्रमेव पदशक्यमित्याशयः ॥ सत्त्व जातिर्यस्येति ॥ तथा च सदिति मूले भाव-प्रधाननिर्देशः इति भावः ॥ व्याप्यव्यापकभावानुपपत्तिरिति ॥

नन्वभेदेऽपि व्याप्यव्यापकभावोऽवश्यमङ्गीकार्यः । अन्यथा शब्दोऽनित्यः कृतकत्वादित्यादावनित्यत्व-समव्याप्तस्य सामिन्नसाधनव्यापकस्य कृतकत्वस्याप्युपाधित्वापत्तेः । तत्र ह्यभेदेऽपि व्याप्तिमङ्गीकृत्य साधनव्यापक-त्वेनानुपाधित्वं वक्तव्यमिति सर्वत्राभेदेऽपि व्याप्यव्यापकभावोऽङ्गीकार्य इति चेन्न । साधनस्योपाधित्वेऽप्यनिष्टा

प्रतियोगिकात्यन्ताभावाङ्गीकारपक्षे उपाधिरयं सर्वदेशपरम्। गगनादेः समवायेन सर्वदेशावृत्तित्वमते सम्बन्धाविकरणसापेक्षार्थबोधकमिति गगनं सर्वत्र समवायेन मिथ्येति व्यवहारो गगनं सर्वत्र समवायेन सत्यं हार इष्ट। प्रामाणिकप्रतियोगिकात्यन्ताभावानङ्गीकारे उपाधिपदं त्रैकालिकपदं चोभयं सर्वदेशवृत्ति-वृत्तित्वरूपविशेषणद्वयसमर्पकतया अत्यन्ताभावरूपधर्मिपरिचयाय। न चैकेनैवालम्। प्रागभावप्रध्व-योगिदेशमात्रवृत्तित्वेन प्रतियोगिपूर्वोत्तरकालमात्रवृत्तित्वेन चान्यतरेणैव तद्वारणात्। उपाधिपदस्य कत्वाभावे तस्यान्यथानैकान्त्येन वैयर्थ्यं चेति वाच्यम्। त्रैकालिकोपाधिपदयोर्विकल्पेन वा तत्परिचाय-न झटिति तद्धर्मिपरिचयाय चोपादानसम्भवात्। प्रामाणिकप्रतियोगिकात्यन्ताभावपक्षे च देशान्तरनिष्ठा-गिनि सति सत्त्वानुपपत्तिपरिहाराय प्रतिपन्नोपाधिपदयोर्विकल्पेन सार्थकता। तथा च प्रामाणिक-कात्यन्ताभावानङ्गीकारे अत्यन्ताभावप्रतियोगित्वाभाव एव सत्त्वम्। तदङ्गीकारे तु सर्वदेशवृत्त्यभाव-त्वाभाव स्वप्रकारकधीविषयनिष्ठात्यन्ताभावप्रतियोगित्वाभावो वा सत्त्वम्। स्व यत्र सत्त्वमुपपादनीय ादृशकूर्मरोमादेर्न कुत्राप्यारोपस्तत्र स्वप्रकारकप्रतीतेरेवाप्रसिद्ध्या नातिव्याप्तिः। अत्र यद्यपि स्वघटि-प्रसिद्ध्योक्ताभावोऽपि तस्मिन् कूर्मरोमादौ वर्तत इत्यतिव्याप्तिस्तथापि तादृशप्रतियोगि यद्यत्तद्भेद-वच्छिन्नत्वान्न दोष इति ध्येयम्। अनुभूयमानारोपीयप्रकारेष्वव्याप्तिवारणाय स्वप्रकारकधीविषयताव्या-वे देयम्। यद्वा परेण निरुच्यमान यादृशबाध्यत्व तदभाव एव सत्यत्वमित्यनेनाभिप्रैति। अत्यन्तास-सत्त्वेन प्रतीत्यर्हत्व तन्मते यादृशं तदेव सत्त्वेनाप्रतीतासद्व्यावर्तक भवतीति स्फुटमित्याशयेन विशेष्यद-ति ज्ञातव्यम्।

र्हि तदवच्छिन्नभेद एव साध्यमस्तु। तत्राह॥ तत्र चेति॥ दोषस्येति॥ व्याप्तिग्रहानुपपत्तिसिद्धसाधनता-दिरूपदोषस्येत्यर्थः। आद्यपक्षे अत्यन्ताभावप्रतियोगित्वाभावरूपसत्त्वावच्छिन्नभेदसन्देहदशाया पक्षे तद्ध-रूपहेतोरपि सन्दिग्धत्वेनेत्यसिद्धि। द्वितीयपक्षे तृतीयपक्षेपि सत्त्वेन प्रतीत्यर्हत्वविशिष्टस्योक्तबाध्यत्वस्यैव ासत्वेन तस्य पक्षे साध्यसन्देहदशायां हेतोरपि सन्दिग्धतैव। बाध्यत्वस्यासत्साधारण्ये तत्र विशिष्ट-भिचार एव। अर्थापत्तौ च सत्त्वेन प्रतीत्यर्हत्वस्य बाध्यत्वहेतुसाध्यकोटावप्रवेशेपि सन्दिग्धासिद्धि-केरूप्यमात्रस्य पक्षत्वे सिद्धसाधनमेवेति भाव।

अर्हपदप्रयोगानर्थक्यपरिहारायोक्तासद्विशेषातिव्याप्तिपरिहार एव तत्पदप्रयोजन वक्तव्यम्। ध्यता च निःस्वरूपत्व कालासम्बद्धत्वं अर्थक्रियाकारित्वाभावश्चेत्येवमादि। तदभाव सत्त्वम्। त्वादि तद्रूपसत्त्वस्याङ्गीकारादित्यर्थः। तद्वत्त्वाभावादिरेव साध्यत इत्यत आह॥ तत्र सिद्धसाधनता। जगति तत्साधने बाध इति दोषस्येत्यर्थः। उक्तत्वात् उक्तप्रायत्वात्। भवतु कालसम्बद्धत्वादेरपि जगति साधनसम्भवेन तेनैवास्यापि सिद्धत्वमिति भाव। ादिश्रुत्यनुरोधात्कालसम्बद्धत्वादिकं सिद्धमिति न दृष्टान्तासिद्धि। तत्साधनसत्त्वे

(द्वै सु.) [1]अनुभवसिद्धेऽपि वादिवाक्योक्तयुक्त्याभासजनितशङ्कानिरासवदे[2]तत्सम्पादनमपि युज्य इत्याहुः ।

(गु टि) सज्जातीयनेन कथं पक्षद्वयस्य इत्यतस्तं दर्शयति मनो ज्ञानिरित्यादिना ॥ ३ कत्वमिति ॥ नित्यमेकमनेकानुगतं सामान्यमिति तर्कीयलक्षणोक्तेरिति भाव ॥ व्याघातेनेति ॥ मात्राश्रितत्वे अनेकाश्रितत्वघटितलक्षणायोगादिति भाव । उपदेशादिनेत्यादिशब्देन वृद्धव्यवहारा ॥ जातीवादिभिरिति ॥ नैयायिकादिभिरित्यर्थ ॥ अर्थान्तरप्रसङ्गादिति ॥ बाध्यत्वाबाध्यत्वविप्रतिपत्ति जातिजातिमद्वैलक्षण्यसाधनस्यानुपयोगादिति भाव ॥ चेच्छब्दो यद्यर्थ इति ॥ सविकल्पितपक्ष नुसारेण शब्दस्यैव स्वारस्यादिति भाव ॥ दोषस्योक्तत्वादिति ॥ सिद्धसाधनत्वस्येत्यर्थ ।

वियदादिजगतोऽनिर्वचनीयत्वे भेदनिराकरणायोगरूपबाधकसमर्थनम्

(टी) एव साधकप्रमाणाभावेनानिर्वचनीय निरस्य बाधकेनापि निराचष्टे ।

## न च कयापि युक्त्या मानेन वा भेदनिराकरणं भवति

यदि वियदादिकमनिर्वचनीयमङ्गीक्रियते तदा 'भेदस्य भेदिनो भिन्नत्वेऽनवस्थाप्रसङ्गः । भिन्नत्वे भेदभेदिनोरन्यतराभावप्रसङ्गः' इत्यादिकया युक्त्या 'मायामात्रमिद द्वैतम्' इत्यादिना माने तत्परेण स्वशास्त्रे भेदनिराकरण क्रियते तदनुपपन्न स्यात् ।

ननु युक्तेर्मानत्वे कथ पृथग्ग्रहणम् । अमानत्वे कथं निराकरणाङ्गत्वमिति चेत् इत्थम् । युक्तिरागमेतिकर्तव्यतात्वेन स्वयममानमपि निराकरणाङ्ग भवतीति परेणाङ्गीकृतम् । तदनुवादश्चायमिति । कुतोऽनिर्वचनीयवादिनो भेदनिराकरण न सम्भवतीत्यत आह ।

### अङ्गीक्रियमाणत्वात्

अनिर्वचनीयत्व हि सदसद्विलक्षणत्वम् । वैलक्षण्य च भेदो वा भेदव्याप्त वा । एव चानिर्वचनीयमङ्गीकुर्वता भेदस्याङ्गीक्रियमाणत्वात् अङ्गीकारनिराकरणयोर्व्याहतत्वान्न भेदनिराकरण सम्भवति इष्यते च तत् । अतो नानिर्वचनीयाङ्गीकारो युक्तः । सदसद्विलक्षणत्व नाम सत्त्वासत्त्वानाधारत्वम् न भेद इति चेन्न । सत्त्वविकल्पनिराकरणेन निरस्तत्वात् । निराकरिष्यमाणत्वाच्च ।

(वि टि.) 'न च कयापि युक्त्या' इति वाक्ये अनिर्वचनीयनिराकरणाप्रतीतेरसङ्गत तदित्याशङ्क्य सङ्गमयति ॥ एवमिति ॥ अनिर्वचनीयनिराकरणपरत्वस्फोरणाय शेषं पूरयन् भवतीत्यस्य भवेदिति विपरिणामं सूचयन् व्याचष्टे ॥ यदि वियदादिकमिति ॥ भेदानिराकरणे प्रस्तुतानिर्वचनीयसिद्धिरविकलैवेत्यत आह । इष्यते चेति ॥ तत् भेदनिराकरणम् ॥ सत्त्वासत्त्वानाधारत्वमिति ॥ सत्त्वासत्त्वात्यन्ताभाव धारत्वमित्यर्थः ।

---

[1] आत्मन इति शेष

[2] जगति सत्त्वसाधन पूर्वोक्तहेतुक इत्यर्थः ।

(टी.) अनिर्वचनीयासिद्धेश्च सद्विलक्षणत्वमसद्विलक्षणत्वं च
मिथ्येत्यविलक्षणत्वमेव सत्यं स्यात्

यदि विरोधपरिहाराय जगतः सद्विलक्षणत्वमसद्विलक्षणत्वं च मिथ्येत्यङ्गीक्रियते तदा अनिर्वचनीयस्योक्तरीत्या प्रमाणाभावेनासिद्धेर्मिथ्याशब्दस्य तदर्थत्वानुपपत्तौ असदर्थत्वे चाङ्गीकार्ये जगतः सदसदात्मकत्वं सत्यं प्रसज्येत । तस्मिन् सत्यसद्वैलक्षण्यस्यासत्त्वे तत्सदात्मकत्वस्य सत्यत्ववदिति ।

(रा टि.) चशब्दसमुच्चेयमाह । मिथ्याशब्दस्येत्यादि ।

(वे टि.) ॥ तत्कथमिति ॥ समानसत्ताकयोरेव भावाभावयोर्विरोधादिति भाव ।

(द्वै यु ) ॥ जगतः सदसदात्मकत्वं सत्यं प्रसज्येतेति ॥ ननु 'साधकप्रमाणाभावेन अनिर्वचनीयं निराकृत्य बाधकेनाऽपि निराचष्टे' इत्युपक्रान्तम् । इदानीं तु अनिर्वचनीये प्रमाणाभावमभिधायासत्त्वपक्ष एवेदं दूषणमभिहितम् । तथा च कथं न पूर्वोत्तरविरोध इति चेन्न ।

यतोऽत्रानिर्वचनीयाङ्गीकारे सत्याहतत्वादिरूपबाधकप्रदर्शनार्थमयं ग्रन्थः प्रवृत्तः । तत्राङ्गीकारनिराकरणयोर्व्याहतिपरिहाराय पारमार्थिकभेदनिराकरणं मया क्रियत इत्युक्ते तत्रानेन ग्रन्थेनेदमुच्यते "लोके सत्त्वासत्त्वौदासीन्येन प्रतीतिर्नास्तीति स्थितिः । तत्र 'इदं सद्विलक्षणम्' इत्यादिवाक्यं सद्विलक्षणत्वं पारमार्थिकत्वेनैव बोधयति । तन्निषेधवाक्यमपि सत्त्वनिषेधरूपमसत्त्वं भेदे सत्त्वेनैव बोधयतीत्येकत्र विरुद्धे सत्त्वासत्त्वे बोधयतोर्वाक्ययो[1]र्व्याहतिः । एवं सद्विलक्षणत्वं जगत्यसत्त्वरूपम् । तदभावेऽभिहिते तदेव सत्त्वमित्येवं जगतः सत्त्वासत्त्वोभयप्राप्त्या व्याहतिः । वचनविरोधस्य विषयविरोधमूलत्वात्" इत्यभिहिते तत्र "जगति निषिद्ध्यमानोऽपि भेदः सत्त्वाभाववानपि नासत्त्ववान् । जगति तद्भेदसत्त्वेऽपि न तन्निराकरणेन पुनः सत्त्वम् । अतो न व्याहतिः । अनिर्वचनीयस्य तृतीयप्रकारस्याङ्गीकारात्" इत्याशयेन शङ्कितम् । तन्न घटते । तत्र प्रमाणाभावेन तेन रूपेण भेदादिजगतां बुद्ध्यावनारोहेणोक्तवाक्याभ्यामुपपादितरीत्या विरुद्धधर्मवत्त्वेनैव प्रतीयमानव्याहतिर्दुर्वारैव' इति । तथा च कथं पूर्वोत्तरविरोधः ।

ननु एवं तर्ह्यनिर्वचनीयाङ्गीकारमूलकत्वं कथमस्य दोषस्य । तत्परित्यागोपजीवनेनैवैतद्दोषस्य प्रसक्तत्वात् । एवं प्रमाणाभावोपजीवनेनैव प्रवृत्तिश्चास्य दोषस्य । तथा च 'अनिर्वचनीयाङ्गीकारे' इति तत्पक्ष एव बाधकप्रतिज्ञा । 'एवं प्रमाणाभावेन निराकृत्य बाधकेन च' इत्यनेनोक्ता प्रमाणाभावानुपजीविरीत्यन्तरेण निराकरणप्रतिज्ञा च विरुद्ध्यतेति चेन्न । भेदं निराकुर्वतोऽपि परस्य पुनर्भेदोक्तिः स्वाभ्युपगतानिर्वचनीयनिर्वाहार्थैवेति उक्तबाधकस्य तन्मूलत्वाव्याहतेः । अत एव मूलव्याख्यावसरे 'यदि वियदादिकमनिर्वचनीयमङ्गीक्रियते' इति

[1] अनिर्वचनीयलक्षणे सद्वैलक्षण्योपादानेन तद्बोधकवाक्येन वैलक्षण्यरूपभेदे सत्त्वं गृहीतम् । पुनर्भेदं निराकुर्वता त्वया वैलक्षण्यं नास्तीति वक्तव्यतया स्ववाक्येनैव भेदे अत्यन्ताभावप्रतियोगित्वरूपमसत्त्वं बोधितमिति व्याहतिरिति भाव ।

(द्वै. यु.) तदेवापादकं कृतम्; अत एव नारिकावाक्येऽनिर्वचनीयपदं तदङ्गीकारपरमित्यदोषः। प्रमाणाभावानुपजीवने तु न कस्यापि बाधकस्य प्रवृत्तिः। प्रमाणसिद्धार्थबाधनाक्षमत्वं तु। अत एव समुच्चायकच[1]शब्दप्रयोगः। पर्यवसानभेदेन दूषणान्तरत्वमिति न मिथ्याशब्दस्याभिप्रायान्तरकल्पनाप्रयुक्तदोषान्तरत्वमस्येति सर्वं समञ्जसमेवेति। तथा च जगत इत्यस्य भेद इति रूपस्येत्यर्थः ॥ प्रसज्येनेति ॥ तथा च विषयविरोधापरिहारात्स्ववचनविरोधो दुर्वार इति भावः।

(गु. टि.) ॥ तत्कथमिति ॥ समानसत्ताकयोरेव भावाभावयोर्विरोधादिति भावः।

अनिर्वचनीयलक्षणानुपपत्त्या अनिर्वचनीयनिराकरणम्

टी. अथ वा अनिर्वचनीयं साधकप्रमाणाभावेन बाधकसद्भावेन च निराकृत्य लक्षणानुपपत्त्यापि निराकरोति।

## अनिर्वचनीयासिद्धेश्च

अनिर्वचनीयमित्यनिर्वचनीयलक्षणम्, तस्यासिद्धेश्च न च भेदे विकल्पो युज्यत इति सम्बन्धः। तथा हि, न तावन्निर्वचनानर्हत्वमनिर्वचनीयत्वम्। मूकीभावप्रसङ्गेनासम्भवित्वात्। नापि सत्त्वासत्त्वाभ्यां निर्वक्तुमशक्यत्वलक्षणम्। प्रत्येकं सदसतोरनिर्वचनीयतापातात्। समुच्चितस्य तथात्वे सतोऽसतश्च सदसदात्मकत्वाभावेन तत्प्रसङ्गानिवारणात्। सत्त्वेन निर्वक्तुमशक्यत्वे सत्यसत्त्वेन निर्वक्तुं शक्यत्वमिति चेन्न। सदसदात्मकताव्यतिषेधसमुच्चयस्यापि विरुद्धत्वेनासम्भवित्वात्। अनिर्वचनीयत्वादिनो विरोधोऽसिद्ध इति चेन्न। अनिर्वचनीयासिद्धौ विरोधासिद्धिः। ततो लक्षणसिद्ध्या अनिर्वचनीयसिद्धिरिति परस्पराश्रयप्रसङ्गात्।

(वि. टि.) पूर्वव्याख्याने 'अनिर्वचनीय सिद्धेश्च' इति चकारस्य नातिप्रयोजनता मन्वान आह ॥ अथ वेति ॥ नन्वनिर्वचनीयलक्षणनिराकरणपरत्वे 'सदसद्विलक्षणत्वासिद्धेश्च' इति तद्वाक्याकारः स्यादित्यत आह। ॥ अनिर्वचनीयमितीति ॥ अनिर्वचनीयत्वरूपलक्षणस्यासिद्धेरित्यर्थः। हेतोः साध्यापेक्षाया साध्येन सह सम्बन्धं दर्शयति ॥ न च भेद इति ॥ लक्षणासिद्धिमुपपादयति ॥ तथा हीति ॥ मूकीभावप्रसङ्गेनेति ॥ गुरुशिष्ययोर्लोकमात्रस्य वा अभिलपनाभावप्रसङ्गेनेत्यर्थः ॥ सदसतोरिति ॥ सतोऽसत्त्वेनासतश्च सत्त्वेन निर्वक्तुमशक्यत्वादिति भावः ॥ समुच्चितस्येति ॥ समुच्चितप्रतियोगिकाभावस्य लक्षणत्व इत्यर्थः ॥ सत्त्वेनेति ॥ सत्त्वेन निर्वक्तुमशक्यत्वेन सहितमसत्त्वेन निर्वक्तुमशक्यत्वं लक्षणमस्त्वित्यर्थः ॥ असम्भवित्वादिति ॥ यद्यपि सत्त्वेन निर्वक्तुमशक्यत्वासत्त्वेन निर्वक्तुमशक्यत्वयोः परस्परविरहरूपत्वाभावेन गोत्वाश्वत्वयोरिवैकत्र निषेधसम्भवः तथापि तयोः परस्परविरहात्मकसत्त्वासत्त्वोभयघटितमूर्तित्वेन सत्त्वासत्त्वयोरिव तयोरप्येकत्र निषेधो न सम्भवतीति भावः।

---

[1] अपिशब्द इति पाठेन भाव्यमिति भाति।

(रा. टि) ॥ तस्यासिद्धेश्चेति ॥ न केवलं साधकाभावः बाधकाभावोऽप्यनिर्वचनीयाभावात् । लक्षणस्य असिद्धेश्चानिर्वचनीयाभावात् न च भेदे विकल्पो युज्यत इत्यर्थः ॥ मूर्काभावेति ॥ अनिर्वचनीयपदेनैव निर्वचनेन व्याघातप्रसङ्गभयेनेति भावः ॥ सदसतोरिति ॥ सत्त्वेन निर्वक्तुमशक्यत्वमसति असत्त्वेन निर्वक्तुमशक्यत्वं सति ब्रह्मणीति यथायोगमन्वयः । समुच्चयपक्षेऽपि किं सत्त्वे सति यदसत्त्वं सदसत् । तत्त्वेन निर्वचनानर्हत्वमिति प्रतियोगिनि समुच्चयपक्षं निराह ॥ समुच्चितस्येति ॥ तथात्वे लक्षणत्वे इत्यर्थः ॥ तदिति ॥ अनिर्वचनीयता प्रसङ्गादित्यर्थः । असद्ब्रह्मणोरनिर्वचनीयत्वं न परस्येष्टमिति भावः । निरंशसमुच्चयपक्षं विवृण्वन्नेव निराह । ॥ सत्त्वेनेत्यादिना ॥ असम्भवित्वादिति ॥ लक्षणस्येति योज्यम् ।

(वे टि) अनिर्वचनीयासिद्धेश्चेति चशब्दाभिप्रायं मन्वान आह ॥ अथ वेति ॥ सदसतोरनिर्वचनीयतापातादिति ॥ सत्त्वेन निर्वक्तुमशक्यत्वमसति असत्त्वेन निर्वक्तुमशक्यत्वं सतीत्यतिव्याप्तेरित्यर्थः । ॥ समुच्चितस्येति ॥ सत्त्वविशिष्टासत्त्वेन निर्वक्तुमशक्यत्वस्य लक्षणत्व इत्यर्थः ॥ सदसदात्मकत्वाभावेनेति ॥ सतः सन्मात्रात्मकत्वात् असतः असन्मात्रात्मकत्वात् तयोः सदसदात्मकत्वाभावादित्यर्थः । ननु सत्त्वासत्त्वयोः विरुद्धत्वेपि न तदभावौ विरुद्धौ । सत्त्वासत्त्वयोरेकत्र प्रवेशाभावेपि तदभावयोरनिर्वचनीये अर्थे युक्तरूप्याणां च सत्त्वात् । यथा गोत्वाश्वत्वयोरेकत्र समावेशाभावेन विरुद्धत्वेपि तदभावयोरेकत्र महिष्यादौ समावेशेनाविरुद्धत्वमित्यभिप्रेत्य शङ्कते ॥ अनिर्वचनीयवादिन इति ॥

(द्वै द्यु) ॥ अथ वेति ॥ व्याख्यानान्तरज्ञापकं स्वयमेव वक्ष्यति । नन्वेतत्पक्षे उक्तपक्षस्यार्थहेतुत्वं कान्वेति । पूर्वोक्तार्थस्य हेत्वाकाङ्क्षाविधुरत्वादित्यतश्चाह ॥ न च भेद इति ॥ अनिर्वचनीयतापातादिति ॥ तथा च प्रत्येकं तयोरतिव्याप्तिरित्यर्थः । [1]यद्वा समुच्चितस्य सामानाधिकरण्यापन्नसत्त्वासत्त्वाभावद्वयस्य तथात्वे लक्षणत्वे इति नार्थः । उत्तरदूषणासङ्गतिप्रसङ्गात् । किन्तु समुच्चितस्य परस्परसामानाधिकरण्यापन्नस्य सत्त्वस्यासत्त्वस्य च तथात्वे अनिर्वचनीयलक्षणीभूताभावप्रतियोगित्वे इत्यर्थः । सत्त्वविशिष्टासत्त्वाभावादेर्लक्षणत्व इति यावत् ॥ तत्प्रसङ्गेति ॥ अतिव्याप्त्यसम्भवेत्यर्थः । असत्प्रतियोगिकाभावाङ्गीकारेऽतिव्याप्तिः । अन्यथा प्रतियोग्यप्रसिद्ध्याऽसम्भव इति भावः । पूर्वभागः प्रतियोग्यप्रसिद्धिमूलकोऽसयोपपादक इति ज्ञेयः ॥ सत्त्वेनेत्यादि ॥ सत्त्वाभाववत्त्वे सत्यसत्त्वाभाववत्त्वमित्येवार्थः । निर्वक्तुमशक्यत्वमित्युक्तिस्तु

प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं न यत् ।
गाहते तदनिर्वाच्यमाहुर्वेदान्तवेदिनः ॥

इति तदुक्तिसूचनाय ॥ विरुद्धत्वेनेति ॥ असत्त्वाभावरूपसत्त्वेन सह सत्त्वाभावस्य विरुद्धत्वेनेत्यर्थः ॥ विरोधोऽसिद्ध इति ॥ तन्मते असत्त्वाभावस्य सत्त्वरूपत्वानङ्गीकारादिति भावः । निरुपाख्यत्वरूपासत्त्वाभावसाधने

---

[1] अत्र यद्वा इत्यधिकमिति भाति

(द्वै धु) असत. ख्यायमानत्वात् तत्साधनेप्यनिर्वचनीयासिद्धयापत्त्याऽसद्भिन्नासत्त्वाभाव एव साधनीय । तथा च विरोधो दुर्वार एवेत्याशयेनाह ॥ अनिर्वचनीयेत्यादिना ॥

(गु. टि 'अनिर्वचनीयासिद्धेश्च' इति चशब्दस्वारस्यानुरोधादाह ॥ अथ वेति ॥ सदसतोरनिर्वचनीयतापातादिति ॥ सत्त्वेन निर्वक्तुमशक्यत्वस्यासति असत्त्वेन निर्वक्तुमशक्यत्वस्य सति सत्त्वेनातिव्याप्त्यापत्तेरित्यर्थः ॥ समुच्चितस्येति ॥ सत्त्वविशिष्टासत्त्वेन निर्वक्तुमशक्यत्वस्य लक्षणत्व इत्यर्थः । सत सन्मात्रात्मकत्वादसतश्च सन्मात्रात्मकत्वात्तयोः सत्त्वेनासत्त्वेन निर्वक्तुमशक्यत्वाभावेपि सताऽसतश्च सदसदात्मत्वाभावेन सत्त्वविशिष्टासत्त्वेन निर्वक्तुमशक्यत्वस्य सत्त्वात् तत्रातिव्याप्तिरेवेत्यर्थः । ननु सदसदात्मकतया विरुद्धत्वेपि न तदभावौ विरुद्धौ । सत्त्वासत्त्वाभावयोः प्रत्येकं सति असति चावृत्तावपि अनिर्वचनीये वियदादौ शुक्तिरूप्यादौ च सत्त्वात् । गोत्वाश्वत्वयोरेकत्र समावेशाभावेन विरुद्धत्वेपि तदभावगर्भहिप्यादौ समावेशस्याविरुद्धत्वादिति शङ्कते ॥ अनिर्वचनीयवादिन इति ॥

### अनिर्वचनीयलक्षणस्य मिथ्यात्वे जगत्सत्यतापादनम्

(टी) स्वाद्यं विरोधः । यदि निषेधसमुच्चयस्तात्त्विकः स्यात् । न चैतदस्ति । तस्यापि मिथ्यात्वाङ्गीकारादित्यत आह ।

## सद्विलक्षणत्वमसद्विलक्षणत्वं च मिथ्येत्यविलक्षणत्वमेव सत्यं स्यात्

निषेधसमुच्चयपक्षनिराकरणसूचनार्थं द्विर्विलक्षणत्वग्रहणम् । अन्यथा सदसद्विलक्षणत्वमित्यवक्ष्यत् ।

**ननु प्रपञ्च एव धर्मी नास्ति । कथं सदसदात्मकत्वमापद्यत इति चेन्न । परेणाप्यसत्त्वस्यानङ्गीकृतत्वात् ।**

(वि टि.) ॥ स्वाद्यमिति ॥ स्वप्ने वसन्तग्रीष्मयोर्विरुद्धयोरप्यविरोधदर्शनेन तात्त्विकयोरेव विरोध इति भाव । सदसदात्मकत्वापादनस्य सत्त्वसमुच्चितासत्त्वाभावनिराकरणेप्युपपन्नतया कथं निषेधसमुच्चयनिराकरणार्थत्वेन व्याख्यायत इत्याशङ्क्याह ॥ निषेधसमुच्चयपक्षेति ॥ ननु मिथ्याशब्दस्यापह्नववचनत्वेन प्रपञ्चो मिथ्येत्युक्ते नास्तीत्येवोक्तं स्यात् । एवञ्च न तस्य सदसदात्मकत्वापादनं युज्यत इति शङ्कते ॥ नन्विति ॥ ॥ असत्त्वस्येति ॥ निःस्वरूपत्वस्येत्यर्थः ।

(गु टि) व्याख्यान प्रागितेति मत्वा स्वोक्तार्थज्ञापकमात्रमाह ॥ निषेधसमुच्चयेति ॥ अविलक्षणत्वं सत्यं स्यादित्यस्य सदसदात्मकत्वं सत्यं स्यादिति प्राग्व्याख्यानाच्छङ्कते ॥ ननु प्रपञ्च एवेति ॥

(वे टि) ॥ स्वाद्यमिति ॥ स्वप्ने वसन्तग्रीष्मयोर्विरुद्धयोरप्यविरोधदर्शनेन तात्त्विकयोरेव विरोध इति भाव ।

(द्वै द्यु) ॥ मिथ्यात्वेति ॥ त्वया बाधकेन तदसत्त्वं साधनीयं स च मिथ्यात्ववादित्वेन त्वयैव मया अभ्युपगत इति त्वदुक्तिर्व्यर्थैवेति भाव ॥ अन्यथेति ॥ पूर्वोक्तरीत्या सूत्रकृता नात्यन्तं चशब्दस्य व्यावर्तकतया कथञ्चित्सार्थकयितुं शक्य इत्याशयेनेदमेव ... ॥ असत्त्वस्येति ॥ तथा च तस्मानसिद्धदूषणान्तरादिवदिदमपि युक्तमेवेति भाव । पूर्वोक्तरीत्या ... पर्यवसानम-त्रापि द्रष्टव्यम् ।

पूर्वोक्तप्रतिज्ञादोषनिरासस्य हेत्वादिदोषनिरासे अतिदेश

(टी) एवमनिर्वचनीयासिद्ध्या साध्यभेदविषयविकल्पनिरासेनापसिद्धान्तादिप्रतिज्ञादोषनिरा-करणं कृतम् । एतमेव न्यायं हेत्वादिदोषनिरासे अतिदिशति ।

## एवमेव हेत्वादिष्वपि विकल्पो निराकरणीयः

अत्र हेतुशब्देन तदर्थो मुक्तत्वमुच्यते । आदिपदेन दृष्टान्तगते मुक्तत्वभिन्नत्वे गृह्येते । विषय-सप्तमी चेयम् । किमनिर्वचनीयं मुक्तत्वं हेतूक्रियते उत पारमार्थिकम् । आद्ये वाद्यसिद्धिः । द्वितीये प्रतिवाद्यसिद्धिः ।

न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ।

इति तेनाङ्गीकृतत्वात् । एवं दृष्टान्तेपि मुक्तत्वभिन्नत्वे यद्यनिर्वचनीये विवक्षिते तदा वादिनं प्रति दृष्टान्तस्य साधनादिविकलता । यदा पारमार्थिके तदा प्रतिवादिनं प्रति तथा । तत्साधने पुनः दृष्टान्तानुसरणेऽनवस्थेति । आसतामेते विकल्पदोषाः । विकल्प एवायं पुरोक्तदनिर्वचनीयासिद्ध्या निराकरणीय इति ।

नन्वत्राधिकाशङ्काभावात्किमतिदेशेन । उदाहरणभेदेनातिदेशे त्वपर्यवसानं स्यात् । सत्यम् । तथाप्येकत्रोक्तो न्यायोऽन्यत्रानुसन्धेय इति मन्दान्व्युत्पादयितुमतिदेश इत्यदोषः ।

(वि टि) इयता प्रबन्धेन प्रतिपादितानिर्वचनीयत्वनिरासेन किं फलं साधितमित्यत आह ॥ एवमिति ॥ ॥ साध्यभेदेति ॥ 'विमतो भिन्नो मुक्तत्वात्' इत्यनुमाने यः साध्यो भेदस्तद्विषयेत्यर्थः । ननु हेतुशब्दस्य पञ्चम्यन्तं तृतीयान्तं वा लिङ्गवचनमर्थः । न च तद्विकल्पस्य निराकरणस्य वा प्रकृतोपयोगोऽस्तीत्यत आह । ॥ अत्रेति ॥ अपर्यवसानमिति ॥ उदाहरणोत्तरपर्यवसानमित्यर्थः ।

(रा. टि.) प्रतिवाद्यसिद्धिं व्यनक्ति ॥ न मुमुक्षुरिति ॥ प्रतिवादिनं प्रति तथेति ॥ मायावादिनं प्रति साधनसाध्यविकलतेत्यर्थः ॥ तत्साधन इति ॥ निगडमुक्तः सत्यमुक्तत्वभिन्नत्ववान् तादृशाबाधितधीविषयत्वात् सम्मतपाशमुक्तवदिति साधन इत्यर्थः ॥ आसतामिति ॥ एतेऽसिद्ध्यादयो विकल्पदोषास्तिष्ठन्तु तावदि-त्यर्थः ॥ उदाहरणभेदेनेति ॥ एवं वा एवं वेति विकल्पनिरासस्य साध्यभूतभेद इव हेत्वादिकमपि विषयतया

(ग टि ) उदाहरणमिति विकल्पनिरासस्थानम् । तत्र सर्वत्रातिदेशः कार्य इत्युदाहरणभेदेनातिदेश इत्यर्थः । यद्वैकत्रोक्तन्याय तल्लक्षणनयोदाहरणभेदश्चिन्नेष्वतिदेश इति सामान्योक्ति ।

वे. टि ) ॥ अपसिद्धान्तादिप्रतिज्ञादोषेति ॥ आदिपदेन साध्याप्रसिद्धि । दृष्टान्तस्य साध्यवैकल्येनापि तस्या एव रूपादिति भाव । ननु स घनत्वरूप पञ्चमित्तयन्त लिङ्गवचन हेतु । तत्र च परेण विकल्पस्याकृतत्वात्तन्निराकरणायातिदेशोऽनुपपन्न इत्यत आह ॥ अत्र हेतुशब्देनेति ॥ उच्यते प्रतिपाद्यते । लिङ्गवचनवाचकेन हेतुशब्देन लिङ्ग लक्ष्यत इति यावत् । तत्र शक्यसम्बन्धोपपादनायाह ॥ तदर्थ इति ॥ एतेन धूमो हेतुरित्यादिप्रयोगोपि लाक्षणिकतयैव व्याख्यातव्य इति ज्ञातव्यम् ।

(द्वै. यु ) पञ्चम्यन्तप्रकृतिलिङ्गवचनस्यैव हेतुपदार्थतया तत्र विकल्पानवसरादाह ॥ हेतुपदेनेति ॥ मन्दानिति ॥ अन्यथा दुर्भेमनिर्वचनीयासिद्धया भेदे विकल्पानुपपत्तेरुक्तत्वेन विशिष्योक्त्या अन्यत्रेद दूषणं न घटत इति मन्दाना शङ्का स्यादित्यर्थ ।

(गु. टि ) अपसिद्धान्तादीत्यादिपदेन साध्याप्रसिद्धिपरिग्रह । लिङ्गवचनस्यादूषितत्वादाह ॥ हेतुशब्देनेति ॥ लिङ्गमुच्यते लक्षणया प्रतिपाद्यत इत्यर्थ । तदर्थ इति लक्षणाहेतुभूतशक्यसम्बन्धकथनम् । एव हेत्वादिविषये विकल्पदोषप्रकारमभिधाय तन्निरासप्रकारमाह ॥ आसतामिति ॥ नन्वत्रेति ॥ यत्र शङ्कायामाधिक्य परिहारस्य च विशिष्टत्व तत्रैवातिदेशप्रवृत्तिनियमादिति भाव ।

## मुक्तत्वहेतुना पारमार्थिकभेदासिद्धिशङ्का

(टी ) अथापि स्यात् । नानेनानुमानेन मुक्तौ भेदः सिद्ध्यति । असिद्धेः प्रमाणविरोधाच्च । तथा हि, एकस्यैव परमार्थसतः परब्रह्मणोऽनाद्यविद्याविलसितो हि जीवेश्वरजडरूपोऽयं भेदप्रपञ्चः । न परमार्थः । ब्रह्मैवाविद्यादिप्रतिबिम्बितं खलु बालैर्जीव इति ईश्वर इति चाभिलप्यते । जडप्रपञ्चस्तु स्वरूपेणैवाविद्योपादानको ब्रह्मविवर्तः । अत्र च विवादपदं मिथ्या दृश्यत्वाज्जडत्वात्परिच्छिन्नत्वात् शुक्तिरजतवत् । विमता आत्मानः परमात्मनस्तत्त्वतो न भिद्यन्ते आत्मत्वात् परमात्मवत् इत्याद्यनुमानं मानम् । 'वाचारम्भणं विकारो नामधेयम्' 'नान्योऽतोस्ति द्रष्टा' इत्यादिश्रुतिश्च । सैवाविद्या कर्तृत्वभोक्तृत्वदोषसंसर्गाध्यासप्रवाहरूपसंसारस्योपादानम् । संसारनिवर्तकेन चात्मज्ञानेनावश्यमविद्या निबर्हणीया । सति चैव बन्धस्यैव परमार्थतोऽभावात्कुतो मुक्तत्वम् । कुतो वा मुक्तौ भेदः स्यात् । बहुजीववादे भेदे विद्यमानेपि नासौ मुक्तप्रतीतिगोचर इति न तस्य नियम्यत्वोपयोगित्वम्' इति ।

(वि. टि.) ननु दृश्यत्वाद्यनुमानस्य परेण प्रागनुपन्यासात् तद्दूषणोक्तिरसङ्गतेत्यतोऽवतारयति । ॥ अथापि स्यादिति ॥ अनेन मुक्तत्वरूपेण । मुक्तत्वहेतोरसिद्धि प्रमाणबाधितत्वञ्चोपपादयितुमाह । ॥ अनाद्यविद्याविलसित इति ॥ एकस्यैवेति ॥ सजातीयविजातीयस्वगतभेदशून्यस्येत्यर्थः । अनादीत्युप-

(वि टि ) लक्षणम् । भावरूपानिर्वचनीयेत्यपि द्रष्टव्यम् । हिशब्दो हेतौ । यस्माद्देवप्रपञ्चोऽत्र ब्रह्मस्वरूपाऽवरक-तादृशविद्याविलसितस्तस्मान्न परमार्थ इत्यर्थ । ननु जडप्रपञ्चवज्जीवेश्वरयोरप्यविद्याविलसितत्वे स्वरूपेण मिथ्यात्वा-पत्तिरित्याशङ्क्याह ॥ ब्रह्मैवेति ॥ तथा च स्वरूपेणाविद्याविलसितत्वाभावेन प्रतिबिम्बादेरविद्याविलसितत्वेपि न स्वरूपेण मिथ्यात्वमिति भाव. । अविद्याप्रतिबिम्बितमित्यस्यानन्तर बिम्बमुनश्चेति शेष । बालैः मूढै । नन्वेव जडप्रपञ्चस्यापि स्वरूपेण मिथ्यात्व न स्यादित्यत आह ॥ जडप्रपञ्चस्त्विति ॥ अविद्योपादानकः अविद्यासमानसत्ताकस्तत्परिणाम इत्यर्थ ॥ ब्रह्मविवर्त इति ॥ ब्रह्मसत्तान्यूनसत्ताकोऽन्यथाभाव इत्यर्थ । 'तात्त्विकोऽन्यथाभाव परिणाम । अतात्त्विकोऽन्यथाभावो विवर्त.' इति लक्षणात् । ब्रह्मव्यतिरिक्तस्यापरमार्थत्वे किं मानमित्यत आह ॥ अत्रेति ॥ विवादपदमिति ॥ ब्रह्मासत्यत्वावभासिकाविषयकत्वेनगोचर इत्यर्थ । ॥ आत्मान इति ॥ अन्त.करणातिरिक्तत्वे सति अहमिति प्रतीयमाना जीवा इत्यर्थ· ॥ परमात्मन इति ॥ मोक्षसाधनज्ञानगोचरादित्यर्थ । व्यावहारिकमेदमादाय बाधवारणायाह ॥ तत्त्वत इति ॥ ननु कर्तृत्वभोक्तृत्वा-दिविरुद्धधर्माधिकरणत्वादभेदो बाधित एवेत्यत आह ॥ सैवेति ॥ या परमार्थसद्ब्रह्मस्वरूपाचर्गिक जीवेश्वरजडरूप-मेदप्रपञ्चरूपविलासाऽपादिका सैवेत्यर्थ । तथा च कर्तृत्वादिविरुद्धधर्मस्य कल्पितत्वेन न स्वाभाविकाभेदविरो धित्वम् । न हि कल्पितेन कार्येनाऽकाशस्य स्वाभाविककूटस्थता विहन्यत इति भाव· । ननु यद्यविद्यैव कर्तृ-त्वादिरूपसंसारस्योपादान तदा आत्मज्ञानेन ससारनिवृत्तावपि अविद्यानुवृत्त्या पुनस्तादृशसंसार स्यादित्यत आह ॥ संसारनिवर्तकेन चेति ॥ 'तरति शोकमात्मवित्' इत्यादिना संसारनिवर्तकत्वेन सिद्धात्मज्ञानस्यैव

विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं क करिष्यति ॥

इत्यादिना अज्ञाननिबर्हणत्वेनापि सिद्धत्वात् तादृशसंसारनिवृत्तेश्च स्वोपादानभूताज्ञानात्यन्तिकनिवृत्ति विना अयोगात् तन्निवृत्तिरपि अज्ञाननिवृत्तिद्वारैव वाच्या । न साक्षात् । तथा च संसारनिवर्तकज्ञानमेवाविद्यानिवर्तक-मिति नाज्ञानानुवृत्त्या पुन· संसारापत्तिरिति भाव ।

ननु बन्धस्य मिथ्यात्वेपि तदभावलक्षणमुक्तत्वं वा मुक्तौ तत्प्रयुक्तमेदो वा पारमार्थिक किं न स्यादि-त्यत आह ॥ सति चैवमिति ॥ परमार्थतो बन्धस्यैवाभावे मुक्तेरप्यभाव एव । मुक्तेर्बन्धसत्तापूर्वकत्वनियमात् । न हि कदापि वस्तुतो निगडासम्पृष्टस्ततो मुक्त इत्युच्यते । न वा मेदकधर्मस्य मिथ्यात्वे मेद सत्य । अङ्गुल्य-वष्टब्धचक्षुषा चन्द्रे विरुद्धधर्मोपलम्भेपि भेदस्य सत्यत्वादर्शनादिति भाव ॥ नासाविति ॥ मेदप्रतीतिमात्रस्य अज्ञानमूलतया मुक्तस्य चाज्ञानाभावेन तत्प्रतीत्यसम्भवादिति भाव ।

यद्यपि स्वानियम्यपित्रादिभिन्नतया ज्ञानरहिते सुप्ते शिशौ तन्नियम्यत्वमिव मुक्ते ईश्वरभिन्नत्वज्ञानराहित्येपि तन्नियम्यत्वमुपपद्यते तथापि पित्रादेरिवेश्वरस्याज्ञानविधुरतया मेदप्रतीत्यसम्भवेन नियामकत्वस्यासम्भवात्तन्नियम्य-त्वमपि मुक्ते असम्भवीति भाव· ।

(ग. टि.) **विलसितः** प्रतिभातः। अविद्यादीत्यादिपदेन परव्यामोहनकरमायाग्रहः। अविद्या तु स्वाश्रयव्यामोहनकरीति ज्ञेयम्। **ब्रह्मविवर्तः** ब्रह्मण्यारोपितः। अत्रेत्यस्येत्यनुमानमित्यादिश्रुतिश्चेत्यन्वयः। मानमिति शेषः ॥ **विवादेति** ॥ सत्यत्वमिथ्यात्वाभ्यां विवादस्थानं ब्रह्मासत्प्रातिभासिकेभ्योऽन्यज्जगदित्यर्थः। व्यावहारिकभेदेन बाधवारणाय तत्त्वत इत्युक्तिः। वाचेत्यादिश्रुत्यर्थस्तत्रमे व्यक्तः। बन्धमिथ्यात्वेन मुक्तत्वहेतोरसिद्ध्युपपादनाय न परमार्थ इत्यन्तोक्तिः। तद्घटनाय विलसित इत्यन्तोक्तिः। जीवादेरनादित्वघटनाय अनाद्यविद्येति। तदुपपत्तये तदाश्रयत्वाय ब्रह्मण इत्यन्तोक्तिः। जीवेश्वरस्वरूपयोरप्यपरमार्थत्वशङ्कानिरासायाभेदोपपादनाय च ब्रह्मैवेत्यादिग्रन्थः। श्रुतिश्चेत्यन्तेन प्रमाणविरोधोक्तिः। नन्वस्तु भेदप्रपञ्चोऽपरमार्थः। तावता कथं मुक्तत्वहेतोरसिद्धिः। बन्धस्य सत्यत्वादित्यत आह ॥ **सैवाविद्येति** ॥ **दोषेति** ॥ रागद्वेषदुःखादिदोषेत्यर्थः। अध्यासेत्युक्तया कर्तृत्वादिधीर्भ्रान्तिरित्युक्तं भवति। अविद्याया असत्त्वोपपादनाय **संसारनिवर्तकेनेत्यादि** ॥ **मुक्तप्रतीनीति** ॥ मुक्तपदेन नियामकस्य परमात्मनोऽपि ग्रहणादेवमुक्तम् ॥ **नियम्यत्वेति** ॥ आद्यपद्योक्तनियम्यत्वघटनायैवात्र भेदसाधनादिति भावः।

(वे. टि.) ॥ **एकस्येति** ॥ सजातीयविजातीयस्वगतभेदशून्यस्येत्यर्थः। अनादीत्युपलक्षणम्। भावरूपानिर्वचनीयेत्यपि द्रष्टव्यम्। हिशब्दो हेतौ। यस्माद्ब्रह्मस्वरूपावरकतादृशाविद्याविलसितं तस्मान्न परमार्थ इति। अविद्याविलसितत्वं त्रयाणां नैकप्रकारमित्याह ॥ **ब्रह्मैवेत्यादि** ॥ प्रतिबिम्बितमित्यस्यानन्तरं बिम्बभूतं चेति शेषः। बालैरज्ञैः। **अविद्योपादानकः** अविद्यासमानसत्ताकस्तत्परिणाम इति यावत् ॥ **ब्रह्मविवर्त इति** ॥ ब्रह्मसत्तान्यूनसत्ताकोऽन्यथाभाव इत्यर्थः। 'तात्त्विकोऽन्यथाभावः परिणामः। अतात्त्विकोऽन्यथाभावो विवर्तः' इति तल्लक्षणात्। ब्रह्मव्यतिरिक्तस्यापारमार्थिकत्वे किं प्रमाणमित्यत आह ॥ **अत्रेति** ॥ **विमता आत्मान इति** ॥

नन्वत्र पक्षतावच्छेदकं न तावदात्मत्वम्। परमात्मनोऽपि पक्षत्वापत्त्या अंशे सिद्धसाधनत्वात्। नापि परमात्मेतरात्मत्वम्। पक्षतावच्छेदकस्य साध्येन सह विरोधात्। अत एव न परमात्मेतरतया प्रमीयमाणत्वं तथा। नापि भ्रान्त्या परमात्मेतरतया प्रतीयमानत्वम्। जडस्यापि पक्षत्वापत्त्या हेतोरसिद्ध्यापत्तेः। नापि तथा प्रतीयमानात्मत्वम्। परमात्मन्यपि परमात्मेतरत्वभ्रान्तिसम्भवेन तस्यापि पक्षतापत्तावंशतः सिद्धसाधनतातादवस्थ्यादिति चेन्न। परमात्मनो भिद्यन्ते न वेति विप्रतिपत्तिगोचरत्वस्यैव पक्षतावच्छेदकत्वात्। तदेतदाह ॥ **विमता इति** ॥ अन्यथा तवापि परमात्मनः परमार्थतो भिद्यन्त इति भेदसाधनस्याप्यसम्भव इति भावः।

व्यावहारिकभेदस्य स्वमते सिद्धत्वाद्बाधः। तत्परिहारायाह ॥ **तत्त्वत इति** ॥ अत्र मिथ्यात्वसाधकानुमानागमौ स्वरूपासिद्ध्युपपादनोपयुक्तौ। अभेदसाधकौ तु प्रमाणविरोधप्रदर्शनायेति ज्ञातव्यम्। ननु कर्तृत्वभोक्तृत्वादिरूपविरुद्धधर्माधिकरणत्वाद्भेदो बाधित एवेत्याशङ्क्याह ॥ **सैवेति** ॥ तथा च कर्तृत्वादिरूपविरुद्धधर्मस्य कल्पितत्वेन स्वाभाविकाभेदविरोधित्वं नेति भावः। ननु यद्यविद्यैव कर्तृत्वादिरूपसंसारस्योपादानं तदात्मज्ञानेन संसारनिवृत्तावप्यविद्यानुवृत्त्या पुनस्तादृशसंसारः स्यादित्यत आह ॥ **संसारनिवर्तकेन चेति** ॥

(वे टि ) विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥

इत्यादिश्रुत्याऽज्ञाननिवृत्तिद्वारेणैवात्मज्ञानस्य संसारनिवर्तकत्वश्रवणात् 'तरति शोकमात्मवित्' इत्यादावपि स एवार्थ इति भाव । ननु बन्धस्य मिथ्यात्वेपि तदभावलक्षणं मुक्तत्वं मुक्तौ तत्प्रयुक्तभेदो वा पारमार्थिकः किं न स्यादित्यत आह ॥ सति चैवमिति ॥

परमार्थतो बन्धस्यैवाभावे मुक्तेरप्यभाव एव । मुक्तेर्बन्धसत्तापूर्वकत्वनियमात् । न हि कदापि वस्तुतो निगडासंस्पृष्टस्ततो मुक्त इत्युच्यते । न वा भेदकधर्मस्य मिथ्यात्वे भेदः सत्य । अङ्गुल्यवष्टब्धचक्षुषा चन्द्रे विरुद्धधर्मोपलम्भेपि भेदस्य सत्यत्वादर्शनादिति भाव इत्याहु ।

वस्तुतस्तु 'बन्धस्यैव परमार्थतोऽभावात्' इति 'कुतो मुक्तत्वम्' इत्यत्रैव हेतु । 'कुतो वा मुक्तौ भेदः स्यात्' इत्यत्र तु 'जीवस्यैकत्वेन तन्मुक्तौ कस्याप्यनवशेषेण प्रतियोगिन एवाभावात्' इति हेतुर्द्रष्टव्य । अत एवाह ॥ बहुजीववाद इति ॥ भेदस्याऽविद्यकत्वेन निवृत्ताविद्ये मुक्ते न तत्प्रतीतिरित्याशयेनाह ॥ नामाविति ॥

(द्वै द्यु.) अथापि भेदे विकल्पपूर्वकदूषणस्य पूर्वोक्तक्रमेण निरासेपि । स्यात् वक्ष्यमाणं सम्भावित-मित्यर्थ । यद्यप्यनिर्वचनीयप्रसिद्धिनिराकरणेनैव दृश्यत्वाद्यनुमानान्यपि पूर्वोक्तरीत्या दूषितप्रायाण्येव तथापि तस्यैव स्फुटीकरणपूर्वकमधिकदोषप्रदर्शनपरोत्तरग्रन्थसन्दर्भोत्थापनायाभ्युपगमवादेनापातत शङ्काप्रदर्शनमित्यदोष । तत्र मुक्तत्वहेतोरसिद्ध्युपपादनाय ब्रह्मातिरिक्तस्य मिथ्यात्वमुपपादयिष्यन् प्रक्रियामाह ॥ एकस्यैवेति ॥ सजातीय-विजातीयस्वगतभेदत्रयरहितस्येत्यर्थ । अथ वा 'एकस्यैव परमार्थसतः' इत्यस्य स्वभिन्नपरमार्थसद्रहितस्येत्यर्थः । कुत-स्तदन्यस्यापारमार्थिकत्वमित्यत आविद्यकरजतादीनां तथा दर्शनादित्याशयेन प्रपञ्चस्याऽविद्यकत्वमुपपादयति ॥ अना-दीति ॥ आत्माश्रयानवस्थादिपरिहारायेदं ॥ जीवेश्वरेति ॥ तयोरपि तद्धर्मोपहितरूपेण मिथ्यात्वमिति द्रष्टव्य ॥ भेद इति ॥ भिद्यत इति व्युत्पत्त्या भेदवत्परम् । सर्वस्य स्वरूपतो मिथ्यात्वे घटादीनामिव स्वरूपतोऽपि मुक्त्यन्वयाभावापत्त्या शास्त्रस्य निरधिकारिकत्वं स्यात् । एवं 'उत्तम' पुरुषस्त्वन्य.' इत्युक्तेश्वराभावे तदुपासना-विधीनां निर्विषयत्वं च स्यादित्यत आह ॥ अविद्यादीति ॥ आदिना शुद्धसत्त्वात्मकमायाग्रहणम् । तथा चाविद्याप्रतिबिम्बो जीव । मायाप्रतिबिम्ब ईश्वर इत्यर्थ । यद्यप्यन्येपि परोक्ता' प्रकारा सन्ति तथापि वक्ष्य-माणदूषणानां सर्वपक्षेऽपि साम्यात् 'न च मायाविना माया' इत्यादिवचनद्वयोदाहरणेनाऽन्यार्यैरेतत्पक्षस्यैव निराकरिष्यमाणत्वाच्चोपलक्षणत्वेन कश्चिदेक पक्षो दर्शित । बालैः अनिवृत्ताविद्यैः । ब्रह्मविवर्तः स्वबाधाव-धित्वे सति स्वप्रतियोगिकतादात्म्यानुयोगि यद्ब्रह्म तत्र प्रतीयमान इत्यर्थः । 'अस्वाभाविकान्यथाभावो विवर्तः । इत्यादितदुक्तेरत्रैव पर्यवसानात् । अविद्योपादानक इत्यस्य तत्परिणाम इत्यर्थः । स्वाभाविकान्यथाभावस्यैव परिणामत्वेनोक्तत्वात् । स्वबाधानवधि स्वप्रतियोगिकतादात्म्यानुयोगि यत्तज्जन्यत्वं तत्परिणामत्वमिति निष्कर्ष' । उभयानुगतोपादानत्वं तु स्वतादात्म्यवत्कार्यजनकत्वं ज्ञातव्यम् ॥ विमता आत्मान इति ॥ अत्र जीवपदवाच्यत्वं

(द्वै सु) वोपलक्षणविषया दुःखित्वादिकं वा पक्षतावच्छेदकम्। अवच्छेदकावच्छेदेन साध्यमभिलषितं ॥ परमात्मन इति ॥ सर्वज्ञत्वाऽश्रयचेतनादित्यर्थः। भेदस्य स्वरूपतो निषेधाभावपक्षे बाधवारणाय तत्त्वत इति। पारमार्थिकत्वेनेत्यर्थः। न्यधिकरणधर्मावच्छिन्नाभावोऽयम्। अतो न बाध ॥ आत्मत्वादिति॥ व्यक्तीनां कल्पितत्वसमानसत्ताकभेदवत्त्वेनाऽऽत्मत्वजातिः पक्षदृष्टान्तयोरस्तीति भाव। मिथ्यात्वे अभेदे च क्रमात् श्रुतिद्वयमनुसन्धेय॥ नान्योत इति ॥ अतः अन्तर्यामितया प्रकृतात् ब्रह्मणः सकाशात् अन्यो भिन्नो द्रष्टा जीवो न भवतीत्यर्थः।

ननु मायारूपाविद्योपादानकपदार्थानां मायिकपदार्थान्तरवन्मिथ्यात्वेऽपि कर्तृत्वभोक्तृत्वादीनां आत्मना सह प्रतीयमानानां आत्मस्वरूपवत्सत्यत्वेऽद्वैतानुपपत्तिर्दुर्वारैव। न हि कर्तृत्वादिकमपि मायिकमिति युज्यते। लोके मायया बहिष्ठानामेव पदार्थानां उत्पत्तिदर्शनेन साक्षिसिद्धे मायाजन्यत्वानुपलम्भात्। मायिकपदार्थदर्शनादिना सुखदुःखाद्युत्पत्तावपि तत्र दर्शनस्यैव हेतुत्वेन मायाया अहेतुत्वात्। अन्यथा मायिकसर्पादेरिव सुखादावपि बाधादयप्रसङ्ग इत्यत आह ॥ सैवेति ॥ यः विक्षेपशक्तिविशिष्टा ईश्वरोपाधिभूता मायेत्युच्यते सैवावरणविक्षेपशक्तिविशिष्टा सती अविद्यापदाभिधेया जीवोपाधि। तद्भेदे मानाभावादिति भाव। न चैकमुक्तौ सर्वमुक्त्यापत्ति। तत्तज्जीवावरणशक्तिविशिष्टाऽविद्यानिवृत्तेरेव मोक्षत्वोपगमेनोक्तदोषाभावात्। न चाविद्यायाः स्वरूपत कदापि निवृत्त्यभावप्रसङ्गेनाऽन्यत्वपारमार्थिकत्वापत्तिरिति वाच्यम्। एतन्मते संसारप्रवाहस्यानन्त्यत्वानभ्युपगमेन चरमजीवमुक्तिदशायामेव समस्तशक्तिविशिष्टस्वरूपस्यैव निवृत्तिसद्भावात्। ईश्वरीयमायावृत्त्याद्यात्मकज्ञानानामपि जीवादृष्टाधीनत्वेन जीवाभावे तदीयजगत्सृष्ट्यादेरप्यभावेन तदुपाधिमायाया अपि विलयेनेश्वरस्यापि निवृत्तेरङ्गीकारादिति बोध्यम् ॥ कर्तृत्वेत्यादि ॥ अत्राविद्योपादानकान्तःकरणनिष्ठमेव कर्तृत्वादिकम्। तादृशान्तःकरणतादात्म्यस्य आत्मन्यध्यासे तद्धर्मभूतकर्तृत्वादिसंसर्गस्यात्मन्यध्यासेनाहं कर्तेत्यादिव्यवहारादय उपपद्यन्ते। भीषणत्वादिविशिष्टसर्पस्य रज्जौ तादात्म्याध्यासे तदीयभीषणत्वादिधर्मसंसर्गाध्यासादिदं भीषणमित्यादिव्यवहारवदिति एक पक्ष। अन्तःकरणवृत्तिकर्तृत्वायतिरिक्तमात्मनि कर्तृत्वाद्यन्तरं तत्प्रतिबिम्बभूतमध्यस्यते। स्फटिकमणौ जपाकुसुमसन्निधानाल्लौहित्याध्यासवदित्यपर पक्ष। अत्र प्रथमकल्पाभिप्रायेणेदम्।

यद्वा दोषाश्च तत्ससर्गाश्चेत्यर्थाश्रयणे पक्षद्वयस्यापि सङ्ग्रह। अविद्योपहितचैतन्यस्यैव साक्षिरूपतया साक्षिचैतन्यभास्याणामपि तेषां ग्रह अविद्योपहितसाक्ष्यात्मक एवाध्यास। तस्यापि मिथ्यात्वात्तदुपादानमज्ञानं भवतीत्यविद्यायास्तादृशाध्यासोपादानत्वमुक्तम्। विषयोपहितरूपेणोत्पत्तिविनाशशालित्वात्प्रवाहत्वोक्तिर्युक्ता।

यद्वा कर्तृत्वाद्यशोऽप्यविद्यावृत्ति स्वीक्रियत इति मते तस्यैवाध्यासरूपत्वात्तत्प्रत्यविद्योपादानं भवत्येवेति भावः। अविद्या शक्तिविशेषविशिष्टाविद्या। निवर्हणीया तत्तज्जीवाद्यावर्तनीया। जीवस्यैकत्वपक्षे निवर्तनीयेत्यर्थः। अविद्याया निवृत्ताया तदुपादानकः ससार स्वयमेव विलीयत इति भाव। अत्र विश्वमिथ्यात्वप्रसिद्धिर्निर्वाहकम्। मोक्षेऽपि विद्यमानस्य मिथ्यात्वायोगात्प्रमाणबाधोपपादकं चेत्युभयोपपादकं विश्वमिथ्यात्वानुमानम्। मुक्तात्मनि परमात्मभेदसाधनपक्ष एव साक्षात्प्रमाणबाधसम्पादकं द्वितीयमनुमानम्। तत्र परमात्मभेदत्वेनैव साध्य-

(द्वै. सु.) तायामपि पारमार्थिकत्वेन तदवगाहित्व प्रमाणानां स्याभान्यादिति भेदसाधको मनुते । तत्र पारमार्थिकत्वेन तादृशभेदाभावधीर्विरोधिनी भवत्येव । उत्पत्त्यानुमिताप्रामाण्यग्राहकतया बाधकत्वेना त्वनुमानद्वयस्यापीति द्रष्टव्यम् । तथापि प्रकृते कथमसिद्धत्वादीत्यनन्तदुपपद्यत इति ॥ मति चैवमिति ॥ उक्तभेदस्य प्रामाणिकत्वेन दार्ढ्ये सतीत्यर्थ ॥ बन्धस्यैवेति ॥ दु खादेरित्यर्थ ॥ कुतो मुक्तत्वमिति ॥ त्रैकालिकनिषेधप्रतियोगित्व उत्तरकालमात्रवृत्त्यभावरूपध्वंसप्रतियोगित्व योगेन बन्धध्वंसरूपमुक्तत्वस्यरूपमेवासिद्धम् । यदि बन्धसंसर्गाभाववत्त्व तदापि तस्यासिद्धिरेव । शुद्धाद्वैताङ्गीकारेण मुक्तिदशाया तस्याप्यभावात् । केवलमिदानीं बद्धपुरुषकल्पितधर्मपुरस्कारेण व्यवहारकरणेऽपि नेषा भवदभिमतपारम थिकभेदसाधनाङ्गत्वादिति भाव ॥ कुतो वा मुक्तौ भेदः स्यादिति ॥ सिद्धयेदित्यर्थ । उक्तरीत्या बाध इति भाव: ।

ननु जीवस्याविद्याप्रतिबिम्बत्वपक्षेऽपि यैर्बहुजीववाद एवाश्रित अन्त करणोपाधिकत्वेन च बहुजीववादो वा तन्मते बद्धमुक्तव्यवस्थाया सत्त्वात्कथं प्रमाणबाध इत्यत आह ॥ बहुजीवेति ॥ भेद इति ॥ मुक्तप्रतियोगिकभेदे संसारिणि ईश्वरे च विद्यमानेऽपीत्यर्थ । न तु [1]मुक्तभेदे विद्यमानेऽपीत्यर्थ । मुक्ते भेद धिष्ठानत्वादिधर्मस्यायोगात ॥ मुक्तप्रतीतिगोचर इति ॥ मुक्तविशेष्यकप्रतीतिगोचर इत्यर्थ । तथा च बाध एवाऽऽश्रयतासम्बन्धेन साधन इति भाव । ननु मुक्ते तदभावेऽपि नियामकेश्वरे [2]तत्सत्त्वभावेनैव तस्य नियामकत्वसम्भवेन भेदाक्षेपपूर्वकत्येश्वरनिष्ठमुक्तनियामकत्वक्षेपस्य बहुजीववादे असम्भवादेकजीवमत एव भेदसामान्यविलयेन नियामकत्वाक्षेपसम्भवादुक्तानुमानं तन्मत एव सम्भवतीति कथं बहुजीववादाङ्गीकारेण दूषणदानमित्यत आह ॥ न तस्येति ॥ भेदाभावेन मुक्ते नियम्यत्वस्य तन्नियतस्याभावात्तत्सापेक्षनियामकत्वमपीश्वरे न घटत एवेति तन्मतेऽपि मुक्तभेदाभावेन नियामकत्वाक्षेपसम्भवात्तच्छङ्कापरिहाराय बहुजीववादेऽपि मुक्ते भेदसाधनस्याऽवश्यकत्वात्तत्र बाधोद्भावन युक्तमेवेति भाव: ।

अन्ये तु भेदे विद्यमानेऽपीति बद्धपुरुषकल्पिते स्वप्रतियोगिके ईश्वरप्रतियोगिके च भेदे विद्यमानेऽपीत्यर्थ । तथा च कथं बाध । भेदमात्रस्य ईश्वरभेदमात्रस्य वा पारमार्थिकत्वाविशेषितस्य साध्यत्वात्तत्र पारमार्थिकत्वेन भेदाभावसाधकस्याबाधकत्वादिति भाव ॥ नामाविति ॥ मुक्तप्रतीतिगोचर इति ॥ मुक्तनिष्ठप्रतीतिगोचर इत्यर्थ । मास्त्वित्यत आह ॥ न तस्येति ॥ तथा चेदानीं नियम्यत्वोपयोगिभेद एव विप्रतिपत्तौ उक्तभेदसाधनस्य सिद्धसाधनार्थान्तरादिग्रस्ततया तद्वारकविशेषणपुरस्कारेण पारमार्थिकभेद एव साध्य । अतस्तस्य बाधो युक्त एवेति भाव ।

न च भेदे मुक्तवृत्तिप्रतीतिविषयत्वाभिधानमनुपयुक्त किमर्थमुच्यते । न हि नियम्यस्य वस्तुनो नियामकभेदवत्त्वेन स्वज्ञानं नियम्यतायामुपयोगि । तथात्वे जडस्यानियम्यत्वापत्तेरिति वाच्यम् । स्वसमानसत्ताकभेद एव तत्रोपयोगी । अन्यथा मैत्रकल्पितेन चैत्रनिष्ठतया भासमानचैत्रभेदेन चैत्रस्य स्वनियम्यतापातात् । तथा च मुक्ते

[1] मुक्ते भदे इति पाठेन भाव्यमिति भाति

[2] तत्सत्त्वेनैव तस्य इति पाठेन भाव्यमिति भाति.

(टि. गु.) बद्धपुरुषाणां प्रतीयमानभेदः न तत्समसत्ताकः । तथात्वे तस्य पारमार्थिकत्वापत्त्या मुक्तस्य स्वानन्दादि-वदनावृतत्वं स्यात् । तथा च न तत्समसत्ताक इत्यत्र तात्पर्यम् ।

यद्वा जडानां स्वरूपसत्तामात्रे नियम्यत्वासम्भवेऽपि [1]चेतने तस्य तदभावाद्व्यापारविशेषादिषु तेन नियम्यत्वं वाच्यम् । तच्च चेतने स्वस्य नियामकाद्भिन्नत्वेनोत्कृष्टसत्त्वेन व्याप्तमेवोपलब्धमिति व्यापकाभावोपपादनाय तस्य सार्थक्यमित्याहुः ।

(गु. टि.) तदुभयं कथमित्यत्र तदुपपादयितुमाह ॥ तथा हीति ॥ एकस्यैवेति ॥ सजातीयविजातीय-स्वगतभेदशून्यस्येत्यर्थः । अन्योन्याश्रयत्वप्रसङ्गवारणाय परमार्थमतः इत्युक्तम् । हिशब्दो हेतौ । यस्मादविद्या-कल्पितत्वं तस्मादपरमार्थ इति । अविद्याविलसितत्वं त्रयाणामपि नैकप्रकारमित्याह ॥ ब्रह्मैवेति ॥ अविद्योपादा-नक इति ॥ अविद्यासमानसत्ताकस्तत्परिणाम इति यावत् ॥ ब्रह्मविवर्त इति ॥ [2]ब्रह्मसत्ताशून्यसत्ताकोऽन्यथा-कार इत्यर्थः । ब्रह्मव्यतिरिक्तस्यापारमार्थिकत्वे किं प्रमाणमित्यत आह ॥ अत्रेति ॥ अत्र स्वरूपासिद्ध्युपपाद-नाय मिथ्यात्वसाधनं कृतम् । प्रमाणविरोधव्युत्पादनाय भेदाभावसाधनम् । उपाधिप्रतिपक्षग्रस्ततया मिथ्यात्वानु-मानस्य भेदाभावसाधकानुमानस्य चाऽऽभासताशङ्कापनोदाय तदनुग्राहकतयोभयत्र क्रमेण श्रुत्युदाहरणं कृत-मिति द्रष्टव्यम् ।

ननु [3]कर्तृत्वभोक्तृत्वाद्यध्यासरूपबन्धस्याविद्योपादानकत्वानुक्त्या अपारमार्थिकत्वाभावेन वास्तवतया ततो मुक्तत्वस्याभावात् कथं तदसिद्धिरित्यत बन्धस्याप्यविद्योपादानकत्वेनापारमार्थिकत्वेन वास्तवत्वाभावात्ततो मुक्तत्वाभावेन मुक्तत्वहेत्वसिद्धिरवर्जनीयेत्याह ॥ सैषेति ॥ यद्विलसितो जीवेश्वरजडरूपः प्रपञ्चः सैषेत्यर्थः ।

ननु निवर्तकशून्यत्वेनाविद्याया निवृत्त्यसम्भवात् तदुपादानकस्य कर्तृत्वभोक्तृत्वाद्यध्यासरूपबन्धस्य निवृत्तिः स्यादित्यत अविद्याया आत्मज्ञाननिवर्त्यत्वेन तन्निवृत्तौ बन्धस्याप्यवश्यं निवृत्तिसम्भवान्न तन्निवृत्त्यनुपपत्तिरिति भावेनाविद्यानिवृत्तौ बन्धनिवृत्तिमुपपादयिष्यन् अविद्यानिवृत्तिं निवर्तकात्त्योपपादयति ॥ संसारनिवर्तकेनाऽऽत्म-ज्ञानेनेति ॥ नन्वस्तु बन्धस्याविद्योपादानकत्वम् । किमेतावता सिद्धमित्यत 'असिद्धेः प्रमाणविरोधाच्च' इति प्रतिज्ञातं दोषद्वयं सिद्धमित्याशयेन तदुपपादयति ॥ सति चैवमिति ॥ बन्धस्याविद्योपादानकत्वे अविद्यायाश्चा-ऽऽत्मयाथात्म्यज्ञानेन निवर्त्यत्वे सिद्धे सतीत्यर्थः ।

मुक्तपरमात्मनोर्भेदस्य बहुजीववादिमते सत्त्वात्तन्मतेऽपि नियम्यनियामकभावोपपत्तेर्न भेदाभावेन तदाक्षेपो युक्त इत्यत सत्यं, बहुजीववादिमते भेदोऽस्ति तथापि नासौ मुक्तप्रतीतिगोचरः । यथा हि लोके अनेकेषु मायामयान् गजतुरगादीन् पश्यत्सु यस्य कारणविशेषेण माया अपगच्छति स एव तान्न पश्यति । अन्ये तु पश्यन्त्येव । एवं यस्य द्वैतदर्शनकारणमज्ञानमपगतं स एव तन्न पश्यति । अन्येषां तु भेदादिदर्शनं वर्तत एवेति

[1] चेतने तदभावात् इति पाठेन भाव्यमिति भाति । [2] ब्रह्मसत्तान्यूनसत्ता इति पाठेन भाव्यमिति भाति ।
[3] कर्तृत्वाभाववति कर्तृत्वा इति पाठेन भाव्यमिति भाति ।

मुक्तत्वहेतुना पारमार्थिकभेदासिद्धिशङ्का

(गु.टि.) भेदस्य मुक्तप्रतीतिगोचरत्वाभावस्य तन्मते अन्यत्र व्युत्पादितत्वात् भेदसद्भावमात्रेण नियम्यनि भावो युक्त इति युक्त एव तदाक्षेप इत्याह ॥ बहुजीववाद इति ॥

पूर्वोक्तशङ्कानिरासार्थं मिथ्यात्वादिसाधकानुमाने पूर्वोक्तदोषातिदेशः

(टी) तत्र तावदनुमाननिगमायोक्तदोषानतिदिशति

दृश्यत्वाद्यनुमानेष्वप्येत एव दोषाः

'विवादपदमनिर्वचनीय बाध्यत्वात्' इत्यादेर्येऽप्रसिद्धविशेषणत्वादयो दोषा उक्ता दृश्यत्वाद्यनुमानेष्वपि द्रष्टव्याः ।

तथा हि, मिथ्याशब्देनानिर्वचनीयत्वमुच्यते असत्त्वं वा । नाद्यः । अप्रसिद्धविशेषण_ तात् । न द्वितीयः । अपसिद्धान्तप्रसङ्गात् । अथानिर्वचनीयासतोः समान मिथ्यात्वम् । तां अनुमानेन सिद्धेऽसत्त्वे च बाधितेऽनिर्वाच्यतासिद्धिरिति चेन्न । मिथ्यात्वसामान्यस्योभयग पक्षस्याभावात् । सद्विवेकस्य मिथ्याभावस्य साध्यत्वात्साप्रसिद्धविशेषणता नापसिद्धान्तोऽपीति किमिदं सत् । जातिर्वा जातिमद्वा स्वरूपसद्वा । प्रथमद्वितीययोः सद्धेतुत्वापत्तिः । तृतीये ब्रह्म सयाप्यङ्गीकृतत्वात्सिद्धसाधनता भेदनिराकरणानुपपत्तिश्च । बाध्यत्वं मिथ्यात्वमिति चेन्न मपि हि तेषां मिथ्या । सत्यत्वे दृश्यत्वादीनां तैरेवानैकान्त्यापातात् । दृश्यत्वाद्यभावे च द्यापत्तेः । बाध्यत्वस्य च मिथ्यात्वे अबाध्यत्वमेव सत्यं स्यात् आत्मवत् । किं च ६ सत्याश्चेन्मायावादिनोऽसिद्धाः । तैरेवानैकान्त्यं च । यद्यसन्तोऽनिर्वाच्या वा तदा तत्ववादिन न च सत्यासत्ययोर्दृश्यत्वादिसामान्यमुभयसम्प्रतिपन्नमस्तीत्येषा दिक् ।

(वि टि) ॥ तत्रेति ॥ उक्तेषु प्रमाणत्वाभिमतेष्वित्यर्थः । तावच्छब्दः क्रमार्थः । [1]किं दृश्यत्वाद्यनुमानेषु द्रष्टव्या इत्याकाङ्क्षाया व्याचष्टे ॥ विवादपदमिति 'मिथ्याशब्दो ह्यर्थे । अ ऽनिर्वचनीयवचनश्च' इति पञ्चपादिकोक्तेर्दूषणसौकर्याय विकल्पयति ॥ मिथ्याशब्देनेति ॥ ग शङ्कते ॥ अथेति ॥ असच्छब्दस्याल्पाच्त्वेपि अनिर्वचनीयशब्दस्याभ्यर्हितत्वेन अनिर्वचनीयासतोरिति ॥ असत्त्वे चेति ॥ प्रतीतत्वहेतुना असत्त्वे निरस्त इत्यर्थः । गूढाभिसन्धिरेव दूषयति ॥ मिथ्य शङ्क स्वाशयमुद्घाटयति ॥ सद्विवेकस्येति ॥ सद्भिन्नत्वस्येत्यर्थः । मिथ्याभावस्य मिथ्यात्वस्य । अ न्यायेनासत्त्वे प्रतिक्षिप्तेऽनिर्वचनीयत्वसिद्धिरिति भाव ॥ तृतीय इति ॥ स्वरूपतो जात्यादिसम्बन्धं सदिति पराभ्युपगमादिति भाव ॥ बाध्यत्वमिति ॥ मिथ्यात्वं बाध्यत्वमिति चेदिति सम्बन्ध अबाध्यं बाध्यं वा । आद्येपि किं तद्ब्रह्ममात्रमतिरिक्तं वा । नाद्य । सोपाधिकस्य तस्य निरुपाधिक योगादित्याद्य बहिरेव निरस्य द्वितीय निराचष्टे ॥ बाध्यत्वमपीति ॥ तथा च सत्यभूतस्य तस्य ब्र

[1] के ते दोषा इति पाठेन भाव्यमिति भाति,

ङ्गीकारेऽपसिद्धान्त इति भाव । किञ्च सत्यमपि बाध्यत्वं दृश्यमदृश्यं वा । आद्य आह ॥ **सत्यत्व** । **दृश्यत्वाद्यभावे चेति** ॥ अनुमितिरूपसिद्धिविषयत्वस्यैव साध्यत्वादिति भाव । अनुमानस्य साध्यप्र- वेन बाध्य वस्याहृश्यत्वे अनुमानवैयर्थ्यमादिशब्दार्थ । नान्त्य इत्याह ॥ **बाध्यत्वस्येति** ॥ **आत्मवदिति** ॥ ध्यात्ववदित्यर्थ ॥ **अनैकान्त्यं चेति** ॥ दृश्यत्वादीनामदृश्यत्वे हेतोरङ्ग न सिद्धिरिति ध्येयम् ।

ननु यथा महानसीयपर्वतीयधूमसाधारणधूमत्वावच्छिन्नत्वेन धूमस्य हेतुत्वं तथा सत्यासत्यदृश्यत्वादि- श्यत्वजडत्वत्वावच्छिन्नत्वेनैव हेतुत्वसम्भवान्नोक्तविकल्पावकाश । अन्यथा धूमादावपि किमेतद्देश- गो धूमो हेतुर्नेतद्देशकालसम्भो वा । नाद्य । दृष्टान्तस्य साधनवैकल्यापत्ते । न द्वितीय । स्वरूपा- त्ते इत्यादिदूषणसम्भवेनानुमानमात्रोच्छेदप्रसङ्गादित्याशङ्क्य निराकरोति ॥ **न चेति** ॥ दृश्यत्वादि य दृश्यत्वादीनां सामान्यम् ।

(ग टि) उभयसाधारणमिथ्यात्वसाधने [1]कथमसिद्धिरित्यत आह ॥ **तस्मिन्निति** ॥ **उभयेति** ॥ वादि- त्यर्थ । तथा चाप्रसिद्धविशेषणतैवेत्यर्थ ॥ **मिथ्याभावस्येति** ॥ मिथ्यात्वस्येत्यर्थ. । **किमिदं सदित्य** । **भेदनिराकरणेति** ॥ भेद भेदिभ्यां भिन्नोऽभिन्नो वेत्यादिना स्वग्रन्थे यद्भेदनिराकरणं तस्य सद्वैल दाङ्गीकारव्याघातेनानुपपत्तेरित्यर्थ. ॥ **असाध्यत्वाद्यापत्तेरिति** ॥ दृष्टयर्थत्वात्साध्यताया इति भाव । **असेव सत्यं स्यादिति** ॥ अनिर्वचनीयत्वस्य निरस्तत्वेन मिथ्येत्यस्यासदित्यर्थकत्वादिति भाव । **नान्त्यं चेति** ॥ दृश्यत्वजडत्वपरिच्छिन्नत्वात्मत्वेषु दृश्यत्वादिहेतुषु सत्स्वपि मिथ्यात्वाभावात् । च ज्ञानासिद्धिप्रसङ्ग इति भाव । किञ्च दृश्यत्व दृग्विषयत्व दृश्यध्यस्तत्वं वा । नाद्यः । परस्यासिद्धे । निबाधसिद्धे । किञ्च दृक् चैतन्य वृत्तिर्वा । नाद्य । तद्विषयत्वस्य तदध्यस्तत्वस्य वा वियदादिप्रपञ्चे इ । नान्त्य । परमते तदुभयस्याप्यसिद्धे । प्रपञ्चस्तु **वादावल्यां न्यायामृते च** । अत एवाह ॥ **एषा परोक्तहेतूनामपाकरणे अयं मार्ग इति** ।

(गटि.) ॥ **तत्रेति** ॥ उक्तेषु प्रमाणत्वाभिमतेष्वित्यर्थ । 'मिथ्याशब्दो द्व्यर्थः । अपोहवचनोऽनिर्वच- हे' इति **पञ्चपादिकोक्तेर्दूषणसौकर्याय** विकल्पयति ॥ **मिथ्याशब्देनेति** ॥ **अपसिद्धान्तप्रसङ्गादिति** ॥ य पूर्वोक्तदोषस्तथापि **न च धूमत्ववन्मिथ्यात्वम्** इत्युक्तदूषणकथनाय 'अनिर्वचनीयासतो समान ग्रात्वम्' इति शङ्कोत्थानार्थं स्वयमुक्तमिति द्रष्टव्यम् ॥ **असत्त्वे चेति** ॥ 'नेदमसत्प्रतीतत्वात्' इत्यनेने- **मिथ्यात्वेति** ॥ उपलक्षणमेतत् । असतोऽप्रतीतावसद्वैलक्षण्यज्ञानानुपपत्त्या प्रतीत्यङ्गीकारे तद्बाधानुप- त्यम् ॥ **नाप्रसिद्धविशेषणतेति** ॥ असति प्रसिद्धत्वादिति भाव । बाध्यत्वमबाध्यं बाध्यं वा । आद्येपि त्र अतिरिक्तं वा । नाद्य । सोपाधिकस्य तस्य निरुपाधिकब्रह्ममात्रत्वायोगादित्याद्यं बहिरेव निरस्य चष्टे ॥ **बाध्यत्वमपि हीति** ॥ तथा च सत्यभूतस्य तस्य ब्रह्मातिरिक्तत्वाङ्गीकारे अपसिद्धान्त इति

[1] कथमनिर्वाच्यतासिद्धिरित्यत आह इति पाठेन भाव्यमिति भाति ।

(वें टि) [illegible] भाव । किञ्च सत्यमपि [illegible] दृश्यमदृश्यं वा [illegible] ॥ सत्यत्व इति ॥ द्वितीये [illegible]
॥ दृश्यत्वाद्यभावे चेति ॥ अनुमिति [illegible] सिद्धि विषयत्वैव [illegible] । अनुमानस्य [illegible] नीत्यर्थकेन
बाध्यत्वस्य अदृश्यत्वे अनुमानवैयर्थ्यमादिशब्दार्थः । [illegible] नेष्टमित्यनेन दृश्य [illegible] मिथ्यात्व [illegible] नित्यर्थकेन
सूचितमिति ज्ञेयम् ।

इदं च दृश्यत्वहेत्वपेक्षयैव । [illegible] च्छिन्न [illegible] चेतनत्वाद्यवच्छिन्नत्व [illegible] प्रत्यक्षविरोध इत्य-
प्यादिशब्दार्थ इत्याहुः ।

नान्त्य इत्य [illegible] ॥ बाध्यत्वस्येति ॥ आत्मनस्तु [illegible] ॥ किं चेति ॥ नन्विदं [illegible]
प्रागनुक्तमिति चेन्न । न च [illegible] मन्त्यवन्नित्यत्वमि युक्तम् [illegible] सिद्धत्व [illegible] धर्मेस्य [illegible] ।
॥ अनैकान्त्यं चेति ॥ दृश्यत्वादीन् सदृश्यत्वे हेतोरज्ञाता [illegible] सिद्धि [illegible] नतु न [illegible] वा दृश्य-
त्वादि हेतुत्वेन विवक्षितम् । किन्तु [illegible] दृश्य [illegible] च्छिन्न [illegible] । न हि सामान्येन प्रयुक्तहेतो
विशेषविकल्पेन निराकरणं युक्तम् । अनुमानमात्रे [illegible] ॥ न चेति ॥ दृश्यत्वसामान्य-
मिति ॥ दृश्यत्वस्य सामान्यमित्यर्थः । दृश्यत्वमिति [illegible] ।

(द्वै. यु.) ॥ तत्र तावदिति ॥ [illegible] ॥ अप्रसिद्धविशेषण-
त्वापातादिति ॥ पूर्वं शुक्तिरजतादावपि [illegible] सिद्धत्वस्य [illegible] भाव । प्रतिज्ञा [illegible] प्रथमप्राप्त-
त्वात् पूर्वमस्यैवोक्तत्वाच्चातिदेशादस्य तस्यैव ग्रहणं कृतम् । दृष्टान्ते [illegible] तत्र [illegible] च हेतुसत्त्व-
व्यभिचारश्चानुसन्धेयः ॥ अपसिद्धान्तेति ॥ [illegible] [illegible] बाधोऽनु-
सन्धेयः ॥ उभयेत्यादि ॥ स्वार्थानुमानपक्षे [1] अनिर्वचनीयाप्रसिद्धिः प्रागनिर्वचनीयसदुभयवृत्तित्वेन गृह्यमाण-
धर्मस्याभावादित्यादि पूर्वोक्तदिशा योऽनुसन्धेयः । सत्यत्वे [illegible] ॥ अनैकान्त्यमिति ॥ अंशे
बाधवारणाय तस्य पक्षबहिर्भाव वश्यकत्वाद् [illegible] पक्षादिविभागान्तर [illegible] मेव [illegible] व्यभिचारस्याऽवश्यकत्वाद्धेय
मुक्तिरिति भावः ॥ असाध्यत्वाद्यापत्तेरिति ॥ मिथ्यात्वसाधकस्य [illegible] विषयत्वानुपपत्तेः । तत्साधकस्य दृश्यत्वादे-
स्तत्रानङ्गीकारेणेत्यर्थः । आदिपदेन [2]ज्ञेयत्वप्राप्त्या जडतया स्वप्रकाशत्वस्य [illegible] तत्सिद्धयुपायाभावाद-
सत्त्वापत्तिपरिग्रहः ।

न च बाध्यत्वस्य सत्यत्वाङ्गीकारपक्षे दृश्यत्वस्य तत्र सत्त्वासत्त्वविकल्पेन दूषणार्थमेतद्ग्रन्थस्य प्रवृत्तत्वा-
त्कथं प्रतिज्ञाविषयत्वानुपपत्तिरूपदूषणमुच्यते इष्टापत्तेरिति वाच्यम् । वस्तुगत्या सिद्धान्ते दृश्यत्वानङ्गीकारपक्षे
दूषणार्थमेतद्वाक्यस्य प्रवृत्तत्वेन भवदुक्तरीतेरनङ्गीकारात् । अत एव सत्यत्व इत्यस्यात्र नास्ति । यदि चोक्त-
विकल्पपूर्वकदूषणपरत्वमस्य ग्रन्थस्य तदाऽसाध्यत्वाद्यापत्तेरित्यस्य प्रकृतानुमितिविषयत्वाभावव्याप्तिग्रहविषयत्वा-

---

[1] अनिर्वचनीयसिद्ध इति पाठेन साध्यमिति भाति    [2] अहेयत्वप्राप्त्या इति पाठेन साध्यमिति भाति

(द्वै थु) भावाधापत्ते । अज्ञेयवान्मन्येत्यर्थः ॥ अनैकान्त्य चेति ॥ तत्र दृश्यत्वाद्यनङ्गीकारे चाज्ञानासिद्धिरिति भाव. ॥ उभयतस्त्रनिपत्तमसन्तीति ॥ एतत्त्व प्रागभिहितम् ।

अत्र परोक्तमि॰ान्तपरिष्कारान्तरमाशङ्क्य तन्निरासोऽप्यनयैव दिशा कर्तव्य इत्याह ॥ एषा दिगिति ॥ तथा हि, यदुक्तं परैः अस्तु सदसद्विलक्षणत्वं मिथ्यात्वम् । तच्च न तत्त्ववादिन प्रति साध्य येनाप्रसिद्धविशेषणत्व स्यात् , येन नानिर्वचनीयत्ववादिना शुक्तिरजतादौ तदङ्गीकृत्य जगति तत्सद्भावे विवाद क्रियते त प्रत्येव । तत्त्ववादिनं प्रति तु स्वप्रकाशकर्मीभूतविषयत्वस्यापरोक्षत्वेन तत्प्रतियोगित्वाभावरूप यदसत्त्व तद्व्यतिरेकस्तादृशप्रतियोगित्वरूप मत्यते तस्य च तन्मते शुक्तिरूप्यादौ प्रसिद्धत्वान्न प्रसिद्धविशेषणत्वावकाश । न चैवमसत्त्वेन पर्यवसानापत्त्या अर्थान्तरता , सत्तादात्म्यरूपसद्विलक्षणत्वस्य [1]पक्षकोटौ निवेशेन तद्वारणात् । सत्तादात्म्येऽपि सत्तादात्म्यस्य स्वस्यैव स्वीकारेण सत्तादात्म्यतत्त्वात्यन्तर्वरूपस्यैव पक्षतावच्छेदककोटौ निवेशाद्दोषोपपत्त्या न तस्य पक्षतद्भिन्नत्व । साध्यकोटौ च सत्त्वेन सत्तादात्म्यवत्त्वेन वा अपरोक्षप्रतीतिविषयत्व निवेश्यम् । तच्च शुक्तिरजतादावपि तत्त्ववादिनाऽङ्गीकृतमिति न तस्य साध्याप्रसिद्धि । उक्तप्रतीत्यनङ्गीकारे यथाश्रुतमेव रमणीयम्' इति ;

तदसत् । सत्तादात्म्यस्य पूर्वं साध्यकोटौ निवेशपक्षे अभिहितदूषणाना अत्राप्यविशिष्टत्वात् । 'इद रजत सत्' घट. सन्' इत्यादिप्रतीत्या घटरजतादिवत् 'तुच्छं सत्' इति प्रतीत्या तुच्छेपि सत्तादात्म्यस्यावर्जनीयतया तेनासत्त्वपरिक्षेपासम्भवाच्च । न च तत्र कालसम्बन्ध एव प्रतीयते । न त्वबाध्यतादात्म्यम् । सदसतोरेकबुद्धिविषयत्वादिति वाच्यम् । असत्त्व यावदेकस्यासद्वगाहिप्रतीत्यविषयत्वनियमे कालसम्बन्धस्यापि तथात्वेन तद्विषयकत्वस्य वक्तुमशक्यत्वात् । तदनङ्गीकारे अबाध्यतादात्म्यभाने बाधकाभावेन त्वद्वाक्यमात्रस्या साधकत्वात् ।

किञ्च त्रैकालिकनिषेधप्रतियोगित्वदप्रतियोगिनोरेकज्ञानविषयत्वं नास्तीति नियमाङ्गीकारे [3]'घट सन्' इत्यादिप्रतीतेरप्यनुपपत्ति । सत्तादात्म्यशून्यस्य सद्विषयकप्रतीत्यविषयत्वमित्यङ्गीकारे घटादिवत्तुच्छेप्युक्तप्रतीत्या तादात्म्य वर्तत इति वदन्त प्रति तस्यानुत्तरत्वात् । घट सन्न तुच्छमिति प्रतीतेरपलापापत्तेश्च । न च तुच्छं सदिति प्रतीतेर्विकल्पत्वेनाऽहार्यत्वेन वा न तद्विषयतया तादात्म्यसिद्धिरिति वाच्यम् । तत्रापि 'सत् तुच्छं' 'तुच्छ सत्' इत्याकारवैलक्षण्यसिद्धये तयोरपि परस्परतादात्म्यस्याऽवश्यकत्वात् । [4]विषयतावैलक्षण्येनैव तत्र वैलक्षण्ये घटादिज्ञानेऽपि तथात्वसम्भवेन तत्रापि तव सत्तादात्म्यासिद्ध्यापत्ते । न हि विकल्पादीना [5]विषयतावैलक्षण्येन वैलक्षण्यम् । ज्ञाने तु विषयवैलक्षण्येनैवेत्यत्र राज्ञामाज्ञास्ति । न चाऽऽहार्यज्ञानाविषयतादात्म्यस्यैव

[1] पक्षतावच्छेदककोटौ इति पाठेन भाव्यमिति भाति

[2] विषयत्वाभावादिति इति पाठेन भाव्यमिति भाति

[3] तुच्छ सत् इत्यादि इति पाठेन भाव्यमिति भाति ।

[4] विषयिता इति पाठेन भाव्यमिति भाति ।

[5] विषयिता इति पाठेन भाव्यमिति भाति ।

(द्वै बु) पक्षतावच्छेदककोटौ निवेशान्न दोष इति वाच्यम् । कालाम्बन्यर्थकतुच्छपदघटितवाक्यजन्यबोधस्य ताहार्यत्वेन तद्विषयस्य तादात्म्यस्य तार्यज्ञानाविषयत्वात् । न च त्रैकालिकनिषेधप्रतियोगित्वमत्र तादात्म्यशून्यत्वाद्यवच्छिन्नार्थकतुच्छपदघटितत्वेनाभिलाप्य हार्यबोधे तदेव तादात्म्यं विषय इति वाच्यम् । ज्ञानानां विलक्षणाकारनिर्वाहकतानुपपत्तिप्रसङ्गात् । अन्यथा 'सत्प्रमेयमसदन्यत् तुच्छम्' इति ज्ञाने 'सन् घटः' इति प्रतीतिसिद्धतादात्म्यस्य धर्मिकोटौ भानापत्त्याऽनार्यज्ञानविषयत्वादात्म्यस्य वासिद्धिप्रसङ्गात् । सद्तुच्छं सन् घट इत्याद्याभिकारार्थज्ञानविषयत्वस्य सर्वतादात्म्येषु सत्त्वाच्च । अनार्यज्ञानविषयत्वस्योक्तत्वेऽपि तद्विकल्पविषय सन् इत्याद्यनाहार्यप्रतीतिविषयीभूततादात्म्यसत्त्वस्यापि दुर्वारत्वात् । तादात्म्ये तादात्म्यवत्त्वं वक्तव्यमिति न घटत इति पूर्वमेवोक्तम् । अतो न तादात्म्यसङ्ग्राहकः प्रथमकल्पः सम्भवति ।

उक्ततादात्म्यस्यासत्त्वव्यावर्तकत्वेन तादृशान्यतरवत्त्वनिवेशोऽपि निरस्तः, सत्तादात्म्यस्यासत्त्वव्यावर्तकत्वाङ्गीकारेऽपि तस्य तेनैव रूपेणासत्त्वबुद्धिविरोधितयोक्तान्यतररूपेण तद्बुद्धिविरोधित्वाच्च । ज्ञानवैलक्षण्ये विषयवैलक्षण्यस्य नियामकतां निराकृत्यासत्त्व नैत्यवस्थापितत्वेन तन्निर्वाहकतया अङ्गीकृतस्य भ्रमविषयीभूततादात्म्यस्यैवाभावेन जगति सत्तादात्म्यस्यैव तन्निरूप्यावच्छेदकत्वेन पक्षाप्रसिद्धेर्दुर्वारत्वाच्च ।

एतेन सत्त्वेनापरोक्षविषयत्वपक्षोऽप्यपास्तः । असतोऽपि सत्त्वेनापरोक्षप्रतीतेर्नित्यत्वस्थापितत्वेन तस्यासत्त्वाव्यावर्तकत्वात् । किञ्च गुरुत्वादीनामपरोक्षविषयत्वात्पक्षकोटौ निवेशे तेषां पक्षत्वाभाव साध्यकोटौ निवेशे च बाध स्यात् । न च गुरुत्वादीनामीश्वरापरोक्षगोचरत्वान्नैष दोष इति वाच्यम् । तेषामीश्वरापरोक्षविषयत्वं न तावद्देवदत्तादीनामिवेन्द्रियद्वारा निर्गतान्तःकरणवृत्त्यभिव्यक्तचित्तादात्म्यादिरूपम् । तस्य शरीरादेस्त्वन्मतेऽभावात् । मायया नटवदैन्द्रजालिकवद्वा विग्रहप्रदर्शनेऽपि अन्तःकरणतादात्म्याध्यासाभावेन तत्प्रत्यन्यस्याकृतत्वे त्वस्मदादिवदज्ञत्वापत्त्या तदनङ्गीकारेणोक्तरीतेस्तत्रायोगात् । सृष्ट्याद्यक्षणे स्वशरीरकारणीभूतादृष्टादेर्जगत्कारणीभूतादृष्टादेश्च ग्रहणाभावप्रसङ्गेन तन्निमित्तकजगन्निर्माणानुपपत्तेः ।

परन्तु केवलं [1]मायावृत्त्यात्मकं द्रष्टृत्वादिप्रतिपादकश्रुत्याद्यनुसारात्तत्राप्यपरोक्षत्वाख्यः कश्चन धर्मोऽङ्गीकार्यः । स च जातिरूप उपाधिरूपो वेत्यन्यदेतत् । तदीयाऽकारास्त्यविषयत्वस्यैव निवेश्यता । तादात्म्यस्योक्तरीत्याऽयोगात् । परस्य तादृशतादात्म्यरूप[2]विषयत्वाप्रसिद्ध्या पक्षसाध्याप्रसिद्ध्योरन्यतरापातात् । तथा च तादृशापरोक्षविषयत्वस्य गुरुत्वादौ तदन्यजगति च सत्त्वेऽपि तस्यासत्त्वविरोधितयाऽर्थान्तरत्वादवस्थ्यमेव । तस्य परोक्षप्रतीतिविषयत्वाविशेषात् । न हीश्वरस्य सद्विषयकज्ञानमेव नास्तीति वक्तुं शक्यते । परकीयवाक्यश्रवणादेः पुराणेष्वीश्वरस्य शतशः श्रवणेन [3]तत्प्रयुक्तशब्दविषयाणां नास्तीत्यादिवत्कैस्तत्प्रतीतेरावश्यकत्वात् । न हीश्वरप्रतिवचनप्रश्नादिषु तत्र प्रयोक्तव्यमिति नियमोऽस्ति । तथात्वे ईश्वरस्य 'नासदासीत्' 'न सती नासती माया' इत्यादिश्रुतिस्मृत्यर्थज्ञानाभावापत्तिश्च ।

---

[1] मायावृत्त्यात्मकद्रष्टृत्वादि इति पाठेन भाव्यमिति भाति [2] विषयत्वाप्रसिद्ध्या इति पाठेन भाव्यमिति भाति

[3] परोच्चारित इत्यर्थः ।

(द्वै यु) न च मायोपहितचिद्रूपस्येश्वरस्यैव जगदुपादानत्वं मायोपादानकं सर्वं तत्रैव कल्पितं तत्र ह्यनावृतमितीश्वरीयमप्यनावृतचित्तादात्म्यरूपमपरोक्ष्यं गुरुत्वादौ वर्तत इति तन्निवेशो युक्त इति साम्प्रतम्। मतद्वयासिद्धत्वेन तन्निवेशायोगस्योक्तत्वात्। अभानापादकाज्ञानाभावोपहितचिति त्वन्मते साक्षात्कारत्वजाते. स्वीकृतत्वेन प्रतिवादिनस्तदनाश्रयासिद्धावप्यन्यत्रैव तादृशज्ञाने स्वीकृतत्वेन जातिमात्रस्योभयसिद्धत्वेन तादृशाकारास्यविषयतानामप्युभयसिद्धत्वेनोक्तरीत्यैव निवेश्यत्वात्। तत्र चार्थान्तरस्याभिहितत्वात्। मायोपहितचिदुपादानकत्वे जगततादात्म्यरूपविषयत्वमात्रेण तस्य सर्वज्ञत्वोपपत्तौ तदीयाकारास्यविषयतायां मानाभावेनेश्वरीयापरोक्षविषयत्वस्य गुरुत्वादौ वक्तुमशक्यत्वाच्च। न च तादात्म्याकारस्वरूपविषयतया विषयत्वरूपसामान्यधर्मस्वीकारात्तेनैव रूपेण निवेशो नैष दोष इति वाच्यम्। तन्मत्वे मानाभावात्। न च सत्तादात्म्यप्रकारकापरोक्षविषयत्वनिवेशानार्थान्तरम्। असति सत्तादात्म्यप्रकारकापरोक्षविषयत्वायोगादिति वाच्यम्। यतो लोकाना 'सन् घटः' 'सदिदं रजतं' 'मिथ्येदं रजतम्' इति प्रतीतिबलेनैव प्रवृत्तिनिवृत्त्योरुपलम्भात् तादृश्येव प्रतीतिरनुभवसिद्धा। न तु सत्त्वानवगाहिनी सत्तादात्म्यवदित्यवगाहिनी। तथा च 'सन् घटः' इत्यादिप्रतीतिविलक्षणतादृशतादात्म्यप्रकारकापरोक्षप्रतीत्यप्रसिद्ध्या तन्निवेशे पूर्वोक्त एव दोषः। यदि च तस्या एव प्रतीतेः सत्तादात्म्यप्रकारकत्वमङ्गीक्रियते तदा मिथ्यात्वग्रहाविरोधिनस्तादृशग्रहस्य सर्वानुभवविरुद्धतया तद्विरोधिनस्तादृशग्रहस्य त्वयाऽपरोक्षत्वेनैवाभ्युपगतत्वेन तत्प्रकारकापरोक्षप्रतीतेर्निवारयितुमशक्यत्वात्। अन्यथा तेनैव मिथ्यात्वानुमानस्य [1]प्रत्यक्षबाधसम्भवेन सत्यत्वस्य प्रत्यक्षायोग्यत्वव्युत्पादनवैफल्यापत्तेः। न च तदंशे अपरोक्षत्वं न निवेश्यत इति वाच्यम्। तर्हि त्वन्मते उपनीतभानानङ्गीकारेण तत्प्रकारकापरोक्षप्रतीत्यसिद्धेः। कथञ्चित्तदुपादानेऽपि यद्यपरोक्षविषयत्वमेव सद्यावृत्तं तदा सत्तादात्म्यप्रकारकत्वनिवेशवैयर्थ्यम्। यद्यव्यावृत्तं तदा सत्तादात्म्यांशे परोक्षस्यांशे अपरोक्षात्मकस्यासज्ज्ञानस्योत्पत्तावपि बाधकाभावेन तन्निवेशेऽप्यर्थान्तरतादवस्थ्यमेव। किञ्च गुरुत्वाद्युक्तापरोक्षविषयत्वस्येश्वरीयसाक्षात्कारमादायोपपादने ईश्वरस्य भ्रान्तत्वप्रसङ्गेन तदभ्रान्तत्वप्रतिपादिकाना 'निरञ्जनं निरवद्यं' 'अविद्धदृक् साक्ष्युभय तदीक्षने' इत्यादिश्रुतिस्मृतीनामप्रामाण्यापत्तिः। न च सत्तादात्म्येन रूपेण गुरुत्वादिविषयकत्वेऽपि तत्र सत्त्वानवगाहनात्प्रत्युत मिथ्यात्वेनैव तदवगाहनान्नातस्तज्ज्ञानं भ्रम इति वाच्यम्। मिथ्यात्वग्रहाविरोधितादृशज्ञानाभावस्योक्तत्वेन तस्य मिथ्यात्वविरोधिधर्मविषयकत्वावश्यकत्वेन तज्ज्ञानस्य भ्रमत्वापत्तेरपरिहार्यत्वात्। अत एव तत्र तस्य मिथ्यात्वावगाहित्वमप्यनुपपन्नम्। आहार्यत्वापातात्।

किञ्च जगति मिथ्यात्वग्रहे तद्विषयप्रवृत्तिपालनादीनामयोगः। लोके मिथ्यात्वेन तन्निश्चयमात्रस्य तद्विघटकत्वदर्शनात्। मिथ्यात्वेन निश्चिते मूर्खोन्मत्तादेरपि प्रवृत्तेरदर्शनात्। न च ऐन्द्रजालिकस्य स्वसृष्टपदार्थेषु मिथ्यात्वनिश्चयवतोऽपि तत्पालनादिप्रवृत्तिर्दृष्टेति वाच्यम्। वैषम्यात्। तस्यैन्द्रजालविद्यापालनविषय एव प्रवृत्तेः। तस्या मिथ्यात्वेनागृहीतत्वात्। किञ्च सत्येषु स्वप्रयोजनेषु स्वव्यापारनिष्ठतत्साधनत्वेषु स्वस्मिंश्च सत्यत्वग्र-

[1] प्रत्यक्षबाधसम्भवेन इति पाठेन भाव्यमिति भाति।

(द्वै थु) तद् वयिधर्मानरत्तरिचाक्रस्यैवोपलक्षणपदार्थन्या असदधिष्ठानकत्वस्यैव प्रतिष्ठाशुद्धस्यैव सत्त्वोपलक्षितत्वेन तत्प्रतियोगिकतादात्म्यस्य शुद्धे अभावेन तत्रासत्त्वापत्तेर्दुर्वारत्वात्। तादृशतादात्म्यशून्यत्वस्यासत्त्वरूपत्वायोगाच्च।

किं च नीलघटयोर्यादृशं तादात्म्यं तादृशमेव ब्रह्मणि जगतोऽङ्गीकृतं चेत् न स्वरूपैक्यमवर्जनीयं स्यात्। तथा च ब्रह्मस्वरूपस्य मिथ्यात्वं जगत्स्वरूपस्य सत्यत्वं वा स्यात्। शुक्तिरजतादिस्थलेऽप्येष एव दोषः। तथा च आनन्दादिनैल्यं घटादौ कथं वार्यते। 'इदं सर्वं यदयमात्मा' इत्यादीनां बाधाय सामानाधिकरण्योक्तिरपि अयुक्ता स्यात्; आनन्दो ब्रह्मेत्यादिवदेव स्यात्।

एतेन 'स्वसमानसत्ताकतनतादात्म्यं स्वस्य स्वरूपत्वम्' इत्यपास्तम्। अखण्डैकरसब्रह्मणि स्वसमानसत्ताकानन्दतादात्म्यसम्भवात् स्वरूपतानुपपत्तेः। परस्परतादात्म्यसाध्यमानुरोधेन घटे स्वसमानसत्ताकब्रह्मतादात्म्यसत्त्वेन ब्रह्मात्मकताया दुर्वारत्वाच्च। तथा च नीलघटादितादात्म्यवैलक्षण्यापेतं नैयायिकादिसिद्धसमवायविषयतादिस्थानीयं किमप्यङ्गीकर्तव्यमिति तस्यैकप्रतियोगिकत्वानुयोगिकत्वं निर्युक्तिकमेव। किं च तादात्म्यस्यैकत्वे 'सन् घटः' 'घटः सन्' इत्यादिप्रतीत्योरेकतादात्म्यभानापत्त्या विषयवैलक्षण्यप्रयुक्तप्रतीतिवैलक्षण्यायोगः। विलक्षणानुयोगितामानं त्वयुक्तम्। सम्बन्धप्रतियोगित्वादीनां विशिष्टबुद्धौ भाने मानाभावात्। तथात्वे वोक्तकुसृष्ट्यपेक्षया तादात्म्यभेदस्योचितत्वाच्च। तथा सति सत्तादात्म्याभावे तत्प्रकारकापरोक्षप्रतीतिविषयत्वं सुतरां तत्र नास्तीति तस्यासत्त्वापत्त्या तस्यासत्त्वरूपत्वमनुपपन्नमिति। न च सत्तादात्म्यप्रकारकप्रतीतिविषयत्वाभावस्य ब्रह्मसाधारण्येऽपि तदभावरूपसत्तादात्म्यप्रकारकप्रतीतिविषयत्वस्यासद्व्यावर्तकत्वमक्षतमेवेति पक्षकोटौ साध्यकोटौ वा निवेशो न बाधकमिति वाच्यम्, इतरविशेषणवैयर्थ्यापातात्। अनुमानदूषणानां बहूनामुक्तत्वाच्च।

यत्तु 'सत्त्वेन प्रतीत्यर्हत्वमेवासत्त्ववारणाय निवेश्यम्। तच्च सदसदुभयवाचकतदादिपदभिन्नपदवाच्यतावच्छेदकावच्छिन्ने सत्त्वेन प्रतीयमानत्वम्। न चैवमपि 'कालासम्बन्धि सत्' इति प्रतीतिमादायोक्तदोषतादवस्थ्यम्। न ह्यस्ति नियमः सत्तादात्म्यशून्यत्वमेव तुच्छादिपदवाच्यतावच्छेदकम्। न कालासम्बन्धित्वादिकमिति वाच्यम्। सत्त्वेन प्रतीयमानत्वमित्यत्रासद्व्यावर्तकत्वेनाभिमतसत्तादात्म्यकालसम्बन्धित्वानां यावतामेव विशिष्योपादेयतयोक्तदोषानवकाशात्' इति 'शशशृङ्गं सत्' इति प्रतीतिमादायोक्तदोषस्तच्छब्देनासद्दोषनिरासेन निराकरणीय' इति।

तदसत्। शशशृङ्गमित्यादितोऽप्यसद्दोषस्योपपादितत्वेनोक्तदोषदार्ढ्यात्। असत्त्वव्यावर्तकत्वेनाभिमतधर्मेषु यत्किञ्चिद्धर्मवत्त्वमात्रस्य पक्षे निवेशेन निर्वाहे उक्तप्रयासस्य विफलत्वात्। न चोक्तत्रैकालिकनिषेधप्रतियोगित्वरूपसाध्यस्यानिर्वचनीयसिद्धेः प्राक् [1]असत्त्वेन गृहीतत्वेनासद्व्यावृत्तत्वेन गृहीतधर्मे उक्तसाध्यव्यावृत्तत्वेनापि गृहीतत्वापत्त्या तद्रूपावच्छिन्ने उक्तसाध्यविधेयकानुमित्युत्पत्त्ययोगः। तस्यानुमितिवेलायामसद्व्यावृत्तत्वेनागृहीतत्वे

[1] असद्वृत्तित्वेन इति पाठेन भाव्यमिति भाति।

(द्वै० सि०) तस्य पक्षविशेषणत्वेऽपि न तेनासत्त्वमादाय अर्थान्तरवारणमित्यसद्व्यावृत्तत्वेन गृह्यमाणधर्मप्रकारकप्रतीति विषयत्वमात्रं निवेशितमिति वाच्यम्। उक्तधर्मस्य प्रसद्व्यावृत्तत्वेन ग्रहे ग्रहयोरुक्तदोषतादवस्थ्यात्।

किं चोक्तमात्यबलेनासत्त्वशङ्कस्यात्क्तप्रतीयमानत्वस्य धर्मजातेऽपि घटत्वादीन सन्दमस्त्वस्तु वृत्तित्वेऽपि उक्तोभयवाचकपदभिन्नपदवाच्यतावच्छेदकत्वानपायात्तदवच्छिन्नं सत्त्वमर्तानिर्भ्रमवस्य च तदन्यतमत्वस्य ऽसत्त्वपर्यव सानावारणेनार्थान्तरनिरासायोगात्। अन्यथा स्वाश्वनिकधर्मेषु प्रकृतस्य यावदसत्त्वस्यापि निविष्टत्वात् तद्वत्त्वेन प्रतीयमानजगति प्रकृतसाध्यसिद्धत्वभावापातात्। न च घटत्वादीनामसद्वृत्तिवत्ज्ञानादेवासत्त्वतः निरसो स्त्वनीति वाच्यम्। नहि जगद्वृत्तिधर्मस्य पक्षतावच्छेदकस्य तथात्वेनैव वारणसम्भवे उक्तविशेषणस्यैव वैयर्थ्यात्। अस न्मात्रवृत्तित्वेन [1]गृह्यमाणं प्रकृतस्य ध्यवदन्यावृत्तवस्यापि जगद्वृत्तिधर्मे ग्रहेण बाधपर्तेर्धने न किञ्चिदेतत्।

यत्तु "अबाध्यं सर्वं प्रमेयमिति यत्किञ्चिद्धीविषयत्वमेव सत्त्वम्। तदभाव एव प्रकृते साध्यघटक। न चात्र कल्पे 'अबाध्यं सर्वं प्रमेयम्' इत्यादिप्रतीतौ अबाध्यत्वेन तदुपस्थितब्रह्मणो विषयत्वं शुद्धस्याविषयत्वात् शुद्धे अतिव्याप्तिः। तद्धर्मप्रकारकप्रतीतिं तद्धर्मरहितस्यैव विषयत्वमित्यन्यत्र व्यवस्थापितत्वात् उपहिते अव्याप्तिश्च। शुद्धब्रह्मण सप्रकारकवृत्तिविषयत्वाभ्युपगमेऽपि तत्कथंचित्सत्त्वस्य तत्र बाधितत्वेनोक्तलक्षणस्य प्रामाण्ये निर्वाहत्वेति वाच्यम्। पदार्थतावच्छेदकविशिष्टपरत्वशून्यतद्धावज्ञानस्यैव विशिष्टानुपपत्तिबाधजन्यबाधविषयत्वं एव तदर्थत्वात्। न च विशिष्टार्थपरत्वशून्यतादृशवाक्याद्विना लक्षणाऽऽदिकं शाब्दबोधासम्भव इति शङ्क्यम्। विशिष्टपरत्व शून्यतानिश्चयसहकृतविशिष्टशक्तिग्रहादेवोपलक्षितधर्मविषयकशाब्दबोधाभ्युपगमात्। उपपादितं चैतदन्यत्र। सर्वपदं चाशेषार्थपरतातात्पर्यग्राहकमतो न काचिदनुपपत्तिः" इति।

तत्तुच्छम्। तात्पर्यमात्रानुसारेण विशिष्टशक्तेर्विशेष्यमात्रबोधकत्वे घटो न जातिमानिति बाधकाले घटो जातिमानिति वाक्येन स्वरूपतो द्रव्यत्वप्रकारकस्य द्रव्यं घट इति बोधस्याऽपत्ते। अविशेषात्। 'जातिम-द्व्याप्यवान्' इति परामर्शकाले 'स्वरूपतो जात्यवच्छिन्नविधेयकानुमितिर्जायताम्' इतीच्छाबलाद्वह्निमानित्यानु-मित्यापत्तेश्च। प्रामाणिकस्य त्वत्पक्षस्यान्यत्रोपपादितस्य निरस्तत्वेन शङ्कितातिव्याप्त्यप्रसिद्धेर्योगात्। न च तादृशा-नुमितिस्तदानीं त्वयाऽप्यभ्युपगम्यते। प्रकृत एव वैषम्यनियामकमानाभावात्। तादृशप्रमापरिचयपरिचयादिप्रयु-क्तदूषणस्य पूर्वमेवाभिहितत्वाच्च। तादृशविषयत्वोपहिते तदभावासत्त्वेनाव्याप्तेश्च। अशेषपरत्वस्य अन्यस्य फलीभूत-बोधेऽभावेन तत्तात्पर्यग्रहस्य वैयर्थ्यम्। द्वारीभूतमादाय तदुपपादने पदार्थतावच्छेदकविशिष्टपरत्वशून्यत्वोप-लक्षितबोधजनकत्वयोरुपपादनायोगश्च। उपलक्षितबोधस्य तद्धर्मप्रकारकत्वे उपहिताव्याप्तेर्दुर्वारत्वात्।

यदपि गुरुचरणास्तु "सत्त्वं [2]सत्त्वोपहितं तादात्म्यम्। सत्ता च सिद्धान्ते अबाध्यत्वोपलक्षितब्रह्मस्वरूप-भूता। परमते च तत्तद्घटादिरूपविषयसत्तात्मिका। तत्र सिद्धान्ते 'आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्मा' इति पञ्चपादिकानुसारेणोक्तसत्ताया अधिकरणत्वमपि ब्रह्मणि कल्पितं स्वीक्रियते। सा चाधिकरणता

---

[1] गृह्यमाणप्रकृत इति पाठेन साध्यमिति भाति। [2] सत्त्वोपहिततादात्म्य इति पाठेन साध्यमिति भाति।

द्वैतेषु स्वोपहितब्रह्मण्येव स्वीक्रियते। न तु शुद्धे। सत्त्वोपहिततादात्म्यं च शुद्धेऽपि स्वीक्रियते। एवं च स्वाभाविको यः सत्त्वसम्बन्धस्तदुपहितप्रतियोगिकस्यानौपाधिकस्य केवलोपहितभावेन तादात्म्यस्य प्रतियोगिव्यधिकरणात्यन्ताभावः सत्त्वासत्त्वशब्देन विवक्षितः। सत्तायाश्च सत्पदशक्यतावच्छेदकत्वेन सतद्द्वयसाधारणरूपेण साध्यकोटौ निवेशः। अतो न ब्रह्मसत्ताया निविश्योपादाने सिद्धसाधनम्। तत्तत्स्वरूपसत्त्वोपादाने अंशे बाधः। उक्तसत्तानामन्यतमत्वेन निवेशेऽपि तथैत्यादिदूषणावकाशः" इत्याहुरिति।

तदप्यसारम्। समीचीनवादेरपि सत्पदशक्यतावच्छेदकतायाः कोशादिबलेनापवादेन तदभावसाधने बाधात्। शक्यतावच्छेदके तत्तद्भेदकूटनिवेशेऽपि 'घटः सन्' इत्यादिवाक्यस्य व्यावहारिकमपि प्रामाण्यं वर्तते न वा। नेति पक्षे 'शुक्तिरजतं सत्' 'घटः सन्' इति वाक्यद्वयवक्तॄणां भ्रान्तत्वाभ्रान्तत्वव्यवस्थायोगः। व्यवहारकालाबाध्यत्वसाम्ये घटांशे व्यावहारिकप्रामाण्यं सदंशे नास्तीति वैषम्यस्य वाङ्मात्रेणासिद्धेश्च। आद्ये घटादौ सच्छब्दव्यवहारे उक्ततादात्म्यं भासते अन्यदेव किञ्चिद्वा। आद्ये पुनर्बाधः। तत्तद्भेदकूटस्यापि निवेशे ब्रह्मव्यक्तिमात्रवृत्तित्वस्यासिद्ध्या पुनः सिद्धसाधनता। अन्यस्यैव तथात्वाङ्गीकारे तस्यापि शक्यतावच्छेदकरूपत्वेन सङ्ग्रहे बाधः। तद्भिन्नत्वेन विशेषणे पुनः सिद्धसाधनता।

ननु सत्पदशक्यतावच्छेदकभिन्नस्योक्ततादात्म्यस्य न ब्रह्मवृत्तितद्व्यक्तित्वेनाभावः सिद्ध्यति। येन सिद्धसाधनता स्यात्। किन्त्वनुगतोक्तरूपावच्छिन्नाभावः। स च घटादेर्मिथ्यात्वेन विना न पर्यवस्यति। उक्ततादात्म्यस्य ब्रह्मनिष्ठतद्व्यक्तित्वेन शक्यतावच्छेदककोटिप्रविष्टत्वाभावेन अबाध्यत्वोपहितोक्त[1]तादात्म्येनैव शक्यतावच्छेदकतया घटादावबाध्यत्वसत्त्वे उक्तशक्यतावच्छेदकानपायेन प्रकृतसाध्यायोगेन मिथ्यात्वसिद्धेरवर्जनीयत्वादिति चेन्न। उक्ततादात्म्यावच्छिन्नशक्तेर्ब्रह्ममात्रवृत्तित्वं वा घटादावपि सत्त्वं वा। द्वितीये तत्र व्यावहारिकप्रामाण्यानुरोधादप्युक्तशक्यतावच्छेदकसत्त्वस्यावश्यकत्वात्पूर्वोक्तो बाध एव। हर्यादिपदवन्नानार्थत्वं स्वीकृत्य तदीयब्रह्ममात्रनिष्ठशक्तेरवच्छेदकमुक्ततादात्म्यमित्याद्यपक्षाङ्गीकारोऽपि न युक्तः। ब्रह्ममात्रनिष्ठशक्तिं प्रति आनन्दादेर्लघुरूपस्यैवावच्छेदकत्वसम्भवे उक्तगुरुरूपस्यावच्छेदकत्वे मानाभावात्। न हि सच्छब्दस्य ब्रह्ममात्रवृत्त्युक्तधर्मावच्छिन्नशक्तिग्राहकं श्रुत्यादिकं कोशादिकं वा मानमस्ति। येन गुरुत्वेऽप्युक्तधर्मस्य प्रमाणबलाच्छक्यतावच्छेदकत्वं स्वीक्रियत इति वक्तुं शक्येत। न च पारमार्थतावच्छिन्ने सत्पदस्य लोके शक्तेः कृतत्वात्तदवच्छिन्न एव लोकानां ब्रह्मप्रपञ्चसाधारणव्यवहारः। तस्य प्रपञ्चांशे भ्रमत्वसिद्धये उक्तपरमार्थत्वाभावः साध्यत इति वाच्यम्। 'सन् घटः' इत्यादिप्रतीतीनां व्यावहारिकप्रामाण्यानुपपत्तेरुक्तत्वात्। उक्ततादात्म्यरूपसत्त्वस्य तेनैव रूपेणाभावसाधनसम्भवे उक्तशक्यतावच्छेदकत्वरूपेणाभावसाधनस्य शिरोवेष्टनन्यायग्रस्तत्वात्। तस्यास्य च साधने असत्त्वपर्यवसानापत्त्याऽर्थान्तरताया जागरूकत्वाच्च।

---

[1] तादात्म्यत्वेनैव इति पाठेन भाव्यमिति भाति

(द्वै॰ द्यु॰) उक्तसत्ताया अधिकरणत्वं स्वोपहिते ब्रह्मणि चेत् आधाराधेयभावः कल्पितभेदेनैव वाच्यः। अत्यन्ताभिन्ने आधाराधेयभावायोगात्। तथा च कल्पितभेदवतो मिथ्यात्वेन तस्यैव सत्त्वोपहितत्वप्राप्त्या तत्ता-दात्म्यमपि केवलोपहितभावेन विद्यमानं तत्रैव स्यात्। न तु शुद्धे इति मिथ्यामात्रवृत्ति कथं सत्त्वं तदभावसाधने च कथं न सिद्धसाधनता अंशे बाधादिकं न स्यात्। अत एव तादृशतादात्म्यं शुद्धेऽपि स्वीक्रियत इत्यशुद्धम्। सत्त्वं स्वोपहित एव स्वीक्रियते। तादात्म्यं तु शुद्धेऽपीत्यस्य त्वदिच्छाया एव नियामकत्वापातात्।

एतेन 'सत्त्वावच्छिन्नप्रतियोगिताकभेदवत्त्वासत्त्वावच्छिन्नप्रतियोगिताकभेदवत्त्वोभयवत्त्वं मिथ्यात्वम्। पर-मते च घटो न सत्त्वपर्याप्तावच्छेदकताकभेदवान् घटो न सदिति वाक्यप्रामाण्यानुरोधेन न सिद्धसाधनम्। यद्वा यावन्ति सद्भिन्नानि तत्तदभावकूटवद्धर्मवत्त्वं सद्भिन्नलक्षणत्वम्। व्याहत्य शुद्धान् प्रत्यक्त' इत्यप्यपास्तम्। सत्पदवाच्यत्वेन सत्पदार्थनिवेशे उक्तबाधानिस्तारात्। ब्रह्ममात्रवृत्तित्वेन निवेशे सिद्धसाधनतादवस्थ्यात्। असत्त्वसादृश्यार्थान्तरवारणायासत्त्वासत्त्वतद्भिन्नलक्षणवयोर्निवेशे न्यूनत्वाविरहात्। उपरुक्तपूर्वोक्तरीत्या निर-स्तत्वात्। निर्धर्मके ब्रह्मणि सत्त्वासत्त्वरूपधर्मद्वयासत्त्वेन मिथ्यात्वं न च निर्धर्मकत्वादेवोक्तभावद्वयमपि नास्तीति वाच्यम्। उक्तहेतोरुक्तसाध्यस्य ब्रह्मणि सत्त्वं सत्त्वादिना व्याहतेः। न च निर्धर्मकत्वाद्ब्रह्मणोऽनित्यादि-रिति वदतस्तवापि कथं न व्याहतिरिति वाच्यम्। अहृदयवाचामहृदयमेवोत्तरम् इति न्यायेन परोक्त्यैव तथा व्यवहारात्। न च परोक्त्यनुसरणे परोक्तरीतिसिद्धान्त्याभिनिरासोऽपि स्यादिति कथमतिव्याप्तिरिति वाच्यम्। अतिव्याप्त्युपयुक्तन्यायमात्रं परोक्तमादृत्यान्यं निराकृत्यातिव्याप्तेरभिधानात्। परोक्तसर्वरीत्यनुसरणे तेन सह विवादस्यैव पर्यवसानापत्त्या परोक्तसर्वरीत्यनुसरणाभावात्। अन्यथा तव परीतिमनुरुध्य वैतण्डिकतया तत्खण्ड-नाद्यभावापत्तेः। न च मदीयं निर्धर्मकत्ववचनं धर्मसामान्यमिथ्यात्वद्वारा स्वरूपमात्रबोधपर्यवसायीति वाच्यम्। मदीयमतिव्याप्तिवचनमपि ब्रह्मणोऽप्यनिर्वचनीयत्वापादनद्वारा सर्वशून्यतापादनपर्यवसायीत्यवेहि। न च ब्रह्मणि सत्त्वाभावेऽपि सद्रूपत्वान्न शून्यत्वमिति वाच्यम्। जगतोऽपि सत्त्वाभावेऽपि सद्रूपत्वेनाप्युपपत्त्या न मिथ्यात्वमि-त्यपि वक्तुं शक्यत्वात्। न चैकेनैवानुगतब्रह्मरूपसत्त्वेन सर्वत्र सदित्यनुगतव्यवहारोपपत्तौ सर्वत्र सत्त्वभावत्व-कल्पने गौरवरूपतर्कसहकृतानुमानेन मिथ्यात्वेनैव पर्यवसानान्नैवमिति वाच्यम्। धर्माभावात् सत्ता नास्तीति वदतः सद्रूपत्वधर्माङ्गीकारायोगेन धर्मं विनैव ब्रह्मविषयिणी सदिति प्रतीतिः प्रमेत्यङ्गीकृतं स्यात्। तथा घटादि-विषयिणी सदिति प्रतीतिः प्रमा स्यादित्यापादने कस्यापि धर्मस्याधिकस्याकल्पने गौरवोक्तेरसङ्गतत्वात्। न च शशविषाणं सदिति प्रतीतिप्रामाण्यवारणाय तद्विषयेषु स्वभावरूपवैलक्षण्यकल्पनं दुर्वारमिति वाच्यम्। ब्रह्मण्यपि स्वभावाख्यधर्माङ्गीकारे निर्धर्मकत्वहान्यापातेन तं विनैव तत्प्रतीतिप्रामाण्यदर्शनेनात्रापि तथैव वक्तव्यत्वात्। शशविषाणादिप्रतीतौ दोषस्तूभयोः समः। प्रत्युत घटादौ मिथ्यात्वरूपधर्मकल्पन एव परस्य गौरवमिति प्रति-तर्कपराहतेः।

किञ्च ब्रह्मणः सद्रूपत्वेन सदिति प्रतीतिगोचरता जगतस्तु सत्सम्बन्धात्तत्प्रतीतिरित्यङ्गीकारे रूपं रूपीति प्रत्ययवत्सत्ता सदिति प्रत्ययवच्च तत्सत्यं घटः सत्य इति प्रतीत्योर्वैलक्षण्यानुभवापातश्च। न चेष्टापत्तिः। सत्य

(द्वै षु ) ज्ञानमिति वाक्यजन्यबोधस्येद रूपमिति ज्ञानस्यारूपित्वग्रहाप्रतिबन्धकत्वमिवासत्त्वग्रहाप्रतिबन्धकत्वमपि स्यात् । तस्यापि स्वातन्त्र्येण प्रतिबन्धकत्वकल्पने तवैव गौरवम् । किञ्च सन् घट इत्यादिप्रतीतौ अविद्योपहितस्य वा शुद्धस्य वा ब्रह्मण एव स्वरूपत प्रकारत्वाङ्गीकारे तस्या द्रव्यत्वप्रकारकबुद्ध्यविशेषात् मिथ्यात्वग्रहविरोधित्वस्य सर्वानुभवसिद्धस्यानुपपत्ति । तस्या अपि स्वातन्त्र्येण प्रतिबन्धकत्वकल्पने तवैवाप्रामाणिककल्पनागौरवम् । ब्रह्मवदिदमिति ज्ञानस्य मिथ्यात्वाभावभिन्नसत्तारूपधर्मविशेषवदिति ज्ञानस्यापि प्रतिबन्धकत्वापत्तेश्च । घटत्ववानयमिति ज्ञानस्य स्वरूपतो घटत्वानवगाहिनोऽपि घटेतरावृत्तित्वघटितघटत्वत्वेन घटत्वावगाहिनो घटत्वव्याप्यवत्ताज्ञानमुद्रया अघटत्वज्ञानप्रतिबन्धकत्वदर्शनात् ।

किञ्च सत्तादात्म्यसम्बन्धस्य घटादावनङ्गीकारे घट सन्निति व्यवहारानुपपत्ति । अन्यथा रूपसम्बन्ध विनापि वायु रूपवानिति व्यवहारापत्ति । तत्स्वीकारे च घटादीनामेव मुख्यसत्पदार्थत्वेन सद्रूपत्व ब्रह्मण एवासद्रूपत्वमिति विपरीतमापद्यते। अन्यथा रूपस्यैव रूपिपदमुख्यार्थत्व घटस्य नीरूपपदार्थत्व स्यात् । अपि च प्रत्येकं घटादौ सत्तादात्म्याख्यसम्बन्धस्तत्प्रतियोगित्व सत्ताया त्वया कल्पनीयमिति तवैव गौरवम् । मम तु त्वदभिमततादात्म्यस्थानीयै स्वरूपसत्त्वैरेव सर्वत्र सद्व्यवहाराद्यङ्गीकारात् ब्रह्मण्यपि स्वरूपसत्त्वाङ्गीकारेण वैरूप्याभावात् । मम घटादौ स्वरूपसत्त्वसम्बन्धस्त्वदभिमततादात्म्य[1]सम्बन्धतुल्य । सत्तादात्म्ये सदिति प्रतीत्युपपादनवत् सत्त्वेपि सदिति प्रतीत्युपपादनसम्भवात । न च स्वरूपसत्त्वानामननुगतत्वादनुगतप्रतीत्यनुपपत्ति । अनुगतधर्मानङ्गीकर्तुर्घटादिप्रतीतीनामिवास्याप्युपपादनसम्भवात् । सत्तादात्म्यवदिति प्रतीतेरिवानुगमकधर्माङ्गीकारेणास्याप्युपपादनसम्भवाच्च । न च तर्हि नाममात्रे विवादपर्यवसान स्यादिति वाच्यम् । तादात्म्यस्य त्वयाऽन्यसम्बन्धत्वाङ्गीकारेऽन्यत्र तत्प्रतियोगित्वस्य तत्रान्यप्रतियोगिकत्वस्य परस्परतादात्म्याध्यासानुरोधेन घटादितादात्म्यस्यान्यत्र तत्प्रतियोगित्वादीना च कल्पनापेक्षयाऽतिलाघवेन महावैलक्षण्यात् । एतेन 'शुद्धब्रह्मण स्वरूपत प्रकारत्वोपपत्ति' इत्यपि निरस्तम् । परस्परतादात्म्यभानानुरोधेन शुद्धे विशेष्यत्वस्याप्यवर्जनीय[2]त्वापत्ते ।

किञ्च तादात्म्येन अन्येन वा सम्बन्धेन शुद्धब्रह्मणो घटादौ भाने घटादेरेव प्रतिपन्नोपाधित्वप्राप्त्या तत्र सत्त्वनिषेधे ब्रह्मण एव तादृशनिषेधप्रतियोगित्वरूपमिथ्यात्व दुर्वारम् । तस्य ससृष्टरूपेण मिथ्यात्वाङ्गीकारे घटादेरपि तथैवास्तु । प्रमाणवैषम्यस्य निराकृतत्वान्निराकरिष्यमाणत्वाच्च । न च घटादौ सत्तादात्म्य त्वदभिमत[3]ज्ञानविषयत्वस्थानीयमिति तवैव सत्त्वान्तराङ्गीकारात् गौरवमिति वाच्यम् । सत्त्वस्य विषयकोटावनिवेशो विषयवैलक्षण्यस्य ज्ञानवैलक्षण्यनिर्वाहकत्वसिद्धान्तहानिप्रसङ्गादसत एव प्रतीतिरित्यापाताच्च त्वयापि मदभिमतविषयतास्थानीयाकाराख्यविषयताङ्गीकारेण तादात्म्यकल्पनस्याधिकत्वाच्च ।

---

[1] तादात्म्यस्य सम्बन्ध इत्यर्थ । [2] निर्धर्मितावच्छेदककत्वविशेष्यकघटादिप्रकारकत्वापत्तिरिति भाव, ।

[3] ज्ञानस्य ब्रह्मत्वाद्विषयतायास्तादात्म्यत्वादिति भाव ।

(द्वै.द्यु) यत्तु 'सद्रूपत्वात् ब्रह्मणि सत्त्वात्यन्ताभावोऽपि नास्ति। सद्रूपत्वं च सत्त्वोपहितप्रतियोगिकतादात्म्यानुयोगित्वम्। तादात्म्यं च विशिष्टकेवलभावेन बोध्यम्। एवञ्च ब्रह्मणि सत्त्वास्वीकारेऽपि सत्त्वात्यन्ताभावोऽपि नास्ति। [1]स्वाश्रय इव स्वाश्रयीव केवलरूपेऽपि तदभावानभ्युपगमात्। अन्यथा गगनैकदेशवृत्तित्वे संयोगादेर्गगनावृत्तितया गगने न तदत्यन्ताभावस्वीकारापत्तिः' इति। तन्तुच्छम्। केवलरूपे सत्त्वं नास्ति सत्त्वात्यन्ताभावो नास्तीति प्रतीतिद्वयाङ्गीकारस्य व्याहतत्वात्। तत्र सत्त्वं नास्तीति प्रमाणसिद्धत्वे सत्त्वात्यन्ताभावो नास्तीति प्रमाणाङ्गीकारे सत्त्वास्वीकारस्य वाङ्मात्रत्वमेव। गगनैकदेशवृत्तिसंयोगस्य गगने तन्निष्ठत्वास्वीकारेऽपि तदवृत्तित्वास्वीकारात् दृष्टान्तोऽपि विषमः। न च भागद्वयस्येव शुद्धब्रह्मस्वरूपे विशेषस्यैवाऽभ्युपगमः येनेदं युक्तं स्यात्। केवलरूपे भेदकल्पनादेरप्ययोग एव। अन्यथा कश्चित् सत्त्वं स्वीक्रियताम्। कृतं इयं निष्प्रामाणिककल्पना।

किञ्च सत्त्वं विनाऽपि शशविषाणं सदित्यादिप्रत्ययवत् ब्रह्मजगतोरपि सत्प्रत्ययसम्भवात् सर्वशून्यत्वापत्तिः। न च जगतोऽपि स्वरूपवाधादने अर्थक्रियाद्यनुपपत्तिः अनिर्वाच्यत्वाङ्गीकारेऽपि तदुपपत्तिः। तृतीयप्रकारस्तु शून्यतया दुर्निरूप इति वाच्यम्। अधिष्ठानवृत्तिसत्त्वाद्यनुगमं विनाऽपि तदप्रतीतिसम्भवेन सदधिष्ठानकत्वाभावस्यैव शून्यतारूपत्वेनादरणीयत्वात्। न च जगद्भ्रमबाधकज्ञानविषयस्य ब्रह्मणो बाधकज्ञानाभावात् सत्त्वं बलात्सिद्ध्यति। तस्यापि बाधकज्ञानाङ्गीकारे तज्ज्ञानविषयस्यापि बाधकान्तरेण भाव्यमित्यनवस्था। यत्र पर्यवसानं तज्ज्ञानविषयस्यैव मया ब्रह्मत्वेनाबाधितत्वेन सत्यत्वस्याप्यङ्गीकारेण जगतस्सदधिष्ठानकत्वप्राप्त्या नोक्तापादानमिति वाच्यम्। 'नैव किञ्चनास्ति' इति ज्ञानस्यैव स्वपरसर्वबाधकत्वसम्भवात् तद्विषयतया अबाध्यस्यासिद्धेः। श्रुत्यादिमानकृतवैषम्यं तु ब्रह्मजगतोर्ब्रह्मणोऽपि मिथ्यात्वे प्रमाणमस्तीत्यनेन मूलकृदेव निरसिष्यति। अधिकमखण्डार्थभङ्गे वक्ष्यते।

यत्तु 'बाध्यत्वाभावरूपसत्त्वं ब्रह्मणि स्वीक्रियते। भावरूपधर्मानङ्गीकारेऽप्यभावरूपधर्माङ्गीकारात्। न चैवं तदाश्रयत्वादिभावधर्माणामप्यापत्तिः अभाववत्पदवाच्यतापत्तिश्चेति वाच्यम्। अभावाश्रयत्वादेरभावब्रह्मोभयाबहिर्भावात्। अभावादिभिन्नस्वसमसत्ताकधर्मशून्यत्वस्यैव निर्विशेषत्वरूपत्वात्। एतन्मते विषयादिपदवाच्यता स्वीक्रियते। न चापसिद्धान्तः। अभावान्य[2]स्वज्ञानाबाध्यधर्मप्रवृत्तिनिमित्तकशब्द[3]वाच्यत्वाभावस्यैव मतान्तराद्यावृत्तस्य तदर्थत्वात्' इति।

तत्तु 'ब्राह्मणाऽचारविरुद्धाऽचारः कर्तव्यः' इति म्लेच्छगुरूपदेशमनुकरोति निर्विशेषत्वावाच्यत्वश्रुतिसङ्कोचाऽवश्यकत्वे प्रमाणान्तरसिद्धकल्याणगुणतत्प्रवृत्तिनिमित्तकशब्दवेद्यत्वाद्यनुरोधेन सत्त्वादिगणराहित्याद्यर्थकत्वस्य साकल्येन शब्दावेद्यत्वाद्यर्थकत्वस्य च सम्भवे तद्विद्वेषेणैवोक्तार्थानुसरणात्। ब्रह्मादिपदावाच्यत्वमभाववत्पदादिवाच्यत्वमित्यत्र विशेषप्रमाणानुपलम्भात्।

---

[1] स्वाश्रये स्वाभाव इव केवलरूपेऽपि इति पाठेन भाव्यमिति भाति। [2] विषयत्वमपि ग्राह्यं [3] घटादौ प्रसिद्धस्य

(द्वै० यु०) यत्तु 'असतः सत्त्वेन प्रतीत्यनङ्गीकारे सत्त्वेन प्रतीत्यर्हत्वं यथाश्रुतमेव साधु' इति तत्तु 'तद्धैक आहु' इति श्रुत्याऽसतः सत्त्वेन प्रतीत्युक्तेर्हेयम्। एतदर्थस्तूत्तरत्र विवेचितोऽनुसन्धेयः। तस्मात्सदसद्विलक्षणत्वलक्षणमयुक्तमेव।

एवं 'प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वं नेह नानेति श्रुत्यर्थनिर्णयाय साध्यते' इत्यपि न सत्। नेह नानेति श्रुतेरेकत्र भावाभावोभयबोधकत्वे व्याहतेरस्तद्दोषस्य आहार्यत्वापत्तिरूपदोषस्याभिहितत्वेन अनुमानेऽपि तादृशदोषस्य दुर्वारत्वात्। न च श्रुत्यनुमानाभ्यामेकत्र वा यमानयोर्भावाभावयोर्विरुद्धत्वग्रहाभावात्तत्राऽहार्यत्वं तज्जन्यबोधस्येति वाच्यम्। तथात्वे श्रुत्यादिप्रमाण्यबलेन एकत्र विद्यमानपदार्थयोः प्रतियोग्यनुयोगिभावमात्रमिद्धावप्यव्याप्यवृत्तिभावाभावयोरिव व्याप्यवृत्त्योरपि स्वरूपापहाररूपमिथ्यात्वासिद्ध्या निर्विशेषब्रह्मासिद्धिरूपदूषणस्य प्रागेवाभिहितत्वात्। न च रूप्यादौ तथात्वे मिथ्यात्वमुपलब्धम्। किं तावता। सर्वश्रुतीनां तात्त्विकप्रामाण्यलाभाय दृष्टविरुद्धार्थ एवैतादृश स्वीक्रियताम्। त्वयैव चेदमभिहितं 'प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकविशिष्टाधिकरणे तेन सम्बन्धेन तद्धर्मावच्छिन्नाभावो व्याप्यवृत्तिर्न दृष्ट' इति चेन्मा दर्शि 'न हि सर्वात्मना दृष्टजातीयमेव बोधनीयमिति नियम' इति। एवमुत्तरत्रापि।

अस्तु प्रत्यक्षानुरोधेनाभावः प्रतियोगिविरुद्ध इति नियमस्येव श्रुत्याद्यनुरोधेन व्याप्यवृत्तिरभावोऽपि प्रतियोगिविरुद्ध इति नियमस्यापि परित्यागः। उक्तं च 'विरुद्धमिति न कः सम्प्रत्ययः' इति। इति च। तस्माद्व्याहत्या योऽर्थः श्रुत्यादिभिः सिद्ध्यति तात्पर्यवशात्तत्र तदनुरोधेन प्रत्यक्षसिद्धार्थवैलक्षण्यमङ्गीकृत्य प्रत्यक्षसिद्धनियमे सङ्कोचः। यथा यन्न दुःखेन सम्भिन्नमित्यादिश्रुत्या लोकविलक्षणसुखादिसिद्धौ यत्सुखं तन्नाभिलाषोपनीतमित्यादिप्रात्यक्षिकसहचारसिद्धनियमस्य प्रत्यक्षविषयीभूतार्थविषयकत्वेन सङ्कोचः कल्प्यते। अत एव भगवत्करचरणादीनामभेदस्याणुमहत्त्वादीनां च युगपद्वृत्तित्वस्य बोधवेलायां तयोर्भावाभावरूपत्वाभावेन व्याहत्यभावेन श्रुतितात्पर्यबलात्तत्सिद्धौ तेषां लोकविलक्षणत्वकल्पनया प्रात्यक्षिकनियमस्य सङ्कोचः। अन्यथा अलौकिकार्थसिद्धिरेव दुर्लभा स्यात्।

क्वचित् 'मृदब्रवीत्' 'उत्ताना ह वै देवगवा वहन्ति' इत्यादेर्यथाश्रुतस्यार्थस्य प्रतिपादनवेलायां व्याहत्यभावेऽपि प्रत्यक्षसिद्धव्याप्तिकानुमानविरोधात्तत्परित्यागस्तु तत्र शब्दानामनेकार्थत्वेनाबाधितस्याप्यर्थस्य तात्पर्याभावे परित्यागस्य लौकिकस्थलेऽपि दृष्टत्वात्प्रकृतवाक्यस्य जडस्यैव वक्तृत्वतात्पर्यकत्वग्राहकप्रमाणानवतरणेन अबाधितार्थान्तरपरतानिश्चयेन।

किं च व्याहतेरपरिगणने प्रमाणप्राबल्यदौर्बल्यचिन्ताप्ययुक्ता स्यात्। श्रुतिद्वयेन विरुद्धार्थद्वयप्रतीतौ तयोरेकत्रासमावेशादेकानुसारित्वे परस्य कल्पनीयेऽन्यतरस्यैव परिग्रहाय प्राबल्यादिचिन्ता। विरुद्धार्थयोरेकत्र श्रुतिबलात्समावेशाङ्गीकारे कुतोऽयमायासः। अव्याप्यवृत्त्योर्भावाभावयोरविरुद्धत्वस्यैव दर्शनादस्तु तत्र बोधकत्वम्। तत्राप्यविरुद्धत्वाग्रहदशायां संयोगवान् संयोगाभाववानिति वाक्यमबोधकमेवानुभवसिद्धम्। वस्तुतः अव्याप्य-

(द्वै षु) वृत्त्यभावस्यापि निराकरिष्यमाणत्वाद्भावाभावयोर्विरोध एव । तस्माद्भावाभावयोर्विरुद्धत्वानवगाहने[1] त्वदभिमतमिथ्यात्वसिद्धिः । अवगाहने च श्रुतेरनुमानस्य च तादृशबोधजनकत्वस्यैवाभावो दुर्वार एव ।

किं च सर्वदृश्यस्य तन्निष्ठमिथ्यात्वस्य च मिथ्यात्वे श्रुत्याऽनुमानेन वा बोधिते मिथ्यात्वेनागृह्यमाणमिथ्यात्वविषयकत्वरूपप्रामाण्यस्य श्रुतिवाक्यजन्यबोधे गृहीतत्वाभावप्राप्त्या तत्र व्यावहारिकप्रामाण्यासिद्धिप्रसङ्गेनासाधकत्वात्तदुपन्यासादौ प्रवृत्त्यभावप्रसङ्गः । मिथ्यात्वेनागृह्यमाणतद्विषयकत्वरूपप्रामाण्यग्रहस्यैव प्रवृत्त्याद्युपयुक्ततायास्त्वयाऽभिहितत्वात् । दृश्यत्वरूपसामान्यधर्मपुरस्कारेण सर्वमिथ्यात्वनिश्चयाय मिथ्यात्वावच्छेदकीभूतदृश्यत्वग्रहबलेन तन्मिथ्यात्वनिश्चयस्यावर्जनीयत्वात् । न च स्वासमर्थतदभावोभयनिषेधकवाक्ये प्रामाण्यग्रहो लोकानां दृष्ट इति वाच्यम् । स्वाप्तरजतं नास्ति तदभावोऽपि नास्तीति वाक्यस्य तदभावत्वावच्छिन्नाभावबोधकस्य व्याहतत्वस्यैव सर्वलोकसम्मतत्वात् ।

एवमेतल्लक्षणनिविष्टस्वाभावनिष्ठन्यूनसत्ताकत्वादेः श्रौतपदबोध्यतया सदेव सोम्येदमग्र आसीदिति शाखान्तरस्थवाक्येन सहैतद्वाक्यस्यैकवाक्यतायाः सत्त्वात्तत्वाचैव श्रुतेर्मिथ्यात्वबोधकत्वमपि । पारमार्थिकत्वेन निषेधपरत्वे स्वरूपतो निषेधपरत्वे श्रुतेर्यादृशप्रकारः पूर्वमेव दर्शितः ।

न चेहेत्यस्य सदेव सोम्येदमग्र आसीदिति वाक्यज्ञानप्रतिपाद्यजगत्तादात्म्यापन्नं ब्रह्म नार्थः । तथात्वे मिथ्यात्वशरीरप्रविष्टस्वप्रकारकधीविषयत्वाबोधनेन श्रुतेर्मिथ्यात्वबोधकत्वाभावापत्तेः । स्वसमानाधिकरणाभावप्रतियोगित्वरूपमिथ्यात्वबोधकत्वपक्ष एव तथार्थः । इदानीं तु इहेत्यस्य जगत्तादात्म्यापन्नत्वेन प्रतीयमानार्थकत्वमेव । तथा च कथमाहार्यबोधजनकत्वं श्रुतेरुच्यते । घटप्रकारकप्रतीतिविषयीभूतं घटशून्यमित्यस्याहार्यत्वाभावादिति वाच्यम् । तथात्वे तच्छ्रुत्या प्रतिपादितार्थो नास्तीति निषेधे तच्छ्रुतेरप्रामाण्यमेतच्छ्रुत्यैव बोधितं स्यादिति श्रुतेरुन्मत्तवाक्यतापातः । श्रुतित्वाविशेषेण स्वस्याप्रामाण्यापत्तेर्दुर्वारत्वात् । सत्यज्ञानादिश्रुतितात्पर्यविषयीभूते असत्त्वविरोधिसद्रूपत्वादिकं किमपि नास्तीत्यर्थस्यापि वक्तुं शक्यत्वेन शून्यवादापत्तेरिति दिक् । तथा च श्रुत्यनुग्रहाभावात्स्वसमानाधिकरणाभावप्रतियोगित्वरूपमिथ्यात्वस्वरूपमेव दुर्लभम् । पारमार्थिकत्वेन निषेधघटितत्वेऽपि श्रुत्यर्थनिरासप्रस्तावोक्तबाधकानामविशेषात् ।

**एतेन** प्रतिपन्नोपाधिनिष्ठस्वान्यूनसत्ताकाभावप्रतियोगित्वं मिथ्यात्वमिति न किञ्चिदनुपपन्नम् । यद्वा प्रातिभासिकनिष्ठं यत्स्वसमानाधिकरणाभावप्रतियोगित्वं विनाशिनिष्ठं यदप्रातिभासिकस्य स्वसमानाधिकरणात्यन्ताभावस्य प्रतियोगित्वं तयोरन्यतरवत्त्वं प्रतिपन्नोपाधीत्यादेरर्थः । अत्र च शुक्तिरजतादेरनिर्वाच्यतासाधनानन्तरमेव अनुमानस्य प्रवर्तनीयतया एतदनुमानात्पूर्वं ब्रह्मान्यविषयकज्ञानजन्यनाशप्रतियोग्यज्ञानप्रयुक्तस्य भ्रमादेः प्रातिभासिकशब्दार्थस्य [2]तदन्यत्वरूपाप्रातिभासिकस्य च माध्वमते प्रसिद्धत्वेऽपि तत्र स्वसमानाधिकरणात्यन्ताभाव-

[1] त्वदभिमतमिथ्यात्वासिद्धिः इति पाठेन भाव्यमिति भाति ।

[2] तदन्यरूपाप्रातिभासिकस्य इति पाठेन भाव्यमिति भाति ।

(द्वि. यु. प्रतियोगित्वस्याप्रसिद्ध्या दृष्टान्तस्य साध्यविकलतेति दूषणानवकाशः । किं च साध्यं प्रति स्वप्रकारकधी-विशेष्यत्वव्यापकात्यन्ताभावप्रतियोगितामात्रं साध्यते । तेन प्रातिभासिकस्यात्यन्ताभावादेरनभ्युपगमेन सिद्धसाधनतादेरुपन्यासायोगात् । मद्रीत्योक्तसाध्यस्य पारमार्थिकत्वाविरोधित्वेपि तद्रीत्या तथात्वानपायात् । यदि चास्मद्रीत्यापि साध्यस्य तथात्वमावश्यकम् । अन्यथा सिद्धसाधनताया अभावेऽप्यर्थान्तरता दुर्वारैवेत्युच्यते । तदा मिथ्यात्वघटकात्यन्ताभावे प्रातिभासिकान्यत्वविशेषणस्योपादानात्रासङ्गतिः । प्रातिभासिकं च परमते सदलीकं वाऽस्तु । उभयथापि तदन्यत्वं न प्रसिद्धम् । न च स्वप्रकारकधीविशेष्यत्वव्यापकात्यन्ताभावे प्रातिभासिकान्यत्व-निवेशो न सम्भवति । अधिकरणात्मकाभाववादिमते शुक्तिरजतादावारोपिते रजते हेतौ सत्त्वेन व्यभिचारादिति वाच्यम् । तादृशरजतादेः प्रमाणिकत्वे स्वप्रकारकधीविशेष्यताव्यापकात्यन्ताभावाप्रतियोगित्व[1]प्रातिभासिकान्य-त्वोभयाभावस्यैव प्रतियोगित्वान्नेन विवक्षणीयत्वयोक्तदोषानवकाशात् । प्रातिभासिकान्यत्वस्यैव पक्षविशेषणकोटौ निवेशाच्च न प्रातिभासिकत्वमादायार्थान्तरता ।

यद्वा व्यावहारिकपारमार्थिकान्यतरनिष्ठं यत्प्रातिभासिकाभावप्रतियोगित्वं यच्च विनाशिनिष्ठं व्यावहारिका-भावप्रतियोगित्वं तदन्यत्वमसमानाधिकरणाभावप्रतियोगित्वमुक्तवाक्यार्थः । अत्रान्यतरान्तेन व्यावहारिकेत्यनेन च ब्रह्मान्यविषयकज्ञानाबाध्यस्य प्रातिभासिकशब्देन ब्रह्मान्यविषयकज्ञानजन्यनाशप्रतियोग्यज्ञानप्रयुक्तस्य च विवक्षणान्नानुमानात्प्राक् मतान्तरासिद्धिनिबन्धनो दोषः । वस्तुतः परमते तादृशप्रतियोगिताद्वयस्य सत्त्वेऽलीकत्वेपि वा तद्भेदस्य नासिद्ध्यवकाशः । न चात्र साध्यवैकल्यम् । स्वाधिकरणेत्यनेन स्वनिरूपितत्वस्वसजातीय-निरूपितत्वोभयाभावत्वो[2] विवक्षणात् । साजात्यं च कालसम्बन्धतदभावान्यतररूपेण बोध्यम् । शून्यवादापत्ति-वारणाय सतादात्म्यमपि पक्षविशेषणमुपादेयम् । स्वाधिकरणसन्निकृष्टेत्यादि वाच्यम् । न चैवमपि शुक्तिरजतादेः अलीकतया अविनाशित्वेन तन्निष्ठादुक्ताभावप्रतियोगित्वादन्यस्य तन्निष्ठस्याभावप्रतियोगित्वस्याप्रसिद्ध्या साध्य वैकल्यं दुर्वारमिति शङ्क्यम् । अविनाशीत्यनेन कालसम्बन्धित्वविशेषितस्याविनाशिनो विवक्षणीयत्वात्" इति परिष्कारप्रकारोपि निरस्तः ।

प्रतिपन्नोपाधीत्यनेन स्वप्रकारकधीविशेष्यविवक्षणे पूर्वलक्षणस्यापि तथैव परिष्कृतत्वात्स्वान्यूनसत्ताकत्वादे-रपि तत्रार्थान्तरवारणायाऽऽवश्यकतया अत्रापि असत्त्ववारणस्य यथाश्रुतायूनसत्ताकत्वेन सम्भवेऽत्रेव पूर्वत्रापि सम्भवेन सद्वैलक्षण्यरूपसतादात्म्यं पूर्वत्रापि व्यर्थम् । नो चेदत्राप्यावश्यकम् । तथा च पूर्वलक्षणाविशेषापत्तिः । तत्र च दोष उक्त एव । अत एव किञ्चेत्याद्ययुक्तमेव । एतत्प्रमेयस्य पूर्वलक्षणार्थतयोक्तत्वेनैतल्लक्षणार्थतया कथनासङ्गतेः ।

---

[1] अत्यन्ताभावे प्रातिभासिकान्यत्वं वर्तत एव । अन्यथा स्वमतेन पूर्वोक्तार्थान्तरानिरासापत्तेः ।

[2] भावत्वो इति पाठेन भाव्यमिति भाति ।

(द्वै.द्यु) यदि तु प्रतिपन्नोपाधीत्यस्य स्वाधिकरणेत्यर्थस्तदा स्वसमानाधिकरणाभावेत्यादिलक्षणस्वरूपमप्रसिद्धमेव। भावाभावयोर्विरोधस्य पूर्वमेव बहुश उपपादितत्वात्। यदपि साध्यप्रसिद्ध्युपपादनायोभयाभावस्याधिकरणताया निवेशनं तदपि वैयर्थ्यादनुपादेयमेव। एकमात्रवृत्तिरूपावच्छिन्ननिरूपकताकाधिकरणताना सर्वत्र सत्त्वेन तासा चोभयानिरूपितत्वेनोभयाभाववत्तयोभयाभाववदधिकरणनात्वावच्छिन्नस्यापि केवलाधिकरणतात्वावच्छिन्नवत्केवलान्वयितयाऽधिकरणतायामुभयाभावस्याव्यावर्तकत्वात्। अत एव साजात्यादिपरिष्कारोपि वृथैव। तथा चोभयाभाववदधिकरणतावन्निष्ठाभावप्रतियोगिनामात्रसाधने सिद्धसाधनमेव। घटस्य स्वानधिकरणपटाधिकरणदेशनिष्ठाभावप्रतियोगित्वात्। अधिकरणतायां पुन स्वनिरूपितत्वोपादाने पुन साध्यवैकल्यम्। तादृशाधिकरणताव्यापकत्वविवक्षणे च तत्समानाधिकरणभेदप्रतियोगितावच्छेदकत्वाभावो भेदप्रतियोगितावच्छेदकत्वाभावसमनियत इति केवलान्वय्यभावप्रतियोगित्वमेवोक्तं स्यात्। तस्य च गगनादिवत्सत्त्वेप्युपपत्त्याऽर्थान्तरमेव।

अत्र भेदगर्भस्वसजातीयानिरूपिताधिकरणतामात्र तु निवेश्य साध्यवैकल्योद्धार कर्तुं शक्य। तथात्वे असत्त्वमादाय स्वनिरूपिताधिकरणतासिद्धिमादाय वाऽर्थान्तरमेव दुर्वारं बोध्यम्. स्वानिरूपितत्वघटितोभयाभावबोधकपाठसत्त्वेप्येष एव दोष। उभयाभावपर्यन्तानुसरणं विफलमित्यधिकमिति ध्येयम्।

यदपि शून्यवादापत्तिवारणाय सत्तादात्म्य निविष्टं तदपि पूर्वमेव निरस्तम्। तद्दोषवारणायैव 'सन्निष्ठत्व वा अभावे देयम्' इत्युक्त तत्र वक्तव्यं शून्यवादो नाम जगत सदनधिष्ठानकत्वेनात्यन्तासत्त्ववाद। अथ वा अबाध्यवस्त्वेव नास्तीति वाद। नाद्य। शशविषाणाद्यत्यन्तासतोऽभावस्य [1]सत्त्वेपि वृत्तितया अभावे तद्वृत्तित्वमात्रेण तस्यात्यन्तासत्त्वान्यावृत्ते। अधिकरणतावत्येव सत्त्वानिवेशो चतुर्थलक्षणे वक्ष्यमाणरीत्या तदसिद्धिर्द्रष्टव्या। द्वितीये किमबाध्यस्य सर्वथाऽसिद्धिकाल उक्तानुमानेनैव तत्सिद्ध्यर्थं तन्निवेश उत तत्सिद्धिकाले जगन्मिथ्यात्वसाधनावसरे। नाद्य। तस्य सर्वथाऽप्रसिद्धौ तद्घटितसाध्यस्यैवाप्रसिद्धि स्यात्। सदिति प्रतीतिविषयत्वादिना कथञ्चिन्निवेशो तादृशविषयस्यैव बाध्यत्वाङ्गीकारान्न तेनाबाध्यसिद्धि। न द्वितीय। जगन्मिथ्यात्वसाधनेपि ब्रह्माबाध्यत्वहान्यभावेनोक्तशून्यवादाप्रसक्ते।

यदपि मन्मते 'ब्रह्मज्ञानान्येत्यादिना भ्रमस्यैव प्रातिभासिकपदार्थस्य प्रसिद्धि' इत्यभिहित तदस्मन्मतापरिज्ञानमूलकम्। मन्मते तूलाज्ञानानङ्गीकारेण ज्ञानप्रागभावस्यैव तथा व्यवहारात्। ज्ञानविरुद्धत्वेन निवेशो विरोधस्य वध्यघातकभावरूपत्वे प्रागभावस्य प्रतियोग्यनाश्यत्वात् तदसङ्गह।

यत्तु गुरुचन्द्रिकायां सत्ताभेदस्यैतदनुमानात्प्राक् [2]असिद्धिमाशङ्क्य 'मिथ्यात्वविप्रतिपत्तिवेलायां भावाभावयोर्विरोधासिद्ध्याऽनुमित्यनन्तरमन्यूनसत्ताकत्वादिक सिद्ध्यति' इत्युक्त तदसत्। विरोधग्रहाभावे विप्रतिपत्तेरेवाभावप्रसङ्गात्।

---

[1] सत्यपि इति पाठेन भाव्यमिति भाति।

[2] तथा च स्वसमानाधिकरण्य अभावे निवेशयितुमशक्यम्। विरोधग्राहकस्य सत्ताभेदावेरस्फुरणादिति शङ्काभाव:।

(द्वै ध्यु ) यदपि उक्तलक्षणघटकाभावस्यपारमार्थिकत्वपक्षे द्वैतव्याघातपरिहाराय ब्रह्मस्वरूपत्वाभिधानं तदप्ययुक्तम् । प्रतियोगिसापेक्षत्वाधेयताशालिनो निरपेक्षेण शुद्धेन भेदायोगात् । न च त्वन्मते सापेक्षभेदस्य निरपेक्षधर्म्यैक्यवदुपपत्तिरिति युक्तम् । मन्मते स्वरूपभेदेनोभयसम्भवात् । न च ममापि तथास्त्विति वाच्यम् । अभावत्वोपहितस्य मिथ्यात्वेन पारमार्थिकत्वोक्त्यसङ्गतेः । न च तदीय केवलरूप सत्यमिति वाच्यम् । तस्य स्वाधिकरणावृत्तित्वेन लक्षणाघटकत्वेन प्रश्नाविषयत्वात् ।

यदप्येतत्प्रसङ्गे 'अविद्याविषयत्वोपहितस्य ब्रह्मणो दृश्याधिष्ठानत्वेनेहेति श्रुतिबोध्यत्वानुपपत्तिः । अधिष्ठानस्याध्यस्ताधिकसत्ताकत्वनियमात्' इति बाधकपरिहाराय 'अध्यस्तबाधकाबाध्यत्वीयकेवलरूपकत्वमेव तत्र तन्त्रम्' इत्यभिहितम् । तदप्यसत् । एवं सति तत्तद्विशेषाभावस्यैवाधिष्ठानताप्रयोजकत्वप्राप्त्या लाघवात् व्यवहारकालाबाध्यत्वमात्रेण शुक्त्यादेरिव ब्रह्मणोऽधिष्ठानत्वोपपत्तौ सर्वथा अबाध्यत्वाङ्गीकारस्य निष्प्रयोजनकत्वापत्तेः । बाधस्य नि साक्षिकत्व तु तव मतेऽप्रविशिष्टमिति पूर्वमेवाभिहितम् । शुद्धस्याधिष्ठानत्वमपि न युक्तम् । अधिष्ठानत्वादिधर्मकल्पनायां शुद्धत्वस्यैव विघातप्रसक्तत्वात् । अधिकमग्रे वक्ष्यते ।

यदपि 'भेदवदत्यन्ताभावस्यापि अधिकरणस्वरूपत्वमेव परमते युक्तम् । भेदस्य भेदे भेदपरम्पराऽनवस्थाया इवात्यन्ताभावस्य भेदे तदत्यन्ताभावत्वाभावतत्त्वात्यन्ताभावपरम्परयाऽनवस्थासाम्यात्' इति प्रसङ्गादभिहितम् । तदप्रामाणिकप्रतियोगिकात्यन्ताभावविचारावसरे एवापहस्तितम् ।

यत्तु 'शशविषाणं नरविषाणं नेति प्रत्ययस्य कथं स्वरूपभेदपक्षे प्रामाण्यम्' इति तन्न । अस्याः प्रतीतेः घटो न भवति पट इत्यादेरिव परस्परतादात्म्यस्वरूपाभावप्रतियोगिकात्यन्ताभावविषयकत्वाङ्गीकारात् । प्रपञ्चितमेतदधस्तादिति ।

ज्ञाननिवर्त्यत्वरूपमिथ्यात्वं तु पूर्वमेव निरस्तम् ।

यदपि 'स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वं मिथ्यात्वम् । तदर्थश्च सत्त्वावच्छिन्नस्वनिष्ठप्रकारतानिरूपितविशेष्यताव्यापकात्यन्ताभावप्रतियोगित्वं सत्त्वावच्छिन्नस्वाधिकरणताव्यापकस्वात्यन्ताभावकत्वं सत्त्वसमानाधिकरणस्वावच्छिन्नाधिकरणताव्यापकतावच्छेदकयद्धर्मावच्छिन्नप्रतियोगिकात्यन्ताभावत्वं तद्धर्मवत्त्वं वा । सत्त्वं चाऽबाध्यत्वोपलक्षिततादात्म्यम् । शुद्धचित इन्द्रियागोचरत्वेपि शाब्दादिज्ञानमादाय लक्षणसमन्वयः । शुद्धस्य वृत्त्यविषयत्वे अबाध्यत्वोपहिततादात्म्यमेव तत्' इति । तदपि न । भावाभावयोर्विरोधस्य पूर्वं व्यवस्थापितत्वेन लक्षणस्य व्याहतत्वात् । न च विषमसत्ताकयोरविरोध इति वाच्यम् । अद्यापि सत्ताभेदासिद्धेः । प्रातिभासिकस्य निराकृतत्वात् । अविरोधे वा प्रमेयत्वादिसामानाधिकरण्यवत्तत्सामानाधिकरण्यस्यापि स्वरूपाविघातकत्वात्प्रमेयत्वादौ अनवच्छिन्नवृत्तिके स्वप्रतियोगिकत्वसिद्ध्याऽप्यनुमानश्रुत्योः कृतार्थत्वापाताच्च । न चैतत्सिद्धेर्निष्प्रपञ्चब्रह्मसिद्ध्यननुगुणत्वान्नात्र श्रुतेस्तात्पर्यं कल्प्यमिति वाच्यम् । अविरुद्धव्याप्यवृत्त्यभावतत्प्रतियोगिनोरेकत्र प्रतिपादनस्यापि तदननुगुणताया पूर्वमुपपादितत्वात् ।

(द्वै द्यु ) अपि चैतल्लक्षणस्य सत्तादात्म्ये अव्याप्तिः । तस्मिन् वृत्तित्वस्य तत्र निराकृतत्वात् । अपि च सत्तादात्म्यस्य घटादाविवासत्यपि पूर्वोपपादितरीत्याऽवर्जनीयतया तत्रातिव्याप्तिः । तत्र तदसिद्धौ घटादावपि तदसिद्ध्याऽसम्भवः । किं च सत्त्वोपहिततादात्म्यस्य पूर्वोपपादितरीत्या तत्राभावाभावादात्म्यनिरूपितप्रतियोगित्वानुयोगित्वयोरपि सत्तादात्म्यान्तरस्वीकारे तत्प्रतियोगितायामप्यन्येत्यनवस्थाभयेन सत्तादात्म्यस्य तयोरप्यभावात्तत्राप्यव्याप्तिः । सत्तादात्म्यस्य द्विष्ठत्वे उपलक्षिततादात्म्यस्य शुद्धेऽपि ब्रह्मणि सत्त्वावच्छिन्नाभावप्रतियोगित्वं जगतीव ब्रह्मण्यपि दुर्वारम् । प्रतियोगितावच्छेदकधर्मवत्त्वे न सत्त्वावश्यम्भावात् । अन्यथा सत्त्वेन सदलीकोभयाभावीयन्यूनवृत्तिधर्मावच्छिन्नप्रतियोगितामादाय सिद्धसाधनतावारकविशेषणदाने [1]तस्यासङ्गत्यप्रसङ्गात् ।

[2]किं च ब्रह्ममात्रे कल्पितज्ञानत्वानन्दत्वादिधर्मावच्छिन्नाभावप्रतियोगित्वं तदाश्रये ब्रह्मणि वर्तत इत्यतिव्याप्तिः । 'इदानीमत्र नानन्द' इति प्रत्ययेनानन्दत्वोपहितस्य मिथ्यात्वानुरोधेन तदत्यन्ताभावस्यावश्यमभ्युपगमात् । न चोपहित एव तद्वर्तते न शुद्ध इति वाच्यम् । शुद्धघटादौ प्रतियोगित्वानवगाहने तत्राप्युपहित एव प्रतियोगितासत्त्वात् । ननूपहितवृत्तिप्रतियोगित्वं शुद्धेऽपि वर्तत इति तन्मिथ्यात्वसिद्धिः । ब्रह्मणि न सत्त्वमित्यादिश्रुत्यनुरोधेनोपहितनिष्ठमिथ्यात्वादिधर्मा न स्वीक्रियन्ते । न तथा घटादाविति चेत्तर्हि जगत्सत्यत्वबोधकेषु विश्वं सत्यमित्याद्यागमेषु दीयतां दृष्टिः ।

किं च प्रथमनिरुक्तौ असत्यतिव्याप्तिः । 'तद्धैक आहुरसदेवेदमग्र आसीत्तस्मादसतः सज्जायेतेति । कथं खलु सोम्यैवं स्यात् कथमसतः सज्जायेत' इति श्रुत्या निराकरणार्थं असतः सत्त्वप्रतीतेरनूदितत्वात् सत्त्वावच्छिन्नप्रकारतासम्भवात् । न चासतः सत्त्वप्रतीतेराहार्यतया तद्विषयीभूतार्थस्य व्याहततयाऽतिनिर्दलस्यलक्षनिरासार्थं श्रुत्याऽनुवादायोगात् सदेव सोम्येदमग्र आसीदित्यादिश्रुत्यर्थाभाव एवानूद्यत इति वाच्यम् । नेह नानेतिश्रुत्यर्थात्मके परस्परविरुद्धत्वानवगाहिभावाभावज्ञानस्यानाहार्यतायां तयोरविरोधस्य च त्वयैव भाषितत्वेन त्वत्सदृशस्य कस्यचिद्विरोधानवगाहितादृशज्ञानोत्पत्तौ बाधकाभावात् । निरुपाख्यत्वरूपासत्त्वावच्छिन्ने घटः सन्नित्यादिप्रतीतौ भासमानं त्वया लक्षणे निवेशितं यादृशं सत्त्वं तत्प्रकारकत्वे भावाभावरूपत्वाभावेनाहार्यत्ववार्तायाः अप्यभावात् । न च तथावादी कोऽपि नास्तीति वाच्यम् । यथाश्रुतशून्यमते सम्भवात् । अत एव 'न निरुपाख्योपादानता जगतः । सदन्वयात्' इति विवरणवार्तिकारूपस्य 'निरुपाख्यकारणतावादिनं प्रति निरुपाख्यत्वहेत्वसङ्गतेराह' इति तत्त्वदीपनवाक्यस्य 'बौद्धो यदि निरुपाख्यं कारणमिति ब्रूयात्तदा न प्रत्याह' इत्यभिप्रायो अद्वैतचन्द्रिकायां वर्णितः । कथञ्चिदपि बौद्धमतस्याभावे तथाभिधानमसङ्गतमेव स्यात् । अन्यथा वेदान्ती ब्रूयादिति कुतो नोच्यते । किञ्च शून्यस्यैव सद्वृत्तियोगादिव त्वन्मते ब्रह्मणोऽज्ञानवशात्कल्पितधर्मवत्तया जगद्विवर्तोपादानतया सत्त्वादिधर्मशून्यतया असद्रूपत्वेन प्रतीतिरुपपद्यत एव ।

---

[1] प्रतियोगित्वस्य ।    [2] सत्त्वावच्छिन्नत्वस्य प्रकारतायामेव विशेषणे त्वाह ॥ किञ्चेति ॥

(द्वै. यु.) अथ वा श्रुतितात्पर्यापरिज्ञानप्रमादमतस्यैवानुवादोऽस्तु। 'असद्वा इदमग्र आसीत्ततो वै सदजायत तस्मात्तत्सुकृतमुच्यते' 'असदेवेदमग्र आसीत् तन्मनोऽकुरुत असत सदजायत' इत्यादिश्रुतीनां उपलम्भे एकजातीयानां नानास्थले श्रुतत्वेन बहुबाधान्यायत्वबुद्ध्या व्याहतार्थेऽपि कथञ्चिद्व्याहतिपरिहारभ्रमेण यथाश्रुतार्थे तात्पर्यभ्रमसम्भवात्। न वा श्रुतीनामद्वैततात्पर्यमहद्वत् इष्टापूर्तं मन्यमाना वरिष्ठमित्यादीनामिव श्रुतितात्पर्यापरिज्ञानप्राप्त्याप्यनुवादकत्वं युक्तम्। न चातिनिर्दिष्टत्वान्निराकरणायोग। कथञ्चिद्व्याहतिपरिहारेण प्रवृत्तस्य व्याहतेरेव दृढीकरणेन निराकरणसम्भवात्। अत एव युक्त्यन्तरमनभिधाय 'कुतस्तु खलु सोम्यैव स्यात्। कथमसत सज्जायेत' इत्यनेन व्याहतिरेव तदभिमतमार्गान्तरासम्भवाभिप्रायेण दृढीकृता। अन्यथैकत्र सप्तभङ्गित्वादेरतिविरुद्धस्य निराकरणाय 'नैकस्मिन्नसम्भवात्' इत्यधिकरणप्रवृत्तिर्न स्यात्।

सदेवेति श्रुत्यर्थाभावोऽनूद्यत इत्यर्थ एवायुक्त।

यत 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं' 'तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसत सज्जायते' इति 'कुतस्तु खलु सौम्यैव स्यादिति होवाच कथमसत सज्जायेत' इति 'सत्त्वेव सोम्येदमग्र आसीत्' इत्यारभ्योत्तरत्र तेजआदिसृष्टि श्रूयते। तत्र 'सदेवेति वाक्येन सतोवस्थानमात्रस्योक्तत्वेन सतः सदुत्पत्तेरनभिधानात् 'तस्मादसत सज्जायते' इति वाक्यानुपपत्ति। यस्मात् 'सत् अग्रकाले नास्ति तस्मात्सत सज्जायते अग्रकाल इति न युक्तम्। पूर्ववाक्ये एतद्वाक्ये च अ इत्यस्य प्रतिषेधार्थकस्य नञन्यस्य सत्पदेनासमस्तत्वाद्विशिष्ट वाक्यार्थाभावबोधकत्वोपपत्ति। अग्र इत्यस्य तस्मादित्युत्तरवाक्येप्यनुवर्तनेनाग्रकाल एव सत सदुत्पत्तेर्निषेधादिदानी तदुत्पत्तावपि न विरोध' इति श्रुत्यर्थो भवत्सम्मत।

तत्र पूर्ववाक्येन सत सदुत्पत्तेरनुक्तत्वात्तस्मादित्यनेन तन्निषेधस्याप्रसक्तनिषेध[1]रूपत्वापत्ते। अग्र इत्यस्यानुवृत्तिप्रसङ्गश्च। एकेन अकारेण विशिष्टार्थस्य प्रतिषेधोपपत्तौ प्रत्येक तदुपादाने बीजाभावश्च। उत्तरत्र सत सदुत्पत्त्यनङ्गीकारबाधकतया कथञ्चिदित्यादिवाक्यार्थस्यासङ्गतिश्च। सत सदुत्पत्त्यनङ्गीकारेऽपि साङ्ख्यरीत्या सत्कार्याभिव्यक्तिसम्भवेन व्याहत्याद्यभावात् कथमित्यनेन सत सदुत्पत्त्यनङ्गीकारस्य विरुद्धत्वोक्त्यसङ्गतेस्तन्निरासकबाधकान्तरस्यैव वक्तव्यतापाताच्च।

न च बौद्धेन जागराद्यक्षणीयाहमितिप्रत्ययस्याऽकस्मिकताया इवाद्यकार्योत्पत्तेरप्यकारणिकायाः स्वीकृतत्वान्नैयायिकादिभिर्गुणादिप्रपञ्चस्य द्वितीयस्य प्रलये स्वीकृतत्वात्तदुभयमतेप्यद्वितीयसत सकाशात्सदुत्पत्त्यनङ्गीकारात्तदुभयमतानुवादोऽयमिति वाच्यम्। तथात्वेप्युत्तरवाक्यस्य तत्र बाधकप्रतिपादकत्वाभावरूपासङ्गतेर्दुर्वारत्वात्। तादृशाभावस्य तैरवश्यमङ्गीकृतत्वात्। परमाणुद्वयसयोगाद्द्रव्योत्पत्तिमङ्गीकुर्वतस्तस्य सति अद्वितीयत्वाभावावश्यकत्वाच्च। न चोक्ताभावानुवादमुखेनाकारणकार्योत्पत्ति सद्वयादुत्पत्तिरेवाद्यकाल इत्येतत्प्रमेयं दूष्यत्वेनाभिमतम्। कथञ्चिदिति वाक्ये त्वकारणकार्योत्पत्तौ विरोधरूपबाधक सद्वयादुत्पत्तौ चैकसदनुगमानु-

---

[1] रूपतापत्ति इति पाठेन भाव्यमिति भाति

(द्वै शु) सत्त्वं बाधकमभिमतमिति वाच्यम् । श्रौतदृष्टान्तस्य च उभयत्र मेतत्प्रकल्पनमनर्हत्वान्योगापत्तेः । न हि सतः सदुत्पत्त्यभावो द्वितीयसदवस्थानाभावो वा अकारणकत्वेऽन्यस्मिन् सद्रूपादुत्पत्तिं विनाऽनुपपन्नः । सतामेवाभिव्यक्त्यादिनोपपत्तेरुक्तत्वात् । तथा च कथं तदाक्षिप्तं स्यात् । सतः सदुत्पत्त्यभावः कथमित्यनेनापि कथमुक्तनिष्कृष्टदूष्यप्रमेयद्वयं बाधकद्वयं च लब्धम् , तस्य तदनाक्षेपकत्वात्कत्वात् । कथञ्चिदार्थिकत्वनयने अवश्यवक्तव्यार्थमनभिधाय कथञ्चिदुपयुक्तक्लिष्टार्थाभिधाने श्रुतेरसामञ्जस्यं स्फुटत्वात् । सत्ताजात्यभ्युपगमे तस्य घटत्वानुगमवत्सदेकाकारानुगतानुभवस्य बाधकरूपतायोगाच्च ।

तस्मादसदभिमत एव श्रुत्यर्थः । तत्र हि जगदुत्पत्तिप्रतिपादनाय स्वतन्त्रस्य परब्रह्मणः सत्तामभिधाय तत्स्थेम्ने तद्विरुद्धमतनिरासाय श्रुतिप्राप्तस्य समयप्राप्तस्य वा शून्यमतस्यानुवादः । नैयायिकस्येश्वरकारणत्वाविरोधित्वान्न तस्यानुवादः । कार्यज्ञानमङ्गीकृत्य तदुत्पादकचिन्तायाः सत्कार्यवादिसांख्यमतस्याप्रसक्तत्वान्न तस्याप्यनुवादः । मृत्पिण्डादिदृष्टान्तप्रदर्शनमुखेन पूर्वमुपपादितस्य ब्रह्मणो जगत्कारणत्वेन प्राधान्यस्यैव मतान्तरव्यवच्छेदपूर्वकं दर्शनीयतया जगतः कार्यत्वांशे विवादायोगात् । तथा च 'असदेवेदमग्र आसीत्' इत्युक्तौ तन्मात्रस्य स्वाभिमतब्रह्मकारणत्वाविरोधितया तस्मादसतः सज्जायत इति तद्विरोध्युत्कीर्तनस्योपयोगः । सिद्धान्ते व्याहतेरेवोपपादनेन तन्निराकरणं साधु सङ्गच्छते । तस्मादिति निगमनवाक्येऽप्यसद्वैलक्षण्येन सतो जगत्कारणत्वोपयुक्तधर्मोपपादनाय तु स त्वेवेति तुशब्दोपादानम् । असन्मते पूर्वश्रुत्यर्थस्यैव निगमने तत्रास्यानुक्ततया तद्वैयर्थ्यम् । कुतस्तु खलु इत्यस्य 'स्वयमसतः सर्वधर्मरहितस्य कुतः सद्रूपादिसम्बन्धात्सत्त्वं स्यात् । न कस्मादपि । स्वयं निर्विशेषे संवृत्याद्ययोगात्' इत्यर्थः । परतोऽपि कारणतानियामकपूर्वकालसम्बन्धाद्यभावे तेन सज्जायेतेति कथमित्यादेरर्थः । श्रुतिप्राप्तिरसन्मतस्य श्रीमद्भाष्ये असदधिकरणे अभिहिता । तथा 'श्रुतिप्राप्तमेवासन्मतमत्र निषिध्यते । समयस्योपरि निषेधात्' इति ।

केचित्तु 'श्रुतावसदपि द्वितीयान्तं पदम् । तथा च सत्त्वादिधर्मरहितत्वाङ्गीकाराद्वस्तुतः असन्तमेव निर्विशेषमेकमेवाद्वितीयमग्रे आसीदित्याहुरिति श्रुत्यर्थः' इत्याहुः । अन्यत्समानम् । तथा चासतः सत्त्वप्रतीतिरनूदितैवेत्याहुः ।

सदेवेत्यादिश्रुत्यर्थाभावानुवादकत्वपक्षेऽप्यसतः सत्त्वेन प्रतीतिर्दुर्वारा । तादृशाभावस्वरूपस्य सत्त्वासत्त्वौदासीन्येन बुद्धावनारोहात्तथात्वे वा तावन्मात्रज्ञानस्य तत्रासत्त्वज्ञानस्य वा तेषामदोषावहत्वेन दूषणार्थं तदनुवादासङ्गतिप्रसङ्गेन तत्र सत्त्वबुद्धेरेव तेषां वाच्यत्वेनाहुरित्यस्य सत्त्वेनाहुरित्यर्थस्याऽश्रयणीयत्वात् । न च तत्र सत्त्वबुद्ध्युदयेऽप्युक्ताभावो नासन् । किंत्वनिर्वचनीयः । स चापरोक्षेऽनिर्वचनीयख्यातेरन्यथाख्यातेर्वा अङ्गीकारादिति वाच्यम् । तस्य निरासेनासत्ख्यातेरेव व्यवस्थापितत्वात् ।

एतेन 'अत्र सत्त्वासत्त्वशब्देन न तावदर्थक्रियाकारित्वतदभावौ विवक्षितौ' इत्यादिनाऽभिहितस्य नवीनोक्तदोषस्य नावकाशः । त्वया सन् घटः पटोऽस्तीत्यादिप्रतीतौ घटादौ यादृशसत्त्वं भासते इति स्वीक्रियते तदेव

(द्वैयु ?) लक्षणे निवेश्यम् । अन्यथा असम्भवापत्तेः । तत्प्रकारकप्रतीतिरेव मया असत्युपपादनीया । सा चाऽ-हार्यत्वादिविरोधपरिहारेणोपपादिता च । आसीदिति तेषामभिलापकवाक्यबलेन घटादिममकक्षत्वस्यैव मानसिद्धेः । तथा च त्वदीयविकल्पदूषणादिकमसङ्गतमेव । तस्मात्प्रथमलक्षणस्यासत्यनिव्याप्तिर्दुर्वारा ।

द्वितीयतृतीयनिरुक्त्योरप्यधिकरणतानिवेशेनैवासत्यतिव्याप्तिवारणात्सत्त्वनिवेशो व्यर्थः । न च वृत्त्यनियामकसम्बन्धेनापि घटादेर्मिथ्यात्वोपपादनायाधिकरणत्वस्थाने सम्बन्धिना यदि निवेश्यते तदाऽलीकविषयकज्ञाने-ऽलीकनिरूपितविषयतासम्बन्धवत्त्वस्यालीकाभावसत्त्वात् प्रतियोगिन्यलीकेऽतिव्याप्तिवारणाय तन्निवेश इति वाच्यम् । नेह नानेति श्रुत्या ब्रह्मणि सर्वप्रपञ्चाभावस्य प्रमितत्वेऽपि वृत्तिरूपज्ञाने आकाशादिविषयतासम्बन्धेन तत्सम्बन्धिनि तत्सम्बन्धावच्छिन्नतदभावसत्त्वे मानाभावेन तत्रातिव्याप्त्यप्रसक्तेः । चिद्रूपज्ञानस्य नालीकविषयकत्वम् । सदस-तोर्मिथस्तादात्म्यरूपविषयविषयिभावाभावात् आकाशादिविषयताया अखिलनिरूपितत्वात् । तथात्वे तथैवोपपत्तौ दृग्दृ-श्ययोराध्यासिकसम्बन्धासिद्धिप्रसङ्गात् ।

न च शुक्तिरूप्ये परमते दृष्टान्ते साध्यवैकल्यपरिहाराय स्वानिरूपितत्वस्वसजातीयनिरूपितत्वघटितोभ-याभाववदधिकरणतैव निवेश्या । एवं चोक्तसाध्यस्यासाधारण्यात्पक्षे सत्त्वमादाय पर्यवसानवारणाय कालस-म्बन्धित्व विशेषणं देयम् । जगतः सदनधिष्ठानत्वे शून्यमतपर्यवसानवारणाय सामानाधिकरण्येन सत्त्वविशिष्टस्वरूपं सत्त्वावच्छिन्नस्य अधिकरणताया देयमिति वाच्यम् । अबाध्यत्वस्योक्तानुमानात्प्राक् क्वचित्प्रसिद्धौ जगतः सदन-धिष्ठानकत्वेऽपि शून्यमतप्रसक्तिः । अप्रसिद्धत्वे प्रकृतसाध्यस्य तद्घटितस्याप्रसिद्धिरिति पूर्वोक्तदोषानिस्तारात् । अनिर्वचनीयसिद्धेः प्राक् असन्मात्रप्रसिद्धोक्तसाध्यव्यावर्तकत्वस्यासत्त्वव्यावर्तकत्वेन गृहीतकालसम्बन्धेऽवर्जनीय-तया तस्य पक्षविशेषणत्वे तदवच्छिन्ने साध्यानुमित्युत्पत्त्ययोगस्योक्तत्वाच्च । कालासम्बन्धिन्यपि ब्रह्मणि सत्त्वे कालसम्बन्धिन्यपि जगति तुच्छत्वं किं न स्यात् । अस्य पारिभाषिकत्वे तस्यापि कुतो न पारिभाषिकत्वम् ।

किञ्चोक्तानुमानस्य श्रुतेश्च सन्निष्ठकिञ्चिदनिरूपिताधिकरणतामादायापि पर्यवसानसम्भवान्न मिथ्यात्व सिद्धिः । व्याप्यवृत्तिभावाभावयोर्विरोधपरित्यागस्यैतदनुमानबलादेव स्वीकारापेक्षयाऽधिकरणतासामान्ये किञ्चि-न्निरूपितत्वनियमपरित्यागस्यैवान्याहततरत्वेनोचितत्वात् । निष्प्रपञ्चब्रह्मासिद्धेस्त्वन्मतेऽप्ययोगस्योपपादितत्वादिति चतुर्थमपि लक्षणमसदेवेति ।

यदपि 'सद्विविक्तत्वरूपं पञ्चमलक्षणम् । तच्च दोषासहकृतप्रमाणविषयभिन्नत्वम् । दोषस्याननुगतत्वात्त-न्निवेशासम्भवे स्वभिन्नविषयकाज्ञानप्रयुक्तधीविषयत्व विशिष्टलक्षणं पर्यवसितम् । स्वाविषयकाज्ञानप्रयुक्तधीविषयत्वं वा । तेन शुद्धब्रह्मण 'इदं रजतं न सत्' इत्यादिसोपाधिकभ्रमेषु नञर्थप्रतियोगितया विषयत्वेऽपि न क्षतिः । [1]तत ज्ञानस्य शुक्त्यज्ञानस्यापि चिद्विषयत्वात् । शुद्धब्रह्मणो वृत्तिव्याप्यत्वमत एवेदं लक्षणम् । अतो न धीविषय-त्वांशातिरिक्तवैयर्थ्यम्' इति ।

---

[1] तत्र ज्ञातस्य इति पाठेन भाव्यमिति भाति ।

(द्वै सु) तदप्यसत्। अत्र यदि चोक्तरीत्या विद्यमानत्वविशेषणविषयत्वमस्याम्। अत एव मायाजन्यप्रयोज्यत्वनिवेशे च शुक्त्यज्ञानप्रयुक्तरजतज्ञानानुवृत्त्यनन्तरं मरणे कस्यचिदिष्टानिष्टप्रसङ्गे 'शुक्त्यज्ञानं रजतज्ञानात्मकेऽस्मिन्नुत्पन्नमभूत्' इति प्रतीत्या तत्प्रयोज्यत्वाभावाय तद्विषयताऽनित्यतापि। न च विद्यादौ नाशकत्वादभावादिकमादाय लक्षणसम्भव इति वाच्यम्। स्वाविषयकज्ञानप्रयुक्तधीविषयत्वस्य 'गगनकृतिः इदं रजतम्' इति प्रतीतिं विषयीकृत्य शुक्तिकेदन्त्वशौक्ल्यादावपि सत्त्वान्मिथ्यात्वव्यवहारापत्तेः। किञ्च सन्मात्रे सकलाज्ञानाद्यसिद्धेः अज्ञानसामान्यस्य च सविषयकत्वानङ्गीकारेण चाज्ञानत्वजातिपुरस्कारेण निवेशे दृष्टान्ते साध्यवैकल्यम्। नाशकज्ञानत्वप्रसिद्ध्या साध्याप्रसिद्धिश्च। ज्ञानविरोधित्वेन निवेशे प्रागभावादिकमादाय सिद्धसाधनम्। मूलप्रकृतेरेव निर्विषयत्वेनोपादानकारणतामादाय अर्थान्तरम्। दोषविधया कारणतामादाय पर्यवसाने बीजाभावात्। 'तुच्छं ज्ञानविषयं घटकालीनम्' इति भ्रमविषयतामादाय तुच्छेऽतिव्याप्तिः। तत्कारणज्ञानस्य तुच्छविषयकत्वात्। अज्ञानप्रयोज्यविषयता निवेशयोरपि तत एव तत्सत्तामङ्गीकृत्याऽतिव्याप्तिपरिहारे भ्रमान्यनित्यात्मविषयाय स्वाविषयकेत्यस्य वैयर्थ्यं तन्नियमस्याप्रामाणिकता च। 'अज्ञानवशादेव शुक्तिभ्रमविषयोऽभूत्' इति प्रतीत्या शुक्त्यादिनिष्ठविषयतानामप्यज्ञानप्रयोज्यत्वानुभवात्।

यत्तु 'यथाश्रुतप्रमाणसिद्धभिन्नत्वलक्षणे अतत्त्वमस्यादिना प्रत्यक्षादिना च ज्ञानत्वकालानन्तरविषयत्वाद्दृष्टान्तवाक्यजन्यज्ञानविगतार्थविषयक[1]चित्। अनृतव्यावृत्त्यादिविशिष्टब्रह्मज्ञानं च बाधितार्थविषयकत्वान्न प्रमाणमिति लक्षणे सर्वांशे प्रमात्वनिवेशेऽप्रसिद्धिः। किञ्चिदंशे प्रमात्वनिवेशे जगत्सत् सदित्यादिसमज्ञानात्मकज्ञानविषयत्वाद्भेदसाधने बाधः' इति दोषपरिहाराय 'जीवत्वब्रह्मत्वनिष्ठपितृज्ञानविषयत्वस्य स्वजनकत्वांशेऽभ्रमत्वस्यापि स्वीकारात् तन्निवर्तकं तत्त्वमस्यादिवाक्योत्थज्ञानमज्ञाननिवर्तकत्वरूपानधिगतार्थविषयकमेव' इत्यभिधानं तत्तु अखण्डार्थविचारावसरे तस्य निरसिष्यमाणत्वादनुपादेयम्। एवमन्येषामपि परामिमतपरिष्कारप्रकाराणां निरासः सुधीभिरनुसन्धेय इत्युपरम्यते।

(गु टि) 'मिथ्याशब्दो द्व्यर्थः। असद्वचनोऽनिर्वचनीयवचनश्च' इति पञ्चपादिकोक्त दूषणमौक्यर्थाय विकल्पयति ॥ **मिथ्याशब्देनेति** ॥ **अपसिद्धान्तप्रसङ्गादिति** ॥ यद्यपि नायमत्र पूर्वं दोष उक्तः तथापि मिथ्यात्वानुमानखण्डने उक्तत्वाभिप्रायेण वा तदनुसारेण अत्राप्युक्तत्वाभिप्रायेण वा उक्तदोष इत्यभिप्रायकत्वादुक्तदोष इत्युक्तेरविरोध इति द्रष्टव्यम् ॥ **बाधित इति** ॥ नेदमसत् प्रतीतत्वादित्यनुमानेन प्रतिक्षिप्त इत्यर्थः ॥ **मिथ्यात्वेति** ॥ आश्रयासिद्धौ तदाश्रितसामान्यासिद्धेरिति भावः ॥ **नाप्रसिद्धविशेषणतेति** ॥ असतः प्रसिद्धत्वादिति भावः ॥ **भेदनिराकरणेति** ॥ तथा सति भेदातिरिक्तस्य विवेकशब्दार्थस्य वक्तुमशक्यतया भेदाङ्गीकारप्रसङ्गात्। अङ्गीकारनिराकरणयोर्व्याहतत्वेन भेदनिराकरणानुपपत्तिश्चेत्यर्थः। कुतो नेत्यतस्तदुत्तरतया आचार्यवाक्यमेव व्यापारयति **बाध्यत्वमपि हि तेषां मिथ्येति**। ननु बाध्यत्वस्य सत्यत्वेऽपि सम्भवात्कुतो

[1] चिदंशज्ञानमित्यर्थः।

(गु टि ) मिथ्यात्वमित्यतरत्पक्षे नेषां हीति सूचित दोष प्रकटयितु बाध्यत्वं किं दृश्यत्वादिमत् उत न इति विकल्पद्वय मनसि निधायाऽद्य दूषयति ॥ सत्यत्व इति ॥ दृश्यत्वादिमत्त्वे चेति शेष । तेनैव बाध्यत्वेनैव ।

ततश्चायमर्थ । बाध्यत्वस्य सत्यत्वे दृश्यत्वादिहेतूनां तत्रैव व्यभिचार । बाध्यत्वे दृश्यत्वादिहेतुवृत्तावपि तस्य सत्यत्वेन मिथ्यात्वाभावादिति । नेति पक्ष दूषयति ॥ दृश्यत्वाऽद्यभावे चेति ॥ बाध्यत्वस्य दृश्यत्वाभावे अनुमितिनिरूपसिद्धिविषयत्वाभावेन तस्यासाध्यत्वम् । उक्तहेतुना साध्यज्ञप्त्यर्थत्वात् तस्य दृश्यत्वे अनुमानवैयर्थ्यम् । जडत्वपरिच्छिन्नत्वयोरभावे सुधोक्तरीत्या अपसिद्धान्त स्यादित्यर्थ । यद्यपि बाध्यत्वस्य जडत्वपरिच्छिन्नत्वाभावे अपसिद्धान्त. स्पष्टत्वान्नोक्त तथापि जडत्वपरिच्छिन्नत्वयोर्जडत्वपरिच्छिन्नत्वाभावे तस्योक्त्या समानन्यायतया सूचितत्वात् आदिशब्देन तत्परिग्रहो युक्त इति द्रष्टव्यम् ।

यत्तु 'बाध्यत्वमबाध्य बाध्य वेति । आद्ये किं ब्रह्ममात्र तदतिरिक्त वा । नाद्य. । सोपाधिकस्य निरुपाधिकब्रह्ममात्रत्वायोगादिति आद्यं बहिरेव निरस्य द्वितीयपक्षनिरासकतया बाध्यत्वमपीति ग्रन्थमवतार्य सत्यभूतस्य बाध्यत्वस्य ब्रह्मातिरिक्तत्वाङ्गीकारे अपसिद्धान्त ' इति एतद्ग्रन्थार्थनिरूपणम् । तन्न । उक्तयोजनाया सोपाधिकस्य निरुपाधिकब्रह्ममात्रत्वायोगादिति दूषणस्य प्रागनुक्ततया अनुक्तदूषणानिदेशप्रसङ्गात् । तेषां हीत्युक्तस्य तत्सत्यत्वपक्षे दोषस्य इह टीकाया सत्यत्व इत्यादिना उत्तरत्र प्रतिपादनेन अप्रसक्तप्रतिपादनप्रयासानर्थक्याच्च । न च सत्यमपि बाध्यत्व दृश्यमदृश्य वा । आद्ये सत्यत्व इति द्वितीये दृश्यत्वाद्यभाव इत्येव दूषणान्तरपरत्वात् सत्यत्व- इत्यादिग्रन्थस्य तेषा हीत्यस्योक्तदूषणपरत्वमिति वाच्यम् । चशब्दादिदूषणान्तरपरत्वज्ञापकाभावेन उत्तरग्रन्थस्य तत्परत्वायोगात् । 'तेषा हीत्यपसिद्धान्तादिप्रसङ्ग सूचयति' इति पूर्वग्रन्थानुसारेण अपसिद्धान्तस्येव व्यभिचारस्यापि तद्ग्रन्थसूचितत्वसिद्ध्या तदसूचितदूषणान्तरपरत्वाश्रयणस्य निर्निबन्धनत्वाच्च ।

कथञ्चिद्दूषणान्तरपरत्वेपि दृश्यत्वादीनामित्युत्तरग्रन्थानुरोधेन सत्यमपि बाध्यत्वं दृश्यत्वादिमन्न वेति विकल्पनीयत्वेन दृश्यमदृश्य वेति विकल्पस्योत्तरग्रन्थाननुसारित्वेन अनुत्थानमेव ।

यच्च 'जडत्वपरिच्छिन्नत्वयोरभावे चेतनत्वापरिच्छिन्नत्वप्राप्त्या प्रत्यक्षविरोधस्यादिशब्देन परिग्रह ' इति तन्न । दृश्यमदृश्य वेत्येव विकल्पस्योपदर्शितत्वेन जडत्वादिमत्त्वतदभावविकल्पानुपदर्शनेन तदभावे प्रत्यक्षादिविरोधस्य आदिशब्देन परिग्रहवर्णनस्य त्वदीयपूर्वग्रन्थाननुगुणत्वात् । सुधानुसारेण दोषान्तरस्यैव आदिशब्देन ग्रहणसम्भवे तत्परित्यागेन दोषान्तरस्य आदिशब्दार्थत्वकल्पनस्य निर्निबन्धनत्वाच्च ।

दृश्यत्वादिक दृश्यत्वादिमन्न वा । दृश्यत्वे दृश्यत्वाभावे अज्ञानासिद्धि । जडत्वे जडत्वस्य परिच्छिन्नत्वे परिच्छिन्नत्वस्यावृत्तौ अपसिद्धान्त इत्यभिप्रेत्य आद्यं दूषयति ॥ तैरेवेति ॥ दृश्यत्वादिभिरेवेत्यर्थ. । तत्र दृश्यत्वादिरूपहेतुवृत्तावपि मिथ्यात्वाभावादिति भाव. ।

(गु.टि.) यत्तु दृश्यत्वादीनामदृश्यत्वे अज्ञानासिद्धिरिति भावकथनं तदसत्, दृश्यत्वे दृश्यत्व वृत्तावज्ञाना-सिद्धिप्रसङ्गावपि जडत्वपरिच्छिन्नत्वयोरतद्वृत्तौ अपसिद्धान्तप्रसङ्गावपि अज्ञानासिद्धिप्रसङ्गात्, दृश्यत्वादीनां दृश्यत्वा-भाववत्त्वस्यैव तत्रानैकान्त्याभावोपपादकत्वात् 'दृश्यत्वाद्यभावे च' इत्येव वक्तव्यतया 'दृश्यत्व' इत्युक्तेरज्ञानमात्र मूलत्वाच्च ।

ननु न सत्यं मिथ्या वा दृश्यत्वादि । किन्तु उभयानुगतसामान्यमेव । न च सामान्येन प्रयुक्तहेतो-विशेषकल्पनेन निराकरणं सम्भवति । तथा सति धूमाद्धूमध्वजानुमानेऽप्युक्तरीत्या विशेषविकल्पेन निराकरणसम्भ-वात्तदुच्छेदप्रसङ्गादित्यत आह ॥ **न चेति** ॥ बाष्पारोपितसत्यधूमानुगतधूमत्वसामान्यस्येव सत्यानिर्वचनीय-साधारणदृश्यत्वसामान्यस्याप्याश्रयासिद्ध्या असिद्धत्वेन तदसम्भवादिति भावः ।

ननु बाष्पारोपितधूमे सत्यधूमे च धूमत्वसामान्यस्य मया अङ्गीकृतत्वात् दृष्टान्तो विप्रतिपन्न इत्यत आह ॥ **दिगिति** ॥ तदर्थस्तु पूर्वोक्तरीत्या आकर एव स्पष्टः ।

दृश्यत्वानुमाने अनैकान्तिकत्वोपपादनम्

(टी.) एवं सामान्यतोऽनुमानानि निरस्य विशेषतो निराचिकीर्षुर्दृश्यत्वानुमानस्य तावद्दोषा न्तरमाह

## आत्मनोपि दृश्यत्वादनैकान्तिकता च

**शुक्तिरजतादेः सपक्षस्येव विपक्षस्यात्मनोपि दृश्यत्वादनैकान्तिकता साध्यमिथ्यात्वसम्बन्ध-नियमाभावश्च दृश्यत्वस्य भवति । अनैकान्तिकश्चोर्ध्वतादिवत्सन्देहहेतुत्वान्न साध्यं साधयति ।**

**नन्वात्मनो दृश्यत्वमेव कुत इति चेत् न । 'आत्मा वा अरे द्रष्टव्यः' 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया' इत्यादिश्रुतेः ।**

(वि. टि.) ननु दृश्यत्वादिहेतूनां साध्याभावसम्बन्धेपि साध्यसम्बन्धस्य सत्त्वात्साध्यसाधनता किन्न स्यादित्यत आह ॥ **अनैकान्तिकश्चेति** ॥ तथा चोर्ध्वतादिवत् साधारणधर्मतया संशयजनकत्वमेव । न तु साध्यनिश्चायकत्वमिति भावः ॥ **आत्मा वेति** ॥ 'आत्मा वा अरे द्रष्टव्यः' इत्यादौ तव्यस्य, दृश्यत इत्यादौ तिङ, 'तमेव धीरो विज्ञाय' इत्यादिपदोपात्तश्रुतौ द्वितीयायाः 'तयोरेव कृत्यक्तखलर्थाः' 'भावकर्मणोः' 'कर्मणि द्वितीया' इति कर्मण्यनुशासनादिति भावः ।

(रा टि.) अपिपदार्थं वदन्नेव व्याचष्टे ॥ **शुक्तिरजतादेरिति** ॥ अनैकान्तिकशब्दार्थः साध्येत्यादि । ततश्च को दोष इत्यत आह ॥ **अनैकान्तिकश्चेति** ॥ [1]स्थाणुतोर्ध्वतादिवदित्यर्थः ।

---

[1] स्थाणुतासम्बन्धनियमाभाववदूर्ध्वतादिवदित्यर्थं इति पाठेन भाव्यमिति भाति ।

(बे टि) नन्वसिद्धयन्यथासिद्ध्योरेव हेतुदूषणत्वात्कथमनैकान्तिकत्वं हेतुदोष इत्यत आह ॥ साध्यमिथ्यात्वेति ॥ तथा च तस्याव्याप्तावन्तर्भाव इति भावः। ननु दृश्यत्वादेः साध्यसम्बन्धस्य सत्त्वात्साध्यसाधकता किं न स्यादित्यत आह ॥ अनैकान्तिकत्वेनेति ॥ साध्यसम्बन्धनियमाभावादित्यर्थः।

(द्वै सु) ॥ दृश्यत्वानुमानस्येति ॥ दृश्यत्वरूपलिङ्गस्येत्यर्थः। तावदिति। जडत्वादिकं क्रमानुसारेण निरसिष्यत इति भावः ॥ साध्यमिथ्यात्वेत्यादि ॥ इदमेकमेवान्तिके यस्यासावेकान्तिकः न एकान्तिकोऽनेकान्तिकः तस्य भावोऽनैकान्तिकत्वमिति व्युत्पत्तिलब्धार्थप्रदर्शनपरमिति ज्ञातव्यम्। मतविशेषसिद्धदूषकताबीजं दर्शयति ॥ अनैकान्तिकत्वेनेति ॥

(गु टि) असिद्धत्वव्याप्यत्वान्यतरत्वाभावादनैकान्तिकत्वस्य हेतुदोषत्वाभावात्तदुद्भावनमनुपपन्नमित्यत अनैकान्त्यपदेन साध्यसम्बन्धनियमाभावरूपान्यतरैव विवक्षितत्वान्न तदुद्भावनानुपपत्तिरित्याशयेनाह ॥ साध्यमिथ्यात्वेति ॥ ततोऽपि कुतो न साधकत्वमित्यत कोटिद्वयसहचरितत्वेन सन्देहहेतुत्वान्न तदित्यभिप्रेत्य तदुपपादयति ॥ अनैकान्तिकत्वेनेति ॥ अन्यथा ऊर्ध्वत्वादिकमपि अन्यतरकोटिनिर्णायकं स्यादिति भावः। आत्मनो दृश्यत्वानङ्गीकारे बाधकोक्तेरिव साधकस्योक्तेरपि तत्साधकत्वान्मूलकारीयविपक्षबाधकोक्तिमात्रस्यानुपपन्नतामाशङ्क्य बाधकोक्तेः साधकोक्त्युपलक्षणत्वान्नानुपपत्तिरित्यभिप्रेत्य स्वयं साधकं वक्तुं स्वयं साधकाभावमाशङ्क्य परिहरति ॥ नन्वात्मन इत्यादि ॥

**आत्मनो दृश्यत्वाभावे बाधकोक्तिः.**

(टी.) विपक्षे बाधकञ्चाह।

## न चात्मनो दृक्कर्मत्वं विना तज्ज्ञानत्वम्

तज्ज्ञानत्वेनाभिमतस्येति शेषः। भवतीति वक्ष्यमाणेन सम्बन्धः। प्रकृतत्वात् दृश्यत्वमिति वक्तव्ये दृक्कर्मत्वमिति दृश्यत्वव्याख्यानमतिप्रसङ्गस्फुटीकरणार्थम्।

तदयमर्थः। यद्यात्मनो दृश्यत्वं न स्यात् तदा वेदान्तवाक्यजनितविज्ञानस्यात्मज्ञानत्वं न स्यात्। दृशिं प्रति कर्मत्वं हि दृश्यत्वम्। आत्मकर्मकं ज्ञानमेवात्मज्ञानम्। तथा च आत्मनो दृश्यत्वाभावे कथमात्मज्ञानं सम्भवेत्। अकर्मणः कर्मतया ज्ञानव्यावर्तकत्वे व्याघातात्।

(वि टि) 'न चात्मनो दृक्कर्मत्वम्' इत्यत्र दृक्कर्मत्वं विना आत्मनस्तज्ज्ञानत्वं स्वविषयकज्ञानत्वं नेत्यर्थः प्रतीयते। तत्र चेष्टापत्तिमाशङ्क्याह ॥ तज्ज्ञानाभिमतस्येति ॥ भवतीति वक्ष्यमाणेनेति ॥ 'तदज्ञाननिवृत्तिश्च तेन भवति' इति वक्ष्यमाणेनेत्यर्थः ॥ दृशिमिति ॥ यद्यपि 'इक्श्तिपौ धातुनिर्देशे' इति स्मरणाद्दृशिशब्दस्य दृशिधातुरेवार्थः। न तु दर्शनक्रिया। तथापि तस्य कृषादिषु पाठात् 'कृषादिभ्यः' इति भावे इक्प्रत्ययान्तत्वाद्दर्शनक्रियार्थत्वमिति भावः ॥ कर्मत्वं हीति ॥ हिशब्देन 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति सूत्रे लकारो-

(वि टि )पलक्षितकृत्यादीनां कर्मार्थत्वमेव । न तु भावार्थत्वमित्युक्ता तत्सूत्रस्यास्यात्प्रसिद्धिं सूचयति । ननु आत्मगोचरमेव ज्ञानमात्मज्ञानम् । न चात्मनोऽकर्मत्वे व्यावर्तकत्वानुपपत्ति । सम्बन्धसामान्य इति वाच्यम् । विषयतया व्यावर्तकत्वोपपत्तेरित्याशङ्क्याह ॥अकर्मण इति॥ विषयत्व निरूपितस्य ज्ञानकर्मत्वस्य निरूपकतया अकर्मत्वाभ्युपगमे अविषयत्वमेवाभ्युपगतं स्यात् । तथा च व्याघात इति भाव ।

(ग टि ) ॥ अतिप्रसङ्गेति ॥ व्याघातरूपातिप्रसङ्गस्फुटीकरणायेत्यर्थ

(वे टि) आत्मनस्तज्ज्ञानत्वमित्यन्वयभ्रमनिवारणायाह ॥ तज्ज्ञानत्वेनाभिमतस्येति शेष इति ॥ भवतीत्यस्य स्यादित्यर्थकतिङन्तप्रतिरूपकाव्ययत्वं लटो लिङर्थत्वं वाऽभिप्रेत्याह ॥ यद्यात्मन इति एवमुत्तरत्रापि द्रष्टव्यम् ।

(द्वै बु) ॥ दृशं प्रति कर्मत्वं हि दृश्यत्वमिति ॥ तत्त्वञ्चास्य कर्मत्वं चैकत्वं इति भाव ॥ आत्मकर्मकमेव चेति ॥ प्रकारान्तरेणा निरूपयितुमशक्यत्व इति भाव ॥ आत्मज्ञानमिति ॥ मुक्तिहेतुत्वेन त्वदभिमतमात्मज्ञानमित्यर्थ ।

(गु टि ) आत्मन आत्मज्ञानत्वाभावापादनस्येष्टसाधनतामप्रयोजकत्वमाशङ्क्य परिहरति ॥ तज्ज्ञानत्वाभिमतस्येति शेष इति ॥

आत्मज्ञानाभावे बाधकोक्ति

(टी । आत्मज्ञानाभावे किं बाधकमित्यत आह

## तदज्ञाननिवृत्तिश्च तेन भवति

नेत्यनुवर्तते । अतिप्रसङ्गसमुच्चये चशब्दः । यदा वेदान्तजनितविज्ञानमात्मज्ञानं न स्यात् । तदा आत्माज्ञाननिवृत्तिस्तेन न स्यात् । तज्ज्ञानेनैव तदज्ञाननिवृत्त्यङ्गीकारात् । तथा च वेदान्तानां वैयर्थ्यं स्यात् ।

(वि टि ) बाधकोपन्यासात्मकत्वस्फोरणायाह ॥ नेतीति ॥ भवतीत्यस्य स्यादित्यर्थकतिङन्तप्रतिरूपकाव्ययत्वं लटो लिङर्थत्वं वा अभिप्रेत्य व्याचष्टे ॥ यदेति ॥ वेदान्तानामिति ॥ समाराऽसाधकाज्ञाननिवर्तकज्ञानाजनकत्वेन निष्प्रयोजनत्वं स्यादित्यर्थ ।

(रा. टि ) ॥ अतिप्रसङ्गेति ॥ न केवलमात्मज्ञानत्वाभाव । तदज्ञाननिवृत्त्यभावश्चेत्येवमतिप्रसङ्गसमुच्चय इत्यर्थ । तमेव व्यनक्ति ॥ यदेति ॥

(वे टि.) मूले विपर्ययपर्यवसानोक्तिसूचकतर्कस्वरूपमाह ॥ यदेति ॥

(द्वै द्यु) ॥ अतिप्रसङ्गसमुच्चय इति ॥ [1]पूर्वमूलेऽनुवर्तमानमेतन्मूले च भवतीत्येतत्स्यादित्येतत्समानार्थकमन्ययम् । तथा च पूर्वानिप्रसङ्गेन स्यानिप्रसङ्गस्य समुच्चये चशब्द इत्यर्थ ।

आत्मनो दृश्यत्वानङ्गीकारे अतिप्रसङ्गान्तरोक्ति

(त्री) अथ वा आत्मनो दृक्कर्मत्वानङ्गीकारेऽतिप्रसङ्गान्तरमेतत् । तथा हि, यद्यात्मनो दृक्कर्मत्वं न स्यात्तदा तदज्ञानं नाम न स्यात् । सति पुष्कलकारणे तत्कर्मकज्ञानप्रतिबन्धकं हि तदज्ञानम् । सम्बन्धान्तरानिरूपणात् । आत्माज्ञानाभावे च तन्निवृत्तिलक्षणमोक्षश्च न स्यादिति शास्त्रवैयर्थ्यं स्यादिति ।

(वि. टि) ॥ सम्बन्धान्तरेति ॥ अज्ञानस्याऽऽत्मना सहाऽऽत्मकर्मकज्ञानप्रतिबन्धकत्वादन्यस्य सम्बन्धान्तरस्य निरूपयितुमशक्यत्वादित्यर्थ । न च विषयविषयिभाव एव सम्बन्धो निरूपयितुं शक्यत इति वाच्यम् । स्वरूपसम्बन्धस्य त्वया अनभ्युपगमात् । अज्ञानविषयत्वाङ्गीकारे तुल्यन्यायेन दृग्विषयत्वस्याप्युपपत्तेश्च । न च 'यत्तदद्रेश्यम्' इत्यादिश्रुतिविरोधान्न दृग्विषयत्वमिति वाच्यम् । 'दृश्यते त्वग्र्यया बुद्ध्या' इत्यादिश्रुतिविरोधेन साकल्येन दृश्यत्वाभावस्यैव तच्छ्रुत्यर्थत्वात् । त्वद्रीत्या चैतन्यं चैतन्यविषयो नेति तदर्थवर्णनसम्भवाच्च । आश्रयाश्रयिभावस्य तेजस्तिमिरयोरिव विरोधेनासम्भवात् । अत एव नाऽध्यासिकसम्बन्धोऽपि । अज्ञानस्यानादित्वेन आत्मवदध्यासानुपपत्तेश्च । संयोगसमवाययोस्त्वयैवानभ्युपगमाच्चेति भाव ।

(ग टि) अज्ञानं कुतो न स्यादित्यत आह ॥ सतीति ॥ वेदान्तश्रवणादिरूपे वा आकांक्षादिमत्सदेव सोम्येत्यादिवाक्यज्ञानरूपे वा पुष्कलकारणे सत्यपि ब्रह्मगोचरज्ञानाभावो हि किञ्चित्प्रतिबन्धकायत्त इति वाच्यम् । तच्चाज्ञानमेव । अन्यस्यानिरूपणात् । सत्यामपि ज्ञानसामग्र्या वस्तुस्वभावादेव ज्ञानकर्मत्वं न चेत् किं प्रतिबन्धकाज्ञानेन कृत्यम् । अतोऽज्ञानं नाम वस्त्वेव न स्यादित्यर्थ ।

(वे टि) ॥ सति पुष्कलकारण इति ॥ यदा शुक्तिका रजताद्याकारेणावभासते तदा शुक्तिज्ञानोत्पादकेन्द्रियादिकारणकलापे सति शुक्त्यज्ञाननिमित्तमेव शुक्तित्वप्रकारकज्ञानानुत्पाद इति तदज्ञानस्य प्रतिबन्धकत्वमिति भाव । 'तत्कर्मकज्ञानप्रतिबन्धक तदज्ञानम्' इत्युक्तेऽसम्भव । इन्द्रियाद्यप्रवृत्तौ शुक्त्यादिज्ञानानुत्पत्तेरिन्द्रियाद्यभावप्रयुक्तत्वेनाज्ञानस्य प्रतिबन्धकत्वासिद्धे । तदर्थं सति पुष्कलकारण इत्युक्तम् । ज्ञानप्रतिबन्धकं तदज्ञानमित्युक्ते घटज्ञानाप्रतिबन्धकस्यापि पटाज्ञानत्व स्यादित्यत उक्तम् ॥ तत्कर्मकेति ॥

इद त्वापातत । वस्तुतस्तु पूर्वोक्तयोजनायामेव तात्पर्यम् । तथा हि, तदज्ञान तत्कर्मकज्ञानप्रतिबन्धकमेव न भवति । घटाज्ञाने विद्यमान एवेन्द्रियादिसन्निकर्षप्रवृत्तौ ज्ञानोत्पत्तेरनुभवसिद्धत्वात् । न हि पूर्वं ज्ञात एव घटो ज्ञायत इति नियमोऽस्ति । किं चाज्ञानस्य ज्ञानप्रतिबन्धकत्वे अज्ञानाभावस्य ज्ञानोत्पत्तौ कारणत्व प्रयोजकत्वं वा स्वीकार्यम् । अज्ञानाभावश्च ज्ञानेनैव साध्य इत्यन्योन्याश्रय । न च शुक्त्यादि यदा रजताद्याकारेणा-

[1] पूर्वमूलेऽनुकृष्यमाणमेतन्मूले च वर्तमान इति पाठेन भाव्यमिति भाति ।

(वे टि) बभासते तदा शुक्तित्वाग्रहणस्यानन्यनिमित्तत्वात् तदग्रहणप्रयोजकतया अज्ञानमङ्गीकार्यमिति वाच्यम् । दोषवशादेव तदग्रहणोपपत्तेः । यथोक्तं सुधायां 'केचित्सहजशक्तिप्रतिबन्धेन विपरीत'मपि शक्तिम'ग्रपतिं' इति ।

यत्तु सिद्धान्ते अज्ञानं भावरूपं प्रतिबन्धकमङ्गीकृतं तत् जीवस्वरूपादिविषय एव । न सर्वत्र । तदभिप्रायेणेदमज्ञाननिर्वचनं चेन्न कोपि दोष इति प्रतिभाति । तत्सत्त्वे स्वरूपपरमात्मादिसाक्षात्काराभावात् पश्चाच्छ्रवणादिजनितपरोक्षज्ञानादिना तच्छैथिल्ये सत्यपरोक्षज्ञानेन तदात्यन्तिकनिवृत्त्यङ्गीकारात् । तदुक्तं 'श्रुत्वा मत्वा तथा ध्यात्वा' इत्यादौ ।

नन्वज्ञानार्थयोः कुत उक्तपरम्परासम्बन्धोऽङ्गीकार्यः । आश्रयाश्रयिभावादिलक्षणस्य साक्षात्सम्बन्धस्यैवोपपत्तेरित्यत आह ॥ सम्बन्धान्तरेति ॥ त्वयेति शेषः । उक्तसम्बन्धस्योत्तरत्र दूष्यत्वात् । न च विषयविषयिभावलक्षणसम्बन्धोऽस्त्विति वाच्यम् । स्वरूपसम्बन्धस्य त्वया अनङ्गीकारात् । अज्ञानविषयत्वे भ्रमजनकत्वाद्यायेन दृग्विषयत्वस्याप्यापत्तेश्च । न चाज्ञानब्रह्मणाराध्यासिक एव सम्बन्धोऽस्त्विति वाच्यम् । प्रकाशे तमस इव अध्यासस्याप्यनुपपत्तेः । संयोगसमवाययोश्च त्वयैवानङ्गीकारादिति भावः ।

(द्वै द्यु) ॥ अथ वेति ॥ एतन्मूलं पूर्वमूलोक्तातिप्रसङ्गेष्टापत्तिपरिहारकातिप्रसङ्गान्तरपरतयैव न व्याख्यायते । किन्तु तत्समकक्षातिप्रसङ्गान्तरपरतयैव व्याख्यास्यत इति भावः ॥ सति पुष्कल इति ॥ ज्ञानोत्पादकसामग्र्या सत्यामित्यर्थः । प्रतिबन्धकः तन्निष्ठकार्यानुकूलशक्तिविघटकम् । परस्यापि मते प्रतिबन्धकाभावस्य कारणत्वानङ्गीकारादिति भावः । अत्र तदनुकूलशक्तिविघटकत्वमेव तत्प्रतिबन्धकत्वम् । पुष्कलकारणोक्तिस्तु तदनुमापकतया । अन्यथैककारणकाले कार्यानुत्पत्तेः कारणान्तरविरहादपि सम्भवेन तदसिद्धेः ।

ननु तत्कर्मकज्ञानप्रतिबन्धकस्य तदज्ञानरूपत्वे तन्निवृत्तिः कदापि न स्यात् । ज्ञानेन ह्यज्ञानस्य निवृत्तिर्वाच्या । तत्सद्भावे च ज्ञानोत्पत्तिरेव न घटते । प्रतिबन्धककाले कार्योत्पत्तेरेवायोगादिति चेन्न ।

सामान्यतज्ज्ञानसामग्रीवृत्तिशक्तिविघटकत्वेपि विशेषदर्शनादिकारणविशेषाधीनज्ञानविशेषे तादृशाज्ञाननिवर्तकशक्त्यभ्युपगमात् । तादृशज्ञानसामग्रीवृत्तिशक्तिविघटकत्वस्य तत्रानभ्युपगमात् । न च तस्यापि तज्ज्ञानत्वाविशेषे तदप्रतिबन्धकत्वे बीजाभावः । सिद्धे प्रत्यक्षसमानविषयकानुमितिप्रतिबन्धकत्वेपि तत्समानविषयकप्रत्यक्षोपनीतभानाद्यविरोधित्वदर्शनात् । न च वेदान्तवाक्यश्रवणादितः प्रागात्मज्ञानमुत्पन्नं चेदज्ञानस्य भवदुक्तप्रतिबन्धकत्वायोगः । इदानीमपि तस्यानुत्पन्नत्वे तत्सामग्र्या एवाक्लृप्ततया तन्निष्ठशक्तिविघटकत्वादिरूपप्रतिबन्धकत्वं कुतोऽज्ञानस्य वक्तव्यम् । शुक्त्यज्ञानादिस्थलेप्येवमेवेति असम्भवीदं लक्षणमिति वाच्यम् । यज्जातीयस्थलान्तरे यादृशसामग्रीसमवधाने सति यादृशकार्यं जायते तज्जातीयनिखिलकारणसमवधान[1]सत्त्वेऽपि प्रकृते तादृशज्ञानरूपकार्यानुत्पत्तौ तन्निष्ठशक्तिविघटकं किञ्चित्कल्प्यते । यथा शुक्त्यन्तरे शुक्तित्वप्रकारकज्ञानं केवलचक्षु-

---

[1] सत्त्वेपि तादृशकार्यानुत्पत्तौ तन्निष्ठशक्तिविघटकं किञ्चित् कल्प्यते । प्रकृते च ज्ञानजातीयस्थलान्तरे यादृशसामग्रीसमवधाने सति यादृशं ज्ञानरूपकार्यं जायते तज्जातीयनिखिलकारणसमवधानसत्त्वेपि प्रकृते इति पाठेन भाव्यमिति भाति

(द्वि घु) संयोगान्तेकसंयोगादिभिरेव विशेषदर्शनानपेक्षैर्जायते तैरेवैतच्छुक्तिस्थलेऽपि शुक्तित्वप्रकारकज्ञानानुदये तच्छक्तिविघटकं किञ्चित्कल्पनीयम्। विशेषदर्शनादिसाहित्ये च तत्तत्सामग्रीशक्तौ कुण्ठीभावलक्षणावस्था [1]विशेषस्याभ्युपगमात् पुनरुद्बोधेन [2]बुद्धया शुक्तित्वप्रकारकज्ञानोत्पत्त्या तदज्ञाननिवृत्तिर्जायते।

न च तत्र विशेषदर्शनस्य सामग्रीघटकता; मणिस्थलीयदाहे औष्ण्यादीनां सामग्रीघटकत्वापत्तेः। न चोत्तेजकानां तत्स्थलीयदाहं प्रत्येव कारणत्वं कल्प्यते तन्निष्ठशक्तिकुण्ठीभावनिवर्तकत्वं वा कल्प्यत इत्यत्र विनिगमकाभाव इति वाच्यम्। तस्य दाहं प्रत्येव कारणत्वकल्पने दाहे तत्कार्यतावच्छेदकतया नानावैजात्य-कल्पनापत्तेः। उत्तेजकानामननुगतत्वात्। अन्यथा दाहसामान्यकारणकोटौ निवेशे व्यतिरेकव्यभिचारापत्तेः। न च कुण्ठीभावनिवृत्तिकल्पनायामपि व्यभिचारवारणाय तत्र वैजात्यं त्वयापि कल्पनीयमिति साम्यमिति वाच्यम्। तस्य त्वयाप्यावश्यकत्वात्। अन्यथोत्तेजकद्वितीयादिक्षणे वह्न्यादिरूपक्लृप्तकारणस्यापगमेऽपि दाहधारा-पत्तेः। त्वन्मते विजातीयदाहसामग्रीशरीरे वह्नेरनिविष्टत्वात्।

न च यच्छुक्तिज्ञानं पूर्वं जातं तस्या एव शुक्तेः कालान्तरे इदन्त्वेन ज्ञानमात्राद्रजतत्वेन भ्रमे तत्र तदज्ञानस्य तच्छुक्तिप्रथमज्ञानप्रतिबन्धकत्वापत्तिः। न चेद्द्वितीयज्ञानप्रतिबन्धकत्वानुपपत्तिः। अज्ञानस्यानादित्वेन प्रथमज्ञानप्राक्काले नास्ति द्वितीयज्ञानप्राक्काले उत्पन्नमिति वक्तुमशक्यत्वादिति वाच्यम्। तदज्ञाने तत्कालीन-सामग्रीनिविष्टशक्तिविघटकताया एवानुभवानुसारेण स्वीकारात्।

एवं घटादीनामपरोक्षत्वादिन्द्रियसन्निकृष्टघटादिबोधकवाक्येन तद्विषयकापरोक्षज्ञानं जायते। तथा चापरोक्षत्वमात्रेण भ्रमसजातीयस्थले क्लृप्तपदपदार्थोपस्थित्यादिजातीयैः पदार्थोपस्थितितात्पर्यज्ञानादिसमुदायैः ब्रह्मापरोक्षमिदानीं जायते। मनननिदिध्यासनादिसहकृततत्त्वमस्यादिवाक्येन जायत इति मते पूर्वं तत्त्वमस्यादि-वाक्ये ब्रह्मापरोक्षशक्तिविघटकत्वमज्ञाने स्वीक्रियते। मनननिदिध्यासनाभ्यामुत्तेजकीभूताभ्यां तन्निष्ठशक्त्युद्बोधे [3]तदपरोक्षं न जायते। अत एव मनननिदिध्यासनयोः श्रवणाङ्गत्वम्। ततस्तदज्ञाननिवृत्तिरित्यभ्युपगमे-ऽज्ञानप्रतिबन्धकतापक्षस्य क्षोदसहत्वात्। यद्यपि ज्ञानस्याज्ञानसमानकालिकत्वाभावः परेषां परमः सिद्धान्तस्त-थापि ज्ञानस्याज्ञाननाशकत्वस्यापि परैर्व्यवहृतत्वात् तन्मते तयोर्मेलनस्य क्षणमात्रकालेऽवश्यम्भावमङ्गीकृत्य ज्ञानस्य तन्निवर्तकत्वोक्तिः।

यद्यपीदं प्रतिबन्धकत्वं न परसंमतं तथापि प्रकारान्तरासम्भवात् 'तस्याज्ञानम्' इति व्यवहारे उक्त-रीत्या कथञ्चित् प्रतिबन्धकतामुपपाद्य स एव षष्ठ्यर्थसम्बन्धघटको वक्तव्य इति प्रसाध्य तत्कर्मकज्ञानानङ्गी-कारे तस्याप्यनुपपत्तिरिति दूषणे तात्पर्यम्। अत एवोक्तप्रतिबन्धकतोपपादनरीतिसूचनायात्मनो ज्ञानविषयत्वप्रति-पादकश्रुतिमात्रं विहायापरोक्षज्ञानविषयताप्रदर्शकश्रुत्युदाहरणं कृतमिति प्रतिभाति।

---

[1] विशेषस्यापगमात् शक्तेः इति पाठेन भाव्यमिति भाति। [2] उद्बुद्धया सत्या इति पाठेन भाव्यमिति भाति

[3] तदपरोक्षं जायते इति पाठेन भाव्यमिति भाति

(द्वै द्यु) यत्तु 'तत्कर्मकज्ञानप्रतिबन्धकमित्यस्य तत्कर्मकज्ञाननिवर्तकत्वरूपेण प्रतिबन्धकमित्येवार्थः । अत प्रतिबन्धकत्वाद्युपपत्तये नोक्तश्रम सफल' इति तन्न । 'सति पुष्कलकारणे' इत्यस्य वैयर्थ्यापत्तेः । न च सति पुष्कलकारणे जायमानं तत्कर्मकज्ञानमित्यर्थः । नित्यत्वादनुत्पत्तिज्ञानस्य ज्ञानविशेषणस्य तस्य वैयर्थ्यापत्तेरिति वाच्यम् । घटादिकर्मकत्वस्य परैरनङ्गीकृतत्वेन स्वकर्मकत्वस्य तेनैव लब्धत्वेन 'पुष्कलकारणे' सतीत्यस्य व्यर्थत्वात् । उत्पत्त्युक्तिमात्रेण सम्भवे एतावदुक्तेरसङ्गतेश्च । स्वाप्यत्वप्रकाशत्वादिरूपेण नित्यज्ञानस्यापि व्यभिचारप्रसक्ततया तत्कर्मकज्ञानत्वेन जन्यज्ञानमात्राद्यर्थताज्ञानस्य त्वदुक्तनिवर्तकत्वस्य वस्तुतः सत्त्वेन कार्यत्वस्य कथमपि सार्थकीकरणायोगाच्च ।

ननु सम्बन्धान्तरस्यापि सम्भवात्स्वयमेव सम्बन्ध कुत आदरणीय इत्यत आह । सम्बन्धान्तरेति ॥ अनिरूपणात् मा प्रति त्वया निरूपयितुमशक्यत्वादित्यर्थः । संयोगसमवाययोरन्यतराङ्गीकारात् । अङ्गीकारे साक्षात्सम्बन्धेनैव विषयस्याज्ञानाश्रयत्वमप्यस्य घटोऽज्ञ इत्यादिप्रतीतिप्रसङ्गः । चैत्रोऽज्ञ इत्यादिवाक्यप्रामाण्याद्यनुपपत्तिः । विषयविषयिभावे तु सम्बन्धे तत्रापि ज्ञानमित्यत्र सम्बन्धविषयत्वस्य ज्ञान एवान्वयात् । न च विनिगमकाभावः नञर्थाज्ञान एवान्वयोऽस्त्विति वाच्यम् । घटं न जानातीत्यादौ द्वितीयार्थभूतविषयत्वस्य नञर्थ एवान्वये धात्वर्थनान्वयेन कर्मार्थकद्वितीयानुपपत्तिप्रसङ्गेन ज्ञानान्वयस्यैव क्लृप्तत्वात् । स्वरूपसम्बन्धस्वीकारेऽपि घटोऽज्ञ इति प्रतीतिर्दुर्वारैव । साक्षात्सम्बन्धस्यैव सत्त्वात् । आध्यासिकसम्बन्धाङ्गीकारे इदमवच्छिन्नचित्यध्यस्तरजतादावपि रजतमित्यादित्यवहारवदिदमवच्छिन्नचित्येव ज्ञानाध्यासे इदमज्ञानमिति [1]चिदज्ञानमिति च प्रतीतिप्रामाण्यापत्तिरिति भाव । आत्माज्ञानमेव माऽस्तु येन तत्र सम्बन्ध [2]घटकतयाऽऽत्मज्ञान सिद्ध्येदित्यत आह ॥ आत्मज्ञानेति ॥ निवृत्तिध्वंस ।

(गु टि) न चेत्यादिवाक्यद्वयमुपपादोपपादकभावापन्नैकातिप्रसङ्गसमर्पकत्वेन व्याख्याय वाक्यद्वयोक्तमर्थं पूर्ववाक्यार्थत्वेनैव वर्णयित्वा द्वितीय वाक्यमतिप्रसङ्गान्तरसमर्पकत्वेन व्याचष्टे ॥ अथ वेति ॥ किं तदतिप्रसङ्गान्तरं यत्समर्पकत्वं द्वितीयवाक्यस्याश्रीयते इत्यतस्तदेवोपदर्शयति ॥ तथा हीति ॥ इतीत्यस्य इति अतिप्रसङ्गान्तरमिति पूर्वेण सम्बन्ध ।

आत्माविषयकस्याप्यात्मज्ञानस्याऽऽत्माऽऽकारत्वशङ्का तन्निरासश्च

(टी) नन्वात्मनो दृक्कर्मत्वाभावेपि वेदान्तवाक्यजनितज्ञानस्याकारसमर्पकतया व्यावर्तकत्वमङ्गीक्रियत एव । अत आत्मकर्मकत्वाभावेप्यात्माकारं वेदान्तवाक्यजनितापरोक्षविज्ञानं भविष्यति । तेन न कोप्यतिप्रसङ्गः । द्रष्टव्य इत्यादिश्रुतयश्च तत्परतयैवोपपत्स्यन्ते ।

न चात्मकर्मकत्वेन विना आत्माकारत्वं विज्ञानस्य कथमिति वाच्यम् । यथा खलु शशविषाणशब्दात्तदाकारं विज्ञानमुत्पद्यते । न च शशविषाणस्य कर्मता सम्भवति । सकलसामर्थ्यविधुरस्य

[1] चिदज्ञानमिति च इतीदमधिकमिति भाति [2] घटिततया इति पाठेन भाव्यमिति भाति ।

(टी) कारकताया एव दुर्लभत्वात् तदिहापि वेदान्तवाक्यसामर्थ्यादनात्मकर्मकमपि विज्ञानमात्माकारमुत्पद्यते। को दोष इत्यत आह

न च तदाकारम्

आत्मनो दृक्कर्मत्वं विनेत्यनुवर्तते। स्यादेव यदि तदाकारं ज्ञानमुत्पद्येत। न चात्मनो दृक्कर्मत्वं विना आत्माऽऽकारं ज्ञानमुत्पद्यते। कुत इत्यत आह

अतद्विषयत्वादेव

यथा अनात्मविषयत्वाद्वेदान्तवाक्यजनितविज्ञानमात्मज्ञानं न भवतीत्युक्तम्। तथा तत एव तदात्माऽऽकारमपि न भवतीत्येवकारसम्बन्धः। अनात्मविषयमपि तदात्माऽऽकारं कुतो न स्यादित्यत आह

तद्विषयत्वमेव हि तदाकारत्वम्

हिशब्दो हेतौ। यस्मात्तद्विषयत्वमेव तदाकारत्वं ज्ञानस्य नान्यत्। तस्मादात्मविषयत्वाभावादात्माऽऽकारमपि तन्न भवति। व्याघातादिति।

(वि टि.) नन्वात्मनोऽकर्मत्वेपि स्वाकारसमर्पकत्वेन तद्व्यावर्तकत्वमुपपन्नम्। तत एव अज्ञाननिवृत्तिश्चेति न वेदान्तानां वैयर्थ्यम्। न चाज्ञानस्याऽऽत्मना सह सम्बन्धानिरूपणम्। तज्ज्ञानप्रतिबन्धकत्वस्यैव सम्बन्धस्य सम्भवादित्याशयेन शङ्कते॥ नन्विति॥ तत्परतयेति॥ तदाकारत्वप्रतिपादनपरतयेत्यर्थः। यद्यपि तव्यादिप्रत्ययाः कर्मण्येव विहितास्तथापि क्रियया आप्तुमिष्टतमत्वे सति क्रियानिष्पादकत्वरूपकर्मत्वस्य मुख्यस्य त्वात्मन्यसम्भवात् अर्थान्तरस्वीकारे तु तदाकारत्वमेव स्वीकारार्हमिति भावः। यदि तद्विषयत्वं न स्यात्तर्हि तदाकारत्वमपि न स्यात्। तद्विषयत्वातिरिक्तस्य तदाकारत्वस्य दुर्वचत्वादिति परिहरति॥ अत आहेति॥ एवकारान्वयप्रदर्शनाय वृत्तानुवादपूर्वकं व्याचष्टे॥ यथेति॥ अनात्मविषयत्वादिति॥ आत्माविषयत्वादित्यर्थः। एवमुत्तरत्रापि द्रष्टव्यम्। तत् वेदान्तजनितं ज्ञानम्।

(रा टि.)॥ वेदान्तजनितापरोक्षेति॥ 'दशमस्त्वमसि' इत्यादाविव वाक्यादप्यपरोक्षज्ञानोत्पत्तेः परैरङ्गीकारादेवमुक्तम्॥ न कोपीति॥ आत्मज्ञानत्वेनाभिमतस्य तज्ज्ञानत्वाभावप्रसङ्गो वा अज्ञाननिवृत्त्यभावप्रसङ्गो वा अज्ञानस्यैवाभावप्रसङ्गो वा नेत्यर्थः। करणसामर्थ्यादित्याह॥ यथा खल्विति॥ कारकताया एवेति॥ तद्विशेषकर्मकारकत्वं दूरादपास्तमित्यर्थः। तदिहेत्यत्र तदित्यस्य विज्ञानपदेनान्वयः॥ इहेति॥ आत्मज्ञानेऽपीत्यर्थः। विप्रतिपन्नज्ञानाऽऽकारत्वविषयेऽपीति वार्थः॥ अनात्मेति॥ आत्माकर्मकमपीत्यर्थः॥ स्यादेवमिति॥ 'न कोऽप्यतिप्रसङ्ग' इत्युक्तप्रकारः स्यादित्यर्थः। एवकारोक्तिघटनायाह॥ यथेति॥ तत एवेति॥ आत्माविषयत्वादेवेत्यर्थः। येन हेतुना आत्मज्ञानत्वाभाव आपादितः तत एव हेतोरित्यर्थः॥ इत्येवकारसम्बन्ध

(रा टि.) इति ॥ एवकारेण प्रागुक्तहेतोरेवेति प्रतीतिर्यथेत्यादिनोक्तप्रकारेण प्राक् प्रकृतहेतुना स्पष्टीकृतत्वात् तस्यैवकारसम्बन्धो बोध्य इत्यर्थः । अन्यथा अपूर्वहेतुत्वे अतद्विषयत्वादित्येव ब्रूयादिति भावः ।

(वे टि.) ॥ तेन न कोऽपीति ॥ आत्माऽऽकारज्ञानस्यैवाऽऽत्माज्ञाननिवर्तकत्वोपपत्तेः प्राचीनातिप्रसङ्गस्य आत्माऽऽकारज्ञानप्रतिबन्धकमेवाऽऽत्माज्ञानमित्यङ्गीकाराद् द्वितीयातिप्रसङ्गस्य च अभाव इत्यर्थः ॥ तत्परतयैवेति ॥ तदाकारत्वप्रतिपादनपरतयैवेत्यर्थः । यद्यपि तत्र द्वितीयस्य कर्मण्येव विहितः तथापि क्रिययाऽऽप्तुमिष्टतमत्वे सति क्रियानिष्पादकत्वरूपकर्मत्वस्य मुख्यस्य तत्त्वमसीत्यसम्भवात् अर्थान्तरस्वीकारे तु तदाकारत्वमेव स्वीकार्यमित्यर्थः ॥ अनात्मविषयत्वात् ॥ आत्माविषयत्वात् । एवमुत्तरत्रापि ।

(द्वै भू.) उक्तत्वमेव हेतुत्वेनाभिमतं न च तत् प्रतीत्याशयेन तदुपपादयति ॥ नन्वित्यादिना ॥ अनात्मकर्मकमपीति ॥ आत्माकर्मकमपीत्यर्थः ॥ अनात्मविषयत्वादिति ॥ आत्माविषयकत्वात् । एवमुत्तरत्रापि ॥

(गु टि.) ॥ न कोऽपीति ॥ आत्माऽऽकारज्ञानस्यैवात्माज्ञाननिवर्तकत्वेन तदनिवृत्तिप्रसङ्गः । आत्माऽऽकारज्ञानस्यैवात्मज्ञानत्वात् वेदान्तजनितविज्ञानस्याऽऽत्मज्ञानत्वानुपपत्तिरित्येव प्रागुक्तप्रसङ्गो नेत्यर्थः ॥ तत्परतयैवेति ॥ वेदान्तजनितज्ञानस्याऽऽत्माऽऽकारत्वपरतयेत्यर्थः । अनात्मविषयत्वात् आत्माविषयत्वात् ।

### आत्मज्ञानस्य आत्मविषयकत्वमेव आत्माकारत्वमिति समर्थनम्

(टी.) कुतस्तद्विषयत्वमेव तदाकारत्वमिति चेत् । परिशेषात् । तथा हि तदाकार एवाऽऽकारो यस्येति वा तदाकार इवाऽऽकारो यस्येति वा स आकारो यस्येति वा तदाकारं विज्ञानमित्यभिधातव्यम् प्रकारान्तरासम्भवात् । तत्र तावत्प्रथमद्वितीयपक्षावनुपपन्नावित्याह

## न हि ज्ञानज्ञेययोरेकाऽऽकारता

सति हि ज्ञानज्ञेययोरेकाऽऽकारत्वे तदाकार एवाऽऽकारो यस्येति सम्भवेत् । न चैतदस्ति अनुपलम्भात् । एकैव सत्ता ज्ञानज्ञेययोराकारोऽस्तीति चेन्न । अनुगतसत्ताया अनङ्गीकारात् ब्रह्मसत्तयैकाऽऽकारत्वे च वेदान्तवाक्यजनितविज्ञानमात्माऽऽकारमेव कुतः । घटाऽऽकारमपि तत्स्यात् नापि परेणाऽऽत्मनि सत्तानामाऽऽकारोऽङ्गीक्रियते । निराकारत्वाङ्गीकारादिति ।

एवं न हि ज्ञानज्ञेययोरेकाकारता-सदृशाकारताऽस्ति । येन तदाकार इवाकारो यस्येत्युपपद्येत । अत्यन्तसादृश्यस्यानुभवबाधितत्वात् । किञ्चित्सादृश्यस्य प्रागिवातिप्रसञ्जकत्वादिति योज्यम् ।

तृतीयेऽपि पक्षे न तावत्साक्षाज्ज्ञेयं ज्ञानस्याऽऽकारः सम्भवति । आधाराधेयभावाभावात् । अतः प्रकारान्तरासम्भवे परिशेषाद्विषयतया व्यावर्तकत्वेन स आकार इव यस्य तत्तदाकारमिति वक्तव्यम् तथा च तद्विषयत्वमेव तदाकारत्वं सम्पद्यते । ततश्च वेदान्तवाक्यजनितं विज्ञानमात्मविषयं न चेत्तद् तदाकारमपि न भवेदिति युक्तमेवेति ।

'टी , यदि तर्हि तद्विषयत्वमेव तदाकारत्वम् । अतद्विषयत्वात्तदाकार नेति व्याप्यव्यापकयो-
र्भेदाप्रसिद्धिः' इत्येतदप्यनेन निरस्तम् । न हि तदाकारत्वं तद्विषयत्वमिति पर्यायावेतौ । किं नाम
सामान्यविशेषवचनौ । परिशेषसिद्धं तु पर्यवसानमभिप्रेत्य तद्विषयत्वमेव तदाकारत्वमित्युक्तमिति ।

(वि टि ) ननु न तदाकारत्वमेव तद्विषयत्वम् । शशविषाणशब्दजनितज्ञाने तद्विषयत्वाभावेपि तदा-
कारत्वदर्शनात् । न च तत्तद्विषयम् । असता केनापि सम्बन्धाभावेन तत्सम्बन्धरूपविषयत्वानुपपत्तेरित्याशयेन
शङ्कते ।। कुतस्तद्विषयत्वमिति ।। असतो नि स्वरूपत्वेन संयोगादे सम्बन्धरूपत्वासम्भवेपि 'असच्छशविषाणम्'
त्यबाधितविशिष्टप्रतीतिबलेन सिद्धे सम्बन्धे विषयत्वरूपस्वरूपसम्बन्धस्य विद्यमाने ज्ञान एव कल्पनात् वक्ष्य-
माणरीत्या तद्विषयत्वातिरिक्तस्य तदाकारत्वस्य दुर्निरूपत्वाच्च तद्विषयत्वमेव तदाकारत्वमित्यभिप्रेत्य परिहरति ।
परिशेषादिति ।। आद्येति विषयस्य यावदाकारत्व ज्ञानस्य तावदाकारत्व विवक्षित यत्किञ्चित्तदाकारत्वं वा ।
आद्य आह ।। अनुपलम्भादिति ।। द्वितीयं शङ्कते ।। एकैवेति ।। अनुगतेति ।। ब्रह्मणि पारमार्थिकी सत्ता ।
तदितरप्रपञ्चे व्यावहारिकी सत्तेति वत्सिद्धान्तादिति भाव । ननु सर्वत्र ब्रह्मसत्ता एकैवेति नोक्तदोष इत्यत
आह ।। ब्रह्मसत्तयेति ।। किञ्च ब्रह्मसत्तयेति कोर्थ । ब्रह्मैव सत्तेति ब्रह्मण सत्तेति वा । नाद्य । तथा सति
ब्रह्मसत्तावत्त्वेन जगत पारमार्थिकसत्त्वापत्ते । ब्रह्मणो घटत्वादिवज्जगद्धर्मत्वाऽपाताच्चेत्याद्य बहिरेव निराकृत्य
द्वितीय निराचष्टे ।। नापीति ।। निराकारत्वेति ।। निर्धर्मकतेत्यर्थ । आद्यपक्षदूषणार्थत्वमुपपाद्य द्वितीयपक्ष-
दूषणार्थत्वमुपपादयति ।। एवमिति ।। एवं वाच्यमिति सम्बन्ध ।। अत्यन्तसादृश्येति ।। आत्मतज्ज्ञानयोरिति
शेष । यद्यपि निराकारताऽङ्गीकारादिति दूषणेनैव द्वितीयपक्षोपि दूषितस्तथाप्यभ्युच्चयेन दूषणान्तरोक्तिरिति
मम् ।। तृतीयेपीति ।। तदाकारो हि तदाश्रितो धर्म । न च ज्ञेय ज्ञानाऽश्रितम् । अननुभवात् । तथा च
यतासम्बन्धेन ज्ञेयस्य ज्ञानव्यावर्तकत्वेन तस्य तदाकारत्व निर्वक्त्यमिति परिशेषात्तदाकारत्व तद्विषयत्वमेव
वसन्नमित्यर्थ । किमतो यद्येवमत आह ।। ततश्चेति ।। अनेनेति ।। वक्ष्यमाणेनेत्यर्थ. ।। किं नामेति ।।
विषयत्वं सामान्य तदाकारत्व तु विशेष इति विवेक. । नन्वेव 'तद्विषयत्वमेव तदाकारत्वम्' इत्याचार्योक्ति-
रमित्यत आह ।। परिशेषसिद्ध त्विति ।। तथा च सामान्यविशेषयोरभेदोपचारेण तथोक्तमिति भावः ।

(ग. टि ) ।। स एवाऽकारो यस्येति ।। आत्मैवाऽकारो यस्येत्यर्थ । द्वितीयपक्षनिरासकतयापि तदेव
वाक्यं योजयति ।। एव न हीत्यादि ।। किञ्चित्सादृश्येति ।। सत्त्वादिना सादृश्यस्य वेदान्तजन्य ज्ञान
स्य ऽकारमपि स्यादिति प्रागुक्तदिशा अतिप्रसञ्जकत्वादित्यर्थ ।। आधाराऽधेयेति ।। आकारस्याऽकार्येवाऽधार. ।
आत्मन एवाऽकारत्वे ज्ञानस्याऽधारता आत्मनश्चाऽधेयता स्यात् । न चायमाधाराऽधेयभावो युक्त । आत्मनोऽपरि-
च्छिन्नतया अनाधेयत्वाज्ज्ञानस्य परिच्छिन्नतया तदनाधारत्वाच्चेति भाव ।। अनेन निरस्तमिति ।। विषयतया
व्यावर्तकत्वेन आकार इवेति कथनेनेत्यर्थ । तद्व्यनक्ति ।। न हीति ।। सामान्येति ।। विषयत्व सामान्य-
कारत्व विशेष इत्यर्थ । तर्हि मूलविरोध इत्यत आह ।। परिशेषेति ।।

) च्छाया त्वया वक्तुमशक्यत्वात्। कदापि न स्त्रीपुत्रादिभिर्वियुक्तो भूयासम्। किं तु तद्विशिष्ट एव स्त्यद्वितीयस्वरूपद्वेषपूर्वकं मद्वितीयस्वरूपेच्छाया दर्शनाच्च। न च सा अविवेकिनामेव सोपाधिकस्व- षिणीति वाच्यम्। भवदिच्छाया अपि तथात्वस्य वक्तु शक्यत्वात्। न च स्वरूपाभावस्येष्टत्वे लोके मरणे स्यादिति वाच्यम्। निष्प्रपञ्चताया पुरुषार्थत्वे मूर्छाया स्वकुटुम्बहान्यादावपि द्वेषो न स्यादिति समम्। न्तिकनिष्प्रपञ्चता पुरुषार्थ एव। मूर्च्छा तु न तथेति वाच्यम्। मरणेऽप्यारोपितस्वरूपान्तरसत्त्वेन कस्वरूपाभाव इति समम्। तर्ह्यात्यन्तिकस्वरूपाभावरूपमोक्षस्य पुरुषार्थत्वेन मरणेच्छोदाहरण न ते चेत् तर्ह्यात्यन्तिकनिष्प्रपञ्चता न सुषुप्तौ कर्माज्ञानादीना विद्यमानत्वादिति सुषुप्तीच्छापि नोदाहरणमिति न च सुखाविषयकत्वान्न स्वाभावेच्छा सम्भवतीति वाच्यम्। निष्प्रपञ्चनेच्छायामपि तुल्यत्वात्। सुखाभि- हेतुत्वात्तदुपपत्तिरिति चेत् दुःखाभावसाधनत्वाद् दुःखसाधनप्रतियोगिकत्वात्तथेत्यत्रापि समम्। स्वाभाविक- त्वेनैव पुरुषार्थं स्यादिति चेत् ब्रह्मस्वरूपस्याखण्डत्वे आनन्दस्यापि तथात्वमिति समम्। स्वयमेव स दयमपि तथाऽस्तु। विषयविषयिभावसम्बन्धाभावेप्यनावृतत्वस्यात्रापि वक्तुं शक्यत्वात्। तस्माच्छून्य- वधारणे सर्वोऽपि दोषो ब्रह्मवाद इवोद्धर्तुं शक्य इति शून्यवादाद्बिभ्यता 'प्रमाणान्तरविरोधव्याहत्याद्यभाव वाक्यस्वारस्यापूर्वतादिकं वाक्यतात्पर्यावधारणहेतु। न तु वाक्यस्वारस्यमात्रदृष्ट्या क्लृप्तप्रमाणबाधनादिना नर कल्पनीयं गौरवात्' इति वक्तव्यम्। तत्सर्वमविशिष्ट त्वन्मतेपीति कथमद्वैततात्पर्यावधारणम्। कथञ्च यत्वश्रुतीना स्वार्थप्रच्युतिरिति त्वमेव चिरं विभावय। भगवति यथा युगपदणुत्वमहत्त्वप्रतिपादकश्रुतीना व्याहतार्थकत्वं तथोपपादितं सुधायां। अत्रापि मय्यनन्तगुण इत्यादिमूलटीकाव्याख्यावसरे विशदीकरिष्यत इति न तत्प्रतिबन्दिरपि।

इदं सर्वं परमते वाक्यस्य मिथ्यात्वबोधकत्वं यथाश्रुतरीत्या वर्तत इत्यभ्युपेत्योक्तम्। वस्तुत पदाना थ्यात्वबोधकत्वमेव नास्ति कुतस्तत्तात्पर्यकत्वमिति वाचारम्भणश्रुतिव्याख्यानावसरे विवेचयिष्यते।

य अपि चाद्वैतश्रुतीना तत्र परमतात्पर्यसत्त्वात्तद्विरोधेन सत्यत्वप्रतिपादकश्रुतीना स्वार्थतात्पर्याभावो वा तासा तत्रावान्तरतात्पर्यसत्त्वात्। नाद्य। तासामखण्डार्थे परमतात्पर्याभ्युपगमात्। न द्वितीय। जगत्सत्य- त्वप्रतिपादिकानामपि श्रुतीना तत्सत्यत्वप्रतिपादनद्वारा तत्कर्तृत्कर्षे महातात्पर्यवतीना अद्वैतश्रुतिसाम्येन बाध्य बाधकभावायोगात्। न ह्यखण्डार्थबोधद्वारीभूतबोधतात्पर्यकश्रुतीनामेव प्राबल्यम्। नोत्कर्षबोधद्वारीभूतबोध- पराणामित्यत्र राज्ञामाज्ञास्ति।

अपि चाखण्डार्थबोधस्य सप्रयोजनत्वे सत्यजगत्कर्तृत्वादिपारमेश्वरधर्मप्रतिपादिका अपि श्रुतयस्तद्द्वारा अखण्डार्थबोधका स्यु। तथा च तासामद्वैतश्रुतिसाम्यमेव। सत्यजगत्कर्तृत्वादिधर्मबोध कथमखण्डार्थप्रमाद्वार- भूत स्यादिति चेत्। वेदानामखण्डार्थतात्पर्यग्राहकमानानुसारेण तस्मिन्नवधृते प्रकृष्टप्रकाशादिवाक्यानामिव सत्यभूतधर्मप्रतिपादनेनापि तत्सम्भवात्। ननु तर्ह्यखण्डार्थसिद्धिर्न स्यादिति चेत् केयं सिद्धि। ज्ञानं चेत्तदुत्पत्ति-

(द्वै. सु.) त्वात् । अन्यथा तद्बोधकस्थानामनुपयोगेनानर्थक्यप्रसङ्गात् । विशिष्टवाक्यं देवताप्राशस्त्यस्तावकमि
तेन जगति सत्यतासिद्धिरिति चेत् । तद्विशिष्टवाक्यस्यापि प्राशस्त्यस्तावकत्वे तद्वाक्यप्रतीत वास्तवत्वं घटि
प्यसिद्ध्या रमराज्यादिसर्वस्वस्तावकत्वमपराधं । न चैतद्युक्तम् । स्तुत्यर्थवादेष्वोऽप्यर्थ स्थित धर्मसिद्धि
ऽप्यङ्गीकृतत्वात् । न च जगत्सत्यत्वमपि निरवत्वादितर्कादिसाम्येन मिथ्यात्वानुमानविरोधेन च बाधितमिति प्रे
तत्र सिद्ध्यतीति वाच्यम् । श्रुतीनामितरेषामपि स्वतन्त्र्याहत्य इतरान्यानुमशक्यतयेतरबाधकत्वप्रसङ्गात्
श्रुत्यनुमाने परस्परसाहित्येन मिथ्यात्व निश्चायकत्वे सत्यत्वं बाधितम् इति चेन्न । प्रसिद्धत
व्याहतिपरिहारोपायासत्त्वेनानिर्वचनीयत्वस्य तृतीयप्रकारस्य श्रुत्यनुमानाद्यैर्निर्णयोत्तरसिद्धिकस्य
तिपरिहाराक्षमत्वेनोक्तानुमानस्य चिन्त्यत्वेऽपि तदर्थत्वेन मिथ्यात्वानिश्चयात् । अन्यच्च 'ग्राम चनिर
वपामुदखिदत्' 'अन्धा मणिमविन्दत्' इत्यादीनां स्वानुकूलपुरुषार्थेच्छन्नयुक्तिसहितानां स्वार्थनिश्चा
कत्वप्रसङ्गात् । नापि मुख्यतया तत्समापकत्वं नास्तीति द्वितीयः पक्षः । मुख्यतया तत्प्रतिपादकत्वाभावे
मुक्तस्रुवाहवनीयादीनामिव प्रतिपादनमात्रेण तत्सिद्धिसम्भवात् । न च तेषामितरेतरसाम्याभावात् नास्य सिद्धि
वाच्यम् । प्रमितार्थस्योपयोगमात्रेणानाग्रहोऽनुमशक्यत्वात् । अन्यथ प्रत्यक्षसिद्धेन्द्रियमानदिशां सिद्धिप्रसङ्ग
जगत सत्यत्वे तत्कर्तुरिन्द्रजालिक इव्यावृत्तेन्द्रजालशक्तिसिद्ध्या उत्कृष्टत्वसिद्धयुपयोगस्यापि सत्त्वाच्च । न
देवताप्रीत्यर्थं स्तुतिः क्रियते । स चाविद्यमानगुणकथनेनापि भवतीति किमर्थं वास्तवोत्कर्षसिद्ध्यर्थं तदुक्ति
वाच्यम् । अज्ञानां स्वाविद्यमानगुणकथने स्वस्मिन्नुत्कर्षभ्रमेण स्तावके प्रीतिसम्भवेऽपि सर्वज्ञकल्पानां दे
स्वाविद्यमानगुणकथनेनोत्कर्षभ्रमप्रयोगेन प्रीत्युत्पादायोगात् । प्रत्युतासूयोत्पत्तेरेव प्रसङ्गाच्च । दृश्यन्ते
लोके महापुरुषा अविद्यमानस्वगुणकथनविद्वेषिणः । अत एवोक्तं विराटपर्वणि

> असूयन्ति हि राजानो जनाननृतवादिनः ।
> तथैव चावमन्यन्ते नरान् पण्डितमानिनः ॥ इति ।

पामरा अपि स्वासम्भावितगुणवक्तरि अपहासकर्तोऽयमिति विद्विषन्त्येव । नानुरज्यन्ते । तस्मात्सत्यस्तव
युक्तत्वात् स्तावकवाक्येनापि जगत्सत्यत्वसिद्धिर्भवत्येव । अस्तावकसत्त्वबोधकैर्वाक्यैः 'सत्य भिदा' 'तस्योपनिषत्
सत्यस्य सत्य' इत्यादिभिः 'अनाद्यनन्तं जगदेतत्' इत्यादिभिश्च तत्सिद्धिरप्रत्यूहैव। अत्राप्यनन्तत्वकथनेन
चान्यथेत्याद्युत्तरार्धेन बाधाभावप्रतिपादनेनाबाध्यत्वरूपसत्यत्वस्यैवोक्ते ।

न च सत्यत्वस्य प्रत्यक्षाग्राह्यत्वमते तदवच्छिन्ने कथं शक्तिग्रहः येन शाब्दबोधे तद्भानमेतेति वाच्यम्
सत्यं ज्ञानमित्यादावप्यखण्डार्थद्वारीभूतसत्यत्वभानाभावप्रसङ्गेन तदनुपपत्तेस्तत्रापि तुल्यत्वात् । अतीन्द्रियगुरु
त्वाद्यवच्छिन्नवाचिगुर्वादिपदानामिव कथञ्चित्पूर्वव्यवहारानुरोधेन शक्तिग्रहः इति समाधानस्यापि तुल्यत्वाच्च
न च सन्घट इत्यादिप्रत्यक्षे अबाध्यब्रह्मतादात्म्यमाने ब्रह्माणि अबाध्यत्वं भासत इति तदवच्छिन्ने शक्तिग्रह
सम्भवतीति वाच्यम् । लौकिकप्रतीतेराद्ययोर्मतेन नियन्तुमशक्यत्वेन घटादावबाध्यतादात्म्यविषयकत्वमबाध्यत्व

[illegible] विषयकत्वं वास्तु । अन्यथाऽप्यबाधितविशिष्टविषयकप्रत्ययस्य ऽवश्यकत्वेन ममापि शक्तिग्रहणं । घटसत्त्वग्रहे बाधककल्पनायोग्यानुपलब्ध्यनुपपत्तिरूपबाधकस्य ब्रह्मणि तद्ग्रहेऽपि तुल्यत्वेन सन् घट इत्याकारबाध्यत्वाविशेऽसंक्षात्कारत्वस्यानुपलब्धत्वस्य वा वक्तुमशक्यत्वाच्च । तदुपहितस्य मिथ्यात्वेन स्वतः स्फुरणात् ।

स्यादेतत् । एकमेवाद्वितीयमित्यादिका श्रुतिरपौरुषेयत्वेनोपक्रमस्थत्वादिना च प्राबल्येन गृह्यमाणा मुख्यार्थत्वमिद्धिनिर्वाहायोपस्थितमपि युक्तिविरोधमवधूय द्वितीयसामान्याभावमेव बोधयति । न तु सजातीयराहित्यादिकम् । मुख्यार्थस्यासम्भवात् । तथा च यद्यत् ज्ञेयं तत्तत्सत्त्वासत्त्वान्यतरप्रकारोपेतं यत्त्रैकालिकनिषेधप्रतियोगि तन्नार्थक्रियाकारीति व्याप्तिज्ञानप्रामाण्ये श्रुतेर्मुख्यार्थकत्वानुपपत्तिरूपबाधकतर्केण तादृशज्ञाने प्रामाण्याभावनिश्चयो वा, श्रुतेर्मुख्यार्थत्वं त्याज्यं वा तादृशनियमग्रहप्रमा वा त्याज्या वेति सन्देहे [illegible] मिग्रहमूलकतर्कानुत्थानात्सत्यत्वश्रुतीनामप्यन्यपरवाक्यप्रविष्टानां दौर्बल्यग्रहेण तद्विरोधिज्ञानस्य किञ्चित्वेन द्वितीयादिश्रुतिमिथ्यात्वग्रहो जायते । तदनन्तरभाविनी तृतीयप्रकारादिकल्पना सर्वापि फलमुखत्वान्न सम्पादिकेति तादृशनिश्चितार्थाद्वैतश्रुतिविरोधात्न सत्यत्वश्रुतीनां स्वार्थपरत्वमिति ।

तदेतदसत् । श्रुतेर्मुख्यार्थत्वलाभमात्रनिर्वाहाय निश्चितान्यभिचारकनियमग्रहाप्रामाण्यग्रहोत्पत्तौ आदित्यो यूप इत्यादिश्रुतिमुख्यार्थलाभानुरोधेनादित्ययूपयोरभेदावगाहिप्रत्यक्षप्रामाण्यसंशयादिनादित्ययूपयोरभेदस्य श्रुत्यर्थत्वं कृत्य तदुपपादकाप्रामाणिकपरम्परा कल्पनीया स्यात् । न च प्रधानवाक्यस्यैव रीतिरिति वाच्यम् । अपौरुषेयत्वादिसाम्ये प्रधानवाक्यस्थानि पदानि प्रबलप्रमाणान्तरविरोधव्याहत्यादिसद्भावेऽपि यथाश्रुतार्थानि । अप्रधानवाक्यानि तु प्रमाणान्तरविरोधाभावे मुख्यार्थानि । अन्यथा तु नेत्यत्र त्वद्वचनातिरिक्तमानाभावात् ।

किं च किमिदं प्राधान्यम् । किमनुष्ठेयविधायकत्वमुतानन्यशेषत्वं उत सप्रयोजनार्थावगमकत्वमुत प्रकरणपठितत्वम् । नाद्यः । अद्वितीयादिश्रुतेर्विधायकत्वाभावात् । सोमेन यजेतेत्यत्र सोमपदस्य प्रमाणविरोधपरिहाराय सोमवल्लीलाक्षणिकत्वाभावप्रसङ्गाच्च । अत एव न द्वितीयः । उक्तविधिवाक्यस्यानन्यशेषत्वात् । एकमेवाद्वितीयमित्यादिश्रुतीनां तत्त्वमस्यर्थशोधकानां महावाक्यशेषत्वेनोक्तप्राधान्याभावाच्च । नापि तृतीयः । स्वाध्यायाध्ययनविधिना सर्वेषामपि वाक्यानां प्रयोजनवदर्थावबोधकत्वस्य दर्शितत्वेन तस्याव्यावर्तकत्वात् । नापि चतुर्थः । सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्यस्य वाक्यान्तरप्रकरणादिस्थत्वेन कथञ्चित्तत्सम्भवेपि नेह नानेत्यादेस्तथाभावात् । 'असद्वा इदमग्र आसीत्' इति वाक्यस्याप्यवान्तरप्रकरणादिस्थत्वस्य सत्त्वेनास्यापि व्याहतिमवधूय यथाश्रुतार्थकत्वप्रसङ्गाच्च । न च तत्प्रमानुकूलशक्तिरेव तत्परत्वमिति वाच्यम् । व्याहतार्थकत्वशङ्कानिरासात्प्राक् द्वितीयसामान्याभावप्रमानुकूलशक्तिमत्त्वग्रहासम्भवात् । सामान्यतः प्रमानुकूलशक्तिमत्त्वग्रहस्य पूर्वोक्तनियमग्रहाप्रामाण्यनिश्चयाहेतुत्वात् । सजातीयद्वितीयराहित्यार्थकत्वेनापि तन्निर्वाहात् । न च बहुश एकप्रकरणे स्थानभेदेन

(वे. टि.) ननु तदाकारत्वमेव न तद्विषयकत्वम् । शशविषाणशब्दजनितज्ञाने तद्विषयकत्वाभावेऽपि तदाकार-त्वदर्शनात् । तत्रापि सम्बन्धाभावादित्याशङ्कते ॥ कुतस्तद्विषयत्वमिति ॥ असतोऽनिरूप्यत्वेन विषयत्वरूप-सम्बन्धवत्त्वाभावेऽपि 'असच्छशविषाणम्' इत्यबाधितविशिष्टप्रतीतिबलेन सिद्धे सम्बन्धे विषयत्वरूपसम्बन्धस्य विद्यमाने ज्ञान एव कल्पनाद्वक्ष्यमाणरीत्या तद्विषयत्वातिरिक्तस्य तदाकारत्वस्य दुर्निरूपत्वाच्च तद्विषयकत्वमेव तदाकारत्व-मित्यभिप्रेत्य परिहरति ॥ परिशेषादिति ॥ तदाकार एवेति ॥ यथा घटाकारः घटान्तरमित्यर्थः ॥ तदाकार इवेति ॥ यथा गवाकारो गवय इत्यर्थः ॥ स आकार इति ॥ यथा घटस्याकारो घट इत्यर्थः । आद्येऽपि विषयस्य यावानाकारः ज्ञानस्य तावदाकारत्वं विवक्षितम् । यत्किञ्चित्तदाकारत्वं वा । आद्य आह ॥ अनुप-लम्भादिति ॥ द्वितीयं शङ्कते ॥ एकेनेति ॥ द्वितीयपक्षनिराकरणपरतयापि मूलवाक्यं व्याचष्टे ॥ एवमिति ॥ एवं योज्यमिति सम्बन्धः ॥ अत्यन्तसादृश्यस्येति ॥ आत्मज्ञानस्येति शेषः । यद्यपि निराकारस्यात्मनोऽङ्गीकारेणैव द्वितीयपक्षोऽप्यनुपपन्नः । तथाप्यभ्युच्चयेन दूषणान्तरोक्तिरिति ध्येयम् । स आकार इवेति विषयस्याऽऽकारसादृश्य-मुक्तम् । तत्र अत्यन्तसादृश्यम् । आधाराऽऽधेयभावाभावेन । नापि यत्किञ्चित्सादृश्यम् । वेदान्तजन्यज्ञानस्य घट-ज्ञानत्वापत्तेरित्यत उक्तम् ॥ व्यावर्तकत्वेनेति ॥ आधाराऽऽधेयभावाभावाद्व्यावर्तकत्वमपि कथमित्यत उक्तं ॥ विषयतयेति ॥ यदि तर्हीति ॥ तदाकारत्वमित्यतः परं तर्हीत्यस्य सम्बन्धः ॥ अभेदापत्तिरिति ॥ प्रति-योगिभेदाभावेऽभावभेदस्याप्यसम्भवादिति भावः ॥ अनेनेति ॥ न हीति मूलवाक्येनेत्यर्थः । न हि ज्ञानज्ञेययोः एकाकारत्वमिति वदतैकाकारत्वं सदृशाकारत्वं च तदाकारत्वशब्दार्थ इति सूचनेन तदाकारत्वस्य सामान्यत्व-सूचनादित्यर्थः ॥ किं नाम सामान्यविशेषवचनाविति ॥ वृक्षत्वशिंशुपात्वे इव तदाकारत्वं सामान्यं तद्विष-यत्वं विशेषः । तदाकारत्वस्य तद्विषयत्वपरित्यागेनोक्तप्रकारेण निर्विषये घटादावपि सत्त्वादित्यर्थः ।

नन्वेवं 'न च तदाकारम् । अतद्विषयत्वादेव' इति कथं विशेषाभावेन सामान्याभावसाधनम् । व्यभि-चारात् । न हि शिंशुपात्वाभावेन वृक्षत्वाभावसाधनं युक्तमिति चेन्न । यावद्विशेषाभावेन सामान्याभावसाधनात् । अत एवोक्तं प्राक् 'ततश्च वेदान्तवाक्यजनितं विज्ञानमात्मविषयं न चेत्तदाकारमपि न भवेत्' इति ।

अत एव च 'अतद्विषयत्वादेव' इति हेतुमुक्त्वा 'तद्विषयत्वमेव हि तदाकारत्वम्' इत्युपपाद्य 'कथं तद्विषयत्वमेव तदाकारत्वम् । तदाकारत्वस्य तद्विषयत्वपरित्यागेनापि तदाकार एवाकारो यस्येत्यादिव्युत्पत्त्या निर्विषये घटादावपि सत्त्वात्' इत्याशङ्कापरिहारपरम् 'न हि ज्ञानज्ञेययोरेकाकारता' इति मूलं प्रसक्तप्रतिषेध-परतया प्रवृत्तमिति स्वरसम् । तदेतदुक्तम् 'अनेन निरस्तम्' इति ।

केचित्तु ॥ अनेनेति ॥ वक्ष्यमाणेनेत्यर्थः ॥ किं नामेति ॥ तद्विषयत्वं सामान्यं तदाकारत्वं विशेष इति विवेक इत्याहुः ॥ परिशेषसिद्धमिति ॥ तथा च तद्विषयत्वेनैव तदाकारत्वमित्यभेदोक्तिरौपचारिकीति भावः ।

(द्वै. द्यु.) ॥ तदाकारत्वमिति ॥ तदाकारत्वपदाधीनप्रमितिविषय इत्यर्थ ॥ इतीति ॥ इति व्युत्पत्त्ये-त्यर्थः । अभिधानस्य निरूपणीय । तावदिति ॥ तृतीयपक्षस्य सर्वथा दूष्यत्वाभावादिवार्थमन्तर्भाव्य तस्यै-वाङ्गीकारात्तावदित्युक्तम् । ननु मूलकारैस्तृतीयपक्षदूषणस्योत्तरत्राकृतत्वात् कथ तावदित्युक्तिरिति चेन्न । ज्ञान-ज्ञेययोरिति निर्धारणसप्तमी । ज्ञेयस्येति योग्यतया सम्बन्ध । एकपद मुख्यार्थकम् । तथा च ज्ञानज्ञेययोर्मध्ये ज्ञेयस्य ज्ञानमुख्याकारत्व नेत्यभिप्रायकतयोत्तरत्र [1]तृतीयपक्षेत्यादिना स्वयमधृत्वा व्याख्यास्यमानत्वेन तदभि-प्रायकतया तावदित्युक्तिसम्भवात । प्रथमकल्पे यावदाकारा वा यत्किञ्चिदाकारो वेति विकल्प हृदि निधायाऽऽद्य दूषयति ॥ सति हीति ॥ अनुपलम्भादिति ॥ ज्ञाने घटत्वादिसत्ताया अनुभवबाधितत्वादित्यर्थ । द्वितीय शङ्कते ॥ एकैवेति ॥ आत्मनो निराकारत्वेनैव [2]द्वितीयस्यापि पक्षस्य दूषितप्रायत्वेपि घटादिज्ञानसाधारण्येन दूषणान्तर वक्तुं मूलं प्रकारान्तरेण योजयति ॥ एवमिति ॥ इति वक्तव्यमिति ॥ एकपदस्य मुख्यार्थत्व-माहत्य मुख्याकारत्वे निराकृतेऽमुख्याकारत्व व्यञ्जनया लभ्यत इति भाव ॥ अनेनेति ॥ अवयवव्युत्पत्ति-लभ्यार्थान्तरनिराकरणपूर्वक तत्र परिशेषकथनद्वारा तदाकारत्वपदजन्यप्रमितिविषयत्वरूपसामान्यसूचनेनेत्यर्थ । तथा च तद्विषयकत्वाभावात्तदाकारत्वपदजन्यप्रमितिविषयाभाववानिति हेतुहेतुमद्भावो बोध्य इति भाव ॥

(गु. टि) तद्विषयत्वासत्त्वेपि शशविषाणादिज्ञानस्य तदाकारत्वदर्शनात् कथं तद्विषयत्वस्यैव तदाकारत्व-वर्णनमिति भावेन शङ्कते ॥ कुत इति ॥ परिशेषयति ॥ परिशेषादिति ॥ आद्यपक्षमात्रनिरासकत्वाद्वाक्यस्य कथ पक्षद्वयनिरासकत्वेन व्याख्यात इत्यत एकशब्दस्यैकार्थत्वे प्रथमपक्षनिरासकत्ववत् सदृशार्थकत्वे द्वितीयपक्ष-निरासकत्वस्यापि सम्भवाद्युक्त पक्षद्वयनिरासकत्वेनास्य व्यापार इत्यभिप्रेत्य तत्सिद्ध्यर्थं तथापि योजयति । ॥ एवमिति ॥ अत्यन्तसादृश्येति ॥ ज्ञानज्ञेयमात्रनिष्ठधर्मेण सादृश्यस्येत्यर्थ. । घटज्ञानत्वस्य घटे घटत्वस्य च घटज्ञाने असत्त्वेनात्यन्तसादृश्यस्यानुभवबाधितत्वादिति भाव । यद्यपि निराकारत्वयुक्त्या अय पक्ष प्रागेव दूषित तथापि साकारत्वमङ्गीकृत्य पृथग्दूषणाभिधानमेतदिति द्रष्टव्यम् ॥ प्रागिवेति ॥ वेदान्तजनितविज्ञानस्य आत्मनेव घटेनापि सत्तया सदृशत्वेनाऽऽत्मज्ञानत्ववद्घटज्ञानत्वस्यापि प्रसङ्गादित्यर्थ । स आकार इवेति विषयस्याऽऽकार-सादृश्यमुक्तम् । तत्रात्यन्तम् । अनुभवबाधितत्वात् । नापि सत्तया । पूर्ववदतिप्रसङ्गित्वादित्यत उक्तम् । ॥ व्यावर्तकत्वेनेति ॥ आधाराधेयभावाभावेन कथ व्यावर्तकत्वमपि तस्येत्यत उक्तम् ॥ विषयतयेति ॥ यदि तर्हीति ॥ यदि तद्विषयत्वमेव तदाकारत्व तर्हीति सम्बन्ध ॥ अनेनेति ॥ तदाकारत्वस्य परिशेषेण तद्विषयत्वे पर्यवसानवर्णनेनेत्यर्थ ।

केचित्तु 'किन्नाम । सामान्यविशेषवचनौ' इत्यत्र वृक्षशिशुपाशब्दाविवेति शेष । वृक्षत्ववत्तदाकारत्वस्य सामान्यताया शिशुपात्ववत्तद्विषयत्वस्य विशेषताया सत्त्वादित्यर्थं । एव तर्हि 'न च तदाकारम् । अतद्विष-

---

[1] तृतीयेपि पक्ष इत्यादिना स्वय कृत्वा व्याख्यास्यमानत्वेन इति पाठेन भाव्यमिति भाति ।

[2] टीकाया विकल्पितस्येति ज्ञेय

(गु.टि.) त्वादेव' इति कथं विशेषाभावेन सामान्याभावसाधनम्। व्यभिचारात्। न हि शिंशपात्वाभावेन वृक्षत्वाभावसाधनं युक्तमिति चेन्न। यावद्विशेषाभावेन सामान्याभावसाधनात्। अत एवोक्तं प्राक् 'ततश्च वेदान्तजनितविज्ञानमात्मविषयत्वेनतदाकारमपि न भवेत्' इति। अत एव च 'अतद्विषयत्वादेव' इति हेतुमुक्त्वा 'तद्विषयत्वमेव हि तदाकारत्वम्' इत्युपपादनं कथं तद्विषयत्वमेव तदाकारत्वम्। तदाकारत्वस्य तद्विषयत्वपरित्यागेनापि 'तदाकार एवाकारो यस्य' इत्यादिव्युत्पत्त्या निर्विषये घटादावपि सत्त्वात् इत्याशङ्कापरिहारपरं 'न हि ज्ञानं ज्ञेयातिरेकेऽकारता' इति मूलं प्रसक्तप्रतिषेधपरतया प्रवृत्तमित्याहुः।

### ज्ञानकर्मत्वविषयत्वयोरविशेषसमर्थनम्

(टी.) नन्वात्मनो दृक्कर्मत्वाभावे वेदान्तवाक्यजनितविज्ञानस्याऽऽत्माकारत्वं नोपपद्यत इति प्रतिज्ञाय 'अतत्कर्मत्वादेव' इति हेत्वभिधानं 'तत्कर्मत्वमेव हि तदाकारत्वम्' इत्युपपादनं चोचितम्। 'अतद्विषयत्वादेव' इत्यादि तु केन सङ्गच्छते। मैवम्। शशविषाणशब्दात्तदाकारं ज्ञानमुपजायत इति तावत्साक्षिसिद्धम्। न तु तत्सकर्मकम्। तथा वेदान्तवाक्यजनितं विज्ञानमनात्मकर्मकमप्यात्माकारं किं न स्यादित्येतदाशङ्कानिवृत्तये ज्ञानं प्रति कर्मत्वविषयत्वयोर्विशेषाभावसूचनाय कर्मोपक्रमेण विषयव्यवहारस्य सार्थकत्वात्।

तथा हि, शशविषाणशब्दादुपजायमानं ज्ञानं सविषयं निर्विषयं वा। निर्विषयत्वे ज्ञानमेव न स्यात् घटवत्। सविषयत्वे कथमकर्मकं स्यात्। विषयस्यैव कर्मत्वात्।

अथ कथं शशविषाणस्य सकलसामर्थ्यविकलस्य कर्मत्वमिति चेत् विषयत्वमपि कथम्। न विषयत्वं नाम वस्तुसामर्थ्यम्। किं नाम करणसामर्थ्याद्यदुल्लेखि ज्ञानमुपजायते स विषय इत्युच्यत इति चेत् अथ ज्ञानं प्रति कर्मत्वमपि किमधिकं पश्यसि। जनकत्वमिति चेन्न। ज्ञानं प्रत्यर्थस्य क्वापि जनकताऽसम्मतेः। अपरोक्षज्ञानेऽपि कर्मणो न ज्ञानोत्पत्तौ व्यापारः। केवलं करणसन्निकर्षनिष्पत्तावेव तत्सत्त्वोपयुज्यते। यत्र तु शाब्दादौ ज्ञाने विनापि विषयसत्त्वेन करणसन्निकर्षोत्पत्तिस्तत्रासतोऽपि कर्मत्वे किमनुपपन्नम्।

ननु कर्तुरन्यत्वे सति क्रियाजन्यफलाश्रयत्वं कर्मत्वम्। यथा गतिजन्यसंयोगाश्रयत्वं ग्रामस्य। न च शशविषाणादीनां ज्ञानजन्यफलाश्रयत्वमिति कथं कर्मतेति चेन्न। तत्रापि ज्ञानेन शब्दव्यवहारजननात्। साक्षात्तदाश्रितं फलं नास्तीति चेत्। एवं तर्हि ज्ञानकर्ममात्रे तदभावेनाव्यापकं कर्मलक्षणं स्यात्। ज्ञाततायाश्चान्यत्र निराकृतत्वात्।

एतेन 'आत्मनि प्रकाशरूपे ज्ञानजन्यप्रकाशोदयासम्भवात् आत्मनो दृक्कर्मत्वं विना तज्ज्ञानत्वं न स्यात् इत्याद्यतिप्रसङ्गो विपर्ययापर्यवसायी' इत्येतदपि निरस्तम्।

(टी) किञ्च ज्ञानजन्यफलाश्रयत्वं चेज्ज्ञानकर्मत्वं तदा दृश्यत्वहेतुः प्रतिवादिनोऽसिद्धः स्यात्। ज्ञाततानङ्गीकारिभिरपि नित्यानुमेयेषु तदनङ्गीकाराद्भागासिद्धः स्यादिति।

(वि टि.) ॥ उचितमिति ॥ उपक्रान्तशब्देनैव व्यवहारस्य झटित्यर्थोपस्थापकत्वेन प्रतिपत्तिलाघवादिति भाव ॥ अनात्मकर्मकमिति ॥ आत्मकर्मकत्वरहितमपीत्यर्थः। ज्ञान प्रति कर्मत्वविषयत्वयोरविशेषज्ञापनाय शशविषाणादिशब्दजन्यज्ञानस्य सकर्मकत्व तावत्साधयति ॥ तथा हीति ॥ विषयस्यैवेति ॥ ज्ञानविषयस्यैव ज्ञानकर्मत्वादिति भाव। शक्तिमत्कारकमिति भावेन शङ्कते ॥ अथ कथमिति ॥ विषयत्वमपीति ॥ वस्तु-सामर्थ्यविशेषरूपविषयत्वस्यापि नि स्वरूपे तस्मिन्नसम्भवादिति भाव ॥ अथेति ॥ ज्ञानसामर्थ्याद्यदुल्लेखि ज्ञानं जायते तदेव कर्म। अन्यस्य ज्ञानकर्मणो दुर्वचत्वादिति भाव ॥ जनकत्वमिति ॥ कारकाद्यतिरिक्तत्वे सति ज्ञानजनकत्वमित्यर्थः। ज्ञानजनकत्वमित्यत्र किं ज्ञानत्वाच्छिन्नज्ञानजनकत्व विवक्षितं अपरोक्षज्ञानजनकत्व वा। नाद्य इत्याह ॥ ज्ञानं प्रतीति ॥ अर्यत इति व्युत्पत्त्या अर्थशब्दो ज्ञेयवस्तुविषय। तस्य क्वापि कस्मिन्नपि ज्ञाने व्यभिचारेण जनकत्वायोगादिति भाव। न द्वितीय इत्याह ॥ अपरोक्षज्ञानेऽपीति ॥ विषयसत्त्वस्थलीयापरोक्ष-ज्ञानेऽपीत्यर्थः ॥ कर्मण इति ॥ 'इद साक्षात्करोमि' इति कर्मत्वेनानुभवसिद्धस्येत्यर्थः ॥ ज्ञानेति ॥ विद्यमान-विषयापरोक्षज्ञानेत्यर्थः। व्यापारः सामग्रीशरीरप्रविष्टत्वरूप। क्व तर्हि प्रमाणसिद्धतदन्वयव्यतिरेकोपयोग इत्यत आह ॥ केवलमिति ॥

ननु स्वतन्त्रान्वयव्यतिरेकदर्शनात्कर्मणोऽपि हेतुत्व दुर्वारम्। अन्यथा इन्द्रियस्यापि तन्न स्यात्। अवि-शेषात्। इत्यत आह ॥ यत्र त्विति ॥ सति करणसन्निकर्षे विषयसत्त्वं विनापि ज्ञानव्यतिरेकादर्शनेन विषयस्य न हेतुत्वमित्यर्थः। तथा च ज्ञप्तिक्रिया प्रति अर्थस्य कर्मत्वेनैव जनकत्वं वाच्यम्। कर्मत्वञ्च जनकत्वाभावे-प्यनुमितिशाब्दधीविषयस्य दृष्टमिति क्वचिद्विषयसत्त्वेऽपि व्यभिचारेण न तस्य जनकत्वमभ्युपगमार्हम्। यदि च विद्यमानविषयप्रत्यक्षत्वावच्छेदेन विषयस्य ज्ञानजनकत्व तदा विद्यमानविषयकानुमितित्वाद्यवच्छेदेनैव सामान्य-रूपतया लघुभूतविद्यमानविषयकज्ञानत्वावच्छेदेन वा विषयस्य जनकतापत्तिरिति भाव। यद्वा करणसन्निकर्ष-निष्पादकत्वेन जनकत्वेऽपि करणवत्कर्मणोऽपि जनकत्वं किं न स्यादित्यत आह ॥ यत्र त्विति ॥ विषय विनापि करणसन्निकर्षनिष्पत्त्या ज्ञानोत्पत्तिस्तत्रैव व्यभिचारान्न विषयस्य करणतुल्ययोगक्षेमतेत्यर्थः।

ननु विनापि विषयसत्त्वं करणसन्निकर्षोत्पत्तिरिति कथमुच्यते। कथं वा शब्दादिरूपकरणस्थले सन्नि-कर्षापेक्षेति चेत् न हि करणसन्निकर्षो विषयसत्त्वव्याप्य। सामान्यादेरतीतानागतविषयप्रत्यासत्तिरूपत्वाभ्युप-गमात्। न च शब्दादिकमसन्निकृष्टकरणम्। घटशब्दादिना पटादेरपि बोधप्रसङ्गात्। न च शक्तिव्याप्त्या-दिकमेवातिप्रसङ्गभञ्जकमिति वाच्यम्। तस्यैव सन्निकर्षशब्दार्थत्वोपगमादिति।

शशविषाणादीना ज्ञानकर्मत्व नास्तीति वक्तु कर्मसामान्यलक्षणं शङ्कते ॥ नन्विति ॥ मामह जानामीति कर्तुरपि कर्मत्वानुभवात् तत्राव्याप्तिरिति दूषणे सत्येव दूषणान्तरमाह ॥ तत्रापीति ॥ ननु तादात्म्यसम्बन्धेन

क्रियाजन्यफलशालित्वं कर्मत्वम् । न च मन्ता कस्यचित् दृश्यत्वं स्वीकरोति । तस्याप्यमन्तव्यत्वमित्याशयेन शङ्कते ॥ साक्षादिति ॥ एवं तर्हीति ॥ इच्छादिजन्यतत्फलजन्यफलस्य विपर्ययेण स्वात्मस्थत्वाभावेन ज्ञानकर्ममात्र उक्तलक्षणाभावेनाव्याप्तिः स्यादित्यर्थः

ननु ज्ञानजन्यफलं न व्यवहारः । किं तु प्राकट्यापरपर्यायज्ञाततैव । तस्य विषयेण साक्षात्सम्बन्ध एवास्तीति नाव्याप्तिः । न च ज्ञाततायां मानाभावः 'ज्ञातो घटः' इत्याद्यनुभवस्य एतस्यैतज्ज्ञानविषयत्वं नान्यस्येति नियमान्यथानुपपत्तेश्च मानत्वादित्यत आह ॥ ज्ञाततायाश्चेति ॥ 'ज्ञातो घटः' इत्याद्यनुभवेन ज्ञातत्वसिद्धौ 'इष्टो घटः' इत्याद्यनुभवेनेष्टतादेरपि सिद्धिप्रसङ्गेन अतीतादौ ज्ञातताऽभावेऽपि तज्ज्ञानस्य वस्तुस्वभावादेव नियतविषयत्वस्योपपत्त्या चेत्यन्यत्र पद्धत्यादौ निराकृतत्वादित्यर्थः ।

यद्यपि भाट्टाभिमतज्ञातता परैरपि नाङ्गीक्रियते तथापि तदङ्गीकारेऽपि दूषणमिदमिति ज्ञातव्यम् । तथा च ज्ञानकर्मत्वं तद्विषयत्वान्नातिरिच्यते । यस्मिन्निकृष्टकरणेन यज्ज्ञानमुत्पद्यते तत्त्वमेव तद्विषयत्वमिति सिद्धं शशविषाणादिशब्दजन्यज्ञानस्यापि सकर्मकत्वमिति भावः ॥ एतेनेति ॥ ज्ञानकर्मत्वस्य ज्ञानविषयत्वव्यतिरेकेण दुर्निरूपत्वेनेत्यर्थः ॥ आत्मनीति ॥ प्रकाशरूपत्वात्स्वतस्तत्र ज्ञानजन्यत्वाभिमतज्ञाततापरनामकप्रकाशोदयासम्भवादित्यर्थः ।

अयमाशयः । न हि घटादौ ज्ञातता कुलधर्मतया अङ्गीक्रियते । किं तु ज्ञानस्य तदीयतासिद्ध्यर्थमेव । प्रकाशरूपे चात्मनि स्वप्रकाशत्वं स्वतः सिद्धमिति न तत्र ज्ञाततोदयाङ्गीकारो युक्त इति ।

॥ आत्मन इति ॥ आत्मनो यदि दृक्कर्मत्वं न स्यात्तदा वेदान्तजनितविज्ञानस्यात्मज्ञानत्वं न स्यात् । अस्ति च तस्यात्मज्ञानत्वम् । तस्मादस्त्येवाऽऽत्मनो दृक्कर्मत्वमिति विपर्यये पर्यवसानासम्भवेन आभासोऽयं तर्क इत्यर्थः ॥ प्रतिवादिन इति ॥ भट्टाद्यभेदवादिन इत्यर्थः ॥ तदनङ्गीकारादिति ॥ नित्यानुमेयेषु प्राकट्यानानुभवादिति भावः ।

(ग. टि.) कर्मत्वविषयत्वयोर्भेदं मत्वा शङ्कते ॥ नन्वात्मन इति ॥ परोक्तमनुवदति ॥ शशविषाणेति ॥ अविशेषमुपपादयति ॥ तथा हीत्यादिना ॥ अथ ज्ञानमित्यत्राथेति निपातो विषयत्वादित्यर्थः । चक्षुरादेरपि घटादेरिव मतोपयुज्यतामिति शङ्कानिरासाय धर्मिग्राहकमानसिद्धं जनकत्वमिति भावेन करणसन्निकर्षं युक्तम् । कर्तर्यतिव्याप्तये कर्तुरन्यत्वे सतीति ॥ तदभावेनेति ॥ संयोगादिरूपस्य साक्षात्तदाश्रितफलस्याभावेनेत्यर्थः । ज्ञाततैव तादृशं फलं सार्वत्रिकमित्यत आह ॥ ज्ञाततया इति ॥ 'न प्रमासाधनं प्रमाणम्' इत्यादिना प्रमाणलक्षणादौ निराकृतत्वादित्यर्थः ॥ एतेनेति ॥ ज्ञाततया निरस्तत्वेनेत्यर्थः । विषयत्वमेव कर्मत्वमिति कथनेनेत्यर्थः ॥ ज्ञानजन्यप्रकाशेति ॥ ज्ञाततारूपप्रकाशोदयासम्भवादित्यर्थः ॥ विपर्ययापर्यवसायीति ॥ 'यद्यात्मनो न दृक्कर्मत्वं तर्हि वेदान्तजन्यज्ञानस्यात्मज्ञानत्वं न स्यात् । अस्ति तत् । अतो दृक्कर्मात्मा' इति विपर्ययपर्यवसानस्य बाधात्तु विपर्यये पर्यवसायीत्येतन्निरस्तम् । ज्ञाततापर्यायस्य प्रकाशस्य निरस्तत्वेन न

(रा टि ) तदाश्रयत्वं कर्मत्वम् । किं तु विषयत्वमेव कर्मत्वम । तदात्मनोऽपि सम्भवतीत्युपपादनेन बाधाभावाद्विपर्यय-पर्यवसानं युक्तमिति भाव ॥ असिद्ध इति ॥ दृग्जन्यज्ञानतारूपफलाश्रयत्वं दृश्यत्वमिति वाच्यत्वाज्ज्ञाततायाः प्रतिवादिनोऽसम्मतेरिति भाव ।

(वे. टि ) ॥ उचितमिति ॥ उपक्रान्तशब्देनैव व्यवहारस्य झटित्यर्थोपस्थापकत्वेन प्रतिपत्तिलाघवादिति भाव ॥ अनात्मकर्मकमपीति ॥ आत्मकर्मकत्वरहितमपीत्यर्थ । ज्ञानं प्रति कर्मत्वविषयत्वयोर्विशेषाभावसूचनेपि कथमुक्तशङ्कानिवृत्तिरित्यत आह ॥ तथा हीति ॥ ज्ञानं प्रति कर्मत्वविषयत्वयोरविशेषज्ञापनाय शशविषाणादि-शब्दजन्यज्ञानस्य सकर्मकत्वं साधयति ॥ तथा हीति ॥ इत्यप्याह ॥ जनकत्वमिति ॥ कर्तृकारकाद्यन्यत्वे सति ज्ञानजनकत्वमित्यर्थ । ज्ञानजनकत्वमित्यत्र किं ज्ञानत्वावच्छिन्नजनकत्वं विवक्षितं अपरोक्षज्ञानजनकत्वं वा । नाद्य इत्याह ॥ ज्ञानं प्रतीति ॥ क्वापि कस्मिन्नपि ज्ञाने । व्यभिचारेण जनकत्वासम्भवादिति भाव । न द्वितीय इत्याह ॥ अपरोक्षज्ञानेऽपीति ॥ यद्यप्यपरोक्षज्ञाने विषयस्य नियतपूर्ववृत्तित्वमस्त्येव तथापि नानन्यथासिद्धि । करणसन्निकर्षनिष्पत्तावेवान्यथासिद्धत्वादित्यर्थ ।

न च वर्तमानविषयकजन्यप्रत्यक्षत्वावच्छेदेनाव्यभिचारादनन्यथासिद्धेश्च कर्मणोपि हेतुत्वम् । अन्यथा कर्मसन्निकर्षनिष्पादकत्वेन करणस्याप्यन्यथासिद्धत्वेनाजनकत्वं स्यादिति वाच्यम् । वर्तमानविषयकानुमितित्वाव-च्छेदेनापि कर्मणो हेतुत्वापत्ते । सामान्यरूपतया लघुभूतविद्यमानविषयकज्ञानत्वावच्छेदेनापि जनकतापत्तेश्च । तत्र विषयस्य व्याप्त्यादिलक्षणसन्निकर्षनिष्पादकत्वेनान्यथासिद्धत्वेऽत्रापि तथास्तु । क्रियाया करणजन्यत्वनियमेन व्यापारवत्त्वश्च करणत्वेन सन्निकर्षजनकस्यापि चक्षुरादेर्ज्ञानहेतुत्वं युक्तमिति न करणसमानयोगक्षेमतापि विषयस्य युक्तेति भाव ।

ननु चक्षुरादे करणस्य करणत्वसिद्ध्यर्थं कर्मसन्निकर्षरूपव्यापारजननद्वारा क्रियाजनकत्ववत् कर्मणोपि कर्मत्वसिद्ध्यर्थं करणसन्निकर्षरूपव्यापारजननद्वारा क्रियाजनकत्वमस्तु । अन्यथा [1]करणत्ववत्कर्मत्वमपि न स्यादि-त्यत आह ॥ यत्र त्विति ॥ न हि करणत्वमिव कर्मत्वमपि व्यापारवत्त्वम् । अतीतादिविषयकशाब्दादिज्ञान-कर्मण्यव्याप्तेरिति भाव । उपलक्षणमेतत् । गमनक्रियाकर्मणि ग्रामेप्यव्याप्तिर्द्रष्टव्या ।

केचित्तु 'करणसन्निकर्षजनकत्वेपि करणवत्कर्मणोपि जनकत्वं किं न स्यादित्यत आह ॥ यत्र त्विति ॥ विषयं विनापि यत्र करणसन्निकर्षनिष्पत्त्या ज्ञानोत्पत्तिस्तत्रैव व्यभिचारान्न विषयस्य करणतुल्ययोगक्षेमतेत्यर्थ । ननु विनापि विषयसत्त्वं सन्निकर्षोत्पत्तिरिति कथमुच्यते । कथं वा शब्दादिरूपकरणस्थले सन्निकर्षापेक्षेति चेन्न । न हि सन्निकर्षो विषयसत्त्वव्याप्य । सामान्यादेरतीतादिविषयप्रत्यासत्तित्वाभ्युपगमात् । न वा शब्दादिकमस-न्निकृष्टकरणम् । घटशब्दादिना पटादेरपि बोधप्रसङ्गात् । न च शक्तिव्याप्यत्वादिकमेवातिप्रसङ्गभञ्जकमिति

[1] कर्मत्ववत्करणत्वमपि इति पाठेन भाव्यमिति भाति ।

(द्वै ब्रु) ध्वनीनादिविषयकानुमित्यावुत्पत्तिदर्शनात् कारणीभूतलिङ्गपरामर्शरूपव्यापारादिकं विना तदुत्पत्त्यदर्शनात् करणव्यापारादीनामवश्यक्लृप्तत्वेन तज्जातीयप्रत्यक्षेऽपि तथैव कार्यसम्भवे तत्सहभूतविषयस्यान्यथासिद्धताया एवोचितत्वात् । अन्यथा चाक्षुषप्रत्यक्षमात्रेऽनेकद्रव्यत्वस्य द्रव्य) समवेतद्रव्यसमवेतत्वरूपस्य कारणत्वापत्तेः । गौरवात्तस्य कारणत्वानङ्गीकारेऽत्रापि तथास्तु । विषयत्वमात्र प्रत्यक्षाकारणेषु ज्ञानलक्षणादिना भासमानेषु तदिन्द्रियायोग्यानीन्द्रियनष्टविषयादिष्वतिप्रसक्तम् । [1]विषयतात्वव्याप्यो लौकिकत्वाख्यधर्मश्चेदपि स एव दोषः। तदिन्द्रिययोग्येपीन्द्रियान्तरयोग्ये नष्टे वा लौकिकविषयत्वानपायेन तत्तत्प्रत्यक्षे तेषां तेषां विषयाणां कारणत्वापत्तेः । तत्तत्प्रत्यक्षं प्रति तदीयलौकिकविषयत्वावच्छिन्नस्य कारणत्वमिति विशेषकार्यकारणभावाङ्गीकारे यत्र दोषविशेषबलेन नष्टपदार्थभानं तत्र तत्साक्षात्करोमीति प्रत्ययानुरोधेन लौकिकविषयत्वावश्यकत्वाद्व्यभिचारः ।

एतेन घटवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षे घटत्वेन हेतुत्वपक्षोऽपि परास्तः । उक्तस्थल एव व्यभिचारात् । तत्तद्दोषप्रयोज्यलौकिकविषयित्वाधिकारणत्वस्य कार्यतावच्छेदकत्वे गौरवम् । इन्द्रियसन्निकर्ष-कार्यतावच्छेदककोटौ तन्निवेशस्त्वन्यसम्मत । घटत्वपटत्वादिनानाधर्माणां कारणतावच्छेदकत्वे गौरवम् । एवं तादात्म्यत्वस्य तद्वृत्त्यसाधारणधर्मत्वरूपस्य कारणतावच्छेदकसंसर्गतावच्छेदकत्वे च गौरवम् । एवं विनश्यदव-स्थापन्नघटादिविषयस्थले घटलौकिकचाक्षुषवारणाय विषयकारणत्ववादिना तस्य कार्यकालवृत्तित्वेन कारणत्वाङ्गी-कारे सुखादिसविकल्पकेषु तदभावाद्व्यभिचारः । तस्य पूर्वकालमात्रवृत्तित्वमात्रेण कारणत्वाङ्गीकारे वैरूप्यात्पुन-र्गौरवमेवेति दिक् ।

नन्वस्तु फलीभूतज्ञाने सन्निकर्षेण विषयस्यान्यथासिद्धत्वम् । विषयकारणयोः सन्निकर्षार्थमपि विषय-सत्तापेक्षायामपि कथमसतो विषयत्वरूपकर्मत्वमित्यत आह ॥ यत्र त्विति ॥ शब्दादाविति ॥ सप्तम्यर्थनिरू-पितत्वं करणत्वेऽन्वेति । तथा च शब्दज्ञानलिङ्गज्ञानयोरेव करणत्वात् तत्सन्निकर्षस्य तत्र व्यापकतया तदीय-वृत्तिमत्त्वेन भासमानत्वरूपत्वात्तस्य च तज्ज्ञानकालेऽविद्यमानयोरतीतानागतयोरिव सर्वथाऽविद्यमानस्यासतोऽपि सम्भवेन न किञ्चिदपि बाधकम् । असतः प्रतीतिस्तु पूर्वं निपुणतरमुपपादितेति भावः । गत्यादिस्थले यादृशं तादृशमेव ज्ञानकर्मत्वमपीत्याशयेन शङ्कते ॥ नन्विति ॥ संयोगस्योभयत्राप्युपपत्तेः कर्तर्यतिव्याप्तिवारणाय कर्तृभिन्नेति । फलसम्बन्धमात्रविवक्षायां प्रकृते न हानिः । [2]साक्षात्सम्बन्धस्तु ज्ञानस्थले सर्वत्रासम्भवीत्याह ॥ तत्रा-पीति ॥ [3]शब्दव्यवहारादीति ॥ आदिना प्रवृत्त्यादिग्रहः । शब्दसम्बन्धश्च तज्जन्यशाब्दविषयत्वमेव । कचि-च्छाब्दादीति पाठः । तत्रापि प्रथमज्ञानस्य शब्दज्ञानमपि फलं भवतीति तथोक्तिः ।

इदं तु तुष्यत्विति न्यायेनोक्तम् । वस्तुतस्तु ज्ञानस्थले नैतत्सम्भवति । उदासीनारण्यस्थानेकपदार्थदर्श-नस्थले केषुचित्प्रवृत्तिनिवृत्तिरागद्वेषव्यवहाररूपस्य कस्यापि फलस्यासम्भवेनासार्वत्रिकत्वात्तान् जानाति चैत्र इति

---

[1] विषयतत्वव्याप्यो लौकिकविषयत्वाख्यधर्मश्चेदपि इति पाठेन भाव्यमिति भाति ।

[2] आधारतानियामक इत्यर्थः । [3] ॥ शाब्दव्यवहारादीति ॥ इति पाठेन भाव्यमिति भाति ।

(द्वै यु ) व्यवहारानुपपत्तेरिति अवधेयम् । ननु ज्ञाततारूपफलं तत्रापि सम्भवतीत्यत आह ॥ ज्ञातताया इति ॥ ॥ अन्यत्रेति ॥

न परिच्छेदकार्यैव प्रमाणमिति च प्रमा ।

इत्यनेन भक्तिपादीयानुव्याख्यानेनेत्यर्थः ॥ एतेनेति ॥ स्वाश्रयफलाश्रयत्वघटितकर्मत्वस्य वक्तुमशक्यत्वेन परम्परया तत्सम्बन्धस्य तद्घटकत्वोपपादनेनेत्यर्थः ॥ प्रकाशोदयासम्भवेनेति ॥ वैयर्थ्यरूपयुक्तिपराहतत्वेनेत्यर्थः । घटादीनामप्रकाशात्मकानां दीपादिप्रकाशेन व्यवहारादिदर्शनेऽपि दीपस्य प्रकाशरूपस्य प्रकाशान्तरसम्बन्धं विनाऽपि व्यवहारदर्शनेनात्मन्यपि तथैव सम्भवे घटादाविव तत्र प्रकाशोदयवैयर्थ्यादिति भावः । यद्वाऽनवस्थारूपयुक्तिपराहतत्वेनेत्यर्थः । प्रकाशेऽपि व्यवहारार्थं प्रकाशान्तरं स्वीकारे तत्राप्येवं तत्राप्येवमित्यनवस्थेत्यर्थः ॥ विपर्ययापर्यवसायीति ॥ तत्र युक्तिरूप बाधादिति भावः ॥ इत्येतदपीति ॥ कर्मत्वलक्षणे फलसम्बन्धः साक्षादेव निविष्टः । निविष्टं फलं वा फलत्वेन निविष्टम् । किन्तु ज्ञाततात्वप्रकाशत्वादिरूपेण । हेतूकृतमपि तदेवेत्यभिप्रायेण यत्परेषां दूषणमित्यर्थः ॥ निरस्तमिति ॥ उक्तरीत्या निवेशे स्वरूपासिद्धिसाधनाप्रसिद्ध्याद्यापातेन फलत्वेनैव फलं निवेश्य साक्षात्परम्परासाधारणसम्बन्धमात्रं निवेश्यैव हेतुकर्तव्यतया आत्मनि व्यवहारादिरूपफलस्य विषयत्वरूपसम्बन्धसत्त्वादित्यर्थः ॥ प्रतिवादिन इति ॥ ज्ञाततानिराकर्तुः तत्त्ववादिन इत्यर्थः । ज्ञाततावादिभिरिति पङ्क्त्या कर्मलक्षणमेव निराकृतमतोऽस्य ततो भेदः । ज्ञाततात्वेन ज्ञानजन्यफलत्वेन वा निवेश्य साक्षात्सम्बन्धमेवोपादाय ज्ञाततामादाय हेतूपपादनपक्षे च पूर्वं ज्ञाततानिराकरणस्यैव दोषतयाभिधाने ज्ञातताव्यवस्थापननिराकरणोपर्येव भारः स्यादतः तदङ्गीकारपक्षेऽपि दूषणमाह ॥ ज्ञातेनेति ॥ नित्यानुमेयेषु चक्षुरादिषु । अतीन्द्रियाणां अतीतादीनाञ्चोपलक्षकमेतत् ।

(गु टि ) ॥ उचितमिति ॥ उपक्रान्तशब्देनैव व्यवहारस्य झटित्यर्थोपस्थापकत्वेन प्रतिपत्तिलाघवादिति भावः ॥ अनात्मकर्मकमपीति ॥ आत्मकर्मकत्वरहितमपीत्यर्थः । ननु शशविषाणज्ञानस्य निर्विषयत्वेपि ज्ञानत्वे बाधकाभावादप्रयोजकतेत्यत तथा सति निर्विषयस्य घटस्यापि ज्ञानत्वप्रसङ्ग इति विपक्षे बाधकस्य सत्त्वात् न तदित्याशयेनाह ॥ घटवदिति ॥ विषयत्वं नामेति ॥

अयमर्थः । न विषयत्वं घटत्वादिवत् विषयहेतुकृतम् । नापि पाकजरूपादिवद्बुद्धिभिन्नाऽऽगन्तुकस्वहेतुकृतम् । किन्तु बुद्धिहेतुकृतमेवेति । तर्हि कर्मत्वमप्यनिवार्यमेवेत्याह ॥ कर्मत्वमपीति ॥ तस्यापि बौद्धत्वेन वस्तुसामर्थ्यकृतत्वाभावादित्यर्थः । अत एवोक्तमन्यथाख्यातिवादीयसुधायां 'बौद्धमेवाभावाश्रयत्वम् । न वस्तुकृतम् । अतो न विरोध' इत्यादिना।

विषयत्वातिरिक्तं कर्मत्वं शङ्कते ॥ जनकत्वमिति चेदिति ॥ तत्किं ज्ञानत्वावच्छेदेनाभिमतं जन्यज्ञानत्वावच्छेदेन वा लौकिकापरोक्षज्ञानत्वावच्छेदेन वा । न प्रथमद्वितीयावित्याह ॥ ज्ञानं प्रत्यर्थस्य जनकताऽसम्प्र-

---

[1] न निविष्टम् इति पाठेन भाव्यमिति भाति ।

(गु.टि.) तिपत्तेरिति ॥ ज्ञानत्वावच्छेदेन विषयस्य जनकत्वे ऐश्वरज्ञानस्य नित्यत्वेनार्थजन्यत्वाभावादर्थविषयत्वाभावप्रसङ्गात् । प्रत्यभिज्ञानस्य च तत्ताशजन्यत्वाभावेन तद्विषयकत्वाभावप्रसङ्गादिति भाव । तदुक्तं सुधायाम् 'तथा सतीश्वरज्ञानस्य नित्यस्यार्थो विषयो न स्यात् । प्रत्यभिज्ञानस्य च तदंशो न विषयो भवेत्' इति । तृतीयमनुद्य दूषयति ॥ अपरोक्षज्ञानेपीति ॥ लौकिकापरोक्षज्ञानेपीत्यर्थ । तत्र विषयस्य नियतपूर्ववृत्तिकत्वेपि करणसन्निकर्षनिष्पादकत्वेनानन्यथासिद्धत्वविशिष्टनियतपूर्ववृत्तित्वाभावान्न कारणत्वमिति भाव ।

न चैव चक्षुषोपि करणसन्निकर्षनिष्पत्तावेवोपक्षीणत्वेनान्यथासिद्धत्वेन विशिष्टकारणलक्षणाभावादकारणत्वप्रसङ्ग इति वाच्यम् । 'रूपाद्युपलब्धि सकरणिका क्रियात्वाच्छिदिक्रियावत्' इति चक्षुरादे करणत्वे सिद्धे अनन्यथासिद्धस्य कारणस्यैव करणत्वात्तन्निर्वाहार्थं कल्प्यमानसन्निकर्षस्य 'सन्निपातलक्षणो विधिरनिमित्त तद्विघातस्य' इति न्यायेन स्वोपजीव्यचक्षु करणत्वविघातकत्वात् । न चैव 'रूपाद्युपलब्धि सकर्मिका क्रियात्वाच्छिदिक्रियावत्' इति कर्मण कारणत्वमुपजीव्य तन्निर्वाहार्थं कल्पितस्यार्थसन्निकर्षस्योक्तन्यायेनैव स्वोपजीव्यार्थकारणत्वविघातकत्वानुपपत्त्या नार्थस्याप्यन्यथासिद्धि स्यादिति वाच्यम् । अव्यभिचारात् क्रियात्वेन करणजन्यत्वानुमानसम्भवेपि अकर्मकक्रियाया व्यभिचारेण 'या क्रिया सा कर्मजन्या' इति व्याप्त्यसिद्ध्या क्रियात्वेन सकर्मकत्वस्यानुमातुमशक्यत्वेनोक्तन्यायाप्रवृत्त्या वैषम्येण अन्यथासिद्धत्वावश्यम्भावादिति भाव ।

नन्वेव चक्षुरादे करणस्य करणत्वसिद्ध्यर्थं कर्मसन्निकर्षरूपव्यापारजननद्वारा क्रियाजनकत्ववत् कर्मण अन्यथासिद्धत्वेनाजनकत्वेपि करणसन्निकर्षनिष्पत्तावुपयोगित्वेन तत्सत्त्वावश्यम्भावात् कथमसत शशविषाणादे ज्ञानकर्मत्वं स्यादित्यत आह ॥ यत्र न्विति ॥ मीमांसकाभिमत कर्मलक्षणमाशङ्कते ॥ कर्तुरन्यत्व इति ॥ कर्तुरन्यत्वे सति । क्रियाजन्यफलशालित्वेनैव कर्मत्वे देवदत्तसमवेतगतिक्रियाजन्यफलसयोगशालिग्रामस्येव सयोगशालिनो देवदत्तस्यापि कर्मत्वं स्यात् । ततश्च 'देवदत्त ग्राम गच्छति' इति द्वितीयापत्ति । अत सत्यन्तोपादानम् ।

नन्वत्र अन्यसमवेतत्व क्रियाविशेषण फलविशेषण वा अभिमतम् । आद्येपि अन्यत्व क्रियाश्रयापेक्षया विवक्षितं फलाश्रयापेक्षया वा । नाद्य । क्रियाश्रयादन्यत्र क्रियाया असम्भवात् । न द्वितीय । 'ग्राम गच्छति' इत्यादौ गमनक्रियाया सयोगरूपफलाश्रयाद्देवदत्तशरीरादन्यत्र असमवेतत्वेन ग्रामादेरकर्मत्वप्रसङ्गात् । न द्वितीय । उक्तविकल्पक्रमेणातिव्याप्त्यसम्भवप्रसङ्गात । गमनक्रियाश्रयदेवदत्तान्यग्रामनिष्ठसंयोगरूपफलभागिनि देवदत्त एवातिव्याप्ते । फलाश्रयादन्यत्र फलासम्भवाच्च । अथ कर्मापेक्षयैवान्यत्त्व विवक्ष्यते तदा आत्माऽश्रयप्रसङ्ग । कर्तर्यतिव्याप्तिश्च ।

एतेन 'कर्तुरेवान्यपदार्थत्वेन कर्तृसमवेतक्रियाफलशालित्वस्यैव लक्षणार्थत्वान्नाऽऽत्माऽश्रयप्रसङ्ग' इति निरस्तम् । तावतापि कर्तर्यतिव्याप्तेरपरिहारात् । तत्कथमिदं कर्मलक्षणमिति चेन्न । तत्क्रियानधिकरणत्वे सति तत्क्रियाफलशालित्वस्यैव समुदायार्थत्वेन विवक्षितत्वात् ।

(गु. टि.) ननु संयोगादिना क्रियाजन्यव्यवहारानाश्रयत्वान्न दृक्त्वविघात इति कर्मत्वमित्याशङ्कते ॥ साक्षादिति ॥ तथा सति साक्षात्सम्बन्धेन गत्यादिरूपक्रियाजन्यसंयोगरूपफलाश्रयत्वस्य समवायेन संयोगवति ग्रामे सत्त्वेऽपि ज्ञानकर्ममात्रे घटादौ संयोगादिना ज्ञानरूपक्रियाजन्यव्यवहारानाश्रयतया अभावाज्ज्ञानकर्ममात्रे लक्षणाभावप्राप्त्या अव्याप्तत्वादलक्षणत्वं स्यादित्याह ॥ एवं तर्हीति ॥

ननु ज्ञानकर्ममात्रे साक्षात्सम्बन्धेन ज्ञानजन्यव्यवहारानाश्रयत्वेऽपि ज्ञानजन्यज्ञाततारूपफलाश्रयत्वस्य सत्त्वान्न ज्ञानकर्मत्वस्याव्याप्तिरित्यत भवेदेवं यदि ज्ञाततैव स्यात् । न च सास्ति । भाट्टमतभङ्गेन खण्डनकृद्भावेन च तस्याः

ज्ञाततातिरिक्तज्ञाततायां प्रमाणाभावात्
न च प्रमाणतान्यां स्यादस्मिन्निति कुत्रचित्
मानाभावाद्गौरवाच्च कल्पनायाः किमेतया ॥

इत्यादिना प्रमाणलक्षणानुव्याख्यानयोर्निरस्तत्वेन न ज्ञानजन्यज्ञाततारूपफलाश्रयत्वेन कर्मलक्षणसमर्थनमित्याशयेनाह ॥ ज्ञाततायास्त्विति ॥ एतेनेति ॥ दृग्जन्यफलाश्रयत्वस्य कर्मलक्षणत्वनिराकरणेनेत्यर्थः ॥ आत्मनीति ॥ प्रकाशरूपत्वादात्मन अनाधेयातिशयत्वेन तत्र ज्ञानजन्यप्रकाशोदयासम्भवादित्यर्थः । अयमाशयः । यथा घटादौ तदाकारवृत्त्या स्फुरणरूपोऽतिशय आधीयते नैवमात्मनि । तस्यैव स्फुरणरूपत्वादिति ॥ आत्मन इति ॥ 'आत्मनो यदि दृक्कर्मत्वं न स्यात्तदा वेदान्तजनितं विज्ञानमात्मज्ञानं न स्यात् । भवति च तत् तज्ज्ञानम् । तस्मात् अस्त्येवात्मनो दृक्कर्मत्वम्' इति विपर्यये पर्यवसानसम्भवेनाऽऽपादनीय प्रसङ्ग इति निरस्तमित्यर्थः । दृग्जन्यफलाश्रयत्वस्य कर्मलक्षणत्वनिराकरणादिति भावः ।

ननु परेणापि परोक्षवृत्तौ न तदाधेयस्फुरणमङ्गीकृतम् । परोक्षवृत्तेरेव तत्र ज्ञानत्वाभ्युपगमात् । अन्यथा स्फुरणस्यापरोक्षैकरसत्वेन अभिव्यक्तापरोक्षैकरसस्फुरणसम्बन्धेन परोक्षवृत्तिविषयस्यापि अतीतादेः नित्यातीन्द्रियस्य धर्मादेश्च आपरोक्ष्यप्रसङ्गात् । एवञ्च परोक्षवृत्तेरिवापरोक्षवृत्तेरपि ज्ञानत्वोपपत्तौ तदाधेयस्फुरणमप्रामाणिकमिति प्रतिवादिनो भागासिद्धिः स्यादित्याशयेनाह ॥ किञ्चेति ॥

### विषयाऽऽश्रिताज्ञाननिवर्तकतया आत्माकर्मकस्यापि ज्ञानस्याऽऽत्मज्ञानत्वमिति शङ्का

(टी.) अथ मतं मा भूद्वेदान्तवाक्यजनितं विज्ञानमात्माऽऽकारतया आत्मज्ञानम् । तथाप्यात्माज्ञाननिवर्तकतया आत्मसम्बन्धितया तज्ज्ञानं भविष्यति । किमात्मनो दृक्कर्मत्वेन ।

न चाऽऽत्मनो दृक्कर्मत्वाभावे अज्ञानस्याऽऽत्माज्ञानत्वमपि दुर्घटमित्युक्तमिति वाच्यम् । आत्माऽऽश्रिताज्ञानमात्माज्ञानमित्यङ्गीकारात् ।

न च वक्तव्यं ज्ञातव्येनात्मना अज्ञानं व्यावर्तनीयम् । न चाज्ञानं तमाश्रयते । किं तु ज्ञातारमेव । वस्तुतो भेदाभावेऽपि ज्ञातृज्ञेयभावसिद्धये यादृशतादृशस्यापि भेदस्याङ्गीकृतत्वात् । अतः कथमात्माज्ञानं निवर्तयदपि ज्ञानमात्मज्ञानं स्यादिति । अज्ञानस्य ज्ञातव्यपरब्रह्माऽऽश्रयत्वोररीकरणादिति ।

(वि टि.) ॥ आत्माकारतयेति आत्मकर्मकतयेत्यर्थ ॥ तथापीति ॥ यद्यप्यात्मकर्मकत्व विना आत्माज्ञाननिवर्तकत्वमेवासम्भवीत्युक्त तथापि विस्मृतदूषणस्य शङ्कयमिति ध्येयम् । निवर्तकत्वेन निवर्तकत्व-रूपसम्बन्धेन ॥ उक्तमिति ॥ आत्मकर्मकज्ञानप्रतिबन्धकत्वादन्यस्य सम्बन्धस्य दुर्निरूपत्वादित्युक्तमित्यर्थ । नन्वाश्रयाश्रयिभावसम्बन्धेनाऽऽत्मव्यावर्तिताज्ञानमात्माऽज्ञानमिति वक्तव्यम् । न चाज्ञान परमात्माऽऽश्रितम् । माना-भावात् । प्रत्युत 'अहमज्ञ' इति ज्ञात्राश्रितत्वेनैव तदनुभवात । तथा च वेदान्तवाक्यजनितविज्ञानस्य परमात्मा-ज्ञाननिवर्तकत्वेनापि तज्ज्ञानत्व कथमुपपद्यत इत्याशङ्क्य निराचष्टे ॥ न च वक्तव्यमिति ॥ एतच्च इतीत्यनेन सम्बद्ध्यते ॥ अज्ञानस्येति ॥ 'तम आसीत्' 'तमसा गूढ्हमग्रे' 'मायिनं तु महेश्वरम्' इत्यादिश्रुते । 'न जानामि' इति ज्ञात्राश्रितत्वेनानुभवस्याभेदमादायोपपन्नत्वाच्चेति भाव ।

(ग टि.) आत्मज्ञानप्रतिबन्धकत्वेनात्माज्ञानत्वाभावेऽप्यात्माऽऽश्रितत्वेनात्माज्ञानत्व स्यादित्याह ॥ आत्मा-ऽऽश्रितेति ॥ आत्माऽऽश्रितज्ञाननिवर्तकत्वेन ज्ञानस्याऽज्ञानत्वमयुक्तमित्याशङ्कते ॥ न च वक्तव्यमिति ॥ व्यावर्तनीयमिति ॥ इदमात्माज्ञान न त्वनात्माज्ञानमिति व्यावृत्तिमत्त्वेन बोधनीयमित्यर्थ । अस्य वाक्यस्य कथमात्मज्ञान स्यादितीत्यन्त्यवाक्येनान्वय । किं चाज्ञानस्याऽऽत्माश्रितत्वेनाऽऽत्मीयत्वमपि नास्ति येन तन्निव-र्तकतया आत्मज्ञानत्व स्यादित्याह ॥ न चेति ॥ किञ्चेति चार्थ । ननु नास्ति ज्ञात्रादिभेद इत्यत आह ॥ वस्तुत इति ॥ अत इति ॥ ज्ञातृनिष्ठत्वेनाज्ञानस्य ज्ञेयाऽऽत्माश्रितत्वेनाऽऽत्माज्ञानत्वाभावात् ज्ञातव्यात्मनैव आत्मज्ञानत्वस्य वाच्यत्वादित्यर्थ. । इति न वक्तव्यमित्यन्वय । अत्र हेतुमाह ॥ ज्ञातव्येति ॥

(वे टि.) ॥ तथापीति ॥ यद्यप्यात्मकर्मत्व विना आत्माज्ञाननिवर्तकत्वमेव न सम्भवतीत्युक्तम् । तथापि विस्मृतदूषणस्य शङ्कयमिति ध्येयम् ॥ निवर्तकतयेति ॥ निवर्तकत्वरूपसम्बन्धेनेत्यर्थ ॥ उक्तमिति ॥ 'सति पुष्कलकारणे तत्कर्मकज्ञानप्रतिबन्धक हि तदज्ञानम्' इत्यनेनाऽऽत्मकर्मकज्ञानप्रतिबन्धकत्वादन्यस्य सम्बन्धस्य दुर्निरूपत्वादित्युक्तमित्यर्थ । नन्वाश्रयाऽऽश्रयिभावसम्बन्धेनाऽऽत्मव्यावर्तितमज्ञानमात्माज्ञानमिति वक्तव्यम् । नचाज्ञानं परमात्माऽऽश्रितम् । मानाभावात् । प्रत्युत 'अहमज्ञ' इति ज्ञात्राश्रितत्वेनैव तदनुभवात् । तथा चोक्तानुपपत्तिरित्या-शङ्क्याऽऽह ॥ न च वक्तव्यमिति ॥ एतच्च स्यादितीत्यनेन सम्बध्यते । ननु ज्ञात्राश्रितत्वेऽप्यज्ञानस्य ज्ञेयाश्रितत्वं सिद्ध्यति । तयोरभेदादित्यत आह ॥ वस्तुत इति ॥ अज्ञानस्येति ॥

आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचर ॥

। तदुक्तेरिति भाव ।

(द्वै यु) ॥ निवर्तकतया सम्बन्धितयेति ॥ निवर्तकत्वरूपसम्बन्धवत्तयेत्यर्थ । तथा च वेदान्तजनि-तविज्ञानविषयत्वस्यात्मन्यभावेऽपि आत्मज्ञानमिति व्यवहारगोचरत्व सर्वसिद्ध तस्य घटत इति भाव । आत्मा-श्रितमिति जीवाश्रितत्वाभिमानेन शङ्कते ॥ न चेति ॥ आत्मना व्यावर्तनीयमिति ॥ वेदान्तजन्यज्ञान-

निवर्त्याज्ञानं शुक्त्यादिज्ञाननिवर्तनीयाज्ञानाद्भिन्नत्वेन ज्ञापनीयमित्यर्थः ॥ न चेति ॥ तथा चेदानीमाश्रयाश्रयिभावे-नैवाज्ञानं प्रति न्यावर्तकत्वं ज्ञानस्य, ततो भवदभिमतं न घटत इत्यर्थः ॥ यादृशतादृशभेदेति ॥ व्यवस्थापितमाह-कानिर्वचनीयभेदेत्यर्थः ॥ ज्ञातव्यपरब्रह्मेति ॥ चिन्मात्रेत्यर्थः ; तदानीं चिन्मात्रस्यैव ज्ञेयत्वात् । सार्वज्ञ्यादि-गुणशालिनो बिम्बभूतब्रह्मपदार्थस्य मिथ्यात्वेन वेदान्तज्ञेयत्वात् । अत एव परत्वम्

(गु. टि) ॥ आत्माज्ञाननिवर्तकतयेति ॥ आत्मकर्मकज्ञानप्रतिबन्धकत्वस्यैव सत्त्वाज्ञानत्वादिति भावः । भवेदेतदेवम्, यदि तत्कर्मकज्ञानप्रतिबन्धकमेवाज्ञानं स्यात् । न चैतदस्ति इत्याह ; आत्माश्रितमिति ॥ ननु आश्रयाश्रयिभावसम्बन्धेन आत्मन्यवर्तितमज्ञानमात्मज्ञाननिवर्त्यमिति वक्तव्यम् ; न चाज्ञानं ज्ञानस्वरूपमात्माऽश्रितम् , मानाभावात् । किन्तु ज्ञात्राश्रितमेव ; 'अहमज्ञः' 'घटमहं न जानामि' इत्याद्यनुभवात् । तथा चोक्तानुपपत्तिरेवेति शङ्कते ॥ न च वक्तव्यमिति ॥ न च ज्ञातृज्ञानयोरात्मनाभेदाज्ज्ञात्राश्रितत्वे ज्ञानस्वरूपात्माऽश्रितत्वस्यैव सिद्धत्वान्नानुपपत्तिरित्यत आह ॥ भेदाभावेऽपीति ॥ भेदाङ्गीकारे हेतुमाह ॥ ज्ञातृज्ञेयभावसिद्धय इति ॥ यादृशतादृशभेदस्यापि तयोरभावे तस्याज्ञातृज्ञेयभावस्यैवानुपपत्तेरिति भावः । इति इत्यस्य न च वक्तव्यमिति पूर्वेण सम्बन्धः ॥ अज्ञानस्येति ॥

आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥

इति तदुक्तेरिति भावः ।

**अज्ञानस्य आत्माऽश्रितत्वाभावोपपादनेन पूर्वोक्तशङ्कानिरासः**

(टी.) तत्राऽऽह

**न ह्यज्ञानस्य घटाश्रयत्वं ब्रह्माश्रयत्वं वाऽस्ति**

**हिशब्दो हेत्वर्थे । वाशब्द उपमायाम् । यथा खलु न घटाज्ञानस्य घटाश्रयत्वं एवमज्ञानत्वाद्ब्रह्माज्ञानस्यापि तदाश्रयत्वमस्ति । अन्यथा घटाज्ञानस्यापि तदाश्रयत्वप्रसङ्गात् । यत एवं, न ब्रह्माज्ञानं तदाश्रयं तस्मान्न तन्निवर्तयदपि ज्ञानं ब्रह्मज्ञानमिति ।**

**ननु घटाज्ञानमेव नास्ति । ज्ञानोत्पत्तेः प्राक्प्रमाणवैकल्यादेव ज्ञानाभावोपपत्तेः । उत्पन्ने तु ज्ञाने तत एव सुतरां अज्ञानकल्पकाभावात् । अतो यदज्ञानं न तद्विषयाश्रितमिति व्याप्तौ कथं घटाज्ञानं दृष्टान्तीक्रियते । कस्य वा घटाऽऽश्रयत्वमापाद्यते । ब्रह्मणि तु स्वयं प्रकाशमानेऽपि तत्स्वरूपा-नवभासस्यानन्यनिमित्तत्वाद्भावरूपमज्ञानं कल्प्यत इति । मैवम् । घटोऽपि यदा अन्यात्मना अवभासते तदा इन्द्रियप्रवृत्तावपि घटत्वाग्रहणस्यानन्यनिमित्तत्वात् तत्राप्यज्ञानस्य परेणाङ्गीकार्यत्वात् । अन्यथा शुक्तिकाज्ञानमपि न स्यात् ।**

(वि टि) उदाहृतश्रुतिनिगमयोस्तमोमायाशब्दयो प्रकृतिपरत्वेन पराभिमताज्ञानपरत्वे मानाभावात् मायिन तमसा गूढमिति शब्दाभ्या मायया आश्रयाश्रयिभावाप्रतीते गूढशब्दस्य छन्नार्थकत्वात् मायिनमित्यस्य सम्बन्धमात्रार्थकत्वाच्च नाज्ञान मुमुक्षुज्ञेयब्रह्माश्रितमित्यभिप्रायेणाह ॥ तत्राहेति ॥ अज्ञानस्य घटाश्रितत्वस्य परैरनङ्गीकारात पक्षान्तरसूचकवाशब्दस्याऽनर्थक्यमाशङ्क्याह ॥ वाशब्द इति ॥ यथा खल्विति ॥ तदयमत्र प्रयोग: । ब्रह्माज्ञान न स्वविषयाश्रित अज्ञानत्वात् घटाज्ञानवदिति । 'न ब्रह्माज्ञानस्यापि तदाश्रयत्वम्' इति मूले विशिष्टसाध्यनिर्देशस्तु पक्षधर्मतावलब्धविशेषाभिप्रायक इति न विरोध ।

ननु ब्रह्माज्ञानमिति यदि ज्ञेयब्रह्माऽऽश्रिताज्ञानमित्यर्थोऽभिमतस्तदा विरोध । यदा तु ब्रह्मविषयकमज्ञानमिति तदा अज्ञानस्य ब्रह्माश्रितत्वाभावेपि तद्विषयकाज्ञाननिवर्तकत्वसम्बन्धेन वेदजनितविज्ञानस्य तज्ज्ञानत्वसम्भवेनाऽऽत्मना दृक्कर्मत्वाभावेन न दृश्यत्वहेतोर्व्यभिचारापत्तिरिति चेन्न । ब्रह्मविषयकाज्ञानमित्येव तदर्थ । न चैवमात्मनो दृग्विषयत्वाभावप्रसङ्ग । 'न जानामि' इतिवत् 'जानामि' इत्यनुभवेन ज्ञानविषयत्वस्यापि दुर्वारत्वात् । यथा चैतत्तथोपपादितमधस्तात् ॥ तन्निवर्तयदपीति ॥ तदज्ञाननिवर्तकत्वेनापीत्यर्थ ।

ननु घटाज्ञानदृष्टान्तेन ब्रह्माज्ञानस्य तदाश्रितत्वनिराकरणमयुक्तम् । घटाज्ञानस्यैवाभावात् । तथा हि, न ह्यज्ञान कुलधर्मतयेष्यते । किं तु प्रसक्तप्रकाशप्रतिबन्धार्थमेव । एवञ्च घटाज्ञानमङ्गीकुर्वन् प्रष्टव्य । घटज्ञानोत्पत्ते प्रावप्रसक्तप्रकाशप्रतिबन्धार्थं तदभ्युपगम्यते ज्ञानोत्पत्त्यनन्तर तत्प्रतिबन्धार्थं वा । नाद्य । घटस्य जडत्वेन स्वत प्रकाशप्रसक्त्यसम्भवेन प्रमाणत एव प्रसक्तिर्वाच्या । एवञ्च प्रमाणप्रवृत्त्यभावदशाया सामग्र्यभावादेव तदप्रकाशोपपत्त्या प्रतिबन्धकाज्ञानकल्पनानुपपत्ते । न द्वितीय । ज्ञानोत्पत्त्यनन्तर तस्य प्रकाशमानत्वेनाज्ञानकल्पकविषयानवभासाभावेनाज्ञानकल्पनस्यैवायोगात् । ब्रह्मणस्तु स्वप्रकाशत्वेन तदभिन्नाऽऽनन्दादिप्रकाशप्रसक्तौ तत्प्रतिबन्धार्थं भावरूपाज्ञानकल्पनमावश्यकमिति शङ्कते ॥ नन्विति ॥ अस्ति घटादीना प्रमाणप्रवृत्त्यधीनैव प्रकाशप्रसक्ति । तथापि तदज्ञान दुर्निरसम् । भ्रमस्थले सत्यामपि प्रमाणप्रवृत्तौ यथावदनवभासस्यानन्यनिमित्तत्वादिति परिहरति ॥ मैवमिति ॥ न च दोषादेव तत्रानवभासो नाज्ञानादिति वाच्यम् । ज्ञानप्रतिबन्धकाज्ञानातिरिक्तदोषस्य त्वया अनभ्युपगमात् । अभ्युपगमे च तेनैव ब्रह्मप्रकाशप्रतिबन्धसम्भवेन तदज्ञानस्याप्यसिद्धिप्रसङ्गात् । शुक्तिरजताद्युपादानतया अज्ञानस्य परेणाङ्गीकाराच्चेति भाव ॥ अन्यथेति ॥ यद्यपि शुक्तिविषयकमप्यज्ञान परेण नाङ्गीक्रियते । जडत्वेन घटतुल्यत्वात् । किन्तु शुक्त्यवच्छिन्नचैतन्यविषयमेव । तथापि 'शास्त्रार्थं न जानामि' इत्यनुभवेन ब्रह्मविषयकाज्ञानवत् 'शुक्तिं न जानामि' इत्यनुभवेन तद्विषयकमप्यज्ञान दुर्वारम् । न च प्रकाशप्रतिबन्धरूपप्रयोजनाभावात् न तद्विषयकाज्ञान स्वीकार्यमिति वाच्यम् । प्रयोजनाभावमात्रेण प्रमाणसिद्धवस्तुन त्यागानर्हत्वादिति भाव ।

(रा टि.) उक्तहेतोरनुकूलतर्कमाह ॥ अन्यथेति ॥ हिशब्दो हेत्वर्थ इत्युक्त व्यनक्ति ॥ यत एवमिति ॥ तत एवेति ॥ ज्ञानस्योत्पन्नत्वादेव । सुतरा नि सन्देहम् । ज्ञानप्रतिबन्धकत्वेनैवाज्ञानस्य कल्प्यत्वात्तस्यैवोत्पत्तौ

(ग.टि.) कल्पकाभाव इति भावः ॥ कल्प्यत इति ॥ तदावरणायेति शेषः । अन्यान्मनेति ॥ वल्मीकमधुलमृत्तिकादयः पार्थिवा इत्यर्थः ॥ शुक्तिकाज्ञानमिति ॥ तत्र हि शुक्तिरूपस्य ग्रहणाभावादेव ज्ञानस्याङ्गीकारादिति भावः ।

(वे.टि.) अज्ञानस्य घटाश्रितत्वस्य परैरप्यनङ्गीकृतत्वात् तस्य त्वन्मूलकत्वान्तत्रस्याऽनर्थकत्वम्, शङ्कयाऽऽह ॥ वाशब्द इति ॥ ननु घटाज्ञानदृष्टान्तेन ब्रह्माज्ञानस्य तदाश्रितत्वनिराकरणमयुक्तम् ; घटाज्ञानस्यैवाभावात् । तथा हि, न ह्यज्ञानं कुलधर्मतयेष्यते । किन्तु प्रकाशप्रतिबन्धार्थमेव । एवञ्च घटे ज्ञानमङ्गीकुर्वन् पृष्टव्यः । घटज्ञानोत्पत्तेः प्राक् प्रसक्तप्रकाशप्रतिबन्धार्थमभ्युपगम्यते । ज्ञानोत्पत्त्यनन्तरं प्रतिबन्धार्थं वा । नाद्यः ; घटस्य जडत्वेन स्वतः प्रकाशप्रसक्त्यभावेन प्रमाणेनैव तत्प्रसक्तिर्वाच्या ; एवञ्च प्रमाणप्रवृत्त्यभावदशायां तत्प्रसक्त्यभावादेव तदप्रकाशोपपत्त्या प्रतिबन्धकाज्ञानकल्पनानुपपत्तेः । न द्वितीयः, ज्ञानोत्पत्त्यनन्तरं तस्य प्रकाशमानत्वेन अज्ञानकल्पकविषयानवभासमानत्वेन ज्ञानकल्पनस्यैवायोगात् । ब्रह्म तु स्वप्रकाशत्वेन तदभिन्नाऽऽनन्दादिप्रकाशप्रसक्तौ तत्प्रतिबन्धार्थं भावरूपाज्ञानकल्पनमावश्यकमिति शङ्कते ॥ नन्विति ॥ तत एवेति ॥ ज्ञानस्योत्पन्नत्वादेवेत्यर्थः । सुतरां घटाज्ञानं नास्तीति सम्बन्धः । सास्तु घटादीनां प्रकाशप्रतिबन्धार्थमज्ञानम् । तदाकारप्रतिभासरूपविक्षेपार्थं तु भविष्यति । तस्यामपि प्रमाणप्रसक्तौ यथावदनवभासस्यानन्यनिमित्तत्वादित्याशयेन परिहरति ॥ मैवमिति ॥ ननु घटत्वाग्रहणस्य दोषादेवोपपत्तेर्नाज्ञानं तत्र कल्प्यत इत्यत आह ॥ अन्यथेति ॥ यद्यपि शुक्तिविषयकमज्ञानं परेण नाभ्युपगम्यते । जडत्वेन घटतुल्यत्वात् । किं तु शुक्त्यवच्छिन्नचैतन्यविषयमेव । तथापि 'शास्त्रार्थं न जानामि' इत्यनुभवेन ब्रह्मविषयकाज्ञानवत् 'शुक्तिं न जानामि, घटं न जानामि' इत्यनुभवेन तद्विषयमप्यज्ञानं दुर्वारम् । न चाऽऽवरणादिप्रयोजनाभावान्न तत्राज्ञानमिति वाच्यम् । प्रयोजनाभावे प्रमाणसिद्धवस्तुनस्त्यागायोगादिति भावः । उपलक्षणञ्चैतत् । ज्ञानप्रतिबन्धकाज्ञानातिरेकेण दोषस्य त्वया अनभ्युपगमात् । अभ्युपगमे च तेनैव ब्रह्मप्रकाशप्रतिबन्धसम्भवेन तदज्ञानस्याप्यसिद्धिप्रसङ्गादित्यपि द्रष्टव्यम् ।

(द्वै.बु.) हिशब्दोक्तहेतुसाध्यप्रदर्शनपूर्वकं विवृणोति ॥ यत इत्यादिना ॥ प्रमाणप्रयोजनयोरभावाज्जडे [1]अज्ञानं नास्तीति परमतम् । तत्र प्रमाणाभावः स्फुटः । घटं न जानामीत्यादिप्रतीतेर्वक्ष्यमाणरीत्या तज्ज्ञानाभावविषयकत्वेन घटाद्यवच्छिन्नचिद्विषयत्वेन वोपपत्तेः । अतः प्रयोजनाभावमेवोपपादयन्नाशङ्कते ॥ नन्विति ॥ न ह्यज्ञानं व्यसनतयेष्यते । किन्तु प्रकाशे सत्यपि तत्कार्याभावो यत्रानुभवसिद्धः तन्निर्वाहाय तत्प्रकाशकार्यप्रतिबन्धकतया । घटादौ ज्ञानोत्पत्तेः प्राक् अप्रकाशस्वरूपे तस्मिन् प्रकाशप्रसक्त्यभावेन तत्कार्यव्यवहारप्रतिबन्धार्थं तत्कल्पने बीजाभावात् । ज्ञानोत्पत्त्यनन्तरं तद्व्यवहारादेः सत्त्वेन तत्प्रतिबन्धस्यैवाभावात् । चैतन्यस्य स्वप्रकाशत्वात्तदभिन्नापरिच्छिन्नानन्दादेरिदानीं स्फुरणवारणाय तत्राज्ञानं भावरूपमवश्यं कल्पनीयमिति प्रघट्टकार्थः । यद्यपि तमः साक्षान्मूलाविद्याजन्यमिति परेषां सिद्धान्तः । तथा सति तमोरूपकार्येण

[1] विषयसप्तमी ।

(टी.थु) कारणमज्ञानं गृहीतुं शक्यम्। तथापि तस्याप्रामाणिकत्वाभिप्रायेण वाऽवस्थाज्ञानानामेवेदानीं दृष्टान्ततया प्रसक्तत्वात् तदभिप्रायेण वा नम इवेति व्याख्यानम्।

गु टि अज्ञानस्य घटाश्रितत्वस्य परस्यानङ्गीकारात्पक्षान्तरसूचकवाशब्दानुपपत्तिरित्यतस्तं व्याचष्टे ॥ वाशब्द उपमायामिति ॥ ननु घटाज्ञानदृष्टान्तेन ब्रह्माज्ञानस्य तदाश्रितत्वनिराकरणमयुक्तम्। घटाज्ञानस्यैव अभावात्। तथा हि, घटज्ञानं तत्ते प्राक्प्रसक्तप्रकाशप्रतिबन्धार्थं वा अभ्युपेयं ज्ञानोत्पत्तिप्रतिबन्धार्थं वा। नाद्य। घटस्य जडत्वेन स्वतः प्रकाशप्रसक्त्यसम्भवेन प्रमाणत एव तत्प्रसक्तिर्वाच्या। एवञ्च प्रमाणप्रवृत्त्यभावदशायां प्रमाणाभावादेव तदप्रकाशोपपत्त्या प्रतिबन्धकाज्ञानकल्पनस्यैव वैयर्थ्यात्। न द्वितीय। ज्ञानोत्पत्त्यनन्तरं घटस्य प्रकाशमानत्वेन अज्ञानकल्पकविषयानवभासस्यैवाभावेन तत्कल्पनवैयर्थ्यात्। न चैवं ब्रह्मण्यप्यज्ञानस्य नाङ्गीकर्तव्यत्वप्रसङ्ग। तत्कल्पकभावाभावाभ्यां विशेषेण अविशेषासिद्ध्या तदप्रसङ्गादित्याशयेन शङ्कते ॥ नन्विति ॥ तत एवेति ॥ ज्ञानस्योत्पन्नत्वादेवेत्यर्थ। सुतरां घटाज्ञानं नास्तीति सम्बन्ध। माऽस्तु घटादीनां प्राप्तप्रकाशप्रतिबन्धार्थमज्ञानम्। अतदाकारप्रतिभासरूपविक्षेपार्थं तु भविष्यति। सत्यामपि प्रमाणप्रसक्तौ यथावदनवभासस्यानन्यनिमित्तत्वादित्याशयेन परिहरति ॥ मैवमिति ॥ ननु घटादेरतदाकारप्रतिभासस्य दोषादेवोपपत्तेर्न तस्यानन्यनिमित्तत्वमित्यत आह ॥ अन्यथेति ॥ यद्यपि परेण तत्राज्ञानं नाङ्गीक्रियत इति नेदमनिष्टं तथापि शास्त्रार्थं न जानामीत्यनुभवबलाद्ब्रह्माज्ञानवत् शुक्तिं न जानामीत्यनुभवबलायातस्य शुक्त्यज्ञानस्यानङ्गीकारानुपपत्ते.। न चावरणरूपप्रयोजनाभावो दोष.। प्रयोजनाभावे प्रमाणसिद्धवस्तुनस्त्यागायोगात्। अन्यथा कटकशौक्ल्यस्यापि प्रयोजनाभावयुक्त्या त्यागप्रसङ्गादिति भाव। उपलक्षणञ्चैतत्। ज्ञानप्रतिबन्धकाज्ञानातिरिक्तदोषस्य त्वया अनभ्युपगमात्। अभ्युपगमे च तेनैव ब्रह्मप्रकाशप्रतिबन्धसम्भवेन तदज्ञानस्याप्यसिद्धिप्रसङ्गादित्यपि द्रष्टव्यम्।

### अज्ञानस्य ज्ञातृपुरुषगतत्वसमर्थनम्

(टी) यदि तर्हि न विषयाश्रितमज्ञानम्। क्व तदाश्रितमित्यत आह

## पुङ्गतमेव हि तमः

पुङ्गतं ज्ञातृपुरुषगतम्। तम इव तमोऽज्ञानम्। ज्ञानप्रतिबन्धकत्वात्। तमोग्रहणमुत्तरत्रोपयोक्ष्यते। प्रमाणेन हि विषयाश्रितत्वे निराकृते परिशेषतो ज्ञातृगतत्वं सिद्ध्यति। हिशब्दस्तु 'अहमज्ञ, घटमहं न जानामि' इत्याद्यमनुभवमप्यत्र प्रमाणं दर्शयति। प्रमाणान्तरञ्चाह

## ज्ञानेन निवर्तते

तम इति वर्तते। यथा खलु तमः प्रकाशसमानाश्रयमेव तेन निवर्तते। न व्याश्रयम्। तथा अज्ञानमपि ज्ञानेन निवर्तत इति ज्ञानसमानाश्रयमेव भवितुं युक्तम्। ज्ञानाश्रयश्च ज्ञातैवेत्यज्ञानस्यापि स एवाश्रयो युक्तः।

(वि. टि.) ननु यद्यज्ञानं न विषयाश्रितं तर्हि निराश्रयमेव स्यात् । न च ज्ञात्राश्रितं तत् । ... 'मामन्यञ्च न जानामि' इत्यत्र न विषयत्वं तुच्छत्वादिति पृच्छति ॥ यदि नहीति ॥ ननु तुच्छत्वस्य मुमुक्षुज्ञेयत्व-ब्रह्मसाक्षात्कारत्वं तु 'तुच्छमेव हि तम' इत्युक्ते मुमुक्षुज्ञेयब्रह्मणो नाज्ञानाश्रयत्वव्यावृत्तिरित्यत आह ॥ ज्ञातृ-पुरुषगतमिति ॥ समारोपितमित्यर्थः । अज्ञानस्य पुरुषत्वे तत्त्वे तमस्त्वदृष्टान्तत्वाभिधानमसङ्गतमित्यत आह ॥ तम इवेति ॥ तमःशब्दस्य ज्ञाने प्रवृत्तौ गुणयोगं दर्शयति ॥ ज्ञानप्रतिबन्धकत्वादिति ॥ स्वार्थे शब्दे अवाचकपदप्रयोगो न न्याय्यः । प्रतिपत्तिगौरवादित्यत आह ॥ तमोग्रहणमिति ॥ 'तुच्छमेव हि तम' इत्येतदुपपादयति ॥ प्रमाणेन हीति ॥ 'विमतं अज्ञानं न विषयाऽश्रितं अज्ञानत्वात् घटाज्ञानवत्' इति प्रमाणेन हीत्यर्थः ॥ परिशेषत इति ॥ विमतमज्ञानं ज्ञात्राश्रितं तदन्यानाश्रितत्वे सति आश्रितत्वादिति एवकारसूचितपरिशेषादित्यर्थः । अज्ञानाऽऽश्रयचिन्तायां ज्ञाननिवर्त्यत्वप्रतिपादनस्यायुक्तत्वमाशङ्क्य वारयति ॥ प्रमाणान्तरञ्चेति ॥ यथा खल्विति ॥ विमतमज्ञानं ज्ञानसमानाऽऽश्रयं तन्निवर्त्यत्वात् तमोवत् इति सामान्यव्याप्तिमूलकप्रयोगो द्रष्टव्यः ।

(ग. टि.) ॥ उत्तरत्रेति ॥ उत्तरवाक्ये दृष्टान्तत्वेनेति भावः ॥ प्रमाणान्तरञ्चेति ॥ अज्ञानं ज्ञान-समानाश्रयं सदेव निवर्तते । ज्ञाननिवर्त्यत्वात् । यद्यन्निवर्त्यं तत्तत्समानाश्रयमेव सन्निवर्तते । यथा प्रकाशनिवर्त्यं तम इत्येवं प्रमाणान्तरमित्यर्थः ।

(वे. टि.) ज्ञातव्यपरब्रह्माश्रितत्वेऽपि पुरुषगतत्वमक्षतमित्यत उक्तम् ॥ ज्ञातृपुरुषगतमिति ॥ हिशब्दाभि-प्रायमाह ॥ परिशेषत इति ॥ विमतमज्ञानं ज्ञात्राश्रितं तदन्यानाश्रितत्वे सत्याश्रितत्वादिति एवकारसूचित-परिशेषादित्यप्याहुः । प्रकारान्तरेणापि तदर्थमाह ॥ हिशब्दस्त्विति ॥ अत एवोक्तम् अनुभवमपीति । अज्ञानस्याश्रयचिन्तायां ज्ञाननिवर्त्यत्वप्रतिपादनस्यायुक्तत्वमाशङ्क्य वारयति ॥ प्रमाणान्तरञ्चेति ॥ यथा खल्विति ॥ अनेन अज्ञानं ज्ञानसमानाश्रयं ज्ञाननिवर्त्यत्वात् यद्येन निवर्तते तत्तत्समानाश्रयं यथा तमः प्रकाशेनेति सामान्यव्याप्तिमूलकप्रयोग उक्तो भवति । नन्वज्ञानस्य ज्ञानसमानाश्रयत्वसिद्धावपि न पुरुषत्वसिद्धिः । ज्ञानस्यापि विषयगतत्वे विषयगताज्ञानस्य तत्समानाश्रयत्वोपपत्त्याऽर्थान्तरत्वादित्यत आह ॥ ज्ञानाश्रयत्वेति ॥

(द्वै. बु.) ॥ उत्तरत्रेति ॥ उत्तरमूलाभिमतेऽर्थे दृष्टान्ततयोपयोक्ष्यत इत्यर्थः ।

(गु. टि.) ज्ञातव्यपरब्रह्माऽश्रितत्वेऽपि पुरुषत्वानपायात्तद्भ्रान्तिनिरासाय पुरुषगतमित्येतद्व्याचष्टे ॥ ज्ञातृ-पुरुषगतमिति ॥ परिशेषत इति ॥ विमतमज्ञानं ज्ञातृपुरुषाऽऽश्रितं तदन्यानाश्रयत्वे सति साश्रितत्वादिति एवकार-सूचितपरिशेषादित्यर्थः ॥ यथा खल्विति ॥ अनेन अज्ञानं ज्ञानसमानाऽऽश्रयं ज्ञाननिवर्त्यत्वात् । यद्येन निवर्तते तत्तत्समानाऽऽश्रयं यथा तमः प्रकाशेन इति सामान्यव्याप्तिमूलकमनुमानमुक्तं भवति । नन्वज्ञानस्य ज्ञानसमाना-ऽऽश्रयत्वसिद्धावपि न पुरुषगतत्वसिद्धिः । ज्ञानस्यापि ज्ञातव्यगतत्वेन तद्गतस्याज्ञानस्य तत्समानाऽऽश्रयत्वोपपत्त्या अर्थान्तरत्वादित्यत आह ॥ ज्ञानाश्रयत्वेति ॥

अज्ञानस्य विषयाश्रितत्वाभावसाधकानुमानस्य सत्प्रतिपक्षत्वशङ्का तन्निरासश्च

(टी०) ननु यथा तमो विषयसम्बद्धमेव सत् ज्ञानप्रतिबन्धकमुपलभ्यते। प्रकाशस्थेनान्धकारस्थितघटस्यानुपलभ्यमानत्वात्। अन्धकारस्थेनापि प्रकाशस्थितस्योपलब्धेः। तथा ज्ञानप्रतिबन्धकेन अज्ञानेनापि विषयाश्रितेन भवितुं युक्तमिति विषयाश्रितत्वेऽप्यज्ञानस्य प्रमाणमस्ति।

न चैवमचेतनाश्रयाज्ञानमङ्गीकुर्वतो मायावादिनोऽपसिद्धान्तापत्तिः। शुक्त्याद्यवच्छिन्नचैतन्याऽश्रयतोऽङ्गीकरणात्।

अवश्यञ्चैतदेवम्। शुक्त्याद्यवच्छिन्नचैतन्याश्रयं खल्वज्ञानं तद्रूपमाच्छाद्य रजतादिरूपान्तरोपादानं भवितुं युक्तम्।

एवं तर्हि ज्ञानस्यापि प्रकाशवद्विषयसन्निकर्षेणैवाज्ञाननिवर्तकत्वप्रसङ्ग इति चेत्। नेदमनिष्टम्। प्रकाशस्वभावं सावयवमन्तःकरणमदृष्टेन्द्रियादिसहकृतं ध्रुवादिविषयपर्यन्तं दीर्घप्रभाकारेण परिणमत इत्यङ्गीकारात्। अत एव न ह्यज्ञानस्य घटाश्रयत्वमिति दृष्टान्तोऽपि प्रत्यूढः। घटाज्ञानस्यापि तदाऽश्रयत्वप्रसङ्गश्चेति।

तदिदमसत्। अनुमानस्य तर्कापहतत्वात्। तथा हि, यदेतद्घटे पाषाणत्वाद्यारोपनिमित्तमज्ञानं तद्घटयाथात्म्यज्ञानेन निवर्तते न वा। नेति पक्षे भ्रान्तेरनुच्छेदप्रसङ्गः। प्रथमपक्षेऽतिप्रसङ्गमाह

विषयाऽश्रयं चेदज्ञानं निवर्तते तर्ह्येकेन ज्ञातस्य घटस्यान्यैरज्ञातत्वं न स्यात्

यद्यज्ञानं घटादिविषयाश्रयं तद्याथात्म्यज्ञानेन निवर्तत इत्यङ्गीक्रियते तर्ह्येकस्मिन्घटे बहूनां पाषाणत्वादिना विप्रतिपन्नानामेकेन ज्ञातस्य घटस्यान्यैरज्ञातत्वं न स्यात्। तज्ज्ञानेनाविद्याया निवृत्तत्वात्। इन्द्रियसन्निकर्षादिसामग्रीसद्भावाच्च। न ह्यालोकेन तमसि निवृत्ते समनस्केन्द्रियसन्निकृष्टोऽपि घटः केनचिद्दृश्यते केनचिन्नेति युज्यते।

अज्ञानबहुत्वान्नैवमिति चेत् तर्ह्येकस्मिन्नज्ञाने निवृत्तेऽप्यज्ञानान्तरसद्भावान्न केनापि घटो विज्ञायेत। प्रतिपुरुषनियतानि तानीति चेन्न। अदृष्टकल्पनाप्रसङ्गात्। अज्ञानस्य विषयाश्रयत्वादेवं कल्पनेऽन्योन्याश्रयता स्यात्। विषयाच्छादनं तु नयनपटलादिवत् प्रतिपुरुषमाश्रितैरेवाज्ञानैर्युक्तम्। आरोप्यासत्त्वस्य प्रतिपादितत्वात् न तदुपादानापेक्षास्ति। तदेवं न ज्ञातव्यपरब्रह्माश्रयमज्ञानं युक्तमिति नात्माऽश्रयाज्ञाननिवर्तकत्वेन वेदान्तवाक्यजनितविज्ञानस्यात्मज्ञानत्वसिद्धिः।

(वि० टि०) विमतमज्ञानं न विषयाऽश्रितं ज्ञानप्रतिबन्धकत्वात् तमोवत् इति अज्ञानस्य विषयाश्रितत्वाभावसाधकानुमानस्य प्रतिपक्षं शङ्कते॥ नन्विति॥ युक्तमिति॥ विक्षेपस्यावरणपूर्वकत्वादावरणस्य चाप्रसक्तप्रकाशे जडभूतशुक्त्यादावसम्भवात् तदवच्छिन्नचैतन्यावरणपूर्वक एव रजतादिविक्षेपो वाच्यः। न च चैतन्याऽ-

(वि. टि.) श्रितत्वं विना तदावरकत्वमुपपद्यते । विषयावरकत्वस्य कार्यादर्शनाद्धि भाव ॥ अत एवेति ॥ अज्ञानस्य घटाद्यवच्छिन्नचैतन्याश्रितत्वाङ्गीकारादेवेत्यर्थः ॥ तदाश्रयत्वप्रसङ्गश्चेति ॥ प्रत्यूढ इत्यनुवर्तते ॥ ज्ञानस्येति ॥ यथावज्ज्ञानस्येत्यर्थः । ननु ज्ञानप्रतिबन्धकाविद्यानिवृत्तिमात्रेण कथं ज्ञानोत्पादनम् । प्रतिबन्धकाभावमात्रेण कार्यादर्शनादित्यत आह ॥ इन्द्रियसन्निकर्षादीति ॥ गुरुमिममिव शङ्कते ॥ अज्ञानबहुत्वादिति ॥ यावन्त्यज्ञानानि तावन्ति ज्ञानानि तन्निवर्तकानीति स्वीकारादेकेन ज्ञानेनैकस्याज्ञानस्य नाशेऽप्यज्ञानान्तरसत्त्वात्कथंचिदप्यज्ञानत्वमपि युज्यत इति यथाश्रुतं दूषयति ॥ नहीति ॥ आशयमुद्घाटयति ॥ प्रतिपुरुषनियतानीति ॥ तथा च यदीयमज्ञानं तस्य तदीयज्ञानेनैव निवृत्तिरिति नोक्तातिप्रसङ्ग इति भाव ॥ अदृष्टेति ॥ विषयाश्रितावरकस्य प्रतिपुरुषनियत्वादर्शनात् । न चान्यत्रादर्शनेऽपि ज्ञानेनाज्ञाननिवृत्तिस्थले स्वीकार्यम् । 'अत्र ममैवाज्ञानं नान्यस्य' इत्याद्यनुभवादिति वाच्यम् । विषयाश्रितत्वे उक्तानुभवस्यैवाभावप्रसङ्गादिति भाव ॥ अन्योन्याश्रयेणेति ॥ विषयाऽश्रितत्वे सिद्धे अतिप्रसङ्गनिरासाय प्रतिपुरुषनियतत्वसिद्धिः । प्रतिपुरुषनियतत्वसिद्धौ चातिप्रसङ्गाभावेन विषयाऽश्रितत्वसिद्धिः इत्यन्योन्याश्रयेणेत्यर्थः । नन्वावरकत्वान्यथानुपपत्त्या विषयाश्रितत्वं सिद्ध्यतीत्याशङ्क्याह ॥ विषयाच्छादनन्त्विति ॥ ननु शुक्त्यादौ रजतादिविक्षेपान्यथानुपपत्त्या तदुपादानभूताज्ञानस्य विषयाश्रितत्वसिद्धिरित्यत आह ॥ आरोप्येति ॥ अज्ञानस्य ब्रह्माश्रितत्वाभावमुपसंहरंस्तदुपपादनस्य फलमाह ॥ तदेवमिति ॥

(रा. टि.) ॥ प्रमाणमस्तीति ॥ प्रकाशनिवर्त्यतमोवद्विरोधिज्ञाननिवर्त्यत्वरूपं प्रमाणमित्यर्थः ॥ शुक्त्याद्यवच्छिन्नेति ॥ चैतन्यमपरिच्छिन्नमतः सर्वपदार्थाधिष्ठानतया वर्तत इति शुक्तिरज्ज्वादिवृत्तिभिरवच्छिन्नं तदाक्रान्तमस्तीति तदाश्रितत्वाङ्गीकारादित्यर्थः । तस्योपयोगमाह ॥ अवश्यञ्चेति ॥ तद्रूपमिति ॥ शुक्तिरज्ज्वादिरूपमित्यर्थः ॥ नेदमिति ॥ इदमापादनमित्यर्थः । बहिर्निर्गमे हेतुं प्रकाशस्वभावमिति । परिणामे हेतुं सावयवमिति ॥ इन्द्रियादीति ॥ सन्निकर्षदेशकालादिगादिपदार्थः । यथा तटाकोदकं छिद्रान्निर्गत्य कुल्याद्वारा केदारान्प्रविश्य चतुष्कोणाद्याकारं भवति तथाऽन्तःकरणमपि चक्षुरादिगोलकाद्बहिर्निर्गत्य रश्मिद्वारा ध्रुवादिविषयपर्यन्तं दीर्घप्रभाकारेण परिणतं सत् विषयो यदाकारस्तदाकारतया तं सर्वतोऽभिव्याप्य परिणमते । सेयमन्तःकरणवृत्तिरित्युच्यते । [1]तदा तदवच्छिन्नचैतन्यगताज्ञाननिवृत्तेरित्यर्थः ॥ अत एवेति ॥ अज्ञानस्य घटादिविषयावच्छिन्नाश्रयत्वाङ्गीकारादेवेत्यर्थः ॥ प्रसङ्गश्चेति ॥ 'अन्यथा [2]घटाकारस्यापि' इत्यादिना प्रागुक्तप्रसङ्गश्चात एव प्रत्यूढ इत्यर्थः ॥ तदिदमिति ॥ विषयावच्छिन्नचैतन्याऽश्रितमज्ञानं, तद् विषयसन्निकृष्टज्ञानेन निवर्तत इत्येतदुभयमित्यर्थः ॥ अनुमानस्येति ॥ अज्ञानं विषयाऽश्रितं ज्ञानरूपप्रकाशनिवर्त्यत्वादालोकरूपप्रकाशनिवर्त्यतमोवदिति 'ननु यथा' इत्यादिना प्रागभिमतानुमानस्येत्यर्थः । सामग्र्यभावाद्युक्तमज्ञातत्वमित्यत आह ॥ इन्द्रियेति ॥ सामग्रीमतामप्यपूर्ववस्तुस्वरूपं न ज्ञायते । तत्र स्यादित्यर्थः ॥ अन्योन्याऽश्रयतेति ॥ सिद्धे च विषयाश्रयत्वे ज्ञातत्वाज्ञातत्वनिर्वाहकप्रतिपुरुषनियताज्ञानकल्पनम् । सिद्धे च तस्मिन्बाधकाभावाद्विषयाऽश्रयत्वकल्पनमित्यन्यो-

---

[1] तथा इति पाठेन भाव्यमिति भाति ।

[2] घटाज्ञानस्यापि इति पाठेन भाव्यमिति भाति ।

(गा टि) न्याऽश्रयनेत्यर्थ । विषयस्य सर्वैरज्ञातत्वान्यथानुपपत्त्या किञ्चिद्विषयाच्छादनं कल्पयता विषयाऽश्रितमज्ञानमवश्य मुपेयमित्यत आह ॥ विपयेति ॥ आरोप्योपादानतया कल्प्यमज्ञानमित्युक्तमित्यत आह ॥ आरोप्येति ॥ 'मिथ्याशब्दोऽनिर्वचनीय वदति' इत्येतद्व्याख्यानावसरे उपपादितत्वादित्यर्थ ।

(वे टि) अज्ञानस्य विषयाश्रितत्वाभावसाधकानुमानस्य प्रतिपक्षमाशङ्कते ॥ नन्विति ॥ अज्ञान विषयाश्रित ज्ञानप्रतिबन्धकत्वात् । तमोवदिति प्रयोगोऽत्राभिप्रेत । विषयसम्बद्धस्य तमसो ज्ञानप्रतिबन्धकत्वमुपपादयति ॥ प्रकाशस्थेनेति ॥ ननु पुरुषसम्बद्धस्यापि तमसो ज्ञानप्रतिबन्धकत्वमुपलब्धमित्यज्ञानमपि पुरुषसम्बद्ध किं न स्यादित्यत आह ॥ अन्धकारस्थेनापीति ॥ तद्रूपमाच्छाद्येति ॥ अज्ञानस्य ज्ञातृगतत्वे व्यधिकरणत्वेन विषयाच्छादनासम्भवात् । रजताद्युपादानतासम्भवाच्चेति भाव ।

केचित्तु 'विक्षेपस्यावरणपूर्वकत्वादावरणस्याप्रसक्तप्रकाशे जडभूतशुक्त्यादावसम्भवात्तदवच्छिन्नचैतन्यावरणपूर्वक एव रजतादिविक्षेपो वाच्य । न च चैतन्याश्रितत्व विना तदावरकत्वमुपपद्यते विषयावरकान्धकारादौ तथा दर्शनादिति भाव' इत्याहु ॥ प्रकाशस्वभावमिति ॥ यथा तटाकोदकं कुल्यात्मना छिद्रान्निर्गत्य केदारान् प्रविश्य तद्वदेव चतुष्कोणत्वाद्याकार भवति तथेत्यर्थ । नन्वन्त करणरूपमनसो निरवयवत्वात्कथं तस्य बहिर्निसरणमित्यत आह ॥ सावयवमिति ॥ ननु तस्य द्रव्यान्तरत्वात्कथ दीर्घप्रभाकारेण परिणाम इत्यत आह ॥ प्रकाशस्वभावमिति ॥ नन्वेवमन्त करणस्य बहिर्निसरणाङ्गीकारे व्यवहितपदार्थज्ञानमपि स्यादित्यत उक्तम् ॥ अदृष्टेन्द्रियादिसहकृतमिति ॥ तदनन्तरमिन्द्रियादिद्वारा बहिर्निर्गतमित्यपि ग्राह्यम् । तेनान्त पदार्थस्य कथ बाह्यविषयाकारेण परिणाम इति शङ्कानवकाश । ननु नानेनानुमानेनाज्ञानस्य विषयाश्रितत्वसिद्धि । अज्ञान न विषयाश्रितमज्ञानत्वात् । घटाज्ञानवत् इति प्रागुक्तानुमानविरोधादित्यत आह ॥ अत एवेति ॥ यतः शुक्त्याद्यज्ञानस्य तदवच्छिन्नचैतन्याश्रितत्वमङ्गीक्रियते । अतो घटाज्ञानस्यापि तदवच्छिन्नचैतन्याश्रितत्वाद्दृष्टान्तस्य साध्यविकलत्वादिति भाव ॥ तदाश्रयत्वप्रसङ्गश्चेति ॥ प्रत्यूढ इति सम्बन्ध । इष्टापत्तेरिति भाव । तथा चानुकूलतर्काभावेनाप्रयोजक पूर्वोक्तानुमानमिति तात्पर्यम् ॥ ज्ञातस्येति ॥ यथावज्ज्ञातस्येत्यर्थ । ननु ज्ञानप्रतिबन्धकाविद्यानिवृत्तिमात्रेण कथ ज्ञानापादनम् । प्रतिबन्धकाभावमात्रेण कार्यादर्शनादित्यत आह ॥ इन्द्रियसन्निकर्षादीति ॥ अन्यथा पाषाणत्वाद्यारोपोपि न स्यादिति भाव ॥ न केनापीति ॥ यथा आच्छादकबहुजवनिकासद्भावे तत्रैकजवनिकापसरणे तदन्तस्थपदार्थानुपलब्धिस्तथेत्यर्थं ॥ प्रतिपुरुषेति ॥ तथा चैकज्ञानेन तदज्ञाननिवृत्तावप्यन्येषामज्ञानसत्त्वादन्यैरज्ञातत्व घटस्योपपन्नमिति भाव ॥ अदृष्टेति ॥ न हि प्रतिपुरुषनियतं तमोऽस्ति । येन तद्वदत्रापि कल्प्येतेति भाव । न चान्यत्रादर्शनेप्यज्ञाने तत्स्वीकार्यम् । 'अत्र ममैवाज्ञानं नान्यस्य' इत्याद्यनुभवादिति वाच्यम् । विषयाश्रितत्वे उक्तानुभवस्यैवाभावप्रसङ्गादिति भाव । ननूक्तप्रमाणेनाज्ञानस्य विषयाश्रितत्वे सिद्धे तदन्यथानुपपत्त्या अज्ञानस्य प्रतिपुरुषनियतत्व कल्प्यत इति चेत् तर्ह्यज्ञानस्य विषयाऽश्रितत्वसिद्धौ तदन्यथानुपपत्त्या तस्य प्रतिपुरुषनियतत्वसिद्धि । तत्सिद्धौ च तर्कपराहत्यभावेनानुमानाद्विषयाऽश्रि-

(द्वै, घु) विशिष्टविषयाधिष्ठानचैतन्यमेव फलमित्युच्यते। वृत्त्यवच्छिन्नचैतन्यतादात्म्येन भग्नावरणा चित् ज्ञान-मित्युच्यत इत्यपि केचित्।

वृत्तौ ज्ञायतेऽनयेति करणव्युत्पत्त्या ज्ञानपद प्रवर्तते। वृत्तीना तु जडेषु आकाराख्यविषयता। न तु तादात्म्यरूपा। सा च चैतन्य एव। पूर्णानन्दावरकाज्ञानाभिभावकवृत्ते पूर्णानन्दे तादात्म्यरूपविषयताया क्लृप्तत्वात्। जडेष्वाकाराख्यविषयतानङ्गीकारे रूपाद्याकारवृत्तिसंश्लेषस्य रसादावपि सत्त्वात्तद्भानापत्ते तादृशा-काराख्यविषयता अङ्गीकरणीया। तन्मात्राङ्गीकारे परोक्षवृत्त्याऽपि रूपादिभानापत्ते सश्लेषाङ्गीकारोपि। अत्र जीवचैतन्य सर्वतादात्म्यापन्नत्वेन सर्वगता याऽविद्या [1]तत्प्रतिबिम्बरूप भूतं तदुपहितरूप वा। उभयथाप्यविद्या-कृतपरिच्छेदराहित्यात्सर्वगतम्।

तत्रापि जीवो जगदुपादानमनुपादानं चेति पक्षद्वयम्। तत्र जीवस्य जगदुपादानत्वपक्षे घटादिविषयै. सह तत्प्रकाशकजीवचैतन्यस्य तादात्म्याख्योपरागस्य सर्वदा सत्त्वात्सर्वदा तद्भानवारणाय घटाद्यवच्छेदेनावृतत्व मनआद्यवच्छेदेनानावृतत्वम्। अत एव मनस्तद्गतसुखादे स्वसत्ताकाले नियमेन भान मन परिणामभूत-धर्मादेर्मनोवच्छिन्नब्रह्मचैतन्यादे आवृतत्व स्वीक्रियते। एतन्मते आवरणभङ्गार्थमेव वृत्ति। जीवस्य जगदनुपा-दानत्वे स्वप्रतिबिम्बाश्रयाविद्यासम्बन्धिन्वरूपसम्बन्धस्य सर्वत्र सर्वदा सत्त्वात्सर्वदा भानापत्तेर्वारणाय तत्सम्बन्धस्य भासकत्वाप्रयोजकत्वात् घटादिभानार्थमसङ्गस्य तस्योपरागार्था वृत्ति। एतन्मते स्वप्रतिबिम्बाधारवृत्तिविषयत्वमेव घटादौ भासकम्। अन्त करणसुखदु खादीना स्वच्छत्वेन तत्र जीवचैतन्यस्य प्रतिबिम्बनात् स्वप्रतिबिम्बाधार-त्वमेव मुख्यं भासकम्। [2]सर्वदाऽस्तीति सर्वदा तद्भानम्। मनस्त्वसुखत्वादीना चित्प्रतिबिम्बनौपयिक स्वच्छत्व स्वीक्रियते। सर्वदा तद्भानस्यानुभवसिद्धत्वात्। स्वप्रतिबिम्बाधारत्ववत्तदाश्रयतादात्म्यादेरपि भासकत्वाभ्युपग-माद्वा मनस्त्वादीना भानोपपत्ति। न चैव मनआदितादात्म्यवद्धर्मब्रह्मादीना भानापत्ति। तेषामावृतत्वाभ्युपग-मात्। ब्रह्म न जानामीत्यनुभवबलेन पक्षद्वयेऽपि तत्रावरणस्यावश्यकत्वात्। एव च घटादिबहिर्विषये उपरा-गार्था। ब्रह्मणि त्वावरणभङ्गार्था वृत्ति। एतन्मते अधिष्ठानभूतब्रह्मचैतन्ये अज्ञानरूपावरणस्य घटाद्यवच्छेदे-नानङ्गीकारे प्रामाण्यशरीरनिविष्टाज्ञातज्ञापकत्व चक्षुरादीना न स्यात्। तन्निवृत्त्यनङ्गीकारे आव्रियमाणत्वेन विषयप्रकाशानुपपत्ति। अत उपरागपक्षेप्यावरणभङ्ग आवश्यक। न च ब्रह्मावरणाज्ञानभङ्गे तदानीं मोक्षप्रसङ्गः। विषयचैतन्यसम्बन्धस्य तदानीमज्ञानविषयतानवच्छेदकत्वाङ्गीकारेणैव तदुपपत्ते। धर्मादौ तु गुरुत्वादाविवापरो-क्षाख्यवृत्तिनिरूपिताकाराख्यविषयताया अभावान्न तत्रावरणनिवृत्ति। अतो न तद्भानम्। किन्तु परोक्षवृत्त्या सत्त्वावरणाज्ञाननिवृत्तिमात्रेण तत्रास्तीति व्यवहार। ब्रह्मणस्तु 'यत्साक्षादपरोक्षाद्ब्रह्म' इति श्रुतेस्तस्यापरोक्ष [3]स्वभावात्तद्विषयिणी शब्दादिजन्यापि वृत्तिरपरोक्षरूपैवेति तया तत्रावरणभङ्ग। मनोवच्छिन्नचैतन्यस्य जीवत्वे

---

[1] तत्प्रतिबिम्बित तदुपहितरूप वा इति पाठेन भाव्यमिति भाति।

[2] तच्च सर्वदाऽस्तीति इति पाठेन भाव्यमिति भाति

[3] स्वभावत्वात्तद्विषयिणी इति पाठेन भाव्यमिति भाति.

(द्वै था) स्वत एव सम्बन्धशून्यत्वात् घटावच्छिन्नब्रह्मचैतन्यगतात्मत्वाभिव्यक्त्यसिद्धये वृत्त्यपेक्षा । मनसो हि वृत्त्यात्मना विषयदेशगमनात्तदेशावच्छिन्नचैतन्यस्यापि मनोऽवच्छेदमापन्नतया मनोऽवच्छिन्नत्वावच्छेदेन प्रयुक्तभेदस्य नाशनात्। न च रूपादिभानवेलायां रसादेरपि भानं स्यात् , उक्तरीत्या तदवच्छिन्नचैतन्यस्याप्यभेदाभिव्यक्तेरिति वाच्यम् । रसे वृत्तिनिरूपिताकारान्यविषयताया अनङ्गीकारात् । तथा अपि भासकत्वाभ्युपगमेनोक्तानुपपत्तिविरह इति तन्मतप्रकारोऽनुसन्धेयः ।

एतन्मतेऽपि जीवचैतन्यस्य वृत्त्या दिद्वारैक्लोलीभावापत्तये विषयोपरागार्थमुक्तरीत्या ब्रह्माज्ञानावरण-भङ्गार्थं च वृत्त्यपेक्षा । अत एव विषयसम्बद्धतया ज्ञानत्वाज्ञाननिवर्तकत्वमसङ्गे कृते तदसन्दिग्धमिति इष्टापत्ति-मभिधाय तदुपपादनाय 'परिणामस्य ज्ञानं निवर्तयतीत्यङ्गीकारात्' इति वक्ष्यते परिणामत्व इत्येतत्पर्यन्तमेव परमतो-पन्यासं कृत । अन्यथा सर्वमतेऽज्ञाननिवृत्तिमात्रफलकत्वस्य वृत्तेः प्रत्येकोपरागतज्ञत्वस्फोरणाप्रसङ्गात् । न चैवमुत्तरमूलोक्तदूषणानामुपरागपक्षेऽप्रसराद्दवनारिकाग्रन्थे तदनेरमतीयमतोत्तरमदूषणं ऽकिञ्चित्कर इति वाच्यम् । तन्मूलपरमतान्पर्यविषयीभूतादृष्टकल्पनादिरूपदोषस्य तत्पक्षेऽपि प्रसरे परस्य सर्वमतेऽप्ययमप्रामाणिक-वादित्वस्य स्फोरणाय मतान्तरसूचनस्योचितत्वात् । अत एव 'ज्ञानस्य विषयीभूतघटावच्छिन्नचिदाश्रितत्वव्यव-स्थापनादेव ॥ दृष्टान्तोऽपीति ॥ ब्रह्मज्ञानं न स्वविषयाश्रितमज्ञानत्वाद्घटाज्ञानवदिति पूर्वमिमानुमानदृष्टान्त इत्यर्थः ॥ प्रत्यूढ इति ॥ साध्यवैकल्यादिति भावः । प्रमक्तस्तदनुमानानुग्राहकतया अन्यथेत्यनेन पूर्वोक्ततर्कः । चशब्दात्प्रत्यूढ इत्यनुकृष्यते । इष्टापादनदोषेणेति भावः ।

॥ अनुमानस्येति ॥ घटाद्याश्रयस्यज्ञानविरोध्यज्ञानं प्रकाशसमानदेशं प्रकाशविरोधित्वात्तमोवदिति विषयाश्रितत्वव्यवस्थापकानुमानस्येत्यर्थः । इत्थं च पूर्वमूले घटाज्ञानस्य दृष्टान्ततोक्तिर्लौकिकव्यवहारमनुरुद्ध्य परमताच्छादनेनैवेति नायुक्ततेति ज्ञेयम् । विषयत्वस्य केवलान्वयित्वेनात्मनोऽपि विषयत्वात्सामान्यतस्तन्निरा-करणं न घटत इत्यतस्तज्ज्ञानविषयीभूतघटादिपरत्वमाश्रित्य विवृणोति ॥ यदीति ॥ घटादीति ॥ सर्वत्र तत्तद-वच्छिन्नचिदेव ग्राह्या । घटादीत्युक्तिस्तु 'अज्ञातो घटः' इति व्यवहारानुसारेण । परमते 'अज्ञातो घटः' इति वाक्ये अज्ञात इत्यस्याज्ञानविषयतावच्छेदक इति वा तदीयाकारान्यविषयतावानिति वा अर्थः । चैतन्ये तु तादात्म्यरूपैव विषयतेति ध्येयम् । विप्रतिपन्नानां भ्रान्तानाम् । निर्धारणे षष्ठी । ननु चैत्रेण ज्ञाते घटे मैत्रेणाज्ञातत्वव्यवहारो न भावरूपाज्ञानमवलम्बते । येन चैत्रज्ञानेनाविद्याया नष्टत्वात्कथं मैत्रेणाज्ञातत्वमिति व्यवहारः स्यादिति पर्यनुयोगः स्यात् । किन्तु तत्सम्बन्धिज्ञानविषयत्वाभावम् । अतो नातिप्रसङ्ग इत्यत आह ॥ इन्द्रियेति ॥ चैत्रमैत्रादीनामेकदैवेन्द्रियसन्निकर्षादिसामग्रीदशायां [2]तज्ज्ञानविघटनपूर्वकं सर्वेषां भ्रमस्योत्पन्नत्वे एकयैवाविद्यया सर्वेषां तद्विघटना वाच्या । स चैका यदि चैत्रज्ञानेन निवृत्ता मैत्रस्य तद्विघटने बीजाभावेन तज्ज्ञानोत्पत्तेरावश्यकतया तदाभावविषयकत्वमपि न युज्यत इति भावः ॥ न केनापीति ॥ एकेन ज्ञातस्येत्यनेन

[1] अज्ञानस्य इति पाठेन भाव्यमिति भाति । [2] तत्र ज्ञानजननशक्तिविघटनपूर्वकं इति पाठेन भाव्यमिति भाति

(द्वैधु ; एकज्ञानविषयत्वविशिष्टापरज्ञानविषयत्वाभाव एवाऽपाद्य । स च विशिष्टाभाव एकज्ञानविषयत्वरूपविशेषणविशिष्टे अपराज्ञानविषयत्वरूपविशेष्यस्यैवाभावरूप । तादृशविशेष्यवन्निष्ठश्चैकज्ञानविषयत्वरूपविशेषणाभाव एव । एवं च विशेषाभावकूटबलात्सामान्याभाव एवाऽपादितो भवतीति भाव । एवं च 'विषयाश्रितं चेत्' इत्यनेनैकाज्ञानबहुज्ञानपक्षयोरुभयोरपि सङ्कीर्तनत्वादुक्तरीत्या दूषणस्यापि पक्षद्वयेऽप्युक्तत्वलाभान्न बहुज्ञानपक्षदूषणानुक्तिप्रयुक्ता मूलस्य न्यूनतेति ध्येयं ॥ प्रतिपुरुषनियतानीति ॥ तत्तत्पुरुषनिरूपितान्यज्ञानानि तत्तत्पुरुषान्तःकरणवृत्तिभिर्नाश्यन्तेऽतो नोक्तापत्तिरिति भाव ॥ अदृष्टेति ॥ तमसो विषयाश्रितत्वेन ज्ञानप्रतिबन्धकत्व दृष्ट्वा प्रकृते अज्ञानस्य तथाभाव कल्पयतस्तवेत्यादि । प्रतिपुरुषनियततमसामदर्शनादिति भाव । नन्वज्ञानस्य विषयाऽश्रितत्व यावता निर्वहति तत्सर्वमन्यथानुपपत्तिसिद्धमेवेत्यत आह ॥ अज्ञानस्येति ॥ उक्तबाधकपरिहार विना विषयाश्रितत्वस्यैवासिद्धेरन्योन्याश्रय इति भाव । ननु तमोदृष्टान्तक[1]पूर्वोक्तानुमानेन ज्ञानस्य विषयाऽश्रितत्वस्यासिद्धत्वाद्बाधकपरिहार उक्तरीत्या क्रियते । पक्षदृष्टान्तयो साधनोभयवत्त्वेन साम्यमात्रमपेक्षितम् । न तु सर्वात्मना । कुत्राप्यसम्भवात् । एवं चोक्तबाधकपरिहारायाज्ञानस्य प्रतिपुरुषनियतत्वाङ्गीकारे न काप्यनुपपत्तिरित्यत आह ॥ विषयाच्छादनं त्विति ॥ विषयभानप्रतिबन्ध इत्यर्थं ॥ युक्तमिति ॥ दृष्टान्तदार्ष्टान्तिकयोर्बाधकपरिहारोपयुक्तप्रतिपुरुषसम्बद्धत्वेनाप्यानुगुण्यादिति भाव । तथा च तत्प्रकाशविरोधित्व तज्ज्ञानविरोधित्व वा विषयाश्रितत्वेन न व्याप्तम् । पटलादौ व्यभिचारात् । तथा चोक्तहेतुभि विषयाऽश्रितत्वस्यासिद्धत्वात् प्रत्युत दृष्टानुसारेण पटलाऽदिवत्पुरुषाऽश्रितत्वस्यैव युक्तत्वाद्विषयाश्रितत्वपक्षे उक्तबाधकं सुस्थिरमेवेति भाव । ननु मास्तु तमोदृष्टान्तकानुमानेन विषयाऽश्रितत्वसिद्धि । शुक्त्यादौ भासमानरजताऽदिकार्यस्य भावकार्यत्वेनोपादानसापेक्षत्वाद्भिन्नदेशस्थयोरुपादानोपादेयभावायोगात्तत्राज्ञानमवश्य सिद्ध्यतीत्यत आह ॥ आरोप्येति ॥ अर्थापत्तिनिरासप्रस्ताव इत्यर्थं । अज्ञानस्य विषयाऽश्रितत्वप्रतिक्षेप प्रकृतोपयोगपूर्वकमुपसंहरति ॥ तदेवमिति ॥

अत्र वदन्ति, प्रतिपुरुषनियतान्यज्ञानानि नानैव । न चैवमदृष्टकल्पनाप्रसङ्ग । एकैकज्ञानव्यक्तेरेकैकप्रागभावस्य त्वयाऽभ्युपगतत्वेन मन्मते तत्तद्व्यक्तीनामेव तत्पुरुषनियताज्ञानरूपत्वाङ्गीकारात् । न चैवमभावानामावरकत्व कथमिति शङ्क्यम् । भावस्यापि कथमिति पर्यनुयोगस्य साम्यात् । स्वप्रागभावध्वसस्वध्वसप्रागभावादिरूपान्धकारादेरावरणत्वदर्शनात् । तस्याभावरूपत्वमते सुतरा तथा । अन्धकारेणेदमावृतमिति प्रतीते[2]स्तन्मतेऽप्यावरणत्वमपरिहार्यम् । न चैवं 'घट न जानामि, न साक्षात्करोमि'इत्यनुभवेनात्मनिष्ठतया प्रतीयमानानामज्ञानाना कथं विषयाऽवरणत्वमिति वाच्यम् । जीवस्य सर्वगतस्यैव जगदुपादानत्वपक्षे घटावच्छेदेन स्वनिष्ठाज्ञानस्यैवान्त[3]करणसामानाधिकरण्यभानसम्भवात् । 'घटे ममाज्ञानम्' इति घटावच्छेदेन स्वसम्बन्ध्यज्ञानस्य भानाच्च । जीवस्य जगदनुपादानत्वपक्षेऽपि घटावच्छेदेन चिदाश्रिताज्ञानस्याऽपि 'एतत्तत्त्व मम न भाति' 'एतत्तत्त्वमह न

---

[1] पूर्वोक्तानुमानेनाज्ञानस्य विषयाश्रितत्वस्य सिद्ध इति पाठेन भाव्यमिति भाति ।

[2] स्तन्मते इति पाठेन भाव्यमिति भाति ।  [3] करणावच्छिन्नस्वसामानाधिकरण्य इति पाठेन भाव्यमिति भाति ।

(द्वै धु) जानामि इति प्रतीतिबलात्साक्षिभास्यत्वाङ्गीकारात् । चिदैक्यस्यैव तत्त्वतोऽभ्युपगमेन मनआद्यवच्छेद-कृतभेदस्य तद्भानप्रयोजकत्वानङ्गीकारात् । अनुभवानुसारित्वात्कल्पनायाः ।

न चान्यदीयाज्ञानस्याप्यन्यस्य भानापत्तिश्चिदैक्यमात्रस्य तन्त्रत्वे । न चेष्टापत्तिः । 'चैत्र एतत्त्वं जानाति न वा' इत्यादिसंशयानुपपत्तेरिति वाच्यम् । तत्तन्मनोवच्छिन्नचिन्निरूपितत्वस्य ज्ञाननिष्ठस्य तं तं प्रति भाने प्रयोजकत्वाभ्युपगमेनान्यदीयाज्ञानस्यान्यं प्रति भानाऽपादनासम्भवात् । चैत्रीयपक्षे बुद्धिजन्यद्वित्वस्य घटपटोभयसमवेतस्य मैत्रीयचक्षुःसंयुक्तसमवायाश्रयस्यापि मैत्रप्रत्यक्षाविषयत्ववत् प्रकृते उपपत्तेः ।

न चैवं घटोऽस्तीति परोक्षज्ञानेन घटावरणमज्ञानं निवर्तते न वा ? नेति पक्षे घटोऽस्तीति व्यवहारानुपपत्तिः ; तस्यावृतत्वात् । आद्ये घटो भातीति व्यवहारापत्तिः घटावरकाज्ञानस्य गतत्वादिति वाच्यम् । कोऽज्ञाने वैजात्यद्वयम् ; एकं प्रमामात्रनाश्यतावच्छेदकम् अपरं साक्षात्कारमात्रनाश्यतावच्छेदकम् । प्रथमवैजात्याश्रयनिवृत्तिविशिष्टा चिदस्तित्वं सत्त्वमुच्यते । तत्सम्बन्धं तादात्म्यरूपमादाय घटोऽस्तीति व्यवहारः । द्वितीयवैजात्याश्रयनिवृत्तिविशिष्टा चिदस्तित्वभानप्रकाशादिपदैर्व्यवह्रियते तत्तादात्म्यरूपसम्बन्धात् 'घटोऽस्ति भाती'त्यादिव्यवहारः ।

न चैवं परोक्षज्ञाननिवर्त्यं घटाज्ञानं कथं भवेत् । परोक्षस्थले वृत्तेर्बहिर्निर्गमनाभावेन तस्याहङ्कारावच्छिन्न-चिदाश्रितत्वादज्ञानस्य घटावच्छिन्नचिदाश्रितत्वात् । अन्यथा परोक्षभ्रमस्यान्यथाख्यातित्वमनभ्युपगम्यानिर्वचनी-यख्यातित्वपक्षे तदवच्छेदेनानिर्वचनीयोत्पत्त्यनुपपत्तेरिति वाच्यम् । परोक्षवृत्तेः जडनिष्ठाकाराख्यविषयताघटित-सम्बन्धेन 'परोक्षवृत्तीनामपि पर्वतं वह्निमत्त्वेनानुमिनोमि इत्यादीनां पर्वतानुयोगित्ववह्निप्रतियोगित्वविशिष्टसंसर्गा-वच्छेदेन चिद्विषयकत्वमेव' इति अनिर्वचनीयवादार्थे ब्रह्मानन्देन व्यवस्थापितत्वेन चिति साक्षान्निष्ठविषयता-सम्बन्धेन वाऽज्ञानसमानाधिकरणायास्तन्निवर्तकत्वाभ्युपगमात् ।

यद्वा द्विविधमज्ञानम् । परोक्षनिवर्तकमहङ्कारावच्छिन्नचैतन्यरूपजीवाश्रितमसत्त्वापादकाज्ञानमुच्यते । अपरमपरोक्षप्रतीत्या निवर्तमानमभानापादकमसत्त्वापादकं चाज्ञानमुच्यते । अतो न कोऽपि दोषः ।

एतत्पक्षेऽस्य घटाकारापरोक्षवृत्तिकालेऽपि तं प्रति घटस्याऽवृतत्वप्रसङ्गः । तस्यैवोत्तरकाले तद्भाननिवर्त्यायाङ्गीकार्यस्याज्ञानस्येदानीमपि सत्त्वात् । एतद्वृत्त्यैव तन्नाशे पुनरुत्तरकाले घटस्याऽवृतत्वायोगः । अत एतद्दोषपरिहाराय स्वप्रागभावरूपस्यैकस्याज्ञानस्य नाशः । तत्समानविषयकाणामज्ञानान्तराणामभिभव एव । अभिभवो नाम घटरूपविषयस्य चिन्निष्ठतत्सम्बन्धस्य वा तत्काले तत्पुरुषीयविद्याविषयतावच्छेदकत्वाभाव इति समाधानम् ।

प्रागभावानङ्गीकारे अज्ञानान्तरस्य कृप्तत्वद्वृत्तिप्रागभावातिरिक्तस्य कल्पनागौरवरूपबाधकाभावा-देकपुरुषीयं सर्वविषयकमज्ञानमेकमेव । तस्य यदाकारा वृत्तिर्जायते तद्विषयसम्बन्धस्य चिन्निष्ठस्य तत्पुरुषीया-

[1] घटोऽस्तित्वेन भाति प्रकाशते इत्यादिव्यवहार इति पाठेन भाव्यमिति भाति ।

(द्वै. बु) ज्ञानविषयतावच्छेदकत्वानङ्गीकारादन्यदीयाज्ञानविषयतावच्छेदकत्वाङ्गीकाराच्च तत्पुरुषं प्रति भानमन्यं प्रति अभानमिति व्यवस्थोपपत्तेः ।

मूलाविद्यापरिणततत्तन्मनोवच्छिन्ना जीवाः । सर्वेषामप्येकैवाविद्या आवरणमिति पक्षे वृत्तिरविद्याभिभाविका । न तु नाशिका । एकस्य घटज्ञाने सर्वेषां मोक्षप्रसङ्गात् । अभिभावकत्वं च स्वकाले तद्विषयचित्सम्बन्धस्य नाज्ञानविषयतानवच्छेदकत्वापादकत्वम् । तत्पुरुषस्य वृत्तिकाले अन्यपुरुषस्यापि भानापत्तेः । न च पुरुषान्तरीयाहङ्कारावच्छिन्नचितो वृत्तिद्वारकोपरागाभावादेवाभानम् । तत्सत्त्वे त्विष्टापत्तिरिति वाच्यम् । एकस्य शुक्तिसन्निकृष्टेन्द्रियेण भ्रमोऽपरस्य प्रमा च युगपद्भवतो यत्र तत्रान्यदीयेदमाकारवृत्त्या तत्साक्षिचैतन्यतादात्म्यापन्नेदमधिष्ठानचैतन्यविषयसम्बन्धस्यान्यदीयप्रमानुरोधादज्ञानविषयतानवच्छेदकत्वे अन्यस्य भ्रमानुपपत्तिप्रसङ्गेन तत्रेष्टापत्तेरयोगात् । न हि तत्र शुक्तित्वावच्छिन्नचैतन्यस्य साक्षिचैतन्यतादात्म्याभावादुपराग एव नास्तीति वक्तुं शक्यम् । तथात्वे रूपाद्याकारचाक्षुषादिकाले रसादेरपि साक्षिचैतन्येन भानवारणायाकारास्यविषयताया अपि भानप्रयोजकत्वस्य पूर्वोक्तस्यायुक्ततापत्तेः । तावताप्यन्यदीयप्रमानुरोधाच्छुक्तित्वचित्सम्बन्धावच्छेदेनाज्ञानाभावेनोपादानानुपपत्त्या भ्रमानुत्पत्तेर्दुर्वारत्वाच्च । तत्राप्युक्तरीत्या साक्षिसम्बन्ध एव नास्तीति वक्तुं शक्यत्वात् । तस्मात्तत्पुरुषीयवृत्त्यनवच्छेदकत्वविशिष्टयदज्ञानविषयतावच्छेदकत्वं तदभावविशिष्टचित्सम्बन्ध एव विषये तत्पुरुषस्य भानम् । अज्ञानविषयतावच्छेदकत्वं यस्मिन्विषयचैतन्यसम्बन्धे तस्मिन्नेव वृत्त्यवच्छेदकत्वाङ्गीकारात् वृत्तिकाले विशिष्टाभावनिर्वाहः । सुखादिविषयचैतन्यसम्बन्धे अज्ञानविषयतावच्छेदकत्वरूपविशेष्याभावादेव विशिष्टाभावः । अतः सुखादौ घटादौ चोक्तविशिष्टाभाववच्चैतन्यसम्बन्धवत्त्वरूपमेकविधमेवापरोक्ष्यम् । प्रवृत्त्यादिकार्यं प्रति तद्विषयकापरोक्षज्ञानस्य जनकतावच्छेदककोटावपि तादृशविशिष्टाभाववत्तद्व्यक्तित्वेन निवेश्य । अतो न गौरवम् । परोक्षवृत्तेरपि चिद्विषयत्वस्य पूर्वमुक्तत्वाद्विषयतासम्बन्धघटितसामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकतादृशवृत्त्यभावविशिष्टं यदज्ञानं तदभाववच्चैतन्यसम्बन्धस्यैवास्तित्वादिरूपनाङ्गीकाराद्गुरुत्वादिकमस्तीति व्यवहारः । असत्त्वापादकाज्ञानस्यान्तःकरणावच्छेदेनैव चैतन्याश्रितत्वे स्वोपादानान्तःकरणावच्छिन्नत्वसम्बन्धावच्छिन्नवृत्त्यभावं निवेश्यैवोक्तरीतिरूह्या । वस्तुतः अन्तःकरणावच्छिन्नचिता सह विषयाधिष्ठानचित एकत्वात् तत्तादात्म्यस्य विषये सत्त्वेन चिद्रूपज्ञानविषयत्वनिर्वाहेण गुरुत्वादिकं जानामीति व्यवहारः सङ्गच्छते ।

यदि चेदमाकारवृत्तिस्थले शुक्तित्वसम्बन्धावच्छिन्नचैतन्यस्य साक्ष्युपराग एव नास्तीत्यभ्युपगम्यते तदा पूर्वस्य युगपदुभयो भ्रमप्रमो[1]भयस्थले दोषस्याभावादेकाज्ञानपक्षेपि यथायथं वृत्तिकालेऽधिष्ठानविषयसम्बन्धस्याज्ञानविषयतानवच्छेदकत्वपक्षो वस्तुतस्त्वित्यादिनाऽनिर्वचनीयवादार्थे ब्रह्मानन्देनोक्तः सम्यगेव । अज्ञानैक्यपक्षे उक्तकल्पद्वयं अज्ञानस्य कटवत्सङ्कोच इति प्राचीनैर्व्यवह्रियते । वृत्त्यभावस्थाने वृत्त्यव्यवहितपूर्वकालाभावनिवेशघटितपूर्वोक्तरीतिर्वा तादृशाव्यवहितपूर्वकाल एव विषयचित्सम्बन्धस्य ज्ञानविषयतात्वाभावो वाऽङ्गी-

[1] द्वयस्तले इति पाठेन भाव्यमिति भाति ।

(द्वै. द्यु) कार्य । अयं पक्षो भीरुभटवदपसरणमज्ञानस्येति प्राचीनैरुपेक्षितः। एवं च सर्वेष्वपि पक्षेषु 'एकेन ज्ञानघटस्य' इत्यादिमूलोक्तदूषणाभाव । अज्ञानस्थानीयतत्तत्प्रागभावाना त्वयाप्यङ्गीकारात् पक्षान्तरेष्वप्युक्तरीत्या गौरवाद्यभावात्सर्वमिदमयुक्तमेवेति ।

तदेतत्सर्वं 'अदृष्टकल्पनाप्रसङ्गात्' इत्यनेनैव निरस्तम् । तथा हि, तत्तज्ज्ञानप्रागभावाना विषयावरकत्व नाम तत्तज्ज्ञानप्रतिबन्धकत्वमेव वक्तव्यम् । अन्यस्यासम्भवात् । तच्च अदृष्टचरम् । तत्प्रागभावस्य तदुत्पत्तौ सामग्रीरूपस्य तत्प्रतिबन्धकत्वायोगात् । प्रतिबन्धकनाशोत्तरमेव कार्योत्पत्तेरावश्यकतया तन्नाशोत्तर जायमान-वृत्तेस्तन्निवर्तकत्वमसङ्गतम् । [1]नन्वावरकत्व न प्रतिबन्धकत्वम् । किन्तु तदभावव्याप्यत्वमेव तदिति वाच्यम् । एवमपि वृत्तिरूपप्रतियोगिन इव तन्नाशत्वेन तन्नाशकत्वोक्त्ययोग । प्रतियोगिन स्वद्वितीयक्षणे प्रागभावनाश-कत्वपक्षस्य भावाभावयोर्युगपदेकत्रावस्थानाङ्गीकारस्य व्याहतत्वेन नाशान्तरकल्पनागौरवेण च हेयत्वात् । तत्तद्वृत्तिप्रागभावाना वृत्त्युत्पत्ते प्राक् जीवब्रह्मोपादानादिनिखिलपक्षेष्वावश्यकतया वृत्त्या तन्निवृत्तेः सर्वत्रावश्य-कतया जीवस्य जगदुपादानत्वे घटादीनां जीव प्रत्यावृतत्व ब्रह्मोपादानत्वपक्षेऽनावृतत्वमिति तद्विभागायोग. । सर्वासामपि वृत्तीना स्वप्रागभावनाशकत्वेन धारावाहिकस्थलेपि द्वितीयादिवृत्तीनामप्यज्ञातज्ञापकत्वानपायेन प्रामा-ण्यस्य सुस्थिरत्वात् 'तासामप्रामाण्यं वा अज्ञातकालविशेषावगाहितया प्रामाण्य वा । तावत्कालस्थायिनी एकैव वृत्तिरङ्गीक्रियते । वृत्तिभेदाभावात्तु द्वितीयादिवृत्तिप्रामाण्यचिन्ता' इत्यादीनां त्वत्पूर्वतनवाक्यानां त्वद्व्या-ख्याना चासङ्गतत्वापत्तिश्च । अनुवादस्थलेऽप्युक्तरीत्या अज्ञातज्ञापकत्वप्राप्त्याऽनुवादकत्वादिव्यवस्थायोगश्च । किञ्च तद्वृत्त्यभावसमकालीनवायुसंयोगादिप्रागभावानामपि विनिगमनाविरहादावरकत्वापत्ति. । न चेष्टापत्ति । तस्य तदभावव्याप्यत्वरूपत्वमात्रत्वादिति वाच्यम् । तर्हि तदवच्छिन्नचैतन्यस्यापि ज्ञानरूपत्वापरिहारेण वृत्तिष्विव संयोगादिष्वप्यविशेषेण ज्ञानपदव्यवहारापत्ते । ज्ञायतेऽनेनेति व्युत्पत्तेस्तत्रापि साम्यात् । एतेन 'विशिष्टतत्तद्व्य-वहारानुकूलशक्तिविघटकत्वमेवावरकत्वम् । चितः सर्वज्ञप्तिरूपत्वेन सर्वव्यवहारानुकूलशक्तेरावश्यकतया तद्वशा-त्सर्वव्यवहारापत्तिवारणाय तद्विघटकतया [2]वारणकल्पनमावश्यकं जीवोपादानत्वपक्षे । ब्रह्मोपादानत्वपक्षे जीव-चैतन्यस्य घटादितादात्म्यरूपतद्विषयकज्ञप्तिरूपत्वाभावेन तद्व्यवहारानुकूलशक्तेरभावेन तद्विघटकत्वाभावेन तत्तत्स्थ-लीयवृत्तिप्रागभावाना न जीव प्रत्यावरकत्वमिति जीवब्रह्मोपादानत्वपक्षयोरावृतत्वानावृतत्वरूपविभागानुपपत्तिरूपो न पूर्वोक्तदोष ' इति प्रत्युक्तम् । जीवोपादानत्वपक्षेपि तत्तद्वृत्तिप्रागभावानामिव तत्तत्संयोगविभागप्रागभावानाम-प्यावरकत्वापत्त्यादिपूर्वोक्तदोषापरिहारात् । न चास्मन्यज्ञानकल्पनापक्षेऽपि वृत्तिप्रागभावातिरिक्ताज्ञानकल्पने मानाभावेन वृत्तिप्रागभावादेरेव विषयावरकत्वे प्रसक्ते तत्रापि वायुसयोगाद्यभावमादाय विनिगमकाभावस्तवापि तुल्य इति वाच्यम् । यतो मन्मते घटमहं न जानामीत्यात्मनिष्ठतयाऽनुभूयमान. घटादेर्विशेषरूपेण यज्ज्ञानं तत्प्रागभावादिरेव । प्रतियोग्यनधिकरणे तदभावस्य सर्वसम्मतत्वात् । तस्य विषयावरकत्वादिकमधिकं किमपि न

---

[1] न चावरकत्वं इति पाठेन भाव्यमिति भाति । [2] आवरण इति पाठेन भाव्यमिति भाति,

(द्वै बु.) कल्प्यते। वृत्तिरूपकारणाभावादेव प्रवृत्तिव्यवहारादिकार्यानुदयात्। सर्वस्य सामान्यरूपेण साक्षिगोचरत्वेपि विशेषरूपेण तद्विषयकत्वाचेन रूपेण व्यवहारे तदाकारवृत्ते कारणीभूताया आवश्यकत्वात्। रजतादिभ्रमस्यापि दोषरूपावश्यकप्रतिबन्धकेन [1]शक्तित्वाग्रहे सति सम्भवात्। त्वया तु तादृशाभावानामावरकत्वमधिकमननुभवसिद्ध विषयावच्छिन्नचिदाश्रितत्वादिक कल्पनीयम्। तत्र वृत्तिप्रागभावाना वायुसंयोगादिप्रागभावाना वाऽऽवरकत्वमित्यत्र विनिगमकाभावो दुर्वार एव।

न च वृत्तीना तत्समकालिकवायुसंयोगादिव्यक्तीना वा व्यवहारादिकारणत्वमित्यत्र विनिगमकाभावस्तवापि समान इति वाच्यम्। तवापि मते वृत्तेर्यत्र कार्ये उपयोगस्तत्कार्यं प्रत्येव तत्कालीनवायुसंयोगादिकमादाय विनिगमकाभावस्य सत्त्वेन तादृशदोषस्योभयसमत्वात्। वृत्ते पूर्वं परतोपि वा विद्यमानसयोगादीना वृत्तिकार्यकारित्वे वृत्ते पूर्वं परतो वा वृत्तिकार्यं स्यात्। नियमेन तदन्यूनानधिककालिकसंयोगादीना सर्वत्र सत्त्वे मानाभावेनानुभवसिद्धा वृत्तिरेव कार्यविशेष प्रति कारणमास्थीयते चेत्सम ममापि। वृत्तेरिव सयोगादेर्विषयविषयिभावसम्बन्धस्य घटादिना सहाभावेन घटादिव्यवहारकारणत्वस्य दुष्कल्प्यत्वात्। घटज्ञानान्मम प्रवृत्त्यादिर्जात इति सर्वानुभवस्यैव वृत्तिकारणत्वे सत्त्वाच्च। न च वृत्तिप्रागभावादीना घटादिविषयकव्यवहाराद्यभावव्याप्यत्वमावरकत्वम्। नातोऽन्यदधिकम्। तच्च सर्वसिद्धमिति किंकृत गौरव विनिगमकाभावो वा मन्मत इति वाच्यम्। तर्हि तस्य भावरूपाज्ञानत्वावरकत्वादिक साङ्केतिकं स्यात्। तच्च नास्माकमनिष्टम्। परन्तु तस्य न जानाम्यहमित्यन्त करणावच्छिन्नचिन्निष्ठतया प्रतीयमानस्य विषयावच्छिन्नचिन्निष्ठत्वस्य तत्प्रकारोपपादकपरम्परायाश्च कल्पनमप्रामाणिकपरम्परारूप भवतोऽतिरिच्यते।

येषा मते शुक्तितत्त्व न जानामीति [2]प्रत्यक्षासिद्धमज्ञानमतिरिक्तम्। विषयावरकमतिरिक्तमावरणविक्षेपरूपकार्यलिङ्गकमिति ते आवश्यकवृत्त्यभावादिनैव शुक्तित्वाभानव्यवहारासद्रजतभानसम्भवेनैतदतिरिक्तावरणविक्षेपयोरप्रामाणिकतया तल्लिङ्गकत्वाभावेनाप्रामाणिकत्वादज्ञानद्वयकल्पने गौरवाच्च परास्ता।

एतेन वृत्त्यभावविशिष्ट यदज्ञानविषयतावच्छेदकत्व तदभाववच्चित्सम्बन्ध एवास्तित्वमानादि। वृत्त्यभावकाले अज्ञानस्य तद्विषयकव्यवहाराभावव्याप्यत्वमेवाज्ञानस्य ज्ञानप्रतिबन्धकत्वमित्यपि परास्तम्। वृत्तिकाले तस्य भानव्यवहारादिक वर्तते। नो चेन्नास्तीति तस्यानन्यथासिद्धान्वयव्यतिरेकसत्त्वे तद्विषयकत्वेनैव घटादौ भानव्यवहारस्य जानामीति प्रत्ययविषयताया वृत्तेरेव सम्भवे तदतिरिक्ताप्रामाणिकोक्तविशिष्टाभावघटितभानपदार्थादेस्तादृशसम्बन्धप्रतियोगिचितो ज्ञानत्वकल्पनायाश्चाप्रामाणिकत्वात्। न च सुखदु खवृत्त्यादिज्ञानविषयकवृत्तेरनङ्गीकारेण चित एव तद्विषयकज्ञानस्वरूपत्वावश्यकतया तत्सम्बन्धस्यैव भानपदार्थत्वावश्यकतयोक्तविशिष्टाभाव निवेश्य तस्यानुगम क्रियत इति वाच्यम्। अनुभवानुसारेणैव सुखाद्यवच्छेदेन जीवचैतन्यस्यानावृतत्व घर्माद्यवच्छेदेनावृतत्वमिति कल्पनावत् प्रत्यक्षानुमित्यादिवृत्तीनामप्यमुख्यतया ज्ञानपदव्यवहृतिगोचरताङ्गीकारवत् वृत्तिचितोरु-

[1] शुक्तित्वाग्रहे इति पाठेन भाव्यमिति भाति। [2] प्रत्यक्षसिद्ध इति पाठेन भाव्यमिति भाति।

(द्वै. सु.) मयोरपि बाह्याभ्यन्तरविषयभेदेन मुख्यतो ज्ञानरूपत्वमभ्युपगन्तव्यं विशिष्टाभाववर्णनस्य तु नपदार्थत्वकल्पने बीजाभावात् उभयत्र ज्ञानत्वजातिस्वीकारौचित्यात्। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति श्रुतिस्तु सूर्यादीनां परमात्मप्रकाशाधीनप्रकाशाश्रयत्वपरतया तद्व्याख्यातृभिर्व्याख्यातेति न तदनुरोधेन घटादिविषयकसाक्षात्कारादीनामात्मस्वरूपतासिद्धिः।

वृत्त्यव्यवहितपूर्वकाल एव विषयचित्सम्बन्धस्याज्ञानविषयतानवच्छेदकत्वे तत्काल एव विषयभानस्यावश्यकतया प्रवृत्त्यादिकार्यनिर्वाहे वृत्त्यभ्युपगमस्यैव निर्बीजत्वापातेन यत्काले विषयप्रकाशो जायते तत्कालावच्छिन्नचित एव ज्ञानत्वोररीकरणापातात्। एवं वृत्तिकाले विषयचित्सम्बन्धस्याज्ञानविषयतावच्छेदकत्वाभावाङ्गीकारे तादृशावच्छेदकत्वस्याव्याप्यवृत्तितानिर्वाहाय कालविशेषेषु तत्तदभावावच्छेदकत्वस्वीकारे महागौरवमित्येषा दिक्।

किं चैकत्र भावाभावयोः सत्त्वनिर्वाहकविलक्षणावच्छेदकत्वमेवाप्रामाणिकम्; कुतस्तदवष्टम्भेनोक्तपूर्वोपदर्शितरीतीनामवकाशः। ननु कुतोऽप्रामाणिकत्वम्। 'मूले वृक्षः कपिसंयोगी नाग्रे' इत्यबाधितप्रत्यक्षेण मूलाग्रयोः संयोगतदभावावच्छेदकत्वविषयीकरणादिति चेन्न। 'वृक्षस्य मूले संयोगो नाग्रे' इति प्रतीत्यन्तरानुरोधेन मूलाग्रनिष्ठसंयोगतदभावविषयत्वात्तत्प्रतीतेः। वृक्षादिरूपधर्मिण्येव संयोगतदभावसत्त्वाङ्गीकारे ग्रामे चैत्रबुभुत्सया अस्मिन् ग्रामे चैत्रोऽस्ति न वेति पृष्टे तद्ग्रामे चैत्रस्य सत्त्वे 'तद्ग्रामे चैत्रोऽस्तीति वादिनो यथार्थवक्तृत्वं नास्ति' इति वादिनोऽनृतवक्तृत्वं सर्वसम्मतं न स्यात्। गृहान्तरावच्छेदेन चैत्राभावस्यैव त्वन्मते सत्त्वेन तस्यानृतवादित्वस्योपपादयितुमशक्यत्वात्। न च नञ्समभिव्याहारस्थलेऽनवच्छिन्नविशेषणतैव संसर्गतया भासते। तादृशविशेषणतासंसर्गेण चैत्राभावस्य चैत्रवति ग्रामे असत्त्वात्तद्वाक्यस्याप्रामाण्यं युक्तमिति वाच्यम्। अग्रे वृक्षो न संयोगीत्यत्रानुपपत्तिप्रसङ्गात्। अनवच्छिन्नविशेषणताया अग्रावच्छिन्नत्वस्यायोगात्। न चावच्छेदकबोधकासमभिव्याहृतनञ्समभिव्याहारस्थले एवानवच्छिन्नविशेषणतासंसर्गभाननियम इति वाच्यम्। व्युत्पत्तिद्वयकल्पने गौरवात्। अवच्छेदकतास्यावस्तुन एवालीकतावादिनं प्रत्युक्तरीत्या व्यवस्थाकरणस्यायोगाच्च। 'अत्र वृक्षे कपिसंयोगाभावो नास्ति। संयोग एव वर्तते' इति विश्वजनीनव्यवहारस्याप्रामाण्यापत्तिः; [1]अवच्छेदकपदासमभिव्याहृतत्वेनोक्तनञा संयोगाभावाभावात्मकसंयोगस्यानवच्छिन्नसम्बन्धेनैव भानापत्त्या तस्य त्वन्मते बाधितत्वात्। न च तादृशवाक्यस्याप्रामाण्यमिष्टमेवेति वाच्यम्। लोकानां तथा अनुभवाभावेन त्वदभ्युपगममात्रस्याप्रयोजकत्वात्। न च मूले वृक्षः संयोगी नाग्रे इति वाक्येन वृक्षे संयोगतदभावावेव बोध्येते तदभिलाप्यप्रतीतेस्तु मूलाग्रनिष्ठसंयोगतदभावविषयकत्वमित्ययुक्तम्। शब्दस्य तादृशार्थे पारिभाषिकत्वापत्तेरिति वाच्यम्। 'द्रव्ये संयोगाभावो द्रव्यत्वसमानाधिकरणो गुणे संयोगाभावो न द्रव्यत्वसमानाधिकरण.' इति वाक्यस्य संयोगाभावनिष्ठं द्रव्यत्वसामानाधिकरण्यं द्रव्यनिरूपितं न गुणनिरूपितमित्यर्थे 'द्रव्ये संयोगाभावः प्रतियोगिसमनाधि-

[1] अवच्छेदकबोधक इति पाठेन भाव्यमिति भाति

(द्वि. द्यु.) करणो गुणे संयोगाभाव प्रतियोग्यसमानाधिकरण' इति वाक्यस्य संयोगाभावनिष्ठं संयोगसामानाधिकरण्यं द्रव्यनिरूपितं न गुणनिरूपितमित्यर्थे, शशशृङ्गं नास्तीत्यादिवाक्यानां शशे शृङ्गाभाव इत्याद्यर्थे, प्रकृतवाक्यस्यैव भेदबोधसमर्थस्यात्यन्ताभावरूपार्थे पारिभाषिकत्वस्यैव परैरभ्युपगतत्वेन मयापि तथाभ्युपगमे बाधकाभावात्। भावाभावयोः सामानाधिकरण्यस्य तन्निर्वाहकावच्छेदकान्तरादिकल्पनात् उक्तरीत्यनुसरणस्यैव युक्तत्वात्।

वस्तुतः मूले वृक्षः कपिसंयोगीति वाक्ये सप्तम्यर्थमूलनिष्ठत्वं संयोग एवान्वेति। एवं नाग्र इत्यत्रापि सप्तम्यर्थो भाव एवान्वेति। तथा च मूलनिष्ठसंयोगसम्बन्धी वृक्षोऽग्रनिष्ठतदभावसम्बन्धी चेति बोधः। सम्बन्धश्च तद्घटितपरम्परैव। तथा च नोक्तवाक्यस्य पारिभाषिकताप्रसक्तिः।

न च संयोगस्य मूलनिष्ठत्वे वृक्षस्य तदाश्रयत्वानुपपत्त्या वृक्षः संयोगीति प्रतीतिव्यवहारयोरप्रामाण्यापत्तिः। एवमग्रस्यैव संयोगाभावाश्रयत्वे वृक्षस्य तदनाश्रयत्वेन संयोगतदभाववद्विलक्षणत्वेन वृक्षस्यानिर्वचनीयता च स्यात्। यदि च वेदान्तनये अंशांशिनोरभेदात् मूलस्य कपिसंयोगाश्रयत्वे तदभिन्नवृक्षस्यापि संयोगाश्रयत्वं ब्रूषे तर्ह्यग्रस्य संयोगाभावाश्रयत्वे तदभिन्नवृक्षस्य संयोगाभावाश्रयत्वस्यापि प्राप्त्यैकस्मिन् भावाभावोभयसत्तानिर्वाहायावच्छेदकभेदाश्रयणं युक्तमेवेति वाच्यम्। वृक्षो न संयोगीति वृक्षे न कपिसंयोग इति प्रमायास्त्वन्मतेऽपि विरहेण वृक्षस्याग्राभिन्नत्वेऽपि संयोगाभावाधिकरणत्वानङ्गीकारात् वृक्षः संयोगीति प्रमायाः सर्वसिद्धत्वेन संयोगाधिकरणत्वाभ्युपगमात्।

न हि तदाश्रयाभेदमात्रं तद्धिकरणतायाः प्रयोजकम्। किन्तु तेन सह निर्विशेषात्यन्ताभेदमात्रम्। मूलाग्रादीनां वृक्षेण सह भेदाभेदस्यैव सत्त्वात् अग्रस्य वृक्षाभेदसत्त्वेऽपि न तन्निष्ठसंयोगाभाववत्त्वम्। तदभेदमात्रस्य तन्निष्ठधर्मवत्ताया नियामकत्वे परेषामपि व्यवहारे भट्टमतमनुसरतां मूलाग्राद्यभेदस्य भेदसहितस्य वृक्षे अङ्गीकृतत्वेन वृक्षरूपावयविनोऽप्यग्रत्वमूलत्वाधिकरणत्वप्राप्त्या वृक्षो मूलमग्रं चेति प्रतीत्यापत्तिः। एवं दण्डविशिष्टचैत्रयोर्भेदाभेदेऽपि दण्डरूपविशेषणनाशाद्दण्डविशिष्ट[1]नाशात्पत्तिव्यवहारवत् चैत्रस्यापि नाशव्यवहारापत्तिः। 'सत्त्वोपहितब्रह्मणः शुद्धेन सह तादात्म्यात् सत्त्वादिधर्माणां शुद्धेप्यङ्गीकारः। तन्निष्ठमिथ्यात्वानित्यत्वादिधर्माणां तु नाङ्गीकारः। तेषां ब्रह्मणि प्रतीतिव्यवहारयोरभावात्' इति परैर्बहुशः अद्वैतचन्द्रिकादावुपपादयद्भिरभेदमात्रं अप्रयोजकीकृत्य प्रमाणमात्रस्य शरणीकृतत्वात्। अत्रापि तथैवोपपत्तिः।

नैयायिकैः प्रत्युक्तरीत्योपपादनासम्भवेऽपि अन्यदेव वक्तव्यम्। तथा हि, मूले वृक्षः कपिसंयोगीति प्रतीत्यनुसारेण मूलावच्छेदेन वृक्षवृत्तिसंयोगाङ्गीकारे वृक्षस्य मूले संयोग इति प्रतीत्यनुरोधान्मूले संयोगान्तरमभ्युपेयम्। तस्यैव मूलनिष्ठत्वे [2]मूले मूले कपिसंयोग इति प्रतीत्यापत्तिः। वृक्षवृत्तित्वेन मूलावच्छेद्यत्वं न तु मूलवृत्तित्वेनेत्यभ्युपगमे संयोगनिष्ठवृक्षवृत्तित्वादेस्तन्निष्ठमूलावच्छेद्यत्वं प्रत्यवच्छेदकत्वादिकमप्रामाणिकं कल्पनीयम्। मूलावच्छेद्यत्वाभावस्यापि संयोगे मूलवृत्तित्वावच्छेदेनेदानीमङ्गीकृततया संयोगे मूलावच्छेद्यत्वाभावतात्पर्येण न

[1] नाशव्यवहारवत् इति पाठेन भाव्यमिति भाति। [2] मूले वृक्षे मूले च कपिसंयोग इति पाठेन भाव्यमिति भाति।

(द्वै धु) मूले वृक्षः संयोगीति व्यवहारापत्तिश्च। वृक्षवृत्तित्वस्य संयोगांशेऽप्रकारतया तत्पर्याभावावच्छेदकत्वेन भानस्य वक्तुमशक्यतया तदंशस्य बाधितत्वेन तद्वाक्याप्रामाण्यस्य वक्तुमशक्यत्वात्।

ननु वृक्षवृत्तिसंयोगान्मूले प्रतीयमानः संयोगो भिन्न एवेति मम सिद्ध एव। मूलकपिसंयोगरूपकारणाकारणसंयोगाद्वृक्षकपिसंयोगरूपा[1]कार्यकारणसंयोगस्य संयोगोत्पत्त्यङ्गीकारात्तत्र किं बाधकमिति चेत्। शृणु। मूलस्यापि त्वन्मते नानाभागानां तत्कारणीभूतावयवरूपाणामङ्गीकृतत्वेन मूलेऽप्येतद्भागे संयोग इति प्रतीत्यनुरोधात् मूले एतद्भागावच्छिन्नः संयोगः मूलस्य तद्भागे संयोग इति प्रतीत्यनुरोधात् मूलनिष्ठसंयोगादन्यस्तद्भागे संयोगोऽङ्गीकर्तव्यः। एवं क्रमेण सूक्ष्मसूक्ष्मतरद्व्यणुकत्र्यणुकादिपदार्थसंयोगानां सूक्ष्मेषु सूक्ष्मभागेषूत्पत्तिः स्यात्। तथा च तेषां परस्परकार्यकारणभावापन्नत्वे वृक्षस्य सूक्ष्मावयवेषु संयोगोत्पत्तिक्रमेण वृक्षे संयोगोत्पत्तिस्वीकारे तस्य प्रहरादिकालविलम्बितत्वप्राप्त्या वृक्षे कपिपातानन्तरं प्रहरादिविलम्बेन कपिसंयोगप्रत्ययप्रसङ्गः। कपिनदवयवक्रियाभिर्युगपदेव सर्वसंयोगोत्पत्त्यङ्गीकारे सर्वत्रापि कारणकार्यद्विनिष्ठसंयोगानां तत्तदवयवक्रियाभिः स्वक्रियाभिर्वोत्पत्तिसम्भवेन संयोगजसंयोगप्रक्रियाभ्युपगमस्य निर्मूलत्वापत्तिः। पक्षद्वयेऽपि वृक्षतन्मूलतदवयवेष्वपि प्रतीयमानसंयोगैक्यानुभवविरोधः। यो वृक्षे संयोगः स एव तन्मूले इति सार्वलौकिकप्रतीतेः। अन्यथा संयोगबहुत्वप्रत्ययप्रसङ्गः तत्प्रतिबन्धकादिकल्पने अप्रामाणिककल्पनया गौरवम्। न च घटपटसंयोगस्थले त्वयापि घटपटयोः पृथक्संयोगद्वैविध्यमङ्गीकृतमिति तत्र संयोगद्वयप्रतीत्यापत्तिर्यया रीत्या वार्यते तयैव रीत्या मयाऽपि उक्तापत्तिर्वार्यत इति वाच्यम्। 'घटः पटेन संयुक्तः' 'पटो घटेन संयुक्तः' इति संयोगद्वैविध्यस्यैव स्फुटं प्रतीयमानत्वेन तद्वारणवर्त्मन एव ममानभिमतत्वात्। न च 'घटः पटेन द्वित्ववान्' 'पटश्च घटेन द्वित्ववान्' इति प्रत्ययानुरोधात् घटपटयोः पृथक् द्वित्वद्वयं स्यादिति वाच्यम्। 'इमौ द्वौ' इतिवत् 'अयं द्वौ' इति प्रत्ययाभावेन द्वित्वस्यैकमात्रवृत्तित्वाभावस्यैव सिद्धौ घटप्रयोज्यद्वित्वनिरूपिताधिकरणताया एव पटे भानाङ्गीकारात्। तत्र स्वविषयकापेक्षाबुद्धिद्वारा अन्यतररूपतत्प्रयोज्यत्वस्यैव तृतीयार्थत्वात्। अन्यथा संयोगस्येव द्वित्वस्यापि सप्रतियोगिकत्वादिसिद्ध्यापत्तेः द्वित्वप्रतीतेः संयोगप्रतीतिवैलक्षण्यस्य सर्वैरभ्युपगतत्वात्। तस्माद्वृक्षमूलरूपांशयोरभेदेन वृक्षे संयोगवत्त्वं 'वृक्षः संयोगी' इति प्रत्ययानुरोधात् स्वीक्रियते। वृक्षो न संयोगीत्येव प्रमाभावात् वृक्षे संयोगाभावो न स्वीक्रियत इत्येव स्वीकर्तव्यं भवतापीति।

न च मूलस्य वृक्षावयवत्वेन तत्कारणस्य कथं वृक्षाभेद इति वाच्यम्। कारणातिरिक्ताशाङ्गीकारस्य तव बलादापत्तेः। तथा हि, यत्रैकेनैव शतव्याममहातन्तुना केनचित्कुशलेन पटो निर्मितः तत्र पटासमवायिकारणं तादृशतन्त्वंशानां परस्परसंयोग एव वाच्यः। तादृशांशानां तादृशतन्तुरूपावयविसमवायिकारणत्वे तादृशतन्तुरूपद्रव्यान्तरस्य समवायेनाधिकरणे पटरूपद्रव्यान्तरस्योत्पत्त्ययोगः। द्रव्यत्वावच्छिन्नं प्रति समवायसम्बन्धावच्छिन्नद्रव्यत्वावच्छिन्नाभावस्य कारणत्वात्। तथा चावयवातिरिक्तोंऽश आवश्यक इति।

---

[1] कार्याकारणसंयोगस्य इति पाठेन भाव्यमिति भाति।

(द्वै.बु.) वस्तुतस्तु कार्यकारणभावापन्नत्वेन नैयायिकाभिमतमृत्पिण्डघटादीनामभेद एव। न तु आत्यन्तिकभेद। अंशास्तु ह्रासवितस्त्यादयोऽनुभवसिद्धा एवेत्याकरे व्यवस्थापितम्। उक्तरीतिमनादृत्य सप्तम्यन्तोल्लेख्यप्रतीतिबलादवच्छेदकाभ्युपगमे परमाणुद्वयसंयोगस्यावच्छेदकासिद्धि स्यात्। तस्य निरवयवत्वेनावयवेष्ववच्छेदकत्वावगाहिप्रमानुदयात्। न च 'परमाणौ प्राच्या परमाण्वन्तरसंयोग' इति प्रत्ययानुरोधा प्राच्यादेरेवावच्छेदकत्वमिति वाच्यम्। अवच्छेद्याधिकरणासम्बद्धस्यावच्छेदकत्वेऽतिप्रसक्तेस्तत्सम्बद्धस्यैवावच्छेदकत्वे वक्तव्ये प्राचीदिक्पदार्थमूर्तमूर्तविशेषपरमाण्वो सम्बन्धस्यैवानिरूपणात्। न च दिक्कृतविशेषणतैव तादृश सम्बन्ध इति वाच्यम्। दिक्कृतविशेषणताया नैयायिकैरेव निराकृतत्वात्।

तदङ्गीकर्तृनयेऽपि अस्या अवच्छेदकताया संयोगसमवायादिना स्वासम्बद्धनिष्ठाया दिक्कृतविशेषणतासम्बन्धावच्छिन्नाया कालिकविशेषणतासम्बन्धावच्छिन्नाया इव विलक्षणत्वापत्त्या देशविधया कालविधया चावच्छेदकतेति अवच्छेदकताद्वयस्यैव स्वीकारानुपपत्ति। किञ्च परमाणोरियं प्राचीति व्यवस्थैव न घटते। स्वसंयुक्तदेशापेक्षयोदयगिरिसन्निहितमूर्तस्यैव प्राचीपदार्थतया परमाणाववच्छेदकदौर्लभ्येन संयोगानुपपत्तौ उक्तप्राचीत्वस्यैव तदीयस्यायोगात्।

ननु 'वृक्षे प्राच्या कपिसंयोग.' इति प्रत्ययस्य कथ भवन्मत उपपत्ति.। एकस्मिन् संयोगे प्राचीवृक्षोभयनिष्ठत्वस्य भवन्मतेऽपि बाधितत्वात्। प्राच्यास्त्वन्मते महादिङ्निरूपितस्वाभाविकाशभूताया वृक्षाभिन्नत्वाभावात् वृक्षनिष्ठसंयोगे प्राच्यवच्छिन्नत्वस्य त्वयानङ्गीकारात्। मैवम्। प्राच्यामिति वृक्षे इत्यनेनान्वितम्। तथा च प्राचीवृत्तित्वविशिष्टे वृक्षे वा वृक्षसम्बद्धत्वविशिष्टप्राच्या वा कपिसंयोगो भासते। 'प्राच्यवच्छिन्नवृक्षे संयोग' 'वृक्षावच्छिन्नप्राच्या च संयोग' इति वाक्यार्थसमानविषयकत्वानुभवानुरोधात् वृक्षप्राच्यादे किञ्चिन्निष्ठावच्छेदकत्वानिरूपकत्वेन तत्रावच्छिन्नपदस्य विशिष्टार्थत्वात्। 'प्रतीच्या वृक्षे प्रतीच्यवच्छिन्ने वा वृक्षे कपिसंयोग' इति प्रतीत्यभावस्तु विशिष्टे इतरान्वयस्थले तद्विशेषणेऽपि तज्ज्ञानस्य सर्वसम्मतत्वेन प्रतीचीरूपविशेषणांशे कपिसंयोगस्य बाधितत्वादुपपद्यते। न चैवं 'प्राच्या वृक्षे कपिसंयोग' इत्यस्याप्यनुपपत्ति.। वृक्षनिष्ठकपिसंयोगस्य प्राचीनिष्ठसंयोगाद्भिन्नत्वेन वृक्षान्वयिन संयोगस्य प्राच्यनन्वितत्वादिति वाच्यम्। 'सपुत्रश्चैत्रो गत' 'रूपविशिष्टो घटोऽनित्य' इत्यत्र विशिष्टान्वयस्थले चैत्रतत्पुत्रनिष्ठगमनकर्तृत्वयो रूपघटनिष्ठध्वंसप्रतियोगित्वरूपानित्यत्वयोश्च भिन्नत्वेन तत्राप्यप्रामाण्यापत्त्या तदन्वयितावच्छेदकधर्मावच्छिन्नस्य तद्विशेषणान्वयित्वस्यैव विशिष्टे तदन्वयपदार्थत्वेनोक्तस्थले तस्याबाधितत्वात्। प्रतीच्युपलक्षितवृक्षे कपिसंयोगप्रत्ययव्यवहारौ तवापीष्टौ। एतावतैवोपपत्तौ 'प्रतीच्या वृक्षे संयोग' इत्यादेरप्रामाण्योपपादनाय प्रतीच्यवच्छेद्यत्वस्य संयोगे भानाभ्युपगमेन तदप्रामाण्योपपादनमकिञ्चित्करम्।

नन्वेवं 'प्रतीच्या न वृक्षे संयोग.' इति प्रतीतिव्यवहारयोरप्रामाण्यभिया वृक्षे प्रतीच्यवच्छेदेन संयोगाभाव अवश्यमभ्युपेय इति विलक्षणावच्छेदकतासिद्धिरिति चेन्न। प्रतीचीरूपविशेषणांश एव संयोगाभावभानाभ्युपगमात्।

द्वे द्व्य,) 'गुणान्यत्वविशिष्टसत्ता न गुणे' 'रूपविशिष्टघटे न द्रव्यत्वं किं तु केवले' 'शिखी नष्टः' इत्यादिवत्। अन्यथा रूपावच्छेदेन घटे द्रव्यत्वाभावस्य सत्ताया गुणान्यत्वावच्छेदेन गुणवृत्तित्वाभावस्य चैत्रे जीवति शिखा-वच्छेदेन नाशप्रतियोगित्वादीनां स्वीकारापत्तेः तत्र विशेषणांश एव तद्भावाभ्युपगमेन सर्वोपपत्तौ विशेष्यीभूतघ-टादावपि द्रव्यत्वाभावादिसम्बन्धकल्पने गौरवं चेदत्रापि तथैवास्तु। विशेषणांशे तत्सत्त्वस्यात्रैव त्वयापि क्लृप्तत्वात्।

विशिष्टस्य विशेष्याद्भिन्नत्वस्य स्वीकारे तु प्रतीचीवृत्तित्वविशिष्टवृक्षादौ वस्तुनि कपिसंयोगाभावा-ङ्गीकारान्न काचित्क्षतिः। मूलाग्रयोर्वृक्षांशत्वेऽपि प्रत्येकांशैर्वृक्षस्य भेदस्यापि सत्त्वेन तस्य मूलादिनिरूपिताधेय-भावादिसम्बन्धाभ्युपगमे 'मूले वृक्षः संयोगी नाग्रे' इत्यादावपि 'प्राच्यां वृक्षः संयोगी न प्रतीच्याम्' इत्यादा-वुक्तरीतिरेवानुसन्धेया। 'इदानीं गोष्ठे गौर्न मन्दुरायाम्' इत्यत्राप्येतत्कालवृत्तित्वविशिष्टगोव्यक्तेर्गोष्ठवृत्तित्वं मन्दुरावृत्तित्वं वा गोष्ठवृत्तित्वविशिष्टगव्यैतत्कालवृत्तित्वं मन्दुरावृत्तित्वविशिष्टगव्यैतत्कालवृत्तित्वं वा प्रतीयते। न त्वेतत्काले गोष्ठावच्छेदेन गौर्मन्दुरावच्छेदेन तदभावश्च। उक्तरीत्यैवोपपत्तावप्रामाणिकावच्छेदकताभानाङ्गी-कारायोगात्। 'इदानीं गोष्ठे गौर्न तदानीम्' इत्यत्रापि गोष्ठ एव कालविशेषावच्छेदेन गोतदभावौ न प्रतीयेते; देशवृत्तित्वविशिष्टगव्यस्य काले कालवृत्तित्वविशिष्टगव्यस्य देशे वा निरवच्छिन्नस्य प्रतीत्यनुरोधेन क्लृप्तस्यैवाभ्यु-पगमेन निर्वाहे एकस्मिन्नेव तत्तदभावभानस्याप्रामाणिकत्वात्। 'अग्रे वृक्षः न कपिसंयोगी' इत्यादौ अग्रादिसम्बन्ध-विशिष्टवृक्षादिसम्बद्धसंयोगादीनामप्रामाणिकानामेव भवताभ्युपगमे तु वृक्षे प्रतीयमानसंयोगादन्यस्य सत एव अभावप्रतियोगितया भानेन नैकस्मिन् तत्तदभावौ सेत्स्यतः। न च प्रतियोग्यधिकरणे तदभावस्य तद्भावाङ्गी-कारे तेषां विरोधाभावायैऽवच्छेदककालभेदोऽभ्युपेयस्त्वयापीति वाच्यम्। तयोः प्रतियोगिना सह कालिकविरोध-स्यैवाभ्युपगन्तव्येन दैशिकविरोधानङ्गीकारात्। अप्रामाणिकप्रतियोगिकस्यैवात्यन्ताभावस्याङ्गीकारपक्षे तत्रापि दैशिकविरोधवार्ताभावात्। एवं ...आकाशादीनामपि परस्परभेदपक्षेऽपि सविशेषाभेदस्य ...अपि सह तादृशा-भेदस्यैव सत्त्वेन प्रतियोगितदभावादिसत्त्वात्[1] एवमपि पूर्वोक्तरीतिरनुसन्धेया। न च सप्तम्या अवच्छेदकतार्थ-कत्वस्य 'वीणायां शब्दः' इत्यादौ दृष्टत्वात्तदनुरोधेन 'मूले वृक्षः संयोगी' इत्यादौ अवच्छेदकताबोधो युक्त इति वाच्यम्। मन्मते कारणगुणानां कार्यसङ्क्रमाङ्गीकारेण वीणायामपि पृथिव्यभिन्नायाः शब्दाधिकरणत्वा-ङ्गीकारेणात्र सप्तम्या अवच्छेदकतार्थकत्वाभावात्। अवच्छेदकताव्यपदेश एव नास्तीति वादिनं सप्तम्यास्तदर्थत्व-स्याक्लृप्तत्वाच्च। एतज्जातीयावच्छेदकताया सप्तमीसमभिव्याहारस्थले बोधाङ्गीकारे

'लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः।
नीलः खुरविषाणाभ्यां स मेध्यः पशुरुच्यते॥'

इत्यत्र सप्तम्या अवच्छेदकतार्थकत्वे रूपस्याव्याप्यवृत्तित्वापत्त्या चित्ररूपाङ्गीकारवैयर्थ्यापत्तेः। एवम्

---

[1] प्रतियोग्यधिकरणेन निर्विशेषत्वेनाभिन्ने तदभावस्य न सत्त्वमिति नियमो वा अत्यन्ताभावो वा अप्रामाणिकप्रतियोगिक एवेति नियमपक्षे न प्रतियोग्यधिकरणवृत्तित्वप्रसक्तिरभावस्येत्युक्तरीतिर्बोध्या।

(द्वै. वृ) 'अकृश कुचयोः कृश वलग्ने विपुल चक्षुषि विस्तृत नितम्बे ।
अधरेऽरुणमाविरस्तु चित्ते करुणाशालि कपालिभागधेयम् ॥'

इत्यादौ सप्तम्या अवच्छेदकत्वार्थकत्वाङ्गीकारे अपार्थकत्वापत्ति । अकृशत्वविस्तृतत्वादीना कुचादिनिष्ठबह्ववयवसमवेतत्वादिरूपाणा परिमाणविशेषरूपाणा वा कुचाद्यवच्छिन्नत्वायोगात् । न हि शरीरस्य कार्श्यं पौष्ट्य वा वलग्नकुचाद्यवच्छिन्न युक्तम् । एकस्यावयवस्य कृशत्वे पुष्टत्वे शरीर कृश पुष्टमिति व्यवहारापत्ते । न च भूयसामवयवाना सयोग एव पौष्ट्यम् । अल्पीयसामवयवाना संयोग एव कार्श्यम् । तेषां किञ्चिदवच्छिन्नत्व युक्तमिति वाच्यम् । तेषा तदवयवनिष्ठाना तावदवयवसमेतकुचवलग्नाद्यवच्छेदेन शरीरवृत्तित्वायोगात् । तस्मात् मुखरूपावयवनिष्ठपाण्डुरत्वादीना कुचरूपावयवनिष्ठाकार्श्यादीना तद्घटितपरम्परासम्बन्धेनाधिकरणता तादृशवाक्याद्बोध्यत इत्येव वक्तव्यम् । तथा च 'मूले वृक्षः कपिसयोगी' इत्यस्यापि तदविशेषात्कुतोऽवच्छेदकत्वार्थकत्वे प्रत्याशा सप्तम्याः तदभिलाप्यप्रत्यक्षस्याप्यवच्छेदकत्वाव[1]गाहित्वम् । किञ्च भावाभावयोरेकस्थितिनिर्वाहिकावच्छेदकताया सप्तमीबोध्यत्वे घटपटोभयनिष्ठद्वित्वाभावस्य प्रत्येकवृत्त्येकत्वावच्छेदेनोभयत्वस्य [2]द्वित्वान्तरावच्छेदेन त्वदङ्गीकृतत्वात् 'घटपटयोर्द्वित्वे द्वित्व घटे' 'एकत्वे न द्वित्वम्' इति प्रतीतिव्यवहारयोरापत्ति । न च सा अव्याप्यवृत्तितानिर्वाहिकाप्येतदवच्छेदकताविजातीयैव सा न सप्तमीवाच्या । किन्त्वधिकरणे विशेषणतयैव भासमानं द्वित्वादिकं ससर्गतयैव भासत इति वाच्यम् । द्वित्वाधिकरणे घटे द्वित्वाभावस्यैवाप्रामाणिकतया तन्निर्वाहायावच्छेदकताभानादिकल्पनायोगात् । न च 'इमौ द्वौ न त्वेक ' इत्यादिप्रतीतिरेव प्रत्येक द्वित्वाद्यभावसत्त्वमधिकेति वाच्यम् । तत्र द्वित्वनित्वादावेकमात्रवृत्तित्वादेरभावबोधनात् । अभिलापकवाक्येऽप्येकादिपदाना सावधारणत्वात् । अन्यथा 'रूपघटौ न गुणौ न द्रव्ये किन्त्वेक एव' इत्यादिव्यवहारतन्मूलप्रतीत्यनुरोधात् रूपघटोभयत्वावच्छेदेन रूपे गुणत्वाभाव घटे द्रव्यत्वाभावोऽपि सिद्ध्येत् । अविशेषात् ।

यदि च रूपघटोभयनिरूपितवृत्तित्वाभावस्य द्रव्यत्वे गुणत्वे क्लृप्तस्यैव भानाभ्युपगमसम्भवे रूपादौ उभयत्वाद्यवच्छेदेन तदभावसम्बन्धकल्पने गौरवम् । केवलान्वयिभिन्नव्याप्यवृत्तिधर्ममात्रविलोपापत्तिश्च । अतस्तादृशवाक्यमुक्तार्थे पारिभाषिकम्, तद्बोधो वा कथञ्चिदुपपाद्य, तन्मूलभूतप्रतीतिरपि न द्रव्यत्वाद्यभावविषयिणी, किन्तु द्रव्यत्वादावुभयवृत्तित्वाभावविषयिणीति मन्यसे तत्सर्वं प्रकृतेऽप्यविशिष्टम् । प्रत्येकैकमात्रवृत्तित्वाभावस्य द्वित्वादौ क्लृप्तत्वात् । रूपे न गुणत्वमिति प्रतीत्यभाववद्घटे द्वित्वं नास्तीति प्रतीत्यभावस्यापि तुल्यत्वात् ।

एव 'हस्ते मे सुखं, पादे मे दुःखम्' इत्यत्रापि देहात्मतादात्म्यभ्रमाङ्गीकर्तृपक्षे देहांशस्यैव हस्तादेरात्मांशत्वग्रहस्यावर्जनीयतया 'मूले वृक्षः सयोगी' इत्यत्रेवोपपत्तिरूह्या । तदनङ्गीकारेऽपि सुखदुःखादिसाधनीभूतपदार्थसम्बन्धतज्जन्यविकृतिविशेषादीना हस्तादिभागनिष्ठत्वावगाहितया तत्प्रतीत्युपपत्ति । सिद्धान्ते अणोरपि

---

[1] गाहित्वे इति पाठेन भाव्यमिति भाति ।

[2] द्वित्वावच्छेदेन इति पाठेन भाव्यमिति भाति ।

'द्वै धु', जीवस्यांशेन शरीरस्य,सत्त्व दन्त करणपरिणामभूतसुखदु खादिना तत्तदंशेन च भासकत्वात् इत्यप्रतीत्युपपत्ति । इत्यनिष्ठत्वस्यांशो नैव भ,नात् । एव 'घटे इद ज्ञान घटत्वप्रकारक न घटत्वे' इत्यत्रापि घटविशेष्यता,निरूपितत्व घटत्वप्रकारतायां भासते । न तु घटावच्छेदेन घटत्वप्रकारकत्वम् अन्यथा 'इद ज्ञान घटत्वांशे घटविशेष्यकं घटविषयकम्' इत्यादिप्रतीतेरवारणीयतया घटविशेष्यकत्वघटविषयकत्वादेर्घटत्वप्रकारकत्वावच्छेदकत्वसिद्ध्यापत्त्या तस्याप्यव्याप्यवृत्तित्वापत्ते । तस्मात् कुत्र प्यव्याप्यवृत्तित्वनिर्वाहकविलक्षणावच्छेदकतासत्त्वे मान तन्निर्वाहकमव्याप्यवृत्तित्व चेति स्थितम् ।

न चैवमपि कार्यकारणादीना भेदाभेदयोस्स्वरूपाऽङ्गीकृतत्वादवच्छेदकभेद विना विरुद्धयोस्तयो कथमेकत्र स्थितिरिति वाच्यम् । भेदाभेदव विरुद्धयोर्विरोधस्यैवानङ्गीकारेणैक वच्छेदेनैव तयोर्वृत्त्यङ्गीकारात्तत्र वच्छेदककल्पनस्याकिञ्चित्करत्वात् । अत्यन्तभेदस्यैवाभेदसमानाधिकरण्यरूपविरोधस्याङ्गीकृतत्वात् अत्यन्तभेदसामानाधिकरण्यासहिष्णोरप्यभेदस्य तज्जातीयभेदविशेषसमानाधिकरण्य तु सिद्धान्ते विशेषशक्त्योपपादने । अन्यै रीत्यन्तरेणेत्यन्यदेतत् । यथा विशेषस्य परामिमत वच्छेदकतावैलक्षण्य तथा विशेषनिरूपण एव वक्ष्याम । एव पराभिमत प्रतियोगिता,कारणत्वाधारत्वादिनिरूपितावच्छेदकता,भ्यवविलक्षणद्वय धर्मसम्बन्धनिष्ठे ऽप्रामाणिक एव ।

ननु कथ प्रमाणाभाव । घटो नास्तीति प्रतीत्या घटत्वे प्रतियोगितावच्छेदकत्वावगाहनात् । तत्र घटप्रतियोगिकत्वेनैवाभावभानाङ्गीकारे घटवति भूतलेऽपि घटो नास्तीति प्रतीतिव्यवहारयोरापातात् । न च घटत्वादे प्रतियोगितावच्छेदकत्वसत्त्वेऽपि कदाचिद्घटप्रतियोगिकत्वमात्रेण तादृशाभावभाने तत्तात्पर्यकव्यवहारे बाधकाभावात् तादृशवाक्यप्रामाण्यादापत्तौ व्यर्थोऽवच्छेदकत्वाभ्युपगम । न हि तद्व्यवहारे तत्प्रतीतौ वा तत्र विद्यमान सर्वं भासत एवेति नियम । तथात्वे घटादिरूपाद्यविषयकव्यवहारस्य तत्परिमाणविशेषाद्यविषयकस्य सम्मुग्धज्ञानस्य चाभावापत्तेरिति वाच्यम् । तत्प्रतिकाप्यप्रतीतितदङ्गितव्यवहारयो. प्रतियोग्यंशे यादृशधर्म प्रकारतया भासते तद्धर्मावच्छिन्नप्रतियोगिताकत्वेनैवाभावावगाहित्वनियमाङ्गीकारेणोक्तदोषाभावात् । मैवम् । उक्तनियमाङ्गीकारेऽपि नीलघटवति विद्यमानरक्तघटत्वावच्छिन्नप्रतियोगिताकाभावस्य घटत्वावच्छिन्नप्रतियोगिताकत्वाव्याहत्या पूर्वोक्तातिप्रसङ्गतादवस्थ्यात् । रक्तत्वघटत्वोभयपर्याप्ताया अप्यवच्छेदकताया घटत्वपर्याप्तत्वाक्षत्या घटत्वपर्याप्तावच्छेदकता भासते इत्युक्तावप्यनिस्तारात् । घटत्वनिष्ठरक्तत्वनिष्ठावच्छेदकत्वयोरनवच्छिन्नत्वावच्छिन्नत्वरूपविरुद्धधर्मशालिनोर्भिन्नतया प्रत्येकमेव पर्याप्तत्वेन घटत्वमात्रपर्याप्तावच्छेदकतेत्युक्तावप्यनिस्तारात् ।

न च तत्प्रतियोगितानिरूपितावच्छेदकतात्वेनान्यापि पर्याप्तिर्घटत्वरक्तत्वोभयनिष्ठा स्वीक्रियते । तादृशपर्याप्तिप्रतियोग्यवच्छेदकतानिरूपकप्रतियोगिता ससर्गतया रक्तघटो नास्तीत्यादौ भासते । घटो नास्तीत्यादौ स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगितानिरूपकपर्याप्त्यनुयोगितावच्छेदकघटत्वनिष्ठैकत्वकप्रतियोगितात्वेन

(द्वै मु) वाक्या या विलक्षणा पर्याप्तिस्तत्प्रतियोग्यवच्छेदकताकप्रतियोगितात्वेन वा संसर्गतया भासते। रक्तघटाभावे उक्तविलक्षणपर्याप्तिप्रतियोग्यवच्छेदकतानिरूपकप्रतियोगितासम्बन्धेन घटस्याभावान्न नीलघटादिमति भूतले रक्त-घटाभावावगाहित्वेन घटो नास्तीत्यादिप्रतीतिव्यवहारयो प्रामाण्यमिति वाच्यम्। घटाभावस्थले या तत्प्रतियो-गितानिरूपितावच्छेदकता तन्निष्ठतद्व्यक्तित्वावच्छिन्नप्रतियोगितानिरूपकपर्याप्त्यपेक्षया विलक्षणायास्तत्प्रतियो-गितानिरूपितावच्छेदकतात्वाख्येन तन्निष्ठतद्व्यक्तित्वसमनियतधर्मेणावच्छिन्नप्रतियोगिताकपर्याप्तेः सत्त्वे मानाभावेन घटाभावादौ तद्घटितसम्बन्धस्याप्यप्रसिद्ध्या तद्भानायोगात्।

न च प्रतियोगितैव निरूपितत्वसम्बन्धेन स्वावच्छेदकतासु विद्यमाना तन्निष्ठपर्याप्तिप्रतियोगिता प्रत्यवच्छे-दिका स्वीक्रियते। सा च स्वनिरूपितावच्छेदकतानां नानात्वे तासामनुगमिका। यत्र स्वनिरूपितावच्छेदकता एकत्रैव वर्तते तत्र तादृशावच्छेदकतानिष्ठतद्व्यक्तित्वात्मिकैवेति तदन्यतद्व्यक्तित्वस्य तत्र सत्त्वे मानाभावात् तदभावनिरूपिता या प्रतियोगिता निरूपितत्वसम्बन्धेन तद्विशिष्टत्वावच्छिन्नप्रतियोगिकपर्याप्तिरेव तादृशपर्याप्तित्वे-नाभावबुद्धिनिष्ठतत्समभिव्याहारविशिष्टवाक्यविशेषजन्यतावच्छेदककोटौ घटादिबुद्धिप्रतिबन्धकतावच्छेदककोटौ च निवेश्यते। अनुगतव्यवहारोऽपि तथैव सङ्गच्छत इति वाच्यम्। घटाभावादिस्थलीयप्रतियोगितावच्छेदकता-व्यक्ते 'तद्व्यक्तिर्घटत्वमात्रे वर्तते' इति प्रतीतौ भानं वर्तते। तत्र भासमानं तद्व्यक्तित्वं वस्त्वन्तरावगाहिप्रतीतौ यादृशरीत्या तदीयतद्व्यक्तित्वं भासते तथैव भासत इत्यभ्युपेयम्। तदपेक्षयैतत्प्रतीतौ तद्व्यक्तित्वभानांशे वैल-क्षण्यस्यानुभवविरुद्धत्वात्। तथा च यदि तद्व्यक्तित्वं सर्वत्राखण्डो धर्मः स्वरूपसम्बन्धेन भासते तत्रापि तथैव। यदि नाखण्डो धर्मः तत्स्वीकारे मानाभावः। किन्तु स्वयमेव स्वांशे तादात्म्येन स्वरूपतो भासमानं सत्तद्व्य-क्तित्वमिति व्यवह्रियते इतरव्यावर्तकमपि भवतीत्युच्यते प्रकृतेऽपि तथैवेति निरूपितत्वसम्बन्धेन विद्यमानाया तत्प्रतियोगिताव्यक्ते कथमवच्छेदकतानिष्ठतद्व्यक्तित्वात्मकता।

किञ्च सा प्रतियोगिताव्यक्ति संसर्गनिष्ठावच्छेदकतायामपि निरूपितत्वसम्बन्धेन वर्तत इति उभयनिष्ठा कथमेकमात्रवृत्तितद्व्यक्तित्वरूपा भवेत्। अपि च सा प्रतियोगिताव्यक्ति निरूपितत्वसम्बन्धेन वर्तते तदवच्छे-दकतायाम्। तन्निरूपिता घटत्वनिष्ठाधारता निरूपकतया वर्तते। तदवच्छेदकतानिष्ठ यद्घटत्वनिरूपितमाधेयत्व स्वरूपसम्बन्धेन विद्यमानं भवति। तथा च विनिगमनाविरहात् त्रयाणामपि तद्व्यक्तित्वरूपत्वापत्त्या तद्व्यक्तित्वे तदवगाहिप्रतीतीनामपि वैलक्षण्यं अनुभवविरुद्धं स्यात्। स्याच्च तत्तदवच्छिन्नप्रतियोगिकपर्याप्तीनां वैलक्षण्य तत्तद्घटितप्रतिबन्धकतावच्छेदकादिरूपबाहुल्यप्रयुक्तं प्रतिबन्धकत्वादीनामपि बहुत्वम्।

अथ मास्तु घटाभावीयप्रतियोगितावच्छेदकतायास्तत्प्रतियोगितानिरूपितावच्छेदकतात्वेन विलक्षणा पर्याप्तिः। [1]तन्निष्ठतद्व्यक्तित्वावच्छिन्नप्रतियोगिकैव। सा च घटत्वमात्रे पर्याप्ता। न चैवं घटाभावनिश्चय-निष्ठघटवत्ताबुद्धिप्रतिबन्धकतावच्छेदकादिकोटौ घटत्वमात्रपर्याप्तावच्छेदकत्वेन तन्निवेशोऽपि पूर्वोक्तरीत्या रक्त-

[1] किंतु तन्निष्ठ इति पाठेन भाव्यमिति भाति।

(द्वैधु) घटाभावादिबुद्धिव्यावर्तनानुपपत्तिरिति वाच्यम्। तादृशपर्याप्तेरेव तद्व्यक्तित्वेन विलक्षणपर्याप्तित्वेन वा निवेशेन सामञ्जस्यात्। रक्तघटाभावादिनिश्चयस्थले पूर्वक्षणवृत्तित्वविशिष्टरक्तघटाभावादिनिश्चयव्यावृत्तये रक्तत्वघटत्वोभयनिष्ठ यद्द्वित्वं तदवच्छिन्नानुयोगिकपर्याप्तिकावच्छेदकत्वात्वेन।

यद्यपि तत्तद्घटनिष्ठं रक्तत्वं भिन्नं तत्तद्घटनिष्ठोभयत्वं भिन्नं तत्तदवच्छिन्नानुयोगिकपर्याप्तयोऽपि भिन्नाः, तथापि रक्तत्वघटत्वोभयत्वावच्छिन्नानुयोगिकपर्याप्तित्वाद्यनुगतरूपेण तासां निवेशात् न तदननुगमनिबन्धनो दोषः। नानाधर्माणामवच्छेदकत्वस्थलेऽवच्छेदकतानां तद्व्यक्तित्वावच्छिन्नप्रतियोगिकपर्याप्तिमत्योऽन्यास्तत्प्रतियोगितानिरूपितावच्छेदकतात्वरूपाऽनुगतधर्मावच्छिन्नपर्याप्तिमत्यः। पूर्वक्षणवृत्तित्वविशिष्टरक्तघटाभावादिस्थले तु अवच्छेदकत्वतानां तद्व्यक्तित्वावच्छिन्नप्रतियोगिकपर्याप्तिः तत्तद्रक्तत्वघटत्वतदुभयनिष्ठत्वे। तत्प्रतियोगितानिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिकपर्याप्तिस्तु तत्तद्रक्तत्वघटत्वतद्द्वैशिष्ट्यरूपत्रित्वावच्छिन्ने, न तु घटत्वरक्तत्वोभयत्वावच्छिन्नानुयोगिकपर्याप्त्यन्तरम्। मध्यपतितपर्याप्तेर्मानाभावात्। तथा च रक्तत्वघटत्वोभयत्वावच्छिन्नप्रतियोगिकपर्याप्तिकावच्छेदकत्वत्वेन निवेशे पूर्वक्षणवृत्तित्वविशिष्टरक्तघटाभावादिव्यावृत्तिसम्भवत्येव।

न चैव शुद्धवह्निसाधकव्याप्तेर्महानसीयवह्निसाध्यकस्थलीयव्याप्तेश्चैकेन साध्याभाववदवृत्तित्वमित्यादिशब्देन बोधनानुपपत्तिः। तस्य साध्यतावच्छेदकपर्याप्त्यवच्छेदकताकाभावघटितार्थकत्वे महानसीयवह्न्यभावाद्यव्यावर्तनाद्दोषः। साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकावच्छिन्नानुयोगिकपर्याप्तिप्रतियोग्यवच्छेदकतानिरूपकप्रतियोगिताकाभावघटितार्थकत्वे वह्न्यादिस्थले अप्रसिद्धिः। प्रतियोगितावच्छेदकताया इव वह्नित्वनिष्ठसाध्यतावच्छेदकताव्यक्तेस्तद्व्यक्तित्वेनैव पर्याप्ततया साध्यतावच्छेदकतात्वेनापर्याप्तेरिति वाच्यम्। शब्दानुगमस्याकिञ्चित्करत्वेनानादरणीयत्वाद् अतो न कोपि दोष इति चेन्नैवम्। घटाभावादिनिश्चयस्य तादृशपर्याप्तितावच्छेदकताकाभावनिश्चयत्वेन प्रतिबन्धकत्वे प्रमेयत्वादिना तन्निश्चयस्य प्रतिबन्धकत्वापत्तेः घटाभावत्वादिना घटाभावादिनिश्चयस्याप्रतिबन्धकत्वापत्तेश्च तादृशपर्याप्त्यादिघटितरूपावच्छिन्नविषयकनिश्चयत्वेन प्रतिबन्धकत्वादौ वक्तव्ये तत्र तत्पर्याप्त्यसाधारणीभूततादृशरक्तत्वघटत्वोभयत्वावच्छिन्नानुयोगित्वादिधर्मस्फुरणाभावेन रक्तघटो नास्तीत्यादिबुद्धेस्तद्बुद्धौ विरोधित्वाभावापातात्। रक्तत्वघटत्वोभयोरेवोपस्थितत्वेन तन्निष्ठोभयत्वादेरस्फुरणात्। न च संसर्गघटकतया भाने न पूर्वं तदुपस्थित्यपेक्षेति वाच्यम्। एवमपि रक्तत्वादेः प्रत्येकं पर्याप्तीनां तन्निष्ठत्वावच्छिन्नानुयोगिकानां तावत्साधारणोभयत्वावच्छिन्नापरपर्याप्तेरज्ञानस्य तादृशप्रतीतावप्रामाणिकस्य कल्पनया महागौरवेण प्रतिबन्धकतावच्छेदकादिधर्मनिर्वाहापेक्षया तादृशप्रतियोगितात्वस्यैवावच्छेदकतानिरूपकत्वाद्यनिबन्धनं स्वाभाविकं वैलक्षण्यमभ्युपगम्य सर्वस्य निर्वाहे अन्यत्वेनावच्छेदकत्वादेरप्रामाणिकत्वात्।

(द्वै धु) किञ्च रक्तघटाभावादिप्रतियोगिनानिरूपितावच्छेदकता संयोगसंसर्गादिष्वपि वर्तत इति तत्साधारण तत्प्रतियोगितानिरूपितावच्छेदकतात्व कथं तदवृत्त्युभयत्वावच्छिन्नानुयोगिकपर्याप्तिप्रतियोगितावच्छेदक भवेत्। न चावच्छेदकतात्वव्याप्य धर्मविधयाऽवच्छेदकतात्वाख्य संसर्गविधया अवच्छेदकतात्वाख्यं च धर्मद्वयम्। तत्र तत्प्रतियोगितानिरूपितत्वविशिष्टाद्यधर्म एव तादृशपर्याप्त्यवच्छेदक । अतो न दोष इति वाच्यम्। एवमपि तत्तद्रक्तत्वघटत्वोभयत्वावच्छिन्नपर्याप्तीना भिन्नतया तत्तत्प्रतियोगितानामपि तत्तन्निरूपिताना तत्तदवच्छेदकतानिष्ठाना भिन्नतया तत्तदतिप्रसक्तोक्तधर्मस्य तदवच्छेदकत्वायोगात्। न च रक्तत्वघटत्वोभयत्वावच्छिन्नानुयोगिक पर्याप्तिप्रतियोगितात्वेन तासामनुगमनान्न तदवच्छिन्न प्रत्यतिप्रसक्तत्वमिति वाच्यम्। तादृशानुगमकधर्मस्य सम्बन्धान्तरावच्छिन्नरक्तघटाभावादिप्रतियोगितावच्छेदकतापर्याप्तिप्रतियोगितास्वपि सत्त्वेनातिप्रसक्तत्वेन तत्प्रतियोगितानिरूपितत्वघटितोक्तधर्मं प्रत्यवच्छेद्यतावच्छेदकत्वायोगात्।

न च यावन्तोऽवच्छेद्या भवन्ति तावन्निष्ठान्यतमत्वमेव तदनुगमकमस्त्विति वाच्यम्। तावन्निष्ठतत्तज्ज्ञानविषयत्वादीनामनन्तानामपि विनिगमनाविरहेणावच्छेद्यतावच्छेदकत्वादिस्वीकारापत्त्याऽप्रामाणिकमहागौरवापत्तेः। न चातिप्रसक्तानामप्युक्तधर्माणा पर्याप्तिरूपसंसर्गप्रतियोगितावच्छेदकत्वादि स्वीक्रियते। द्रव्यत्वसत्त्वादेर्घटादिसंयोगादिप्रतियोगितावच्छेदकत्वादिवदिति वाच्यम्। दृष्टान्तस्यैवासम्मते। अभावघटयोरपि प्रतियोगिताया संसर्गतया कार्यकारणयोस्तत्त्वयो. संसर्गतया तत्राप्यतिप्रसक्तन्यूनधर्माणामप्यविशेषेणावच्छेदकत्वापत्त्या अवच्छेदकानवच्छेदकभेदस्यैवासिद्धिप्रसङ्गात्। न ह्यत्र विनिगमक मानमस्ति। नाप्यवच्छेदकतात्व तद्व्याप्यमुक्तधर्मद्वय तादृशपर्याप्त्यादिक च प्रामाणिकम्। येन तन्निर्वाहायैव सर्वमेतत्कल्पनार्हं स्यात्। न च 'शुद्धवह्नित्व न महानसीयवह्न्यभावीयप्रतियोगितावच्छेदकम्। किन्तु वह्न्यभावीयप्रतियोगितावच्छेदकम्। वह्नित्व धर्मविधया प्रतियोगितावच्छेदकम्। संयोगस्तु संसर्गविधयाऽवच्छेदक' इत्यादिप्रतीतयस्तत्प्रमाणानीति वाच्यम्।

लोके कस्याप्येतादृशप्रतीतेरभावात्। अन्यथा घटपटादिस्वरूपेष्ववावच्छेदकत्वस्वरूपे विवादस्यैवाभावप्रसङ्गात्। नैयायिकशास्त्रवासनाविजृम्भितान्तःकरणाना स्वबुद्धिमात्रपरिकल्पितप्रतीतिस्त्वकिञ्चित्करी। अन्यथा भट्टमतसिद्धप्रत्यक्षानुरोधेन ज्ञाततायास्तस्या घटत्वप्रकारकत्वादेः सिद्धिप्रसङ्गात्। केवलमभावप्रतीतीना वैलक्षण्यनिर्वाहायैतत्कल्पना तूभयसिद्धप्रतियोगितास्वेव वैलक्षण्यसिद्ध्यान्यथासिद्धैव। धर्मिकल्पनात इत्यादिन्यायात्।

किं चैकत्वप्रागभावविशिष्टघटस्य संयोगेन योऽभावस्तस्य केवलान्वयित्वम्। संयोगेन तद्विशिष्टाधिकरणस्याप्रसिद्धेः। आद्यक्षण एवैकत्वप्रागभावस्य सत्त्वेन तदा घटस्य निर्गुणतया संयोगाप्रतियोगित्वात्। तदुपलक्षितस्य तु संयोगेनाभावो व्यतिरेकी। घटविरोधितयोर्वैलक्षण्यं तु नावच्छेदकवैलक्षण्यात्। उभयत्रैकत्वप्रागभावस्यैकस्यैवावच्छेदकत्वात्। किन्तु प्रथमस्य प्रतियोगिता विशिष्टे पर्याप्ता। द्वितीयस्य तु प्रतियोगिता एकत्वप्रागभावावच्छिन्ना शुद्धे पर्याप्तेति प्रतियोगितानिष्ठवैलक्षण्यमेव तत्रान्ततः शरणीकरणीयमिति सर्वत्रापि प्रतियोगि-

(द्वेषु) तन्निष्ठवैलक्षण्यमाश्रित्य घटो नास्तीत्यादिवाक्यकार्यतावच्छेदकं तादृशविलक्षणप्रतियोगितानिरूपकबुद्धित्व-मित्यादरेणैव रक्तघटवति घटो नास्तीत्यादेः प्रामाण्यवारणसम्भवादन्तर्गडुरवच्छेदकत्वमप्रामाणिकमेव ।

तर्कालङ्कारादयस्तु महानसीयवह्न्यभावादिस्थले महानसीयत्वनिष्ठावच्छेदकता महानसीयत्ववह्नित्वरूप-सम्बन्धाभ्यामवच्छिन्ना । वह्नित्वनिष्ठा पुनः समवायावच्छिन्नाऽनवच्छिन्ना च अत उभयत्रैकावच्छेदकता व्यास-ज्यवृत्ति । अत प्रत्येकमेव तया पर्याप्तिः । तत्प्रतियोगितानिरूपितावच्छेदकत्वावच्छिन्नप्रतियोगिके व्यासज्यवृत्तिपर्याप्त्यन्तरे मानाभावः । न च 'वह्नित्वं न महानसीयवह्न्यभावीयप्रतियोगितावच्छेदकम्' इति प्रतीत्यनुपपत्तिः । तादृशपर्याप्त्यन्तरस्वीकारे तु तत्प्रतियोगितानिरूपितावच्छेदकतात्वावच्छिन्नस्य तेन सम्बन्धेन व्यासज्यवृत्तित्वात् प्रत्येकं तदवच्छिन्नभेदस्य सत्त्वात्तत्प्रतीत्युपपत्तिरिति वाच्यम् । लौकिकानां तादृशप्रती-त्यसिद्धेः ।

अथैवं सति मण्यभावादेर्दाहादिकं प्रति कारणतावच्छेदकनिरुक्तयोगः, मणित्वपर्याप्त्यवच्छेदकता-कप्रतियोगिताकाभावत्वस्य क्षणविशेषविशिष्टतत्तदभावसाधारण्यात् । न च मणित्वेनानवच्छिन्ना मता मणित्व-निष्ठानवच्छिन्नावच्छेदकताकप्रतियोगिताया निरूपकाभावत्वमेव तथास्त्विति वाच्यम् । उक्तप्रतियोगिताया क्षणविशेषवृत्तित्वावच्छिन्नत्वसत्त्वेऽप्यवच्छिन्नत्वघटाभयाभावादेः सत्त्वेन तद्वारणात् । तत्राप्युक्तरीत्या विशेषणा-न्तरदाने तत्परम्परयाऽनवस्थया तद्घटितधर्मस्य दुर्ग्रहत्वापत्तेः ।

न चानुयोगितासम्बन्धेन मणित्वविशिष्टमेवावच्छेदकमस्तु । यादृशानुयोगितानिरूपकतावच्छेदकतापरि-समाप्तिर्मणित्व एव तादृशानुयोगिताश्रयाभाव एव मणित्वविशिष्टे वर्तते इत्युक्तविशिष्टस्याभावव्यावृत्तिरिति वाच्यम् । प्रमेयत्वविशिष्टवह्निविषयकज्ञाने विषयतया वह्नेरिव विशिष्टमणिप्रतियोगिकेऽस्मिन् वेऽनुयोगितया मणि-सत्त्वे बाधकाभावाद्विशिष्टमण्यभावाव्यावृत्तिः । एवं कारणतावच्छेदकत्वेनाभिमतस्याकारणस्य वारण्यग्रहे तदव-च्छिन्ने कारणत्वस्य दुर्ग्रहत्वापत्तिवारणाय मणेरनुयोगिताविशेषेणाभावान्तरव्यावृत्तत्वञ्च नं वाच्यम् ; तत्रानु-योगिताविशेषपरिचयो यदि मणित्वपरिसमाप्तावच्छेदकताकनिरूपकताकत्वेन तदा मणित्वे स्ववृत्तित्वप्रतियोगि-ताकाभावरूपपरिसमाप्तत्वस्योभयाभावमादायाव्यावर्तकत्वेनानवस्थयाऽनुयोगिताविशेषपरिचयो दुर्घटः ।

ननु मणित्वान्यधर्मनिरूपितानि यानि यान्यवच्छेद्यत्वानि तत्तन्निष्ठतत्तद्व्यक्तित्वावच्छिन्नाभावकूटप्रतियो-गितात्वेन तत्परिचयो भवति । उक्तकूटमध्ये अवच्छेद्यत्वनिष्ठव्यक्तित्वमात्रावच्छिन्नाभावस्यापि पतितत्वात् । मणित्वान्यधर्मावच्छिन्ना प्रतियोगिता न तादृशकूटवतीति न तद्व्यावृत्तिः । मणित्वान्यत्वं मणित्वप्रतियोगिताक-भेद एव । घटो न घटपटोभयमित्यत्रैकत्वावच्छिन्नपर्याप्तिसम्बन्धावच्छिन्नप्रतियोगिताकोभयत्वात्यन्ताभावमानस्यै-वोपगमेन व्यासज्यवृत्तिधर्मावच्छिन्नभेदस्य तदाश्रयप्रतियोगिन्येतन्मतेऽनङ्गीकारान्न तादृशभेदमादाय स्वस्यापि स्वान्यत्वप्रसक्त्या तद्वारकविशेषणानवस्थेति चेन्न । अभावानां प्रतियोगिज्ञानं विना प्रत्यक्षायोगात् उक्ता-नन्तप्रतियोगितावच्छेदकानामसर्वज्ञदुर्ज्ञेयत्वेन तादृशाभावकूटवत्तया मणिप्रतियोगितापरिचयो दुर्घट एवेति

(द्वि बु.) चेन्न । मणिरत्र नास्तीति व्यवहारानुकूला या प्रतीतिस्तद्विषयीभूतवैलक्षण्यवत्त्वेन तादृशानुयोगिताऽपरिचयसम्भवादित्याहुः ।

तन्मतेऽवच्छेदकत्वादिभानमन्तरापि तन्निष्ठवैलक्षण्यभानावश्यकत्वे तस्य स्वत एवानुयोगितायाः सम्भवेन तन्निर्वाहायावच्छेदकत्वादिकल्पनाया अप्रामाणिकत्वस्य स्फुटत्वात्तदप्ययुक्तमेव ।

ननु घटो नास्तीति बुद्धेर्विशिष्टवैशिष्ट्यावगाहित्वमपरित्याज्यमेव । तदुपलक्षितावगाहित्वे घटत्वनिर्विकल्पकात्वमपि नदायते । तद्विशिष्टवैशिष्ट्यावगाहित्वं च तदवच्छिन्नप्रतियोगिताकत्वविशिष्टसंसर्गावगाहित्वमेव वक्तव्यम् । अन्यथा तदुपलक्षितज्ञानादस्य वैलक्षण्यानुपपत्तेः । अवच्छेदकतायाः विषयताकृतवैलक्षण्याङ्गीकारे साकारवादापत्तेः । तथा च घटत्वविशिष्टवैशिष्ट्यावगाहित्वानुरोधेन घटत्वावच्छिन्नप्रतियोगिताभानमावश्यकमित्यवच्छेदकत्वस्य प्रत्यक्षेणैव सिद्धिरिति चेन्न । संयोगप्रतियोगितावच्छेदकत्वादिजातीयस्यावच्छेदकत्वस्य भाने तस्यातिप्रसक्तादिसाधारणतया रक्तघटाद्यभावप्रतियोगितावच्छेदकतायाः घटत्वादावबाधितत्वेन तत्तात्पर्यकस्य नीलघटवति घटो नास्तीत्यादेर्घटत्वप्रमुख्यार्थकघटपदघटितवाक्यस्य प्रामाण्यापत्तेः । तद्विजातीयाभावप्रतियोगितावच्छेदकताभानं तु नोक्तयुक्त्या सिद्ध्यति ।

किञ्च द्रव्यवान् प्रमेयवान् सद्वान् दण्डवानित्यादिप्रतीतीनामप्युभयविधानां सत्त्वात्तत्र विशिष्टवैशिष्ट्यावगाहित्वानुरोधेन तत्तद्धर्मावच्छिन्नप्रतियोगिकवादीनां संयोगे स्वीकारे महागौरवम् । न च द्रव्यत्वादिविशिष्टवैशिष्ट्यावगाहिप्रतीतेर्भ्रमत्वमेवास्तु, येन तत्प्रामाण्यानुरोधेन द्रव्यत्वादिरूपयावद्द्रव्यभाविधर्मावच्छिन्नप्रतियोगिताकत्वं संयोगस्य सिध्येत् । किन्तु यादृशधर्मो यत्र कादाचित्कस्तदुपलक्षितावगाहिप्रतीतेः सर्वदा प्रामाण्यं तद्विशिष्टवैशिष्ट्यावगाहिप्रतीतेः कदाचिदेवेत्यनुभवानुरोधात् 'यदा यत्र यो धर्मो वर्तते तद्धर्माश्रयप्रतियोगिकः स सम्बन्धस्तद्धर्मावच्छिन्नप्रतियोगिताकः' इति स्वीक्रियत इति वाच्यम् । तथा सति यत्र भूतले रक्तघटो दृढतया स्थापितस्तदा रक्तत्वविशिष्टवैशिष्ट्यावगाहिप्रमानुरोधात्तादृशसंयोगव्यक्तेः रक्तत्वावच्छिन्नप्रतियोगिकत्वावश्यकत्वे तत्स्थले तथैव घटसत्त्वदशायामेव पाकेन रक्तनाशेन रूपान्तरोत्पत्तिस्तदा रक्तत्वविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षादेः उक्तजातीयस्य परमाण्ववगाह्यनुमित्यादेश्च प्रामाण्यापत्तेः । न च तद्घटनिष्ठसंयोगप्रतियोगितायाः तद्धर्मावच्छिन्नत्वं तदा न स्वीक्रियते तस्याव्याप्यवृत्तित्वाभ्युपगमादिति वाच्यम् । तस्य कालिकाव्याप्यवृत्तित्वे मानाभावात् । तावताऽपि तद्धर्मावच्छिन्नप्रतियोगिताकत्वस्य तत्संयोगे कदाचिद्विद्यमानत्वेन विषयाबाधात् तदातनप्रतीतेः प्रामाण्यापत्तेरपरिहारात् । न च तादृशप्रतीतौ विशिष्टसम्बन्धपर्याप्तावच्छेदकताकविलक्षणाधिकरणतैव भासते । सा तु घटे रक्तत्वनाशदशायां नश्यतीति वाच्यम् । घटस्य तत्रैव विद्यमानत्वेनाधिकरणतोत्पत्तिनाशयोरयोगात् । एतदपेक्षया रक्तत्वविशिष्टघटनाशरूपान्तरविशिष्टघटोत्पत्ती परिकल्प्यैव सर्वनिर्वाहस्यावश्यकत्वेनातिरिक्तविशिष्टाङ्गीकारस्यैवोचितत्वात् । विलक्षणाधिकरणतायाः तन्निरूपकत्वावच्छेदकत्वादीनां संसर्गविशेषघटकपदार्थेषु तदवच्छेदकत्वादिपर्याप्त्यादिकल्पनस्यातिगुरुत्वाच्च ।

(द्वै घु) न च संयोगसम्बन्धावच्छिन्नत्वेन प्रतियोगित्वानवगाहने संयोगेन घटो नास्तीत्याकारकत्वानुपपत्तिरिति वाच्यम्। भूतलानुयोगिकसंयोगप्रतियोगिकत्वविशिष्टघटादेरेव तत्राभावप्रतियोगितया भानेन तदभिलापकवाक्ये संयोगेनेत्युल्लेखोपपत्ते। प्रत्युत त्वन्मत एवानुपपत्तिः। संयोगावच्छिन्नप्रतियोगिताया एव प्रतियोग्यभावयोः संसर्गतया भानेन संयोगस्य संसर्गतावच्छेदकघटकस्य तृतीयान्तशब्देनोल्लेखे बीजाभावात्। अन्यथाऽवच्छिन्नत्वेन घटो नास्तीत्यभिलापापत्ते। अभिलापकवाक्ये संयोगेनेति तृतीयार्थावच्छिन्नत्वस्यान्वयानुपपत्तिश्च। अभावे घटे च अवच्छिन्नत्वस्य बाधात्। प्रतियोगितायाश्च पदानुपस्थितत्वात्। न च तृतीयार्थोऽवच्छिन्नप्रतियोगिताकत्वं प्रकृत्यर्थसंयोगान्वितमभावेऽन्वेति। घटादेरेव संयोगावच्छिन्नप्रतियोगितकत्वसम्बन्धेनान्वयबोध[1]तात्पर्यकं ग्राहक वा संयोगेनेति तृतीयान्तपदमिति वाच्यम्। संयोगेन भूतले घटो नास्ति भूतलसंयुक्तत्वेन घटो नास्तीति प्रतीत्योस्तुल्यकार्यकारित्वतुल्यविषयकत्वानुभवेन तृतीयाया वैशिष्ट्यार्थकत्वस्यैव युक्तत्वात्। किञ्च अवच्छिन्नत्वावच्छेदकत्वादौ प्रमाणं नास्तीति वादिनं प्रत्यवच्छिन्नप्रतियोगित्वादेस्तृतीयार्थत्वाङ्गीकारेणोक्तसमाधानासङ्गतिः। तृतीयाया वैशिष्ट्यार्थकत्वतात्पर्येण संयोगावच्छिन्नप्रतियोगितानिरूपितानुयोगितया भूतले घटो नास्तीति व्यवहारस्य तज्जन्यधियः संयोगेन घटवत्ताधीविरोधित्वस्य चापत्तिश्च। नञादिसमभिव्याहृतसम्बन्धवाचिपदोत्तर[2]तृतीयावच्छिन्नप्रतियोगिकत्वादौ निरूढलक्षणेत्यादिकल्पनस्य सम्बन्धस्य अभावप्रतियोगितावच्छेदकत्वसिद्ध्युत्तरकालिकत्वात्।

अपि चाभावप्रतियोगिताया वृत्त्यनियामकसम्बन्धावच्छिन्नत्वानङ्गीकर्तृप्राचीननये 'अस्मिन्नज्ञाने विषयतया घटो नास्मिन् ज्ञाने' इत्यादिव्यवहारतन्मूलप्रतीत्योर्घटनिरूपितविषयित्वाभाव एव ज्ञानादौ भासत इत्युपेयम्। तथा च त्वदुक्तनियमस्य व्यभिचारः। तथैव संयोगेन घटो नास्तीत्यादौ उपपत्तिसम्भवे सम्बन्धस्याभावप्रतियोगितावच्छेदकत्वादिभानकल्पनमयुक्तम्। न च संयोगेन घटो नास्तीत्यादौ घटसंयोगाभावस्य भानाङ्गीकारे संयोगेन घटवत्यपि संयोगेन घटो नास्तीति प्रतीत्यापत्तिः। घटसंयोगस्य समवायेन सत्त्वेऽपि सम्बन्धान्तरेण तदभावस्यापि सत्त्वादिति वाच्यम्। विषयितयाऽत्र घटो नास्तीत्यादौ उक्तानुयोगस्य तुल्यत्वात्। अथ तत्र घटनिरूपितविषयित्वस्य स्वरूपसम्बन्धावच्छिन्नाभाव एव प्रत्याय्यत इति चेदत्रापि संयोगस्य वस्तुतः समवायावच्छिन्नप्रतियोगिकत्वेन भवदभिमता या अभावव्यक्तिः सैव बोध्यत इत्यस्तु। तेनैव सामञ्जस्यात्। सम्बन्धस्य सम्बन्धान्तरकल्पनेऽनवस्थाप्रसङ्गेन कस्यचित्स्वरूपादेरन्ततः सम्बन्धानङ्गीकारेण विशिष्टबुद्धौ सम्बन्धमनपेक्ष्यैव स्वाभाविकधर्मधर्मिभावभानस्य वक्तव्यत्वात्। तादृशस्वरूपादिसम्बन्धो नास्तीत्यादिप्रतीतिसिद्धव्यतिरेक्यभावस्य सम्बन्धावच्छिन्नप्रतियोगिताकत्वस्य वक्तुमशक्यत्वाच्च। न च संयोगेन घटो नास्तीति धीर्यदि संयोगविशिष्टघटाभावं विषयीकुर्यात्तर्हि संयोगेन घटवत्ताबुद्धिं न विरुन्ध्यात्। नीलघटाभावग्रहस्येव विशेषाभावग्रहत्वादिति वाच्यम्। संयोगेन घटो नास्तीति धियः

[1] तात्पर्यग्राहक वा इति पाठेन भाव्यमिति भाति

[2] तृतीयाया सम्बन्धावच्छिन्न इति पाठेन भाव्यमिति भाति।

(द्वै ध्रु) संयोगविशिष्टघटाभावविषयिण्या घटसंयोगाभावविषयकत्वेन घटसंयोगो नास्तीति बुद्धिवत् तद्विरा-षित्वानपायात्। संयोगेन रूपं नास्तीति बुद्धेः रूपसंयोगाभावविषयकत्वे अप्रसिद्धप्रतियोगिकाभाववादे न किञ्चिदपि बाधकम्। तस्मान्नव्यमतेऽन्योन्याभावप्रागभावादीनामिवात्यन्ताभावप्रतियोगितापि संसर्गानवच्छिन्नैवेति दिक्।

कारणताकार्यतावच्छेदकत्वादिकमप्येतादृशमेव। मानाभावात्। न च दण्डः कारणं घटः कार्यमिति बुद्धिः प्रमा। प्रमेयदण्डो वा तद्व्यक्तिर्वा घटकारणमिति धीरप्रमेति न कस्यापि विवादः। तत्र दण्डत्वतद्व्यक्तित्वादि-सामानाधिकरण्यमात्रं यदि कारणताया विषयीभवति तदा प्रामाण्याप्रामाण्यव्यवस्था न घटत इति विशिष्टवैशिष्ट्यमिति मर्यादयैव कारणतावगाहिप्रत्ययः जायते। तत्र विशेषणतावच्छेदकीभूतदण्डत्वप्रमेयदण्डत्वाद्य-वच्छेद्यत्वं भासते। अतो दण्डत्वावच्छेद्यत्वसत्त्वात्प्रमेयदण्डत्वावच्छेद्यत्वासत्त्वादुक्तबुद्ध्योः प्रामाण्याप्रामाण्ये घटेते इत्यवश्यं वाच्यम्। अतः कथं मानाभाव इति वाच्यम्। प्रमेयदण्डत्वव्यक्तिर्वा घटकारणमिति बुद्धेरप्रमात्व-स्यैवासिद्धेः। ज्योतिष्टोमेन स्वर्गकामो यजेत वृष्टिकामः कारीर्या यजेतेत्यादौ ज्योतिष्टोमत्वस्वर्गत्वादिधर्माणां कारणताकार्यतावच्छेदकत्वबोधने बाधेन श्रुत्यप्रामाण्यापत्त्या कारणत्वादिग्राहकप्रमाणेन कारणत्वाद्याश्रयत्वेन प्रतीयमानपदार्थांशे प्रकारीभूतधर्मेषु कारणतावच्छेदकत्वावगाहित्वनियमस्य त्वया वक्तुमशक्यत्वेन प्रमेयदण्ड-तद्व्यक्तिर्वा घटकारणमित्यादिप्रतीतिप्रामाण्यस्येष्टत्वात्। अत एवैतद्व्यक्तिरपि घटकारणम्, अत एव सम्पादयामीति ज्ञानात् प्रवर्तमाना न भ्रान्ता भवन्तीति सर्वसम्मतम्।

न च स्वर्गादिपदं ज्योतिष्टोमादिजन्यविजातीयस्वर्गादिपरम्, [1]तद्वर्तित्वनिरूपितकारणतावच्छेदकत्वस्य ज्योतिष्टोमत्वादौ बोधने व्यभिचाराभावान्न किञ्चिद्बाधकम्। अथ वा इष्टसाधनत्वरूपविध्यर्थशरीरे संसर्गघटक-तया स्वर्गादिनिष्ठवैजात्यस्य भानेऽतः पूर्वं तदनुपस्थितावपि न दोषः। अतः कारणत्वादिग्राहकप्रमाणस्य तद-वच्छेदकत्वावगाहित्वनियमस्य न व्यभिचार इति वाच्यम्। स्वर्गादेरप्रत्यक्षत्वेऽपि वृष्ट्यादेः प्रत्यक्षसिद्धत्वेन तत्रो-क्तवैजात्यादेरनुपलम्भबाधितत्वात् संसर्गघटकतया वैजात्यभानस्याप्रामाणिकत्वात् पूर्वमनुपस्थितत्वेन तद्रूपावच्छिन्न-स्वत्यसम्बन्धरूपलक्षणाग्रहायोगाद्विधौ लक्षणायां तेन च तत्पक्षस्यापि दुष्टत्वात्। तृणारणिमणिजन्यवह्न्यादौ तत्त-ज्जन्यतावच्छेदकवैजात्यस्यानुपलम्भाद्व्याप्तिनियमानुरोधेनैवाप्रामाणिककल्पनस्यान्योन्याश्रयादिदुष्टत्वात्। तृणारणि-मणयो वह्निकारणानीति प्रमाणवाक्ये वह्निपदस्य नानावैजात्यावच्छिन्नोपस्थापकत्वे कारणपदस्य वा नानावैजा-त्यघटितसंसर्गघटितनानाकारणत्वावच्छिन्नोपस्थापकत्वेऽनुभवविरुद्धानेकार्थकल्पनाप्रसङ्गश्च। तस्मात्कारणत्वादिक समभिव्याहृतधर्मव्यापकत्वादिनैव भासते तत्सामानाधिकरण्यमात्रेण वा भासते इत्येवोपेयम्। न चैवं द्रव्यं घटकारणं द्रव्यं दण्डकार्यमिति प्रतीतिप्रामाण्यापत्तिस्तथा व्यवहारापत्तिश्चेति वाच्यम्। तद्धर्मोपलक्षिते तदवगाहि-प्रतीतीनां तादृशप्रतीतिपरवाक्यप्रामाण्यादीनां तवापि इष्टत्वेन ममापि तथा वक्तुं शक्यत्वात्। प्रत्यक्षस्थले तु यद्धर्मावच्छिन्नयोरन्वयव्यतिरेक[2]ग्रहात् प्रत्यक्षं तद्धर्मयोः कार्यताकारणतानतिरिक्तवृत्तित्वरूपमवच्छेदकत्वमवगाहते।

---

[1] विजातीयस्वर्गत्वावच्छिन्नेत्यर्थः,

[2] ग्रहस्थलप्रत्यक्षं तद्धर्मयो इति पाठेन भाव्यमिति भाति।

(द्वि.द्यु.)तृणादिस्थले [1]त्वन्यतमत्ववह्नित्वादिनैव तथा ग्रह । न तु वह्नित्वव्याप्यवैजात्येन रूपेण । तादृशवैजात्यस्य प्रथम प्रत्यक्षेणाग्रहस्योक्तत्वात् । नन्वेव किं घटकारणमिति प्रश्ने द्रव्य घटकारणमिति वक्तुरश्रद्धेयवचनत्व दण्डो घटकारणमिति वक्तु सम्बद्धभाषित्व कुत । दण्डत्वद्रव्यत्वयो साम्यादिति चेन्न । अकारणे प्रवृत्त्यभाव पूर्वककारणमात्रप्रवृत्तिनिर्वाहकबोधार्थं पृष्टत्वेन वक्त्रा तादृशबोधो निर्वाह्य । स च कारणत्वादिसमनियतधर्मस्य वाऽनतिरिक्तवृत्तिधर्मस्य वा बोधेन निर्वाह्य इति तादृशार्थतात्पर्ये द्रव्य घटकारणमित्यादेरप्रामाण्यमेव । ससर्गविधया भासमानसमनियतत्वादेर्बाधितत्वात् । तदविवक्षाया तादृश वाक्यमपि प्रमाणम् । प्रमेयदण्डो घटकारणमिति वक्ता न प्रयुङ्क्ते । वाक्यसामान्ये प्रयोजन विनाऽधिकस्य दोषत्वात् । ज्ञान तु प्रमैव । तस्मात्कारणताकार्यतावच्छेदकत्वाद्यनङ्गीकारे कस्याप्यनुपपत्तेरभावाद्धर्मविधया ससर्गविधया चावच्छेदकत्व अप्रामाणिकमेव ।

आधारताधेयतावच्छेदकत्वमप्यप्रामाणिकम् । सर्वत्र तद्धर्मोपलक्षितस्यैवाधारताऽधेयत्वादिभानेऽतिप्रसङ्गविरहात् । गुणो गुणकर्मान्यत्वविशिष्टसत्तावानिति प्रतीतेरप्रामाण्यस्य गुणान्यत्वादिरूपविशेषणस्य गुणेपि साक्षात्सम्बन्धेन भानस्य विशिष्टवैशिष्ट्यावगाहिनापदार्थत्वे तद्बाधेनैव निर्वाहात् । अन्यविधस्योपलक्षिततत्प्रतीतित्वेन प्रमात्वस्येष्टत्वात् ।

ननु सयोगादिससर्गस्याधारतावच्छेदकत्वानङ्गीकारे सयोगेन घटवद्भूतलमिति वाक्यस्थले तृतीयार्थो नावच्छिन्नत्वम् । किं त्वभेद एव । अन्यस्यायोगात् । स च मतुबर्थे अन्वेतीति वाच्यम् । तत्र मतुबर्थो यदि सम्बन्धातिरिक्ताधारता तदा बाध । यदि सम्बन्धत्वेन सयोग एव तदा घटो भूतलवानिति व्यवहार स्यात् । परस्परमुभयो सयुक्तत्वात् । अवच्छेदकत्वादेरङ्गीकारे तृतीयार्थावच्छिन्नत्व मतुबर्थाधारतायामन्वेतीति न बाधादिप्रसक्तिः । अतोऽवच्छेदकत्वसिद्धिरिति चेन्न । भूतले घटस्य सयोगात् भूतल घटवत् घटश्च भूतले वर्तते इत्यबाधितोभयसिद्धप्रतीत्या सयोगादेराधारत्वादिक प्रति प्रयोजकत्वस्य सिद्धत्वेन तृतीयाया तदर्थत्वेनैवोपपत्ते ।

ननु भूतलघटयो सयोगसाम्ये भूतल एवाधारता कुत इति चेत् । एतद्दोषस्य तवापि साम्येन वस्तुस्वभावस्यैव शरणीकरणीयत्वात् । वस्तुतस्तु संयोगस्थले पदार्थद्वययोर्न सयोगमात्रेणाधाराधेयभावव्यवहार । ये पत्रे दृढतया संश्लिष्टे ते यदोभयेपि ऋजुतया भूसबद्धे भवत तदा परस्परमाधाराधेयव्यवहारो न जायते । तयोरेव परस्परमूर्ध्वाधरीभावेन पर्यायेण स्थापने परस्परमाधाराधेयप्रत्यय पर्यायेण जायते । तत्र सयोगस्य नियताधारतानियामकत्वे दशात्रयेप्येकस्यैव नियताधारताप्रत्यय स्यात् । सयोगस्यैकस्यैव दशात्रयेप्यनष्टतया स्थितत्वात् । तथा च सयोगस्थले यदा यस्य यदूर्ध्वदेशसयोगस्तदा तस्य आधेयत्व अधोदेशसम्बद्धस्याश्रयत्वं प्रतीयते इत्येव वक्तव्यम् । इत्थ च तदधोदेशसयुक्तत्वमात्रस्याधारत्वरूपत्वे तदसयुक्तनिष्ठतन्मात्रस्याप्याधारत्वा-

[1] अन्यतमवह्नित्वादिनैव इति पाठेन भाव्यमिति भाति ।

(द्वै. द्यु ) त्त्या तादृशपदार्थे तदाधारत्वव्यवहारवारणाय तत्संयुक्तनिष्ठतद्बोधेदेशसंयोग एव तद्राधारत्वं वाच्यम् । तत्र संयोगान्तरं प्रति संयोगान्तरस्यावच्छेदकत्वे बीजाभाव । विशिष्टसत्तां प्रति विशेषणस्य निर्वाहकतया संयोग-पदोत्तरतृतीयाया निमित्तत्वार्थकत्वमेव युक्तम् । एवमाधेयत्वबोधकस्थलेपि ।

यद्वा संयोगपदस्य समभिव्याहृतघटसंयोगाद्यर्थकतया तद्घटितत्वमुक्तरीत्याऽऽधारत्वं, घटत्वबोधयं तृतीयार्थ । घटरूपादिस्थले अभावभूतलादिस्थले वा नैतादृश आधाराधेयभाव । अत संसर्गानिबन्धन एव 'वलक्षणो धर्मि-धर्मभावोऽनुभवसिद्धत्वात्प्रातीतिक इति सम्बन्धानिबन्धनत्वादवमुक्त इत्यप्युच्यते । विवक्षितया घटवज्ज्ञान-मित्यादौ तु परेषा मतेऽपि मतुबर्थसम्बन्ध्येकदेशे सम्बन्धे तृतीयार्थाभेदान्वय सम्मत एव । तेषां वृत्त्यनियाम-कत्वेनाधारताद्यनवच्छेदकत्वाङ्गीकारात् । समवायकालिकसम्बन्धादयस्तु स्वरूपत एवाप्रामाणिका । अनयो संयोगो वर्तते इदानीमुत्पन्नो नष्ट इत्यादिप्रत्ययवदनयो समवायो वर्तते कालिको वर्तत इति सार्वजनीनप्रतीतेर-भावात् । तत्सत्त्वे सूत्रकारीयानवस्थादूषणस्य मूलक्षयमावेनासङ्गतत्वापत्ते । मतविशेषावलम्बिनां तादृशप्रतीते-रतिप्रसङ्गेनासाधकत्वात् । घटे रूपमिह रूपमिदानीं रूपमभावो वेत्यादिका तु धर्म्यन्तरविनिर्मुक्तधर्मधर्मिभावावेवा-वगाहते । विशिष्टबुद्धिसामान्यस्य संसर्गविषयकत्वनियमासिद्धेर्धर्मधर्मिभावविषयकत्वस्य, तन्नियमेनैव समूहालम्बन-वैलक्षण्यसिद्धेस्तयोरुभयसम्मतत्वाच्च ।

एतेनाभावाभिधेयत्वादिस्थले तत्तत्स्वरूपाणां संसर्गत्वकल्पनमप्यपास्तम् । उक्तरीत्यैव सम्भवे तत्कल्पनस्य निर्बीजत्वात् । प्रकारस्वरूपे वा विशेष्यस्वरूपे वा तत्तद्वृत्तिधर्मान्तरेष्वेव वा तत्कल्पनमित्यत्र विनिगमकाभावे-नातिरिक्तसम्बन्धस्यैव संयोगादेरिवाङ्गीकारापत्ते । यदि च प्रत्यक्षबाधान्न तत्सिद्धिस्तर्हि तत्तत्स्वरूपाणां स्वप्रति-योगित्वानुयोगित्वादिकं किमनुभवसिद्धम् ।

यत्तु 'अभावभूतलादीनां रूपघटादीनां तादात्म्यं संसर्गतया भासते' इति । तत्तुच्छम् । तथात्वे सूत्र-कारीयानवस्थादूषणस्यात्रापि प्रसरेण समवायपरित्यागे बीजाभावप्रसङ्गात् । न चात्राप्यनवस्थादूषणं वर्तत एव । तेन तादृशसंसर्गाणां मिथ्यात्वं सिद्ध्यत्येव । व्यवहारदशायां तेषां संसर्गत्वमिति वाच्यम् । समवायेऽपि तथा वक्तुं शक्यत्वेन समवायदूषणेन नैयायिकमतासामञ्जस्यप्रदर्शनानुपपत्ते । तस्मादुपलक्षणतया सूत्रमेतेषां सर्वेषाम-नुभवानारूढानां निराकरणपरमेवेति वक्तव्यम् ।

ननु तादात्म्यं रूपघटयो सिद्धान्तसिद्धं कथमपलप्यत इति चेत्सत्यम् । तादात्म्यं यदि भेदाभेदौ तदा तयोरनुभवसिद्धत्वेऽपि संसर्गतया भानमप्रामाणिकम् । यदि तदुभयनिबन्धनं सम्बन्धान्तरं तस्याप्रामाणिकत्व-मित्यभिप्रायात् ।

एतेन 'संयोगसम्बन्धस्थले घटसंयोगस्य घटेपि सत्त्वात्तद्घटस्तद्घटवानिति प्रतीतिवारणाय घटाभेदस्य घटेपि सत्त्वात् घटो घट इति वाक्यप्रामाण्यवारणाय च प्रकारीभूतव्यक्तिभेदसामानाधिकरण्यविशिष्टसंयोगा-भेदादे संसर्गतया भानमावश्यकम्' इत्यपास्तम् । तद्घटे स्वनिरूपितोर्ध्वाधरीभावाभावेन स्वस्मिन् स्वप्रतियोगिक-

(द्वै धु ;मन्य'गानङ्गीकारेण च प्रथमस्थले दोषाभावात् । द्वितीयस्थले कीदृशमप्र माण्यम् । अबोधकत्व विपरीतबोध-कत्व वा । नाद्य । भेदस्य सम्बन्धघटकतायास्तद्वाक्यस्याबोधकत्वे प्रयोजकत्वप्रकारानिरूपणात् । योग्यताविरह-सम्पादकतया तत्रोपयोग इति चेन् । अयोग्यवाक्यादपि शाब्ददर्शनेन कलहस्थले बाधग्रहेऽपि शाब्दस्याङ्गीकृत-त्वेन च तस्याबोधकत्वाप्रयोजकत्वात् । न द्वितीय । घटो घट इति वक्तरि सिद्धार्थकत्वेनाज्ञातज्ञापकत्वाभाव स्यैव सर्वाभिमतत्वेन जड़त्वादिवाक्यवद्विपरीतबोधकत्वस्य सर्वानुभवविरुद्धत्वात । तस्माद्भेदस्य संसर्गतया भाने न किञ्चित्साधकम् । नीलो घट इत्यादौ व यथार्थत्वानुभवादैक्यमात्र तथास्तु । सयोगैक्यादे संसर्गत्वेपि कुतो न सूत्रोक्तानवस्थेति चेत् । तयोरनुभवसिद्धत्वेन ससर्गत्वेपि सर्वत्र विशिष्टबुद्धिमात्रे संसर्गविषयकत्वनियममभ्युप-गम्य रूपादिबुद्ध्यनुरोधादननुभवसिद्धसम्बन्धरूपसमवायकल्पने तद्विशिष्टबुद्धितद्विशिष्टबुद्ध्यनुरोधेन सम्बन्धपरम्प राकल्पनयाऽनवस्थाया सूत्रकृताऽभिहितत्वात् । न च रूपादिप्रतीतौ धर्मधर्मिभावभानाभ्युपगमे तदीयधर्मिधर्म भावपरम्परयाऽनवस्था कुतो न प्रसज्जतीति वाच्यम् । घटाधारतावान् तदाधारतावानित्यादिप्रतीतीना सम्बन्ध-विशेषतदवच्छिन्नाधारताऽङ्गीकारिभिर्नैयायिकैरनवस्थापरिहारस्य यथा निर्वाह क्रियते मया तथा कर्तुं शक्यत्वात् । एकेनैव विषयेण तत्र विवनान व्यवहारोत्पत्तिनिर्वाहस्याप्रामाणिकप्रतियोगिकात्यन्ताभावविचारेऽभिहितत्वाच्च । तस्मात्समवायादेरप्रामाणिकत्वात्सयोगादेस्त्वनवच्छेदकत्वान्न कस्यापि संसर्गस्याधारताद्यवच्छेदकत्वमिति स्थितम् ।

नन्वेवमवच्छेदकत्वस्वरूपनिराकरणे भाष्यगीताभाष्यादौ 'यथा काल पूर्व इत्यवच्छेद्योऽवच्छेदकश्च भवति' 'कर्तृशब्दश्च कालावच्छेदेऽपि प्रसिद्ध ' इति च व्यवहारस्याप्रामाण्यापत्तिरिति चेन्न । तेषामर्थान्तरस्य टीकाया-मेवोक्तत्वेन तद्वाक्यस्य नैयायिकाभिमतावच्छेदकत्वार्थकत्वाभावात् । चन्द्रिकाभावबोधकृता स्वग्रन्थेषु क्वचि-त्तथा व्यवहारस्तु प्राय पररीत्यैव । बहूना व्युत्पन्नत्वात्तान् प्रति व्यवहारसौकर्याय पररीतिमाश्रित्यैवानैकान्ति-कत्वादिव्यवहारवत् । अन्यथाऽवच्छेदकत्वादिपदार्थाभ्युपगमे विशेषनिरूपणे वक्ष्यमाणरीत्या विशेषासिद्धिप्रस ङ्गात् । प्रकारताधर्मितावच्छेदकत्वादिपदवाच्यास्तु विषयताविशेषा अनुव्यवसायसिद्धा इति न तत्र विवादः । तस्मादवच्छेदकत्वादीनामप्रामाणिकत्वात्तन्निर्वाह्या सर्वापि न्यायप्रक्रियाऽप्रामाणिक्येवेति स्थितम् ।

(गु टि) अज्ञानस्य [1]ज्ञातृपुरुषगतत्वाभावसाधकानुमानस्य प्रतिपक्षमाशङ्कते ॥ नन्विति ॥ अज्ञानं ज्ञातव्याऽश्रित ज्ञानप्रतिबन्धकत्वात्तमोवदित्यनुमानमनेनोक्त भवति । विषयसम्बद्धस्य तमसो ज्ञानप्रतिबन्धकत्वासिद्धे कथमत्र दृष्टान्तत्वमित्यतस्तदुपपादयति ॥ प्रकाशस्थेनेति ॥ एवमन्वयमुपपाद्य व्यतिरेकञ्चोपपादयति ॥ अन्ध कारस्थितेनापीति ॥ तद्रूपमाच्छाद्येति ॥ अज्ञानस्य विषयगत्वाभावे तद्रूपाच्छादकत्वायोगात् रजतादिरूपा-न्तरोपादानत्वासम्भवाच्च विषयगतत्वमावश्यकमिति भाव । अन्त करणस्य क्षणमात्रेण व्यवहितध्रुवाद्याकारेण परिणाम कथमित्यतस्तदुपपादनार्थं प्रकाशस्वभावमित्यादिको ग्रन्थ । अन्त करण ध्रुवादिपर्यन्त अविच्छिन्नप्रभा-ऽऽकारेण परिणमत इति सम्बन्ध । तत्र को हेतुरित्यत आखण्डलादिविच्छिन्नकाष्ठाया सहस्राशूदयमात्रेण तत्किरणानां

---

[1] ज्ञातव्यपुरुष इति पाठेन भाव्यमिति भाति ।

(गु.टि) मन्दिरे व्याप्तिदर्शनात्तेजसोऽतिदूरगमनशक्तिमत्त्वात्तदुपपत्तिरिति भावेन तेजसोऽतिदूरगमने अन्तःकरणस्य किमायातमित्यतस्तस्य तैजसता दर्शयति ॥ प्रकाशस्वभावमिति ॥ अत एव चक्षुरादिसूक्ष्मद्वारा बहिर्निःसरणं तस्येति द्रष्टव्यम् । प्रकाशस्वभावत्वेप्यात्मनो न परिणामो दृष्टः । तत्कथमस्य परिणाम इत्यत उक्तम् ॥ मावयवमिति ॥ कदाचिदेव कस्मिंश्चिदेव विषये अन्तःकरणस्य परिणामे को हेतुरित्यत उक्तम् ॥ अदृष्टेति ॥ आलोक आदिशब्दार्थः । प्रतिपादनफलमाह ॥ परिणमत इति ॥ ननु नानेनानुमानेनाज्ञानस्य विषयाऽश्रितत्वसिद्धिः । अज्ञानं न विषयाऽश्रितमज्ञानत्वाद्घटाज्ञानवदिति प्रागुक्तानुमानविरोधादित्यत आह ॥ अत एवेति ॥ शुक्त्यज्ञानस्य शुक्त्यवच्छिन्नचैतन्याऽश्रितत्ववत् घटाज्ञानस्यापि तदवच्छिन्नचैतन्याऽश्रितत्वाङ्गीकारेण दृष्टान्तस्य साध्यविकलत्वादेवेत्यर्थः ॥ तदाश्रयत्वप्रसङ्गश्चेति ॥ प्रत्यूढ इति सम्बन्धः । इष्टापत्तेरिति भावः । तथा चानुकूलतर्काभावे अप्रयोजकमनुमानमिति भावः । तर्कपराहतिभावाभावाभ्यां वैषम्येण समानबलत्वान्नायं प्रतिपक्ष इत्यभिप्रेत्य तमाह ॥ तदिदमसदित्यादिना ॥ एकेन ज्ञातस्येति ॥ याथात्म्येन ज्ञातस्येत्यर्थः । नन्वसत्या सामग्र्यां प्रतिबन्धकाभावमात्रेण अन्यत्र कार्यादर्शनेन ज्ञानप्रतिबन्धकाविद्यानिगमेऽपि ज्ञानसामग्रीविरहात्र प्रतिबन्धकाभावमात्रेण कार्योऽपादनं युक्तमित्यत आह ॥ इन्द्रियेति ॥ अन्यथा अधिष्ठानज्ञानविरहात्तत्र पाषाणत्वाद्यारोपोऽपि न स्यादिति भावः । ननु प्रतिबन्धकाभावसहकृतज्ञानसामग्रीसद्भावेऽपि ज्ञानानुत्पादः किं न स्यात् । विपक्षे बाधकाभावेनाप्रयोजकत्वादित्यतो बाधकमाह ॥ न हीति ॥ अन्यथा तदपि स्यादिति भावः । ननु विषयाऽश्रिताज्ञानबहुत्वाङ्गीकारात् एकेन पुरुषेण याथात्म्येन ज्ञातस्य अन्यैरज्ञातत्वं युज्यत एव । तज्ज्ञानेन विषयाऽश्रितैकाज्ञाननिवृत्तावपि अज्ञानान्तरस्य सद्भावेन तद्बलेनाज्ञातत्वाविरोधादित्यतो विषयाऽश्रिताज्ञानबहुत्वं वदन् प्रष्टव्यः, किं तानि सर्वाणि सर्वान् प्रति ज्ञानप्रतिबन्धकतया अङ्गीक्रियन्ते उत प्रतिपुरुषनियतानि इति विकल्पं मनसि निधाय आद्यं दूषयति ॥ तर्हीति ॥ विषयाऽच्छादकबहुयवनिकासत्त्वस्थले एकयवनिकाऽपगमेऽपि यवनिकान्तरेण विषयाऽच्छादनस्यैव दृष्टत्वेन विषयाऽश्रिताज्ञानबहुत्वपक्षे एकस्य ज्ञानस्य नष्टत्वेऽपि अज्ञानान्तरसत्त्वेन तेनैव विषयाऽच्छादनस्य प्राप्तत्वात् येनापि घटो ज्ञायते तस्यापि घटज्ञानाभावप्रसङ्ग इति भावः । द्वितीयं शङ्कते ॥ प्रतिपुरुषनियतानीति ॥ तथा च पुरुषान्तरनियताज्ञानसत्त्वेऽपि तत्पुरुषनियताज्ञानस्य निवृत्तत्वान्न तं प्रति अज्ञातत्वप्रसङ्ग इति भावः ॥ अदृष्टेति ॥ प्रतिपुरुषनियततमसोऽदर्शनादिति भावः । अज्ञानस्य विषयाश्रितत्वसिद्धिमूलकत्वादुक्तकल्पनायाः न तत्कल्पने अदृष्टकल्पनाप्रसङ्ग इत्यत आह ॥ परस्परेति ॥ अज्ञानस्य विषयाश्रितत्वसिद्धौ तदन्यथानुपपत्त्या तस्य प्रतिपुरुषनियतत्वसिद्धिः । तत्सिद्धौ च तर्कपराहत्यभावेन अनुमानाद्विषयाच्छादकत्वसिद्धिरिति परस्पराश्रयत्वप्रसङ्गादित्यर्थः । ननु विषयानाश्रितत्वे तदाच्छादकत्वानुपपत्त्या तदाच्छादकत्वयुक्त्यैव तदाश्रितत्वसिद्धेः परस्परसिद्ध्यनपेक्षत्वान्न परस्पराश्रयत्वप्रसङ्ग इत्यत आह ॥ विषयाच्छादनं त्विति ॥ विवक्षितार्थे अनुगुणदृष्टान्तकथनम् ॥ नयनपटलैरिवेति ॥ अन्यथा विषयाच्छादकत्वयुक्त्या नयनपटलानामपि विषयाश्रितत्वापत्त्या द्रष्टृपुरुषगतत्वाभावप्रसङ्गादिति भावः । अस्तु तर्हि शुक्त्यादौ रजताद्यारो-

(गु टि) पानुपपत्त्या तदुपादानतन्नाशानस्य विषयाभिन्नत्वमिद्धिरित्यत आह ॥ आरोप्येति ॥ उक्तमर्थं निगमयति ॥ तदेवमिति ॥

आत्मज्ञानस्यात्माविषयकत्वे तेनात्माज्ञानानिवृत्त्यापादनम्

(टी.) किञ्च अस्तु वा आत्माज्ञानम् । तथापि न वेदान्तवाक्यजनितविज्ञानस्याऽऽत्मज्ञानत्वं सम्भवति । तस्यानात्मविषयत्वेन तन्निवर्तकत्वायोगात् । यद्विषयं हि यद्विज्ञानं तदेव तदज्ञानं निवर्तयदुपलब्धम् ।

(वि टि) ॥ अनात्मविषयत्वेनेति ॥ आत्मविषयकत्वरहितत्वेनेत्यर्थः । एवमग्रेपि ।

(ग टि) ॥ अनात्मेति ॥ आत्माविषयत्वेनेत्यर्थः ।

(वे टि) ॥ अनात्मविषयत्वेनेति ॥ आत्मविषयत्वरहितत्वेनेत्यर्थः । एवमग्रेऽपि ।

(द्वै द्यु) ॥ किञ्चेति ॥ अनात्मविषयत्वेन शुद्धात्माविषयकत्वेन ।

आत्माविषयकस्याऽऽत्मज्ञानस्याऽऽत्माज्ञाननिवर्तकत्वे घटज्ञानस्यापि तन्निवर्तकत्वाऽऽपादनम्

(टी) अथानात्मविषयमपि तत् आत्माज्ञानं निवर्तयेत् हन्त तर्हि घटज्ञानमपि कस्मान्न निवर्तयेत् । अनात्मविषयत्वाविशेषादित्याह

## अतद्विषयज्ञानेन तदज्ञाननिवृत्तौ घटज्ञानेनापि निवर्तेत

आत्माज्ञानमिति शेषः ।

(वि टि.) नन्वनात्मविषयकमपि ज्ञानम् आत्माज्ञाननिवर्तकमेव । 'तरति शोकमात्मवित्' इत्यादिश्रुत्या तथा बोधनादित्याशयेन शङ्कते ॥ अथेति ॥ श्रुतिप्रतीताज्ञाननिवर्तकत्वनिर्वाहायैव ज्ञानस्य तद्विषयत्वमपि वाच्यम् । लोके तथा क्लृप्तत्वात् । अन्यथा यागस्यापारत्वेनापूर्वकल्पनमपि न स्यादिति भावेन परिहरति ॥ हन्तेति ॥ तदविषयकस्य ज्ञानस्य तदज्ञाननिवर्तकत्वे घटादिज्ञानेष्वपि तथात्वप्रसङ्ग । न चेष्टापत्तिः । विशिष्टज्ञानसमूहालम्बनाभ्यां विशेषणाद्यज्ञानानिवृत्तिनिवृत्तिप्रसङ्गादित्यपि द्रष्टव्यम् ।

(द्वै द्यु) अथ यदि । अनात्मेति पूर्ववदेवार्थः । तदात्मेत्यादि तदिति छेद । अनात्मेति पूर्ववदेवार्थः । अथवा पूर्वत्रात्र चानात्मविषयेत्यादेरात्मभिन्नविषयकत्वाद्येवार्थः । इदं च वेदान्तजनितविज्ञानस्य धर्मान्तरसाहित्येनाऽऽत्मविषयकस्याप्यधिष्ठानयाथात्म्यज्ञानरूपत्वाभावात्र शुद्धस्वरूपमात्ररूपाधिष्ठानारोपितजगद्भ्रमनिवर्तकत्वमिति युक्तिसूचनाय । अत एव [1]घटादिनाऽपीत्युत्तरत्रापिशब्द । मूलेऽप्यतद्विषयेत्यत्र नञस्तदा तत्पुरुषो न विषयान्तरेण कार्यं ।

(गु. टि) ननु दृष्टान्ताभावेनोक्तविधया आपाद्यापादकयोर्व्याप्त्यसिद्ध्या मूलशैथिल्यात्तर्काभासत्वमित्यतो विशेषव्याप्तेरभावेपि 'यद्विशिष्टस्य यस्य यद्भवति तदविशिष्टस्यापरस्यापि तत्' इत्यविशेषलक्षणसामान्यव्याप्तेरविकलतया तन्मूलकत्वाद्युक्तस्तर्क इत्याशयेनाह ॥ अनात्मविषयत्वाविशेषादिति ॥

---

[1] घटज्ञानेनापीत्युत्तरत्रापिशब्द इति पाठेन भाव्यमिति भाति ।

(टी.) ननु घटादिज्ञानं घटादिविषयेण सत् कथमात्माज्ञानं निवर्तयेदिति चेत्किं इदानीं वेदान्तवाक्यजनितविज्ञानं निर्विषयमेव । बाढमिति चेत्तत्राह

अविषयत्वादेव तस्य ज्ञानत्वञ्च न स्यादटवत्

न विद्यते विषयो यस्य तदविषयम् ।

(ग. टि.) अविषयत्वादेवेत्यस्य तात्पर्यमाह ॥ न विद्यत इति । तस्य भावस्तस्मादिति व्यक्तत्वान्नोक्तम् ।

(वे. टि.) नन्वात्माज्ञाननिवर्तकत्वं तदन्याविषयकत्वमेव तन्त्रम् । घटादिज्ञानं च तद्विषयमिति न तेन तन्निवृत्तिप्रसङ्ग इति शङ्कते ॥ नन्विति ॥

॥ निर्विषयमेवेति ॥ सविषयत्वे किमात्मविषयमुत तदन्यविषयम् । आद्ये दृश्यत्वहेतोर्व्यभिचारः । द्वितीये कथमन्यविषयकमात्माज्ञानं निवर्तयेदिति भावः ।

(द्वै. द्यु.) ॥ किमिति ॥ शुद्धब्रह्मस्वरूपस्याविषयत्वं तु त्वयमङ्गीकृतम् । तदन्यस्यापि तत्र विषयत्वानङ्गीकारे निर्विषयत्वमेव पर्यवस्यतीति भावः ।

(गु. टि.) नन्वात्माज्ञाननिवर्तकत्वे तदन्याविषयकत्वमेव तन्त्रम् । घटादिज्ञानं चान्यविषयमिति वैयर्थ्यविशेषलक्षणा व्याप्तिरित्याशयेन शङ्कते ॥ नन्विति ॥ प्रस्तमिति ॥ तद्विषयकमित्यर्थः ॥ निर्विषयमेवेति ॥ सविषयत्वे किमात्मविषयमुत तदन्यविषयकम् । आद्ये आत्मनि व्यभिचारः । द्वितीये आत्माज्ञाननिवर्तकत्वानुपपत्तिप्रसङ्गादिति भावः ।

शशविषाणादिज्ञानस्य सविषयत्वोक्तिपुरःसरं दृश्यत्वहेतुदूषणोपसंहारः

(टी.) ननु कथमेतत् । यावता शशविषाणादिपदश्रवणादविषयमेव ज्ञानमुत्पद्यते । न हि शशविषाणादिकमस्ति । न चास्यान्यो विषयः सम्भवति । नैवम् । न ह्यत्रासद्विषयत्वमविषयत्वमित्यभिमतम् । किन्नाम निरालम्बनत्वम् । न हि तथा शशविषाणादिज्ञानम् । तथात्वे शशविषाणादिज्ञानमित्येव न स्यात् ।

तदेवं कयापि विधया आत्मनो दृक्कर्मत्वाभावे न वेदान्तवाक्यजनितविज्ञानमात्मज्ञानं भवति । तत्सिद्धयेऽवश्यमात्मनो दृक्कर्मत्वमङ्गीकार्यं तस्यानैकान्तिकत्वं सिद्धम् ।

(वि. टि.) अविषयत्वादित्यस्यासद्विषयत्वादित्यर्थं मत्वा शङ्कते ॥ नन्विति ॥ एतदिति ॥ निर्विषयज्ञानमेव न स्यादित्येतदित्यर्थः । निरालम्बनत्वं विषयानुल्लेखित्वम् । परमप्रकृतमात्मनि दृश्यत्वहेतोरनैकान्तिकत्वं सहेतुकमुपसंहरति ॥ तदेवमिति ॥ फलव्याप्यत्वादिदूषणं तु न्यायामृते अस्मत्कृतटीकायां विस्तृतमिति सङ्ग्रहे आविष्कृतान्नेह लिख्यते ।

(वै टि) अविषयत्वादित्यस्यासद्विषयत्वादित्यर्थं मत्वा शङ्कते ॥ नन्विति ॥ एतदिति ॥ निर्विषयत्वे ज्ञानत्वमेव न स्यादित्येतदित्यर्थ । निरालम्बनत्व विषयानुल्लेखित्वम् ।

(द्वै द्यु.) [1]अज्ञाने व्यवहाराद्यनुकूलो विषयानौपाधिक कश्चन शक्तिविशेष विषयितास्फुरणाद्यपरनामा विषयसन्निकर्षप्रयोज्यत्वदोषविशेषप्रयोज्यत्वान्यतरवान् । तन्निरूपकसत्त्वे प्रमात्वमसत्त्वेऽप्रमात्वमित्यभिहितमुपपादितञ्चाधस्तात । नादृश[2]विषयतैव ज्ञानत्वव्यापिका । व्यभिचारस्य कुत्राप्यनुपलम्भात् । निष्प्रामाणिकतत्कल्पने चानुमानमात्रोच्छेदप्रसङ्गात् । एवञ्च वेदान्तजन्यज्ञाने आत्मान्याविषयके आत्मनिरूपितविषयिता वर्तते तस्य तन्निरूपकत्व नास्तीति व्याहतम् । अतस्तस्या अप्यभावे विषयितासामान्याभावरूपव्यापकाभावात् ज्ञानत्वरूपव्याप्याभाव स्यादित्यभिहितेऽविषयत्वपदस्य सद्विषयकत्वाभावार्थकत्वाभिमानेन शङ्कते ॥ नन्विति ॥ अभिमान निराकृत्योक्ताभिप्राय प्रकटयति ॥ मैवमिति ॥ असद्विषयत्वं सद्विषयत्वाभाव ॥ निरालम्बनत्वमिति ॥ [3]विषयतारूपधर्मराहित्यमित्यर्थ ॥ तथेति ॥ तादृशधर्मरहितमित्यर्थ ॥ न स्यादिति ॥ सम्बन्धान्तराणामतिप्रसञ्जकत्वात्तन्निरूपितविषयितैव षष्ठ्यर्थो वाच्य । तस्याप्यनङ्गीकारे [4]तादृशव्यवहाराप्रामाण्यं न स्यादित्यर्थ । दृश्यत्वहेतोर्व्यभिचारोपपादनमुपसहरति ॥ तदेवमिति ॥ कयाऽपि विधयेति ॥ इद न भवतीत्युत्तरान्वयि ॥ दृक्कर्मत्वाभावेन ॥ दृक्कर्मत्वाभाव इति छेद । नञो भवतीत्यनेनान्वय ।

(गु टि) अविषयत्व नामासद्विषयत्वमिति सम्भ्रान्तश्चोदयति ॥ नन्विति ॥ एतदिति ॥ निर्विषयत्वेन ज्ञानत्वाभावापादनमित्यर्थ । तथा सति तज्ज्ञानस्याप्यसद्विषयकत्वेन ज्ञानत्वाभावापातादिति भाव ॥ निरालम्बनत्वमिति ॥ विषयानुल्लेखित्वमित्यर्थ ॥ कयापि विधयेति ॥ तदाकारत्वतदज्ञाननिवर्तकत्वादिशङ्कितप्रकारेणेत्यर्थं ।

### अप्रमातृत्वस्य जडत्वे आत्मनि व्यभिचारोपपादनम्

(टी) अथ जडत्वस्यापि हेतोरनैकान्तिकतां विवक्षुराह

**जडत्वं चाप्रमातृत्वमेव**

चशब्दो यस्मादित्यर्थे । चेत्यता जडत्वमित्यङ्गीकारे दृश्यत्वजडत्वयोर्भेदो न स्यात् । किमत यत आह

**न च प्रमातृत्वमात्मनस्तैरङ्गीक्रियते**

अत्रापि चशब्दो हेत्वर्थः । तैरिति प्रपञ्चमिथ्यात्ववादिभिः । प्रमातृत्वस्य प्रमाणप्रमेयसिद्धिहित्यनियतत्वात्तदङ्गीकारे तयोरप्यङ्गीकारप्रसङ्गान्नात्मनः प्रमातृत्व परैरङ्गीक्रियते । ततोपि मित्यत आह

---

[1] अस्ति ज्ञाने इति पाठेन भाव्यमिति भाति । [2] विषयितैव इति पाठेन भाव्यमिति भाति ।
[3] विषयिता इति पाठेन भाव्यमिति भाति । [4] तादृशव्यवहारप्रामाण्यं इति पाठेन भाव्यमिति भाति ।

(टी.) अनन्तदप्यनैकान्तिकम्

यस्मात्प्रमातृत्वाभाव एव जडत्वं यतश्चात्मनः प्रमातृत्वं परेण नाङ्गीक्रियते अतो दृश्यत्ववज्जडत्वमप्यात्मनि विपक्षे वर्तमानमनैकान्तिकं भवति ।

इयांस्तु विशेषः । यद्दृश्यत्वं वादिप्रतिवादिनोरनैकान्तिकम् । आत्मनो दृश्यत्वस्य परं प्रत्युपपादितत्वात् । जडत्वं पुनर्मायावादिन एव । तत्त्ववादिना आत्मनः प्रमातृत्वस्याङ्गीकारात् । अत एव तैरित्युक्तम् ।

ननु पारमार्थिकमेव प्रमातृत्वमात्मनो मया नाङ्गीक्रियते । तस्याद्वैतप्रतिपक्षत्वात् । मिथ्याभूतं तूपादीयत एव । अन्यथा संसारानिरूपणात् । तत्कथमात्मना जडत्वमनैकान्तिकमित्यत आह

मिथ्याप्रमातृत्वस्यानिर्वचनीयनिरासादेव निरस्तम्

मिथ्येति तावदनिर्वचनीयं वक्तुं न शक्यते । तस्याप्रामाणिकत्वादिना निरस्तत्वात् । नतो मिथ्येत्यसत्त्वे वक्तव्ये मिथ्याप्रमातृत्वमिति आत्मनो नास्ति प्रमातृत्वमित्युक्तं स्यात् । ततश्चानैकान्त्यतादवस्थ्यम् । आत्मनि प्रमातृत्वारोपस्तावन्मयाङ्गीक्रियत एवेति चेत् । एवं तर्हि साङ्ख्यचार्वाकादीनामन्तःकरणादावसावस्तीति भागासिद्धिः । आरोपितेन हेत्वभावेनानैकान्त्यपरिहारेऽतिप्रसङ्गश्च ।

(वि टि.) मिथ्यात्वहेतुदूषणे प्रवृत्तस्य परोक्तहेतुनिर्वचनमयुक्तमित्याशङ्क्यावतारयति ॥ **अथेति** ॥ पूर्वमन्यस्याप्रमातृत्वेनानिरुक्तेर्जडत्वश्चेति समुच्चयार्थकचशब्दानुपपत्तिमाशङ्क्याह ॥ **चशब्द इति** ॥ एवकारव्यवच्छेद्यं दर्शयति ॥ **चेत्यनेनेति** ॥ दृश्यत्वञ्च दूषितमिति भावः । कुतो नाङ्गीक्रियत इति हेत्वाकाङ्क्षां पूरयन् व्याचष्टे ॥ **अत्रापीत्यादिना** ॥ पूर्ववाक्यद्वयगतचशब्दार्थसम्बन्धं सूचयन् व्याचष्टे ॥ **यस्मादिति** ॥ निरासप्रकारमुपपादयति ॥ **मिथ्येति** ॥ **आत्मनीति** ॥ यद्यप्यारोपितामत्त्वव्यवस्थापनादयमपि पक्षो मिथ्यात्वपक्षदूषणेनैव निरस्तस्तथापि दूषणान्तराभिधानाय पुनः शङ्केति ध्येयम् ॥ **साङ्ख्येति** ॥ इदमुपलक्षणम् । परस्यापि मते शरीरादौ भागासिद्धिः । 'गौरोऽहं न जानामि' इति प्रतीत्या तत्रारोपितप्रमातृत्वसत्त्वादिति द्रष्टव्यम् । न च धर्मिसमसत्त्वस्य प्रमातृत्वस्याभावो हेतुरिति न देहादौ भागासिद्धिरिति वाच्यम् । तथा सति तव मते [1]भागासिद्धिः ॥ **अतिप्रसङ्गश्चेति** ॥ वह्नौ साध्ये धूलीपटलादेरपि हेतुत्वप्रसङ्गश्चेत्यर्थः ।

(रा टि.) ॥ **तदङ्गीकार इति** ॥ आत्मनः प्रमातृत्वाङ्गीकार इत्यर्थः । **चशब्दो हेत्वर्थ इत्युक्तं** व्यनक्ति ॥ **यस्मादिति** ॥ **अद्वैतेनेति** ॥ प्रमाणप्रमेययोरङ्गीकारप्रसङ्गेनेति योज्यम् ॥ **अन्यथेति** ॥ मिथ्याप्रमातृत्वस्याप्यभावेन तन्निबन्धनसुखदुःखादिभोगरूपससाराभावापातादित्यर्थः ॥ **भागासिद्धिरिति** ॥ तदभावरूपजडत्वहेतोरभावाद्देहेन्द्रियान्तःकरणेषु भागासिद्धिरित्यर्थः ॥ **आरोपितेनेति** ॥ अप्रमातृत्वं हि हेतुः । तदभावः प्रमातृ-

---

[1] जीवादौ भागासिद्धिः इति पाठेन भाव्यमिति भाति ।

(ग टि) त्वम् । स चात्मन्यारोपितोऽस्तीत्यारोपितो हेत्वभावस्तत्र विपक्षेऽस्तीति नानैकान्त्यमित्युक्तौ पर्वतोऽग्निमान्प्रमेयत्वादित्यत्र ह्रदे प्रमेयत्वाभाव आरोपितोऽस्तीति सोऽपि सद्धेतु स्यादित्यर्थ ।

(वे टि.) मिथ्यात्वहेतुदूषणे प्रवृत्तस्य परोक्तहेतुनिर्वचनमयुक्तमित्याशङ्कयावतारयति ॥ **अथेति** ॥ पूर्वमन्यस्याप्रमातृत्वत्वेन निरुक्तेर्जड वश्चेति समुच्चयार्थकचशब्दानुपपत्तिमाशङ्क्याह ॥ **चशब्द इति** ॥ एवकारव्यवच्छेद्य दर्शयति ॥ **चेत्यतेति** ॥ दृश्यत्वञ्च दूषितमिति भाव । पूर्ववाक्यद्वयगतचशब्दार्थसम्बन्ध सूचयन् व्याचष्टे ॥ **यस्मादिति** ॥ ननु मायावादिना दृश्यत्वहेतोरनैकान्तिकतानङ्गीकारात्कथ वादिप्रतिवादिनोरित्युक्तमित्यत आह ॥ **आत्मनो दृश्यत्वस्य पर प्रत्युपपादितत्वादिति** ॥ **तस्यैवेति** ॥ पारमार्थिकप्रमातृत्वाङ्गीकारे तन्निर्वाहाय पारमार्थिकप्रमाणप्रमेययोरप्यङ्गीकारप्रसङ्ग इत्यर्थ ॥ **साङ्ख्यचार्वाकादीनामिति** ॥ अस्मन्मतेऽन्त करणादावात्मत्वाऽरोपो नास्त्येव ।

> ज्ञानमात्रा मृगा गाव पक्षिणो हस्तिनो झषा ।
> भयाभयत्वभोगादौ कारणानि विजानते ॥

**इत्याद्यनुव्याख्याने** तस्य निराकृतत्व दिति भावेनैवमुक्तम् । साङ्ख्यचार्वाकादीनामपि सत्यत्ववादित्वेन तान्प्रत्यपि मायावादिनाऽनुमानस्य प्रयोक्तव्यत्वादिति भाव । यद्यारोपितप्रमातृत्वमात्मन्यस्तीत्यप्रमातृत्वहेतोर्न व्यभिचार तर्ह्यारोपितप्रमेयत्वाद्यभावस्यापि ह्रदादौ सत्त्वेनाग्निमत्त्वे साध्ये प्रमेयत्वादेरपि व्यभिचारो न स्यादित्याह ॥ **आरोपितेति** ॥

(द्वै द्यु) ॥ **विवक्षुराहेति** ॥ अनैकान्तिकत्वप्रतिपादनाय जडत्वस्वरूप निर्वक्तीत्यर्थ । तत्स्वरूपज्ञानं विना तस्य व्यभिचारादिक न ज्ञातु शक्यमिति भाव । एतेन परोक्तहेतोर्दूषणं विहाय तन्निर्वचनं मूलोक्तमनुपयुक्तमिति शङ्कानवकाश । समुच्चयाभावात्समुच्चायकत्व चशब्दस्य न घटत इत्यत आह ॥ **चशब्द इति** ॥ एवकारव्यावर्त्यमाह ॥ **चेत्यतेति** ॥ ज्ञेयतेत्यर्थ ॥ **अङ्गीकारप्रसङ्गादिति** ॥ सत्यत्वेनेति शेष । **आत्मनः** शुद्धात्मन ॥ **अङ्गीक्रियत इति** ॥ आनन्दादिवत्सत्यत्वेनेत्यादि । यस्मादिति यतश्चेति पूर्वमूलद्वयस्थितचशब्दद्वयार्थानुवाद ॥ **अत इति** ॥ प्रमातृत्वस्य मिथ्यात्वे तन्निर्वाहकतदभावस्याऽवश्यकत्वादिति भाव ॥ **संसारेति** ॥ सदसद्विषयप्रमाभ्या रागद्वेषतदधीनसद[1]सत्त्ववृत्तितदधीनपुण्यपापादिमूलकत्वात्संसारप्रवाहस्य तदभावे उत्पासत्त्व प्रसङ्गादित्यर्थ ॥ **तत्कथमिति** ॥ प्रतियोगिव्यधिकरणप्रमातृत्वाभावस्यैव हेतुत्वानुसरणादिति भाव ॥ **अप्रामाणिकत्वादिनेति** ॥ लक्षणाद्यनुपपत्तिरादिपदार्थ ॥ **ततश्चेति** ॥ त्रैकालिकसर्वदेशीयनिषेधप्रतियोगित्वेऽपि सत्तादात्म्यशालिनो व्याहत्यप्रामाणिकत्वादिना निरस्तत्वान्मिथ्येति त्वदङ्गीकारोऽसत्त्वमादायैव पर्यवसन्न इति आत्मनि प्रमातृत्वाभावस्य जगतीव प्रतियोगिवैयधिकरण्यस्याऽवश्यकत्वादित्यर्थ ॥ **आत्मनीति** ॥ प्रतियोग्यारोपाविषयनिष्ठत्वमेव प्रतियोगिवैयधिकरण्यमित्याशयेनेयमुक्तिर्वा रीत्यन्तरेण व्यभिचारोद्धाराभिप्रायेण वेति

[1] सत्प्रवृत्ति इति पाठेन भाव्यमिति भाति ।

(द्वै. बु.) विकल्पौ हृदि निधायाद्य दूषयति ॥ साङ्कर्येति ॥ अनेन करणदेहादावात्मनाऽऽत्मन्यारोपाभावात्तद्धर्मारोपाभावोऽप्यस्तीत्याशयेन साङ्कर्यस्यासिद्धिरुक्ता। उपलक्षणमेतत्। उन्मत्तादीनां सर्वत्र तदारोपसम्भवेन हेतुस्वरूपस्यैवासिद्धिर्द्रष्टव्या। तेनात्र करणादीनां पक्षबहिर्भावेन व्यभिचारोक्तावपि अनिस्तारः। ननु हेत्वभाव-प्रकारकारोपाविषयसाध्याभाववन्निष्ठहेतुसम्बन्ध एव व्यभिचारः। तस्यैव व्याप्तिग्रहविरोधिग्रहविषयत्वात्। तद्विषय-निष्ठस्तु न तथा। तत्र साध्याभाववति हेतुसत्त्वेऽप्यारोपरूपहेत्वभावग्रहमात्रस्य हेतावव्यभिचारकत्वग्रहरूपतया व्याप्तिग्रहसम्पादकत्वेन तदधिकरणनिष्ठहेतुसम्बन्धस्य व्याप्तिग्रहविरोधिग्रहविषयत्वाभावादिति पूर्वविकल्पितद्वितीय-पक्षरूपरीत्यन्तरविवेचनाभिप्रायमाशङ्कामपाकरोति ॥ आरोपितेनेति ॥ हेत्वभावारोपेणेति तदद्वयकृतेरित्यर्थः। **अनैकान्त्यपरिहारे** हेतोर्वास्तवाव्यभिचरितत्वे ॥ **अतिप्रसङ्गश्चेति** ॥ सर्वत्र व्यभिचारिष्वारोपितसाध्यसम्भवेन व्यभिचारिमात्रोच्छेदरूपातिप्रसङ्ग इत्यर्थः। चशब्दः पूर्वोक्ताभिप्रायद्वयस्यागमसत्तर्काभ्यामुक्तौ दूषणद्वयसमुच्चयाभिप्रायकः। अप्रमातृत्वपक्षदूषणसमाप्ताविति शब्दः

(गु. टि.) चेत्यत्वं जडत्वमिति निर्वचनान्तरस्यापि सम्भवात्कथमप्रमातृत्वमेवेत्यवधारणमित्यत्र तद्ग्रहणे बाधकस्य सत्त्वादुक्तमवधारणमिति भावेन तद्ग्रहणे बाधकमाह ॥ **चेत्यत्वेनेति** ॥ तथा च दृश्यत्वग्रहणेनैव प्राप्त्या पृथक् पक्षीयतदुक्त्ययोगादिति भावः। पूर्ववाक्यद्वयगतहेत्वर्थचशब्दद्वयसम्बन्धं दर्शयन्नेव वाक्यं व्याचष्टे ॥ **यस्मादिति** ॥ ननु मायावादिना आत्मनो दृश्यत्वानङ्गीकारात्कथं दृश्यत्वहेतोरनैकान्त्यमिति विशेषकथनमित्यत आह ॥ **आत्मन इति** ॥ अङ्गीकारानङ्गीकारयोः साधकबाधककथनेनेति शेषः ॥ **तस्यैवेति** ॥ पारमार्थिक-प्रमातृत्वस्यैवेत्यर्थः। पारमार्थिकप्रमातृत्वस्य प्रमाणप्रमेयसिद्धिसाहित्यनियतत्वेन तदङ्गीकारे तयोरप्यङ्गीकारप्रसङ्गेन अद्वैतपक्षभङ्गप्रसङ्गादिति भावः ॥ **संसारेति** ॥ कर्तृत्वभोक्तृत्वप्रमातृत्वाध्यासप्रवाहस्यैव संसारत्वेन तदतिरिक्त-संसाराभावादित्यर्थः। अप्रामाणिकत्वादीत्यादिशब्देन बाधकपरिग्रहः। आरोपितप्रमातृत्वाभावस्यैव हेतुत्वेन मया अङ्गीकृतत्वादात्मनि चारोपितप्रमातृत्वस्यैव च सत्त्वेन नानैकान्त्यमिति शङ्कते ॥ **आत्मनीति** ॥ एवं तर्हि मास्त्वनैकान्त्यम्। भागासिद्ध्या हेत्वाभासत्वं दुर्वारमेवेत्याह ॥ **एवं तर्हीति** ॥ अङ्गीकृत्य चैतदुक्तम्। वस्तुतस्तु नानैकान्त्यपरिहारोऽपि। तथा सति यत्रानैकान्त्यमायाति तत्र सर्वत्र आरोपितहेत्वभावेन तत्परिहारा-पत्त्या तद्दूषणत्ववार्ताया उच्छेदप्रसक्तेरित्याह ॥ **आरोपितेनेति** ॥

### अप्रकाशत्वस्य जडत्वे आत्मनि व्यभिचारोपपादनम्

(टी.) **नाप्रमातृत्वं जडत्वम्। किं नाम अप्रकाशत्वम्। न च तदात्मन्यस्ति। तस्य ज्ञान-स्वरूपत्वात्। अतः कथमनैकान्तिकमित्यत आह**

**यदि जडत्वं नामाप्रकाशत्वं तदाप्यात्मनः**

**स्वविषयप्रकाशत्वाभावात्परविषयप्रकाशत्वाभावाच्चानैकान्तिकमेव**

(टी) यदि जडत्वं नामाप्रकाशत्वं परोऽङ्गीकुर्यात् तदा तदप्यनैकान्तिकमेव प्रतिपत्तव्यम्। आत्मनः प्रकाशत्वायोगात्। तथा हि, योऽयमात्मस्वरूपप्रकाशोऽङ्गीक्रियते स किं सविषयो निर्विषयो वा। आद्येपि किं स्वविषयः परविषयो वा। नाद्यः। तदभावात्। न द्वितीयः। परस्यैवापरेणानङ्गीकृतत्वात्। पराभावे च परविषयत्वस्य दुर्निरूपत्वात्।

(वि टि)॥ तदभावादिति॥ स्वस्य स्वविषयत्वानङ्गीकारादित्यर्थ ॥ दुर्निरूपत्वादिति॥ अभावादित्यर्थ। यद्यात्मस्वरूपज्ञानमविद्यमानपरविषयकं स्यात्तदा मोक्षेपि परविषयत्वापत्त्या संसाराविशेषः स्यादिति भाव।

(ग टि) शङ्कते॥ नाप्रमातृत्वमिति॥ तदभावादिति॥ कर्तृकर्मभावविरोधादित्यग्रे व्यक्तम्।

(वे टि)॥ तदभावादिति॥ स्वस्य स्वविषयत्वानङ्गीकारादित्यर्थ ॥ दुर्निरूपत्वादिति॥ अभावादित्यर्थ।

(द्वै द्यु)॥ अप्रकाशत्वमिति॥ प्रकाशपदमनेकार्थकं ज्ञानत्वावच्छिन्नवाचि तेजस्त्वावच्छिन्नवाचि च। उभयत्रापि प्रचुरप्रयोगात्। अन्यतरस्मिन्निरूढलक्षणा वा। अत्र प्रकाशपदं ज्ञानपरम्। तेजःपरत्वे तद्भिन्नत्वहेतोर्भागासिद्धिः स्यात्। ज्ञानत्वजातिस्तु चित्त्येव स्वीक्रियते। अतो न वृत्तौ भागासिद्धिः। न च चित एकत्वात् कथं तन्मात्रनिष्ठज्ञानत्वं जातिरिति वाच्यम्। तत्तद्वृत्त्युपहितचितामेव ज्ञानत्वेन तासामुपाधिभेदेन भिन्नत्वादिति भावः॥ तथा हीति॥ दूषणग्रन्थस्यायं भावः। ज्ञानत्वमुपहिते स्वीकृत्य तत्प्रतियोगिकभेदनिवेशे शुद्धात्मन्युपहितभेदसत्त्वाद्व्यभिचारः। तदवच्छिन्नात्यन्तभेदनिवेशे तूपहितेषु पक्षनिविष्टेषु भागासिद्धिः स्यात्। अतो ज्ञानत्वं शुद्धस्वरूप एव स्वीकृत्य तदाश्रयभेदो वाच्यः। स च किञ्चिदुपहितेऽपि वर्तते। उपहितं न शुद्धस्वरूपमिति प्रत्ययात्। एवं सति ज्ञानत्वं न जातिश्चेदस्तु तथैवेति परेण वाच्यम्। तत्र ज्ञानत्वमिच्छादिव्यावृत्तसविषयत्वरूपं तद्व्याप्यं वा। उभयथापि विषयनिरूपणाधीनत्वेन तदभावे शुद्धात्मनोऽपि ज्ञानत्वाश्रयस्वरूपभिन्नत्वात् व्यभिचार इति॥ तदभावादिति॥ स्वस्य स्वेन सह विषयविषयिभावाख्यसम्बन्धाभावादित्यर्थ ॥ दुर्निरूपत्वादिति॥

ननु कस्य मतेनेदं दूषणम्। न तावत्स्वमतेन। अत्यन्तासन्निरूपितविषयिताया ज्ञानेऽङ्गीकारात्। नापि परमतेन। अत्यन्ताभावप्रतियोगिरूपमिथ्यावस्तुन एव चिद्रूपज्ञानेऽध्यस्ततया विषयत्वाङ्गीकारेण तस्य विषयत्वनिर्वाहकत्वादिति चेन्न। दुर्निरूपत्वादित्यस्य सत्यस्य दुर्निरूपत्वादित्येतदर्थकत्वेन दोषाभावात्। परो हि यन्मिथ्योपाधिकं तन्मिथ्येत्येव मनुते। अत एवाधिकरणात्मकोऽप्यत्यन्ताभावः प्रातिभासिकरजतप्रतियोगिकत्वादिविशिष्टरूपेण प्रातिभासिक इति तत्सिद्धान्तः। तथा च परस्य मिथ्यात्वे तत्प्रतियोगिकत्वादिरूपतदुपाधिकत्वविशिष्टविषयत्वमपि मिथ्येति तदभाव एव प्राप्त इति परशैत्यैवेदं दूषणमिति भाव। न च विषयिता ब्रह्मस्वरूपभूतैव कल्पितभेदेन परनिरूपिता भवन्ती उपहितरूपेण मिथ्यैवास्तु। तथा च स्वरूपतः सत्यत्वाद्ब्रह्मणि

(द्वै सि) ज्ञानत्वव्यापकीभूतविषयित्वस्य न निवृत्तिरिति वाच्यम् । ज्ञानानन्दयोरपि [1]संयोगादिकं विहाय विषयितामात्रस्य तत्स्वरूपत्वग्राहकमानाभावात् । निर्भेदस्वरूपानन्दत्वे भेदनियतभागधेयस्य वास्तवस्य कर्मतेऽभावेन निर्विषयकत्वस्यावर्जनीयत्वात् । न च ज्ञानत्वं प्रति प्रतियोगिवैयधिकरण्यविशिष्टः यः सविषयकत्वाभावस्तदभाव एव व्यापकः । स चात्मनि कदाचिदुपाधिवशात्सविषयकत्ववत्त्वदपि सर्वदा नास्तीति वाच्यम् । लोके ज्ञानत्वेन व्यवह्रियमाणे [2]यत्स्वकालं विषयतासम्बन्धादन्यावृत्ति तस्यैवानुभवेन तस्यैव सर्वैर्गृहीतत्वात् लोकसिद्धव्याप्तिमनुसृत्य परन्यायेन व्यापकीभूतसविषयकत्वाभावमुपपाद्य दूषणदानस्येदानीमभिमतत्वात् । परोक्तिमात्रप्रक्रियया दूषणपरिहारस्तु जगन्मिथ्यात्वसिद्धेः प्रागन्योन्याश्रयादिना दुष्ट इति न कश्चिद्दोषः ।

(गु टि) ॥ तदभावादिति ॥ स्वस्य स्वविषयत्वाभावादित्यर्थः । अनात्मत्वे दृश्यत्वसमानत्वादिति भावः । ॥ दुर्निरूपत्वादिति ॥ सर्वाभावेन तत्सापेक्षसर्वज्ञत्वादीनां परेण ब्रह्मणि सत्त्वानङ्गीकारादित्यर्थः । अन्यथा तेषामप्यङ्गीकारप्रसङ्गादिति भावः ।

परिरीत्या आत्मनः कर्तृकर्मभावविरोधेन स्वविषयप्रकाशत्वाभावसमर्थनम्

(टी) ननु कथमात्मनः स्वविषयप्रकाशत्वाभावः । यावता वादिप्रतिवादिभ्यां स्वप्रकाशज्ञानरूप आत्मेत्यङ्गीकृतमित्यत आह

**स्वविषयत्वं हि कर्तृकर्मविरोधात्तैर्नाङ्गीक्रियते**

आत्मप्रकाशस्येति शेषः । सत्यमस्माभिः स्वविषयप्रकाशत्वमात्मनोऽङ्गीक्रियते । परैस्तु नाङ्गीक्रियते । एकस्यां क्रियायां हि कर्तृकर्मणोरेकत्वं विरुद्धम् । परसमवेतक्रियाफलशालित्वस्य कर्मलक्षणत्वात् । अतो न स्वविषयमात्मज्ञानम् । स्वप्रकाशत्वं तु परप्रकाश्यताभावमात्रमिति परेषां प्रवादः । तदभिप्रायेण च 'आत्मनः स्वविषयप्रकाशत्वाभावात्' इत्युक्तमित्यदोषः ।

(वि. टि) स्वविषयत्वमेव स्वप्रकाशत्वमिति सिद्धान्तवासनया शिष्यः पृच्छति ॥ नन्विति ॥ सत्यमेवमस्मन्मते । परस्य तु न तथा । पराप्रकाश्यत्वस्यैव स्वप्रकाशत्वरूपताऽङ्गीकारादिति परिहरति ॥ अत आहेति ॥ ॥ परसमवेतेति ॥ कर्मान्यसमवेतेत्यर्थः ।

(ग टि) पराभिप्रेतमेव लक्षणमाह ॥ परसमवेतेति ॥

(वे टि) स्वविषयत्वमेव स्वप्रकाशत्वमिति सिद्धान्तवासनया शिष्यः पृच्छति ॥ नन्विति ॥ परसमवेतेति ॥ स्वभिन्नकर्तृसमवेतेत्यर्थः । न चैवमात्माश्रयत्वम् । कर्तुरन्यत्वे सति क्रियाजन्यफलशालित्वमित्यत्र तात्पर्यात् । नन्वस्माभिरात्मज्ञानस्य स्वविषयत्वाङ्गीकारात्कथं प्राक् स्वविषयत्वाभावादित्युक्तमित्यत आह ॥ तदभिप्रायेणेति ॥ परकीयस्वविषयत्वानङ्गीकाराभिप्रायेणेत्यर्थः ।

---

[1] संयोगादिकं विहाय इत्यधिकमिति भाति ।    [2] यावत्स्वकालं विषयिता इति पाठेन भाव्यमिति भाति ।

[3] गुरुराजीये अत एव तैरित्युक्तम् इत्यधिकः पाठः ।

(द्वै गु.) सिद्धान्तवासनावतामाशङ्कयोत्तरमूलमवतारयति ॥ नन्विति ॥ मूले कर्तृकर्मपदे भावप्रधाने। तेनापि ज्ञानस्य शब्दादेरपि परै स्वविषयत्वमनङ्गीकृत्यापि सर्वं ज्ञानं प्रमेयं, शब्दो नित्य, स्वाध्यायोऽध्येतव्य इत्यादौ कर्मताकर्तृतावच्छेदकरूपभेदात्तदुपहितकर्मकर्त्रोरपि भेदमाश्रित्यैव स्वोक्तनियमस्योपपादितत्वेऽप्यात्मन एवेदानीं प्रस्तुतत्वात्तदभिप्रायमात्रकत्वं मूलस्य। अन्यथाऽऽधिक्यापत्तेरित्याशयेनाह ॥ आत्मप्रकाशमतीति ॥ प्रकाशरूपत्वेन स्वाभ्युपगतस्याप्यात्मन इत्यर्थः। तेनाप्रकाशस्वरूपजडत्वहेतोरनैकान्त्योपपादनाय वमूले आत्मन सविषयत्वाभावोपपादनमसङ्गतमप्रसक्तत्वादिति शङ्का परिहृता। आत्मन प्रकाशरूपत्वेन व्यभिचारपरिहारस्य परासिमानविषयतया तत्खण्डनसङ्गतिरित्यर्थस्य आत्मन इत्येतावन्मात्रं विहायाधिकप्रकाशादेन सूचितत्वात् ॥ प्रवाद इति ॥ निर्धर्मके प्रमाणप्रवृत्तेरयोगात् स्वयमेव प्रकाशते न तु परेणेत्यत्रत्यैवकारार्थमात्रतात्पर्येण परमते व्यवहार इति भाव ॥ तदभिप्रायेणेति ॥ परमताभिप्रायेणैवेत्यर्थ। इदानीं परन्यायेनैव दूषणस्य प्रक्रान्तत्वादिति भाव।

(गु टि.) शिष्य शङ्कते ॥ नन्विति ॥ परसमवेतेति ॥ यदत्र वक्तव्य तत् कर्तुरन्यत्वे सतीत्यादि पूर्वग्रन्थव्याख्यानावसर एवोक्तमिति तत एव प्रतिपत्तव्यम्। ननु यदि स्वविषयप्रकाशत्वं नाङ्गीक्रियते तर्हि कथं तन्मते स्वप्रकाशत्वनिर्वाह इत्यत आह ॥ स्वप्रकाशत्वन्त्विति ॥ तथा सति पराप्रकाश्यतया शशविषाणादेरपि स्वप्रकाशताप्रसङ्गादिति भावेन परेषा प्रवाद इत्युक्तम्। यद्यस्माभि स्वविषयप्रकाशत्वमङ्गीक्रियते तर्हि कथ ग्रन्थकारीया तदनङ्गीकारोक्तिरित्यत आह ॥ तदभिप्रायेणेति ॥ परकीयस्वविषयत्वानङ्गीकाराभिप्रायेणेत्यर्थ। उक्ताभिप्रायकत्वं ग्रन्थकृत्सम्मतञ्चेत्याह ॥ अत एवेति ॥ अन्यथा नाङ्गीक्रियत इत्येतावतैव पूर्णत्वेन तैरित्यस्य व्यर्थत्वादिति भाव.।

मूले कर्तृकर्मभावविरोधादित्युक्तेरयुक्तत्वशङ्का परमतस्वमतरीत्या तत्परिहारश्च

(टी) ननु ज्ञानस्य स्वविषयत्वे कर्तृकर्मभाव एव नास्ति यो विरुद्ध्येत। न हि ज्ञानं ज्ञानस्य कर्तृ। न च कर्तुरभावे कर्मापि सम्भवति। तस्य तदुपहितलक्षणत्वात्। अतो 'विषयविषयिभावस्य पराक्प्रत्यग्भावरूपत्वात् एकस्य युगपत्तद्विरोधात् स्वविषयत्व ज्ञानस्य तैर्नाङ्गीक्रियते' इति वक्तव्यम्। कर्तृकर्मविरोधादिति तु कथम्। मैवम्। ज्ञानस्यापि विषयीकरणलक्षणव्यापारं प्रति कर्तृत्वेन स्वविषयत्वे कर्तृकर्मभावापरिहारात्। इतरथा ज्ञानमर्थं विषयीकरोतीति न स्यात्

अथ वा स्वमते ज्ञानस्वरूपस्याप्यात्मनो ज्ञानं प्रति कर्तृतास्तीति ज्ञापनायेदमुदितम्। कथमेतदिति चेत्। इत्थम्। अस्माभिर्विज्ञानं सविशेषमङ्गीकृतम्। विशेषश्च भेदकार्यं करोति। एवं तर्ह्यतिप्रसङ्गः स्यादिति चेन्न। सति प्रमाणे तन्निर्वाहहेतुभूतभेदाभावे च तत्प्रतिनिधिना तत एव सिद्धेन विशेषेण तन्निर्वाहाभ्युपगमात्। प्रपञ्चितश्चैतदन्यत्राचार्यैः॥

(वि टि) ॥ न हीति ॥ ज्ञानस्य क्रियारूपतया कारकविशेषरूपकर्तृत्वं न सम्भवति। क्रियाकारकभावस्य भेदनियतत्वादिति भाव ॥ न चेति ॥ यद्यपि ज्ञानस्य कर्तृत्वाभावेऽपि कर्त्रन्तरसद्भावात् तदुपहितकर्मत्व सूपपादनं तथाप्यात्मरूपज्ञानं प्रति कर्त्रन्तरस्याप्यसम्भवात्तदुपहित कर्मत्वमपि न सम्भवतीति भाव । स्वस्य क्रियारूपस्यापि ज्ञानस्य क्रियान्तरं प्रति कर्तृत्वसम्भवात्स्वविषयत्वे ज्ञानस्य तदुपहितं कर्मत्वमपि दुष्परिहरमिति कर्तृकर्मविरोधादिति सुष्ठूक्तमिति परिहरति ॥ मैवमिति ॥ अथ वा कर्तृकर्मविरोधात् प्रत्यक्षपराग्भावविरोधादित्यर्थ । न चैवमाचार्योक्तिरपि तथैव स्यादिति वाच्यम् । स्वमते कर्तृकर्मभावविरोधज्ञापनाय तथा तदुक्त्युपपत्तेरित्याह ॥ अथ वेति ॥ ननु कर्तृकर्मभावस्य भेदनियतत्वात्कथं तदविरोध इति पृच्छति ॥ कथमिति ॥ भेदप्रतिनिधिविशेषस्य सत्त्वान्न विरोध इति परिहरति ॥ इत्थमिति ॥ एवं तर्हीति ॥ सर्वत्र विशेषेणैव भेदकार्योपपत्तौ भेदमात्रोच्छेद स्यादित्यर्थ । न हि वयं सर्वत्र विशेषमभ्युपगच्छाम । येन भेदोच्छेद स्यात् । किं तु यत्र कार्यं प्रमितं भेदाभावश्च प्रमितस्तत्रैव । अतो न विरोध इति परिहरति ॥ नेति ॥ ननु विशेषे प्रमाणमेव नास्ति येनाविरोध उपपद्यतेत्यत आह ॥ प्रपञ्चितश्चैतदिति ॥ 'शुक्ल पट' इति सामानाधिकरण्यधीरेव विशेषे प्रमाणम् । अत्यन्तभेदे अत्यन्ताभेदे च 'घटः पट' 'घटो घट' इति सामानाधिकरण्यस्यादर्शनात् । न च तावता भेदाभेद एव सिद्ध्येन्न विशेष इति वाच्यम् । भेदाभेदयोरपि विरोधेनैकत्रासम्भवात् । तदविरोधाय [1]नित्यविश्रामकान्तरस्वीकारे चास्मदभ्युपगतविशेषस्यैव नामान्तरकरणापत्ते । आवश्यकत्वेन प्रथमत एव तदभ्युपगमस्योचितत्वाच्च । न च विशेषाभ्युपगमे तस्य भेदकार्यकरत्वमेव न स्यादिति वाच्यम् । पूतिकासाध्ययागस्य सोमकार्यकत्ववत् सादृश्येन विशेषकार्यस्य भेदकार्यत्वोपपत्तेरित्याद्यस्यानुव्याख्यानादावाचार्यैः प्रपञ्चितत्वादित्यर्थ । विस्तरस्तु तत्रैवानुसन्धेय ।

(ग. टि) ॥ तदुपहितेति ॥ कर्तृसमवेतक्रियाफलशालित्वस्य लक्षणत्वादित्यर्थ ॥ पराग्गिति ॥ बाह्यत्वान्तरत्वरूपत्वादित्यर्थं ॥ इति न स्यादिति ॥ कर्तृप्रयोगो न स्यादित्यर्थ ॥ भेदकार्यमिति ॥ भेदप्रतिनिधित्वाद्विशेषस्य सोमप्रतिनिधि पूतीक यथा सोमकार्यं करोति तथेति भाव ॥ अतिप्रसङ्गः स्यादिति ॥ प्रमितभेदे जीवेश्वरादावपि विशेष एवाभ्युपेयो न भेद इत्यर्थ । सति प्रमाणे भेदकार्ये प्रमाणे सतीत्यर्थ ॥ तत एवेति ॥ प्रमितकार्यस्य निर्वाहकान्तराभावादेवेति वा प्रमाणनिर्वाहकाभावोभयान्यथानुपपत्तित एवेति वा अर्थ ॥ अन्यत्रेति ॥

भेदहीने त्वपर्यायशब्दान्तरनियामक ।
विशेषो नाम कश्चित् सोऽस्ति वस्तुष्वशेषत ॥

इत्यादिना अनुव्याख्यानबृहद्भाष्यादावित्यर्थ. ।

---

[1] निबत इति पाठेन भाव्यमिति भाति ।

(वे टि) ॥ न हीति ॥ ज्ञानस्य क्रियारूपतया कारकविशेषरूपकर्तृत्वं न सम्भवति । क्रियाकारकभावस्य भेदनियतत्वादिति भाव । यद्यपि ज्ञानस्य कर्तृत्वाभावेऽपि कर्त्रन्तरमादाय तद्घटितकर्मत्व सूपपादम् । तथाप्यात्मरूपज्ञानं प्रति कर्त्रन्तरस्याप्यसम्भवात्तदुपहितकर्मत्वमपि न सम्भवतीति भाव । स्वयं क्रियारूपस्यापि ज्ञानस्य क्रियान्तर प्रति कर्तृत्वमसम्भवात् स्वविषयत्वे ज्ञानस्य तदुपहितकर्मत्वमपि दुष्परिहरमिति **कर्तृकर्मविरोधा**दिति सुष्ठूक्तमिति परिहरति ॥ **मैवमिति** ॥ अथवा **कर्तृकर्मविरोधात्** प्रत्यक्पराग्भावविरोधादित्यर्थ । न चैवमाचार्योक्तिरपि तथैव स्यादिति वाच्यम् । स्वमते ज्ञानरूपस्याप्यात्मनो ज्ञानं प्रति कर्तृत्वञ्चास्तीति ज्ञापनाय तथा तदुक्त्युपपत्तेरित्याह ॥ **अथ वेति** ॥ ज्ञानरूपत्वे आत्मन कथ ज्ञान प्रति कर्तृत्वम् । क्रियाभिन्नस्यैव कर्तृत्वनियमादित्याक्षिपति ॥ **कथमेतदिति** ॥ **एवं तर्हीति** ॥ सर्वत्र विशेषेणैव भेदकार्योपपत्तौ भेदमात्रोच्छेद स्यादित्यर्थ ॥ **मति प्रमाण इति** ॥ अभेदभेदकार्ययोरिति शेष । ननु प्रमाणाभावाद्विशेष एवासिद्ध इत्यत आह ॥ **तत एव सिद्धेनेति** ॥ भेदकार्यतन्निर्वाहकभेदाभावान्यथानुपपत्तित एवेत्यर्थ ।

(द्वै. वृ) ॥ **तदुपहितेति** ॥ तथा च कर्तुरभावे स्वभिन्नसमवेतक्रियाप्रसिद्ध्या तद्घटित कर्मत्वमप्रसिद्धमिति भाव ॥ **परागिति** ॥ पराक्त्व प्रतियोगित्व प्रत्यक्त्वमनुयोगित्वं प्रकृते विवक्षितम् । विषयस्य यो विषयी तद्भावस्य विषयिताया पराक्प्रत्यग्भावौ अनुयोगित्वप्रतियोगित्वे ताभ्या रूप्यते सत्त्वेन गृह्यत इति तादृशरूपत्वादित्यर्थ । विषयिताया सम्बन्धरूपतया प्रतियोग्यनुयोग्युभय[1]सापेक्षे एकस्मिन्नेकनिरूपितप्रतियोग्यनुयोगि[2]भावस्य उपाधिनैरपेक्ष्येण शुद्धात्मरूपज्ञानस्य न स्वविषयकत्वमिति भाव ।

॥ **युगपदिति** ॥ 'उपाधिकृतभेदमन्तरैककाल इत्यर्थ । पराक्प्रत्यग्भावेत्यादेश्चित्त्वजडत्वाधीनत्वादित्यर्थ. । चितो जडनादात्म्यरूपविषयताऽश्रयत्वम् । तत्प्रतियोगित्वरूप विषयत्व जडस्यैव । न तु चित' इत्यर्थोऽत्र न सङ्गच्छते । युगपदित्युत्तरपङ्क्तिविरोधात् । औपाधिकभेदेनापि चेतने जडत्वस्य जडे चेतनत्वस्यायोगेन युगपदित्यस्यानर्थकतापत्त । एकस्येति सामान्योक्त्यसङ्गतेश्च ॥ **इतरथेति** ॥ तथा च विषयीकरण विषयितैव । तत्कर्तृत्वकर्मत्वे प्रतियोगित्वानुयोगित्वरूप एव पर्यवस्येत इत्युक्तविरोधो युक्त एवेति भाव । ननु तर्हि स्फुटतया पराक्प्रत्यग्भावविरोधादित्येव वक्तव्यम् । किमर्थं विषयिताया अप्युक्तरीत्या क्रियात्वविवक्षया तथोक्तिरित्यत आह ॥ **अथ वेति** ॥ **इदमुदितमिति** ॥

ननु पूर्वं ज्ञानरूपक्रिया प्रति कर्तृकर्मभावस्य ज्ञानस्य स्वविषयकत्वपक्षे प्रसक्तेस्तद्विरोधस्य स्वविषयत्वपरित्यागहेतुत्व पराभिमतमित्यतद्बाधितमित्याशङ्क्य विषयीकरणरूपक्रियान्तरविवक्षयैतन्मूलम् । अतो न बाधितार्थकमिति रीत्या पूर्वग्रन्थेन योग्यतैवोपपादिता । इदानीं तु तस्य प्रयोजनमनेन ग्रन्थेनोच्यते । तस्य तु पूर्वग्रन्थेनानुक्त्वा कथमथ वेति सङ्गच्छते । भिन्नविषयत्वेनैकस्मिन्नेव विषये पक्षान्तररूपत्वाभावात् । न चेद युक्तमपि । ज्ञानक्रियामुपादायैतन्मूलोपपादने शङ्काग्रन्थोक्तबाधकानुद्धार । विषयीकरणरूपक्रियान्तरमुपादाय मूलार्थवर्णने

[1] सापेक्षतया इति पाठेन भाव्यमिति भाति । [2] भावस्यायोगात् इति पाठेन भाव्यमिति भाति ।

(द्वै.यु) तादृशक्रिया प्रति कर्तृकर्मविरोध. स्वमते नास्ति । अत स्वविषयकत्वमस्तीत्येव ज्ञापितं स्यात् । न तु ज्ञानरूपस्याऽऽत्मनो ज्ञानक्रियां प्रति कर्तृत्वम् । बीजाभावात् । अन्यथा शब्दस्य द्रव्यत्वमपि ज्ञापितं स्यात् । अविशेषात् । तस्मादिदमयुक्तमिति चेन्न । योग्यतोपपादनपरेणापि पर्वग्रन्थेन पराक्प्रत्यग्भावविरोधादिति विरोधं कर्तृकर्मेत्युक्ते प्रयोजनविशेष सूचितो भवति । इदानीं तु तस्य प्रयोजनान्तरमुच्यत इत्याशयेनाथवेत्युक्तिमङ्गते । प्रयोजनविशेषस्तु सम्बन्धप्रतियोगित्वानुयोगित्वयोरपि कर्तृत्वकर्मत्वत्वादिरूपतयैव विरोध । 'चैत्रो ग्राम गच्छति' 'पटस्तन्तून् समवैति' इति व्यवहारेण तयोरपि कर्तृत्वकर्मत्वरूपतावगते । न तु स्वानन्त्येण । गौरवात । इति सूचनरूप । विषयीकरणक्रियानिरूपितकर्तृत्वकर्मत्वयोरपि सामान्यत [1]कर्तृत्वकर्मत्वरूपेण ग्रहण कृत्वा तयो विरोधाभावस्य स्वमते तैरित्यनेन सूचने ज्ञापकसामान्य एवासति व यके प्रवृत्ते ग्राम गच्छति स्वस्य स्वज्ञानरूपक्रिया प्रति कर्तृत्व बोधित भवतीति द्वितीयदोषस्याप्यभावात् । अत एव मत इत्येन वत्म त्र हित्वाऽऽत्मप्रकाशस्येति शेषपूरण कृतमिति ।

अथवात्मरूपप्रकाशस्य नित्यस्य कर्त्रनुपपत्तिरूपविरोधात्तत एव तद्घटितकर्मानुपपत्तिविरोधात् स्वविषयकत्व तैर्नाङ्गीक्रियत इति मूलार्थ । न चैव सविषयकत्वरूपसकर्मकत्वमात्रस्य निषेधसम्भवात् स्वविषयकत्वमिति विशेषनिषेधायोग इति वाच्यम् । प्रकृतानामिप्रायेण तदुपपत्तेरित्यभिप्रेत्य प्राक्त पराक्प्रत्यग्भावहेतुमनभिधाय तदभिप्रायविषयतया सम्भावितहेतुकथने प्रयोजनमाह ॥ अथ वेति ॥ इदमभिहितं ज्ञानरूपक्रियागर्भितमेवैतद्दूषणमुदितमित्यर्थ । एव चाथवेति पङ्क्तेर्मूलव्याख्यानान्तरपरत्वान्न पक्षान्तर वानुपपत्तिदोष । स्वात्मज्ञानक्रिया प्रति कर्तृत्वस्य परानभिमतत्वोक्त्या स्वमते विरोधबलादश्रयत्वादिरूपकर्तृत्वमस्तीति ज्ञापित भवतीति न द्वितीयोऽपि दोष इति सारम् । पूर्वं 'ज्ञानक्रिया प्रति कर्तुरात्मन कर्मत्वविरोधात इति मूलार्थमभिप्रेत्य शङ्का कृता । तादृशार्थमभ्युपेत्यैव क्रियामात्रस्य ज्ञानातिरिक्तत्वमभ्युपेत्यैक समाधानमभिहितम् । इदानीं तु कर्तृत्वविरोधात्तदुपहितकर्मत्वस्यापि तत एव विरोधादित्यर्थाभिप्रायेण समाधान ज्ञानक्रियामादायैव । अतो न पूर्वपक्षसमाधानयोरन्यतरस्यालग्नकतेति ध्येयम् ।

टिप्पण्यां तु 'अथवा कर्तृकर्मविरोधात् प्रत्यक्पराग्भावविरोधादित्यर्थ । न चैवमाचार्योक्तिरपि तथैव स्यादिति वाच्यम् । स्वमते ज्ञानरूपस्याप्यात्मनो ज्ञान प्रति कर्तृत्वमस्तीति ज्ञापनाय तदुक्त्युपपत्तेरित्याह । अथ वेति' इत्युक्तम् । तत्पक्षे अथ वेत्यनन्तर कर्तृकर्मविरोधादित्यस्य प्रत्यक्पराग्भावविरोधादित्यर्थ इति पूरण कर्तव्यम् । ज्ञापनायेत्यनन्तर तु शब्द पूरणीय । लाक्षणिकपदप्रयोगान्यथानुपपत्त्या च तज्ज्ञापनमित्यनुसन्धेयम् । अन्यथा वेत्यस्य प्रयोजनोक्तिपरत्वप्राप्त्या पक्षान्तरत्वोत्तयसङ्गते पूर्वोपदर्शिताया अनुद्धारापत्तेरिति ध्येयम् ।

॥ कथमिति ॥ स्वस्य स्वाश्रयताया बाधितत्वात्कथमेतत्प्रामाणिकमित्यर्थ ॥ करोतीति ॥ तथा चान्यत्र प्रामाणिकत्वेनोक्त आश्रयाऽऽश्रयिभाव सङ्कुच्छत इत्यर्थ ॥ अतिप्रसङ्ग इति ॥ घट स्ववानिति प्रत्ययापत्तिर्भेदा-

[1] कर्तृत्वत्वकर्मत्वत्वरूपेण इति पाठेन भाव्यमिति भाति ।

(द्वै वृ) भावापत्तिश्चेत्यादिरूप इत्यर्थ ॥ तत एव सिद्धेनेति ॥ प्रामाणिकार्थनिर्वाहार्थमेवार्थापत्त्या सिद्धेनेत्यर्थः ॥ विशेषतेति ॥ वस्तुनिष्ठस्वाभाविकशक्तिविशेषेणेत्यर्थ । तथा चोक्त विष्णुतत्त्वनिर्णयटीकायां द्वितीयपरिच्छेदे 'विशेषो नाम वस्तुन काचिच्छक्ति' इति । ननु तादृशव्यवहारादेरन्यैरन्यथोपपादितत्वात्कथ विशेषसिद्धिर्भवतामपीत्यत आह ॥ प्रपञ्चितं चेति ॥ अनुव्याख्यादावित्यर्थ तत्प्रकार लेशतोऽग्रे दर्शयिष्याम ।

(गु टि.) ॥ न हीति ॥ क्रियारूपतया कारकविशेषरूपकर्तृत्व न सम्भवति । क्रियाकारकभावस्य भेदनियतत्वेन अभेदे तदसम्भवादिति भाव ॥ नापीति ॥ एतच्चाऽत्मरूपज्ञानस्य कर्त्रन्तराभावाभिप्रायेणोक्तम् । अन्यथा तद्घटितकर्मलक्षणसम्भवेनोक्तदोषाप्रसरादिति ध्येयम् । स्वयं क्रियारूपस्यापि ज्ञानस्य विषयीकरणलक्षणव्यापार प्रति कर्तृत्वेन स्वविषयत्वे ज्ञानस्य तदुपहितकर्मत्वमपि दुष्परिहरमिति कर्तृकर्मविरोधोऽस्त्येवेति परिहरति ॥ ज्ञानस्यापीति ॥ भवेदेतत् यदि विषयीकरणलक्षणव्यापार प्रति कर्तृत्वमेव सिद्धं स्यात् । तदेव कुत इत्यत आह ॥ इतरथेति ॥ इदमिति ॥ कर्तृकर्मविरोधादितीदमित्यर्थ । ज्ञानरूपस्यात्मनो ज्ञान प्रति कर्तृत्व न सम्भवति । क्रियाकर्तृभावस्य भेदनियतत्वेन भेदाभावे अयोगादिति शङ्कते ॥ कथमेतदिति चेदिति ॥ भेदाभावेऽपि भेदप्रतिनिधिरूपविशेषबलादेव तदुपपत्तिरिति परिहरति ॥ इत्थमिति ॥ सविशेषमिति ॥ आत्मना सविशेषाभिन्नमित्यर्थ ॥ अतिप्रसङ्ग इति ॥ घटपटयोरपि भेदाभावेऽपि भेदप्रतिनिधिरूपविशेषबलेनैव भेदकार्यनिर्वाहाद्भेदो न स्यादित्यतिप्रसङ्ग इत्यर्थ ।

परीत्या आत्मन परविषयप्रकाशत्वाभावसमर्थनम्

(टी) मा भूदात्मप्रकाशः स्वविषयः । परविषयस्तु भविष्यति । न च पराभावो दोषः । मिथ्याभूतस्य परस्याङ्गीकृतत्वात् । न चैवं सति तद्विषयत्वस्यापि मिथ्यात्वप्रसङ्गो दोषः । इष्टत्वात् । अतो मिथ्यारूपस्य परविषयत्वस्य सद्भावाद्भवेदात्मा प्रकाश इत्यत आह

## मिथ्याभूतं परविषयत्वञ्चानिर्वचनीयनिरासादेव निरस्तम्

व्याख्यातप्रायमेतत् । मुक्तात्मन्यनैकान्त्यतादवस्थ्यञ्च द्रष्टव्यम् ।

ननु शुक्तिरजताद्यभावेऽपि परमार्थत एव विज्ञानं तद्विषयमस्ति । तथा पराभावेऽपि परविषयत्वं सत्यमेव कस्मान्न स्यात् । स्याच्चेत् । न त्वेव परोऽङ्गीकुरुते । तेन परोपाधिकानां मिथ्यात्वस्याङ्गीकृतत्वात् । परीत्या चेदमनैकान्त्यव्युत्पादनम् ।

(वि. टि.) ॥ तद्विषयत्वस्येति ॥ मिथ्याभूतपरविषयत्वस्येत्यर्थ ॥ व्याख्यातेति ॥ मिथ्येति नानिर्वचनीयमुच्यते । तस्य निरस्तत्वात् । किन्त्वसत्त्वमेव । तथा च परविषयत्व मिथ्येत्युक्ते स्वरूपतो नास्तीत्येवोक्तं स्यादिति व्याख्यातप्रायमित्यर्थ ॥ मुक्तात्मनीति ॥ मोक्षे पराभावेन परविषयत्वस्य कथञ्चिदप्यसम्भवादिति भावः । ननु मुक्तिकाले सविषयत्वाभावेपि संसारदशाया सविषयत्वाज्ज्ञानत्वमुपपद्यते । किञ्च तवेश्वरज्ञानवन्मोक्षेप्यासङ्गा-

(वि टि ) तस्यातीतप्रपञ्चविषयत्वेन ज्ञानत्वमुपपद्यत इति चेन्न । विषयोल्लेखित्वरूपमविषयत्वस्य ज्ञानत्वमावश्यक। यावद्धर्मभाक्त्वेन कादाचित्कत्वानुपपत्ते । मोक्षेप्यतीतविषयोल्लेखित्वरूपे दूषणवापत्तेश्चेति । ननु शुक्तिरजतादेरम-त्त्वेपि तज्ज्ञाने तद्विषयत्वस्य सत्त्ववत् परस्य मिथ्यात्वेपि आत्मस्वरूपज्ञाने तद्विषयत्वं सत्यं किं न स्यादिति शिष्य पृच्छति ॥ नन्विति ॥ कथं तर्हि व्यभिचारोद्भावनमित्यत परप्रीत्येति ।

(रा टि ) ॥ व्याख्यातप्रायमिति ॥ 'मिथ्येति नानिर्वचनीयमिति वक्तु न शक्यते ; तस्याप्रामा-णिकत्वादिना निरस्तत्वात् । ततो मिथ्येत्यसत्त्वे वक्तव्ये मिथ्याभूत परमित्यस्य नास्ति परमिति मिथ्याभूत तद्विष-यत्वमित्यस्य नास्ति परविषयत्वमित्यर्थ स्यात् । तथा च कथमात्मा प्रकाश ' इति मिथ्या प्रमातृत्वमिति वाक्य-व्याख्यानरीत्या व्याख्यानप्रायमित्यर्थ ॥ मुक्तात्मनीति ॥ तस्य परविषयत्वे संभवाभावेन तत्प्रकाशस्य स्वपरा-विषयकत्वेनाप्रकाशत्वरूपस्याप्रमातृत्वरूपस्य च जडत्वस्य तत्रानैकान्त्यमित्यर्थ । अन्यथा मुक्तत्वव्याघातादिति भाव । विश्वसत्यत्ववादिमतरीत्या शङ्कते ॥ ननु शुक्तीति ॥ शङ्कायां उत्तरमाह ॥ स्यात्तदिति ॥

(वे टि.) ॥ व्याख्यातेति ॥ मिथ्येति नानिर्वचनीयमुच्यते । तस्य निरस्तत्वात् । किन्त्वसत्त्वमेव । तथा च परविषयत्व मिथ्येत्युक्ते स्वरूपतो नास्तीत्येवोक्त स्यादिति व्याख्यातप्रायमेवेत्यर्थ. ॥ मुक्तात्मनीति ॥ निवृत्ताविद्यस्य मुक्तरूपज्ञानस्याविद्योपादानकपरविषयत्वासम्भवेनाप्रकाशत्वापत्त्या तत्राप्रकाशत्वरूपजडत्वस्योक्तमनै-कान्त्य तदवस्थमेवेति भाव । तटस्थ शङ्कते ॥ नन्विति ॥ नन्वस्मद्रीत्या पराभावेपि परविषयत्व सत्यमेवात्म-स्वरूपज्ञानस्यास्तु । ततश्च तस्य प्रकाशरूपत्वोपपत्त्या नाप्रकाशत्वस्य तत्रानैकान्त्यमित्यत आह ॥ परप्रीत्येति ॥ स्वमते आत्मरूपज्ञानस्य परविषयत्वे दोषाभावेन प्रकाशत्वोपपत्तेरिति भाव ।

(है. शु.) ॥ मिथ्यात्वप्रसङ्ग इति ॥ मिथ्योपाधिकस्य मिथ्यात्वाङ्गीकारादिति भाव ॥ मुक्तात्मनीति ॥ निवृत्ताविद्ये तस्मिन् अविद्यासम्बन्धाधीनपरोपाधिकसविषयकत्वस्य कथमप्यभावेनाप्रकाशत्वप्राप्त्या जडत्वप्राप्तेरिति भाव । ननु निवृत्ताविद्यात्वादेव जडत्वरूपधर्मस्याप्यप्रसक्त्या कथं मन्मतरीत्या व्यभिचार. । त्वन्मते तु तत्र जडत्वप्रसक्तिरेव नास्तीति चेन्न । एव तर्हि निवृत्तविद्यत्वादिति हेतूकरणस्यैव तवायुक्तत्वापत्ते । तद्धर्मस्यापि तत्र वक्तुमशक्यत्वात् । इदानीं व्यवहारप्रामाण्यानुरोधाद्बद्धपुरुषकल्पिततादृशधर्मस्वीकारे सविषयकत्वाभावादि-व्यवहारप्रामाण्यानुरोधात्तादृशसविषयकत्वाभावस्यावर्जनीयतया तेन जडत्वापादनेन व्यभिचारापादनात् । शिष्य-व्युत्पादनाय स्वरीत्या शङ्कते ॥ नन्विति ॥

(गु टि ) ॥ व्याख्यातेति ॥ 'मिथ्येति नानिर्वचनीयत्वमुच्यते प्रमाणाभावात्' इत्यादिना निरस्तत्वात् । किन्त्वसत्त्वमेव । तथा च 'पटविषयत्वं मिथ्या' इत्युक्ते स्वरूपतो नास्तीत्येवोक्तं स्यादिति व्याख्यातप्रायमेवेत्यर्थ । न केवल पूर्ववाक्यव्याख्यानेनैतद्व्याख्यातमित्येव । [1]तात्पर्यवदेव एतत्तात्पर्यं च द्रष्टव्यमित्याह ॥ मुक्तात्मनीति ॥ [2]मुक्ताविद्यस्य मुक्तरूपज्ञानस्याविद्योपादानकपरविषयत्वासम्भवेनाप्रकाशत्वापत्त्या तत्राप्रकाशत्वरूपजडत्वस्यानै-

---

[1] तत्तात्पर्यवदेव इति पाठेन भाव्यमति भाति ।     [2] मुक्ताविद्यमुक्तस्वरूपज्ञानस्य इति पाठेन भाव्यमिति भाति ।

(गु टि , कान्त्य तदवस्थमिति भाव । नन्वस्मद्रीत्या पराभावेऽपि परविषयत्व सत्यमेव आत्मरूपज्ञानस्यास्तु । तथा चाप्रकाशत्वरूपजडत्वाभावादेव न तत्रानैकान्त्यमित्याह ॥ पररीत्या चेति ॥ स्वमते आत्मरूपज्ञानस्य स्वपर-विषयत्वे दोषाभावेन प्रकाशत्वोपपत्तेरिति भाव ।

आत्मप्रकाशस्य निर्विषयत्वाभावसमर्थनम्

टी ) ननु मा भूदात्मप्रकाशः स्वविषयः । मा च भूत्परविषयः । निर्विषय एवायं किन्न स्यादिति तृतीयं पक्षं निराकरोति

विषयवर्जितः प्रकाश एव न भवति घटवत्

आत्मा न प्रकाशः प्रकाश्यशून्यत्वात् घटवत् । अन्यथा घटोऽपि प्रकाशः स्यादिति जडत्वा-सिद्धिः ।

ननु विषयशून्यस्य घटस्य प्रकाशत्वाभावेप्यात्मा विषयवर्जितः प्रकाशोऽस्तु को दोषः । न हि सर्वैर्भावैरेकविधैर्भाव्यमिति नियमोऽस्ति । यथा अन्यो ज्ञाता अन्यश्च ज्ञेय इत्यन्यत्र दर्शनेप्यात्मन्यैक्य गृह्यते तथेति चेन् । स्यादप्येवं यद्येव प्रमाणं स्यात् । न चैतदस्तीत्याह

तत्प्रमाणाभावात्

प्रकाशत्वस्यैवानुपपत्तावात्मनः स्वप्रकाशत्व सुतरां परेषामशक्योपपादनमिति मन्वानो भग-वानाचार्यः अस्वप्रकाशत्व जडत्वमिति परोक्तमपि निराकर्तुं न पृथक्प्रक्रान्तवानिति ।

(वि टि.) ॥ प्रकाश्यशून्यत्वादिति ॥ इदमुपलक्षणम् । ज्ञातृशून्यत्वादित्यपि ज्ञेयम् ॥ अन्यथेति ॥ इदमुपलक्षणम् । अन्यथा भोक्तृहीना भुजिक्रियापि स्यादित्यपि द्रष्टव्यम् । ननु विषयशून्यत्वेप्यात्मनो ज्ञान-स्वरूपत्वमुपपन्नम् । 'सत्य ज्ञानमनन्तम्' इत्यादिश्रुतेरित्याशयेन शङ्कते ॥ नन्विति ॥ यद्येवमिति ॥ उदाहृत-श्रुतिश्चात्मनो ज्ञानरूपत्वमात्रप्रतिपादनपरा । न तु निर्विषयत्वेपि ज्ञानरूपत्वप्रतिपादनपरेति श्रुतिप्रतिपन्नज्ञानरूप-त्वनिर्वाहायैव सविषयत्वमङ्गीकार्यम् । ज्ञानस्य सविषयत्वादिति भाव । तत् तत्र निर्विषयत्वेप्यात्मनो ज्ञानरूपत्व-मित्यत्र प्रमाणाभावादिति मूलार्थ. । नन्वस्वप्रकाशत्व जडत्वमित्यपि पराङ्गीकारात्तत्किमिति न दूषितम् । सत्यम् । अप्रकाशत्वपक्षदूषणेनैव दूषितप्रायत्वादुपेक्षितमित्याह ॥ प्रकाशत्वस्येति ॥

(रा. टि.) ॥ इति तृतीयमिति ॥ यदि जडत्वं नामेति वाक्यव्याख्याने विकल्पितमित्यर्थ ॥ जडत्वा-सिद्धिरिति ॥ अप्रकाशत्वरूपेति योज्यम् ॥ तदिति ॥ तत्र निर्विषयत्वेप्यात्मन प्रकाशरूपत्वे प्रमाणाभावादि त्यर्थ. । नन्वस्वप्रकाशत्व जडत्वमित्येतत्कुतो नाशङ्कितमित्यत आह ॥ प्रकाशत्वस्यैवेति ॥

वे टि ) ॥ जडत्वासिद्धिरिति ॥ प्रकाश्यशून्यस्यापि प्रकाशत्वे घटस्यापि प्रकाशत्वापत्त्याऽप्रकाशत्व रूपजडत्वस्य पक्षीकृते घटेऽसिद्धिरित्यर्थ. । भावैः पदार्थै । अन्यत्र घटादौ । ऐक्यं ज्ञातृज्ञेययोरिति शेष ।

(वै. टि.) ननु तत्र । आत्मना निर्विषयत्वेऽपि ज्ञानत्वमित्यत्र प्रमाणाभावादिति मूलार्थः । शून्यादौ ज्ञानरूपतो-क्तिश्च तन्निर्विषयत्वेऽपि ज्ञानरूपताभिप्रायेति भावः । नन्वस्वप्रकाशत्वं जडत्वमित्यपि पराङ्गीकारात् तत् किमिति न दूषितमित्याशङ्क्याप्रकाशत्वदूषणेनैव दूषितप्रायत्वादुपेक्षितमित्याह ॥ प्रकाशत्वस्यैवेति ॥ अशक्योपपादनमिति ॥ अवेद्यत्वं स्वप्रकाशत्वमित्यङ्गीकारे तदभावो वेद्यत्वमस्वप्रकाशत्वमित्यायातम् , तच्च दृश्यत्वरूपं दूषितमिति भावः ।

(द्वै. पु.) ॥ अन्यथेति ॥ आत्मन्यैक्यमिति ॥ सत्त्वमत इत्यादि ॥ अशक्योपपादनमिति ॥ अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वरूपस्यापि तस्यात्मनो दृश्यत्वस्य व्यवस्थापितत्वादशक्योपपादनत्वमित्यर्थः ।

(गु. टि.) ॥ जडत्वासिद्धिरिति ॥ प्रकाशत्वशून्यस्यापि प्रकाशत्व घटस्यापि प्रकाशत्वापत्त्या अप्रका-शत्वरूपजडत्वस्य पक्षीकृते घटे असिद्धिः स्यादित्यर्थः । अन्यत्र घटादौ । अप्रमातृत्वादिवत् अस्वप्रकाशत्वस्यापि जडत्वनिर्वचनतया अङ्गीकारात्तस्यापि अवश्य विकल्प्य निरसनीयत्वेन मूले तन्निरासप्रयुक्तन्यूनतामाशङ्क्य परिहरति ॥ प्रकाशत्वस्यैवेति ॥ अशक्योपपादनमिति ॥ तस्य तद्घटितमूर्तिकत्वादिति भावः ।

देशतः कालतः परिच्छिन्नत्वहेतोर्भागासिद्ध्युपपादनम्

(टी.) अथ परिच्छिन्नत्वहेतुमपि विशेषतः प्रत्याचिख्यासुस्तत्किं देशतः किं वा कालतः अथवा वस्तुत इति विकल्प हृदि निधायाद्यद्वितीयौ निराकरोति

## देशतः कालतः परिच्छिन्नत्वं प्रकृतिकालादिष्वभावाद्भागासिद्धम्

प्रकृतिकालाकाशादीनां पक्षैकदेशानां सर्वगतत्वान्नित्यत्वाच्च देशतः कालतः परिच्छिन्नत्वं नास्तीति भागासिद्धं भवति । न च जडत्वादिना तत्रापि परिच्छिन्नत्वसिद्धिः । उक्तविधया अनैका-न्त्यात् आगमविरोधाच्च । न च प्रकृत्यादिव्यतिरिक्तस्यैव पक्षत्वम् । तन्मिथ्यात्वस्य निर्निबन्धनत्वा-पत्तेः ; दृश्यत्वादेर्दुष्टत्वात् । आगमानाञ्च निरसिष्यमाणत्वात् । उक्तवक्ष्यमाणदूषणगणानिस्ताराच्च ।

(वि. टि.) मिथ्यात्वे परिच्छिन्नत्वस्यैव हेतूकृतत्वेन कालतः परिच्छिन्नत्वादिदूषणस्यायुक्तत्वमाशङ्क्याह ॥ विशेषत इति ॥ विकल्पमुखेनेत्यर्थः । 'दृश्यत्वाद्यनुमानेष्वप्येत एव दोषा' इत्यनेन सामान्यतो दूषितत्वा-दिति भावः । किञ्चिद्देशसम्बन्धित्वे सति किञ्चिद्देशासम्बन्धित्वं देशतः परिच्छिन्नत्वं किञ्चित्कालसम्बन्धित्वे सति किञ्चित्कालासम्बन्धित्वं कालतः परिच्छिन्नत्वमिति देशतः कालतः परिच्छिन्नत्वशब्दार्थं हृदि निधाय भागा-सिद्धिमुपपादयति ॥ प्रकृतीति ॥ आकाशेति ॥ अव्याकृताकाशेत्यर्थः । आदिपदान्नित्यलोकपरिग्रहः । प्रकृत्या-दयः परिच्छिन्ना जडत्वाद्घटवत् इत्याद्यनुमानात्परिच्छिन्नत्वसिद्धिरित्यत आह ॥ न चेति ॥ उक्तविधयेति ॥ अप्रमातृत्वमप्रकाशत्वं वा जडत्वमित्यङ्गीकारे उक्तविधया ब्रह्मण्यनैकान्त्यादित्यर्थः ॥ आगमविरोधाच्चेति ॥ 'गौरनाद्यन्तवती' 'स एषोऽबद्धः सनातनः' 'कालश्च नित्यः प्रकृतिश्च नित्या' 'स यथाऽनन्तोऽयमाकाश एव-मनन्त आत्मा वेदितव्यः' 'नास्त्यकृतः कृतेन' इत्याद्यागमविरोधाच्चेत्यर्थः । इदमुपलक्षणम् । 'कालः सदाऽस्ति'

( ब्र टि ) 'देशः सर्वत्रास्ति' इति प्रतीतिविरोधाच्चेत्यपि द्रष्टव्यम् ॥ **निर्निबन्धनत्वेति** ॥ निष्प्रमाणकत्वेत्यर्थः । ननु परिच्छिन्नत्वहेतुना तदसिद्धावपि दृश्यत्वादिहेतुना प्रकृत्यादिमिथ्यात्वसिद्धिरित्यत आह ॥ **दृश्यत्वादेरिति** ॥

(ग. टि ) ॥ **अथेति** ॥ दृश्यत्वादिहेतुद्वयनिरासानन्तरमित्यर्थः । मिथ्यात्वरूपसाध्यविकल्पेन हेत्वादि-विकल्पेन[1] च प्राक् सामान्यतो निरासाद्विशेषत इत्युक्तम् ॥ **उक्तविधयेति** ॥ 'जडत्वञ्चाप्रमातृत्वमेव । न च प्रमातृत्वमात्मनस्त्वैरङ्गीक्रियते । अतस्तदप्यनैकान्तिकमेव' इति तथा 'आत्मनोऽपि दृश्यत्वादनैकान्तिकता च' इत्यादिनोक्तविधया चेत्यर्थः ॥ **आगमेति** ॥ 'गौरनाद्यन्तवती' 'आकाशवत्सर्वगतश्च नित्यः' 'प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम' इति 'सदेव सोम्येदमग्रे' 'अथ मर्त्योऽमृतो भवति' इत्याद्यागमेत्यर्थः । दृश्यत्वादिहेतुना 'नेह नानास्ति किञ्चन' इत्याद्यागमैर्वा तन्मिथ्यात्वं सेत्स्यतीत्यत आह ॥ **दृश्यत्वादेरिति** ॥ **उक्तेति** ॥ मिथ्यात्वादिविकल्पादिनोक्तदूषणगणेत्यर्थः । बाधादिवक्ष्यमाणेत्यर्थः ।

(वे टि )**दृश्यत्वाद्यनुमानेष्वप्येत एव दोषाः** इति सामान्यतः परिच्छिन्नत्वहेतोरपि निराकृतत्वाद्विशेषत इत्युक्तम् । मिथ्यात्वे परिच्छिन्नत्वस्यैव हेतूकृतत्वेन कालतः परिच्छिन्नत्वादिदूषणस्यायुक्तत्वमाशङ्क्याह ॥ **विशेषत इति** ॥ 'विकल्पमुखेनेत्यर्थः' इति व्याख्यानं तु पूर्वग्रन्थविस्मरणविजृम्भितम् । पूर्वं हि एवं सामान्यतोऽनुमानानि निरस्य विशेषतो निराचिकीर्षुर्दृश्यत्वानुमानस्य तावद्दोषान्तरमाहेत्युक्तम् । आकाशादीनामित्यत्रादिपदेन वर्णाना परिग्रहः ॥ **आगमविरोधाच्चेति** ॥ 'गौरनाद्यन्तवती' 'कालश्च नित्यः प्रकृतिश्च नित्या' 'स यथाऽनन्तोऽयमाकाश एवमनन्त आत्मा वेदितव्यः' 'आकाशवत्सर्वगतश्च नित्यः' 'यावद्ब्रह्म विष्ठितं तावती वाक्' इत्याद्यागमविरोधा-दित्यर्थः ।

(द्वै द्यु ) परिच्छिन्नत्वमभावप्रतियोगित्वमित्यर्थमभ्युपेत्य **देशतः कालतः इति** । सप्तम्यर्थे तसि । नचैवमव्यावर्तकता । देशकालपदयोः किञ्चिद्देशकालपरत्वेनाभावे देशत्वकालत्वव्यापकतानिवेशभ्रमनिवर्तनार्थत्वेन वाऽभावस्य संसर्गाभावरूपत्वबोधतात्पर्यकत्वेन वा सार्थक्यात् । परिच्छिन्नत्वमित्यस्य भेदप्रतियोगित्वमित्यर्थ-स्फोरणाय **वस्तुत इति** ॥ **आगमेति** ॥ 'गौरनाद्यन्तवती' 'अजामेकां लोहितशुक्लकृष्णाम्' 'कालश्च नित्यः प्रकृतिश्च नित्या' 'स यथानन्तोऽयमाकाश एवमनन्त आत्मा वेदितव्यः' 'आकाशवत्सर्वगतश्च नित्यः' 'याव-द्ब्रह्म विष्ठितं तावती वाक्' इत्याद्यागमविरोधादित्यर्थः ॥ **आगमानामिति** ॥ वाचारम्भणमित्यादीनामित्यर्थः ॥ **उक्तवक्ष्यमाणेति** ॥ अप्रसिद्धविशेषणत्वादीनामुक्तानां प्रत्यक्षबाधादीनां वक्ष्यमाणानामित्यर्थः ॥ **अनिस्ता-रादिति** ॥ तेषां मिथ्यात्वसाधकानुमानादीनामित्यर्थः ।

---

[1] अत्र 'दृश्यत्वाद्यनुमानेष्वप्येत एव दोषाः' इत्युक्तदूषणसमुच्चयार्थश्चकारः । यद्वा साध्यहेत्वादीनां मिथ्यात्वादिविकल्पेन प्रागुक्ता दोषाः सर्वेऽपि सर्वानुमानसाधारणाः । अतो मिथ्यात्वरूपसाध्यविकल्पेनेत्याद्युक्तं सुसङ्गतम् । अतस्तथा व्याख्यानस्य पूर्व-ग्रन्थविस्मरणविजृम्भितत्वोक्तिरयुक्तैवेति भाति ।

(गु. टि.) इदमत्रानुसन्धेयम् । नित्यत्वेन परिच्छिन्नत्वस्यापि ममात्मनो निरस्तत्वात् विशेषणम् इत्युक्तम् ॥ आत्मेति ॥ 'आकाशवत्सर्वगतश्च नित्यः' 'सदेव सोम्येदमग्र' 'इहैवैव न मुच्यते' 'अत्र मर्त्योऽमृतो भवति' 'यत्र त्वस्य सर्वमात्मैवाभूत्' यावदुक्तम् 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः' इत्यादिश्रुतिविरोधादित्यर्थः । उपलक्षणमेतत् । अवकाशरूपदेशस्य कालस्य चापरिच्छिन्नत्वेनैव धर्मिग्राहकमानसिद्धत्वात् सर्वत्र कार्यदर्शनादियुक्त्या च सिद्धत्वेन तद्विरुद्धत्वादित्यपि द्रष्टव्यम् ॥ दृष्टत्वादिति ॥ उपलम्भेन तदसिद्धेरिति भावः ।

### वस्तुतः परिच्छिन्नत्वहेतोरनैकान्तिकत्वोपपादनम्

(टी.) तृतीयं निराचष्टे

## वस्तुतः परिच्छिन्नत्वमात्मनोऽपि भेदाङ्गीकारादनेकान्तिकम्

वस्तुतः परिच्छिन्नत्वं हि वस्त्वन्तरगतप्रतियोगिकभेदो भेद इति यावत् । विपक्षभूतस्यात्मनस्तत्त्ववादिना भेदोऽङ्गीक्रियत इति मिथ्यात्वे साध्ये वस्तुतः परिच्छिन्नत्वमनैकान्तिकं भवति । न च प्रतियोगिभूतप्रपञ्चस्य मिथ्यात्वादात्मनो भेदानुपपत्तिरिति वाच्यम् । प्रपञ्चमिथ्यात्वसिद्धौ वस्तुतः परिच्छिन्नत्वस्य हेतुत्वसिद्धिः । तत्सिद्धौ च प्रपञ्चमिथ्यात्वसिद्धिरितीतरेतराश्रयप्रसङ्गात् । भेदमिथ्यात्वानुमानादीनां चोक्तवक्ष्यमाणदोषग्रस्तत्वात् ।

(वि. टि.) ॥ हेतुत्वसिद्धिरिति ॥ ब्रह्मणि व्यभिचाराभावेनेति शेषः ॥ इतरेतरेति ॥ एतच्चोपलक्षणम् । प्रपञ्चप्रतियोगिकभेदस्य प्रपञ्चवन्मिथ्यात्वेऽपि व्यावहारिकस्य वस्तुतः परिच्छिन्नत्वस्य ब्रह्मणि सत्त्वेन व्यभिचारात्वेत्यपि द्रष्टव्यम् । ननु भेदमिथ्यात्वं न जगन्मिथ्यात्वसिद्ध्यधीनं येनेतरेतराश्रयः स्यात् । किं तु 'विगीतो भेदो मिथ्या भेदत्वात् चन्द्रभेदवत्' इत्यनुमानात् 'ज्ञाते द्वैतं न विद्यते' 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतेश्च तत्सिद्धिरित्याशङ्क्याह ॥ भेदमिथ्यात्वेति ॥ मिथ्येत्यनिर्वचनीयमिति वक्तुं न शक्यम् । अप्रसिद्धेः । नाप्यसदिति । अपसिद्धान्तात् । ब्रह्मनिष्ठसद्वैलक्षण्ये व्यभिचारश्च । न च तदपि मिथ्या । ब्रह्मणोऽसद्रूपत्वप्रसङ्गात् । ज्ञाते द्वैतमित्युदाहृतश्रुतेश्च स्वरूपमात्रपरतया शक्तिग्रहोपयुक्तपदार्थग्राहितया निषेध्यसमर्पकतया चोपजीव्यवक्तृप्रत्यक्षविरोधेन भेदरूपहेतुनिर्बाधकत्वासम्भवादित्युक्तवक्ष्यमाणदोषग्रस्तत्वादित्यर्थः ।

(रा. टि.) अनैकान्तिकत्वाभिव्यक्त्यर्थमात्मन इत्येतद्विशिनष्टि ॥ विपक्षभूतस्येति ॥ हेतुत्वसिद्धिरिति ॥ अनैकान्त्याभावादिति भावः । तत्सिद्धौ चेत्यनन्तरं तेन हेतुनेति योज्यम् । नन्वात्मनि गतोऽपि भेदरूपो वस्तुतः परिच्छिन्नत्वहेतुर्मिथ्येति चेन्न । मानाभावात् । [1]भेदो मिथ्या भेदत्वादित्याद्यनुमानादीनां भावादित्यत आह ॥ भेदेति ॥ वक्ष्यमाणेति ॥ प्रत्यक्षबाधितं चेत्यादिना वक्ष्यमाणबाधादीत्यर्थः । यद्वा यत्प्रागुक्तमविद्याविलसितो जीवेश्वरजडरूपो भेदप्रपञ्चो न परमार्थ इति तन्निराह ॥ भेदमिथ्यात्वेति ॥

[1] ननु कथं मानाभावः । भेदो मिथ्या इति पाठेन भाव्यमिति भाति ।

(वे टि) ॥ हेतुत्वसिद्धिरिति ॥ ब्रह्मणि व्यभिचाराभावेनेति शेषः । नन्वात्मनि भेदमिथ्यात्वं न जगन्मिथ्यात्वाधीनम् । येनेतरेतराश्रयप्रसङ्गः स्यात् । किन्तु विमतो भेदो मिथ्या भेदत्वाच्चन्द्रभेदवदित्याद्यनुमानेन 'नान्योऽतोऽस्ति द्रष्टा' इत्यागमाच्च तत्सिद्धिरित्याशङ्क्याह ॥ भेदमिथ्यात्वेति ॥ अत्र मिथ्यापदेन नासत्त्वमभिप्रेतम् । अपसिद्धान्तात् । किन्त्वनिर्वचनीयत्वमेवेति वक्तव्यम् । तथात्वे च न चानिर्वचनीये किंचिन्मानमित्याद्युक्तदोषैः प्रत्यक्षबाधित चेत्यादिवक्ष्यमाणदोषैश्च ग्रस्तत्वमिति भावः ।

(द्वै. द्यु.) अद्वैतमते आत्मनः स्वसममत्ताकभेदानङ्गीकारात्तथा विवक्षायामपि दोषार्थं तत्त्ववादिनेति ।

(गु टि) ॥ हेतुत्वसिद्धिरिति ॥ आत्मनि व्यभिचारपरिहारेणेति शेषः । नन्वात्मभेदमिथ्यात्वं न जगन्मिथ्यात्वाधीनम् । येनेतरेतराश्रयप्रसङ्गः स्यात् । 'विमतो भेदो मिथ्या भेदत्वात् चन्द्रभेदवत्' इत्याद्यनुमानेन 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुत्या च तत्सिद्धिरित्यत आह ॥ भेदमिथ्यात्वेति ॥ उक्तवक्ष्यमाणेति ॥ न चानिर्वचनीये किञ्चिन्मानम्' 'प्रत्यक्षबाधितश्च जगन्मिथ्यात्वम्' इत्याद्युक्तवक्ष्यमाणेत्यर्थः ।

## आत्मत्वहेतुनिराकरणम्

(टी.) एतेनात्मत्वहेतुरपि परास्तः । तत्खल्वदृश्यत्वं वा प्रमातृत्वं वा प्रकाशत्वं वा स्वप्रकाशत्वं वा अपरिच्छिन्नत्वं वा वक्तव्यम् । तत्सर्वमुक्तरीत्याऽसिद्धम् । दृष्टान्तश्च साधनविकलः । जातिविशेष आत्मत्वमिति चेत् न । तस्याप्यात्मनि परेण वस्तुतोऽनभ्युपगमात् । मिथ्याभूतस्य निरस्तत्वात् । आरोपितस्यातिप्रसञ्जकत्वात् ।

(वि टि) ॥ आत्मत्वहेतुरपीति ॥ विमता आत्मानः परमात्मनस्तत्त्वतो न भिद्यन्ते आत्मत्वात् परमात्मवत् इत्यात्मत्वहेतुरपीत्यर्थः ॥ तत्सर्वमपीति ॥ वेदान्तानां निर्विषयत्वपरिहाराय दृश्यत्वात् प्रमातृत्वस्य त्वयैवानङ्गीकारात् ज्ञातृज्ञेययोरभावेन प्रकाशत्वासम्भवात् तत एव स्वप्रकाशत्वासम्भवात् आत्मनः प्रपञ्चविलक्षणत्वाङ्गीकाराच्चादृश्यत्वादिरूपमात्मत्वं पक्षेऽसिद्धमित्यर्थः ॥ दृष्टान्तश्चेति ॥ पक्ष इव दृष्टान्तेपि साधनाभावस्योपपादयितुं शक्यत्वादित्यर्थः ॥ अतिप्रसञ्जकत्वादिति ॥ बाष्पारोपितधूमस्यापि वह्निसाधकत्वप्रसङ्गात् । देहादौ व्यभिचारप्रसङ्गाच्चेत्यर्थः ।

(गु टि) [1]यच्चोक्तं प्राक् विमता आत्मानः परमात्मनो न भिद्यन्ते आत्मत्वादिति तमपि हेतुमतिदेशेन पराचष्टे ॥ एतेनेति ॥ 'आत्मत्वहेतुः सत्यो मिथ्या वा । आद्ये तवासिद्धिः । अन्त्ये ममासिद्धिः' इत्यादिरूपेणोक्तवक्ष्यमाणबाधादिदोषग्रस्तत्वेनेत्यर्थः । विशिष्यापि निराह ॥ तत्खल्वित्यादिना ॥ उक्तरीत्येति ॥ 'आत्मनोऽपि दृश्यत्वादित्यात्' इत्युक्तदिशा 'न च प्रमातृत्वमात्मनस्तैरङ्गीक्रियते' इत्युक्तदिशा 'तच्चाप्रकाशत्वमात्मनः' इत्युक्तरीत्या 'वस्तुतः परिच्छिन्नत्वमात्मनोऽपि' इत्युक्तरीत्या चासिद्धमित्यर्थः ॥ दृष्टान्तश्चेति ॥ परमात्मा हि त्वया दृष्टान्ततयोक्तः । तत्र चोक्तरीत्या अदृश्यत्वादिरूपमात्मत्वमसिद्धमिति साधनविकल इत्यर्थः ।

[1] यच्चोक्त इति पाठेन भाव्यमिति भाति ।

(गू. टि.) ॥ निरस्तत्वादिति ॥ अनिर्वचनीयस्य निरस्तत्वात् तत्सत्यत्वासिद्धिरित्यर्थः। तदनिर्वचनीयत्वस्य च नात्मन्यनुकूलत्वात् ॥ तत-श्चासिद्धिसाधनवैकल्ये भवत इति भावः ॥ अतिप्रसक्तत्वादिति ॥ देहादावप्यारोपितात्मत्वस्य सत्त्वादित्यर्थः।

(वे. टि.) एवं जगन्मिथ्यात्वसाधकहेतुं निराकृत्य तत्पूर्वं परमतानुमतं विमत आत्मा न परमा-त्मनस्तत्त्वतो न भिद्यते आत्मत्वादिति भेदमिथ्यात्वसाधकानुमानमनूद्य तदितरीतिनिर्देशेन दूषयति ॥ एतेनेति ॥ तत्सर्वमुक्तरीत्येति ॥ वेदान्तवेद्यत्वं कथञ्चिदनिर्वाच्यत्वं वा तत्त्वनिर्वाच्यस्यात्मनोऽपि दृष्टत्वात् प्रमातृत्वस्य त्वयैवानङ्गीकारात् विषयमात्रे प्रकाशत्वसम्भवात् तत एव स्वप्रकाशत्वासम्भवात् आत्मना प्रपञ्चविलक्षणत्वाङ्गीकाराच्चाहेतुत्वं विशेषणमात्मत्वं पक्षेऽसिद्धमित्यर्थः ॥ दृष्टान्तस्येति ॥ पक्ष इव दृष्टान्तेऽपि साधनाभावस्योपपादयितुं शक्यत्वादिति भावः ॥ आत्मत्वैक्यरूपमात्मत्वं किं पारमार्थिकमुत व्यावहारिकं प्राति-भासिकं वेति विकल्प्य मनसि निधायाद्यं दूषयति ॥ तस्यापीति ॥ द्वितीयं दूषयति ॥ मिथ्याभूतस्येति ॥ व्यावहारिकस्येत्यर्थः ॥ निरस्तत्वादिति ॥ अनिर्वचनीयनिरासेनेति शेषः ॥ तृतीयं प्रत्याह ॥ आरोपितस्येति ॥ बाष्पारोपितधूमस्यापि वह्निसाधकत्वप्रसङ्गादिति भावः ।

(द्वै. द्यु.) ॥ आत्मत्वहेतुरिति ॥ विमत आत्मा न परमात्मनस्तत्त्वतो न भिद्यते आत्मत्वात् परमा-त्मवदित्युक्तहेतुरित्यर्थः ॥ एतेनेत्युक्तं विशदयति ॥ तत्त्वस्त्विति ॥ जडविरुद्धधर्मत्वं देनेशा विकल्पकोटित्वेन प्रसक्ति । स्वप्रकाशत्वं अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वम् । प्रकाशत्वं ज्ञानत्वजातिमत्त्वम् चित्त्वेव तैर्ज्ञानत्वजातिस्वीकारात् ॥ उक्तरीत्येति ॥ वेदान्तस्यैवोत्पत्तिविनाशाभावानुभवयोरसिद्धिः प्रमातृत्वस्य तव कथ-ञ्चिदन्तःकरणादावपि सत्त्वात्स्वसमानसत्ताकस्वात्मप्रतियोगिकभेदाभावरूपत्वेन निष्कर्षणीयसाध्याभावव्यभि-चारवारणाय स्वसमानसत्ताकप्रमातृत्वस्यैव हेतूकर्तव्यतया वास्तवप्रमातृत्वस्यात्मनि पूर्वरीत्या निरस्तत्वेनासिद्धिः । न च साध्यं तावत्पर्यन्तं कुतो विवक्षणीयमिति वाच्यम् । वास्तवात्मभेदस्य परमतेऽप्रसिद्धया तदभावरूपसाध्या-प्रसिद्धेः । व्यधिकरणधर्मावच्छिन्नाभावस्य घटादिसाधारण्येन तेनात्मना स्वरूपैक्यासिद्धिप्रसङ्गेनार्थान्तरतापाद् । कथञ्चिदुक्तसाध्यपक्षेऽप्यर्थान्तरोद्धारेऽनिर्वचनीयस्य निरस्तत्वात्पूर्वोक्तरीत्या परमते प्रमातृत्वमयुक्तमिति प्रमातृत्व-स्योक्तविशेषणानाक्रान्तस्याप्यसिद्धिः । निर्विषयत्वप्रकाशात्मकत्वासिद्धिः । प्रकृत्यादिषु व्यभिचारवारणाय वस्तुतः परिच्छिन्नत्वाभावस्यैव हेतूकर्तव्यतया तस्याप्युक्तरीत्याऽसिद्धिः ॥ दृष्टान्तस्येति ॥ परमात्मन्यप्युक्तरीत्या साधनाभावस्योपपादयितुं शक्यत्वादित्यर्थः ॥ जातीति ॥ एकात्मवादिन आत्मत्वजात्यभ्युपगमोऽत्यन्तासम्भावित इति स्फोरणाय तस्यापि विकल्पकोटावनिक्षेपः । कल्पितभेदमादाय तैर्जातेरभ्युपगमाच्छङ्का कृतेति ध्येयं॥ वस्तुत इति ॥ पारमार्थिकस्य स्वसमानसत्ताकस्य वेत्यर्थः ॥ मिथ्याभूतस्येति ॥ व्यावहारिकत्वरूपानिर्वचनीयत्वाव्या-प्यधर्मविशिष्टस्येत्यर्थः ॥ निरस्तत्वादिति ॥ अनिर्वचनीयत्वरूपनिरासादिति भावः ॥ आरोपितस्येति ॥ आरोपितसाधारणात्मत्वत्वमात्ररूपावच्छिन्नस्यात्मत्वप्रकारकज्ञानविषयत्वमात्ररूपस्य वेत्यर्थः । अतिप्रसक्तत्वात् देहादौ व्यभिचारित्वात् । आत्मतादात्म्यभ्रमे आत्मत्वस्यापि तत्र भ्रमगोचरत्वादिति भावः ।

(द्वै. सु.) ॥ अत्र वदन्ति ॥ शुद्धस्याज्ञेयत्वेन तत्र व्यभिचाराभावात् ज्ञेयत्वमेव हेतुः । ज्ञानं च वृत्तिवृत्तिवैजात्यावच्छिन्नम् । विषयता चाकाराख्या । न तु तादात्म्यम् । वृत्तितादात्म्यस्य घटादावभावात् । नन्वन्तःकरणवृत्तेरन्तःकरणपरिणामतया शुक्तिरजताद्याकाराविद्यावृत्तेस्तत्परिणामतया तदुभयसाधारणैकवैजात्ये मानाभावेऽन्तःकरणवृत्तिवृत्तिवैजात्यनिवेशे शुक्तिरूप्यादिदृष्टान्ते साधनवैकल्यम् । अविद्यावृत्तिवृत्तिवैजात्यनिवेशे च घटादौ तदभावादसिद्धिरिति चेन्न । 'शुक्तिरजतज्ञानं ममोत्पन्नमुच्छिन्नं च' इत्यनुभवबलादेवाविद्यावृत्तावपि ज्ञानत्वजातिस्वीकारेण साधनवैकल्यविरहात् । अत एव स्मृतेरज्ञाताधिगन्तृत्वेन प्रमात्वाभावात्प्रमात्वव्याप्यान्तःकरणवृत्तिविशेषत्वाभावेनाविद्यावृत्तित्वेऽपि तस्या अपि ज्ञानत्वव्यवहारः । न चैवं सति काम सङ्कल्प इत्यारभ्य ह्रीर्धीरित्येतत् सर्वं मन एव' इति श्रुतौ धीपदेन ज्ञानत्वजात्यवच्छिन्नमनूद्य तस्य मनस्त्वावधारणायोग इति वाच्यम् । तच्छ्रुतौ प्रमात्वव्याप्यान्तःकरणवृत्तिवृत्तिवैजात्यावच्छिन्नस्यैव ग्रहणसम्भवात् । उक्तश्रुतौ अविद्यावृत्तिसाधारणधीमात्रनिर्देशेऽपि विशेष्यविशेषणाकारवृत्तिद्वयावच्छिन्नचित्यपि धीत्वव्यवहारात्तस्याश्च विशेष्याकारमनोवृत्तिघटितत्वेन तथा निर्देशोपपत्तेः । अत एव विचिकित्साया अपि मनस्तादात्म्योक्तिनिर्वाहः ।

न चैवं सुखादेरनावृतचैतन्यसम्बन्धस्य वृत्तिं विनैव सम्भवेन सुखादौ वृत्त्यनङ्गीकाराद्भागासिद्धिरिति वाच्यम् । सुखादौ वृत्त्यनभ्युपगमे साक्षिणो नित्यत्वेन ज्ञाननाशरूपसंस्कारत्वानुपपत्त्या तद्विषयकवृत्तेरावश्यकत्वात् । न च सुखविशिष्टरूपेण साक्षिणो नाशाङ्गीकारात्तादृशसंस्कारं प्रति सुखादिज्ञानस्य कारणत्वोपपत्तिरिति वाच्यम् । सुखादिविषयकानुमित्यादिना तत्संस्कारनिर्वाहाय सुखादिगोचरसंस्कारं प्रति तद्विषयकवृत्तित्वेन कारणताकल्पनस्यावश्यकतया प्रत्यक्षस्थलेऽपि तन्निर्वाहाय वृत्तिकल्पनमावश्यकम् ।

यदि च तत्संस्कारत्वं कार्यतावच्छेदकीकृत्य तद्विषयकवृत्तित्वेन कारणता कल्प्यते । संस्कारस्य नाशत्वेन तत्र संस्कारत्वजातौ मानाभावात् । एवं च तत्तन्नाशं प्रति तत्तत्प्रतियोगिना कारणत्वेन क्लृप्तत्वाद्विशिष्टसाक्षिनाशे प्रतियोगिभूतस्य कारणत्वं क्लृप्तमेव । परन्तु विशिष्टसाक्षिनाशे अनुमित्यादिरूपवृत्तिनाशे च सुखाविषयकत्वमात्रमास्थीयते । स्मृतिजनकसंस्कारविशेषस्य सविषयकत्वस्य सर्वसम्मतत्वात् । घटादिनाशरूपसंस्कारे परं सविषयकत्वं न स्वीक्रियते । प्रयोजनाभावात् । सुखादिविषयकनाशत्वेनैव तत्स्मृतिहेतुता च । तथा च वृत्त्यङ्गीकारे प्रयोजनाभाव इत्युच्यते तदा सुखादावनुमित्याद्यात्मकवृत्तिमादायैव हेतुरुपपादनीयः । शुक्तिरजतादावपि शुक्तिरजतादिकं मिथ्येत्येवमाकारवृत्तिविषयत्वमुपादाय हेतुरुपपादनीयः । इत्थञ्चाविद्यावृत्तिसाधारणधीत्वजात्यनङ्गीकारे हेतुशरीरेऽन्तःकरणवृत्तिमात्रनिवेशेऽपि न साधनवैकल्यम् ।

न च शुद्धस्याज्ञेयत्वे शुद्धसिद्धिर्न स्यादिति वाच्यम् । स्वप्रकाशतयैव तत्सिद्धेः । न च शुद्धं स्वप्रकाशमित्यादिवाक्यजन्यबोधे शुद्धाप्रकाशे तस्य स्वप्रकाशत्वसिद्धिरेव कथमिति वाच्यम् । अस्वप्रकाशत्वव्यापकाभावप्रतियोगित्वरूपाया स्वप्रकाशत्वनिरूपितव्यतिरेकव्याप्तेरुपहितत्वाभावरूपशुद्धत्वे ज्ञानमुद्बुद्धसंस्कारो वा यदा तदोक्तशुद्धत्वविशिष्टे स्वप्रकाशत्वाभावो न ज्ञायते । वह्न्यभावव्यापकाभावप्रतियोगित्वस्य धूमे ग्रहे उद्बुद्ध-

(द्वै द्यु) किञ्च स्वप्रकाशे चिदंशे नाज्ञानम्। आत्मनः सर्वदा सिद्धत्वात्। किं तु पूर्णानन्दांशे। तन्निवर्तकवृत्तिविषयतापि तत्रावश्यकी। तथा च शुद्धे व्यभिचारो दुर्वार एवेति शब्दाजन्यवृत्तिविषयत्वं दृश्यत्वम्। ब्रह्मणस्त्वेतन्मते शाब्दापरोक्षविषयत्वमेव। न मानमविषयत्वमनुमानादिवेद्यत्वं वा। 'यन्मनसा न मनुते' 'नैषा तर्केण' इत्यादिश्रुतेः। तुच्छे तु शब्दजन्यवृत्तिविषयत्वमेव। प्रत्यक्षादीनां तत्रासम्बन्धात्। अतस्तदुभयस्मिन्न व्यभिचारः। पूर्वमते च शशविषाणादिपदाधीनवृत्तेर्निर्विषयकत्वाभ्युपगमाद्वा तत्र धीत्वजात्यनङ्गीकाराद्वा न व्यभिचारः।

तुच्छं न क्षणिकमकारणत्वादिति क्षणिकत्वबाधानुमानवेद्यत्वादेस्तुच्छेऽङ्गीकारे तु सप्रकारकधीविषयत्वं विवक्षणीयम्। प्रकारश्च सोपाख्यधर्मो ग्राह्यः। उपाख्या चास्तीति धीविषयत्वम्। घटत्वपटत्वादीनां तादृशत्वात्तत्प्रकारकधीविषये पक्षे सर्वत्रापि हेतुसत्त्वम्। अभावस्यापि सोपाख्यत्वात्तन्निष्ठाभावत्वस्यापि सोपाख्यत्वम्। अन्यथाऽसत एव निरुपाख्यत्वेन सत एव सोपाख्यत्वेन सदसतोः संसर्गाभावस्य बौद्धाधिकारादादुक्तत्वेनाभावाभावत्वयोर्धर्मिधर्मभावानुपपत्तेः। तथा च तादृशाभावत्वप्रकारकधीविषये अभावेऽपि हेतूपपत्तिः। शुद्धब्रह्मणः सप्रकारकधीविषयत्वाभावादेव न व्यभिचारः। तुच्छनिष्ठत्रैकालिकनिषेधप्रतियोगित्वमव्यधिकरणात्मकत्वात्तुच्छमेव। सदसतोस्संसर्गायोगात्। अतस्तादृशप्रतियोगित्वरूपे धर्मेऽस्तीति धीविषयत्वरूपोपाख्या नास्तीति तत्प्रकारकधीविषये तुच्छे न व्यभिचारः। न चाभावस्य भट्टमते तुच्छत्वात्त्वया च तन्मतानुसरणात्तत्र सोपाख्यस्याभावत्वस्य समर्गः कथं स्यादिति वाच्यम्। नास्तीत्यनुगतप्रतीतिनिर्वाहकस्य भावाभावसाधारणाभावत्वाख्याखण्डधर्मस्याभावग्राहकमानसिद्धत्वादभावत्वोपहितरूपेणाभावस्यापि सोपाख्यत्वं तद्भूतलघटादिरूपानुयोगिप्रतियोगिसम्बन्धित्वं, तेन रूपेणानुपलब्ध्या प्रत्यक्षेण वा ग्राह्यत्वं च। तद्भूतत्वत्तिघटत्वशशविषाणत्वाद्याख्याखण्डधर्मेण तादृशतादृशाभावानामखण्डानां तुच्छत्वं शब्देतरमानागम्यत्वं च। प्रकृते चाभावत्वोपहितस्य पक्षत्वेनाभिमतत्वान्न काप्यनुपपत्तिः।

नन्वखिलत्वप्रकारकधीविषयत्वं तत्त्ववादिवेदान्तिनये तुच्छेऽप्यङ्गीकृतमिति तुच्छनिष्ठत्रैकालिकनिषेधप्रतियोगित्वरूपधर्मस्याधिकरणस्वरूपतया तुच्छत्वेऽप्युक्तसोपाख्यत्वानपायात्तादृशधर्मप्रकारकवृत्तिविषये तुच्छे व्यभिचारतादवस्थ्यमिति वाच्यम्। सत्तादात्म्यसत्तादात्म्यत्वैतदन्य[1]तरत्त्वस्यैव सोपाख्यत्वपदार्थत्वाभ्युपगमात्। तथा चैतदन्यतरवद्धर्मप्रकारकवृत्तिविषयत्वं हेतुः। तुच्छवृत्तिधर्मस्याप्युक्तान्यतरशून्यत्वरूपतुच्छत्वस्यैव सत्त्वान्न तत्प्रकारकवृत्तिविषयतुच्छे व्यभिचारः। न च तादृशान्यतरवत्त्वमेव हेतुरस्तु। ब्रह्मणः सद्रूपत्वेन सत्तादात्म्यस्य तत्त्वस्य वा तत्राभावेन तत्रापि व्यभिचारानवकाशात्।

अस्तीति धीविषयतायाः उपाख्यापदार्थत्वे तु 'अस्तीत्येवोपलब्धव्यः' इति श्रुतिबलाच्छुद्धब्रह्मण्यपि तस्य सत्त्वावश्यकतया व्यभिचारपरिहाराय तद्धर्मप्रकारकज्ञानविषयत्वपर्यन्तं हेतूकरणं युक्तम्। शुद्धे

[1] तरवत्त्वस्यैव इति पाठेन भाव्यमिति भाति।

(द्वैतु) वाच्यम्। प्रतिवादिनं प्रति हेतोरसिद्धिपरिहाराय तथोक्तत्वात्, न च स्वरीत्या व्यर्थविशेषणता दुर्वारेति वाच्यम्। अन्यतरत्वरूपाखण्डभेदस्य स्वरूपत एव निवेशेन कस्याप्यवैयर्थ्यात्।

यद्वा चित्सम्बन्धित्वं दृश्यत्वम्। चिति च तद्विलक्षणसत्त्वविनाशित्वादिव्याप्यचित्सम्बन्धस्याभावान्न व्यभिचारः। न चैवम् 'आनन्दो ब्रह्मणो रूपम्' 'चिद्ब्रह्मणो रूपम्' इत्यादिव्यवहारानुरोधाच्चिता सह कल्पितभेदस्य तादात्म्यस्य च चिति सत्त्वाद्व्यभिचारः; सम्बन्धे प्रतीतिकान्यत्वनिवेशेन तत्परिहारे शुक्तिरूप्यादिदृष्टान्ते साधनवैकल्यादिति वाच्यम्। चित्सम्बन्धितावच्छेदकं यत् चिद्वृत्तित्वविशिष्टतादात्म्यत्वं तदवच्छिन्नस्य हेतुतानुसरणेन सामञ्जस्यात्।

यद्वा स्वातिरिक्तसंवित्प्रयोज्यत्वव्याप्य[1]स्य व्यवहारकत्वं दृश्यत्वम्। व्यवहारश्च स्फुरणाभिवदनादिस्तावदन्यतमत्वेन निवेश्यः। स्फुरणं चासत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टा चित्। तत्सम्बन्धेन तादात्म्यरूपेण 'घटः स्फुरति' 'धर्मादिकं स्फुरति' 'सुखादिकं स्फुरति' 'चित् स्फुरति' इत्यादिव्यवहारात्। संवित्त्वं च चित्त्वम्। तथा च स्वातिरिक्तचित्प्रयोज्यत्वव्याप्येति फलितम्। घटादावपरोक्षत्वव्यवहारो घटाद्यवच्छेदेन भग्नावरणचिता वा घटाद्याकारवृत्तिप्रतिबिम्बितचिता वा जायते। धर्मादावस्तीति व्यवहारस्तदाकारवृत्त्या मनोवच्छेदेन भग्नावरणचिता धर्माद्याकारवृत्तिप्रतिबिम्बितचिता वा जायते। सुखादावस्तीति व्यवहारः सुखाद्यवच्छिन्नचिज्जन्यस्तत्प्रतिबिम्बितचिज्जन्यस्तदाकारवृत्तिप्रतिबिम्बितचिज्जन्यो वा। अतः सर्वोऽपि व्यवहारः स्वातिरिक्तचित्प्रयोज्यः। चिदस्तीति व्यवहारस्तु न स्वातिरिक्तसंविदपेक्षः। चिदंशे कस्यापि संशयाभावेन शुद्धचिदतिरिक्तस्य कस्यापि नापेक्षा। एवं घटादिस्फुरणे विशिष्टचिद्रूपे शुद्धचित्प्रयोजिका। शुद्धचिज्जन्य[2]मनोवृत्त्या अज्ञाननिवृत्तेर्विशिष्टचितः शुद्धचिति कल्पितत्वेन तदाश्रितत्वाच्च। ब्रह्मणि तु [3]पूर्णानन्दांशस्य वृतत्वेन तदंशस्य स्फुरणेऽज्ञाननिवृत्तये वृत्तेरपेक्षासत्त्वेऽपि चिदंशेऽनावृत आवरकाभावेन तन्निष्ठाज्ञानाविषयत्वे न वृत्तेः प्रयोजकता। किन्तु अज्ञानाविषयत्वविशिष्टचित एव क्षेमसाधारणप्रयोजकता। तद्विशिष्टत्वेन शुद्धचित एव स्फुरणत्वम्। तत्र च स्वातिरिक्तचिद्रूपसंविदपेक्षा नास्त्येव। सर्वव्यवहारेषु स्वातिरिक्ताविद्यासापेक्षत्वाच्चिति व्यभिचारवारणाय संवित्पदोपादानम्। स्वातिरिक्तसंविदधीनस्वस्फुरणकत्वं लघु हेतुत्वेन बोध्यम्।

यद्वा अस्वप्रकाशत्वं दृश्यत्वम्। स्वप्रकाशत्वं च स्वातिरिक्तचिदनधीनस्वापरोक्षत्वकत्वम्। अभानापादकाज्ञानाविषयत्वप्रयोजकविशिष्टा चित् अज्ञानाविषयत्वप्रयोजकविशिष्टा चिद्वा अपरोक्षत्वम्। तादृशप्रयोजकं च चिति घटादिप्रत्यक्षस्थले घटाद्याकारवृत्तिजनकसामग्री। सुखादिप्रत्यक्षस्थले तज्जनकसामग्री। तत्पूर्वं भाविकालावच्छिन्नसुखादौ विद्यमानस्याज्ञानविषयत्वस्य सुखादावुत्पत्तिक्षणावच्छेदेनाभावो हि तादृशसामग्रीप्रयुक्तः। 'इदानीमज्ञानाविषयत्वं सुखादौ चन्दनयोगादिप्रयुक्तम्' इत्यनुभवात्। न चोक्ताज्ञानाविषयत्वविशिष्टचिदेवापरोक्षत्वमिति कुतो नोच्यते। किं सामग्रीरूपप्रयोजकनिवेशेनेति वाच्यम्। साक्षात्करोते. सकर्मकत्वनिर्वाहायोक्तरूपत्वावश्य-

[1] स्वव्यवहारत्वकत्व इति पाठेन भाव्यमिति भाति। [2] शुद्धचितोऽविद्यासहिताया सर्वकारणत्वान्मनोवृत्तेरपि तज्जन्यत्वं बोध्यम्।
[3] पूर्णानन्दस्यावृतत्वेन इति पाठेन भाव्यमिति भाति।

(द्वेषु) कत्वात्; धात्वर्थतावच्छेदकफलशालित्वं हि कर्मत्वम्। तत्फलप्रयोजकव्यापारबोधकत्वं धातोः सक-
र्मकत्वमिति हि तार्किकादयः। अज्ञानविषयत्वाभावोपहितचित एवापरोक्षत्वरूपतया साक्षात्कारोत्पत्तौ फलप्रयोज-
कत्वेन व्यापारस्य धात्वर्थघटकतया सकर्मकत्वानुपपत्तेः। अत एवासत्त्वापादकाज्ञानविषयत्वप्रयोजकविशिष्टचिदेव
ज्ञानात्यर्थः। तादृशाज्ञानविषयत्वविशिष्टचिन्मात्रस्य तथात्वे सकर्मकत्वानुपपत्तिरप्यज्ञानं चित्तनिष्ठापरोक्षताया
स्वान्याविद्याधीनत्वाच्चित्तस्योपादानम्। न चैवं स्वान्यचिदप्रसिद्ध्या चिदंशे व्यावर्तनम्। स्वनिष्ठापरोक्ष्य-
प्रयोजकचिन्निष्ठस्वान्यत्वाभावकत्वस्यैव स्वप्रकाशत्वपदार्थत्वात्। चिन्निष्ठाज्ञानविषयत्वे क्षेममात्रप्रयोजकत्व-
चित एव तद्विशिष्टत्वं चित एवेत्यादि पूर्वोक्तं ज्ञेयम्। ब्रह्मणः स्वान्यानधीनापरोक्ष्यं च 'यत्साक्षादपरोक्षाद्ब्रह्म' इति
श्रुतिसिद्धम्। तथा चानन्याधीनापरोक्षत्वावच्छिन्नानुयोगिकभेदप्रतियोगित्वं पर्यवसितं हेतुः। अपरोक्षत्वावच्छिन्न-
प्रतियोगिकभेदाश्रयत्वं पुनः शुद्धब्रह्मणि भेदात्यन्ताभावप्रतियोगित्वानङ्गीकारेण [2]निवेशनार्हमिति वा दृश्यत्वस्य
भावरूपतानिर्वाहार्थं वा तत्परित्यागः। न च 'स्वप्रकाशं ब्रह्म' 'साक्षादपरोक्षाद्ब्रह्म' इति लौकिकवैदिकसामाना-
धिकरण्यप्रत्ययात्स्वप्रकाशत्वविशिष्टेऽपि ब्रह्म[3]भेद आवश्यकः। अन्यथा ब्रह्मतादात्म्यसम्बन्धानुपपत्तेरिति चेन्न।
स्वप्रकाशत्वोपहिते तत्प्रतियोगिकभेदाभावेन मिथ्याभूते तस्मिन्भागासिद्ध्यापत्त्या स्वप्रकाशत्वोपहितानुयोगिक-
भेदस्य हेतावनिवेशेन स्वप्रकाशत्वोपलक्षितानुयोगिकभेदस्यैव निवेशात्तादृशोपलक्षितशुद्धचैतन्यनिष्ठानुयोगिताया-
मुपलक्षणया स्वप्रकाशत्वस्यावच्छेदकत्वात्। तादृशोपलक्षिते चैतन्ये शुद्धचैतन्यरूपब्रह्मप्रतियोगिकभेदाभावेना-
दोषात्। न च 'ब्रह्मचैतन्यम्' 'आनन्दो ब्रह्म' इत्यादिधीनियामकभेदमादाय दोष इति वाच्यम्। तादृशभेदस्य
ज्ञानत्वानन्दत्वादिधर्मावच्छिन्नानुयोगिकत्वात्। ब्रह्मनिष्ठज्ञानादिधर्मस्य चिन्मात्ररूपत्वेऽप्युपलक्षणतया तत्र विद्यमान-
धर्मान्तरस्य तादृशभेदानुयोगितावच्छेदकत्वात्।

अथ वा अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वाभावरूपं दृश्यत्वम्। वेद्यत्वं च स्वावच्छिन्नचिद्विषयक-
यदभानप्रयोजकाज्ञानं [4]तन्निवर्तकवृत्तिविषयत्वम्। एवं च घटादावुक्तवेद्यत्वस्यैव सत्त्वेन विशेषणाभावाद्विशिष्टा-
भावः। धर्मादावतीन्द्रियेऽपरोक्षव्यवहारयोग्यत्वरूपविशेष्याभावाद्विशिष्टाभावः।

ननु अपरोक्षव्यवहारयोग्यत्वमभानापादकाज्ञानाविषयत्वतद्विशिष्टचित्तादात्म्यान्यतरवत्त्वमेव। तथा चावि-
द्यान्तःकरणशुक्तिरूप्याद्यवच्छिन्नाभानापादकाज्ञानाप्रसिद्ध्या स्वपदेनोपादानाभावादेतादृशवेद्यत्वं तत्त्वाभाव-
कूटरूपविशेषणसत्त्वस्य ब्रह्मणीव तेष्वपि सत्त्वे तादृशाज्ञानाविषयत्वविशिष्टचित्तादात्म्यसत्त्वादुक्तान्यतररूपविशेष्यस्यापि
ब्रह्मणीवाक्षततयाऽसिद्धिसाधनवैकल्ये स्याताम्। न च सामान्यतः अज्ञाननिवेश्योक्तावेद्यत्वरूपविशेषणं निर्वा-
ह्यम्। तथा चाविद्याशुक्तिरूप्यादीनामपि अतीततादृशाया वर्तमानतादृशायामपि असत्त्वापादकत्वादिना रूपेण
स्वावच्छिन्नचिद्विषयकासत्त्वापादकाज्ञाननिवर्तकानुमित्यादिवृत्तिविषयत्वाद्विशेषणाभावेनैव विशिष्टाभावो निर्वहतीति

---

[1] एवाभानापादका इति पाठेन भाव्यमिति भाति।
[2] न निवेशार्हमिति इति पाठेन भाव्यमिति भाति।
[3] ब्रह्माभेद इति पाठेन भाव्यमिति भाति।
[4] तन्निवर्तकवृत्ति इति पाठेन भाव्यमिति भाति।

(द्वे द्यु) नासिद्धिरिति वाच्यम्। एवं सति धर्मादावप्युक्तरीत्या वेद्यत्वस्योपपादयितुं शक्यत्वेन कुत्राप्यसिद्ध्यभावात् ब्रह्मतुच्छावच्छिन्नचिद्विषयकाज्ञानाप्रसिद्ध्या तयोर्व्यभिचाराभावेन च तन्मात्रस्य हेतुत्वसम्भवे तदभावघटितोक्तविशिष्टाभावनिवेशानौचित्यात्। तस्य स्वतन्त्रहेतुत्वेऽप्युक्तपरिष्कारे तन्निवेशायोगादिति चेन्न। अभानापादकाज्ञानविषयत्वतदवच्छेदकत्वान्यतरवत्त्वस्यैव प्रकृतेऽपरोक्षव्यवहारयोग्यत्वपदार्थतया तस्य च ब्रह्मणि घटादौ च सत्त्वेनाविद्यान्तःकरणधर्मशुक्तिरूप्यादावसत्त्वाद्विशेष्याभावादेव विशिष्टाभावनिर्वाहात्। न चातीततादशाया शुक्तिरजतादिकं न भाति धर्मादिकं च न भातीति प्रतीतिव्यवहारानुरोधेन तयोरप्युक्ताज्ञानविषयतावच्छेदकत्वमावश्यकमिति वाच्यम्। धर्मादेरनावृतसाक्षिसम्बन्धस्यैवाभावात् शुक्तिरजतादावतीततादशाया तदभावाच्च तादृशव्यवहाराद्युपपत्तौ तेषां तादृशाज्ञानविषयतावच्छेदकत्वानङ्गीकारात्। न चाज्ञानविषयत्वतदवच्छेदकत्वयोरव्याप्यवृत्तितया तदन्यतरवत्त्वमप्यव्याप्यवृत्तीति विशेष्याभावस्य धर्मादाविव ब्रह्मण्यपि सत्त्वाद्विशिष्टाभावरूपं दृश्यत्वं ब्रह्मण्यस्तीति वाच्यम्। ब्रह्मघटान्यतरत्वस्यैव प्रकृते पर्यवसितविशेष्यदलार्थत्वेन व्यभिचारानवकाशात्। पञ्चमप्रकारोपेतमोक्षाङ्गीकारे तत्र व्यभिचारवारणायाज्ञानकालवृत्तित्वं देयम्।

ननु नानाजीवपक्षे चैत्रमोक्षरूपतदज्ञाननिवृत्तेर्मैत्राज्ञानकालसम्बन्धित्वाद्व्यभिचारः। तदज्ञानव्यक्तेर्विशिष्य निवेशे तन्निवृत्त्युत्तरमुत्पन्नघटादावसिद्धिः। तन्निवृत्तिपूर्वकालीनान्यदीयाज्ञाननिवृत्तिरूपमोक्षे व्यभिचार इति चेन्न। अज्ञानाप्रयुक्तः यद्यज्जन्यः तत्तदन्यत्वे सति कालसम्बन्धित्वस्यैव तदर्थत्वात्। उक्तकालसम्बन्धित्वं ब्रह्मण्यपीति दृश्यत्वमुपात्तम्। सत्यम्। तस्य तुच्छेऽपि सत्त्वादुक्तदृश्यत्वसत्त्वाच्च व्यभिचारवारणाय कालसम्बन्धित्वमुपात्तम्। तावन्मात्रस्योक्तमोक्षेऽपि सत्त्वात् उक्तभेदकूटनिवेशः। कूटानिवेशे एकमोक्षभेदस्यापरमोक्षेऽपि सत्त्वात्तद्दोषावारणमिति तन्निवेशः। अज्ञानाप्रयुक्तत्वं त्वज्ञानतल्लेशान्यतरतादात्म्यानापन्नत्वम्। तेनाज्ञाननिवृत्तावज्ञानस्य प्रतियोगिविधया प्रयोजकत्वेन तादृशजन्याप्रसिद्धिः। जीवन्मुक्तभोगादिकमज्ञानानात्मकमपि तल्लेशात्मकमेवेति न तत्र हेत्वभावशङ्का। सद्विविक्तत्वमात्रस्य जगतोऽसद्वैलक्षण्यवादिनं प्रति साध्यत्वे तुच्छे व्यभिचाराप्रसक्तेः पूर्वोक्तसर्वपक्षेषु असद्वारणविशेषणदानायासोऽनुपादेयः।

एवं चित्तादात्म्यतत्त्वान्यतरमात्ररूपं चिद्विषयत्वं वा विनाशि सर्वं दृश्यं इत्याकारा या काचन धीस्तां तद्व्यक्तित्वेन निवेश्य तद्विषयत्वं वा हेतुः वृत्तिप्रतिबिम्बितचित्तादात्म्यं वा हेतुः। गुरुत्वादावपीश्वरोपाधिमायावृत्तिप्रतिबिम्बितचित्तादात्म्यसत्त्वेन कुत्राप्यसिद्ध्याद्यभावात्। उक्तं हि विवरणे 'ईश्वरस्य सर्वकर्तृत्वादेव विद्यमानसर्वविषयता' इति। उक्तं हि तत्त्वदीपने तद्व्याख्यावसरे 'ईश्वरोपाधिः सत्त्वप्रधाना माया विद्यमानसर्वविषयाऽऽकारेण परिणमते। तस्मिंश्च परिणामे प्रतिबिम्बितं चैतन्यं सर्वं पश्यत्याध्यासिकसम्बन्धात्' इति। 'ईश्वरज्ञानं तु न प्रमा। तदज्ञाताभावेनाज्ञानानिवर्तकत्वात्। तस्यातीते स्मृतिः। अनागते त्वनुमानमित्यादिकमनुसन्धेयम्। अज्ञानसामान्यं निवेश्य पूर्वोक्तं स्वावच्छिन्नेत्यादिवेद्यत्वमपि हेतुः सम्भवति' इति।

(द्वै. बु.) एवं सत्यादिपदतात्पर्यविषयविषयकदृग्विषयत्वं हेतुः । उद्देश्यं च ज्ञानत्वम् । ज्ञानत्वं ज्ञानपदशक्त्यधीनप्रतीतीयमुख्यविशेष्यता । उपलक्षणतया तन्निष्ठावच्छेदकताकप्रतियोगिताकभेदः हेतुरिति पर्यवसितम् । तेन 'वृत्तौ ज्ञानातिशयवत्तावच्छेदकत्वस्य वक्ष्यमाणरीत्या सत्त्वात् पक्षैकदेशमात्रभेदनिवेशे तत्रासिद्धिः । ज्ञानत्वस्य शुद्धचिन्मात्रनिष्ठस्यैकव्यक्तिकत्वेन जातित्वाभावाज्जातिरूपस्य तस्याप्रसिद्ध्या तन्निवेशः । वक्ष्यमाणज्ञानपदार्थरूपविशिष्टचितो नैयायिकादीन् प्रत्यप्रसिद्धत्वेन निवेशायोग' इत्यादिशङ्कानवकाशः । ज्ञानपदवाच्यं तु वृत्त्यवच्छिन्नचैतन्यम् । न तु चैतन्यविशिष्टवृत्त्यादिरूपम् । विशेष्यत्वेनैव चितो ज्ञानपदार्थत्वेन । अत एव 'सत्यं ज्ञानम्' इत्यादिश्रुतौ ज्ञानपदाल्लक्षणयैव केवलचिद्बोध इति वक्ष्यते । न हि वाच्यविशेषणस्य शक्त्या विशेष्यतया बोधो व्युत्पत्तिसिद्धः । 'पशुरपशुः' इत्यादिना पश्वादिभिन्नत्वेन पश्वादेर्वाच्यत्वे । अतो वाच्यकोटौ विशेषणीभूतवृत्तौ न भागासिद्धिः । वृत्त्यवच्छिन्नत्वं च वृत्तिसुखादिनिष्ठप्रतिबिम्बप्रयोजकमनोमायान्यतरावच्छिन्नचैतन्यतदात्मकत्वम् । सुखादौ वृत्तेरभावेऽपि तस्यैव स्वच्छत्वेन प्रतिबिम्बवत्त्वम् ।

तत्र वृत्तेश्चिदुपरागार्थत्वपक्षे स्वाश्रयवृत्तिविषयत्वसम्बन्धेन चित्प्रतिबिम्बविशिष्टत्वरूपं ज्ञानक्रियायाः फलमादाय घटादिविषयत्वस्य तत्कर्मतानिर्वाहः ।

वस्तुतस्तु प्रतिबिम्बप्रयोजकत्वेनैव वृत्त्यादिनिष्ठप्रतिबिम्बप्रयोजकस्य ज्ञानातिबन्ध्ये निवेशः । न तु वृत्तिसुखादेरपि निवेशः । घटादेरपि वृत्त्युपहितरूपेण साक्षात्सम्बन्धेनैव प्रतिबिम्बवत्त्वस्य जलाद्युपहितरूपेण पाषाणादेरिव सम्भवात्कर्मतानिर्वाहः ।

ईशस्य जगदनुपादानत्वपक्षे मनोवच्छिन्नचित्तादात्म्याभावान्मायानिवेशः । [1]'साक्षिणा चिद्रूपस्यैवाधिष्ठानत्वेन ज्ञानत्वादुक्तान्यतरावच्छिन्नचिदात्मकचितो ज्ञानत्वमुक्तम् । न च मनोवच्छिन्नचित्तादात्म्यविशिष्टसाक्षिचितो ज्ञानरूपाया मायावच्छिन्नचित्यपि तादात्म्येन सत्त्वात् 'ईशो जानाति' इति व्यवहारसम्भवान्मायानिवेशो व्यर्थ इति वाच्यम् । तथा सति 'घटावच्छिन्नचिज्जानाति' इति व्यवहारः स्यात् । अथ मनोवच्छिन्नचित्तादात्म्यविशिष्टप्रतियोगिकतादात्म्यस्य मनोवच्छिन्नचित्येव सत्त्वान्नोक्तधीरिति चेत्तर्हि 'ईशः जानाति' इति धीरपि न स्यादिति मायानिवेश आवश्यकः ।

वृत्तेरावरणभङ्गार्थत्वपक्षे त्वसत्त्वापादकाज्ञानाविषयत्वरूप*तत्फलमादाय तस्य तत्कर्मतेति तादृशाज्ञानाविषयत्वप्रयोजकमनोमायान्यतरावच्छिन्नचैतन्यतादात्म्यापन्नचैतन्यत्वं ज्ञानत्वम् । 'घटं जानामि' इत्यादौ घटाद्यवच्छिन्नस्याज्ञानविषयत्वाभावस्य धीः । 'ब्रह्म जानामि' इत्यादौ तु ब्रह्मनिष्ठस्य धीः ।

एवमानन्दभिन्नत्वमपि जडत्वम् । आनन्दत्वं च विषयसेवाजन्यवृत्तिविशेषोपहितचित्त्वम् । तदुपलक्षितचित्प्रतियोगिकभेद एव हेतुः । तस्यापि आनन्दपदजन्यशक्त्यधीनबोधीया या विशेष्यता उपलक्षणविधया तदव-

---

[1] साक्षिणश्चिद्रूपस्यैवाधिष्ठानत्वेन इति पाठेन भाव्यमिति भाति ।

* अवच्छेदकत्वमाश्रयत्वं चेत्येतदन्यतरसम्बन्धेन फलवत्त्वमेव कर्मत्वं प्रकृत इति भावः ।

(द्वै चु' च्छिन्नप्रतियोगिनाकमेदत्त्वेन हेतुता। प्रयोजन तु पूर्वोक्तरीत्योह्यम्। न चैवं ज्ञातृभिन्नत्वरूपजडत्वस्याप्युक्तरीत्या परिष्कारेण शुद्धात्मनि व्यभिचारवारणसम्भवात् तत्परित्यागोऽनुचित इति वाच्यम्। ज्ञानानुकूलव्यापारवत्त्वस्यैव ज्ञातृपदशक्यतावच्छेदकतया मनसाऽपि तद्वत्त्वेन ज्ञातृपदशक्त्यधीनधीमुख्यविशेष्यत्वादुपलक्षणविधया तदवच्छिन्नभेदस्यात्मनीव मनस्यप्यसत्त्वाद्भागासिद्ध्यापत्ते। न चैवमानन्दपदज्ञानपदजन्योक्तधीविशेष्यतावच्छेदो ब्रह्मण्यपि वर्तते। ब्रह्म आनन्दो ज्ञानमित्यादिना व्यवह्रियमाणसम्बन्धनिर्वाहकभेदस्य तत्रावश्यकत्वात्। तथा च व्यभिचार इति वाच्यम्। स्वसमानसत्ताकतादृशभेदस्य स्वज्ञानाबाध्यस्य तस्य वा हेतुत्वानुसरणात्। यत्र हेतुरुपपादनीय स एव स्वपदार्थं। ब्रह्मानन्दयोरभेदग्रहकालेऽपीच्छारूपोपाधिना तादृशभेदस्य प्रतीयमानत्वात् इच्छाद्युपाध्यजन्यत्व भेदे निवेश्य वा ब्रह्मावृत्तित्व भेदे निवेश्य वा व्यभिचारो वारणीय।

परिच्छिन्नत्वं च ध्वंसप्रतियोगित्वमन्योन्याभावप्रतियोगित्वमत्यन्ताभावप्रतियोगित्व वा। 'अतोऽन्यदार्तम्' इति श्रुत्याऽऽकाशादेर्निखिलब्रह्मातिरिक्तप्रपञ्चस्य ध्वसप्रतियोगित्वरूपपीडितत्वश्रवणान्न कुत्राप्यसिद्धिर्व्यभिचारो वा। न चार्तपदस्य दुःखित्वमर्थ इति वाच्यम्। जडे बाधितत्वेन ब्रह्मान्यसामान्ये तदुक्त्ययोगात्। 'आत्मन आकाश सम्भूत' 'सर्वे निमेषा जज्ञिरे' इत्याकाशादीनामुत्पत्तिश्रुत्या ध्वसप्रतियोगित्वानुमानाच्च। न च द्वितीयतृतीयहेत्वोर्ब्रह्मणि व्यभिचार। अत्यन्ताभावान्योन्याभावयो स्वसमानसत्ताकत्वेन स्वान्यूनसत्ताकत्वेन वा विशेषणात। ब्रह्मावृत्तिप्रतियोगितासम्बन्धेनात्यन्ताभावान्योन्याभावयोरेव वा हेतुत्वेन विवक्षणान्न कुत्रापि व्यभिचार इति।

तदेतत्सर्वमापातरमणीयम्। शुद्धांशे अन्याप्रकारकवृत्त्युत्पत्तेरावश्यकत्वे शुद्धे वृत्तिविषयत्वस्यापरिहारेण व्यभिचारापरिहारात्। अन्यथा घटादावपि वृत्त्युपहित एव दृश्यत्वप्राप्त्या केवलस्वरूपे दृश्यत्वाभावेनासिद्ध्यापत्त। न च तस्य केवलरूप नास्त्येवेति वाच्यम्। ब्रह्मण्यपि तौल्यात्। न चाखण्डार्थपरैर्वेदान्तैस्तत्केवलरूपावगाहनात्तत्सिद्धिरिति वाच्यम्। अत्रापि निर्विकल्पकप्रत्यक्षेण 'कम्बुग्रीवादिमान् घट' इति लक्षणवाक्येन 'सोऽयं घट' इति वाक्येन च तत्स्वरूपमात्रावगाहनेन प्रकृतेऽपि तत्सिद्धेर्दुर्वारत्वात्। न च 'यत्तदद्रेश्यम्' इत्यादिश्रुत्या शुद्धस्वरूपे दृश्यत्वनिषेधात् वृत्त्युपहित एव तत्र दृश्यत्व स्वीक्रियते। घटादौ तदभावादुक्तस्वरूपमात्रविषयकधीविषयत्व शुद्धस्वरूपे [1]स्वीक्रियत इति वाच्यम्। तद्वाक्यजन्यबोधविषयत्वस्याप्युपहित एव सत्त्वेन शुद्धे असत्त्वेन शुद्धे तन्निषेधासाधकत्वात्। स्वाविषयेऽपि तत्साधकत्वे उक्तश्रुत्यैव घटादिकेवलरूपेऽपि दृश्यत्वनिषेध किं न स्यात्। ननूक्तश्रुतिविषयीभूत यद्दृश्यत्वोपहितं तत्तादात्म्यस्य शुद्धे सत्त्वादेव तस्यादृश्यत्वसिद्धि। न घटीयकेवलरूपस्येति चेन्न। तत्तादात्म्यस्यापि स्वोपहित एव सत्त्वेन तत्सत्त्वेनापि शुद्धे दृश्यत्वाभावादिसिद्ध्ययोगात्।

---

[1] ब्रह्मणीति शेष।

(द्वै सि) एतेन शुद्धं स्वप्रकाशत्वादेव सिद्ध्यति, न तु त्वगादिवृत्तिज्ञानविषयतया । घटादीनां तु तथेति निरस्तम् । स्वप्रकाशत्वादिबोधकश्रुतिविषयत्वमात्रेण [1]यथा श्रुत्या घटादिकेवलरूपस्य न स्वप्रकाशत्वं सिद्ध्यति । किन्तु ब्रह्मस्वरूपस्यैवेति वैषम्यकल्पनायोगात् । न च पूर्वोक्तरीत्या शुद्धं स्वप्रकाशं न वेत्यादिसंशयम्[2] स्वप्रकाशमेव वेत्यादिविपर्ययं वा प्रति विरोधित्वमेव तद्वाक्यस्य शुद्धविषयकत्वमिति वाच्यम् । शुद्धविषयकसंशयाप्रसिद्ध्यादेः पूर्वं त्वयैव निरूपितत्वेन तद्विरोधिताया एव दुरुपपादत्वात् । अन्यथा शशविषाणादिकं प्रत्यपि किञ्चिद्विरोधि स्यात् । केनचित्तादृशसंशयस्य समीकल्पने उक्तवाक्यजन्यधियस्तद्विरोधित्वस्य वाचस्पतिना कल्पनामात्रेण तद्वाक्यस्य शुद्धपरत्वे पुरुषान्तरेण घटे संशयविरोधित्वकल्पनामात्रेण घटपरत्वमपि दुर्वारमिति सम्यक् श्रुत्यर्थविचारकौशल्यं प्रकटीकृतम् ।

यत्तु सौषुप्तिकानुभवबलादात्मनः स्वप्रकाशत्वं त्वन्मत इव मन्मतेऽपि सिद्ध्यतीति तन्न मया ऽऽत्मस्वरूपस्य स्वविषयकज्ञानस्वरूपत्वाङ्गीकारात् । त्वया तदनभ्युपगमात् । किञ्च वृत्त्युपहिते वृत्तिविषयत्वस्याज्ञानोपहितेऽज्ञानविषयत्वस्य सत्त्वे तयोरुपहितयोर्मिथ्याभूतयोर्भिन्नत्वेनैकविषयकत्वाभावेन निवर्त्यनिवर्तकभावानुपपत्तिरपरिहार्यैव । इतराप्रकारकत्वमात्रेण निवर्तकत्वे पूर्वोक्तघटनिर्विकल्पकादेरपि तत्स्यादविशेषात् । अतो वृत्तिविषयत्वमावश्यकं शुद्ध इति तत्रानैकान्त्यमावश्यकम् ।

शब्दाजन्यवृत्तिविषयत्वं हेतुत्वमित्यपि न । ब्रह्म शुद्धमानन्दरूपं निरुपाधिकप्रेमास्पदत्वात् जगत्स्वरूपं न अबाध्यत्वादित्याद्यनुमानवेद्यत्वस्य ब्रह्मण्यपि सत्त्वेन व्यभिचारतादवस्थ्यात् । न च शब्दाप्रयोज्यज्ञानविषयत्वं हेतुः । उक्तानुमितिरपि श्रुत्युपजीव्येति न व्यभिचार इति वाच्यम् । धर्माद्यतीन्द्रियेऽसिद्धेः । न चोक्तानुमितौ विशिष्टस्य भानान्न शुद्धे तद्विषयत्वम् । वेदान्तैस्तु स्वरूपमात्रावगाह्यखण्डार्थबोधजननात्तत्र शुद्धस्य भानमिति शब्दाजन्यत्वस्यापि सार्थक्यमिति वाच्यम् । अनुमितेरप्यखण्डार्थविषयकत्वसम्भवे त्वन्न्यायेन समर्थनीयतया व्यभिचारावारणात् । अखण्डार्थशब्दाधीननिर्विकल्पकस्मृतौ शब्दस्यान्यथासिद्धत्वेन शब्दाजन्यतया तद्विषयत्वस्यापि ब्रह्मणि सत्त्वेनानैकान्त्यापरिहाराच्च ।

नापि सप्रकारकधीविषयत्वमपि युक्तम् । शुद्धत्वस्वप्रकाशत्वादिप्रकारकधीविषयत्वस्य शुद्धेऽपि सत्त्वात् । विशेष्यानवगाहिन्या विशिष्टधियोऽभावात् । तत्र शुद्धस्याभानेऽखण्डार्थबोधद्वारीभूतबोधविषयतया शुद्धस्वप्रकाशत्वादिधर्माणां शुद्धासमसत्ताकानामपि विवरणमतेऽसिद्धिप्रसङ्गात् । अन्यथा घटादेरपि तत्सिद्धिप्रसङ्गात् । न च द्वारीभूतबोधविषयीभूतविशिष्टतादात्म्यबलात् शुद्धे तद्धर्मसिद्धिरिति वाच्यम् । तर्हि हेतुभूततादात्म्यप्रकारकपरामर्शतल्लिङ्गकशुद्धत्वाद्यनुमितौ शुद्धभानापरिहारात् । एतदन्यतत्सिद्धिपदार्थस्यानिरूपणात् ।

न च सप्रकारकधीविषयतापर्याप्त्यधिकरणत्वं हेतुः । तच्च विशिष्ट एव न शुद्ध इति वाच्यम् । एवं तर्हि घटादिशुद्धस्वरूपे उक्तरीत्या हेत्वभावेनासिद्ध्यापत्तेः । न च विशिष्टे तद्धर्मस्य सत्त्वे तत्तादात्म्याच्छुद्धेऽपि तद्धर्मा-

---

[1] तया इति पाठेन भाव्यमिति भाति ।

[2] स्वप्रकाशमेव इति पाठेन भाव्यमिति भाति ।

(द्वि.शु.)ऽस्त्येव शुद्धे तदभावग्राहकमानासत्त्वे। अत एवोष्णीषादिविशिष्टचैत्रगमनेन शुद्धचैत्रेऽपि गमनव्यवहार। उष्णीषादिविशेषणसम्बन्धादिनाशप्रयुक्तविशिष्टनाशेऽपि चैत्रो नष्ट इति व्यवहाराभावश्च। एवं च घटादिशुद्धस्वरूपे उक्तहेत्वधिकरणीभूतविशिष्टतादात्म्यादेव हेतुसत्त्वान्नासिद्धि। ब्रह्मणि त्वदृश्यत्वादिबोधकश्रुतिबलादेवोक्तहेत्वधिकरणीभूतविशिष्टतादात्म्यसत्त्वेऽपि नोक्तहेत्वधिकरणत्वम्। अन्यथा तन्निष्ठमिथ्यात्वविनाशित्वादिधर्माणामपि प्रसक्ते। तथा च न व्यभिचार इति वाच्यम्। श्रुते सप्रकारकदृग्विषयत्वपर्याप्त्यधिकरणत्वाभावपरत्वेन सङ्कोचे आवश्यके साकल्येनाज्ञेयत्वार्थकत्वस्यैव

अप्रसिद्धेरवाच्यं तद्वाच्यं सर्वागमोक्तितः।
अतर्क्यं तर्क्यमज्ञेयं ज्ञेयमेव परं स्मृतम्॥

इत्यादिबहुतरप्रमाणानुसारेणाङ्गीकर्तव्यतया त्वदुक्तार्थस्योत्प्रेक्षामात्रमूलकत्वेन हेयतया श्रुतिबाधाभावेन घटादाविव ब्रह्मण्यप्युक्तहेतुसत्त्वावश्यकत्वात्।

यदपि 'तुच्छेऽपि निरुपाख्यधर्मप्रकारकधीविषयत्वाद्व्यभिचार इति सोपाख्यत्वेन धर्मो विशेषणीय' इत्यादि तदप्यसारम्। असन्निष्ठनिषेधप्रतियोगित्वेऽप्यस्तीति धीविषयत्वरूपस्य वा सत्तादात्म्यतत्त्वान्यतरवत्त्वस्वरूपस्य वा सोपाख्यत्वस्य मयाङ्गीकृतत्वात्तत्र व्यभिचारापरिहारात्। न चासन्निष्ठधर्मस्य तस्य तत्तादात्म्यापन्नत्वात्कथं तस्य सत्तादात्म्यमिति वाच्यम्। चैत्रादीन् प्रति दण्डादेरिव तद्व्यावर्तकत्वमात्रेण तद्धर्मत्वेन व्यवहारविषयतया [1]तस्य सत्तादात्म्याभावात् विषयत्वादेरसद्धर्मत्वस्य पूर्वमुपपादितत्वात् त्रैकालिकनिषेधप्रतियोगित्वमसति नास्तीति प्रतीत्यनुदयात्प्रत्युत सदित्येव प्रतीत्युदयाच्च तत्र सत्तादात्म्यस्यावर्जनीयत्वात्।

ननु असति कस्यापि तादात्म्याभावात्स्वतादात्म्यापन्नधर्मप्रकारकधीविषयत्वं हेतुरस्त्विति चेन्न। एवमप्यात्मनि व्यभिचारस्य मूलोक्तस्यापरिहार एव।

यत्तु 'सत्तादात्म्यतत्त्वान्यतरवत्त्वमेवोक्तहेतुवाक्यस्य फलितोऽर्थ' इति। तदसत्। यत सत्पदेनाबाध्यविवक्षणे तत्तादात्म्यस्य मिथ्यात्वेन विरोध। शुक्तिरूप्यादिदृष्टान्तेन साधनवैकल्यं च। ब्रह्मतादात्म्यविवक्षणे ममासिद्धिसाधनवैकल्यविरोधा एव। सदिति प्रतीतिविषयविवक्षणे तादृशप्रतीतिविषयाभेदस्य शशविषाणं सदिति भ्रममादाय शशविषाणरूपासति ब्रह्मण्यपि तत्सत्यमिति श्रुतिजन्यप्रतीतिमादाय सत्त्वाद्व्यभिचार एवेति।

यदप्येतत्प्रकरणे 'शशविषाणादिरूपासत एवाभावत्वोपहितरूपेण सोपाख्यधर्मवत्त्वम्' इत्यभिधानं तत् असत्यभावत्वरूपधर्मस्य स्वाभाविकत्वे तादृशधर्मवत स्वत एव कालसम्बद्धत्वात्तदसत्त्वोक्तिर्वृथैव। अन्यथा घटस्यापि स्वरूपतोऽसत्त्वं घटत्वोपहितरूपेण प्रत्यक्षादिगोचरत्वमित्यादि स्यात्। अविशेषात्। अभावत्वस्य कल्पितत्वे तु स्वरूपस्य तस्य तत्कल्पनाधिष्ठानत्वायोग। अन्यथा शून्यस्यैव सर्वकल्पनाधिष्ठानत्वप्राप्त्या शून्यमतनिरासायोग। उक्तरीतौ मानाभावश्चेत्यादिदूषणकवलितत्वादश्रद्धेयमेव।

---

[1] तस्यासत्तादात्म्याभावात् इति पाठेन साध्वमिति भाति।

(द्वै यु.) यदपि 'यदि च तुच्छेऽप्यतुच्छत्वेनैव प्रतीयमानः' इत्यादिनोक्तं तदप्यसतोऽपि सत्त्वेन प्रतीतेः पूर्वमेवोपपादितत्वान्निरस्तम् ।

यदपि 'व्यवहारप्रयोजकविषयत्वम्' इत्युक्तहेतौ 'चित्तादात्म्यज्ञानकप्रवृत्तिविषयत्वेतदन्यतरत्वम्' इति निष्कर्षकरणम् । तदप्यसारम् । ब्रह्मण्यपि वृत्तिविषयत्वस्य त्वयाभ्युपेतत्वात् शुद्धचित्यपि चित्तादात्म्यस्य त्वयैवोपपादितत्वेन चिति व्यभिचारापरिहारे तैनदुक्तेर्निर्हेतुकत्वात् । न च ब्रह्मज्ञानाबाध्यत्वेन हेतुर्विशेषणीय इत्यभिप्राय इति वाच्यम् । ब्रह्मणि स्वज्ञानाबाध्यस्य कल्पान्तमात्रेण तावन्मात्रस्य व्यभिचारवारकत्वेनान्यतरांशवैयर्थ्यात् ।

न चानन्दज्ञानादिधर्माणां ब्रह्मज्ञानाबाध्यानामेव ब्रह्मणि सत्त्वाद्व्यभिचारपरिहाराय तत्सार्थक्यसम्भव इति वाच्यम् । आनन्दज्ञानस्वरूपाणां ब्रह्मणोऽत्यन्ताभिन्नानां धर्माणां वास्तवेन कल्पितभेदोपहितरूपेणैव धर्मत्वात् तादृशानां बाध्यत्वेन व्यभिचारानवकाशात् । उपहितरूपेण मिथ्यात्वेऽपि स्वरूपेणाबाध्यत्वे व्यभिचार इत्याग्रहे तदापि तादृशविषयत्वस्य वा चित्तादात्म्यस्य वा निवेशेनैव सामञ्जस्ये अन्यतरत्वेन निवेशवैयर्थ्यापरिहारात् । शुद्धचित्यपि चित्तादात्म्यस्य त्वयैवोपपादितत्वेन व्यभिचारपरिहाराय स्वज्ञानाबाध्यत्वस्यापि सार्थक्यसम्भवात् । न चान्यतरस्याप्यन्यतरत्वात्मको यो भेदः स्वरूपतस्तेनैव रूपेण निविष्टत्वस्याप्युक्तत्वात्कथं वैयर्थ्यमिति वाच्यम् । अन्यतरत्वादिरूपभेदस्य स्वरूपतो भाने मानाभावात् । परार्थस्थले उक्तान्यतरत्वपरिचायकादौ तादृक्चित्तादात्म्यविषयत्वोपादानस्यावश्यकत्वे एकैकस्य हेतुत्वसम्भवे उभयोपादानेनाऽधिक्यमिति वादिना वक्तुं शक्यत्वेन निग्रहावश्यकत्वात् । अन्यथा 'पर्वतो वह्निमान् धूमाऽऽलोकान्यतमात्' इति प्रयोक्ता न निगृह्येत । अपि च सामान्यतो ज्ञानाबाध्यत्वनिवेशे साधनाप्रसिद्धिभिया स्वज्ञानबाध्यत्वाभावरूपविशेषाभावघटितस्यैव हेतुत्वप्राप्त्या ब्रह्मण्यनैकान्त्यतादवस्थ्यात् कथञ्चिदनुगमादिनोक्तदोषोद्धारेऽपि प्रतिवादिना ब्रह्मण्यबाध्यत्वहेतोरङ्गीकृतत्वात्तन्मतेन व्यभिचार । स्वार्थानुमाने [1]प्रपञ्चे बाध्यत्वसन्देहदशायां निश्चितसाध्याभाववति ब्रह्मण्युक्तहेतुसन्देहात् सन्दिग्धानैकान्तिकत्वम् । न च ब्रह्मज्ञानबाध्यत्वसन्देहदशायां तज्ज्ञानाबाध्यत्वविशिष्टदृश्यत्वत्वरूपप्रतियोगितावच्छेदकविशिष्टप्रतियोगिनिर्णयाभावात्कथं तदभावावगाहिसन्देहात्मकव्यभिचारज्ञानमिति वाच्यम् । पुरुषवृत्तिदण्डसामान्ये रक्तत्वसन्देहदशायामपि भूतले रक्तदण्डवत्पुरुषवन्न वेति संशयस्यानुभवसिद्धत्वेन प्रतियोगितावच्छेदकघटकानां विशृङ्खलज्ञानेनापि तादृशसंशयोत्पत्त्यङ्गीकारात् । ज्ञानबाध्यत्वसम्बन्धावच्छिन्नस्ववृत्तिप्रतियोगिताकाभाववत्त्वस्ववृत्तित्वोभयसम्बन्धेन किञ्चिद्विशिष्टदृश्यत्वस्यैवोक्ताननुगमनिबन्धनदोषवारणाय त्वयाभ्युपगन्तव्यतया प्रतियोगिग्रहस्य घटाद्यन्तर्भावेण सत्त्वाद्ब्रह्मवृत्तिदृश्यत्वादौ बाध्यत्वसन्देहाहितस्य तादृशहेतुसन्देहस्य सम्भवात् । अन्यत्र रक्तदण्डत्वावच्छिन्ननिर्णयवतश्चैत्रवृत्तिदण्डे रक्तत्वसन्देहेन चैत्रो रक्तदण्डवान्न वेति सन्देहवत् अतो मिथ्यात्वाभावेऽपि ब्रह्मण इव दृश्यत्वरूपविशेष्यांशस्य तत्र स्वज्ञानाबाध्यत्वस्य च सम्भवेन हेतूच्छित्त्यादिरूपानुकूलतर्कानवतारात् पक्षान्तर्भावेणापि सन्दिग्धानैकान्त्यं दुर्वारम् ।

---

[1] ब्रह्मणि इति पाठेन भाव्यमिति भाति ।

(द्वै सु) एतन्न्यायेनैव स्वसमानसत्ताकत्व हेतुविशेषणमित्यप्यपास्तम् । शुक्तिरूप्यादिनिष्ठदृश्यत्वस्य प्रतिवादिनये प्रातिभासिकत्वानङ्गीकारेण साधनवैकल्याच्च । यदपि चित्सम्बन्धित्वं दृश्यत्वमित्यस्य 'चित्सम्बन्धितावच्छेदकचिद्वृत्तित्वविशिष्टतादात्म्यत्व तदवच्छिन्नत्व' इति निष्कर्षकरणम् । तदप्यसत् । चित्सम्बन्धितावच्छेदकांशस्य वैयर्थ्यात् । चिद्वृत्तित्वविशिष्टतादात्म्यत्वावच्छिन्नस्य चित्यभावादेव व्यभिचारानवकाशात् । न च विकल्पविषयतादात्म्यस्यासति सत्त्वाद्व्यभिचारवारणाय तत्सार्थक्यमिति वाच्यम् । घटादिनिष्ठचित्सम्बन्धितावच्छेदकतादात्म्यत्वमेव । न तु चिद्वृत्तित्वस्यापि तत्र निवेश । प्रयोजनाभावात् । तथा च चित्सम्बन्धितावच्छेदकत्वस्योक्ततादात्म्यत्वेऽसत्त्वात् साधनाऽप्रसिद्ध्यापत्ते । न चावच्छेदकांशस्त्यज्यत एव । विकल्पविषयतामात्र तत्र स्वीक्रियते । न तु तदाश्रयतादात्म्यं भेदाभेदनिर्वाहं वस्त्वन्तरम् । तन्निष्ठतद्भेदस्य तुच्छतया तादात्म्यानिर्वाहकत्वात् । 'असन्विकल्पविषय' इति सामानाधिकरण्यप्रत्ययस्तु नास्त्येव । तादृशव्यवहारस्तु तटस्थतया तादृशविषयतया साक पूर्वोक्ते बौद्धधर्मधर्मिभावे पारिभाषिक । तथा च तुच्छे व्यभिचारानवकाशात् अवच्छेदकांशं हेत्वघटकमेव इति वाच्यम् । उक्ततादात्म्यत्वे तस्य बाधितत्वेन हेत्वघटकत्वे तत एव परिचायकत्वस्याप्यभावे मूलेऽप्येतादृशानुपूर्व्यभावेन तद्व्याख्यानात्मकत्वस्याप्यभावे तदुक्तेरुन्मत्तप्रलपितत्वापत्ते । न ह्यवच्छेदकपदमनतिरिक्तवृत्त्यर्थकमपि सम्भवति । घटानुयोगिकनीलप्रतियोगिकतादात्म्ये चित्सम्बन्धिताविरहेण व्यभिचारात् ।

अस्तु वा तद्यथा तथा । अवच्छेदकांशपरित्यागेनैव हेतुता । चिद्वृत्तित्वावच्छिन्नमात्रस्य हेतुत्वे तादृशतुच्छत्वमादाय तुच्छे व्यभिचारवारणाय तादात्म्यांशस्यानुपदमुपपादितरीत्या सार्थक्य च । तथाऽप्युपहितचितोऽपि मिथ्यात्वेन पक्षकुक्षौ निक्षेपावश्यकतया तत्र चिद्वृत्तितादात्म्याभावाद्भागासिद्ध्यापत्ते । शुद्धचिद्वृत्तीति विशिष्य निवेशे नैयायिकादीनां शुद्धचिदप्रसिद्ध्या साधनाप्रसिद्धि । मन्मते शुद्धचिदप्रसिद्ध्या तद्धटितप्रतियोग्यप्रसिद्ध्या तद्वृत्तित्वाभावप्रसिद्धावपि तद्वृत्तादात्म्यस्य सत्यत्वेनाङ्गीकृतब्रह्मणि सत्त्वाद्व्यभिचार एव । अपि च यत्र व्यभिचार तदन्यत्वविशेषणदान एव पर्यवसन्नतया ब्रह्मनिष्ठतादात्म्यस्येव जगन्निष्ठतादात्म्यस्यापि जगति मिथ्यात्वं विनाप्युपपन्नत्वादप्रयोजकत्व च । किञ्च भेदाभेदनिर्वाहस्य विवक्षिततादात्म्यस्य पूर्वं निरस्तत्वात्तन्निवेशे साधनाप्रसिद्धि । नापि स्वातिरिक्तसंवित्प्रयोज्यत्वव्याप्यस्वव्यवहारत्वकत्वम् । तत्र हि व्यवहारत्वस्यानुगतस्याभावात् स्फुरणाभिवदनाद्यन्यतमत्वेन व्यवहारो हि निवेशित । तत्र स्फुरणत्व त्वन्मतमन्मतोभयसिद्धमेक नास्त्येव । अतोऽज्ञानविशेषविषयत्वाभावप्रयोजकविशिष्टचितो नैयायिकादीन् प्रत्यसिद्धि । अज्ञानस्याप्रसिद्धत्वेन तत्प्रतियोगिकाभावाप्रसिद्धे । मन्मते प्रतियोग्यप्रसिद्ध्याऽभावप्रसिद्धावपि भगवदिच्छायास्तत्र क्षेमसाधारणप्रयोजकतया तद्विशिष्टचिद्रूपे ईश्वरे घटादिविषयकत्वाभावादसिद्धिरेव । घटादेश्चितश्चाऽकाराख्यविषयविषयिभावस्य त्वयाऽनङ्गीकारेण तादात्म्यरूपविषयत्वस्यैव निवेशनीयत्वात् । उभयसाधारणविषयतात्वरूपधर्मसत्त्वे मानाभावात् त्वयाऽपि तथैवोक्तत्वाच्च ।

न च स्फुरणे स्वविषयकत्वमनिवेश्य सामान्यत एव तन्निवेश क्रियते । अन्यविषयस्फुरणस्यापि स्वातिरिक्तचिद्रूपसंवित्प्रयोज्यत्वान्न घटादावसिद्धि । चिति च स्वातिरिक्तचिदप्रसिद्ध्यैव न व्यभिचार इति वाच्यम् ।

(द्वै. सु.) तन्मते उक्तविशिष्टचिद्रूपस्येश्वरस्य विशेष्यीभूतस्वात्मकचित्प्रयोज्यत्वे क्षेमसाधारणे मानाभावेनात्यन्तमा-न्तं पातिताहशस्फुरणरूपे घटातिरिक्तचित्प्रयोज्यत्वाभावादसिद्ध्यापत्तेः । स्वमतेऽप्यज्ञानविषयत्वाभावे अज्ञान-विषयत्वाभावविशिष्टचितः क्षेमसाधारणप्रयोजकत्वे मानाभाव एव ; न हि

द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया ॥

इत्यादेः सर्वस्येच्छाधीनत्वे मानत्वस्येव कस्यचिदागमस्य त्वदुक्तार्थे मानत्वमस्ति । 'विशिष्टचित्सत्त्वादज्ञाना-विषयत्वम्' इत्यादिका प्रतीतिस्त्वौत्प्रेक्षिकी नार्थसाधिका । तथा च शुद्धचिद्विषयकोक्तस्फुरणाप्रसिद्ध्यैव व्यभि-चारवारणसम्भवे स्वातिरिक्तेत्यस्य वैयर्थ्यमेव । न च पूर्णानन्दांशे व्यभिचारवारणं तत्प्रयोजनम् । तत्राज्ञान-विषयत्वाभावे वृत्तेः प्रयोजकतया तद्विशिष्टचिद्रूपस्फुरणे अविद्यासहकारेण सर्वकारणीभूतायाः शुद्धचितः प्रयोज-कत्वेनोक्तहेतुसत्त्वादतः स्वातिरिक्तत्वं चिद्विशेषणमिति वाच्यम् । तथात्वेऽनादितश्चिदंशस्यानावृतत्वं शुद्धस्यैव । अनन्दांशस्यावृतत्वम् । अन्यथा भेदाद्युपहितस्य तस्य मिथ्यात्वेऽनावृतत्वायोगात् । अनन्यथासिद्धये तयोर्भेद-स्याप्याविद्यकस्यानादित एव सत्त्वेन स्वातिरिक्तपदादानेऽपि व्यभिचारापरिहारात् । अनादिनोऽपि विद्यमानभेदे प्रातीतिकत्वस्य वक्तुमशक्यतया प्रातीतिकान्यत्वस्योक्तभेदे निवेशेनापि दोषस्य वारयितुमशक्यत्वात् ।

यत्तु 'उक्तभेदोपहिते तत्रापि मिथ्यात्वं वर्तत एवेति न व्यभिचारः' इति । तदसत् । तथात्वे यस्य कस्यापि हेतुत्वेऽपि तादृशहेतूपहितरूपेण ब्रह्मणो मिथ्यात्वावश्यकत्वेन [1]व्यभिचारापरिहारादिनोक्तहेतुपरिष्कारा-यासस्यैव वैफल्यापत्तेः ।

यदि च येन केनापि रूपेण जगतो मिथ्यात्वसिद्ध्यार्थान्तरपरिहाराय स्वरूपतो मिथ्यात्वं साध्य-मित्यात्मनि व्यभिचारवारणाय हेतुपरिष्कारसार्थक्यमिति मन्यसे कथं तर्हि पूर्णानन्दांशे व्यभिचारवारणम् ।

अपि च जीवचिन्निष्ठाज्ञानविषयत्वाभावे तद्विशिष्टजीवचितः क्षेमसाधारणप्रयोजकत्वस्य त्वद्रीत्या प्राप्त्या तत्तद्विशिष्टचिद्रूपस्फुरणे जीवचिदन्येश्वरचितः प्रयोजकत्वाज्जीवानां त्वन्मतेऽपि स्वरूपतः सत्यत्वाद्व्यभिचार एव । तयोर्भेदस्याप्यनादितो विद्यमानस्याङ्गीकृतत्वात् । हेतुशरीरे च विशिष्टचित्साधारणरूपेणैव चितो निवेशं कृत्वैव पूर्वं तथोपपादनात् । स्फुरणरूपे विशिष्टचितोऽनवस्थाभयेन स्फुरणान्तराङ्गीकारायोगात् तत्र पक्षीभूते हेतूपपादनायोगश्च । अविद्यायामविद्याविषयत्वाभावप्रयोजकविशिष्टचित्तादात्म्यरूपस्फुरणासम्भवेन तत्रासि-द्ध्यापत्तिश्च ।

एतेन लाघवात्स्वातिरिक्तचित्प्रयोज्यस्वस्फुरणकत्वं हेतुरपि प्रत्युक्तम् । पूर्वोक्तदोषाणामनुद्धारात् ।

अपि च जगन्मिथ्यात्वसिद्धेः प्राक् चिदचितोस्तादात्म्यरूपविषयविषयिभावस्यासिद्ध्या घटादिविषयक-

---

[1] व्यभिचारपरिहारा इति पाठेन भाव्यमिति भाति ।

(द्वै. द्यु) स्फुरणस्याभावापत्त्या तेनैव हेतुसिद्धावनुमानवैयर्थ्यं पूर्वोक्तरीत्या स्वत्वनिवेशप्रयुक्तोऽननुगमोऽप्रयोजकत्वं चेत्यादीनि पूर्वोक्तानि सर्वाण्यनुसन्धेयानीति दिक्।

यदप्यस्वप्रकाशत्व दृश्यत्वमित्यस्यानन्याधीनापरोक्षत्वावच्छिन्नानुयोगिकभेदप्रतियोगित्वमिति निष्कर्षं कृत्वा अपरोक्षत्व चोपलक्षणविधयाऽनुयोगितावच्छेदकतया निविष्टमित्यभिधाय ब्रह्मणश्चैतन्यमानन्दो ब्रह्मण इत्यादिप्रतीतिसिद्धभेदमादाय व्यभिचारवारणाय 'ज्ञानत्वानन्दत्वादीनामेवोपलक्षणया तदनुयोगितावच्छेदकत्वम्। न त्वनन्याधीनापरोक्षत्वरूपस्वप्रकाशत्वस्य' इत्यभिहितम्। तदप्यसत्। ज्ञानानन्दयोरपि ब्रह्मस्वरूपतया तत्रापि स्वप्रकाशत्वस्य सत्त्वेन तन्निष्ठभेदानुयोगितावच्छेदकत्वस्य तत्रानपायात्।

ननु तत्राप्युक्त ब्रह्मनिष्ठज्ञानादिधर्मेति पङ्क्त्या 'तन्निष्ठानुयोगिताया स्वप्रकाशत्वातिरिक्तधर्म एवोपलक्षणयाऽनुयोगितावच्छेदक' इति। सत्यमुक्त दुरुक्त तत्। ज्ञानादीना ब्रह्मस्वरूपत्वे स्वप्रकाशत्वरूपधर्मस्य तत्र विद्यमानस्यानुयोगितावच्छेदकत्व नास्ति। ज्ञानत्वानन्दत्वयोरेव तथात्वमित्यत्र त्वद्वाक्यातिरिक्तसाधकानुपलम्भात्। न च 'ब्रह्मण आनन्दश्चैतन्यम्' इत्येवोल्लेखात् 'ब्रह्मण स्वप्रकाश' इत्यनुल्लेखान्न स्वप्रकाशत्वावच्छिन्नत्वमनुयोगित्वस्येति वाच्यम्। 'स्वप्रकाशस्य चैतन्यमानन्द' इत्यादिव्यवहारानुसारेण स्वप्रकाशचैतन्ययोर्भेदस्य परस्परमावश्यकतया चैतन्यरूपब्रह्मप्रतियोगिकभेदानुयोगितावच्छेदकत्वस्योपलक्षणया स्वप्रकाशत्वे त्वद्रीत्याऽऽवश्यकत्वात्। पूर्वोक्तरीत्या पूर्णानन्दे व्यभिचारानुद्धाराच्च। न च पूर्णानन्दभेदानुयोगिता नोपलक्षणविधया स्वप्रकाशत्वावच्छिन्ना। किन्तु स्वप्रकाशत्वोपहितनिष्ठैव सेति वाच्यम्। उपहितस्य मिथ्यात्वेन स्वप्रकाशत्वायोगात् शुद्धचित एव स्वप्रकाशत्वे वक्तव्ये तन्निष्ठपूर्णानन्दभेदानुयोगिताया उपलक्षणया स्वप्रकाशत्वावच्छिन्नत्वस्य वाङ्मात्रेण वारयितुमशक्यत्वात्। अन्यथा जडभेदानुयोगिताया अपि स्वप्रकाशत्वावच्छिन्नत्वस्य व्यवस्थापयितुमशक्यत्वेनासिद्ध्यापत्ते। मन्मते जीवत्वोपलक्षितभेदस्य ब्रह्मचिन्निष्ठस्यानन्याधीनापरोक्षत्वरूपब्रह्ममात्रवृत्तिधर्मावच्छिन्नानुयोगिताकत्वेन व्यभिचारात्। त्वन्मतेऽपि तत्त्वपदार्थजीवत्वब्रह्मत्वोपलक्षितचैतन्ययोस्तादात्म्यभानस्य द्वारीभूतबोधे सत्त्वात् तन्निर्वाहाय तयोर्भेदाभेदयोरावश्यकत्वेन तादृशभेदानुयोगिताया स्वप्रकाशत्वावच्छिन्नत्वे बाधकाभावेन व्यभिचारापरिहाराच्च। न च स्वप्रकाशत्व जीवचैतन्यवृत्त्यपि भवतीति प्रतियोगिसाधारण कथमनुयोगितावच्छेदक स्यादिति वाच्यम्। जीवचिन्निष्ठापरोक्षत्वस्य ब्रह्मचित्प्रयोज्यत्वेन ब्रह्मचिज्जीवचितो कल्पितभेदस्येदानीमुपपादितत्वेन स्वातिरिक्तचिदनधीनस्वापरोक्षत्वकत्वरूपस्वप्रकाशत्वस्य जीवे अभावात्। न चोक्तभेदीयानुयोगिताप्रतियोगितेऽनवच्छिन्ने एवेति न जीवे व्यभिचार इति वाच्यम्। अनयोरेवानवच्छिन्नत्वे मानाभावात्। अन्यथा जडभेदानुयोगिताया अपि तथात्वापत्त्याऽसिद्ध्यापत्ते। किं चोक्तरीत्या ज्ञानविषयत्वाभावे [1]तद्विशिष्टक्षेमसाधारणप्रयोजकत्वाभावेन स्वपदेन चैतन्योपादाने स्वनिष्ठापरोक्ष्यप्रयोजकचिदप्रसिद्धि।

---

[1] तद्विशिष्टचित इति पाठेन भाव्यमिति भाति।

(द्वै सु) घटाद्यपरोक्षत्वप्रयोजकं चिति च घटान्तरस्यैव सत्त्वमित्यनन्याधीनं परोक्षत्वमेव प्रसिद्धमिति तद्घटित-साधनाप्रसिद्धिः । उक्तहेतावपि ब्रह्मभेदपर्यवसायित्वे साध्येऽप्रयोजकत्वमित्यादिदूषणमन्यत्राप्यतिशिष्टानीत्युक्तम् ।

यदप्यवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वाभाव इत्यस्य निष्कर्षः स्वावच्छिन्नचिद्विषयकं यदज्ञानं तदुक्ता-ज्ञानं तन्निवर्तकवृत्तिविषयीभूतं यद्यत्तत्त्वं तत्त्वावच्छेदकविशिष्टत्वशून्यत्वरूपत्वाभाव इति कृतं सोऽप्यनुपपन्न एव । नैयायिकादीनां तादृशाज्ञानासिद्ध्या अस्मन्मते चाज्ञानस्य तादृशावच्छेदकावच्छेदकस्य भावादेरप्यप्रसिद्ध्या तादृशस्वपदार्थाप्रसिद्धिः । त्वन्मते तदप्रसिद्धत्वेव तत्त्वाभावघटकस्य केवलान्वयितया घटेऽपि सत्त्वेन व्यभिचारसिद्धिः । तवापि घटादेश्चित्यध्यस्तत्वसिद्धेः प्राक् घटाद्यवच्छिन्नचिद्विषयकाज्ञानासिद्धिः । घटादेरज्ञानकल्पितत्वस्य हि अज्ञान-विषयत्वानुपपत्त्या चिन्निष्ठाज्ञानविषयतावच्छेदकत्वं पश्चादुत्पन्नत्वमपि त्वयाङ्गीकृतम् । अन्यथा घटं न जानामीति स्वारसिकशब्दाभिलाप्यप्रत्ययेन घटविषयकत्वस्यैव सम्भवे घटादेरवच्छेदकत्वस्वीकारायोगात् । तथा च घटादे-र्मिथ्यात्वसिद्धेः प्राक् तदवच्छिन्नचिद्विषयकत्वघटितस्वपदार्थाप्रसिद्ध्या त्वयापि हेत्वसिद्धिः । श्रुतितात्पर्यावधार-णार्थमेव स्वार्थानुमानस्य त्वयाऽनुसरणीयतया श्रुत्याऽपीदानीं तन्निश्चयाभावात् । ब्रह्मघटान्यतरत्वघटितत्वदंशस्या-पेक्षया ब्रह्मत्वाभावस्यैव हेतूकरणसम्भवेनैतत्प्रयासस्य शिरोवेष्टनेन नासिकास्पर्शतुल्यत्वं च । अप्रयोजकत्वस्य त्वदुक्तहेतावपि तुल्यत्वात् ।

अत एव जगन्मात्रविषयकधीविशेषविषयत्वं दृश्यत्वमित्यपि निरस्तम् । अप्रयोजकत्वात् । ब्रह्मशुक्ति-रूप्योभयमात्रविषयिणी तद्धीः । तद्विषयत्वेन ब्रह्मणोऽपि मिथ्यात्वसाधनसम्भवेनाऽऽभाससाम्याच्च ।

अज्ञानसामान्यं निवेश्य स्वावच्छिन्नचिद्विषयकाज्ञाननिवर्तकधीविषयत्वमपि पूर्वोक्तरीत्या स्वपरमतासिद्ध्या अप्रयोजकत्वाच्च हेयम् ।

नापि वृत्तिप्रतिबिम्बितचित्तादात्म्यम् । अस्मदादीनां नैयायिकादीनां चासिद्धेः । तवापि मिथ्यात्वसिद्धेः प्राक् चिदचित्तादात्म्यासिद्ध्या हेत्वसिद्धेः ।

नापि सत्यादिपदतात्पर्यविषयाविषयकधीविषयत्वम् । सामान्यतः सत्यादिपदत्वेन निवेशे विश्वं सत्यमि-त्यादिवाक्यस्थसत्यादिपदतात्पर्यविषयत्वाज्जगत्यसिद्ध्यापत्तेः । सत्यं ज्ञानमित्यादिवाक्यस्थसत्यादिपदनिवेशे ब्रह्मान्य-त्वनिवेश एव पर्यवसानेनाप्रयोजकत्वम् । विश्वं सत्यमित्यादिवाक्यस्थसत्यादिपदं निवेश्य ब्रह्मणोऽपि मिथ्यात्व-साधनसम्भवेनाभाससाम्यञ्च ।

यदपि चिद्विषयत्वं चित्तादात्म्यतत्त्वान्यतररूपं हेतुरिति तदप्यसारम् । जगति चित्तादात्म्यस्य तव मम च मिथ्यात्वसिद्धेः प्रागसिद्धतयाऽसिद्धेरुक्तत्वात् । न च तादात्म्यस्य विषयतात्वेनैव निवेशः क्रियते । ईश्वरचिद्विषयत्वस्य जगति त्वयाङ्गीकारान्नासिद्धिरिति वाच्यम् । नहि तस्य मया ब्रह्मण्यप्यङ्गीकारेणानैकान्त्य-तादवस्थ्यात् ।

(द्वै.द्यु) ननु न तावत्त्वन्मते व्यभिचारोद्भावनं युक्तम्। निर्विशेषब्रह्मणस्तवालीकतया तत्र सद्विविक्तत्वस्य त्वयाऽभ्युपगतत्वात्। त्वया सह विचारसमये तावन्मात्रस्य साध्यत्वोपपत्तावसद्वैलक्षण्यनिवेशे प्रयोजनाभावात् तद्घटितसाध्याभावेऽपि क्षत्यभावात्। नापि मन्मते। ब्रह्मणि हेतूनामेवानङ्गीकारेण व्यभिचारानवकाशात्। मैवम्। उभयथापि दोषाभावात्। मन्मते सविशेषब्रह्मण एव सत्यत्वेनाङ्गीकृतत्वेन तत्रैव व्यभिचारोद्भावनात्। न हि तस्यापि पक्षान्तर्भावो वर्तते। चिद्भिन्नत्वरूपपक्षविशेषणानाक्रान्तत्वेन विमत्यविषयत्वात्। ज्ञानं सत्यमित्यु-भयाभ्युपगमविषयीभूते वस्तुन्येव व्यभिचारोद्भावनाच्च। त्वन्मतरीत्याऽपि तत्र हेतूपपादनेन व्यभिचारोद्भावन-सम्भवात्। तच्च कृतमेव स्वार्थानुमानस्थलेऽर्थान्तरवारणाय त्वयाऽवश्यमसद्वैलक्षण्यस्य साध्यकोटौ निवेश्यतया तत्रैव व्यभिचारस्य त्वन्न्यायेनोपपादिततया न्यायसिद्धे त्वदनभ्युपगमोक्तिमात्रस्य व्यभिचारपरिहाराक्षमत्वात्। अन्यथा वादिना स्वहेतोर्दुष्टत्वानभ्युपगममात्रेण तस्य जयप्रसङ्गः।

यदपि 'तादात्म्यस्य विषयतात्वेनैव निवेशः क्रियते' इति। तदसत्। तादात्म्ये आकाराख्ये च विषय-त्वेऽनुगतस्यैकविषयतात्वस्यास्य सत्त्वे मानाभावात्। चिन्निरूपिताकाराख्यविषयतानिवेशे तस्य त्वन्मतेऽसिद्धिः। तादात्म्यस्य विषयतात्वाभ्युपगमवैयर्थ्यं च।

एतावता तादात्म्यस्य विषयत्वरूपत्वं पराभ्युगतमनिराकृत्यैव व्यवहृतम्। वस्तुतस्तादात्म्यस्य विषयत्व-रूपत्वमेव विचारासहम्। तथा हि, किं सर्वतादात्म्यं विषयता उत जडनिष्ठचित्तादात्म्यम्। नाद्यः। नीलघटयो-रपि तादात्म्यसत्त्वेन घटस्य नीलविषयत्वं नीलस्य घटविषयकत्वं च स्यात्। न चेष्टापत्तिः। घटं नीलो विषयी-करोतीति प्रत्ययप्रयोगयोरापत्तेः। न च प्रकाशस्वभावप्रतियोगिकतादात्म्यमेव तथा स्यादिति वाच्यम्। विषयता निरूपकत्वातिरिक्तप्रकाशस्वभावत्वस्य निरूपयितुमशक्यत्वात्। अविद्याविरोधित्वं प्रकाशत्वमिति चेत्तर्हि चितः तत्साधकत्वेन तत्सम्बन्धस्य विषयत्वानुपपत्तेः। वृत्तिसहितत्वेन तथात्वे वृत्तेरपि तथात्वेन तत्तादात्म्यापन्नान्तः-करणादेरपि वृत्तिविषयत्वापत्त्याऽयं घटः इति ज्ञानोत्तरमियं वृत्तिरन्तःकरणं विषयीकरोतीति प्रत्ययापत्तेः। अविद्याया प्रकाशविरोधिन्यास्तत्स्वभावत्वाभावात् चिन्निष्ठतत्तादात्म्यस्य विषयत्वरूपत्वाभावापत्त्याऽविद्यायाश्चिद्वि-षयकत्वाभावापातश्च। न च तस्या आकाराख्यविषयतैव चिति स्वीक्रियते। ज्ञानाज्ञानयोः समानविषयकत्वेन निवर्त्यनिवर्तकभावाभ्युपगमात्। अन्यथा वृत्तिविषयतायास्तादात्म्यरूपत्वे [1]तस्याऽत्मन्यन्तःकरणादिनिष्ठत्वेन चरमवृत्तेर्मिथ्याभूतपदार्थविषयकत्वस्यापि प्राप्त्या प्रपञ्चनिवर्तकत्वानुपपत्तेरिति वाच्यम्। तथात्वेऽज्ञानस्य चिद्विष-यकत्वसिद्धये तत्र तत्तादात्म्याभ्युपगमस्य निर्बीजत्वापातात्। न च तत्प्रकाशार्थं तत्सम्बन्धसिद्धये तादात्म्यमुप-गम्यत इति वाच्यम्। लौकिकप्रकाशस्य घटादिसंयुक्तस्यैव भासकतया ज्ञानसाक्षिणोरपि संयोगस्यैवोचितत्वात्। 'असङ्गो ह्ययं पुरुषः' इति श्रुत्या साक्षिचैतन्यस्यासङ्गत्वप्रतिपादनात् कथं संयोगोऽभ्युपगन्तुं शक्यत इति चेत्। तादात्म्याङ्गीकारेऽपि कथं श्रुतेर्न बाधः। तस्यापि सम्बन्धत्वाविशेषात्।

---

[1] तस्याऽत्मान्यान्तःकरणादि इति पाठेन भाव्यमिति भाति।

(द्वैषु) नापि चित्तिरूपितं जडनिष्ठतादात्म्यमिति द्वितीयः पक्षः। 'नीलो घटः' इतिवत् 'ज्ञानं घटः' इति व्यवहारापत्तेः। न चेष्टापत्तिः। 'सर्वं खल्विदं ब्रह्म' इति श्रुत्या सर्वस्यापि ब्रह्मरूपज्ञानतादात्म्यस्य व्यवहृतत्वा-दिति वाच्यम्। उक्तव्यवहारस्य विषयविषयिभावरूपतादात्म्यकल्पनत्वे चैत्रस्य घटज्ञानोत्पत्त्यनन्तरं स्वज्ञानस्य घटविषयकत्वबोधनाय 'मम ज्ञानं घटः' इति व्यवहारं कुर्यात्, न कुर्यात् 'घटस्य ज्ञानं मयि वर्तते' इति व्यवहारम्। न हि नीलघटयोस्तादात्म्यबोधनाय 'नीलस्य घटः' इति व्यवहर्तारो भवन्ति। न चोक्तव्यवहारेषु ज्ञानपदेन वृत्तिरेव बोध्यते। तस्या घटादितादात्म्याभावात्। आकारस्यविषयताबोधनाय षष्ठीप्रयोग इति साम्प्रतम्। वृत्तेर्ज्ञानातिवाच्यतावच्छेदकघटकत्वेन चित एव तद्वाच्यत्वेनाङ्गीकारेण भवन्मतेऽन्त्यज्ञानपदेन चित एव बोधात्। अन्यथा त्वत्परिष्कृतजडत्वस्य भागासिद्धिप्रसङ्गात्। किञ्च तादात्म्यस्य विषयत्वाभिमतत्वे 'चैत्रीय-ज्ञानमस्ति' इति वाक्यं शृण्वतश्चैत्रीयतादात्म्ये ज्ञाने ज्ञाते सति 'चैत्रीयं ज्ञानं किंविषयकम्' इति जिज्ञासा घटस्येत्याद्युत्तरं च न स्यात्। [1]चैत्रीयरूपविषयस्य गृहीतत्वात्।

ननु वृत्तिसुखादिनिष्ठप्रतिबिम्बप्रयोजकतन्मनोमायान्यतरावच्छिन्नचैतन्यं तत्तादात्म्यापन्नचिद् असत्त्वापा-दकाज्ञानविषयत्वाभावप्रयोजकविशिष्टतन्मनोमायान्यतरावच्छिन्नचैतन्यं तत्तादात्म्यापन्नचिद् ज्ञानमित्युच्यते। घटं जानातीत्यत्र प्रथमकल्पे तादात्म्यसंसर्गावच्छिन्नाधेयत्वप्रतियोगिके द्वितीयकल्पे चावच्छेदकत्वसम्बन्धान्यतर-सम्बन्धावच्छिन्नाधेयत्वं कर्मविभक्त्यर्थीभूतमज्ञानविषयत्वाभावेऽन्वेति। घटस्य ज्ञानमित्यत्र कर्मणि षष्ठीस्थलेऽ-प्येवमेव। तथा च चैत्रीयज्ञानमिति वाक्यात् ज्ञाने चैत्रीयपदार्थतादात्म्यज्ञानेऽपि ज्ञानपदार्थघटकीभूतफलाश्रय-जिज्ञासानिवृत्त्यभावात् कस्येति प्रश्नो घटस्येत्युत्तरं च सङ्गच्छते। अत एव नीलो घट इति तयोस्तादात्म्यज्ञाना-नन्तरं नीलं विषयीकरोति घट इत्यादिव्यवहारापत्तिरपि निरस्ता। तन्निष्ठोक्तफलप्रयोजकत्वस्य तादृशवाक्येन बोधनीयतया नीलतादात्म्यमानेऽप्युक्तव्यवहारविषयीभूतधर्मस्याभानात्। अतो न कोऽपि दोष इति चेन्न।

एवं गत्यादिस्थले [2]एव क्रियाजन्यफलशालित्वमात्रेण घटादेर्विषयत्वप्राप्त्या ज्ञानज्ञेययोस्तादात्म्यरूपविष-यिविषयभावो नसिद्धयत्येव। घटं जानामि इति प्रत्यक्षस्याप्यभिलापकतादृशवाक्यसमानविषयकत्वात्; न च घटं जानामीत्यादौ द्वितीयार्थस्तादात्म्यमपि। तच्च साक्षादेव ज्ञानेऽन्वेतीत्युक्तार्थसिद्धिरिति वाच्यम्। तत्र माना-भावात्। आग्रहकरणे घटं जानाति चैत्र इति वाक्यात् [3]बोधे ज्ञानं घटो नेति व्यवहारानुपपत्तिः। ज्ञानं घट इति व्यवहारापत्तिश्च। न च विलक्षणतादात्म्यमेव तादृशव्यवहारादिनिर्वाहकम्। उक्ततादात्म्यं तु न तादृशमिति वाच्यम्। उक्तव्यवहारानिर्वाहकस्य तादात्म्यत्वोक्तेः सङ्केतमात्रत्वापत्तेः। अधिकस्य भानेऽपि घटज्ञानयोस्तादा-त्म्यभानानपायात्। न च तादात्म्यं विषयतात्वेनैव तत्र द्वितीयार्थः। न तु तादात्म्यत्वेन। अतो ज्ञानविषययो-स्तादात्म्यत्वविशिष्टस्याग्रहान्नोक्तदोष इति चेन्न। तादात्म्यत्वातिरिक्तानां विषयतास्वप्रकारतात्वाद्यखण्डधर्माणा

---

[1] चैत्रीयतादात्म्यरूप इति पाठेन भाव्यमिति भाति।  [2] इव इति पाठेन भाव्यमिति भाति।

[3] घटाभिन्नज्ञानवांश्चैत्र इति बोधे इति पाठेन भाव्यमिति भाति।

(द्वि यु )त्वयैवानङ्गीकृतत्वात् । अङ्गीकारे वा तद्धर्माश्रयेषु तादात्म्यत्वसद्भावे मानाभावात् । उक्तप्रत्ययेन तत्र तादात्म्यत्वानवगाहनात् । तत्र तादात्म्यत्वावगाहिप्रत्ययान्तरस्याभावात् । न च 'सर्वं खल्विदं ब्रह्म' इति श्रुत्या ब्रह्मजगतोस्तादात्म्यबोधनात्तत्रैव विषयतात्वधर्मोऽभ्युपेयत इति वाच्यम् । अस्याभेदे सामानाधिकरण्यस्य त्वत्प्राचीनैरनङ्गीकृतत्वेन 'यः स्थाणुः स पुरुषः' इत्यादाविव बाधाया सामानाधिकरण्यस्यैवाङ्गीकृतत्वेनोक्तश्रुत्या ब्रह्मजगतोस्तादात्म्यासिद्धेः ।

यदि च विवरणादिरीत्या श्रुतेस्तादात्म्यबोधकत्वमभ्युपगम्यते तदेदं विषयतात्वं स्वस्य तादात्म्यातिरिक्ताऽऽश्रयानुपपत्त्या तादात्म्ये कल्प्यते एवमेव वा । नाद्यः । आकारत्वेन त्वया व्यवह्रियमाणविषयतासु तद्धर्मकल्पनाया आवश्यकतया तादात्म्येऽपि तद्धर्मकल्पने गौरवात् । न च 'घटं जानामि' इत्यादिप्रत्ययेषु विषयतात्वेन तादात्म्यभानस्यैवाङ्गीकारादाकारतासु किमर्थं विषयतात्वं स्वीकार्यमिति शङ्क्यम् । चरमवृत्तेर्ब्रह्मविषयकत्वव्यवहारानुपपत्तेः । शशविषाणनास्तीत्यादिवाक्याधीनविकल्पस्यासद्विषयकत्वव्यवहाराभावप्रसङ्गाच्च । असति तादात्म्यायोगात् । एवमतीतपदार्थज्ञानस्थले तेषां नष्टत्वेनेदानीं चित्तादात्म्यायोगात् । बाधग्रहेण शुक्तिरजतोच्छेदानन्तरं तज्ज्ञानस्थले तदीयसूक्ष्मावस्थाया अप्यभावेन चित्तादात्म्यायोगात्तत्राकारताख्यविषयतयैव सविषयकत्वव्यवहारावश्यकत्वाच्च । न द्वितीयः । घटादावपि तत्कल्पनापातात् ।

न च चिद्रूपज्ञानस्यावश्यं विषयेण विषयस्य च तेन सम्बन्धोऽपेक्षितः । तन्निर्वाहाय चिन्निरूपिताकारताख्यविषयताना नानाविषयेष्वनन्ताना कल्पने गौरवाच्छ्रुतिसिद्धेषु चित्प्रतियोगिकत्वेन घटाद्यनुयोगिकत्वेन क्लृप्ततादात्म्येषु विषयतात्वं स्वीक्रियते । न घटादौ । तेषां चित्प्रतियोगिकत्वादिना क्लृप्तत्वाभावादिति वाच्यम् । तादात्म्यनिर्वाहकयोर्भेदाभेदयो, चित्प्रतियोगिकत्वादिना क्लृप्तयोर्वा तत्कल्प्यं तादात्म्ये वेत्यत्र विनिगमकाभावादन्यत्र क्लृप्तजातीयाकाराख्यविषयताया एव बलात् सिद्धेः । न च साक्षिणः सुखादिविषयकत्वनिर्वाहाय तादात्म्यमपि तद्विषयतारूपत्वेन क्लृप्तमिति वाच्यम् । साक्षिणो निर्विकारस्यान्तःकरणपरिणामरूपसुखादितादात्म्यायोगात् । सौरालोकघटरूपादीनामिव संयोगादिघटितसम्बन्धान्तरस्यैव भासकत्वौचित्येन तादात्म्यस्य क्लृप्तत्वासम्मतेः ।

किञ्च ज्ञानस्य विषयसम्बन्धो विषयतारूप आवश्यक इति नियममभ्युपगम्य चिद्रूपज्ञाने तन्निर्वाहाय तादात्म्ये विषयतात्वं यः कल्पयति स कीदृशविषयताया ज्ञानसम्बन्धत्वनियमं गृह्णात्यन्यत्र सहचारग्रहात् । न तावत्तादात्म्यस्य । तस्य चिदतिरिक्तस्थले विषयतात्वेन भानस्यासिद्धत्वात् । अन्यत्रापि क्लृप्तत्वे प्रकृते तथैव सिद्ध्या तत्साधनायासवैफल्यापत्तेः । अत आकाराख्यविषयतानिरूपकत्वज्ञानत्वयोः सहचारग्रहात् व्याप्तिं गृह्णन् तन्निर्वाहाय प्रकृते तादात्म्ये विषयतात्वमात्रकल्पनया कथं कृतार्थः स्यात् । अन्यथा धूमाग्न्योर्व्याप्तिग्रहात् पर्वते धूमेन वह्निमनुमाय पर्वते क्लृप्ततृणादावेव वह्नित्वं परिकल्प्य कृतार्थः स्यात् । अविशेषात् । तस्मात् साधकाभावाद्बाधकसत्त्वाच्च तादात्म्यस्य दृग्दृश्यसम्बन्धरूपविषयतात्वकल्पनमश्रद्धेयमेव ।

(द्वि.यु) निरूपकत्वान्तविशेषणमात्रस्य प्रकारतात्वरूपत्वे तादात्म्यनिष्ठसंसर्गतायामतिव्याप्ति । अतोऽवच्छेदकत्वान्तविशेष्यदलनिवेश । इदमवच्छेदेन रजततादात्म्यस्याध्यासात्तादात्म्यनिष्ठा येदंनिष्ठावच्छेदकतानिरूपकता तदवच्छेदकत्वस्य तन्निष्ठसंसर्गतारूपधर्मे सत्त्वादुक्तातिव्याप्तिनादवस्थ्यमित्यवच्छेदकताया विषयतानिष्ठत्वोपादानम्। संसर्गलक्षणे प्रकारतायामतिव्याप्तिवारणायोक्तवैकल्पिकविशेषणद्वयम् । तत्रावच्छेदकताया विषयतानिष्ठत्वविशेषणप्रयोजनमुक्तरीत्योह्यम् ।

ननु तादात्म्येन रजतारोपस्थले रजतत्वस्यापीदमंशे प्रकारत्व वर्तते । अन्यथा पुरोवर्तिनि रजतत्वप्रकारकत्वाभावाद्रजतार्थिप्रवृत्त्यनुपपत्ते । तथा चेदविषयतानिष्ठावच्छेदकतानिरूपकीभूतरजतत्वविषयतया तादृश्या रजतविषयतानिष्ठनिरूपकताया अवच्छिन्नत्वात् पूर्वोक्तद्वितीयसंसर्गतालक्षणस्य रजतप्रकारतायामतिव्याप्ति स्यादिति चेन्न । यतस्तत्र रजतत्वविषयते द्वे वर्तेते । इदनिष्ठविशेष्यतानिरूपिता प्रातीतिकतादात्म्यसंसर्गावच्छिन्ना एका प्रकारता । अपरा रजतनिष्ठानवच्छिन्नविशेष्यतानिरूपिता व्यावहारिकसंसर्गावच्छिन्ना । तत्राद्येदंनिष्ठविशेष्यतानिष्ठावच्छेदकतानिरूपिकाऽपि न रजतप्रकारतानिष्ठायामिदविषयतानिष्ठावच्छेदकतानिरूपकतायामवच्छेदिका । तादृशप्रातीतिकसंसर्गेण रजतत्वोपहितरूपेण रजतस्य प्रकारत्वाननुभवात् । द्वितीया तु रजतविषयतानिष्ठतादृशनिरूपकतां प्रत्यवच्छेदिकाऽपि नेदविषयतानिष्ठावच्छेदकतानिरूपिकेति न रजतप्रकारतायां संसर्गतालक्षणस्यातिव्याप्ति ।

ननु तादात्म्यत्वविषयता संसर्गतावच्छेदकतारूपा इदन्त्वविषयता धर्मितावच्छेदकतारूपेति व्यवहारः कथं सङ्गच्छते । विशेष्यतात्वप्रकारतात्वादीनामिव विषयतात्वव्याप्यस्यावच्छेदकतात्वाख्यधर्मस्यापि तुल्यन्यायेनानङ्गीकारात् । मूलाग्रादौ यादृश्यवच्छेदकता विषयतायास्तादृशावच्छेदकतारूपत्वासम्भवादिति चेन्न । तादात्म्यत्वेदन्त्वादेरवच्छेदकतया तत्र विद्यमानत्वेन निमित्तेन तथा व्यवहारसम्भवात् ।

नन्वखण्डविशेष्यतात्वप्रकारतात्वादिधर्माङ्गीकारादस्य को विशेष. । येन तत्परित्यज्योक्तरीतिरभ्युपगम्यत इति चेदक्स्य सर्वैं कल्पनीयत्वमेव विशेष । अन्योऽप्ययं विशेष. । मूलादौ तत्सम्बन्धे च यदवच्छेदकत्वं यच्च तन्निरूपकत्वं संयोगादौ तत्सम्बद्धे च तज्जातीययोरेवावच्छेदकत्वतन्निरूपकत्वयोर्विषयतासु कल्पनाद्विषयविषयितयोर्द्वयोरेव ते वर्तेते । नैकत्रैव । तथा च विषयविषयितयोर्नैकमप्यपलपितु शक्यते । तज्जातीयावच्छेदकतातन्निरूपकत्वयो सम्बन्धसम्बद्धद्वयसापेक्षत्वात् । अखण्डविशेष्यतात्वादेर्विषयताया स्वीकारे तु तस्य ज्ञानवैलक्षण्यान्यथानुपपत्तिरेव तत्कल्पिका । सा च ज्ञानगत वैलक्षण्यमेव कल्पयेत् । न विषयतानिष्ठम् । तथा च ज्ञानस्यैव धर्मो घटत्वादि स्यात् । तथा च ज्ञानस्य घटादिविषयैरत्यन्तामेदापत्त्या साकारवाद स्यात्' इति निरस्तम् ।

तादात्म्यरूपविषयताया अवच्छेदकत्वादिरूपपदार्थस्य च स्वरूपत एव निरस्तत्वेन भवदुक्तप्रमेयस्यासम्भवदुक्तिकत्वात् ।

(द्वै यु.) किञ्चास्तु वा अन्यत्रावच्छेदकत्वपदार्थस्तावताऽपि प्रकृतेऽनुपपत्तिरेव भ्रमस्थलविशेष्यस्य व्याप्यत्वस्वीकारे। तथा हि, विषयता नाम चिद्रूपज्ञानप्रतियोगिकविषयवृत्तितादात्म्यम्। तच्चेदं रजतमिति भ्रमस्थले प्रमास्थले च रजतत्वे रजते संसर्गीभूततादात्म्ये तादात्म्यत्वे इदमर्थे इदन्त्वे च प्रत्येकं वर्तते, तत्र रजतनिष्ठतादात्म्यस्य तादात्म्यनिष्ठतादात्म्यस्य च कथमिदंनिष्ठतादात्म्यावच्छेद्यत्वम्, अवच्छेदकस्यावच्छेद्याधिकरणवृत्तित्वाभावात्। रजतस्येदमभिन्नत्वात् कथञ्चिदुक्तिसम्भवेऽपि तादात्म्यस्थले सर्वथाऽयुक्तमेव। न चेदंनिष्ठतादात्म्यस्य तादात्म्यनिष्ठ-तादात्म्यस्य च कश्चित् परम्परासम्बन्धः सम्भवतीति वाच्यम्। तादृशसम्बन्धस्यावच्छेदकत्वानियामकत्वस्य दीधितिकृत्प्रभृतिसिद्धत्वात्।

न चास्य संयोगावच्छेदकत्ववत् कथम्। अत एव वृक्षस्य समवायेन सत्त्वेन वृक्षरूपवर्तिन्यप्यस्य सत्त्वा-दिति वाच्यम्। विशिष्टप्रतीतिनियामकसम्बन्धस्यैवावच्छेदकतानियामकत्वाभ्युपगमात्। वृक्षे शाखा, वृक्षेऽयमिति प्रतीतिबलात्तत्राधेयत्वस्यापि विशिष्टप्रतीतिनियामकत्वाभ्युपगमात्। न चेह परम्परया तथात्वम्, रजतसंसर्गीभूत-तादात्म्ये इदंनिष्ठतादात्म्यमित्यप्रत्ययात्। अपि च तादात्म्यनिष्ठतादात्म्यरूपविषयतायाः रजतनिष्ठायाश्च तस्या व्याप्यवृत्तित्वात् कुतस्तस्या अवच्छेदकापेक्षा। न हि तदभावप्रत्ययस्तत्र किञ्चिदवच्छेदेन जायते, येन तस्याव्याप्य-वृत्तित्वं स्यात्। सत्यरजतस्थले विषयताया ज्ञानसमानकालिकत्वपक्षे तस्याः कालिकाव्याप्यवृत्तित्वेऽपि तदवच्छेद-कत्वं कालविशेषस्यैव स्यात्। न त्विदंनिष्ठविषयताया इति त्वदुक्तलक्षणस्यासम्भवग्रस्तत्वमेव।

उक्तावच्छेद्यावच्छेदकभावस्य सर्वसम्मतत्वोक्तिरपि न युक्ता। घटत्वनिष्ठप्रकारताया स्वव्यधिकरण-घटविशेष्यतयाऽवच्छिन्नत्वाव्याप्यवृत्तित्वयोः कुत्रापि नैयायिकैरनुक्तत्वात्।

यद्यपि पुरोवर्तिविषयकत्वावच्छेदेन घटत्वप्रकारकत्वं तैः स्वीकृतम्। घटपटसमूहालम्बने तदन्यात्मके 'अयं घटः' इति ज्ञाने वा 'इदं ज्ञानं घटे घटत्वप्रकारकं, न घटत्वेन पटे' इत्यादिप्रत्ययेन घटत्वप्रकारकत्वादेः ज्ञाने अव्याप्यवृत्तित्वसिद्धेस्तन्निर्वाहार्थत्वात् तथाऽपि विषयतानां तथात्वमप्रामाणिकमेव।

अथ चित्तादात्म्यं विषयता। सा ज्ञाने प्रतियोगितासम्बन्धेन विद्यमाना घटादिनिरूपितविषयिताव्यवहारं ज्ञाने जनयति। अनुयोगितया विषयेषु विद्यमाना विषयताव्यवहारम्। यथैकः समवायः प्रतियोगितया घटे विद्यमानो घटे आधेयत्वबुद्धिं अनुयोगितया कपाले सम्बद्धस्तत्राधारताबुद्धिं जनयति। तथा तत्रेवात्राऽपि विषयता विषयितेति सम्बन्धद्वयं नास्ति। तथा च ज्ञाननिष्ठाया रजतनिष्ठतादात्म्यप्रतियोगित्वरूपप्रकारिताया-स्तादात्म्यनिष्ठतादात्म्यप्रतियोगित्वरूपसंसर्गितायाश्चेदंनिष्ठतादात्म्यप्रतियोगित्वरूपविशेष्यितावच्छिन्नत्वे तद्घटक-तादात्म्यानामप्यवच्छेद्यावच्छेदकभावः सिद्ध्यति।

यद्वा विशेष्यिताप्रकारितादीनां ज्ञानधर्माणां ज्ञानग्राहकग्राह्यतया तन्निष्ठविशेष्यितात्वादीनामेव ग्राह्यत्वम्। न तु विषयनिष्ठविशेष्यतादिवृत्तीनां विशेष्यतात्वादिधर्माणाम्। तेषु लौकिकालौकिकोभयसंनिकर्षाभावेन परमते ग्राह्यताप्रसक्तेरभावात्।

(द्वै द्यु) अथ वा विषयिता ज्ञाननिष्ठैव। अर्थस्तत्सम्बन्धीति वा मतम्। इत्थञ्च विशेष्यितात्वादीनामेव नाखण्डत्वम्। किन्त्वन्यादृशत्वमित्यत्र प्रकृतग्रन्थस्य तात्पर्यम्। तथा चेदमादिप्रतियोगिकचिन्निष्ठतादात्म्यादीना विषयतारूपाणामिदमादिरूपविषयनिष्ठावच्छेदकताघटकसम्बन्धतयाऽवच्छेदकत्वान्नोक्तलक्षणासम्भव इति चेन्न। एवमपीदन्त्वविषयताया धर्मितावच्छेदकतात्वरूपवैलक्षण्यस्य तादात्म्यत्वविषयताया संसर्गतावच्छेदकतात्वरूपविलक्षणधर्मस्यावश्यकत्वेनोक्तप्रयासवैफल्यात्।

न चेदन्त्वतादात्म्यत्वयो धर्मितासंसर्गतयो प्रत्यवच्छेदकत्वात्तन्निष्ठविषयतयोस्तदवच्छेदकताशब्देन व्यवहार इत्युक्तमेवेति वाच्यम्। विशेष्यितानिरूपितं चेदन्त्वनिष्ठमवच्छेदकत्वमेव विविच्यताम्। अव्याप्यवृत्तितानिर्वाहकमवच्छेदकत्व तावन्न युज्यते। 'इदज्ञानमिदन्त्वे इदविषयकं, तादात्म्यत्वे तादात्म्यविषयकम्' इत्यप्रत्ययात्। नैयायिकैरपि विशेष्यित्वस्याव्याप्यवृत्तित्वानङ्गीकाराच्च। त्वन्मतेऽपीदविशेष्यितायाश्चिन्निष्ठतत्तादात्म्यरूपाया इदनिष्ठेनेदन्त्वेनावच्छिन्नत्वायोगाच्च। इदन्त्वस्यापि तादात्म्येन सम्बद्धत्वादवच्छेदकत्वोपपत्ति। एव तादात्म्यत्वस्यापीति चेत। 'इदन्त्वे पुरोवर्तिनि विशेष्यिता' इत्याद्याकाराया 'रजततादात्म्येनेदं जानामि' इत्यादिकाया इव 'अनेनेदंत्वं जानामि' इत्यादिकाया अवच्छेदकत्वावगाहिबुद्धेरभावात्। चिति तादात्म्येन सम्बद्धेदन्त्वादेर्विशेष्यिताद्यवच्छेदकत्वे तत्तादात्म्यस्य त्वन्मते विषयितारूपस्यावच्छेदकत्वप्राप्त्येदविशेष्यितायास्तादात्म्यसंसर्गितायाश्चेदंत्वतादात्म्यत्वविषयितानिष्ठावच्छेदकतानिरूपकत्वापत्त्या इदन्त्वे तादात्म्यत्वांशे च तयो संसर्गतारूपत्व प्रकारतारूपत्व वा स्यात्। इदत्वतादात्म्यत्वनिरूपितचिन्निष्ठतादात्म्ययोर्विशेष्यितारूपत्व च स्यात्। कपालाद्यवच्छेदेन चिति घटतादात्म्यस्येव स्वावयवावच्छेदेनैवेदन्तादात्म्यस्य चिति सत्त्वाच्च।

न चेदविषयित्वादिरूपमिदन्तादात्म्यमन्यदेव। न तस्य शुक्त्यवयवावच्छेदेन सत्त्वमिति शङ्क्यम्। अध्यासविचारे 'अनादे सत्तादात्म्यस्यैकस्यैवाविद्यायामिव घटादावपि कुतो न स्वीकार' इत्याशङ्क्य 'सन् घट सन् पट इत्यादिषु प्रत्ययेषु घटादौ भासमान सत्तादात्म्य चिद्रूपज्ञानस्य विषयतारूपम्। तच्च कपालादिरूपसत्तादात्म्यरूपविषयतावच्छिन्नम्। पटनिष्ठ तु तन्तुनिष्ठ नेत्येव रूपेण। अतस्तादात्म्यस्यैक्य न घटते' इति पूर्वसिद्धतादात्म्यस्यैव विषयताविषयितारूपत्वाभ्युपगमात्। किन्त्वध्यासभाग एव 'सन् घट इत्याकारानुरोधेन सति घटतादात्म्य जायते। तत्र केवलसतोऽविकरणत्व घटादिनिष्ठतादात्म्यप्रतियोगित्वोपहितरूपेण सतोऽवच्छेकत्वम्' इति भाषितत्वेनेदन्त्वाद्यवच्छेदेनेदंतादात्म्यरूपविषयितायाश्चित्यध्यास इत्यस्यायोग एव।

अपि चेदं रजतमिति सत्यरजतप्रत्ययस्थले इदपदार्थस्य विशेष्यत्वानुपपत्ति। इदपदार्थनिष्ठरजतप्रतियोगिकतादात्म्ये विषयतारूपत्व नास्ति। रजतनिष्ठचित्तादात्म्ये इदनिष्ठचित्तादात्म्यस्यैक्यात्। कथञ्चिद्भेदोपपादनेऽप्युक्तरीत्या तयोरवच्छेद्यावच्छेदकभावाभावात्।

न च 'इदन्त्वेनेद विशेष्य, न द्रव्यत्वेन' इति प्रत्ययादिदन्त्वे विशेष्यतानिरूपितमवच्छेदकत्वमवश्य वाच्यम्। 'रजतत्वेनेदं ज्ञात, न द्रव्यत्वेन' इत्यादिप्रत्ययात्प्रकारीभूतरजतत्वस्याप्यवच्छेदकत्वापत्त्या तन्निष्ठप्रका-

(द्वे षु) भावरूपनिरूप्यनिरूपकभावानुपपत्ते । अन्यादृशस्य तादात्म्यान्तरेष्वदृष्टस्य विलक्षणनिरूप्यनिरूपकभावस्य कल्पने पुन साकारवादो गले पतित स्यात् ।

एव तादात्म्येन रजतभ्रमस्थले प्रातीतिकतादात्म्येन रजतत्वभानाङ्गीकारेपीद रजतमित्येव ज्ञानाकारानुभवात्तस्य 'इद रजत प्रातीतिकतादात्म्येन रजतत्ववच्च' इत्याकारकज्ञानान्तराद्वैलक्षण्यनिर्वाहाय रजतत्वविषयताया वैलक्षण्यस्य कस्यचित्कल्पनीयतापत्त्या साकारवादापत्ति । अतोऽनुभवसिद्धत्वेनैव प्रकारितात्वादिधर्मा नापह्नोतुं शक्या । घटादीना ज्ञानस्य वैलक्षण्यानुभवात्र साकारवादो युक्त इत्येव वक्तु युक्तम् । त्वदुक्तसंसर्गतात्वादीना कथञ्चिदप्यनुभवे भानमयुक्त च । तल्लक्षणप्रविष्टत्वदुक्तविशेषणाना तादृशविशिष्टस्वरूपेणाभानात् । कथञ्चित्तद्घटकपदार्थाना विशृङ्खलस्फुरणस्य तद्घटितविशिष्टपदार्थभानरूपत्वाभावात् । संसर्गताद्वितीयलक्षणप्रविष्टत्वदुक्ताभावरूपविशेषणस्य ज्ञानानुभवात् पूर्वमुपस्थितौ मानाभावेन तद्घटितसंसर्गतात्वभानस्यासम्भवदुक्तिकत्वाच्च ।

यदप्येतत्प्रस्तावे अथ तार्किकैरित्यारभ्य 'घटादिविषयविशेषितरूपेणैव ज्ञानस्योत्पत्तिनाशौ प्रतीयेते । न स्वरूपत इति ज्ञानस्यैक्यमेव' इत्युक्तम् । तत्तुच्छम् । वह्निमत्पर्वतविषये आत्मविषये वा मम पूर्वं ज्ञान यदुत्पन्न तन्नष्टमिदानीं तु ज्ञानान्तरमुत्पन्नमिति विषयविशेषितस्वरूपेणैव ज्ञानोत्पत्तिनाशयोर्विषयस्थैर्यस्यैवानुभवादिति दिक् ।

स्यादेतत् 'यत्सन्निकृष्टेन करणेन यज्ज्ञान जायते स तस्य विषय इति विषयत्व निरूपयद्भिर्भवद्भिर्ज्ञानासाधारणकारणकरणप्रतियोगिकसन्निकर्षस्य विषयतात्वमङ्गीकृतम् । तथा च घटनिष्ठचक्षु सन्निकर्षस्य विशेष्यतारूपस्य घटत्वनिष्ठचक्षु सन्निकर्षस्य प्रकारतारूपस्य निरूप्यनिरूपकभावानुपपत्ति । तस्य चक्षु प्रतियोगिकत्वघटाद्यनुयोगिकत्वयोरेव सत्त्वात् । तेषा चक्षुरादेर्घटादिसम्बन्धरूपाणा ज्ञानविषयसम्बन्धरूपत्वानुपपत्तिरित्यादिदूषणाना त्वन्मतेऽप्यविशिष्टत्वात् मदुक्तविषयदूषणोद्यमे 'पश्यसि परदोषमात्मदोष न पश्यसि' इत्याभाणकविषयता भवतामापद्यते' इति ।

मैवम् । मया ज्ञाने प्रकारित्वविशेष्यित्वादीना तन्निरूपकत्वरूपविशेष्यत्वप्रकारत्वादीना घटादावङ्गीकृतत्वेन सन्निकर्षस्य विषयतारूपत्वं ज्ञानार्थसम्बन्धरूपत्वं चानभ्युपगतमेव । यत्सन्निकृष्टेनेत्यादिकं तु भ्रमविषयव्यावृत्तविषयपदार्थतावच्छेदकस्य प्राचीनैस्तान्त्रिकैर्व्यवहृतत्वात्तत्र प्राप्तदोषाणा परिहारार्थं सुधायां परिष्कृतम् ।

यथा नैयायिकनये स्मृतिहेतो प्रमाजनकत्वेन प्रमाणत्वसम्भवेऽपि स्वसङ्केतितप्रमाणचातुर्विध्यनिर्वाहाय यथार्थानुभव. प्रमेति लक्षणाभिधान तथा तेषा तथा लक्षणाभिधान नायुक्तम् । अत एव 'यदाकार यद्विज्ञानं तत्तस्य विषय इति प्रमितिनिष्ठेयं व्यवस्था' इति पूर्वं वदद्भिष्टीकाकारैः प्रमितावप्याकाराख्या ज्ञानविषययो सम्बन्धरूपा विषयितामङ्गीकृत्यैव तस्य स्वनिरूपकविषयसत्ताव्याप्यत्वं पर प्रमान्तर्भावेण स्वीकृतम् । प्रमाया

(द्वै यु) नूक्तसयोगादिस्वत्वे गौरवात्। 'रजतत्वेनेमं साक्षात्करोमि' इत्यनुभवस्य भ्रमप्रमासाधारणस्य वैरूप्यकल्पनानुपपत्तेश्च। नित्यज्ञाने विषयतान्तरकल्पनस्यावश्यकत्वे तस्या एव स्वसमानाकारजन्यज्ञानेष्वपि स्वीकर्तुमुचितत्वाच्च। धर्मिभेदेन धर्माणां भेदावश्यकत्वेपि दण्डादिवद्विशेषणतायाः सम्भवाच्च। किञ्च घटवद्भूतलं घटो रूपवान् भूतले घट इति समूहालम्बनात्मकज्ञानस्य घटे भूतलविशेष्यत्वापत्तिः। [1]रूपान्तरे घटस्य विशेष्यत्वानुरोधेन तज्ज्ञानजनकघटेन्द्रियसन्निकर्षस्य विशेष्यतारूपतायाः भूतलस्य प्रकारत्वानुरोधेन तन्निष्ठसन्निकर्षस्य प्रकारतारूपतायाश्चावश्यकत्वात्। न च प्रकारतात्वविशेष्यतात्वादीनां विषयतास्ववश्य वाच्यतया भूतलविषयताया विशेष्यतात्वेनैव घटादिविषयतानिरूपकत्वं न तु प्रकारतात्वेनेति वाच्यम्। भूतलं घटवत् भूतलवान् घट इति समूहालम्बनप्रतीत्यनुरोधेन तस्याप्यवश्याभ्युपेयत्वात्। न च तत्र सन्निकर्षभेदात्नानुपपत्तिः। एकेनैव सन्निकर्षेणोभयविधज्ञानजनकस्थले गत्यभावात्। संयोगान्यसन्निकर्षे नितरामनुपपत्तिः। किञ्च प्रकारतानिरूपकत्वादेरनिरिक्तत्वे विषयतैवानिरिक्तास्तु। अनतिरिक्तत्वे चोक्तदोषो दुष्परिहर इत्यन्यत्र विस्तरः। एवं चातिरिक्तविषयताकल्पनस्यावश्यकत्वे ज्ञानजनकसन्निकर्षस्य विषयत्वकल्पनमनुचितम्। एवञ्च भ्रमस्यारोप्यविषयकत्वस्यावश्यकत्वादपरोक्षविषयस्यारोप्येन्द्रियसन्निकर्षजन्यत्वमावश्यकमिति न तस्यात्यन्तासत्त्वम्' इति।

तदप्युन्मत्तप्रलापतुल्यमिति सुज्ञानं विज्ञानाम्। असदपरोक्षत्वस्य भ्रमस्य प्रवृत्तिनिर्वाहकत्वादेः पूर्वमेव सविस्तरमुपपादितत्वात्। सन्निकर्षस्य च ज्ञानार्थसम्बन्धरूपविषयतारूपत्वस्यासदनभिमतत्वस्यानुपदमुपपादितत्वेन तद्दूषणस्य सिद्धान्ताशयापरिज्ञानमूलत्वस्य स्फुटत्वात्। तस्मात्तादात्म्यस्य विषयत्वरूपत्वाभावात्तद्घटनया परिष्करणमयुक्तमेवेति दृश्यत्वहेतुरनुपपन्न एव।

ज्ञानपदजन्यप्रतीतिविशेष्यभिन्नत्वमानन्दपदजन्यप्रतीतिविशेष्यभिन्नत्वमिति जडत्वहेतुपरिष्करणमप्ययुक्तम्। तत्र ब्रह्म आनन्दो ज्ञानम् इत्यादिव्यवहारनिर्वाहकभेदमादाय ब्रह्मणि व्यभिचारवारणाय भेदे स्वसमानसत्ताकत्वं स्वज्ञानाबाध्यत्वं वा अनौपाधिकत्वं वा विशेषणं निवेशितम्। तत्र प्रथमद्वितीयविशेषणद्वयघटितपरिष्कारौ पूर्वोक्तरीत्या सन्दिग्धव्यभिचारादिना दूषितप्रायौ। अनौपाधिकत्वविशेषणमप्ययुक्तम्। सर्वस्यापि भेदस्याविद्योपाधिकत्वेनासिद्धेः। इच्छारूपोपाधिनिवेशे सर्वस्यापीश्वरेच्छाधीनत्वात् पुनः साधनाप्रसिद्धिः। जन्येच्छानिवेशेऽप्ययमेव दोषः। ईश्वरेच्छाया अप्यनादिषट्कान्यत्वेन मायापरिमाणरूपतया जन्यत्वात्। अस्मदादीच्छानिवेशे चैत्रेच्छानिवेशे मैत्रेच्छानिमित्तकतादृशभेदे व्यभिचारः। किञ्च ब्रह्म आनन्द इत्यादिव्यवहारनिर्वाहकभेदोऽपि आनन्दवत् पूर्वसिद्ध एव। न हि श्रुत्यर्थज्ञानव्यवहारदशायां ब्रह्मणि ज्ञानभेदमानन्दभेदं वा कल्पयामीतीच्छापूर्वं भेदं परिकल्प्य तत्प्रतीतिरानुभाविकी लोकानाम्। किञ्च कल्पितभेदोपहितस्यापि मिथ्यात्वेन पक्षकोटिनिक्षेपात्तत्रोक्तभेदातिरिक्तज्ञानभेदादेरभावाद्भागासिद्धिः।

---

[1] आकारान्तर इत्यर्थः।

(द्वैयु) नुक्तसयोगादित्वथात्वे गौरवात्। 'रजतत्वेनेम साक्षात्करोमि' इत्यनुभवस्य भ्रमप्रमासाधारणस्य वैरूप्यकल्पनानुपपत्तेश्च। नित्यज्ञाने विषयतान्तरकल्पनस्यावश्यकत्वे तस्या एव स्वसमानाकारजन्यज्ञानेष्वपि स्वीकर्तुमुचितत्वाच्च। धर्मिभेदेन धर्माणां भेदावश्यकत्वेपि दण्डादिवद्विशेषणताया सम्भवाच्च। किञ्च घटवद्भूतलं घटो रूपवान् भूतले घट इति समूहालम्बनात्मकज्ञानस्य घटे भूतलविशेष्यत्वापत्तिः। [1]रूपान्तरे घटस्य विशेष्यत्वानुरोधेन तज्ज्ञानजनकघटेन्द्रियसन्निकर्षस्य विशेष्यतारूपताया भूतलस्य प्रकारत्वानुरोधेन तन्निष्ठसन्निकर्षस्य प्रकारतारूपतायाश्चावश्यकत्वात्। न च प्रकारतात्वविशेष्यतात्वादीनां विषयतात्वव्याप्यतया भूतलविषयताया विशेष्यतात्वेनैव घटादिविषयतानिरूपकत्वं न तु प्रकारतात्वेनेति वाच्यम्। भूतलं घटवत् भूतलवान् घट इति समूहालम्बनप्रतीत्यनुरोधेन तस्याप्यवश्याभ्युपेयत्वात्। न च तत्र सन्निकर्षभेदान्नानुपपत्तिः। एकेनैव सन्निकर्षेणोभयविधज्ञानजनकस्थले गत्यभावात्। संयोगान्यसन्निकर्षे नितरामनुपपत्तिः। किञ्च प्रकारतानिरूपकत्वादेरतिरिक्तत्वे विषयतैवातिरिक्तास्तु। अनतिरिक्तत्वे चोक्तदोषो दुष्परिहर इत्यन्यत्र विस्तरः। एवं चातिरिक्तविषयताकल्पनस्यावश्यकत्वे ज्ञानजनकसन्निकर्षस्य विषयत्वकल्पनमनुचितम्। एवञ्च भ्रमस्यारोप्यविषयकत्वस्यावश्यकत्वादपरोक्षविषयस्यारोप्येन्द्रियसन्निकर्षजन्यत्वमावश्यकमिति न तस्यात्यन्तासत्त्वम्' इति।

तदप्युन्मत्तप्रलापतुल्यमिति मुञ्चन्ति विज्ञानाम्। असदपरोक्षत्वस्य भ्रमस्य प्रवृत्तिनिर्वाहकत्वादेः पूर्वमेव सविस्तरमुपपादितत्वात्। सन्निकर्षस्य च ज्ञानार्थसम्बन्धरूपविषयतारूपत्वस्यास्मदनभिमतत्वस्यानुपदमुपपादितत्वेन तद्दूषणस्य सिद्धान्ताशयापरिज्ञानमूलत्वस्य स्फुटत्वात्। तस्मात्तादात्म्यस्य विषयत्वरूपत्वाभावात्तद्घटनया परिष्करणमयुक्तमेवेति दृश्यत्वहेतुरनुपपन्न एव।

ज्ञानपदजन्यप्रतीतिविशेष्यभिन्नत्वमानन्दपदजन्यप्रतीतिविशेष्यभिन्नत्वमिति जडत्वहेतुपरिष्करणमप्ययुक्तम्। तत्र ब्रह्मण आनन्दो ज्ञानम् इत्यादिव्यवहारनिर्वाहकभेदमादाय ब्रह्मणि व्यभिचारवारणाय भेदे स्वसमानसत्ताकत्वं स्वज्ञानाबाध्यत्वं वा अनौपाधिकत्वं वा विशेषणं निवेशितम्। तत्र प्रथमद्वितीयविशेषणद्वयघटितपरिष्कारौ पूर्वोक्तरीत्या सन्दिग्धव्यभिचारादिना दूषितप्रायौ। अनौपाधिकत्वविशेषणमप्ययुक्तम्। सर्वस्यापि भेदस्याविद्योपाधिकत्वेनासिद्धेः। इच्छारूपोपाधिनिवेशे सर्वस्यापीश्वरेच्छाधीनत्वात् पुनः साधनाप्रसिद्धिः। जन्येच्छानिवेशेऽप्ययमेव दोषः। ईश्वरेच्छाया अप्यनादिषट्कान्यत्वेन मायापरिमाणरूपतया जन्यत्वात्। अस्मदादीच्छानिवेशे चैत्रेच्छानिवेशे मैत्रेच्छानिमित्तकतादृशभेदे व्यभिचारः। किञ्च ब्रह्मण आनन्द इत्यादिव्यवहारनिर्वाहकभेदोऽपि आनन्दवत् पूर्वसिद्ध एव। न हि श्रुत्यर्थज्ञानव्यवहारदशायां ब्रह्मणि ज्ञानभेदमानन्दभेदं वा कल्पयामीतीच्छापूर्वं भेदं परिकल्प्य तत्प्रतीतिरानुभाविकी लोकानाम्। किञ्च कल्पितभेदोपहितस्यापि मिथ्यात्वेन पक्षकोटिनिक्षेपात्तत्रोक्तभेदातिरिक्तज्ञानभेदादेरभावाद्भागासिद्धिः।

[1] आकारान्तर इत्यर्थः।

(द्वै. द्यु.) एव ज्ञानस्य सकर्तृकत्वनियतत्वात्कर्तृकस्य ब्रह्मणः अनित्यत्वापत्तेः । न च त्वन्मतेऽपि ब्रह्मणो नित्यत्वेनोक्तानुपपत्तिसाम्यमेवेति वाच्यम् । [1]कर्तृपदस्याऽश्रयमात्रस्य विवक्षितत्वेन मन्मते स्वरूपभूतज्ञानं प्रत्यपि वास्तवाऽश्रयत्वस्याङ्गीकारात् । त्वन्मते च कल्पितभेदेनाऽश्रयत्वाङ्गीकारेऽपि तस्य वास्तवत्वेन मोक्षदशायामयोगेन स्वसमानसत्ताकाऽश्रयत्वनिरूपकत्वरूपसकर्तृकत्वस्य वक्तुमशक्यत्वात् ।

ननु अनित्यक्रियाया उत्पत्तौ कर्तुरपेक्षितत्वादुत्पन्नस्य कर्तृवृत्तित्वमानुषङ्गिकमवर्जनीयम् । नित्यक्रियायास्तु कर्त्रपेक्षाया बीजाभावेन तस्याऽश्रयं विनाऽपि स्थितिसम्भवात्प्रयोजकोऽयं नियमः । न च सत्तारूपक्रियाया अप्युक्तरीत्या आश्रयानपेक्षणात्तस्या अपि सकर्तृकत्वं न स्यात् । तथा च 'अस्ति ब्रह्मेति चेद्वेद' इत्यादौ कर्तरि लकारानुपपत्तिरिति वाच्यम् । सत्तारूपक्रियाया अप्यकर्तृकत्वस्येष्टत्वेनेष्टापादनात् । ब्रह्मशब्देऽपस्थितचिन्मात्रे सत्ताश्रयत्वान्वये निर्धर्मिताविच्छेदकबोधापत्त्या तत्र चिन्मात्रे सत्ताऽऽश्रयत्ववत्सदसदादित्येन तदर्थबोधस्यैव तद्वाक्येन जननात्तत्र कर्तृप्रत्ययस्यैको द्वावित्यादाविव शब्दसाधुत्वमात्रार्थकत्वात् ।

नैवम् । 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत् अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरिति' इति पूर्वार्धे सत्ताश्रयभिन्नत्वेन ब्रह्मज्ञानिनो निन्दितत्वात् अस्ति ब्रह्मेति चेद्वेदेत्युत्तरार्धे सत्ताप्रकारकज्ञानस्यैव स्तुतिर्वक्तव्या । पूर्वोक्तसत्ताराहित्यज्ञानस्याखण्डार्थविषयं प्रत्यनुकूलतयोत्तरार्धे तन्निन्दापूर्वकमखण्डार्थविषय स्तुतिरित्यस्य वक्तुमशक्यत्वात् । तथा च स्तुतिविषयत्वान्यथानुपपत्त्या तज्ज्ञानस्य प्रामाण्यनिश्चयात् सत्ता ब्रह्मणि सिद्धैवेति । तथा च तद्वाक्यादखण्डार्थबोध इत्ययुक्तमेव । अस्तीत्येवोपलब्धव्य इति वाक्यान्तरेणास्तित्वप्रकारकज्ञानस्यैव विधानाच्च । तथा च सत्तारूपक्रियाया आश्रयरूप[2]कर्मभावे इष्टापादनमयुक्तमेव । सत्तावज्ज्ञानरूपक्रियाया अप्याश्रयरूपकर्तृसापेक्षत्वमावश्यकम् । [3]ब्रह्मरूपज्ञानस्यापि 'तदात्मानमेवावेदहं ब्रह्मास्मि' इत्यादिश्रुतिभिर्ब्रह्मरूपज्ञानस्याप्याश्रयप्रतीतेश्च । तथा चाप्रामाणिकस्य प्रमाणविरुद्धस्य ज्ञानानधिकरणत्वस्य मोक्षदशायामङ्गीकारवादिनं प्रति ब्रह्मरूपस्य ज्ञानस्वरूपत्वाभावापादनेन व्यभिचारोद्भावनं युक्तमेवेति । तस्माज्जडत्वहेतुरनुपपन्न एव ।

परिच्छिन्नत्वहेतुपरिष्करणमप्यसम्भवितम् । अतोऽन्यदार्तमिति श्रुत्या ईशातिरिक्तब्रह्मादिचेतनवर्गस्य दुःखित्वप्रतिपादनेन तथाऽऽकाशकालादीनां ध्वंसप्रतियोगित्वासिद्ध्या भागासिद्धेस्तादवस्थ्यात् । स्वसमानसत्ताकत्वादि निवेशयात्यन्ताभावप्रतियोगित्वान्योन्याभावप्रतियोगित्वपरिष्कारस्तु पूर्वोक्तरीत्यैव दुष्टः । ब्रह्मावृत्तित्वं निवेश्योक्तहेतुरपि पूर्वोक्तदूषणेनैव दूषित इति न किञ्चिदेतदिति सर्वमनवद्यम् ।

यदत्र केनचित्स्वग्रन्थे नन्वेवमपि दृश्यत्वादिना वियदादेरनिर्वाच्यत्वं न साधयितुमशक्यमित्यारभ्याद्वैतचन्द्रिकोक्तरीत्यैव दृश्यत्वजडत्वपरिच्छिन्नत्वादीन्परिष्कृत्य 'बाध्यत्वमपि हि तेषां मिथ्या' 'तस्य च मिथ्यात्वेऽबाध्यत्वमेव सत्यं स्यात्' इति मूलकृतापादितं मिथ्यात्वस्य मिथ्यात्वे जगतः सत्यत्वमाशङ्क्य शुक्तिरूप्यगत-

---

[1] कर्तृपदेनाश्रयमात्रस्य इति पाठेन भाव्यमिति भाति । [2] कर्मभावे इति पाठेन भाव्यमिति भाति ।

[3] एवं ब्रह्मरूपज्ञानस्यापि इति पाठेन भाव्यमिति भाति ।

(द्वै यु ) मिथ्यात्वस्य मिथ्यात्वात्तत्सत्यत्वाभावाद्व्यभिचार इत्यादिना दूषयित्वा यत्त्वित्यादिना टीकामूलोक्ता ब्रह्मणो ज्ञानत्वानुपपत्तिमाशङ्क्याद्वैतसिद्ध्याद्युक्तरीत्यैव परिहृतं तत्सर्वमद्वैतचन्द्रिकादूषणेनैव निःशेषतो निरस्तमिति न तत्पार्थक्येनानूद्य दूषितम्। बाध्यत्वमपीत्यादिमूलार्थदूषणं तु तट्टीकार्थनिरूपणावसर एव सहाद्वैतचन्द्रिकं निःशेषत एवापास्तमिति नात्र पुनस्तत्प्रपञ्च्यत इत्यलम्।

यत्त्वद्वैतचन्द्रिकायामुक्तं प्रपञ्चमिथ्यात्वस्य सत्यत्वमिथ्यात्वविकल्पेनास्मान् प्रति दूषणोक्तिर्नित्यसमा जातिः। तदुक्तं

धर्मस्य तदतद्रूपविकल्पानुपपत्तितः।
धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमा भवेत्॥ इति।

न च मिथ्यात्वसत्यत्वे धर्मिणि न तद्वैशिष्ट्यभङ्गः किन्त्वद्वैतहानिरिति वाच्यम्। विकल्पकोट्योरेकस्या अद्वैत-हानिप्रयोजकत्वेपि अन्यस्याः प्रपञ्चसत्यत्वतात्विकत्वद्वारा प्रपञ्चे धर्मिणि मिथ्यात्ववैशिष्ट्यभङ्गप्रयोजकत्वात्। अन्यथा मिथ्यात्वकोटिमात्रस्यास्माभिराश्रयणे सत्यत्वकोटिप्रयुक्ताद्वैतहानिदोषस्याप्यसम्भवात्। किञ्च मिथ्यात्व-स्यापि मिथ्यात्वधर्मित्वेन तस्य सत्यत्वे मिथ्यात्ववैशिष्ट्यभङ्गेन सत्यत्वकोटेरपि धर्मिणि तद्वैशिष्ट्यभङ्गप्रयोजकत्व-मावश्यकम्। न च जात्युत्तरं येनोच्यते तं प्रति व्याघातकत्वमेव तस्य दुष्टताबीजं प्रयोजकम्। प्रकृते च तदभावान्न जातिरियं दुष्टेति वाच्यम्। त्वदीयस्य सर्वदेशकालनिष्ठात्यन्ताभावप्रतियोगित्वरूपासत्त्वस्यासत्त्वे तद्विरुद्धस्य 'असदेवेदमग्र आसीत्' इति वाक्यादसति प्रतिपन्नतया त्वदभ्युपगतस्य सत्त्वस्यासति तात्विकत्वा-पत्तिः। सत्वे तस्य सतोऽसति प्रतिबन्धानुपपत्तिः इति।

तदशुद्धम्। यं न्यायमवष्टभ्य जात्युत्तरं प्रवृत्तं तन्न्यायेनैव तदुक्तेरसत्त्वप्राप्तावेव हि स्वव्याघातो नाम। न तु प्रतिबन्दिप्रसक्तिमात्रेण। यथा शब्दोऽनित्य इत्युक्तौ शब्दनिष्ठानित्यत्वमनित्यं वा न वा। नाद्यः। शब्द-निष्ठानित्यत्वस्यानित्यत्वे तस्योत्पत्तिविनाशशालित्वात्तत्पूर्वं परतश्च तद्विरुद्धस्य नित्यत्वस्यापत्तिः। भावाभावात्मक-विरुद्धधर्मद्वयानाक्रान्तत्वेन वस्तुस्थित्ययोगात्। तथा च नित्यत्वप्राप्त्या अनित्यत्ववैशिष्ट्यायोगः शब्दे। यदि शब्दनिष्ठत्वेनाभ्युपगतमनित्यत्वं नित्यं तर्हि शब्दस्य तदाधारत्वानुपपत्तिः। नित्यधर्मवैशिष्ट्यस्य [1]नित्ये अयो-गादिति। अत्र हि नित्यधर्मो अनित्यावृत्तिरिति व्याप्तिसिद्ध्यर्थं नित्यत्वं अनित्यत्वविरुद्धमिति व्याप्तिसिद्ध्यर्थं चानित्यत्वविशिष्टवस्त्वङ्गीकार्यमेव। तत्राप्युक्तदूषणेन तद्वस्त्वसिद्ध्या व्याप्त्याद्ययोगेनायोगात्स्वानुस्थितिरूपा व्याहतिः। आपादनादौ व्याप्त्यादेरनङ्गत्वे तेन यद्यदुच्यते तदभावोऽपि प्रमेयत्वेनापादयितुं शक्यत इति कस्याप्यसिद्ध्या स्वस्य दूषणत्वव्याहतिरिति क्रमेण सिद्धमपि दूषणासमर्थमुत्तरं जातिरिति जातिलक्षणाक्रान्तत्वम्। न चेह प्रकृते तथास्ति। मिथ्यात्वमिथ्यात्वे धर्मिनिष्ठसत्यत्वसत्यत्वं तु एकस्मिन्धर्मिणि प्रतीयमानयोः परस्पर-विरहव्यापकत्वतदात्मकत्वाद्यन्यतररूपविरोधशालिनोरेकस्य मिथ्यात्वेऽपरस्य सत्यत्वमिति सर्वलोकावगतया

[1] अनित्ये इति पाठेन भाव्यमिति भाति।

(द्वै. द्यु.) त्वदभ्युपगतसर्वमिथ्यात्वसिद्धेः प्राक् कुत्रापि सत्त्वरहितया व्याप्त्य'ऽऽपादितम् । असत्त्वग्राहकप्रमाणानुसारेण सत्यस्याप्यसत्त्वस्यासता सम्बन्धोऽप्यङ्गीकृत एव । न चेह कश्चन व्याघातोऽस्ति मिथ्यात्वस्य धर्मिसम्बन्धो नास्तीति नियममङ्गीकृत्य दूषणदाने हि स स्यात् 'मिथ्यात्वस्य क्वचिदवृत्त्या सत्त्वेन विरोधग्रहानुत्थितत्वोक्तरीत्याऽऽपादनायोग' इति । न च तथेत्युक्तम् । मिथ्यात्वं क्वचिद्वर्तते न वर्तते तु विचारान्तरम् ।

न चानिर्वचनीयत्वरूपमिथ्यात्वस्यैव जगतीदानीं दूष्यतया तस्य सदसदवृत्तित्वग्राहकप्रमाणाश्रये सदसद्विलक्षणे सत्यत्वस्य विरोधग्रहोऽपेक्षित । तत्राप्युक्तदूषणप्रसङ्गेन तदसिद्ध्या विरोधग्रहादिमूलकापादनायोग इति स्वानुत्थितिरूपव्याहतिर्वर्तत एवेति वाच्यम् । अस्मन्मते असन्मात्रनिष्ठत्वेनाभ्युपगतस्य त्रैकालिकसर्वदेशीयनिषेधप्रतियोगित्वस्य परमतेऽनिर्वाच्यत्वरूपबाध्यत्वशरीरनिविष्टस्य जगति सत्त्वाभ्युपगमात् । तावन्मात्रेण तद्घटितस्य तन्नियतस्य वा मिथ्यात्वस्य जगति सत्त्वसिद्धेर्व्याहत्ययोगात् । मिथ्यात्वस्य सत्यत्वपक्षे अद्वैतहान्यापादनेऽपि न व्याहतिप्रसक्ति । तस्य परार्थस्थलेऽप्रसिद्धत्वरूपनिग्रहविषयतया स्वार्थानुमाने त्वंशे व्याघातरूपतया दूषणक्षमत्वात् । न हि व्याहत्याद्यभावेन दूषणक्षमस्यापि धर्मस्य तदन्तर्भूतत्वविकल्पमूलत्वमात्रेणासदुत्तरत्वरूपजातित्वमुक्तिसहम् । बीजाभावात् । तथात्वे कपालान्यद्रव्यसामान्यं पक्षीकृत्य द्रव्यत्वहेतुना कपालदृष्टान्तेन समवायेन द्रव्यवत्त्वसाधने साध्यीभूतद्रव्येष्वपि द्रव्यान्तरसत्त्वेऽनवस्थिति । न चेयत्र तदभावस्तत्रैवाद्यो बाध इति दूषणस्यापि जात्युत्तरत्व स्यात् । न च तत्र काचन व्याहतिरुद्भावकस्य वर्तते येन तत्रेष्टापत्तिरिति वक्तुं शक्येत । वैयात्यमात्रात्तथाभिधाने सर्वदूषणानामपि जात्युत्तरत्वमिति वक्तार प्रत्यनुत्तरत्वापत्ते । तस्मान्मिथ्यात्वस्य सत्यत्वस्योक्तक्रमेण विकल्प्य दूषणस्य जात्युत्तरत्वोक्तिरशुद्धैव ।

प्रत्युत तत् भिन्नमभिन्नं वेत्यादिविकल्पपूर्वक भेदादिनिरासकोद्गणामेव जात्युत्तरत्वम् । दूषणादूषणभेदस्य दुष्टादुष्टभेदस्य कस्याप्यनङ्गीकारे प्रमाणाप्रमाणव्यवस्थादीनां प्रमितप्रमितव्यवस्थानां चासिद्ध्या कस्यापि सिद्ध्यभावापातेन स्वव्याहते ।

ननु सर्वखण्डनार्थं वितण्डामाश्रित्य प्रवृत्तस्य मम कस्यापि स्थापनीयस्याभावेन सर्वव्यवस्थोच्छेदो न स्वव्याघातक. । तदुक्तं खण्डने ।

अभीष्टसिद्धावपि खण्डनानामखण्डि राज्ञामिव नैवमाज्ञा ।
तत्तानि कस्मान्न यथावदेव सैद्धान्तिकेऽप्यध्वनि योजयध्वम् ॥ इति ।

परमतखण्डनरूपाभीष्टस्य सिद्धावपि खण्डनयुक्तीनां राज्ञामिवाज्ञा स्वातन्त्र्यं नाखण्डि नास्माभिर्निराकृता । तत्तस्तानि खण्डनानि यथावत्परमत इव सिद्धान्तसिद्धप्रक्रियायामपि कस्मान्न योजयध्वमित्यर्थ. । न चैवं ब्रह्मणः खण्डनयुक्त्या बाधापत्तिरिति वाच्यम् । ब्रह्मणोऽसंसृष्टत्वेन तर्काविषयत्वात् । सर्वसाक्षित्वेनाबाध्यत्वाच्चेति चेन्न । वितण्डाया अपि व्याहत्यादेर्दूषणत्वाङ्गीकारेणैव प्रवृत्तेरावश्यकतया व्याहतोत्तरेण परमतखण्डनस्याप्यसिद्धे. । अन्यथा स्वव्याहतोक्तेरपर्यवसानेन कथोपरमासिद्धौ परमतखण्डनादिफलस्य दूरोत्सारितत्वापत्तः । कस्यापि स्थाप-

(द्वै द्यु , नीयस्याभावे वेदप्रामाण्यब्रह्मनिष्ठनर्कविषयत्वसर्वसाक्षित्वरूपधर्मादेरप्यसिद्ध्यापत्त्या ब्रह्मसिद्धेरप्यभावेन स्फुटतरशून्यवादापत्ते । स्थापनीयाभावे सूत्रकृत मन्वयपादातिरिक्तभागान्तरप्रणयनादेरसङ्गतत्वापत्तेश्च । व्यवहारत सर्वमङ्गीक्रियते । तदर्थं सूत्रप्रणयनादिकम् । परमार्थत सर्वं खण्ड्यत इति वाच्यम् । एतद्व्यवस्थासिद्ध्यर्थमेव खण्डनयुक्तीना प्रसक्तत्वेन तत्कालप्रसक्तखव्याहतेरुक्तव्यवस्थया निरासायोगात् । अन्यथाऽन्योन्याश्रयापत्तेरित्येषा दिक् ।

**वनमालिमिश्रीये** तु प्रपञ्चे अनाविकमिथ्यात्वस्य तात्त्विकसत्त्वाविरोधितया तदापत्तिद्वारा मिथ्यात्ववैशिष्ट्यभङ्गाप्रयोजकत्वादतात्विकमिथ्यात्वस्य त्वया प्रपञ्चे स्वीकारेऽपि क्षतिविरहात् **आद्यकोटेर्न धर्मिणि तद्वैशिष्ट्यभङ्गप्रयोजकत्वम्** । मिथ्यात्वस्य तात्त्विकत्वे तस्य [1]मिथ्यात्वधर्मिताया व्याहतत्वेन धर्मिकोटौ निवेशायोगात्त विहायातात्विकमिथ्यात्वान्तरस्यैव धर्मिकोटौ निवेशेनास्य तद्भङ्गप्रयोजकत्वमित्यभिहितम् ।

(गु टि ) एवं मिथ्यात्वसाधकहेतून्निराकृत्य भेदाभावसाधकत्वेनोक्तमात्मत्वमपि निराकरोति ॥ **एतेनेति** ॥ **उक्तरीत्येति** ॥ 'न चात्मनो दृक्कर्मत्व विना तज्ज्ञानत्वम्' इत्युक्तरीत्येत्यर्थ ॥ **निरस्तत्वादिति** ॥ अदृश्यत्वादिरूपस्यात्मत्वस्य दृश्यत्वाद्युपपादनेन निरस्तत्वादिति भाव । जातिविशेषरूपमात्मत्व पारमार्थिक व्यावहारिक उत प्रातिभासिकमिति विकल्पान्मनसि निधायाद्यं दूषयति ॥ **तस्यापीति** ॥ लक्षणव्याघातेन एकस्मिन्नुपदेशादिनैव व्युत्पत्त्याद्युपपत्त्या जात्यङ्गीकारवैयर्थ्यप्रसङ्गेन च जातिवादिभिर्जातेरनेकाश्रितत्वाङ्गीकारेण आत्मत्वस्य जातित्वे आत्मव्यक्तेर्बहुत्वप्रसङ्गेन अनङ्गीकारादित्यर्थ. । द्वितीय दूषयति ॥ **मिथ्येति** ॥ मिथ्येति नानिर्वचनीयमुच्यते । प्रमाणाभावादिना तस्य निरस्तत्वात् । अतोऽसत्त्वमेव तदिति वाच्यम् । तथा च 'आत्मन आत्मत्वं मिथ्या' इत्युक्ते 'आत्मन आत्मत्व नास्ति' इत्येवोक्त स्यात् । तथा च स्वरूपासिद्ध्यादिप्रसङ्ग इति भाव' । तृतीय निराकरोति ॥ **आरोपितस्येति** ॥ आरोपितस्य साधकत्वे बाष्पारोपितधूमस्यापि वह्निसाधकत्वप्रसङ्गादिति भाव ।

### जगन्मिथ्यात्वाद्यनुमानस्य प्रत्यक्षबाधप्रतिज्ञा

**(टी ) एवं प्रत्येक निराकृतान्यनुमानानि साधारणदूषणेनापि दूषयति**

## प्रत्यक्षबाधितञ्च जगन्मिथ्यात्वम्

**अत्र जगन्मिथ्यात्वमित्युपलक्षणम् । आत्मभेदाभावश्चेत्यपि द्रष्टव्यम् ।**

(वि टि ) प्रत्यक्षबाधोद्भावनस्य सन्निहितपरिच्छिन्नत्वानुमानमात्रविषयत्वशङ्का व्यावर्तयति ॥ **एवमिति** । **उपलक्षणमिति** ॥ यद्यपि जगच्छब्देन भेदोऽपि सङ्गृहीतस्तथापि परेणाकारभेदेनानुमानोपन्यासात्तदभिप्रायेणैवं व्याख्यानम् ।

[1] मिथ्यात्वधर्मिताया इति पाठेन भाव्यमिति भाति ।

(श. टि) ॥ एवमिति ॥ आत्मनोपि द्रश्यत्वादित्यादिप्रकारेणेत्यर्थः ॥ साधारणेति ॥ सर्वानुमानादिसाधारणदूषणेनेत्यर्थः ॥ आत्मभेदाभावश्चेति ॥ प्रत्यक्षबाधित इत्यन्वयः ।

(द्वै. द्यु) ॥ एवमिति ॥ नन्वात्मभेदाभावस्यापि पूर्वं साधनायानुमानस्यात्र शङ्कितत्वात्तत्राप्यन्यत्रोक्तरीत्या प्रत्यक्षबाधसम्भवात् किमर्थं तदनुक्तिरित्यत आह ॥ अत्रेति । उपलक्षणमिति ॥ स्वस्थाने स्थितस्य चशब्दस्य पूर्वोक्तानुमानासाधारणदोषसमुच्चायकत्वस्य स्मरणे प्रतीतस्य परिन्यागेन मिथ्यात्वपदेन सह योगेनात्मभेदाभावसमुच्चायकत्वाङ्गीकारे दूषणद्वयसमुच्चयप्रतीत्या पदद्वयमात्रे शैथिल्ये इद दूषणमिति प्रतीयेत । चशब्दस्योभयत्राप्यन्वये तस्यावृत्त्यापत्त्या मिथ्यात्वपदस्योपलक्षणत्वाभावेन गौरवमेवेत्याशयेनोपलक्षणत्वमेवोक्तम् । उपलक्ष्यतावच्छेदक शङ्कितानुमानसाध्यत्वमेवेति भावः ।

(गु टि.) मिथ्यात्वशब्दस्य मिथ्यात्वमात्रपरत्वे प्रत्यक्षबाधस्य मिथ्यात्वानुमानमात्रनिष्ठत्वापत्त्या भेदाभावसाधकानुमानागमसाधारण्यलाभात्तल्लाभ योपलक्षणतया मिथ्यात्वशब्दं व्याचष्टे ॥ अत्रेति ॥

### प्रत्यक्षस्य सत्त्वग्राहित्वनियमोपपादनम्

(टी) ननु प्रत्यक्षं पदार्थस्वरूपमात्रगोचरम् , अनुमानं पुनस्तन्मिथ्यात्वगोचरमिति विषयभेदात्कथं प्रत्यक्षविरोधोऽनुमानस्य । कथन्तरां तद्बाध इत्यत आह

## सदिति प्रतीयमानत्वात

यद्यपि स्तम्भोऽयमित्यादिप्रतीतिर्न सदित्येवमाकारा तथापि स्तम्भादीनां सद्विशेषत्वान्न सत्तां व्यभिचरति। अस्ति च सदित्यादिप्रतीतिः । अतः सर्वथा प्रत्यक्षेण प्रतीयमानं वस्तु सदित्येव प्रतीयत इत्यस्त्येव प्रत्यक्षविरोधोऽनुमानस्य ।

(वि. टि.) ॥ पदार्थस्वरूपमात्रगोचरमिति ॥ न तु सत्त्वागोचरमित्यर्थः । सदित्याकारा न [1]प्रतीति. । वर्तमानमात्रावगाहिप्रत्यक्षेण कालत्रयाबाध्यत्वरूपसत्त्वस्य गृहीतुमशक्यत्वात् । किन्तु स्तम्भोयमित्याकारा । सा च न बाधिका । सत्त्वाविषयत्वात् इति शङ्कते ॥ यद्यपीति ॥ सत्त्वाविषयकत्वेपि सद्व्याप्यविषयकत्वं भविष्यति । विरोधिबुद्धेरिव विरोधिव्याप्यवत्ताबुद्धेरपि प्रतिबन्धकत्वदर्शनात् । सत्त्वव्याप्यधर्मवत्तया प्रतीयमानत्वादिति मूलार्थोऽपीत्याशयेन परिहरति ॥ तथापीति ॥ नन्वेवमपि स्तम्भोऽयमित्यादिप्रत्यक्षस्य विरोधिपरामर्शरूपत्वेन सत्प्रतिपक्षरूपत्वमेव स्यात् । न तु बाधरूपत्वम् । यथाश्रुतमूलार्थत्यागश्चेत्यत आह ॥ अस्ति चेति ॥ न च वर्तमानमात्रग्राहिप्रत्यक्षस्य त्रिकालाबाध्यत्वरूपसत्त्वग्रहाक्षमत्वमिति वाच्यम् । प्रत्यक्षस्य वर्तमानकालसम्बन्धिविषयग्राहित्वेपि कालत्रयवृत्तितदभावप्रदविरोधित्वेन कालत्रयवृत्तिनिषेधप्रतियोगित्वरूपबाध्यत्वाभावग्राहितया

---

[1] प्रत्यक्षप्रतीतिरिति पाठेन भाव्यमिति भाति ।

(वि.टि.) मिथ्यात्वानुमानबाधकत्वसम्भवात्। त्वयैव सन् घट इत्यादिप्रत्यक्षेण कालत्रयाबाध्यत्वरूपाधिष्ठानसत्त्वस्य भानाङ्गीकाराच्चेति भाव । प्रपञ्चितश्चैतन्न्यायामृतेऽस्मत्कृतटीकायाञ्च ।

(वे टि) ॥ **विषयभेदादिति** ॥ विषययोर्विरोधाभावादित्यर्थ ॥ **कथन्तरामिति** ॥ प्रबलविरोधिन एव बाधकत्वात् प्रत्यक्षे च प्राबल्यस्यापि निर्निबन्धनत्वादिति भाव । ननु सदिदमिति प्रत्यक्षस्य सत्ताग्राहित्वेनानुमानविरोधिविषयकत्वेप्यप्राबल्येन न बाधकत्वम्। न च वक्ष्यमाणरीत्याऽऽश्रयग्राहकतयोपजीव्यतया प्राबल्यम्। स्तम्भोऽयमित्यादेरपि सत्तानवगाहिन प्रत्यक्षस्याऽश्रयग्राहकतोपपत्ते । तस्य च तत्सत्ताऽविरोधितयाऽबाधकत्वादित्याशङ्क्य तस्यापि सत्ताग्राहित्वमुपपादयनि ॥ **यद्यपीत्यादिना** ॥ **सदित्येवमाकारिका** सदित्येवमाकारव्यवहारजनिका। न हि प्रतीत सर्वं व्यवह्रियत इति भावः। **व्यभिचरति** परित्यजति। अपि तु विषयीकरोत्येव। विधिनिषेधाववधूय प्रत्ययायोगादिति भाव । ननु तथापि निषेधविषयकमेवेदं प्रत्यक्ष किं न स्यादित्यत उक्तम् ॥ **स्तम्भादीनां सद्विशेषत्वादिति** ॥ सत्प्रभेदरूपत्वादित्यर्थ । सत्प्रभेदे च ज्ञानस्यासति दोषे विधिविषयतैव नियतेति भाव. ।

'सत्त्वाविषयकत्वेपि तद्व्याप्यविषयकत्वाद्बाधकत्वं भविष्यति । विरोधिबुद्धेरिव विरोधिव्याप्यबुद्धेरपि बाधकत्वदर्शनादित्याशयेन परिहरति ॥ **तथापीति** ॥' इति व्याख्यान तु दुर्दर्शनाभ्यासविजृम्भितम्। 'अत सर्वथा प्रत्यक्षेण प्रतीयमान वस्तु सदित्येव प्रतीयते' इत्युत्तरटीकाविरोधात् । अत्र हि **सर्वथापद**स्वारस्येन सर्वमपि प्रत्यक्षं सदवगाहीत्यभिप्रेतम् । किञ्च न वस्तुगत्या व्याप्यबुद्धेर्विरोधित्वम् । तैल पृथिवी न वेति संशयाभावप्रसङ्गात्। किन्तु व्याप्यत्वप्रकारकबुद्धे । न च स्तम्भोऽयमिति ज्ञान सत्ताव्याप्यत्वप्रकारकम्। येन विरोधि स्यादित्यालोचनीय सूरिभिरिति ॥ **अस्ति च सदित्यादिप्रतीतिरिति** ॥ सदित्यादिव्यवहारनिर्वाहिकेत्यर्थ । आदिपदेन सत्य इत्यादिव्यवहारनिर्वाहिका ग्राह्या ॥ **सदित्येव प्रतीयत इति** ॥ सत्ताविशिष्टमेव प्रतीयत इत्यर्थः ।

(द्वै द्यु.) ॥ **यद्यपीति** ॥ **न सदित्येवमाकारेति** ॥ इदमिति पूरणीयम्। तेन सदिति नपुसकोपपत्ति । वस्तुसामान्यग्रहणार्थं नपुसकनिर्देश । स्तम्भ सन्नित्यादिव्यवहारोपधायिका कदाचिन्न भवति इत्यर्थ । तथा च तत्प्रतीतौ सत्त्वभाने स्तम्भत्वादीनामिव तस्याप्युल्लेखप्राप्ति स्यात्। अतस्तद्भान नास्ति। चक्षुःसन्निकर्षादिमात्रस्य तद्भासकत्व च नास्ति। अन्यथाऽन्वयव्यभिचारप्रसङ्गात्। कदाचित्तद्भानं तु लिङ्गादिनेति वक्तव्यम्। तथा च सत्त्वविषयकप्रत्यक्षाभावात्तद्बाधाभिधानमयुक्तमिति शङ्काभिप्रायः ।

तद्वाचकशब्दप्रयोगस्य कदाचिदनुपधायकत्वमात्र प्रतीतेर्न तद्विषयकत्वाभावकल्पकम्। [1]चक्षुषादिरूपादिभाननियमेन तद्विषयकत्वस्यावश्यकत्वात्तस्य सर्वदा रूपी घट शुक्लो घट इत्यादिव्यवहारानुपधायकत्वेन व्यभिचारात् । यावद्बोधनेच्छा तावन्मात्रबोधकवाक्यप्रयोगेण तद्बोधनेच्छाभावेनैव तच्छब्दाप्रयोगसम्भवेनान्यथासिद्ध-

---

[1] चाक्षुषादौ इति पाठेन भाव्यमिति भाति ।

(द्वै.सु.) त्वाच्च । तथा च स्तम्भोऽयमित्यादिशब्दाभिलाप्यप्रतीतीनामपि सत्त्वविषयकत्वमस्त्येव । वस्तुनः सद्रूपत्वग्राहिप्रतीतेर्दोषविशेषाभावे सत्त्वेनैव तदवगाहित्वनियमात् स्तम्भादीनां च सत्प्रमेयत्वात् स्तम्भत्वादेरिव सत्त्वरूपधर्मस्यापि प्रत्यक्षवेद्यत्वमेव । अतो बाधः सुस्थिर इति समाधत्ते ॥ तथापीति ॥ तद्विषयत्वात् सत्प्रमेयत्वात् । ॥ न सत्तां व्यभिचरति ॥ दोषविशेषाभावे सत्ताविषयिणी नियमेन भवति । ननु कुत एतत् ? प्रात्यक्षिकप्रतीतेः सत्त्वाविषयकत्वमेव किं न स्यात् । कदाचित्तद्व्यवहारस्यानुमानादिमूलकत्वसम्भवादित्यत आह ॥ अस्ति चेति ॥ तत्प्रतीत्यैवेत्यादि । प्रतीतिस्तन्मूलकव्यवहारः । तथा च यत्प्रतीत्युत्तरं स्तम्भोऽयं तमानयेति वदति तदुत्तरं श्रोत्रा कदाचित्सन्देहेन 'अयं सत्यो वा न वा' इति पृष्टे सदिदमित्येव वदति । न च तत्र लिङ्गानुसन्धानादिना प्रतीत्यन्तरानुभवोऽस्ति । अतस्तद्व्यवहारनिर्वाहकत्वं प्रथमप्रतीतेरेवेति तस्याः सत्ताविषयकत्वमावश्यकमिति भावः ॥ अत इति ॥ सत्त्वस्य प्रत्यक्षयोग्यत्वादित्यर्थः ॥ सर्वत्रेति ॥ नियमेनेत्यर्थः । तद्ग्रहप्रतिबन्धकदोषासमवहितज्ञानसामग्र्याः सत्त्वग्राहकत्वनियमात् । विधिनिषेधविनिर्मुक्तस्य प्रत्यक्षप्रतीतेरनुत्पत्तेरिति भावः । एतत्सत्त्वमुक्तमप्रामाणिकप्रतियोगिकाभावविचारे ।

अत्र वदन्ति 'लौकिकप्रत्यक्षेण न सत्त्वं गृहीतुं शक्यम्, तद्योग्यसत्त्वानिरुक्तेः । न तावत्सत्त्वं जातिः । अभावादौ तदभावापातात् । घटत्वद्रव्यत्वादिवदसदुक्तमिथ्यात्वासम्भवरूपत्वाभावेन तद्ग्रहस्य मिथ्यात्वग्रहाविरोधित्वाच्च । नापि प्रमाविषयत्वम् । असत्त्वाप्रसिद्धेः, यतः प्रमायां भ्रमायाश्च विषयतया बाधप्रमायामपि विषयतया तत्वातिव्याप्तेः । पूर्वोक्तदोषानिवृत्तेश्च । प्रमादीनां चक्षुराद्ययोग्यतया तद्घटितस्य विशिष्टस्यापि लौकिकप्रत्यक्षाविषयत्वाच्च । एतेन प्रमाणगम्यत्वं सत्त्वेन प्रमां प्रति साक्षाद्विषयत्वमित्यपास्तम् । अन्त्ये आत्माश्रयाच्च' इति ।

अत्रोच्यते । ब्रह्मणो यादृशसत्त्वे सत्यज्ञानादिवाक्येन प्रतिपादिते अनन्यथावृत्ति सिद्ध्यति तदेव प्रत्यक्षेण गृह्यताम् । घटादिगोचरप्रत्यक्षोत्तरं सत्य एव घटो न मिथ्येति निश्चयपूर्विकायाः प्रवृत्तेरुत्सर्गतः सर्वलोकानुभवारूढत्वात् । कचित्तत्संशयस्य चोत्पन्नज्ञानाप्रामाण्यसंशयमूलकस्योत्सर्गिकत्वाविरोधित्वात् । इदं रजतमिति भ्रमस्याधिष्ठानाकारानुवेधवज्जगद्भ्रमस्यापि अधिष्ठानसत्त्वनिष्ठसत्त्वाकारानुवेधनिर्वाहाय सन् घट इत्याकारकत्वस्य त्वयाप्यभ्युपगतत्वाच्च । न च सा प्रतीतिः सत्त्वविशिष्टांशे नापरोक्षेति वाच्यम् । तथात्वे तदंशस्य ज्ञानस्य सन्निकर्षत्वमनभ्युपगच्छतस्तव तदंशविशिष्टप्रतीतौ मानाभावापत्त्या घटः सन् सन्घट इत्याकारद्वयानुरोधेन परस्परतादात्म्यासिद्धिप्रसङ्गात् । न च ज्ञानद्वयविषययोरेकविशिष्टरूपता सङ्गच्छते । तयोरससर्गाग्रहमात्रस्य सत्त्वेन परस्परसंसर्गानवगाहित्वात् । न च सुरभि चन्दनमित्यत्रेव वृत्तिद्वयप्रतिफलितचैतन्यैक्येनात्रोपपत्तिः । अत्र सदंशे वृत्तिविरहात् । सन्घट इत्याकारप्रतीतिपूर्वं लिङ्गशब्दयोरभावात् । स्मरणस्य तदनुभवोपायाभावेन कथञ्चिदुपपादनेऽपि पूर्वं नियमेन सत्त्वस्यानुभवविरुद्धत्वेन च वक्तुमशक्यत्वात् । न च तत्र वृत्तिविरहे सत्त्वोपहितस्य मिथ्याभूतस्य स्वप्रकाशत्वस्याप्यभावेन पूर्वं तत्स्फुरणानुपपत्तिरेवेति वाच्यम् । केवलस्य

(द्वैतेषु) स्वप्रकाशत्वेन तत्तादात्म्यादेव स्फुरणोपपत्तेः । न च घटाकारवृत्तिप्रतिबिम्बितचिता स्वतः स्फुरत्सतस्तादात्म्य मस्तीति वाच्यम् । तावताऽपि घटाकारवृत्तिविषयत्वस्य स्वविषयत्वस्य चानङ्गीकारेण ज्ञानस्यैकविशिष्टार्थत्वस्यानुपपादनात्। घटपटावच्छिन्नचितोरैक्यतयास्तादात्म्ये बीजाभावाच्च । एवमप्यस्य विशिष्टज्ञानत्वाग्रहेऽप्युक्तज्ञानस्य सर्वांशेऽपरोक्षत्वापरिहाराच्च । सत्ताविशिष्टं घटं पश्यामीत्यनुभवस्य तत्रापि सम्मतत्वाच्च । अन्यथा अनुभवविरुद्धार्थत्वेन 'रूपादिहीनस्यापि ब्रह्मणश्चाक्षुषविषयत्वं मीमांसकमते कालवत्स्वीक्रियते' इति परिच्छिन्नत्वहेतुग्रन्थे त्वदुक्तस्यात्यन्तासङ्गतत्वापाताच्च । तस्मात् सन्घट इत्यादिप्रतीतीनां मिथ्यात्वविरोधिसत्त्वविषयकापरोक्षरूपता अकामेनापि अङ्गीकर्तव्यैव । तत्सत्त्वं मिथ्यात्वाभावरूपमन्यद्वाऽस्तु । तत्सामग्र्या अपि अन्यत्र क्लृप्ताया असम्भवे अन्याऽदृश्यैव कल्प्यताम् । अनुभवसिद्धकार्यापलापायोगात् । इत्थं च सत्त्वविकल्पेन तदपरोक्षप्रतीतिखण्डनमयुक्तमेव ।

ननु तथाऽपि तादृशसत्त्वं कीदृशमिति चेत् । ब्रह्मनिष्ठं यादृशं मिथ्यात्वविरोधि तादृशमेवास्तु । ननु ब्रह्मरूपमेव सत्त्वम् । तच्च कल्पितभेदेन ब्रह्मधर्मभूतं मिथ्यात्वविरोधि । तदेव जगति चेत् अन्यधर्मस्यान्यत्र प्रतीत्ययोगात् शुक्तिधर्मस्येदन्त्वस्य रजते भाननिर्वाहाय रजतस्य शुक्तावध्यासस्येव ब्रह्मधर्मस्य सत्त्वस्य जगति भाननिर्वाहाय जगतस्तत्राध्यासस्यावश्यकत्वापत्त्या जगन्मिथ्यात्वं सेत्स्यत्येवेति चेन्न ।

ब्रह्मसत्तासमजातीयसत्ताया एव जगति मयाऽभ्युपगतत्वात् । ब्रह्मस्वरूपस्यैव सद्रूपत्वं न जगत्स्वरूपस्येत्यत्राप्यसिद्धत्वात् । सौहार्दे तु सर्वदेशकालसम्बन्धिनिषेधप्रतियोगित्वाभाव एव सत्त्वमिति वदाम । प्रागभावादिप्रतियोगिघटादावव्याप्तिवारणाय सर्वकालेति । न च घटादिप्रागभावध्वंसयोः प्रतियोगिसमानदेशत्वेन सर्वदेशपदेनैव तद्वारणं भवतीति वाच्यम् । अत्र घटो नास्तीति प्रतीत्यैव प्रतियोग्यधिकरणदेशे प्रागभावसिद्धिवत् अन्यदेशेऽपि तथैव तत्सिद्धिसम्भवात् । न चात्र तदत्यन्ताभावविषयकत्वस्यैव तादृशप्रतीतेः सम्भवे तत्र तत्प्रागभावाद्यवगाहित्वे मानाभाव इति वाच्यम् । प्रतियोग्यभावयोः कालिकविरोधस्यैवाङ्गीकर्तृनये सर्वाभावानां सर्वदेशवृत्तौ बाधकाभावेनैव तत्सिद्धेः । अन्यथा न कुत्रापि तत्सिद्धिः स्यात् ।

न च 'अत्र घटो भविष्यति नष्टः' इत्यादिप्रतीतेः प्रतियोगिदेश एवोत्पत्तेस्तद्बलात्तत्रैव प्रागभावध्वंसौ सेत्स्यतो नान्यत्रेति वाच्यम् । तद्देशावच्छेदेनोत्पत्त्यदर्शनयोरेव तत्र प्रतीतेः । भूधातोः सत्तार्थकत्वात् उत्पत्तेस्तद्विशेषत्वात् । णश अदर्शने इति धातोः तत्समानार्थकस्य ध्वस्त इत्यादेरपि तदर्थकत्वात् । न तु घटप्रतियोगिकप्रागभावध्वंसौ । तत्राऽनुल्लेखात् । भविष्यतीत्यत्र प्रागभावप्रतियोगित्वभानाङ्गीकारे श्वोभाविनि घटे 'एतद्दिवसे भविष्यति' इति प्रयोगप्रसङ्गश्च । प्रागभावे एतद्दिवसवृत्तित्वस्याबाधात् । एवं यत्र घटः एतद्दिवसे नष्टो भवति तत्र 'श्वः परश्वो नश्यति' इति प्रयोगप्रसङ्गश्च । ध्वंसस्य श्वस्तनवृत्तित्वस्याबाधात् । मन्मते उत्पत्तेरेतद्दिवसाधिकरणकत्वस्य णशधात्वर्थस्य दर्शनाव्यवहितोत्तरक्षणवृत्तित्वविशिष्टतद्दर्शनप्रागभावासमान[1]कालिकत्वदर्शनस्य तद्दिवसवृत्तित्वस्य बाधितत्वान्न तथा व्यवहारः । न च मन्मतेऽप्युत्पत्तिमदभावरूपध्वंसार्थकतया नशधातोस्तदर्थैकदेशभूतोत्पत्तावेव समभिव्याहृत-

[1] कादर्शनस्य इति पाठेन भाव्यमिति भाति ।

(द्वै. बु.) दिवसान्वयादुपपत्तिरिति वाच्यम् । उक्तादर्शनापेक्षयाक्षणमम्बन्धरूपोत्पत्तिघटितधर्मावच्छिन्ने शक्तिकल्पनेगौरवात् । णश अदर्शन इत्यनुशासनविरोधाच्च ।

नन्वेवमपि प्रतियोग्यनधिकरणदेशे तत्सत्त्वे मानाभाव । न चात्र घटो नास्तीति प्रतीतिरेव मानमिति वाच्यम् । तत्र समभिव्याहृतसप्तम्यर्थस्य प्रतियोगिकोटावन्वितत्वेन तद्देशसमृष्टघटरूपप्रतियोगिकप्रतियोगिकात्यन्ताभावस्यैव प्रतीतेरिति चेत् सत्यम् । देशान्तरं तत्प्रतियोगिकप्रागभावाधिकरणं ध्वंसाधिकरणं च तदनधिकरणकालावच्छिन्नत्वादित्यनुमानेनैव तत्सिद्धे ।

न च प्रागभावानधिकरणकालस्यापि देशतया तत्रासत्त्वादेव प्रागभावादित्वं न, सन्तीति वाच्यम् । कालपदस्य पृथगुपादानाद्देशपदस्य कालातिरिक्तदेशपरत्वादिति केचित् । तदसत् । उक्तरीत्या प्रागभावध्वंसयोः स्वसमानकालिकदेशसामान्यवृत्तित्वस्य कथञ्चित्सिद्धावपि स्वसमानकालिकदेशविशेषवृत्तित्वाभावेन न वाक्यार्थोक्तरीत्या प्रयोजनकथनायोगात् ।

किन्तु सर्वदेशवृत्त्यभावप्रतियोगित्वं सर्वकालवृत्त्यभावप्रतियोगित्वं वाऽसत्त्वम् । तदभाव सत्त्वमिति लक्षणद्वये तात्पर्यम् । सर्वदेशवृत्ति सर्वकालवृत्तिश्च निषेधोऽत्यन्ताभाव एव । अभावान्तराणामतथात्वोपपादितत्वात् । तत्प्रतियोगित्वमसत एवेत्युक्तप्रतियोगित्वाभावस्य सत्त्वरूपता निर्वाह । न चात्यन्ताभावात्मकभेदप्रतियोगिनि घटेऽसत्त्वापत्तिरिति वाच्यम् । अत्यन्ताभावत्वनिरूपकप्रतियोगिताया एव विवक्षणात् सिद्धान्तेपि विशेषशक्त्यैकस्मिन्नपि तादृशधर्मद्वयाङ्गीकारान्न कोपि दोष । वस्तुतस्तु सर्वदेशकालेत्यादेरत्यन्ताभावत्वरूपानुयोगितापरिचायकतया तन्निरूपकप्रतियोगित्वाभावमात्र सत्त्वमिति तु तत्त्वम् ।

**तरङ्गिण्यां** तु 'अश्वे गोत्वं नास्तीत्यादौ गोत्वाश्वयोरलीकसमर्गं एव निषिद्धयत इति मते असत एवात्यन्ताभावप्रतियोगित्वात् सार्वकालिकनिषेधप्रतियोगित्वाभाव सत्त्वम् । न चात्यन्ताभावभिन्ने घटादावव्याप्ति । अभावविरहात्मकत्वलक्षणस्य प्रतियोगित्वस्य विवक्षितत्वात् ; घटादेस्तु भेदं प्रति निरूपकत्वमात्रस्य सत्त्वेनोक्तप्रतियोगित्वविरहात्' इत्युक्तम् ।

तत्राभावेत्यादेरयमभिप्राय । **नैयायिकादिमते** अभावविरहात्मत्वं नान्योन्याभावप्रतियोगितारूपम् ; घटभेदविरहस्य घटरूपत्वे घटवति भूतले घटभेदो नास्तीति प्रतीत्यापत्तेस्तद्विरहस्य घटत्वादिरूपत्वेन घटस्य तत्प्रतियोगित्वाभावापत्ते । किन्तु संसर्गाभावप्रतियोगित्वरूपमेव । तथा च परेषां मते अभावविरहात्मकत्वं यादृशं तत्तुल्यस्य विवक्षितत्वादित्यर्थ. । नच सत्त्वासत्त्वयो परस्परविरहरूपतोपपादनार्थं पूर्वं निरुक्तमेवानुसन्धेयमिति । न चैतन्मते सर्वदेशवृत्तित्वमात्रघटितस्यापि लक्षणत्वसम्भवात्तत्परित्यागायोग । अप्रामाणिकप्रतियोगिकस्याप्यत्यन्ताभावस्य प्रतियोग्यारोपे यत् प्रधान तेनापि साकं विरोधेन व्यतिरेकितया एतन्मतसिद्धत्वस्य पूर्वमप्रामाणिकप्रतियोगिताकाभावविचारेऽस्माभिरुक्तत्वेन सर्वदेशवृत्त्यभावप्रतियोगित्वस्यारोप्यमाणे

(द्वि. द्यु) गोत्वाश्वसंसर्गे अभावेन तस्य सत्त्वापत्ते देशघटितार्थस्य परित्यागोपपत्ते । न चैतन्मते घटे कालत्व नास्तीति प्रतीतिसिद्धाभावस्य स्वप्रतियोग्यारोपप्रधानभूतकालत्वाधिकरणवृत्तितयोक्तलक्षणस्य [1]तादृशाभावप्रतियोगिन्यसत्त्वतिव्याप्तिरिति कालघटितपरिष्कारोऽप्ययुक्त इति वाच्यम् । एतन्मते देशविषया कालविषया च धर्मितावैलक्षण्याभ्युपगमात् प्रकृते कालविषयाऽभावधर्मितायाः निवेशात्तस्योक्तप्रधानाविरोधत्वेनादोषात् ।

न्यायामृतेऽपि देशपदमनपेक्षितमित्युक्त्या कालघटितपरिष्कारमात्रादरेण तु अप्रामाणिकप्रतियोगिकात्यन्ताभावाना केवलान्वयित्वमेवेति केषाञ्चित् केवलान्वयित्व केषाञ्चिद्व्यतिरेकित्वमिति च पूर्वोपदर्शितमतद्वयेऽप्यविप्रतिपन्नत्वेनेति ध्येयम् ।

यत्त्वत्र ब्रह्मानन्देनाभिहितम् 'यत्तु सर्वकालवृत्तित्वमेवाभावे विशेषण देयम् । न तु सर्वदेशीयत्वम् । अश्वाद्यवच्छेदेन गोत्वादश्व वा न कदापि वर्तते । मानाभावात् । इदानीमश्वे गोत्व नास्तीति प्रत्ययस्तु गोत्वाश्वयोरलीकसम्पर्गस्यात्यन्ताभावमवगाहते न तु गोत्वस्य । तथा च गोत्वादौ सर्वकालवृत्त्यत्यन्ताभावप्रतियोगित्वाभावसत्त्वात्तत्र नाव्याप्ति । सर्वदेशवृत्त्यत्यन्ताभावप्रतियोगित्वाभावस्तु न लक्षणम् । घटादौ तादृशप्रतियोगित्वसत्त्वात्तत्राव्याप्ति । घटादेर्हि स्वाधिकरणभूतलादितोऽपसरणकाले तत्रात्यन्ताभाव प्रतीयते । अत्र भूतले इदानीं घटो नास्तीति धीर्हि घटस्यैवात्यन्ताभाव गृह्णाति । घटस्यैवोक्तकाले उक्तभूतले आरोपसम्भवात् । आरोपितस्यैवालीकत्वेनात्यन्ताभावप्रतियोगित्वादिति माध्वेनोक्तम् । तदयुक्तम् । गोत्वादेरप्यश्वादावारोपसम्भवेन तत्राव्याप्तिताद्वस्थ्यात् । अलीकस्यैवात्यन्ताभावप्रतियोगित्वमिति नियमे मानाभावाच्च । यदि च तादृशनियम स्वीक्रियते तदाऽत्यन्ताभावप्रतियोगिता न केनापि धर्मेण सम्बन्धेन वाऽवच्छिन्ना । अलीकस्य सर्वदेशकालासम्बन्धेन धर्मविशेषसम्बन्धविशेषावच्छेदकत्वे अनपेक्ष्यैव तदत्यन्ताभावस्य सर्वत्र सम्भवात् । अत एव ध्वस प्रागभावप्रतियोगिता [2]तादृशीति नस्या । तथा च तव मते धर्मसम्बन्धविशेषाणा संसर्गाभावप्रतियोगितावच्छेदकत्वस्यानुभूयमानस्यापलापापत्ते' इति ।

तत्तुच्छम् । त्वदुक्तानुपूर्व्या न्यायामृततरङ्गिण्यादौ कुत्राप्यभावेनानुक्तानुवादपूर्वकोपालम्भरूपदोषस्य स्फुटत्वात् । न च तदभिप्रेतार्थस्यैवानुवादोयमिति वाच्यम् । त्वदुक्तार्थस्यात्यन्तासम्भावितत्वेन तदभिप्रेतत्वायोगात् । न हि गव्यश्वत्व नास्तीति धिय सकाशादत्र भूतले इदानीं घटो नास्तीति धियो मात्रयापि विशेषोस्ति । येनेदमभिप्रेत स्यात् । न च पूर्वं घटस्य सत्त्वादारोपरूप घटवद्भूतलमिति ज्ञान घटरूपप्रतियोग्यवगाहीत्यभिमान इति वाच्यम् । तस्यारोपरूपत्वाभावात् । तन्मते तत्र प्रतीयमानाभावस्य घटसंसर्गध्वसादिरूपस्य सर्वदेशवृत्तित्वाभावाच्च । अत्यन्ताभावतयाऽभिमाने सर्वकालवृत्तीत्यनेनापि घटादावव्याप्तेरवारणात् । देशघटितपरिष्कारपरित्यागबीजस्य कथितत्वेन तस्याप्युक्तासम्भाविताभिमानकल्पकत्वाभावाच्च । आरोपितस्यैवात्यन्ताभावेत्यनूदित-

---

[1] तादृशाभावाप्रति इति पाठेन भाव्यमिति भाति । [2] धर्माद्यनवच्छिन्ना

(द्वै. घु) चरमवाक्यस्य उपपाद्यमानाया घटादावव्याप्तेर्विरोधित्वाच्च। कथञ्चित्तदुपपादनपरतया चेत्तनमशुद्धं पठित्वेतिन्यायमनुकरोति।

यदपि दूषणग्रन्थे गोत्वादेरित्यादि तदपि पूर्वोक्तवाक्यार्थानवगमप्रयुक्तमेव प्रवृत्तमितिमहदाश्चर्यम्।

यदि चेत्युक्तिरपि न साधीयसी। अलीकस्यैवात्यन्ताभावप्रतियोगितया असत्त्वस्य पूर्वमुपपादितत्वेन। प्रतियोगितानां धर्मसम्बन्धावच्छिन्नत्वादेः पूर्वं निरस्तत्वेन तदवलम्बनापादनमप्यकिञ्चित्करम्। तदंशेऽनुभवसिद्धत्वं तुच्छप्रतियोगिकत्वेऽपि संयोगेन शशविषाणं नास्तीत्यादिप्रतीतिबलादेवाङ्गीकर्तुं शक्यत्वेन। तत्तदभावविषया प्रतिबध्यप्रतिबन्धकभावयुक्तेरपि तौल्याच्चेति न किञ्चिदेतत्।

उक्तासत्त्वाभावरूपसत्त्वं प्रत्यक्षेण गृह्यते। अत्यन्ताभावप्रतियोगित्वस्य प्रतियोगिनिष्ठस्य घटादिनिष्ठत्वे तथोपलम्भापादनसम्भवात्। नचासता सहेन्द्रियसन्निकर्षायोगात्तन्निष्ठधर्मस्यापि तद्द्वारेन्द्रियसन्निकर्षायोगात्प्रत्यक्षस्यैवायोगेन कथमत्र तदापादनमिति वाच्यम्। तस्य च रूपादिवद्धर्मिसत्तासापेक्षधर्मत्वाभावेनैतन्निष्ठधर्मत्वस्य तौद्धस्य विलक्षणस्यैव व्यवस्थापितत्वेन तद्धाने तत्सन्निकर्षाभाव[1]सन्निकर्षप्रतियोगिज्ञानादेरेव सामग्रीत्वेन शुक्तौ रजतत्वं नास्ति घटो नास्तीत्याद्यभावप्रत्यक्षप्रमादौ क्लृप्तत्वात् तद्बलादेवात्राप्यापादनसम्भवात्। न ह्येकत्र यादृशी सामग्री नियामिका प्रत्यक्षोत्पत्तौ सर्वत्रापि तादृश्यैवेति नियमोऽस्ति। तथात्वे तमस्यालोकसंयोगायोगात्तद्घटितसामग्र्या घटादिप्रत्यक्षस्येव तत्प्रत्यक्षस्यापादयितुमशक्यत्वात् आलोके तमोऽभावप्रत्यक्षापलापापत्तेः। वस्तुस्वभाववैचित्र्यात्तत्प्रत्यक्षसामग्र्या वैलक्षण्यं चेदत्रापि तथाऽस्तु। विशेष्यतया अत्यन्ताभावप्रतियोगित्वघटित मिथ्यात्वग्रहं प्रत्यत्यन्ताभावप्रतियोगित्वसामान्याभावरूपसत्त्वग्रहस्य विरोधितायामविवादात्।

प्रामाणिकप्रतियोगिकात्यन्ताभावस्यापि स्वीकर्तृनये कालत्वव्यापकानवच्छिन्नाधिकरणताकालीयकालिकसम्बन्धावच्छिन्नप्रतियोगित्वं देशत्वव्यापकानवच्छिन्नाधिकरणताकसम्बन्धान्यविशिष्टसम्बन्धावच्छिन्नप्रतियोगित्वं वाऽसत्त्वं तदभावः सत्त्वम्। विषयितायाः सम्बन्धत्वानङ्गीकारात् सम्बन्धे तद्भिन्नत्वनिवेशाद्वा देशत्वव्यापकत्वाक्रान्ताऽऽकाशमात्रवृत्तिरूपस्य निवेशाद्वा विषयितया ज्ञानादिरूपदेशे सम्बद्धशशविषाणादौ न द्वितीयासत्त्वलक्षणस्याव्याप्तिः। कालिकसम्बन्धानङ्गीकारे सर्वेषामपि वस्तूनामुक्तदेशकालयोः संयोगेनैव वृत्त्यङ्गीकारे प्रतियोगिताया संयोगावच्छिन्नत्वमेव निवेश्यम्। मिथ्यात्ववादिनामपि मां प्रति साध्याप्रसिद्ध्यादिवारणायोक्तरीतिरेवादरणीया। ततश्चोक्तसत्त्वमपि प्रत्यक्षगम्यमेव तदभिमतमिथ्यात्वं विरुणद्धीति।

ननु कालत्वव्यापकत्वं कालनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावः कालनिष्ठात्यन्ताभावप्रतियोगित्वाभावो वा न प्रत्यक्षगम्यः। अतीन्द्रियात्यन्तान्योन्याभावीयप्रतियोगितानवच्छेदकत्वाभावस्य प्रतियोगितावच्छेदकधर्मस्य तदवच्छिन्नोपलब्धेरापादयितुमशक्यत्वेनोक्ताभावरूपव्यापकत्वस्याप्रत्यक्षतया तद्घटितोक्तसत्त्वरूपाभावस्यापि

---

[1] शशविषाणादिरूपप्रतियोग्युपस्थितीत्यर्थः।

(द्वै यु.) न प्रत्यक्षं घटने। तद्धर्मावच्छिन्नाभावलौकिकप्रत्यक्षे प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधर्मविशिष्टांशे आपादनयोग्यलौकिकप्रत्यक्षरूपोपलब्धिप्रतियोगिताकाभावस्य तन्त्रत्वात्। अन्यथा गुरुत्वविशेषवद्घटत्वावच्छिन्नप्रतियोगिताकाभावोऽपि लौकिकप्रत्यक्षविषयः स्यादिति चेन्न।

इदानीं घट एव न घटाभावः अत्र काले न घटाभाववानिति अत्र घटो नात्र घटाभावो नायं घटाभाववानिति साक्षात्कारेणैव घटत्वावच्छिन्नप्रतियोगिताकत्वेन गृह्यमाणेऽभावे देशकालवृत्त्यत्यन्तान्योन्याभावप्रतियोगितातदवच्छेदकत्वयोर्गृहीतत्वेन तदभावस्य प्रमेयत्वादौ संयोगेन रूपाभावादौ च चक्षुषैव गृहीतुं शक्यत्वेन व्यापकताया अप्यतीन्द्रियत्वाभावेन तद्घटितोक्तप्रतियोगित्वाभावस्यापि साक्षात्कारसम्भवात्। सम्बन्धसामान्यावच्छिन्नप्रतियोगिताघटितकल्पे तादृशप्रतियोगिता शशविषाणादिनिष्ठैव प्रसिद्धा।

ननु शशविषाणाभावप्रमेयत्वादौ असन्निकृष्टदेशान्तरवृत्त्यभावप्रतियोगित्वादिसत्त्वेऽपि तदनुपलम्भसम्भवायोग्यानुपलब्ध्यसम्भवान्न तदभावरूपव्यापकताप्रत्यक्षसम्भवः। अत एव **दीधितिकृतोक्तम्** 'यथा विद्यमानमपि वह्नित्वे रासभदेशनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वं न गृह्यते। अभावदेशविप्रकर्षादिनेन्द्रियसन्निकर्षादिरूपग्राहकाभावात्। तथा धूमवन्निष्ठाभावप्रतियोगितावच्छेदकत्वमपीति नानुपलब्धेः प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वलक्षणयोग्यतेति तदभावो नाध्यक्ष' इति। इति चेन्न। देशान्तरादेरनुपस्थितिदशायां विद्यमानदेशसन्निकर्षादिकाले 'प्रमेयत्वादिकं देशनिष्ठात्यन्तान्योन्याभावप्रतियोगितातदवच्छेदकतावत्स्यात् घटाभाववत्तथोपलभ्येत' इत्यापादनसम्भवेनानुपलब्धेरुक्तयोग्यत्वस्याप्रतिहतेः। न च व्यवहितदेशेऽतीन्द्रियपिशाचपरमाण्वादौ प्रमेयत्वादेरभावसत्त्वेऽप्यग्रहसम्भवात्तच्छङ्कया नोक्तापत्तेरवतार इति वाच्यम्। शङ्काविशेषाभाववता तदापादनसम्भवात्। अन्यथा कस्यचिच्छङ्काविशेषेणापत्तेः कुण्ठितत्वमात्रेण योग्यानुपलब्धिखण्डने अतीन्द्रियो वा स्वमात्रप्रत्यक्षाविषयस्तत्कालमात्रप्रत्यक्षाविषयोऽपि कश्चिद्घटः सम्भावित इति विप्रलम्भकवाक्यादिना भ्राम्यतः घटोऽत्र यदि स्यात्तर्ह्युपलभ्येतेत्यापादनस्य तादृशाशङ्काकुण्ठितत्वेन घटाद्यनुपलब्धेरप्ययोग्यत्वापत्त्या घटाभावादेरप्यप्रत्यक्षतापत्तेः। उक्तशङ्काया अतिप्रसक्तत्वाच्छङ्काशून्यपुरुषीयापाद्यापादकव्याप्तिप्रमापूर्वकापादनयोग्यप्रतियोगिकत्वमेवानुपलब्धौ योग्यत्वं चेदत्रापि तत्तुल्यम्। प्रमेयत्वशशविषाणाभावादौ देशकालनिष्ठाभावप्रतियोगितातदवच्छेदकतारूपप्रतियोगिग्राहकातिरिक्तविशेषणा[1]विशेषितं तादृशप्रमेयत्वादिरूपपक्षावृत्तिविशेषणाविशेषितं च यत्तादृशप्रतियोगितारूपप्रतियोगितद्रूपापादकापत्तेरपि व्याप्तिप्रमापूर्वकत्वात् प्रमेयत्वादेरपि योग्यत्वेन योग्यवृत्तित्वविशिष्टतादृशप्रतियोगितारूपापादकस्योक्तरूपत्वाक्षतेश्च। वह्नित्वेऽपि रासभदेशसन्निकर्षदशायां तद्देशनिष्ठाभावप्रतियोगितावच्छेदकत्वत्वेनेव सामान्यतो रासभदेशनिष्ठाभावप्रतियोगितावच्छेदकतात्वेनापि प्रत्यक्षं भवत्येव। तद्वद्देशान्तराद्यनुप-

---

[1] वायावनुद्भूतरूपाभावविशिष्टमहत्त्वविशिष्टरूपेण रूपप्रत्यक्षापादनस्य कर्तुं शक्यत्वेन वायौ रूपाभावप्रत्यक्षवारणाय प्रतियोगिग्राहकातिरिक्तेति। अनुद्भूतरूपभेदकूटस्यैव प्रत्यक्षजनकतावच्छेदककोटिनिविष्टत्वान्न दोषः। वायवीयाणावुद्भूतरूपसामान्याभावप्रत्यक्षवारणाय पक्षावृत्तीति विशेषणसार्थक्यमवधेयम्।

(द्वै षु)स्थितिदशाया धूमवन्निष्ठाभावप्रतियोगितावच्छेदकत्वतदवच्छिन्नोपलम्भयोग्यापादयितुं शक्यत्वेन तदभावोऽपि प्रत्यक्ष एव । न हि सन्निकृष्टकतिपयदेशातिरिक्तधूमवद्देशानुपस्थित्या शङ्काभावदशायां धूमवदिन्द्रियादिसन्निकर्षदशायां धूमवन्निष्ठाभावप्रतियोगितावच्छेदकत्वाभाववधीर्न जायत इति वक्तुं शक्यते । अनुभवविरोधात् व्यापकताग्रहानुपपत्तिप्रसङ्गाच्च । घटत्वादौ नियतोपस्थितधूमवद्देशान्तरनिष्ठाभावप्रतियोगितावच्छेदकत्वसन्देहनिरासोपयोगितेऽन्यत्वानुपपत्तिरूपतर्कानवतारस्यानुभवसिद्धत्वात् । तथा तादृशावच्छेदकत्वाभावग्रहस्य लिङ्गसन्दाद्यजन्यत्वाल्लौकिकप्रत्यक्षात्मकत्वमेव ।

यद्यपि चक्षुषा धूमादिस्फुरणकाले तन्निष्ठतद्रूपादीनां प्रतिभासावश्यकत्वात् तद्व्यक्तित्वादिरूपधर्मस्य कथं प्रतियोगितावच्छेदकत्वेन भानमिति वक्तुं शक्यते तथापि तेषां प्रतियोगितावच्छेदकाघटकतया धूमांशे स्वातन्त्र्येण भानाङ्गीकारान्न कोऽपि दोषः । अन्यथा घटादिरूपप्रतियोगिसन्निकर्षकाले तद्व्यक्तित्वांशे तत्करीत्या घटसामान्याभावप्रत्यक्षानुपपत्तिः । एवमुपस्थितस्य तदंशे नियमेन भाने जातिमान्घट इति प्रत्यक्षानुपपत्तिश्चेति । परन्तु देशान्तराद्युपस्थितिदशायां तदसन्निकर्षात्तन्निष्ठाभावप्रतियोगितावच्छेदकत्वसन्देहेन सामान्यतो धूमवन्निष्ठाभावप्रतियोगितावच्छेदकत्वसन्देहस्य पूर्वज्ञानाप्रामाण्यज्ञानाहितस्य सम्भवो यदा तदा धूमवन्निष्ठाभावप्रतियोगितावच्छेदकत्वाभावप्रत्यक्षनिश्चयो न जायते । न ह्युत्पन्नघटसामान्याभावप्रत्यक्षनिश्चयवतोऽपि विप्रलम्भकवाक्याहितस्वप्रत्यक्षायोग्यघटसम्भावनया पूर्वोत्पन्नज्ञानाप्रामाण्यसन्देहेन घटाभावप्रत्यक्षनिश्चयो न जायत इत्येतावता घटाभावस्य प्रत्यक्षायोग्यत्वम् ।

दीधितिग्रन्थोऽपि शङ्कादशायां तदभावस्याप्रत्यक्षत्वाभावपरः । एवं 'मूर्तसामान्यतद्वृत्तित्वादिरूपोपाधिसामान्यतद्वतोरत्यन्ताभावान्योन्याभावौ न योग्यौ' इति व्याप्तिग्रहोपायदीधितिवाक्यमुक्ततात्पर्यकमेव । सर्वथा अयोग्यत्वतात्पर्ये तस्यानादरणीयत्वमेव । अनुभवसिद्धेऽर्थे दीधितिविरोधस्याकिञ्चित्करत्वात् , एवं व्याप्तिग्रहोपायटिप्पण्यां प्राचीननैयायिकनये व्यापकतायाः लौकिकप्रत्यक्षविषयत्वस्य गदाधरभट्टैरुक्तत्वाच्च । त्वयापि 'तथा च शिरोमण्याद्युक्तवाक्ये प्रकारत्वादे प्रतियोगित्वानुयोगित्वादिक्लृप्तपदार्थातिरिक्तत्वोक्तिरसङ्गता' इति सामान्यलक्षणाखण्डनप्रघट्टिकास्थवाक्ये बहुषु स्थलान्तरेष्वपि दीधितिश्रद्धाया युक्तिसिद्धार्थे त्यक्तत्वाच्च ।

तथा च देशकालनिष्ठात्यन्तान्योन्याभावप्रतियोगित्वतदवच्छेदकत्वाभावरूपव्यापकत्वस्य लौकिकसाक्षात्कारविषयत्वात्तदाश्रयीभूतानां शशविषाणाद्यभावानां लौकिकप्रत्यक्षविषयत्वात्तत्प्रतियोगित्वाभाववत्तद्भेदरूपसत्त्वं चाक्षुषमेव । न च शशविषाणादीनामसत्त्वेनायोग्यत्वात्कथं तदभावः प्रत्यक्ष । तदुपलम्भापादनायोगादिति वाच्यम् । शशसम्बन्धित्वविशिष्टविषाणत्वजात्याक्रान्तं यदि अत्र स्यात् तर्हि महत्त्वोद्भूतरूपवत्त्वप्राप्त्या उपलभ्येतेत्यापादनसम्भवात् । यदि शशसम्बन्धिमहत्त्वोद्भूतरूपवद्द्रव्यं विषाणत्ववत्स्यात् तर्हि शशसम्बन्धविषाणत्वोभयवत्तयोपलब्धिमत्स्यादित्यापादनयोग्योपलब्धिप्रतियोगिकाभावस्य वा शशविषाणाद्यभावप्रत्यक्षहेतुत्वसम्भवात् । अन्यथा अनुमानादेरप्रयोजकत्वादिशङ्काकुण्ठितत्वेनानिश्चायकत्वात् तत्प्रत्यक्षानङ्गीकारे शशविषाणाद्यभावव-

(द्वे षु) हारस्य सर्वसिद्धस्य विलोपप्रसङ्गात्। न च तादृशशशविषाणाद्यभावीयप्रतियोगिता शशविषाणादिनिष्ठा इन्द्रियसन्निकर्षायोगादयोग्यैवेति कथं तदुपलब्धेरापादनयोग्यतेति वाच्यम्। शशे विषाणारोपानन्तरं शुक्तौ रजतारोपानन्तरं अत्र विषाणं नास्ति शुक्तौ रजतं नास्तीति प्रत्यक्षस्य तव मम च सिद्धत्वेन धर्मीन्द्रियसन्निकर्षादिकं विनैव स्वसन्निकर्षेणैतत्प्रत्यक्षस्य ममाभ्युपगमसम्भवात्। अन्यथा शुक्तिरजतादेर्मिथ्यात्वस्य त्वया प्रत्यक्षविषयत्वं कथितमयुक्तं स्यात्।

न चाभावस्यैव प्रत्यक्षविषयत्वम्। संसर्गमर्यादया भासमाना प्रतियोगिता परमलौकिकसन्निकर्षेणैवावभासते। स्मर्यमाणघटप्रतियोगिकाभावप्रत्यक्षस्थले प्रतियोगिन इव प्रतियोगित्वांशेऽप्यलौकिकविषयताया एवाभ्युपगतत्वात्। तथा च रजतप्रतियोगिकाभावसाक्षात्कारमात्रेण मिथ्यात्वेऽपि प्रत्यक्षत्वव्यवहार इति वाच्यम्। एवमपि सन्निकृष्टघटस्य देशान्तरेऽभावप्रत्यक्षस्थलेऽभावांश इव प्रतियोगित्वांशयोरपि लौकिकविषयतायाः सम्भवेन योग्यवृत्तिप्रतियोगिताया योग्यतया 'घटे यदि देशत्वव्यापकाभावप्रतियोगिता स्यात्तर्हि देशान्तरवृत्त्यभावप्रतियोगितेवोपलभ्येत' इत्यापादनसम्भवेनोक्तप्रतियोगित्वानुपलब्धेरपि योग्यत्वात्। अन्यथा स्तम्भे पिशाचत्वाभावपिशाचभेदौ घटे परमाणुत्वाभावतद्भेदौ च प्रत्यक्षेण न गृह्येयाताम्। पिशाचत्वपरमाणुत्वयोरतीन्द्रियत्वात्। तयोरतीन्द्रियत्वेऽपि योग्यवृत्तिजातिपरिमाणयोर्योग्यत्वमिति सामान्यव्याप्तिबलादेव तयोरुपलम्भापादनोपपादनेऽत्रापि तदुपपादितमेव। न चोक्तस्थले परमाणुभेदतत्त्वाभावयोरनुमितिरेव महत्त्वादिलिङ्गिका। झटिति स्फुटलिङ्गेन जायमानत्वात्तत्र साक्षात्कारत्वभ्रम इति वाच्यम्। पिशाचत्वाभावादिकं न साक्षात्करोमीत्यादिबाधानुदयेऽपि वृथा तस्य भ्रमत्वकल्पने घटादिस्थलेऽप्येवमेव कल्पनापत्त्याऽनुमेय[1]बहिस्तत्त्ववादापत्तेः। भ्रमत्वप्रयोजकदोषकल्पनाप्रयुक्तगौरवापाताच्च। न चेन्द्रियकप्रतियोगिकाभावस्थल एवासदभिमतयोग्यानुपलब्धिसम्भवात्प्रकृते तस्या अयोगेन कारणबाधादनुमितित्वसिद्धौ तत्र साक्षात्कारत्वप्रत्ययस्य भ्रमत्वमुच्यत इति वाच्यम्। अबाधितसाक्षात्कारत्वप्रत्ययेनानुमितित्वानुमानस्यैव बाधितत्वेनास्मदुक्तरीत्यैव फलानुसारेण योग्यानुपलब्धेरुपपादनौचित्यात्। न च पिशाचभेदस्यैव प्रत्यक्षत्वमस्तु। तत्राधिकरणयोग्यतायास्तन्त्रत्वात्। पिशाचत्वाभावस्तु तेनानुमीयत एवेति युक्तम्। विनिगमकाभावेनोभयोरपि प्रत्यक्षत्वात्। तद्धर्मावच्छिन्नभेदस्य तद्धर्माभावरूपतामते तत्प्रत्यक्षस्यावश्यकत्वाच्च।

नन्वेवं तर्हि धर्माधर्मगुरुत्वाद्यभावस्यापि प्रत्यक्षत्वापत्तिः। योग्यवृत्तिगुणस्य योग्यत्वमिति सामान्यव्याप्त्यैव तत्प्रत्यक्षस्यापि आपादनसम्भवात्। न च तत्रेष्टापत्तिः सम्भवति। विष्णुतत्त्वनिर्णयटीकासुधादौ तेषां प्रत्यक्षाविषयत्वस्यैवाभ्युपगतत्वेनेष्टापत्तावपसिद्धान्तापातात्। न च योग्यगुणत्वमात्रं नोपलब्धिविषयत्वव्याप्यम्। गुरुत्वादिप्रत्यक्षानुदयेन व्यभिचारात्। अतो लौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति तादात्म्येन गुरुत्वधर्मादेः प्रतिबन्धकतया तद्भिन्नत्वसहितमेव। तस्य च धर्मादावभावात् कथं तत्रोपलब्ध्यापादनमिति वाच्यम्। तर्ह्यतीन्द्रियभेदस्य

---

[1] बहिस्तत्त्वाभाववादापत्ते इति पाठेन भाव्यमिति भाति।

(द्वै द्यु) प्रत्यक्षसामग्रीनिविष्टतया पिशाचत्वपरमाणुत्वादावपि कथं प्रत्यक्षापादनसम्भव इति चेन्न । यतोऽतीन्द्रियत्वं लौकिकप्रत्यक्षाविषयत्वम् । तदवच्छिन्नस्य तादात्म्येन प्रतिबन्धकत्वमङ्गीकृत्य तदवच्छिन्नभेदस्यैकस्यैव प्रत्यक्ष-सामग्रीशरीरनिवेशे तस्य प्रत्यक्षविषयत्वरूपतया प्रत्यक्षविषयत्वे प्रत्यक्षविषयत्वस्य तदभावे तदभावस्य प्रयोजकत्वा-पत्त्यात्माश्रयापत्त्या गुरुत्वधर्मादीनां तत्त्वेनैव प्रतिबन्धकत्वं कल्पनीयम् । मतान्तरे महत्त्वोद्भूतरूपावच्छिन्नचक्षुः-संयुक्तसमवायरूपसन्निकर्षस्य मनःसंयुक्तसमवायरूपसन्निकर्षस्य नैयायिकनये सिद्धान्ते साक्षिसम्बन्धवादे सत्त्वेऽपि तत्प्रत्यक्षानुदयात् । न चैवं पिशाचत्वपरमाणुत्वादीनां तत्तद्व्यक्तित्वादिना प्रतिबन्धकत्वे बीजमस्ति । आवश्यक-महत्त्वोद्भूतरूपावच्छिन्नचक्षुःसंयुक्तसमवायरूपसन्निकर्षाभावादेव तद्वारणात् । तथा च घटे परमाणुत्वाद्यङ्गीकारे गुरुत्वादिभेदकूटविशिष्टयोग्यवृत्तिगुणत्वादिरूपव्याप्यापादनद्वारकोपलब्ध्यापादनं युक्तमेव । पिशाचादीनां वायवी-यत्वेन रूपाद्यभावेन तदुपलम्भापादनायोगात्तदभावो न प्रत्यक्षः । धर्मिणि प्रतियोगिनश्चैन्द्रियकत्वं न प्रयोजकम् । काले रूपाभावस्य परमाणौ महत्त्वाभावस्य घटे मनस्त्वाकाशत्वाभावादेः प्रत्यक्षसिद्धत्वादित्यादिकं बहुतरमूह-नीयम् ।

यत्तु 'कालस्य चक्षुरयोग्यत्वात्कथं कालघटितोक्तधर्मे लौकिकप्रत्यक्षापादनम्' इति । तन्न । कालस्य साक्ष्युपनीतस्यैव घटादौ भानाङ्गीकारेण तदंशे उपनयात्मकस्यान्यांशे चाक्षुषात्मकस्यैव तादृशसामग्रीबला-दापादनसम्भवेन तदंशे उपनयात्मकस्येतरांशे लौकिकरूपस्योक्तसत्त्वप्रत्यक्षस्य बाधकत्वसम्भवात् ।

ननु तर्हि लौकिकप्रत्यक्षबाधप्रतिज्ञा व्याहन्येतेति वाच्यम् । प्राबाभावांशे लौकिकत्वमात्रस्य प्रतिज्ञात-त्वात् । न हि लौकिकप्रत्यक्ष इत्युक्ते सर्वांशे लौकिकत्वमित्यर्थं पर्यवस्यति । तथात्वे वह्निशैत्यानुमानबाधकस्प-र्शाचप्रत्यक्षस्य वह्नौ शीतस्पर्शाभावावगाहिनः प्रतियोग्यंशे लौकिकत्वाभावात् प्राचां तत्र लौकिकप्रत्यक्षबाधोक्ति-रप्येवं प्रत्याख्येया स्यात् । ननु तर्हि प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणत्वेन लौकिकप्रत्यक्षापादनयोग्यत्व-स्याभावप्रत्यक्षातन्त्रत्वे गुरुत्वविशेषवद्घटत्वावच्छिन्नाभावप्रत्यक्षमपि जायतामिति चेद्गुरुत्वांशे उपनयात्मकस्येतरांशे लौकिकस्य प्रत्यक्षस्यापादनसम्भवेन तादृशतत्प्रत्यक्षापादनस्येष्टत्वात् । अत एव प्रहादौ चक्षुर्व्यापारानन्तरमेव तादृशघटो नास्तीति व्यवहाराविलम्बो युज्यते ।

एतेन पटे घटत्वं नास्तीति लौकिकप्रत्यक्षे घटेतरासमवेतत्वसहितसकलघटसमवेतत्वं न प्रतियोगिताव-च्छेदकतया भासते । सकलघटानामसन्निकृष्टत्वात् । घटेतरमध्येऽतीन्द्रियपरमाण्वादेरपि निविष्टत्वात् । किन्तु घटसमवेतत्वमात्रं भासते' इति परोक्तमश्रद्धेयमेव । उक्तरीत्या विशिष्टघटत्वत्वस्यैव प्रतियोगितावच्छेदकत्वे बाधकाभावेनोक्तकल्पनाया निर्मूलत्वात् । अन्यथा घटसमवेतत्वोपलक्षिताभावप्रतीतौ पटे घटसंयोगकाले घटत्वं नास्तीति प्रत्यक्षानुपपत्तिः । विशिष्टाभावस्यैव प्रत्यये तन्मते घटवत्त्वोपलक्षितघटत्वाभावावगाहिनो घटत्वं नास्तीति प्रत्यक्षस्यापलापापत्तिः । तादृशप्रत्यक्षानन्तरं घटत्वातिरिक्तघटसमवेतत्वविशिष्टवान्न वेत्यनुभूयमानसंशयानुप-पत्तिश्च ।

(द्वै सु) ननु प्रतियोगितावच्छेदकधर्माश्रयमात्रे आपाद्यमानोपलब्धिप्रतियोगिकाभावमात्रस्य तद्धर्मावच्छिन्नाभावप्रत्यक्षहेतुत्वे दण्डोपलक्षितपुरुषवति दण्डविशिष्टपुरुषाभावप्रत्यक्षानुपपत्तिः। तत्रेष्टापत्त्या दण्डाश्रयपुरुषप्रत्यक्षस्यापादनायोगेनापाद्यमानत्वयोग्योपलब्धिप्रतियोगिकाभावासत्त्वादिति चेन्न। विशेषणतया तद्धर्मावच्छिन्नाभावप्रत्यक्षे विशेषणविशेष्यघटितविशिष्टस्यैवापादनयोग्योपलब्ध्यभावस्य हेतुता। उपलक्षणविधया तद्धर्मावच्छिन्नाभावप्रत्यक्षे तद्धर्मोपलक्षिते आपादनयोग्योपलब्ध्यभावस्य हेतुत्वमित्यङ्गीकारेण सर्वसामञ्जस्यात्। 'घटत्वत्वेन घटत्वाभावो न प्रत्यक्षः' इति दीधित्युक्तेरपि विशिष्टाभावाभिप्रायकत्वात्। प्रकृतसत्त्वरूपाभावप्रतियोगितावच्छेदकीभूतदेशकालादिघटितधर्मस्योपलक्षणविधयैव तथात्वाङ्गीकारात् प्रकृते न कोऽपि दोषः।

यद्वा स्वदेशकालयोः सन्निकृष्टत्वात्तन्निष्ठाभावप्रतियोगित्वाभावग्रहणमात्रेण मिथ्यात्वधीर्विरुद्ध्यते।

ननु यावन्तो देशकालादयस्तत्तन्निष्ठात्यन्ताभावप्रतियोगित्वकूटं मिथ्यात्वम्। तादृशकूटत्वावच्छिन्नाभावसत्त्वमिति पक्षो न सङ्गच्छते। तादृशकूटत्वावच्छिन्नस्य युगसहस्रेणापि दुर्ग्रहत्वापत्तेः। किन्तु देशकालत्वव्यापकाभावप्रतियोगित्वमेव। तत्र देशकालविशेषनिष्ठाभावप्रतियोगित्वाभावस्य बुद्धिः कथं विरोधिनी। स्वदेशकालव्यक्तेर्मिथ्यात्वशरीरे तत्त्वेन तद्व्यक्तित्वेनानिविष्टतया तस्योक्ताभावप्रतियोगित्वाभावादिति चेन्न। वह्नौ पर्वतत्वव्यापकाभावप्रतियोगित्वबुद्धिं प्रति नात्र पर्वते वह्न्यभावः किन्तु वह्निरेवेति प्रत्यक्षस्य वह्नित्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छेदेन तद्व्यक्तित्वपर्वतत्वोभयरूपवत्पर्वतवृत्त्यभावप्रतियोगि[1]त्वमवगाहत इवात्रापि तद्व्यक्तित्वकालत्वदेशत्वाद्युभयरूपेण देशकालावगाहिन इदानीं घटः, नायं कालो घटाभाववान्, नेदानीं घटाभावः, अयं देशो घटवान्, नात्र घटाभावः, नायं घटाभाववानिति सर्वसाक्षिसिद्धसाक्षात्कारस्य घटाभावत्वावच्छेदेन तादृशदेशकालनिष्ठाभावप्रतियोगित्वावगाहिनस्तादृशव्यापकताग्रहप्रतिबन्धकधिया पक्षे साध्यग्रहप्रतिबन्धकत्वे विवादस्य सचेतसामनुचितत्वात्। एवञ्च पर्वतत्वावच्छेदेन वह्न्यभावावगाहिनीं वह्निः पक्षनिष्ठाभावप्रतियोगीत्यादिबुद्धिं प्रति पर्वतो वह्निमान् वह्निः पर्वतवृत्तिरिति ज्ञानस्य प्रतिबन्धकताया पक्षतादीधित्यादिसम्मततया इदानीं घटः, अत्र घटः, अयं देशो घटवानिति लौकिकप्रत्यक्षस्य घटादेः देशकालसम्बन्धरूपसत्त्वावगाहिन एव मिथ्यात्वग्रहविरोधित्वेऽनुपपत्त्यभावेन देशसम्बन्धरूपसत्त्वस्योक्तमिथ्यात्वाविरोधित्वोक्तेरद्वैतसिद्धिकारीयाया असङ्गतत्वमेव। वर्तमानदेशकालसम्बन्धावगाहिप्रतीतेर्मिथ्यात्वग्रहविरोधिताया न्यायामृतोक्ताया ब्रह्मानन्देन यदसम्भवदुक्तिकत्वमभिहितम्, यदपि 'स्वदेशकालवृत्त्यभावप्रतियोगित्वाभावनिश्चयस्य कालत्वव्यापकाभावप्रतियोगित्वरूपमिथ्यात्वग्रहविरोधित्वं नीलघटाभावनिश्चयस्य घटवत्ताबुद्धिं प्रतीव' इति, यच्च तेनैव 'तथाप्यभ्युपेत्य समाधत्ते' इत्यवतारितं, 'स्वदेशकालनिष्ठाभावप्रतियोगित्वत्वस्याप्यतीन्द्रियाभावीयप्रतियोगितासाधारणतया तदवच्छिन्नाभावोऽपि न प्रत्यक्षः' इति अद्वैतसिद्धिकारीयं दूषणं तदप्ययुक्तमेवेति ध्येयम्।

---

[1] त्वावगाहिन इवात्रापि इति पाठेन भाव्यमिति भाति।

(द्वै सु) ननु प्रतीतदेशकालयोर्निषेधविषयो यो घटाभावस्तदन्यस्य घटाधिकसत्ताकस्याभावान्तरस्य सत्त्वात् तद्घटितमिथ्यात्वस्यैतद्देशकालसम्बन्धावगाहिप्रतीत्याऽनिषिद्धत्वात्कथं तस्य मिथ्यात्वग्रहविरोधित्वं युक्तमिति चेन्न। महानसीयवह्निग्रहे वह्नित्वावच्छिन्नाभावग्रहस्य वह्नित्वावच्छेदेन पर्वतनिष्ठाभावप्रतियोगित्वग्रहस्यैवोक्तस्य देशकालत्वव्यापकाभावप्रतियोगित्वरूपमिथ्यात्वस्य ग्रहं प्रति विरोधित्वे विवादायोगात् विरोध्यन्यूनसत्ताकत्वस्य सामग्र्यां निविष्टत्वेपि तद्घटितमिथ्यात्वग्रहे देशकालसम्बन्धग्रहोऽप्युक्तरीत्या विरोध्येव। ननु अभावान्तरग्रहयोक्तग्रहेऽत्र प्रामाण्यबुद्धिर्जायत इति चेत् जगन्मिथ्यात्वनिश्चयात्प्राङ्निर्मूलतादृशशङ्काया एवानुदयात्।

ननु देशकालसम्बन्धस्यैव सत्त्वरूपतापक्षे कथं सत्तायां सत्ता स्वयमेव भासत इति स्वरूपाभ्युपगमे आत्माश्रयप्रसङ्गात्स्वरूपतो भानायोगाच्चेति चेन्न। देशकालसम्बन्धरूपजनेर्जन्यत्वान्तरास्वीकारेण तस्य प्रमेयत्वादिवत्स्वाश्रितत्वस्य स्वांशे स्वरूपतो भानस्य चाभ्युपगमे क्षतिविरहात्। सप्तपदार्थनियमवादिनैयायिकनये सामान्यत्वादीनामाधेयत्वादिरूपाणां स्वांशे स्वरूपतो भानस्य सिद्धत्वेन तथाङ्गीकारसम्भवात्।

ननु मिथ्यात्वाभावरूपसत्त्वपक्षे घटादिप्रतीतेः प्राक् नियमेनोक्तनिषेधप्रतियोगित्वाभावप्रतियोगिस्फुरणस्य भावात्कथं घटावगाहिप्रत्यक्षसामान्यस्य सत्तावगाहित्वम्। तदनङ्गीकारे च विधिनिषेधावबोधप्रतीत्यर्थे इति सिद्धान्तानुपपत्तिरिति चेन्न। अनुभवबलादेव तादृशनियमस्य स्वीकृतत्वेन तद्बलादेव पूर्वं प्रतियोग्युपस्थितिनैयत्यस्यापि कल्पयितुं शक्यत्वात् उक्तनियमस्य कालदेशसम्बन्धरूपसत्त्वविषयकत्वघटितत्वेन वा सामञ्जस्यात्।

एवं त्रिकालाबाध्यत्वमव्याकृताकाशकालसुखादेः साक्षिणैव गृह्यते। कालस्य साक्षादेव साक्षिप्रत्यक्षविषयत्वात्कालांशेऽप्यपरोक्षत्वम्। न च स्वसम्बद्धसर्वभासकत्वात्साक्षिणः कथं भाविकालभासकत्वम्। अन्यथा भाविसुखस्यापीदानीं प्रत्यक्षतापत्तिरिति वाच्यम्। सर्वेषामुत्तरकालानुसन्धानस्य विद्यमानत्वात्तदाकारे साक्षिरूपताया व्यवस्थापितत्वात्साक्षिप्रत्यक्षं भाविविषयकमेव। परन्तु भाविकालं भावित्वेनैव विषयीकरोति। ननु तथापि तत्कालीनबाध[1]प्रमानुत्पत्त्यभावस्येदानीं निश्चयायोगात्कथं बाधप्रमाविषयत्वावच्छिन्नाभावः साक्षिभास्य इति चेन्न। न ह्यध्यक्षग्राह्यं सत्त्वं बाधप्रमाविषयत्वाभाव इत्यस्माभिरुक्तम्। येनेदं दूषणं सङ्गतं स्यात्। किन्तु कालत्वव्यापकात्यन्ताभावप्रतियोगित्वाभावादिरूपं कालसम्बन्धादिरूपं च। तस्येन्द्रियग्राह्यत्वं भाविकालाद्यनुपस्थितावप्युपपादितमेव।

तर्हि भाविकालस्य साक्षिवेद्यत्वं किमर्थं प्राचीनैरुपपादितमिति चेत्। सर्वकालस्यापि साक्षिवेद्यत्वे बाध्यत्वकालव्यक्तयस्तत्तद्व्यक्तिघटितबाध्यत्वाभावकूटमपि गगनादेः साक्षिसिद्धं भवति। तेन न कदापि तत्र बाध्यत्वशङ्का लोकानामिति रीत्या घटादितो विशेषबोधनाय तदुक्तिसम्भवात्।

---

[1] प्रमोत्पत्त्यभावस्य इति पाठेन भाव्यमिति भाति।

(द्वै. यु ) यत्तु 'प्रमात्वावच्छिन्नं प्रति मनस्त्वेन कारणत्वान्मनोवृत्त्यात्मकज्ञानमेव प्रमा । अविद्योपहिता वाऽविद्यावृत्त्युपहिता वा चित्साक्षी । तस्य च न प्रमात्वम् । अविद्यानिवर्तकत्वाभावेनानधिगततथाभूतार्थावगाहित्वरूपप्रमात्वायोगात्' इति । तन्न । साक्षिणो वेदवन्नित्यत्वेनाप्रामाण्यप्रयोजकदोषशून्यत्वेनाप्रामाण्यायोगात् ।

ननु भवन्मते वेदत्याद्ययोग्यस्वरूपज्ञानस्यानादित्वेऽपि भ्रमत्ववदत्रापि किं न स्यादिति चेन्न । अनादियोग्यतास्यदोषविशेषबलेन क्षेमसाधारणप्रयोजकत्वस्य तत्र तत्राचार्योदाहृतप्रमाणसिद्धत्वात् । भवन्मते तथात्वे प्रमाणाभावात् ।

किं चाविद्याया एव तत्र दोषविधया प्रयोजकत्वेऽविद्या लब्धसत्ताका प्रयोजिका भवेन्नान्यथा । तथात्वे शशविषाणादेरपि प्रयोजकत्वापत्तेः । तथा चाविद्याया साक्षिण्यध्यस्ततयैव सत्ता वाच्या । साक्षिणस्तद्विषयकत्वमविद्या विना न घटत इति स्फुटमितरेतराश्रयः । किञ्च साक्षिनिष्ठविषयीकरणशक्तिरविद्याधीना बाधितार्थविषयीकरणशक्तिर्वा । नाद्यः । तस्या दोषत्वोक्तेरसङ्गतेः । स्वाभाविक प्रमात्व प्रतिबध्य भ्रमत्वप्रयोजकस्यैव दोषपदार्थत्वात् । विषयीकरणस्यैव साक्षिणः स्वतोऽभावे घटादिवन्निर्विषयके विषयीकरणशक्त्याधायकस्य स्वाभाविकप्रमात्वतिरस्कारकत्वाभावात् । मन्मते चायोग्यतायाश्चेतनस्वभावसिद्धप्रमात्वं प्रतिबध्य प्रकारांशे भ्रमत्वनिर्वाहकतया दोषत्व युज्यते । न द्वितीय । मानाभावात् ।

किञ्चाविद्याया विषयीकरणांशे अविद्यात्वेन बाधितार्थविषयकत्वरूप यद्भ्रमत्व तस्मिन्विषयिताया बाधितार्थनिरूपितत्वपर्यवसन्ने च प्रयोजकत्व स्वीकर्तव्यमिति गौरवमिति तस्य विषयीकरणमात्रांशे प्रयोजकत्वमस्तु । असङ्गश्रुतिबलेनासङ्गतया सिद्धस्य स्वभावेन इतरविषयीकरणरूपससर्गायोगात् । तथा च तद्विषयीभूतस्य सुखाद्यबाधितत्वस्य कुतो बाधितत्वम् ।

किञ्च साक्षिज्ञानस्य किञ्चिदंशे प्रमात्व स्वीक्रियते उत सर्वांशे भ्रमत्वम् । नाद्यः । स्वाभाविकप्रमात्वाभावेन किञ्चिदंशे तथात्वे बीजाभावात् । तावतापि मदभिमते सुखादिस्वरूपे तत्सत्त्वांशे च प्रमात्वेऽपि सुखादेः स्वस्वामिकत्वाद्यंशे भ्रमत्वसम्भवेन मदिष्टाहानेः । न द्वितीय । शुद्धं न जानामीत्याकारकस्य शुद्धचिदवच्छिन्नाज्ञानविषयकसाक्षिप्रत्यक्षस्य शुद्धचिदंशेऽपि बाधितार्थविषयकत्वरूपभ्रमत्वापत्त्या शुद्धचितोऽपि बाधितत्वापत्तेः । न च शुद्धत्वोपहितस्यैव तद्विषयत्वात्तस्य मिथ्यात्वात् भ्रमत्व युक्तमेवेति वाच्यम् । मिथ्याभूतस्य तस्याज्ञाना विषयतयाऽज्ञानस्य तदवच्छिन्नतया भानानुपपत्तिः । उपहितविषयतायाः शुद्धेऽप्यङ्गीकारे शुद्धांशे साक्षिण प्रमात्व दुर्वारमेव ।

एव तत्त्वमस्यादिवाक्यजन्यशुद्धचिन्मात्रविषयकज्ञानग्राहकसाक्षिणा शुद्धचितोऽपि ज्ञानावच्छेदकतया गृहीतत्वात्तदंशे प्रमात्व दुर्वारम् । न च तदंशे साक्षिणाऽज्ञानानिवृत्तेर्न प्रमात्वमिति वाच्यम् । तावताऽप्यस्मदभिमतस्याबाधितार्थविषयकत्वस्य साक्षिज्ञानेऽव्याहतेः । न च स्वरूपमात्रविषयकस्य निर्विकल्पकत्वेनातीन्द्रिय-

(द्वै.सु.) त्वात्कथं तदादाय दूषणाभिधानमिति वाच्यम् । अनादिभूतस्य ब्रह्मसम्बन्धस्य सत्त्वेन परेषां नैयायिकादीनामिव तदतीन्द्रियत्वे बीजाभावात् । धर्मादिवद्योग्यत्वकल्पने गौरवात् अनेकसत्त्वानुसरणं च । साक्षिणोऽप्रामाण्येऽपि-कदूषणान्याकरेऽनुसन्धेयानीत्यलम् ।

तस्मात्साक्षिण प्रामाण्यात्तद्गृहीतं गगनादिसत्त्वमबाधितमेव । एवं घटादावप्यबाधितत्वं तज्ज्ञानप्रामाण्यग्राहकेण साक्षिणा गृह्यते । अबाधितार्थविषयकत्वस्यैव प्रामाण्यत्वात् । व्यवसायविषयस्य बहिःपदार्थस्य साक्षिणा मानायोगाद्घटादिप्रत्यक्षस्याबाधितत्वादिरूपसत्त्वावगाहित्वमसिद्धम् ।

नन्वत्यन्ताबाध्यार्थावगाहित्वरूपं प्रामाण्यं न घटादिज्ञाने स्वीक्रियते । शुक्तिरजतादिज्ञानव्यावृत्तं व्यवहारकालाबाध्यार्थावगाहित्वमेव । तज्ज्ञानेनैव प्रवृत्त्यादिसम्भवात् । तस्य च प्रामाण्यघटकतया व्यवहारकालाबाध्यत्वविषयीकरणेऽपि नात्यन्ताबाध्यत्वसिद्धिरिति चेन्न । किं व्यवहारकालाबाध्यार्थावगाहित्वमेव सर्वत्र प्रामाण्यं क्वचिदत्यन्ताबाध्यार्थावगाहित्वमपि । नाद्यः । ब्रह्मस्वरूपमात्रपरवेदप्रामाण्यानुरागात् ब्रह्मणोऽत्यन्ताबाध्यत्वासिद्धिप्रसङ्गात् । न द्वितीयः । अपौरुषेयत्वेनाप्रामाण्यप्रयोजकदोषाभावसाम्ये सति प्रमाणभूतस्य वेदस्य मध्ये कस्यचिदात्यन्तिकप्रामाण्यं कस्यचिदापेक्षिकं प्रामाण्यमिति वैषम्यायोगात् । ब्रह्मपरवाक्यं प्रधानं धर्मादिपरवाक्यमप्रधानवाक्यमिति चेत् । तर्ह्यप्रधानवाक्यस्य प्रधानवाक्यापेक्षया न्यूनप्रामाण्यं, तच्च तदर्थापेक्षया न्यूनसत्ताकार्थघटितत्वमेवेति प्राप्तम् । बाढमिति चेन्न । तथात्वे प्रयाजादिवाक्यानां प्रधानयागवाक्यापेक्षया न्यूनप्रामाण्यापत्त्या प्रयाजादीनां प्रातिभासिकत्वापत्तेः । धर्मादिवाक्यानां निषेधप्रतियोगिसमर्पकतया ब्रह्मवाक्येनैकवाक्यतापन्नतया ब्रह्मरूपविषयेणैवैतेषामपि मुख्यप्रामाण्यमस्तीति चेन्न तर्हि निषेधप्रतियोगिसमर्पकतया अनुवादकवाक्यस्य स्वार्थसत्तातात्पर्यायोगात् धर्मादीनामसिद्ध्याऽनुष्ठानाभावापत्तेः ।

एवं ब्रह्मज्ञानवृत्तिप्रामाण्यं साक्षिणा गृह्यते न वा । नेति पक्षे तत्प्रामाण्यासिद्धिप्रसङ्गः । वेदत्वकत्वादिलिङ्गानां धर्मादिज्ञाने व्यवहारकालाबाध्यत्वादिघटितप्रामाण्यव्याप्यतयैवोपलब्धत्वेन तैरात्यन्तिकप्रामाण्यासिद्धेः । केवलव्यतिरेकिलिङ्गान्तराणामप्रयोजकत्वात् । आद्ये निष्प्रकारब्रह्मज्ञाने ब्रह्मांशेऽबाधितत्वादेरुक्तमर्यादया भानायोगात्त्रिकालाबाध्यत्वस्य साक्षादेव साक्षिभास्यत्वस्यावश्यं वक्तव्यतया त्रिकालाबाध्यत्वस्य साक्षिवेद्यत्वं न घटत इति मां प्रति दूषणोक्त्यसङ्गतिः ।

एवं व्यवहारकालाबाध्यत्वघटितप्रामाण्यं घटादिज्ञाननिष्ठमिति तावद्विवेक्तव्यम् । घटादिव्यवसायाधिकरणकालव्यक्तिमात्रघटितं उत निखिलब्रह्मज्ञानप्राक्कालघटितम् । नाद्यः । तथात्वे घटादिज्ञानप्रामाण्यग्रहणोत्तरमपि उत्तरकालबाध्यत्वशङ्कया प्रवृत्त्युच्छेदापत्तेः । न द्वितीयः । साक्षिणो वर्तमानकालमात्रग्राहितायास्त्वदभ्युपगतत्वेन प्रामाण्यग्रहणसमयबाध्यत्वाभावग्रहणमात्रसम्भवेऽपि तदुत्तरकालिकतत्प्रवृत्त्यधिकरणसमयाबाध्यत्वग्रहणायोगादुत्तरकालबाध्यत्वशङ्कया प्रामाण्यग्रहणोत्तरमपि निष्कम्पप्रवृत्त्यनुपपत्तेः । प्रथमकल्पस्य शुक्तिरजतज्ञानसाधारण-

(द्वै॰ बु॰) तथा द्वितीयपक्षस्य यावद्ब्रह्मज्ञानमसञ्जातबाधभ्रमविषयप्रातिभासिकज्ञानसाधारणतयोक्तप्रामाण्यस्य शुक्ति-रजतादिज्ञानव्यावृत्तत्वोक्त्ययोगश्च ।

एतेन 'ब्रह्मज्ञानेतराबाध्यत्वघटितमेव घटादिज्ञानप्रामाण्यम्' इत्यप्यपास्तम् । अज्ञातब्रह्मणा पामराणां प्रामाण्यग्रहणायोगात्प्रवृत्त्यनुपपत्तेश्च । व्यवहारकालबाध्यत्वस्याप्यतीन्द्रियाभावादिप्रतियोगिताघटितत्वेन त्वद्रीत्या योग्यत्वाभावेन तदभावस्य प्रत्यक्षाविषयत्वोपनयायोगात्साक्षिणा ग्रहणायोगश्च ।

तस्मान्निष्कम्पप्रवृत्त्याद्यनुरोधात्त्रिकालाबाध्यत्वव्यवसायेन साक्षात्साक्षिणा च प्रामाण्यघटकतया घटादौ गृह्यते । गगनादौ च साक्षात्प्रामाण्यघटकतयाऽपीत्यवश्यमभ्युपेयमिति ।

यत्त्वत्राद्वैतचन्द्रिकोक्तम् 'अज्ञातमिथ्यात्वघटादिविषयकत्वमेव प्रामाण्यं स्वतो ग्राह्यं प्रवर्तकम्' इति तत्तु प्रागेव दूषितम् ।

यत्त्वर्वाचीनेन शास्त्रारम्भसमर्थनाख्यप्रकरणेऽभिहितं 'न चैव सिद्धान्ते स्वतो ग्राह्यप्रामाण्यं दुर्वचम् । तद्वति तदवगाहित्वस्यैव तत्त्वात् । न च [1]भ्रमसाधारण्यापत्तिः । इष्टत्वात् । न च भ्रमत्वग्रहणानन्तरमपि प्रवृत्त्याद्यापत्तिः । व्यावहारिकरजतार्थिनः प्रातीतिकत्वेन ज्ञाते तत्र प्रवृत्त्ययोगात् । व्यावहारिकं रजतं कटकादिरूपार्थक्रियाकारितयेष्यते । तत्र तदभावनिश्चयान्न प्रवृत्तिः । न च शुक्तितात्पर्यमिदं रजतमिति वाक्यमपि प्रमाणं स्यादिति वाच्यम् । प्रमाणं स्यादित्यत्रेष्टापत्तेः । न चेद् वाक्यमस्मिन्नर्थे प्रमाणमिति व्यवहारापत्तिः । प्रपदस्य तद्वति तत्प्रकारकत्वरूपप्रकर्षद्योतकत्वे तद्घटितप्रमापदयोगार्थमादाय तादृशव्यवहारस्येष्टत्वात् । परेषां स्मृतिकारणे तादृशव्यवहारवत् अग्निर्हिमस्य भेषजमिति वाक्ये तादृशव्यवहारवच्च । अनधिगतब्रह्मज्ञानेतराबाध्यविषयकत्वरूपप्रकर्षविवक्षया तु न तादृशव्यवहारः सम्भवति । सर्वज्ञानयाथार्थ्यस्य भास्करीयादिभिरुक्तत्वात्तन्मत इव उक्तोपाधिनियतस्य तादृशव्यवहारस्य भ्रमत्वेनोपगतज्ञानकरणे मन्मतेऽपीष्टत्वात् । भ्रमत्वव्यवहारश्च बाध्यत्वाधीनः' इति ।

तन्न । यतः बाधानुभव इदं प्रातीतिकं रजतमित्याद्याकारो वा नात्र रजतं नेदं रजतमित्याद्याकारो वा । आद्ये प्रातीतिकत्वं नाम सत्ताविशेषो वा ब्रह्मज्ञानेतरबाध्यत्वं वा बाध्यत्वसामान्यं वा । नाद्यः । सत्ताविशेषस्य लोकानामननुभवात् । इदं प्रातीतिकमिति ज्ञानेऽपि तत्र व्यवहारिकत्वविरोधनिश्चयात् प्राक् प्रवृत्त्यापत्तेर्दुर्वारत्वात् । न हि सर्वेषां घटत्वपटत्वादिवत् तयोर्विरोधनिश्चयः आवश्यको येनोद्बुद्धसंस्कारसत्त्वादेव न प्रवृत्तिरिति वक्तुं शक्येत । तत्स्वरूपस्यैव त्वत्सिद्धान्तानुसारिभिन्नैरज्ञातत्वात् । अन्यथा घटत्वादाविवाद्वयोर्विवादायोगात् । न द्वितीयः । [2]बाधानुत्पत्तेः प्राक् बाध्यत्वग्रहायोगात्तस्य चाक्षुषत्वानुपपत्तेश्च । बाधग्रहे भासमानस्य रजतभ्रमनिवर्तकधर्मस्यावश्यवक्तव्यतापाताच्च । सर्वेषां ब्रह्मज्ञानरहितानां ब्रह्मज्ञानेतरत्वघटितधर्मस्य भानायोगाच्च । नापि तृतीयः । चरमदूषणातिरिक्तानां द्वितीयकल्पोक्तनिखिलदोषाणामेव सत्त्वात् । नापि नात्र रजतमिति विकल्पितपूर्वोक्त-

---

[1] भ्रमप्रामाण्यापत्तिः इति पाठान्तरम् । [2] बाधोत्पत्तेः प्राक् इति पाठेन भाव्यमिति भाति ।

(द्वै. यु) कत्वमात्र भ्रमत्वव्यवहारनियामक चेत् बाधकाल एवेद ज्ञान वाक्य वा प्रमणमप्रमाणं चेति व्यवहारप्रसङ्ग । सर्वैरपि त्वदतिरिक्तैर्लौकिकैर्वैदिकैरपि तद्वाक्यस्याप्रमाणत्वेन व्यवहृतत्वेन सर्वानुभवविरुद्धे तत्प्रमाणत्वे त्वदिष्टापत्तेरयोगेन तादृशव्यवस्थाया अयोगात् । अन्यथाऽतिप्रसङ्गात् ।

एव परोक्षेऽन्यथाख्यात्यभ्युपगमपक्षे एकस्या शुक्तौ यस्य रजतापरोक्षभ्रमोऽन्यस्यानुमित्यादिरूप परोक्षस्तदुभयोच्चरितस्य इद रजतमिति वाक्यस्य समानार्थकतया सर्वानुभूयमानस्य प्रमाणत्वाप्रमाणत्वे स्याताम् । एकनिष्ठस्य व्यवहर्तव्यज्ञानस्य प्रमात्वादपरनिष्ठस्यान्यथाख्यातित्वात् इति लोकानुभवयुक्त्यादि विरुद्धत्वेनैव सर्वज्ञानयाथार्थ्यवादिमतस्य त्वयाऽपि त्यक्तत्वेन तद्विरुद्धार्थस्वीकारे तद्दृष्टान्तीकरणानौचित्य चेति दिक् ।

तस्मादाधुनिकोक्तस्यात्यन्तासङ्गतत्वात्त्रिकालाबाध्यार्थावगाहित्वरूपप्रामाण्य स्वतो ग्राह्यमङ्गीकार्यमिति तद्ग्राहकेण साक्षिणा घटादौ त्रिकालाबाध्यत्व अवश्यं गृहीतमित्यभ्युपेयमिति ।

यत्तु 'सर्वदेशकालीननिषेधप्रतियोगित्वमपि साक्षिवेद्यत्वायोग्यम् । अत एव मन्मते [1]तद्रूपस्य मिथ्यात्व साक्षिवेद्यमङ्गीक्रियते । अतस्तदभावस्य सत्यत्वस्य प्रत्यक्षविषयत्वम्' इति तरङ्गिण्यभिप्रेतमनूद्य ब्रह्मानन्देनोक्तं 'सर्वदेशेत्यादिकं स्वपित्रादीन्प्रत्येव वाच्यम् । यादृशाभावो हि तार्किकादीना प्रत्यक्षस्तस्यैव त्वया साक्षिभास्यतया मा प्रति वाच्यत्वात् । अन्यथाऽतिप्रसङ्गात् । तार्किकादिवाच्यं तूक्तमेव' इति तत्तु स्वशिष्येभ्योऽपि न रोचते । पूर्वं तत्प्रत्यक्षस्य निपुणतरमुपपादितत्वेन तार्किकानङ्गीकृतत्वस्याप्रयोजकत्वात् । अन्यथा तार्किकानभ्युपगतं जगन्मिथ्यात्वसामान्यलक्षणाखण्डनसाक्षिरूपेन्द्रियतत्प्रत्यक्षविषयीभूतशुक्तिरूप्यमिथ्यात्वादिपदार्थसार्थमभ्युपगच्छतस्तव प्रायश्चित्तकरणप्रसङ्गात् । अप्रामाणिकाभ्युपगमनस्यैवातिप्रसञ्जकत्वेन नैयायिकानङ्गीकृतार्थाङ्गीकारस्यातिप्रसङ्गासम्पादकत्वेनान्यथेत्यादेरसङ्गतत्वाच्च । ननु

झडित्येव परिज्ञानान्न लिङ्गोद्भवता मता ।
अभावोऽनुमा प्रत्यक्षं च । परामर्शापरामर्शविशेषात् ।

इत्यादिभिर्विष्णुतत्त्वनिर्णयप्रमाणलक्षणादिग्रन्थैर्योग्यानुपलब्धेरभावप्रत्यक्षकारणत्वाभावावगमात् कथमत्राभावप्रत्यक्षोपपादनाय योग्यानुपलब्धेरवश्यमुपपादनं कृतमिति चेत् तादृशग्रन्थेन प्रत्यक्षसामग्रीशरीरे तादृशयोग्यानुपलब्धिग्रहस्य निवेश एव निराकृतः । प्रत्यक्षविषयीभूताभावत्व प्रति योग्यस्वप्रतियोग्यनुपलब्धिकत्व व्यापकमिति तु न निराकृतम् । तत्र बाधकाभावात् । अतो व्यापकाभावादुक्तनिषेधप्रतियोगित्वाभावो न प्रत्यक्षविषय इति शङ्कानिरासाय प्रकृते योग्यानुपलब्ध्युपपादनं युक्तमेवेति ।

इदमिहावधेयम् । सकलदेशकालसम्बन्धि[2]निषेधाप्रतियोगित्वरूपसद्विलक्षणत्वघटितसाध्यानुमाने स्वात्यन्ताभावसमानाधिकरणत्वरूपमिथ्यात्वानुमाने चोक्तसत्यत्वावगाहिप्रत्यक्षं ग्राह्याभावावगाहितया साक्षाद्विरोधीत्य-

---

[1] तद्रूपं इति पाठेन भाव्यमिति भाति ।  [2] निषेधाप्रतियोगिरूपसद्विलक्षणत्व इति पाठेन भाव्यमिति भाति ।

(द्वै.सि.) विवादम् । सत्प्रकारकधीविषयत्वाव्यापकत्वसत्ताभावप्रतियोगित्वज्ञाननिवर्त्यत्वादिरूपमिथ्यात्वग्रहे च मणि-मन्त्रादिवत्स्वातन्त्र्येण वा तदभावव्याप्यत्वेन गृहीतत्वया वा तदभावोपस्थापकत्वेन वा विरोधित्वम् । हेतुव्यापक-त्वादिघटितव्याप्तिज्ञानेष्वेकविषयव्यभिचारग्रहस्य साक्षाद्विरोधित्वमन्येषां मुक्तरीत्यैवेति ध्येयम् । सामान्यलक्षणास्वरूपं त्वसदिष्टमेव । परन्तु सादृश्यसहकृतचक्षुषाऽतीतानागतधूमविज्ञानं न यत इति सिद्धान्तोऽस्ति । अनुमानं विना तस्यान्यथोपपादनमद्वैतसिद्धयादौ कृतम् । ननु ग्रन्थगौरवभयादुक्तानां प्रकृतानुपयोगाच्च नेह निरूप्यते । कण्टकोद्धारादित एव तदवमेयम् ।

(गु. टि.) ॥ विषयभेदादिति ॥ समानविषयकत्वस्य विरोधे प्रयोजकत्वेन तदभावे विरोधानुपपत्तेरिति भावः ॥ कथन्तरामिति ॥ प्रबलदुर्बलयोरेव बाध्यबाधकभावस्य सिद्धत्वात्तदभावे न बाध्यबाधकभावः । अन्यथा विपरीतबाध्यबाधकभावस्यापि प्रसङ्गादिति भावः । ननु सदिति प्रतीतेः सत्ताग्राहित्वे अनुमानविरोधिविषयक-त्वेपि अप्राबल्येन न बाधकत्वम् । प्राबल्यानिरूपणात् । न च धर्मिग्राहकत्वेन प्राबल्यमिति वाच्यम् । स्तम्भो-यमित्यादिधर्मिग्राहकप्रतीते सत्तानवगाहित्वेन विरोधित्वस्यैवाभावात् इत्यतस्तुत्या सत्तावगाहित्वमुपपादयति ॥ यद्यपीत्यादिना ॥ स्तम्भोयमिति प्रतीते स्वरूपमात्रविषयत्वेन न सत्तावगाहित्वम् । अन्यथा सदित्यादिप्रतीतेरिव सत्तावगाहित्वेन पदार्थस्वरूपमात्रगोचरायाः स्तम्भोयमित्यादिप्रतीते सत्तानवगाहित्वात् तस्या अपि सदित्येवमा-कारत्वस्यैव प्राप्त्या स्तम्भोयमित्याकारत्वाभावप्रसङ्गादिति भावः । परिहरति ॥ तथापीति ॥ न सत्तां व्यभि-चरति सत्तावगाहिनीत्यर्थः । तत्र हेतुमाह ॥ स्तम्भादीनां सद्विशेषत्वादिति ॥ विशेषविषयकप्रतीतेः सामान्यविषयकत्वादिति भावः । तर्हि मूलकारीयं स्तम्भोयमितिप्रतीतिपरित्यागेन सदितिप्रतीतिपर्यन्तानुधावन-मनर्थकमित्यत तत् स्तम्भोऽयमितिप्रतीतेर्न सत्तानवगाहित्वनिमित्तकम् । किन्तु उपपादनानपेक्षसदितिप्रतीतेर्बाध-कत्वसम्भवे किं तत्सापेक्षस्तम्भोयमितिप्रतीत्युपन्यासेनेत्यभिप्रायेणैवेति तथा योजयति ॥ अस्ति चेति ॥ सदिति-व्यवहारनिर्वाहिका सत्त्वप्रकारिका प्रतीतिरप्यस्तीत्यर्थः ।

## विश्वमिथ्यात्वादिसाधकानुमानागमयोः प्रत्यक्षबाध्यत्वसमर्थनम्

(टी.) तथापि बाध्यत्वं कुत इति चेत् । इत्थम् । स्तम्भादिकं हि प्रत्यक्षसिद्धमाश्रित्यानुमानं प्रवर्तते । अन्यथाऽऽश्रयहीनताप्रसङ्गात् । तथा चोपजीव्यत्वेन बलवत्प्रत्यक्षं कथमुपजीवकत्वेन दुर्बल-मनुमानं सति विरोधे न बाधेत । एतेन वाचारम्भणं, नान्योऽतोऽस्ति द्रष्टेत्यादिश्रुतयोऽपि निरस्ताः । तासामपि हि विषयसमर्पकत्वेन प्रत्यक्षमुपजीव्यमिति ।

(वि. टि.) ॥ तथापीति ॥ उक्तरीत्या विरोधिविषयत्वेपि अधिकबलवत्त्वे प्रमाणाभावाद्वैपरीत्यापत्तेश्चेति भावः । अनुमानापेक्षितपक्षादिग्राहकत्वेनोपजीव्यत्वेन प्राबल्यात्प्रत्यक्षस्य बाधकत्वमुपपद्यत इति परिहरति ॥ इत्थमिति ॥ उपजीव्यत्वेनेति ॥ साक्षात् परम्परया वा यदुत्थानं विना यदुत्थानं न सम्भवति तत्तस्योप-

(वि टि) जीव्यमिति भाव ॥ विषयसमर्पकत्वेनेति ॥ निषेध्यसमर्पकत्वेनेत्यर्थ । इदमुपलक्षणम् । स्वरूपग्राहित्वस्य जन्यज्ञानप्रामाण्यग्राहित्वादिनेत्यपि द्रष्टव्यम् ।

(रा टि) ॥ बाध्यत्व कुत इतीति ॥ विरोधितयोक्तप्रत्यक्षस्य प्राबल्यानिरूपणादिति भाव ॥ अनुमानमिति ॥ मिथ्यात्वसाधकानुमानमित्यर्थ ॥ उपजीव्यत्वेनेति ॥ धर्मिग्राहकतयेति योज्यम् । वाचारम्भण विकारो नामधेयमिति श्रुत्या प्रत्यक्षेण गृहीतं विकारशब्दितं घटादिकमनूद्य 'यो विकार स वाचारम्भणं वागालम्बनमात्रं मिथ्या इति यावत्' इत्यर्थवर्णनात् 'द्रष्टा जीव अतो ब्रह्मत अन्यो नास्ति' इत्यर्थकथनात् द्रष्ट्रादेश्च भेदेन सत्त्वेन च ग्रहणादुपजीव्यत्वाच्च तद्बाधितत्वेन निरस्ता इत्यर्थ । कथमुपजीव्यतेत्यत आह ॥ तासामपीति ॥ विषयेति ॥ अनुवाद्येत्यर्थ ।

(वे. टि) परमतानुवादावसरे जगन्मिथ्यात्वे भेदमिथ्यात्वे चोदाहृता श्रुतयोऽपि न परेष्टसाधनक्षमा इत्याह ॥ एतेनेति ॥ विषयसमर्पकत्वेनेति ॥ धर्मिग्राहकत्वेनेत्यर्थ । प्रत्यक्षसिद्धविकारादिकमनूद्य तस्य वागालम्बनमात्रत्वादिविधानादिति भाव ।

(द्वै बु.) ॥ तथापीति ॥ प्रत्यक्षविरोधसद्भावेऽपीत्यर्थ । बाध्यत्व तद्विरोधेन स्वार्थावगाहिप्रमानुमित्यजनकत्वम् । बाधकत्वमिति पाठे प्रत्यक्षस्येति शेष । प्रमाजननशक्तिविघटकत्वमित्यर्थ । कुत इति प्रश्ने । प्रबलप्रमाणस्यैव बाधकत्वात्प्रमाणत्वसामान्येन प्रत्यक्षप्राबल्ये बीजाभावादिति भाव ॥ आश्रयहीनताप्रसङ्गादिति ॥ पक्षादिज्ञानाभावप्रसङ्गादित्यर्थ. । यथाश्रुते मिथ्यात्वरूपसाध्यं प्रति पक्षहीनताया उपपादकतया नेदमनिष्टमिति परास्तम् ॥ न बाधेतेति ॥ निरस्ता इति ॥ यथाश्रुतार्थात्पराभिप्रेतात्प्रच्याविता इत्यर्थ । उपजीव्यविरुद्धार्थे आगमस्यापि प्रामाण्यायोगादिति भाव । आगमस्वरूपस्य श्रावणप्रत्यक्षग्राह्यतया तज्जन्यज्ञानप्रामाण्यस्य साक्षिग्राह्यतया प्रत्यक्षस्यागमोपजीव्यत्व बोध्यम् । प्रकारान्तरमप्याह ॥ विषयसमर्पकत्वेनेति ॥ उद्देश्यसमर्पकत्वेनेत्यर्थ । प्रत्यक्षसिद्धविकारजातमनूद्य वाचारम्भणत्वादिविधानात् प्रत्यक्षसिद्धत्वपदार्थमनूद्य तत्पदार्थाभेदविधानादिति भाव ।

(गु. टि) ॥ अन्यथेति ॥ प्रत्यक्षसिद्धत्वम्भावनाश्रयणे आश्रयहीनताप्रसङ्गादिति न्यायमतमाश्रित्योक्तम् । स्वमते तददूषणत्वस्य

आश्रयसाध्यव्यधिकरणासिद्धयो न दूषणम् । अतिप्रसङ्गाभावात् ।
आश्रयव्याश्रयासिद्धी साध्यासिद्धिश्च दूषणम् ।
केषाञ्चिन्न च ते दोषाः ॥

इत्यादिना प्रमाणलक्षणादावाचार्यैस्तददूषणत्वस्य समर्थितत्वादिति ध्येयम् । ॥ विषयसमर्पकत्वेनेति ॥ धर्मिग्राहकत्वेनेत्यर्थ । प्रत्यक्षसिद्धं विकारादिकमनूद्य तस्य वागालम्बनतादेर्विधातव्यत्वादिति भाव ।

(टी) नन्वस्तु प्रत्यक्षं प्रपञ्चसत्तागोचरम् । तथाप्यनुमानागमाभ्यामेव बाध्यताम् । तयोर्निरवकाशत्वात् । न हि व्याप्तिपक्षधर्मतावदनुमानं शक्यते स्वविषयात् प्रच्यावयितुम् । नाप्यागमोऽपौरुषेयत्वात् । उपक्रमादिभिरेवावगततात्पर्यत्वाच्च । प्रत्यक्षं तु सम्भावितदोषमप्रमाणमपि भवितुं युक्तम् ।

न चोपजीव्योपजीवकत्वन्यायविरोधः । अभिसर्पणाद्यभावलिङ्गेन नायं सर्प इत्याद्याप्तवाक्येन चोपजीवकेनापि निरवकाशेन सावकाशस्योपजीव्यस्यापि सर्पभ्रमस्य बाधदर्शनात् । तत्रेदन्तामात्रमुपजीव्य प्रवर्तनाददोष इति चेत् तर्हि प्रकृतेऽपि तथास्त्वित्यत आह

(वि टि.) ननु भवतु प्रत्यक्षमुपजीव्यम् । तथापि न प्रबलम् । सावकाशत्वात् । अनुमानागमौ तूपजीवकत्वेऽपि प्रबलौ । निरवकाशत्वात् । किञ्चोपजीवकत्व न बाधकत्व तन्त्रम् । उपजीव्यस्यापि रज्जुसर्पादिज्ञानस्यानुमानाप्तवाक्यबाध्यत्वदर्शनादिति शङ्कते ॥ अस्त्विति ॥ निरवकाशत्व क्रमेणोपपादयति ॥ न हीत्यादिना ॥ स्वार्थात्प्रच्यावन अन्यविषयत्वकल्पनम् । न च तदनुमाने आगमे च सम्भवति । व्याप्तिपक्षधर्मतावत्त्वात् अपौरुषेयत्वेन भ्रमप्रमादादिदोषाजन्यत्वात्प्रमिततात्पर्यकत्वाच्चेत्यर्थ । ननु रज्जुसर्पभ्रमस्योपजीव्यत्वेऽपि अनुमानाप्तवाक्याभ्या बाध इत्ययुक्तम् । यद्विषयत्वेन तस्योपजीव्यत्व तदशे बाधाभावात् । पक्षज्ञानतया अनुवाद्यविषयतया वा इदमशविषयत्वावच्छेदेनैव तस्योपजीव्यत्वादिति शङ्कते ॥ तत्रेति ॥ प्रकृतेऽपीति ॥ 'नान्योऽतोऽस्ति द्रष्टा' इति भेदनिषेधकश्रुतावपि 'नाहमीश्वर' इत्यादिप्रत्यक्षस्यानुवाद्याहमर्थविषयत्वावच्छेदेनैवोपजीव्यत्वम् । न भेदविषयत्वेनेति श्रुतेर्भेदनिषेधकत्वमुपपन्नमिति भाव । यद्यपि निषेध्यरज्जुसर्पजीवपरभेदविषयत्वेनाप्युपजीव्यत्व प्रत्यक्षस्याविशिष्टम् । निषेध्याज्ञाने निषेधज्ञानासम्भवात् । तथापि निषेध्यज्ञान प्रमाणान्तरेणापि सम्भवतीति शङ्कितुर्हृदयम् ।

(रा टि.) उपजीव्यस्यापि निरवकाशेनोपजीवकेन बाधदर्शनात् प्रत्यक्षानुमानयोरपि विपरीत एवास्तु बाध्यबाधकभाव इति निरवकाशतामनुमानादेरुपपादयन्नाह ॥ नन्वस्त्वित्यादिना ॥ बाधशब्दार्थमाह ॥ स्वविषयात्प्रच्यावयितुमिति ॥ बाधितुमित्यर्थ । अस्य वाक्यस्याग्रेप्यन्वय ॥ अभिसर्पणेति ॥ रज्जौ सर्पभ्रमे सति पश्चात् नायं सर्प अभिसर्पणदंशनफणोन्नयनादिशून्यत्वादिति लिङ्गेन बाधदर्शनादित्यन्वय ॥ उपजीवकेनेति ॥ भ्रमार्पितविषयोपजीवनादिति भाव ॥ सावकाशस्येति ॥ अप्रमाणतयेति भाव· ॥ उपजीव्यस्येति ॥ निषेध्यविषयार्पकतयेति योज्यम् । नन्विद रजतमित्यत्र द्वावशौ । तत्र यदशे उपजीव्यता न तदशेऽनुमानादिबाध· । यद्रूप्यांशे बाधः तदशे च नोपजीव्यता । अत उक्तन्यायस्य न व्यभिचार इति भावेन सिद्धान्ती शङ्कते ॥ तत्रेदन्तामात्रमिति ॥ पूर्वपक्षी उत्तरमाह ॥ तर्हि प्रकृतेति ॥ घटपटादिधर्म्यंशमात्रमुपजीव्य मिथ्यात्वानुमानादे प्रवृत्तिरस्तु । न सत्त्वाशमुपजीव्येत्यर्थ ।

(वे. टि.) निरवकाशत्वं क्रमेणोपपादयति ॥ न हीत्यादिना ॥ बाधदर्शनादिति ॥ तथा च प्राबल्ये बाधकत्वे चोपजीव्यत्वं न प्रयोजकम् । अपि तु निरवकाशत्वमेवेति भाव. । ननु यदंशे उपजीव्यत्व न तस्य बाध्यत्वम् । यदंशे च बाध्यत्वं न तस्योपजीव्यत्वम् । धर्मिरूपेदमंशविषयकमेव प्रत्यक्षमुपजीव्यानुमानागमप्रवृत्तेरित्याशयेन शङ्कते ॥ तत्रेति ॥ प्रकृतेऽपीति ॥ सन् घट इत्यादिप्रत्यक्षेपि धर्म्यंशविषयकत्वावच्छेदेनैव मिथ्यात्वानुमानाऽगमोपजीव्यत्वम् । न तन्निषेध्यसत्तांशविषयत्वावच्छेदेनापीति भाव । यद्यपि निषेध्याज्ञाने निषेधज्ञानायोगादिति निषेध्यांशेप्युपजीव्यता । तथापि निषेधमात्रोच्छेदापत्त्या निषेध्यसमर्पकतयोपजीव्यत्व न बाधकत्वे प्रयोजकम् । अपि तु सति विरोधे धर्म्यंशग्राहकतयोपजीव्यत्वमेव । प्रकृते तु धर्म्यंशप्रत्यक्षस्योपजीव्यत्वेप्यविरोधान्न बाधकत्वमिति भाव ।

(द्वै धु) निरवकाशत्वात् अप्रामाण्यप्रयोजकदोषशून्यत्वेन प्रमाणतया निश्चितत्वादित्यर्थ. ॥ न्यायविरोध इति ॥ तद्रूपयुक्तिविरोध प्रत्यक्षप्रामाण्यस्यानुमानागमप्रामाण्यस्य चेत्यर्थ । उपजीव्यविरुद्धार्थे उपजीवकमप्रमाणमिति व्याप्तेरपि बलवत्त्वादिति भाव । व्यभिचाराद्व्याप्तिरेव नास्तीत्याह ॥ अभिसर्पणाद्यभावलिङ्गेनेति ॥ उपजीवकेनापीति ॥ सर्पभेदरूपसाध्योपस्थितिं प्रति प्रतियोगिज्ञानसमर्पकतयेदपदार्थरूपोद्देश्यसमर्पकतया चानुमानागमौ प्रति प्रत्यक्षमुपजीव्यम् । एतावुपजीवकाविति भाव । अनुमाने निरवकाशत्व व्याप्तिपक्षधर्मतोपेतत्वम् । आगमे त्वाप्तवाक्यत्वादिना दोषशून्यत्वम् । उभयत्राप्रामाण्यप्रयोजकदोषशून्यत्वेन निश्चितत्व निरवकाशत्वम् । तेन रूपेणानिश्चितत्व सावकाशत्व बोध्यम् ॥ इदन्तामात्रेति ॥ केचित्तु मात्रपदेन सर्परूपप्रतियोग्यंशस्य तत्तादात्म्यस्य रज्जुनिष्ठस्य च पराभिप्रेतमुपजीव्यत्व व्यवच्छिन्दन्ति ॥ अदोष इति ॥ उपजीव्योपजीवकप्राबल्यदौर्बल्यन्यायस्य न पूर्वोक्तव्यभिचार इत्यर्थः । अय भाव । यज्ज्ञानं यज्ज्ञानकारण तज्ज्ञानविषयीभूतार्थविरुद्धार्थावगाहिकार्यज्ञानस्य न प्रामाण्यमिति न नियम. । भवदुक्तस्थल एव व्यभिचारात् । नापि यद्रूपावच्छिन्नविषयतानिरूपितयन्निष्ठविषयत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदिका या विषयता सा तस्मिन् तद्विपरीतार्थावगाहिताघटितप्रमात्वघटिका न भवतीति वा व्याप्ति । वह्न्यभाववद्ध्रदकालीनपर्वतपक्षकवह्न्यनुमितेर्व्याप्तिशरीरे वह्निना ह्रदावगाहिपरामर्शादप्युत्पन्नतया तत्रत्यविषयताया तस्मिंस्तदभावबुद्धिं प्रति तस्मिंस्तदारोपस्य कारणतामते अभावप्रमीयविषयताया व्यभिचारात् । किन्तु यादृशविषयिताघटितधर्मावच्छिन्नजनकताकयादृशज्ञाननिष्ठप्रामाण्यं प्रति जनकतावच्छेदकीभूतयादृशविषयिताघटितप्रामाण्यं स्वावच्छिन्नोपाधेयत्वसम्बन्धेन व्यापक तादृशविषयितानिरूपकविशिष्टार्थस्तद्रूपावच्छिन्न प्रत्युपजीव्य इत्युच्यते तद्विपरितार्थविषयकत्वांशे प्रामाण्याभाववत्तादृशं ज्ञानमिति व्याप्तिरभिमता । अनुमितिनिष्ठप्रामाण्यं प्रति पक्षताच्छेदकविशिष्टविषयताघटितप्राराण्य व्यापकम् । उक्तसम्बन्धेन लिङ्गोपधानमते तु व्याप्तिविशिष्टहेतुमत्ताघटितमपि प्रामाण्यं व्यापकम् । परामंस्याप्रामाण्येऽनुमितौ पक्षांशे विशिष्टलिङ्गावगाहित्वांशे प्रामाण्यस्य दुर्लभत्वापत्ते । तथा च तादृशानुमितौ ानकतावच्छेदकीभूतपरामर्शीयविषयतानिरूपकविशिष्टार्थविपरीतार्थे प्रामाण्याभावोऽपि वर्तत एव ।

(द्वै षु) ननु पर्वतत्वेन ह्रदावगाहिपरामर्शात्पर्वतत्वेन ह्रदावगाहिन्यनुमितिर्जायते। तत्र वास्तववह्नेरेव भानाद्वह्नित्वघटितप्रामाण्य वर्तते। एवं वह्नित्वेनान्यावगाहिपरामर्शात् तदंशे भ्रमात्मकं पर्वतांशे प्रमात्मकमप्यनुमितिस्वरूप जायते। तथा च धूमादिविषयिताघटितधर्मावच्छिन्नजनकताकधूमपरामर्शोत्तरानुमितित्वावच्छिन्न प्रति पर्वतत्वादिघटितमनेन क्रमेण धूमत्ववह्नित्वादिघटित वा किमपि प्रामाण्य व्यापकमुक्तसम्बन्धेन न भवति। एवमेवोक्तरीत्या भ्रमप्रमोभयात्मके रक्तदण्डवान् पुरुष इत्यादौ प्रत्यक्षे शाब्दबोधे च तत्तत्कारणीभूतग्रहनिष्ठतत्तद्धर्मघटितप्रामाण्यस्योक्तसम्बन्धेन व्यापकताभङ्गान्न कुत्रापीय व्याप्तिरुपपादयितु शक्येति चेन्न।

व्याप्यकोटौ [1]प्रामाण्यस्य भ्रमभिन्नत्वस्य विवक्षितत्वात्। पूर्वोक्तानुमितीना किञ्चिदंशे भ्रमत्वात्। शुद्धप्रमात्मकानुमितौ कारणनिष्ठ प्रामाण्यं उक्तसम्बन्धेन वर्तत एवेति न व्यापकताभङ्ग। न चैवमपि कूटलिङ्गादेवाज्जायमानयथार्थानुमितौ भ्रमभिन्नत्वसत्त्वेऽपि कारणज्ञानवृत्तिप्रामाण्यस्योक्तसम्बन्धेनाभावाद्व्यभिचार इति वाच्यम्। लिङ्गभेदेन कारणताभेदात्तादृशज्ञानाव्यवहितोत्तरानुमितित्वं प्रति लिङ्गव्याप्त्यादिविषयताघटितप्रामाण्यस्य व्यापकत्वाभावेऽपि पक्षतावच्छेदकसाध्यतावच्छेदकादिविशिष्टविषयकत्वघटितप्रामाण्यस्य व्यापकत्वानपायेन तदादायैवोपपादनसम्भवात्। लिङ्गोपधानमतेऽनुमितौ विशिष्टलिङ्गभाननैयत्येन कूटलिङ्गजन्यानुमितौ भ्रमभिन्नत्वाभावाच्च। लिङ्गानुपधानमते यादृच्छिकसवादिभिन्नत्वस्य व्याप्यकोटौ निवेशनीयत्वात्।

यद्वा ज्ञाने दोषाप्रयोज्यत्वमेव भ्रमभिन्नत्व विहाय निवेश्यते। स्वसमानाधिकरणाभावप्रतियोग्यवच्छिन्नविषयताप्रयोजकत्वप्रमानुकूलशक्तिविघटकत्वज्ञानानुकूलसहजशक्त्यतिरिक्तशक्त्याधायकत्वादिना केनचिद्रूपेणानुगतीकृत्य दोषा निवेश्या। यादृच्छिकसवादिस्थले कूटपरामर्शादिरूपदोषनिष्ठप्रमाविघटनशक्तेस्तत्तत्कालतददृष्टतत्तद्विषयविशेषविषयकत्वादिरूपयदृच्छाबलेन कुण्ठीभावाङ्गीकारेण प्रमोत्पत्तावपि तत्रान्यत्र तज्जातीयस्थलान्तरानुरोधेन क्लृप्तप्रमाया विद्यमानत्वात्तेषा दोषत्वात् तत्प्रयोज्यत्वस्य तत्प्रयोज्यानुमितौ सत्त्वान्न तस्य व्याप्यकोटौ निवेश.। तथा च दोषाप्रयोज्ययादृशरूपावच्छिन्नज्ञानत्व जन्यज्ञानत्वं वा प्रति स्वविशिष्टोपधेयतासम्बन्धेन यादृशरूपावच्छिन्नविषयताघटितप्रामाण्यं व्यापक तद्रूपविशिष्टमुपजीव्य तद्विरोध्यर्थविषयताघटितप्रमात्वाभावस्तादृशज्ञानत्वस्य व्यापक इति पर्यवसितम्। प्रतियोग्यारोपस्याभावप्रमा प्रति हेतुत्वेऽपि अधिकरणांशे प्रतियोगिप्रकारकत्वघटितप्रामाण्याप्रसिद्ध्या तस्योक्तसम्बन्धेन तादृशाभावप्रमात्व प्रत्यव्यापकत्वान्न व्यभिचार. कल्पद्वयस्य। अत्रोपजीव्यत्वशरीरे व्यापकत्वानिवेशे घटवद्भूतलादिरूपसमूहालम्बनरूपपरामर्शजन्यानुमितौ घटत्वावच्छिन्नघटितोक्तप्रामाण्यस्योक्तसम्बन्धेन सत्त्वात्तद्रूपावच्छिन्नस्य तादृशानुमित्युपजीव्यत्वव्यवहारापत्ति। अतो व्यापकत्वनिवेश·। तथा चेदत्वावच्छिन्ने सर्पभेदावगाहिनि भ्रमभिन्ने दोषाजन्ये वा ज्ञानसामान्ये इदंत्वघटितप्रामाण्यविशिष्टस्य ज्ञानस्य धर्मितावच्छेदकनिर्णयविधया पूर्वं सत्त्वात्तद्रूपावच्छिन्नस्योपजीव्यत्वम्। तद्विरुद्धार्थघटितप्रामाण्याभावोऽप्युत्तरतादृशज्ञानेषु वर्तते। इदपदार्थे सर्पतादात्म्यघटितप्रामाण्यस्याप्रसिद्ध्या सर्पभेदावगाहिज्ञानत्वं प्रत्यव्यापकत्वान्न

---

[1] प्रामाण्यज्ञाने इति पाठेन भाव्यमिति भाति।

(द्वै यु.) तस्योपजीव्यत्वमिति तद्विरुद्धार्थे प्रामाण्येऽपि न क्षतिः । सर्पत्वप्रकारकप्रामाण्यमपि न व्यापकम् । सर्पत्वभ्रमोत्तरमपि सर्पत्वप्रकारकज्ञानमात्रात्सर्पभेदावगाहिप्रमोत्पत्तेः । अतस्तस्याप्यनुपजीव्यत्वम् । इत्थं चेदत्वमात्रमुपजीव्येत्युक्तिर्युक्ता । अन्यथा मात्रार्थबाधापत्तेः ।

ननु सर्पत्वप्रकारकभ्रमोत्तरं कथं सर्पभेदप्रमोत्पत्तिः । प्रतियोगितावच्छेदकप्रकारकज्ञाने सर्पत्वेन भासमानस्यैवात्र भेदांशे प्रतियोगितया भानात् । वास्तवस्य लौकिकसन्निकर्षविधुरत्वाज्ज्ञानसन्निकर्षस्यापि तत्राभावादिति चेन्न । भ्रमजनकतया सर्पत्वेन सर्पस्मृतेरावश्यकतया भ्रमोत्तरपरीक्षादिदशायामपि तद्विषयकोद्बुद्धसंस्कारादेः सत्त्वाङ्गीकारेण तद्बलादेव वास्तवसर्पस्य भेदांशे प्रतियोगितया भानसम्भवात् । तर्हि सर्पत्वविशिष्टस्याप्युक्तोपजीव्यत्वसत्त्वान्मात्रपदेन तद्व्यावर्तनमयुक्तमिति न वाच्यम् । भ्रमविषयेषु मध्ये इदन्त्वविशिष्टमात्रमुपजीव्येति हि तत्पदार्थः । वास्तवसर्पस्य भ्रमाविषयत्वेन तदव्यावर्तनात् ।

यद्वा यद्रूपावच्छेद्यत्वविशिष्टविषयता अनाहार्यज्ञानीययादृशविषयताघटितधर्मावच्छिन्नं प्रति जनकतावच्छेदिका तादृशविषयताघटितधर्मावच्छिन्नं प्रति तद्रूपावच्छिन्नमुपजीव्यमित्युच्यते । तद्रूपविशिष्टार्थविरुद्धविषयकत्वघटितप्रामाण्यमुपजीवकस्य नास्तीति नियमः । प्रतियोग्यारोपस्याभावबुद्धिकारणत्वेऽपि तादृग्ज्ञानस्याऽऽहार्यत्वनियमात्तादृशप्रतियोगिरूपरूपविशिष्टस्याप्रसिद्ध्या च न तस्योपजीव्यत्वप्रसक्त्याऽभावप्रमाया व्यभिचारः । एवञ्च प्रतियोगिज्ञानमुद्रया सर्पज्ञानस्य कारणत्वेऽपि तस्य सर्पत्वप्रकारताशालिज्ञानत्वेनैव कारणतया तदवच्छेद्यत्वविशिष्टविषयतायास्तादृशानुमितिशाब्दबोधादिजनकतावच्छेदककोट्यप्रवेशान्न तदवच्छिन्नस्योपजीव्यत्वम् । इदन्त्वावच्छिन्नविषयताघटितरूपेण परामर्शयोग्यताज्ञानादेः कारणत्वात्तदवच्छिन्नस्योपजीव्यत्वम् । यद्यपि सर्पत्वावच्छेद्यत्वविशिष्ट[1] विषयाऽपि परामर्शयोग्यताज्ञानादिनिष्ठजनकतावच्छेदककोटिप्रविष्टत्वात्तदवच्छिन्नस्याप्युपजीव्यत्वं दुर्वारं तथापि विषयतायाः प्रतियोगितासम्बन्धानवच्छिन्नरूपाया मुख्यविशेष्यतारूपाया वा विवक्षणान्न दोषः ।

॥ तर्हि प्रकृतेऽपीति ॥ उक्तरीत्या निष्कर्षकरणेन व्यभिचारोद्धारे नास्माकं काचित् क्षतिः । घटत्वादिविशिष्टविषयताया एव परामर्शयोग्यताज्ञानादिनिष्ठजनकतावच्छेदकतया सत्ताविषयतायास्तत्रानिवेशात् उक्तपरामर्शादीनां घटादिसत्ताविषयकत्वनियमाभावेन तद्घटितप्रामाण्यस्य पूर्वोक्तसम्बन्धेन प्रमानुमितित्वव्यापकत्वाद्यभावाच्च न तस्योपजीव्यत्वम् । अतस्तद्विरुद्धार्थे मिथ्यात्वबोधकानुमानागमाना न तत्र प्रामाण्याभाव इति भाव इत्याहुः ।

वस्तुतो मात्रपदमुक्ततादात्म्यमात्रव्यवच्छेदकम् । यदंशे प्रमाणभूतयज्ज्ञानं प्रति यस्य ज्ञानस्य यद्विषयकत्वेन कारणता तदर्थस्य तदसत्त्वापादकाभाव इति नियमः । भ्रमस्य च धर्मिज्ञानविधयेदंविषयकज्ञानत्वेन प्रतियोगिज्ञानमुद्रया सर्पज्ञानत्वेनेदपदार्थे सर्पभेदज्ञानं प्रति कारणत्वम् । तादृशसर्पभेदः सामान्यतो न सर्पपदार्थस्य इदंपदार्थस्य चासत्त्वापादकः । किन्तु तदुभयतादात्म्यस्यैव । तद्विषयकज्ञानत्वेन तु न कारणत्वमिति भावः । मिथ्यात्वानुमानं प्रत्यपि घटादिरूपजगद्विषयकपरामर्शत्वेनैव कारणत्वम् । न तु तदंशे पारमार्थिकत्वरूपसत्त्व-

[1] विषयताया अपि इति पाठेन भाव्यमिति भाति ।

(द्वै ग्रु ) विषयकत्वेन । अतो जगति पारमार्थिकत्वरूपसत्त्वमसर्गसत्त्वापादनेऽपि न क्षति प्रकृतनिबन्धस्येत्याह ॥ तर्हीति ॥ इति व्याख्यान रमणीयम् ।

यद्यपि घटत्वादिधर्मविशिष्टमुपजीव्यानुमानागमप्रवृत्तावप्युपजीव्यविरोधो दुर्वार । घटादीना मिथ्यात्वे घटत्वादिधर्मवैशिष्ट्याद्ययोगात् । तथापि शशविषाणादिपक्षकमिथ्यात्वानुमितेर्यथा शशविषाणादिस्वरूपमात्रज्ञाना दुत्पत्ति । प्रामाण्य च धर्मधर्मिसम्बन्धेषु सर्वत्र मिथ्यात्वावगाहि त्वात् । तद्वत् प्रकृतेऽपि घटत्वादीनां सद्धर्मत्वानङ्गीकारादित्यभिप्राय ।

(गु टि.) निरवकाशत्वमनुमानागमयो क्रमेणोपपादयति ॥ न हीत्यादिना ॥ प्रत्यक्षस्याप्रमाणत्वे हेतुमाह ॥ सम्भावितदोषमिति ॥ पौरुषेयत्वादिति भाव ॥ बाधदर्शनादिति ॥ तथा चोपजीव्यत्व न प्राबल्ये प्रयोजकमिति न तेनानुमानागमबाध इति भाव । ननु यदंशे उपजीव्यत्व न तदंशे बाध्यत्व, यदंशे च बाध्यत्वं न तदंशे उपजीव्यत्वम् । प्रत्यक्षसिद्धेदन्तामात्रोपजीवनेनानुमानादे प्रवृत्तत्वात् अनुमानादिक प्रति उक्तप्रत्यक्षस्य तत्प्राप्तेदन्तामात्रांशे उपजीव्यत्वेपि तदंशे बाध्यत्वाभावात् तत्प्राप्तरजतत्वांशे बाध्यत्वेपि उपजीव्यत्वाभावात् वैषम्येण नैतत्प्रतिबन्दीग्रहणमत्र युक्तमिति शङ्कते ॥ तत्रेदन्तामात्रेति ॥ एवमपि सन् घटः इत्यादिप्रत्यक्षस्य धर्मिग्राहकतया तन्मिथ्यात्वानुमानादिक प्रति धर्म्यंशे उपजीव्यत्वेपि तदंशे बाध्यत्वाभावात् सत्तांश एव बाध्यत्वेपि तदंशे उक्तप्रत्यक्षस्यानुपजीव्यत्वात् अवैषम्येण युक्त प्रतिबन्दीग्रहणमित्याशयेन परिहरति ॥ प्रकृतेपीति ॥ यद्यपि निषेध्यांशे अस्त्येवोपजीव्यत्व तथापि निषेधमात्रोच्छेदापत्त्या तन्न बाधकत्वे प्रयोजकम् । किन्तु सति विरोधे धर्मिग्राहकतया उपजीव्यत्वमेव तथेत्यभिप्रायेणेदमुक्तम् ।

### प्रत्यक्षस्यानुमानादिभ्यः प्राबल्यसमर्थनम्

## (टी.) न च प्रत्यक्षसिद्धमन्येन केनापि बाध्यं दृष्टम्

स्यादेतदेवम् । यदि प्रत्यक्षमात्रसिद्धमपि प्रत्यक्षादन्येन केनाप्यनुमानेनागमेन वा बाध्यं दृष्टं स्यात् । न चैतदस्ति । दूरे तूपजीव्यप्रत्यक्षसिद्धम् ।

सर्पभ्रमादेरपि बलवता प्रत्यक्षेणैव विषयापहारः । नानुमानागमाभ्याम् । अनुमानेनैव प्रत्यक्षबाधने कालातीतस्य दोषता वा त्याज्या । व्यवस्था वा वक्तव्या । आप्तवाक्यान्निवर्तनेऽपि तन्मूलप्रत्यक्षेणैव बाधः ।

अत एव नायं सर्प इत्युक्ताः प्रतिवक्तारो भवन्ति । किं भवानेवं पश्यत्येवमेव वा वक्तीति । अन्यथा यजमानः प्रस्तर इत्यादिवाक्यानां प्रत्यक्षविरोधेन स्वार्थप्रच्यावनं त्याज्यम् । व्यवस्था वा कल्प्या । प्रत्यक्षन्तु परीक्षितमपरीक्षितस्य बाधक भविष्यति । तदिदमुक्तमन्येनेति ।

(वि टि.) ननु प्रत्यक्षस्योपजीव्यत्वेन प्राबल्यं प्रागभिहितम् । 'न च प्रत्यक्षसिद्धम्' इति मूले तु सामान्यनिर्देशेन प्रत्यक्षत्वजात्यैव प्राबल्यं न तु प्रकारान्तरेणेति । अत कथं न तद्विरोध इत्याशङ्क्य कैमुत्य न्यायप्रदर्शनपरतया सामान्यनिर्देशोपपत्तेर्न तद्विरोध इति व्याचष्टे ॥ स्यादेतदिति ॥ बलवतेति ॥ विशेषदर्शनानन्तरभाविपरीक्षितप्रत्यक्षेणेत्यर्थः । प्रत्यक्षस्य प्रमाणान्तराबाध्यत्वे साधकमुक्त्वा तद्बाध्यत्वे बाधकमप्याह ॥ अनुमानेनैवेति ॥ व्यवस्थेति ॥ प्रत्यक्षमग्न्यनौष्ण्यानुमानस्थल एव बाधकं न त्वन्यत्रेत्यत्र नियामकं वा वक्तव्यमित्यर्थः । ननु स्वस्य 'नायं सर्पः' इति प्रत्यक्षाभावेऽपि तादृशाप्तवाक्याद्बाधोऽनुभवसिद्ध इति कथं प्रत्यक्षस्य मानान्तराबाध्यत्वमित्यत आह ॥ आप्तेति ॥ तन्मूलप्रत्यक्षेणैवेति ॥ यद्यप्याप्तवाक्यमूलभूतप्रत्यक्षस्य निवर्त्यं भ्रमव्यधिकरणत्वाद्व्यवजिहीर्षादिना नष्टत्वाच्च न तस्य भ्रमनिवर्तकत्वं सम्भवति तथापि भ्रमसमानाधिकरणज्ञानजनकवाक्यप्रयोगहेतुत्वसम्बन्धेन सामानाधिकरण्यसत्त्वात् व्यवजिहीर्षादिरूपव्यापारद्वारा भ्रमनिवृत्तिकाले सत्त्वोपपत्तेश्चैतादृशस्यापि प्रत्यक्षस्य भ्रमबाधकत्वमुपपन्नम् । न च व्यवजिहीर्षादीनां व्यापारत्वे शाब्दप्रतीतेरपि व्यापारत्वापत्त्या अवधारणानुपपत्तिरिति वाच्यम् । तद्गतबाधकत्वस्यापि तादृशप्रत्यक्षाधीनत्वेन तदुपपत्तेः । दृश्यते हि भृत्यपीडितेऽप्यमात्ये राजैवायं पीडित इत्युक्तिरिति भावः ॥ अन्यथेति ॥ प्रत्यक्षस्य शब्दबाध्यत्व इत्यर्थः । तन्मूलभूतप्रत्यक्षेणैव भ्रमस्य बाध इत्ययुक्तम् । प्रत्यक्षत्वाविशेषेण वैपरीत्यापत्तेः । न च मूलभूतप्रत्यक्षमेव परत्वाद्बाधकमिति वाच्यम् । कचित्पूर्वस्यापि बाधकत्वदर्शनादित्यत आह ॥ प्रत्यक्षन्त्विति ॥

(रा टि.) ॥ प्रत्यक्षमात्र इति ॥ उपजीव्यत्वादिहीनप्रत्यक्ष इत्यर्थः ॥ सिद्धमिति ॥ बाध्यं स्यादित्यनुकर्षः । ननूक्तं भ्रमसिद्धः सर्पादिर्बाध्यो दृष्ट इति तत्राह ॥ सर्पेति ॥ बलवत्प्रत्यक्षेणेति ॥ नेदं रूप्यमिति प्रत्यक्षं सयुक्तिकत्वेन बलवदिति योज्यम् । विपक्षे बाधकेनानुमानाबाध्यत्वमाह ॥ अनुमानेनैवेति ॥ व्यवस्था वेति ॥ प्रत्यक्षमात्रं नानुमानादिबाध्यम् । उपजीव्यं तु सुतरां न बाध्यम् । प्रत्युत बाधकमेवेत्येवं व्यवस्थेत्यर्थः । प्रतिज्ञातामागमाबाध्यतां च व्यनक्ति ॥ आप्तवाक्यादिति ॥ सर्पभ्रमादेरित्यनुकर्षः । ननु भ्रान्तेर्निवर्तमानो न मूलप्रत्यक्षं ज्ञात्वा निवर्तेत इत्याह ॥ अत एवेति ॥ मूलप्रत्यक्षेण निवर्तनादेवेत्यर्थः ॥ एवमेवेति ॥ अदृष्टैवेत्यर्थः ॥ अन्यथेति ॥ प्रत्यक्षस्यागमबाध इत्यर्थः । जैमिनीये तत्सिद्धिसूत्रे यजमानकार्यकरत्वगुणयोगेन प्रस्तरे यजमानशब्दो गौण इत्युक्त्वा प्रतीतमुख्याभेदरूपार्थप्रच्यावनं कृतम् । तत्त्याज्यं स्यादित्यर्थः । मुख्यार्थ एवाभ्युपेयः स्यात् ॥ व्यवस्था वेति ॥ प्रत्यक्षं नागमबाध्यमिति व्यवस्था वेत्यर्थः । ननु प्रत्यक्षत्वाविशेषात्कथं प्रत्यक्षं प्रत्यक्षस्य बाधकमिति तत्राह ॥ प्रत्यक्षमिति ॥ परीक्षितमपवादशून्यं निर्दोषत्वेनावधारितमिति वा निश्चितप्रामाण्यकमिति वार्थः ॥ अन्येनेतीति ॥ अनुमानादिनेत्यर्थः । तदिदमित्यनेन च यदि प्रत्यक्षमात्रमित्यादिनोक्तं परामृश्यते ।

(वे.टि.) मूले प्रत्यक्षसिद्धमपीत्यपिशब्दसम्बन्धमभिप्रेत्य व्याचष्टे ॥ **स्यादेतदित्यादिना** ॥ **दूरे तूपजीव्यप्रत्यक्षसिद्धमिति** ॥ ननूपजीव्यप्रत्यक्षसिद्धं धर्मिमात्रम्। न सत्तापीत्युक्तमिति कथमेतदिति चेत् विधिनिषेधाववधूय धर्मिणो बुद्धावनारोहेण सत्तावच्छिन्नधर्मिविषयकत्वेनैव धर्मिप्रत्यक्षस्योपजीव्यतया सत्ताप्युपजीव्यप्रत्यक्षसिद्धेत्यभिप्रायात् ॥ **बलवतेति** ॥ परीक्षितेनेत्यर्थः। ननु तत्रानुमानेनैव प्रत्यक्षसिद्धसर्पबाधः किं न स्यादित्यत आह ॥ **अनुमानेनैवेति** ॥ तथात्वे कालात्ययापदिष्टोच्छेद इति भाव । नन्वम्न्यनौष्ण्यानुमानस्थले प्रत्यक्षस्यानुमानबाधकत्वमेव न । सदिदमित्यादिप्रत्यक्षमेवानुमानबाध्यम् । अतो न कालात्ययापदिष्टोच्छेद इत्यत आह ॥ **व्यवस्था वेति** ॥ अत्र नियामकं नास्तीति भाव । ननु स्वस्य नाय सर्प इति प्रत्यक्षाभावेपि तादृशाप्तवाक्याद्बाधोऽनुभवसिद्ध इति कथ प्रत्यक्षसिद्धस्य मानान्तराबाध्यत्वमित्यत आह ॥ **आप्तेति** ॥ **तन्मूलप्रत्यक्षेणैवेति** ॥ मूलप्रत्यक्षे गौरवेणैवेत्यर्थ । तथा च राजगौरवेण राजभृत्यैरमात्य इव मूलप्रत्यक्षगौरवादेवाप्तवाक्यजज्ञानेन सर्पप्रत्यक्ष बाध्यते । न तु केवलेनागमजज्ञानेन । अप्रामाण्यशङ्काकलङ्कितत्वात् । एव च प्रत्यक्षसिद्ध केवलेनान्येन न बाध्यत इति मूलार्थो विवक्षित इति भाव ।

एतेन 'आप्तवाक्यमूलप्रत्यक्षस्य निवर्त्यभ्रमव्यधिकरणत्वाद्व्यवजिहीर्षादिना नष्टत्वाच्च न तस्य भ्रमनिवर्तकत्व सम्भवति' इति दूषणमलग्नकं वेदितव्यम्। मूलप्रत्यक्षाश्रयेण निश्चितप्रामाण्यकभ्रमसमानाधिकरणाप्तवाक्यजज्ञानस्यैव बाधकत्वाङ्गीकारात् ।

अन्ये तु 'भ्रमसमानाधिकरणज्ञानजनकवाक्यप्रयोगहेतुत्वसम्बन्धेन सामानाधिकरण्यसत्त्वात् व्यवजिहीर्षादिरूपव्यापारद्वारा भ्रमनिवृत्तिकाले सत्त्वोपपत्तेश्च भ्रमव्यधिकरणस्यापि मूलप्रत्यक्षस्य भ्रमबाधकत्वमुपपन्नम्' इत्याहु । तत्तुच्छम्। असाम्प्रदायिकत्वात्। **न्यायामृतादौ** ह्यसदुक्तप्रकारोऽतिस्फुटमवगम्यते न त्वयमिति ॥ **अन्यथेति** ॥ प्रत्यक्षस्य केवलशब्दबाध्यत्व इत्यर्थ । ननु तन्मूलप्रत्यक्षगौरवेणैव सर्पप्रत्यक्षबाध इत्ययुक्तम्। प्रत्यक्षत्वाविशेषेण वैपरीत्यापत्तेरित्यत आह ॥ **प्रत्यक्षं त्विति** ॥ **अन्येनेतीति** ॥ प्रत्यक्षादन्येन न बाध्यमित्युक्त्या प्रत्यक्षबाध्यमिति सूचितमिति भावः ।

(द्वै. द्यु.) मूले सत्त्वांशस्योपजीव्यत्वमनुपपाद्य प्रत्यक्षस्य जात्या प्राबल्योपपादनमयुक्तम्। प्रक्रान्तस्योपजीव्यविरोधस्यानुपपादनादित्याशङ्क्य नात्रोपजीव्यविरोधत्वेन प्रक्रान्तता। किन्तु प्रत्यक्षविरोधत्वेनैव । तस्य प्राबल्योपपादनार्थं नास्माभिरुपजीव्योपजीवकभावे निर्भरः कार्य । स्वभावप्राबल्यमात्रेण प्रत्यक्षस्य बाधकत्वसत्त्वात् । उपजीव्योपजीवकभावस्तु ग्रन्थान्तरसिद्ध सुतरा बाधकत्वे हेतुर्भविष्यतीत्यभिप्रायं मूलस्य व्यनक्ति ॥ **स्यादेतदित्यादिना** ॥ **प्रत्यक्षमात्रसिद्धमपीति** ॥ उपजीव्यत्वानाक्रान्तप्रत्यक्षसिद्धमपीत्यर्थः ॥ **दूरे त्विति** ॥ सुतरामित्यर्थ. ॥ **उपजीव्येति** ॥ जगत्प्रत्यक्षं त्वनुव्याख्यानाद्युक्तरीत्योपजीव्यमेव भवतीति तद्विरोधादनुमानागमयोर्मिथ्यात्वसाधकत्वमयुक्तमेवेति हृदयम् ।

(द्वै.द्यु.) तथा हि । यद्यस्योत्पत्तौ प्रयोजकं तत्तदुपजीव्यम् । तद्विरुद्धार्थे तज्जन्यज्ञानस्य प्रामाण्यं नास्ति । घटादिस्वरूपग्राहकत्वात्प्रत्यक्षस्यानुमानादिकं प्रत्युपजीव्यत्वम् । न च प्रत्यक्षसिद्धशुक्तिरूप्ये मिथ्यात्वबोधकानुमानागमयोरिवास्यापि प्रामाण्यमस्त्विति वाच्यम् । शुक्तिरूप्यादिज्ञाने यावता प्रत्यक्षान्तरादिबलाद्दोषजन्यत्वबुद्ध्याऽप्रामाण्यग्रहो नोदेति तदोक्तानुमानागमाभ्यां प्रवृत्तिरेव न भवतीत्यर्थस्य मूल एव व्यक्ततया भवदनुमानागमयोरपि तद्विरुद्धार्थनिश्चायकत्वायोगात् । प्रबलप्रत्यक्षान्तरस्य घटादिविषयेऽप्रवृत्ते । परीक्षितस्योपजीव्यस्यापरीक्षितोपजीवकबाधकत्वाङ्गीकारात् घटादिप्रत्यक्षस्यापि तत्साध्यसुखादिपर्यन्तं परीक्षितत्वात् । न च सर्वत्र मिथ्यात्वानुमाने न प्रत्यक्षमुपजीव्यम् । केषाञ्चिच्चक्षुरादीनामनुमानादिनैव सिद्धेरिति वाच्यम् । साक्षाद्वा क्वचित्परम्परया वाऽनुमानं प्रति प्रत्यक्षमुपजीव्यं भवत्येव । अन्यथाऽनुमानपरम्परयाऽनवस्थापत्ते । व्याप्त्यादिज्ञानप्रामाण्यावगाहिन साक्षिप्रत्यक्षस्य सर्वत्रोपजीव्यत्वाच्च । प्रामाण्यग्रहस्यानपेक्षितत्वे परमर्शाकाङ्क्षाज्ञानतात्पर्यज्ञानादावप्रामाण्यग्रहेऽप्यनुमितिशाब्दबोधयोरापत्ते । अत एव सत्त्वांशस्यापि ज्ञानमुपजीव्यमेव । प्रत्यक्षेण सत्त्वाग्रहे साक्षिणा तद्विशिष्टार्थविषयकत्वरूपप्रामाण्यग्रहणायोगेन निश्चितप्रामाण्यकव्याप्त्यादिज्ञानरूपकारणानिर्वाहप्रसङ्गात् । शशविषाणमिथ्यात्वाद्यनुमानादावपि व्याप्तिस्वरूपलिङ्गस्वरूपादौ सत्त्वावगाहिज्ञानमुपजीव्यं भवत्येव ।

ननु तद्वदेव प्रकृते व्याप्त्यादिज्ञाने सत्त्वग्रहस्योपजीव्यत्वेऽपि न पक्षीभूतघटाद्यंशे सत्त्वग्रहस्योपजीव्यतेति चेन्न । व्याप्तिलिङ्गादीनां सर्वेषां पक्षकोटौ आगमस्वरूपादीनामप्यागमेन मिथ्यात्वेन बोधनीयकोटौ त्वया निवेशितत्वेनोपजीव्यविरोधस्य दुर्वारत्वात् ।

घटादिस्वरूपतत्सत्त्वग्राहिप्रत्यक्षस्याप्युपजीव्यजातीयत्वात् प्राबल्यम् । न च साक्षिज्ञानं भ्रम. । तज्जातीयत्वेऽपि कथं प्राबल्यं घटादिप्रत्यक्षस्येति वाच्यम् । तस्य निरस्तत्वात् । न च साक्षिप्रत्यक्षयो कथं साजात्यम् । चक्षुरादिजन्यज्ञाने तत्र च साक्षात्कारत्वजातेरनङ्गीकारात् । तस्य नित्यत्वेनेन्द्रियजन्यज्ञानत्वस्याप्ययोगादिति वाच्यम् । साक्षात्करोमीति व्यवहारप्रयोजकविषयतया साजात्यसम्भवात् । ननु साक्षिणा व्यवहारकालाबाध्यार्थविषयकत्वरूपस्य मिथ्यात्वेन यदज्ञानं तद्विषयकत्वरूपस्य वा प्रामाण्यस्य ग्रहणसम्भवात् साक्षिण· प्रामाण्यग्रहणप्रयोजकतया न सत्तावगाहिप्रत्यक्षस्योपजीव्यतेति चेन्न । तस्य पूर्वमेव निरस्तत्वात् ।

किञ्च यत्प्रामाण्यं यत्प्रामाण्यप्रयोजकं तत्तस्योपजीव्यम् । तद्विरोधे च न प्रामाण्यम् । घटादिस्वरूपसत्त्वग्राहिप्रत्यक्षप्रामाण्यमनुमितिप्रामाण्ये प्रयोजकम् । अन्यथा मनआद्यागमादिस्वरूपसत्त्वग्राहिप्रत्यक्षाप्रामाण्ये तेषां सत्त्वाभावेन तेनानुमितिशाब्दबोधस्वरूपस्यैवानिष्पत्त्या तत्प्रामाण्यस्य दूरोत्सारितत्वापत्ते. । परामर्शयोग्यताकाङ्क्षादिज्ञानप्रामाण्याभावेऽनुमित्यादिस्वरूपनिष्पत्तावपि तत्प्रामाण्यायोगात् ।

न च यादृच्छिकसंवादिशाब्दानुमित्यादीनां कारणीभूतज्ञानाप्रामाण्येऽपि प्रामाण्यदर्शनान्न तस्य तत्र प्रयोजकतेति वाच्यम् । तत्र यदृच्छारूपप्रयोजकान्तरान्निर्वाहेऽप्युक्तस्य प्रयोजकत्वक्षते । तथात्वे क्वचिन्मन्त्रादिशक्त्या लौकिकसामग्रीं विनापि किञ्चित्कार्यदर्शनमात्रेण लौकिककारणानां तत्कार्यप्रयोजकत्वासिद्धिप्रसङ्गात् ।

(द्वै यु ) तथा च तादृशकार्यार्थिना [1]तादृशकारणेषु कथया सल्लिङ्गबोधेच्छया पञ्चावयवादिप्रयोगस्य तद्विघटनार्थं व्यभिचाराद्युद्भावनस्य चाभावापत्ते ।

यत्तु 'आगमतज्ज्ञानादिस्वरूपसत्त्व कार्योत्पत्तौ नापेक्षितम् । मिथ्याभूतेनापि तत्सम्भवात्' इति । तन्न । प्रातिभासिकरजतादिनाऽपि कार्योत्पत्त्यापत्ते । न च यत्स्थले प्रातिभासिकात् कार्योत्पत्तिर्न दृष्टा तत्स्थले व्यावहारिकत्वविशिष्टतद्धर्मावच्छिन्नाधिकरणक्षणाव्यवहितोत्तरक्षणत्वव्यापकत्वं कार्यस्य स्वीक्रियते । अतो न दोष इति वाच्यम् । प्रातिभासिकस्य कुत्रापि कार्यजनकत्वानङ्गीकारात्तज्ज्ञानस्यैव कार्यजनकत्वाङ्गीकारेणोक्तव्यवस्था-कल्पनायोगात् । व्यावहारिकादिभेदस्याप्यसिद्धत्वात् । अन्यथा प्रमेयत्वेन दण्डादेर्घटकारणत्वमुक्त्वा दण्डत्व-विशिष्टप्रमेयत्वावच्छिन्नक्षणोत्तरक्षणत्वव्यापकत्वस्य घटस्याङ्गीकारेण सर्वापत्तिवारणसम्भवे लोकसिद्धकार्यकारण-भावस्यैवोच्छेदप्रसङ्गात् । तस्मात् सर्वजगन्मिथ्यात्वबाधकानुमानागमयोरुपजीव्यप्रत्यक्षविरोध इति ।

ननु प्रत्यक्षस्य स्वत प्राबल्ये कथ 'नायं सर्प' इत्यनुमितिशाब्दाभ्या प्रत्यक्षबाध इत्यत आह ॥ सर्प-भ्रमादावपीति ॥ बलवतेति ॥ निश्चितप्रामाण्यकप्रत्यक्षेणेत्यर्थ । विषयापहारोऽप्रामाण्यबुद्धि । कालातीतस्य भावप्रधानमिदम् ॥ व्यवस्था वेति ॥ प्रत्यक्षत्वाविशेषेपि कचिदनुमानबाध्यत्व कचित्तद्बाधकत्वमित्यस्य नियामकं प्रत्यक्षत्वव्याप्यधर्मद्वयमनतिप्रसक्तं वक्तव्यमित्यर्थः । अनुमानागमापेक्षया प्रत्यक्षस्य जात्या प्राबल्याभावे वह्नौ शीतस्पर्शसाधकवह्निजलान्यतरत्वहेतोर्व्यभिचारासिद्ध्याद्यभावाद्बाधेनैव दुष्टत्व वाच्यम् । प्रत्यक्षस्यानुमानापेक्षया प्रबलत्वाभावात्प्रबलप्रमाणबाधरूपदोषभावाददुष्टत्वमेव स्यादिति भाव ।

न चाप्रयोजकत्वबुद्ध्यैव तत्रानुमित्यनुत्पत्तिरिति वाच्यम् । अप्रयोजकत्व हेतौ पक्षान्तर्भावेण साध्याभा-वसामानाधिकरण्ये पर्यवस्यति । तदभावोऽप्यनुमानेन साधयितु शक्यत एव । अय हेतुः साध्याभावसामानाधि-करण्याभाववान् जलवृत्तित्वात् जलान्यभेदादिवदिति साधनेनाप्रयोजकत्वशङ्कानिरासपूर्वकव्याप्तिग्रहसम्भवात् । हेतावुभयसामानाधिकरण्यकल्पने गौरवरूपानुकूलतर्कोत्थापनसम्भवेन पक्षेतरत्वादीनामुपाधीना विधूननात् । न च तत्र प्रत्यक्षमुपजीव्यत्वेन प्रबलमिति वाच्यम् । यत्र शब्देन 'वह्निपदवाच्य किञ्चिद्वर्तते' इति जानत. असाक्षा-त्कृतवह्निकस्य प्रथमत एव शैत्यानुमानप्रवृत्तिरनन्तर वह्निस्पार्शनोत्तर शीतस्पर्शाभावस्पार्शन तद्विरोधेन पूर्वानु-मितावप्रामाण्यग्रहस्तत्र प्रत्यक्षस्य पक्षग्राहकतयोपजीव्यत्वाभावात् । न च साध्यरूपप्रतियोगिग्राहकतयोपजी-व्यत्वमस्त्येवेति वाच्यम् । अन्यत्र प्रतियोगिस्वरूपग्राहकसाजात्यमात्रेण शीतस्पर्शाभावप्रत्यक्षस्य प्राबल्येऽत्रैव शीतस्पर्शग्राहकानुमानस्य कुतोऽप्राबल्य । प्रत्युतास्यैव प्राबल्यमुचितम् । प्रत्यक्षत्वजात्यैव साजात्यस्य प्राबल्यनियाम-कत्वे प्रत्यक्षस्य जात्या प्राबल्य बलादेवापतितम् । किञ्च घटादिस्वरूपप्रत्यक्षं विनापि शब्दादिना 'घटत्वाख्य-जातिविशिष्ट किञ्चिद्वर्तते' इति ज्ञानाद्घटोऽणुत्ववान् परमाणुघटान्यतरत्वादित्यनुमानस्य प्रवृत्ति. अनन्तरं च घटो नाणुरिति प्रत्यक्षेण बाधस्तत्र स्वभावप्राबल्यमेव शरणम् । चक्षुरादेर्धर्मिग्रहणेऽनपेक्षितत्वेन प्रतियोग्यग्राह-

[1] तादृशकारणेषु प्रवृत्ते कथाया इति पाठेन भाव्यमिति भाति ।

(द्वै घु) कत्वेन चानुपजीव्यत्वात्। उपजीव्यत्वाग्रहदशायामपि प्रत्यक्षनिश्चयोत्तर तद्विपरीतानुमितेर्झटिति बाधदर्शनात्स्वभावप्राबल्य प्रत्यक्षस्यावश्यकमिति तु तत्त्वम्।

ननु प्रत्यक्षस्य कुत स्वत प्राबल्यमिति चेत्। इत्थम्। प्राबल्य नाम निश्चितप्रामाण्यकत्वमेव। तत्र प्राय प्रत्यक्षस्य यत्र यद्धर्मग्राहकत्वम् तत्र तद्विपरीतव्यावर्तकधर्मान्तरादिविषयकत्वेन दोषजन्यत्वादिस्फूर्तेर्बीज विनाऽयोगेन तत्र प्रामाण्यबुद्धिर्झटिति प्रायेण भवति। कदाचिदेव दूरस्थजलादिप्रत्यक्षे दूरस्थत्वादिदोषजन्यत्वबुद्धया प्रामाण्यसन्देहो जायत इत्येतदनुभवसिद्धम्। अन्यथा सर्वेषा झटिति प्रवृत्त्यभावप्रसङ्गात्। परामर्शप्रामाण्यादिसन्देहाहितानुमित्यप्रामाण्यसन्देहस्यापरिचितविषयेषु बहुशो दर्शनेन प्रामाण्यग्रहणविलम्बितत्वमनुभवसिद्धम्। अत प्राबल्यदौर्बल्ये युक्ते।

न चैवं सत्यनुमित्यागमजादिप्रामाण्यस्य स्वतस्त्वभङ्गप्रसङ्ग। अपरिचितविषयेषु अनुभवबलाद्दोषबुद्धिप्रयुक्तसन्देहनिवृत्तेरनुमितिस्थले आगमस्थले विलम्बितत्वस्वीकारेऽपि स्वत प्रामाण्यग्रहणापरित्यागात्।

किञ्च साक्षिरूप प्रत्यक्षरूपस्य निश्चितप्रमाणभावस्याप्रामाण्यसन्देह प्रति कदाप्यगोचरतया स्वभावप्राबल्यात्तज्जातीयबाह्यप्रत्यक्षेष्वपि तत्सिद्धयति। असति बाधके प्रमाणाना सामान्यत एव प्रवृत्ते। न्यायामृतस्थानुमानागृहीतरेखोपरेखादिग्राहकत्वतदनिवर्तितनिवर्तकत्वादिना प्रत्यक्षप्राबल्योपपादनस्याप्यत्रैव तात्पर्यम्। तयोरुक्तरीत्या प्रामाण्यग्रहणविलम्बाविलम्बादिकं प्रत्येवोपपादकतया चोक्तत्वात्।

एतेन 'तदगृहीतग्राहित्वमात्रस्य प्राबल्यहेतुत्वे प्रत्यक्षाद्यगृहीतधर्मादिग्राहकत्वात्तदविषयीभूतानुमापकत्वाद्वाऽऽगमानुमानयोरेव प्राबल्य प्राप्तम्। बाधज्ञानागृहीतरजतग्राहकत्वाद्भ्रमस्यैव प्राबल्य स्यात्। एव त्वगनिवर्तितदंशोरगभ्रमनिवर्तकत्वाच्चाक्षुषस्य प्राबल्यप्रसक्तया चित्रनिम्नोन्नतादिचाक्षुषप्रत्यक्षबाधकत्व त्वाचप्रत्यक्षस्य न स्यात्' इति अद्वैतसिद्धयुक्तदूषणमनुपादेयमेव। न ह्येकत्र तदनिवर्तितनिवर्तकत्वमात्रेण सर्वत्र तज्जातीयस्य तज्जातीयापेक्षया प्राबल्याद्बाधकत्वमिति तदभिप्रायो येनेदं दूषण सङ्गतम्। किन्तु अपरिचितविषयेषु अनुमानापेक्षया प्रत्यक्षस्य शीघ्रतया प्रामाण्यनिश्चयविषयताबोधनाय शृङ्गिग्राहकतया स्थलविशेषप्रदर्शनाभिप्रायकत्वमेव। चक्षुस्त्वचो स्थलविशेषे दोषजन्यत्वतदभावग्रहाधीनबाध्यबाधकभावसत्त्वेऽपि सर्वत्रैवैकस्य प्राबल्यमित्यत्र बीजाभावेनापादनासङ्गते। किञ्च प्रत्यक्षनिश्चितार्थस्यानुमानागमाभ्या बाधादर्शनात्प्रत्युत वैपरीत्यस्यैवानुभवसिद्धत्वात्प्रत्यक्षस्य स्वभावप्राबल्ये स्थिते तत्र रेखोपरेखादिविषयकत्वादिकं सम्भावित किञ्चिद्बीजमुच्यते। अत एव मूले दृष्टमित्यनुभवे निर्भर कृत। तथा च तेनैव तदगृहीतार्थग्राहकत्वादिनाऽन्येषामपि तथात्वापादनस्य का सङ्गति। 'आरोपे सति निमित्तानुसरणम्। न हि निमित्तमस्तीत्यारोप.' इति न्यायेन तस्यानुचितत्वात्। अन्यथा चाकचिक्येन कदाचिच्छुक्तौ रजतभ्रमे तदैव संनिहितरङ्गेऽपि तद्भ्रमापादनप्रसङ्गादिति दिक्।

ननु प्रत्यक्षस्यान्येन बाधो नास्तीत्येतदयुक्तम् सर्पभ्रमस्य नाय सर्प इत्याप्तवाक्येन बाधदर्शनादित्यत आह ॥ आप्तवाक्यादिति ॥ निवर्तनेऽपीति सर्पभ्रमस्येत्यादि ॥ तन्मूलभूतप्रत्यक्षेणेति ॥ तद्विरुद्धत्वमहे-

(द्वै.गु) णेवेत्यर्थः । आप्तिमूलकत्वनिश्चयोत्तरमेव तत्र प्रामाण्यनिश्चयात्तेन सर्पभ्रमनिवृत्तिर्जायते । अन्यथा पुरुषान्तरोच्चारिततत्समानाकारवाक्यादपि तन्निवृत्त्यापत्तेः । आप्तिश्च विवक्षितार्थतत्त्वज्ञानादिरूपा । तत्त्वज्ञानं चासम्बन्धिसाक्षात्कारात्मकमेवेति ज्ञानोत्तरमेव तद्विरुद्धस्य प्रत्यक्षस्य दोषजन्यत्वादिना प्रामाण्यमाव गृण्हातीति भावः । तथा च प्रत्यक्षनिश्चितस्य निश्चितप्रामाण्यकप्रत्यक्षान्तरविरुद्धत्वग्रहं विना प्रामाण्यत्यागो न भवतीति निष्कर्षः ।

तर्ह्यनुमितिशाब्दयोरपि प्रामाण्यनिश्चये तद्विरोधादनिश्चितप्रामाण्यकप्रत्यक्षस्य प्रामाण्यत्यागो भवतीति 'प्रत्यक्षादन्येन वा बाधो न भवति' इत्येतदयुक्तमिति चेन्न । प्रत्यक्षविरुद्धार्थत्वग्रहदशायामनुमानागमयोर्बाध्यप्रत्यक्षमूलकत्वग्रहमन्तरा प्रामाण्यनिश्चयस्यैवासम्मतत्वात् । तन्मूलकत्वं च तज्जन्यत्वतत्संवादित्वतन्निष्ठव्याप्तिपक्षधर्मतावत्त्वादिकं यथायथं द्रष्टव्यम् ।

नन्वेवं तर्हि स्वदेहात्मैक्यविरुद्धग्राहिप्रत्यक्षान्तराभावेन तद्विरुद्धत्वग्रहानुदयादनुमानागममात्रयोस्त्वन्मतेऽबाधकत्वाद्देहात्मैक्यबुद्धिनिवृत्त्यभावापातेन मोक्षार्थं प्रवृत्त्यभावापात इति चेन्न । देहात्मैक्यभ्रमस्योत्तरत्र निराकरिष्यमाणत्वात् । अङ्गीकारे यथा वैद्यशास्त्रजन्यानुभवाधीनसंस्कारवता नाडीगतिविशेषस्पर्शननिश्चयो जायते रत्नशास्त्रजनितानुभवाधीनसंस्कारविशेषवता नीचोच्चत्वादिना रत्नविशेषापरोक्ष्यं जायते तथा भगवत्कृपासहितसुकृतवशात् प्रक्षीणान्तःकरणमलवता पुंसा कथञ्चिद्देहात्मविवेकविषयकास्फुटग्रहमात्रेण देहात्मैक्यबुद्धावप्रामाण्यग्रहवता दोषविशेषरूपाविद्यारूपोपाधिविलादेव गुडे तिक्तादिभ्रमवज्जायमाने ज्ञाने शास्त्रेणाप्रामाण्यबुद्धेर्दृढीकरणाङ्गीकारात् । अत एव येषां तादृशमनःपरिपाकादिना देहात्मभेदात्मास्वातन्त्र्याद्यनुभवो दुष्कर्मकृशान्तोत्पन्नस्तेषां शास्त्रशतेनाऽप्यप्रामाण्यबुद्धिर्न जायते एवेत्यनुभवसिद्धं युज्यते ।

नन्वाप्तवाक्यात्सर्पभ्रमादिनिवृत्तिस्थले तन्मूलभूतप्रत्यक्षविरुद्धत्वज्ञानेनैव तन्निवृत्तिः । न त्वनुमित्यादिविरुद्धत्वज्ञानेनेत्येतत्कुत इत्यतो लोके तथैवानुभवादित्याशयेनाह ॥ अत एवेति ॥ एवं पश्यति सर्पमेदं साक्षात्करोति ॥ **एवमेवेति** स्वयमसाक्षात्कृत्यैवानुमानादिना निश्चित्येत्यर्थः । पश्यामीत्युक्त्यनन्तरमेव विश्वसंति । श्रुत्या वा लिङ्गेन निश्चित्य वदामीत्युक्तौ तत्राविप्रलम्भकत्वग्रहेऽपि भ्रमनिवृत्तिमन्तो न भवन्तीति वाक्यशेषः । तेन तत्प्रश्नवाक्यमात्रस्य प्रकृतार्थासाधकत्वादुपष्टम्भासङ्गतिरिति शङ्कानवकाशः । नन्वागमानुमानमात्राभ्यामेव तत्रापि बाधः स्वीक्रियते । न प्रत्यक्षविरोधानुसन्धानेनेत्यनुभवसिद्धार्थेऽप्याग्रहवन्तं प्रति बाधकमप्याह ॥ **अन्यथेति** ॥ आगमानुमाने प्रति प्रत्यक्षस्य बाधकत्वानङ्गीकारे ॥ **यजमान इति** ॥ आदिना 'ग्रावाणः प्लवन्ति' 'आदित्यो यूपः' इत्यादीनां ग्रहः । तत्र प्रत्यक्षविरोधातिरिक्तस्वार्थप्रच्यावनहेतोरभावादिति भावः ॥ **व्यवस्थेति** ॥ यजमानप्रस्तरभेदग्राहिप्रत्यक्षस्य बाधकताप्रयोजकं रूपं जगत्प्रत्यक्षस्य तदभावप्रयोजकं च वक्तव्यमित्यर्थः । तच्च नास्तीति भावः । ननु यादृशार्थे निर्णीततात्पर्यक आगमो भवति तत्संवादि च यदनुमानं तस्य न प्रत्यक्षेण बाधः । प्रत्युत ताभ्यामेव प्रत्यक्षस्य बाधः । सम्भावितदोषत्वात् । आगमस्यापौरुषेयत्वेनानाशङ्कितदोषत्वादनुमानस्य

(द्वै द्यु) तत्संवादित्वाद्यभिचाराद्यनुपलम्भेन च दोषविधुरत्वनिश्चयात्। प्रकृते चाद्वैतागमानामुपक्रमादिभिरद्वैते तात्पर्यस्य निर्णीतत्वादनुमानस्य तत्संवादित्वाच्च न प्रत्यक्षस्य तद्बाधकत्वं, प्रत्युत तद्बाध्यत्वमेव। यजमानप्रस्तरादिवाक्याना प्रतीतार्थे तात्पर्यनिर्णायकाभावात्तत्र प्रत्यक्षविरोध प्रसरतीति व्यवस्था घटत एवेति। मैवम्। यजमानादिवाक्यस्थलेऽपि पदाना मुख्यार्थपरत्वे लाघवरूपोपपत्तेरेव तात्पर्यग्राहकत्वसम्भवात्। अन्यथा प्रथमतो बुद्ध्युपारूढमुख्यार्थाग्रहणरूपगौरवप्रसङ्गात्। न ह्युपक्रमोपसंहारावेव तात्पर्यनिर्णायकौ। उपपत्तेरपि परिगणितत्वात्। लाघवस्य तात्पर्यानिर्णायकत्वे निषादस्थपत्यधिकरणानुत्थितिप्रसङ्गात्। कपिञ्जलानालभेतेत्यत्र त्रित्वचतुष्ट्वादिमध्ये त्रित्वस्य प्रथमोपस्थितत्वरूपलाघवाद्बहुवचनस्य तत्तात्पर्यासिद्धिप्रसङ्गाच्च। अवान्तरवाक्यस्य स्वार्थे तात्पर्याभावे खादिरयूपादीनामप्यसिद्धिप्रसङ्गात्। सोमेन यजेतेत्यत्र निर्णीतस्वार्थतात्पर्यकेऽपि प्रत्यक्षविरोधशात्यर्थमेव सोमपदस्य तद्वति लक्षणाश्रयणाच्च। अतस्तात्पर्यग्राहकाणा बलवत्प्रमाणाविरुद्धार्थ एव तात्पर्यग्राहकत्व वक्तव्यमिति कथ प्रत्यक्षरूपबलवत्प्रमाणविरुद्धार्थेऽद्वैतागमाना तात्पर्यग्राहकत्वमुपक्रमादीनामुक्तिसहम्।

प्रत्यक्षस्य सम्भावितदोषत्वाद्व्यावहारिकप्रामाण्यसम्भवेन सावकाशत्वाच्च श्रुतीना न पारमार्थिकाद्वैततात्पर्यविघातकत्वमिति चेन्न। प्रस्तरादिवाक्यस्थलेऽपि साम्यात् पारमार्थिकयजमानाभेदग्रावप्लवनादेः सिद्धिसम्भवात्। श्रुतेरपि अर्थान्तरपरत्वसम्भावनया द्वैताभावे निर्णीततात्पर्यकत्वायोगाच्च।

[1]यत्तु जगत्प्रत्यक्षे दोषसम्भावनोक्ता सा आगमतात्पर्यनिर्णयानन्तर पूर्वमेव वा। नाद्य। प्रत्यक्षविरुद्धत्वज्ञाने निश्चितप्रामाण्यकत्वनिर्णयस्यैवानुत्पत्ते। न द्वितीय तद्धेत्वभावात्। निर्णीततात्पर्यकागमविरुद्धत्वज्ञानस्यैव तद्धेतुत्वेऽन्योन्याश्रयापातात्। ननु भ्रमसाधारणत्वात् प्रत्यक्षत्वस्य तद्धर्मज्ञानेनैव दोषजन्यत्वबुद्धिर्जायते। तदनन्तर तद्विरोधाभावादागमतात्पर्यनिर्णये जाते तद्विरुद्धत्वेन दोषजन्यत्वस्य सामान्यतो निश्चयोत्तर क्लृप्तदोषाणामसम्भवादविद्यारूपदोषान्तर कल्प्यत इति चेन्न। प्रस्तरादिवाक्यप्रतिबन्देरनुद्धारात्। आगमस्थलेऽप्यप्रमाणवाक्यसाधारणवाक्यत्वज्ञानादेव सामान्यतो दोषयुक्तत्वशङ्काया तद्विरोधाभावात् प्रत्यक्षस्थले प्रामाण्यनिश्चये त्वदुक्तरीत्या तद्विरोधेनागम एव क्लृप्तदोषातिरिक्तदोषान्तरस्य कल्पयितुं शक्यत्वाच्च। प्रामाण्यस्य स्वतस्त्वात् क्लृप्तदोषरूपापवादास्फूर्तौ दोषजन्यत्वसम्भावना नोदेत्येवेति तु प्रत्यक्षेऽपि समम्।

किञ्च सर्वप्रत्यक्षेषु दोषमूलकत्वसम्भावनयाऽप्रामाण्यबुद्धिर्जायते कानिचित्परित्यज्यैव वा। नाद्यः। वैदिकार्थग्रहप्रामाण्यबुद्ध्यागमस्वरूपतन्निर्दोषत्वादीना केषामप्यसिद्ध्याऽद्वैततात्पर्यसिद्ध्यादेर्दूरोत्सारितत्वात्। न द्वितीय। पूर्वं येष्वप्रामाण्यबुद्धिर्दोषसम्भावनया न जाता तद्विरोधादेवागमस्य सर्वनिषेधतात्पर्यग्रहणायोगात्।

अपि च प्रत्यक्षस्य घटत्वाद्यवच्छिन्ने सत्त्वविषयकत्वेन विशेषविषयत्वात् सामान्यत प्राप्ताद्वैतश्रुतिबाधकत्व युक्तम्। न चानिश्चितप्रमाणभावप्रमाणद्वयस्थल एव सामान्यविशेषन्यायप्रवृत्ति। अन्यथाऽयं गौरश्च इत्यस्य

---

[1] या तु इति पाठेन भाव्यमिति भाति।

(द्वै धु )गौरश्वो न भवतीत्यादितो बलवत्त्वं स्यात् । तथा च प्रत्यक्षस्य निश्चितप्रमाणत्वकत्वादुपक्रमादितात्पर्यलिङ्गैरद्वैते निर्णीततात्पर्यकागमसाम्यमेव नास्तीति कुत सामान्यविशेषन्यायप्रवृत्तिरिति वाच्यम् । सकलप्रत्यक्षप्रामाण्याभावसन्देहदशायामागमप्रामाण्यस्याप्युक्तरीत्या सन्दिग्धत्वात् । साक्षिणोऽजन्यत्वेन तत्प्रामाण्यनिश्चये बीजाभावाच्च । न च प्रत्यक्षे व्यावहारिकप्रामाण्यनिश्चयादेवागमस्वरूपतत्प्रामाण्यादौ न सन्देह । पारमार्थिकप्रामाण्य पर दोषसम्भावनया न गृह्यत इत्यागमाबाधकत्वमिति वाच्यम् । लोके क्लृप्तदोषाणामभावनिश्चयेऽपि दोषान्तर सम्भावना चेदागमेऽप्यपौरुषेयत्वज्ञानेन क्लृप्तदोषाणामभावनिश्चये दोषान्तरसम्भावनाया साम्यात् । व्यावहारिकत्वादिभेदस्यागमार्थनिर्णयात्प्रागसिद्धेश्च ।

ननु नेह नानाऽस्ति किञ्चनेत्यादिश्रुतिरपि घटत्वादिरूपविशेषरूपेणैव मिथ्यात्व बाधयति । एवं

नात्र काचन भिदाऽस्ति ।

न पुण्यपापे मम नास्ति नाशो न जन्म देहेन्द्रियबुद्धिरस्ति ।

न भूमिरापो मम वह्निरस्ति न चानिलो मेऽस्ति न चाम्बरञ्च ।

एव विदित्वा परमात्मरूपमशब्दमस्पर्शमरूपमव्ययम् ।

इत्यादयोऽपि विशेषरूपेणैव मिथ्यात्व बोधयन्तीति कथ प्रत्यक्षश्रुत्या सामान्यविशेषभाव इति चेन्न । सर्वनाम्नां सर्वपदनानापदादीना सर्वत्वादिरूपसामान्यधर्मपुरस्कारेणैव बोधकताया प्रागेव व्यवस्थापितत्वात् । न पुण्यपाप इति वाक्यस्यापि कण्ठोक्ततत्तन्मात्रनिषेधपरत्वे शुद्धात्मस्वरूपप्रतिपादनापर्यवसानात् तस्यापि जडमात्रोपलक्षकत्व स्यावश्यकत्वेन सामान्यधर्मावच्छिन्न एव मिथ्यात्वप्रतिपादनतात्पर्यावश्यकत्वात् । वस्तुतस्तस्य ज्ञानानन्दादिवत्पुण्यपापादीना स्वतादात्म्यापन्नतया स्वस्वरूपान्तर्गतत्वनिषेधपरमेवैतद्वाक्यम् । म इति स्वसम्बन्धिताबाधकपदोपसन्दानात् । अन्यथा तेषा स्वरूपतो निषेधपरत्वे म इत्यस्य वैयर्थ्यापत्तेरिति ध्येयम् । एवं प्रत्यक्षस्य प्रथमप्राप्तत्वेनासञ्जातविरोधित्वात् पदार्थोपस्थित्यादिविलम्बेनार्थावगमकश्रुत्यपेक्षया शीघ्रमर्थोपस्थापकत्वात् वृत्त्यन्तरेणार्थान्तरोपस्थापनक्षमतया श्रुते सावकाशाया सकाशात् गृहीतविषयान्यविषयकत्वेन सम्भावना प्रत्यक्षविषयस्य प्रत्यक्षस्य निरवकाशत्वाच्च प्राबल्यमनुसन्धेयम् ।

अत्र यदुक्तं 'प्रत्यक्षस्य भ्रमविलक्षणत्वेनानवधारितत्वेन न्यूनबलत्वाच्छ्रुतेर्निश्चितप्रामाण्यकत्वेनाधिकबलत्वात्समबलस्थल एवासञ्जातविरोधित्वादिन्यायप्रसक्तेर्नात्र तदवकाश । परीक्षतस्य मन्थरगामिनोऽपि प्राबल्यान्न द्वितीयस्यावकाश । श्रुतेरपि उपक्रमादिरभिरद्वैतेऽवधृततात्पर्यकत्वेन निरवकाशतया प्रत्यक्षस्य व्यावहारिकार्थविषयकत्वेन सावकाशतया न तृतीयस्याप्यवकाश ' इति ।

तत्सर्वं पूर्वोक्तरीत्यैवापास्तम् । प्रत्यक्षस्य परीक्षिततया निश्चितप्रामाण्यकत्वाभावे आगमस्वरूपतत्तात्पर्यावधारणप्रामाण्यावधारणादेरशक्यतया व्यावहारिकत्वादेरप्यसिद्ध्यादेरसकृदावेदितत्वादिति दिक् । तदेतत्सर्वं प्रस्तरादिवाक्यप्रतिबन्दिग्रहणेनैव सूचितम् ।

(द्वै. द्यु.) ननु प्रत्यक्षस्य जात्या प्राबल्यविषये न प्रस्तरादिवाक्यमुदाहर्तव्यम्। तत्र यजमानप्रस्तरादिरूपोद्देश्य-विधेयसमर्पकतया प्रत्यक्षस्योपजीव्यत्वेनैव प्राबल्यादिति चेत् सत्यम्। तत्रोक्तोपजीव्यत्वानुसन्धानस्य सर्वैरगृहीतत्वेऽपि प्रत्यक्षत्वमात्रप्रयुक्तप्राबल्यानुसन्धानेनैवागमस्य यथाश्रुतार्थतात्पर्याभावस्य सर्वैर्गृहीतत्वेनोपजीव्यत्वसङ्करस्यादोषत्वात्। अन्यथा नव्यनैयायिकनये व्यभिचारसङ्कीर्णत्वाद्विरोधस्य दोषत्वाभावप्रसङ्गात्। यदा प्रस्तरादिपदवाच्यं किञ्चिद्वर्तत इति ज्ञात्वापि यजमानप्रस्तरपदवाच्ययोरभेदबुद्धिर्जाता तदनन्तरं च यजमानप्रस्तरादिपदवाच्यवाचकभावग्रहोत्तरं तयोर्भेदप्रत्यक्षं तेन पूर्वोत्पन्नागमिकार्थे प्रामाण्याभावग्रहात् तत्तात्पर्यकत्वपरित्यागस्तत्रोपजीव्यत्वेन प्राबल्यस्य वक्तुमशक्यतया जात्या प्राबल्यस्यैव वक्तव्यत्वाच्चोक्तं युक्तम्।

ननु

प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्।

इत्युक्तिविरोधात् प्रत्यक्षस्य कथं जात्या प्राबल्यमुक्तमिति चेन्न। जात्येत्यस्योत्सर्गत इति विष्णुतत्त्वनिर्णयटीकादौ व्याख्यातत्वेनोत्सर्गेण आगमप्राबल्यस्य प्रामाण्यरूपस्य उक्तत्वेन प्रत्यक्षस्योक्तयुक्त्या स्वभावप्राबल्ये विरोधाभावात्। अत एव

उपजीव्यविरोधे तु न प्रामाण्यममुष्य च।

इत्युत्तरत्रापवादे तदभावोऽप्युक्तः।

यद्वा वैदिकार्थे प्राबल्यमिति तस्याभिप्रायः। नन्वागमप्रत्यक्षयोरेकत्र वैदिकमात्रार्थे प्रसक्तेरभावात्कथं प्राबल्यदौर्बल्योक्तिः। मैवम्। तेषु त्रिष्वित्युक्तत्वेनानुमानस्य वैदिकार्थेऽपि प्रसरेण तदपेक्षया प्राबल्यविवक्षया तद्वाक्यसामञ्जस्यात्। पुराणादौ तात्कालिकजनै रामकृष्णादिदेहच्छेदव्रणादिकं प्रत्यक्षीकृतमिति श्रूयते। भगवदवताराणां पूर्णमदः पूर्णमित्याद्यागमैर्निर्दोषत्वादिरूपपूर्णत्वमपि श्रूयते। अस्माकं तन्निर्णयाय प्रत्यक्षमनुसर्तव्यमथागम इत्याकाङ्क्षायां वैदिकार्थे आगमस्यैव प्राबल्यात्तदनुसरणमेव कर्तव्यमित्यभिप्रायेण प्रत्यक्षापेक्षयाऽपि प्राबल्योक्तिसम्भवाच्च। न च प्रत्यक्षप्राबल्यवादिनस्तव मते तत्कालीनानां जगत्सत्यत्वप्रत्यक्ष इव स्वप्रत्यक्षे रामकृष्णादिदोषग्राहिणि लोकसिद्धकाचादिमूलकत्वाभावादिग्रहेण प्रामाण्यनिश्चयादागमेन बाधाभावे तत्र निर्दोषत्वज्ञानानुपपत्तिः। तथा च भीष्मादीनां तथा व्यवहारानुपपत्तिरिति वाच्यम्। तेषां भगवदनुग्रहापादितदिव्यदृष्ट्या विपरीतप्रत्यक्षस्यैव सत्त्वेन तेनैवापाततः प्रथमजातदोषप्रत्यक्षस्य बाधसम्भवात्। अन्येषां तु प्राकृतानां तत्रासत्त्वनिश्चयवता तदुपदेशस्य तत्प्रत्यक्षमूलकत्वानुसन्धानोत्तरं तद्गौरवादेव बाधसम्भवात्। न चाद्वैतजगन्मिथ्यात्वादेरपि तदुपदेष्टृपुरुषप्रत्यक्षविषयत्वानुसन्धानेन जगत्सत्यताबोधकप्रत्यक्षादिबाधोऽस्त्विति वाच्यम्। तथात्वेऽपौरुषेयागमस्य क्वापि स्वातन्त्र्येणाद्वैतावगमकत्वाभावप्राप्त्याऽऽगमविचारस्यानुपयुक्ततापातात् अद्वैतस्य वैदिकार्थत्वोक्त्यसङ्गतेश्च।

(द्वै. द्यु) एकजीववादे एतावत्कालं कस्याप्यद्वैतापरोक्ष्याभावेन मम प्रत्यक्षं वर्तते इति वादिषु सर्वेषु विप्रलम्भकत्वग्रहेण तद्वाक्यात् प्रत्यक्षाप्रामाण्यसिद्ध्ययोगाच्च । मन्मते चेदानीन्तनानामस्मदादीनामीश्वरसिद्धेरागमेनैव जायमानत्वात्तद्विचारादिसार्थक्यमुपपद्यत इत्यलम् ।

ननु प्रत्यक्षस्य स्वभावप्राबल्यादन्येन बाधाभावे प्रात्यक्षिकभ्रमस्य निवृत्तिरेव न स्यादित्यत आह ॥ **प्रत्यक्षं त्विति** ॥ **परीक्षितमिति** ॥ अप्रमात्वशङ्काव्यावर्तकदोषजन्यत्वाभाव विमर्शपूर्वकप्रामाण्यावधारणविषयीभूतमित्यर्थः । **अपरीक्षितस्य** विमर्शाभावकाले चापाततः प्रमाणत्वेन गृहीतस्य ॥ प्राथमिकप्रामाण्यज्ञानं तु मानसमेव न साक्षिरूपम् ।

> सुदृढो निर्णयो यत्र ज्ञेयं तत्साक्षिदर्शनम् ।
> यत्किञ्चिद्व्यभिचारि स्याद्दर्शनं मानसं हि तत् ॥

इत्युक्तेः ।

ननु प्रत्यक्षस्य प्रत्यक्षबाधकत्वकथनमयुक्तम् । विरोधिप्रत्यक्षकाले प्रत्यक्षान्तरोत्पत्त्ययोगात् । अनुमानं तु भवति । रजतत्वज्ञानकालेऽपि रजतत्वाभावव्याप्यवत्ताज्ञानोत्पत्तौ बाधकाभावात्तदुत्पत्त्यनन्तरं रजतत्वाभावव्याप्यवति रजतत्वप्रकारकत्वरूपहेत्वनुसन्धानेन रजतत्वाभाववति रजतत्वप्रकारकत्वरूपाप्रामाण्यग्रहो जायते इति चेन्न । भ्रमजनकदोषनिवृत्त्यनन्तरं बलवद्विरुद्धप्रत्यक्षोदयसम्भवात् । अन्यथा लिङ्गस्य पुरोवर्तिनि रजतत्वेन सुदृढतया भासमाने रजतत्वाभावव्यभिचारग्रहसम्भवेनोक्तानुमानप्रवृत्त्ययोगात् ।

ननु प्रवृत्त्यर्थं प्रामाण्यज्ञानप्रामाण्यनिश्चयोऽपेक्षितो न वा । आद्येऽनभ्यासदशापन्नप्रमातुः प्रवृत्त्यनुपपत्तिः । प्रथमज्ञानप्रामाण्यस्य मनसा ग्रहे तस्यापि भ्रमतया तज्ज्ञानप्रामाण्यस्य साक्षिणा ग्रहणे तस्य भ्रमत्वात्तेनास्यापि मानसत्वमेव वक्तव्यम् । तस्य जडत्वेनास्वप्रकाशतया साक्षित्वस्वप्रामाण्यग्राहकत्वायोगात्तदर्थं मानसज्ञानान्तरमपेक्षितं स्यादित्यनवस्थित्यापत्त्या प्रवृत्तिसामग्र्यसम्पत्तेः । न द्वितीयः । प्रामाण्यज्ञानधर्मिकप्रामाण्यग्रहस्यानपेक्षितत्वे प्रामाण्यस्य परतस्त्वपक्षेऽपि प्रामाण्यानुमितिनिष्ठप्रामाण्यग्रहस्य तज्जनकपरामर्शप्रामाण्यग्रहणस्य चानावश्यकत्वेनाप्त्या परतस्त्ववादिपक्षेऽभिहिताया फल्मुख्याः कारणमुख्याश्चानवस्थाया असम्भवेन स्वतः प्रामाण्यसिद्धान्तस्थापनासम्भवापत्तेः । मैवम् । यतः प्रामाण्यं नामाबाधितार्थावगाहित्वम् । साक्षिणा ज्ञानस्वरूपग्राहिणा तन्निष्ठविषयित्वाख्यधर्मोऽपि गृह्यते । अबाधितार्थसम्बन्धस्तु विषयिताया व्यवसायरूपोपनायकवशाद्भासते सत्यरजतस्थले मिथ्यारजतस्थलेऽपि । साक्षात्साक्षिणो बहिरर्थविषयकत्वायोगात् । तथा च ज्ञानस्वरूपांशे तन्निष्ठविषयित्वांशे अबाधितत्वविशिष्टविषयांशे च स्वनिष्ठाबाधितविषयकत्वप्रकारकत्वघटितप्रामाण्यादिविषयकं साक्षिरूपं स्वप्रकाशात्मकं ज्ञानं प्रमास्थले सर्वांशे साक्ष्यात्मकं ज्ञानमेव । भ्रमविषयीभूतं बाधितविषये भासते यदऽबाधितत्वं प्रामाण्यशरीरघटकतया तन्मात्रं भ्रमोपनीतत्वात् मानसवृत्त्यात्मकज्ञानविषयीभूतमेव । मनसश्चिदचिन्मिश्रितत्वात् साक्षिगर्भितमनोवृत्त्यात्मकज्ञानसाक्षिरूपज्ञानयोः स्फुटं भेदाग्रहात् कर्दममहारजनोपक्लिष्टवस्त्रा

(द्वै. द्यु.) द्वावेकद्रव्यत्वव्यवहारवदुपचारेणैवैकप्रामाण्यज्ञानत्वव्यवहार । तथा च विषयनिष्ठाबाधित्वांशे [1]एकस्या एव मनोवृत्तेरितरांशे साक्ष्यात्मकस्वप्रकाशात्मकैकज्ञानस्याङ्गीकारान्नानवस्थया प्रवृत्त्याद्यनुपपत्ति । प्रामाण्यपरतस्त्ववादिमते प्रामाण्यग्रहव्यक्तिपरम्पराश्रयणादनवस्था स्यादेव ।

ननु कुत एवं कल्प्यते । भ्रमोपनीतविषयांशमात्रे साक्षिरूपं ज्ञानं भ्रमात्मकमेव किं न स्यादिति चेन्न । सत्साक्षिण शुद्धप्रमात्मकत्वस्यैव तत्र तत्राचार्योदाहृतप्रमाणसिद्धत्वात् । साक्षिणः क्वचिदप्रामाण्ये सर्वत्राप्यनाश्वासप्रसङ्गाच्च । न चेष्टापत्ति । सुखदु खज्ञानादिस्वरूपतद्धर्मतज्ज्ञानप्रामाण्यादिविषये साक्षिण स्वप्नेऽपि व्यभिचारादर्शनेन नियतयाथार्थ्यस्यानुभवसिद्धत्वात् । एवमेवानादिबन्धकारणीभूतात्मस्वातन्त्र्यभ्रमतत्प्रामाण्यभ्रमादयोऽप्युपपादनीया इति दिगित्यस्माकं प्रतिभाति ।

परे तु निश्चितप्रामाण्यकमेव ज्ञानं प्रवर्तकम् । प्रामाण्यग्रहप्रामाण्यग्रहणादिकं तु नापेक्षितम् । तत्राप्रामाण्यग्रहाभावमात्रमपेक्षितम् । तत्काले प्रवृत्त्युच्छेददर्शनात् । एवं च भ्रमात्प्रवृत्तिस्थले भ्रमे प्रामाण्यभ्रमो मानस एव । तत्र प्रामाण्यग्रहपरम्परानाश्रयणान्नानवस्था च । न च प्रामाण्यपरतस्त्ववादिमतेऽप्येतद्रीतिसम्भवात्तन्मतेऽनवस्थारूपदूषणासङ्गतिरिति वाच्यम् । अन्यत्र प्रवृत्त्यादिसम्भवेऽपि यादृशपारलौकिकप्रवृत्त्यादिकारणीभूतेषु सर्वेषु ज्ञानेषु प्रामाण्यविमर्शो वर्तते तदा तन्मते प्रामाण्यग्रहणपरम्पराविश्रान्त्ययोग । सिद्धान्ते च साक्षात्साक्षिविषयीभूतपदार्थज्ञानप्रामाण्यग्रहमादाय विश्रान्तत्वान्नानवस्थावकाश इत्याहु ।

अन्ये तु प्रत्यक्षीया इदं साक्षात्करोमीतिव्यवहारप्रयोजिका या विषयिता तन्निरूपकस्य प्रत्यक्षान्येन बाधो नास्तीति नियम । सा च क्वचित्सन्निकर्षप्रयोज्या क्वचिद्दोषविशेषप्रयोज्या । इत्थं च सुरभि चन्दनमिति प्रत्यक्षे भासमानसौरभस्येव प्रत्यक्षीयालौकिकविषयिताशालिनोऽनुमानादिना बाधे क्षतिविरह । प्रकृते भ्रमनिष्ठप्रामाण्यस्य साक्षिणा ग्रहणेऽपि प्रामाण्यघटकविषयांशे साक्षीयालौकिकविषयताया एव स्वीकारात्तस्य प्रबलानुमानादिभिर्बाधेऽपि न साक्षिणो याथार्थ्यनियमभङ्ग । साक्षात्स्वविषय एव तदीयलौकिकविषयत्वाङ्गीकारात् । घटादावपि प्रामाण्यघटकतया साक्षीयालौकिकविषयतासत्त्वेऽपि तस्य परीक्षितत्वाभिप्रायेणैव मिथ्यात्वानुमानबाधकत्वतदबाध्यत्वयोरुक्तेरित्याहु ।

तच्चिन्त्यम् । अत्र नैयायिकाश्चोदयन्ति । सर्वत्रापि प्रामाण्यग्रहणस्य प्रवृत्त्यादिप्रयोजकत्वे साक्षिरूपस्वप्रकाशात्मकज्ञानस्य प्रामाण्यग्राहकत्वाङ्गीकारेऽपि नानवस्थापगम । साक्षिण उत्पत्त्यभावेऽप्यभिव्यक्त्यङ्गीकारेण घटज्ञानप्रामाण्यविषयकत्वेन तत्प्रामाण्यघटितप्रामाण्यान्तरविषयकत्वेनेत्येव क्रमेणाभिव्यक्त्यनवस्थाया दुर्वारत्वादिति ।

अत्रेदमवधेयम् । घटज्ञानप्रामाण्यघटितं यत्साक्षिनिष्ठं प्रामाण्यं तद्घटितमपि यत्प्रामाण्यमित्येवंक्रमेण सर्वाण्यपि प्रामाण्यानि परस्परविशेषवन्त्यपि साक्षिस्वरूपाण्येव । अत एकैवाभिव्यक्ति सर्वविषयिणी घटज्ञानं

[1] एव मनोवृत्तेरितरांशे इति पाठेन भाव्यमिति भाति ।

(द्वै द्यु) प्रमाणं प्रमाणमिति ज्ञानं प्रमाणमिति नानाव्यवहारहेतुर्भवति। यथा घटनिष्ठघटत्वाधिकरणतातदधिकरणतानिरूपिताधिकरणत्वादीनां घटस्वरूपत्वादेकेनैव तत्प्रत्यक्षेण घटो घटत्वाधिकरणं तदधिकरणत्वाधिकरणमित्यादिव्यवहारस्तथैव प्रकृतेऽपि। अन्यथा परेषां तत्रागतिप्रसङ्गादिति। ननु प्रत्यक्षसिद्धस्य प्रत्यक्षेण बाधाङ्गीकारे केनापि न बाध्यमिति मूलविरोध इत्यत आह ॥ तदिदमिति ॥ अन्यथा प्रत्यक्षान्यत्वबोधकमन्यपदमनर्थकं स्यात्। केनापीत्यनेनैव पूर्तेरिति भावः।

(गु टि.) ॥ स्यादेतदिति ॥ अनेन प्रत्यक्षसिद्धमपीति मूलयोजनोक्ता भवति। ननु 'नायं सर्पः' इति प्रत्यक्षेण सर्पभ्रमादेर्विषयापहारः कुतः। 'अयं सर्पः' इति प्रत्यक्षेणैव 'नायं सर्पः' इति प्रत्यक्षस्याविशेषेण विषयापहारापातात् इत्यतः परीक्षितत्वापरीक्षितत्वाभ्यां विशेषादविशेषासिद्ध्या न वैपरीत्यमित्याशयेनोक्तं बलवतेति। न च व्याप्तिपक्षधर्मतावत्त्वेन निरवकाशत्वादनुमानस्य न प्रत्यक्षबाध्यतेत्यत तथा सति उक्तरीत्या तत्प्राबल्यस्यानौष्ण्यानुमानेपि वक्तुं शक्यत्वात्कालात्ययापदिष्टोच्छेदप्रसङ्ग इत्याशयेनाह ॥ अनुमानेनैवेति ॥ नन्वनौष्ण्यानुमानस्थले प्रत्यक्षस्य बाधकत्वमेव। मिथ्यात्वानुमानस्थले तु 'सन् घटः' इत्यादिप्रत्यक्षमनुमानबाध्यमेवेति व्यवस्थाङ्गीकारान्न कालात्ययापदिष्टोच्छेदापत्तिरित्यत उक्तव्यवस्थाकल्पकाभावान्नेयं व्यवस्था युक्तेति तदुच्छेदो दुर्वार एवेत्याशयेनाह ॥ व्यवस्था वेति ॥ एतच्च खण्डनोक्तं व्यवस्थापकमाशङ्क्य तन्निराकरणेन न्यायामृत एव प्रपञ्चितम्। तत एव प्रतिपत्तव्यम्। ननु 'नायं सर्पः' इति [1]स्वयं प्रत्यक्षाभावेपि 'अयं सर्पः' इति प्रत्यक्षस्य 'नायं सर्पः' इत्याप्तवाक्येन निवृत्तिदर्शनात्कथं प्रत्यक्षसिद्धस्य मानान्तरेणाबाध्यत्वमित्यतो दूरस्थस्य 'अयं सर्पः' इत्याद्यपि प्रत्यक्षं न 'नायं सर्पः' इत्यादिशब्दमात्रेण बाध्यम्। किं तु 'नायं सर्पः' इति मूलप्रत्यक्षेणैव। तथा हि, अमात्यापेक्षया दुर्बलस्यापि भृत्यस्य राजगौरवेण प्रबलामात्यबाधकत्वं, यथा च लिङ्गापेक्षया दुर्बलेनापि प्रकरणादिना स्वापेक्षया प्रबललिङ्गादेः श्रुतिगौरवेण बाधः तथा मूलभूतप्रत्यक्षगौरवादेव आप्तवाक्यजन्यज्ञानेन सर्पप्रत्यक्षस्य बाध इत्यर्थः। न चैवमपि प्रत्यक्षप्राप्तस्य शब्देन बाधापत्त्या 'न केनापि बाध्यम्' इति नियमभङ्ग एवेति वाच्यम्। शुष्कस्य मानान्तरस्यैव प्रत्यक्षप्राप्तबाधकत्वाभावस्य नियमफलतया अभिप्रेतत्वेन समूलकमानान्तरस्य तद्बाधकत्वाभावस्य नियमफलतया अनभिप्रेतत्वेन तदप्रसङ्गात्। ततश्च 'अन्येन केनापि' इत्येतन्निर्मूलेन केनापि न बाध्यमित्येवम्परतया मूलयोजना सूचिता भवति।

एतेन 'आप्तवाक्यमूलप्रत्यक्षस्य निवर्त्यभ्रमव्यधिकरणत्वात् व्यवजिहीर्षादिना नष्टत्वाच्च न तस्य भ्रमनिवर्तकत्वं भवति' इति दूषणमलग्नकं वेदितव्यम्। मूलप्रत्यक्षाश्रयणेन निश्चितप्रामाण्यकभ्रमसमानाधिकरणाप्तवाक्यजज्ञानस्यैव बाधकत्वाङ्गीकारात्।

यत्तु 'भ्रमसमानाधिकरणज्ञानजनकाप्तवाक्यप्रयोगहेतुत्वसम्बन्धेन सामानाधिकरण्यसत्त्वात् व्यवजिहीर्षादिरूपव्यापारद्वारा भ्रमनिवृत्तिकाले सत्त्वोपपत्तेश्च भ्रमव्यधिकरणस्याप्याप्तवाक्यमूलभूतस्य प्रत्यक्षस्य भ्रम-

---

[1] स्वस्य इति पाठेन भाव्यमिति भाति।

(गु टि) बाधकत्वमुपपन्नम्' इत्यभिप्रायकल्पनम् तत्तु एतद्ग्रन्थाभिप्रायकथनरूपोदाहृतन्यायामृतग्रन्थादर्शनमूलकमेवेत्ययुक्तत्वादुपेक्ष्यम् ।

शब्दमात्रं न बाधकम् । किन्तु तन्मूलभूतप्रत्यक्षमेवेत्यत्रोपष्टम्भकमाह ॥ अत एवेति ॥ न चैतत् पितृवाक्ये नास्तीति शब्दस्यैव तत्र बाधकत्वम् । अन्यथा 'नायं सर्पः' इति पितृवाक्यस्थलेपि 'किं भवानेव पश्यति, एवमेव वा वक्ति' इति प्रतिवचनप्रसङ्गादिति वाच्यम् । पितृवाक्यस्य प्रत्यक्षमूलकताया निश्चितत्वेन तथा प्रतिवचनाभावोपपत्त्या वाक्यमूलभूतप्रत्यक्षगौरवेण शब्दस्य बाधकत्वोपपत्त्या विरोधाभावात् । शब्दमात्रस्य प्रत्यक्षबाधकत्वे बाधकञ्चाह ॥ अन्यथेति ॥ श्रुतिविरोधेन प्रत्यक्षस्यैवाप्रामाण्यसम्भवात् । एतच्च तत्सिद्धिरित्यादितत्सिद्धिपेटिकायां प्रपञ्चितम् । तत एव प्रतिपत्तव्यम् ।

ननु सर्पभ्रमादिस्थले 'नायं सर्पः' इत्यादिप्रत्यक्षेणैव बाध इत्युक्तम् । तदसत् । तथा सति जात्या प्राबल्यस्योभयत्राप्यविशिष्टत्वेन सर्पभ्रमेणैव 'नायं सर्पः' इति प्रत्यक्षस्यैव बाध्यताया वक्तुं शक्यत्वात् इत्यतः परीक्षितत्वापरीक्षितत्वाभ्यां विशेषेण वैपरीत्याप्रसङ्गादुक्तं युक्तमित्याशयेनाह ॥ प्रत्यक्षन्त्विति ॥ तदिदमुक्तमिति ॥ प्रत्यक्षसिद्धं प्रत्यक्षादन्येन बाध्यं नेत्युक्तया प्रत्यक्षबाध्यताया: सूचितत्वादिति भावः ।

**प्रत्यक्षसिद्धस्यानुमानाद्यबाध्यत्वनियमे व्यभिचारशङ्का तत्परिहारश्च**

(टी.) ननु नीलं नभ इति प्रत्यक्षं विभुत्वाद्यनुमानबाध्यं दृष्टम् । तथा प्रादेशपरिमितश्चन्द्रमा इति प्रत्यक्षमागमबाधितमुपलब्धम् । न हि गगनादेरनीलत्वादिकं प्रत्यक्षसिद्धम् । येन तत्रापि प्रत्यक्षं बाधकं स्यात् । अपौरुषेयवाक्येन बाधे मूलप्रत्यक्षस्याप्यभावात् । तत्कथमेतदित्यत आह

**चन्द्रप्रादेशत्वादिविषयं तु दूरस्थत्वादिदोषयुक्तत्वादपटु**

चन्द्रप्रादेशत्वादिर्विषयो यस्य तत्तथोक्तम् । नन्वत्रान्यपदार्थो न तावत्प्रत्यक्षम् । अयथार्थत्वात् । न च ज्ञानमप्रकृतत्वात् । मैवम् । प्रत्यक्षमिव प्रत्यक्षमित्युपपत्तेः । अथ वा प्रत्यक्षस्य प्रकृतत्वादेवेन्द्रियजन्यं ज्ञानमपि प्रकृतमित्यदोषः । तुशब्दो विशेषार्थः । चन्द्रप्रादेशत्वादिविषयप्रत्यक्षं न जगत्प्रत्यक्षवत् । किन्त्वपटु । स्वार्थे पुरुषं प्रवर्तयितुं न क्षममिति यावत् । कुतः दूरस्थत्वादिदोषयुक्तत्वात् ।

इदमुक्तं भवति । द्विविधं ज्ञानम् । एकाकारनियतं डोलायमानञ्च । तत्र द्वितीयं सन्देहसञ्ज्ञां लभते । आद्यमपि द्विविधम् । किञ्चित्स्वार्थस्य निश्चायकम् । यथा स्तम्भोऽयं भवत्येवेति । किञ्चित्स्वार्थमुल्लिखदपि न तस्य निश्चायकम् । यथा मवितृसुषिरविषयम् । स चायं भेदः क्वचित्सम्भावनाभावाभावाभ्यां भवति । क्वचित्परीक्षापेक्षायामपि तत्प्रवृत्त्यप्रवृत्तिभ्याम् । क्वचिच्च प्रागेव विपरीतसंस्कारभावाभावाभ्याम् । तत्राद्यं निःशङ्कप्रवृत्तिहेतु । न तु द्वितीयम् । चन्द्रप्रादेशत्वादिविषयञ्च यद्दूरस्थत्वादिदोषयुक्तं तत्परिमाणादावयथार्थमिति साक्षिणा निश्चितत्वादेकाकारविषयतया जायमान-

(टी) मप्यनिश्चाययदेव बाधितप्रायं जायते। ततः पश्च प्रवर्तमानावनुमानागमौ प्रागेव तेन दत्तावकाशौ चन्द्रप्रादेशत्वाभावादिकं निश्चिन्वानौ तद्बाधकाविवोच्येते। अतो नैतत्प्रत्यक्षस्यानुमानागमबाध्यत्वे निदर्शनमिति।

(वि. टि) प्रत्यक्षस्यानुमानशब्दाबाध्यत्वे बाधकं शङ्कते ॥ नन्विति ॥ आगमबाधितमिति ॥

अष्टाशीतिसहस्राणि विस्तीर्णो योजनानि तु।
प्रमाणं तस्य विज्ञेयं कला पञ्चदशैव तु॥

इत्यागमबाधितमित्यर्थः ॥ अपौरुषेयेति ॥ अर्थमुपलभ्य रचितत्वरहितेत्यर्थः। एतत् प्रत्यक्षं मानान्तराबाध्यमित्येतत् ॥ अयथार्थत्वादिति ॥ अपरोक्षभ्रमे प्रत्यक्षाभासशब्दस्यैव प्रयुज्यमानत्वेन प्रत्यक्षपदस्यापरोक्षप्रमितिवाचकत्वादिति भावः। अन्यपदार्थं प्रत्यक्षमेव। न च चन्द्रप्रादेशत्वादिज्ञानस्याप्रमात्वेन तत्र प्रत्यक्षपदप्रयोगानुपपत्तिः। मुख्यप्रयोगासम्भवेऽपि गौण्या तत्प्रयोगोपपत्तिरिति भावेन ह ॥ ग्रन्थश्चमिवेति ॥ अथ वा इन्द्रियजन्यज्ञानमेवान्यपदार्थः। न च तस्याप्रकृतत्वं दोषः। प्रत्यक्षपदेनेन्द्रियजन्ययथार्थज्ञानस्य प्रकृतत्वेन तच्छरीरप्रविष्टतया इन्द्रियजन्यज्ञानस्यापि प्रकृतत्वादित्याह ॥ अथ वेति ॥ ननु ज्ञानस्य शब्दत्व सन्देहरूपत्वम्। न च चन्द्रप्रादेशत्वादिज्ञानं सन्देहः। तस्यैकाकारनियतत्वादित्यत आह ॥ स्वार्थ इति ॥ दूरस्थत्वादीनि ॥ दूरस्थत्वादिदोषजन्यत्वेन निश्चितत्वादित्यर्थः। ननु लोके तदेव पटिव्युच्यते। यत्तु शङ्काप्रवृत्तिजनकं ज्ञानम्। 'स्वार्थे पुरुषं प्रवर्तयितुं न क्षमम्' इत्यनेन च 'सर्वथा प्रवृत्तिजनकं यन्न भवति तदेवापटु' इत्युक्तम्। एवञ्च संशयस्य सकम्पप्रवृत्तिजनकस्य तदुभयबहिर्भावः स्यादित्याशङ्क्य निःशङ्कप्रवृत्तिजननयोग्यं पटु, तद्भिन्नमपटु इति प्रतिपादनाय ज्ञानभेदमाह ॥ इदमुक्तं भवतीति ॥ एकाकारेति ॥ संशयभिन्नेत्यर्थः ॥ डोलायमानमिति ॥ एकस्मिन् धर्मिणि विरुद्धानेकधर्मवैशिष्ट्यावगाहीत्यर्थः ॥ स्वार्थस्येति ॥ स्वविषयस्येत्यर्थः ॥ स्तम्भोऽयं भवत्येवेतीति ॥ एतादृशाभिलापजनकमित्यर्थः ॥ स्वार्थमुल्लिखदपीति ॥ वस्तुतः स्वविषयीभूतघटादिकमुल्लिखदपीत्यर्थः। स्वार्थनिश्चायकत्वादिरूपो विशेषः केन ज्ञायत इति जिज्ञासायामाह ॥ स चेति ॥ क्वचित्स्तम्भसवितृसुषिरादौ योग्यत्वायोग्यत्वाभ्यां स भेदो निश्चितो भवतीत्यर्थः ॥ क्वचिदिति ॥ जलमृगतृष्णादौ संवादविसंवादितत्तदर्थप्रवृत्तिनिवृत्तिभ्यां स निश्चितो भवतीत्यर्थः।

ननु प्रवृत्तिसंवादविसंवादयोः परीक्षापेक्षज्ञानत्वात् तत एव तन्निश्चयः किं न स्यात् इत्यत आह ॥ परीक्षापेक्षायामपीति ॥ प्रवृत्तिगतसंवादादेः परीक्षापेक्षज्ञानत्वेऽपि तादृशप्रवृत्त्यप्रवृत्तिभ्यामुक्तभेदनिश्चयो भवत्येव। न हि कार्यत्वनिश्चयार्थं सावयवत्वमपेक्षितमित्येतावता कार्यत्वं सकर्तृकत्वनिश्चायकं न भवतीत्यस्तीति भावः ॥ क्वचिच्चेति ॥ शङ्खश्वेत्यपीतादावित्यर्थः। ननु भवदुक्तरीत्याऽस्य ज्ञानस्यापटुज्ञानेऽन्तर्भावः, तथापि अनुमानादिबाध्यत्वं विना दोषजन्यत्वस्य निश्चेतुमशक्यत्वात्प्रत्यक्षस्यानुमानबाध्यत्वं दुर्वारम्। अन्यथा चन्द्रप्रादेशत्वादिप्रत्यक्षविरोधेनानुमानादेः प्रवृत्तिरेव न स्यादित्यत आह ॥ चन्द्रप्रादेशत्वादिविषयश्चेति ॥ अत्र आदिपदात्स्तम्भो

(वि टि )नैल्यप्रत्यक्षादिपरिग्रह । परीक्षितप्रत्यक्षेणाधिकपरिमाणवत्तया निर्णीते पर्वताग्रवर्तिनि वृक्षे न्यूनपरिमाणग्रहे दूरस्थत्वादेर्दोषतया क्लृप्तत्वेन दूरे यत्परिमाणज्ञान तद्दूरस्थत्वादिदोषजन्यमिति सामान्यव्याप्तित एव चन्द्रप्रादेशत्व-ज्ञानस्य दोषजन्यत्वनिश्चयसम्भवात् तन्निश्चयसहकृतसाक्षिणा अप्रामाण्यस्य निश्चितत्वात् अनुमानादिबाध्यत्व विना दोषजन्यत्वनिश्चय अनुमानादिप्रवृत्तिश्च सम्भवतीति न तदर्थं प्रत्यक्षस्यानुमानादिबाध्यत्वस्वीकारावश्यकतेति भाव । नन्वेवमनुमानागमयोर्नभोनैल्यादिप्रत्यक्षबाधकत्वव्यवहारो निरालम्बन एव स्यादित्यत आह ॥ ततः परश्चेति ॥ तथा च नभोनैल्याद्यभावविषयकत्वमेव तदालम्बनमिति भाव । एतत् नभोनैल्यादिप्रत्यक्षम् ।

(रा टि ) प्रत्यक्षसिद्धं प्रत्यक्षान्तरेणैव बाध्यमित्येतद्व्यभिचारीति शङ्कते ॥ नन्वित्यादिना ॥ विभुत्वा-दीति ॥ भूतचतुष्टयान्यत्वशब्दगुणकत्वादिरादिपदार्थ । नभो न नीलं विभुत्वादात्मवदिति प्रयोग ॥ आगमेति ॥

अष्टाशीतिसहस्राणि विस्तीर्णो योजनानि तु ।

इत्याद्यागमेत्यर्थ ॥ अपौरुषेयेति ॥ मानान्तरादर्थमुपलभ्य रचितत्वहीनेत्यर्थ ॥ अन्यपदार्थ इति ॥ बहुव्रीहे-रन्यपदार्थप्रधानत्वाच्चन्द्रप्रादेशत्वादिविषयमित्यस्य बहुव्रीहित्वादन्यपदार्थशब्दितं विशेष्यमित्यर्थ । प्रमाणभूत-प्रत्यक्षमित्यर्थ । तस्यैव प्रकृतत्वादिति भाव ॥ अयथार्थत्वादिति ॥ चन्द्रप्रादेशत्वबुद्धेरिति योज्यम् । इन्द्रिय-जन्यत्वगुणयोगेन गौणप्रत्यक्ष विशेष्यमिति भावेनाह ॥ प्रत्यक्षमिवेति ॥ प्रकृतप्रत्यक्षान्तर्गतत्वात्प्रत्यक्षैकदेशे-न्द्रियजन्यज्ञानमपि प्रकृतमेवेति भावेनाह ॥ अथ वेति ॥ मूलार्थमाह ॥ चन्द्रेति ॥

ननु दूरस्थत्वदोषयुक्तत्वोक्त्या कथमागमबाध्यत्वस्य सर्वजनसम्मतस्यापलाप इत्यतो मृतमारकस्येवागमस्य तत्र बाधकत्वमिति ज्ञानभेदव्युत्पादनपूर्वमाह ॥ इदमुक्त भवतीति ॥ एककोटिज्ञानेऽप्ययं स्वार्थनिश्चायकत्वा-निश्चायकत्वभेद किंनिमित्त इत्यत आह ॥ स चायमिति ॥ स्तम्भसवितृसुषिरादौ स्तम्भत्वादिसम्भावनायोग्य-ताया भावेनाभावेन च यथाक्रम ध्येयम् ॥ परीक्षेति ॥ तटाकजलमरुमरीचिकादाविति भाव । परीक्षा द्रव-द्रव्यत्वपिपासाशमनशक्तत्वादियुक्ति ॥ विपरीतेति ॥ शङ्खपैत्यश्वैत्ययोर्विषय इति भाव. ॥ आद्यमिति ॥ स्तम्भोऽय भवत्येवेत्येवमादिक स्वार्थनिश्चयरूपज्ञानमित्यर्थ । द्वितीय स्वार्थानिश्चायकम् । अस्त्वेव प्रकृते किमा-यातमित्यत आह ॥ चन्द्रप्रादेशत्वादिविषयश्चेति ॥ एकाकारेत्यादिनान्वय । कुत इत्यत प्रादेशिकत्व-ज्ञानात्प्रागेव प्रादेशिकत्वाभावगोचरविपरीतसंस्कारभावादिति भावेनाह ॥ यदिति ॥ यद्दूरस्थत्वातिसामीप्यादि-दोषसहकृतकरणजन्यं तत्तदयथार्थमिति व्याप्तेर्भावात्तन्मूलकानुमानेन वा सहकृतेन साक्षिणा दोषजन्यज्ञानेष्वप्रा-माण्यस्य विषयापहाररूपस्य निश्चितत्वेनातादृशस्थले जायमान ज्ञान शङ्खपैत्यज्ञानमिव स्वार्थमनिश्चाययदेव जायत इत्यर्थ । प्रादेशिकत्वादिभ्रमादावागमप्रवृत्त प्रागेव बाधितत्वोपपादनेन नभो नैल्यभ्रमादावपि विभुत्वाद्यनुमान-प्रवृत्ते प्रागेव बाधितत्वमुपपादितप्रायं मत्वाऽऽह ॥ ततः परश्च प्रवर्तमानाविति ॥ नभसि समीपे नीरूपत्व निश्चयाद्दूरे तत्र नैल्यधी दूरस्थत्वदोषजन्येति प्रागेव साक्षिणा निश्चयादेकाकारतया जायमानमपि नैल्यज्ञान स्वार्थमनिश्चाययदेव जायत इति वा अश्रावणे नभसि श्रावणी शब्दाभावबुद्धिरिवाचाक्षुषेऽपि गगने रूपाभावधी-

(रा.टि ) र्वायाविव चाक्षुष्येव । दूरस्थस्य पुंस यत्र नभ प्रदेशे नैल्यधी· समीपस्थस्य तत्रैव तत्रैव चक्षुषैवानैल्यबु-द्धेर्दर्शनादित्यादिरूपेण वोपपादन न्येयमिति भाव ॥ तेनेति ॥ दूरस्थत्वादिदोषजन्यत्वयुक्तिसध्रीचीनेन । तदा-हितशक्तिकेनेति यावत् । साक्षिणा दत्तावकाशाविर्त्यर्थ । नैल्यमादिपदार्थ ।

(वे टि ) ॥ आगमबाधितमिति ॥

अष्टाशीतिसहस्राणि विस्तीर्णा योजनानि तु ।
प्रमाणं तत्र विज्ञेय कला पञ्चदशैव तु ॥

इत्याद्यागमबाधितमित्यर्थ । एतत् प्रत्यक्षं न मानान्तरबाध्यमित्येतत् ॥ अयथार्थत्वादिति ॥ चन्द्रप्रादेशत्वादि-विषयस्य तस्येति शेष । इन्द्रियजन्ययथार्थज्ञानस्यैव प्रत्यक्षपदवाच्यत्वादिति भाव ॥ प्रत्यक्षमिवेति ॥ तथा च पूर्वं प्रत्यक्षशब्देन गौण्या वृत्त्या प्रत्यक्षाभासस्यापि प्रकृतत्वमिति भाव । विशेषमेव दर्शयति ॥ चन्द्रप्रादेश-त्वादीति ॥ ननु ज्ञानस्यापटुत्व सन्देहरूपत्वम् । न च प्रादेशत्वादिज्ञानस्यैकाकारनियतस्य सन्देहरूपत्व युक्तम् । अत. कथमेतदित्यत आह ॥ स्वार्थ इति ॥ दोषयुक्तत्वात् दोषयुक्तत्वेन निश्चितत्वात् ।

ननु चन्द्रप्रादेशत्वादिप्रत्यक्षस्यापि स्तम्भोऽयमित्यादिप्रत्यक्षवदेकाकारविषयत्वेन स्वार्थे पुरुषप्रवर्तकत्वसम्भ-वात् कथमपटुत्वमुक्तमित्याशङ्कायामेकाकारविषयत्वाविशेषेप्यस्य दोषजन्यतया निश्चितत्वात्स्तम्भोऽयमित्यादिज्ञान-वैलक्षण्यमिति दर्शयितु तावज्ज्ञानप्रभेदमाह ॥ इदमुक्त भवतीत्यादिना ॥ ज्ञानप्रभेदप्रदर्शनकृत्य तूत्तरत्र वक्ष्याम । यद्वा ननु चन्द्रप्रादेशत्वादिविषयप्रत्यक्षस्यापटुत्वोक्त्या अनुमानागमबाध्यत्व कथ प्राप्तम् । प्रत्युतापटुत्वा-देवानुमानागमबाध्यत्व च स्यादित्यतोऽभिप्रायमाह ॥ इदमुक्तं भवतीति ॥ एकाकारविषयत्वात्स्वार्थनिश्चायक-त्वादिरूपो विशेष एवाय किंनिबन्धन इति जिज्ञासायामाह ॥ स चेति ॥ सम्भावनेति ॥ अर्थाभावानिश्चय इत्यर्थ. । स्तम्भोऽयमिति ज्ञान सम्भावनासत्त्वेन स्वार्थनिश्चायकमिति ज्ञातव्यम् ॥ क्वचिदिति ॥ सत्यरजतज्ञाने शुक्तिरजतज्ञाने चेत्यर्थ । रजतमिदमिति ज्ञानानन्तरं प्रामाण्याप्रामाण्यसंशयेन प्रामाण्यग्राहके साक्षिणि प्रतिबद्धे सति प्रतिबन्धकाभावसिद्ध्यर्थं साक्षिण परीक्षापेक्षाया तत्प्रवृत्तिर्यत्र सत्यरजतादिज्ञाने तत् स्वार्थनिश्चायकम् । परीक्षया शङ्कापगमेऽप्रतिबद्धेन साक्षिणा प्रामाण्यनिश्चयात् । यत्र च शुक्तिरजतादिज्ञाने न परीक्षा प्रवर्तते तत्राप्रामाण्यनिश्चयेन न तत्स्वार्थनिश्चायकमिति तयोर्भेदो भवतीत्यर्थ ॥ क्वचिच्च प्रागेवेति ॥ शैलाग्रस्थतरुपरि-माणादिज्ञाने सन्निहिततरुपरिमाणादिज्ञाने चेत्यर्थ ॥ विपरीतसंस्कारेति ॥ दोषनिश्चयेत्यर्थ । तत्र दूरस्थ-त्वादेर्दोषस्य प्रागेव निश्चितत्वेन शैलाग्रस्थतरुपरिमाणादिज्ञानं न स्वार्थनिश्चायकम् । सन्निहितपरिमाणज्ञानं तु प्राग्दोषनिश्चयाभावात्स्वार्थनिश्चायकमित्यपि भेदो भवतीति भाव. ॥ तत्राद्यमिति ॥ यत्र सम्भावना यत्र परीक्षा-प्रवृत्तिर्यत्र प्रागेव विपरीतसंस्काराभावस्तदित्यर्थ. ॥ निःशङ्कप्रवृत्तिहेतुरिति ॥ अतः पटुशब्देनोच्यत इति शेषः ॥ न तु द्वितीयमिति ॥ अतस्तदपटुशब्देनोच्यत इति शेषः ।

(वे टि ) एवं ज्ञानप्रभेदमुक्त्वेदानीं चन्द्रप्रादेशत्वादिप्रत्यक्षस्यैकाकारविषयत्वात्स्तम्भप्रत्यक्षवत्पटुत्वमेव । अपटुत्वेऽप्यागमादिबाध्यत्वमेवेति शङ्कायां उत्तरमाह॥ **चन्द्रप्रादेशत्वादिविषयश्चेति** ॥ आदिपदेन नभोनैल्य-प्रत्यक्षग्रहणम्। **दोषयुक्त** दोषयुक्तवस्तुविषयम्। परिमाणादावित्यादिपदेन रूप ग्राह्यम्॥ **साक्षिणेति** ॥ ज्ञाननिष्ठ-व्याप्तिवादित्यर्थ ॥ **निश्चितत्वादिति** ॥ प्रागेवेति शेष ॥ **अनिश्चाययदेवेति** ॥ स्वार्थमिति शेष ॥ **तद्बाध-काविवेति** ॥ येन हि यस्य भ्रमत्वं ज्ञायते तत्तस्य बाधकम् । न हि चन्द्रप्रादेशत्वादिविषयप्रत्यक्षस्यानुमाना-ऽऽगमाभ्यां भ्रमत्व ज्ञायतेऽतो न वास्तव बाधकत्वमित्यभिप्रेत्येवशब्द । अत एवोक्त तेन दत्तावकाशाविति । तर्हि बाधकसाम्यं कथमित्यत उक्तम्। चन्द्रप्रादेशत्वाभावादिकमिति ।

नन्वस्तु परिमाणयाथात्म्यस्य समीपे चक्षुषा सम्यग्गृहीतत्वेन दूरे तद्धीरयथार्थेति प्रागेव निश्चयसम्भवेन नागमे वास्तव बाधकत्वमिति । अनुमाने तु कथं वास्तवमबाधकत्वम्। आकाशस्यातीन्द्रियत्वेन तत्र रूपाभावस्य समीपेऽप्यनुमान विना ग्रहीतुमशक्यत्वेन दूरे रूपधीरयथार्थेति प्राग्व्याप्तेरेव ग्रहीतुमशक्यत्वादिति चेन्न । आश्रावणेऽप्याकाशे श्रावणीशब्दाभावधीरिव आचक्षुषेऽप्याकाशे रूपाभावधीर्वायाविव चाक्षुष्येव युक्ता । दूरस्थस्य पुंसो यत्र नभःप्रदेशे नैल्यधी समीपस्थस्य तस्यैव तत्रैव चक्षुषैव नैल्यबुद्धेरनुभवसिद्धत्वात् । एवञ्च नानुमानेपि वास्तव बाधकत्वमिति ।

(द्वै चु.) प्रत्यक्षस्य निश्चितप्रामाण्यकप्रत्यक्षतत्प्रामाण्याधीनस्वप्रामाण्यकत्वरूपतन्मूलकत्ववदनुमानाग-माद्यन्येन बाधो नास्तीति नियमे व्यभिचार शङ्कते ॥ **नन्विति** ॥ **दृष्टमिति** ॥ न नीलं नभ इति प्रत्यक्षाननु-भवात् विभुत्वानुमानस्योक्ततन्मूलकत्वाभावात्तद्बाध्ये तत्र व्यभिचार इति भाव ॥ **तथेति** ॥ **आगमेति** ॥

अष्टाशीतिसहस्राणि विस्तीर्णं योजनानि तु ।
प्रमाणं तत्र विज्ञेय कला पञ्चदशैव तु ।

इत्यागमेनेत्यर्थ । उपपादन तु व्यभिचारस्यानुमानस्थल इवानुसन्धेयम्। मूले आदिपदेन नभोनैल्यग्रहणेऽपि प्रमाणपरिगणनाक्रमे अनुमानस्यागमात्पूर्वोपस्थितत्वात्तदनुसारेणानुमानबाध्यस्य नीलं नभ इत्यस्य शङ्काया प्रथममुपन्यासो बोध्य. ॥ **प्रत्यक्षमिति** ॥ 'न च प्रत्यक्षसिद्धम्' इति पूर्वमूलस्थप्रत्यक्षपदतात्पर्यविषयीभूतमित्यर्थ· ॥ **अयथार्थत्वादिति** ॥ यथार्थप्रत्यक्षस्यैव मुख्यत्वेन वाच्यत्वात् पूर्वस्थले तस्यैव तात्पर्यविषयत्वाच्च प्रकृते-ऽन्यपदार्थत्वेन विवक्षितस्य भ्रमत्वात्तदभेदायोग इति भाव । **ज्ञान** ज्ञानत्वेन ज्ञानसामान्यम् । **अप्रकृतत्वात्** अनुमानाद्यबाध्यत्वेन पूर्वमनुक्तत्वात् । तथा च ज्ञानसामान्यविषये शङ्कापरिहारेऽनाकाङ्क्षिताभिधानापत्तेरिति भाव ॥ **मैवमिति** ॥ **प्रत्यक्षमिव प्रत्यक्षमितीति** ॥ मुख्यप्रत्यक्षसदृशमत्र विशेष्यसमर्पकतयाऽनुवृत्तप्रत्यक्ष-पदतात्पर्यविषयीभूतं भवतीति हेतोरुपपत्तेस्तस्य बहुव्रीह्यर्थत्वे बाधकाभावादित्यर्थ. ।

(द्वै चु) अयमभिप्राय.। अत्र विशेष्याकाङ्क्षाया पूर्वमूलस्थप्रत्यक्षपद समासान्तर्गतमपि प्रधानान्ततयाऽनुवर्तते। तच्च पूर्वं मुख्यवृत्त्याश्रयणबलात्प्रत्यक्षप्रमाबोधकमप्यत्र चित्रलिखितसिंहे सिंहपदमिव रूढगौण्या त महज्ञ्रमप्रत्यक्षबोधकं तात्पर्यवशादिति।

अत्र कल्पे पूर्वमूलस्थप्रत्यक्षपदस्य तन्मुख्यार्थप्रमापरत्वे अन्येनं ययुक्तम्। प्रमासिद्धस्य कनाप्यबाध्यत्वात्। किञ्च प्रमाया अन्याबाध्यत्वे कस्याप्यविवादात्परकीयशङ्कानुत्थिते प्रत्यक्षसिद्धमिति वाक्यस्थप्रत्यक्षपदस्य प्रत्यक्षसामान्यपरत्व भ्राम्यत सिद्धान्ततात्पर्यापरिज्ञानित शङ्केति वक्तव्यम्। तथात्वे प्रमाया अस्मदभिप्रेतत्वमित्युक्त्यैव शङ्कापरिहारसम्भवे दूरस्थत्वादिदोषादपटुत्वोपपादनग्रन्था नातीवोपयोगी। किञ्च प्रत्यक्षप्रमासिद्धस्यान्येनाबाध्यत्वेऽभिहिते 'सत्यमेतत्। जगत्प्रत्यक्षमप्रमेति तद्बाध्यं भवतु' इति शङ्का सिद्धान्ताभिप्रायाज्ञानपूर्विकैवोचिता। तदुपरि जगत्प्रत्यक्षस्य प्रमात्वोपपादकग्रन्थ एवापेक्षित। न चन्द्रप्रादेशिकत्वादीत्यादिग्रन्थ। भ्रान्तिमूलशङ्कोत्थापनतत्परिहारयोरुपयोगाभावात्। कथञ्चिच्छिष्यबोधनार्थमिति समाधानं तु नातीव स्वरसमित्यरुच्या प्रकारान्तरमाह ॥अथ वेति॥ प्रत्यक्षस्य प्रत्यक्षपदमुख्यार्थभूतप्रत्यक्षप्रमारूपज्ञानस्य। प्रकृतत्वात् बाधोपपादनाय बुद्धिस्थत्वात्। एवकारेणेन्द्रियजन्यज्ञानसामान्य कथ प्रकान्तमिति शङ्का न कार्या। हेतो स्फुटत्वादिति सूचयति ॥ इन्द्रियजन्यं ज्ञानमपीति॥ अपिः समुच्चये। न केवलं प्रत्यक्षप्रमारूप ज्ञानं, किन्तु भ्रमसाधारणेन्द्रियजन्यज्ञानत्वावच्छिन्नमपीत्यर्थ। अपिरभिव्याप्तौ च। इन्द्रियजन्यज्ञानसामान्यमित्यर्थ। प्रकृतं पूर्वमूलस्थसमासान्तर्गतप्रत्यक्षपदेन प्रकृतमित्यर्थ। अदोषः अत्रानुवृत्ततत्पदस्य तद्रूपावच्छिन्नबोधकत्वादिति भाव।

अय भाव.। प्रत्यक्षप्रमाबाधेऽभिहित 'प्रकृतानुमानबाधात्तत्प्रामाण्यमेवासम्मतम्। उपजीव्यत्वेनापि तद्व्यवस्थापयितुमशक्यम्। प्रकारांशे उपजीव्यत्वायोगात्' इति वदन्त प्रति 'मास्तूपजीव्यत्व तथापि प्रत्यक्षस्य स्वभावप्राबल्यादेव प्रकृतानुमानबाधाभावात् प्रत्यक्षरूपबाधकान्तराभावे प्रामाण्य निर्विवादमेवेत्याशयेन प्रसक्तेतन्मूले प्रत्यक्षपदमिन्द्रियजन्यज्ञानत्वरूपसामान्यधर्मावच्छिन्नपरमेव वाच्यम्। तस्यैवोभयसिद्धस्य प्राबल्यप्रयोजकत्वेन बोधनार्थमावश्यकत्वात्। न तु निर्दोषार्थेन्द्रियसन्निकर्षजन्यज्ञानत्वावच्छिन्नपरम्। जगत्प्रत्यक्षे तस्य परं प्रति विवादग्रस्ततया तद्रूपावच्छिन्नस्य प्राबल्योपपादनेऽपि तेन जगत्प्रत्यक्षप्राबल्यासिद्धेस्तादृशार्थस्य प्रकृतानुपयोगापत्ते। तथाचेन्द्रियजन्यज्ञानत्वाचित्वात्पूर्वमूलस्थप्रत्यक्षपदस्यात्राप्यनुवर्तमानं तादृशधर्मावच्छिन्नं वाच्यमेवेति नाप्रक्रान्तबोधकत्वादिदोष इति।

अथ वा प्रत्यक्षबाधितमिति मूले प्रत्यक्षप्रमायाः प्रत्यक्षपदमुख्यार्थत्वेन प्रकृतत्वानुसन्धानमात्रेण पूर्वमूलस्थप्रत्यक्षपदस्य तत्परत्वाभिमानिनामाशङ्का नन्वित्यादिना प्रदर्शिता। प्रत्यक्षमिवेत्यादिसमाधानग्रन्थस्य चायमर्थ। प्रत्यक्षपदस्य गौणीवृत्त्याश्रयेण प्रत्यक्षसिद्धमिति मूलस्थप्रत्यक्षपदस्य भ्रमपरत्वेनोपपत्तेरित्यर्थ।

(द्वै द्यु ) अयं भाव । न केवलमेतत्प्रघट्टिकास्थप्रत्यक्षपद प्रत्यक्षबाधितमिति मूलानुरोधात्प्रत्यक्षप्रमापरम् । किन्तु पूर्वमूलानुरोधात् प्रमासदृशभ्रमपरमपि । न च पूर्वमूलस्थपद कुतो भ्रमपरमिति वाच्यम् । प्रमापरत्वे अन्येनेत्यस्य वैयर्थ्यापत्ते । प्रमाया केनाप्यबाध्यत्वात् । तर्हि भ्रमस्यानुमानाद्यबाध्यत्वोक्तौ कथं प्रकृतप्रत्यक्षप्रमायाः प्राबल्य सिद्ध्यतीति चेन्न । बाध्यमपि प्रत्यक्षभ्रमात्मकं ज्ञान अनुमानागमाबाध्यं दृष्टम् । तत्कस्य हेतो. । स्वभावप्राबल्यादेवेति वक्तव्यम् । बीजान्तराभावात् । किमुत प्रत्यक्षप्रमाया इति कैमुत्यन्यायेनैव तत्सिद्धे । तथा च पूर्वमूले भ्रमस्यैव प्रसक्तत्वादत्रान्यपदार्थत्व तस्य युक्तमिति ।

अत्र कल्पे सादृश्यरूपगौणाश्रयणायानुमित्यादिव्यावृत्तेन्द्रियजन्यज्ञानत्वरूपसादृश्यघटकधर्मोपस्थिते. प्रथममावश्यकत्वात्तेनैव भ्रमप्रमोभयसाधारणरूपेणोभयबोधकत्वसम्भवे प्रथममूलस्थप्रत्यक्षपदप्रक्रान्तप्रमा विहायभ्रममात्रबोधकत्व प्रत्यक्षसिद्धेत्यत्रत्यप्रत्यक्षपदस्यानुचितमित्याशयेन तथैवाह ॥ **अथ वेति** ॥ अभिप्रायस्तु पूर्वोक्त एव । तुशब्दस्य समुच्चयार्थकत्व न सङ्गच्छते । प्रमाया अपटुत्वाभावेनासमुच्चेयत्वात् । भ्रमान्तराणामादिपदेनैव गृहीतत्वादित्यत आह ॥ **त्विति** ॥ सर्वभ्रमाद्यपेक्षयेत्यादि । स च विशेष प्रत्यक्षबाधितत्वेन निरूपणानर्हत्वरूप शङ्काभिमत । अथवा जगत्प्रत्यक्षापेक्षया विशेषसूचनार्थं इत्यर्थ. । स चापटुत्वरूप एव बोध्य. ।

॥ **प्रवर्तयितुमिति** ॥ उपलक्षणमेतत । आप्तान् प्रत्युपदेष्टुमपीति ध्येयम् । अक्षममजनकम् । **दोषयुक्तत्वात्** दोषजन्यत्वात् । ननु शङ्केनानुमानागमादिज्ञाप्यमप्रमात्वरूपमपटुत्व यदभिहितं तस्य दूरस्थत्वादिदोषप्रयुक्तत्वमभिहित मूले । तेन शङ्का दृढीकृतैव । न परिहृतेत्यतोऽभिप्रायमाह ॥ **इदमुक्तमित्यादिना** ॥ उपोद्घातविषयाह ॥ **द्विविधमित्यादिना** ॥ **एकाकारनियत** परस्परविरुद्धत्वेन भासमानकोटिद्वयमेकत्रानवगाहमानम् । **डोलायमानं** तादृशकोटिद्वयमेकत्रावगाहमानम् । **निश्चायकं** स्वोत्तरकाले स्वार्थसन्देहोत्पत्त्यभावप्रयोजकम् । तत्त्व च दोषजन्यत्वादिसम्भावनारूपमानसदोषरूपापवादाभावसहितसाक्षिनिश्चितप्रामाण्यकत्वेन ॥ **न तस्य निश्चायकमिति** । तद्विपरीतार्थग्रहोत्पत्ति प्रत्यविरोधित्व च स्वोत्पत्तिकाल एव साक्षिणा अप्रमात्वेन गृह्यमाणत्वेन ॥ **सन्निन्निति** ॥ आसन्नमरणरोग्यादिसम्बन्धिज्ञानमित्यर्थ ॥ **स चायं भेद इति** ॥ उक्तयोर्ज्ञानयोर्मध्ये कस्यचिदुत्पत्तिकाल एव निश्चितप्रामाण्यकत्व कस्यचिदुत्पत्तिकाल एव निश्चितप्रामाण्यकत्वाभावोऽप्रमाणत्वेन गृह्यमाणत्व चेत्येतद्रूपवैलक्षण्य चेत्यर्थ ॥ **क्वचिदिति** ॥ **सम्भावनेति** ॥ भासमानधर्माभावव्याप्यधर्मविषयकोद्बुद्धसंस्कारस्मृत्याद्यभाव सम्भावना तद्भावाभावाभ्यामित्यर्थ. ॥ **तत्प्रवृत्त्यप्रवृत्तिभ्यामिति** ॥ पूर्वं उत्पन्नेषु तज्जातीयज्ञानेषु यदा परीक्षापेक्षा तदा तेषु संवादादिरूपपरीक्षाप्रवृत्त्यप्रवृत्तिभ्यामित्यर्थ. । पूर्वं तज्जातीयज्ञाने यत्र परीक्षायामपि प्रामाण्याप्रामाण्यान्यतरनिश्चयो न जात. इदानीमपि तत्सन्दिग्धप्रामाण्यकमेव जायत इति भाव. । अनभ्यासदशादेरप्युपलक्षणया ग्रहः । तेनानभ्यासदशापन्नं प्रथमत एव यद्विषयकं ज्ञान निश्चितप्रामाण्यकं न भवति तद्बीजोक्तेरपि प्राप्तेर्न न्यूनता ।

(द्वै द्यु.) ॥ विपरीतेति ॥ यत्र यो धर्मो भासते तत्र तदभावावगाहिनिश्चितप्रामाण्यकपूर्वज्ञानाधीनोद्बुद्ध-संस्कारभावभावाभ्यामित्यर्थ । यादृशज्ञानेषु यादृशविषयविशेषे नियमेनाप्रामाण्यं तादृशव्याप्तिविषयकसंस्कारामा-वभावाभ्या चेत्यर्थ । तादृशव्याप्तिविषयकोद्बुद्धसंस्कारसहित तादृशधर्मविषयकज्ञानरूप प्रामाण्यव्यावर्तकधर्म-दर्शनबलात् प्रामाण्यग्रहप्रतिबन्धात्तदगृहीतप्रामाण्यकमेव जायत इति तस्याप्युक्तापटुत्वप्रयोजकत्व बोध्यम् । आद्य निश्चितप्रामाण्यक द्वितीय अनिश्चितप्रामाण्यकम् । विपरीतसंस्कारेत्यस्य पूर्वोक्तोभयार्थत्वात् । प्रथमस्योदा-हरणं सवितृसुषिरप्रत्यक्षम् । तत्र सवितरि सुषिराभावनिर्णयस्य पूर्वमेवारोगितादशाया सत्त्वेन तज्जन्यसंस्कार-सत्त्वात् । द्वितीयार्थस्य चन्द्रप्रादेशादिपरिमाणे अपटुत्वहेतुत्वम् ।

प्रकृतानुसारेणाह ॥ चन्द्रेति ॥ साक्षिणा निश्चितत्वादिति ॥ यद्दूरस्थत्वरूपदोषजन्यं तत्परिमाणांशे अयथार्थमिति व्याप्ते. साक्षिणा निश्चितत्वात् इत्यर्थ. । तथा च साक्षिणा ज्ञानस्वरूपग्रहकाले दोषजन्यत्वज्ञान-तादृशव्याप्तिसंस्कारसत्त्वात्प्रामाण्यग्रहप्रतिबन्धपूर्वमप्रामाण्यग्रह एव जायते । दोषजन्यत्वज्ञानसहकृतसाक्षिणोऽप्रा माण्यग्राहकत्वस्य सिद्धान्तसिद्धत्वादिति भाव । एव नील नभ इत्यादितद्भागावगाहिप्रत्यक्षाणामप्रामाण्यमेव गृहीतं वर्तते । तस्यैव समीपगतौ नीलरूपाभावप्रत्यक्षनिश्चयात् । तथा च पूर्वापरिचितनभोभागे नीलरूपावगाहि-प्रत्यक्षे तादृशप्रत्यक्षत्वस्य रूपांशे प्रामाण्याभावव्याप्यत्वसंस्काररूपविपरीतसंस्कारसाहित्येन साक्षिणा भ्रमत्व गृह्यते । यदि परिचितभागे पुन पुनर्दूरस्थस्य नीलरूपभ्रमस्तस्य तद्भागे नीलरूपाभावसंस्कार पूर्वोक्तसंस्कारश्चे-त्युभयमपि तत्र साक्षिणा भ्रमत्वग्रहे उपयोगीति ध्येयम् ॥ तेन दत्तावकाशाविति ॥ तद्रूपनिश्चयेनाप्रतिबन्ध-प्रयुक्तोत्पत्तिशालिनावित्यर्थ. ॥ बाधकाविवेति ॥ तत्र स्वयमेवाप्रामाण्यनिश्चायकाविवेत्यर्थः ॥ उच्येत इति ॥ तद्विरुद्धार्थविषयकव्यवहारादिहेतुत्वरूपतद्गुणयोगेनेत्यर्थ. ।

तथा चायं प्रघट्टकार्थ । यादृशनिश्चयेऽप्रामाण्यज्ञानानास्कन्दिते सत्यपि यादृशज्ञानमुत्पन्नं सत् पूर्व-ज्ञानसजातीयज्ञानान्तर विरुणद्धि पूर्वज्ञानेऽप्रामाण्यग्रहमुत्पाद्य तन्निर्बाधप्रवृत्त्यादिकार्योच्छेदादिकं वा करोति तत्तस्य बाधकमिति स्थिति । प्रकृते च चन्द्रप्रादेशपरिमितत्वनभोनैल्यावगाहिप्रत्यक्षमुक्तरीत्याऽप्रामाण्यज्ञानाना-स्कन्दितमेव जायते । तत्सत्ताकाले उत्पन्नस्यागमिकादिनिश्चयस्य तदप्रामाण्यग्रह प्रत्युत्पादकत्वं नास्ति । तस्य पूर्वमेव सिद्धत्वात् । तत्सजातीयग्रहान्तर तु दोषवशाज्जायत इति नास्य प्रत्यक्षबाधकत्वम् । किन्तु तद्विपरीतार्थ-विषयकत्वमात्रेणोपचारेण बाधकमिति व्यवहार इति ।

ननु यस्य पुरुषस्य पूर्वोक्तक्रमेण विपरीतसंस्कारो न जात । न हि सर्वेषां तादृशविमर्शो वर्तत इत्यत्र प्रमाणमस्ति । तस्य पुरुषस्य प्रथमतश्चन्द्र प्रादेशपरिमित एवेति अप्रामाण्यग्रहानास्कन्दितधीरेव जायते । तस्य चाऽऽगमप्रामाण्यश्रद्धाबलादेवागमवाक्येन बाधनिश्चयः । एवमाप्तपित्रादिवाक्येन च । तत्र प्रात्यक्षिकनिश्चयस्या-ऽऽगमेन बाधितत्वात् न च प्रत्यक्षसिद्धमन्येनेत्याद्यमयुक्तमेवेति चेन्न । आगमे ईश्वरादिप्रत्यक्षसिद्धार्थबोधक-

(द्वै ध्रु) त्वाभिमानेन पित्रादिवाक्ये च तत्प्रत्यक्षसिद्धार्थबोधकत्वाभिमानेन श्रद्धोत्पत्त्या प्रत्यक्षमूलकागमेनैव बाधितत्वप्राप्त्या पूर्वोक्तनियमे व्यभिचाराभावात् ।

यदि च प्रत्यक्षसंवादित्वाद्यभिमानाभावेऽपि श्रद्धाविशेषवत आगमादेव बाधोऽनुभवसिद्ध इत्युच्यते तदेद भवतैवोच्यताम् । तद्दृष्टान्तेन सर्वस्याप्यागमस्य प्रत्यक्षबाधकत्वमुच्यते उत कस्यचित् तथात्व कस्यचिन्नेति । नाद्य । वेद सर्वोऽपि प्रतीतार्थ एव प्रमाणमिति श्रद्धावत यजमानप्रस्तरभेदप्रत्यक्षे अप्रामाण्यग्रहोत्पत्त्या, तस्य बाधितत्वप्राप्त्या तद्वाक्यस्य यथाश्रुतार्थपरित्यागाभावप्रसङ्गात् । येन यत्राप्रामाण्यप्रमोदेति तत्तस्य बाधकमित्युच्यते । न च यजमानप्रस्तरभेदप्रत्यक्षाप्रामाण्यधी प्रमेति चेत्तर्हि चन्द्रप्रादेशपरिमितत्वादिधीरपि कुतो भ्रम इति तदप्यबाध्यमेव स्यात् । अतो न प्रत्यक्षस्यागमबाध । न द्वितीय । व्यवस्थापकाभावात् । प्रबलप्रत्यक्षानुसारित्वतदननुसारित्व एव व्यवस्थापके । प्रादेशपरिमितत्वाभावबोधकागमस्तु तादृशपरिमाणप्रत्यक्षे अयाथार्थ्यावगाहिमाक्ष्यनुसारीति चेत्तर्हि प्रत्यक्षानुसारित्वेनाननुसन्धीयमानागमेन प्रत्यक्षसिद्धार्थस्य न बाध इत्यस्याऽव्याहतिरेव ।

न च तथापि पूर्वोक्तरीत्या यस्यागमप्रामाण्यश्रद्धामात्रेण प्रादेशपरिमितत्वग्रहाप्रामाण्यग्रह । न तु तस्योक्तप्रत्यक्षानुसारित्वग्रहेण । तादृशाप्रामाण्यग्रहस्य वस्तुत प्रमात्वेनावयो सम्मततया अप्रामाण्येनागृहीतप्रत्यक्षस्य प्रत्यक्षानुसारित्वादिरूपतन्मूलकत्वेनाननुसन्धीयमानागमानुमानादिना भ्रमत्वग्रहरूपबाधो नास्तीति नियमस्य व्यभिचारस्त्वागत एवेति वाच्यम् । तादृशश्रद्धावत पुरुषस्य तद्वाक्यस्यार्थविशेषबोधतात्पर्यग्रहानन्तर तद्विरुद्धार्थकत्वज्ञानाधीनद्वेषेण लिङ्गाद्यनुसन्धानादिविमर्शं विनैव [1]स्वोत्प्रेक्षयैवाप्रामाण्योपस्थित्या मानसप्रत्यक्षात्मकाप्रामाण्यग्रहो जायते । असूयया गुणिनि दोषबुद्धिवत् । अत पूर्वतनबोधे मानसाप्रामाण्यग्रहोत्तरमेवागमेन स्वार्थबोधजननाङ्गीकारेण तत्रागमेन प्रत्यक्षाप्रमात्वग्रहानुत्पत्त्या व्यभिचारानवकाशात् । यत्र प्रथमत एव कस्मिंश्चिदर्थे आगमेन दृढतरनिश्चयस्तद्विरुद्धार्थावगाहिप्रत्यक्षे तच्छ्रद्धामात्रेणाप्रामाण्यग्रहस्तत्र जायमानप्रत्यक्षं विपरीतसंस्कारवशादप्रामाण्यग्रहास्कन्दितमेव जायत इति न तत्रापि व्यभिचारावकाश । अन्यथा लिङ्गविशेषे घटाभावव्याप्यत्व [2]वाक्यविशेषे श्रद्धाबलादेव निश्चितवत घटप्रत्यक्षस्थलेऽपि तादृशं लिङ्ग श्रद्धावशादेव निश्चिन्वतस्तत्र घटप्रत्यक्षमवधूय घटभावानुमितिरप्यङ्गीकार्या स्यात् । अविशेषात् । इति बाधस्य सर्वतान्त्रिकसिद्धानुमित्यसाधारणदोषत्वमुच्छिद्येतेत्युक्तरीतिरेवाश्रवणीया ।

यद्वोक्तबाधकवशादेव श्रद्धाविशेषरूपदोषानुपजीव्यागमानुमानाबाध्यत्वं प्रत्यक्षनिश्चयस्येति नियमोऽङ्गीकार्य इति न काऽप्यनुपपत्ति ।

यत्तु 'दूरस्थत्वादिदोषजन्यत्वग्रहाच्चन्द्रपरिमाणादिप्रत्यक्षे भ्रमत्वज्ञानाङ्गीकारे इयमनुमितिरूपैवेति प्रत्यक्षसिद्धस्यानुमानबाध्यत्वाभावोपपादनायैतत्कथनमत्यन्तसाहसम् । एव तत्रागमतात्पर्यविषयीभूतार्थविरुद्धविषयकत्वलिङ्गेनैव प्रत्यक्षाप्रामाण्यग्रहो जायते' इति । तत्तुच्छम् । तत्र विपरीतसंस्कारसहितसाक्षिणैवाप्रामाण्यग्रहाङ्गी-

---

[1] स्वप्रत्यक्ष एवाप्रामाण्योपस्थित्या इति पाठान्तरम् । [2] वाक्यविशेषे घटाभावप्रतिपादकत्व श्रद्धाबलादेव इति पाठेन भाव्यमिति भाति ।

(द्वै वु.)कारात्। तस्य च विशेषदर्शनसहकृतसामग्र्यधीनप्रत्यक्षरूपत्वात्। अन्यथा संशयोत्तर स्थ.णुत्वाभाववत्त्वाप्यकर-चरणादिज्ञानसहकृतचक्षुरादिजन्यज्ञानस्याप्यनुमितिरूपत्वापत्ते । यदि तत्र साक्षात्कारित्वानुभवात् प्रत्यक्षसामग्र्या अनुमितिप्रतिबन्धकत्वाच्च नानुमितिरित्युच्यते प्रकृतेऽपि तदविशिष्टम्। प्रकृते ज्ञानस्य ज्ञानैकसत्त्वात्तदुत्पत्तिक्षण एव तत्प्रत्यक्षस्यावश्यकतया तस्यैव पूर्वतनदोषजन्यत्वग्रहाद्यधीनविपरीतसंस्कारवशात् भ्रमत्वविषयकत्वेनोपपत्तौ तज्ज्ञानप्रत्यक्षोत्तरोत्पन्नपरामर्शबलात्तत्रानुमित्यङ्गीकारे मध्ये लिङ्गज्ञानपरामर्शान्तरादिकल्पनागौरवापाताच्च ।

अपि च तद्बाधकत्व नाम तत्काले तदुत्तरकाले वा तद्विपरीतार्थावगाहितया उत्पद्यमानत्वे सति तत्रा-प्रामाण्यग्रहप्रयोजकत्वम्। न हि चन्द्रपरिमाणज्ञानधर्मिकाप्रामाण्यधीर्युक्तिजन्या चन्द्रे परिमाणाभावमवगाहते। भ्रमत्वघटकतया तद्भानेऽपि न चन्द्रत्वावच्छिन्ने तद्भानम्। तदंशे निर्धर्मितावच्छेदककत्वात्। लौकिक[1]सन्नि-कर्षदोषविशेषाजन्यज्ञानमात्रे विपरीतनिर्णयस्य प्रतिबन्धकतया चन्द्रत्वावच्छिन्ने भ्रमत्वघटकतयाऽपि तद्भाना-योगात्। चन्द्रविषयकत्वावच्छेदेनोक्तभ्रमत्वमानमात्रेण तत्र तादृशपरिमाणादिविषयव्यवहाराद्युच्छेदात्। तस्मात्तत्र प्रत्यक्षस्योक्तरीत्या भ्रमत्वज्ञानानास्कन्दितत्वेनैव जातत्वान्न युक्तिबाध्यत्वम्। क्वचिच्च प्रत्यक्षमूलकत्वेनानुसन्धीय-मानयुक्त्यादिबाध्यत्वमेवेति युक्तम्। प्रत्यक्षविरोधग्रहकालेऽनेकार्थतयाऽनुसन्धीयमानशब्दस्य तद्विरुद्धार्थे तात्पर्य-ग्रहस्यैवायोगेन तादृशलिङ्गान्तरानुसन्धानस्याप्ययोगाच्च ।

ननु चन्द्रप्रादेशिकत्वप्रत्यक्षे न प्रागेव दुष्टकरणजत्वनिश्चय । नैकट्यस्यापि क्वचिद्दोषत्वेन सर्वत्र परि-माणज्ञानाविश्वासप्रसङ्गात्। सवितृसुषिरादिप्रत्यक्षस्य न पूर्वतनविपरीतप्रत्यक्षेण बाधः। एतदुत्पत्तिकाले तदभा-वात्। नापि तज्जन्या स्मृति । अनुभवापेक्षया दुर्बलत्वात्। तस्मात्तत्र तादृशप्रत्यक्ष युक्त्युत्थापकमेव। चन्द्र-प्रादेशपरिमितत्वादेरागमेन बाधोत्तरमेव दूरस्थत्वस्य दोषत्वकल्पनम् । एव जगत्प्रत्यक्षस्यापि युक्त्यागमाभ्यां बाधग्रहोत्तरमेवाविद्यादिरूपदोषजन्यत्व कल्प्यत इति चेन्न । यत्र दूरस्थत्व तद्विषयकपरिमाणप्रत्यक्षस्य भ्रमत्व-मित्यन्वयव्यतिरेकदर्शनेन दूरस्थत्वस्य दोषत्वनिश्चयात् । नैकट्यस्थलेऽपि क्वचित्परिमाणभ्रमदर्शनाद्व्यतिरेकायोग इति चेन्न । नैकट्यविशेषस्य परिमाणावगाहिभ्रमविशेषजनकत्वेऽपि दूरस्थत्वस्य परिमाणावगाहिभ्रमविशेषे तृणारणिमणिन्यायेनान्वयव्यतिरेकविधारणस्याव्याहतत्वात् । अन्यथा सर्वत्रापि भ्रमत्वावधारणोत्तरमेवं कस्यचि-द्दोषत्वेन प्राप्त्या दूरस्थत्वस्यैव दोषत्व नान्यस्येत्यवधारकाभावेन दूरस्थत्वादेरनुगतदोषस्य दोषत्वनिर्णयाभाव-प्रसङ्गात् । सवितृसुषिरशङ्खपीतत्वादिप्रत्यक्षप्राक्क्षणे तद्विपरीतप्रत्यक्षाभावेऽपि निश्चितप्रामाण्यककालान्तरीण-तादृशप्रत्यक्षाधीनसंस्कारसहितसाक्षिणो भ्रमत्वग्राहकत्वस्य पूर्वमुक्तस्य सम्भवे, मध्ये युक्त्यन्तरानुसन्धानादेरनु-भवविरुद्धत्वात्पूर्वोक्तरीत्या गौरवाच्च । निरपवादसाक्षिणा निश्चितप्रामाण्यके जगत्सत्यत्वप्रत्यक्षे जागरूके सति परीक्षकाणामभ्रान्तना तद्विरुद्धार्थावगाह्यागमे तादृशार्थतात्पर्यकत्वस्यैवाग्रहेण तज्जन्यतादृशबोधायोगात्तत्साहाय-

---

[1] सन्निकर्षजन्यदोष इति पाठेन भाव्यमिति भाति।

(द्वै द्यु) स्याप्यभावेऽनुमानस्य सुतरां बाधितत्वान्मिथ्यात्वानुमित्यभावात्प्रत्यक्षे भ्रमत्वज्ञानस्यैवानुदयेनाविद्याया: दोषत्वकल्पनाया: सुदूरपराहतत्वादिति कृतं पल्लवितेन ।

(गु टि) ॥ विभुत्वाद्यनुमानेनेति ॥ नभ न नील विभुत्वात् आत्मवत् इत्यनुमानेनेत्यर्थ । आदिपदेन नीरूपत्वाद्यनुमानपरिग्रह ॥ आगमबाधितमिति ॥

अष्टाशीतिसहस्राणि विस्तीर्णो योजनानि तु ।

प्रमाणं तत्र विज्ञेयं कला पञ्चदशैव तु ॥

इत्याद्यागमबाधितमित्यर्थ । ननु विभुत्वाद्यनुमानमूलभूतानैल्यप्रत्यक्षादिनैव तस्य बाधात्कथ विभुत्वाद्यनुमानेन बाध इत्यत आह ॥ न हीति ॥ आगमस्यापि प्रत्यक्षमूलकत्वासम्भवमाह ॥ अपौरुषेयेति ॥ तन्मूलभूतप्रत्यक्षसद्भावे पौरुषेयत्वापत्त्या अपौरुषेयत्वाभावप्रसङ्गादिति भाव ॥ तत्कथमेतदिति ॥ प्रत्यक्ष मानान्तराबाध्यमित्येतदित्यर्थ ॥ अन्यपदार्थ इति ॥ यस्येत्यनेन श्रूयमाणपदार्थ इत्यर्थ ॥ अयथार्थत्वादिति ॥ निर्दोषार्थेन्द्रियसन्निकर्षजज्ञानस्य प्रत्यक्षत्वात् तस्य च यथार्थत्वनियमादिति भाव ॥ प्रत्यक्षमिव प्रत्यक्षमिति ॥ तथा च पूर्वं प्रत्यक्षशब्देन गौण्या वृत्त्या प्रत्यक्षाभासस्य प्रकृतत्वमिति भाव. । विशेषमेव दर्शयति ॥ चन्द्रेति ॥ ननु चन्द्रप्रादेशत्वादिज्ञानस्य एकाकारनियतत्वेनासन्देहरूपत्वात्कथमपटुत्वमित्यत आह ॥ स्वार्थ इति ॥ दोषेति ॥ दोषयुक्तत्वेन निश्चितत्वादित्यर्थ. । ननु चन्द्रप्रादेशत्वादिप्रत्यक्षस्य स्तम्भोऽयमित्यादिप्रत्यक्षवदेकाकारविषयत्वेन स्वार्थे पुरुषप्रवर्तकत्वसम्भवात्कथमपटुत्वमित्याशङ्क्य एकाकारविषयत्वाविशेषेपि अस्य दोषजन्यतया निश्चितत्वात् स्तम्भोऽयमित्यादिज्ञानवैलक्षण्य दर्शयितु तावज्ज्ञानप्रभेदमाह ॥ इदमुक्तं भवतीत्यादिना ॥ विभागकथनस्य प्रकृतोपयोगस्तूत्तरत्राऽऽकर एव स्पष्ट. ॥ बाधकाविवेति ॥ येन हि यस्य भ्रमत्व विज्ञायते तदेव तस्य बाधकमित्युच्यते । न हि चन्द्रप्रादेशत्वादिविषयप्रत्यक्षस्यानुमानागमाभ्या भ्रमत्वं विज्ञायते । अतो न तौ बाधकाविति भावेन इवशब्दप्रयोग । अत एवाह ग्रन्थकार. तेन दत्तावकाशाविति । बाधकसादृश्योपपादनञ्च चन्द्रप्रादेशत्वाभावादिकं निश्चिन्वानाविति ।

ननु अस्तु परिमाणयाथात्म्यस्य समीपे चक्षुषा गृहीतत्वेन दूरे तद्धीरयथार्थेति प्रागेव निश्चयसम्भवेन आगमे वास्तवमबाधकत्वम् । अनुमाने तु कथं वास्तवमबाधकत्वम् । आकाशस्यातीन्द्रियत्वेन तत्र रूपाभावस्य समीपेप्यनुमान विना गृहीतुमशक्यत्वेन दूरे रूपधीरयथार्थेति प्राग्व्याप्तेरेव गृहीतुमशक्यत्वात् इति चेदत्र न्यायामृतकारा: प्राहु 'यथा अश्रावणेप्याकाशे श्रावणी शब्दाभावधीरेवमचाक्षुषेप्याकाशे रूपाभावधीर्वायाविव चाक्षुष्येव युक्ता । दूरस्थस्य पुंसो यत्र नभ:प्रदेशे नैल्यधी: समीपस्थस्य तत्रत्यस्यैव तस्यैव तत्रैव चक्षुषैवानैल्यबुद्धेरनुभवसिद्धत्वात् । एवञ्चानुमानेप्यवास्तवं बाधकत्वम्' इति ।

(टी.) नन्वेवमेव तर्हि जगत्प्रत्यक्षस्यापटुत्वे यद्यपि नानुमानागमौ तस्य बाधकौ तथापि तेनाबाधितौ विश्वमिथ्यात्वं निश्चेष्यत इति चेत्। तत्किमस्य चन्द्रप्रादेशत्वादिविषयवत् प्रतिभासतो- ऽपटुता कल्प्यते। उत प्रमाणान्तरेण। नाद्यः। सत्यस्तम्भो भवत्येवेति निश्चायकतयैवावभासनात् तदिदमुक्तं प्राक् प्रत्यक्षसिद्धमिति। सिद्धं निश्चितम्। द्वितीयं निराचष्टे

न च जगत्प्रत्यक्षस्यापटुत्वे किञ्चिन्मानम्

जगत्प्रत्यक्षस्य वियदादेरात्मभेदस्य च सत्यताग्राहिप्रत्यक्षस्य।

(वि टि) ॥ एवमेवेति ॥ चन्द्रप्रादेशत्वादिप्रत्यक्षवदेवेत्यर्थः ॥ प्रतिभासत इति ॥ ज्ञानमिति कृत्वेत्यर्थः ॥ निश्चायकतयेति ॥ अर्थसत्तानिश्चयरूपत्वेनैव साक्षिणा निश्चितत्वादित्यर्थः । तथा च ज्ञानत्व मात्रेण निःशङ्कप्रवृत्तिहेतुभूतार्थसत्तानिश्चयरूपत्वाभावरूपापटुत्वसाधने बाध इति भावः । ननु जगद्विषयकस्य चन्द्रप्रादेशत्वादिप्रत्यक्षस्यापटुत्वस्वीकारात् न च जगत्प्रत्यक्षस्येति वाक्यमयुक्तमित्याशङ्क्य व्याचष्टे ॥ जगत्प्रत्य- क्षस्येति ॥

(रा टि) ॥ एवमेवेति ॥ चन्द्रप्रादेशत्वादिप्रत्यक्षस्येव स्तम्भोऽयमित्यादिजगत्प्रत्यक्षस्यापि केनचित्प्रागेव स्तम्भादिसत्त्वाभावनिश्चयेन स्वार्थसत्त्वस्यानिश्चायकत्वरूपापटुत्व इत्यर्थः. ॥ नानुमानागमाविति ॥ मिथ्यात्वानु- मानागमौ सिद्धान्तिभिरुक्तदिशा न बाधकौ जगत्सत्त्वप्रत्यक्षस्य यद्यपि तथापि तेनापटुभूतेन जगत्सत्त्वप्रत्यक्षेणा- बाधितौ मिथ्यात्वानुमानागमावित्यर्थः ॥ प्रतिभासत इति ॥ चन्द्रप्रादेशत्वादिविषयप्रतिभास इव जगत्सत्त्व- ग्राह्यपि प्रतिभासः ज्ञानमिति कृत्वा तद्वदेवापटुतया कल्प्यत इत्यर्थ. । ततो वैषम्यमाह ॥ सत्य इति ॥ तदिद- मिति ॥ चन्द्रप्रादेशत्वादिविषयवत् न प्रतिभासमात्रम् । किन्तु निश्चयरूपतया स्वार्थसत्त्वावधारकमित्येतत् 'न च प्रत्यक्षसिद्धमन्येन' इति वाक्ये उक्तमित्यर्थः । मूलं व्याचष्टे ॥ जगदिति ॥ आत्मभेदस्य चेति ॥ आत्मना जीवाना अन्योन्यं परमात्मना च भेदस्येत्यर्थः ।

(वे टि.) ॥ प्रतिभासत इति ॥ ल्यब्लोपनिमित्ता पञ्चमी । प्रतिभासमारभ्येति । तथा च किं प्रागेव दोषनिश्चयेनापट्वेव ज्ञानमुत्पद्यत इति पृष्टं भवति ॥ उत प्रमाणान्तरेणेति ॥ सवितृसुषिरशुक्तिरजतादिविषय- प्रत्यक्षवदिति शेषः ।

प्रतिभासतः प्रतिभासत्वतः । ज्ञानत्वादिति हेतुनेति यावत् ॥ अवभासनादिति ॥ साक्षिणेति शेषः । तथा च ज्ञानत्वानुमानं बाधितमिति भाव इत्यप्याहुः ।

किञ्चिन्मानमिति मूलम् । सवितृसुषिरादाविव न पूर्वमर्थाभावनिश्चयरूपं नापि शुक्तिरजतादाविव पश्चा त्परीक्षाप्रवृत्तिरूप वा प्रमाणं जगत्सत्यताप्रत्यक्षापटुत्वकल्पकमस्तीति भाव । उपलक्षणमेतत् । नापि सन्देहव- दपटुत्वमेकाकारविषयत्वादित्यपि द्रष्टव्यम् । अत एव जगत्सत्यत्वप्रत्यक्षस्यानयोक्तरीत्या सर्वापटुज्ञानवैलक्षण्योप-

(वे टि) पादनाय न्तम्भोऽय मवक्ष्येवेति प्रत्यक्षसाम्यप्रदर्शनाय च पूर्वं हि द्विविधं ज्ञानमित्यादिना ज्ञानभेदप्रपञ्चन कृतम्। अन्यथोक्तरीत्या जगत्सत्यत्वप्रत्यक्षापटुत्वशङ्कापरिहारासम्भवादित्यवधेयम्।

(द्वै द्यु) जगत्प्रत्यक्षस्यापि नभोनैल्यादिप्रत्यक्षस्येवापटुन एवोत्पत्तिरित्यभिमानेन शङ्कते ॥ **नन्वेवमेवेति** ॥ **अपटुत्वे** अप्रामाण्यज्ञानास्कन्दितत्वे। पूर्वमेव सतीति शेष ॥ **बाधकाविति** ॥ अप्रामाण्यज्ञानस्य पूर्वमेव सिद्धत्वान्नानयोस्तज्ज्ञापकस्वरूपबाधकत्वमिति भाव ॥ **प्रतिभासत इति** ॥ अप्रामाण्यज्ञानास्कन्दितत्वेनोत्पत्त्यनुभवेनेत्यर्थ ॥ **आत्मभेदस्य चेति** ॥ आत्मना परस्परमीश्वराच्च भेदोऽन्यत्रोक्तरीत्या प्रत्यक्षविषय· सत्यत्वेनैव भासत इति भाव।

यत्तु 'ईश्वरादिभेदो न प्रत्यक्ष। योग्यानुपलब्धिविरहात्। 'यद्यहं सर्वज्ञत्वादिगुणविशिष्टेश्वराभिन्न. स्यां तद्गुणवत्त्वेनानुभूत स्याम्' इत्याद्यापादन न सङ्गच्छते। विद्यमानस्यापि सार्वज्ञ्यस्याऽवरणादिनाऽभिभवसम्भवेनापत्त्ययोगात्' इति। तत्तुच्छम्। उक्तरीत्या निर्मूलशङ्काया घटादिस्थलेऽपि कस्यचित्सम्भवेन तत्रापि योग्यानुपलब्ध्यसम्भवमाप्त्या घटपटभेदतदभावप्रत्यक्षादेरप्यभावप्रसङ्गात्। अहमिदानीं नित्याभिव्यक्तसार्वज्ञ्याश्रयाभिन्न स्यामिदानीं तथोपलब्ध स्याम् एवं इदानीमनुभूयमानदु खाश्रयाभिन्न स्या इदानीं तादृशदु खवत्त्वेनानुभूत स्यामित्याद्यापादनसम्भवाच्च। इदानीमभिव्यक्तेऽनभिव्यक्तत्वशङ्काया व्याहतत्वेनानुदयाच्च।

यत्तु भेदधिक्कारादौ 'सर्वस्यापि भेदप्रत्ययस्य कारणानिरूपणात् अविद्यामात्रमूलत्वाद्भ्रमत्वम्' इत्युक्तम्। तत्तु भेदादिनिराकरणयुक्तीनामिव जात्युत्तरत्वात् सत्त्वावगाहिप्रत्यक्षबाधाद्वाकिञ्चित्करम्।

(गु टि.) ॥ **प्रतिभासत इति** ॥ प्रतिभासनिमित्तेति ल्यब्लोपनिमित्ता पञ्चमी। ल्यब्लोपे कर्मण्यधिकरणे च पञ्चमी वक्तव्येति वचनात्। ततश्चाप्रामाण्यशङ्काकलङ्कितैकाकारनियतसवितृसुषिरप्रकाशादिवत्स्वार्थपरिच्छेदपराङ्मुखतयैव जगत्प्रत्यक्षस्यावभासनात्तस्यापटुत्वमित्यर्थ.। जगत्प्रत्यक्षस्येति मौलपदव्याख्यानं वियदादेरात्मभेदस्य च सत्यताग्राहिप्रत्यक्षस्येति। तस्यैव पूर्वत्र प्रकृतत्वादिति भाव।

**जगतः अज्ञानजन्यत्वेन तत्प्रत्यक्षस्यापटुत्वशङ्का तत्र मानाभावेन तन्निरासश्च**

**(टी) ननु यथा मायाजन्यैन्द्रजालिकार्थस्याविद्याजन्यमरीचिकोदकस्य च प्रत्यक्षमपटूत्पद्यते तथाऽम्बरादिक दुःखादिक च मायाऽविद्यालक्षणाज्ञानजन्यमिति तत्प्रत्यक्षेणाप्यपटुना भवितव्यम्। यद्यप्यज्ञानजन्यत्वानुसन्धानविधुराणां तत्पटूत्पद्यते, तथापि तदनुसन्धानवतां जायमानेन कथमपटुना न भाव्यम्। तस्मिंश्चानुमानाऽगमाभ्यामपहस्तितेऽन्यदपि तत्स्वार्थप्रच्युत भविष्यति। तत्कथ जगत्प्रत्यक्षस्यापटुत्वे मानाभाव इति चेत्।**

**स्यादपीदम् यदि जगतोऽज्ञानजन्यत्वे मान स्यात्। न चैतदस्तीत्याह**

**न च जगतोऽज्ञानजन्यत्वे किञ्चिन्मानम्**

(वि. टि) ननु जगत्प्रत्यक्षमपटु आविद्यकविषयकत्वात् मायिकविषयकत्वाच्च ऐन्द्रजालिकार्थप्रत्यक्षवत् मरीचिकोदकप्रत्यक्षवच्चेति प्रमाण शङ्कते ॥ नन्विति ॥ मायाविद्यालक्षणेति ॥ विक्षेपशक्तिमदज्ञान माया आवरणशक्तिमदज्ञानमविद्येति भावेनोभयोपादानम् । नन्वाविद्यकविषयकत्वमात्रेणापटुत्वं न सिद्ध्यति । तथाविध-शुक्तिरजतादिज्ञानस्यापि पाटवदर्शनादिति शङ्कते ॥ यद्यपीति ॥ इदमुपलक्षणम् । उक्तरीत्या जगत्प्रत्यक्षमात्र-स्यापटुत्वनिश्चये परस्य प्रवृत्तिनिवृत्ती क्वापि न स्याताम् । अन्यथा मायिकत्वनिश्चयवतामैन्द्रजालिकपदार्थादावपि तदापत्तिरित्याद्यपि द्रष्टव्यम् ।

(रा. टि)चन्द्रप्रादेशिकत्वादिप्रत्यक्ष दूरस्थत्वादिदोषयुक्तत्वादपटुरित्युच्यते। तथा जगत्प्रत्यक्षमप्यपटु अज्ञानो-पादानकार्थविषयकत्वरूपदोषयुक्तत्वादैन्द्रजालिकगन्धर्वनगरादिप्रत्यक्षवदित्यनुमानात् । तथा च न किञ्चिन्मानमित्य-सिद्धमेवेति शङ्कते ॥ ननु यथेति ॥ अज्ञानं द्विविधं माया अविद्या चेति । परव्यामोहनकरी माया । आश्रय भ्रान्तिकरी चाविद्येति विवेक । अर्थस्येत्यादिषष्ठी कर्मणीति ज्ञेयम् ॥ तत्प्रत्यक्षेणापीति ॥ बाह्यान्तरजग-त्सत्ताग्राहिप्रत्यक्षेणापीत्यर्थ । अज्ञानोपादानकत्वरूपदोषयुक्तार्थसत्ताग्राहित्वादिति भाव । दूरस्थपरिमाणबुद्धिरिव जगत्सत्यताबुद्धेरपटुत्वधीर्न विश्वजनीनेत्यत आह ॥ यद्यपीति ॥ यद्वाऽऽविद्यकविषयकशुक्तिरूप्यबुद्धे प्रवृत्ति-क्षमत्वरूपपटुत्वमस्तीति ज्ञानापटुत्वे तदप्रयोजकमित्यत आह ॥ यद्यपीति ॥ अथ वा यदि स्तम्भकुम्भादिज्ञान-मपटु तर्हि कस्यापि कुत्रापि प्रवृत्तिर्न स्यादित्यत आह ॥ यद्यपीति ॥ तस्मिंश्चेति ॥ अम्बरादिप्रत्यक्षेऽज्ञानोपा-दानकत्वनिश्चयसहकृतेन साक्षिणा तदप्रामाण्ये निश्चिते तेन दत्तावसराभ्या मिथ्यात्वानुमानागमाभ्याम-पहस्तिते बाधित इव जाते सति । अन्यदपि स्तम्भकुम्भादिप्रत्यक्षमित्यर्थ. । अथ वदन्नेव मूलमवतारयति ॥ स्यादपीति ॥

(वे टि.) ॥ तदनुसन्धानवतामिति ॥ अज्ञानजन्यत्वानुसन्धानवतामित्यर्थ. । तथा च चन्द्रप्रादेश-त्वादिप्रत्यक्षवत्प्रागेव दोषनिश्चयेनेदमप्यपटुरिति भाव. ॥ तस्मिन्निति । तदनुसन्धानवतां प्रत्यक्ष इत्यर्थ ॥ अन्य-दपि ॥ तदनुसन्धानरहिताना प्रत्यक्षमपि ॥ स्वार्थप्रच्युतं भविष्यतीति ॥ अनुमानागमबाध्य भविष्यतीत्यर्थ · । तदनुसन्धानवत्प्रत्यक्षदृष्टान्तेनाम्बरादिविषयकप्रत्यक्षत्वादिति हेतुनेति शेष ॥ तत्कथमिति ॥ अम्बरादिप्रत्यक्ष-मपटु मायाकल्पितार्थविषयकप्रत्यक्षत्वादैन्द्रजालिकार्थप्रत्यक्षवदिति दुःखादिप्रत्यक्षमपटु आविद्यकार्थविषयकप्रत्यक्ष-त्वान्मरीचिकोदकप्रत्यक्षवदिति चानुमानस्य सत्त्वात्कथ जगत्प्रत्यक्षस्यापटुत्वे मानाभाव इत्यर्थ · ॥ यदि जगत इति ॥ जगत अम्बरादेर्दुःखादेश्च ॥ अज्ञानजन्यत्व इति ॥ मायाऽविद्यालक्षणाज्ञानजन्यत्व इत्यर्थ । तथा चोक्तानुमानद्वयेऽसिद्धिरिति भाव · ।

(द्वै. द्यु.) नन्वागमान्तरेण जगति अम्बरादौ दुःखादौ मायाविद्याजन्यत्वग्रहो जायते । तज्जन्यविषयक-प्रत्यक्षे भ्रमत्वस्य बहुशो दृष्टत्वेन तत्र दोषत्वनिश्चयात्तन्मूलकसंस्कारसहितसाक्षिणा भ्रमत्वेन गृह्यमाणमेव जग-त्सत्यत्वप्रत्यक्ष येषां प्रेक्षावता जायते तेषामागमेनानुमानेन च जगति मिथ्यात्वनिश्चयो भवत्येवेत्याशङ्कते

(द्वै. द्यु )।। नन्वित्यादिना ।। अज्ञानजन्यत्वं जगति वर्तत इत्यत्र मानाभावान्नैषा प्रक्रिया युक्तेत्याह ।। स्यादपी-त्यादि ।। नन्वज्ञानजन्यत्वनिश्चयायोगेऽपि जगत्प्रत्यक्षमागमबाध्यं प्रत्यक्षत्वाच्चन्द्रपरिमाणप्रत्यक्षवदित्यनुमानेन सामा-न्यतो बाध्यत्वनिश्चयात्तरमागमादिप्रवृत्तिः सम्भवतीति चेन्न । दृष्टान्तासिद्धेः पूर्वमेवोपपादितत्वात् ।

अथापि स्यात् । 'प्रत्यक्षस्य विरुद्धार्थकाऽऽगमरूपप्रमाणान्तरोपस्थितौ क्लृप्तदोषाभाववत्त्वेन समबलतयोपस्थित्या-ऽन्यतरत्वरूपेण प्रामाण्यसन्देहादनयोः किं प्रमाणमिति जिज्ञासा जायते । सत्प्रतिपक्षस्थले परामर्शद्वय इव । तदनन्तरमहं ब्रह्मास्मि नेह किञ्चिदस्तीत्यादिरूपभाविबाधशङ्कया प्रत्यक्षत्वावच्छिन्नेऽप्रामाणत्वसम्भावनायामागमेन मिथ्यात्वसिद्धिर्निष्प्रत्यूहैव भवति' इति । मैवम् । प्रत्यक्षविशेषेऽप्रामाण्यसम्भावनायामपि निश्चितप्रामाण्यकप्रत्यक्षा-न्तरविरुद्धार्थे आगमप्रामाण्यग्रहणायोगात्सर्वेष्वपि प्रत्यक्षेष्वप्रामाण्यशङ्कैव वक्तव्या । तथा चाऽऽगमप्रामाण्यावगाहि-साक्षिप्रत्यक्षवेदापौरुषेयत्वावगाहिज्ञानप्रामाण्यप्रत्यक्षादावप्यप्रामाण्यशङ्कया वेदप्रामाण्यसिद्धेरेवायोगेन तेनार्थसिद्धे-र्दूरोत्सारितत्वात् । न च प्रत्यक्षे पारमार्थिकप्रामाण्यसन्देहेऽपि व्यावहारिकप्रामाण्यनिश्चयादेवाऽऽगमप्रामाण्यादि-सिद्धिर्भवतीति वाच्यम् । अप्रामाण्यप्रयोजकत्वेन क्लृप्तदोषाभाववत्त्वेन समबलतयोपस्थितयोरुभयोः पारमार्थिक विषयकत्वघटितप्रामाण्यसन्देहकाले एकत्रैव व्यावहारिकविषयकत्वघटितप्रामाण्यमन्यस्य पारमार्थिकत्वघटितमिति निर्णायकाभावादागमेऽपि व्यावहारिकप्रामाण्यस्यैव सिद्ध्यापत्त्याऽऽगमार्थस्याद्वैतब्रह्मणोऽपि व्यावहारिकस्यैव सिद्ध्यापातात् । न चोपक्रमादितात्पर्यलिङ्गबलात्तस्य पारमार्थिकप्रामाण्यमेव सिद्ध्यतीति वाच्यम् । उपक्रमादीनां तात्पर्याध्यवसायकत्वेन पारमार्थिकप्रामाण्यनिर्वाहकत्वाभावात् । आगमार्थनिर्णयात्प्राक् सत्तात्रयादेरप्रसिद्धेस्तद्घटित-प्रामाण्यस्वरूपस्यैवासिद्धत्वाच्च । न चाद्वैतागमविरुद्धग्राहिप्रत्यक्षप्रामाण्यशङ्कैव जायते । न सर्वप्रत्यक्षेष्विति वाच्यम् । आगमस्वरूपतत्प्रामाण्यादेरपि निर्भेदचित्सत्ताविरोधित्वात् । शङ्क्यमानबाधप्रत्यक्षेऽप्यप्रामाण्यशङ्कया प्रथमं बाधकप्रमात्वरूपविशेषणविशिष्टघटितस्वरूपबाध्यत्वकोट्यप्रसिद्ध्या तत्संशयायोगाच्च । [1]प्रत्यक्षस्य शब्द-लिङ्गबाध्यत्वे प्रत्यक्षान्तरस्य बाधकप्रमारूपत्वाभावे बाधकसामान्याभावस्यैव निश्चयाच्च । न च बाधकानामियत्ता-वधारणायोगात्तदभावावधारणायोग इति वाच्यम् । प्रत्यक्षानुमानागमत्वादिरूपविशेषधर्मावच्छिन्ननिरूपितविशेषा-भावस्योक्तरीत्या ग्रहोत्तरं बाधकसामान्याभावग्रहस्य प्रेक्षावतां सम्भवात् । अन्यथा विशेषाभावेन सामान्याभाव-निर्णयः कुत्रापि न स्यात् । न च चरमवृत्त्यात्मकप्रत्यक्षस्य वाचस्पतिरीत्या मानसस्य शुद्धब्रह्मविषयकत्वेन प्रमात्वात् तस्य प्रमात्वे मिथ्यात्वागमविरोधाभावेन तत्प्रामाण्यग्रहात्तदतिरिक्तप्रत्यक्षसामान्ये तद्बाध्यत्वशङ्का सम्भवतीति वाच्यम् । तादृशबाधकज्ञानसद्भावे प्रमाणाभावेन तस्यानुपस्थित्या तद्बाध्यत्वशङ्कोत्पत्त्यसम्भवात् । स्वोत्प्रेक्षामात्रेण शङ्कायां ब्रह्मज्ञानस्याऽपि शून्यज्ञानबाध्यत्वशङ्कया प्रमात्वग्रहानुपपत्तिः । वेदेऽपौरुषेयत्वसत्त्वेऽपि क्लृप्तदोषातिरिक्तदोषशङ्काया दुरुच्छेदेन प्रामाण्यसिद्धेर्दुर्लभत्वापत्तेः । न च 'ज्ञाते द्वैतं न विद्यते' इत्यादीनि जगद्बाधकसद्भावे प्रमाणानि सन्त्येवेति वाच्यम् । निरसिष्यमाणत्वात् ।

---

[1] शङ्क्यमानबाधप्रत्यक्षस्येत्यर्थः ।

(द्वै द्यु ) अपि च भ्रमप्रतीतव्यावर्तकाकारवदधिष्ठानदर्शनस्यैव भ्रमनिवर्तकतया जगद्भ्रमनिवर्तकज्ञानस्य सप्रकारकत्वावश्यकत्वे पारमार्थिकप्रामाण्ये द्वैताभावश्रुतिप्रामाण्येऽनुपपत्ति. । न च विशिष्टांशे भ्रमत्वान्नाद्वैतहानि । शुद्धस्वरूपांशे पारमार्थिकप्रामाण्यग्रहसम्भव इति वाच्यम् । घटत्वादिविशिष्टस्वरूपग्राहिप्रत्यक्षेऽप्येतादृशप्रामाण्यसम्भवे विशिष्टघटादेरागमेन निषेधेऽपि शुद्धस्वरूपस्य सत्त्वादद्वैतब्रह्मसिद्ध्यनुपपत्ति । जगद्बाधकज्ञानस्य किञ्चिदंशे भ्रमत्वं घटादिप्रत्यक्षे तु सर्वांशे भ्रमत्वमित्यत्र प्रमाणाप्रवृत्ते । न च घटादिशुद्धस्वरूपं ब्रह्मैवेति वाच्यम् । चितो जडस्वरूपताया असम्भावितत्वात् ।

ननु निष्प्रकारकमेव ब्रह्मज्ञानं बाधकम् । न च तस्य बाधकत्वायोग । पृथिव्यास्तादात्म्येन गन्धव्याप्यत्वनिश्चये तदधीनोद्बुद्धसंस्कारे वा सति शुद्धपृथिवीत्वावच्छिन्ने गन्धाभावविषयकानाहार्यज्ञानानुदयवत् तादात्म्येन ब्रह्मणो द्वैताभावव्याप्यत्वेन गृहीतत्वात् तत्संस्कारवशात् शुद्धब्रह्मज्ञानोत्तर शुद्धब्रह्मणि द्वैतबुद्धिर्नोत्पद्यत एवेति बाध प्राप्त एवेति चेन्न । तर्हि ब्रह्मविशेष्यकद्वैतग्रहत्वावच्छिन्नं प्रति ब्रह्मणि द्वैताभावनिरूपिततादात्म्यसम्बन्धावच्छिन्नव्याप्यताग्रहस्यैव प्रतिबन्धकत्वप्राप्त्या निष्प्रकारकज्ञानस्य बाधेऽकिञ्चित्करत्वेन तद्बाध्यत्वोक्तेरयुक्तत्वात् ।

किञ्च यद्धर्मावच्छिन्ने तादात्म्येन यदभावनिरूपितव्याप्यताज्ञानं तद्धर्मावच्छिन्ने तत्प्रकारकधीर्न जायते इत्येव वक्तव्यम् । अन्यथा गन्धव्याप्या एतावन्मात्रज्ञानोत्तर पृथिवी गन्धाभाववतीति बुद्धेः पृथिवी तादात्म्येन गन्धव्याप्यवती गन्धव्याप्या वेति बुद्ध्युत्तर नीलरूपवती गन्धाभाववतीति बुद्धेर्गन्धाभाववतीति निर्धर्मितावच्छेदककबुद्धेश्चानुत्पत्त्यापत्ते. । प्रकृते च ज्ञानत्वानन्दत्वादिब्रह्मत्वावच्छिन्ने तादात्म्येन द्वैताभावव्याप्यताग्रहेऽपि सत्त्वावच्छिन्ने घटादिरूपद्वैतप्रपञ्चावगाहिबुद्धेरेकत्र द्वयमिति रीत्या सत्त्वघटोभयावगाहिबुद्धेर्निर्धर्मितावच्छेदककजगद्बुद्धेरुदये बाधकाभावात् । सत्त्वावच्छिन्नस्य शुद्ध इव तादात्म्येन घटादावपि सत्त्वेन तत्र द्वैताभावाभावेन व्यभिचारितया श्रुतेस्तादृशव्याप्यव्यापकभावबोधे तात्पर्यायोगाच्च । सत्त्वज्ञानत्वाद्युपलक्षितशुद्धस्य संसृष्टतया न किञ्चिद्व्याप्यत्वमपि । अधिकमखण्डार्थभङ्गे वक्ष्याम. ।

एव तु सुखादिविषयकसाक्षिप्रत्यक्षस्याजन्यत्वादागमसाम्यान्न तत्राप्रामाण्यशङ्कोचिता । न केवलं चैतन्य साक्षी । किन्तु वृत्तिप्रतिबिम्बितम् । वृत्तेश्च जन्यत्वाद्दोषसम्भवाना युक्तेति चेत् । अद्वैततात्पर्यग्रहस्याप्यागमे दोषत्वसम्भवात् । न चाद्वैततात्पर्यग्रहस्य प्रत्यक्षाविरोधेन प्रमात्वात्कथं दोषत्वमिति वाच्यम् । प्रत्यक्षाविरोधेऽपि सर्वमिथ्यात्वपरत्वे स्वस्यैव मिथ्यात्वप्राप्त्या न कस्यापि सिद्धि· स्यादित्यादितर्कबाधितत्वेनाप्रमात्वोपपत्ते । चाकचक्यप्रमयैव रजतभ्रमोत्पत्त्या प्रमात्वस्य दोषत्वाव्यावर्तकत्वाच्च ।

वस्तुत. साक्षिणः सुखादिविषये वृत्त्यङ्गीकारे तत्समकाले तथात्वमङ्गीकार्यम् । अन्यथा ज्ञातैकसत्त्वानुपपत्ते· । वृत्तेरपि तथात्वात्तस्या· स्वप्रकाशत्वस्य जडत्वेन वक्तुमशक्यत्वात्तत्समकालवृत्त्यन्तर एवमन्यापि वृत्तिरित्यनन्तवृत्तीनां यौगपद्यापातेन वृत्तेरङ्गीकर्तुमयुक्तत्वेन साक्षिण एव स्वप्रकाशस्य सुखादिसाक्षात्कारत्वात् । न

(द्वै बु) न सुखादौ वृत्त्यनङ्गीकारे मनसि तत्संस्कारानुपपत्ति. कारणाभावादिति वाच्यम्। साक्षिसम्बन्धबलादेव-मनसि सस्कारोत्पत्तौ बाधकाभावात्।

ननु शुद्धचित साक्षित्वेऽपि तस्य भ्रमप्रमासाधारण्यात्तत्राप्रमात्वसन्देहो युक्त इति चेन्न। तस्य प्रमात्व-नैयत्यस्योपपादितत्वात्। अन्यथा सौषुप्तिकानन्दानुभवे भासमानानन्दस्वरूपेऽप्यनुभवस्याप्रामाण्यशङ्कयाऽऽत्मनि निरुपाधिकप्रेमास्पदत्वादिकमपि न सिद्ध्येदिति दिक्। तस्माद्बाधिबाधनिश्चयशङ्कयोरुभयोरपि प्रेक्षावतामसम्भा-वितत्वात्प्रत्यक्षबाध सुस्थिर एवेति।

यच्च 'घट सन्नित्यादौ त्रिकालाबाध्यत्वादेरयोग्यत्वेन भानायोगात् सत्ताजात्यादीना भाने घट सन् सामान्य सत् अभाव सन्नित्यादिप्रतीतीना सम्बन्धांशेऽप्यनुभूयमानस्यैकाकारत्वस्यानुपपत्तेरधिष्ठानब्रह्मसत्त्वमेव भासत इत्यभ्युपेयम्। अतो मिथ्यात्व दुर्वारम्' इति।

तत्तु त्रिकालाबाध्यत्वस्य प्रत्यक्षविषयत्वोपपादनात् सर्वत्र स्वरूपसत्त्वभाने बाधकाभावात् तस्यापि काल-सम्बन्धादिरूपस्य मिथ्यात्वग्रहविरोधिताया उपपादितत्वात् सन् घट इति प्रतीतौ सत्त्वस्य ब्रह्मरूपाधिष्ठानांशे येन सम्बन्धेन भानं तादृश एव सम्बन्धो भ्रमे कल्पितो घटे भासत इत्यभ्युपेयम्। अन्यथा सद्ब्रह्म घट सन्निति प्रतीत्यो सम्बन्धांशे एकाकारत्वाभावप्रसङ्गात्। तथा च सत्त्वसम्बन्धद्वयविषयताद्वयादिकल्पना-गौरवप्रसङ्गाच्चापास्तम्।

यत्तु 'सन् घट इति प्रतीते सत्तादात्म्यावगाहित्वात्तस्य मिथ्यात्वग्रहाविरोधित्वम्' इति, तत्तु त्रैकालि-कनिषेधप्रतियोगित्वे सति सत्तादात्म्यवत्त्वमिति लक्षणस्य व्याहत्युपपादनेनैव निरस्तप्रायमिति।

(गु. टि) ॥ तदनुसन्धानवतामिति ॥ अज्ञानजन्यत्वानुसन्धानवतामित्यर्थ। तथा च चन्द्रप्रादेश-त्वादिप्रत्यक्षवत् प्रागेव दोषनिश्चयेनास्यापटुत्वमिति भाव· ॥ तस्मिन्निति ॥ तदनुसन्धानवता प्रत्यक्ष इत्यर्थ· ॥ अन्यदपीति ॥ तदनुसन्धानरहितानां जायमान प्रत्यक्षमपीत्यर्थ ॥ स्वार्थात्प्रच्युतं भविष्यतीति ॥ अनुमा-नागमबाध्य भविष्यतीत्यर्थ. ॥ तत्कथमिति ॥ वियदादिप्रत्यक्षं अपटु मायाकल्पितार्थविषयकप्रत्यक्षत्वात् ऐन्द्रजालिकमायाकल्पितविषयकप्रत्यक्षवदिति, दु·खादिप्रत्यक्ष अपटु आविद्यकार्थप्रत्यक्षत्वात् इत्यनुमानस्यैव मानत्वान्न मानाभाव इत्यर्थ। अज्ञानजन्यत्वे मायाविद्यालक्षणाज्ञानजन्यत्वे। तथा चोक्तानुमानद्वये असिद्धि-रिति भाव.।

### वियदादेर्मायाजन्यत्वाभावे प्रमाणोक्ति

(टी) न केवलं जगतोऽज्ञानजन्यत्वे मानाभावः। अपि तु प्रमाणविरोधश्चेति दर्शयन् विय-दादेः ईश्वरमायाजन्यत्वाभावे तावदनुमानं व्याप्तिपक्षधर्मतोपपादनप्रयासनिरासाय पुराणवाक्येनैव दर्शयति

(टी.) न च मायाविना माया दृश्यते विश्वमीश्वरः ।
सदा पश्यति, तेनेदं न मायेत्यवधार्यताम् ॥

चशब्दो यस्मादित्यर्थे । अवधारणे वा । मायाविना पुंसा माया नैव दृश्यत इति व्यतिरेकव्याप्तिप्रदर्शनम् । विश्वमीश्वरः सदा पश्यतीति पक्षधर्मतोपदर्शनम् । सदेति स्वरूपकथनम् । मायावी मायामपि परोक्षतो जानातीति व्यभिचारपरिहाराय दृशिग्रहणम् । दृशिर्हि साक्षात्कारे वर्तते । तेनेदं न मायेति साधनत्वख्यापनेन साध्यनिर्देशः । नेश्वरमायाजन्यमिति यावत् । इयमत्र प्रयोगपरिशुद्धिः । अम्बरादिकं नेश्वरमायाजन्यं तेन दृश्यमानत्वात् यद्यन्मायाजन्य न तत्तेन दृश्यते । यथैन्द्रजालिकं वस्तु मायाविनेति ।

कथमृजावन्वये सति वक्रो व्यतिरेक आद्रियत इति चेन्न । व्याप्तिप्रदर्शनं व्यभिचाराभावोपपादनञ्चेति लाघवेनोभयं लभ्यत इत्यर्थवत्त्वात् ।

ननु मायाविनैन्द्रजालिकं वस्तु मा दर्शि । परमेश्वरेण दृश्यमानमपि वियदादिकं तन्मायामयं किं न स्यात् । तथा च विपक्षे बाधकाभावान्नेदं मायामयमित्यवधारणानुपपत्तिरिति चेन्न । मायाया लोकोपमत्वेऽदृष्टकल्पनाप्रसङ्गात्[1] अलौकिकत्वेऽविद्यामयत्वापातात् । उभयबहिर्भावे त्वस्माकमप्रतिपक्षत्वात् । तदेव विपक्षे बाधकसद्भावादुक्तमवधारणम् । तदिदमुक्तमित्यवधार्यतामिति ।

(वि टि) ॥ प्रमाणविरोधश्चेति ॥ प्रमाणेन बाधश्चेत्यर्थ । स्मृत्युपनिबन्धनत्वेन वक्ष्यमाणरीत्या अनुकूलतर्कसत्त्वेन चोच्यमानहेतो परोक्तशुष्कानुमानापेक्षया बलवत्त्वादिति भाव ॥ मायामपीति ॥ माया तत्कार्यमपीत्यर्थ ॥ साधनत्वख्यापनेनेति ॥ साधनत्वख्यापनेन सह साध्यनिर्देश. कृत इत्यर्थ । ननु 'तेनेदं न माया' इत्युक्ते इदशब्दार्थस्य विश्वस्य मायातिरिक्तत्व साध्यत इति प्रतिभाति । तच्च न परस्यानिष्टम् । तेनापि जगन्माययोर्भेदाङ्गीकारादित्यत आह ॥ नेश्वरेति ॥ अन्वये सम्भवतीति ॥ यद्येन दृश्यते न तत्तन्मायामयम् । यथा अस्मदादिदृश्यघटादिकमित्यन्वये सतीत्यर्थः ॥ व्याप्तिप्रदर्शनमिति ॥ अन्वयसहचारे प्रदर्शितेऽपि साध्याभाववति हेत्वभावानुपदर्शनेन व्यभिचाराभावाप्रदर्शनेन व्यभिचाराभावप्रदर्शनार्थं पुनर्यत्नान्तरमपेक्षित स्यादिति भाव ॥ अवधारणेति ॥ निश्चयेत्यर्थ ॥ मायाया इति ॥ मायाया लोकसिद्धमायासरूपत्वमङ्गीकृत्य [1]मायाया अपीश्वरदृश्यत्वाङ्गीकारे दृष्टहानादृष्टकल्पनाप्रसङ्गादित्यर्थ. ॥ अलौकिकत्व इति ॥ लोकसिद्धमायाविलक्षणत्व इत्यर्थ ॥ आविद्यकत्वेति ॥ अविद्याकार्यत्वापातादित्यर्थ । जगतो मायाऽविद्योभयकार्यान्यत्वस्य त्वया अनभ्युपगमादिति भाव ॥ उभयेति ॥ अभ्युपगमे तु नास्माकमनिष्टमित्यर्थ । उदाहृतपुराणवाक्ये अवधार्यतामित्यस्य वैयर्थ्यमाशङ्क्योक्तप्रदर्शनपरतया सार्थक्यमित्याह ॥ तदिदमिति ॥

---

[1] मायाकार्यस्येत्यर्थ. ।

(रा टि) ॥ **प्रमाणविरोधश्चेति** ॥ प्रत्यक्षानुमानागमसूत्ररूपप्रमाणविरोधश्चेति 'न च माया' इत्यारभ्य 'न स्वप्नादिवदित्यादिभगवद्वचनेनापि निरस्ता' इत्यन्तप्रकरणेन दर्शयिष्यन्नित्यर्थ । तावदित्युभयत्र सम्बद्ध्यते । मायाजन्यत्वाभावे तावदित्यस्य सुखादेरनाविद्यकत्वे त्वपरोक्षदृश इत्युत्तरवाक्य इत्यर्थ । [1]अनुमानान्तराभावादित्यस्य प्रत्यक्षादेरप्युत्तरवाक्यैरित्यर्थ ॥ **अनुमानमिति** ॥ दर्शयतीत्यन्वय । प्रयोगप्रकारोऽग्रे व्यक्त· । तेनेति श्रवणादाह ॥ **चो यस्मादित्यर्थ इति** ॥ माया नैव दृश्यत इत्यादौ मायाशब्द मायामयपर । अत एव तेनेदं न मायेत्यस्य नेश्वरमायाजन्यमिति यावदिति वक्ष्यति । अवधारण इत्युक्तस्यान्वयोक्तिर्नैव दृश्यत इति । व्यावर्त्याभावादाह ॥ **स्वरूपकथनमिति** ॥ **व्यभिचारेति** ॥ तेन दृश्यमानत्वादिति वक्ष्यमाणहेतोरिति योज्यम् । साधनत्वस्यापनेनेति सहयोगे तृतीया । साधनत्वस्यापनेन सहेत्यर्थ । निगमनमिति यावत् ।

उदाहरणोपनयनिगमनानामुक्त्या सिद्धं प्रयोगप्रकारमाह ॥ **इयमत्रेत्यादिना** ॥ **सतीति** ॥ यद्येन दृश्यते न तत्तन्मायामयम् । यथा कुलालेन दृश्यमानं घटादीत्येव सतीत्यर्थ. ॥ **उभयं लभ्यत इति** ॥ विपक्षे हेतुसाध्ययोर्द्वयोरप्यभावोक्त्या द्वयमपि लभ्यते । विपक्षाद्धेतुव्यावृत्तेरव्यभिचाररूपत्वादन्वयोक्तावस्यालाभादिति भाव: । **अर्थवत्त्वादिति** ॥ व्यतिरेकव्याप्त्युक्तेरिति योज्यम् ॥ **तथा चेति** ॥ एव शङ्किते सतीत्यर्थ ॥ **अवधारणेति** ॥ नेदं मायेत्यवधारणायोग इत्यर्थ ॥ **लोकोपमत्व इति** ॥ वियदादिहेतुभूताया ईश्वरनिष्ठमायाया· लोके मायाविनिष्ठमायासरूपत्वेऽङ्गीकृते सति मायाविकृतमायामये अदृष्टस्य मायाविना दृश्यमानत्वस्य कल्पनाप्रसङ्ग त्यर्थ: ॥ **अलौकिकत्व इति** ॥ लोकमायाविलक्षणत्वे आविद्यकत्वप्रसङ्ग । आविद्यकस्यैव सुखादे शुक्तिरूप्यादेश्चाविद्यावता दृश्यमानत्वाभ्युपगमात् । मायाऽविद्योभयजन्यत्वस्यैव प्रपञ्चेऽङ्गीकृतत्वेन लोकसरूपमायाजन्यत्वाभावे आविद्यकत्वावश्यम्भावाच्चेति भाव ॥ **अप्रतिपक्षत्वादिति** ॥ ईश्वरेच्छानिमित्तकत्वरूपेश्वरमायामयत्वस्य प्रपञ्चेऽस्माभिरभ्युपगमेन विश्वसत्यत्वाप्रतिपक्षत्वादवधारणानुपपत्तिर्नेत्यन्वय ॥ **तदेवमिति** ॥ अदृष्टकल्पनादिरूपेत्यर्थ. ।

(वे. टि) ॥ **यस्मादित्यर्थ इति** ॥ तथा च तेनेति सङ्गच्छत इति भाव: ॥ **अवधारणे वेति** ॥ अन्यथा व्याप्तिप्रदर्शनासिद्धेरिति भाव । ननु पश्यतीत्यपरोक्षज्ञानोक्त्यैव व्यभिचारपरिहारात् सदेति व्यर्थमित्यत आह ॥ **सदेति स्वरूपकथनमिति** ॥ **साधनत्वस्यापनेनेति** ॥ सहेति शेष: । ननु न मायेति कथ निगमनम् । सिद्धसाधनत्वप्रसङ्गात् । अथ न मायाजन्यमित्यर्थ इति चेत् । तथापि केनचिद्दृश्यमानमपि कस्यचिन्मायामयं भवतीतीश्वरेण दृश्यमानत्वेन सामान्यतो मायामयत्वाभाव. कथ साध्यत इत्यत आह ॥ **नेश्वरमायाजन्यमितीति** ॥ नन्वेवमीश्वरमायाकल्पितत्वाभावसिद्धावपि न मायामयत्वाभावसिद्धि । अन्यमायामयत्वसम्भवादिति चेन्न । परैरन्यमायामयत्वानङ्गीकारेणेश्वरमायामयत्वाभावसाधनेऽमायामयत्वस्यैव सिद्धेरिति भाव ॥ **अवधारणानुपपत्तिरिति** ॥ अवधार्यतामित्युक्तनिश्चयरूपावधारणानुपपत्तिरित्यर्थ ॥ **मायाया लोकोपमत्व इति** ॥

[1] अनुमान तावदित्यस्य प्रत्यक्षाद्यप्युत्तरवाक्य इत्यर्थ इति पाठेन भाव्यमिति भाति ।

(वे.टि) स्वाश्रयाव्यामोहकत्वेनैन्द्रजालिकार्थहेतुभूतमायासादृश्य इत्यर्थः ॥ अदृष्टकल्पनाप्रसङ्गादिति ॥ तेन दृश्यमाने तन्मायामयत्वस्य लोकेऽदृष्टस्यैव प्रपञ्चे कल्पनाप्रसङ्गादिति भावः ॥ अलौकिकत्व इति ॥ लोकमायाविलक्षणत्वे स्वाश्रयव्यामोहकत्व इति यावत् ॥ अविद्यामयत्वापातादिति ॥ मायायाः स्वाश्रयव्यामोहकत्वे अविद्यात्वापत्त्या विश्वस्याविद्यकत्वप्रसङ्गादित्यर्थः । तथा चाम्बरादिकं मायिकं दुःखादिकं त्वाविद्यकमिति विभागो न स्यादिति भावः ॥ अप्रतिपक्षत्वादिति ॥ मायाशब्दवाच्यप्रकृत्याद्युपादानकत्वादेः प्रपञ्चेऽस्माभिरङ्गीकृतत्वादिति भावः ।

(द्वै. द्यु) ॥ न केवलमिति ॥ भाविबाधोऽप्युपलक्षणतया ग्राह्यः ॥ प्रमाणेति ॥ आगममूलकानुमानरूपप्रमाणविरोध इत्यर्थः । न मृषेत्यनेनाबाधितज्ञानस्य परमेश्वरस्य जगत्प्रत्यक्षोक्त्या तत्संवादिन्यस्मदीयप्रत्यक्षे बाधाभावसिद्ध्या च भाविबाधस्यापि प्रमाणविरोधोऽनेन सिद्ध्यतीत्यपि द्रष्टव्यम् ॥ स्वरूपकथनमिति ॥ तत्फलं त्वीश्वरज्ञानस्य प्रमात्वद्योतनम् । सर्वाधिकत्वेनाजन्यत्वबाधाभावयोः प्राप्त्या तत्सिद्धेः ॥ परोक्षत इति ॥ ॥ व्यभिचार इति ॥ सत्त्वप्रकारकत्वेन ज्ञानस्य हेतुशरीरानिविष्टत्वाद्व्यभिचारप्रसक्तिः ॥ मायाया लोकोपमत्व इति ॥ जगत्कारणत्वेन त्वदभिमतमायाया इन्द्रजालरूपत्व इत्यर्थः ॥ अदृष्टेनेति ॥ ईश्वरसम्बन्धिनी जगत्कारणीभूतेन्द्रजालरूपमाया स्वप्रयोक्त्रीश्वरीयाधिष्ठानापरोक्षं प्रतिबध्य स्वसृष्टपदार्थविषयकभ्रान्तिमुत्पादयतीत्यत्र विशेषप्रमाणाभावेन कल्पनामात्रमेतदिति भावः । 'निरनिष्टो निरवद्य' 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इत्यादिप्रमाणविरुद्धकल्पनाप्रसङ्गाच्चेत्यर्थः ॥ अलौकिकत्व इति ॥ स्वप्रयोक्तारं प्रत्यपि भ्रान्तिजनकत्वेन लौकिकेन्द्रजालविलक्षणत्वे इत्यर्थः. ॥ अविद्यामयत्वेति ॥ अधिष्ठानापरोक्षकालेऽपि भ्रान्त्युत्पत्तौ तस्य कदापि भ्रमानिवृत्तिप्रसङ्गात् अधिष्ठानापरोक्षं प्रतिबद्ध्यैवेश्वरस्य भ्रममुत्पादयतीति वाच्यम् । तथा चाविद्याया एवैतल्लक्षणकत्वादविद्यात्वमेव स्यान्नतु मायात्वम् । तज्जन्याम्बरादेरप्याविद्यकत्वमेव स्यान्न तु मायामयत्वमिति भावः ।

ननु जगद्दर्शनकाले तत्र मिथ्यात्वग्रह एवेश्वरस्य वर्तते । आविद्यकशुक्तिरजतादिभ्रमस्थले नैवमित्यविद्यावैलक्षण्यमिति चेन्न । [1]सोपाधिकभ्रमस्याऽविद्यकत्वाभावप्रसङ्गात् । न च तत्र मिथ्यात्वधीः परोक्षरूपा । मायिकप्रत्यक्षं तु मिथ्यात्वापरोक्षात्मकमिति वाच्यम् । यतो मिथ्यात्वापरोक्षं नाम भासमानाम्बरादिप्रपञ्चान्यूनसत्ताकाभावापरोक्षमेव । तदंशे पारोक्ष्ये मिथ्यात्वापरोक्षमित्यस्य वाङ्मात्रत्वापत्तेः । तथा च तत्सत्ताकाले जगद्भानं कथं स्यात् । तस्य तन्निवर्तकत्वात् । सोपाधिकापरोक्षभ्रमस्थलेऽपि पीतत्वतदभावादीनां युगपद्भानस्यादृष्टचरत्वेनात्रैवादृष्टकल्पनाऽयोगाच्च । अन्यथेश्वरस्य कदापि तद्भ्रमानिवृत्तिप्रसङ्गादुपायाभावात् ।

ननु चिन्मात्रावगाह्यखण्डाकारवृत्तिरेव तद्भ्रमावर्तिका । न स्वप्रकाशचैतन्यात्मकमीश्वरज्ञानम् । सा नेश्वरस्यास्तीति चेत् । कालान्तरेऽपि सा जायते न वा । जायते चेत् तत्सामग्रीरूपस्य तत्त्वमस्यादिवाक्यतात्पर्यानुसन्धानादेर्नित्यनिरवधिकसर्वज्ञेश्वरे इदानीमपि सत्त्वेन तत्कार्याया जगद्भाननिवर्तकाखण्डाकारवृत्तेरिदानीमुत्पत्तेरवर्जनीयतया जगद्भानानुपपत्तिः । कर्मादिप्रतिबन्धकस्य कर्मबन्धविधुरे ईश्वरे वक्तुमशक्यत्वात् । 'न कर्मणा वर्धते

[1] सोपाधिकभ्रमविषयस्याऽविद्यकत्वाभावप्रसङ्गात् इति पाठेन भाव्यमिति भाति ।

(द्वै. द्यु) नो कनीयान्' इति श्रुते. ईश्वरे कर्मबन्धाभावावगमात् । अन्यथा जीववद्बन्धमोक्षभागित्वापत्त्येश्वरत्व-व्याहते । न द्वितीय. । ईश्वरस्य नित्यबद्धत्वापत्ते । जगत्प्रतिभासनिवर्तकवृत्तेरनुदयात् ।

न च जगत्प्रतिभासस्येश्वरे त्वन्मत इव मन्मते सर्वदा विद्यमानत्वेऽपि तज्जन्यदु खानुभवशून्यत्वान्न बद्धत्वप्रसक्तिरिति वाच्यम् । ईश्वरे सार्वज्ञ्यश्रुत्यनुरोधाद्दु खापरोक्ष्यस्यावर्जनीयतया तदतिरिक्तदु खानुभवस्य त्वया निरूपयितुमशक्यत्वेनैतद्दोषानुद्धारात् । मन्मते चापरोक्षातिरिक्तस्योच्चत्वनीचत्वाख्यविक्रियाविशेषस्य जीव-चैतन्येन भिन्नाभिन्नस्य संसारे, मुक्तौ तु सविशेषात्यन्ताभिन्नोच्चत्वस्य भोगत्वेनाङ्गीकारान्न दोष. । न चेश्व-रस्य त्वन्मते सर्वाधारत्वाज्जीववृत्तिभोगजीवत्वजीवात्यन्ताभेदादीनामीश्वरेऽवर्जनीयतयेश्वरस्यात्यन्तदु.खित्वापत्ति । मन्मते तेषा मिथ्यात्वादेव न कोऽपि दोष इति वाच्यम् । नैयायिकमते काले घटत्वतत्समवायतदधिकरण-त्वादीना सत्त्वेऽपि यथा [1]घटाभेदेन कालस्य विशेषणतासम्बन्धाना काले विशृङ्खलाना सत्त्वेऽपि कालस्वरूप भूतसमवायसम्बन्धावच्छिन्नाधिकरणतानिरूपकत्वस्य घटत्वेऽनभ्युपगमत् । तथा प्रकृतेऽपीश्वरस्वरूपभूतधर्मिताविशे-षानिरूपकत्व दु खादिभोगजीवत्वादीनामिति दोषस्य मन्मते संस्पर्शाभावात् । त्वदुक्तदु खादीना मिथ्यात्व तु नादु खित्वे प्रयोजकम् । ईश्वरजीवयो साम्येन ईश्वरस्य दु खाननुभवितृत्वेन जीवस्य तदनुभवितृत्वेन सकल-श्रुतिस्मृतिपुराणादौ प्रतिपादनानुपपात्ति ।

एव ब्रह्मणि सर्वेषामध्यस्तत्वात् घटादाविव ब्रह्मण्यपि घटजडत्वादितादात्म्याध्यासाद्ब्रह्मणोऽपि जडादि-स्वरूपत्वापत्तिस्त्वन्मत एव । न च धर्मे स्वसमानसत्ताकत्व तथा व्यवहारनियामकमिति वाच्यम् । जीवत्वस्यापि जीवचैतन्यसमसत्ताकत्वाभावेन जीवत्वव्यवहारानुपपत्ते ।

न चामिथ्यात्वेन तदपरोक्षस्य भोगरूपतयेश्वरस्य तत्रामिथ्यात्वग्रहप्रसक्त्यभावान्न भोगप्रसक्तिरिति वाच्यम् । अमिथ्यात्वग्रहपदेन मिथ्यात्वाग्रहो वा सत्यत्वग्रहो वा विवक्षित । नाद्य । इदानीं शास्त्रादिना दु खादिमिथ्यात्वनिश्चयवता दु खोत्पत्तिकालेऽपि तत्सत्त्वेन तद्भोगाभावापत्ते । तदपरोक्षाभावो विवक्षित इति चेन्न । दु खाद्यपरोक्षकाले तदभावापरोक्षरूपतन्मिथ्यात्वापरोक्षस्येश्वरेऽप्ययुक्तताया उक्तत्वात् । अन्यथा ब्रह्मा-द्याधिकारिकदेवानामुत्पन्नापरोक्षाणा प्रारब्धकर्मफलभूतब्रह्मादिपदानुभवकाले सुखदु खादिभोगाभावप्रसङ्गात् । पदानुभवकाले नापरोक्ष्य तेषामिति न शङ्क्यम् । ईश्वरवन्नित्यसर्वज्ञकल्पत्वस्य तेषामपि श्रुतिस्मृत्यादिसिद्धत्वात् । अन्यथाऽस्मदादिसाम्येन तेषा जीवन्मुक्त्यनुपपत्ते । दु:खाद्यनुभवितृत्वेन लोकाना प्रतिभासमात्रम् । न तु जीव-न्मुक्ते तदनुभवोऽस्ति । अतस्तद्भोगस्तस्य नास्त्येवेति न युक्तिसहम् । तन्मूलकस्येषत्सुखादिभोगस्याप्यभावे तस्य शरीरस्य प्रारब्धफलरूपत्वानुपपत्ति ।

न चेश्वरीयज्ञान मायावृत्त्यात्मकम् । न मनोवृत्त्यात्मकम् । विपरीतज्ञानप्रतिबध्यता तु तत्रैव । चक्षुस्त्वप्रपभिन्नेन्द्रियजन्याना वंशे उरगत्वतदभावादिप्रत्यक्षाणा प्रतिबध्यप्रतिबन्धकभाववारणाय चाक्षुषत्वा-

---

[1] यथा घटाभेदो न कालस्य इति पाठेन भाव्यमिति भाति ।

(द्वि तु) द्विप्रकारकेच्छानां पृथगुत्तेजकत्वानुरोधेन च चाक्षुषत्वादिकमन्तर्भाव्यैव पृथक् प्रतिबध्यताप्रतिबन्धकतयो कल्पनीयतयेश्वरेज्ञाने तदभावात्। इत्थं च घटाद्यभावापरोक्षरूपतन्मिथ्यात्वग्रहकालेऽपि घटाद्यपरोक्ष्य युक्तमिति वाच्यम्। साक्षात्कारत्वचाक्षुषत्वादिजातीनां त्वन्मतेऽनङ्गीकारेणाकरीत्ययोगात्। लीलागृहीतशरीरेण चाक्षुषादेरपीश्वरस्य पुराणादिसिद्धत्वाच्च। उपादानप्रत्यक्षस्यैव कार्योत्पत्तौ हेतुतया प्रत्यक्षत्वस्य मनोवृत्तित्वव्याप्यत्वे ईश्वरमायावृत्तेस्तथात्वाज्जगत्कारणत्वानुपपत्ति। ईश्वरस्यानागतविषयेऽनुमितेरतीतविषये स्मृतेश्च त्वदभ्युपगतत्वेन मनोवृत्त्यात्मकज्ञानस्यावश्यकत्वेन मायावृत्त्यात्मकाप्रामाणिकज्ञानकल्पनाऽयोगश्च।

नापि सत्यत्वग्रहकालीनतदपरोक्षं दुःखादिभोग इति प्राग्विकल्पितद्वितीयपक्षोऽपि। ईश्वरीयाधिष्ठानादिसाक्षात्कारकाल एव घटादिसाक्षात्कारस्य त्वदभ्युपगतत्वेन [1]त्वग्रहस्यावश्यकत्वात्। घटादेर्देशकालसम्बन्धादिरूपस्य वाऽन्यादृशस्य वा सत्त्वस्यासदादिभिर्गृह्यमाणस्येश्वरेणैव सृष्टत्वात्। अन्यथा सत्त्वविशिष्टसुखदुःखादिरूपविशिष्टस्य जीवसाक्षात्कारविषयस्येश्वरप्रत्यक्षाविषयत्वे सार्वज्ञ्यहानिप्रसङ्गात्।

किञ्चेश्वरस्य मिथ्यात्वेनैवाम्बरादिप्रपञ्चप्रत्यक्षाङ्गीकारे अज्ञातमिथ्यात्वकार्यार्थवगाहित्वरूपप्रामाण्यस्य स्वज्ञानेऽनिश्चयेन प्रवर्तकज्ञानाभावाज्जगत्पालनादौ प्रवृत्त्यनुपपत्तिः। अन्यथा बालोऽरमपि शुक्तिरूप्यरक्षणादौ सोपाधिकभ्रमविषयशङ्खपीतरक्षणादौ प्रवृत्त्यापत्तेः। न च मायिकस्य स्वमायासृष्टवस्तुपालनादौ प्रवृत्तिवदत्राप्यस्त्विति वाच्यम्। तत्स्थित्यनुकूलव्यापारविशेषस्यैव पालनरूपतया स्थितेश्च सत्ताविशेषरूपतया सत्त्वाभावरूपमिथ्यात्वनिश्चयवत सत्ताप्रयोजकव्यापाररूपपालनोक्तेरसङ्गतत्वात्। मायिकस्य स्वप्रयुक्तेन्द्रजालविद्यायामेव सत्यत्वग्रहात्तत्पालने प्रवृत्तिरेव। न तु तन्निमित्तप्रतीतिविषयपदार्थपालने। उक्तदोषात्। न च प्रकृतेऽपि तथास्त्विति वाच्यम्। मायादिसर्वपदार्थेष्वपि मिथ्यात्वस्य गृहीतत्वात्। तस्मान्मायिकस्येश्वरस्याधिष्ठानापरोक्षादिकाले मायिकपदार्थदर्शनस्य वक्तुमशक्यत्वादधिष्ठानापरोक्ष्यं विनैव तद्दर्शनस्य वक्तव्यत्वापत्त्या भ्रमजनिकाया अविद्यात्मीश्वरस्याज्ञत्व च स्यादेव।

ननु मायिकस्य मायासृष्टापरोक्ष नास्तीति वक्तुमशक्यम्। हरिवंशे प्रद्युम्नशम्बरयुद्धे शम्बरस्य स्वमायानिर्मितपदार्थप्रत्यक्षस्योदाहरिष्यमाणवाक्यैरवगमात्। ऐन्द्रजालिका अपि वदन्ति 'स्वमायासृष्टं पदार्थं पश्यामः' इति। युक्त च तत्। अन्यथा तन्निष्पत्तिज्ञानाभावेन लोकान् प्रति तद्दर्शनाय प्रवृत्त्यनुपपत्तेरिति चेन्न। लोकेषु मन्त्रादिभिः पदार्थदर्शनं हि द्वेधा दृष्टम्। स्वप्रयुक्तमन्त्रौषध्यादिना लोकानामधिष्ठानापरोक्षे तिरस्कृते मन्त्रादिरूपादेव दोषात् इतरेषां वंशोरगभ्रमादिर्जायते। तद्विषयीभूतास्तु शुक्तिरूप्यादितुल्या अर्थक्रियानर्हा मिथ्याभूता मायिकप्रत्यक्षाविषया एव। मायिकस्य स्वमन्त्रपूर्त्यादिना तन्निष्पत्त्यनुमितिरेव। अत एव 'अन्यदृष्टीर्बध्नामो न वयं पश्याम' इति वदन्ति। लोका अपि वदन्ति 'अस्मान् वंशमुरगत्वेन मिथ्यैव दर्शयति' इति। क्वचिन्मन्त्रौ-

---

[1] तत्सत्त्वग्रहस्यावश्यकत्वात् इति पाठेन भाव्यमिति भाति।

(द्वै. द्यु.) षध्यादिना तत्काल एव आम्रवृक्षफलादिसृष्टिर्दृष्टा । ते तु पदार्था सत्या एव घटादितुल्या । अर्थ क्रियाकारित्वात् । तेषा घटादितुल्यसत्तानङ्गीकारे व्यावहारिकत्वाभावात् अर्थक्रियाकारित्वेन शुक्तिरजतादिरूप-प्रातिभासिकवैलक्षण्याच्चान्यादृश्या सत्ताया अभ्युपगन्तव्यतया सत्ताचातुर्विध्यापातात् । प्रातिभासिकेष्वेव वैलक्षण्य कल्प्यत इति चेन्न । नियामकाभावात् ।

अकालिकविद्युदादिवद्व्यजनवायुवच्च तात्कालिकोत्पत्तिविनाशयो सम्भवेन सत्यत्वे बाधकाभावात् बाधा-भावाच्च तेषा सत्यत्वम् । न हि केनचित्पुरुषेण मन्त्रौषध्यादिना तार शुल्बता नीत कञ्चित्कालं, तदनन्तर पुनस्तार एव मन्त्रेणौषध्यादिना वा भवति तत्र शुक्तिरजतादाविव 'अविद्यमानमेव शुल्बमभात्' इति लोकाना बाधानुभव । किन्तु 'एतन्मन्त्रेण शुल्बत्वेन निष्पादित पुनस्तारत्वेन कृत' इत्येव । कुत एतत् । पुनस्तार-त्वासम्पादने शुल्बतयैवावस्थानाच्छुल्बार्थक्रियाकारित्वाच्च । इत्थ च शम्बरादिभिर्युद्धे सृष्टसिंहादीना सत्यत्वे-नैन्द्रजालिकत्वाभावात्तत्प्रत्यक्षविषयत्वेऽपि नासदुक्तपुराणवाक्यलोकानुभवसिद्धस्य व्यभिचार । साध्यमपीन्द्रजाल-प्रयुक्तप्रतीतिविषयत्वाभावो वा मिथ्यार्थप्रदर्शकविद्याप्रयुक्तप्रतीतिविषयत्वाभावो वा । तत्प्रतियोगिन एव जगत्य-स्माकमनिष्टत्वात् । ईश्वरीयशक्तिविशेषरूपमायाजन्यत्व जगति सत्त्वाविरोधादस्मत्सम्मतमेव । न च माया-पदस्येन्द्रजाल एव प्रयोगाद्वक्ष्यमाणहरिवंशवाक्यगतमायापद कथ विद्याविशेषवाचकमिति वाच्यम् । माया वयुन चितिरित्यादिनिघन्टुवाक्ये विद्यावाचकत्वेन ग्रहणात् । **महाभारते** अस्त्रमाययेति शतशोऽस्त्रविद्याया प्रयोगात् । **भागवते** पञ्चमस्कन्धे 'मयमायाविनिर्मिता. पुरश्चरन्त्य' इति तच्छक्तिविशेषसम्पादकतद्विद्या प्रयोगात् ।

प्रजाना समुदाचार बहु कर्म कृत वदन् ।
छादयिष्यामि कौन्तेय माययाऽऽत्मानमात्मना ॥

इति विराटपर्वण्येवमन्यत्रापि बहुश शक्तिविशेषविद्याविशेषत्रिगुणात्मकप्रकृत्यादौ बहुशो मायापदस्य प्रयोगाच्च । न च तत्रापीन्द्रजालपरमिति वक्तु युक्तम् । 'अद्याप्यसुरान् रमयन्ति' इत्यादिना तत्सृष्टानामितरस्त्रीवदेव व्याव-हारिकत्वावगमात् । न ह्यर्जुनेनेन्द्रजालविद्या विराटनगरे दर्शिता । तस्माच्छम्बरादिभिरिदानीन्तनैर्वा विद्या-विशेषादिना सृष्टेष्वैन्द्रजालिकत्वाभावान्न व्यभिचारशङ्कापि । अत एव **न्यायामृते** 'घटोत्कचेन मायासृष्टगजा-दिक सत्यमेव' इत्युक्तमित्यलम् ।

॥ **उभयबहिर्भावे त्विति** ॥ जगत्कारणीभूतत्वेन व्यवह्रियमाणमायाया इन्द्रजालविद्यारूपत्वशुक्ति-रजतादिभ्रमकारणीभूताविद्याजातीयत्वयोरनङ्गीकारेण त्रिगुणात्मकप्रकृत्यादिरूपमाया[1]जन्यत्वाङ्गीकार इत्यर्थः । ॥ **अस्माकमिति** ॥ प्रकृतानुमानप्रयोक्तॄणामित्यर्थ ॥ **अप्रतिपक्षत्वादिति** ॥ अपसिद्धान्तभियाऽस्माभिस्तदभावा-साधनेन तत्पक्षेऽङ्गीकृतहेतोरप्रयोजकत्वोक्तेरयुक्तत्वादित्यर्थः ।

---

[1] रूपत्वाङ्गीकार इति पाठेन भाव्यमिति भाति ।

(गु. टि) तेनेति तच्छब्दश्रवणात् यस्मादित्यर्थकतया चशब्द व्याख्याति ॥ यस्मादित्यर्थ इति ॥ अवधारणे वेति ॥ अन्यथा व्याप्तिप्रदर्शनासिद्धेरिति भाव । ननु पश्यतीत्यपरोक्षेनोक्तत्वेनैव व्यभिचारपरिहारात् सदेति व्यर्थमित्यत आह ॥ सदेति ॥ साधनत्वप्रख्यापनेनेति ॥ सहयोगे तृतीया ।

ननु परेण मायात्वस्यानभ्युपगमेन सिद्धसाधनत्वात्कथं न मायेति निगमनम् । न च न मायाजन्यमित्यर्थकत्वायुक्तं निगमनमिति वाच्यम् । केनचिद्दृश्यमानस्याप्यन्यमायाजन्यत्वस्य सम्भवात् ईश्वरेण दृश्यमानत्वेन मायामयत्वाभावसाधनायोगादित्यतस्तदुक्तेरभिप्रायमाह ॥ नेश्वरमायाजन्यमिति यावदिति ॥ न चेश्वरमायाजन्यत्वाभावसिद्धावप्यन्यमायामयत्वाभावस्यासिद्धया कथममायामयत्वावधारणमिति वाच्यम् । अन्यमायामयत्वस्यानङ्गीकारपराहतत्वेन पराङ्गीकृतेश्वरमायाकल्पितत्वाभावसिद्धौ अमायामयत्वस्यैव सिद्धेरित्यत्र तात्पर्यात् ।

अवधारणानुपपत्तिः अवधार्यतामित्युक्तावधारणानुपपत्तिः ॥ लोकोपमत्व इति ॥ स्वाश्रयान्यामोहकत्वेनैन्द्रजालिकार्थहेतुभूतमायातुल्यत्व इत्यर्थ ॥ अदृष्टेति ॥ तेन दृश्यमानस्य तन्मायामयत्वकल्पनस्यादृष्टत्वादिति भाव ॥ अलौकिकत्व इति ॥ लोकमायाविलक्षणत्वे स्वाश्रयत्वामोहकाविद्यात्वापत्त्या विश्वस्याऽविद्यकत्वाप्रसङ्गादित्यर्थ । तथा चाम्बरादिकं मायिक दुःखादिकं त्वाविद्यकमिति पराभिमतविभागो न स्यादिति भावः ॥ अप्रतिपक्षत्वादिति ॥ मायाशब्दवाच्येश्वरेच्छानिमित्तकत्वस्य तच्छब्दवाच्यप्रकृत्युपादानकत्वस्यास्माभिरप्यङ्गीकृतत्वादिति भाव. ।

**सर्वस्य जगतो मायाजन्यत्वाभावे प्रमाणोक्तिस्तद्भावे प्रमाणविरोधोक्तिश्च**

(टी) एवं वियदादेरमायामयत्वे प्रमाणमभिधाय दुःखादेरनाविद्यकत्वे प्रमाण विवक्षुस्तस्य वियदाद्यमायामयत्वेऽपि प्रवृत्तेरुभयसाधारणमनुमानमाह

> अपरोक्षदृशो मिथ्यादर्शनं न क्वचिद्भवेत् ।
> सर्वापरोक्षविद्विष्णुर्विश्वदृक् तन्न तन्मृषा ॥ इति ब्रह्माण्डे

अत्र पूर्वार्धेन व्याप्तिं दर्शयति । अधिष्ठानमपरोक्षेण पश्यतस्तत्रारोपितमिथ्यार्थदर्शनं न भवेत् । अधिष्ठानापरोक्षज्ञानवता दृश्यमानं तत्रारोपितं न भवेदिति यावत् । अनेनान्वयो दर्शितः । यन्मिथ्या तस्य दर्शनमधिष्ठानापरोक्षदृशो न भवेदिति व्यतिरेको वा । क्वचिदित्यनेन तदुभयनियमः । यद्यपि दृशिरेवापरोक्षज्ञाने वर्तते तथापि पश्यार्थैश्चानालोचन इत्यादौ ज्ञानमात्रेपि दर्शनादपरोक्षेत्युक्तम् । अत एव सर्वापरोक्षविद्विष्णुर्विश्वदृगिति सामान्येन हेतोः पक्षधर्मतां दर्शयति 'सर्वात्मनाऽपरोक्षतोऽधिष्ठानाभिमत जानन् विष्णुर्विश्व पश्यति' इति । अपरोक्षतः शुक्तिकां पश्यन्नेव तदारोपितं रजतं पश्यतीति व्यभिचारपरिहाराय सर्वेत्युक्तम् ।

(टी.) नन्वेवं सति दृष्टान्ते साधनाभावः प्राप्नोति। न हि लोके कोऽपि किमपि सर्वात्मना पश्यति। मैवम्। सर्वशब्देन व्यावर्तकाकारस्य विवक्षितत्वात्। व्याप्तिकथनेऽप्येतदनुसन्धेयम्।

आप्तवाक्यादिना शुक्तिकां पश्यन्नपि रजतं पश्यतीति व्यभिचारनिरासायापरोक्षेत्युक्तम्। विष्णुरित्यसिद्धिपरिहाराय स्वरूपकथनम्। तत्तस्मात् तद्वियदादि मायामयत्वेन दुःखादि अविद्यामयत्वेन च मृषा न भवतीति साधनत्वाभिव्यक्तिपूर्वकं साध्यनिर्देशः।

इयमत्र प्रयोगप्रक्रिया। विवादपदं नारोपितं सर्वात्मनाऽधिष्ठानापरोक्षज्ञानवता दृश्यमानत्वात्। यदेवं तदेवं यथा उक्तविधया स्तम्भविदा दृश्यमानो न कुम्भस्तत्रारोपितः। अथ वा यन्नैवं तन्नैव यथा शुक्तिकाऽरोपितरजतमुक्तरीत्या शुक्तिदर्शिना न दृश्यते। अधिष्ठानज्ञानेऽपि भ्रमानुवृत्तौ बन्धनिरासाय ब्रह्मज्ञानान्वेषणाऽभ्यासवैयर्थ्यप्रसङ्गः।

एतेनानुमानागमयोः प्रत्यक्षविरोधोपपादनेनैवानुमानविरोधोऽप्युक्तो भवति। उपन्यस्तानुमानयोरागमिकत्वेनातिबलवत्त्वात्। अनेनागमविरोधोऽपि सूचितः।

(वि टि) उत्तरश्लोके न मृषेति साध्यनिर्देशस्य हेतोश्च मायिकत्वाविद्यकत्वोभयनिषेधसाधारण्यात् वियदादिमायिकत्वनिषेधमात्रपरत्वशङ्कावारणायावतारयति॥ एवमिति॥ क्वचिदपरोक्षज्ञानवतोऽपि आरोपितवस्तुदर्शनस्याऽनुभविकत्वेन यथाश्रुतमयुक्तमित्याशङ्क्य व्याकुर्वन् व्याप्तिस्वरूपं दर्शयति॥ अधिष्ठानेति॥ शुक्त्याद्यधिष्ठानापरोक्षज्ञानवतापि दृश्यमानस्य रजतस्य रङ्गादावारोपितत्वाद्व्यभिचार इत्यत उक्तम्॥ तत्रेति॥ यदधिष्ठानापरोक्षज्ञानवता यद्दृश्यते तत्तत्रारोपितं नेत्यर्थः। अधिष्ठानापरोक्षज्ञानवतेत्यनेनान्वये दर्शितेपि व्यभिचाराभावप्रदर्शनाय व्यतिरेकोपदर्शनमावश्यकमित्यभिप्रेत्याह॥ यन्मिथ्येति॥ ननूक्तरीत्या व्यतिरेकप्रदर्शनस्यैवोभयार्थत्वसम्भवात् अन्वयप्रदर्शनपरत्वे मानाभाव इत्यत आह॥ क्वचिदिति॥ नियम इत्यस्यानन्तरं दर्शित इत्यनुषज्यते। तथा च व्यतिरेकप्रदर्शनस्योभयार्थत्वसम्भवेपि स्मृत्यैवोभयव्याप्तौ स्वतात्पर्यज्ञापनेनोभयपरत्वे मानाभावोऽसिद्ध इति भावः। यद्वा क्वचिच्छब्दरहितस्यैव पूर्वार्धस्य व्याप्तिप्रदर्शकत्वस्योक्तत्वात् क्वचिच्छब्दवैयर्थ्यमित्याशङ्क्याह॥ क्वचिदिति॥ तथा च पूर्वं सहचारमात्रं प्रदर्शितम्। अनेन तु नियमांशः प्रदर्श्यत इति न वैयर्थ्यम्। एतच्च स्वकृतव्याख्यानद्वयाभिप्रायेण। क्वचिच्छब्दस्तु नियमांशमात्रपर इत्यवधेयम्।

श्लोके अपरोक्षपदस्य गतार्थत्वं शङ्कते॥ यद्यपीति॥ यद्यपि बहुव्रीहिलाभार्थं पदान्तरमपेक्षितं तथापि दृक्पदस्थाने ज्ञानपदमेव प्रयोक्तुमुचितम्। बहुव्रीह्यभावेपि पश्यतीति दृगिति व्युत्पत्त्या अपरोक्षज्ञानवतो लाभादपरोक्षपदस्यानर्थक्यमेवेति भावः। दृशेर्ज्ञानमात्रेऽप्यभियुक्तप्रयोगादपरोक्षपदं तद्विशेषलाभार्थत्वान्न व्यर्थमिति परिहरति॥ तथापीति॥ अत एवेति॥ यत एव दृशेर्ज्ञानसामान्यमप्यर्थः अत एवेत्यर्थः।

ननु सर्वापरोक्षविद्विष्णुर्विश्वदृगित्येतन्न पक्षधर्मतोपपादकम्। व्यावर्तकधर्मवत्तया अधिष्ठानापरोक्षज्ञानवता दृश्यमानत्वादिति करिष्यमाणहेतोरप्रतीतेरित्यत आह॥ सामान्येनेति॥ व्यावर्तकधर्मवत्त्वाकारेणाप्रतिपादनेपि

(वि.टि.) सामान्यधर्माकारेण प्रतिपादनान्नोक्तदोष इति भाव. ॥ सर्वात्मनेति ॥ अशेषविशेषाकारेणेत्यर्थ ॥ उक्तमिति ॥ इदन्त्वेन शुक्तिका पश्यन्नपि न शुक्तित्वाद्याकारेण पश्यतीति विवक्षितहेतुमभावान्न व्यभिचार इति भाव ॥ न हीति ॥ सम्भवत्वादियोग्यधर्मवत्तया लोके कस्यचिदपरोक्षज्ञानसम्भवेपि गुरुत्वाद्ययोग्यधर्मवत्तया तदसम्भवादिति भाव । लोके कोपीत्यनेनोभयवादिसम्प्रतिपन्नो जनो विवक्षित इति न काप्यनुपपत्तिरिति ध्येयम् ॥ व्यावर्तकेति ॥ यद्यपि शुक्तौ रजतश्चेति समुच्चयभ्रमव्यावर्तकशुक्तित्वाकारवत्तया तदपरोक्षज्ञानवतापि दृश्यते तथापि यस्य धर्मस्य येन रूपेण ज्ञाने इतरव्यावृत्तिर्बुद्ध्यते तेन रूपेण तद्वत्तया अधिष्ठानापरोक्षज्ञानवत्त्वं विवक्षितमिति नोक्तदोषः ।

नन्वधिष्ठानापरोक्षज्ञानवतेत्यनेनाविशिष्टस्य हेतोर्व्याप्तिः प्रदर्शिता । अत एवेत्यादिना तु विशिष्टस्य पक्षधर्मता प्रदर्श्यते । एवञ्च वैयधिकरण्यमित्यत आह ॥ व्याप्तिकथनेपीति ॥ एतत् व्यावर्तकाकारवत्तयेति विशेषणम् । पश्यन्नपि जानन्नपीत्यर्थ । ननु व्यावर्तकधर्मवत्तया अधिष्ठानापरोक्षज्ञानवता दृश्यमानत्वं वियदादावसिद्धम् । तस्यासदाद्ययोग्यत्वादिति शङ्कोत्तरत्वेन विष्णुपदमवतारयति ॥ विष्णुरितीति ॥ विष्णोश्च 'तुरीय तत्सर्वदृक्सदा' इत्यादिश्रुत्या सर्वापरोक्षज्ञानवत्त्वावेदनान्नासिद्धिरिति भावः ॥ स्वरूपकथनमिति ॥ वियदादौ विष्णुप्रत्यक्षविषयत्वमादायैव हेतूपपादनमिति वस्तुस्थितिकथनमित्यर्थः । स्मृतावाद्य तत्पदं व्याचष्टे ॥ तदिति ॥ द्वितीयं तत्पद व्याचष्टे ॥ वियदादीति ॥ वियदादि दुःखादि च मायिकत्वेनाऽविद्यकत्वेन मृषेति यदुक्त तन्नेत्यर्थः ।

ननु श्लोके अधिष्ठानापरोक्षज्ञानवता दृश्यमानत्वस्य पञ्चम्यन्तेन तृतीयान्तेन वा निर्देशाभावात्तस्य हेतुत्वे प्रमाणमेव नास्तीत्याशङ्क्य सर्वनामप्रतिरूपकमव्ययरूप तत्पद व्याचष्टे ॥ तदिति ॥ साध्यनिर्देश इति ॥ कृत इति शेष । हेतोरप्रयोजकत्वशङ्कानिरासाय विपक्षे बाधकमाह ॥ अधिष्ठानज्ञानेपीति ॥ व्यावर्तकधर्मवत्तया अधिष्ठानापरोक्षज्ञानेपीत्यर्थ ॥ बन्धनिरासायेति ॥ कर्तृत्वभोक्तृत्वाद्यध्यासस्यैव परेण बन्धरूपत्वाङ्गीकारादिति भावः । एतेनेत्यस्यैव विवरणं प्रत्यक्षविरोधोपपादनेनैवेति ॥ अनुमानेति ॥ दृश्यत्वाद्यनुमानस्य 'नान्योतोस्ति द्रष्टा' 'वाचारम्भणम्' इत्याद्यागमस्येत्यर्थ ॥ अनुमानविरोधोपीति ॥ न च मायाविना मायेत्यादिपुराणवाक्यमात्रानुमानविरोधोपीत्यर्थ. । प्रबलप्रत्यक्षमूलत्वेनोक्तानुमानयोः प्राबल्यादिति भावः । किञ्चागमोपनिबद्धत्वादप्यस्मदुक्तानुमानयोरतिबलवत्त्वेन बाधकत्वमित्याह ॥ उपन्यस्तेति ॥ अनेनेति ॥ आगमोपनिबद्धानुमानबाध्यत्ववर्णनेनेत्यर्थ । उपन्यस्तस्मृत्योरागमतयाऽपि प्रामाण्यसम्भवादिति भाव । यद्यप्युदाहृतस्मृत्योर्न्यायनिबन्धनरूपतया न्यायांश एवागमतया प्रामाण्य न त्वनुमेयविषयतयेति तथाऽपि प्रतिवादिवाक्यस्यागमतयाऽपि प्रामाण्यं सम्भवतीत्यभिप्रायः ।

(रा. टि.) अनुमानमित्यनन्तर व्याप्तिपक्षधर्मतोपपादनायासनिरासाय पुराणवाक्येनेति योज्यम् । व्याप्तिप्रदर्शके पूर्वार्धे किंविषयापरोक्षेणेत्याकाङ्क्षायामाह ॥ अधिष्ठानेति ॥ यद्वा भूतलाद्यपरोक्षदृशोपि शुक्तिरूप्यादिमिथ्यार्थदर्शनात्तत्राव्यभिचाराय व्याप्तिशरीरं व्यनक्ति ॥ अधिष्ठानेत्यादि ॥ तत्र तन्मृषेति निगमनम् । सर्वेष-

(रा. टि) धिकरण्यायाह ॥ इति यावदिति ॥ अनेनेति ॥ एवमुक्तार्थकेन पूर्वार्धेनेत्यर्थः । यत्तच्छब्दयोगे सति तस्य व्यञ्जनादिति भाव । अत्र सर्वात्मनेति विशेषणप्रक्षेपोऽग्रे व्यक्तः ।

पूर्वं मिथ्यादर्शनमित्येकं पदमुपेत्य वक्ष्यमाणहेतोरव्यभिचारव्यक्त्यर्थं यच्छब्दाध्याहारेण योजनान्तरमाह ॥ यन्मिथ्येति ॥ यन्मिथ्या तदधिष्ठानापरोक्षदृशा न दृश्यत इति ध्येयम् । अत्रापि सर्वात्मनेति विशेषणमग्रे स्पष्टीभविष्यति । साक्षादनुमित्युपयोगितया त्वपरयोजनेति भाव ॥ तदुभयेति ॥ अन्वयव्यतिरेकयोर्नियमोऽव्यभिचारसहचारयोरित्यर्थ. । दर्शित इति पदं व्यतिरेको वेत्यत्र चानुषज्यते ॥ दृशिरेवेति ॥ पूर्वप्रमाणे तथोक्तेरिति भाव. ॥ पश्यार्थैरिति ॥ अचाक्षुषज्ञाने वर्तमानै पश्यार्थकैर्धातुभिरित्युत्तया दृशिधातोर्ज्ञानमात्रेऽपि प्रयोगदर्शनादित्यर्थ ॥ अत एवेति ॥ यतो ज्ञानमात्रार्थत्वमपरोक्षज्ञानार्थत्वं चास्ति दृशिधातोरत. प्रथमार्थमुपेत्यापरोक्षविदिति दृक्पदं विना द्वितीयार्थमभिप्रेत्य विश्वदृगित्यपरोक्षविशेषण विना सामान्येन सर्वापरोक्षविद्दृश्यमानत्वहेतो. पक्षधर्मतोक्ता । तथा च प्रागप्यपरोक्षज्ञानमात्रमपरोक्षदृक्पदेनाभिमत दर्शनमित्यनेन चापरोक्षदृशिरिति भाव· । इति सामान्येन हेतो पक्षधर्मता दर्शयतीत्युक्तं व्यनक्ति ॥ सर्वात्मनेति ॥ पश्यतीति । अपरोक्षतो जनातीत्यर्थ ॥ शुक्तिकां पश्यन्निति ॥ इदन्ताकारेणेति भाव । व्यभिचारेणेति वक्ष्यमाणहेतोरिति योज्यम् ।

अव्यभिचाराय सर्वेत्युक्तावन्यद्बाधकमाप्तमित्याशङ्क्य तस्य विवक्षितमर्थमाह ॥ नन्वेवमिति ॥ व्याप्तिकथनेऽपीति ॥ अधिष्ठानापरोक्षज्ञानवता दृश्यमानं तत्राऽरोपित न भवेदित्यादावपि व्यावर्तकशुक्तित्वादिधर्मप्रकारकतयाऽधिष्ठानापरोक्षज्ञानवतेति ग्राह्यमित्यर्थ. ॥ शुक्तिकां पश्यन्निति ॥ शुक्तिकां जानन्नित्यर्थ ॥ असिद्धीति ॥ व्यावर्तकधर्मप्रकारकतयाऽधिष्ठानापरोक्षवता दृश्यमानत्वं जगति नास्ति । तादृशपुरुषस्याभावादित्यत विष्णुरित्युक्तम् । व्याप्तिशरीरे प्रवेशे कृत्याभावात् । स्वरूपकथनमित्युक्तम् ॥ सर्वात्मनेति ॥ व्यावर्तकाकारवत्त्वयेत्यर्थ । ईश्वरश्च सर्वज्ञत्वाद्विश्वाधिष्ठानमशेषव्यावर्तकवत्तया पश्यन्नेव विश्व पश्यतीति भाव ॥ उक्तरीत्य शुक्तिदर्शिनेति ॥ व्यावर्तकवत्तया शुक्त्यपरोक्षज्ञानवतेत्यर्थ. ।

हेतोरप्रयोजकतानिरासाय विपक्षे बाधकतर्कमाह ॥ अधिष्ठानज्ञानेपीति ॥ बन्धनिरासायेति ॥ परमः बन्धस्य ब्रह्मण्यध्यस्तत्वादधिष्ठानब्रह्मज्ञानेन च निवर्त्यत्वात्तज्ज्ञानाय श्रवणमननाद्यायासवैयर्थ्यप्रसङ्ग इत्यर्थ ॥ एतेनेति ॥ वचनद्वयोदाहरणेन विश्वमीश्वर· सदा पश्यतीति सर्वापरोक्षविद्विष्णुर्विश्वदृगिति चाधिष्ठानाभिमतापरोक्षज्ञानवद्दृष्टत्वोक्त्या मिथ्यात्वानुमानागमयो प्रागुक्तयो प्रत्यक्षविरोधोपपादनेनोक्तरीत्याऽनुमानविरो उक्तो भवतीत्यर्थ । एतेनात्र वचनद्वये प्रत्यक्षविरोध एव व्यक्त प्रतिभातीति परास्तम् । उक्तदिशा व्यवयवरूप नुमानमुद्राया अपि प्रतीतेः ।

केचित्त्वनुमानविरोधोपपादनेन प्रत्यक्षविरोधोऽप्युक्तो भवतीति व्यत्यासेन वाक्ययोजना स्वरसेति व्याच

(रा. टि.) क्षते । अनुमानोक्तिपरतयैव प्राक् स्पष्ट योजितत्वादिति । विशेषपदेन बाधोऽत्राभिमत इति भावेनाह ॥ उपन्यस्तेति ॥ वचनद्वय इति योज्यम् । अनेन स्मृतिद्वयकथनेनेत्यर्थ ।

(वे टि) दृशे. साक्षात्कारार्थत्वादापरोक्ष्येण पश्यता इत्यनुपपन्नम् । तत्राऽन्येषिमिथ्यादर्शनं न भवेदित्येतत् न तन्मृषेति निगमनसूचितवक्ष्यमाणप्रमेयाननुगुणं चेत्यत आह ॥ अधिष्ठानापरोक्षज्ञानवतेति ॥ अत्र यत्किञ्चिदपरोक्षज्ञानवता दृश्यमाने शुक्तिरजते व्यभिचारवारणायाधिष्ठाने इत्याहृतम् । शुक्तित्वज्ञाऽधिष्ठानापरोक्षज्ञानवता दृश्यमाने रङ्गारोपितरजते व्यभिचारवारणाय तत्रेत्युक्तम् । यत्राधिष्ठाने अपरोक्षज्ञान तत्रेत्यर्थ· ॥ अपरोक्षज्ञाने वर्तत इति ॥ तथा चापरोक्षपद मूले गतार्थमिति भाव ॥ ज्ञानमात्रेपीति ॥ पश्यार्थैरित्यस्य ज्ञानार्थैरिति वृत्तिकारादिभिर्व्याख्यातत्वादित्यर्थ । दर्शनात् प्रयोगदर्शनादित्यर्थ ॥ अत एवेति ॥ यतो दृशिर्ज्ञानसामान्यार्थकोऽत एवेत्यर्थ ॥ सामान्येनेति ॥ विदिति ज्ञानसामान्यस्यैवोदितत्वात् । अन्यथा सर्वापरोक्षदृगिति वक्तव्यम् । न ह्येकस्य व्याप्तिरन्यस्य पक्षधर्मता वक्तु युक्तेति भाव· । एतत् सर्वात्मनेत्येतत् । अन्यथा व्याप्तेर्न्यूनता स्यादिति भाव ॥ आप्तवाक्यादिनेति ॥ अपरोक्षभ्रमस्य परोक्षदर्शनानिवर्त्यत्वादिति भाव. ॥ असिद्धिपरिहारायेति ॥ असदादिषु सर्वात्मना जगदधिष्ठानापरोक्षज्ञानाभावात्पक्षहेत्वोरसिद्धिरित्याशङ्काया विष्णुज्ञानमादाय हेतूपपादनार्थं विष्णुग्रहणं कृतम् । न हेतुशरीरप्रविष्टतयेति भाव. ॥ उक्तविधयेति ॥ सर्वात्मनेत्याद्युक्तविधया । एवमुक्तरीत्येत्यपि व्याख्यातव्यम् ।

अप्रयोजकत्वशङ्कापरिहाराय विपक्षे बाधकतर्कमाह ॥ अधिष्ठानज्ञानेपीति ॥ उक्तविधयाऽधिष्ठानज्ञानेऽपीत्यर्थ. ॥ अनुमानागमयोरिति ॥ विश्वमिथ्यात्वभेदाभावानुमानागमयोरित्यर्थ. ।

(द्वै. द्यु) ॥ दृशिरेवेति ॥ एवकारेण तद्बोधनाय शब्दान्तरस्यावश्यकत्व पराचष्टे ॥ पश्यार्थैरिति ॥ पश्यार्थैरित्यस्य ज्ञानार्थकधातुयोग इति वृत्तिकारादिभिर्व्याख्यातत्वात् दृशेर्ज्ञानसामान्येऽपि प्रयोगो वर्तत इति भाव ॥ अत एवेति ॥ यस्माद्दृशेरपरोक्षज्ञान एव मुख्यव्यवहारोऽत एवेत्यर्थः ॥ सामान्येनेति ॥ परोक्षज्ञानव्यावर्तकविशेषणबोधकशब्दान्तरासमभिव्याहृतेन विश्वदृगिति शब्देनेत्यर्थ. । व्यावर्तकाकारेणाधिष्ठानापरोक्षवताऽपरोक्षीकृतत्वं तत्र तस्यारोपितत्वाभावे हेतु । तस्य जगद्रूपे पक्षे उपपादनाय सर्वापरोक्षविदित्यनेन व्यावर्तकाकारेणाधिष्ठानापरोक्षवतेत्यंशमुपपाद्य तत्साक्षात्कृतत्वरूपविशेष्यांशोपपादनाय विश्वदृगित्युक्तम्। विश्वापरोक्ष्यस्य विष्णौ प्रतिपादने तदपरोक्षविषयत्वस्य जगति लाभात् । तथा च दृशेर्ज्ञानसामान्ये मुख्यप्रयोगे प्रकृते साक्षात्काररूपज्ञानस्यालाभात् परोक्षज्ञानवारणायापरोक्षविदितिवदपरोक्षदृगिति प्रयुज्येत । साक्षात्कारस्यैव मुख्यार्थत्वे तस्यैव झटिति स्फुरणात् न तदर्थं अपरोक्षपदमपेक्षितमित्युपष्टम्भसङ्गतिः । दृशेर्ज्ञानसामान्ये क्वाचित्कप्रयोगमनुरुध्य तदर्थकत्वतात्पर्यभ्रमेण स्वोक्तव्याप्तौ व्यभिचारादिभ्रमनिरासाय स्वप्रयुज्यमानदृशेर्मुख्यार्थे स्वतात्पर्यग्राहकतया प्रथमतोऽपरोक्षपदस्योपादानादेवोत्तरवाक्यस्थदृशेरमुख्यार्थत्वशङ्काया निरस्तत्वान्नोत्तरत्रापि तदपेक्षितमिति भावः ।

(द्वै छु) टिप्पण्यां तु ॥ अत एवेति ॥ यतो दृगिज्ञानसामान्यार्थकोऽत एवेत्यर्थ । सामान्येन दृगिति ज्ञानसामान्यस्यैवोदितत्वात् । अन्यथा सर्वापरोक्षविद इति वक्तव्यम् । न ह्येकस्य व्याप्तिरन्यस्य पक्षधर्मता वक्तुं युक्तेति भाव.' इति व्याख्यातम् ।

तन्मतेऽधिष्ठानापरोक्षवता ज्ञायमानत्वमात्र हेतुत्वेन विवक्षितम् । न तु साक्षात्क्रियमाणत्वम् । तस्मिन् ज्ञायमानत्वपर्यन्त विवक्षितम् । तेनाधिष्ठानापरोक्षोत्तरमपि पूर्वज्ञानगोचरत्वादिना ज्ञायमाने शुक्तिरूप्यादौ न व्यभिचार इति ध्येयम् ॥ विवादपदमिति ॥ चित्यारोपितत्वानारोपितत्वाभ्या विवादविषयीभूत जगदित्यर्थ. । अत्र चिदन्यसत्त्वादिक सर्वानुगत पक्षतापच्छेदकत्वेनानुसन्धेयम् । विप्रतिपत्तिर्वा संशयरूपा तद्धयक्तित्वेन पक्षतावच्छेदिका लाघवात् ।

ननु किमत्र लाघवमिति चेदित्थम् । विप्रतिपत्तिविषयतावच्छेदकस्य पक्षतावच्छेदकत्वेनोपादाने परामर्श-पूर्वकाले पक्षतावच्छेदकघटकबहुपदार्थाना ज्ञानस्यापेक्षितत्वप्राप्त्या तद्विलम्बेनानुमित्युत्पत्तौ विलम्ब । विप्रतिपत्ते-रेकस्या एव विषयतया पक्षतावच्छेदकत्वे नोक्तविलम्बप्रसक्तिरिति । विप्रतिपत्ते. समयबन्धादिना व्यवहितत्वेनानु-मितिकालेऽसत्त्वेन विशेषणविधया पक्षतावच्छेदकत्वायोगादौत्सर्गिकस्य विशेषणतयैवावगाहित्वरूपप्रमाणस्वभावस्य परित्यागानौचित्यमित्युक्तौ तु विमतिविषयत्वज्ञानमेव तत्त्वेन पक्षतावच्छेदकं बोध्यम् ।

ननु यस्य विशेषणविधया पक्षतावच्छेदकत्व तत्समानकालीनत्वं साध्ये तत्र ससर्गग्रहाद्भासते । तत्र प्रमाणानामुत्सर्गतो विशेषणतयाऽवगाहित्वस्वाभाव्यान्निर्वहति । अन्यथा विशेषणतयोपलक्षणतया च गन्धप्रागभा-वावगाह्यनुमितिजनकपरामर्शवैलक्षण्यादन्यतरानुमित्यनिर्वाहापत्ते. । अत एव गन्धप्रागभावविशिष्टे घटे गन्धसाधने बाधोऽसङ्कीर्ण । एतादृशबाधावतारे च साध्ये न समानकालिकत्वेन पक्षतावच्छेदकं भासते । इदमेव ह्युप-लक्षणतया भानं नाम । इत्थं च विमते. पक्षतावच्छेदकत्वस्य [1]विशेषणतयाऽभ्युपगमेऽपि न दोष । सार्वकालिके जगन्मिथ्यात्वे विमतिकालीनत्वस्याबाधेन [2]विमतेरनुमितिकालावृत्तित्वस्याप्रयोजकत्वादिति चेन्न ।

यतो ज्ञानं सर्वं किञ्चित्कालवृत्तित्वेनैव स्वविषयग्राहकम् । तत्रापि स्वोत्पत्त्यधिकरणकालमेवोत्सर्गतो विषयीकरोति । अत एव पर्वतो वह्निमानित्यनुमित्या वह्निविशिष्टपर्वते स्वाधिकरणकालविशेषवृत्तित्वावगाहना-त्तत्काले वह्न्यर्थिन. प्रवृत्तिर्घटते । उक्तं च परिच्छिन्नत्वहेतुविचारग्रन्थान्ते ब्रह्मानन्देनाऽपि

'न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते ।

इति मीमांसकोक्तेः ज्ञानं सर्वं किञ्चित्कालावच्छिन्नमेव स्वविषयं गृह्णाति । तत्र स्वाधिकरणक्षणावच्छिन्नत्वेन गृह्णातीत्युत्सर्ग । अत एव धारावाहिकज्ञानस्थले स्वस्वाधिकरणक्षणविशिष्टतया स्वविषयग्राहित्वेनाज्ञातज्ञापकत्व-

---

[1] विशेषणतयाऽनभ्युपगमेपि इति पाठेन भाव्यमिति भाति ।

[2] विमतेरनुमितिकालवृत्तित्व इति पाठेन भाव्यमिति भाति ।

(द्वि द्यु) मिति मीमांसकाः। तस्य बाधे तु सम्भवक्षणान्तरावच्छिन्नत्वेन। यथा पाकरक्ते घटे श्यामोऽयमिति धीः पाकपूर्वक्षणावच्छिन्नत्वेन श्यामत्वं गृह्णाति। स्मृतिस्तु स्वकारणधीगृहीतकालावच्छिन्नत्वविषयम्' इति। तथा च ज्ञानानां स्वाधिकरणकालसम्बद्धतया तदवगाहित्वमेव मुख्यं विशेषणतया तदवगाहित्वं नाम अनेन्यकालघटित-मुपलक्षणतया तदवगाहित्वं पर्यवसितम्। इत्थं च विमतिनि समकालिकत्वद्विषयन्वयो मध्यसंवरणसमयवन्धादिना बहुकालान्तरितयोरनुमितिक्षणसम्बन्धाभावात्तत्क्षणेऽपि सम्भवतः विमतिविषयत्वज्ञानस्य पक्षतावच्छेदकत्वपरित्यागे बीजाभावेन तदनुसरणसम्भवात्।

ननु विमतिविषयत्वप्रकारकस्मृत्यादिरूपं पक्षतावच्छेदकत्वेनाभिमतं ज्ञानं प्रथमत उत्पन्नम्। द्वितीयक्षणे तदवच्छिन्ने हेतुत्वावगाही परामर्शः। तदनन्तरमनुमितिर्यत्र तत्रानुमितिक्षणे भवदभिमतपक्षतावच्छेदकस्य नाशा-त्कथमनुमितिक्षणे पक्षतावच्छेदकसाध्ययोः समानकालीनत्वघटकतया भासते। किं च न्यायप्रयोगपूर्वकाले वादिबुद्धिविषयीभूताया विमतिविषयत्वज्ञानव्यक्तेरेव वादिना पक्षतावच्छेदकत्वेन वक्तव्यतया तस्याश्च मध्यस्था-नुमितिकाले विमतिवदेव नाशादिति चेन्न।

विमतिविषयत्वज्ञानत्वरूपानुगतधर्मपुरस्कारेणैव तादृशज्ञानानां पक्षतावच्छेदकत्वाभ्युपगमात् क्षणमात्रा-धिककालस्याप्यनतिप्रसक्तस्य भानाङ्गीकारेण सामञ्जस्यात्। अन्यथा वह्नावनुमितिक्षणमात्रसम्बन्धभाने उत्तरक्षणे वह्न्यसत्त्वसन्देहेन प्रवृत्तिविलम्बनप्रसङ्गात्। प्रकृते पक्षतावच्छेदकीभूतज्ञानस्यापेक्षाबुद्धिरूपत्वेऽपेक्षाबुद्धेर्द्वितीयक्षणे विशेषगुणोत्पत्तावपि तस्य क्षणत्रयस्थायित्वमते क्षणात्मककालभानाङ्गीकारेऽपि निर्वाहाच्च। विमतिविषयत्व-विशिष्टविषयकज्ञानत्वेन पक्षतावच्छेदकत्वे तु परामर्शानुमित्योरपि तथात्वान्न कोपि क्लेशः।

नन्वेवमभ्युपगमे जगन्मात्रस्य पक्षतया आश्रयभेदभिन्नप्रतियोगित्वरूपमिथ्यात्वस्य साध्यतया सर्वेषा-मेवानुमितौ भानस्यावश्यकतया भाविभूतघटादिनिष्ठमिथ्यात्वेषु भवदभिमतज्ञानव्यक्तिनिरूपपक्षतावच्छेदकसमकालि-कत्वबाधादनुमितेरप्रामाण्यं स्यादिति चेन्न। पक्षतावच्छेदकसमानकालिकत्वभाने बाधाभावस्य सहकारित्वाभ्यु-पगमे तस्यौत्सर्गिकत्वाभ्युपगमात् बाधितार्थान् विहायाबाधितार्थेष्वेव तदवगाहिन्या प्रमानुमितेः सम्भवात्।

न चैवं विमते. पक्षतावच्छेदकत्वेऽप्येषा रीतिः सम्भवति। कासाञ्चिन्मिथ्यात्वव्यक्तीनां तत्समकालिक-त्वसम्भवेऽप्यनुमित्यधिकरणकालघटितसमकालिकत्वस्य बाधितत्वात्। [1]सदसद्विलक्षणत्वादिरूपभेदात्मकसाध्यक-स्थले तस्यैकत्वान्नित्यत्वाच्चोक्तपक्षतावच्छेदकनिरूपितानुमित्यधिकरणकालघटितसमानकालिकत्वं तत्र निर्वहतीति नानुमितेर्भ्रमत्ववार्तापीति कृतबुद्धयो विदाङ्कुर्वन्तु।

यत्तु 'पक्षतावच्छेदकीभूतज्ञानकालावच्छिन्नत्वस्य साध्ये भानाङ्गीकारे धीमात्रशून्यप्रलयकाले मिथ्यात्व-सिद्ध्याऽर्थान्तरता' इति, तदतीव तुच्छम्। मात्रार्थाघटितस्य पक्षतावच्छेदककालवृत्तित्वस्य भानाङ्गीकारादि-

---

[1] इदं चावच्छेदकावच्छेदेन ज्ञाने तदाश्रयसामान्य भासते, न व्यापकत्वमित्याशयेन। तद्धानपक्षेऽप्याह—सदसदिति।

(द्वै द्वु) त्यादिकमप्यूह्यम् । इद च तरङ्गिण्यभिप्रेतन्यायामृतार्थमभिप्रेत्य । यदा तु पक्षतावच्छेदकमित्यस्य पक्षव्यावृत्तिज्ञानार्थमुपात्तो धर्म इत्यर्थ । तथा च विमते. समयबन्धादिना व्यवहिताया न्यायप्रयोगसमयाविद्यमानाया. कथ न्यायप्रयोगकर्त्रा [1]पक्षव्यावृत्ततया उपादानमित्याशङ्क्य कुरूणा क्षेत्रमित्यादिवदुपलक्षणतयैव विमतेर्व्यावर्तकत्वमित्येक समाधानमभिधाय तत्कालेऽवश्य विद्यमानस्य तज्ज्ञानस्यैव व्यावृत्तिज्ञानकाले विद्यमानत्वरूपविशेषणत्वाक्रान्तस्य पक्षतावच्छेदकत्व सम्भवतीत्याशयेन द्वितीयकल्प उक्त । द्वितीयकल्पेऽनास्थासूचको वाशब्दः । तेन विमतिविषयत्वज्ञानस्य पक्षतावच्छेदकत्वे तथैव न्याये निर्देशः स्यात् । अन्यथा विमतिपदस्य लक्षणया तद्बोधकत्वे वादिवाक्ये लक्षणापत्तिः स्यादित्याद्यतिप्रसङ्गसत्त्वेऽपि न दोष इति न्यायामृतभावः । तदा न कोपि क्लेश इति ध्येयम् ।

॥ नारोपितमिति ॥ तदधिष्ठाने आरोपितत्वाभाववदित्यर्थ । अन्यथा यादृशाधिष्ठानापरोक्षवता दृश्यमानत्वं यत्रारोपितत्वाभावस्तत्रेत्येव व्याप्तेर्वक्तव्यतापत्त्या शुक्त्यपरोक्षवता दृश्यमाने रङ्गारोपितरजते व्यभिचारापत्तेरिति ध्येयम् ॥ प्रत्यक्षविरोधोपपादनेनैवेति ॥ उदाहृतपुराणवाक्यद्वयमपि जगति मायाविद्याजन्यत्वाभावसाधकतया जगत्प्रत्यक्षस्यापटुत्वनिरासद्वारा प्रत्यक्षविरोधोपपादन एवोपक्षीणमिति भाव ॥ सूचित इति ॥ अनुमानप्रदर्शनार्थमेव मुख्यतयाऽऽगमस्योदाहृतत्वे मिथ्यात्वानुमाने उक्तागमविरोधः सूचित एवेति भाव. ।

यदत्रार्वाचीनेनैतत्प्रघट्टिकादूषणमुत्प्रेक्षितम् । नन्वेवमपि घट सन्नित्याद्यध्यक्षबाधितविषया दृश्यत्वादय इति चेन्न । प्रत्यक्षयोग्यमिथ्यात्वविरोधिसत्त्वानिरुक्ते । प्रमाविषयत्वादेरात्माश्रयाच्चक्षुराद्ययोग्यत्वाच्च । कालसम्बन्धस्य स्वरूपसत्त्वादेर्मिथ्यात्वातात्त्विककालसम्बन्धस्यात्माश्रयकवलितत्वात् । एतेन सत्त्वमखण्डोपाधिरिति प्रत्युक्तम् । अविरोधित्वात् । अत एव [2]जातिविशेषो मिथ्यात्वमित्यपि । जात्यादीनामसत्त्वप्रसङ्गात् । एकाकारप्रतिपत्तावर्थवैलक्षण्यकल्पनस्यायुक्तत्वाच्च । एतेनोपजीव्यत्वात्प्रत्यक्षस्य प्रबलेन प्रत्यक्षेणानुमानस्य बाध इत्यपि परास्तम् । यदंशे उपजीवकं तस्यानुपमर्दात् । न च धर्म्यादे पारमार्थिकतानुमानेनोपजीव्यते । किं तु तत्स्वरूपमात्रम् । तदुक्तमाचार्यवाचस्पतिभिः 'उत्पादकाप्रतिद्वन्द्वित्वात्' इति ।

प्रत्यक्षमपि चन्द्रप्रादेशिकत्वादावागमेन युक्त्या बाध्यते । यत्तु 'चन्द्रप्रादेशिकत्वादिविषयकप्रत्यक्षं दूरस्थत्वादिदोषनिश्चयादपरीक्षितम् । घट· सन्नित्यादिप्रत्यक्षं तु परीक्षितम् । तज्जनकदोषानिश्चयात्' इति । तन्न । प्रकृते प्रत्यक्षजनकदोषस्याविद्यादिरूपस्य श्रुत्यादिना सम्भावनोत्तरमेवानुमानप्रवृत्ते· । न च जगतोऽज्ञानजन्यत्वे प्रमाणाभाव· । 'मायां तु प्रकृतिं विद्यात्' 'जीवेशावाभासे न करोति । माया चाविद्या च स्वयमेव भवति' इति श्रुतिभिस्तत्सिद्धे· । न च जगतो मायिकत्वे मायीश्वरसाक्षात्कार्यत्वानुपपत्ति ।

न च मायाविना माया दृश्यते विश्वमीश्वरः ।

इत्युक्तेरिति वाच्यम् । प्रतिबन्धासिद्धे. ।

---

[1] पक्षव्यावर्तकतया इति पाठेन भाव्यमिति भाति । [2] जातिविशेष सत्त्वमित्यपि इति पाठेन भाव्यमिति भाति ।

(द्वै. बु.)

तती मायां परा चक्रे देवशत्रुः प्रतापवान् ।
सिंहव्याघ्रवराहांश्च तरक्ष्वृक्षवानरान् ॥
मुमोच धनुरादाय प्रद्युम्नस्य रथोपरि ।
गन्धर्वास्त्रेण चिच्छेद सर्वांस्तान् खण्डशस्तथा ॥
प्रद्युम्नेन तु सा माया हता तां वीक्ष्य शम्बरः ।
अन्या माया मुमोचाथ दानवः क्रोधमूर्च्छितः ॥
निहता हस्तिमाया तु तां समीक्ष्य महासुरः ।
सैंहीं मायां महातेजाः सोऽसृजद्दानवेश्वरः ॥
सिंहान् विद्रावितान् दृष्ट्वा माययाऽष्टापदेन हि ।
शम्बरश्चिन्तयामास ॥

इति मायिनोपि मायाद्रष्टृत्वस्य महाभारतादावुक्तत्वात् । न च साक्षात्कृततत्वस्य परमेश्वरस्य जगत्प्रतीतिरनुपपन्नेति वाच्यम् । ईश्वरीयाधिष्ठानसाक्षात्कारस्य स्वप्रकाशशुद्धचिदात्मनोऽविद्याविरोधित्वाभावात् । विस्तृतं चैतदन्यत्र । न चैवमीश्वरस्याज्ञत्वापत्तिः साधकाभावात् । धर्मिग्राहकमानविरोधाच्च ।

न च मायाविना माया दृश्यते विश्वमीश्वरः ।
सदा पश्यति तेनेदं न मायेत्यवधार्यताम् ॥
अपरोक्षदृशो मिथ्यादर्शनं न क्वचिद्भवेत् ।
सर्वापरोक्षवित्विष्णुर्विश्वदृक् तन्न तन्मृषा ॥

इति पद्मद्वयस्य ब्रह्माण्डान्तर्गते प्रामाणिकत्वेपि

ज्ञानस्वरूपमेवाहुर्जगदेतद्विचक्षणाः ।
अर्थस्वरूपं भ्राम्यन्तः ॥ इति

तस्मान्न विज्ञानमृतेऽस्ति किञ्चित् क्वचित्कदाचित् द्विज विश्वरूपम् ।
द्वैतिनोऽतथ्यदर्शिनः ।
अहं हरिः सर्वमिदं जनार्दनः स वासुदेवो न यतोऽन्यदस्ति ।

इत्यादिश्रुत्यनुगृहीतस्मृतिशतविरुद्धत्वेनानपेक्षत्वात्' इति ।

तदतीवासारम् । त्वदुक्तस्य सर्वस्य ब्रह्मानन्दनिष्ठीवनत्वेन तद्दूषणेनैव निरस्तत्वात् ।

यत्तु जगतोऽज्ञानजन्यत्वे माया तु प्रकृतिं विद्यादिति श्रुतिद्वयमुदाहृतं तदतीवाशुद्धम् । मायाया जगत्कारणत्वस्यानेनानुक्तत्वात् । न च प्रकृतिपदस्योपादानकारणवाचित्वाज्जगतस्तज्जन्यत्वसिद्धिरिति वाच्यम् । तथापि

(द्वै द्यु) जगद्बोधकपदाभावेन सम्भवदन्य प्रत्युपादानत्वोक्तिसम्भवात्। त्रिगुणात्मकप्रकृतेरेव मायाशब्दवाच्यता-बोधनद्वारा जगतोऽन्यत्र मायामयत्वोक्तेर्गतेरेवैतच्छ्रुत्या लाभादैन्द्रजालिकादिसदृशमायाजन्यत्वाप्रमापकत्वाच्च।

जीवेशाविति श्रुतिस्त्वद्रीत्या जीवेशयोरेव मायाविद्याजन्यत्व बोधयति। न जगत इत्येतच्छ्रुत्युदाहरणं सर्वथा न सङ्गतम्।

वस्तुत आभासे सम्यक् प्रकाशे जीवेशौ न करोति। विषयितयाऽधिकरणताया विवक्षया 'मज्ज्ञाने घट' इतिवदाभास इति सप्तमी। तथा च जीवस्वरूपावभास साकल्येनेश्वरावभास च प्रतिबध्नाति। मायाविद्यापदवाच्या च स्वयमेव भवति स्वतन्त्ररूपा भवति भगवदिच्छेति श्रुत्यर्थ।

माहामायेत्यविद्येति नियतिर्मोहिनीति च।
प्रकृतिर्वासनेत्येव तवेच्छाऽनन्त कथ्यते॥

इति स्मृत्यानुगुण्यात्। भवत्पक्षे जीवेशयोरेव मायाविद्याप्रतिबिम्बरूपाभासतयाऽऽभासेन जीवेश्वरनिर्माणायोगा-दाभासपदस्य भावप्रधानत्वापत्ते।

यदप्युक्तम् 'ईश्वरीयाधिष्ठानसाक्षात्कारस्य शुद्धचिदात्मनोऽविद्याविरोधित्वाभावात्' इत्यादि तन्न। शुद्धचित एवाविद्यादिसर्वजगदधिष्ठानतया शुद्धचित. शुद्धचिति तादात्म्यरूपविषयत्वाभावादाकाराख्यविषयविषयिभावस्य चित्यनङ्गीकाराच्च ईश्वरस्य शुद्धचिदात्मकाधिष्ठानापरोक्षस्य वक्तुमशक्यत्वात्। शुद्धचिदात्मकाधिष्ठानापरोक्षस्य मायोपहित ईश्वर इवाविद्योपहितजीवेपि साम्येन जगद्भ्रमस्योभयोस्तुल्यत्वेनेश्वरस्य जीववदज्ञाताया बलादापाताच्च। अधिकं तु पूर्वमेव निरस्तम्।

यदपि ज्ञानस्वरूपमेवाहुरित्यादिस्मृतीरुदाहृत्य तद्विरोधात् 'न च माया' इत्यादिस्मृत्योर्ब्रह्माण्डपुराणान्तर्गत-त्वस्य प्रामाणिकत्वेऽप्यप्रामाण्यमिति। तदत्यन्तमशुद्धम्। भवदुक्तस्मृतिषु जगदमिथ्यात्वानिषेधेन विरोधाप्रतिभासात्। न च मुख्यतो ज्ञानस्वरूपत्वस्य प्रमाणान्तरविरुद्धत्वाज्ज्ञानरूपचिद्व्यतिरेकेणासत्त्वरूपार्थकत्वावश्यकत्वे मिथ्यात्वा र्थकत्वमेव प्राप्तम्। द्वैतिनोऽतथ्यदर्शिन इत्यनेन तु स्फुट मिथ्यात्वमुच्यत इति वाच्यम्। प्रमाणान्तरविरोधेन मुख्यार्थपरित्यागप्राप्तौ जगन्मिथ्यात्वनिषेधकासदुदाहृतस्पष्टस्मृतिद्वयविरुद्धे जगन्मिथ्यात्वरूपमुख्यार्थे कथ भव-दुक्तस्मृतीना प्रामाण्य सिद्ध्यति। येन त्वदुदाहृतस्मृत्यनुरोधादसत्स्मृत्योरप्रामाण्यं स्यात्। श्रुत्यादिविरोधाद्भव-त्स्मृत्योरप्रामाण्य सिद्ध्यतीति न वाच्यम्। तर्हि ता एवोदाहर्तव्या किमाभि। निराकरिष्यते च श्रुतीना मिथ्यात्वावबोधकत्वम्। द्वैतिन इति वाक्य तु द्वैतवतां मिथ्यादर्शनं वर्तत इत्येतावन्मात्रं बोधयति। न प्रपञ्चस्य मिथ्यात्वमिति सापि न स्पष्टा।

वस्तुतः पूर्वमेवैता स्मृतयः सम्यग्व्याख्याता इति न किञ्चिदेतत्।

(गु टि) अत्र यत्किञ्चिदपरोक्षज्ञानवता दृश्यमाने शुक्तिरजते व्यभिचारवारणायापेक्षितमध्याहरति ॥ अधिष्ठानेति ॥ शुक्तिकालक्षणाधिष्ठानापरोक्षज्ञानवता दृश्यमाने गङ्गारोपितरजते व्यभिचारवारणाय तत्रेत्युक्तम् । यदधिष्ठानापरोक्षज्ञानं तत्रेत्यर्थः ॥ आपरोक्ष्ये वर्तत इति ॥ तथा च मूले अपरोक्षपदं व्यर्थमिति भावः ॥ पश्यार्थैरित्यादि ॥ 'दर्शनं पश्य । पाघ्राध्मेति पश्यादेशः । अस्मादेव निपातनाद्भावे शप्रत्ययः । पश्य अर्थो येषा ते पश्यार्थाः । यदि तु पश्यतीति पश्य इति पाघ्राध्माधेट्दृशः श इति कर्तरि श क्रियते तदा द्रष्ट्रर्थैरित्यर्थः स्यात् । ततश्च आलोचनपर्युदासोऽनर्थकः स्यात् । न हि आलोचनार्था द्रष्ट्रर्था भवन्ति । आलोचनं चाक्षुषं ज्ञानम् । तस्य पर्युदस्तत्वाद्दृशिरिह ज्ञानमात्रे वर्तते' इत्याकरे स्थितत्वादिति भावः । 'पश्यार्थैः' अस्मादेव निपातनाद्भावे शः । दर्शनं पश्यः । नचेह ज्ञानमात्रम् । अदर्शनं लोप इत्यत्र यथा । न तु चाक्षुषज्ञानमेव । अनालोचन इति निषेधात्' इति । यदि पश्यार्थत्वं नाम चाक्षुषज्ञानार्थत्वमेव स्यात्तर्हि अनालोचन इति विरुद्ध्येत । चाक्षुषज्ञानस्यैवाऽऽलोचनशब्दार्थत्वेन पर्युदासानुपपत्तेः । अतो ज्ञानमात्रमत्र दृशेरर्थ इति स्थितम् ॥ अत एवेति ॥ यतोऽत्र दृशिः ज्ञानसामान्यार्थकः अत एवेत्यर्थः ॥ सामान्येनेति ॥ विदिति ज्ञानसामान्यस्यैवोदितत्वात् । अन्यथा सर्वापरोक्षदृग्विष्णुरिति ब्रूयात् । न ह्येकस्य व्याप्तिरन्यस्य पक्षधर्मतेति युज्यत इति भावः ॥ एतदिति ॥ सर्वात्मनेत्येतदित्यर्थः । अन्यथा न्यूनत्वप्रसङ्गादिति भावः ॥ आप्तवाक्यादिनेति ॥ अपरोक्षभ्रमस्य परोक्षविशेषदर्शनानिवर्त्यत्वादिति भावः । हेतुगतविशेषणानां व्यभिचारवारकत्वनियममभ्युपेत्याह ॥ स्वरूपकथनमिति ॥ अप्रयोजकत्वपरिहाराय विपक्षे बाधकं तर्कमाह ॥ अधिष्ठानज्ञानेपीति ॥ व्यावर्तकाकारेण अधिष्ठानज्ञानेपीत्यर्थः ॥ वैयर्थ्येति ॥ ब्रह्मज्ञानेपि तदनुवृत्त्या तदनिवृत्तेरिति भावः । एतेनेत्यस्यैव व्याख्यानं अनुमानागमयोः प्रत्यक्षविरोधोपपादनेनैवेति । विश्वमिथ्यात्वभेदाभावानुमानाऽऽगमयोः प्रत्यक्षविरोधोपपादनेनैवेत्यर्थः ॥ अनुमानविरोध इति ॥ न च मायाविना मायेति अपरोक्षदृश इति च वाक्यद्वयोक्तानुमानद्वयबाध उक्तो भवतीत्यर्थः ।

ननु च उक्तानुमानद्वयस्य मिथ्यात्वाद्यनुमानापेक्षया अधिकबलवत्त्वाभावान्न तदनुमानबाधकत्वम् । अन्यथा तदनुमानाभ्यामेवैतदनुमानद्वयबाधप्रसङ्गादित्यत आह ॥ उपन्यस्तानुमानयोरिति ॥ अम्बरादिकं नेश्वरमायाजन्यं तेन दृश्यमानत्वात् दुःखादिकं नाविद्यकं अधिष्ठानापरोक्षज्ञानवता दृश्यमानत्वादित्युपन्यस्तानुमानयोः न च मायाविना मायेति अपरोक्षदृशेति चागमेनोक्तत्वेन मिथ्यात्वाद्यनुमानापेक्षया अधिकबलवत्त्वेनाविशेषासिद्धेर्न वैपरीत्यप्रसङ्ग इति भावः ॥ अनेनेति ॥ विश्वमिथ्यात्वभेदाभावानुमानागमयोः प्रत्यक्षविरोधोपपादकग्रन्थेनैवेत्यर्थः ॥ आगमविरोधोपीति ॥ न च मायाविनेत्याद्यागमविरोधोपीत्यर्थः ।

### जगत्सत्यत्वादिविषये सर्वानुगुणश्रुत्युदाहरणम्

(टी.) स्पष्टं च तं दिदर्शयिषुरागमोदाहरणे तस्य जगत्सत्यतापरत्वोपपादने प्राबल्यव्युत्पादनेऽनुपपत्त्यन्तरपरिहारे च प्रयासनिरासाय सर्वानुगुणां स्मृतिमुदाहरति

(टी.) ईशोऽनीशो जगन्मिथ्या न पूज्यो गुरुरित्यपि ।
एक आत्मा परब्रह्मभावो मुक्तिरिति ह्यपि ॥

इतिशब्दः प्रत्येकमभिसम्बद्ध्यते । अत एव द्विर्ग्रहणम् । एवमपिशब्दोऽपि । हिशब्दो हेतौ

एवमादिविरुद्धानि वचनान्यथ युक्तयः ।
प्रमाणैर्बहुभिर्ज्ञेया आभासा इति वैदिकैः ॥

एवमादीति लुप्तविभक्तिक भिन्न पदम् । अथेति समुच्चये । यस्मादीशोऽनीश इत्येवमादीनि वचनानि बहुभिर्वैदिकैः प्रमाणैर्विरुद्धानि तस्मादाभासानीति ज्ञेयानि । तथैवमादयो युक्तयोऽपि यस्माद्बहुभिर्वैदिकैः प्रमाणैर्विरुद्धास्तस्मादाभासा इति ज्ञेया इति योज्यम् । वचनापेक्षया विरोधिप्रमाणानां प्राबल्यसमर्थनाय बहुभिरित्युक्तम् । उपलक्षणमेतत् । निरवकाशत्वादिकमपि ग्राह्यम् । अवैदिकवचनापेक्षया युक्त्यपेक्षया च प्राबल्योपपादनाय बहुभिरिति वैदिकैरिति चोक्तम् ।

(वि टि) त आगमविरोधम् ॥ आगमोदाहरण इति ॥ पृथगागमोदाहरण इत्यर्थ. ॥ तस्येति ॥ उपक्रमादिलिङ्गैरिति शेष. ॥ प्राबल्येति ॥ निरवकाशत्वादिना परोक्तागमान्तरापेक्षया प्राबल्योपपादन इत्यर्थ. ॥ अनुपपत्त्यन्तरेति ॥ परोक्तार्थान्तरशङ्कारूपानुपपत्त्यन्तरेत्यर्थ ॥ सर्वानुगुणामिति ॥ उक्तप्रयासरहितां स्वाभिप्रेतार्थसाधिकामित्यर्थ । अनीशो जीव· । ईशश्चात्मा । मुच्यते भोक्तृत्वादिनेति मूलार्थ ॥ प्रत्येकमिति ॥ ईशोऽनीश इति जगन्मिथ्येति गुरु पूज्यो नेति एक आत्मेति परब्रह्मभावो मुक्तिरिति प्रत्येकमित्यर्थ । इतिशब्दाऽवृत्तौ प्रमाणमाह ॥ अत एवेति ॥ एवमिति ॥ इतिशब्दवदपिशब्दोऽपि प्रत्येकं सम्बद्ध्यत इत्यर्थ. ॥ हिशब्द इति ॥ 'न ह्यत्रानुयाजा इज्यन्ते' इत्यादौ हिशब्दस्य हेत्वर्थकत्वदर्शनादिति भाव. ।

एवमादिविरुद्धानीति पदैक्यश्रवणेऽपि विवक्षितार्थलाभाय पदच्छेदपूर्वक व्याचष्टे ॥ एवमादीति ॥ लुप्तविभक्तिकमिति ॥ सुपां सुलुगित्यादिना पाणिनिस्मरणादिति भाव. । यद्यपि सुपां सुलुगिति छन्दोविषय तथापि छन्दोवत्पुराणानि भवन्तीत्युक्तेः पुराणानामपि छन्दस्त्वात्तद्विषयत्वमुपपद्यत इति भाव ॥ समुच्चय इति ॥ अव्ययानामनेकार्थत्वादिति भाव । पदार्थमुक्त्वा वाक्यार्थमाह ॥ यस्मादिति ॥ वचनापेक्षयेति ॥ ईशोऽनीश इत्याद्यर्थकवैदिकवचनापेक्षया ॥ विरोधिप्रमाणानामिति ॥ बाधकप्रमाणानामित्यर्थः ॥ बहुभिरित्युक्तमिति ॥ प्रमाणैरिति बहुवचनेनैव प्रमाणबाहुल्यलाभात्पुनर्बहुभिरित्युक्तिरत्यन्तबहुत्व ज्ञापयतीति भाव । निरवकाशत्वादीत्यादिपदेन विशेषविषयत्वादिपरिग्रह । युक्त्यपेक्षयेति सामान्योक्त्या शुष्कयुक्त्यपेक्षया तु नितरां प्राबल्यं द्योतितम् ।

(रा टि) ॥ स्फुट तमिति ॥ आगमविरोधमित्यर्थ । दिदर्शयिषुर्दर्शयितुमिच्छावान् । आगमोदाहरण इत्यादिसप्तम्यन्तानां प्रयासनिरासायेत्यन्वय ॥ विश्वं सत्यमिति ॥ यच्चिकेत सत्यमिति प्रधान्वस्येति द्वासुप-

(रा टि.)र्णन्यायागमोदाहरणे प्रयासः। तस्य सत्यतापरत्व प्रामाण्यत्वनन्त्वादिनोपपादनीयमिति तदुपपादनमायासः। तेषा च मिथ्यात्वागमाद्यपेक्षया बहुत्वनिरवकाशत्वादिना प्राबल्योपपादनमायासः। अर्थवादत्वानुवादत्वादिपरोक्तार्थान्तरपरत्वरूपानुपपत्त्यन्तरपरिहारश्चायास। तत्सर्वायासनिरासायेत्यर्थः ॥ सर्वानुगुणामिति ॥ आगमोदाहरणाद्यनुगुणामित्यर्थ ॥ स्मृतिमिति ॥ तत्र प्रमाणैर्बहुभिरित्युक्तया आगमादिप्रमाणानामुक्तबहुत्वप्रयुक्तप्राबल्यस्य आभासा इत्युक्त्याऽन्यार्थकल्पनेत्याद्युक्त्या चानुपपत्त्यन्तरपरिहारस्य च लाभादिति भाव ॥ प्रत्येकमिति ॥ ईशोऽनीश इति जगन्मिथ्येति गुरु पूज्यो नेति एक आत्मेति परब्रह्मभावो मुक्तिरिति प्रत्येकमित्यर्थः ॥ अत एवेति ॥ प्रत्येकमभिसम्बन्धनीयत्वादेवेत्यर्थ। इतिशब्दस्येति शेष ॥ अपिशब्दोपीति ॥ प्रत्येकमभिसम्बद्ध्यत इत्यर्थ ॥ हिशब्दो हेताविति ॥ तस्योत्तरत्रान्वय इति भाव ।

स्मृतिशेषं पठित्वा व्याचष्टे ॥ एवमादीति ॥ विरुद्धपदेन योग्यताविरहाद्वचनादिपदेनान्वयायाह ॥ लुप्तविभक्तिकं भिन्नं पदमिति ॥ सुपा सुलुगित्यादिना छान्दस सुपो लुगित्यर्थ । लुब्लुपोरेकार्थत्वाल्लुप्तेति। समुच्चय इत्युक्त व्यनक्ति ॥ तथैवमादयो युक्तय इति ॥ ईशादेरनीशत्वादिसाधकयुक्तय इत्यर्थः। एवमादीति पदमत्राप्यन्वेतीति भाव ॥ निरवकाशत्वादिकमिति ॥ उपजीव्यत्वमादिपदार्थ ।

द्विविध बलवत्त्व च बहुत्वाच्च स्वभावतः ।
तयो स्वभावो बलवानुपजीव्यादिकश्च स. ॥

इत्युक्तेरिति भावः। बहुभिः प्रमाणैरित्येव पूर्तौ वैदिकैरित्युक्ते. कृत्यमाह ॥ अवैदिकेत्यादिना ॥

(वे. टि.) तं आगमविरोधम्। आगमोदाहरणे पृथग्जगत्सत्यताप्रतिपादकागमोदाहरणे ॥ तस्य जगत्सत्यतापरत्वोपपदन इति ॥ उपक्रमादिभिरिति शेष । प्राबल्यव्युत्पादने निरवकाशत्वादिनेति शेषः ॥ अनुपपत्त्यन्तरपरिहार इति ॥ परोक्तार्थान्तरपरत्वशङ्कारूपानुपपत्त्यन्तरपरिहार इति भावः। परोक्तार्थे उपक्रमाद्यनानुकूल्यप्रदर्शन इति यावत् ॥ एवमपिशब्दोपीति ॥ प्रत्येकमभिसम्बद्ध्यत इत्यन्वय। एवमादीत्यस्य न विरुद्धानीत्यनेन समास। विवक्षितार्थालाभात्। वचनानीत्येतद्विशेषणत्वे त्वेवमादीनीति स्यादित्यत आह ॥ एवमादीतीति ॥ सुपा सुलुगिति स्मरणादिति भावः ॥ समुच्चय इति ॥ अव्ययानामनेकार्थत्वादिति भावः।

पदार्थमुक्त्वा वाक्यार्थमाह ॥ यस्मादित्यादिना ॥ वचनापेक्षयेति ॥ परपक्षसाधकवैदिकवचनापेक्षयेत्यर्थ ॥ बहुभिरित्युक्तमिति ॥ प्रमाणैरिति बहुवचनेनैव बहुत्वलाभे पुनर्बहुभिरित्युक्त्याऽत्यन्तं बहुत्वं सूचितमिति भाव। अत्र वैदिकैरित्येतत्स्वरूपकथनार्थम्। न वक्ष्यमाणरीत्या प्राबल्यव्युत्पादकम्। तदीयवचनेष्वपि वाचारम्भणमित्यादिषु वैदिकत्वस्य सत्त्वादित्यवधेयम् ॥ अवैदिकवचनापेक्षयेति ॥ तदाचार्यवचनापेक्षयेत्यर्थः ॥ युक्त्यपेक्षयेति ॥ मिथ्यात्वादिसाधकदृश्यत्वादियुक्त्यपेक्षयेत्यर्थ।

(द्वै द्यु.) ॥ प्रयासनिरासायेति ॥ जगन्मिथ्यात्ववादिश्रुत्यादीना विरुद्धार्थकत्वेनार्थान्तर वक्तव्यमित्युदाहरिष्यमाणस्मृतौ स्पष्टमभिधानान्न प्रयास इति भाव ॥ प्रत्येकमिति ॥ प्रत्येकं सम्बन्धाभावे जगन्मिथ्यात्वबोधकवाक्यस्य विरुद्धार्थकत्वालाभप्रसङ्गात्तथा सम्बन्ध प्रदर्शित. । एवमादिविरुद्धानीत्यस्यैकपदत्वे कण्ठोक्ता ये विरोधास्तदादिविरुद्धत्वशालीनीत्यर्थो लभ्यते । स न युक्त । विरुद्धपदार्थैकदेशे विरुद्धत्वे आदिपदार्थस्यान्वयप्रसङ्गात् । किञ्च पूर्वोक्तानीशोऽनीश इत्यादिपञ्चवचनानि इतिपदेनोपस्थितानि । इतिपदार्थस्य वचनानीत्यनेनान्वयो वक्तव्य । इत्थञ्च एवमादिविरुद्धानि इति वचनानीति लभ्यते । स न युक्त । आदिपदग्राह्यविरोधान्तरस्याप्रतिभासेन बाधात् । विशेषणोभयसमासत्वस्य एवमादिविरुद्धानीत्यस्याङ्गीकारेण कथञ्चिदुपपादनेपि विरोधप्रतियोगिबोधकप्रमाणपदस्य समासाघटकतया तदर्थान्वितस्वार्थकत्वापत्ते । स्वगतविरोधस्यैव तथात्वेन प्रतीत्या प्रमाणान्तरे विरोधप्रतियोगिन्याकाङ्क्षानुदयेन विवक्षितार्थालाभाच्चेत्यत आह ॥ एवमादीति ॥ उक्तेति ॥ सुपा सुलुगित्यनेन लोपविधानाच्छन्दसि । अस्या अपि स्मृतेस्तत्तुल्यत्वादिति भाव ।

(गु. टि) ननु चागमविरोधस्य न च मायाविनेत्यादिनैवोक्तत्वात् पुनस्तत्प्रदर्शने कथं न पौनरुक्त्यं इत्यत उक्तम ॥ स्पष्टमिति ॥ पूर्वत्रेवोत्तरत्रापि अस्पष्टागमविरोधस्य उत्तरत्रेव पूर्वत्रापि स्पष्टागमविरोधस्यैवाभिधाने पौनरुक्त्यप्रसङ्गेपि पूर्वत्रास्पष्टागमविरोधस्योत्तरत्र स्पष्टागमविरोधस्य प्रदर्शने न तत्प्रसङ्ग इति भावः । तर्हि स एव प्रदर्शनीय इत्यत आह ॥ आगमोदाहरण इति ॥ पृथग्जगत्सत्यत्वादिप्रतिपादकागमोदाहरण इत्यर्थः ॥ तस्येति ॥ उपक्रमादिभिरिति शेष ॥ प्राबल्येति ॥ निरवकाशत्वादिनेति शेष ॥ अनुपपत्त्यन्तरेति ॥ परोक्तार्थान्तरपरताशङ्कारूपानुपपत्त्यन्तरपरिहार इत्यर्थ । परोक्तार्थे उपक्रमाद्यनानुकूल्यप्रदर्शन इति यावत् ॥ प्रत्येकमिति ॥ ईशोऽनीश इति जगन्मिथ्येतीत्यादिरूपेण प्रत्येकमभिसम्बद्ध्यत इत्यर्थ ।

ननु किं तस्य प्रत्येकमभिसम्बन्धकल्पनया । यत्र श्रूयते तत्रैव सम्बन्ध· किं न स्यादित्यत आह ॥ अत एवेति ॥ प्रत्येकं सम्बन्धस्याभिप्रेतत्वादेवेत्यर्थ. । अन्यथा एकेनैवेतिशब्देन पूर्त्या द्विस्तदुपादानवैयर्थ्यप्रसङ्गादिति भाव । एवमादीत्यस्य विरुद्धानीत्यनेनान्वये वैयर्थ्यं विवक्षितार्थालाभश्चेत्यतो वचनविशेषणत्वं युक्तिविशेषणत्वं वा वाच्यम् । तत्र वचनविशेषणत्वे एवमादीनीति युक्तिविशेषणत्वे च एवमादय इति प्रसक्त्या एवमादीति निर्देशानुपपत्तिरित्यतस्तदुपपत्त्यर्थमाह ॥ एवमादीति ॥ ततश्च तस्य न विरुद्धानीत्येतद्विशेषणत्वम् । अतो न वैयर्थ्यादिप्रसङ्गो दोषः । सुपां सुलुगिति विभक्तिलोपविधायकशास्त्रानुसारेण लुप्तविभक्तिकत्वाच्च एवमादीनीति एवमादय इति चाप्रसक्त्या एवमादीति निर्देशोपपत्तिश्चेत्यर्थ. ॥ समुच्चय इति ॥ अव्ययानामनेकार्थत्वादिति भाव । एवमादीत्यस्योभयविशेषणतामाश्रित्य वाक्ययोजनाप्रकारमाह ॥ यस्मादित्यादिना ॥ वचनापेक्षयेति ॥ परपक्षसाधकवैदिकवचनापेक्षयेत्यर्थ ॥ बहुभिरित्युक्तमिति ॥ प्रमाणैरिति बहुवचनेन बहुत्वे लब्धेपि बहुभिरित्युक्त्या अतिबहुत्वस्यैव सूचितत्वादिति भाव । अत्र च वैदिकैरिति स्वरूपकथनमेव । न प्राबल्यव्युत्पादकम् । वाचारम्भणमित्यादिपरपक्षसाधकवाक्येष्वपि वैदिकत्वस्य सत्त्वेन तस्य प्राबल्योपपादकत्वासम्भवादिति ध्येयम्

(गु.टि )॥ अवैदिकवचनापेक्षयेति ॥ बहुत्वस्यैव वैदिकत्वस्यापि परपक्षसाधकदरस्थवाधनुमानार्वाचीनवचनेष्व सत्त्वेन विरोधकप्रमाणेष्वेव च सत्त्वेन तयो प्राबल्योपपादकत्वादिति भाव ।

वेदवेदानुसारिप्रमाणाना श्रुत्यादिप्रमाणान्तरविरोधे सर्वथा हेयत्वाभाव

(टी ) यथा प्रमाणविरुद्धानां युक्तीनामविषयवृत्तित्वेन व्याप्तिशून्यत्वेन चाप्रामाण्यात्सर्वथा हेयत्व किं तथा वचनानामपीत्यपेक्षायामाह

वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना ।
इतराणि विरुद्धानि प्रलम्भभ्रमजान्यपि ॥ इति व्यासस्मृतिः

वेदमनुसरन्तीति वेदानुसाराणि, वेदवेदानुसारेषु प्रबलप्रमाणविरोधे सति तेषां विरुद्धमर्थं परित्यज्याविरुद्धोऽर्थः कल्पनीयः । न तु सर्वथा हेयानि । वेदवेदानुसारीतराणि प्रमाणविरुद्धानि चेत्प्रलम्भभ्रमजान्यतरत्वेन सर्वथाऽप्रमाणानीति ज्ञातव्यानि ।

ननु शब्दस्तावज्ज्ञातकरणम् । प्रमायाश्च ज्ञानकरणमात्राधीनत्वमङ्गीकृतम् । तस्मादितरप्रमाणानामन्यार्थकल्पनैवोचितेति चेन् सत्यम् । तथापि स्वतः प्रामाण्यस्यौत्सर्गिकत्वेन दोषादप्रामाण्यस्यापि जननात् । प्रकृतवचनानि च विप्रलम्भादिमूलानीत्यप्रमाणान्येव । अत एवेतराण्यप्रमाणानीति वक्तव्ये तदुपपादनाय प्रलम्भभ्रमजानीत्युक्तम् । प्रलम्भादिमूलत्वं च प्रबलप्रमाणविरोधानुमेयम् । अत एव विरुद्धानीत्युक्तम् । तर्हि वेदादिषु तत्कल्प्यं स्यादिति चेत् । अपौरुषेयत्वादिबाधकाभावे सत्येवमेव तत् । अत एव वेदवेदानुसारेष्वित्युक्तम् । अन्यार्थकल्पनाप्रकारश्च लेशतो दर्शयिष्यते ।

(वि. टि.) ॥ अविषयवृत्तित्वेनेति ॥ युक्तीनामाभासत्वज्ञापकं युक्त्याङ्गहीनत्वमयुक्ताङ्गाधिकत्वमविषयवृत्तित्वञ्चेति त्रितयम् । तत्र यथा प्रमाणविरुद्धयुक्तीनामविषयवृत्तित्वेन वा व्याप्तिशून्यत्वेन वा प्रामाण्यासम्भवात् सर्वथा हेयत्वमेव किं तथा वेदवेदानुसारिवचनानामपि हेयत्वं अप्रमाणत्वेन प्रेक्षावदनुपादेयत्वमित्याशङ्कायामित्यर्थ. ॥ वेदानुसाराणीति ॥ वेदाविरुद्धार्थपराणीत्यर्थ. । वेदवेदानुसारिणा बाधागमयुक्त्यादिविरोधे तस्यैव बाध्यतया कथमन्यार्थकल्पनमित्यत आह ॥ प्रबलेति ॥ अर्थमिति ॥ अर्थत्वेन प्रतीतं तात्पर्यगोचरमिति यावत् ॥ प्रलम्भेति ॥ विप्रलम्भेत्यर्थ. । ननु वेदवेदानुसारीतरवचनानामपि ज्ञानसामग्रीत्वात्तज्जन्यज्ञानेपि प्रामाण्यं दुर्वारम् । ज्ञानप्रामाण्यस्योत्पत्तिज्ञप्त्यो स्वतस्त्वाङ्गीकारात् । न हि प्रामाण्यस्य ज्ञानसामान्यसामग्रीमात्रप्रयोज्यत्वादन्यस्वतस्त्वमस्ति । न हि सामग्रीबलात्प्राप्त प्रामाण्यं हातु युक्तम् । तथा च वेदवेदानुसारिवचनवत्तदितरवचनानामपि मानान्तरविरोधेऽन्यार्थत्वमेवोचितम् । न तु सर्वात्मनाऽप्रामाण्यस्वीकार इत्यभिप्रेत्य शङ्कते ॥ नन्विति ॥

(वि टि) भवेदेतदेवं तदा यदि ज्ञानसामान्यसामग्र्यास्तत्प्रयोजकत्वनियमो मयाऽभ्युपगम्येत। न चैतदस्ति। किन्तु ज्ञानसामान्यसामग्र्या प्रामाण्यप्रयोजकत्वमौत्सर्गिकम् । उत्सर्गश्च बाधकैकापोद्यत्वनियत इति । यत्र सामान्यसामग्र्यामधिकदोषो न प्रविशति तज्जन्यज्ञान एव प्रामाण्यनियमः। यत्र तत्प्रवेशस्तज्जन्यज्ञानस्याप्रमात्वमेव । न तु प्रमात्वं क्वचिदपीत्यङ्गीकाराद्वेदवेदानुसारीतरवचनाना ज्ञानसामग्रीत्वेपि पौरुषेयत्वेन भ्रमप्रमादादिदोषपूर्वकत्वेन तज्जन्यज्ञानस्याप्रामाण्यमेव । न प्रबलप्रमाणविरोधेऽर्थान्तरपरत्वेन प्रामाण्यस्वीकार इत्यभिप्रेत्य परिहरति ।। सत्यमिति ।। ननु तदप्रामाण्य दोषैककल्प्यम् । दोषाश्चाप्रामाण्यरूपफलैककल्प्या इत्यन्योन्याश्रयातदप्रामाण्यकल्पनमेवायुक्तमित्यत आह ।। प्रबलेति ।। प्रबलप्रमाणविरोधित्वेनानुमेयमित्यर्थ । तथा च नान्योन्याश्रय इति भाव. ।। अत एवेति ।। प्रबलप्रमाणविरोधस्य तदनुमापकत्वाभावे विरुद्धानीति न वदेदित्यर्थः ।

विरुद्धानीत्यस्य विप्रलम्भादिमूलकत्वानुमापकत्वमात्रपरत्वं मन्वान शङ्कते ।। तर्हीति ।। इतरवचनवद्वेदस्यापि वाक्यत्वानुमितपौरुषेयत्वेन विप्रलम्भादिमूलकत्वकल्पनं किं न स्यादित्यर्थ । वाक्यत्वस्य पौरुषेयत्वं विनाप्याकाङ्क्षादिमच्छब्दत्वेनोपपत्त्या पौरुषेयत्वासाधकत्वात् महाप्रबन्धस्य लोके स्मर्यमाणकर्तृकत्वस्य बहुलमुपलम्भाद्वेदस्य च महाप्रबन्धत्वेपि तदनुपलम्भेन स्वतन्त्रपुरुषप्रणीतत्वरूपपौरुषेयत्वाभावनिर्णयात् यत्र वाक्ये स्वतन्त्रपुरुषप्रणीतत्वरूपबाधकसम्भव. तत्रैव पौरुषेयत्वेन विप्रलम्भादिमूलकत्वकल्पनम् । न त्वतादृशे वेदेपीत्याह ।। अपौरुषेयत्वादीति ।। ननु प्रमाणविरोधस्थले वेदवेदानुसारिवचनानां विरुद्धमर्थं परित्यज्याविरुद्धान्यार्थकल्पनमेवोचितमित्युक्तम् । अविरुद्धार्थानामनेकेषां कल्पनासम्भवेन तेषा नियतार्थकत्वाभावप्रसङ्गादित्यत आह ।। अन्यार्थेति ।। बुद्धिशालिना दिङ्मात्रप्रदर्शनेनाप्यलमिति दर्शयति ।। लेशत इति ।।

(रा टि) ।। अविषयवृत्तित्वेनेति ।। बाधितविषयत्वेनेत्यर्थ । भावार्थभ्रान्तिं निराह ।। वेदमनुसरन्तीति ।। धन्यमनुष्ये बहुलमिति बहुलग्रहणात्कर्तर्यपि घञिति भाव ।। प्रामाण्यस्येति ।। शब्दजन्यज्ञानप्रामाण्यस्येत्यर्थः ।। ज्ञानकारणमात्रेति ।। आप्तोक्तत्वादिगुणाधीनत्व मात्रपदेन व्यावर्त्यते ।। तस्मादिति ।। प्रामाण्यस्य ज्ञानकारणमात्राधीनत्वाद्वेदाननुसारिशब्दजन्यज्ञानप्रामाण्यस्यापि तादृशत्वात् प्रमाणज्ञानजनकशब्दस्य प्रमाणत्वादित्यर्थ. ।। स्वतःप्रामाण्यस्येति ।। ज्ञानजनकादेव प्रमाजननस्यौत्सर्गिकत्वेनानियतत्वेनेत्यर्थः ।। प्रकृतेति ।। वेदानुसारीतरवचनानीत्यर्थः ।। प्रबलप्रमाणेति ।।

बलवत्प्रमाणतश्चैव ज्ञेया दोषा न चान्यथा ।

इति तत्वनिर्णयोक्तेरिति भाव ।। एतत्कल्प्यमिति ।। विप्रलम्भभ्रममूलत्व वाऽप्रामाण्यं वा कल्प्य स्यादित्यर्थ ।। अत एवेति ।। [1]अपौरुषेयत्वादिसूचनादेवेत्यर्थः ।। दर्शयिष्यत इति ।। वाचारम्भणं विकारो नामधेयमित्यादिनेति भावः ।

---

1 अपौरुषेयत्वादिसूचनार्थमेवेत्यर्थ इति पाठेन भाव्यमिति भाति ।

(वे टि) ॥ व्याप्तिशून्यत्वेन चेति ॥ प्रमाणबाधिते पक्ष एव व्यभिचारादिति भाव ॥ वचनानामपीति ॥ प्रमाणविरुद्धानामित्यनुवर्तते । मूलेऽपिशब्दस्तुशब्दार्थे इतराणीत्यनेन सम्बद्ध्यत इत्यभिप्रेत्येतराणि त्वित्युक्तमिति ज्ञातव्यम् ।

(गु टि.) ॥ व्याप्तिशून्यत्वेन चेति ॥ प्रमाणबाधिते पक्ष एव हेतुसत्त्वेऽपि साध्यासत्त्वादिति भावः ॥ वचनानामपीति ॥ प्रमाणविरुद्धानां वचनानामपीत्यर्थ । मूले अपिशब्दस्तुशब्दार्थे इत्यभिप्रेत्याऽऽह ॥ इतराणि त्विति ॥ मूले अप्रमाणानीत्येव वक्तव्यत्वात्तथा अनुक्त्वा प्रलम्भभ्रमजानीत्युक्तिर्व्यर्थेत्यत अप्रामाण्योपपादनार्थत्वात्तदुक्तेर्न वैयर्थ्यमिति भावेन तदुपपादकतया तदुक्तिं योजयितु तदनुपपत्तिशङ्कामुत्थापयति ॥ नन्विति ॥ अङ्गीकृतमिति ॥ प्रामाण्यस्य स्वतस्त्वेन प्रमाया उत्पत्तौ ज्ञानकारणमात्राधीनत्वसिद्ध्या अतिरिक्तकारणापेक्षत्वे तद्भङ्गेन स्वतस्त्वाभावप्रसङ्गादिति भाव. ॥ औत्सर्गिकत्वेनेति ॥ यो धूमवानसावग्निमानिति धूमवह्निसम्बन्धस्य नियतत्ववत् न प्रमाया ज्ञानकारणमात्राधीनत्वं नियतम् । किन्तु अपवादाभाव एवेत्येवमौत्सर्गिकमेवेति भाव ॥ दोषादिति ॥ सहकारिणां सहजशक्तिप्रतिबन्धेन विपरीतशक्त्याधायकत्वस्य बहुलमुपलब्धत्वेन दोषसहकृतशब्दस्याप्रमाजनकत्वस्य सम्भवादिति भाव. । विप्रलम्भादीत्यादिपदेन भ्रमपरिग्रहः । कानिचिद्विप्रलम्भमूलकानि इतराणि भ्रमजानीत्येवं विप्रलम्भादिमूलानीत्यर्थ ।

अन्येषान्तु विरुद्धानां विप्रलम्भोऽथ वा भ्रमः ।

इत्यन्यत्र भगवत्पादोक्तेरिति भाव. । तत्प्रकारश्च तद्वाक्यव्याख्यानावसरे तत्त्वनिर्णयटीकायां टीकाकृदुक्तरीत्या अनुसन्धेय. ॥ अत एवेति ॥ तत मूले न विरुद्धानीत्यस्य वैयर्थ्यमिति भाव ॥ तत्कल्प्यमिति ॥ कल्पकस्य विरोधस्य तत्राप्यविशिष्टत्वेन दोषजन्यत्व कल्प्य स्यादित्यर्थ ॥ अत एवेति ॥ अपौरुषेयत्वादिबाधकाभावे सत्येव विरोधस्य दोषजन्यत्वकल्पकत्वेन वेदादिषु तदसिद्धेरेवेत्यर्थ. ॥ लेशत इति ॥ आद्यादिभ्य उपसङ्ख्यानात्तृतीयान्तात्तसि । ततश्च लेशेनेत्यर्थ. ॥ दर्शयिष्यत इति ॥ वाचारम्भण विविधप्रकार. इत्यादिनेति शेष ।

विश्वमिथ्यात्वसाधकाभिमतानुमानागमयोरागमविशेषविरोधसमर्थनम्

(टी.) एवं सामान्यतोऽनुमानागमयोरागमविरोधमभिधाय विशेषतोऽपि तं दर्शयति

'नासतो दृष्टत्वात्' 'नाभाव उपलब्धेः' 'वैधर्म्याच्च न स्वप्नादिवत्'

इत्यादिभगवद्वचनेनापि निरस्ताः

आदिपदेन पृथगुपदेशादित्यादिकमात्मभेदप्रतिपादकं सूत्रं गृह्यते । यद्यपि प्रागुदाहृतानि भगवद्वचनान्येव तथापि विशेषतो विरोधित्व निर्णायकत्वेन प्राबल्यं वा सूचयितुं भगवद्वचनेनापीत्युक्तम् । निरस्ताः प्रपञ्चमिथ्यात्वादिपरा अनुमानागमा इति शेषः । वद्वादिन इति वा ।

(वि टि.) इत्यादिकमित्यादिपदेन 'भेदव्यपदेशाच्चान्य.' 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' 'भेदव्यपदेशात्' 'स्थित्यदनाभ्याञ्च' 'सुषुप्त्युत्क्रान्त्योर्भेदेन' इत्यादिसूत्रं गृह्यते । भगवत्पदमन्यावर्तकमिति शङ्कते ॥ यद्यपीति ॥ सूत्राणा श्रौतन्यायनिबन्धनरूपत्वेन परमाप्तप्रणीतत्वेन च निर्णायकत्वात्प्राबल्यमित्यर्थ ॥ प्रपञ्चमिथ्यात्वादिपरा इति ॥ तत्साधकत्वेन परोक्ता इत्यर्थ ॥ तद्वादिन इति चेति ॥ यद्यपि तद्वादि-निरासोपि तदुक्तप्रमाणनिरास एव पर्यवस्यति तथापि तद्वादिन इति बहुवचनेन तद्वादिमात्रनिरासप्रतिपादनेन 'पराजयो वादिदौर्बल्यप्रयुक्त एव । न तु शास्त्रदौर्बल्यप्रयुक्त ' इति परोक्त्यवकाशनिरासं ज्ञापयितुं पक्षान्त-रोक्तिः ।

(रा. टि) ॥ अनुमानेति ॥ मिथ्यात्वानुमानागमयोरित्यर्थ ॥ इत्यादिकमात्मभेदेति ॥ अंशो नानाव्यपदेशात् । अत एव चोपमा सूर्यकादिवत् । भोक्त्रापत्तेरविभागश्चेदित्यादिरादिपदार्थ ।

(वे टि) ॥ इत्यादिकमिति ॥ अत्रादिपदेन भेदव्यपदेशाच्चान्य इत्यदिक गृह्यत इति द्रष्टव्यम् ॥ भगवद्वचनेनापीत्युक्तमिति ॥ पूर्वं भगवद्वचनमित्यनुक्त्वाऽत्र भगवद्वचनतोक्त्योदाहृतवचनेष्वतिशयो दर्शित. । स चोक्तरूप एवेति ज्ञायत इति भाव । प्रपञ्चमिथ्यात्वादिपराः तत्साधकत्वेन परोदाहृताः ।

(द्वै द्यु) ॥ सूत्रं गृह्यत इति ॥ अन्यथा विमता आत्मान परमात्मनो न भिद्यन्ते इत्यनुमानस्य विशेषत आगमविरोधो न दर्शित स्यादिति भाव ।

यत्त्वत्र केनचिदर्वाचीनेन प्रलपितम् ।

ईशोऽनीशो जगन्मिथ्या न पूज्यो गुरुरित्यपि ।
एक आत्मा परब्रह्मभावो मुक्तिरितीत्यपि ॥
एवमादिविरुद्धानि वचनान्यथ युक्तय. ।
प्रमाणैर्बहुभिर्ज्ञेया आभासा इति वैदिकै ॥
वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना ।
इतराणि विरुद्धानि प्रलम्भभ्रमजान्यपि ॥ इति व्यासस्मृति ।

इति परोदाहृतपद्यजातमपि न प्रामाणिकम् । प्रसिद्धव्यासस्मृतावनुपलम्भात् । अन्यस्मृतेर्व्याख्यातृभि· क्वाप्यनु-दाहृतत्वाच्च ।

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत्कामहैतुकम् ॥
एता दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माण. क्षयाय जगतोऽहिताः ॥

(द्वै. सु.) इति भगवद्गीतावचनं तु न विरुद्धम्। असत्यमित्यस्य न सन्यं यस्मिन्निति व्युत्पत्त्या निस्तत्त्वपरत्वात्तस्य च शून्यवाद एवोपपत्ते । 'भावाः क्षणक्षयिण एव निरात्मकाश्च' इति तदभ्युपगमात् । अत एव निरीश्वरत्वमपि तत्रोक्तम्। बहुव्रीहेस्तत्पुरुषो बलीयानिति न वाच्यम्। प्रसिद्धानुवादेऽस्याविनिगमकत्वात्। अन्यथा परस्पर-सम्भूतत्वाद्यभिमानासङ्गतेरिति।

तत्प्रलापमात्रम्। अन्यानुदाहृतत्वप्रसिद्धग्रन्थानुपलम्भमात्रस्य परमप्रसिद्धग्रन्थकारोदाहृतवाक्यानुपादेयत्वबीजत्वे जीवेशावाभासे नेति श्रुतेरपि त्वद्भाष्यकारमात्रोदाहृतत्वात्प्रसिद्धोपनिषत्स्वनुपलम्भाच्चानुपादेयताऽपत्ते। गीतादाहरणपूर्वक शङ्कातद्व्याख्यानादिकस्य च पूर्वमेव कृतत्वात्तव पौनरुक्त्यम्। अस्माभिस्तु प्रायेण प्रागेव तन्निराकृतम्। प्रसिद्धत्वन्मतानुवादपक्षे सामसिकलाघवस्यापि सम्भवेन तस्य विनिगमकत्वात्। एकजीववादे त्वन्मतेऽपीश्वराभावेनात एवेत्युपष्टम्भासङ्गतिश्च। दृष्टिसृष्टिपक्षे त्वन्मतेऽप्यपरस्परसम्भूतत्वाभिमानासङ्गतेश्चेत्यलम्।

एतेन मिथ्यात्वानुमाने न्यायामृतोक्तानां स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वप्रतिभासमात्रशरीरत्वादीनामुपाधिताऽपि सिद्धयति। उपाधीनां बाधोन्नीतत्वात्। बाधेन पक्षे साध्यसन्देहप्रतिबन्धेनोपाधे पक्षान्तर्भावेण साध्यव्यापकत्वसन्देहानवकाशेन बाधबलनिश्चितसाध्यव्यापकताकत्वमेवोपाधौ बाधोन्नीतत्वम्। एवं दृग्दृश्ययोस्तादात्म्यरूपाऽध्यासिकसम्बन्धरूपविषयताया निरस्तत्वेनाऽकाराख्यविषयतयैवोपपत्तेश्च दर्शितत्वेन मिथ्यात्वाभावे दृश्यत्वं न स्यादित्यनुकूलतर्कानुत्थित्या बाधानवतारदशायामपि पक्षेतरत्वतुल्यानामप्येषामुपाधित्वं सिद्धयति। प्रतिभासमात्रशरीरत्वं च निःस्वरूपत्वं वा कालासम्बद्धत्वं वाऽर्थक्रियाशून्यत्वं वेति न कोऽपि दोषः।

एवं प्रत्यक्षादिबाधोपपादनेनैव 'घटादयः स्वानुगतप्रतिभासे वस्तुनि कल्पिताः विभक्तत्वात् यथा सर्पमालादिक स्वानुगतप्रतिभासे रज्ज्वादाविदमंशे विभज्यते। एवं ब्रह्मण्यनुगच्छति घटादिकं विभज्यते। सन् घट' सन् पट इति स्वानुगतप्रतिभासे स्वतादात्म्येन स्वरूपतो भानयोग्ये स्वतादात्म्यविषयतानिरूपितानवच्छिन्नप्रकारतावतीति यावत्। समस्था व्यापकत्वमर्थः। व्यापकतानिरूपकत्वं च तादात्म्येन। तथा च यद्यदुक्तप्रकारताविशिष्टं तत्तत्र कल्पितमित्यर्थः। कल्पितत्वं च ज्ञाननिवर्त्यत्वं स्वाभाववति ज्ञेयत्वं वा। तथा चोक्तप्रकारताव्यापकत्वं स्वनिवर्तकधीविषयताकत्वमुक्तप्रकारताव्यापकत्वात्यन्ताभावकत्वं वा पर्यवसितम्। उक्तप्रकारतासामानाधिकरण्यमात्रनिवेशे पटादे स्वतादात्म्यभ्रमविषयघटत्वादौ कल्पितत्वमादायार्थान्तरं स्यात्। अतो व्यापकत्वमुक्तम्। स्वमते हि पटादेरुक्तभ्रमे नारोपितत्वम्। किन्तु तत्तादात्म्यस्यैवेति तन्निवर्तकधीविषयत्वमेव घटत्वादेः। न तु पटादिनिवर्तकधीविषयत्वमिति स्वानभिमतं तत्। परानभिमतमपि परस्य तार्किकादेरन्यथाख्यातिस्वीकारेण पटादिन्निवर्तकत्वस्य घटत्वादिज्ञानेऽनङ्गीकारादुभयवादिसम्मतसिद्धया अर्थान्तरं स्यात्। व्यापकतानिवेशे तु तादृशप्रकारताया सद्रूपेऽपि सत्त्वात् तस्य [1]स्वनिवर्तकधीविषयत्वसिद्धया मदिष्टसिद्धिः। न च स्वमते बाधः।

---

[1] सं पट

(द्वै. शु.) घटत्वादेर्व्यावहारिकघटादिनिवर्तकबुद्ध्यविषयत्वादिति वाच्यम्। जातिमात्रस्य सद्रूपत्वाङ्गीकारात्। तादृशप्रकारतावति द्रव्यगुणादावेव निवर्तकधीविषयत्वाभावाद्बाधवारणाय विभक्तत्वहेतुमति रज्वारोपितमालादौ व्यभिचारवारणाय चाऽनवच्छिन्नत्वं प्रकारताया निवेशितम्। प्रतियोगिताविषयत्वादीनामनवच्छिन्नप्रकारतास्वीकारे तु पूर्वोक्तरीत्या पटादौ बाधवारणायोक्तमालादौ व्यभिचारवारणाय च निरूपितान्तस्थले स्वतादात्म्यसामानाधिकरण्यमेवानवच्छिन्नप्रकारताया देयम्। तथा च प्रतियोगित्वादेर्घटादौ विशेषणतासम्बन्धेनैव सत्त्वान्न व्यभिचारः। [1]एवञ्च सामानाधिकरण्यमपि व्यापकतास्थाने वक्तु शक्यम्। द्वितीयसाध्ये तु न प्रकारतायामनवच्छिन्नत्व [2]देयम्। [3]द्रव्यादौ जातौ च सर्वत्र स्वाभावस्य सिषाधयिषितत्वात्। विभक्तत्व चात्मावृत्तिप्रतियोगितासम्बन्धेन भेदोऽत्यन्ताभावो वा पूर्वोक्त एवानुसन्धेय।

एव घटादिक सद्रूपे कल्पित प्रत्येक तदनुविद्धतया प्रतीयमानत्वात् सद्रूपे कल्पितत्व च सद्रूपनिष्ठस्वनिवर्तकधीविषयताकत्वम्। तदनुविद्धतया सद्रूपतादात्म्येन प्रतीयमानत्वादित्यत्र प्रत्येकमित्यस्यान्वय। तथा च घटादीना सर्वेषा सत्तादात्म्येन प्रतीयमानत्वात् घटादिकं सर्वं सद्रूपविषयकज्ञाननिवर्त्यमित्यर्थः। तादृशप्रतीयमानत्व च तद्योग्यतारूप ग्राह्यम्। तच्च सदवृत्तित्वविशिष्टभेदप्रतियोगित्वम्।

एवं अय पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी अंशित्वात् अश्यतरवत्' इत्यादीनि मिथ्यात्वे सामान्यानुमानानि विशेषानुमानानि च निरस्तानि। प्रत्यक्षागमादिबाधादप्रयोजकत्वाच्च।

किञ्च गवादिनिवर्तकधीविषयत्व गोत्वजात्यादौ नास्तीति बाधवारणाय 'गोत्वादिजातीना सत्ताजातिस्वरूपत्वमेव सत्ता च ब्रह्मैवेति अङ्गीकृत्य न बाध इति परिहृतम्। तदयुक्तम्। घटादावपि सत्तासत्त्वेन गोत्वापत्त्या घटस्यापि गोपदवाच्यत्वापत्ते। न च वाच्यत्व नाम तत्पदनिष्ठशक्तिनिरूपकत्वम्। शक्तिनिरूपकत्व च तद्‌द्गोव्यक्तिष्वेव स्वीक्रियते। अतो न दोष इति वाच्यम्। तादृशशक्यता प्रति सत्ताया घटादिसाधारणाया अतिप्रसक्ततया अवच्छेदकत्वायोगात्तत्तन्निष्ठतद्व्यक्तित्वानामेवावच्छेदकत्वेन शक्यतानन्त्यात्तन्निरूपकशक्त्यानन्त्या न्नानार्थत्वापत्तेः।

ननु सर्वासु गोव्यक्तिष्वेकैव शक्यताऽखण्डा स्वीक्रियते। एव गोपदेष्वप्येकैव शक्तिः। तयोरवच्छिन्नत्वे मानाभावान्नान्यूनानतिरिक्तानुमतधर्मापेक्षा। नापि नानार्थत्वमिति चेन्न। सर्वगोव्यक्तिष्वखण्डाया. शक्यताया अङ्गीकारावश्यकत्वे तस्या गोत्वरूपताया अङ्गीकर्तुं शक्यत्वेन तदनङ्गीकारायोगात्। न च गोत्वादिजाते किञ्चिदनिरूपितत्वेन शक्यतायाश्च किञ्चिन्निरूपितत्वेन कथं शक्यतैव गोत्वमिति वाच्यम्। 'अस्मिन्देशे अस्मिन्काले गौ सती' इति प्रतीतिबलात्सत्ताजातेरपि किञ्चिन्निरूपितत्वसिद्ध्या जाते किञ्चिदनिरूपितत्वा-

---

[1] तादात्म्ये स्वसमानसत्ताकत्वनिवेशाश्च पूर्वोक्तार्थान्तरतेति हृदयम्।

[2] असत्त्वमादायार्थान्तरतावारणाय स्वतादात्म्यविषयतानिरूपितत्वस्य प्रकारतायां निवेश।

[3] मालादीनामनिर्वचनीयत्वसिद्ध्युत्तरमेवानुमानप्रवृत्तेर्न तार्किकादिमते दृष्टान्तासिद्धि।

(द्वि.वृ.) योगात् । न च तत्प्रतीतौ सत्ताजातिर्न प्रतीयते किन्त्वाधेयत्वमेव भासत इति वाच्यम् । एतदन्याहशस्य घटादौ सत्ताजात्यवगाहिप्रत्ययस्याभावेन सत्ताजातेरेव घटादावसिद्धिप्रसङ्गात् । न च सन् घट इत्येतावन्मात्रप्रतीतिरेव तत्साधिकेति युक्तम् । तत्र स्वनिरूपकं विहायाधेयतामात्रस्य भानाभ्युपगमसम्भवात् । न च निरूपकानवगाहिनि प्रत्यये निरूप्य न भासत इत्यतिरिक्तधर्मभानमिति वाच्यम् । चैत्रस्य पितेत्ययं पितेति च प्रतीतिबलात्पितृत्वादिजातीनामपि सिद्धिप्रसङ्गात् । अभाव सन्नित्यादिप्रत्ययादभावादावपि सत्ताङ्गीकारप्रसङ्गाच्च । न च सर्वस्य सद्रूपे कल्पितत्ववादिनामभावादेरपि कल्पितत्वात् ब्रह्मरूपसत्ताजातिरिष्टैवेति वाच्यम् । सत्ता सतीति प्रत्ययबलात्सत्ताया अपि सत्ताजातिमत्त्वं स्यात् । न चेष्टापत्तिः । सत्ताया अपि सद्रूपे कल्पितत्वापत्ते । न चोपहितरूपेण सत्ताया अपि कल्पितत्वाभ्युगमान्नेदमनिष्टापादनमिति वाच्यम् । तदुपहितरूपापन्नायास्तस्याः कल्पितत्वेन घटनिवर्तकज्ञानविषयत्वायोगाद्बाध एव । किञ्चेयं गौरियं गोपदशक्येति सामानाधिकरण्यप्रत्ययाविशेषात्सम्बन्धभेदकल्पने मानाभावाच्च शक्यताशक्ततारूपाणामखण्डधर्माणां गोगोपदतादात्म्यस्यावर्जनीयतया तेषां गोगोपदनिवर्तकज्ञानाविषयत्वाद्बाध एव । न च तेषु नानवच्छिन्नप्रकारताभ्युपेयत इति वाच्यम् । सत्तावदखण्डानुगतधर्मत्वादेव तथाऽभ्युपगमसम्भवात् । अन्यथा सत्ताया अपि तन्न स्यात् । शब्दनिष्ठानां तारत्वमन्दत्वादीनां रूपनिष्ठानां शुक्लतरत्वादीनां रसनिष्ठमधुरत्वावान्तरवैजात्यानां च अयमस्मात्तार अयमस्माच्छुक्लतर अयं मधुरस्ततो मधुरतरोऽयमिति प्रत्ययबलादवधिनिरूप्यत्वस्य नव्यनैयायिकैर्वर्णानित्यत्वविचारेऽभिहितत्वेन जाते किञ्चिन्निरूपितत्वेऽपि बाधकाभावाच्च । अपि च कार्याव्यवहितपूर्ववृत्तितावच्छेदकधर्मः कारणत्वमिति पक्षे दण्डत्वादिरूपाखण्डधर्मस्यैव कारणत्वमुपहितरूपेण स्वरूपतोऽवच्छेदकत्वं चेत्यभ्युपगतत्वेन शक्यताया एव स्वरूपतोऽवच्छेदकत्व तादृशशक्यतात्वेनावच्छेद्यत्वमिति रीतेः सम्भवेन शक्यताया अनवच्छिन्नाया अखण्डाया स्वीकारे बीजाभावाच्च ।

ननु शक्यता नाखण्डा गोव्यक्तिषु स्वीक्रियते येन तदभ्युपगमस्य जात्यभ्युपगमरूपत्वस्यैव बलात्प्राप्त्याऽस्माकं बाधानिस्तारः स्यात् । किन्तु भवदभिमता यावत्यो गोव्यक्तयस्तावद्व्यक्तिविषयकधीजनकतारूपा शक्तिरेकैव गोपदे स्वीक्रियते । तन्निरूपिता कार्यता एकैवाखण्डा गोबोधेषु । तयोश्च किञ्चिदवच्छिन्नत्वे मानाभावान्न कोऽपि धर्मस्तदीयाखण्डावच्छेदकताश्रयः । गोपदनिष्ठतादृशशक्तिनिरूपकबोधविषयत्वमेव गोषु शक्यत्वं नाम । नातोऽन्यदधिकम् । विषयता त्वाश्रयभेदेन भिन्नैवेति नास्या गोत्वतुल्यता । शक्तिग्रहनिष्ठकारणत्वमप्येकमेव । 'सद्रूपविशिष्टतद्व्यक्तिशक्तं गौरिति पदम्' इत्याकारेषु शक्तिज्ञानेष्वेकस्या एवानवच्छिन्नायाः कारणतायाः 'सद्रूपविशिष्टतद्व्यक्ति' इति बोधं प्रति स्वीकारात् । पराभिमतगोत्वजात्याश्रयत्वेनाभिमतव्यक्तीनां तद्व्यक्तिशब्देन कारणकार्यकोट्योर्निवेशः । अत एव घटव्यक्तिं तद्व्यक्तित्वेनावगाहमानादुक्ताकारशक्तिज्ञानान्न गोव्यक्तीनां शाब्दबोधः । तत्र तस्य कारणत्वास्वीकारात् । न च तथाप्येकां गोव्यक्तिमवगाहमानाच्छक्तिग्रहादन्यगोव्यक्तिशाब्दधी स्यादिति वाच्यम् । इष्टत्वात् । गोत्वादिजातिस्वीकारेऽपि गोत्वेनैकगोविषयकशक्तिज्ञानाद्गोव्यक्त्यन्तरशाब्दबोधस्य मीमांसकैः स्वीकारात् ।

(द्वै.चु.) ननु कारणत्वादेरखण्डस्य स्वीकारेऽप्यनुगतैकधर्मं विना अन्वयव्यतिरेकग्रहणायोगेन तद्ग्रहणायोगाद्गोत्वादिकमवश्यमभ्युपेयमिति चेन्न । तृणारणिमणिभ्यः प्रत्येकं वह्न्युत्पत्त्या तृणत्वाद्यवच्छिन्नस्य व्यतिरेकाग्रहेऽपि उपस्थितकतिपयव्यक्तिभिः कार्योत्पत्तिदर्शनमात्रेण प्रथमतस्तासु कारणताग्रहस्तदनन्तरं तत्सदृशव्यक्त्यन्तरेष्विव सर्वत्राप्यनुगतधर्मावच्छिन्नान्वयव्यतिरेकग्रहं विनापि कारणताग्रहसम्भवेनानुगतधर्मस्वीकारवैयर्थ्यात् ।

यत्तु 'कारणत्वादेरवच्छिन्नत्वेनैवानुभवबलात्तद्भानावश्यकत्वेऽन्यूनातिरिक्तवृत्तेरेव तथात्वात्तादृशगोत्वादिसिद्धिः' इति । तन्न । धूमो वह्निव्याप्य इत्याद्यनुभवे धूमत्वादौ व्याप्यतावच्छेदकत्वाभानस्य दीधितिकाराद्युक्तत्वेन तद्वदेव दण्डो घटकारणमित्याद्यनुभवे दण्डत्वादेर्घटकारणतावच्छेदकत्वभानानङ्गीकारात् ।

यदपि 'व्यक्तीनां जातिव्यञ्जकत्वात् सत्तादिरूपजातिव्यञ्जकतावच्छेदकतया गोत्वादिजात्यभ्युपगमः' इति । तदप्यसत् । जातिनिष्ठलौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति स्वविषयसमवेतत्वसम्बन्धेन प्रत्यक्षस्य कारणत्वाज्जातिप्रत्यक्षप्रयोजकसम्बन्धघटकताया व्यञ्जकतारूपत्वाद्वा साक्षावच्छिन्नचक्षुःसंयोगवत्समवायादेर्गोत्वाभ्युपगमपक्षेऽपि कारणत्वावश्यकतयोक्तसम्बन्धघटकतारूपव्यञ्जकत्वस्याङ्गीकाराद्वा तदवच्छेदककोटौ गोत्वादेरनिविष्टत्वाद् घटकतयापि गोत्वादिजातिसिद्धेरभावादिति चेन्न ।

गोपदेषु तज्ज्ञानेषु कारणताया अखण्डायास्तज्जन्यबोधे कार्यतायाश्चाखण्डाया अभ्युपगमे पूर्वरीत्या तासामेव जातिरूपत्वापत्त्या गवादिष्वपि किञ्चिन्निरूपितकारणताकार्यत्वादीनामखण्डानामावश्यकत्वे तासामेव जातिरूपत्वापत्त्या तदनभ्युपगमवचनस्य रिक्तत्वात् । गोत्वादिजातीनां तत्तदवच्छिन्नकारणताकार्यतादीनां च पृथगङ्गीकारे ह्यस्माकं गौरवम् । कार्यत्वादीनां गवादिस्वरूपभूतानामङ्गीकारे गोत्वादीनामेव पूर्वोपदर्शितरीत्या कारणत्वादिरूपत्वाङ्गीकारे च गौरवायोगात् । कारणत्वादीनां जातिरूपत्वाभावेऽपि त्वदनुमाने बाधस्योपपादितत्वाच्च । अपि च तत्पदजन्यबोधविषयत्वस्यैव तच्छक्यत्वे घटमानयेत्यादिवाक्यजन्यबोधस्य घटपदानयनादिपदजन्यतया तद्विषयत्वाद्घटपदवाच्यत्वमानयनस्यापि स्यात् । तत्पदप्रयोज्यविषयतावत्त्वं तत्पदशक्यत्वं चेत्प्रयोज्यत्वस्य जन्यतावच्छेदकत्वातिरिक्तस्य दुर्निरूपतयाऽवच्छेदकतायाश्च जन्यतां प्रति त्वयेदानीमेवानङ्गीकृतत्वात् । अस्मिन् वाक्ये एतत्पदसत्त्वादस्य विषयत्वमिति प्रतीतिसिद्धस्वरूपसम्बन्धविशेषत्वाङ्गीकारे गङ्गापदप्रयोज्यविषयताशालिनस्तीरस्य तत्पदवाच्यत्वापत्तिः । किञ्च पटो घटपदशक्य इति भ्राम्यतः घटपदात्पटादिबोधो जायते । एवं घटे शक्तिग्रहात् घटादिबोधो जायते । अतः सद्रूपविशिष्टतत्तद्व्यक्तिबोधसाधारणी कार्यतोक्तशक्तिज्ञानसाधारणी च कारणता चाभ्युपेया । अन्यथा तादृशबोधस्याऽऽकस्मिकत्वापत्तेः । तथा च घटपटयोरविशेषात्पटादेरपि घटपदवाच्यतापत्तिः । न च पटो घटपदशक्य इति शक्तिज्ञानतज्जन्यशाब्दबोधयोः प्रमितत्वात्तयोः कार्यकारणभावादिसत्त्वेऽपि यथा पटस्य घटपदशक्यत्वं यया रीत्या वार्यते तयैव मन्मतेऽप्यस्त्विति वाच्यम् । मन्मते शक्यतावच्छेदकत्वेनाभ्युपगतघटत्वजातेः पटेऽभावेन पटे घटपदशक्तिज्ञानस्य भ्रमतया तेनार्थसिद्धेरभावेन पटे घटपदशक्यतापादनं न सम्भवति । त्वन्मते च घटपदप्रयोज्यविषयतादेरेव शक्यत्वरूपतया तस्योक्तरीत्या पटे बाधा-

(द्वै. द्यु.) भावेन शक्तिज्ञानस्य भ्रमत्वे बीजाभावात् । न च मन्मतेऽपि गोघटादिनिष्ठा शक्यताऽखण्डा । सा पटे बाधिताऽस्त्विति वाच्यम् । त्वया 'न चानुगतमेकमवच्छेदकं विना तावद्व्यक्तिनिष्ठा कथमेका शक्यतेति वाच्यम् । तावद्व्यक्तिधीजननानुकूला शक्तिर्गोपदे स्वीक्रियते' इत्यादिना शङ्कासमाधानग्रन्थेनाखण्डशक्यतापक्षस्य त्यक्तत्वात् । मयानुपदमेव दूषितत्वाच्च ।

न च पटो घटपदशक्य इत्यादिषु भ्रमेषु प्रमावृत्तिकारणतापेक्षया विलक्षणैवाखण्डा कारणता स्वीक्रियते । तज्जन्यबोधेष्वेवाखण्डा कार्यता च । इत्थं च प्रमामात्रनिष्ठकारणतानिरूपितकार्यताशालिबोधीयविषयताया एव घटपदशक्यतारूपत्वात्तस्याः पटे घटपदशक्यत्वमिति वाच्यम् । एवमपि घटपटोभयविषयकशाब्दबोधमादाय पटेऽतिप्रसङ्गानुद्धारात् । अपि च जातिमात्रं त्वया न परित्यक्तम् । एकस्या महासत्तायाः स्वीकारात् । किन्तु लाघवदृष्ट्या गोत्वादिकमेव । तत्र गोत्वावच्छिन्नविशेष्यकगोपदशक्तिज्ञानगोत्वप्रकारकशाब्दयोस्तत्त्वेन कारणता-कार्यते द्वे एव गोत्वादिजातिस्वीकारपक्षे । तत्र तु भ्रमस्थले कारणताकार्यते द्वे प्रमास्थले द्वे इति चतुष्टयमिति कुतो लाघवम् । न च त्वन्मते कारणताकार्यताघटकतया गोत्वशाब्दत्वरूपजातिद्वयस्वीकाराच्चतुष्टयमवर्जनीयमिति वाच्यम् । एवमपि त्वत्पक्षे लाघवानवकाश एव । वस्तुतो घटपटपदशक्तिज्ञानाधीनशाब्दस्थलानुरोधात् घटत्व-पटत्वाद्येकैका जातयः कारणताकार्यते द्वे इति तत्तत्स्थले पदार्थत्रयं सर्वस्थलानुरोधाच्छाब्दत्वजातिरेका । त्वन्मते तु प्रतिस्थलं पूर्वोक्तरीत्या चतुष्टयमिति मन्मत एव लाघवम् । कारणताकार्यतयोः स्वावच्छेदकधर्म-रूपताभ्युपगमे तु सुतरां लाघवम् । अपि च घटपदस्य यदा पटे शक्तिभ्रमस्तदा तत्पदात्पटबोध एव । न स्तम्भबोधः । यदा स्तम्भे शक्तिग्रहस्तदा तद्बोध एवेत्यनुभवानुरोधात्तादृशशक्तिज्ञानशाब्दबोधस्थलेषु अखण्डाः कारणताकार्यताव्यक्तयो बह्व्य एव एकैकघटपदपटपदानुरोधेन स्वीकर्तव्या इति त्वदभ्युपगतस्यैवातिदेयत्वम् । तत्रापि सर्वभ्रमसाधारणैककार्यकारणभावाङ्गीकारे घटे गोपदशक्तिज्ञानात्पटबोधापत्तिः । कथञ्चित्तद्वारणार्थमाग्रहे गोपदवाच्यनानार्थस्थलेऽप्येतत्कारणताकार्यतयोरेव प्राप्त्या गोपदादीनां नानार्थकत्वोच्छेदः । घटपदाविशेषात् । अपि च गोत्वादिजात्यभावे तत्तत्कार्यकारणयोरन्वयव्यतिरेकग्रहानुपपत्तिः ।

यदत्रोक्तं 'तृणादौ वह्निकारणताग्रहस्थल इवोपपत्तिः' इति । तदसत् । यस्मात्तत्र कतिपयतृणादिभिः पुनः पुनः कार्योत्पत्तिं दृष्टवतोऽनुमानेनैव लाघवसहकृतेनाबनकव्यक्तिव्यावर्तकजात्यवच्छिन्नेषु कारणताग्रहा-दपूर्वव्यक्तौ तज्जातीयत्वेन कारणत्वानुमानात्प्रवर्तते । तव सत्तातिरिक्तजात्यपलापिनः कथम् । सत्ताया व्यभि-चारित्वात् । एवमेव प्रवृत्त्यङ्गीकारे वह्न्यर्थिनो घटेऽपि प्रवृत्त्यापत्तेः । किञ्च सत्ताया एव गोत्वघटत्वादिपदै-रभिलाप्यनानाजात्यात्मकत्वे घटव्यक्तौ पटत्वादिसंशयादेरनुपपत्तिः । सत्त्वस्य गृहीतत्वात् । न च घटव्यक्ति-भेदकोटिक एवायं संशय इति वाच्यम् । इतरघटव्यक्तिभेदकूटवत्त्वेन गृह्यमाणघटव्यक्तौ सत्त्वेन गृह्यमाणाया-मुक्तसंशयस्यानुभवसिद्धत्वात् । सन्नयं घटो न वेति संशयस्याहार्यत्वापत्तिश्चेत्यादि बहुतरमूहनीयम् ।

(द्वै.द्यु.)यदपि कल्पान्तरमुक्तम्। अथ वा 'तावद्व्यक्तीना यावन्ति सद्रूपेण सह तादात्म्यानि तावदन्यतमत्व-विशिष्टसम्बन्धेन सद्रूपविशिष्ट गौरिति व्यवहारविषय । तेन सम्बन्धेन च सद्रूप तत्तत्कारणतावच्छेदकम्। न च गौरवाद्दुर्ज्ञेयत्वाच्चोक्तान्यतमत्वस्य तथात्वासम्भवाद्गोत्वादे. कल्पनमेव युक्तमिति वाच्यम्। अखण्डस्यान्यतमत्वस्य स्वरूपत एव निवेशेनोक्तदोषाभावात्। क्लृप्तेनैव तेन निर्वाहे गोत्वादिकल्पनस्यायुक्तत्वात्। न चैव गोव्यक्ती-नामन्यतमत्वेनैव गवादे कारणत्वादिकमास्ताम्। किं सद्रूपस्य तत्कल्पनयेति वाच्यम्। गोत्वादिजातिस्वीकारे-ऽप्यन्यतमत्वस्य कारणतावच्छेदकत्वस्य वारणाय तस्यावाभ्यामन्यथासिद्धिनिरूपकत्वस्वीकारात् । अत एव सद्रूपास्वीकर्तृबौद्धैरुक्तान्यतमत्वस्यापोहनामकस्य गवादिपदवाच्यत्वादिक स्वीक्रियते' इति ।

तदप्ययुक्तम्। यतो यद्यप्यत्र न पूर्वकल्पोक्तदोषाणामवकाशस्तथापि घटे गोत्वसशयस्य धर्मितावच्छेद-कातिरिक्तप्रकारकोटिकत्वस्यानुभवसिद्धस्यापलापापत्ति.। न ह्येतत्संशयस्य समवायेन घटवति संयोगेन घटसशय-स्येव ससर्गमात्रकृतवैलक्षण्यानुभवो लोकानाम्। अपि चान्यतमत्वादीनामखण्डत्वेऽपि प्रतियोग्यनालिङ्गिततया-ऽभावमत्यक्षाभावेन स्वरूपतो भानायोगात्स्वरूतो भासमाने गोत्वे कारणतावच्छेदकत्वम्। लाघवात्। अन्यतमत्वस्य त्वन्यथासिद्धिनिरूपकतावच्छेदकत्वमिति ममाभ्युपगमो गोत्वादेरन्यतमत्वातिरिक्तस्य स्वीकारोऽपि। तस्य स्वरू-पतो भानाभ्युपगमे तु तत्तद्गवान्यतमत्वादीनामेव कारणतावच्छेदकत्वसम्भवात्कुतस्त्वदुक्तसम्बन्धेन सद्रूपस्य कारणतावच्छेदकत्वम्। संसर्गांशेऽन्यतमत्वस्य स्वरूपतो भानं न प्रकारांश इत्यत्र नियामकानुपलम्भात्।

ननु स्वरूपसम्बन्धससर्गकस्थले स्वरूपत्वस्याननुगतत्वात्स्वरूपत्वस्य संसर्गतावच्छेदकत्वानुपपत्त्या तत्त-दन्यतमत्वमेव स्वरूपत ससर्गतावच्छेदकमित्यस्ति नियामकम्। न च सत्त्वमेव स्वरूपपदार्थतावच्छेदकमस्त्विति वाच्यम्। तथात्वे सत्स्वरूपमिति वाक्यस्य घट कलश इति वाक्यस्येवाबोधकत्वापत्तेरिति चेन्न। तर्हि स्वरूप-मित्याकारानुगतप्रतीतिनिर्वाहाय तादृशान्यतमत्वरूपस्वरूपत्वस्य स्वरूपत. प्रकारता प्राप्तैव। न च तद्व्यक्तित्वे-नैवान्यतमत्वं भासतामिति वाच्यम्। संसर्गकोटौ तथैव सम्भवात्। वस्तुत काले स्वरूपसम्बन्धेन कालत्ववगा हिन्योरत्र कालत्वमिदानीं कालत्वमिति प्रतीत्यो संसर्गतावच्छेदककृतवैलक्षण्य वाच्यम्। प्रकारविशेष्ययो तत्स्वरूपभूतसंसर्गस्य च साम्यात्। तच्चान्यतमत्वादतिरिक्त भावरूपमेव प्रत्येक प्रत्येकं भासत इत्यवश्य-मुपेयमित्यन्यतमत्वस्य ससर्गतावच्छेदकत्वमप्रामाणिकमेव। अभावस्वरूपाभावस्यापि प्राचीनैः स्वरूपतो भानस्या-भ्युपगतत्वाच्च। एव यावत्य सद्व्यक्तयस्तत्तदन्यतमत्वस्यैव सन् घट इत्यादिषु भानाभ्युपगमेनैव सर्वनिर्वाहे सद्रूपे जातेरप्यसिद्धिश्च। न च अन्यतमत्वस्य स्वरूपतो भाने तस्य प्रतियोग्यविषयकप्रत्यक्षविषयत्वाद्ग्राह्यत्वमनु-गतत्वाज्जातित्वमिति बलादागतमिति वाच्यम्। गवादिनिष्ठतत्तदन्यतमत्वस्यापि तथैव जातित्वप्राप्त्या गोत्वादि-जात्यनङ्गीकारस्य व्याहतत्वापत्तेरित्यलम्।

यदपि स्वसम्मतार्थे सवादाय हरिकारिकोदाहरणं

सम्बन्धिभेदात्सत्तैव भिद्यमाना गवादिषु।

(द्वै सु.) जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥
सा जातिः सा महासत्ता तामाहुस्त्वतलादयः ; इति ॥

तदप्यकिञ्चित्करम् । पूर्वोक्तदोषकवलितार्थे हरिकारिकाया अनादरणीयत्वात् । अन्यथा शाब्दिकोक्तशब्दार्थयोरैक्यपक्षस्याप्यङ्गीकर्तव्यतापातात् ।

यदपि हरिकारिकाया सम्बन्धभेदादित्यस्य तत्तद्व्यक्त्युपहितत्वरूपस्य तादात्म्यानामन्यतमत्वविशिष्टरूपस्य वा सम्बन्धस्य भेदादित्यर्थः । त्वतलादय इत्यस्य गोत्वघटत्वकम्बुतेत्यादौ [1]त्वतलादिप्रत्ययार्थ इत्यर्थः । सदन्याप्रकारकधीप्रकारत्वैव स्वरूपतस्त्वादिशक्यतावच्छेदिका । अतो न निर्धर्मितावच्छेदककबोधापत्तिः । न च प्रकृत्यर्थोपलक्षितसद्रूपस्य सर्वत्र सत्त्वादश्वे गोत्वमित्यादिव्यवहारापत्तिरिति वाच्यम् । प्रकृत्यर्थविशिष्टसत्ताया एवान्वयात्' इति । तन्न । गोव्यक्तिद्वये 'अनयोर्गोत्वम्' इत्यादिव्यवहारानुपपत्तेः । त्वन्मते तत्तद्व्यक्तेरेव प्रकृत्यर्थतयाऽनुगतेतरव्यावर्तकरूपान्तराभावेन [2]तद्व्यक्तिद्वयवृत्तित्वविशिष्टसत्त्वस्य कुत्राप्यभावादिति दिक् । तस्माद्गोत्वादिजातिस्वीकारावश्यकत्वे पूर्वोक्तबाध एव ।

ननु मास्तु गोत्वादीनां विवरणरीत्या सद्रूपत्वम् । किन्त्वविद्याशक्त्यात्मिका एव ताः । न च तादृशाविद्यायाः घटाद्यवच्छिन्नचिद्विषयकत्वे घटादिधीकाले तन्निवृत्त्यापत्तिः । ब्रह्मविषयकत्वे घटत्वपटत्वादिनानाजात्यसम्भवः । न ह्येकपुरुषं प्रति भासमाना मूलाविद्या नानेति सिद्धान्त इति वाच्यम् । अनन्तानां निर्विषयकाणां विक्षेपनामिकानां मूलाविद्याशक्तीनामङ्गीकारात् । आवरणशक्तीनामेव सविषयकत्वात् । तथा च घटव्यक्तिभिरवच्छिन्ना जलाहरणाद्यनुकूलशक्तिर्घटत्वम् । एवं पटत्वमपि । तादृशघटत्वाद्यवच्छिन्नचिति घटादयः कल्पिताः । यथा पूर्णानन्दरूपेऽधिष्ठाने जायमाने प्रपञ्चस्य सद्रूपं साधारणाधारस्तथा गवाद्यवयवो गोत्वादिजातिश्चासाधारणाधार इति तत्रापि गवादयः कल्पिताः । तथा च 'स्वानुगतप्रतिभासे वस्तुनि कल्पिताः' इत्यस्य तत्तादात्म्यापन्ना इत्यर्थकत्वान्न बाधः । 'सद्रूपे कल्पिताः' इति ब्रह्मसिद्धिकारोक्तभाष्यस्यैव स्वनिवर्तकज्ञानविषयसद्रूपका इत्यर्थकत्वस्वीकारान्न पूर्वोक्तार्थविरोध इति चेन्न । घटत्वादीनामविद्याशक्तित्वे मानाभावात् । घटत्वादितादात्म्यस्य घटे सिद्धत्वेन सिद्धसाधनमर्थान्तरता वा स्यात् । न चाधिष्ठानाध्यासिकतादात्म्यवृत्तित्वैवात्म्यपुरस्कारेण तादात्म्यस्य साध्यतावच्छेदकसम्बन्धत्वाङ्गीकारान्न सिद्धसाधनमिति वाच्यम् । अर्थेऽलीकमानवादिनो मम तादृशतादात्म्यस्यैवाप्रसिद्ध्या तेन सम्बन्धेन साधनायोगात् । तत्सम्बन्धघटितव्याप्त्यादेरयोगात् । ब्रह्मसिद्धिकारोक्तसाध्येऽपि परिच्छिन्नत्वस्य भवदभिमतहेतुवाक्यार्थभूतस्य व्यभिचारादयः । एवमंशित्वहेतोर्बाधोपाध्यादयोऽनुसन्धेयाः। उत्तरमूलवाक्यानुरोधादाह ॥ तदादिन इति वेति ॥ [3](मायावादिमतानि निरस्तानीत्यर्थः) प्रमेयबहुत्वादेव बहुत्वम् ।

---

[1] त्वतलादिप्रत्यया इति पाठेन भाव्यमिति भाति ।   [2] तद्व्यक्त्येतद्व्यक्ति इति पाठेन भाव्यमिति भाति ।

[3] अत्र कुण्डलितो भागोऽधिक इति भाति ।

(गु टि ) स्पष्टास्पष्टागमविरोधस्य 'न च मायाविना' इत्यादिनवोक्तत्वात्पुनस्तदभिधाने पुनरुक्तिरित्यत उक्तं सामान्यत इति । इत्यादिक्रमिति ॥ भाव्या दिशा अत एव चोपमेत्यादेरुत्तरस्य विपरीतक्रमेण भेदव्यपदेशादित्यादेश्च भेदप्रतिपादकसूत्रान्तरस्य परिग्रह· ॥ भगवद्वचनान्येवेति ॥ तथा च व्यावर्त्याभावात्तदुक्तिरनर्थिकेति भाव । अतिशय दर्शयति ॥ तथापीति ॥ प्रपञ्चमिथ्यात्वादिपरा इति ॥ आदिशब्देन भेदाभावपरिग्रहः । यद्यप्युदाहृतश्रुतयो वस्तुतो न प्रपञ्चमिथ्यात्वादिपरा । तथापि तत्साधकतया परेणोपन्यस्तत्वमेव तत्परत्वमित्यभिप्रेत्यैवमुक्तमिति ध्येयम् । अत एवापरितोषात्पक्षान्तरमाह ॥ तद्वादिन इति वेति ॥

नासत इत्यादिसूत्राणा शून्यवादिमतनिरासपरतया न प्रपञ्चमिथ्यात्वविरोधित्वमिति शङ्का

(टी ) नन्वेतानि सूत्राणि शून्यवादिमतनिराकरणपरतया सिद्धान्ते व्याख्यायन्ते । तथा हि । शून्यमेव जगत्कारणमस्तु किमीश्वरेणेति प्राप्ते प्रत्याख्यातं नासत इति । नासतः शून्यस्य जगत्कारणत्वं मन्तव्यम् । कुतः अदृष्टत्वात् । न हि किमपि शून्यादुत्पद्यमानं दृष्टम् । येन जगदपि तथा प्रतिपद्येमहि ।

भवेदिदं यदि जगत्पारमार्थिकं स्यात् । असत्त्वे तु शुक्तिरजतस्येव शून्यादुत्पत्तौ काऽनुपपत्तिरित्यतोऽभिहितं नाभाव इति । न जगत् अभावः-असत् प्रतिपत्तव्यम् । कस्मात् । उपलब्धेः । सदिति प्रतीयमानत्वात् । सत्त्वेन प्रतीयमानमपि जगत्स्वप्नादिवदसत्किं न स्यात् इत्यत उक्तं वैधर्म्याच्चेति । स्वप्नादिवत् असदेव जगत्सत्त्वेन प्रतीयत इति न वाच्यम् । कुतः वैधर्म्यात् । भवति हि स्वप्नादिवैधर्म्यं विश्वस्य बाधाभावलक्षणम् । उपलब्धिश्च प्रागबाधितैव हेतुतयोपन्यस्तेति भावः । दूषणान्तरसमुच्चयार्थश्चकार इति । तथा च कथमेषां सूत्राणां मायावादिमतनिरासायोदाहरणे सिद्धान्तविरोधो न स्यात् । न च योजनाभेदेनोभयपरता । तददर्शनादित्यत आह ।

(वि. टि.) ननु मायावादिमतनिरासे प्रवृत्तेन तन्निरासक्षममेव प्रमाणमुदाहर्तव्यम् । न तु बाह्यमतनिरासार्थं प्रवृत्त प्रमाणम् । सङ्गत्यभावादिति शङ्कते ॥ नन्विति ॥ नन्वस्य तन्मतनिराकरणपरतया व्याख्यानं सिद्धान्तिनोऽसङ्गतत्वापादकं कथमित्यत उक्तम् ॥ सिद्धान्त इति ॥ न प्रतिज्ञामात्रेणार्थसिद्धिरित्यतः सिद्धान्तव्याख्यानप्रकारं दर्शयति ॥ तथा हीति ॥ सत्त्वेन प्रतीतिमात्रमत्र साधकम् । तदेव च प्रागुपलब्धिपदेनोक्तमित्याह ॥ उपलब्धिश्चेति ॥ अबाधितैवेत्यस्यानन्तर सूत्र इति शेषः ॥ चकार इति ॥ वैधर्म्याच्चेति सूत्रस्थ इत्यर्थः । चकार इतीतिशब्दस्य व्याख्यायन्त इत्यनेन सम्बन्धः । एतावता कथमसङ्गतिरित्यत आह ॥ तथा चेति ॥ न केवलमसङ्गतिमात्रम् । किं तु शून्यवादिमतनिरासार्थत्वेन स्वयमङ्गीकृतानामुदाहृतसूत्राणां तत्त्यागेन मायावादिमतनिरासार्थत्वाङ्गीकारे सिद्धान्तविरोधश्च स्यादिति भाव ॥ तददर्शनादिति ॥ मायावादिनिरासस्य ततोऽप्रतीतेरित्यर्थः । इदमुपलक्षणम् । उभयनिरासपरत्वाङ्गीकारे चानेकार्थत्वमिति न्यायविरोधादित्यपि द्रष्टव्यम् ।

(रा. टि.) द्वितीयसूत्रमवतार्यार्थमाह ॥ भवेदिदमित्यादिना ॥ जगत्कारणत्वं शून्यस्य नेनीदमित्यर्थः ॥ स्वप्नादिवदसदेवेति ॥ स्वाप्नपदार्थगतजाग्रत्त्ववदसदेवेत्यर्थ ॥ उपलब्धिश्च प्रागिति ॥ नाभाव उपलब्धे रिति सूत्रे हेतूकृता सत्त्वेनोपलब्धिबाधाबाधितैवोक्ता । अबाधितोपलब्धेरित्युक्तं सूत्रकृतेत्यर्थः । अतो न स्वप्नपदार्थेष्वनैकान्त्यचोदना युक्तेति भावः । इतीतिशब्दस्य इति व्याख्यायन्त इति पूर्वेणान्वयः ॥ दूषणान्तरेति ॥ स्वप्न एवायं न जाग्रदिति स्वप्नादौ बाधभावाच्चेति दूषणान्तरेत्यर्थः ।

(वे टि) ॥ शून्यवादिमतनिराकरणपरतयेति ॥ शून्यवादमपाकरोतीति भाष्येऽस्याधिकरणस्याव-तारितत्वादिति भाव । अदृष्टत्वादमतः कारणत्वं न युज्यते इति भाष्यं मनसि निधाय सूत्रार्थमाह ॥ नासतः शून्यस्येति ॥ नन्वदृष्टमपि शून्यस्य जगत्कारणत्वमभ्युपगतश्चेत्को दोष इत्याशङ्कापरिहारार्थं सूत्रम् उदासीनानामपि चैव सिद्धिः इति । तत्तात्पर्यमाह ॥ न हि किमपीति ॥ शुक्तिरजतस्येवेति ॥ यथाऽसत एव रजताकारेण प्रतीयमानत्वमेव शून्यस्यैव संवृतिवशाज्जगदाकारेण प्रतीयमानत्वम् । इयमेव शून्यादुत्पत्ति यज्जगत्तत्राध्यस्तमिति । तथा च न पूर्वानुपपत्तिरिति भाव. । न च जगदेव शून्यमिति वाच्यम् । दृष्टत्वात् इति भाष्य मनसि निधाय नाभाव इति सूत्रार्थमाह ॥ न जगदिति ॥ असतोप्युपलब्धिविषयत्वाद्व्यभिचार इत्यत आह ॥ सदिति प्रतीयमानत्वादिति ॥ उपलक्षणमेतत् । न चासत एव रजताकारेण प्रतीयमानत्व युक्तम् । तथात्वे नेदं रजत किन्तु शुक्तिरेवेति बाधविरोधात् । तथा च रजतस्येवेत्युक्तदृष्टान्तानुपपत्तिरित्यपि द्रष्टव्यम् । न च दृष्टस्यापि स्वप्नादिवदभावः । तस्योत्तरकाले स्वप्नोऽयं नाय सर्प इत्याद्यनुभवात् । न चात्र तादृशं प्रमाणमस्ति इति भाष्य मनसि निधाय सूत्रार्थमाह ॥ स्वप्नादिवदिति ॥ अत्रादिपदेन रज्जुभुजङ्गादिकं ग्राह्यम् । नन्वस्तु विश्वस्य बाधकाभावलक्षणं स्वप्नादिवैधर्म्यम् । तथाप्युपलब्धेरिति सौत्रो हेतुर्व्यभिचारेण दुष्ट एवेत्यत आह ॥ उपलब्धिश्चेति ॥ दूषणान्तरसमुच्चयार्थश्चकार इतीति ॥ वैधर्म्याच्चेति सौत्रश्चकारः न केवलमनुमानविरुद्ध विश्वमिथ्यात्वम् । अपि तु प्रत्यक्षविरुद्ध प्रमाणशून्यश्चेत्यनुक्तदोषान्तरसमुच्चायक इत्यर्थः । तथानुव्याख्याने

चेति दृष्टिविरुद्धताम् ।
निष्प्रमाणत्वमप्यस्य सूचयामास विश्वकृत् ॥

इति व्याख्यातत्वादिति भावः ।

(द्वै द्यु) ननु शून्यवादिसकाशादित्यादिग्रन्थस्य प्रकृतासङ्गतत्वं । मुख्यप्रमेयभूतमुक्तभेदासाधकत्वात् प्रसक्तमिथ्यात्वानुमानादूषकत्वाच्चेत्याशङ्क्य तद्ग्रन्थमुत्थापयति ॥ नन्वेतानीति ॥ तददर्शनादिति ॥ मायावा-दिमते ब्रह्मण· सत्त्वादसत्पदेन तद्ग्रहणायोगः । द्वितीयसूत्रे अभावपदार्थभूतासत्त्वनिराकरणं चानुपयुक्तं जगत्यसद्विलक्षणत्वस्यैव मायावाद्यङ्गीकृतत्वात् । अतो नैतानि सूत्राणि तन्मतनिराकरणपरतया योजयितुं शक्या-नीति भावः ।

(गु टि )॥ शून्यवादिमतनिराकरणपरतयेति॥ भाष्ये 'शून्यवादिमतमपाकरोति' इत्यस्याधिकरणस्याव-तारितत्वादिति भावः। 'अदृष्टत्वादसत. कारणत्व न युज्यते' इति भाष्य मनसि निधाय सूत्रार्थमाह ॥ नासतः शून्यस्येत्यादिना॥ नन्वदृष्टमपि शून्यस्य जगत्कारणत्वमभ्युपगतञ्चेत्को दोष इत्याशङ्कापरिहारार्थस्य उदासीना-नामिति सूत्रस्य तात्पर्यमाह ॥ न हीति ॥ शुक्तिरजतस्येवेति ॥ यथा असत एव रजताकारेण प्रतीति तथा शून्यस्यैव सवृतिवशाज्जगदाकारेण प्रतीति । इयमेव शून्याज्जगदुत्पत्ति· यज्जगत्तत्राध्यस्तमिति । न त्वपरेति न पूर्वोक्तातिप्रसङ्ग इति भाव. । 'न च जगदेव शून्यमिति वाच्यम् । अदृष्टत्वात्' इति भाष्य मनसि निधाय सूत्रार्थमाह ॥ न जगदिति ॥ असतोप्युपलब्धिविषयत्वाद्व्यभिचार इत्यतस्तदर्थमाह ॥ सदिति प्रतीयमानत्वा-दिति ॥ उपलक्षणञ्चैतत् । नासत एव रजताकारेण प्रतीयमानत्वं युक्तम् । तथा सति नेद रजत किन्तु शुक्ति-रेवेति बाधविरोधात् । तथा चोक्तदृष्टान्तोप्यसम्प्रतिपन्न इत्यपि द्रष्टव्यम् । 'न च दृष्टस्यापि स्वप्नादिवदभाव । तस्योत्तरकाले 'स्वप्नोयं नाय सर्प·' इत्याद्यनुभवात् । न चात्र तादृशं प्रमाणमस्ति' इति भाष्यं मनसि निधाय सूत्रार्थमाह ॥ स्वप्नादिवदिति ॥ अत्रादिपदेन रज्जुभुजङ्गादिग्रहणम् । नन्वस्तु जगतो बाधाभावलक्षणं स्वप्ना-दिवैधर्म्यम् । तथापि 'उपलब्धेः' इति सैत्रो हेतुर्व्यभिचारितया कथं साधकतयोपादीयत इत्यत आह ॥ उपल-ब्धिश्चेति ॥ दूषणान्तरेति ॥ दृष्टिविरुद्धत्वनिष्प्रमाणकत्वरूपदूषणान्तरसमुच्चयार्थ इत्यर्थ ॥

चेति दृष्टिविरुद्धताम् ।
निष्प्रमाणत्वमप्यस्य सूचयामास सूत्रकृत् ॥

इत्यनुव्याख्यानोक्तेरिति द्रष्टव्यम् ।

पूर्वोक्तशङ्कानिरासाय शून्यवादमायावादयो साम्योपपादनम्

## न च शून्यवादिनः सकाशाद्वैलक्षण्यं मायावादिनः

(टी ) अत्र शून्यवादिमायावादिशब्दौ तन्मतोपलक्षणार्थौ । इदमुक्त भवति । न सूत्राणि विषय-विशेषनियतानि । तथात्वे सूत्रत्वव्याघातात् । विषयविशेषानन्त्याच्छास्त्रस्यापर्यवसानप्रसङ्गाच्च । किन्तूदाहरणत्वेन विषयविशेषमादाय तत्समानविषये न्यायं सञ्चारयन्ति । न च शून्यवादिमताद्वैल-क्षण्यं मायावादिमतस्यास्ति । अतः शून्यवादिमतनिराकरणपराणामप्येषां मायावादिमतमपि विषयो भवतीति तन्निरासायैतत्सूत्रोदाहरणे न कश्चित्सिद्धान्तविरोध इति ।

अथोच्येत किं शून्यवादान्मायावादस्य वैलक्षण्याभावः कार्त्स्न्येनोतैकदेशेन । नाद्यः । आचा-रादिवैलक्षण्यस्योपलब्धेः । न द्वितीयः । एकदेशसाम्येन सूत्रसञ्चारे सकलदर्शनेष्वपि तद्दर्शनात् दर्श-नान्तरनिरासप्रयासवैयर्थ्यादिति । मैवम् । इह निरसनीयांशसालक्षण्येन सूत्रसञ्चाराभ्युपगमात् ।

(वि टि.) ननु प्रतिमुखं परस्परवैलक्षण्यवत् शून्यवादिमायावादिनोरपि परस्परवैलक्षण्यस्य प्रत्यक्षादिप्रमाणसिद्धत्वात् 'न च शून्यवादिनः सकाशात्' इति तन्निषेधे कथं तत्प्रमाणविरोधो न स्यादित्याशङ्क्य तदविरोधाय व्याचष्टे ॥ अत्रेति ॥ नन्वेतावतापि 'मायावादिशून्यवादिमतयोरविशेष इति यदुक्तं तच्च प्रतिज्ञामात्रम् । न हि प्रतिज्ञामात्रेणार्थसिद्धिः' इत्याशङ्क्य 'व्यावहारिकसत्त्वस्य तेनाप्यङ्गीक्रियमाणत्वात्' इति वैलक्षण्याभावे हेतोरुच्यमानत्वान्न प्रतिज्ञामात्रमेतदित्युपपादयितुं उक्तार्थासङ्गतिसिद्धान्तविरोधौ यथा नापततस्तथाह ॥ इदमुक्तं भवतीति ॥ विषयविशेषेति ॥ एकमात्रार्थतात्पर्यकानि न । तथात्वे सूत्रत्वानुपपत्तेः । सूत्रं हि अल्पाक्षरमसन्दिग्धमित्यादिप्रमाणप्रतिपन्नाल्पाक्षरत्वादिघटितम् । सूत्रपदप्रवृत्तिनिमित्तं विश्वतोमुखत्वञ्च समानजातीयबहुविषयत्वान्नातिरिच्यते । अन्यथा विषयविशेषानन्त्यात्तद्विषयविशेषनिर्णयार्थं न्यायग्रथनात्मकसूत्रसन्दर्भात्मकशास्त्रानन्त्यप्रसङ्गात् । न ह्युदाहरणभेदमात्रेण शास्त्रापर्यवसानप्रसङ्गोऽङ्गीकारार्हः । किं तूदाहरणत्वेन कोटीकृतं विषयविशेषमादाय शास्त्रकारैरुदाहृतान्यपि शास्त्राणि तत्समानविषये तत्प्रतिबद्धन्यायं समर्पयन्ति । तथा च शून्यवादिमतावैलक्षण्ये मायावादिमतस्य तन्निरासकान्येव शास्त्राणि मायावादिमतनिरासकानि भवितुमर्हन्तीति काऽसङ्गतिः कश्च सिद्धान्तविरोध इत्याखण्डलार्थः ।

ननु मतान्तराणामपि परस्परं केनचिद्रूपेण वैलक्षण्यसत्त्वेपि केनचिद्रूपेण तदभावसम्भवात् प्रत्येकं सूत्रकारस्तन्निराकरणाय न प्रयतेतेति शङ्कते ॥ अथोच्येतेति ॥ सकलदर्शनेष्वपीति ॥ मतशब्ददर्शनशब्दयोः पर्यायत्वेनानुवाददूषणयोर्भिन्नविषयत्वेन न वैयधिकरण्यमिति द्रष्टव्यम् । सूत्रसन्दर्भात्मकेशास्त्रे निरसनीयांश एव वैलक्षण्याभावोऽभिप्रेतः । न तु कृत्स्नांशे । तथा च यत्र यत्र निरसनीयांशे निरसनीयतावच्छेदकमेकमुभयसम्प्रतिपन्नं तत्पुरस्कारेणैव तन्निरासकन्यायनिबन्धनात्मकं सूत्रं तत्र व्याप्रियत इत्यङ्गीकारेणनोक्तप्रसङ्ग इति परिहरति ॥ मैवमिति ॥

(रा टि.) मायावादिशून्यवादिनोर्मुखाद्यवयवगतवैलक्षण्यस्य प्रमाणसिद्धत्वाद्बाधनिरासायाह ॥ अत्र शून्यवादिमायावादिशब्दाविति ॥ तावता सिद्धान्तविरोधचोद्यस्य किमुत्तरमुक्तमित्यतो व्यनक्ति ॥ इदमुक्तमिति ॥ विषयविशेषेति ॥ शून्यादिरूपेत्यर्थः ॥ सूत्रत्वेति ॥ विश्वतोमुखशब्दितसमानन्यायानेकशास्त्रनिर्मायकत्वानेकमतनिरासकत्वादिरूपसूत्रत्वव्याघातादित्यर्थः ।

अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।

अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः ॥

इत्युक्तेरिति भावः । तर्ह्युदाहरणविशेषोक्तिः किमर्थेति पृच्छायामुत्तरमाह ॥ किन्त्वित्यादि ॥ सञ्चारयन्तीति ॥ परीक्षका इति योज्यम् । एवं परिष्कृत्य मूलं योजयति ॥ न चेति ॥ आचारेति ॥ वेदोक्तकर्मानुष्ठानाननुष्ठानरूपाचारवैलक्षण्यस्येत्यर्थः ॥ तद्दर्शनादिति ॥ प्रत्यक्षप्रामाण्याङ्गीकारादिरूपैकदेशसाम्यस्य दर्शनादित्यर्थः ।

(वे टि) ननु शून्यवादिमायावादिनोराकारादिवैलक्षण्यस्य प्रत्यक्षसिद्धत्वात्तन्निषेधानुपपत्तिरित्यत आह ॥ अत्र शून्येति ॥ नन्वेतावता कथमुक्तशङ्कापरिहार इत्यत आह ॥ इदमुक्तं भवतीत्यादिना ॥ सूत्रत्वव्याघातादिति ॥ समानजातीयबहुविषयत्वरूपविश्वतोमुखत्वलक्षणसूत्रत्वव्याघातादिति भाव. ।

(द्वै. द्यु) पुरुषवैलक्षण्यसत्त्वादाह ॥ अत्रेति ॥ ननु मताविशेषेऽपि कथमेकार्थपराणामन्यार्थपरत्वमुच्यते । विना प्रमाण तात्पर्यद्वयकल्पने गौरवमित्यत आह ॥ इदमुक्त भवतीति ॥ सूत्रत्वव्याघातादिति ॥ विश्वतोमुखत्वादिसूत्रधर्माभावप्रसङ्गेन सूत्रत्वव्याघातादित्यर्थ । तथा च सूत्रस्य विश्वतोमुखत्वबोधकागमस्यैव तस्य सम्भवद्द्व्यर्थतात्पर्ये प्रमाणत्वमिति भाव । शङ्कते ॥ अथेति ॥

(गु. टि) ननु वादिद्वयस्याऽऽकारादिवैलक्षण्यमनुभवसिद्ध न निषेद्धु शक्यम् । तथा सत्यनुभवविरोधादित्यत आह ॥ अत्रेति ॥ इदमुक्तं भवतीति ॥ व्याघातादिति ॥ तथा सति विश्वतोमुखत्वाभावेन तद्रूपसूत्रताया व्याहतत्वादित्यर्थ· । तर्ह्येकेनैव सूत्रेण सूत्रान्तरप्रयोजनसिद्धेस्तद्वैयर्थ्यमिति पृच्छति ॥ किन्त्विति ॥ परिहरति ॥ उदाहरणत्वेनेति ॥

शून्यवादमायावादयोर्वैलक्षण्यमाशङ्क्यापरप्रमेये वैलक्षण्याभावोपपादनम्

(टी) नन्वेतदपि नास्ति । असदेव जगच्छून्यादुत्पद्यत इति शून्यवादांशो ह्यत्र निराक्रियते । न चैतत्प्रमेयद्वय मायावादिनोऽभिमतम् । जगतः पारमार्थिकत्वाभावेऽपि व्यावहारिकसत्त्वस्याङ्गीकृतत्वान्नापरप्रमेये वैलक्षण्याभावः । ब्रह्मणो जगत्कारणत्वाभ्युपगमान्न परप्रमेयेऽपीति । मैवम् । यतः परमार्थापेक्षयैव शून्यवादिना जगदसदुच्यते । यथा मायावादिना 'अथ पुनर्विद्योदयेऽविद्यायाः निरुपाख्यत्वमङ्गीकृत्यासत्त्वमुच्यते । काममभिधीयताम्' इति । व्यावहारिकसत्त्व तु जगतस्तेनाप्यङ्गीकृतमेव । अतोऽपरप्रमेये तावन्न शून्यवादिमताद्वैलक्षण्यं मायावादिमतस्येत्याह

व्यावहारिकसत्त्वस्य तेनाप्यङ्गीक्रियमाणत्वात्

पूर्वेण सम्बन्धः । जगति व्यावहारिकसत्त्वं शून्यवादिनाऽङ्गीक्रियत इत्येतत्कुतो ज्ञायते । तद्वाक्यादेवेति तदुदाहरति

सत्यं तु द्विविधं प्रोक्तं सांवृतं पारमार्थिकम् ।

संव्रियतेऽनयेति संवृतिरविद्या तत्कृत सांवृतम् । अनेन सत्यद्वयोद्देशः कृतः । के ते द्वे सत्ये इति शृङ्गग्राहिकया दर्शयति

सांवृतं व्यावहार्यं स्यान्निवृत्तौ पारमार्थिकम् ॥

यदिदं हानादिव्यवहारविषयो जगत्तत् सांवृतं सत्यमित्युच्यते । व्यवहारनिवृत्तौ यदवतिष्ठते तदव्यावहार्यं शून्यमिति यावत् । तत्पारमार्थिकं सत्यमित्युच्यते ।

(टी) किंलक्षणके ते सत्ये इत्यतो वाक्यलाघवादनन्तरोक्तस्यापि पारमार्थिकसत्यस्य लक्षणं तावदाह

निवृत्तौ पारमार्थिकम् ।

व्यवहाराविषयत्वं पारमार्थिकलक्षणम् । अथ वा विज्ञानेनाशेषप्रपञ्चनिवृत्तावपि यन्न निवर्तते तत्पारमार्थिकमिति कालत्रयेऽप्यबाध्यत्वं पारमार्थिकसत्यलक्षणमुक्तं भवति । सांवृतसत्यलक्षणमाह

विचार्यमाणे नो सत्त्वं सत्त्वं चापि प्रतीयते ।

यस्य तत्सांवृतं ज्ञेयम् ।

प्रागूर्ध्वं यस्य सत्त्वं न मध्ये तस्य कुतो भवेत् ।
अन्यथा शुक्तिरूप्यादेः सत्त्वं केन निवार्यते ॥

इत्यादिविचार्यमाणे यस्य वस्तुनः सत्त्वं न युज्यते । तथापि सत्त्वं प्रतीयते च । तद्वस्तु सांवृतं सत्यं ज्ञेयम् । अत्राऽऽद्येन विशेषणेन पारमार्थिकसत्याद्व्यावृत्तिः । द्वितीयेनात्यन्तासतः ।

लक्षणान्तरञ्चाह

. . . . . . व्यवहारपदञ्च यत् ॥

इत्यादिना पारमार्थिकस्यात्यन्तासतश्च हानाद्यविषयत्वाद्व्यवहारविषयत्वञ्च सांवृतसत्यलक्षणं भवति । आदिपदेन

द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना ।
लोके सांवृतसत्यञ्च सत्यञ्च परमार्थतः ॥

इत्यादेः सङ्ग्रहः । इत्यादिनाऽङ्गीक्रियमाणत्वादिति सम्बन्धः । इत्यादिना शून्यवादिवाक्ये तदङ्गीकारो ज्ञायत इति वा ।

(वि टि) ॥ एतदपीति ॥ निरसनीयांशसालक्षण्यमपीत्यर्थः । तत्कथमित्यत आह ॥ असदेवेति ॥ कथं नाभिमतमित्यत आह ॥ जगत इति ॥ ब्रह्मण इति ॥ न हि मायावादी स्वाभिमतब्रह्मणः शून्यत्वं मन्यत इत्यर्थः । पदार्थविवेचने क्रियमाणे परमप्रमेयापरमप्रमेययोः शब्दमात्रकृतव्यवहारवैलक्षण्यं सिद्ध्यति । न त्वर्थकृतं मायावाद्युक्तमिति निरस्यति ॥ मैवमिति ॥ अपरप्रमेयावैलक्षण्यं तावदाह ॥ यत इति ॥ यस्मान्मायावादिना परमार्थमेकमङ्गीकृत्य तदपेक्षयैव यथा जगदसदुच्यते तथैव शून्यवादिनाप्युच्यत इत्यर्थः । ननु शून्यवादिना विद्योदये सत्यविद्याया निरुपाख्यत्वमङ्गीकृत्यासत्त्वमुच्यते । कथमेव सत्यपरप्रमेये वैलक्षण्याभाव इति शङ्कते ॥ अथेति ॥ तावता शब्दमात्रकृतवैलक्षण्यमेवायातम् । न त्वर्थकृतमिति प्रतिपादयितुमाह ॥ काममिति ॥ इति काममभिधीयतामिति सम्बन्धः । उक्तप्रकारेण काममभिधीयताम् । न हि तथाऽभिधानमात्रेणार्थकृतं वैलक्षण्यं सिद्ध-

(वि टि.) यति। जगत शून्यवादिनापि व्यावहारिकसत्त्वस्यैवाङ्गीकारात्। अतो नापरप्रमेये तयोर्वैलक्षण्यमस्तीत्यर्थ॰ ॥ पूर्वेणेति ॥ 'न च शून्यवादिन सकाशात्' इति प्रतिज्ञावाक्येनेत्यर्थ ॥ अनेनेति ॥ 'सत्य तु द्विविधं प्रोक्तम्' इत्यनेन सत्यद्वयस्याग्रे लिलक्षयिषितस्योद्देश. व्यावर्तकधर्मतात्पर्यकलक्षणोक्त्युद्देश्यकशब्द कृत इत्यर्थ॰। तेन विना लक्षणोक्त्यसम्भवादिति भाव॰ ॥ सत्य इति ॥ जिज्ञासायामिति शेष ॥ शृङ्गग्राहिकयेति ॥ शृङ्ग गृहीत्वा प्रदर्शनोपायो हि शृङ्गग्राहिकेत्युच्यते। तयेत्यर्थ ॥ यदिदमिति ॥ 'सावृतं व्यावहार्यं स्यात्' इति लक्ष्यतावच्छेदकोक्तिरिति भाव. ॥ वाक्यलाघवादिति ॥ 'सत्य तु द्विविधं प्रोक्तं सावृत पारमार्थिकम्' इत्यत्र सांवृतमेव प्रथमोद्दिष्टमिति तस्यैव प्रथम लक्षण वाच्यम्। न तु तदनन्तरोक्तस्य पारमार्थिकसत्यस्य। तथाप्युक्तिलाघवानुसन्धानवता शून्यवादिना पारमार्थिकसत्यस्यैव प्रथम लक्षणमुक्तमिति भावः। यद्यपि 'निवृत्तौ पारमार्थिकम्' इत्यनेनैव लक्ष्यतावच्छेदकलक्षणयोरभिधाने लक्ष्यतावच्छेदकस्यैव लक्षणत्वप्रसङ्ग इति व्याप्तिग्रहदशायामेव [1]पक्षतावच्छेदकसाध्यसिद्धे॰ सिद्धसाधनं दोषो भवति तथापि सिषाधयिषामादाय पक्षतासत्त्वान्नानुमानवैफल्यमिति भाव। एतदस्वरसादाह ॥ अथ वेति ॥ तथा च व्यवहाराविषयत्वं लक्ष्यतावच्छेदकम्। कालत्रयाबाध्यत्व लक्षणमिति नोक्तदोष इति भाव.। एतेन 'निवृत्तौ पारमार्थिकम्' इत्यत्र निवृत्तिप्रतियोगितया व्यवहारप्रपञ्चावुभावप्यभिप्रेताविति गम्यते। विचार्यमाण इत्यस्य साकाङ्क्षतया विवक्षितार्थे पर्यवसानाभावात्तदर्थं यस्येत्यादिपदचतुष्टयमध्याहरति ॥ यस्येति ॥ विचार किंरूप इत्याकाङ्क्षायां परोक्त्यैव विचारस्वरूप दर्शयन्योजयति ॥ प्रागूर्ध्वमिति ॥ इत्यादीत्यादिपदं प्रकारार्थम्। इत्येवंप्रकारेण विचार्यमाण इत्यर्थ॰ ॥ हानाद्यविषयत्वादिति ॥ हानोपादानादिव्यवहाराविषयत्वात्। पद्यत इति पदं विषयः। व्यवहारस्य पदं व्यवहारपदमिति व्यवहारविषयत्वे लक्षणेऽभिहितेऽसत्पारमार्थिकयोर्नातिव्याप्तिरित्यर्थः। जगतो व्यावहारिकसत्त्वं शून्यवादिना ऽङ्गीक्रियते इत्येतत्कुतो ज्ञायते इति प्रश्ने उक्तयोजनाया अनुत्तरत्वाद्योजनान्तरमाह ॥ इत्यादिनेति ॥ यद्यपि 'इत्यादिना अङ्गीक्रियमाणत्वात्' इति योजनायामपि तदङ्गीकारो ज्ञातुं शक्य.। इत्यादिनेति तृतीयान्तेन हेतोरुपन्यासात्। तथापि 'शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यते' इति न्यायात्प्रतिपत्तिलाघवाच्च द्वितीययोजनैव गरीयसीति भाव.।

(रा टि) ॥ परप्रमेयेपीतीति ॥ वैलक्षण्याभाव इत्यनुषङ्ग. ॥ परमार्थापेक्षयैवेति ॥ [2]न तु शशविषाणमिव नि स्वरूपलक्षणमसदित्युच्यते। तथा चासदित्यमुख्य सदेव तेनाङ्गीक्रियते। यथा परमार्थब्रह्मापेक्षया मायावादिना जगदसदित्युच्यते तथैवेत्यर्थः।

शून्यवादिमतमाशङ्कते ॥ अथ पुनरिति ॥ विद्योदय इति ॥ शून्यतत्वसाक्षात्कारे सतीत्यर्थ। निरुपाख्यतां नि स्वरूपतामङ्गीकृत्य [3]तद्विधारूपजगतोऽसत्त्वमुच्यतेति शून्यवादिनेत्यनुषङ्गः। तन्मात्र न

---

[1] लक्ष्यतावच्छेदकरूपपक्षतावच्छेदकावच्छिन्ने साध्यसिद्धे इति पाठेन भाव्यमिति भाति।

[2] परमार्थभूतशून्यापेक्षयैव जगदसदित्युच्यते। न तु इति पाठेन भाव्यमिति भाति।

[3] अविद्यारूपजगतोऽसत्त्वमुच्यते। शून्य इति पाठेन भाव्यमिति भाति।

(रा टि) वैलक्षण्यापादकमिति भावेनाह ॥ काममभिधीयतामितीति ॥ इतिशब्दः शङ्कान्तरसमाप्तौ । इति काममभिधीयतामिति वा योजना । तर्हि कथमवैलक्षण्यमित्यत आह ॥ व्यावहारिकमसत्त्वञ्चेति ॥ पूर्वेणेति ॥ 'न च शून्यवादिन' इत्यादिप्रतिज्ञावाक्येनेत्यर्थः । सन्नियते अनयेति सम्पूर्वात् वृञ् वरण इत्यत करणे क्तिन्निति भाव ॥ तत्कृतमिति ॥ सवृतेरिदमित्यर्थेऽण्प्रत्यय इति भावः । कृतमिति फलितोक्ति ॥ इतीति ॥ अत इति योज्यम् ॥ भृङ्गग्राहिकयेति ॥ श्रृङ्गग्रहणेनेत्यर्थः । धात्वर्थनिर्देशे ण्वुलिति गृह्णातेर्ण्वुल्यकादेशस्त्रीप्रत्ययाभ्यो. सतोर्ग्राहिकेति सिद्धे. । लक्ष्यमूत दर्शयतीत्यर्थः । फलितमाह ॥ तद्व्यावहार्यमिति ॥ हानादिव्यवहाराविषय इत्यर्थः ॥ वाक्यलाघवादिति ॥ प्रथमनिर्दिष्टस्य सावृतसत्यस्यैवादौ लक्षणे वाच्येपि निवृत्तौ पारमार्थिकमित्येकेनैव वाक्येन लक्ष्यलक्षणयोरुक्तौ लाघवमिति तल्लोभात्पश्चादुक्तस्यापि लक्षणमाह शून्यवादीत्यर्थः । हानादिव्यवहारनिवृत्ताविति पूर्वं व्याख्यातम् । अधुना व्यावहार्यप्रपञ्चनिवृत्तावित्यर्थमुपेत्याह ॥ अथ वेति ॥ श्लोक व्याचष्टे ॥ विचार्यमाणे यस्येत्यादिना ॥ अत्यन्तामत इति ॥ व्यावृत्तिरित्यनुषङ्ग । व्यावर्त्यं वदन्नेव लक्षण निर्धारयति ॥ पारमार्थिकस्येति ॥ हानादीति ॥ एतेन व्यवहारपदेनात्रोपादानहानरूपव्यवहारोऽभिमतो नाभिलपनादिर्येन व्याहतिशङ्कावकाश. स्यादिति सूचितम् ॥ धर्मदेशनेति ॥ धर्मोपदेश इत्यर्थ. ॥ इति सम्बन्ध इति ॥ तृतीयान्तस्य पूर्ववाक्यगतपञ्चम्यन्तेनान्वय इत्यर्थः । वाक्यस्य ज्ञापकतया कारकत्वाभावाद्योजनान्तरमाह ॥ इत्यादिनेति ॥ तदङ्गीकारो व्यावहारिकसत्त्वाङ्गीकार ।

(वे. टि.) ॥ जगदसदुच्यत इति ॥ पारमार्थिकसद्विलक्षणमुच्यत इत्यर्थः । ननु शून्यवादिना न परमार्थापेक्षया जगतोऽसत्त्वमुच्यते । किन्तु विद्योदयेऽविद्याया निरुपाख्यत्वमङ्गीकृत्यासत्त्वमुच्यते । एवं चापरप्रमेये वैलक्षण्यं प्राप्तमेवेति शङ्कते ॥ अथेति ॥ तावता शब्दकृतवैलक्षण्येपि नार्थकृतं वैलक्षण्यमित्यभिप्रेत्याह ॥ काममिति ॥ यद्वा ननु मायावादिना जगदसदिति न कुत्रापि व्यवहृतमित्यतस्तद्वाक्यं पठति ॥ अथेति ॥ इति मायावादिनोच्यत इति सम्बन्ध ॥ वाक्यलाघवादिति ॥ निवृत्तौ पारमार्थिकमित्येकेनैव वाक्येन श्रृङ्गग्राहिकया प्रदर्शनलक्षणयोर्लाभादुद्देशक्रमोल्लङ्घनमिति भाव ।

ननु सावृत व्यावहार्यं स्यादित्येतदपि लक्षणपरतयैव कुतो न व्याख्यातम् । उद्देशानन्तरं लक्षणस्यैव वक्तव्यत्वात् । श्रृङ्गग्राहिकया प्रदर्शनस्यासार्वत्रिकत्वादिति चेन्न । तथात्वे 'व्यवहारपदं च यत्' इत्यादिना पौनरुक्त्यापत्ते । अत इत्थं व्याख्यातमित्यवधेयम् । यस्य तत्सांवृतं ज्ञेयमित्यन्तं मूलवाक्यम् । प्रागूर्ध्वमित्यारभ्य व्याख्यानमिति विवेक ।

एवञ्च विचार्यमाण इत्यस्य साकाङ्क्षतया विवक्षितार्थे पर्यवसानाभावात्तदर्थं यस्येत्यादिपदचतुष्टयमध्याहरति ॥ यस्येति ॥ इति व्याख्यानं मूलपाठसम्प्रदायानभिज्ञकृतमित्यवधेयम् । विचार्यमाण इत्युक्तं विचारं परोक्त्यैव दर्शयन्व्याख्याति ॥ प्रागूर्ध्वमित्यादिना ॥ जगतो व्यावहारिकसत्त्वं शून्यवादिनाऽङ्गीकृतमिति

(वे टि) कुतो ज्ञायत इति प्रश्ने उक्तयोजनाया अनुत्तरत्वाद्योजनान्तरमाह ॥ इत्यादिना शून्यवादिवाक्येनेति ॥ अत्र 'तदङ्गीकारो ज्ञायते' इति शेष इति भाव ।

(द्वै. यु) निरुपाख्यत्वम् स्वकार्ये सहाप्रतीयमानत्वम् । तथा च जगत· अविद्योपादानकत्वात्सत्त्वमेव । परमविद्यारूपोपादाननाशेन नाशमात्रम् । कपालनाशेन घटस्येव । शून्यवादिना त्वसत्त्वमुच्यते । अतो महावैलक्षण्यमपरप्रमेय इति शङ्काभिमान । ज्ञानेनाज्ञाननाश इति तेन मुखत उक्तावपि तस्य ज्ञानाद्बाध एवोच्यते । बाधश्च स्वरूपतस्त्रैकालिकसत्त्वापहार एवेति तस्य तन्मूलकप्रतीतिविषयजगतश्च सत्त्वाभावो मायावादिमते वर्तत एवेत्युक्ताभिमानो न युक्त इत्यभिसन्धिनाह ॥ काममभिधीयतामिति ॥ ननु मायावादिना जगति व्यावहारिकत्वं नाम सत्त्वविशेषोऽङ्गीक्रियत इत्यत आह ॥ व्यावहारिकसत्त्वं त्विति ॥ तेन शून्यवादिना । सावृतं व्यावहार्यं स्यादित्यादेर्लक्षणकथनपरत्वे विचार्यमाणे नो सत्त्वमित्युत्तरमूलवैयर्थ्यम् । न च लक्षणान्तरकथनपरं तदिति वाच्यम् । मध्ये पारमार्थिकलक्षणमुक्त्वा पुनस्तत्कथने बीजाभावात् । व्यवहारपदं च यदित्यंशे पौनरुक्त्यापत्तेश्चेत्यतस्तद्वाक्यमवतार्य व्याचष्टे ॥ अनेनेत्यादिना ॥ पारमार्थिकसत्त्वलक्षणकथकवाक्यान्तरानुपलम्भान्न्यूनतापरिहाराय तद्वाक्यमेवावृत्त्या व्याचष्टे किंलक्षणक इत्यादिना ॥ अत्यन्तासत इति ॥ मायावादिवदेव तेनाप्यत्यन्तासत. सत्त्वेन प्रतीतिर्न स्वीक्रियते इत्युक्तदलेन तद्व्यावृत्तिरिति भाव ।

(गु. टि.) ॥ यतः परमार्थापेक्षयैव शून्यवादिना जगदसदित्युच्यत इति ॥ न तु सर्वथा सत्त्वानधिकरणत्वाभिप्रायेणेति यावत् । ततो न जगदसत्त्व तन्मतेऽपीति भाव. । ननु तदीयाया जगदसत्त्वोक्तेः सर्वथा सत्त्वानधिकरणत्वनिमित्तकत्वमेवास्तु । न तु पारमार्थिकसत्त्वानधिकरणत्वनिमित्तकत्वम् । ततश्च तन्मते जगतोऽसत्त्वमवर्जनीयमेवेति कथं जगतोऽसत्त्वनिषेध इत्यतस्तथा सति मायावादिनोपि जगदसत्त्वोक्तेः सर्वथा सत्त्वानधिकरणत्वाभिप्रायकत्वप्रसङ्गेन पारमार्थिकसत्त्वानधिकरणत्वनिमित्तकत्वाभावेन जगतोऽसत्त्वापत्त्या अनिर्वचनीयत्वाभावेन तद्वादित्व न स्यात् । अतस्तत्सरक्षणार्थं तदीयाया जगदसत्त्वोक्ते पारमार्थिकसत्त्वानधिकरणत्वाभिप्रायनिमित्तकत्ववच्छून्यवादिनस्तदुक्तेरपि पारमार्थिकसत्त्वानधिकरणत्वनिमित्तकत्वसिद्ध्या जगतोऽसत्त्वाभावसिद्धिरप्रत्यूहैवेत्याशयेन प्रतिबन्दीमाह ॥ यथा मायावादिनेति ॥ यथा मायावादिना परमार्थापेक्षयैव पारमार्थिकसत्त्वानधिकरणत्वाभिप्रायेणैव जगदसदित्युच्यते । न तु सर्वथा सत्त्वानधिकरणत्वाभिप्रायेणेति जगतो नासत्त्वं तथेत्यर्थ. । अन्यथा तन्मतेपि जगतोऽसत्त्वेन तस्यापि असद्वादित्व स्यादिति भाव ।

ननु भवेदेतदेव यदि मायावादिना जगदसदुच्यते इति सिद्ध स्यात् । तदेव कुत. सिद्धम् । तथा च नोक्तप्रतिबन्धवसर इत्यतस्तद्वाक्यादेव तत्सिद्धेर्युक्ता प्रतिबन्दीत्याशयेन तद्वाक्यमुदाहरति अथ पुनर्विद्योदय इत्यादिना काममभिधीयतामित्यन्तेन ।

नन्वेवं मायावादिनो जगदसत्त्वोक्तिसिद्धावपि तस्या मायावादिनस्तद्व्यावहारिकत्वाङ्गीकारेण सर्वथा सत्त्वानधिकरणत्वाभिप्रायकत्वानुपपत्त्या पारमार्थिकसत्त्वानधिकरणत्वसिद्ध्या जगतोऽसत्त्वाभावसिद्धावपि शून्य-

(गु टि) वादिनस्तदुक्ते. सर्वथा सत्त्वानधिकरणत्वाभिप्रायकत्वे बाधकाभावेन पारमार्थिकसत्त्वानधिकरणत्वमात्रनिमित्तकत्वासिद्ध्या जगतोऽत्यन्तासत्त्व तन्मते दुर्वारमेवेत्यत. शून्यवादिनो जगदसत्त्वोक्तेरपि शून्यवादिना जगतो व्यावहारिकत्वाङ्गीकारेण सर्वथा सत्त्वानधिकरणत्वाभिप्रायकत्वासम्भवेन पारमार्थिकसत्त्वानधिकरणत्वमात्रनिमित्तकत्वसिद्ध्या न तन्मतेऽपि जगतोऽसत्त्वमित्याशयेनाह ॥ व्यावहारिकमस्त्वस्येति ॥ मायावादिनेव शून्यवादिनापि व्यावहारिकसत्त्वस्याङ्गीक्रियमाणत्वादित्यर्थ ।

ननु शून्यवादिनो जगतो व्यावहारिकत्वाङ्गीकारे ज्ञापकाभावेन तदसिद्ध्या तदीयजगदसत्त्वोक्के सर्वथा सत्त्वानधिकरणत्वनिमित्तकत्वसम्भवेन जगतोऽसत्त्व दुर्वारमेवेति शङ्कते ॥ तत्कुतो ज्ञायत इति ॥ तथा सति मायावादिनोपि ज्ञापकाभावेन तदङ्गीकारासिद्ध्या तदीयजगदसत्त्वोक्तेरपि सर्वथा सत्त्वानधिकरणत्वनिमित्तकत्वसम्भवेन तन्मतेऽपि जगतोऽसत्त्वमवर्जनीयमेव । यदि च मायावादिवाक्यस्यैव तदीयजगद्व्यावहारिकत्वाङ्गीकारज्ञापकत्वेन तत एव तत्सिद्ध्या न तदीयजगदसत्त्वोक्ते सर्वथा सत्त्वानधिकरणत्वनिमित्तकत्वमिति न तन्मते जगतोऽसत्त्वमिति मन्यसे हन्त तर्हि शून्यवादिवाक्यस्यैव तदङ्गीकारज्ञापकत्वेन तत एव शून्यवादिनोपि जगद्व्यावहारिकत्वाङ्गीकारसिद्धिसम्भवेन तदीयजगदसत्त्वोक्तेरपि सर्वथा सत्त्वानधिकरणत्वनिमित्तकत्वाभावेन न तन्मतेपि जगतोऽसत्त्वमिति दुरुद्धरा प्रतिबन्दितरङ्गिणीत्याशयेनाह ॥ तद्वाक्या देवेति ॥

ननु लक्षणप्रमाणाभ्यामेव वस्तुसिद्धे सवृतिलक्षणप्रमाणयोश्च दुर्निरूपत्वात्संवृतेरेवासिद्धेर्न सावृतमङ्गीकर्तुं शक्यमित्यतोऽविद्यालक्षणादिकमेव तल्लक्षणादिकमिति भावेन तयोर्भेदे तदनुपपत्ते. संवृतिशब्दमविद्यापरत्वेन व्याख्याति ॥ संवृतिरविद्येति ॥ अभिधानादेरभावात्कथ संवृतिशब्दस्याविद्यापरत्वमित्यतो रूढ्यभावेऽपि योगेन तत्परत्वसम्भवान्नानुपपत्तिरिति भावेन तं दर्शयति ॥ संव्रियते अनयेतीति ॥ शृङ्गग्राहिकयेति ॥ यथा 'का गौ.' इति पृष्टे शृङ्गे कर्णे वा गा गृहीत्वा 'इयं गौ.' इति व्यक्तिपुरस्कारेण निर्देश क्रियते तथा 'के ते द्वे सत्ये' इति पृष्टे 'इद सावृत सत्य इद पारमार्थिकम्' इति व्यक्तिपुरस्कारेण व्यक्तिद्वयं दर्शयतीत्यर्थः । न च 'सांवृतं व्यावहार्यं स्यात्' इत्येतदपि लक्षणपरतयैव कुतो न व्याख्यायते । 'उद्दिष्ट च लक्ष्यते' इति न्यायेन उद्देशानन्तरं लक्षणस्यैव वक्तव्यत्वाच्छृङ्गग्राहिकया प्रदर्शनस्यासार्वत्रिकत्वाच्चेति वाच्यम् । तथा सति 'व्यवहारपदश्च यत्' इत्यादिना पौनरुक्त्यापत्त्या तथाऽव्याख्यानोपपत्ते· । ननु 'यथोद्देश लक्षणप्रणयनम्' इति न्यायेन पूर्वमुद्दिष्टस्य पूर्वं पश्चादुद्दिष्टस्य पश्चादेव लक्षणीयतया कथं पश्चादुद्दिष्टस्य प्रथम लक्षणकथनमित्यत आह ॥ वाक्यलाघवादिति ॥ 'निवृत्तौ पारमार्थिकम्' इत्येकेनैव वाक्येन शृङ्गग्राहिकया दर्शनलक्षणयोर्लाभादुद्देशक्रमोल्लङ्घनमित्यर्थ । अन्यथा पुनर्व्यवहारपदोपादाने गौरवप्रसङ्गादिति भावः । विचार्यमाण इत्युक्तं विचारप्रकारमेव परोक्तरीत्या दर्शयति ॥ प्रागूर्ध्वमित्यादिना ॥ सम्बन्ध इति ॥ तत 'ततश्च किम्' इत्याकाङ्क्षाग्रस्तत्वेन साकाङ्क्षतया वाक्याभासत्वशङ्का नेति भावः । 'जगतो व्यावहारिकसत्त्वं शून्यवादिना अङ्गी-

(गु टि) कृतमिति कुतो ज्ञायते' इति शङ्काग्रन्थानुगुणत्वायोजनान्तरमाह ॥ इत्यादिना शून्यवादिवाक्येनेति ॥ अत्र 'तदङ्गीकारो ज्ञायते' इति साकाङ्क्षत्वपरिहाराय मूले शेषपूरणमिति ज्ञातव्यम् ।

शून्यवादमायावादयो परप्रमेये वैलक्षण्याभावोपपादनम्

(टी) एवमपरप्रमेये वैलक्षण्याभावमुपपाद्य परप्रमेयेऽपि तमुपपादयति

न च निर्विशेषब्रह्मवादिनः शून्यात्कश्चिद्विशेषस्तस्य

यद्यपि मायावादी जगत्कारणं ब्रह्म वदति शून्यवादी च शून्यं तथापि ब्रह्मवादिनस्तस्य ब्रह्मणः शून्यान्न कश्चिद्विशेषः। निर्विशेषत्वेनाङ्गीकृतत्वात् । निर्विशेषमपि ब्रह्म शून्याद्विशिष्यत इत्यङ्गीकारे स्वव्याघातात् ।

मा भूच्छून्याद्ब्रह्मणो निर्विशेषत्वाद्विशेषः । शून्यस्य तु ब्रह्मणो विशेषः किं न स्यादिति मन्दाशङ्कामपनुदन् 'न केवल स्वव्याघातात् विशेषाभावो ब्रह्मशून्ययोः । किन्नाम । यादृशं शून्यवादिनः शून्यं मन्यन्ते तादृशमेव मायावादिनो ब्रह्माङ्गीकुर्वते अतोऽपि' इत्यभिप्रायेण शून्यवादिवाक्यं तावत्पठति

निर्विशेष स्वयं भातं निर्लेपमजरामरम् ।

शून्यं तत्वम् ....... .... . ॥

शून्यमित्युक्ते निःस्वरूपत्वं प्राप्तम् । अत उक्त तत्वमिति । तर्हि कथं शून्यमित्यत आह ॥ निर्विशेषमिति ॥ सविशेष एव वस्तुनि प्रमाणप्रवृत्तेः तदसिद्धिः स्यादित्यत उक्तं ॥ स्वयंभातमिति ॥ अनेनात्मैव शून्यमित्युक्तम् । अन्यथा तस्य स्वयंभातत्वेन जिज्ञासोः कथ तत्सिद्धिः स्यात् । तथा चाऽऽत्मनः पापादिलेपो जरामरणादिकश्च विशेषो दृश्यत इत्यतो देहधर्मा एवैते नाऽऽत्मधर्मा इति भावेनोक्तम् ॥ निर्लेपमजरामरमिति ॥ तथापि स्वयंभातपदेन स्वविषयप्रकाशत्व विशेष उक्त इत्यत आह

........ अविज्ञेयम् ... .. ।

तदेव विवृणोति

.. ... मनोवाचामगोचरम् ॥

अपरप्रकाश्यत्वं स्वयंभातत्वम् । न तु स्वविषयप्रकाशत्वमिति ।

(वि टि) नन्वेतावता प्रपञ्चरूपैकदेश एव मायावादिमतस्य तन्मतादविशेष उक्तः । न कार्त्स्न्येन । न हि तावता मतयोरविशेषो वक्तु शक्यते । एकदेशेन साम्यस्य सर्वमतसाधारणत्वादित्याशङ्क्य तत्परिहाराय

(वि टि.)कात्स्न्येन साम्यमापादयितु 'न च निर्विशेषब्रह्मवादिन. शून्याद्विशेषस्तस्य' इत्युक्तम्। तदवतारयति ॥ एवमिति ॥ ब्रह्मशब्दशून्यशब्दाभ्यामेव तदुभयमतयोरविशेष । न तु प्रकारान्तरेणेति परिशेषयितुं शब्दमयुक्तं विशेष शङ्कते ॥ यद्यपीति ॥ सत्यम् । तथापि मायावादी ब्रह्मशब्देन शून्यमेव वदतीति गम्यते । न हि मायिमते ब्रह्मशब्दार्थं सविशेष । निर्विशेषत्वाङ्गीकारात्। तथाऽङ्गीकारेऽपसिद्धान्तात् । तथा च ब्रह्मवादित्व तस्य शून्यवादित्वमेव पर्यवसितमिति परिहरन्न्याचष्टे ॥ तथापीति ॥

ननु विशेषरहितत्वमात्रेण ब्रह्मशून्ययोरविशेषेपि ब्रह्मशब्दार्थं शून्यशब्दार्थाद्विशिष्यत इत्यङ्गीकारे को दोष इत्यत आह ॥ निर्विशेषमपीति ॥ विशिष्यत इति कार्ऽर्थ । किं ततो भिद्यत इति किं वा विशेषवदिति। आद्येपि किं भेद पारमार्थिक किं वाऽपारमार्थिक. । आद्येऽद्वैतवादित्वक्षते । द्वितीये ब्रह्मशून्ययोर्वास्तवाभेदप्रसङ्गादिति बहिरेवाऽद्यं पक्षं निरस्य द्वितीयं निराह ॥ स्वव्याघातादिति ॥ निर्विशेष विशेषवदित्युक्ते निर्वह्निर्वह्निमानितिवत्स्वाङ्गीकारविरोधप्रसङ्गादित्यर्थ ।

ब्रह्मणो निर्विशेषत्वेन शून्यादविशिष्टत्वेपि शून्यस्य तु ब्रह्मणो विशेषः किं न स्यात् । लोके सर्वेषु पदार्थेषु मध्ये कस्यचित्पदार्थस्य कुतश्चित्पदार्थात्केनचिद्रूपेणाविशेषेपि केनचिद्रूपेण विशेषदर्शनादिति शङ्कामनूद्य तन्निराकरणार्थं शून्यवादिना यादृश निर्विशेषत्वेनाङ्गीकृत तादृशमेव मायावादिनाऽपि ब्रह्म निर्विशेषत्वेनाङ्गीकृतमिति प्रतिपादयितुं शून्यवादिवाक्यमेव पठनीत्याह ॥ मा भूदिति ॥ म्लेच्छार्ययो स्वस्वाभिमतार्थे यववराहशब्दानुगमवत् शून्यवादिमायावादिनोरपि स्वस्वाभिमतार्थे निर्विशेषादिशब्दानुगमेपि नार्थानुगम इति शङ्कां वारयितु मायावादिभिर्निर्विशेषादिशब्दाना येऽर्था स्वीकृता यच्च तद्विशेषणन्यावर्त्यं तत्सर्वमपि शून्यवादिमता विशिष्टमिति प्रतिपादयति शून्यं तत्वमित्यादिना ॥ तत्वमिति ॥ स्वरूपेणानारोपितमित्यर्थ ॥ तर्हीति ॥ लोके तत्वमिति व्यवह्रियमाण किमपि शून्यमिति न व्यवह्रियते इति शङ्कितुरभिप्राय ॥ सविशेष एवेति ॥ प्रत्यक्षस्य स्वसन्निकृष्टे उद्भूतरूपादिविशेषवत्येव प्रवृत्तिदर्शनात् अनुमानस्यापि स्वविषयेण व्याप्त्यादिरूपविशेषं विना तदबोधकत्वात् शब्दस्यापि प्रवृत्तिनिमित्तरूपविशेषपुरस्कार विना प्रत्यायकत्वादर्शनात् वाक्यार्थस्य पदार्थनिरूपितसंसर्गरूपतया सविशेषत्वावश्यम्भावाच्चेत्यर्थ. ॥ अनेनेति ॥ शून्य निर्विशेष स्वय भातमिति प्रतिपादनेन आत्मैव शून्यशब्दितजिज्ञासुरात्मैव शून्यं तज्जिज्ञास्यं शून्य तत्वम् । नान्यदित्युक्त भवतीत्यर्थ ।

शून्यजिज्ञासोरात्मनः शून्याभेदाभावेऽनिष्टमाह ॥ अन्यथेति ॥ शून्यस्य स्वयंभातत्वेपि तज्जिज्ञासोरहमिति प्रतीयमानस्यात्मन. शून्याभेद विना कथं शून्यसिद्धि स्यात् । न कथमपि । निर्विशेषे शून्ये प्रमाणप्रवृत्त्यसम्भवेन ततस्तत्सिद्ध्यसम्भवादित्यर्थः । नन्वात्मन. पापादिलेपरूपविशेषयुक्तत्वाज्जरामरणादिरूपविशेषवत्त्वाच्च कथं तस्य निर्विशेषशून्याभेद इत्याशङ्क्य आत्मनि तद्दर्शन शुक्तिरूप्यदर्शनवत्प्रतीतिमात्रम् । न यथार्थमित्यतो देहधर्मा एवैते पापलेपादयो न त्वात्मधर्मा इति न तस्य शून्याभेदोऽसम्भवीति परिहारमभिप्रेत्य शून्यवादिना निर्लेपमजरामरमिति शून्य विशेषितमित्याह ॥ तथा चेति ॥

(वि टि )ननु स्वप्रकाशत्वे निर्विशेषत्व विरुद्धम्। स्वविषयप्रकाशत्वरूपविशेषवत्त्वादित्याशङ्कते।।तथापीति।। मनोवाचामगोचरमित्येतत्प्रतिपाद्यस्य अविज्ञेयमित्यनेनैव लाभाद्वैयर्थ्यमित्यत आह ॥ तदेवेति ॥ अविज्ञेयमित्यनेन स्वविषयप्रकाशत्वप्रयुक्तसविशेषत्वशङ्कावारणमुपपादयति ।। अपरेति ।। परप्रकाश्यत्वराहित्यमित्यर्थ. । स्वयमाततं परप्रकाश्यत्वाभावरूपमेव विवक्षितम् । न तूक्तमित्यर्थ. ।

(रा टि ) 'शून्यमेव ब्रह्मेत्याह मायी' इति वाच्ये निर्विशेषेत्यादिवाक्यविन्याससूचितशङ्कामनूद्य तदङ्गीकृत्य प्रकारान्तरेण साम्योक्तिपरतया मूलं योजयति ।। यद्यपीति ।। विशिष्यत इति ।। विशेषवदातिष्ठत इत्यर्थः ।। मन्दाशङ्केति ।। ब्रह्मण शून्याद्विशेषो नेत्युक्तया शून्यस्यापि ब्रह्मतो विशेषो नेत्यर्थाल्लब्धत्वादिति भावः ।। अतोऽपीति ।। वादिद्वयेन शून्यब्रह्मणोरेकरूपत्वाङ्गीकारादपि ब्रह्मशून्ययोर्विशेषाभाव इत्यनुषङ्ग ।।अन्यथेति।। शून्यस्याऽत्मनोऽन्यत्व इत्यर्थ. ।। जिज्ञासोरिति ।। शून्यज्ञानेच्छोः शून्यसिद्धि कथ स्यात् । तत्र प्रमाणाप्रवृत्ते-रित्यर्थः ।। तथा चेति ।। आत्मन एव शून्यस्वरूपत्वे सतीत्यर्थ । अविज्ञेयमित्याद्युक्त्या चोद्यस्य किमुत्तरमित्यत आह ॥ अपरेति ॥ परप्रकाश्यत्वाभाव इत्यर्थ. ।

(वे टि.) ॥ परप्रमेयेऽपीति ॥ एव च मूले चशब्दोऽप्यर्थस्तस्येत्यनेन सम्बद्ध्यत इत्युक्त भवति । ब्रह्मवादिनस्तस्येति व्यधिकरणे षष्ठ्यौ । न कश्चिद्विशेष इत्यत्र विशेषो वैलक्षण्य विवक्षितम् । अत्र निर्विशेष-ब्रह्मवादिपदेनोक्त हेतुमाह ।। निर्विशेषत्वेनेति ।। अयमत्र प्रयोग । ब्रह्म न शून्यविलक्षण न तत्राविद्यमान-लक्षणवदिति यावत् । निर्धर्मकत्वेनाङ्गीकृतत्वात् शून्यवदिति । अत्रानुकूलतर्कमाह ॥ निर्विशेषमपीति ॥ निर्धर्मकमपीत्यर्थ । विशिष्यते विरुद्धलक्षणेन लक्ष्यते । यद्वा न कश्चिद्विशेष इत्यत्र व्यावृत्त्यादिरूपो विशेष. कोऽपि नास्तीति प्रतिज्ञार्थ । तत्र निर्विशेषत्वेनाङ्गीकृते व्यावृत्त्यादिविशेषाङ्गीकारे स्वव्याघातप्रसङ्ग एव साधक-त्वेन विवक्षित· । अत· प्राग्व्याघातेनेत्यादिवक्ष्यमाण पुनरुक्तिपरिहार सङ्गच्छत इति ध्येयम् ।

न हि यद्विलक्षणं न भवति तत्तद्विलक्षणमिति क्वचिद्दृष्टम् । अत कथमियं शङ्का स्यादित्यत आह ॥ मन्देति ॥ विशेषाभाव. वैलक्षण्याभाव ॥ तत्वमितीति ॥ तत्वपदेनानारोपितस्वरूपमुच्यत इति भाव· ॥ सविशेष एव वस्तुनीति ॥ इन्द्रियसन्निकर्षादिस्वरूपविशेषवत्येवेन्द्रियप्रवृत्ते· व्यापकतावच्छेदकरूपविशेष-वत्येवानुमानप्रवृत्तेः शक्यतावच्छेदकरूपधर्मवति शक्यसम्बन्धरूपविशेषवति वा शक्यार्थगुणसदृशगुणयोगवति वा शब्दप्रवृत्तेरिति भावः ॥ अनेनेति ॥ अधिकारिणः कथ शून्यसिद्धि तत्र प्रमाणाप्रवृत्तेः इत्याशङ्काया स्वयं भातमित्युत्तरदानेनेत्यर्थ । नन्वेवमुत्तरदानेऽपि कथमात्मैव शून्यमिति प्राप्तमित्यत आह ॥ अन्यथेति ॥ अधि-कारिण शून्यत्वाभावे । अधिकारिण शून्याभेदे तु स्वस्वरूपं स्वेन ज्ञायत इति तदभिन्न शून्यमपि विज्ञात भवतीति भाव ।

(द्वै सु.) ॥ मन्दाशङ्कामिति ॥ शून्यस्य ब्रह्मण. सकाशाद्विशेषसत्त्वे ब्रह्मण शून्यवृत्तिवैलक्षण्यप्रतियो-गित्वलक्षणविशेषप्राप्त्या निर्विशेषत्वभङ्गापत्त्या नैषा शङ्का सुज्ञाना युक्ता । अतो मन्देत्युक्तम् । यद्वा सर्वविशेषशून्यत्वादेव शून्यमिति व्यवहारगोचरत्वात्तस्य विशेषवत्त्वशङ्का पण्डितानां न भवतीत्यतो मन्दाशङ्केत्युक्तम् ॥ अन्यथेति ॥ स्वयंप्रकाशस्य शून्यस्यात्मान्यत्वे । निर्लेपत्वादेरप्रसक्तप्रतिषेधपरत्वशङ्कानिरासायाह ॥ तथा चेति ॥ शून्यस्यैवात्मत्व इत्यर्थ. ।

(गु टि.) अपरप्रमेये जगतीत्यर्थ ॥ परप्रमेयेऽपीति ॥ कारणाशेऽपीत्यर्थ । एवञ्च मूले चशब्दोऽप्यर्थ । स च तस्येत्यनेन सम्बद्ध्यत इत्युक्तं भवति । ब्रह्मवादिनस्तस्येति व्यधिकरणे षष्ठ्यौ । विशेष वैलक्षण्यम् । अत्र निर्विशेषेति हेतुगर्भं विशेषणमिति भावेन तस्यासिद्धिं परिहरति ॥ निर्विशेषत्वेनेति ॥ अयमत्र प्रयोग । ब्रह्म शून्यविलक्षण न । तत्राविद्यमानलक्षणवत्त्वेति यावत् । निर्धर्मकत्वेनाङ्गीकृतत्वाच्छून्यवदिति । अत्राप्रयोजकत्वमाशङ्क्य व्याहतत्वेन तच्छङ्काया एवानुदयान्न विपक्षे बाधकस्य वक्तव्यतेति भावेनाह ॥ निर्विशेषमपीति ॥ ब्रह्मण. शून्याद्विलक्षणत्वाभावेऽपि शून्यस्य ब्रह्मण: सकाशाद्वैलक्षण्यं किं न स्यादिति शङ्का न भवितुमर्हति । ययोर्द्वयोर्मध्ये एकस्य यद्वैलक्षण्य नास्ति तत्रापरस्यापि तद्वैलक्षण्यादर्शनेन निर्मूलत्वादित्यत उक्तम् ॥ मन्दानामिति ॥ विशेषाभावः वैलक्षण्याभाव. ॥ तत्वमितीति ॥ ततश्चानारोपितरूपत्वान्न नि स्वरूपत्वमिति भाव: ॥ सविशेष एवेति ॥ सधर्मक एवेत्यर्थ । रूपादिमत्त्वेव चक्षुरादेः, व्याप्त्या व्यापकतावच्छेदकधर्मविशिष्टत्वेन पक्षधर्मतया च पक्षसंसृष्टत्वेन पक्षे साध्यस्य सिद्ध्योक्तधर्मवत्त्वेवानुमानस्य, शब्दप्रवृत्तिनिमित्तादिमत्त्वेव च शब्दस्य प्रवृत्तिदर्शनादिति भाव. ॥ अनेनेति ॥ अविकारिण: कथं शून्यसिद्धि । तत्र प्रमाणाप्रवृत्तेरित्याशङ्काया स्वयं भातमित्युत्तरदानेनेत्यर्थ । स्वयं भातमित्युक्तेरुक्ताभिप्रायकत्वं विपक्षे बाधककथनेनोपदर्शयति ॥ अन्यथेति ॥ अस्त्वेवमुक्ताभिप्रायकत्वं स्वयभातमित्युक्ते । तत: किमित्यत आह ॥ तथा चेति ॥ तथा सतीत्यर्थ. ॥ विशेषो दृश्यत इतीति ॥ [1] विशेषो न दृश्यत इत्यर्थ । तस्य निर्विशेषत्वात् । अन्यथा तद्भङ्गप्रसङ्गादिति भाव ॥ अपरप्रकाश्यत्वमिति ॥ पराप्रकाश्यत्वमित्यर्थ ।

(टी ) तथापि सत्यज्ञानादिविशेषाङ्गीकारात्कथं निर्विशेषत्वमित्यत आह

जाड्यसंवृतिदुःखान्तपूर्वदोषविरोधि यत् ।

जाड्यविरोधित्वं संवृतिविरोधित्वं चोपादाय ज्ञानव्यवहारः । न तु ज्ञानत्वजातियोगात् । न च संवृतिविरोधित्वे सदा संवृत्यभावः स्यादिति वाच्यम् । प्रमाणज्ञानोपचितस्यैव संवृतिविरोधाभ्युपगमात् । किञ्च जाड्य इव तादात्म्यविरोध एवात्र विवक्षित इत्यदोषः । तथा बाध्यसंवृतितत्कार्यजडविरोधित्वादेव सत्यव्यवहारः न तु सत्तासामान्यादिसम्बन्धात् । एवं दुःखविरोधित्वमात्रेणानन्द-

[1] वस्तुतस्तु तत्र विशेषो नास्त्येव । तस्य निर्विशेषत्वाङ्गीकारात् इति पाठेन भाव्यमिति भाति ।

(टी.) व्यवहारो न तु पुनः सुखत्वसामान्ययोगात्। तथा देशतः कालतो वस्तुतश्चान्तविरोधित्वमुपादाय सर्वगतत्वनित्यत्वसर्वात्मकत्वोक्तिर्न तु परममहत्परिमाणाप्रच्युतसत्तामर्वतादात्म्यनिमित्तेन। पूर्वपदेन बन्धादिसङ्ग्रहः। तद्विरोधित्वादेव मुक्तत्वाद्युक्तिरिति।

पद्यत इति पदमिति ज्ञातव्यतां वक्ष्यति। तत्कुतो ज्ञेयमित्यत आह

नित्यभावनया भातं तद्भावं योगिनं नयेत्॥

भातं साक्षात्कृतम्। तद्भावं शून्यभावम्। नयेदित्यारोपितातद्भाव निवर्तयेदिति यावत्।

(वि टि)॥ सत्यज्ञानादीति॥ अत्राऽदिपदेनाऽनन्दपरिग्रह.॥ सदेति॥ तद्विरोधिशून्यस्य सदातनत्वादिति भाव॥ प्रमाणज्ञानेति॥ प्रमाणजन्यज्ञानोपहितस्येत्यर्थ। नन्वेव प्रमाणज्ञानमेवान्वयव्यतिरेकाभ्या सवृतिविरोधि स्याद्। न तु पराभिमतज्ञानरूप शून्यम्। मानाभावात्। प्रमाणज्ञाने सति सवृतिव्यतिरेकेण शून्यव्यतिरेकेण सवृतिव्यतिरेकादर्शनात्तस्योपाधित्वे मानाभावाच्चेत्यत आह॥ किञ्चेति॥ ननु प्रमाणजन्यज्ञानस्य सवृतिविरोधित्वे मूलविरोध। मूले शून्यस्यैव संवृतिविरोधित्वोक्ते। जाड्यपदञ्च व्यर्थमित्यतो वाऽह॥ किञ्चेति॥ ज्ञानशब्दितशून्यस्य यथा जाड्यनादात्म्यविरोधित्व तथा संवृतितादात्म्यविरोधित्वमेव 'जाड्यसवृतिदु खान्तपूर्वदोषविरोधि यत्' इत्यत्र विरोधिशब्देन विवक्षितमिति 'संवृतिविरोधित्वे सदा सवृत्यभाव स्यात्' इत्युक्तदोषानवकाश इत्यर्थः।

ननु सत्त्वादिव्यवहारनिर्वाहार्थं महासामान्यादिसम्बन्ध आवश्यक। तथा च सविशेषत्व दुर्वारमित्याशङ्क्याऽह॥ तथेति॥ जाड्यञ्च सवृतिश्च तत्कार्यजडादि चेति द्वन्द्व। तत्कार्यजडशब्दयो· कर्मधारय। तद्विरोधित्वादेव सत्त्वव्यवहार इत्यर्थ। महासामान्यादीत्यादिपदेन प्रामाणिकत्वपरिग्रह॥ अन्तविरोधित्वमिति॥ परिच्छेदविरोधित्वमित्यर्थः। परिच्छेदस्य परिच्छेदकसापेक्षत्वादाह॥ देशत इत्यादि॥ देशतोऽन्तविरोधित्वाच्छून्ये सर्वगतत्वव्यवहार कालतोऽन्तविरोधित्वान्नित्यत्वव्यवहार वस्तुतोऽन्तविरोधित्वात्सकलवस्तुप्रतियोगिकभेदविरोधित्वात्सर्वात्मकत्वव्यवहार इत्यर्थ.॥ अप्रच्युतेति॥ सार्वकालिकसत्तेत्यर्थः॥ बन्धादीति॥ आदिपदेन मुक्तिपरिग्रहः। बन्धविरोधित्वादेव मुक्तिव्यवहार, मुक्तिविरोधित्वादेव बन्धव्यवहार।

नन्वेतावता प्रबन्धेन शून्यस्य निर्विशेषत्वमेवोपपादितम्। न तु ज्ञेयत्वम्। तथा च 'नित्यभावनया भातम्' इति तस्य ज्ञानविषयत्वकथनमसङ्गतम्। तस्याजिज्ञासितत्वादित्यत आह॥ पद्यत इति पदमिति॥ वक्ष्यतीति॥ 'विश्वाकारश्च सवृत्या यस्य तत्पदमक्षयम्' इत्यत्र पदपदेनेति शेष। व्याचष्टे॥ भातमिति॥ ननु तद्भाव शून्यभावं योगिनं नयेदित्युक्तम्। विरोधिन्यतद्भावे जागरूके योगिनस्तद्भावनयाऽपि शून्यभावप्राप्त्ययोगात्। न चातद्भावे सत्यपि भावनासामर्थ्यात्तद्भावो भविष्यतीति वाच्यम्। तथा सति भावनानन्तरमपीदनीमिव

(वि टि) ससारप्रसङ्ग । किञ्चैव सति शून्यभावस्य प्रागसतो भावनयोत्पत्तिप्रसङ्ग । न चैतद्युक्तम् । अपसिद्धान्तादित्यत आह ॥ आरोपितेति ॥

(ग. टि.) ॥ सदा संवृत्यभाव इति ॥ विरोधिन शून्यस्य सदातनत्वादिति भाव ॥ प्रमाणेति ॥ प्रमाणजन्यवृत्त्युपहितस्य वृत्तिसहितस्येति यावत् । तच्च प्रमाणज्ञानं कदाचिदेव न सदेति भाव ॥ जाड्य इवेति ॥ जाड्यविषये शून्यस्य विरोधो यथा जाड्यतादात्म्यविरोधस्तथा संवृत्त्यपि । कदापि संवृतितादात्म्यस्य शून्येऽभावादित्यर्थ ॥ बाध्यसवृतीति ॥ सवृतिश्च कार्यं च संवृतिकार्ये । बाध्ये च ते सवृतिकार्ये च तदुभयतादात्म्यविरोधित्वादेव शून्यस्य सत्त्वव्यवहार । न तु परजातिसत्तायोगादित्यर्थ । आदिपदेनाऽबाध्यत्वार्थक्रियाकारित्वादिधर्मसग्रह ।

अन्तविरोधित्व व्यनक्ति ॥ तथा देशत इत्यादिना । न तु परममहदिति ॥ निमित्तपद प्रत्येकमन्वेति । परममहत्परिमाणनिमित्तेन सर्वगतत्वमनपगतसत्तानिमित्तेन नित्यत्व सर्वतादात्म्येन सर्वात्मकत्वं न नित्यर्थ । न्यायमते विभुद्रव्यपरिमाणस्य परममहदिति संज्ञात्वात् सज्ञाछन्दसोर्बहुलमित्युक्तेराम्महत इत्यात्व महदित्यत्र न कृतम् । बन्धादीत्युक्त व्यनक्ति ॥ बन्धविरोधादेवेति ॥ अभावतादात्म्यविरोधादेव भाव इत्युच्यत इत्यादिरादिपदार्थ ॥ पद्यत इति ॥ पद्लृ गतावित्यत कर्मण्यकारप्रत्यय ॥ वक्ष्यतीति ॥ तस्य तत्पदमक्षयमित्यत्रेति ज्ञेयम् ॥ तत्कुत इति ॥ केनोपायेनापरोक्षीकर्तव्यमित्यर्थ ॥ नित्यभावनयेति ॥ नित्य शून्यज्ञानेनेत्यर्थ । प्रागेव शून्यभावस्य सिद्धत्वादाह ॥ आरोपितेति ॥

(वे. टि) जडत्वमसंविद्रूपत्वमित्यभिप्रेत्योक्तम् ॥ जाड्यविरोधित्वमिति ॥ प्रमाणज्ञानोपहितस्यैवेति ॥ यथा अय पिण्डसमारूढाग्ने रोगनिवर्तकत्वम् । न केवलायसो नाप्यग्ने । तथा प्रमाणजन्यज्ञानोपारूढशून्यस्यैव संवृतिनिवर्तकत्वम् । न केवल शून्यस्येति भाव. । किञ्च जाड्यविरोधीत्यत्र यथा न जडनिवर्तकत्वमित्यर्थ । अपि तु जडभिन्नत्वम् । तथा सवृतिभिन्नत्वमेव संवृतिविरोधित्वम् । न तन्निवर्तकत्वम् । अतो नोक्तदोष इत्याह ॥ किञ्चेति ॥ बाध्येति ॥ बाध्या या सवृति तत्कार्यत्वादेव बाध्य यज्जड तदुभयविरोधित्वादेवाबाध्यत्वरूपसत्यत्वव्यवहार इति भाव ॥ तथा देशत इत्यादि ॥ देशतोऽन्तविरोधित्वमुपादाय सर्वगतत्वोक्ति. । न तु परममहत्परिमाणेन । कालतोऽन्तविरोधित्वमुपादाय नित्यत्वोक्ति. । न त्वप्रच्युतसत्तया सार्वकालिकसत्त्वयेति यावत् । वस्तुतश्चान्तविरोधित्वमुपादाय सर्वात्मकत्वोक्ति । न तु सर्वतादात्म्यनिमित्तेनेति यथाक्रमं योज्यम् । बन्धादीत्यत्रादिपदेन मलसङ्ग्रह. । मुक्तत्वादीत्यत्र शुद्धत्वसङ्ग्रह इति बोध्यम् ॥ तत्कुतो ज्ञेयमिति ॥ कुत कारणात् कुत प्रयोजनाच्चेत्यर्थ । शून्यभावस्य पूर्वमेव सिद्धत्वात्कथं नयेदित्युक्तमित्यत आह ॥ आरोपितेति ॥

(द्वै. द्यु) ॥ सत्यज्ञानादीति ॥ तत्वत्वोक्त्या सत्यतायाः स्वतः सिद्धत्वतया च [1]ज्ञानात्मकत्वमर्थप्राप्तमित्याशयेनाङ्गीकारादित्युक्तम् । सत्यज्ञानादिशब्दार्थतावच्छेदकीभूतविरोधेत्यर्थः । संवृतिविरोधित्वे प्रमा-

[1] ज्ञानात्मकत्वस्यार्थत. सिद्धिरित्याशयेनाङ्गीकारादित्युक्तम् इति पाठेन भाव्यमिति भाति ।

(द्वै घु.) शस्य यथा तम सम्बन्धविधुरस्वरूपत्वं तद्वत् संवृतिसम्बन्धविधुरस्वरूपत्वं शून्यस्येत्यभ्युपगमे ॥ जाड्य इवेति ॥ अत्र संवृतौ ॥ तादात्म्येति ॥ जाड्यस्य संयोगेनासम्बन्धस्य सार्वत्रिकतयाऽव्यावर्तकत्वात्तादात्म्येनैव विरोधावश्यकत्वात् दृष्टान्तत्वम् । सत्यव्यवहारस्य गत्यनुक्त्या न्यूनतापरिहारायेदमेव वाक्य बाध्यपदपूरणेन व्याचष्टे ॥ तथा चेति ॥ संवृतितादात्म्याभावेऽपि तत्कार्यजडतादात्म्यं स्यात् । शरीरस्य दण्डतादात्म्याभावेपि तत्कार्यभूतदण्डिरूपविशिष्टतादात्म्यसत्त्वात् । विशिष्टस्य विशेषणविशेष्योभयकार्यत्वादित्याशङ्क्योपलक्षणया जडमपि गृह्यत इत्याशयेन तत्कार्यजडेत्युक्तम् ॥ तथेति ॥ अतः परिच्छेद. ॥ वक्ष्यतीति ॥ तत्पदमक्षयमिति वाक्ये ॥ कुत इति ॥ कस्मै प्रयोजनायेत्यर्थ ।

(गु टि ) सदा संवृत्यभावः स्यादितीति ॥ निवर्तकस्य शून्यस्य सदा सत्त्वादिति भाव ॥ प्रमाणज्ञानोपहितस्यैवेति ॥ ततश्च प्रमाणज्ञानस्य सर्वदा असत्त्वेन तदुपहितस्य शून्यस्यापि सर्वदा असत्त्वान्न सदा संवृत्यभावप्रसङ्ग इति भाव. । जाड्यविरोधीत्यत्र यथा न जडनिवर्तकत्वमर्थ. । अन्यथा सर्वदा जडनिवृत्तिप्रसङ्गात् । अपि तु जडभिन्नत्वमेव । तथा संवृतिभिन्नत्वमेव तद्विरोधित्वम् । न तु तन्निवर्तकत्वम् । अतो न सर्वदा तन्निवृत्तिप्रसङ्ग इत्याह ॥ किञ्चेति ॥ बाध्येति ॥ बाध्या या संवृति तत्कार्यत्वादेव बाध्य यज्जडं तद्विरोधित्वादेव अबाध्यत्वरूपसत्यत्वव्यवहार इति भाव ॥ महासामान्येति ॥ सत्तारूपव्यापकसामान्ययोगादित्यर्थ. ॥ तथा देशत इत्यादि ॥ देशतोऽन्तविरोधित्वमुपादाय सर्वगतत्वोक्ति । न तु परममहत्परिमाणयोगात् । कालतोऽन्तविरोधित्वमुपादाय नित्यत्वोक्ति । न त्वप्रच्युतसत्तायोगात् सार्वकालिकसत्तायोगादिति यावत् । वस्तुतश्चान्तविरोधित्वमुपादाय सर्वात्मकत्वोक्ति । न तु सर्वतादात्म्ययोगादिति यथाक्रमं सम्बन्ध । बन्धादीत्यत्राऽदिपदेन मलपरिग्रह । मुक्तत्वादीत्यत्र शुद्धत्वपरिग्रह ॥ तत्कुतो ज्ञेयमिति ॥ किं तत्साक्षात्कारसाधन किञ्च तत्प्रयोजन येन तस्य ज्ञेयता स्यात् । साधनफलयोरभावान्न तस्य ज्ञेयतेत्यर्थः । मूले नित्यभावनयेत्यस्य शून्यं शून्य तुच्छं तुच्छमित्यादिरूपपरोक्तचतुर्विधभावनयेत्यर्थ । उक्तरूपचतुर्विधभावनाया एव तन्मते शून्यसाक्षात्कारसाधनत्वादिति ज्ञेयम् । नन्वात्मन एव शून्यत्वेन योगिनः शून्यभावस्य साक्षात्कारात्पूर्वमपि सत्त्वात्कथं 'योगिन स्तद्भाव नयेत्' इत्युक्तिरित्यतस्तदुक्तेरभिप्रायमाह ॥ आरोपितेति ॥ आरोपितो योऽतद्भावः अशून्यभाव त निवर्तयेदित्यभिप्रायकत्वात्तदुक्तेर्नानुपपत्तिरिति भाव ।

(टी.) ननु तत्त्व चेद्भावाभावयोरन्यतरद्भवेत् । तत्र भावत्वे गुणित्वादि अभावत्वे सप्रतियोगित्वादि प्रसज्येत । तत्कथं निर्विशेषत्वादीत्यत आह

भावार्थप्रतियोगित्वं भावत्वं वा न तत्वतः ।

भावार्थः प्रतियोगी यस्य तत्तथोक्तम् । तस्य भावस्तत्त्वमभावत्वमिति यावत् । अभावत्वमिति वक्तव्ये तत्प्रयुक्तविशेषनिरासायैवमुक्तम् । एवं भावत्वप्रयुक्तगुणादिनिरासोऽपि वक्तव्यः । यस्येति वक्ष्यमाणेन सम्बन्धः ।

(टी.) ननु शून्यमेव विश्वाकारमिति तन्मतम्। विश्वं च भावाभावात्मकमिति कुतस्तस्य तद्भावाभाव इत्यत आह

विश्वाकारं च संवृत्या यस्य तत्पदमक्षयम् ॥ इत्यादि तद्वचः ।

संवृत्यैव विश्वाकारतयाऽवभासते । न पुनस्तत्त्वतस्तद्भावोऽस्य । अत एव पूर्वं न तत्वतः इत्युक्तम् । एतेनैव तत्त्वस्य भावभावान्यतरत्वव्याप्तिरपरमार्थप्रपञ्चविषयैवेति सूचितम् । यदेवंविध शून्य तदक्षय पदमिति किमक्षयं पदमिति प्रश्नस्येदमुत्तरम् । एवमुत्तरत्रापि ।

(वि टि) ननु शून्य तत्त्वमिति शून्यवाद्यभ्युपगमो न युज्यते ; तत्त्वस्य भावाभावान्यतरत्वनियमात् । तत्र भावत्वे द्रव्यगुणकर्माद्यन्यतमत्वप्रसङ्ग । न चैवम् । द्रव्यत्वे सङ्ख्यादिपञ्चकावश्यम्भावात् । तत्राप्यविभुद्रव्यत्वे गुणकर्मसामान्यवत्त्वप्रसङ्गात् विभुद्रव्यत्वेपि गुणसामान्ययोरवश्यम्भावाच्च निर्विशेषत्वहानि कर्मवत्त्वेपि निर्विशेषत्वहानिरेव । भावरूपत्वे भावत्ववदभावरूपत्वेऽभावत्वतद्व्याप्यप्रागभावाद्यन्यतमत्वापत्तेः सप्रतियोगिकत्वापत्तेश्चेत्यभिप्रेत्य शङ्कते ॥ नन्विति ॥ निर्विशेषत्वादीत्यादिपदेन स्वप्रमाणत्वादिमङ्ग्रह ।

ननु भावार्थप्रतियोगित्वमुच्यते । एवञ्च शब्दार्थप्रतिपत्तिलाघवादभावत्वमित्येवोच्यताम् ; न हि निष्प्रयोजनं गौरव सोढव्यमित्याशङ्क्य तथोक्ते. प्रयोजनमाह ॥ अभावत्वमिति ॥ तथापि भावत्वप्रयुक्तगुणादिविशेषानिरासे न निर्विशेषत्वनिर्वाह इत्याशङ्क्योक्तन्यायमतिदिशति ॥ एवमिति ॥ भावार्थप्रतियोगित्वं भावत्वं वा कस्येत्यपेक्षायामाह ॥ यस्येतीति ॥ 'विश्वाकारञ्च सवृत्या यस्य' इति वक्ष्यमाणेन सम्बन्ध इत्यर्थ । तस्य शून्यस्य ॥ तद्भावाभाव इति ॥ तयोर्भावाभावयो भावा धर्मा उक्तसामान्यविशेषरूपास्तेषामभावस्तद्रहितत्वमिति यावत् । तद्वच. इत्यस्यानन्तर शून्यं तत्त्व प्रतिपादयतीति शेष ॥ पूर्वमिति ॥ 'भावार्थप्रतियोगित्व भावत्वं वा न तत्वत' इति पूर्वमित्यर्थ ।

ननु तथापि शून्यस्य तत्वरूपत्वे उक्ताभावभावयोरन्यतरत्वनियमो दुर्वार । उक्तरीत्या तत्प्रयुक्तसविशेषत्वञ्च दुर्वारमित्याशङ्क्याऽह ॥ एतेनैवेति ॥ न तत्वत इत्यनेनैव उक्तनियमोऽपरमार्थप्रपञ्चविषय एवेति सूचनात्र तद्बलेन शून्यस्य सविशेषत्वापादनमुचितमिति भाव ॥ तदक्षय पदमितीति ॥ इदमुत्तरमिति सम्बन्धः । इदमिति किमाकार प्रश्नस्योत्तरमित्याकाङ्क्षाया तदाकारमाह ॥ किमक्षय पदमितीति ॥

(रा. टि) ॥ गुणित्वादीति ॥ द्रव्यत्वगुणत्वादिरादिपदार्थ ॥ तत्प्रयुक्तेति ॥ अभावत्वप्रयुक्तसप्रतियोगित्वप्रागभावत्वादिविशेषनिषेधायेत्यर्थ. । कस्येत्याकाङ्क्षायामाह ॥ यस्येति वक्ष्यमाणेनेति ॥ तद्भावाभाव इति ॥ भावाभावात्मकत्वाभाव इत्यर्थ ॥ भासत इति ॥ शून्यमिति योज्यम् ॥ तद्भाव इति ॥ विश्वभावोऽस्य शून्यस्येत्यर्थ । ननु तत्वं चेदित्यादिना कृतचोद्यस्य भावार्थेत्यादिना किमुत्तरमुक्तमित्यत आह ॥ एतेनैवेति ॥ इति प्रश्नस्येति ॥ शून्यवादिग्रन्थे तच्छिष्यकृतप्रश्नस्येत्यर्थः । पदशब्दो ज्ञेयपर इति प्रागेव

(रा. टि.) कर्मव्युत्पत्त्या प्रदर्शितम् ॥ एवमुत्तरत्रापीति ॥ उत्तरत्रोदाहरिष्यमाणबौद्धकारिकास्वपि तच्छून्य पदमक्षयमित्यस्योक्तरूपप्रश्नोत्तरत्व ध्येयमित्यर्थ ।

(वे टि) ननु भावाभावन्यतरत्वस्य व्यापकस्याभावे व्याप्यस्यापि तत्त्वरूपत्वस्याभाव. प्राप्त इत्यत आह ॥ एतेनैवेति ॥ पूर्वं 'न तत्त्वत' इतिवचनेनेत्यर्थ ॥ तदक्षय पदमितीति ॥ इदमुत्तरमिति सम्बन्ध । किमक्षयमिति तदीयग्रन्थस्य प्रश्नस्येत्यर्थ ।

(द्वै बु) असतोऽत्यन्ताभावप्रतियोगितापि नास्तीत्याशयेन सप्रतियोगिकत्वमित्यभिहितम् । सप्रतियो-कत्वमिति पाठे तु न क्लेशः ॥ विशेषान्तरेति ॥ सप्रतियोगिकत्वरूपविशेषान्तरेत्यर्थ । अभावत्व त्वनुयोगिता वाऽखण्ड कश्चिद्धर्मो वेति हृदयम् ॥ वक्तव्य इति ॥ अध्याहारेण बोध्य इत्यर्थ. । अन्यथा भावत्वमात्र-निरासेऽपि गुणादीनामनिरासान्निर्विशेषत्वासिद्धिः स्यादिति भाव ॥ अत एवेति ॥ प्रतीतिमात्र वर्तते वस्तुतो नास्तीति बोधनार्थमेवेत्यर्थ । प्रतीतेरप्यभावे तत्पदवैयर्थ्यं स्यादिति भाव ॥ भावाभावान्यतरत्वेति ॥ स्वस-मानसत्ताकेति पूरणीयम् । अन्यथा शून्येऽपि आरोपितभावत्वादिसत्त्वात्प्रपञ्चपदवैयर्थ्यापत्ते· । तदित्युद्दिश्याक्षय-पदत्वविधानस्याजिज्ञासिताभिधानरूपतानिरासायाह ॥ किमिति ॥ प्रश्नस्येति ॥ उत्तरवाक्यानुसाराच्छून्य-वादिग्रन्थे पूर्वं प्रश्नवाक्यमनुमीयत इति भावः। उत्तरत्र नास्य सत्त्वमित्यादिवाक्येषु ।

(गु टि) ॥ भवेदिति ॥ ननु यत्तत्त्व तद्भावाभावाभ्यामन्यतरदिति व्याप्त्या व्यापकस्य भावाभावान्यतरत्त्व-स्याभावे व्यापकनिवृत्तौ व्याप्यनिवृत्तेरावश्यकत्वेन तत्वताऽनुपपत्तिप्रसङ्गादित्यर्थ । भावाभावान्यतरत्त्वेपि शून्यस्या-निष्टाभावात् कथमेतदापादनमित्यतो भावत्वाङ्गीकारे तावदनिष्टमाह ॥ तत्रेति ॥ यो भाव. स गुणादिमानिति व्याप्तेः शून्यस्य भावत्वे व्याप्यवति व्यापकभावावश्यम्भावेन तद्व्यापकगुणादिमत्त्वावश्यम्भावादित्यर्थ । अन्यथा भावत्व-वति शून्य एव गुणादिमत्त्वाभावेन व्यभिचारे उक्तनियमाभावप्रसङ्गादिति भाव । अभावत्वाङ्गीकारेप्यनिष्टमाह ॥ अभावत्व इति ॥ योऽभाव स सप्रतियोगिक इति व्याप्ते शून्यस्याभावत्वे सप्रतियोगिकत्वावश्यम्भावादित्यर्थः । अन्यथा शून्य एव व्यभिचारेणोक्तनियमाभावप्रसङ्गादिति भाव । गुणादिमत्त्वेपि शून्यस्य किं बाधकमित्यतो निर्विशेषत्वभङ्गप्रसङ्ग एव बाधक इति भावेनाह ॥ तत्कथमिति ॥ गुणादीनामेव विशेषत्वादिति भाव । ॥ वक्तव्य इति ॥ ग्रन्थकारेण तु स्पष्टत्वान्नोक्त इति भाव ॥ सम्बन्ध इति ॥ ततश्च नोत्तरग्रन्थे यच्छब्द-वैयर्थ्यापत्ति । नापि कस्येत्याकाङ्क्षापूरकपदाश्रवणात्साकाङ्क्षतया वाक्याभासत्वमिति भाव. । नन्वेवं भावा-भावान्यतरत्वस्य व्यापकस्याभावे व्याप्यस्य तत्वरूपत्वस्याप्यभावप्राप्ते कथ शून्यस्य तत्वरूपत्वाङ्गीकार इत्यत आह ॥ एतेनैवेति ॥ पूर्वं न तत्वत इति वचनेनैवेत्यर्थ । ततश्च न तत्वरूपत्वमात्र भावाभावान्यतरत्वव्याप्यम्। ये न तन्निवृत्त्या तत्वरूपत्वव्यावृत्त्या तदङ्गीकारो विरुद्ध्येत । किन्तु परमार्थतत्वरूपत्वमेव तद्व्याप्यम्। अतस्तद्व्या-वृत्त्या भावाभावान्यतरत्वव्याप्यापरमार्थतत्वरूपत्वव्यावृत्तिसिद्धावपि तत्वरूपत्वव्यावृत्त्यसिद्ध्या युक्त एव तत्वरूप-त्वाङ्गीकार शून्यस्येति भाव ॥ तदक्षयं पदमिति ॥ इतीदमुत्तरमिति सम्बन्ध ॥ किमक्षय पदमिति प्रश्न-

(गु टि.) स्येति ॥ तदीयग्रन्थस्थप्रश्नस्येत्यर्थ. ॥ उत्तरत्रापीति ॥ यत्र यत्र वाक्ये तदक्षय पदमिति श्रूयते तत्र सर्वत्रापि तदक्षय पदमित्येतत्किमक्षय पदमिति प्रश्नस्योत्तरमिति योजनीयमित्यर्थ ।

(टी.) भवत्वेव शून्यवादिवचः । ततः किमित्यतो मायावादिनोप्येव ब्रह्म मन्यन्त इति तद्वाक्य पठति

अनृतजडविरोधिरूपमन्तत्रयमलबन्धनदुःखताविरुद्धम् । इति च मायावादी ।

अत्रानृतत्वादिविरोधिरूपत्वादेव सत्य ज्ञानमनन्त शुद्ध बुद्ध मुक्तमानन्दो ब्रह्मेत्युच्यते । न तु तद्धर्मयोगादित्युक्तम् ।

अतिनिकटमविक्रियं मुरारेः परमपद प्रणयादभिष्टवीमि ।

इत्युत्तरार्धेन सम्बन्धः । इति मायावादी शून्यवादिवदेव ब्रह्म मन्यते । अतो न तयोर्विशेष इति शेषः ।

एव निर्विशेष स्वय भातमित्युक्ताशेषार्थपराणि मायावादिवाक्यानि प्रसिद्धत्वान्नोदाहृतानि ।

(वि टि) एवं शून्यवादिमतोपपादनस्य प्रकृतोपयोग वक्तु शङ्कामुत्थापयति ॥ भवत्वेवमिति ॥ अनृतत्वादीति ॥ आदिपदेन जडत्वपरिच्छिन्नत्वादिपरिग्रह । मायावादीत्ययुक्तम् । अनृतजडविरोधीत्यस्य मायावादिवाक्यत्वे प्रमाणाभावात् । तथा चानुक्तोपालम्भ इत्याशङ्का वारयितु तदीयग्रन्थे पठितेनोक्ताकारेण पूर्वार्धेन सह पठितमुत्तरार्धं स्वय पठित्वा तस्य तेन सम्बन्ध दर्शयति ॥ अतिनिकटमिति ॥ ननु 'न च शून्यवादिन सकाशाद्वैलक्षण्य मायावादिन.' इति प्रतिज्ञानुसारेण तदुपपादन तस्यैवार्थस्य निगमनञ्च कर्तव्यम् । न च 'अनृतजडविरोधिरूपमन्तत्रयमलबन्धनदु खताविरुद्धमिति च मायावादी' इत्युक्तिस्तन्निगमनरूपा दृश्यत इत्यत शेषं पूरयति ॥ इति मायावादीति ॥ न तयोर्विशेष इति ॥ वैलक्षण्याभाव इत्यर्थ ।

यद्यपि शून्यवादिमतान्मायावादिमतस्य वैलक्षण्याभाव प्रतिज्ञात इति तन्मतयोरेव विशेषनिगमनमुचितं तथापि यथाश्रुतप्रतिज्ञानुसारेण निगमनमेतदिति ध्येयम् ।

ननु शून्यवादिमतान्मायावादिमतस्य परापरप्रमेययोरुभयोरपि कार्त्स्न्येन वैलक्षण्याभावं प्रतिपादयितु-मुद्यतेनाचार्येण निर्विशेष स्वयभातमित्यादिशून्यवादिवचनानि यावन्त्युदाहृतानि तावन्ति तत्समानार्थानि माया-वादिवचनान्युदाहर्तव्यानि । अन्यथा तयो कार्त्स्न्येन वैलक्षण्याभावस्य प्रतिज्ञामात्रत्वमेव स्यादित्याशङ्क्याऽऽह ॥ एवमिति ॥ एव नोदाहृतानीति सम्बन्धः । यथा शून्यवादिवचनान्यनेकान्युदाहृतानि एव मायावादि-वचनानि तत्समानार्थान्यनेकानि नोदाहृतानीत्यर्थ. । तत्कुत इत्यत आह ॥ प्रसिद्धत्वादिति ॥ तत्र तत्र तदीय-ग्रन्थेषु पञ्चपादिकादिषु परिचयवतां तादृशवचनानां सुज्ञानत्वादित्यर्थ. ।

(ग टि) ॥ अनृतत्वादिविरोधिरूपत्वादेवेति ॥ अनृतत्वविरोधित्वादेव सत्य ब्रह्मेति जडत्वविरोधित्वाज्ज्ञानमिति देशकालवस्तुपरिच्छेदरूपान्तत्रयविरोधादेवानन्तमित्युच्यते। मलताविरोधादेव शुद्धं बुद्धमित्युच्यते। बन्धनविरोधादेव मुक्त ब्रह्मेति दु खताविरोधादानन्द इत्युच्यते। न तु सत्यत्वज्ञानत्वादितत्तद्धर्मयोगादित्यर्थ । अनृतेत्यादिपूर्वार्धस्यान्वयाय ऽह ॥ अतिनिकटमिति ॥ अत्यन्तत्वसमीपस्थम्। अविक्रिय विक्रियाहीनम्। मुरारे कृष्णस्य परमपद स्वरूप प्रणयात् स्नेहादभिष्टवीमि। ष्टुञ् स्तुतौ। स्तौमीत्यर्थ । सङ्करकृतमुरारिशतकगताऽयश्लोकोऽयम् । सर्वांशे शून्यवाद्यविशेषोपपादनाय प्रवृत्तेन मूलकृता वाक्यान्तराणि कुतो नोक्तानीत्यत आह ॥ एवमिति ॥ जाड्येत्यादिवाक्यसमानार्थानृतेत्यादिवाक्यमिवेत्यर्थ ॥ वाक्यानि प्रसिद्धत्वादिति ॥ अभ्यासभाष्यादौ ।

(वे टि.) मलपदेन दोषाज्ञाने गृहीते इत्यभिप्रेत्याह ॥ शुद्धं बुद्धमिति ॥

(द्वि. घु) ॥ शुद्ध बुद्धमिति ॥ मलपदोक्ताविद्याविरोधित्वाच्छुद्धत्वम्। विरुद्धत्व सत्यभूततत्सम्बन्धविधुरत्वम्। तादात्म्येन तद्विरोधित्वादेव ज्ञानात्मकत्वरूपबुद्धत्वम्। जडविरोधित्वोक्त्या लब्धोऽप्यर्थस्तत्कारणीभूताविद्याविरोधित्वेनापि लक्ष्यत इत्याशयेन पुनरुक्त । यद्वा बुद्धमिति कर्मणि क्त. । ज्ञेयमित्यर्थ । अविद्याविरोधित्वं च स्वाकारवृत्त्याऽज्ञाननाशकत्वम्। तथा च स्वाकारवृत्त्या अज्ञाननाशादेव ज्ञेयत्वव्यवहारो न तु ज्ञानविषयत्वयोगादित्यर्थ. । शून्यवादिना पदपदोक्तस्य ज्ञेयत्वस्य मायावादिवाक्येनापि लाभसूचनायेत्थ व्याख्यातम्। दु खतेति स्वार्थे तल्। भावे वा कथञ्चिद्योज्या ॥ अतिनिकटेति ॥ परभाष्यकारकृतस्तोत्रविशेषस्थपद्यमेतत् ।

(गु टि) मलपदेन दोषाज्ञानयो परिग्रह इत्यभिप्रायेणोक्त शुद्धं बुद्धमिति ॥ उत्तरवाक्येन सम्बन्ध इति ॥ तथा च न साकाङ्क्षत्वप्रयुक्तवाक्याभासत्त्व शङ्कनीयमिति भाव । निर्विशेष स्वयभातमित्युक्ताशेषार्थपराणा मायावादिवाक्याना तन्मतयो परप्रमेये अविशेषोपपदनायावश्यमुदाहरणीयानामनुदाहरणात्प्रसक्तां ग्रन्थकाराणामचातुरीमनुदाहरणे निमित्तकथनेन परिहरति ॥ एवमिति ॥

(टी.) एतदेव प्रपञ्चयन् निर्विशेषत्वविवरणात्मक शून्यवादिवाक्य तावत्पठति

नास्य सत्त्वमसत्त्वं वा न दोषो गुण एव वा ।
हेयोपादेयरहितं तच्छून्यं पदमक्षयम् ॥ इति शून्यवादी ।

सत्त्वं सामान्यं प्रमाणयोग्यत्व वा। असत्त्वमभावप्रतियोगित्वम्। दोषो दुःखादिः। गुणः सुखादिः। एवकारो नेत्यनेन सम्बद्ध्यते। हेयोपादेयेति भावप्रधानो निर्देशः। दोषाभावाद्धेयत्वरहित गुणाभावादुपादेयत्वरहितम्। हातुरुपादातुश्चान्यस्याभावाद्वा। अनिष्टाभावाद्धेयमस्य नास्ति अपूर्त्यभावादुपादेयमपि नास्तीति वा। तच्छब्दश्रवणाद्यस्यास्येति व्याख्येयम्।

(टी.) किमतो यद्येव शून्यवादी शून्यस्य सत्त्वादिधर्माभावं मन्यत इत्यत आह

सत्त्वादयो धर्माः परमार्थतो मायावादिनाऽपि नाङ्गीक्रियन्ते

ब्रह्मण इति शेषः । अतोऽपि न शून्यब्रह्मणोर्विशेष इति सम्बन्धः ।

नन्वन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चेत्यादिना मायावादिना ब्रह्मणो धर्माः स्वीकृताः तत्कथमेतदिति चेत् । सत्यम् । न तु परमार्थतः । काल्पनिकास्तु शून्यवादिना शून्यस्याप्यङ्गीक्रियन्त इत्याशयेनोक्तं परमार्थत इति ॥

ननु धर्माङ्गीकारस्तावदुपलभ्यते । स च परमार्थतो नेति कुतो ज्ञायत इत्यत आह

सर्वविशेषविनिर्मुक्तत्वाङ्गीकारात्

येन हि मायावादिना ब्रह्मणो धर्माः स्वीकृतास्तेनैव तस्य सर्वविशेषविनिर्मुक्तत्वमङ्गीक्रियते । तद्यदि धर्माङ्गीकारः पारमार्थिकः स्यात्तदा परस्परपराहतिः प्रसज्येत । अतो ज्ञायते धर्माङ्गीकारो न पारमार्थिक इति ।

(वि. टि) ॥ एतदेवेति ॥ निर्विशेषं स्वयंभातमित्यादिनोक्तमेवेत्यर्थः ॥ प्रपञ्चयन्निति ॥ अनेन न पौनरुक्त्यमिति भाव । तावच्छब्द. क्रमार्थक ॥ प्रमाणयोग्यतेति ॥ प्रमाणविषयेऽपि सदिति व्यवहारदर्शनादिति भाव । इन्द्रियादिदोषस्य काचकामलादेरप्रसक्तेराह ॥ दोष इति ॥ आरोग्यादावपि गुणव्यवहारदर्शनात्तन्निषेधस्यानिष्टत्वादाह ॥ गुण इति ॥ गुण एव नेति यथाश्रुते इतरसत्त्वप्रतीतेर्निर्विशेषत्वप्रतिपादनानुपयोगमाशङ्क्याह ॥ एवकार इति ॥ भावप्रधान इति ॥ द्व्येकयोरित्यादिवदित्यर्थ । यद्यपि हेयोपादेयशब्दयोर्भावप्रधानत्वाभावेऽपि तन्निषेधेऽपि निर्विशेषत्व सिद्ध्यति । न च गुणदोषशब्दानामेव हेयोपादेयसमर्पकत्वात्पुनस्तन्निषेधेन पौनरुक्त्यमिति वाच्यम् । कुरुपाण्डवन्यायेनापौनरुक्त्योपपत्तेरिति । तथापि गुणशब्ददोषशब्दयोरिव हेयोपादेयशब्दयोरपि दु खादौ सुखादौ च प्रयोगोऽविशिष्ट इति नात्र कुरुपाण्डवन्यायावतार इत्यभिप्रेत्य हेयोपादेय इति भावप्रधानो निर्देश इति व्याख्यातमिति भाव ॥ दोषाभावादिति ॥

यद्यपि दोषशब्दितदु खादिराहित्येपि घटादे· पुरुषविशेष प्रति हेयत्वमप्यस्ति गुणशब्दितसुखादिराहित्येपि कञ्चित्प्रति तस्यैवोपादेयत्वमप्यस्ति तथापि दु.खादीत्यादिपदेन निकर्षापादकधर्ममात्रग्रहणात् तथा सुखादीत्यादिपदेन उत्कर्षापादकधर्ममात्रग्रहणात् तदभावे शून्यस्य हेयत्वराहित्यमुपादेयत्वराहित्यञ्चोपपद्यते । न च घटादौ व्यभिचार । तत्र दोषगुणसामान्याभावासिद्धे । हानोपादानयोर्दु खसाधनत्वसुखसाधनत्वादिकमन्तरेणासम्भवादिति भाव । यद्वा एतदस्वरसादाह ॥ हातुरिति ॥ अन्यस्येति ॥ वास्तवस्येति शेष । हेयोपादेयशब्दयोर्भवितृप्राधन्यमाश्रित्याह ॥ अनिष्टेति ॥ तच्छब्दसत्त्वादिति ॥ तच्छून्यं पदमक्षयमिति तच्छब्द-

(वि टि )सत्त्वात् यत्तदोर्नित्यसम्बन्धात् यस्येति व्याख्येयमित्यर्थ । शून्यस्वरूपकथनावसरे मायावादिनः सत्त्वादिधर्मानङ्गीकारप्रतिपादनमसङ्गतमित्यत सङ्गमयति ॥ **किमतोऽपीति** ॥ अतोपि पारमार्थिकसत्त्वादिधर्मानङ्गीकारतोपि। पारमार्थिकपदस्य प्रयोजन विवक्षुस्तद्व्यावर्त्यां शङ्कां दर्शयति ॥ **नन्विति** ॥ इत्यादिना तदीयभाष्येणेत्यर्थः ॥ **सर्वविशेषेति** ॥ सर्वधर्मेत्यर्थ· ॥ **धर्माङ्गीकार इति** ॥ अङ्गीक्रियमाणे धर्म इत्यर्थ ॥ **अत इति** ॥ ब्रह्मण परमार्थतो निर्धर्मकत्वाङ्गीकारादित्यर्थ ।

(रा टि.) ॥ **एतदेवेति** ॥ द्वयोर्वादिनोरविशेष इत्येतदेवेत्यर्थः ॥ **इति सम्बन्ध इति** ॥ पूर्वत्राध्याहृतवाक्यानुषङ्गेन सम्बन्ध इत्यर्थ ।

(वे टि ) नन्वत्र सत्त्व भावत्वमसत्त्वमभावत्व चेत् भावार्थप्रतियोगित्वमित्यादिना पुनरुक्ति· स्यादित्यत आह ॥ **सत्त्वमिति** ॥ बौद्धमते सामान्याभावादाह ॥ **प्रमाणेति** ॥ **अभावप्रतियोगित्वमिति** ॥ अत्यन्ताभावप्रतियोगित्वमित्यर्थ । दोषशब्दस्य काचादीन्द्रियदोषपरताप्रतीतिनिवारणाय व्याचष्टे ॥ **दोष इति** ॥ गुणशब्देन दु खादिप्राप्तेराह ॥ **गुण इति** ॥ वाशब्दस्यात्र समुच्चयार्थत्वेनावधारणार्थकैवकारसमभिव्याहृतत्वा सम्भवादाह ॥ **एवकार इति** ॥ हातुरित्यादौ परमार्थत इति शेष । भवितृप्राधान्यमङ्गीकृत्याह ॥ **अनिष्टाभावादिति** ॥ **इति सम्बन्ध इति** ॥ पूर्वं 'अतो न तयोर्विशेष' इति शेषस्य पूरितत्वात्तेन सम्बन्ध इति भाव ॥ **अन्योन्यस्मिन्निति** ॥ देहात्मनोरित्यर्थ ॥ **अन्योन्यात्मकतामिति** ॥ अध्यस्येति वक्ष्यमाणेनान्वय । अनेन तादात्म्यारोप उक्त. ।

संसर्गारोपमाह ॥ **अन्योन्यधर्मांश्चेति** ॥ अस्यापि तेनैवान्वयः । तथा चात्रात्मधर्माणा देहे आरोपकथनेनाऽऽत्मनो धर्मा स्वीकृता इति ज्ञायत इति भाव ।

(द्वै द्यु.) भावार्थप्रतियोगित्वमित्यनेन भावत्वाभावत्वयोर्निरासस्योक्तत्वेनात्र सत्त्वासत्त्वपदाभ्या तयोर्ग्रहणे पौनरुक्त्यं स्यादित्यतस्तद्व्याचष्टे ॥ **सत्त्व सामान्यमिति** ॥ परमार्थत्व तु न निराकरणार्हम् । अभ्युपगतत्वादिति भाव । सत्ताजात्यनङ्गीकारे त्वाह ॥ **प्रमाणेति** ॥ **अभावेति** ॥ घटादेरपि ध्वंसादिवेलायामसत्त्वव्यवहाराद-भावमात्रमुक्तम् । संसर्गाभावेत्यर्थ । अत्यन्ताभावपर वाऽभावपदम् ॥ **यस्येति व्याख्येयमिति** ॥ यस्येतिपदसम्बन्धेन व्याख्येयमित्यर्थ ॥ **अन्योन्यस्मिन्नित्यादि** ॥ जडे चित्तादात्म्य [1]तद्धर्मभूतसत्ताद्युपेतान् चिति जडतादात्म्यं तद्धर्मभूतब्राह्मणत्वादिधर्मांश्चाध्यस्य सर्वव्यवहारो भवतीति परभाष्यार्थ· ।

(गु टि ) ॥ **प्रपञ्चयन्निति** ॥ ततश्च न पुनरुक्तिरिति भाव । सत्त्वासत्त्वयोर्भावाभावरूपत्वे तदभावस्य भावार्थप्रतियोगित्वमिति पूर्वग्रन्थेनैव सिद्धत्वात् अन्यथा सत्त्वासत्त्वे निर्वक्ति ॥ **सत्त्वं सामान्यमित्यादिना** ॥ **बौद्धेन** सत्तासामान्यस्यानङ्गीकृतत्वात्तदर्थतया व्याख्यानमयुक्तमित्यत प्रकारान्तरेण तद्व्याख्याति ॥ **प्रमाणेति** ॥ ॥ **अभावेति** ॥ अत्यन्ताभावेत्यर्थ । दोषशब्दस्यानेकार्थत्वात्तावदर्थपरताभ्रमनिरासाय विवक्षितार्थमाह ॥ **दोषो**

[1] तद्धर्मभूतसत्तादिधर्मान् इति पाठेन भाव्यमिति भाति।

(गु टि ) दुःखादिरिति ॥ गुणशब्देन दु खादेरपि ग्रहणे न दोष इत्यनेन पौनरुक्त्यप्रसङ्गात् गुणशब्द शुभवचन इत्याह ॥ **गुणः सुखादिरिति** ॥ समुच्चयार्थकवाशब्दस्यावधारणार्थकैवकारेण च परस्परविरोधेन यथास्थितान्वयासम्भवाद्वाशब्दस्य यथास्थितान्वयमङ्गीकृत्य भिन्नक्रमतयैवशब्द व्याचष्टे ॥ **न वेति सम्बन्ध इति** ॥ अत्युपादेयत्वलाभाय भावप्रधानता हेयोपादेयशब्दयोराश्रित्य तदुपपादकहेतु कथयन्नेव तद्विशेषणार्थमाह ॥ **हातुरिति** ॥ परमार्थत इति शेष । यद्धेयं तद्धातृमत् यदुपादेय तदुपादातृमत् इति व्याप्त्या व्यापकीभूतस्य हात्रादिमत्त्वस्याभावाद्युक्तो हेयत्वोपादेयत्वयोरभाव इति भाव ।

एवमुक्तयोजनाद्वयेपि हेयोपादेयशब्दयोर्भावप्रधानत्वाल्लक्षणा आश्रयणीया भवतीत्यपरितोषात्तामनाश्रित्यैव व्याचष्टे ॥ **अनिष्टाभावादिति** ॥ **व्याख्येयमिति** ॥ ततश्च न तच्छब्दानुपपत्तिरिति भाव. । परमार्थत इति विशेषणानर्थक्यमाशङ्क्य तद्व्यावर्त्यशङ्कामुत्थापयति ॥ **नन्विति** ॥ **अन्योन्यस्मिन्** युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोरिति शेष । **अन्योन्यात्मकतां** विषये विषयितादात्म्य विषयिणि च विषयतादात्म्यम् । अध्यस्येति वक्ष्यमाणेन सम्बन्ध । एव तादात्म्यारोपमुक्त्वा संसर्गारोपमप्याह ॥ **अन्योन्यधर्मांश्चेति** ॥ तथा चात्मधर्माणामनात्मनि अनात्मधर्माणाञ्चात्मनि अध्यासोक्त्या आत्मनो मायावादिना धर्मस्वीकारसिद्धि । पुरुषान्तरीयसर्वविशेषविनिर्मुक्तत्वाङ्गीकारेण मायावादिनो धर्माङ्गीकारस्य व्याघातप्रसङ्गात्तत्प्रत्ययार्थं अपेक्षितं पूरयति ॥ **येन हीत्यादिना** ॥

(टी ) अन्यच्च परतत्वे सिद्धान्तसालक्षण्य दिदर्शयिषुः शून्यवादिवाक्य तावत्पठति

अवाच्यं सर्वशब्दैस्तल्लक्ष्यते चाखिलैः पदैः ।
अज्ञेयं ज्ञानलक्ष्यञ्च तच्छून्यं पदमक्षयम् ॥ इति शून्यवादी ।

यदुक्त प्राक् शून्य मनोवाचामगोचरमज्ञेयञ्चेति । तदयुक्तम् । निर्विशेष स्वय भातमिति वाचां गोचरत्वात् । नित्यभावनया भातमित्युक्तत्वाच्चेति । तस्येदमुत्तरम् । तत्सर्वशब्दैरवाच्यमपि निर्विशेषमित्यादिभिरखिलैः पदैर्लक्ष्यते । तथा ज्ञानकर्मत्वाभावेपि वृत्तिव्याप्यतया ज्ञानलक्ष्यं च भवतीति न विरोध इति ।

ननु लक्षणा नाम शब्दधर्मः । तत्कथमुच्यते ज्ञानलक्ष्यमिति । मैवम् । यद्विषयानन्तर्गतं तद्व्यवहारहेतुस्तदुपलक्षणमुच्यते । विषयानन्तर्गतिश्चानेकविधा । शब्दस्यावाचकत्वेन यथा गङ्गेत्यादेः । अर्थस्यातदेकदेशत्वेन यथा काकादेः । तथा ज्ञानस्यातत्कर्मकत्वेनेति । एवमेव मायावादिराद्धान्तोऽपीति वक्ष्यमाणमेतच्छेषोऽपि विज्ञायते । तेन शून्यवादिवदवाच्यत्वादिकं ब्रह्मणो मायावादिराद्धान्तो भवतीत्यतो न परतत्वे कश्चिद्विशेष इत्युक्तं भवति ।

(टी) किञ्च यद्धि यतो व्यावर्तते । तद्व्यावर्तकधर्मयोगेनैव ततो व्यावृत्त दृष्टम् । न च ब्रह्मशून्ययोः कश्चिद्व्यावर्तको धर्मोऽस्ति । उभाभ्यामुभयोरखण्डत्वेनाङ्गीकृतत्वात् । अतः किंकृता तयोर्व्यावृत्तिः स्यादित्याह

न चाखण्डत्वेन कश्चिद्विशेषः ।

विशिष्यतेऽनेनेति विशेषो व्यावर्तको धर्मः ।

ननु व्यावृत्तिर्भावस्वभाव एव । न विशेषकृता । अतः किं विशेषाभावः करिष्यति । मैवम् । भावस्वभावस्यापि व्यावृत्तेर्विप्रतिपत्तौ व्यावर्तकधर्मैकगम्यतया तत्सापेक्षत्वात् । प्राग्व्याघातेन विशेषाभावः प्रतिपादितः । अत्र तु व्यावर्तकधर्माभावेनेति न पुनरुक्तिः । शून्यवादिना शून्यमखण्डमङ्गीकृतमिति कुतो ज्ञायत इति चेत् निर्विशेषमित्यादितद्वचनात् । निर्विशेषत्वस्यैवाखण्डलक्षणत्वात् ।

स्पष्ट च तद्वाक्यं पठति

यदखण्डं पदं लक्ष्यं सर्वैरपि विशेषणैः ।
सर्वैर्विशेषणैर्मुक्त तच्छून्यं पदमक्षयम् ॥ इति च शून्यवादी ।

अक्षयत्वोपपादनायाखण्डमित्युक्तम् । खण्डं खलु घटादिक क्षयि दृष्टम् । किमिदमखण्डत्वमित्यत उक्त सर्वैर्विशेषणैर्मुक्तमिति । तर्हि कथ तत्र विशेषण[1]योग इत्यत उक्तं लक्ष्यं सर्वैरपि विशेषणैरिति । यथा काकादिक गृहानन्तर्गतमेव गृहं व्यावर्तयति । तथा विशेषणानि शून्यमिति न विरोधः ।

मायावादिनस्त्वखण्डत्वाभ्युपगमः प्रसिद्ध एवेत्याह

एवमेव मायावादिराद्धान्तः ।

एवमेवेत्यनेन यावान् शून्याखण्डत्वे शून्यवादिनां परिकरः स सर्वोऽपि मायावादिनां समान एवेति सूचयति ।

(वि टि) ॥ परतत्व इति ॥ शून्यवादिमायावादिसिद्धान्तयो शब्दतोऽर्थतश्चैकरूपत्व दिदर्शयिषुरित्यर्थ ॥ उक्तमिति ॥ 'शून्यं मनोवाचामगोचरम् । अज्ञेयञ्च' इति प्राग्यदुक्त तदयुक्तमिति सम्बन्ध ॥ इत्यादिवाचामिति ॥

यद्यपि वाचामगोचरमित्यनेन वाच्यत्वनिषेध एव पराभिप्रेत । न तु वाक्याप्रतिपाद्यत्वम् । अत एव मायावादिग्रन्थे परमप्रमेयस्य सर्वशब्दावाच्यत्वे 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' 'अवचनेनैव

[1] प्रयोग इति गुरुराजीय पाठ ।

**(वि टि)** प्रोवाच' इत्यादिश्रुतिः प्रमाणीकृता। न हि वाचा प्राप्तिप्रतिषेधः शब्दशक्तिप्रतिषेधादन्यो भवितुमर्हति। यद्यपि वाक्प्राप्तिर्मुख्यामुख्यसाधारणी तथापि बाधं विना प्रमाणमात्रं साक्षात्सम्बन्धविषयमिति अप्राप्येत्यनेन शक्त्यपरनामको मुख्यसम्बन्ध एव निषिद्ध्यते। एवं 'अप्राप्य मनसा सह' 'यन्मनसा न मनुते' इत्यादिना अनवहितमनोवेद्यत्वनिषेधात्। तथापि मनोवाचामगोचरमित्यस्य अविज्ञेयमित्यस्य च सामान्यनिषेधपरत्वं मन्वानस्य तच्छिष्यस्य प्रश्नोऽयमित्याशयः।

एतदेवाभिप्रेत्याह ॥ **तस्येदमुत्तरमिति** ॥ अन्वयं दर्शयन्नेव प्रथमचकारस्य अप्यर्थत्वमङ्गीकृत्य योजनामाह ॥ **तत्सर्वशब्दैरिति** ॥ सर्वशब्दावाच्यस्य लक्षणाऽदृष्टेः कथं तच्छून्यं लक्ष्यमित्याशङ्काव्यावृत्त्यर्थं अपिशब्द इति भावः ॥ **इत्यादिभिरखिलैः पदैरिति** ॥ यद्यपि शक्तं पदमिति पक्षे निर्विशेषं स्वयं भातमित्यादिकं वाक्यमेव तथापि सुप्तिङन्तं पदमिति पक्षमाश्रित्य तथोक्तमिति ध्येयम्। पदैर्लक्ष्यं ज्ञानेन लक्ष्यश्चेति चकारस्य सम्बन्धं दर्शयति **पदैर्लक्ष्यते ज्ञानलक्ष्यश्च भवतीति** ॥ **ज्ञानकर्मत्वाभावेपीति** ॥ वृत्तिविरोधेन स्वस्य स्वकर्मत्वाभावेपीत्यर्थः। अत एव मायावाद्यपि चैतन्यस्य चैतन्यकर्मत्वाभावे यत्तदद्रेश्यमिति श्रुतिं प्रमाणीकरोतीति भावः। तथा च वाचामगोचरमविज्ञेयमिति शब्दाभ्यां शब्दवाच्यत्वमन्वकर्मत्वं एव निषिद्धे। न तु लक्ष्यत्ववृत्तिव्याप्यत्वे अपि। अतो न विरोध इति निगमयति ॥ **इति न विरोध इति** ॥

नन्वज्ञेयं ज्ञानलक्ष्यश्चेति शून्यस्य ज्ञानलक्ष्यत्वमुक्तम्। तदयुक्तम्। लक्षणाया शक्तिवच्छब्दवृत्तित्वेन तद्धर्मत्वात्। लक्ष्यं हि तदुच्यते यन्मुख्यवृत्त्यन्यशब्दवृत्तिविषयः इत्याशयमविद्वान् शङ्कते ॥ **नन्विति** ॥ **ज्ञानलक्ष्यमिति** ॥ ज्ञानोपलक्ष्यमेव तद्विवक्षितम्। न तु तल्लक्ष्यम्। येनोक्तदोषः स्यात्। उपलक्षणत्वञ्च शब्दार्थयोरिव ज्ञानस्याप्यस्ति। उपलक्षणं हि तदुच्यते यद्विषयानन्तर्गतं विषयस्य व्यवहारहेतु। विषयानन्तर्गतिश्चानेकधा दृश्यते। शब्दस्य स्वानुविद्धार्थावाचकत्वेन। यथा गङ्गायां घोष इत्यादौ गङ्गादिशब्दस्य। अर्थस्यातदेकदेशत्वेन। यथा काकवद्देवदत्तगृहमित्यादौ काकादेः। न हि काकादिकमुत्तृणत्वादिकमिव विषयान्तर्गतम्। एवं ज्ञानस्यापि शून्याकर्मकत्वेन तदुपलक्षणत्वं युक्तमिति गुरुः स्वाशयमुद्घाटयन् परिहरति ॥ **मैवमिति** ॥

नन्वियता प्रबन्धेन शून्यवादिमते परतत्वस्वरूपं प्रदर्शितमाचार्येण। न तु तदुभयसाधारण्यम्। न हि 'न चाखण्डत्वेन कश्चिद्विशेषः' इत्यनन्तरवाक्येन 'यदखण्डं पदं लक्ष्यम्' इति वाक्येन च उक्तार्थे सिद्धान्तसालक्षण्यं प्रदर्शितमिति वक्तुं शक्यम्। ताभ्यां तस्य सर्वथा प्रतीत्यभावात्। तथा चावाच्यत्वादिना ब्रह्मशून्ययोः सालक्षण्याप्रतिपादनात्कथं परप्रमेये मायावादिनः शून्यवादिसालक्षण्यानुक्तावाचार्यस्य प्रतिज्ञातार्थाप्रतिपादनप्रयुक्तन्यूनता न स्यादित्याशङ्क्याह ॥ **एवमेव मायावादिसिद्धान्तः इति वक्ष्यमाणमेतच्छेषोऽपि विज्ञायत इति** ॥

यस्य येनार्थसम्बन्धो दूरस्थेनापि तेन सः।<br>अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् ॥

(वि टि ) इति तन्त्रवार्तिकोक्तन्यायेनैव 'एवमेव मायावादिसिद्धान्त.' इति वक्ष्यमाणस्य 'अवाच्यं सर्वशब्दैस्तल्लक्ष्यते चाखिलैः पदैः' इत्युक्तवाक्यशेषत्वमपि विज्ञायत इति नोक्तदोषावकाश इति भावेन वक्ष्यमाणस्योक्तशेषत्वे लब्धमर्थं दर्शयति ॥ तेनेति ॥ किञ्च त्वदभिमत ब्रह्म न शून्याद्व्यावृत्त तद्व्यावर्तकधर्मशून्यत्वात् यद्यतो व्यावृत्त तत्तद्व्यावर्तकधर्मवत् यथा पटव्यावृत्तो घट इत्याह ॥ किञ्चेति ॥ यद्धि यत्प्रतियोगिकव्यावृत्तिमत् तत्तदवृत्तिधर्मवत्त्वेनैव तत्प्रतियोगिकव्यावृत्तिमद्दृष्टम् । न च ब्रह्मशून्ययोर्घटपटयोरिव परस्परव्यावृत्तिं प्रति प्रयोजकोऽसाधारणः कश्चिद्धर्मोऽस्ति । शून्यवादिमायावादिभ्यामुभाभ्या स्वाभिमतपरतत्त्वयो. शून्यब्रह्मशब्दितयोर्निर्धर्मकत्वेनाङ्गीकृतत्वात् । अतस्तयोर्व्यावृत्ति किंकृता किम्प्रयुक्ता स्यादित्यर्थ । यद्यपि यत् यद्व्यावर्तकधर्मशून्यं तत्ततो न व्यावर्तते यथैतद्घट इत्यन्वयोऽप्यस्ति तथापि व्याप्तिव्यभिचाराभावप्रदर्शनमेव हेलयैव कर्तुं शक्यमिति व्यतिरेकप्रदर्शनमिति ज्ञेयम् ।

ननु ब्रह्मशून्ययोर्न्यायनये विशेषपदार्थानामिव स्वभावप्रयुक्तैव व्यावृत्ति । न तु विशेषकृता । अतोऽखण्डत्वरूप निर्विशेषत्वमङ्गीकृतमिति किमनिष्टं करिष्यतीति शङ्कते ॥ नन्विति ॥ घटपटादौ घटत्वाद्यसाधारणधर्मवत्त्वेनैव परस्पर व्यावृत्तिर्दृष्टेति शून्यब्रह्मणो परस्परव्यावृत्तिमङ्गीकुर्वद्भ्या तन्निर्वाहकतया तादृशधर्मवत्त्वमवश्यमङ्गीकार्यम् । न च विशेषपदार्थेष्विव तयोरपि स्वभावकृतैव व्यावृत्तिरित्युक्तमिति वाच्यम् । स्वभावस्यापि दूरे गत्वा तादृशासाधारणधर्मवत्त्वप्रयुक्तमेव व्यावर्तकत्वमङ्गीकार्यम् । सर्वत्र तथा दर्शनात् । अन्यथा दृष्टहान्याद्यापत्तेरिति भाव । स्वभावस्यापि व्यावृत्तौ विप्रतिपन्नं प्रति तस्यापि तादृशधर्मवत्तयैव व्यावृत्तेरुपपादनीयत्वात् । तस्माद्विशेषाभावे ब्रह्मशून्ययोर्व्यावृत्तिरेव न स्यादित्यनिष्टसत्त्वात्तत्परिहाराय शून्यवादिनेव मायावादिना निर्विशेषत्वं सर्वथा नाङ्गीकार्यमित्यभिप्रेत्य परिहरति ॥ मैवमिति ॥

ननु 'न च निर्विशेषब्रह्मवादिन. शून्यात्कश्चिद्विशेषस्तस्य' इति प्राग्ब्रह्मशून्ययोर्विशेषाभाव उक्त· । 'न चाखण्डत्वेन कश्चिद्विशेष' इत्यनेनापीदानीं तस्यैवोक्तौ पौनरुक्त्यमित्यत आह ॥ प्राग्व्याघातेनेति ॥

ननु मायावादी ब्रह्माखण्ड स्वीकरोति । शून्यवादी तु शून्य निर्विशेषमित्यङ्गीकरोति । तथा च शून्यवादिना शून्यमखण्डमङ्गीकृतमित्यत्रैव प्रमाणाभावात्कथ तयो सालक्षण्यमिति पृच्छति ॥ शून्यवादिनेति ॥ निर्विशेषत्वादन्यदखण्डत्वं नास्त्येव । निर्विशेषत्वञ्च 'निर्विशेष स्वय भातम्' इत्यादितद्वचनेनैव तेनाङ्गीकृतमिति ज्ञायत इति परिहरति ॥ निर्विशेषमितीति ॥ स्पष्टञ्चेति ॥ साक्षादखण्डपदघटितमित्यर्थ । न केवलमखण्डपदोपादानमखण्डमित्यनुक्तिव्यावर्तकम् । किन्तु अक्षयत्वोपपादकमपीत्याह ॥ अक्षयत्वेति ॥ उपपादयति ॥ खण्डं खल्विति ॥ घटादेः सखण्डत्व घटत्वादिधर्मविशिष्टत्वमेव द्रष्टव्यम् । सविशेषं खलु घटादिक क्षयिष्णु दृष्टमित्यर्थ । नन्वखण्डपदेनैव सर्वविशेषणविनिर्मुक्तत्वलाभात् सर्वैर्विशेषणैर्मुक्तमिति पुनरुक्तिरित्यत आह ॥ किमिदमिति ॥

ननु विशेषणं हि तदुच्यते यद्व्यावृत्ते विद्यमान सद्व्यावर्तकम् । सर्वविशेषणविनिर्मुक्तत्वञ्च सर्वविशेषणाना-

(वि. टि) मविद्यमानत्व विना नोपपद्यत इति कथं तादृशधर्मेषु विशेषणपदप्रयोग इत्याशङ्कते ॥ **तर्हीति** ॥ **लक्ष्यं** उपलक्ष्यम् । तथा च व्यावर्तकत्वमात्रेण विशेषणत्वोपचार इति भाव । उपलक्षणत्वमेव सदृष्टान्तमुपपादयति ॥ **यथेति** ॥

ननु यथा शून्यवाद्यङ्गीकारे विस्पष्ट वचनमुदाहृत एव मायावादिवचनमपि विस्पष्टं तत्समानार्थकमुदाहर्तव्यम् । अन्यथा प्रतिज्ञामात्रमेव स्यादित्याशङ्क्य प्रसिद्धत्वादनुदाहरणमित्याह ॥ **मायावादिनस्त्विति** ॥ 'एवं मायावादिराद्धान्त' इत्युक्तेपि तत्सालक्षण्यलाभादवधारणवैयर्थ्यमित्याशङ्क्याह ॥ **एवमेवेत्यनेनेति** ॥ **परिकर इति** ॥ शून्यवादिनो यादृशी प्रक्रिया यादृशञ्च प्रमाणं व्यवहारश्च यादृश· स सर्वोऽपीत्यर्थ ।

(रा टि) ॥ **अन्यच्चेति** ॥ अनृतजडेत्यादिना प्रागुक्तेन समुच्चयार्थश्चशब्द इति भाव ॥ **दिदर्शयिषुरिति** ॥ 'एवमेव मायावादिराद्धान्त.' इत्यनेनेति भाव । अवाच्यमिति श्लोक सङ्गमयितुमाह ॥ **यदुक्तमिति** ॥ **इति वाचामिति** ॥ एवरूपवाचामित्यर्थ । अन्यथा तद्वाचा निर्विषयत्वापत्तेरिति भाव । अज्ञेयत्वोक्तेरयुक्तत्वे हेतुमाह ॥ **नित्यभावनया भातमिति** ॥ **तस्येति** ॥ अवाच्यत्वादिकथनस्य अवाच्यमित्यादिवाक्यमुत्तरमित्यर्थः ॥ **तदिति** ॥ शून्यमित्यर्थ ॥ **वृत्तिव्याप्यतयेति** ॥ मनोवृत्ति शून्याविषयापि जलं केदारमिव शून्य व्याप्नोतीति वृत्तिव्याप्यतया वृत्तिज्ञानेनोपलक्षणभूतेन तद्व्यवहारजननात् ज्ञानलक्ष्यमित्युच्यते इत्यग्रे व्यक्तम् ॥ **गङ्गेत्यादेरिति** ॥ तीरादौ गङ्गाया घोष इति गङ्गादिपदस्येत्यर्थ ॥ **काकादेरिति** ॥ काकवद्गृहमित्यादाविति योज्यम् ॥ **अतत्कर्मत्वेनेतीति** ॥ एतच्चोपपादन पररीत्यैव । न तु स्वत । तदकर्मकज्ञानस्य तद्व्यवहारहेतुत्वेऽतिप्रसङ्गादिति ज्ञेयम् ।

॥ **एतच्छेषोपीति** ॥ अन्यथा अवाच्यमित्यादिश्लोकोक्तेरसाङ्गत्यप्राप्तेरिति भाव । न केवल यदखण्डमित्यादे शेष इत्यपेरर्थ । तात्पर्यं वर्णयन्नेवोत्तरवाक्यमवतारयति ॥ **किञ्चेत्यादिना** ॥ अवतारिकायामेव ब्रह्मशून्ययोरखण्डत्वे कश्चिद्विशेषो नेति व्याख्यानस्य लाभाद्विशेषशब्दार्थमाह ॥ **विशिष्यत इति** ॥ व्यावर्तत इत्यर्थ । व्यावृत्तेरुत्पत्तौ स्थितौ व्यावर्तकानपेक्षत्वेऽपि ज्ञप्तौ तदपेक्षाऽस्त्येवेत्याह ॥ **भावस्वभावस्यापीति** ॥ **प्रागिति** ॥ 'न च निर्विशेषब्रह्मवादिनः शून्यात्कश्चिद्विशेषस्तस्य' इत्यादावित्यर्थ । अत एव 'निर्विशेषमपि ब्रह्म शून्याद्विशिष्यत इत्यङ्गीकारे स्वव्याघातात्' इत्युक्तम् । अत्र त्वखण्डत्वेनेत्यत्र व्यावर्तकाभावेनेत्युक्तमिति भाव । ॥ **खण्डं खल्विति** ॥ अवयवोपेत क्षयि नाशयुक्तमित्यर्थ । अखण्डमित्यनेनापौनरुक्त्याय तद्व्याख्यानमिदमिति भावेनाह ॥ **किमिदमिति** ॥ **विशेषणेति** ॥ अक्षयं पदमित्यादिविशेषणप्रयोग इत्यर्थ· ॥ **यावान्परिकर इति** ॥ अवाच्यत्वसर्वविशेषणविनिर्मुक्तत्वसर्वविशेषणलक्ष्यत्वादिरूप ।

(वे टि) चशब्दस्य अप्यर्थत्वमाश्रित्यावाच्यमपीत्युक्तम् । लक्ष्यते चेत्यत्र चशब्देनावाच्यत्वसमुच्चय. । तथा च शब्दावाच्यत्वं शब्दप्रतिपाद्यत्वमित्युभयमस्तीति नोक्तविरोध इति भाव ॥ **कर्मत्वाभावेऽपीति** ॥ सकलसामर्थ्यविधुरस्य शून्यस्य ज्ञानं प्रति कर्मकारकत्वाभावादिति भाव ॥ **वृत्तिव्याप्यतयेति** ॥ वृत्तिविषय

(वे टि ) तयेत्यर्थ. । विषयत्वञ्चाकर्मणोऽपि शशविषाणादेरिवोपपन्नमिति हृदयम् ॥ **यथा गङ्गेत्यादेरिति** ॥ यथा गङ्गाशब्दस्य विषयभूततीरावाचकतया तदनन्तर्गतत्वेपि तद्व्यवहारहेतुत्वात्तदुपलक्षकत्वमित्यर्थ ॥ **यथा काकादेरिति** ॥ काकवद्देवदत्तगृहमित्यत्र काकरूपार्थस्य संस्थानविशेषवद्विषयभूतगृहैकदेशत्वाभावेन तदनन्तर्गतत्वेऽपि तद्व्यवहारहेतुत्वाद्गृहोपलक्षकत्वमित्यर्थ ।

। **तथा ज्ञानस्येति** ॥ तत्कर्मकमेव ज्ञान तदन्तर्गतम् । शून्यज्ञान तु तदकर्मकतया तदनन्तर्गतमपि तद्व्यवहारहेतुरिति शून्योपलक्षकम् । तथा च शून्यमपि तदुपलक्ष्यमिति ज्ञानलक्ष्यमित्युक्तिरुपपन्नेति भाव ॥ **न विशेषकृतेति** ॥ न विशेषजन्येत्यर्थ । उत्पत्तौ तदपेक्षाभावेपि ज्ञप्तौ तदपेक्षाऽवश्यकीत्याह ॥ **भावस्वभावस्येति** ॥

ननु 'न चाखण्डत्वेन कश्चिद्विशेष' इत्यस्य 'न च निर्विशेषब्रह्मवादिन शून्यात्कश्चिद्विशेषस्तस्य' इत्यनेन पूर्वग्रन्थेन पुनरुक्ति प्राप्तेत्यत आह ॥ **प्रागिति** ॥ **व्याघातेनेति** ॥ व्याघातरूपतर्कमूलकेनानुमानेनेत्यर्थ. । **विशेषाभावो** वैलक्षण्याभाव ॥ **व्यावर्तकधर्माभावेनेति** ॥ विशेषाभाव इति वर्तते । तस्य च व्यावृत्त्यभाव इत्यर्थ । प्रतिपाद्यत इति शेष । एवञ्च पूर्वं निर्विशेषत्वेन वैलक्षण्याभावे साधिते सालक्षण्य प्राप्तमित्यत्रैव तात्पर्यम् । अत्र पुनर्व्यावर्तकाभावे व्यावृत्तिरेव न सम्भवतीत्यभेद एव प्राप्त इत्युच्यत इति महान्भेद इति भाव ।

यद्वा पूर्ववाक्ये 'न कश्चिद्विशेष' इत्यत्र न व्यावृत्त्यादिरूपो विशेष इत्यर्थ । तत्र निर्विशेषे व्यावृत्त्यादिरूपविशेषाङ्गीकारस्य व्याहतत्वप्रसङ्ग एव बाधक । अत्र पुनर्व्यावृत्तिरूप एव विशेषो नास्तीति प्रतिज्ञार्थः। तत्र व्यावर्तकधर्माभावो हेतुरिति न पौनरुक्त्यमिति भाव. ।

॥ **खण्डं खल्विति** ॥ सविशेषमित्यर्थ । अत्र यत्क्षयि तत्खण्ड यथा घटादीति व्यतिरेकव्याप्तिरभिमतेति ज्ञेयम् ॥ **विशेषणयोग इति** ॥ निर्विशेषमित्यादिनोक्तविशेषणयोग इत्यर्थ. ॥ **लक्ष्यमिति** ॥ उपलक्ष्यमित्यर्थ ॥ **तथा विशेषणनीति** ॥ निर्विशेषत्वादयो धर्मा इति भाव । तथा च निर्विशेषत्वादीना विशेषणत्वाभावेपि तटस्थतया व्यावर्तकत्वेनोपलक्षणत्वमेव । विशेषणैरिति विशेषणत्वोक्तिश्च व्यावर्तकत्वसाम्येनौपचारिकीति भावः। एव मायावादिराद्धान्त इत्युक्तेपि तत्सालक्षण्यलाभादवधारणवैयर्थ्यमित्यत आह ॥ **एवमेवेत्यनेनेति** ॥ **परिकर इति** ॥ उपयुक्तमित्यर्थ । प्रक्रियाप्रमाणलक्षणव्यवहारादिकमिति यावत् ।

(द्वै द्यु.) ॥ **शब्दधर्म इति** ॥ तन्निष्ठस्वशक्यसम्बन्धकत्वस्यैव तत्र लक्षणेतिव्यवहारगोचरत्वादिति भावः। उपलक्षणपदस्य प्राचीनव्यवहारानुसारेण नानार्थकत्वात्तदनुसारेणाय व्यवहार इत्याह ॥ **मैवमिति** ॥ **अनेकविधेति** ॥ अननुगतरूपेण लक्षणेन निविष्टेति भाव ॥ **शब्दस्येत्यादि** ॥ तत्तत्समभिव्याहृतोपलक्षणपदादिस्थले तादृशतादृशार्थबोधस्तात्पर्यवशाज्जायत इत्यर्थः । तथा च ज्ञानलक्ष्यमित्यत्र त्वनेन ज्ञानाकर्मत्वे सति तज्जन्य-

(द्वै घु.) व्यवहारयोगीत्यर्थो लभ्यत इति ज्ञानलक्ष्यमित्येतन्न बाधितार्थकमिति भाव ॥ **विज्ञायत इति** ॥ अन्यथा तस्यैतच्छेषत्वाभावेऽत्र शून्यवादिवाक्योदाहरणमात्रमनुपयुक्त स्यात् । मतद्वयसाम्यस्यानुपपादनादिति भाव ॥ **प्रागिति** ॥ 'न च निर्विशेषब्रह्मवादिन ' इत्यत्रेत्यर्थ । ननु **यदखण्डं पदं लक्ष्यमिति** वाक्योदाहरणानन्तरमेव **न चाखण्डत्वेन कश्चिदिति** वाक्यमपेक्षितम् । पूर्ववाक्यसिद्धस्य हेतूकरणसौकर्यात् । न च **निर्विशेषमित्यादि-** नैवाखण्डत्व सिद्धमित्यभिप्रेत्य **न चाखण्डत्वेनेति** ग्रन्थ प्रवृत्त इति वाच्यम् । तर्हि जिज्ञासाभावेन **यदखण्डं पदमिति** वाक्योदाहरणमसङ्गत स्यादित्याशङ्क्य तदुत्थापयति ॥ **शून्यवादिनेत्यादिना** ॥ **स्पष्टं चेति** ॥ तथा च स्पष्टीकरणार्थं पुनरभिधानान्नाऽजिज्ञासिताभिधानमेतदिति भाव ।

॥ **तथा विशेषणानीति** ॥ ब्रह्मतादात्म्यापन्नतया तद्धर्मतारहितान्यप्यारोपमात्रेण तद्व्यवहारनिर्वाहकाणि भवन्तीत्यर्थ ।

(**गु. टि**) एतद्यावत्यैशङ्काप्रदर्शनेनैतदुक्तेर्वैयर्थ्यशङ्कां परिहरति ॥ **यदुक्तं प्रागित्यादिना** ॥ कथमनेनोक्तशङ्कापरिहार इत्यतस्तत्परिहारकत्वेन वाक्य योजयति ॥ **तत्सर्वशब्दैरित्यादिना** ॥ **ज्ञानकर्मत्वाभावेऽपीति** ॥ सकलसामर्थ्यविधुरस्य शून्यस्य ज्ञान प्रति कारकताया एवाभावेन तद्विशेषस्य कर्मत्वस्य सुतरामभावादिति भाव· ॥ **वृत्तिव्याप्यतयेति** ॥ वृत्तिविषयतयेत्यर्थ । सकलसामर्थ्यरहितस्यापि शशविषाणादे करणसामर्थ्येन वृत्तिविषयतादर्शनेन तादृशस्य शून्यस्यापि वृत्तिविषयत्वसम्भवादिति भाव· । **शब्दधर्मः** पदधर्म इत्यर्थ । वृत्तित्वेन शक्तिवत् पदधर्मत्वस्यैव सिद्धत्वादिति भाव ॥ **तत्कथमिति** ॥ लक्षणाया अशब्दात्मकज्ञान धर्मत्वाभावेन ज्ञानस्यालक्षकत्वादिति भाव ॥ **यथा गङ्गेत्यादिरिति** ॥ गङ्गाशब्दस्य विषयभूततीरवाचितया तदनन्तर्गतत्वेपि तद्व्यवहारहेतुत्वात्तदुपलक्षकत्व यथेति भाव ॥ **यथा काकादेरिति** ॥ काकवद्देवदत्तगृहमित्यत्र काकरूपार्थस्य संस्थानविशेषवद्विषयभूतगृहैकदेशत्वे तादृशस्तम्भाद्यपगमे गृहभङ्गबुद्धिवत्काकापगमेपि तद्भङ्गबुद्धिप्रसङ्गेन तस्य विषयभूतगृहैकदेशत्वाभावेन तदनन्तर्गतत्वेऽपि तद्व्यवहारहेतुत्वात्तदुपलक्षकत्वं यथेति भाव ॥ **तथा ज्ञानस्येति** ॥ तत्कर्मकज्ञानस्यैव तदन्तर्गतत्वेन शून्यज्ञानस्य चातत्कर्मकत्वेन तदन्तर्गतत्वाभावेपि करणसामर्थ्येन तद्विषयतया तद्व्यवहारजनकत्वात्तदुपलक्षणत्वमित्यर्थ । अस्तु भावस्वभावस्तत किमित्यतो भावस्वभावस्य विशेषकृतत्वाभावात्तत्स्वभावव्यावृत्तेर्विशेषकृतत्वे भावस्वभावत्वभङ्गप्रसङ्गात् विशेषकृतत्वाभावसिद्धिरित्याह ॥ **न विशेषकृतेति** ॥ व्यावृत्तेर्भावस्वभावतया उत्पत्तौ विशेषानपेक्षत्वेऽपि ज्ञप्तौ तदपेक्षत्वाद्विशेषाभावे उत्पत्त्यभावाप्राप्तावपि ज्ञप्त्यभाव स्यादेवेत्याशयेन परिहरति ॥ **मैवमिति** ॥ ननु व्यावृत्तिर्वस्तुस्वरूपमेव । अतस्तद्दर्शनमेव व्यावृत्ति दर्शनम् । न च पदार्थस्य ज्ञप्तौ व्यावर्तकधर्मापेक्षास्ति । तत्कथं तत्स्वरूपव्यावृत्तेर्ज्ञप्तौ व्यावर्तकधर्मापेक्षा स्यात् । अन्यथा तस्या वस्तुस्वरूपत्ववाचोयुक्ती रिक्ता स्यादिति चेन्मैवम् । न हि निर्विशेषवस्तुमात्र व्यावृत्ति । तथा सति वस्तुमात्रस्य सर्वैरङ्गीकृतत्वात्तत्र विप्रतिपत्त्यभावप्रसङ्गात् । किन्तु अन्योन्याभाव एव । स रूपादिवद्वस्तुना सविशेषाभिन्न इत्येव स्वरूप व्यावृत्तिरित्यस्यार्थ । अन्योन्याभावश्च सन्नपि सादृश्यादिदोषवशान्न प्रतीयत इति

(गु टि) युक्त्यैव तत्प्रतीत्यर्थं व्यावर्तकधर्मापेक्षापीत्यन्यत्र विस्तरः। ततश्च ज्ञापकतया सप्रयोजनत्वाद्विशेषाभाव किं करिष्यतीति तद्वैयर्थ्यशङ्काया अनवकाश इति द्रष्टव्यम्।

ननु 'न च निर्विशेषब्रह्मवादिन शून्यात्कश्चिद्विशेषस्तस्य' इति पूर्वग्रन्थेनोक्तस्यैव शून्यब्रह्मणोर्विशेषाभावस्य 'न चाखण्डत्वेन कश्चिद्विशेष' इत्यादिनापि ग्रन्थेनाभिधानात्पौनरुक्त्यमित्यत तत्रोपपादितप्रकारापेक्षया प्रकारान्तरेण विशेषाभावप्रतिपादनान्न पुनरुक्तिरित्याह **प्रागित्यादिना**॥ **व्याघातेनेति**॥ व्याघातरूपतर्कमूलकेनानुमानेन विशेषाभावो वैलक्षण्याभाव साधित इत्यर्थ ॥ **व्यावर्तकधर्माभावेनेतीति**॥ विशेषाभाव. साधित इति वर्तते। तस्य च व्यावृत्त्यभाव साधित इत्यर्थ ॥ **अक्षयत्वोपपादनायेति**॥ विमत अक्षय अखण्डत्वादित्यनुमानेनाक्षयत्वमुपपादयितुमित्यर्थ । दृष्टान्ताभावेन व्याप्तेरभावात्कथमस्य गमकत्वमित्यतस्ता दर्शयति॥ **खण्ड खल्विति**॥ यत्क्षयवत्तत्खण्डमिति व्यतिरेकव्याप्तिरनेनोक्ता भवति ॥ **सर्वैर्विशेषणैर्मुक्तमितीति**॥ अनेन सर्वविशेषरहितमखण्डमित्युक्तं भवति॥ **विशेषणप्रयोग इति**॥ निर्विशेषमित्यादिविशेषणप्रयोग इत्यर्थ ।

ननु लक्षणाया वृत्तित्वेन शब्दधर्मत्वेन कथ विशेषणलक्ष्यत्वकथनमित्यत यद्विषयानन्तर्गत स्याद्व्यवहारजनकं तदुपलक्षणमित्युच्यते। विषयानन्तर्गतिश्चानेकधा। शब्दस्यावाचकत्वेन अर्थस्यातदेकदेशत्वेन ज्ञानस्यातत्कर्मकत्वेनेति प्रागुक्तमुपलक्षणत्व मनसि निधाय विवक्षितविषयानन्तर्गतिप्रदर्शनपूर्वकं विशेषणानामुपलक्षणत्व दर्शयति॥ **यथेति**॥ **काकादिक विषयानन्तर्गतमिति**॥ तस्य काकादेर्विषयभूतगृहैकदेशत्वे तदेकदेशभूतस्तम्भाद्यपगम इव काकाद्यपगमेपि गृहभङ्गबुद्धिप्रसङ्गान्न काकादिकं विषयातर्गतमिति भाव । 'एव मायावादिराद्धान्त' इत्युक्तिमात्रेणाऽपि सालक्षण्यलाभात् 'एवमेव' इत्येवकारप्रयोगोऽनर्थक इत्यतस्तत्प्रयोजनमाह॥ **एवमेवेत्यनेनेति**॥ **परिकरः** उपपादनप्रकार ।

(टी) **नन्वास्तां ब्रह्मशून्ययोरन्यो विशेषः। ब्रह्मेत्युक्ते तावद्विधिः प्रतीयते। शून्यमित्युक्ते निषेधः। तावता च विशेषसिद्धिरिति चेन्न। विधिनिषेधौ किं ब्रह्मशून्यतन्मात्रमुत तद्धर्मौ। आद्ये ताभ्यां किमधिकमाचरितम्। द्वितीयस्तु नास्त्येवेत्याह**

न च मायावादिनो भावत्वं नाम धर्मः। न च शून्यवादिनः शून्यत्वं नाम धर्मः।

**मायावादिनः शून्यवादिनो मत इति शेषः। भावत्वं विधित्वम्। शून्यत्वं निषेधत्वम्। धर्मो ब्रह्मणः शून्यस्य चाभ्युपगत इति शेषः। एतच्च प्रागुदाहृततद्वाक्यैरेव सिद्धमिति न पुनस्तद्वाक्योदाहरणम्। तदेव शून्यवादिमायावादिमतयोरविशेषात् शून्यवादिमतनिराकरणपरतया व्याख्यातानामपि सूत्राणां मायावादिमतनिरासायोदाहरणेपि न कश्चित्सिद्धान्तविरोध इति सिद्धम्।**

(वि टि) ननु ब्रह्म शून्यमिति व्यवहारत एव विशेषलाभे किं विशेषणान्तरगवेषणयेति **शङ्कते**॥ **नन्विति**॥ **तावता चेति**॥ चशब्दोऽवधारणार्थं ॥ **ताभ्यामिति**॥ विधिनिषेधाभ्यां **विधिमुखेन निषेध-**

(वि टि) मुखेन च प्रवृत्ताभ्या ब्रह्मशून्यपदाभ्यामित्यर्थ. ॥ **किमधिकमाचरितमिति** ॥ तथा च शब्दकृत एव विशेषो नार्थकृत इति भाव । मूलस्य समग्रशङ्कोत्तरत्वलाभाय शेषं पूरयति ॥ **न चेति** ॥ भावत्वाभावत्वे कस्य नाङ्गीक्रियेते इत्याकाङ्क्षाया विधिनिषेधशब्दार्थोक्तिपूर्वक तद्धर्मित्वेन प्रमक्त दर्शयति ॥ **भावत्वमिति** ॥

(रा. टि) ॥ **आस्तामिति** ॥ तिष्ठत्वन्यो विशेष इत्यर्थ । **विशेपसिद्धिः** व्यावर्तकसिद्धिरित्यर्थ ॥ **ताभ्यामिति** ॥ विधिनिषेधाभ्यां विधिनिषेधशब्दाभ्यामिति वाऽर्थ । अनुक्तोपालम्भनिरासाय वा अप्रसक्त-प्रतिषेधनिरासाय वाऽह ॥ **मत इति शेष इति** ॥ **एतच्चेति** ॥ धर्मानभ्युपगमनम् । 'निर्विशेषं स्वय भातम्' । 'यदखण्ड पद लक्ष्यम्' इत्यादितद्वाक्यैरित्यर्थ । मायावादिनो नासत इत्यादिसूत्रविरोधोक्तावाशङ्कितसिद्धान्त-विरोध न च शून्यवादिन सकाशादित्यादिना शून्यत्व नाम धर्म इत्यन्तेन ग्रन्थेन परिहृत्याधुनोपसहरति ॥ **तदेवमिति** ॥

(द्वै द्यु) ॥ **विधिरित्यादि** ॥ विधित्वनिषेधत्वेऽखण्डोपाधी इति सुधासमयचरण**टिप्पण्यां वंशप-ल्लीस्थाचार्यैरुक्तम्** ॥ **प्रागुदाहृतेति** ॥ **निर्विशेष स्वय भात**मित्यादिवाक्येन विशेषसामान्यनिषेधादिति भाव । प्रकृतमर्थमुपसंहरति ॥ **तदेवमिति** ॥

**यत्त्वत्राधुनिकेन प्रलपितम्** । 'न च शून्यवादान्मायावादस्याविशेष । [1]ततो जगन्नोत्पद्यत इति तवा-भ्युपगमात् अन्यथा बौद्धैरसतोऽर्थक्रियाकारित्वाभावेनासतस्तदुत्पत्त्यभिधानविरोधात् । स्थिरस्यापि हि कारणत्वे युगपत्सर्वोत्पत्त्यादिप्रसङ्गात् । सहकारिविरहस्य [2]कार्योत्पादप्रयोजकत्वे क्षणभङ्गवार्ताच्छेदापत्ते । अभ्युपेयते हि शून्यवादिनापि क्षणभङ्ग । प्रसिद्धं चैतदात्मतत्त्वविवेकादौ तार्किकशिरोमणिनोदाहृतम् ।

नैरात्म्यदृष्टिं मोक्षस्य हेतुं च न स मन्यते ।
आत्मतत्त्वधिय त्वन्ये न्यायवेदानुसारिण ॥ इति ।

आत्मतत्त्वविवेकेऽपि 'अस्तु तर्हि शून्यतैव परमनिर्वाणमिति चेन्न । सा हि यद्यसिद्धा तत्कथं तदवशेष विश्वम् । परतश्चेत्सिद्धा परोऽभ्युपगन्तव्य । स च परो यदि संवृतिरेव तदा विश्वशून्यतयोर्न कश्चिद्विशेष इति कथ तदप्यवशिष्येत । संवृतिरूपश्चेत्पर परत एव सिद्धश्चेदनवस्था । स्वयमसिद्धश्चेत्कथं शून्यत्वमपि साधयेत् सिद्ध-श्चेदायातोऽसि मार्गेण । स्वत सिद्धत्वादेव तदनुभवरूपम् । शून्यत्वादेव न कालपरिच्छेद इति नित्यम् । अत एव न देशपरिच्छेद इति व्यापकम् । अत एव तस्मिन्न सधर्मकत्वमिति विचारास्पृष्टम् । तस्य धर्मधर्मिभाव मादाय प्रवृत्तेः । अत एव तस्य विशेषाभाव इत्यद्वैतम् । प्रपञ्चस्यापारमार्थिकत्वादेवमसत्प्रतियोगिकमिति विधिरूपम् । अविचारितप्रपञ्चाक्षेपाद्धयय व्यवहार । तथापि प्रपञ्चशून्यानुभवमात्रस्य प्रपञ्चे क. सम्बन्ध येनाय प्रकाशत इति चेद्वस्तुतो न कश्चित्संवृत्या गगनगन्धर्वनगरयोराधाराधेयभाव इव विषयविषयिभाव । स च यथा नैयायिकै समर्थयिष्यते तथैव । वेद्यनिष्ठस्त्वसावस्मिन् दर्शन इति विशेष । अविद्यैव तथा तथा विवर्तते

[1] शून्यादित्यर्थ ।

[2] कार्याजुत्पाद इति पाठेन भाव्यमिति भाति ।

(द्वै द्यु) यथानुभवीयतया व्यवह्रियते। तत्तन्मायोपनीतोपाधिभेदाच्चानुभूतिरपि भिन्नेव व्यवहारपथमयत इति। गगनमिव स्वप्नदृष्टघटकटाहकोटरकुटीकोटिभि। तदास्तां तावत्किमार्द्रकवणिजो वहित्रचिन्तया। तस्मादनुभवव्यवस्थितावनात्मापि स्फुरतीत्यवर्जनीयमिति प्रविश वाऽनिर्वचनीयख्यातिकुक्षिं तिष्ठ वा मतिकर्दममपहाय न्यायानुसारेण नीलादीना पारमार्थिकत्वे' इति। यदि स्वप्रकाशात्मवादोऽपि शून्यवाद स्यात्तर्ह्यायातोऽसि मार्गेणेत्यसङ्गत स्यात्। तस्योक्तमार्ग एवानुत्थितत्वात्। अनिर्वचनीयख्यातिकुक्षिप्रवेशनानुयोगायोगाच्च। तत्रैव प्रतिष्ठितत्वात्। अत एव **नासतो दृष्टत्वादिति** भगवान् सूत्रकारोऽसत कार्योत्पादकत्व निराचकार। **वैधर्म्याच्च न स्वप्नादिवदित्यत्रा**ऽपि जगन्निस्तत्त्व कुतर्कपीड्यत्वात्स्वप्नवदित्युक्ते स्वप्नादिदृष्टान्तस्यापि निस्तत्त्वतारूपसाध्यविरुद्धधर्मवत्त्वात्स्वप्नवदिति दृष्टान्तोऽसङ्गत। तत्राप्यारोप्याधिकमधिष्ठानमन्तरेण निरधिष्ठानकभ्रमानभ्युपगमादिति पर्यवसितार्थ।

द्वे सत्त्वे समुपाश्रित्य बुद्धाना धर्मदेशना।

इति **धर्मकीर्ति**वचन तु एकेनैव बुद्धेन सत्यक्षणिकविज्ञानवादोऽनिर्वाच्यक्षणिकविज्ञानवादश्च परस्परविरुद्धौ कथ दर्शिताविति आशङ्कयाधिकारिभेदेन तद्देशनोपपत्तिप्रतिपादनपरम्। उक्तं हि तेनैव।

देशना लोकनाथाना श्रोतृचित्तवशानुगा।

इति। एतेन प्रसिद्धप्रामाणिकग्रन्थेष्वनुपलभ्यमान स्वप्रकाशपरमार्थानुभवात्मकत्व शून्यस्य शून्यवादिसम्मतमिति, तच्च सत्यं तु द्विविध प्रोक्तमिति तद्वचनैरेवावगम्यत इति च परोक्तमश्रद्धेयमेव' इति।

तदसत्। सर्वार्थक्रियाकारित्वविधुरस्य ब्रह्मणस्त्वन्मते जगदुत्पत्तेरविद्याबलेनेव तन्मते सवृतिसम्बन्धेन जगदुत्पत्त्यङ्गीकारे विरोधाभावात्। अत **एवोक्तमनुव्याख्याने** तन्मतानुवादावसरे।

शून्यात्सवृतियोगेन विश्वमेतद्भविष्यति।

इति। न च शून्यस्य कार्योत्पादकत्वे स्थिरत्वानुपपत्तिरिति वाच्यम्। त्वन्मते मायोपहितस्य मिथ्यात्वेऽपि शुद्धस्य सत्यत्वादिवत्संवृत्यवच्छिन्नस्य क्षणिकत्वे वा स्थिरत्वे वा शुद्धशून्यस्य तद्वान्यभावात्। शून्याज्जगन्नोत्पद्यत इति शून्यवादिवाक्यस्याभावेन त्वदुत्प्रेक्षितबाधकस्य च परिहृतत्वेन ततो जगन्नोत्पद्यत इति त्वदुक्तेरसङ्गतत्वमेव। यदपि **दीधितिकृद्व**चनोदाहरण कृतं तदसङ्गतमिति स्फुटमेव। शून्यवादिमते पदार्थानां क्षणिकतायास्तद्वाक्येनाप्रतीयमानत्वात्। शून्यवादिमतवेदान्तिमतयोर्वैलक्षण्यबोधनाशोपयुक्ततया कथञ्चित्तत्सङ्गमनेऽपि तस्य प्रकृतानुपयोग एव। न हि सर्वांशेऽप्येकाकारोक्तिरूपसाम्य शून्यब्रह्मवादिनोरस्माभिर्वक्तुमुद्यत येनेद सङ्गत स्यात्। किन्तु निरसनीयांशसाम्यमात्रेणेति टीकायामुक्तम्। तच्च वर्तत एव। शून्यवादिना मिथ्याभूतस्य जगत शून्यविवर्तत्वाभ्युपगमात्। न हि तन्नास्तीति वक्तु युक्तम्। जगतस्तत्रारोपितत्वरूपविवर्तत्वाभावे तत्तादात्म्यप्रयोजकभिन्नाभिन्नत्वयोरभावप्रसङ्गात्। न च तदेव नास्तीति वाच्यम्। 'विज्ञान सत्यम्। तदाकारस्तद्विषयस्त-

(द्वै.यु.)द्धर्मत्वात् तद्भिन्नाभिन्न । ततोऽत्यन्तभिन्नस्त्वलीक इति विज्ञानवाद । तदुत्तरभूमिरूपे शून्यवादे तु द्विषयस्तथैव । विज्ञान तु स्वाकारसहित मिथ्येति विशेष ' इति गुर्वद्वैतचन्द्रिकायां विज्ञानात्मकशून्यस्य जगत्तादात्म्यस्य स्पष्टमवगमात् । अत एव तस्य ज्ञानात्मकत्वेन तस्य प्रकाशात्मकत्वमप्यवगम्यते । न च ज्ञानस्य बाध्यत्व शून्यवादिनोऽभिमतमिति वाच्यम् । किं तावतापि । प्रकाशरूपत्वहानेरभावात् । त्वयापि जगत्तादात्म्यरूपेण विज्ञानात्मकस्य ब्रह्मणो बाध्यत्वस्याङ्गीकृतत्वात् । न च शुद्धस्वरूपस्य न बाध्यत्व मन्मत इति वाच्यम् । तदीयशून्यस्यापि निरुपाख्यस्य [1]सर्वप्रमाणगोचरस्य बाधप्रमाविषयत्वाभावरूपाबाध्यत्वाक्षते । अत एव [2]प्रमाणगोचरत्वादेव त्वदभ्युगतमवेद्यस्वरूपस्वप्रकाशत्वमापतत्येव बलात् । अत एव त्रैकालिकनिषेधप्रतियोगिनोऽबाध्यतादात्म्यरूपमनिर्वाच्यत्व जगतोऽपि प्राप्तमेव । त्वदुक्तब्रह्मणि सत्तायास्त्वया स्वाभाविक्या अनङ्गीकारादेव भ्रमस्य सदधिष्ठानकत्वनियमोऽपि त्यक्त एवेत्येवमादिसाम्य चाचार्यैरत्र निर्विशेषब्रह्मवादीत्यादिना ग्रन्थान्तरेषु च स्पष्टमुपपादितमेव । ततश्च शून्यवादिसाम्यस्य तवापरिहारे प्रकृतपद्यजातस्य त्वदनुपलम्भमात्रेणासत्त्वोक्तिस्त्वन्मौर्ख्यख्यापिकैव ।

अपि च सत्त्वद्वैविध्यविषयत्वेन सर्वसम्मत शून्यवादिनो धर्मकीर्तेर्वचनं स्पष्टमेव ।

द्वे सत्त्वे समुपाश्रित्य बुद्धाना धर्मदेशना ।
लोके सांवृतसत्य च सत्य च परमार्थत ॥ इति ।

तथा जगदनिर्वाच्यत्वविषये च

इद वस्तुबलायात यद्वदन्ति विपश्चित. ।
यथा यथा विचिन्त्यन्ते विशीर्यन्ते तथा तथा ॥
बुद्ध्या विविच्यमानाना स्वभावो नावधार्यते ।
अतो निरभिलाप्यास्ते नि स्वभावाश्च देशिता ॥

इति चन्द्रिकोदाहृतपद्यद्वयम् । भामत्यां तु विविच्यन्त इति विशीर्यन्त इत्यस्य स्थाने पठित्वा 'न क्वचिदपि पक्षे व्यवतिष्ठन्ते' इति तद्व्याख्यातम् । निरभिलाप्यपदोक्तमनिर्वाच्यत्वं प्रत्युपपादकस्य विचारासहत्वस्योक्तत्वात् । इद वस्तुबलायात अधिष्ठानवस्तुबलायातमित्यर्थ ।

यत्तु धर्मकीर्तिवचनमधिकारिभेदेन व्यवस्थापरमिति तदत्यन्तमशुद्धम् । विरुद्धमतयोर्मध्येऽन्यतरस्याप्रामाण्येऽवश्यमवर्जनीये सति अधिकारविशेष प्रति तदुपदेष्टुर्विप्रलम्भकत्वस्याऽवश्यकतया स्वाचार्यस्य विप्रलम्भकत्वप्रसङ्गात् अधिकारभेदे मानाभावात् त्वदभिमतार्थोऽस्य श्लोकस्य विवक्षित इत्यस्य वक्तुमशक्यत्वात्त्वदुक्तार्थस्यास्फुटस्य स्फुटपरित्यागेनाङ्गीकारे बीजाभावाच्च । उपष्टम्भकत्वेनोक्तश्लोकार्थोऽप्येकमतसिद्धपरमप्रमेयाविरोधि-

[1] सर्वप्रमाणागोचरस्य इति पाठेन भाव्यमिति भाति । [2] प्रमाणागोचरत्वादेव इति पाठेन भाव्यमिति भाति ।

(द्वै. द्यु) पक्षद्वयविषय एव। अन्यथोक्तरीत्या विरुद्धपक्षद्वयोपदेशकर्तुर्विप्रलम्भकत्वस्यावर्जनीयतया लोकनाथानामिति तत्र बहुमानानुपपत्तेः।

यदपि स्वमतस्य शून्यवादाद्वैलक्षण्यमुदाहृतोदयनग्रन्थलभ्यमिति तदप्यसत्। शून्यवादिना परतत्त्वे निर्धर्मकत्वेन शून्यत्वव्यवहारस्यापरतत्त्वे वास्तवसत्त्वाभावेनासत्त्वव्यवहारस्य कृतत्वात्। स्वमतस्य तन्मतवैलक्षण्यभ्रम लोकानामुत्पादयितुकामेन प्रतारकेण त्वदाचार्येण शून्यस्य ब्रह्मत्वेन स्वप्रकाशसदात्मकत्वेन जगतोऽसद्वैलक्षण्यादिघटितानिर्वचनीयत्वेनाप्रामाण्यापरपर्यायव्यावहारिकप्रमाणत्वेन वेदस्य व्यवहृतत्वेन यथा श्रुतग्रन्थमात्रदृष्टयोदयनेन तथाभिधानेऽपि तन्निष्कर्षे वैलक्षण्याभावस्योक्तरीत्या प्राप्त्याऽस्माभिर्वैलक्षण्यव्यवहारे बाधकाभावात्। अत एवोक्तं सुधायां नासतो दृष्टत्वादित्यधिकरणव्याख्यावसरे 'अत्र शून्यस्यासत्त्वमापाद्येदं दूषणाभिधानम्' इति। शून्यस्य सर्वधर्मरहितत्वे सत्त्वाभावादसत्त्व सिद्धवत्कृत्येत्यर्थ। तच्च तवाप्यविशिष्टमिति त्वन्मतनिराकरणपरत्वमुक्तसूत्राणा युक्तमेव। भवद्भाष्येऽपीदं सूत्रजातं समुदाय उभयहेतुकेऽपीत्येतदधिकरणशेषमीत्थं व्याख्यातम्। 'क्षणिकात्कार्योत्पत्तिमिच्छताऽर्थादभावान्निरुपाख्यात्कार्योत्पत्तिरङ्गीकृता स्यात्। सा न युक्ता। 'असतो निरुपाख्यात्कार्योत्पत्तिर्न युक्ता। असतो नरविषाणादे सकाशात्कार्योत्पत्त्यदर्शनात्' इति 'अत एव भगवान् सूत्रकार' इत्यादित्वदुक्तिरयुक्तैव। उक्तरीत्या त्वद्ब्रह्मकारणतानिरासेन त्वद्विरोधित्वस्य तावताऽप्यपरिहारात्। एतेन शून्यवादिनोऽपि जगत्क्षणिकत्वस्याभिप्रेतत्वात् शून्याज्जगत उत्पत्तिकथनं तन्मतविरुद्धम् इति त्वया प्रथमत उक्तमपि निरस्तम्। क्षणिकत्वस्य निरुपाख्यादुत्पन्नत्व प्रति विरोधित्वे 'क्षणिकात्कार्योत्पत्त्यङ्गीकारेऽर्थान्निरुपाख्यात्कार्योत्पत्तिरुक्ता भवति' इति त्वदाचार्योक्तेरसङ्गतत्वापत्त्या तस्य तद्व्याप्यताया एवावश्यकतया विरोधोक्तेरयुक्तत्वात्। तस्मान्नोदयनग्रन्थानानुगुण्यमस्माकम्।

अपि चाचार्याणामद्वैतदर्शने महती श्रद्धेति प्रतिज्ञाय तदुपपादनायोक्तात्मतत्त्वविवेकवाक्यानि त्वद्गुरुणाऽद्वैतचन्द्रिकायामुदाहृतानि। तथा च तस्याद्वैतवादित्वे स्वमताग्रहेणोदयनोक्तार्थविसवाद: कथं [2]तद्भूषयतामस्माकं बाधकरूपमित्यलमुन्मत्तवचननिराकरणाभिनिवेशेन।

उदयनवाक्ये [3]॥ स्वतः सिद्धश्चेदिति ॥ शून्यरूपपदार्थ इत्यर्थ ॥ तदनुभवरूपमिति ॥ शून्यत्वेनाभिमतमित्यर्थ ॥ अविचारितेति ॥ अविचारितो य प्रपञ्चस्तदाक्षेपात् नेह नानेत्यादिश्रुत्या तन्निषेधात् अयं व्यवहारः अद्वैतमिति व्यवहार। संवृत्त्या अविद्यया। नैयायिकैर्मादृशै। समर्थयिष्यते प्रकाशस्य सतस्तदीयतारूपसम्बन्धो विषयतेत्यादिरीत्या [4]लक्ष्यते ॥ वेद्यनिष्ठ इति ॥ दृश्यप्रपञ्चनिष्ठ। न तु चिद्रूपदृङ्निष्ठ। विषयतायास्तादात्म्यरूपत्वेन तदध्यस्त प्रपञ्चे सम्भवात्। चिति स्वभेदाभावेन भेदाभेदनियततादात्म्यायोगात्। अस्मिन् दर्शने अद्वैतदर्शने ॥ तत्तन्मायेति ॥ तूलविद्यादिभेदेन मूलाविद्याया नानात्वे मायापदार्थभूताविद्या-

---

[1] अभावान्निरुपाख्यात्

[2] तद्दूषयतामस्माक इति पाठेन भाव्यमिति भाति।

[3] अत्रोदाहृतानि प्रतीकानि पूर्वोदाहृतोदयनवाक्यानाम्।

[4] उपपादयिष्यते इति पाठेन भाव्यमिति भाति।

(द्वै.गु) विशेषणत्वम्। नो चेदुपाधिविशेषणत्व तत्तदित्यस्य॥ स्वप्नेति॥ साकल्येन गगनस्य कटाहाद्यवच्छिन्नत्व-दर्शन स्वप्न एव सम्भवतीति तद्ग्रहणम्। आर्द्रकवणिजः शूर्पे आर्द्रशाकादिक निक्षिप्य विक्रेतु। वहित्र रत्नादि-पूर्णसमुद्रस्थनौकाविशेषः। ननु तादृशं वेदान्तदर्शनं कथ युक्त येन तव सम्मत स्यादिति बौद्धाभिप्राय ज्ञात्वेदमुच्यते॥ तदास्तां तावदिति॥ यथा आर्द्रकवणिज. समुद्रस्थवहित्रविचाराधिकारो नास्ति तथाऽवैदिकस्य तव वेदं मूलीकृत्य प्रवृत्ततन्मतविचाराधिकारो नास्ति। स चास्मदादिवैदिकानामेव। स च त्वन्मतनिराकरणावसरेऽनव-सरदु स्थ इति भाव।

अद्वैतचन्द्रिकायां तु स्वाभिप्रेताया आचार्यस्याद्वैतश्रद्धाया सिद्ध्यर्थमित्थमभिप्रायो वर्णित। 'यथा आर्द्रकवणिजो वहित्रविचारे प्रयोजन नास्ति तथेदानी द्वैतमतमेव परिष्कुर्वतो ममाद्वैतदर्शनविचारानवसर। स च कस्यचित्पुरुषधौरेयस्य भवति' इति। तदसत्। 'एतामेव जातिमाश्रित्य बौद्धचार्वाकवेदान्तिना बालव्यामोह-हेतव केवल कण्ठकोलाहला' इति तेनैव बौद्धादिगणे वेदान्तिनो गृहीतत्वेन तस्याद्वैतश्रद्धाभावावगमात्। तच्छ्रद्धासत्त्वे विरक्तया मोक्षेच्छावतस्तस्य तत्साधनाद्वैतविचार विहाय द्वैतविचारे बलवद्बीजानुपलम्भेन तत्र स्वय प्रवृत्ति सम्पाद्यैतादृशादैन्योक्तौ बीजाभावादित्यलम्।

(गु टि)॥ तावता चेति॥ ब्रह्मणो विधित्वेन शून्यस्य निषेधत्वेनैव चेत्यर्थ। विधित्वनिषेधत्वाभ्या भेदस्य शङ्कितत्वेन तयोर्धर्मत्वानङ्गीकारस्य वक्तव्यत्वेपि भावत्वशून्यत्वाभ्या ब्रह्मशून्ययोर्वैलक्षण्यस्यानाशङ्कितत्वेन तयोर्ब्रह्मधर्मत्वानङ्गीकारोऽसङ्गत इत्याशङ्क्य भावत्वशून्यत्वशब्दौ विधित्वनिषेधत्वपरतया व्याचष्टे॥ भावत्वं विधित्व शून्यत्वं निषेधत्वमिति॥ अविशेषादिति॥ परापरप्रमेययोरिति शेष॥ शून्यवादिमतनिराक-रणपरतयेति॥ निरसनीयांशसाम्येन मायावादिमतस्यापि तत्सूत्रविषयत्वप्राप्त्या सूत्राणा तन्मतनिरासपरत्वा-दिति भावः।

## ब्रह्मनिर्विशेषत्ववादिमायावादिमतनिराकरणे सूत्रकारस्यापसिद्धान्तशङ्का

(टी) स्यादेतत्। यद्येवमखण्डत्वाद्ब्रह्मणः शून्यादविशेषाच्छून्यवादिनिरासेन मायावादिनिरा-सोऽपि भगवतः सूत्रकारस्याभिमतः स्यात् तदा तस्यापसिद्धान्तः प्रसज्ज्येत। ब्रह्मणोऽखण्डत्वं खलु तस्य सिद्धान्तः। 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इत्यादिना निर्विशेषं ब्रह्मेति सूत्रकृतोक्त-त्वात्। किञ्चाखण्डमेव ब्रह्मेति सकलश्रुतीनामभिप्रेतम्। सर्वत्र हि ब्रह्मप्रतिपादनपरेषु वाक्येष्वशब्दम-स्पर्शमित्यादिष्वपास्तसमस्तविशेषमेव ब्रह्मोपदिश्यते। अतस्तद्विरोधोऽपि प्रसज्ज्येत। तस्मान्नैतैः सूत्रै मायावादिमतनिरासः सूत्रकारस्याभिमत इत्यत आह।

(वि टि)॥ इति सूत्रकृतोक्तत्वादिति॥ परस्य ब्रह्मणः स्थानतोऽपि उपधितोऽपि नोभयलिङ्ग सविशेष त्वनिर्विशेषत्वोभयरूपम्। सर्वत्र श्रुत्यादिषु द्वैतापवादेन निर्विशेषत्वस्यैव प्रतिपादनादिति सूत्रकृतोक्तत्वादित्यर्थ.

(वि टि.) ब्रह्माखण्डत्व न सूत्रकारसिद्धान्त । येन तन्निराकरणेन तस्यापसिद्धान्त स्यादित्यभिप्रायं दिदर्शयिषु शङ्कोतरत्वेन मूलमवतारयति ॥ अत आहेति ॥

(रा. टि) ॥ स्यादेतदिति ॥ एतन्मतयोरविशेषोपपादनं स्यात् । युक्तमिति शेष । यद्वा एतद्वक्ष्यमाण स्यादित्यर्थ. ॥ सूत्रकृतोक्तत्वादिति ॥ 'परस्य ब्रह्मण स्थानतोऽपि उपाधिनापि नोभयलिङ्गं सविशेषत्वनिर्विशेषत्वरूपमिति निर्विशेषत्वस्यैव प्रतिपादनात्' इति परग्रन्थे व्याख्यानात्सूत्रकृतोक्तत्वादित्युक्तम् । सर्वत्र हीति सूत्रखण्डमभिप्रायोक्तिपूर्वं व्याचष्टे किन्त्वित्यादिना । सर्वत्र हीत्यनुवाद । ब्रह्मेत्यादिव्याख्या । तद्विरोधोपि प्रसज्ज्येत इति ॥ यद्येवमखण्डत्वादित्याद्यापादकस्यानुषङ्ग ।

(वे टि) ॥ सूत्रकृतोक्तत्वादिति ॥ 'परस्य ब्रह्मण स्थानतोप्युपाधितोपि नोभयलिङ्गं न सविशेषत्वनिर्विशेषत्वोभयलिङ्गम् । सर्वत्र श्रुत्यादिषु द्वैतापवादेन निर्विशेषत्वस्यैव प्रतिपादनात्' इति सूत्रार्थप्रतीतेरिति भाव ।

(द्वै द्यु) ॥ न स्थानतोऽपीति ॥ 'सर्वकाम सर्वगन्ध सर्वरस' इत्यादिना ब्रह्मणः सविशेषत्व श्रूयते । अस्थूलमनण्वित्यादिना निर्विशेषत्वम् । तत्र सशय । किमुभयश्रुत्यनुसारादुभयरूप ब्रह्म उतैकरूपम् । तत्रापि सविशेष निर्विशेष वेति । पूर्वपक्षे द्विरूप ब्रह्म ध्येयम् । सिद्धान्ते निर्विशेषमेवेति फलभेद । तत्र यथा मूर्छावस्थाया विरुद्धसुप्तिमरणावस्थोभयधर्मकत्वं तथा ब्रह्मणोप्युभयरूपत्व भवतु श्रुतत्वादेवेति पूर्वपक्षे न तावत्परब्रह्मण उभयलिङ्गमुभयरूपत्व सम्भवति । सत्यस्य वस्तुनो द्वैरूप्यायोगात् । न ह्येकमेव वस्त्वेकदा तद्वत्तदभाववच्च दृष्टम् । तेन मूर्च्छादिदृष्टान्ता निरस्ता । नापि स्थानत उपाधित उभयरूपत्व तात्त्विक युक्तम् । अग्निसंयोगमात्रेण जलस्यौष्ण्यस्वभावादर्शनात् । तस्मादेकरूप ब्रह्म । तत्राप्येकरूपत्व निर्विशेषत्वमेव । हि यत. सर्ववेदान्तेषु ब्रह्मपरेषु 'अशब्दमस्पर्शमरूपम्' इत्यादिषु सर्वविशेषवत्त्वनिरासेन ब्रह्मोपदिश्यते तस्मान्निर्विशेषमेवैकरूप ब्रह्मेति परोक्तस्सूत्रार्थ ।

परोक्तसूत्रखण्डार्थमेव प्रकृतपूर्वपक्षे स्वतन्त्रहेतुत्वेनाह ॥ किञ्चेति ॥ अपास्तेति ॥ तत्त्वमेवाखण्डत्वमिति भाव ।

(गु. टि) प्रतिज्ञातमपसिद्धान्तमुपपादयति ॥ ब्रह्मणोऽखण्डत्वं खल्विति ॥ तत्कुतो विज्ञायत इत्यत सूत्रकृद्वाक्यादेवेति भावेन तद्वाक्य पठति ॥ नेति ॥ 'द्विरूप ब्रह्म श्रूयते । सर्वकर्मा सर्वकाम इत्यादौ सविशेषम् । अस्थूलमनण्वित्यादौ निर्विशेषम् । तत्र किमुभयरूप ब्रह्म प्रतिपत्तव्य उतान्यतररूपम् । यथाप्यन्यतररूप तदा किं सविशेष उत निर्विशेषं इति संशये द्विविधश्रुत्यनुरोधादुभयरूपमेव ब्रह्मेति प्राप्त इदमुच्यते । न तावत्स्वत एव परस्य ब्रह्मण उभयरूपत्व सम्भवति । विरोधात् । अस्तु तर्हि स्थानतः पृथिव्याद्युपाधियोगात् । नेत्यम् । न ह्युपाधिरन्यदन्यथा करोति । किन्तु अविद्योपस्थापिता. पृथिव्याद्युपाधयो भ्रममुपजनयन्ति । ततश्चान्यतररूपपरिग्रहेऽपि निरस्तसमस्तविशेषमेव ब्रह्मोपदिश्यते' इत्युदाहृतसूत्रार्थ ।

(टी.) मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे ।
यदासीत्तत एवाऽद्यः स्वयम्भूः समभूदजः ॥

मयि मम नाभौ । [1]अनन्ते गुणत इति गुणानां प्रत्येकमानन्त्यमुच्यते । यदासीत्पद्मम् । स्वयम्भूरज इति हिरण्यगर्भस्य परमेश्वरादुत्पत्तावागमसम्मतिकथनम् । स्वयंशब्दस्याकारस्य च विष्णुनामत्वात् ।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ इति भगवद्राद्धान्तः ।

अनेन सर्वस्माद्भगवतो भेद उत्तमत्वश्चोक्तम् । परमात्मेत्युदाहृत इति तत्रागमसम्मतिरुक्ता । लोकत्रयमाविश्येति युक्तिः । विनाशिनि लोकत्रये स्थितस्य विनाशशङ्कायां तन्निरासाय अव्यय इत्युक्तम् । ईश्वर इति तदुपपादनायैश्वर्यवचनम् ।

स्यादेव सूत्रकारस्यापसिद्धान्तो यदि ब्रह्माखण्डत्वं तत्सिद्धान्तः स्यात् । न चैवम् । यतस्तदीयैः स्पष्टवचनैर्निखिलगुणगणाढ्यमेव ब्रह्मेति भगवद्राद्धान्त इति गम्यते । न स्थानतोऽपीत्यादि त्वस्पष्ट वचनमन्यथा योजनीयम् । एतेन श्रुतिविरोधोऽपि परास्तः । श्रुतीनामपि भगवद्राद्धान्ताविरोधेनैव व्याख्येयत्वात् श्रुतिष्वेव स्पष्टं निरवकाशतया ब्रह्मणः सगुणत्वावगमाच्च न श्रुतीनामखण्डार्थनिष्ठत्व-मित्यभिप्रायेणाह

पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च । इत्यादिश्रुतिः ।

एतेनाविद्याकल्पितविशेषैः सविशेषं स्वतस्त्वविशेषमेव ब्रह्मेत्यपि निरस्तम् । स्वाभाविकीति श्रवणात् ।

(वि टि) ॥ मयीति ॥ 'अजस्य नाभावध्येकमर्पितम्' 'अजस्य नाभाविति यस्य नाभे.' इति श्रुति-तद्व्याख्यानरूपसमाख्याबलात् 'मम नाभौ' इति व्याख्यातम् ॥ अनन्त इति ॥ अनन्तगुण इत्यनेनैवानन्तगुण-वत्त्वलाभाद्गुणतोऽनन्त इत्युक्तिर्गुणानामपि प्रत्येकमानन्त्यप्रतिपादनार्था विज्ञायत इति भाव । यद्यपि अनन्तगुण इत्यस्य 'न विद्यते अन्तो नाशो येषा ते अनन्ता । अनन्ता गुणा यस्मिन् सोऽनन्तगुण इति विग्रहे नित्यानेक-गुणवत्त्वमेव तस्यार्थो भवति । गुणतोऽनन्त इत्युक्ते पुनर्गुणानन्त्य गुणानामियत्ताराहित्यरूप लभ्यते । नित्यत्वस्य अनन्तगुण इत्यनेनैव प्रतिपादनेन पुनस्तस्यैव प्रतिपादने पौनरुक्त्यात् । तथा च अनन्तगुणे गुणतोऽनन्त इत्ये-ताभ्या नित्यासङ्ख्यगुणवत्त्वमेव लभ्यते । न तु गुणानां प्रत्येकमानन्त्यम् । तथापि अनन्तगुण इत्यत्र अन्त-

[1] गुणतोऽनन्त इति गुरुराजीय पाठ ।

(वि. टि.) शब्दस्य परिच्छेदार्थकत्वेन सङ्कोचकप्रमाणाभावेन देशत इव कालत· सङ्ख्यया च परिच्छेदार्थो विज्ञायते । तन्निषेधे गुणानामसङ्कुचत्वं नित्यत्वञ्च लब्धमेवेति गुणतोऽनन्त इत्युक्ते पुनर्गुणानामेव प्रत्येकमानन्त्य लभ्यत इति वक्तव्यम् । अन्यथा तद्वैयर्थ्यादिति भाव ।

'अजस्य नाभाविति यस्य नाभे' इति समाख्यावचने पद्मपदपर्यायपुष्करपदसत्त्वात् 'यन्नाभिपद्मादभवन्महात्मा प्रजापतिर्विश्वसृग्विश्वरूप' 'प्रजापतिरेक पुष्करपर्णे समभवत्' इति समाख्याश्रुत्योश्च पद्मपुष्करशब्दसद्भावात्तदनुसारेण व्याख्याति ॥ यदासीत्पद्ममिति ॥ स्वयम्भुशब्दस्य अजशब्दस्य च योगरूढिभ्या हिरण्यगर्भोऽर्थ । 'तदात्मान स्वयमकुरुत' इति श्रुतौ परमात्मनि स्वयशब्दप्रयोगात्स्वयमित्यव्यय भगवद्वाचकम् । तस्माद्भवतीति स्वयम्भू । 'अ इति ब्रह्म' इति श्रुते अ विष्णु । तस्मिन् जात इत्यज. । सप्तम्या जनेर्ड इति पाणिनिस्मरणात् । तदेतदभिप्रेत्य व्याचष्टे ॥ स्वयम्भूरज इति ॥ अर्थगत्या परमेश्वरादुत्पत्ताविदयुक्तमित्यविरोध ॥ आगमसम्मतीति ॥ 'नारायणाद्ब्रह्मा जायते' इति श्रुतिसम्मतिकथनमित्यर्थ. ॥ इति भगवद्राद्धान्त इति ॥ अत्र इतिशब्द पूर्वश्लोकस्यापि परामर्शक ॥ अनेनेति ॥ द्वाविमाविति पूर्वश्लोके क्षराक्षरपदाभ्यां जडस्याप्युपलक्षणादिति भाव । उक्तार्थे

तस्या शिखाया मध्ये परमात्मा व्यवस्थित ।

इति श्रुतिसम्मतिरुक्तेत्याह ॥ परमात्मेतीति ॥ युक्तिरिति ॥ न हि तदभिन्नस्य तत्प्रवेश. ततो निकृष्टस्य तद्धरणकर्तृत्वं वा सम्भवति । तथाऽनुपलब्धेरित्येवरूपा युक्तिरित्यर्थ । लोकत्रयमित्युपलक्षणम् । तद्वर्तिसकलपदार्थानित्यपि द्रष्टव्यम् । विनाशिन्यपि प्रविष्टस्य तद्विनाशसामग्रीसमवधानकाले ततोऽन्यस्य निर्गतस्य न विनाशशङ्केत्यत उक्तम् ॥ विनाशिनि लोकत्रये स्थितस्येति ॥ तत्र विनश्यत्तादशाया स्थितस्येत्यर्थः ॥ अव्यय इतीति ॥ न व्येति न विनश्यतीति योगादविनाशीत्यर्थ ।

ननु विनाशिनि गृहादौ प्रविष्टस्य गृहनाशकाले विद्यमानस्य नियमेन विनाशदर्शनात्तादृशलोकत्रये प्रविष्टस्य तन्नाशकाले विद्यमानस्य तन्नाशे नाशावश्यम्भावादव्ययत्वमनुपपन्नमित्याशङ्क्याह ॥ ईश्वर इति ॥ विमतो नाव्ययो भवितुमर्हति विनाशिनि प्रविश्य तद्विनाशकाले विद्यमानत्वात् सम्प्रतिपन्नवत् इति तदव्ययत्वाभावसाधनं नोपपद्यते । तत्रानीश्वरत्वस्योपाधित्वात् । न च तस्य पक्षेतरत्वम् । तस्यापि बाधोन्नीतस्योपाधित्वात् । ईश्वरानित्यत्वस्य श्रुत्यादिबाधितत्वादिति भाव ।

सूत्रकारस्यापसिद्धान्तोद्भावने मय्यनन्तगुणेऽनन्त इति वाक्य पठित्वा इति भगवद्राद्धान्त इत्युक्तिमात्रेण कथमपसिद्धान्त परिहृत इत्याशङ्कानिरासायाह ॥ स्यादेवमिति ॥ स्पष्टवचनैरिति ॥ मय्यनन्तगुण इत्यादिभिः 'अन्तस्तद्धर्मोपदेशात्' 'विवक्षितगुणोपपत्तेश्च' 'अदृश्यत्वादिगुणको धर्मोक्तेः' 'सर्वधर्मोपपत्तेश्च' इत्यादिभिस्त्वदीयै स्पष्टैर्वचनैरित्यर्थ । वचनाना स्पष्टत्वोक्त्या वैपरीत्यशङ्का निरस्ता । अनिर्णीतार्थकवचनापेक्षया निर्णीतार्थकवचनस्य प्रबलत्वादिति भावः ।

(वि टि.) कथं तर्हि 'न स्थानतोऽपि हि'इति सूत्रगमनिकेत्यत आह ॥ न स्थानतोऽपीत्यादि त्विति॥ 'न स्थानतोऽपि परस्योभयलिङ्ग सर्वत्र हि' इत्यत्र सर्वावस्थाप्रेरकत्वेन प्रकृत परमात्मा किं प्रतिशरीर जाग्रदादिस्थानेषु च स्थित अन्योन्य भिन्न· उताभिन्न इति सन्देह । अन्योन्य भिन्न इति पूर्व पक्ष बहुकुम्भसम्भृताम्भोवदिति। सिद्धान्तस्तु स्थानभेदेऽपि न परमात्मनो भिन्न रूपम् । 'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते' इति सर्वभूतेष्वेकस्यैव निर्दोषतया स्थितिश्रवणात् ।

एकरूप परो विष्णु· सर्वत्रापि न सशय ।
ऐश्वर्याद्रूपमेकञ्च सूर्यवद्बहुधेयते ॥

इति मात्स्यवचनाच्चेति परमात्मन स्थानभेदप्रयुक्तभेदनिराकरणपरत्वेनान्यथा योजनीयमित्यर्थ ।

नन्वेव सूत्रकारस्यापसिद्धान्तदोषाभावेऽपि उदाहृतानेकश्रुतिविरोधस्तदवस्थ इत्यत आह ॥ एतेनेति ॥ अशब्दमस्पर्शमित्यादिश्रुतीत्यर्थ । नन्वपौरुषेयश्रुतीनामुपक्रमादितात्पर्यग्राहकप्रमाणानुसारेणैव व्याख्यानमुचितम्। न तु भगवद्राद्धान्तानुरोधेनेत्यत आह ॥ श्रुतिष्वेवेति ॥ ननु श्रुतिषु स्पष्ट ब्रह्मण सगुणत्वावगमेऽपि अन्यार्थपरत्वस्यापि सम्भवेनायमेवार्थ इति निर्णयासम्भव इत्यत आह ॥ निरवकाशतयेति ॥ साधकाभावेन बाधक सत्त्वेन चान्यार्थपरतया नेतुमशक्यतयेत्यर्थ । तत किमित्यत आह ॥ न तीनामिति ॥ अशब्दमस्पर्शमित्यादिश्रुतीनामित्यर्थ ॥ अखण्डार्थनिष्ठत्वमिति ॥ निर्विशेषब्रह्मपरत्वमित्यर्थ । मूले इत्यादिश्रुतिरित्यादिपदेन

'विचित्रशक्ति पुरुष. पुराणो न चान्येषां शक्तयस्तादृशा. स्यु'
'विष्णोर्नु कं वीर्याणि प्रवोचम्' 'देवस्यैष. स्वभावोऽयमाप्तकामस्य का स्पृहा'
'एष नित्यो महिमा ब्राह्मणस्य' 'सत्य सो अस्य महिमा' 'सत्यकाम सत्यसङ्कल्प'

इत्यादिश्रुतिपरिग्रह. ॥ स्वतस्त्विति ॥ स्वभावत इत्यर्थ. । एतेनेत्येतदेव दर्शयति ॥ स्वाभाविकीति श्रवणादिति ॥ न च शक्तिज्ञानबलक्रियाणा स्वभाविकत्वश्रवण अविद्योपाधिकत्वे तद्रूपदोषप्रयुक्तारोपितत्वे वा सम्भवति । न ह्यग्न्यादीनामूर्ध्वप्रज्वलनादिक स्वाभाविकत्वेन सिद्धमन्योपाधिक दोषादारोपितं वा । किन्तु अग्न्यादिसमानसत्ताकमेव । एव ब्रह्मणो जगत्सर्जनाद्यनुकूलशक्तिज्ञानबलक्रिया स्वाभाविकत्वेन प्रमाणसिद्धास्तत्समानसत्ताका एव स्वीकार्या इति भाव । एतच्चोपलक्षणम् । नित्यत्वसत्यत्वश्रवणाच्छक्त्यादेराविद्यकत्व न सम्भवति । कल्पितस्यासत्त्वज्ञाननिवर्त्यत्वयोरवश्यम्भावादित्यपि द्रष्टव्यम् । न च 'एष नित्यो महिमा' इत्यादिश्रुतौ महिम्न एव नित्यत्वसत्यत्वे श्रूयेते । न शक्त्यादेरिति वाच्यम् । जगत्सर्जनाद्यनुकूलशक्तिबलज्ञानक्रियाद्यतिरेकेण महिमशब्दार्थानिरूपणादित्यपि द्रष्टव्यम् ।

(रा टि) अपौनरुक्त्यायाह ॥ अनन्ते गुणत इतीति ॥ 'यन्नाभिपद्मादभवन्महात्मा प्रजापतिर्विश्वसृग्विश्वरूप' इति वचनानुरोधादाह ॥ यदासीत्पद्ममिति ॥ तत एवाद्य समभूदित्येव पूर्तौ स्वयम्भूरज इति

(रा.टि.) विशेषणद्वयवैयर्थ्यमाशङ्क्याह ॥ स्वयम्भूरिति ॥ आगमेति ॥ 'नारायणाद्ब्रह्मा जायते' 'यस्य प्रसादजो ब्रह्मा' 'यन्नाभिपद्मात्' इत्याद्यागमेत्यर्थ. । कथमित्यत आह ॥ स्वयशब्दस्येति ॥ 'स्वातन्त्र्यात्स्व इति प्रोक्त.' इति 'स्वात्मना चोत्तरयो.' इत्यादौ स्वशब्दस्य विष्णौ प्रयोगेण तत्पर्यायत्वात्स्वयशब्दस्य विष्णुवाचित्व 'अ इति ब्रह्म' इति श्रुतेरकारस्य विष्णुवाचित्वं प्रसिद्धमिति तन्नामत्वादित्युक्तम् ॥ अनेनेति ॥ 'उत्तमः पुरुषस्त्वन्य.' इत्यशेनेत्यर्थ. । तत्र पूर्वप्रकृतस्य क्षराक्षराभ्यामित्यस्यान्वयादिति भाव. ॥ तत्रेति ॥ सर्वस्माद्भेदे उत्तमत्वे च परमात्मा परमचेतन इति 'चेतनश्चेतनानाम्' इत्यादौ उदाहृत इत्यागमसम्मतिरुक्तेत्यर्थ. ॥ युक्तिरिति ॥ तत्र प्रवेशलिङ्गेन भेदस्य भरणरूपलिङ्गेन तदुत्तमत्वस्य च प्रतीत्या प्रविष्टत्वरूपा भर्तृत्वरूपा च युक्तिरुक्तेत्यर्थ ।

मूले 'इति भगवद्राद्धान्तः' इति पदेन मयीति पूर्वश्लोकोऽपि परामृश्यत इति भावेन श्लोकद्वयतात्पर्योक्त्या पूर्वकृतशङ्का निराह ॥ स्यादेवमित्यादिना ॥ अन्यथा योजनीयमिति ॥ नानास्थानगतभगवद्रूपाणामैक्योक्तिपरत्वेन योजनान्तरसम्भवादिति भाव ॥ व्याख्येयत्वादिति ॥ प्राकृतशब्दस्पर्शादिराहित्यपरत्वादिरूपेण व्याख्येयत्वादित्यर्थ ॥ स्वाभाविकीति श्रवणादिति ॥ शक्ति स्वाभाविकी ज्ञानबलाभ्यां सहिता क्रिया च स्वाभाविकीति शक्त्यादिचतुष्टयस्यापि स्वाभाविकत्वश्रवणादित्यर्थ· ।

(वे टि) साक्षात्पद्माधारत्वस्य भगवति बाधितत्वादाह ॥ मम नाभाविति ॥ ननु गुणतोऽनन्ते इत्येतदनन्तगुणे इत्यनेन पुनरुक्तमित्यत आह ॥ अनन्त इति ॥

प्रत्येकशो गुणानान्तु नि सीमत्वमुदीर्यते ।
तदानन्त्यन्तु गुणतस्ते चानन्ता हि सङ्ख्यया ॥
अतोऽनन्तगुणो विष्णुर्गुणतोऽनन्त एव च ।

ने तन्त्रभागवतोक्तेरिति भाव । नन्वाद्य इत्यनेनैव वाक्यस्य पूर्णत्वात्स्वयम्भूरिति पदद्वयं व्यर्थमित्यत आह ॥ स्वयम्भूरिति ॥ विष्णुनामत्वादिति ॥ तथा च स्वयम्भवजशब्दयोर्यौगिकत्वेनोक्तार्थे आगमतया प्रामाण्यमुपपन्नमिति भाव ॥ आगमसम्मतिरिति ॥ परमात्मा व्यवस्थितः इत्यागमसम्मतिरिति भाव ॥ युक्तिरिति ॥ यो यस्य भरणकर्ता स तस्मादुत्तम इति युक्तिरित्यर्थ ॥ ऐश्वर्यवचनमिति ॥ ईश्वरत्वमघटितघटकशक्तिमत्त्वम् । तद्वतीश्वरे लोकनाशेप्यनाश उपपद्यत इति भाव· ॥ अन्यथा योजनीयमिति ॥ अत्र सर्वावस्थाप्रेरकत्वेन प्रकृत परमात्मा किं प्रतिशरीर जाग्रदादिस्थानेषु स्थितोऽन्योन्यं भिन्न उताभिन्न इति सन्देहे स्थानभेदादन्योन्य भिन्न इति पूर्वपक्षे प्राप्ते स्थानभेदेऽपि न परस्परभिन्न रूपम् । 'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते' इति सर्वभूतेष्वेकस्यैव गुणपूर्णत्वश्रवणादित्यभिहितम् । अतः परमात्मन. स्थानभेदप्रयुक्तभेदनिराकरणपरतया सूत्रस्य सावकाशत्वमिति भाव· ।

एतेनेत्युक्तं विवृणोति ॥ श्रुतीनामपीति ॥ लौकिकगन्धाद्यभावपरतया व्याख्येयत्वादिति भावः ।

(वे टि) अशब्दमित्यत्र साकल्येन शब्दागोचरत्वमप्यर्थ इत्यवधेयम् । मूले इत्यादिश्रुतिरित्यादिपदेन 'विचित्रशक्ति पुरुष पुराण.' 'विष्णोर्नु क वीर्याणि प्रवोचम्' इत्यादिवाक्य गृह्यत इति मन्तव्यम् ।

(द्वै द्यु.) यत्पदेन पद्मस्य ग्रहणात्तदाधारपदार्थलाभाय लक्षणामाश्रयते ॥ मयि मम नाभाविति ॥ परमात्मनोऽवयवस्यापि परमात्मनाऽत्यन्ताभिन्नत्वादानन्दमयाधिकरणरीत्याऽचिन्त्यशक्त्या गुणपूर्णत्वादेर्युक्तत्वात् अनन्त गुण इत्यादिसप्तम्यन्तार्थाना तद्विशेषणत्वोपपत्ति । तेन अस्मत्पदार्थभूतनाभौ विशेषणान्वयस्यायोग्यत्वात् अस्मत्पदार्थैकदेशीभूतपरमात्मन्यन्वयस्य एकदेशान्वयत्वेनाव्युत्पन्नत्वादेवायोगादेतच्छ्लोकस्यासाधुत्व स्यादिति शङ्का नवकाश । गभीराया नद्या घोष इत्यत्रेवात्राप्युपपत्तिरिति वा द्रष्टव्यम् । यद्वा मयीत्यस्य परमात्मपरत्वमेव । नाभावित्युक्तिस्तु नाभिघटितपरम्परासम्बन्धेन परमात्मन पद्माधिकरणत्वबोधनायेत्यनुसन्धेयम् । गुणतोऽनन्त इत्यनेन गुणभेदप्रयुक्तेश्वरभेद. प्रतीयते । स न युक्त । अनन्तगुण इत्यनेनैकस्यैवानन्तगुणत्वप्रतीत्या स्वव्याहतिप्रसङ्गात् । अनन्त इत्यस्य नाशराहित्यादिरूपपरिच्छेदाभावार्थकत्व स्वीकृत्य गुणत इत्यस्योत्तरान्वये गुणभेदप्रयुक्तविग्रहभेद प्रतीयते । सोपि नेहनानेत्यादिश्रुतिबाधितत्वात्सिद्धान्तविरुद्ध इत्यतस्तदभिप्रायमाह ॥ अनन्ते गुणत इतीति ॥ ॥ प्रत्येकमिति ॥ ज्ञानस्याऽनन्दस्येत्येवं प्रत्येकधर्मावच्छिन्नानामित्यर्थः । तथा च प्रत्येकमित्यस्य योग्यतया लाभे ज्ञानेनानन्ते आनन्देनानन्ते इत्यक्षरलभ्योऽर्थ । यथा धर्मेणायं महानिति वाक्यजन्यबोधोत्तरमेतन्निष्ठधर्मप्रयुक्तमहत्त्व धर्ममहत्त्वं विनाऽनुपपन्नमिति प्रतिसन्धानेन पार्ष्णिकबोधविषयत्व धर्ममहत्त्वे तद्वाक्यस्य तावत्पर्यन्त तात्पर्यञ्च तथेश्वरनिष्ठज्ञानप्रयुक्तानन्त्य ज्ञानानन्त्य विनाऽनुपपन्नमिति प्रतिसन्धानेन ज्ञानानन्त्यमेवमानन्दादिनिष्ठ [1]लभ्यते तत्रोक्तवाक्यस्य तात्पर्यम् । आनन्त्य च प्रकृते विशेषशक्तया बहुत्वरूप पूर्णत्वरूप वा । उभयथापि न दोषः । उदाहरिष्यमाणतन्त्रभागवतवाक्यस्थनिस्सीमपदस्य सङ्ख्याकृतमर्यादाराहित्यार्थकत्वस्यापि सम्भवात् ।

टिप्पण्यां तु 'ननु गुणतो इत्येतदनन्त इत्यनेन पुनरुक्तमित्यत आह ॥ अनन्त इति ॥

प्रत्येकशो गुणाना तु नि.सीमत्वमुदीर्यते ।
तदानन्त्य तु गुणतस्ते चानन्ता हि सङ्ख्यया ॥
अतोऽनन्तगुणो विष्णुर्गुणतोऽनन्त एव च ।

इति तन्त्रभागवतोक्तत्वादिति भाव.' इत्युक्तम् । तत्र गुणप्रयुक्तमीश्वरगतानन्त्य गुणानन्त्य एवोक्तरीत्या पर्यवस्यति । तच्चानन्तगुण इत्युक्त्या लब्धम् । अतः पौनरुक्त्यमिति भाव ।

हिरण्यगर्भोत्पत्तिस्थानत्वलिङ्गबलात्पद्ममित्याह । ॥ यदिति ॥ आगमेति ॥ श्रुत्यादिगतस्वयम्भ्वजशब्दावेव यौगिकौ मानरूपौ भवत इत्यर्थ ॥ नामत्वादिति ॥ 'स्वातन्त्र्यात्स्व इति प्रोक्त ' इत्यादिना तन्नामत्वस्य प्रमितत्वादिति भाव ॥ तत्राऽऽगमसम्मतिरिति ॥ 'परमात्मा व्यवस्थित.' इत्यादिश्रौतपदेनोत्तमत्वबोधने तद्व्यापको

[1] आनन्त्य तत्रोक्तवाक्यस्य तात्पर्यञ्च लभ्यते इति पाठेन भाव्यमिति भाति ।

(द्वै. द्यु ) भेदोऽपि बोधितो भवतीति भाव । यद्वाऽस्मपदोक्तस्वामित्वादिना तल्लाभ इति ज्ञेयम् ॥ युक्तिरिति ॥ तस्मादुत्तमस्यैव तद्भिन्नस्यैव च तद्धारकत्वादिति भाव । ननूक्तश्रुतिसूत्रावलम्बनप्रयुक्तपूर्वपक्षस्य कथ भगवद्राद्धान्तकथनेन निरास इत्यतस्तदभिप्रायमाह ॥ स्यादेवमित्यादिना ॥ श्रुतिविरोध इति ॥ अशब्दमस्पर्शमित्यादिश्रुतिविरोध इत्यर्थ. ।

॥ श्रुतिष्वेवेति ॥ आस्ता तावत्पुराणादिवाक्यमित्येतदर्थसूचक एवशब्द । अन्यथाऽयोग्यार्थकत्वापत्तेः । मूलोक्तपरास्येति श्रुतौ आदिपदोक्तासु 'य सर्वज्ञः स सर्ववित्' 'अणोरणीयान् महतो महीयान्' 'सर्वकाम सर्वरस सर्वगन्ध' 'यस्मिन् द्यौ पृथिवी चान्तरिक्षमोतम्' इत्यादिश्रुतिष्वित्यर्थ । परमित्यवगमक्रियाविशेषणम् । स्पष्टमित्यर्थ ॥ निरवकाशतयेति ॥ तेनोपासनापरवाक्यानां स्वार्थे तात्पर्याभावरूपपराभिमतावकाशस्याप्यभावो बोध्यते ।

तेन यदुक्त परैः 'सगुणवाक्यानामुपासनाविधिशेषत्वादुपासनायाश्चाविद्यमानाकारेणापि 'योषितमग्निं ध्यायीत' इत्यादाविव सम्भवान्न तेन गुणाना सिद्धि ' इति । तदयुक्ततां बोधयति । तथा हि,

> न च रमन्त्यहोऽसदुपासनयाऽऽत्महन· ।
> नाविद्यमान ्वते वेदा ध्यातुं न वैदिकाः ।
> अविद्यमान ध्यायन्त. सर्वे यान्त्यधर तम. ॥
> तस्मात्सत्यार्थतां ब्रूयाद्वेदानामपि सर्वश· ।
> येऽन्यथा विदुरेतेभ्यः क्षय्यलोका भवन्ति हि ॥

इत्यादिश्रुतिस्मृतिभिः ।

> अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्याम् ।

इति साङ्कर्षणसूत्रेण चाविद्यमानार्थोपासनाया निन्दितत्वात् । 'योषितमग्निं ध्यायीत' इत्यादौ रेतोरूपाहुत्याधारत्वेन पुरुषलक्षणघृतद्रवीभावहेतुत्वादिना वाऽग्निशब्दस्य गौणत्वात् । एव 'वाचं धेनुमुपासीत' इत्यादौ धेनुशब्दोऽभीष्टदानाय स्वामिमुख्येनागमनादिना सादृश्येन गौण । 'रात्रिं धेनुमिवायतीम्' इति श्रुत्यन्तरे उक्तसादृश्यस्य रात्रावुक्तत्वेन तादृशसादृश्यविवक्षयाऽवाच्येऽपि प्रयोगसम्भवात् । न च मुख्यार्थसम्भवे कुतो गौण्याश्रयणमिति वाच्यम् । मुख्यार्थतावच्छेदकधेनुत्वादेर्बाधितत्वेन मुख्यार्थकत्वानुपपत्ते । न चारोपितधर्ममादाय मुख्यार्थता युक्तेति युक्तम् । एव तर्हि गौण्युच्छेदापत्ते । सर्वत्रापि तद्धर्मारोपेण वाक्यार्थसम्भवात् । न चोपासनादिरूपप्रयोजनाभावान्नान्यत्रारोप इति वाच्यम् । उपासनारूपप्रयोजनाभावेपि शब्दस्य मुख्यार्थत्यागरूपप्रयोजनान्तरस्य सत्त्वात् । तद्धर्मवत्सादृश्यरूपधर्मकथनेन यादृशधर्मान्तरलाभस्तद्धर्मोक्त्यैव तल्लाभस्य सुतरां सम्भवाच्च ।

(द्वै यु) किञ्च सर्वधर्माणां सर्वत्रारोपसम्भवेन तत्तत्प्रवृत्तिनिमित्तकशब्दमुख्यार्थत्वस्य सर्वत्राप्यापातेन मुख्यामुख्यार्थत्वव्यवस्थानुपपत्तिः। शक्यतावच्छेदकारोपो लक्षणेति मते आरोपितशक्यतावच्छेदकमुपादाय मुख्यत्वोक्तेरयोगेनानुभवमाध्यायान्यैरपि तथैव वक्तव्यतया शक्यतावच्छेदकारोपमुपादाय मुख्यत्वोक्त्यसङ्गतेश्च। किञ्च धेनुत्वादिधर्मारोपेणोपासनाया उक्तस्मृतिसूत्रादिभिर्निन्दितत्वान्नामावर्थो वक्तुं शक्यः। न चात्यन्तासत्प्रकारकोपासनैव निषिध्यत इति वाच्यम्। अनिर्वाच्यस्य निराकृतत्वेनाऽरोपितत्वेऽप्यत्यन्तासत्त्वापरिहारात्।

यत्तु 'अत्यन्तासदित्यस्योपास्यत्वेन विधेयत्वायोग्येत्यर्थः। तत्त्वं च द्वेधा। उपास्यत्वेन विध्यभावात्। तद्भावेऽपि न्यायविरोधाद्वा। तथा च देहादेरुपास्यत्वेनाविधेयत्वेऽप्युपास्यत्वेन प्रागप्राप्तत्वात् स्मृत्योपास्यत्वेन निषेध्यता। सूत्रेण यत्र व्यावहारिकं प्रातीतिकञ्च [1]विहितोपास्यत्वेन प्रसक्तं तत्र व्यावहारिकमेवोपास्यं शास्त्रार्थः। न तु प्रातीतिकम्। व्यावहारिकसम्भवे प्रातीतिकस्यानादेयत्वात्। यथोद्गीथोपासनादावनन्तत्वादिकं प्रातीतिकं आकाशादौ नोपास्यम्। किन्तु ब्रह्मणि सत्यम्। यथा वा सत्यकामत्वादिकं ब्रह्मण्युपास्यं व्यावहारिकम्। न प्रातीतिकम्। देवताधिकरणन्यायेनोपासनावाक्यस्य व्यावहारिकप्रामाण्यात्। अत एव यत्र चेतनमचेतनञ्चोपास्यं विधिना प्रसक्तं तत्र चेतनमेवोपास्यं श्रद्धातिशयलाभात्। एवं यत्रोपास्यत्वेन यं पुरुषं प्रति यदयोग्यं यथा तामसं प्रति परमसात्विकी विष्णुमूर्तिः, सात्विकं प्रति वा तामसी भैरवविशेषादिमूर्तिः तत्तेन नोपास्यमश्रद्धादिसम्भवादिति बोध्यत इति भावः' इति।

तन्न। व्यावहारिकप्रातीतिकादिभेदस्य प्रामाण्यातिरिक्तव्यावहारिकप्रामाण्यादेश्च निरस्तत्वेनोक्तरीत्या सूत्रार्थकथनस्यायोगात्। किञ्च सूत्रस्थासत्यपदस्य त्वद्रीत्योपास्यत्वेन यद्विधेयत्वयोग्यं तद्भिन्नार्थकत्वेऽचेतनायोग्यपदयोर्वैयर्थ्यमेव। त्वदुक्तरीत्यैव तदुपासनाया न्यायविरुद्धत्वेनासत्यपदेनैव तयोः संगृहीतत्वात्।

नन्वद्वैतसिद्धिस्थात्यन्तासत्पदस्यैवैतदर्थवर्णनम्। तेनासदुपासनानिषेधकवाक्यस्थासदविद्यमानपदयोरुक्तार्थकत्वं सूचितम्। सूत्रं नागमतया निर्णायकं न्यायसूत्रत्वहानेः। स्मृत्युक्तार्थोपपादनमुखेन तत्तात्पर्यनिर्णायकम्। इत्थं च सूत्रेऽसत्यपदं प्रातीतिकपरमेव सत् व्यावहारिकप्रातीतिकयोरुभयोः प्रसक्तौ व्यावहारिकसम्भवे प्रातीतिकं नोपास्यमित्येतावन्मात्रसूचकं भवति नत्वितरन्याययोरिति तत्सूचनायाचेतनादिपदसार्थक्यमिति चेन्न। एवं सति सूत्रेऽसत्यपदस्य सामान्यवाचिनः प्रातीतिकरूपासत्यविशेषे लक्षणापत्तिः। व्यावहारिकप्रातीतिकयोरुभयोरुपास्यत्वेन प्रसक्ताविति चेतनाचेतनयोरुभयोरुपास्यत्वेन प्रसक्ताविति च वाक्ययोः पूरणापत्तिश्च। अफलत्वविपर्ययाभ्यामित्यनेनैव न्यायस्य स्फुटमुक्तत्वं तत्सूचनस्य प्रयोजनाभावेन तदर्थमपि पूरणमित्यस्याप्यनुचितत्वमेव। एवं नाविद्यमानं ब्रुवते इत्यत्रत्याविद्यमानपदासत्पदादीनां सर्वजनसिद्धासदर्थकत्वाङ्गीकारे स्मृतितन्मूलश्रुत्यनुसारित्वस्य सूत्रे सम्भवे तं विहायोपास्यतया विधेयत्वयोग्यभिन्नत्वरूपपारिभाषिकार्थाङ्गीकारापत्तिश्च।

---

[1] विधिनोपास्यत्वेन इति पाठेन भाव्यमिति भाति।

(द्वै द्यु.) न च निर्णयवाक्येऽसदुपासनामात्रस्य निषिद्धत्वात्तन्निर्णायकसूत्रेऽसत्यपदमात्रं स्यात्। अचेनायोग्यपदयोर्वैयर्थ्यं स्यात्। तदुपास्तिनिषेधकनिर्णेतव्यवाक्यान्तराभावात्। उक्तपारिभाषिकार्थादरणे तदुपास्तिनिषेधस्योक्तवाक्येनैव लाभात्तत्तात्पर्यनिर्णयायोक्तसूत्रस्वरूपमावश्यकमिति वाच्यम्। स्फुटार्थं विहायोक्तपारिभाषिकार्थमाहत्य सूत्रकारस्य तथासूत्रकरण एव बीजाभावापातात्। सूत्रकृतः सर्वज्ञकल्पत्वेनाचेतनोपासनानिषेधकवाक्यान्तरानुसारात् पारिभाषिकार्थादरण तस्य युक्तमिति चेत्तर्हि तद्वाक्यानामेवात्र निर्णेतव्यत्वेन सूत्रकाराभिसन्धिसम्भवे उक्तपारिभाषिकार्थादरो निर्मूल एव। अपि च व्यावहारिकसम्भवे प्रातीतिकं नोपास्यमिति त्वदभिमतसूत्रार्थे त्वन्मते वाचि धेनुत्वोपासनस्य त्वदभिमतस्यासिद्धिः। धेनुशब्दस्य धेनुसदृशार्थकत्वादिना धेनुसादृश्यरूपव्यावहारिकार्थस्यैवोपास्यत्वसम्भवे धेनुत्वरूपप्रातीतिकार्थस्यानुपास्यत्वात्। न च मुख्यवृत्त्या प्रतिपाद्यस्य व्यावहारिकस्य सम्भवे इति तदर्थ इति वाच्यम्। आकाशपदस्य ब्रह्मणि लक्षणाङ्गीकारं विना तद्वाक्याद्व्यावहारिकानन्तत्वादेरुपास्यत्वेनालाभात्तस्य यथा वेत्यादिनोदाहरणानुपपत्तिः। व्यावहारिकधेनुत्वावच्छिन्ने धेन्वादिशब्दशक्तिग्रहानुरोधाद्धेनुपदस्य मुख्यतया उपासनाकाले बुद्धिपूर्वकारोपविषयधेनुत्वस्य प्रातीतिकस्य तत्पदशक्यतावच्छेदकत्वाभावेन तादृशधर्मावच्छिन्नतात्पर्यकधेनुपदस्य मुख्यार्थकत्वोक्तययोगाच्च। श्रौतधेनुपदस्य व्यावहारिकमात्रवृत्तिधेनुत्वावच्छिन्नपरत्वे व्यावहारिकप्रातिभासिकोभयसाधारणजातिमङ्गीकृत्य तदवच्छिन्नपरत्वे वा तादृशजात्योर्व्यावहारिकतया प्रातिभासिकधेनुत्वोपासनाऽसिद्धिरेव।

एवमेतत्सूत्रस्य सामान्यत अचेतनोपासनानिषेधार्थकत्वसम्भवे त्वदुक्तरीत्या 'चेतनस्य सम्भवेऽचेतनोपासा न युक्ता' इत्यर्थकत्वमयुक्तमेव। निर्मूलकत्वात्। न च नाम ब्रह्मेत्युपासीतेति नामादिरूपाचेतनोपास्तिविधानादुक्तार्थं कल्प्यत इति वाच्यम्। अभिमानिव्यपदेशादित्यत्रोक्तन्यायेन त्वन्मतेऽप्यभिमानिचेतनपरत्वसम्भवेनाचेतनोपस्तिपरत्वे बीजाभावात्। मन्मते च सुपा सुलुगिति स्मरणात् सप्तम्यादेशः सुः। नाम्नि ब्रह्मेत्युपासीतेत्यर्थः।

यदत्रोक्तमेतत्पक्षे इतिशब्दानन्वय इति तत्तुच्छम्। ब्रह्मशब्दस्य द्वितीयान्तत्वे हि तत्स्यात्। न चैवम्। प्रथमान्त एव ब्रह्मशब्दः। नामपदोत्तरसप्तम्यर्थान्वितब्रह्मपदार्थरूपवाक्यार्थस्येतिशब्दार्थविषयतानिरूपकत्वेऽन्वय इत्यङ्गीकारात्। 'भूतले घट इति जानाति' इतिवत्। न च नामशब्दस्य सप्तम्यन्तत्वपक्षे ब्रह्मशब्दस्य प्रथमान्तत्वे

नामाभिमानिनी चोषा तस्यां ब्रह्म हरिं स्मरेत्।

इति भवच्छान्दोग्यभाष्योदाहृतस्मृतिविसंवादः। तत्र ब्रह्मेति प्रतीकग्रहणपूर्वकं हरिमिति द्वितीयान्तपदेन व्याख्यानादिति वाच्यम्। स्मृतौ ब्रह्म पूर्णं हरिमिति विशेषणविशेष्यभावाङ्गीकारेण व्याख्यानव्याख्येयभावस्य पदद्वयेऽनङ्गीकारात्। स्मृतेश्च श्रुतिपर्यवसितार्थकथनपरत्वात्। उक्तस्मृतिबलादेव ब्रह्मशब्दो वा ब्रह्माधारे गौणः। तथा च 'नामाभिमान्युषायां ब्रह्म नियामकतया वर्तत इत्युपासीत' इति पर्यवसितोऽर्थः।

(द्वै गु) यत्त्वद्वैतचन्द्रिकायामुक्तं 'उषःकाले विद्यमानः सन् हरिमुपासीतेति यावत्' इति। तदस्म-दान्तसम्प्रदायानभिज्ञस्य न दूषणावहम्।

यदपि 'योषितमग्निमित्यादेश्छान्दोग्यभाष्योक्तरीत्या योगेनार्थपरत्वपक्षे रूढार्थघटिततत्सदृशरूपगौणार्थ-त्वसम्भवे तत्परित्यागेन योगोऽनुचितः। अन्यथा रथकाराधिकरणविरोधः.' इति दूषणदानं तन्मन्दम्। यतो 'रूढ्या अर्थोपस्थितेः प्राथमिकत्वात्तं विहायावयवशक्तिजन्यबोधविषयीभूतार्थे न तात्पर्यं कल्पनीयम्। जघन्योपस्थि-तिकत्वात्' इति हि रथकाराधिकरणसिद्धान्तपर्यवसानम्। प्रकृते च रूढार्थस्य बाधग्रहोत्तरं न तत्सादृश्यविशेष-घटितगौण्या एवोपस्थितिरिति नियमोऽस्ति। शक्यसम्बन्धरूपलक्षणादेरप्युपस्थितिसम्भवात्। तत्र कारणान्तरव-शेनार्थविशेषतात्पर्यग्रहोत्तरं तादृशार्थबोधाय काचिद्गौणी वा लक्षणा वाऽऽश्रयणीया। इत्थञ्च व्युत्पन्नस्यावय-वशक्तीनामपि तत्समकक्षतया ततोऽपि पूर्वं वोपस्थितिसम्भवेन तद्विषयीभूतार्थे शब्दस्य तात्पर्यकल्पनेन निर्वाहे तदेव वरम्। योगस्यापि मुख्यवृत्तित्वेन मुख्यार्थापरित्यागात्। गौणीशरीरे मुख्यार्थस्य सादृश्यप्रतियोगितया भानमकिञ्चित्करमेवेति योगाङ्गीकारे रथकाराधिकरणविरोधवार्ताया अप्यभावात्।

यदपि 'शिलायां देवतात्वारोपेणोपासनया फलदर्शनादसदुपासना अचेतनोपासना च युक्तैव' इति तन्न। तत्प्रतिमायां देवताधिष्ठानत्वबुद्धिपूर्वकं प्रवर्तमानानां तदन्तस्थदेवताप्रसादेनैव फलस्य बहुस्थलेषूपलम्भात्। क्वचिन्मूर्खस्य तादृशोपास्तिस्थले फलदर्शनं यादृच्छिकं नोपासनस्य सफलत्वसाधकम्। अन्यथा यस्मिन् कस्मिंश्चिदचेतने देवतात्वारोपेणोपासने फलापत्तेः।

> यः स्वात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौम इज्यधीः।
> यत्तीर्थबुद्धिः सलिले न कर्हिचित् जनेष्वभिज्ञेषु स एव गोखरः॥

इति भागवतश्लोके पार्थिवादिप्रतिमासु ईज्यपदोक्तदेवतात्वज्ञानवतो गोखर इत्यनेन निन्दनाच्च नाचेतनादु-पास्तिर्युक्ता।

यदत्रोक्तं 'अस्याः स्मृतेर्देहादिभिन्न आत्मा साधुजनाः स्वीयाः पूज्यास्तीर्थभूताश्च इत्यत्र तात्पर्यात् देहादिभिन्नो नात्मा। साधवः स्वीयत्वपूज्यत्वतीर्थत्वशून्या इति भ्रमव्युदासपरत्वम्। यथाश्रुतेऽध्वरमीमांस-कानां चेतनदेवानङ्गीकारिणां मतेन विरोधः। न कर्हिचिज्जनेष्वभिज्ञेष्विति सर्वान्ते निर्देशात्साधूनामेव स्वीय-त्वादिपरत्वधीविरोधश्च। स्वात्मत्वं तेषां न सम्भवतीति न तत्परत्वधीः' इति।

तन्न। मुखत उक्तेऽर्थे साधूनां स्वीयत्वादौ चेत्युभयत्र तात्पर्ये बाधकाभावात्। सर्वथा यत्र यत्र [1]किमपि नास्ति तत्र तत्र तस्य तस्य भ्रमः। त्रयमपि येषु वर्तते तादृशसाधुषु कदाप्येकस्यापि ग्रहो नास्त्यतो गोखर इति बोधनेन कर्हिचिदित्युक्तेस्तात्पर्यात्।

---

[1] यत् यत् इत्यर्थः।

(द्वै. द्यु) स्वात्मानं प्रतिमां वापि देवतान्तरमेव वा ।
चेतनाचेतनं वाऽन्यद्ध्यायेद्यः केशवस्त्विति ॥
किं तेन न कृतं पापं चोरेणेशापहारिणा ।

इत्यादिमानैः स्पष्टतया प्रतिमाया देवतात्वोपास्तेर्निन्दितत्वाच्च । भगवतो बादरायणस्याध्वरमीमांसकभयप्रदर्शनं तु बहु शोभते । तथात्वे तद्भयेन तेन भागवते ब्रह्मस्वरूपस्यैवाप्रतिपादनापत्ते. । तस्मात्परोक्तस्याश्रद्धेयत्वादुपासनाविषयतयापि भगवति कल्याणगुणसिद्धिर्निष्प्रत्यूहैवेति । किञ्च

उपासनाया कार्यत्वे विष्णोरात्मत्व एव च ।
उभयत्रापि तात्पर्यमात्मोपासादिके विधौ ॥

इति स्मृत्यनुसारेणोपासनाविधीना गुणसद्भावेऽपि तात्पर्याद्गुणानां सिद्धि· । न चोभयत्र तात्पर्ये वाक्यभेदापत्त्या स्मृतेरप्रामाण्यमिति वाच्यम् । यत एकस्मिन्वाक्येऽर्थद्वयतात्पर्यवत्त्वस्य सर्वथा कुत्राप्यभावे खलु स्मृतेर्जरद्गवादिवाक्यवदप्रामाण्य वक्तुं सम्भाव्येतापि । न चैवम् । लोकवेदयोस्तादृशवाक्यभेदस्य बहुलमुपलम्भात् । किन्तु सम्भवत्येकवाक्यत्वे तद्भेदस्यानुचितत्वमित्येव । इत्थञ्च

इतिहासपुराणाभ्या वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रचलिष्यति ॥
यदि विद्याच्चतुर्वेदान् साङ्गोपनिषदान् द्विजः ।
न चेत्पुराणं संविद्यान्नैव स स्याद्विचक्षण ॥

इत्यादिभि स्मृतीना श्रुतिव्याख्यानरूपतया तदुक्तरीत्यैव वेदार्थस्य ज्ञेयत्वप्रतीतेर्वाक्यभेदरूपदोषभ्रमेण सर्वज्ञकल्पप्रणीतस्मृत्यप्रामाण्योक्तेरतिसाहसिकत्वात् ।

किञ्चार्थद्वयबोधे तात्पर्यमेव वाक्यभेदो वोत मुख्यतयाऽर्थद्वयबोधतात्पर्यं वा । नाद्य. । द्रव्यदेवताविशिष्टयागविधायकवाक्यस्यापि भिन्नवाक्यत्वापत्ते । न च विशिष्टविध्युत्तरकाले कल्प्यमानैर्विध्यन्तरैर्द्रव्यदेवतादिरूपविशेषणाना यागे सिद्धि । न तु विशिष्टविधेस्तत्र तात्पर्यम् । अत एव 'एकविशिष्टविधिप्रसादेनानेकगुणविधानम्' इत्यनेन विशिष्टविध्यन्यथानुपपत्त्या कल्पनीयविधिभिर्विशेषणाना सिद्धिः इत्युक्त **पौर्णमास्यधिकरणे** वार्तिक इति वाच्यम् । विशिष्टविधेर्विशेषणाविषयकत्वे विशेषणविधिकल्पनाया अप्ययोगेन तद्विधेर्विशेषणाविषयकत्वोक्तेरसङ्गतत्वात् । अन्यथा निर्बीजकल्पनाऽपातेन विशेषणानुक्तिस्थलेऽपि तत्कल्पनापत्तेः । एतत्स्थलेऽप्युक्तद्रव्यदेवतातिरिक्तद्रव्यदेवतादिरूपविशेषणविधीनामपि कल्पनापातश्च । सर्वत्र वस्तुद्वयप्रतीतितात्पर्येण वाक्यभेदाङ्गीकारे सप्रकारकबोधजनकवाक्यमात्रस्यैकवाक्यत्वभङ्गश्च स्यात् ।

उदाहृतवार्तिकं तु युक्तमेव । विशेषणविशिष्टयागरूपविशेष्यांश एव भावनासम्बन्धभानेऽपि यागनिष्ठद्रव्य-

(द्वै द्यु) देवतासम्बन्धादेर्भावनासम्बन्धस्योत्तरकालकल्प्यत्वाभिप्रायकत्वात्। अन्यथैकवाक्यस्याधिकार्थे[1] तात्पर्यैककल्पनागौरवादिदोषपर्यवसायिवाक्यभेदाद्बिभ्यता स्वतात्पर्यसहितानेकविधिवाक्यान्तरकल्पनं कथमभिमतं स्यात्। न द्वितीयः। आत्मेत्येवोपासीतेत्यादिवाक्येन यदि 'आत्मेत्युपासना कर्तव्या। अयं चात्मा' इति समूहालम्बनबोध इष्टः स्यात् तर्ह्येवं वक्तुं शक्येत। न ह्येवमस्मदभ्युपगमः। किं तु 'आत्मत्वविशिष्टनिष्ठविषयताकोपासना कर्तव्या, सत्यकामत्वादिविशिष्ट उपास्य.' इत्याकारक एव बोधः। इतिशब्दार्थविषयत्वादिरूपकर्मत्व एवात्मपदार्थोऽऽत्मत्वविशिष्टान्वयसम्भवात्। वाक्यानां विशिष्टबोधतात्पर्यकत्वस्यौत्सर्गिकत्वात्। न त्वात्मत्वसत्यकामत्वादेरितिशब्दार्थप्रकारतायामन्वयेन 'आत्मत्वसत्यकामत्वादिप्रकारकोपासना कर्तव्या' इति बोधः। आत्मत्वादे. शब्देन प्रधानतयोपस्थितौ भावप्रधानत्वापत्तेः। सत्यकामादिवाक्य इतिशब्दाध्याहारापत्तेश्च। न चात्मविषयकोपासनोक्तिमात्रेण कथं विष्णोरात्मत्वं सिद्ध्यतीति वाच्यम्। आत्मत्वसत्यकामत्वादिधर्माणां [2]विशेष्यांशेऽवगाहिबोधस्य श्रुतितात्पर्याधीनस्य प्रमात्वादेव तत्सिद्धिसम्भवात्।

नन्वसदुपासनायाः सर्वथा निषिद्धत्वे उपासनावाक्येन तद्धर्मप्रकारकत्वमात्रेणोपासनायाः कर्तव्यत्वाबोधने वोक्तस्मृतेर्वैयर्थ्यमेव स्यात्। उपासनावाक्येनात्मत्वसिद्धेरविप्रतिपन्नत्वेनोभयत्र तात्पर्योक्तौ बीजाभावात्। अन्यथोपासनाया अपि श्रुतिविहितत्वे वा उपासनाविधिवाक्येनाऽऽत्मत्वसत्यकामत्वादिधर्माणां धर्म्यंशेऽनवगाहिबोधजननेऽपि वा विष्णोरात्मत्वासिद्ध्यापत्त्येतरवैलक्षण्यस्यात्र प्रदर्शनार्थमुक्तस्मृतेः सार्थक्यमिति चेन्न। 'योषितमग्निं ध्यायीत' इत्यादौ योषित्यग्नित्वबाधात्तत्र योषित्साद्दश्यादिपरत्वं योषित्पदस्येति यथा तद्वाक्यान्न योषितोऽग्नित्वसिद्धिस्तद्वाक्यस्य तत्र तात्पर्याभावश्च तथाऽऽत्मपदार्थतावच्छेदकीभूतगुणपूर्णत्वादेः सत्यकामत्वादेश्चासम्भावितत्वादिशङ्कयोपचरितार्थकत्वं नास्ति। किन्तु मुख्यार्थे आत्मत्वबोधे उपास्तिकर्तव्यतायां च तात्पर्यं वर्तत इत्यर्थपरत्वेन स्मृतेः सार्थक्यात्।

नन्वेवमप्युपासनारूपान्यपदार्थपरप्रकरणादिमध्यपतितत्वान्न ब्रह्मणि गुणवैशिष्ट्ये तात्पर्यं सत्यकामादिवाक्यानाम्। किन्तु तदुपासनामात्र इति चेन्न। अन्यपरवाक्यमध्यपतितत्वमात्रेण स्वप्रतीतावान्तरार्थे वाक्यस्य तात्पर्याभावे प्रयाजादिवाक्यानामपि स्वार्थे तात्पर्याभावप्राप्त्या तदनुष्ठानासिद्धिप्रसङ्गात्।

ननु नान्यपरवाक्यमध्यस्थत्वमात्रेण स्वार्थे तात्पर्याभाव उच्यते। किन्तु तदर्थस्य प्रमाणान्तरबाधितत्वे निष्प्रयोजनत्वेऽन्यतः प्राप्तौ वा। यथा प्रजापतिरात्मनो वपामुदखिददित्यादेरादित्यो यूप इत्यादेश्च स्वार्थस्य प्रजापतिजीवनग्राहकप्रमाणादिबाधितार्थत्वान्न प्रतीतार्थे तात्पर्यम्। किन्तु तद्घटितवाक्यस्य लक्षणयैव तूबरपशुप्राशस्त्यावगमकत्वम्। यथा वा 'जर्तिलयवाग्वा वा जुहुयात्। गवीधुकयवाग्वा जुहुयात्। न ग्राम्यान् पशून् हिनस्ति। नारण्यान् हिनस्ति। अथो खल्वाहुरनाहुतयो वै जर्तिलाश्च गवीधुकाश्च। पयसाग्निहोत्रं जुहोति'। इत्यत्रानाहु-

---

[1] तात्पर्यकत्वे कल्पना इति पाठेन भाव्यमिति भाति।

[2] विशेष्यांशे विशेषणतया अवगाहिबोधस्य इति पाठेन भाव्यमिति भाति।

(द्वै घु) तय इत्यादिकं न पयोहोमजर्तिलहोमयोर्विकल्पफलकम्। पयसा जुहोतीति विधिबलेनैव जर्तिलपयसो-र्व्रीहियवन्यायेन विकल्पसिद्धेः। एवं जर्तिलयवाग्वा वेत्यत्र वाकारोपि व्यर्थः। उक्तरीत्या विकल्पस्यान्यत एव लाभात्। ततोऽन्यार्थमादाय फलायोगात् न हि निन्दानयन्यायेन पशुनिन्दाद्वारा पयःस्तुतिपरत्वान्न स्वार्थ-तात्पर्यकत्वम्। अग्निर्हिमस्य भेषजमित्यादेर्मानान्तरप्राप्तार्थकत्वेन न स्वार्थतात्पर्यकत्वम्। प्रयाजादिवाक्याना-मितिकर्तव्यताकाङ्क्षापूरकत्वेन सप्रयोजनत्वात् स्वार्थतात्पर्यमावश्यकम्। सत्यकामत्वादिधर्मप्रकारकोपासनामात्रेण तत्फलसिद्ध्योपास्ये वस्तुनि तद्धर्मसम्बन्धे न विधेस्तात्पर्यमित्यवान्तरवाक्यानां न सत्यकामत्वादिगुणेषु तात्पर्यमिति चेन्न। 'सत्यकामत्वादिविशिष्टविषयकोपासनाया निष्प्रयोजनत्वम्। [1]किन्तु तत्प्रकारकोपसनामात्रस्य' इत्येतत्स्पष्ट-प्रमाणान्तरबलाद्गम्यते उतैतद्विधिवाक्येनाहोस्विल्लाघवादिरूपतर्केण। नाद्य। तदनुपलम्भात्। प्रत्युतान्यथोपा-सनानिन्दाबलेन विशिष्टविषयकोपासनाया एव सफलत्वप्रतीतेश्च। न द्वितीय। एतद्वाक्यात्स्वरसतो जायमान-बोधस्य विशिष्टविषयकोपासनावगाहितयैव प्रतीते.। न तृतीय। यागादीनां फलजनकताप्रयोजककोटौ द्रव्य-देवतासम्बन्धादेर्निवेशे गौरवात् क्रियाविशेषमात्रस्य कारणत्वापत्त्या द्रव्यदेवतादावपि तात्पर्याभावात्तदुद्देशेन हविःप्रक्षेपाद्यनुष्ठानासिद्धिप्रसङ्गात्। न च योषितमग्निं ध्यायीतेत्यत्राविशिष्टविषयकोपासनादर्शनात्प्रकृतेपि तथात्वं कल्प्यत इति वाच्यम्। दृष्टान्तासम्मते। गङ्गास्नानादिविधेर्द्रव्यदेवताशून्यक्रियाविषयकत्वोपलम्भाद्यागस्थलेऽपि तथात्वकल्पनापातश्च। न च यागविधिना स्वरसत. प्राप्तद्रव्यदेवतासम्बन्धे बाधकाभावात्तात्पर्यम्। प्रकृते निर्गुणश्रुतिबाधान्न विशिष्टविषयकोपासनाया तात्पर्यमिति वाच्यम्। 'न हिंस्यात्सर्वा भूतानि' इति सर्वभूतहिंसा-निषेधकवाक्यबाधितत्वेन पश्वादिरूपद्रव्यसम्बन्धे तात्पर्याभावापत्त्या पश्वादिद्रव्यसम्बन्धस्यैव यागेऽसिद्धिप्रसङ्गात्। न च यागसामान्ये पशु[2]पुरोडाशादिद्रव्यसम्बन्धस्यैवाप्राप्तौ तत्तद्विधायकवाक्यसन्निधौ तत्तद्द्रव्यतत्तत्संस्कार-तत्तद्विनियोगप्रतिपादकबहुवाक्यनां वृथा निष्प्रयोजनकत्व परिकल्प्य तेषा प्राशस्त्यादिरूपलक्षणाश्रयणापेक्षया सर्वभूतहिंसानिषेधकवाक्यस्यासङ्कुचितार्थत्याग एव वर.। बहुबाधस्यान्याय्यत्वात्। बहुस्थलेषु तादृशव्यवहा-राणामुपलम्भेन सङ्कोचेपि निरूढलक्षणया शक्तितुल्ययैवार्थबोधकत्वान्न श्रुते स्वरसभङ्गोपीति वाच्यम्। अत्रापि बहुस्थलेषु गुणाना प्रतिपादनात् 'एष सर्वेश्वर एष भूताधिपति' इति विधानात् ब्रह्मशब्दोक्तपूर्णत्वस्य जग-त्कारणत्वादिधर्मैरुपपादनाच्च तेषां स्वार्थपरत्वाभावे बहुबाधप्राप्त्या त्वदुक्तनिर्गुणश्रुतिसङ्कोचस्यैव वरत्वात्तेनोक्त-गुणनिषेधासिद्धेः। तथा चोपासाविधिभिरपि उपासनाया विषयतया प्रकारीभवद्धर्मिणि सत्यकामात्वादिधर्माणां प्रतिपादनसिद्धौ धर्मिभूतेश्वरे तद्धर्मसिद्धिरवर्जनीयैव।

यत्तु 'तत्र तद्धर्मप्रतिपादने तत्र श्रुतेस्तात्पर्याभावान्न तत्सिद्धि' इति। तत्तुच्छम्। पूर्वोक्तयुक्तिभि· श्रुते-स्तादृशबोधजनकताया सिद्धत्वेन तादृशजनकतारूपशक्तेरेव त्वन्मते तात्पर्यरूपताया उक्तत्वात्। ननु प्रमानु-कूलशक्तिरेव तात्पर्यमिति वाच्यम्। हन्त तर्ह्युक्तजनकतारूपशक्तेस्तात्पर्यत्वाभावस्तज्जन्यबोधाप्रामाण्यपर्यवसायीति

[1] न तु इति पाठेन भाव्यमिति भाति।

[2] धान्यस्यापि सजीवत्वादिति भाव।

(द्वै द्यु) श्रुतेरेवाप्रामाण्यमङ्गीकृतमिति स्वस्य सम्यग्वैदिकत्व प्रख्यापितं स्यात् । तस्मादुपासनापरवाक्यादपि गुणसिद्धिर्युक्ता ।

किञ्चोपासनाविध्यसमभिव्याहारेणापि 'य. सर्वज्ञ स सर्ववित्' 'यस्यैष महिमा भुवि' इत्यादौ सार्वज्ञ्यादिगुणश्रवणात् तत्सिद्धि ।

ननु भवदुक्तवाक्याना निर्गुणप्रकरणस्थवाक्यानाञ्च गुणनिषेधकवाक्येन प्रतियोगिसमर्पकतयाऽन्वयाङ्गीकारान्न तेन गुणसिद्धि· । न च नेह नानास्ति किञ्चनेत्यनेन सामान्यवाचिकिञ्चनशब्देनैव गुणानामपि मिथ्यात्वसिद्धौ पुनर्विशेषतो निषेधवैयर्थ्याच्छ्रुतेर्न तत्र तात्पर्यमुचितमिति वाच्यम् । गुणानामलौकिकतया वाक्यप्रमेयत्वभ्रमनिरासार्थत्वेन पुनस्तन्निषेधसार्थक्यादिति चेन्न । श्रुतिप्राप्तस्य श्रुत्या निषेधे श्रुतेरुन्मत्तवाक्यत्वापत्ते । अत एवोक्तं गीतातात्पर्ये । 'अप्राप्तमेवात्मनो भेदादिक स्वयं प्रापयित्वा पुनस्तन्निषेधे कथं श्रुतेरुन्मत्तवाक्यत्वं न स्यात्' इति ।

ननु श्रुतिप्राप्तत्वं नाम श्रुतिजन्यबोधविषयत्व तज्जन्यप्रमाविषयत्वं वा । नाद्य· । श्रुतिजन्यबोधविषयस्य श्रुत्या निराकरणाभावे ऐक्यबोधकत्वेन प्रतीयमानवाक्याभासप्राप्तमैक्यं भेदश्रुत्याऽतत्त्वमसीत्यादिना निषिद्ध्यत इति त्वन्मतहानिप्रसङ्गात् । न द्वितीय । गुणाना प्रमितत्वासिद्धे । मैवम् । श्रुतितात्पर्यप्रमाधीनबोधविषयत्वस्यैव तत्त्वात् । सगुणवाक्यस्थपदाना गङ्गापदस्य तीर इव लक्षणादेस्त्वयाऽप्यनङ्गीकारेण तद्वाक्यजन्यस्वारसिकबोधस्य तत्तात्पर्यप्रमाधीनत्वस्य त्वयाऽप्यङ्गीकृतत्वात् । नन्वेतदप्ययुक्तम् । 'न कलञ्ज भक्षयेत्' इत्यादिवैदिकनिषेधप्रतियोगिबोधस्य तादृशप्रतियोगिसमर्पकभागतात्पर्यप्रमाधीनत्वात् सर्ववैदिकनिषेधोच्छेदप्रसङ्गादिति चेन्न । निषेधांशे अविशेषणतया वा सत्त्वेन वा स्वार्थबोधतात्पर्यकत्वग्रहाधीनश्रुतिजन्यबोधविषयस्यैव श्रुतिप्राप्तपदेन विवक्षितत्वात् ।

न च सगुणवाक्यार्थस्य निषेधांशविशेषणतयैव श्रुतितात्पर्यविषयतायामङ्गीकृतत्वात् य सर्वज्ञ इत्यादिवाक्येषु गुणेषु सत्ताबोधकपदाभावेन सत्त्वेन स्वार्थबोधतात्पर्यस्य श्रुतेर्वक्तुमशक्यत्वेनोक्तरीतेरप्यसम्भव इति वाच्यम् । निषेधबोधकनञादिसमभिव्याहारस्य सगुणवाक्येऽभावात् निषेधबोधकवाक्यान्तरेषु प्रतियोगिसमर्पकपदान्तरसमभिव्याहारस्यैव सत्त्वेन सगुणवाक्येनोक्तगुणानामन्वयस्यानाकाङ्क्षितत्वेन गुणबोधकवाक्यानां निषेधांशे प्रतियोग्यविशेषणतयैव स्वार्थबोधतात्पर्यकत्वस्यावश्यकत्वात् । अन्यथा घटवद्भूतलं निर्घटं भूतलमिति वाक्यद्वयस्यैकवाक्यतापत्तेः ।

न च वाच्य प्रतिवादिग्रन्थार्थं बहुतरग्रन्थेनानूद्य तन्नेत्यादिना दूषणाभिधानात् बहुवाक्योक्तार्थस्यापि वाक्यान्तरोक्तनिषेधप्रतियोगित्वेनान्वयस्य दृष्टत्वमस्त्येवेति । यतस्तत्र तत्पदमेव प्रतियोगिसमर्पकम् । इत्यन्तवाक्यान्तराणा तत्पदवाच्यतोपाधिभूतबुद्धिस्थत्वसम्पादकत्वम् । तदपि निरन्तरानुपूर्वीघटकानामेव । न च प्रकृतेपि तथास्त्विति वाच्यम् । प्रकृते च गुणबोधकवाक्याना विप्रकीर्णाना यत्किञ्चिदेकप्रकरणस्थवाक्योप-

(द्वै द्यु.) योगित्वस्य वक्तुमशक्यत्वात् । तज्ज्ञापकस्य 'इति वदन्ति' इत्यादेरश्रूयमाणत्वाच्च । एवमपि तदेकवाक्यताङ्गीकारेण निषेधपरत्वाभ्युपगमे तत्तत्प्रकरणगतवाक्योक्तयागीयहिंसासामान्यमनूद्य 'न हिंस्यात्सर्वा भूतानि' इति हिंसानिषेध क्रियत इत्यस्यैव युक्तत्वप्राप्त्या सौगता एव विजयेरन् ।

एव सत्यज्ञानादिवाक्योक्तब्रह्मैव इति न इति नेति पौन पुन्येन दृढीकरणपूर्वक 'नेति नेति' इत्यनेन निषिद्ध्यते । इह वेदोक्तेषु मध्ये ब्रह्म कर्मान्यद्वा किमपि नास्तीति 'नेह नानास्ति किञ्चन' इति वाक्येन निषिद्ध्यते । 'असदेवेदमग्र आसीत्' इत्यनेन अ इत्यस्य प्रतिषेधार्थकत्वमभ्युपेत्य सन्नास्तीत्यर्थकतया सन्निषिद्ध्यते । एवमभेदमेव 'तत्त्वमसि' इत्यादिनाऽनूद्य 'द्वा सुपर्णा' 'जुष्ट यदा' इत्यनेन निषिद्ध्यते । 'वाचारम्भणम्' इत्यादिनोक्तविश्वमिथ्यात्व 'विश्वं सत्यम्' इत्यादिना निषिद्ध्यते तद्विरुद्धकथनस्यैव निषेधरूपत्वादिति क्रमेण सर्वोऽपि त्वदभ्युपगतस्त्याज्य स्यात् ।

न च विश्वमित्यनेन विश्वस्मिन् सत्यतादात्म्यं प्रतीयते । तादात्म्यं च भेदनियतमिति जगति तेन मिथ्यात्वमेव बोध्यते । एवमसदेवेत्यनेन ब्रह्मणि सत्त्वसंसर्ग एव निषिद्ध्यते । न तावताऽस्माक काचित्क्षतिः । ब्रह्मण स्वरूपत सद्रूपताया अङ्गीकारादिति । द्वा सुपर्णेत्यादिना भेद एव न बोध्यते । किन्तु द्वित्वादिकमेवोच्यत इति वाच्यम् । वाचारम्भणं तत्त्वमसीत्यादिभिर्यादृशबोधो जायते तद्विरुद्धार्थावगाहिबोधोत्पादकत्वस्यैवास्माभिरापादनीयत्वात् । अन्यथा निर्गुणवाक्येन गुणसंसर्ग एव निषिद्ध्यते । ब्रह्मणो गुणिस्वरूपत्व तु स्यात् । सत्यादिपदसामानाधिकरण्यस्थले तत्तादात्म्यबोधनान्न सत्स्वरूपत्व सिद्ध्यतीत्युक्तौ सत्यं ज्ञानमित्यत्रापि तथैवापत्त्या ब्रह्मणोऽनृतादिव्यावृत्तिर्न स्यात् । प्रत्युतानृतजडादितादात्म्यमेव सिद्ध्येत् । एवं तत्त्वमस्यहं ब्रह्मास्मीत्यादिभ्य काष्ठ भस्म भवतीत्यादिभ्य इव ब्रह्मवृत्तिसत्ताश्रयत्वमित्यादिबोधस्य जीवतादात्म्यबोधस्य वा जायमानत्वेन तत्तादात्म्यस्य त्वदीयैक्यविरोधित्वेन ऐक्यासिद्धिश्च स्यात् । तस्माद्विशेषज्ञापकवाक्याभावेपि स्वेच्छामात्रेण सगुणपराणामनन्तवाक्याना निषेधप्रतिपादकेन यत्किञ्चिदेकवाक्येनान्वयस्वीकारेऽतिप्रसङ्गात्तथाऽङ्गीकारस्याशक्यत्वे निषेधांशे अविशेषणतया स्वार्थबोधकत्वरूप तत्परत्वं सगुणवाक्याना सिद्ध्यत्येव । अत एवोक्तं भगवत्पादैः 'अनुवादोऽपि यदिदं वदन्ति तन्न युज्यते इति परिहारांशे विशेषयुक्तिं च विना न दृष्टः अन्यथाऽभेदानुवादेन भेदोपदेशः किमिति न स्यात् । सर्वशाखान्ते भेदोक्तेश्चैतदेव युक्तम्' इत्यादि ।

एव सत्त्वेन स्वार्थबोधजनकत्वरूपतात्पर्यमपि सगुणवाक्यानां युक्तमेव । निषेधांशे प्रतियोगितया तद्भासकसामग्र्यसमवहिततद्भासकसामग्र्या एव तत्सत्ताबोधकतया मीमांसकमते कालस्येव सर्वप्रतीतिषूत्सर्गतः सत्ताभाननियमेन य. सर्वज्ञ इत्यादिवाक्येषु सत्यपदाभावेऽपि गुणानां सत्त्वेनैव भानात् । अन्यथा यागादिषु पृथक्सत्ताग्राहकप्रमाणाभावेन सत्तादाम्यासिद्धिप्रसङ्गात् । न च प्रत्यक्षादिना तत्सिद्धि । स्वर्गापूर्वादीनां प्रत्यक्षागोचरत्वात् । अनुमानादीनामप्रयोजकत्वादिना सत्त्वानिश्चायकत्वात् । अनुमानाभासादिना तत्सिद्धिस्तु शश-

(द्वै. द्यु.) विषाणादावपि समाना। वेदेन ब्रह्मणि प्रतीयमाने पृथक्तत्सत्ताग्राहकप्रमाणाभावेन तस्य सत्स्वरूपत्वासिद्धिप्रसङ्गात्।

न च 'सत्य ज्ञान' 'सत्यस्य सत्यम्' इत्यादितस्तत्सिद्धिरिति वाच्यम्। तत्र सत्यपदोक्तसत्यताया पारमार्थिकत्वग्राहकप्रमाणान्तराभावात्। न चाविशेषितसत्त्वसम्बन्धमात्रेणानृतव्यावृत्त्यादिसिद्ध्या सत्स्वरूपत्व सिद्ध्यति। शुक्तिरूप्यादेरपि तथात्वापत्ते। नन्वेवरीत्या गुणादिप्रतिपादकवाक्येनैव तत्सत्त्वसिद्धे पुनस्तत्सत्ताप्रतिपादकस्य 'सत्य. सो अस्य महिमा' इत्यादेर्वैयर्थ्यप्रसङ्ग इति चेन्न। व.घन्तरोक्तरीत्या सत्त्वाभावापरपर्यायव्यावहारिकसत्ताप्रतिषेधपूर्वक पारमार्थिकसत्त्वस्य 'सिद्धे सत्यारम्भो नियमार्थ' इति न्यायेन दृढीकरणार्थं तद्वाक्यानां प्रवृत्तत्वेन वैयर्थ्यशङ्कानवकाशात्।

ननु व्यावहारिकसत्त्वघटितप्रामाण्यस्यैव प्रवृत्त्याद्युपयुक्ततया तद्भाननिर्वाहाय व्यवसायेनापि तदेव ग्राह्य पारमार्थिकसत्त्वस्य कोपयोग इति चेन्न। एतादृशदुर्भाषणस्य प्रत्यक्षबाधोपपादने निरस्तत्वात्। ब्रह्मप्रतिपादकेष्वपि पारमार्थिकप्रामाण्यासिद्धिप्रसङ्गाच्च। यत्किञ्चित्कालाबाध्यस्य बाध्यस्य प्रामाण्यशरीरघटकत्वे किञ्चित्कालाबाध्यस्य यजमानप्रस्तरत्वादित्ययूपत्वादे प्रामाण्यशरीरघटकत्वे बाधकाभावात् प्रातिभासिकप्रामाण्यमप्येव सिद्ध्येत्। तथा च यागादिवाक्ये पारमार्थिकप्रामाण्याभावेऽपि व्यावहारिकप्रामाण्यवत् प्रस्तरादिवाक्येऽपि प्रातिभासिकप्रामाण्यसम्भवात् गौण्यादिनाप्यर्थाभ्युपगमे बीजाभावात्तत्सिद्धिपेटिकावैयर्थ्यापत्ते। तर्ह्यप्रामाण्य किंरूपमिति चेदत्यन्तासद्विषयत्वमेव तथास्तु।

अपि च व्यावहारिकप्रामाण्यस्यैव स्वतो ग्राह्यत्वे दोषाभावाना तत्रैव प्रयोजकताया अन्वयव्यतिरेकेण ग्रहाद्दोषाभावबलात्तादृशप्रामाण्यस्यैव सिद्ध्यापत्त्या पारमार्थिकप्रामाण्यस्य ब्रह्मवाक्येऽङ्गीकारे बीजाभावापत्ति। निर्निमित्त तथाङ्गीकारे यागवाक्यस्यैव प्रातिभासिकप्रामाण्यम्, षोडशिग्रहणवाक्यस्यापि तथात्वम्, सर्वभूतहिंसानिषेधवाक्याग्रहणवाक्ययोर्निषेधपरत्वाद्व्यावहारिकप्रामाण्यमित्यपि स्यात्। तस्मात्सगुणवाक्येन गुणानां सत्त्वेनैव प्रतीते सत्त्वेन स्वार्थबोधतात्पर्यकत्वरूपं तत्परत्वमपि सिद्ध्यत्येव। तथा च तादृशोभयविधतत्परत्वप्रमाधीनश्रुतिजन्यबोधविषयत्वरूप श्रुतिप्राप्तत्व गुणानामवर्जनीयमिति तन्निषेधकत्वे श्रुतीनामुन्मत्तवाक्यत्वापत्तिर्दुर्वारैव।

अथापि स्यात्। सगुणश्रुत्या गुणाना व्यावहारिकसत्त्व बोध्यते। निर्गुणवाक्यैस्तु गुणाभावस्य पारमार्थिकत्वं बोध्यते। असमानसत्ताकत्वेन तयोर्विरोधाभावेन तद्बोधकश्रुतीना कथमुन्मत्तवाक्यतुल्यतेति। मैवम्। अस्या प्रक्रियाया पूर्वमेव निरस्तत्वात्। गुणाभावस्य पारमार्थिकत्वेऽद्वैतब्रह्मासिद्धिप्रसङ्गात्। गुणाभावस्य पारमार्थिकत्वेऽपि ब्रह्मस्वरूपत्वाभ्युपगमाददोष इति चेत् तावताऽपि गुणाभाववैशिष्ट्यस्य पारमार्थिकत्वायोगेन तद्वाक्यस्य पारमार्थिकप्रामाण्यायोगात्। एकदेशमात्रे प्रामाण्यस्यैव तद्वाक्यप्रामाण्यव्यवहारनियामकत्वे सर्वज्ञानाना धर्म्यंशेऽभ्रान्तत्वनियमेन तज्जनककरणानामप्रामाण्यव्यवहारवार्तोच्छेदापत्ते। न च विशेष्यप्रकारयो

(द्वै द्यु) पारमार्थिकत्वमात्रेण प्रामाण्यम् । तथात्वे तद्विषयीभूतगुणाभावविशिष्टस्य पारमार्थिकत्वापातात् । गुणाभावसम्बन्धस्य व्यावहारिकत्वेऽपि ब्रह्मणि गुणानां व्यावहारिकत्वायोगेन श्रुतिप्राप्तस्य निषेधादुन्मत्तवाक्य तुल्यता दुर्वारैव । गुणाभावसम्बन्धस्य प्रातिभासिकस्य श्रुतिबोध्यत्वे नास्माकं प्रकृतगुणपूर्णत्वासिद्धि ।

ननु सगुणश्रुत्या गुणानां व्यावहारिकत्वमेव बोध्यते । निर्गुणश्रुत्यापि गुणाभावस्य तत्सम्बन्धस्य वा व्यावहारिकत्वं बोध्यते । तावताऽपि स्वान्यूनसत्ताकस्वसमानाधिकरणाभावप्रतियोगित्वलक्षणं मिथ्यात्व गुणानां सिद्ध्यत्येव । हन्त तर्हि तत एव गुणाभावस्यापि मिथ्यात्वं स्यादिति चेदिष्टापत्तिरेव सर्वमिथ्यात्ववादिनामिति चेन्न । व्याहतार्थकवाक्येन कस्याप्यर्थस्य सिद्धेरदृष्टत्वात् । अन्यथा निर्घटं घटवदित्यादिवाक्यानां प्रामाण्यापत्ते । न च मिथ्याभूतार्थे तेषामपि प्रामाण्यमिष्टमेवेति वाच्यम् । परीक्षकाणां तादृशव्याहतवाक्यप्रयोगस्य मिथ्यात्व-बोधनार्थमपि कुत्राप्यदृष्टत्वेनोक्तकल्पनाया असम्भवात् । गुणगुणाभाववाक्ययोरुक्तरीत्या तौल्ये गुणाभावपर-वाक्यानां प्राबल्यायुक्तेरसङ्गतत्वापातात् । निर्गुण एव पक्षपातायोगाच्च । निर्गुणपरवाक्यानामखण्डार्थपरत्वात् गुणपरवाक्यानां तद्बोधविरोधित्वात् प्राबल्यदौर्बल्यव्यवस्था युक्तेति चेत् । गुणपरवाक्यानामप्यखण्डार्थबोध जनकताया निर्गुणवाक्यतुल्यताया प्रागुपपादितत्वात् उक्तदोषतादवस्थ्यमेव ।

एतेन सगुणवाक्यनिर्गुणवाक्ययोर्भिन्नविषयत्वान्न विरोध इति निरस्तम् । वस्तुतो व्यक्तिद्वयाङ्गीकारे पुन-रद्वितीयब्रह्मासिद्धिप्रसङ्गात् । न च सगुणोपास्तिद्वारकचित्तैकाग्र्यसम्पादनद्वारा निर्गुणापरोक्षतात्पर्यकत्वाच्छेष-भूतसगुणवाक्य न निर्गुणवाक्यबाधनक्षमम् । किन्तु शुद्धान्यस्मिन्गुणबोधकम् । निर्गुणवाक्य तु विषयान्तरा-भावाच्छुद्ध एव तत्प्रमापकमिति वाच्यम् । यत सगुणातिरिक्तस्य गुणहीनस्य वस्तुतोऽन्यस्य सत्त्वे स्थूल-तारकाचक्षु सन्निकर्षस्यारुन्धतीचक्षु सन्निकर्षसम्पादकतयोपयोग इवात्रोपयोग, कथञ्चिद्वक्तुं शक्येत । न चैत-त्सम्भवति । गुणारोपेण शुद्धव्यक्तिरेवोपास्या । तत्र गुणारोपपरम्परादृढीकृतसंस्कारवतां पुन पुनस्तस्यैव स्फुरण-सम्भवेन निर्गुणाविर्भावप्रतिबन्ध एव भवतीति कथं सगुणोपासनस्य निर्गुणप्रतिपत्त्युपयोगितया शेषत्वम् । अन्यथा विनिगमकाभावान्निर्गुणोपासनाया एव सगुणप्रतिपत्त्यङ्गतया शेषत्व कुतो न मन्यसे । अत एव

निर्विशेष पर ब्रह्म साक्षात्कर्तुमनीश्वरा. ।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥
वशीकृते मनस्येषां सगुणब्रह्मशीलनात् ।
तदेवाविर्भवेत्तेषामपेतोपाधिकल्पनम् ॥

इति कल्पतरूक्तमप्ययुक्तम् । न च सगुण, स्वोपासने कृते तस्य सगुणत्वादेव प्रसादसम्भवेनास्य चित्तैकाग्रतां सम्पाद्य निर्गुणभावनाद्वारा निर्गुणापरोक्षं घटयिष्यति । न तु निर्गुणोपासनया निर्गुणः । तत्र प्रसादाद्यसम्भवा-दित्यस्त्येव विनिगमकमिति वाच्यम् । वस्तुतोऽचेतने चेतनत्वारोपेणोपासनाकरणमात्रेण प्रसादोत्पत्त्यदर्शनेन शुद्धे स्वयं गुणारोपमात्रेणोपासनाकरणेपि तत्र प्रसादोत्पत्तौ बीजाभावात् । प्रसादोपि स्वेनैवारोप्यत इति चेत् ।

(द्वै शु.)तर्हि प्रथमत एव तदारोपसम्भवेनोपासनाविधिवैयर्थ्यमेव। स्वयमारोपितः प्रातिभासिक एव स्यान्न व्यावहारिक। व्यावहारिक एव निर्गुणप्रतिपत्त्युपयोगीति चेन्न। नाम्युपास्यमानब्रह्मत्ववादे प्रातिभासिकस्यैव फलोपयोगितादर्शनेन प्रसादस्य व्यावहारिकस्यैव हेतुत्वमित्यत्र विशेषप्रमाणाभावात्। वस्तुत स्वस्मिन्नविद्यमानधर्मचिन्तनया महतामप्रसादस्यैवापत्तेश्च। अन्यथा लौकिकराजादिवदीश्वरस्य भ्रान्तत्वापातात्। त्वन्मते आरोपितशक्त्यादीनामपि हेयकोटिनिविष्टत्वेन तत्सम्बन्धस्योत्कर्षनापादकत्वात्। उपास्तिविषयसगुणनिष्ठप्रसादादिगुणाना व्यावहारिकत्वे पुनर्निर्गुणश्रुत्या व्यावहारिकगुणाभावस्यैव प्रतिपादनाद्व्याहतिर्दुर्वारैव। गुणाना पारमार्थिकत्वाकारेण निषेधान्न व्याहतिरिति चेन्न। गुणबोधकवाक्यस्य पारमार्थिकसत्त्वरूपेणैव तद्बोधकताया इदानीमुपपादितत्वेन व्याहतेर्दुर्वारत्वात्। अन्यथा 'नेति नेति' इत्यादिवाक्यस्य ब्रह्मण पारमार्थिकत्वेन निषेधपरत्व स्यात्। अधिकं नेह नानेति श्रुतिविचारे पूर्वोक्तमनुसन्धेयम्।

ननु सार्वज्ञ्यादिश्रुतीना सर्वज्ञत्वादिगुणाश्रयो मायावच्छिन्नत्वाविद्याबिम्बत्वाद्युपहितो धर्मी। निर्गुणश्रुतेस्तु तदन्यच्छुद्धमिति धर्मिभेदान्न विरोध इति चेत् तर्हि गुणाभावप्रकारबोधे धर्मितावच्छेदकतया भासमान यत्किञ्चिदेव यदि, तदा ब्रह्मणि गुणाभावासिद्धिरुक्तगुणाना मिथ्यात्वासिद्धिरप्रसक्तप्रतिषेधश्च। यत्र तत्प्रसक्तिस्तत्र निषेधे पुनर्व्याहतिरेव। मायानुपहितत्व गुणाभावधर्मितावच्छेदकमिति चेत् तर्हि गुणगुणाभावावुपहितयोर्मिथ्याभूतव्यक्त्योरेव सिद्ध्यत इति किमायातं ब्रह्मण। ब्रह्मण्येवावच्छेदकभेदेन तुल्यसत्ताकयोरुभयोरप्यङ्गीकारे उभयोरपि सत्यत्वाविरोधान्न शुद्धसिद्धि.।

किञ्च 'यत्तदद्रेश्यमगोत्रमवर्णम्' इति निर्गुणप्रतिपादक एव वाक्ये 'नित्यं विभु सर्वगतं सुसूक्ष्मम्' इति मुण्डके विभुत्वादिगुणा. पठ्यन्ते। तथा तलवकारोपनिषदि 'यच्छ्रोत्रेण न शृणोति यद्वाचाऽनभ्युदितम्' इत्याद्युक्तनिर्गुणस्यैव 'येन श्रोत्रमिदं श्रुतं येन वागभ्युद्यते' इत्यादिना श्रवणवचनशक्तिप्रदत्वादयो गुणा आम्नायन्ते। आख्यायिकया पूर्वोक्तब्रह्मण एव माहात्म्यप्रतिपादनपरोत्तरखण्डे सर्वासुरजेतृत्वादौ स्वातन्त्र्यादिना सर्वोत्तमत्वादिधर्मा. श्रूयन्ते। तथा 'अस्थूलमनणु' इत्यादिना प्रस्तुतनिर्गुणाक्षरस्यैव 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत' इत्यादिना सूर्यचन्द्राद्याज्ञापयितृत्वादिधर्माः, एव 'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतम्' इत्यादिना पृथिव्याद्याधारत्वेनोक्तस्यैव 'तमेवैकं जानथात्मानम्' इति 'अमृतस्यैष सेतु' इति च वाक्योक्तमुमुक्षुज्ञेयत्वमुक्तप्राप्यत्वादिलिङ्गैर्निर्गुणत्वमवगम्यते। एव 'साक्षी चेता केवलो निर्गुणश्च' इति वाक्ये साक्षित्वादिधर्माः श्रूयन्ते। तथा साक्षी चेतेति वाक्यात् पूर्वम्

> अनाद्यनन्तं कलिलस्य मध्ये विश्वस्य स्रष्टारमनन्तरूपम्।
> विश्वस्य चैकं परिवेष्टितार ज्ञात्वा देवं मुच्यते सर्वपाशै.॥

इति तज्ज्ञानान्मुक्तिरुच्यते। उत्तरत्र च

> एको वशी निष्क्रियाणा बहूनामेक बीजं बहुधा यः करोति।

(श्वे. उ) तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥

इत्यनेनापि शाश्वतसुखरूपमुक्तिः श्रूयते। तथा तत्प्रकरण एव

तमीश्वराणां परमं महेश्वरं तं देवतानां परमञ्च दैवतम्।
पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् ॥
न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते।

'परास्य शक्तिः' इत्यादिना बहुतमा गुणाश्चोक्ता इति कथं सगुणनिर्गुणपरवाक्यानां भिन्नविषयत्वेनाविरोधः। उक्तवाक्यानां निर्गुणत्वांश एव प्रामाण्यम्। न तु गुणांशेऽपीति तु बालभाषणम्। अपौरुषेये वेदे अप्रामाण्यप्रयोजकदोषाभावेन तस्याप्रामाण्योक्तेरसङ्गतत्वात्। विनिगमकाभावेन निर्गुणत्वांश एवाप्रामाण्यस्य वक्तुं शक्यत्वाच्च।

गुणाभावानामधिकरणीभूतब्रह्मस्वरूपतया पारमार्थिकत्वात्तदंशे प्रामाण्यं युक्तमिति चेन्न। गुणानामपि ज्ञानानन्दशक्त्यादीनां ब्रह्मस्वरूपत्वेन पारमार्थिकत्वेन तदंशे प्रामाण्यस्यापि सम्भवात्। न च तत्र प्रमाणाभावः। 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' 'यो वै भूमा तत्सुखं' 'समा भग प्रविश स्वाहा' 'किमात्मको भगवान् ज्ञानात्मकः ऐश्वर्यात्मकः शक्त्यात्मकः' 'एवं धर्मान् पृथक् पश्यन्' इत्यादीनां श्रुतीनाम्

मत्स्यकूर्मादिरूपाणां गुणानां कर्मणामपि।
तथैवावयवानाञ्च भेदं पश्यति यः पुमान्।
भेदाभेदविदश्चात्र तमोऽन्धं यान्त्यसंशयम् ॥

इत्यादिस्मृतीनां बहुशो विद्यमानत्वात्। भगशब्दस्य

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः।
ज्ञानवैराग्ययोश्चापि षण्णां भग इतीरणा ॥

इति स्मृत्यैश्वर्यवाचित्वात्तद्वाचकशब्देनैव सम्बोधनाच्च भगवतः ऐश्वर्यादिरूपत्वमवगम्यते। न च तत्र भगशब्दस्य तदाश्रये लक्षणेति युक्तम्। तत्प्रकरणे 'तं त्वा भग प्रविशानि स्वाहा। समा भग प्रविश स्वाहा। तस्मिन् सहस्रशाखे नि भगाहं त्वयि मृजे स्वाहा' इत्यभ्यासेन गुणात्मकत्व एव तात्पर्यावधारणात्। अन्यथा बहुषु स्थलेषु प्रथमतो बुद्धिस्थरूढार्थपरित्यागप्रसङ्गात्। त्वदभिमतगुणाभावस्यैवाधिकरणस्वरूपत्वे मानाभावेन तत्र पारमार्थिकप्रामाण्यायोगः।

न च गुणानां ब्रह्माभिन्नत्वे गुणगुणिभावस्य पारिभाषिकत्वापत्तिः। स्वाभिन्नशुक्लरूपेण घटस्य गुणित्ववदत्राप्युपपत्तेः। न च तत्र भेदस्यापि सत्त्वादाधाराधेयभावोपपत्तिरिति वाच्यम्। इहापि तत्प्रतिनिधिभूतस्य विशेषस्याग्रे व्यवस्थापनीयतया तद्बलादाधाराधेयभावोपपत्तेः। तवैव पुनर्गुणाभावस्वरूपस्य ब्रह्मणस्तेनाधाराधेय-

(द्वै. द्यु) भावानुपपत्ति। कल्पितसम्बन्धाङ्गीकारे कल्पितत्वस्यारोपितत्वरूपतया सम्बन्धांशे तद्वाक्यस्याप्रामाण्यापत्तिर्दुर्वारा। विषं भुङ्क्ष्वेत्यादिवाक्यवत्प्रतीतार्थपरित्यागेनाखण्डार्थे प्रामाण्योपपादने विषभोजनादाविवान्तरतात्पर्येऽपि बीजाभावेन ब्रह्मणि गुणाभावस्यासिद्धिरेव।

निर्गुणवाक्यस्य स्वभिन्नगुणाभावपरत्वेन सत्त्वादिगुणाभावपरत्वेन वा सगुणपरत्वसम्भवे वृथा सगुणनिर्गुणवाक्ययोर्भिन्नविषयत्वकल्पने 'सदेव सौम्येदमग्र आसीत्, 'असदेवेदमग्र आसीत्' इत्यनयोर्ब्रह्मशून्यविषयत्वं, ग्रहणाग्रहणवाक्ययोः परापरयागविषयत्व, 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत्' इति पूर्वार्धे शून्यतापत्तिरूपपरममोक्षपर. अस्ति ब्रह्मेत्युत्तरार्धोऽपरमोक्षपर इत्यादिकमप्यापद्येत। न चेदमिति प्रपञ्चस्यैव प्रसक्ततया तस्यैव कारणात्मना सत्त्व कार्यात्मना त्वसत्त्व श्रुतिभ्या प्रतीयत इति न तयोर्ब्रह्मशून्यविषयत्वमिति वाच्यम्। ब्रह्मरूपकारणात्मना सत्त्व शून्यरूपकारणात्मना त्वसत्त्वमित्येकरीत्यैवार्थसम्भवे वैरूप्ये बीजाभावेन शून्यब्रह्मोभयत्रापि श्रुतिद्वयप्रामाण्यसम्भवात्। न चाग्रहणवाक्यस्य ग्रहणनिषेधपरतया न यागविषयत्वमिति वाच्यम्। [1]ग्रहणाभाववन्नित्यानुवादपूर्वकमपूर्वयागपरत्वोपपत्ते। न च ग्रहणवाक्यप्राप्तग्रहणप्रतिषेधपरत्वप्रतीतेर्नापूर्वयागपरत्व युक्तमिति वाच्यम्। गुणशब्दस्य नानार्थत्वेन सत्त्वादिगुणाभावरूपार्थस्य प्रतिभासेन मुख्यतस्तत्परत्वसम्भवे कण्ठोक्तपरित्यागेन गगनकुसुमायमानाखण्डार्थपरत्वस्याप्ययुक्तनासाम्यात्। न च शून्यतापत्तेरपुरुषार्थत्वान्न तृतीयप्रतिबन्दिर्युक्तेति वाच्यम्। त्वदभिमतब्रह्मभावस्यापि तथात्वस्य वक्ष्यमाणत्वात्।

यत्तु 'इदानी सगुण देशान्तरे कालान्तरे वा निर्गुणमिति निर्गुणसगुणश्रुत्योर्व्यवस्थातो न कोऽपि विरोध। न चैतावता गुणानामनित्यत्वमेव सिद्ध्येन्न मिथ्यात्वमिति वाच्यम्। त्वदभिमततात्त्विकत्वस्यापि गुणानामसिद्धे। प्रमाणान्तरानुसरणे त्वस्माकमपि वाक्यान्तरोक्तज्ञाननिवर्त्यत्वान्यथानुपपत्त्यादिकं गुणमिथ्यात्वे प्रमाण भवति' इति। तत्तुच्छम्। सदसद्वाक्ययोरुक्तरीत्या ब्रह्मण सदसत्त्वयोर्देशादिव्यवस्थया बोधकत्वप्रतिबन्देरपरिहारात्। गुणबोधकप्रमाणानामेव तत्सत्ताबोधकताया व्यवस्थापितत्वेनास्माकमुपायान्तरानुसरणप्रसक्त्यभावात्।

ज्ञान नित्य क्रिया नित्या बल शक्ति परात्मन।
एष नित्यो महिमा ब्राह्मणस्य।

इत्यादिश्रुतिस्मृतिभिर्गुणाना नित्यत्वोक्त्या ज्ञाननिवर्त्यत्वादिरूपमिथ्यात्वाभावस्यैव सिद्धे।

पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च।

इति श्रुत्या ज्ञानादीनां ब्रह्मस्वभावत्वप्रतिपादनेन तेषा सत्यत्वसिद्धेश्च। 'सत्य सो अस्य महिमा' इति श्रुत्या स्पष्टं सत्यत्वावगमाच्च। न च ज्ञानादीना स्वरूपतया गुणत्वासिद्धि। स्वरूपातिरिक्ताना चरमसाक्षात्का-

[1] ग्रहणाभाववदित्यनुवाद इति पाठेन भाव्यमिति भाति।

(द्वै यु) रपर्यन्तस्थायितया नित्यत्वोपचार एव । स्वाभाविकत्व तपआदिना लब्धत्वाभाव । सत्यत्वं तु व्यावहारिकमेव श्रुत्युक्तमतो न केनापि गुणाना पारमार्थिकत्वसिद्धिरिति वाच्यम् । सत्यत्वानन्तत्वयोरप्युक्तरीत्या व्याख्यातु शक्यत्वेन ब्रह्मणोऽपि तदसिद्धिप्रसङ्गात् । स्वरूपभूतानामपि गुणत्वसम्भवस्योपपादयिष्यमाणत्वाच्च । न च निर्गुणवाक्यविरोधादेव स्वाभाविकत्वादिकमन्यथा व्याख्यायत इति वाच्यम् । विनिगमकाभावेनोक्तबहुवाक्यविरोधेन तस्यैव सत्त्वादिरूपगुणाभावपरतया वक्तुमुचितत्वात् । तस्य स्वार्थपरत्व, गुणवाक्याना नेत्यस्य पूर्वमेव निरस्तत्वात् । स्वाभाविकत्वस्य त्वदुक्तरूपत्वे क्रियादिसमभिव्याहृतज्ञानस्यापि तथात्वापत्ते । न च क्रियाया स्वाभाविकत्वे सृष्टिप्रलयादिसर्वक्रियाणा सार्वदिकत्वापत्त्याऽवश्यमर्थान्तराश्रयणस्यावश्यकतया तत्सहपठितज्ञानपदमप्यविद्यापरिणतसर्वविषयकज्ञानपरमेवेति वाच्यम् । क्रियादीना स्वाभाविकत्वे बाधकाना परिहरिष्यमाणत्वेन स्वाभाविकपदार्थस्य गौणस्याश्रयणे बीजाभावात् ।

एतेन 'सगुणवाक्यमौपाधिकगुणपर निर्गुणवाक्यमनौपाधिकपरम्' इति निरस्तम् । स्वाभाविकत्वनित्यत्वोक्तिविरोधात् । औपाधिकत्वस्यारोपितत्वरूपत्वे गुणाभावतत्सम्बन्धयोरपि तथात्वेनास्यानौपाधिकविषयकत्वोक्तिविरोधात् । आरोपितविषयत्वे श्रुतेरप्रामाण्यापत्तेश्च । न च मायाविदर्शितपदार्थबोधकवाक्यस्येव श्रुतेर्नाप्रामाण्यम् । अप्रामाण्यस्यापि मानान्तरागृहीतार्थावगाहित्वघटितत्वादिति वाच्यम् । दृष्टान्तासम्मते । मायाविदर्शितार्थेषु सत्ताबोधकवाक्येष्वप्रामाण्यस्येष्टत्वात् । 'अयमेव दर्शयति' इति वाक्यस्य तत्पदार्थसत्त्वाबोधकत्वेनाप्रामाण्यप्रसक्त्यभावात् । न च श्रुतीनामपि तथात्वम् । 'सत्य सो अस्य महिमा' 'एष नित्यो महिमा' इत्यादि वाक्याना तत्सत्ताविधायकत्वात् । सत्यकामादिवाक्यानामपि स्वार्थस्य सत्त्वेनैव बोधकताया व्युत्पादितत्वाच्च । अप्रामाण्यस्य मानान्तरागृहीतार्थग्राहित्वघटितत्वे मानपदस्य प्रमाणपरत्वे मायाविदर्शितार्थानुवादकवाक्ये अप्रामाण्यापरिहार एव । तद्बोधितस्य मिथ्याभूतस्य प्रमाणाबोधितत्वात् । ज्ञानकरणमात्रपरत्वे भ्रान्तवाक्यात् भ्राम्यतस्तत्समानार्थकोपदेशरूपवाक्ये सर्वजनसिद्धाप्रामाण्यानुपपत्ति ।

नन्वेष नित्यो महिमेति बृहदारण्यकवाक्यं त्यक्तसर्वैषणज्ञानिस्वरूपभूतमाहात्म्यपरम् । न ब्रह्मपरम् । अतो नास्योदाहरणं युक्तमिति चेन्न । बृहदारण्यकस्थस्यैष नित्य इत्यादिवाक्यस्य त्वद्रीत्या त्यक्तसर्वैषणविषयत्वे तस्यैव त्वन्मते ब्रह्मस्वरूपत्वेनाङ्गीकृतत्वेन तन्माहात्म्यरूपगुणाना नित्यत्वसिद्धौ ब्रह्मगुणाना नित्यत्वस्यावर्जनीयत्वात् । न च तत्र तत्स्वरूपस्यैव महिम्नो नित्यता बोध्यते । न तदतिरिक्तगुणानामिति वाच्यम् । अस्माभिरपीश्वरे स्वरूपातिरिक्तगुणानामनङ्गीकारेण विशेषबलेनैव धर्मधर्मिभावस्याभ्युपगमात् । तस्य चास्येत्यनया सम्बन्धबोधकषष्ठ्या बोधनात् । त्वन्मते तस्या अनुपपत्तिः । वस्तुत एतद्वाक्यस्य ब्रह्मपरत्व सिद्धान्तसिद्धं बृहद्भाष्यभावबोधादावुपपादितम् । अत्रात्यन्तमुपयोगाभावान्न प्रपञ्च्यते । तैत्तरीयगतेनैष नित्यो महिमा ब्राह्मणस्येति वाक्येन परेणापि ब्रह्म-

). शु ) परत्वेनाभ्युपगतेन पूर्वोदाहृतश्रुत्यन्तरैश्च तत्सिद्धिसम्भवाच्च। किञ्चेश्वरगुणानामौपाधिकत्वे सृष्टे पूर्वमुपा-
धभावात् ईक्षणादिगुणानुपपत्ति । न चाविद्यारूपोपाधिवशात् तदेक्षणसम्भव इति वाच्यम्। प्रथमेक्षणस्येश्वरव्या-
ारानपेक्षयोत्पत्त्याद्यापत्त्येश्वरस्य सर्वकारणत्वश्रुतिविरोधापत्ते. ।

यत्तु 'दर्शपौर्णमासप्रकरणे पठितस्य पूषादिमन्त्रस्य दर्शादौ पूषदेवताविरहेण यथा पूषदेवताककर्मणि
ङ्गेन विनियोगस्तथा सत्यकामत्वादेर्ज्ञेयब्रह्मप्रकरणे पठितस्य ज्ञानान्वयासम्भवेन तत्प्रकरणादुत्कृष्योपासनप्रकरणे
वेश्योपासनायामेवान्वय. । अथ वा 'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य' इति वाक्येऽहर्गणरूपाहीनगतोप
दो द्वादशत्वेनानुष्ठानगौरवद्वारा निन्दया साह्नगतोपसत्त्रयस्य विधेयस्य तदभावेन यथा स्तुतिस्तथा सगुणब्रह्मण
त्यकामत्वादिना निर्गुणब्रह्मणो विधेयस्य स्तुतिरेव । न तु तेषा स्वार्थपरत्वम्' इति । तत्तुच्छम् । निर्निमित्तं
वेच्छामात्रेणोत्कर्षाङ्गीकारे तत्त्वमस्यह ब्रह्मास्मीत्यादीनामप्युत्कर्षेण नेति नेत्यादिवाक्योक्तनिषेधान्वयापत्ते. । न
। सगुणज्ञानस्य मोक्षहेतुत्वाभावाज्ज्ञेयकोटावन्वयायोगादित्थमास्थीयत इति वाच्यम्। सगुणज्ञानस्य मोक्षहेतु-
ाया व्यवस्थापितत्वात् । ननु श्वेताश्वतरश्रुतौ यद्यपि

तमीश्वराणा परम महेश्वर तं दैवताना परमञ्च दैवतम् । इत्यादिवाक्ये
एको वशी निष्क्रियाणा बहूनामेकं बीजं बहुधा य करोति । इत्यादिवाक्योक्तस्य
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषा सुखं शाश्वत नेतरेषाम् ।

त्यत्रत्यतत्पदेन परामर्शात्सगुणज्ञानस्य मोक्षहेतुता प्रतीयते । तथापि तत्पदस्य विशेष्यमात्रपरामर्शकत्वं वक्त-
यम् । अन्यथा तृतीयाध्याये 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्' इतीश्वरमुक्त्वा 'ततो
यदुत्तरतर तदरूपमनामयम्। य एतद्विदुरमृतास्ते भवन्ति । अथेतरे दु स्वमेवापियन्ति। इत्यनेन, तथा चतुर्था
यायेऽपि 'त्व स्त्री त्वं पुमान् त्व कुमार उत वा कुमारी' इत्यादिना शुद्धात्मज्ञानस्य मोक्षहेतुत्वोक्तिविरोधात् ।
तथा 'तमेव विदित्वाऽतिमृत्युमेति नान्य पन्था विद्यते अयनाय' इति वाक्यस्य 'मुमुक्षुर्वै शरणमह प्रपद्ये
निष्कलं निष्क्रिय शान्त निरवद्य निरञ्जन अमृतस्य पर सेतु' इत्यादिरूपस्य तमात्मस्थमित्यादिवाक्योत्तरवाक्यस्य
व विरोधापत्ते' इति चेन्न। ततो यदुत्तरतरमित्युत्तरवाये उत्तरतरपदेनेश्वरातिरिक्तनिर्गुणप्रतिपादने तरपो वैयर्थ्या-
पत्तेः । उत्तरपदमात्रेण तद्बोधसम्भवात् । शून्यस्यैव तद्वाक्येन प्रतिपाद्यतासम्भवात् शून्यज्ञानस्यैव मोक्षहेतुत्व-
सिद्ध्यापत्ते. । तत्रारूपपदोक्तस्वरूपपदोक्तस्वरूपराहित्यस्यापि श्लिष्टत्वात्। तथा च तद्बाधेन वाक्यान्तरोक्त
निर्गुणज्ञानस्यापि मोक्षहेतुत्वाभावप्रसङ्ग । वाक्यान्तरानुरोधान्निर्गुणज्ञानस्य मोक्षहेतुत्वावगतेस्तद्विरोधेनास्य शून्य-
परत्वपरित्यागे मन्मतेऽपि

यस्य प्रसादात्परमार्तिरूपादस्मात्ससारान्मुच्यते नापरेण ।

(द्वै भु.) नारायणोऽसौ परमो विचिन्त्यो मुमुक्षुभिः कर्मपाशादमुष्मात् ॥ इति

मत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ।
यो मामशेषदोषोज्झं गुणसर्वस्वबृंहितम् ।
जानात्यस्मै प्रसन्नोऽहं दद्यां कामान् परं पदम् ॥

इत्यादिश्रुतिस्मृतिभिः सगुणज्ञानान्मोक्षस्य स्पष्टमवगमेन बलशक्तीच्छादिरहितनिर्गुणज्ञानस्य मोक्षहेतुत्वस्यानुपपत्तिः । न चैतद्वाक्यं गौणमुक्तिपरमिति वाच्यम् । एतदन्यपरमुक्तौ प्रमाणाभावात् । यत्र त्वस्येत्यादिवाक्यानामाचार्यैरेवान्यत्र सम्यग्व्याख्यातत्वात् । इहाप्युत्तरत्र लेशतो दर्शयिष्यमाणत्वाच्च । परां शान्तिमिति स्थानं प्राप्स्यसि शाश्वतमित्युक्तस्यापरमुक्तित्वोक्तेरसङ्गतेश्च । न ह्यपरमुक्तेः परत्वं शाश्वतस्थानात्मकत्वं वा घटते । वृथोपचरितार्थकत्वकल्पने सर्ववेदवचसा कथञ्चिल्लौकिकार्थकत्वस्य वक्तुं शक्यत्वेन स्वर्गापूर्वदेवतादीनामसिद्धिप्रसङ्गाच्च । न च तथापि प्रसादस्य मोक्षकारणत्ववचनं निर्गुणोपासनासम्पादनद्वारा मोक्षप्रदानपरमिति वाच्यम् ।

निर्गुणे ब्रह्मणि मयि धारयन् विशदं मनः ।
परमानन्दमाप्नोति यत्र कामोऽवसीयते ॥

इत्यनेनेश्वरेण स्वस्यैव निर्गुणत्वोक्त्या स्वोपासनस्यैव मोक्षहेतुत्वोक्त्या चोक्तकल्पनाबीजाभावात् । ईश्वरस्यैव सत्त्वादिगुणराहित्यप्रयुक्ततया निर्गुणब्रह्मत्वावधारणात् । न च स्वरूपविवक्षया तथोक्तिरिति वाच्यम् । तस्य जीवस्वरूपत्वस्यापि सत्त्वेन मयीत्यस्य वैयर्थ्यापत्तेः ।

नारायणं महाज्ञेयं विश्वात्मानं परायणम् ।

इति श्रुतौ मोक्षसाधनीभूतप्रसादवत्त्वेन श्रुत्यन्तरोक्तस्यैवेश्वरस्य महाज्ञेयमिति मुख्यज्ञेयत्वोक्तेरेतदतिरिक्तनिर्गुणस्य ज्ञेयत्वोक्तेरसम्भवात् । त्वं स्त्री त्वं पुमानित्यादिनोक्तस्य स्त्रीपुरुषाद्यन्तर्यामित्वादिगुणोपेतस्यैव मोक्षहेतुज्ञानविषयत्वस्योत्तरत्रोक्तेर्न सर्वगुणविनिर्मुक्तशशविषाणकल्पशुद्धस्य तत्प्रतीयते । तमेव विदित्वाऽतिमृत्युमेतीत्यत्रापि एवकारेण न गुणानां व्यवच्छेदो लभ्यते । एवकारेण तदतिरिक्तव्यवच्छेदात् । गुणानां तदत्यन्ताभिन्नत्वस्योक्तत्वात् । यजुर्वेदपुरुषसूक्ते सहस्रशीर्षत्वादित्यवर्णत्वादृयुपेतस्यैव परामर्शेन तज्ज्ञानस्य मोक्षहेतुत्वस्य तमेव विद्वानित्यादिनोक्तत्वेनात्रत्यैवकारस्यैवमित्यर्थकत्वोपपत्तेश्च । मुमुक्षुर्वै शरणमित्यादिवाक्यविरोधप्रसक्तिरेव नास्ति । निष्कलत्वपदोक्तलिङ्गदेहादिराहित्यस्य निष्क्रियपदोक्तक्लिष्टकारित्वाभावस्येश्वरे सम्भवात् । 'अकर्माऽक्लिष्टकारित्वात्' इत्यादिमानैरक्रियपदस्योक्तार्थकत्वात् । तस्य सर्वथा क्रियाराहित्यार्थकत्वे मोचनरूपव्यापाररहितं प्रति मुमुक्षोः शरणागत्युक्तेरसङ्गत्यापत्तेः । अन्यथा पाषाणादिकं प्रत्यपि शरणागतिप्रसङ्गात् । तस्मात्सगुणज्ञानस्यैव मोक्षहेतुत्वे विरोधाभावात्तमात्मस्थमिति वाक्ये तमिति विशेष्यमात्रपरामर्श इत्यसङ्गतम् ।

(द्वे. श्र) एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषां।

'तेषां शान्तिः शाश्वती' इत्यादिबहुवाक्येषु तत्पदस्य विशेष्यपरामर्शकत्वाङ्गीकारापत्तेश्च। ततो यदुत्तरतरमिति रूपविशेषाभिप्रायम्। यद्वा तत इति न पुरुषपरामर्शकम्। किन्त्विदंपदोक्तजगत्परम्। तथा च पुरुषेण जगतः स्वनियमनार्थं व्याप्तत्वरूपपूर्णत्वोक्तौ कथं जगतस्तेन नियम्यत्वम्। पुरुषस्य स्तब्धत्वादिदोषयुक्तत्वेन जगत्साम्यात् इत्याशङ्कयात्युत्कृष्टत्वेन विचित्रशक्तिमत्त्वात्प्राकृतदेहादिरहितत्वेन मोक्षहेतुज्ञानविषयत्वेन निर्दोषत्वात्। स्तब्धत्वं तु स्वसङ्कल्पाचलनशून्यत्वमेवेत्याशयेनोत्तरार्धप्रवृत्तेः। 'ब्रह्मविदाप्नोति परम्' इत्यादिवाक्योक्तब्रह्माभिन्नत्वान्ना-नेकेषां ज्ञानस्य मोक्षहेतुत्वापत्तिरूपदोष इति सूचनाय तादृशब्रह्माभेदमत्यभिज्ञानार्थं पुरुषपदेन पुल्लिङ्गेन प्रक्रान्त-स्यापि नपुंसकलिङ्गयत्पदेन परामर्शो[1] द्विरोधः। तस्माद्गुणज्ञानस्य मोक्षहेतुत्वेन गुणे तात्पर्यसम्भवान्न ज्ञेयवाक्य पठितगुणवाक्यानामुत्कर्षेणोपासनवाक्ये निवेशनम्।

अत एव 'निर्गुणस्तुत्युपयोगित्वेन तत्पाठः' इति पक्षोऽपि निरस्तः। लोके प्रसादादिगुणरहितस्यैव निन्द्यत्वस्य गुणवत एव कार्योपयोगितया स्तुत्यत्वस्य दर्शनेन वैपरीत्यस्यैव युक्तत्वाच्च। यत्र [2]त्वनिर्गुणवाक्यस्य प्राबल्यमिति पुनः पुनः प्रलपनं तत्प्राबल्यस्य बहुधा पूर्वं निरस्तत्वादनुपादेयमेव।

एतेनैतदपि निरस्तम् 'अद्वैतस्यापि क्वचिदुपास्यतया श्रवणेऽपि ज्ञेयतयापि श्रवणाद्वैतश्रुतेस्तात्पर्यं न सगुणब्रह्मणि। तस्य ज्ञेयत्वाश्रवणात्' इति। तस्य ज्ञेयतया श्रवणस्योपपादितत्वात्। उपास्यतयोक्तत्वेपि गुणानां सत्यता सेत्स्यत्येव। धर्मिसमसत्ताकधर्मोपासनाया एव युक्तत्वात्। अन्यथा सर्वत्र पूर्वपक्षविषये आकाशप्राणा-दिषु सर्वभूतकारणत्वादीनामारोपेणोपासनासम्भवेन सिद्धान्तानुत्थानापत्त्या समन्वयासङ्गतिप्रसङ्गात्। न च प्राति-भासिकानां भूतकारणत्वानन्तत्वादीनां भूते आरोप्योपासना न युक्ता। ब्रह्मणि व्यावहारिकाणामेव तेषां सम्भवादित्यभिप्रायं सिद्धान्तस्यातो नोक्तदोष इति वाच्यम्। उभयत्र धर्माणामुपास्यसमसत्ताकत्वाभावसाम्ये धर्माणां व्यावहारिकत्वमात्रेण ब्रह्मपक्षपाते बीजाभावेन सिद्धान्तानुत्थित्यपरिहारात्। अन्यथा भूताकाशादौ प्रातिभासिकानन्तत्वादौ सम्भवति व्यावहारिकत्वाश्रयणस्यानुचितत्वादित्युक्त्वा पूर्वपक्ष्येव कृतार्थः स्यात्। वस्तुतः पूर्वपक्ष्युक्तिरेव युक्ता। तत्पक्षे श्रौताकाशादिपदानां मुख्यार्थत्वसम्भवेन सिद्धान्तिरीत्या लक्षणाश्रयण-क्लेशाभावात्।

एवं ब्रह्मणि आरोपाधिष्ठानत्वनिर्वाहायापि धर्मा अङ्गीकरणीयाः। सामान्यतो ज्ञातस्य विशेषतोऽज्ञात-स्यैवाधिष्ठानत्वसम्भवात्। शुद्धविषयकाज्ञानमात्रेण शुद्धे आरोपसम्भव इति तु वक्ष्यमाणरीत्या शुद्धविषयकाज्ञाने निरस्ते निरस्तं भवति। एवमन्या अपि तदीयदुरुक्तय उक्तरीत्या दूरीकरणीया इत्यलम्। एवं श्रुतीनां सगुण

1 दविरोध इति पाठेन भाव्यमिति भाति। 2 तु निर्गुणवाक्यस्य इति पाठेन भाव्यमिति भाति।

(द्वै द्यु) परत्वे तदुपबृंहिततया न्यायामृतोक्तानुमानान्यपि ब्रह्मण: सगुणत्वमावेदयन्ति। स्वशब्दार्थविकल्पपूर्व-कदूषणपरिहारक्रमस्तु विमतो भिन्न इत्यनुमानविचारावसर एव दर्शित इति सर्वं सुस्थम्।

किञ्च निर्गुणे प्रमाणाप्रवृत्तौ सेत्स्यमान ब्रह्म सगुणमेव सिद्ध्यति। न च निर्गुणश्चेति श्रुतिरेव प्रमाण-मिति वाच्यम्। तस्या धर्मसामान्यनिषेधपरत्वे मूकोऽहमितिवत् व्याहतार्थकत्वापत्ते। न च निर्विशेषादिवाक्येन निर्विशेषत्वरूपविशेषाभावसाधारणधर्मावच्छिन्नाभावबोधनात्तद्द्वारा अखण्डार्थबोधकत्वान्न व्याहतार्थकत्वम्। मूकोऽहमित्यत्र तु मूकशब्देन वक्तृत्वशून्यत्व बोध्यते। तादृशशब्दोच्चारणेनार्थादवक्तृत्वाभावो बोध्यते। न तु वक्तृत्वतदभावसाधारणरूपावच्छिन्नाभावो बोध्यते अतस्तदुपलक्षितस्वरूपे तात्पर्यकल्पकाभावाद्व्याघात एवेति वाच्यम्। स्वसिद्धार्थनिषेधकत्व स्वस्य स्वव्याहतिर्नाम। मूकोऽहमित्यत्र तु लिङ्गविधया स्वसिद्धार्थनिषेधकत्वम्। अत्र तु स्वेनैव शब्दविधयैव बोधितार्थस्य निषेधकत्वमित्यनयोर्वैषम्योत्तयसङ्गते। अत्राभावो नास्तीत्यादिवाक्याना लोके व्याहतार्थकत्वाभावप्रसङ्गात्। न चेष्टापत्ति। सर्वविरुद्धार्थ इष्टापत्तिकरणे उन्मत्तत्वप्रसङ्गात्। अभावत्वाव-च्छिन्नाभावस्याप्रसिद्ध्या अभावत्वस्य न तत्साधारण्यमिति चेद्विशेषत्वावच्छिन्नाभावोपि तथैवेति कुतस्तत्साधारण्य निषेध्यतावच्छेदकरूपस्येति गृहाण। विशेषाभावातिरिक्तधर्मनिषेधपरत्वे त्वदभिमतनिर्विशेषासिद्धि। जातिगुण-क्रियादिनिमित्तकत्वात्सर्वपदशक्तीना लक्षणायाश्च शक्यसम्बन्धरूपत्वाद्गौण्या. शक्यसादृश्यनिबन्धनत्वात्सर्वपदा-र्थानामन्वयितावच्छेदकरूपेणैव उपस्थापकत्वनियमाच्च निर्विशेषे न कस्याप्यागमस्यावकाशः। अत एव न प्रत्यक्षानुमाने। इन्द्रियसंयोगमहत्त्वोद्भूतरूपादिधर्महीनत्वात्पक्षसाध्यतावच्छेदकादिरूपशून्यत्वात्किञ्चित्प्रतियोगि-कत्वानुयोगिकत्वरहितत्वाच्च। प्रत्यक्षे भानायोगादनुमितौ पक्षसाध्यसंसर्गपक्षतावच्छेदकसाध्यतावच्छेदकविधाभिश्च भानायोगात्। 'नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति' इति श्रुतिविरोधाच्च।

ननु किमर्थं प्रमाणप्रश्न स्फूर्त्यर्थं वा अज्ञाननिवृत्त्यर्थं वा। नाद्य:। स्वतःसिद्धे स्फूर्तये प्रमाणापेक्षा-योगात्। न च सर्वविप्रतिपन्नार्थस्यापि एव सिद्धिप्रसङ्गः। परप्रकाश्यत्वाभावतद्व्द्भेदबोधकप्रमाणस्य ब्रह्मणि सत्त्वादन्यत्रासत्त्वाच्च विशेषोपपत्ते.। न द्वितीय.। उपनिषदामेव मानत्वात्। न चोक्तरीत्या तदसम्भव। मुख्य वृत्तिगौण्योरसम्भवेऽपि लक्षणया ब्रह्मणि प्रवृत्त्युपपत्ते। न च पदानामन्वयितावच्छेदकरूपेणोपस्थापकत्वनियमा-ल्लक्षकपदानां शक्यसम्बन्धितावच्छेदकरूपेणोपस्थापकत्वनियमाच्च कथं निर्धर्मकस्य भानमिति वाच्यम्। संसर्गबोध-तात्पर्यकवाक्यस्थपदानामेव तथात्वनियमात्। प्रकृतवाक्यस्य च निर्विकल्पकजनकत्वेनातथात्वात्। न च संसर्गा-गोचरत्वे प्रमाणवाक्यत्वानुपपत्ति। मानान्तरानिश्चिताज्ञाताबाधितार्थावगमकत्वेन प्रमाणत्वस्याकाक्षादिमत्पद-कदम्बत्वेन वाक्यत्वस्य चोपपत्तेरिति चेन्न। परप्रकाश्यत्वात्यन्ताभावतद्भेदयोर्मुख्यविशेष्यतया निर्धर्मितावच्छे-दकतया च भाने भवदभिमतनिर्विशेषस्य तद्बोध्यत्वासिद्धि। अन्यथा शशविषाणादेरपि तत्प्रमाणगम्यत्वा-पत्ति। सधर्मितावच्छेदककभानाङ्गीकारे सविशेषस्यैव तत्सिद्ध्यापत्त्या निर्विशेषस्य तदसिद्धिः। न च पर-प्रकाश्यत्वाभावादावाधेयतया स्वरूपतो निर्गुणप्रकारकबोध एव मानेन जायताम्। तावतैव मदिष्टसिद्धिरिति

(द्वै.ग्रु.)वाच्यम्। ससर्गावगाहिबोधेऽन्वयितावच्छेदकरूपेणैव भाननियमस्य त्वयाऽप्यभ्युपगतत्वेन स्वरूपतो भानायोगात्। अन्यथा तादृशबोधे नरविषाणादिकमेव भासत इत्यस्याप्यापत्ते। तेषा नि स्वरूपत्वात्कथं तद्वक्तुं शक्यमिति चेत् तर्हि त्वदभिमतनिर्गुणस्वरूपस्याप्यसिद्धेस्तथात्वमेव। निर्गुणे वस्तुत्वस्वरूपत्वादिधर्माणां स्वसमसत्ताकाना त्वयाऽप्यनङ्गीकारात्तस्य शशविषाणादितुल्यत्वमवर्जनीयम्। स्वासमसत्ताकधर्मसम्बन्धात्तथात्वे आरोपितरजतत्वसम्बन्धाच्छुक्तेरपि अरजतत्वानुपपत्ति।

एतेन 'अज्ञाननिवृत्तये ब्रह्मण्युपनिषदां लक्षणया मानत्वम्' इत्यपास्तम्। निर्विकल्पकबोधस्य विषयावच्छिन्नतया घटादिज्ञानवत्प्रत्यक्षसिद्धत्वाभावेन [1]तत्स्वरूपस्यैव सिद्धत्वेन वाक्यस्य तज्जनकत्वासिद्धे। अन्यथा शशविषाणादिप्रतिबन्देरनुद्धार एव। तात्पर्यग्रहे वा लक्षणाग्रहे वा निर्गुणस्य स्वरूपतो मुख्यविशेष्यतया अभानात्किञ्चिद्धर्मपुरस्कारेण भाने लक्षणाग्रहे निर्गुणस्य भानात्तच्छब्दायोग। निर्गुणे प्रत्यक्षानुमानायोगादुक्तरीत्या शाब्दात्मकस्यैव लक्षणाज्ञानस्य तात्पर्यज्ञानस्य वा वक्तव्यतया तस्य संसर्गावगाहितयाऽन्वयितावच्छेदकरूपेणैव पदेन भानप्रसङ्गात् निर्गुणे लक्षणातात्पर्यग्रहायोगश्च। शाब्दलक्षणातात्पर्यग्रहार्थं पुन शाब्दलक्षणातात्पर्यग्रहान्तरापेक्षायामनवस्थाया मूलक्षति।

यदत्रोक्त परै 'वृत्तिमन्तरेण सुप्तोत्थापकवाक्यस्येव निर्विशेषे वेदान्तवाक्यस्य प्रामाण्य वार्तिककृद्भिरुपपादितम्।

अगृहीत्वैव सम्बन्धमभिधानाभिधेययो।
हित्वा निद्रा प्रबुध्यन्ते सुषुप्तेर्बोधिना पदै॥
नाग्रहूत्न हि सम्बन्धं सुषुप्तो वेत्ति कश्चन। इत्यादिग्रन्थेन।

सुषुप्तीयस्य वाक्यार्थबोधस्य पूर्वपदतदर्थसम्बन्धज्ञान न प्रामाणिकम्। न च कारणत्वेन क्लृप्त यत्तद्विना वाक्यार्थबोधासम्भवात् अन्यथाऽनुपपत्तिरेव तत्र मानमिति वाच्यम्। सोऽय चैत्र इत्यादिवाक्यमेकस्य वाक्यार्थस्य बोधे कालभेदेन जनकम्। तत्र च स्वघटकपदवृत्तिज्ञानजन्यपदार्थोपस्थितिसम्बन्धेन नोक्तवाक्यत्वरूपाकाक्षाज्ञान हेतु। तादृशवृत्तित्वस्य शक्तिलक्षणासाधारणस्यान्यतरत्वादिरूपस्य वाच्यतया विनिगमकाभावेन गुरुतरनानासम्बन्धरूपावच्छेदकभेदभिन्नहेतुतापत्ते। किन्तु स्वघटकपदशक्तिज्ञानजन्यार्थोपस्थितिविशिष्टतादृशवाक्यार्थबोधे तादृशोपस्थितिसम्बन्धेन स्वघटकपदलक्षणाज्ञानजन्योपस्थितिविशिष्टे वाक्यार्थबोधे तादृशोपस्थिति सम्बन्धेनोक्ताकाक्षाज्ञानत्वेन हेतुता। तथाच सुषुप्तपुरुषीयतादृशवाक्यार्थस्योक्तोपस्थितिविशिष्टत्वसन्देहात्तद्धेतुतया नोक्तोपस्थिति. कल्पयितु शक्या। किन्तु तादृशबोधनियतपूर्ववृत्तितया क्लृप्ततत्तज्ज्ञानविशेषादावेव वैजात्यविशेष कल्पयित्वा विजातीयज्ञानादिविशिष्टबोधे तादृशज्ञानादिसम्बन्धेनोक्ताकांक्षाज्ञानस्य हेतुत्वान्तर कल्प्यते अनन्तवृत्तिज्ञानाकल्पनाप्रयुक्तलाघवानुग्रहात्। तत्त्वमस्यादिवाक्यस्य तु स्वघटकपदजन्यवृत्तिज्ञानस्य शुद्धब्र

[1] तत्स्वरूपस्यैवासिद्धत्वेन इति पाठेन भाव्यमिति भाति।

(द्वि बु) अध्ययनस्वीकारपक्षे पापविशेषादिरूपप्रतिबन्धकसत्त्वे ज्ञानविशेषादिविशिष्टे अनवधारणरूपे वाक्यार्थबोधे ज्ञानविशेषादिसम्बन्धेन हेतुत्वेऽप्युक्तप्रतिबन्धकनाशकाले तद्विशिष्टे स्वार्थबोधे तत्सम्बन्धेन हेतुत्वान्तर कल्प्यते। तादृशज्ञानविशेषादेरप्यकल्पनया लाघवात्। तथा चाऽस्मच्छब्दसामान्ये तात्पर्यज्ञानादेः कारणत्व न कल्प्यते। तात्पर्यनिश्चयस्य वाक्यार्थसंशयहेतुवाक्यतात्पर्यसंशयोत्सारकतयोपयोग। तत्र चोक्तरीत्या पापनाशस्यावश्यकस्यापेक्षणीयत्वेन तेनैवोपपत्तौ तात्पर्यज्ञानाकल्पनेऽनवधारणात्मकात्मशाब्दे सुतरा तस्यानपेक्षणीयत्वात्। आत्मनोऽपरोक्षस्वभावत्वात्तज्ज्ञान साक्षात्कारात्मकमेव शाब्दमपि भवति। न च प्रतिबन्धकाभावादेराकांक्षाज्ञानाजन्यत्वात्तद्व्यापारत्वानुपपत्ति। तद्व्यापारत्वाभावे तत्समानाधिकरणत्वेन सम्बद्धत्वेन सम्बन्धसम्भवात्। न चैव प्रतिबन्धकाभावस्यैव स्वविशिष्टे वाक्यार्थबोधे हेतुत्वसम्भवाद्वाक्यमपि हेतुर्न स्यादिति वाच्यम्। वाक्यज्ञान विनोक्तबोधानुपपत्ते। औपनिषदत्वसमाख्यानात्। श्रुतिजन्यत्व विना बोधस्य प्रत्यक्षबाधकत्वानुपपत्तेश्च। न च निर्धारितैककोटिप्रकारकनिश्चय प्रत्येव धर्मिज्ञानाधीनविचारस्य जनकत्वात्कथ विचारसध्रीचीनवेदान्तवाक्यजन्यज्ञानस्य निष्प्रकारकत्वमिति वाच्यम्। संशयनिवृत्तिक्षमज्ञानस्यैव विचारपरत्वात्। तस्याश्च विरोधिकोटिप्रतिक्षेपकोपलक्षितधर्मिज्ञानादप्युपपत्तेर्न तदर्थं सप्रकारकत्वनियमः।

न च सप्रकारकनिष्प्रकारकयो संशयनिवर्तकत्वे गौरवम्। श्रुतेरुक्तरीत्या निर्गुणबोधकत्वस्याविद्यानिवर्तकत्वस्य च सिद्धतयाऽऽविद्यकसशयादिनिवर्तकत्वस्य प्रामाणिकत्वेनोक्तगौरवस्यादोषत्वात्। शक्तिविशेषेण सप्रकारकसाधारणेन निष्प्रकारकस्यापि संशयनिवर्तकत्वस्य पररीत्यापि सम्भवाद्गौरवानवकाशाच्च। तथा च शब्देन निर्गुणसिद्धये न लक्षणतात्पर्यग्रहापेक्षया पूर्वोक्तानवस्थादिदोष' इति।

तदप्ययुक्तम्। क्षीणपापस्य कस्यचित्तत्त्वमस्यादिवाक्यान्निर्गुणबोधोत्पत्तावपि अस्माक तत्सिद्ध्युपायाभावेन निर्गुणे प्रमाणप्रश्न एतदुपन्यासस्याकिञ्चित्करत्वात्। न चाज्ञाननिवृत्त्युपयोगिप्रमाणप्रश्ने उक्तरीत्याऽज्ञाननिवर्तकत्व तत्त्वमस्यादिवाक्यानामुक्तमिति वाच्यम्। इदानीमस्माक निर्गुणासत्त्वसंशयसम्पादकासत्त्वापादाकाज्ञाननिवर्तकप्रमाणस्य पृष्टत्वेन तत्त्वमस्यादिवाक्यानामिदानीं तथा बोधाजनकत्वेनोक्तप्रमाणत्वाभावात्।

न चेदानीमनवधारणज्ञान जायत इति वाच्यम्। तस्य संशयाद्यविरोधित्वात्। अपि च सुप्तबोधकवाक्यस्थले तस्य पदार्थोपस्थित्यादेरिवानुपूर्वीविशेषादिरूपाकाङ्क्षाप्रकारकज्ञानं सन्दिग्धमेव। तस्य वाक्यत्वप्रकारकज्ञान जायते। तद्घटकपदवृत्त्यादिज्ञान न जायत इत्यत्र विशेषप्रमाणाभावात्। तथा च सुप्तसम्बन्धिवाक्यार्थबोधे कथं वाक्यज्ञानस्य विजातीयज्ञानविशिष्टत्वेन पदार्थोपस्थित्यादिका सर्वत्र क्लृप्तसामग्रीमुल्लङ्घ्य हेतुत्वकल्पनम्। कथ च तद्दृष्टान्तेन तत्त्वमस्यादिवाक्यस्थलेऽपि तथा कल्पनम्। वस्तुत सुप्तस्य सर्वेन्द्रियव्यापाररहितस्य वाक्यविषयकश्रावणप्रत्यक्षं न घटत एव। प्रबोधद्वितीयक्षणादौ तत्सम्भवे तु न वाक्यस्य सुप्तप्रबोधकत्वप्रसक्ति। द्वितीयक्षणादिषु वाक्यज्ञानकल्पनावत्पदवृत्त्यादिज्ञानादेरपि कल्पयितु शक्यत्वेन तत्र शाब्दबोधस्यानुभवसिद्धत्वे पदार्थोपस्थित्यादेरप्यसन्देह एव। सुप्तस्य तद्वाक्यश्रवणाभावे कुतस्तद्बोधनाय वाक्यप्रयोग इति चेत्। शब्दस्य द्रव्यतया तदभिघातेनैव सुप्तस्य भेरीध्वन्यादिनेव प्रबोधात्तदर्थमेव। अत एवोचै

(द्वै. द्यु ) क्रोशन्ति । अन्यथा तद्वैयर्थ्यापत्ते । शब्दस्याभिघातकत्वाभावे भेरीशब्देन शिलादौ प्रतिध्वनिर्न स्यात् । न स्याच्च महाशब्देन भित्त्यादिस्थाल्पवस्तुपात. ।

यदप्युक्तं औपनिषदत्वसमाख्ययेत्यादि । तदप्यसत् । अण्प्रत्ययस्य सम्बन्धिमात्रार्थकतया [1]उपनिषदा वृत्त्यधीनपापनाशजनितज्ञानविषयमात्रार्थकत्वेन वाक्यस्य तज्ज्ञानकरणत्वानवगमकत्वात् । निर्गुणे प्रमाणप्रवृत्त्यभाववादिन प्रति तस्यौपनिषदत्वस्यैवासिद्धत्वेन तस्य हेतूकरणायोगाच्च । श्रुते प्रत्यक्षबाधकत्वभावस्योक्तत्वाच्च । सर्वप्रक्रियाया अप्रामाणिकत्वेन गौरवस्यापि दोषत्वान्निष्प्रकारकज्ञानस्यैवाप्रामाणिकतया शक्तिविशेषेणैतत्प्रतिबन्धकत्वोक्तेरप्ययोगाच्चेत्यलम् । तस्मान्न निर्गुणे प्रमाणमिति ।

एवञ्च ब्रह्मण. सगुणत्वस्य तस्यैव मुमुक्षुज्ञेयत्वादेश्च सिद्धावनन्तविग्रह इत्युक्तं विग्रहवत्त्वमप्यनपवादम् । देहस्य प्राकृतत्वाभावेन गुणरूपत्वेन नित्यत्वसम्भवात् । गुणानाञ्च मुमुक्षुज्ञेयत्वेनारोपितत्वायोगात् । अनन्तविग्रह इत्यत्र विग्रहपदस्य लीलागृहीतमायिकविग्रहपरत्वेऽनन्तपदोक्तोच्छेदाभावरूपानन्तत्वविरोधात् । तस्य कथञ्चिदुपचरितार्थत्वे सत्यं ज्ञानमनन्तम् इत्यत्रापि कथञ्चिदौपचारिकार्थस्य वक्तु शक्यत्वेन ब्रह्मणोऽपि मुख्यानन्तत्वाभावप्रसङ्गात् । न चानन्तपद सङ्ख्यार्थकम् । विनिगमनाविरहेणोभयार्थकत्वस्यापि सम्भवात् ।

सर्वे नित्या शाश्वताश्च देहास्तस्य महात्मन ।
परमानन्दसन्दोहज्ञानमात्राश्च सर्वश ॥

इत्यादिवाक्यैस्तद्देहस्य नित्यत्वबहुत्वयोरुक्तत्वेन तत्समाख्यानात् । न चात्र नित्यपदमितरदेहापेक्षयाऽधिककालवृत्तित्वादौपचारिकमिति वक्तुं शक्यम् । शाश्वतपदसद्भावेनौपचारिकत्वायोगात् । तस्य तत्समानार्थकत्वेनाभ्यासरूपतया स्वार्थतात्पर्यनिश्चायकत्वात् ।

न च देह ईश्वराद्भिन्नो वाऽभिन्नो वा । नाद्य. । तस्य ज्ञानाऽनन्दमात्ररूपत्वोक्त्ययोगात् । वैषयिकाऽनन्दस्य जडत्वेपि परमत्वायोगात् । विषयजन्यत्वेनानित्यत्वापाताच्च । किञ्च तस्य शरीरस्येश्वरीयत्वं नामेश्वरसंयोगित्वमात्रमुतेश्वरनिष्ठभोगावच्छेदकत्वमपि । नाद्य: । अस्मदादिशरीराणामपि ईश्वरीयत्वापातादविशेषात् । न द्वितीय । तदवच्छेदेन ज्ञानसुखादीनामुत्पत्त्यापत्त्या जीववत्संसारित्वापत्तेः ।

न च दु खानवच्छेदकत्वाज्जीववैलक्षण्यम् । तथाऽपि शरीरतादात्म्यापरायत्तस्वामित्वग्रहेण हि जीवस्य शरीरानुकूलाननुकूलविषयससर्गात्सुखदु खोत्पत्त्यादिकम् । ईश्वरस्य तत्सत्त्वेन सुखोत्पत्त्यङ्गीकारे तस्यादृष्टसाध्यतापत्त्येश्वरस्यापि जीववत्संसारित्वापत्ते । 'अचक्षु श्रोत्रं तदपाणिपादम्' इति शरीरेन्द्रियादीना निषेधाच्च । अत एवेश्वराभिन्न एव देह इति प्राग्विकल्पितद्वितीयपक्षोपि परास्त । ईश्वरस्यैकत्वेन बहुत्वानुपपत्ते ।

मैवम् । ईश्वरदेहस्य ईश्वरात्यन्ताभिन्नत्वेपि विशेषशक्त्यैव देहदेहिभावादिवत् बहुत्वादेरप्युपपत्ते । न च भेदातिरिक्तविशेषोऽप्रामाणिक इति वाच्यम् । तस्योत्तरत्र व्यवस्थापयिष्यमाणत्वात् । न च चेष्टावदन्त्यावयविन

[1] उपनिषदो इति पाठेन भाव्यमिति भाति ।

(द्वै यु) एव शरीरपदार्थत्वात् स्वरूपस्यैव शरीरत्वे शरीरपदस्य तत्र सङ्केतमात्रं कृतं स्यात्। न तावता शरीरत्वसिद्धिरिति वाच्यम्। एवं तर्हि मनोवृत्तेरेव आनन्दज्ञानपदार्थत्वेन तद्भिन्नस्य ब्रह्मणो ज्ञानाऽनन्दाऽऽत्मकत्वस्यापि पारिभाषिकत्वापातात्। न च सौषुप्तिकसुखज्ञानयोरुक्तरूपत्वाभावान्नाय नियमो घटत इति वाच्यम्। सुषुप्तौ तयोरनङ्गीकारादुत्तरकालिकपरामर्शस्यानुमितदुःखाभावविषयकत्वाभ्युपगमात्।

न च स्फुरणमात्रं ज्ञानपदार्थः। निरुपाधिकप्रेमास्पदमेवाऽऽनन्दपदार्थः। मनोवृत्तित्वं त्वप्रयोजकम्। अतो ब्रह्मणस्तादृशत्वाज्ज्ञानानन्दात्मकत्वं न पारिभाषिकमिति वाच्यम्। करचरणादिमत्त्वस्यैव शरीरपदप्रवृत्तिनिमित्तत्वेन तद्वत्त्वेन ब्रह्मस्वरूपस्य शरीरत्वस्याप्युपपत्तेः। न च 'अचक्षुः श्रोत्रं तदपाणिपादम्' इत्यादिना करचरणादिनिषेधानुपपत्तिः। 'अदुःखमसुखम्' इति ब्रह्मणि सुखभेदस्य 'न सत्तन्नासदुच्यते' 'न सन्न चासन्निति' सद्भेदस्योक्तत्वेन सुखरूपत्वसद्रूपत्वयोरप्यनङ्गीकारापातात्। न चादुःखपदं दुःखाभाववत्परम्। दुःखभेदस्य दुःखिन्यपि सत्त्वेन तदुक्तेः प्रतिपाद्यवस्तूत्कर्षापर्यवसानात्। तथा च तत्प्रायपठितमसुखपदमपि सुखाभाववदर्थकम्। न सुखभेदार्थकमिति वाच्यम्। अस्थूलादिपदानां स्थूलादिभेदावच्छिन्नवाचित्वेन तत्समभिव्याहारादत्र सुखभेदावच्छिन्नवाचित्वस्यापि वक्तुं शक्यत्वात्।

किञ्च 'यो वै भूमा तत्सुखम्' इत्यादिषु ब्रह्मणः सुखरूपत्वप्रतिपादकेषु सुखित्वबोधनमपि तात्पर्यविषयीभूतम्। धर्मस्य धर्म्यभिन्नत्वेन तदभेदबोधनेनैव तद्वत्त्वं बोधितं भवतीत्यभिप्रायेणाश्रयत्वबोधकपदाभावः। अत एव 'नाल्पे सुखमस्ति' इति निषेधं कृत्वा 'भूमैव सुखम्' इति निगमनमपि सङ्गच्छते। अन्यथा नाल्पं सुखमित्येव स्यात्। सुखनिषेधस्यासङ्गतत्वापत्तेः। ब्रह्मणि सुखस्य पूर्वमनुक्तत्वेन सुखाभावेऽपि ब्रह्मवत्सुखरूपत्वानपायेन तदितरस्मिन् ब्रह्मवैलक्षण्यग्रहानिर्वाहकत्वात्। तथा च 'अदुःखमसुखमगन्धम्' इत्यत्राप्यन्यपरत्वमेव नञामस्तु। प्रायपाठाविरोधात्। तेनैव सुखाभावस्यापि प्राप्तेः। छान्दसत्त्वगन्धमित्यत्र 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इत्यनेन प्राप्तस्य पुंस्त्वस्याभावः। तथा च विज्ञानमानन्दं ब्रह्मेत्यादेरसुखमित्यनेन बाधः स्यादेव। न च ब्रह्मसत्तासुखात्मकताबोधकानां वाक्यानां बहूनां तत्तत्प्रकरणेषु सत्त्वाद्बहुबाधस्यान्याय्यत्वात् 'न सत्तन्नासत्' इत्यादेः कार्यकारणविलक्षणार्थकत्वं 'असुखम्' इत्यस्य प्राकृतसुखान्यत्वमर्थ इति वाच्यम्। इहापि शरीरप्रतिपादकानां बहूनां वाक्यानां सत्त्वात् तद्बाधस्यान्याय्यत्वेन 'अपाणिपादः' इत्यादेरपि प्राकृतपाणिपादाभावपरत्वाभ्युपगमात्। 'अरूपोऽप्राकृतत्वाच्च' इति स्मृत्या,

> अभावाज्जडदेहस्य विष्णुर्निर्वाण उच्यते।
> भिन्नदेहाभावतो वा स सहस्रशिरा अपि॥

इति स्कान्दादिवचनैश्च देहाभाववचनानां प्राकृतदेहाद्यभावपरत्वेन व्याख्यातत्वाच्च।

न च देहसद्भावे प्रमाणाभावः। मूलोदाहृतवाक्यस्य सर्वे नित्या इति वाक्यस्य चोक्तत्वात्। तथा

(द्वै. शु.) सहस्रशीर्षा पुरुष सहस्राक्ष सहस्रपात्।

यदात्मको भगवास्तदात्मिका व्यक्ति । किमात्मको भगवान् ज्ञानात्मक ऐश्वर्यात्मक· शक्त्यात्मक. । बुद्धिमनोङ्गप्रत्यङ्गवत्ता भगवतो लक्षयामहे । बुद्धिमान् मनोमानङ्गप्रत्यङ्गवानिति ।

ऋतं सत्य पर ब्रह्म पुरुषं कृष्णपिङ्गलम् ।
सहस्रशीर्षं देव विश्वाक्ष विश्वशम्भुवम् ।
विश्वं नारायण देवं अक्षर परमं पदम् ।
यदेकमव्यक्तमनन्तरूपमादित्यवर्णं तमस परस्तात् ।
तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परम कवीना ॥
यदा पश्य पश्यते रुक्मवर्णं कर्तारमीश पुरुष ब्रह्मयोनिम् ।
न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चिदेनम् ॥ इति ।
पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रश. ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ।
सर्वत: पाणिपाद तत्सर्वतोऽक्षिशिरोमुखम् ।

'उद्भवहरिमन केशौ' इत्यादीना शतश श्रुतिस्मृतीना विद्यमानत्वात् ।

ननु यत्र ज्ञेयब्रह्मण्यादित्यवर्णत्वादिक श्रूयते तत्स्वप्रकाशत्वोपलक्षकम् । उपास्ये श्रूयमाणं त्विच्छागृहीतशरीरपरम् । विश्वरूपाध्यायादिगतवाक्यान्यपि तादृशशरीरपराण्येवेति चेन्न । ज्ञेयोपास्यब्रह्मभेदस्य निरस्तत्वात् । अन्यथोपासनाया निरस्तत्वेनाविद्यमानत्वायोगेन शरीरसत्यत्वसिद्धौ पूर्वोदाहृतच्छान्दस्मृत्यादिभिस्तस्य भिन्नत्वाभावे स्वरूपत्वस्यैव सिद्धे । अपि च ज्ञेयब्रह्मण्यपि किमर्थमादित्यवर्णत्वाद्यनङ्गीकार । अरूपत्वादिप्रतिपादकश्रुत्यादिबलादिति चेत्तर्हि निर्धर्मकत्वादिश्रुत्या ज्ञानानन्दसत्तादीनामप्यसिद्धिप्रसङ्ग. । न सन्त्येव ता निर्धर्मतया कल्पितत्वात् । किन्तु सच्चिदानन्दात्मकमेव ब्रह्माङ्गीक्रियत इति चेदिहापि तथैवास्तु रूपादिशून्यमपि रूपरूप विग्रहरूपञ्चेति वक्तु शक्यत्वात् । 'सत्यं ज्ञानं' इत्यादिब्रह्माभेदश्रुतिवत् 'आनन्दरूपममृत यद्विभाति' 'यदेकमव्यक्तमनेकरूपमादित्यवर्णम्' इत्यादेर्विग्रहाभेदप्रतिपादकस्य सत्त्वात् । आनन्दरूपमित्यस्याऽनन्दात्मक विग्रहाभिन्नमित्यर्थकत्वात् । अनेकरूपशब्देनानेकरूपविग्रहाभेद एवोच्यते । रूपशब्दस्य शरीरवर्णोभयार्थकत्वस्यापि सम्भवात् । आदित्यवर्ण इत्यनेन वर्णाभेद एवोच्यताम् ।

विज्ञानमानन्द ब्रह्म रातिर्दातु. परायणम् ।

इत्यत्रेव नपुंसकलिङ्गत्वोपपत्तेः । न च विग्रहवत्त्व त्वदभिमत गतमिति वाच्यम् । त्वदभिमतरूपाद्यनात्मकत्वस्याऽप्यसिद्धेः साम्यात् । विग्रहवत्त्वं त्वस्माक प्रमाणान्तरानुरोधाद्विशेषबलेन निर्वहति । सहस्रशीर्षेत्याद्युक्तसहस्रशीर्ष-

(द्वै ४) त्वादिकमपि नेच्छागृहीतजडरूपम् । तमेव विद्वानित्यादिना तज्ज्ञानस्य मोचकत्वश्रवणात् । आदित्यवर्णं तमसस्तु पार इति प्रकृतिविलक्षणत्वोक्तेश्च । विश्वरूपाध्यायोक्तदेहस्य जडत्वमयुक्तम् । तस्य परिच्छिन्नस्य कुरुक्षेत्रमात्रगृहीतस्य 'दर्शयात्मनमव्ययम्' इत्युक्ताव्ययत्वस्य 'पश्यामि देवास्तव देव देहे' इत्यादिनोक्तसर्वाधारत्वस्यायोगापातात् । नचाव्ययत्वमौपचारिकं सर्वाधारत्वं तत्काले प्रदर्शितं न वास्तवमिति वाच्यम् । तस्येन्द्रजालतुल्यत्वापत्त्या

देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ।

इत्युक्तदेवापेक्षितदर्शनगोचरत्वस्य 'नाहं वेदैर्न तपसा' इत्यादिनोक्तभक्त्यैकसाध्यदर्शनगोचरत्वस्य चानुपपत्तेः । एतादृशेन्द्रजालस्य मनुष्यैरपि कर्तुं शक्यत्वेनोक्तमाहात्म्यानुपपत्तिप्रसङ्गात् । एवं कृष्णदेहस्य जडत्वे तस्य परिच्छिन्नत्वे तदुदरे अणावेव सर्वजगद्दर्शनं यशोदाया अनुपपन्नम् । इन्द्रजालादिरूपत्वे माहात्म्यरूपतया कथनानुपपत्तिः । केशयोर्भिन्नतया जडत्वे तयोरवतारेण भूभारहरणकर्तृत्वाद्युक्त्ययोगः । अव्ययत्वस्य परमत्वादेः कथञ्चिदमुख्यार्थत्वे सत्यज्ञानादिवाक्येषु अन्येष्वपि सर्वत्र कथञ्चिदमुख्यार्थस्य वक्तुं शक्यत्वेन कस्यापि वैदिकस्यार्थस्यासिद्धिप्रसङ्गात् ।

ननु शरीरस्य केशादेश्च चिद्रूपत्वे कथं तस्योत्पाटनादिकमिति चेत् । अचिन्त्याद्भुतस्वशक्त्या केशादिरूपस्वांशैर्बहिर्गमनावतारादिसम्भवात् । 'नैषा तर्केण मतिरापनेया' इत्यादिवचनैर्ब्रह्मणस्तर्कागम्यत्वात् । 'यस्मिन् विरुद्धगतयोऽप्यनिशं पतन्ति' इत्यादिना लोके विरुद्धत्वप्रतीयमानानामप्यचिन्त्यशक्त्या समानाधिकरणत्वोक्तेः ।

न चाचिन्त्यशक्तौ प्रमाणाभावः ।

विचित्रशक्तिः पुरुषः पुराणो न चान्येषां शक्तयस्तादृशाः स्युः ।
एको वशी सर्वभूतान्तरात्मा सर्वान्देवानेक एवानुविष्टः ।

'पराऽस्य शक्तिः' इत्यादिश्रुतिस्मृतीनां भूयसीनां सत्त्वात् ।

यत्तु 'इयं श्रुतिर्मायानिमित्तकब्रह्मशक्तिपरा' इति । तत्तुच्छम् । मायाबोधकपदाश्रवणात् । अश्रुतकल्पने सत्यज्ञानादिवाक्यमपि मायाकल्पितसत्याद्यात्मकत्वं ब्रह्मणः प्रतिपादयत्तन्मिथ्यात्वपरं स्यात् । शक्तेः स्वाभाविकत्वोक्तिविरोधाच्च । लोके पुराणादौ च योगप्रभावलब्धशक्तेरपि दुर्घटकार्यनिर्वाहकत्वदर्शनेन स्वाभाविकशक्तेः सुतरां तथात्वौचित्येन मायाशक्त्यनुसरणे बीजाभावाच्च । ननु ईश्वरदेहस्य तत्स्वरूपत्वे

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।

इत्यनेनैवेश्वरेणैव स्वदेहस्योत्पत्तिनाशोक्तिविरोधः । एवं 'सम्भवाम्यात्ममायया' 'लीलामानुषविग्रहः' इत्यादीन्यपि बहुवाक्यानि सन्त्येवेति तद्वाक्यविरोधोऽपीति चेन्न । बहूनि मे इत्युक्तेर्लोकरीत्या स्वस्यापि मनुष्यत्वाभ्युपगमनादेव प्रवृत्तत्वात् । अन्यथा तद्वाक्यविरोधेनेश्वरस्य जन्ममरणे अपि प्रमाणविरुद्धे स्याताम् । इतरवाक्याना-

(द्वै द्यु.) मपि वेदोत्पत्तिवाक्यवदभिव्यक्त्यर्थकत्वोपपत्ते. । लीलामानुषविग्रह इत्यादीना लीलया प्रकटीकृतमनुष्यसदृशविग्रह इत्यर्थकत्वोपपत्ते. । मायामानुष इत्यादेर्मायया स्वेच्छया मनुष्यवत्प्रतीयमान इत्यर्थकत्वोपपत्ते । ननु कुत एतत् । उत्पत्तिवाक्यानामेव मुख्यार्थकत्वमाश्रित्यानुत्पत्त्यादिवाक्यानि अमुख्यार्थानीति कुतो न स्वीक्रियत इति चेन्न । पराधीनविशेषप्राप्तेरेव मुख्योत्पत्तित्वेन स्वतन्त्रे हरौ तदयागात् ।

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मान सृजाम्यहम् ॥

इत्यादिना परमात्मोत्पत्तेरितरानधीनतया लोकप्रसिद्धोत्पत्त्यपेक्षया विलक्षणत्वश्रवणेन तस्य प्रादुर्भावादिरूपत्वाव गमात् । अन्यथा स्वेनैव स्वोत्पत्तावात्माश्रयापत्ते । न च विग्रहान्तरमुत्पाद्य तत्र स्वस्य प्रवेश एवोत्पत्तिरस्त्विति वाच्यम् । ईश्वरस्य त्वन्मतेऽप्यपरिच्छिन्नस्य तत्र प्रवेशासम्भवात् । तदभिमानोत्पत्तौ तत्कृतदु खादेरप्यवर्जनीयतापातात् । अभिमानप्रवेशौ विना जीवान्तरानधिष्ठितत्वैकदेशसम्बद्धत्वमात्रेण जडस्य तच्छरीरत्वे दार्वादिशरीरस्यापि ईश्वरीयत्वापत्तेरविशेषात् ।

एको नारायण आसीन्न ब्रह्मा न च शङ्कर ।

'यो मामजमनादिं' चेत्यादिभिर्नाराय[1]णादिदेहानां प्रलयकालेऽपि सत्त्वावगमेन तद्देहवतो देहान्तराभिमानायोगाच्च । श्रुतौ शङ्करादिस्वरूपसत्ताया प्रलयेऽपि सत्त्वेन तेषा निषेधपूर्वकं नारायणस्य स्थितिकथने देहतोऽपि स्थितिरूपविशेषो लभ्यते। 'अजमनादिम्' इत्यनयोरपौनरुक्त्याय स्वरूपानादित्वातिरिक्तदेहानादित्वार्थकत्वस्यान्यतरपदयोरवलम्बनीयतया स्मृत्यापि स विशेषो लभ्यते ।

उत्पत्तिर्वासुदेवस्य प्रादुर्भावो न चापर ।

इत्यादीनां अन्यत्राचार्यैरुदाहृताना बहूना सत्त्वाच्च ।

यत्तु 'नारायणस्येक्षणपूर्वकसृष्ट्यर्थं स्थितिरितरेषा तदर्थं स्थित्यभाव एव श्रुत्योच्यते। नानेन देहनित्यत्वं लभ्यते' इति तन्मौढ्यात् । पत्युरसामञ्जस्यादित्युक्तरीत्या कर्तृत्वाभावोपपादकशरीराभावोक्तेरेव सङ्गतत्वात् उक्तस्मृतिसंवादाच्च सिद्धान्तार्थस्यैव श्लिष्टत्वात् सृष्ट्यनुकूलस्थितिरहिता इत्यस्यायुक्तत्वात् । प्रलयावस्थायां सृष्टिरूपव्यापारस्याप्रसक्तत्वेन तेन रूपेण निषेधायोगात् । उभयेषा स्थितिसाम्ये शङ्करादे सृष्ट्यनुकूलस्थित्य भाव एव कुत इत्याकाङ्क्षानुपरमाच्च । उक्तगुरुधर्मावच्छिन्ने धातोर्लक्षणापत्तेश्च ।

यत्तु 'नारायणपद सदेव सौम्येदमिति वाक्यान्तरानुरोधात् मायोपहितं मायाबिम्बित वा चेतनमेव बोधयति' इति तदसत् । दृष्टान्तासम्मते. । मायोपधानस्य वैयर्थ्याच्च । न चेक्षणाद्यर्थं तदिति वाच्यम् । सृष्ट्याद्यकालीनेक्षणाद्युत्पत्त्यर्थमीश्वरस्येच्छारूपव्यापारो वर्तते न वा । नाद्य । तदर्थमिच्छाज्ञानादे. पूर्वमपेक्षिततया तत्पूर्वं तत्पूर्वमिति

---

[1] णदेहानां इति पाठेन भाव्यमिति भाति।

ह्रे.षु ) क्रमेणानवस्थिनाप्रामाणिकतद्द्वाराकल्पनापत्ते । प्रलयकालेऽपि ईक्षणादिसृष्टौ तस्य सृष्टिकालत्वापत्ते. । सृष्ट्याद्यकाल एव ईक्षणोक्तेरयोगाच्च । ईक्षणानुकूलेक्षणेच्छादीना नित्यत्वे जगदनुकूलेक्षणस्य विवक्षितकालात्पूर्वमप्युत्पत्तिप्रसक्त्या प्रलयकालेऽपि जगदुत्पत्तिप्रसङ्गः । मायाचिद्योगरूपकालस्यापि त्वन्मते खण्डत्वेन तद्विशेषस्य सहकारित्वोक्त्या परिहारायोगाच्च । कस्यचिज्जन्यस्य खण्डकालस्य जगदनुकूलेक्षणोत्पत्ते प्रागयोगे तत्सहकारोक्त्या परिहारायोगाच्च । तत्कालव्यक्तेरपि पूर्वकालव्यक्त्यन्तरापेक्षया तत्राप्युक्तरीत्याऽतिप्रसङ्गात् । न द्वितीय । सर्वकार्यनिमित्तकारणत्वस्येश्वरे बोधकश्रुतीनामप्रामाण्यापातात् । तद्व्यतिरिक्तसर्वकार्यपरत्वाभ्युपगमस्त्वसम्भावित । स्याकस्मिकत्वापत्त्या सर्वस्यापि तथात्वापत्तेरीश्वरकारणत्वप्रसक्तेरेवायोगापातात् । श्रुतौ बहुमानश्चेत् 'स्वाभाविकी ज्ञानबलक्रिया च' इत्याद्युक्तज्ञानस्वाभाविकत्वनित्य त्वयोरङ्गीकारो वा ।

तर्हि तत एव सृष्टिप्रलययोर्यौगपद्य स्यादुभयानुकूलेच्छाज्ञानकृतीना नित्यत्वादेकत्वात् । 'तदैक्षत स इमान् लोकान् असृजत' इत्यादिकं ज्ञानक्रियादिकादाचित्कत्वावगमकवाक्यमप्रमाणं च स्यात । मैवम् । ज्ञानादीना शक्त्यात्मना सत्त्वेऽपि व्यक्तिविशेषरूपावस्थाविशेषविशिष्टाना तत्कार्यानुकूलत्वतादृशव्यवहारविषयत्वयोरङ्गीकारेणातिप्रसङ्गपरिहारस्याकारे विशदीकृतत्वात् ।

ननु तर्हि उत्पत्तेरेव व्यक्तिरिति परिभाषामात्र कृतं स्यादिति चेन्न । ईश्वरज्ञानानित्यत्वनित्यत्वपक्षयोर्दोषसाम्ये तन्नित्यत्वप्रतिपादकश्रुतेरुपचरितार्थत्वकल्पनेन बहुतरानन्तज्ञानादिव्यक्तिकल्पनागौरवाधिक्येन चानित्यत्वपक्षं विहाय तन्नित्यत्वमेवाभ्युपगम्य पूर्वोक्तदोषपरिहारायोत्पत्तिव्यतिरिक्तस्य नित्यत्वाविरोधिनो व्यक्तिशब्दवाच्यावस्थाविशेषस्यार्थापत्तिसिद्धत्वेन परिभाषामात्रत्वाभावात् । अन्यथाऽनादिजीवेशभेदाविद्यादीना प्रयोज्यप्रयोजकभावस्यापि कार्यकारणभावरूपत्वापत्त्या तदुक्तेरपि परिभाषामात्रत्वापत्ते. । तस्मान्मायाद्युपाधिं विना भगवत एव नित्यज्ञानैश्वर्यादिमत्त्वात् तद्वद्देहोऽपि तादृश एव स्वरूपभूतोऽभ्युपेय. । यदात्मक इत्यादिश्रुतिबलात् । अधिकं पूर्वं वराहरूपप्रतिपादकविष्णुपुराणवाक्यानामर्थकथनावसरे निरूपितमनुसन्धेयम् । अधिकं तरङ्गिण्यादौ द्रष्टव्यमिति दिक् ।

यत्तु 'यदात्मको यत्स्वरूपेणात्यन्ताभिन्नस्वरूपो भगवानीश्वरस्तदात्मिका तत्स्वरूपेणात्यन्ताभिन्ना व्यक्तिरभिव्यक्तिरपरोक्षचिद्रूपा । आत्मा ज्ञानात्मकः ज्ञानस्वरूपात्यन्ताभिन्न ऐश्वर्यात्मकः नित्यनिरतिशयानन्दस्वरूपात्यन्ताभिन्न । तथा च चिदानन्दात्मकोऽप्युक्तस्वरूपाभिन्न इति जीवब्रह्मस्वरूपयोरभेदे श्रुतितात्पर्यम्' इति तन्न । वृत्तिप्रतिबिम्बितचिद्रूपापरोक्षचितो निरस्तत्वात् । भगवतो ग्रहणे तत्सम्बन्धिशरीरस्यैव बुद्धिस्थतया ग्रहणौचित्येनाप्रसक्तापरोक्षचितो ग्रहणायोगात । शक्त्यात्मक इत्युक्तशक्त्यात्मकत्वस्य त्वन्मतेऽसम्भवाच्च ।

यदपीश्वरदेहं पक्षीकृत्योद्भूतरूपवत्त्वाशवत्त्वादिहेतुभिरनित्यत्वसाधन तत्तन्नित्य त्वबोधकपूर्वोक्तमानैर्बाधितत्वादाभाससाम्याच्चानुपादेयम् । 'यस्यांशांशेन सृज्यन्त' 'एते स्वांशकला पुस कृष्णस्तु भगवान्' इत्यादिमानै सिद्धत्वेन ब्रह्मणि सदंशस्यानावृतत्वमानन्दांशस्यावृतत्वमिति वदता त्वया च ब्रह्मण्यंशस्याभ्युपगतत्वेन ब्रह्मानित्यत्व-

(द्वै.सु.) मभ्युपेयं स्यात्। अन्यथा व्यभिचारापत्ते । स्वसमानसत्ताकत्व वा हेतुविशेषणं विजातीयाशत्वं वा हेतुविशेषणमस्त्विति चेत् ब्रह्मनित्यत्वस्य प्रमितत्वादुक्तरीत्याश्रयणे तत्स्वरूपभूतदेहस्योक्तरीत्या प्रमितत्वादेव हेतौ प्राकृतत्वं विशेषण दीयता विजातीयाशवत्त्व वा न स्वीक्रियताम्। तथा च कथमनित्यता शरीरस्य। न च कृष्णदेहादे त्यागस्य पुराणादौ उक्तत्वात्कथ नित्यता। तर्हि रघुनाथरोदनादे पुराणसिद्धत्वात्कथमदु खिता। लोकानुसरणाय तथा प्रदर्शन चेदत्रापि तदर्थमेव तादृशदेहान्तरनिर्माणेन तथा प्रदर्शनमस्तु। एव 'पश्यति श्रृणोति' 'धाता पुरस्तात् यमुदाजहार' इत्यादि श्रुतिसिद्धश्रवणदर्शनाभिवदनक्रियाभिरपि ईश्वरस्य शरीरित्वं सिद्ध्यति। श्रवणदर्शनादिज्ञानस्येन्द्रियाणा चेश्वरस्वरूपत्वेऽपि विशेषशक्त्यैव सर्वनिर्वाहान्न काऽप्यनुपपत्ति। परमतः सेतून्मानेत्यधिकरणरीत्याऽऽनन्दादेरिव विग्रहस्य लौकिकशरीरसादृश्यस्य करादिमत्त्वेन सत्त्वेऽपि लौकिकविलक्षणत्वान्न काऽपि क्षता। तदुक्तम्।

> आनन्दो नेदृशानन्द इत्युक्तेर्लौकत परम्।
> प्रतिभाति न चाभाति यथावद्दर्शनं विना॥

इति स्मृतौ। आनन्द इत्यस्योपलक्षणत्वात्।

यत्तु 'पश्यति श्रृणोति इत्याद्युक्तचाक्षुषादिकं मायापरिणामरूपमेवेश्वरनिष्ठ स्वीक्रियते। चक्षुराद्यजन्यत्वेऽपि तत्र चाक्षुषत्वादिजातिस्वीकारात्। यद्वा जीवचक्षुस्सन्निकर्षेणैव वा भगवच्चाक्षुषम्। तत्तत्पुरुषीयचाक्षुषगतवैजात्यविशिष्टेषु सन्निकर्षाणा वैजात्यविशेषैर्हेतुत्वानामावश्यकत्वादीशचाक्षुषजनकतावच्छेदकवैजात्यस्यापि जीवचक्षुरादिसन्निकर्षे स्वीकारसम्भवात्। जीवचाक्षुषजनकतावच्छेदकवैजात्यस्येश्वरनिष्ठचाक्षुषहेतुत्वेन कल्प्यमाने पिशाचादिनिष्ठे जीवचक्षुस्सन्निकर्षे सत्त्वे मानाभावेन ततो जीवचाक्षुषापत्त्यसम्भवात्' इति। तत्तुच्छम्। ईश्वरस्याद्येक्षणानुपपत्त्या तज्ज्ञानानित्यतया निरस्तत्वात्। मायोपादानकेक्षणमीश्वरस्योत्पद्यत इत्यत्र मानाभाव। अन्यथाऽन्त.करणोपादानकमीक्षणमीश्वरस्य किं न स्वीक्रियते। अन्त करण नेश्वरोपाधिरिति चेत् किं तदुपाधित्वम्। तत्संयोगित्व चेत्। अन्त करणेऽपि समम्। तत्तादात्म्याध्यासश्चेत् मायाया अप्युपाधित्वानुपपत्ति.। ईश्वरस्य तदध्यासायोगात्।

> मामेव ये प्रपद्यन्ते मायामेता तरन्ति ते।

इति वाक्योक्तस्वप्रपन्नमायाध्यासनिवृत्तिरूपमायातरणसमर्थस्येश्वरस्य मायातादात्म्याध्यासस्यासम्भावितत्वात्। अत एव यद्वेत्युक्तिरप्यसङ्गता। ईश्वराद्येक्षणे जीवचक्षुस्संयोगरूपकारणस्य व्यभिचारेण कल्पनाया असम्भावितत्वाच्च। पिशाचचक्षुस्संयोगस्य जीवचाक्षुषजनकतावच्छेदकजातिशून्यस्येश्वरसाक्षात्कारजनकतावच्छेदकजातिमत्त्वे तादृशजात्योर्भिन्नत्वस्यावश्यकत्वे तस्या जीवसयोग एव कल्पनं नेश्वरचाक्षुषाव्यवहितपूर्ववृत्तिवायुसंयोगादावित्यत्र नियामकाभावात् एतत्पूर्वमीश्वरचाक्षुषाजनकत्वेनोभयोरपि अक्लृप्तत्वादत्यन्ताप्रामाणिकत्वाच्च। एवमीश्वरस्य

(द्वे ह्यु) चिदानन्दात्मकविग्रहवत्त्वे पूर्वोदाहृतबहुप्रमाणसत्त्वेन स्वतन्त्रे स्वधर्मिण्यपकर्षापादकत्वरूपदोषत्वाश्रयस्य कस्याप्यसत्स्पर्शेन बाधकाभावाच्च कल्याणगुणात्मकदेहवान् हरिरिति सर्वमवदातम्।

यत्त्वत्राधुनिकेनोक्तम्

मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे।
यदासीत्तत एवाद्य स्वयम्भूः समभूदजः॥

इत्यादिना हिरण्यगर्भजनकत्वोक्ते

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥

इत्यत्र निखिलक्षराक्षरविलक्षणत्वोक्तेश्च नास्मन्मतप्रतिकूलता। भगवतः क्षराक्षरविलक्षणतायां तदुत्तमतायाञ्च विवादायोगात्। संसारिजीवस्वरूपमपेक्ष्यातिरिक्तस्याशनायाद्यतीतस्यापेतब्रह्मक्षत्रादिभेदस्य निरतिशयस्वप्रकाशानन्दलक्षणस्य निरतिशयस्य परमात्मनोऽसंदिग्धत्वात्। हेयप्रत्यनीकगुणाश्च भगवदभिन्ना एव केचिदविद्यावशाद्भिन्नतयाऽवभासन्त इति [1]तत्तत्प्रतिपादकागमविरोधः। कदाचित्कर्तृत्वादयश्च मायोपाधिकाः। तानेवावलम्ब्य सगुणवादाः प्रवर्तन्ते। न च 'स्वाभाविकी ज्ञानबलक्रिया च' इति गुणानां स्वाभाविकत्वाभिधानविरोधः। स्वाभाविकीत्यस्य स्वभावभूता इत्यर्थकत्वे ज्ञानानन्दादीनामाविद्यकभेदवत्त्वेऽपि स्वरूपानतिरेकेण तदविरोधात्। इयांस्तु विशेषः। ब्रह्मणस्तदभिन्नानां तद्गुणानां विशेषोऽभ्युपगम्यते त्वया। मया त्वाविद्यकभेद इति। न चैवं ब्रह्मणः कर्तृत्वादिकमपि स्वभाव इति कुतो नोच्यत इति वाच्यम्। 'तदैक्षत तत्तेजोऽसृजत' इत्यतीतत्वादिश्रुतेरनित्यकर्तृतां विनाऽनुपपत्तेः।

यत्तु 'भगवदभिन्नानामपि क्रियादीनामैक्षतेत्यादिना निर्देशो न विरुद्ध्यते। सर्गाद्यकाले व्यक्तस्येदानीं शक्त्यात्मनाऽवस्थानाभ्युपगमात्। शक्तिव्यक्ती अखण्डधर्मौ। तथा च तद्विशिष्टस्य सङ्कल्पादेर्यत्किञ्चित्कालसम्बन्धित्वं कालान्तरासम्बन्धित्वं नाभ्युपेयम्। अतो न विरोधः' इति तन्न। एतन्न्यायस्यान्वरादावपि तुल्यतया तेषामपि नित्यत्वाभ्युपगमापत्तेः। स्वभावस्याव्याप्यवृत्तित्वविरोधाच्च। न हि कपिसंयोगादिकं वृक्षादेः स्वभाव इत्युच्यते। यथाकथञ्चित्स्वभावत्वोपपादनस्यातिप्रसक्तत्वात्। सत्कार्यवाद इतोऽन्यस्य भूतत्वस्याभावाच्च। तस्मात् स्वाभाविकत्वेन श्रूयमाणाः स्वाभाविकाः। अन्ये औपाधिका इति न कश्चिद्विरोधः।

'अनन्ता गुणाः शुद्धसत्त्वादयो यस्यैवम्भूते। गुणतो गुणवशादनन्तविग्रह इत्यपि व्याचक्षते' इति। तन्न।

इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ।
एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत॥

[1] तत्तत्प्रतिपादकागमाविरोधः इति पाठेन भाव्यमिति भाति।

(द्वे द्यु )इत्यादिना क्षराक्षरवैलक्षण्यस्य शास्त्रपरमतात्पर्यविषयताया मयोक्तत्वात्तस्यैव मुक्तिकारणीभूतज्ञानविषयताया. कथितत्वेन तेन तत्रैव शास्त्रपरमतात्पर्यसिद्धेरखण्डब्रह्मवादिनस्तव विरोधापरिहारात् । कर्तृत्वादीनामपि स्वाभाविकत्वे श्रुत्युक्तेऽपि तेषामागन्तुकत्वोक्तेर्भगवद्द्वेषातिरिक्तकारणाभावात् । शक्तेरेव कर्तृतारूपत्वात् । क्रियापदेन वा तस्य गृहीतत्वात् । क्रियाया स्वाभाविकत्वे त्वदुक्तबाधकाना पूर्वमेवोद्धृतत्वात् ।

यदपि 'आनन्दादीना स्वमतेऽविद्याकल्पितभेदेन गुणगुणिभाव' इति तदप्यसत् । आधाराधेयभावस्य धर्म्यसमानसत्ताकस्य गुणगुणिभावनिर्वाहकत्वे शून्यवाद्यारोपितासत्त्वेन ब्रह्मणो गुणित्वं स्यात् । अविशेषात् । तथा क्षणिकवाद्यारोपितक्षणिकत्वेन च तथा देहतादात्म्येन चारोपितेन ब्रह्मणो गुणित्वापातात् । अविशेषात् ।

यदपि 'अम्बरादीनामपि व्यक्तिरेवाङ्गीक्रियताम् । [1]तथाप्यसत्कार्यवादापत्ति' इति तन्न । तवाप्यविद्यादिषट्काणामिवाम्बरादीनामपि प्रयोज्यप्रयोजकभावमात्रेण निर्वाहेऽप्यम्बरादीनामप्यनादितापातात् । प्रमाणबलाद्व्यवस्था चेदत्रापि तथास्तु । न च त्वदभिमतव्यक्तेरपि ईशक्रियात्यन्ताभिन्नतया तस्या अपि सर्वदा सत्त्वात्पुनरव्यवस्थेति वाच्यम् । पूर्वोक्तार्थापत्त्या कालविशेषे जगदुत्पत्त्यादिनिर्वाहकविशेषात्मतयैव सिद्धे ।

यद्धि युक्त्या विरुद्ध्येत तदीशक्तमेव हि ।

इत्यादिनेशशक्त्यैव तद्घटनोक्ते ।

अचिन्त्या खलु ये भावा न तांस्तर्केण योजयेत् ।

'नैषा तर्केण मतिरापनेया' इत्यनेन ब्रह्मण शुष्कतर्काविषयत्वोक्तेरुक्तयुक्त्या तन्निराकरणायोगाच्च । न च नैषेति श्रुतिर्निर्विशेषब्रह्मविषयेति वाच्यम् । निर्विशेषे तर्कप्रसक्तेरभावेन तत्र तर्कस्याकिञ्चित्करत्वप्रतिपादकश्रुतेर्वैयर्थ्यप्रसङ्गेन सगुणवस्तुपरत्वस्यैव न्याय्यत्वात् । तथा च व्यक्तेरव्याप्यवृत्तित्वानङ्गीकारात् तद्दूषणमनुक्तोपालम्भ एव ।

अनन्तगुणा इत्यस्य व्याख्यानान्तरमीश्वरस्य सत्त्वादिगुणसंसर्गवैधुर्यप्रतिपादकबह्वागमविरुद्धम् । तस्मादित्युपसंहारोऽप्ययुक्त । क्रियाशक्त्योरपि स्वाभाविकत्वश्रवणेन तत्परित्यागायोगात् । किञ्च ज्ञानानन्दादीनामपि त्वन्मते ब्रह्मस्वभावत्व न घटते । ब्रह्मण्येकव्यक्तौ ज्ञानत्वानन्दत्वादिजात्यसंस्पर्शेन तस्य ज्ञानानन्दादिरूपत्वायोगात् ।

नन्वर्थप्रकाशत्व ज्ञानत्वम् । तत्त्व चार्थेच्छाजनकतावच्छेदकवत्त्वम् । उक्तावच्छेदक च ज्ञानत्वजाति । सा च तत्तदर्थस्यासत्त्वापादकाज्ञानविरोधिचैतन्यवृत्ति । चैतन्यस्य तद्विरोधित्व च घटादावविद्यमानसुखादौ च तदाकारवृत्तिविशिष्टत्वेन । विद्यमानसुखादौ च तद्विशिष्टत्वेन । विद्यमानसुखादौ वृत्त्यङ्गीकारे तद्विशिष्टत्वेनैव । तथा च ज्ञाधातुवाच्यतावच्छेदकजातेर्विशिष्टचिन्निष्ठत्वेऽपि तत्पदलक्ष्यचिद्व्यक्तेस्तदभिन्नत्वान्मुक्तावप्यनपायेनाऽऽत्मनो ज्ञानस्वभावत्वमव्याहतम् । एतमितरेच्छानधीनेच्छाविषयत्वमानन्दत्वम् । तच्च विषयविशेषसम्बन्धजन्यवृत्तिविशेषावच्छिन्नचित्येव वर्तते । तत्समनियता वा काचिज्जाति । न च दुःखाभावे उक्तेच्छाविषयत्वसत्त्वात्तस्यानन्द-

[1] तथा च तवापि सत्कार्यवादापत्ति इति पाठेन भाव्यमिति भाति ।

(द्वि यु.) त्वापत्तिरिति वाच्यम् । तस्य चिन्निष्ठस्याधिकरणस्वरूपस्य सुखरूपत्वाङ्गीकारेणेष्टापादनात् । अधिकरणा-नात्मकत्वे तु खाभावस्य सुखव्यञ्जकतया तदर्थमेवेच्छाविषयतयेतरेच्छानधीनेच्छाविषयत्वाभावादेवानतिप्रसङ्गात् । तथा च तादृशानन्दत्वविशिष्टस्यानन्दपदवाच्यत्वेऽपि तत्पदलक्ष्याया तदभिन्नशुद्धव्यक्तेर्मुक्तावपि सत्त्वात्तादृशा-नन्दात्मकत्व ब्रह्मणोऽव्याहतमिति चेन्न ।

उक्तविशिष्टचितोऽपि शुद्धस्वरूपे घटादिवदारोपितत्वेन मिथ्याभूतत्वेन तदैक्यस्य शुद्धचित्यसङ्गे वक्तुम-शक्यत्वेन तस्योक्तज्ञानानन्दरूपत्वायोगात् । अन्यथा चिति जडदुःखादीनामप्यारोपितत्वेन तेन सह स्वरूपै-क्यस्याप्यवर्जनीयत्वापत्त्या ब्रह्मणोऽनिर्वचनीयात्मकत्वजडात्मकत्वदुःखात्मकत्वानित्यात्मकत्वस्याप्यापत्त्या तदात्म-कत्व स्यात् । तथा च सत्यज्ञानादिवाक्येन तद्व्यावृत्त्यनुपपत्तिः । तादृशब्रह्मभावस्यापुमर्थता च स्यात् । न च विशिष्टशुद्धयोस्तादात्म्य विलक्षणम् । आरोप्याधिष्ठानयोस्तादात्म्य विलक्षणम् । तथा च विशिष्टशुद्धयोर्यत्तादात्म्य तदनुयोगिन एव तत्स्वरूपत्वात् नैष दोष इति वाच्यम् । उक्ततादात्म्यवैलक्षण्ये मानाभावात् । तत्सत्त्वेऽपि यत्र विशिष्टस्य शुद्धसमसत्ताकत्व तत्स्थल एव तथात्वम् । अन्यथा आरोपितनीलरूपविशिष्टगगनतादात्म्यस्य शुद्धगगने सत्त्वाच्छुद्धगगनस्य रूपित्व शुक्ते रजतरूपत्व च स्यात् । तथा च त्वदुक्तविशिष्टचितो मिथ्यात्वात्कथं तत्तादात्म्यमादाय स्वरूपैक्यमादायानन्दात्मकत्व ब्रह्मण । अन्यथोक्तविशिष्टचिन्निष्ठजाड्यबाध्यत्वादिधर्ममादाय ब्रह्मणो जडात्मकत्वादिकं दुर्वारं स्यात् ।

न च त्वन्मते दण्डसम्बन्धनिबन्धनस्य दण्डविशिष्टस्य चैत्रेण भिन्नाभिन्नस्य नाशेऽपि यथा न चैत्रस्य नाशप्रतियोगित्व, तथात्वे चैत्रो नष्ट इति प्रतीत्यापत्ते । केचिद्धर्माश्च स्वीक्रियन्ते च विशिष्टनिष्ठाश्चोरहन्तृत्वा-दय । यथा चैत्रश्चोरहन्तेति । नियामिका तु प्रतीतिरेवेति यथोच्यते तथा मयाऽप्युक्तविशिष्टधर्मेषु मध्ये आन-न्दात्मकत्वमेव ब्रह्मणि स्वीक्रियते नानृतात्मकत्वम् । विज्ञानमानन्दं ब्रह्मेति ब्रह्मणो ज्ञानानन्दात्मकत्वस्य प्रमित-त्वादिति वाच्यम् । श्रौतपदमुख्यार्थस्य परित्यागेन लक्षणामात्राभ्युपगमे तेन तदसिद्धे । तथात्वेऽसदेवेदमग्र आसीदिति वाक्ये असत्पद त्रैकालिकनिषेधप्रतियोगिमुख्यार्थकं तादृशासत्त्वाश्रयोक्तविशिष्टतादात्म्याश्रयीभूत-चिल्लक्षक सत् ब्रह्मण आनन्दात्मकत्वमिवासदात्मकत्वमपि प्रतिपादयेदविशेषात् । वस्तुतो विशिष्टस्य शुद्धकार्य-त्वात्तन्मात्रधर्मा शुद्धे न सन्त्येव । प्रेषोच्चारयितृत्वादयश्चोरहन्तृत्वादयश्च चैत्रधर्मा एव तद्द्वारा विशिष्टरूपकार्ये सम्बद्ध्यन्ते । कारणधर्माणा कार्येऽनुगमस्य सर्वसिद्धत्वात् । तथा च शुद्धाविद्यमानानन्दत्वादेर्विशिष्टमात्रनिष्ठस्य तद्द्वारा शुद्धे सत्त्वाङ्गीकरणमयुक्तमेव ।

नन्विद सर्वमसदनभिमतदूषणमेव । ज्ञानत्वानन्दत्वाश्रयविशिष्टनिरूपिततादात्म्योपलक्षितव्यक्तित्वमात्रेण श्रौतज्ञानानन्दादिपदव्यवहारविषयताया अङ्गीकारादानन्दत्वादिधर्माणामनङ्गीकारादिति चेन्न । तथैव श्रौतासदा-दिपदव्यवहारविषयत्वोक्तिसम्भवेन ब्रह्मण सद्रूपत्वानन्दरूपत्वादिस्वीकारवदसद्रूपत्वास्वीकारबीजाभावस्यापाद्य-मानत्वात् ।

(ईद्यु) अपि चानन्दत्वविशिष्ट एव लोकानामिच्छोदयात्स एव पुरुषार्थो न पुनस्तदुपलक्षिता व्यक्ति । तथात्वे स्रक्चन्दनादिजनि वृत्तेर्नाशेऽपि तादृशवृत्तिविशिष्टचित्त्वोपलक्षितव्यक्ते सत्त्वेन [1]दु खस्य सिद्धतया स्रक्चन्दनजसुखेच्छाभावप्रसङ्गात् । न च वृत्त्यन्तरविशिष्टचिद्रूपसुखान्तर एवेच्छेति वाच्यम् । सामान्यत स्रक्चन्दनज सुखमद्य भवत्वित्याकारकेच्छाया एवानुभवसिद्धत्वात् । तथा च केवलचिद्व्यक्तेर्मुक्तावपुरुषार्थत्वेन तदर्थं प्रवृत्त्याद्ययोग । आनन्दत्वोपलक्षितव्यक्तिमात्रत्वेन पुरुषार्थत्वे बाध्यत्वाद्युपलक्षितव्यक्तिमात्रत्वेनापुरुषार्थतापि दुर्वारा ।

अपि च वृत्तिविशेषविशिष्टचित सुखत्वाऽऽश्रयत्वे वृश्चिकादिदशजनितवृत्तिविशेषविशिष्टचित्येव दु खत्वजातिरप्यस्तु । तथा च तदाश्रयव्यक्तिस्वरूपत्वेन ब्रह्मणो दु खरूपत्वेनापुरुषार्थता दुर्वारा । एवं शक्तिबलादीनामपि वृत्तिविशेषविशिष्टचिद्रूपतामङ्गीकृत्य तत्रैव शक्तित्वादिजातिस्वीकारे तादृशशक्तिस्वरूपकारणत्वादीनामपि आनन्दादिवद्ब्रह्मलक्षणत्वसम्भवे तेषा तटस्थलक्षणत्वोक्त्यसङ्गतिश्च । न च सुखमहमस्वाप्सम् इति सौषुप्तिकानुभवादानन्दश्रुत्या चाऽऽत्मन सुखरूपतासिद्धौ तत्रैव किञ्चिद्विशिष्टे सुखत्वजाति । न तु [2]दु खत्वादेस्तत्र मानाभावादिति वाच्यम् । अत्रापि मूर्च्छानन्तरमेतावन्तं कालं सुदु खं स्थितोऽस्मीत्यनुभवाद्ब्रह्मैवेदं सर्वम् इत्यादि श्रुतिबलाच्च दु खादीनाञ्च ब्रह्मस्वरूपत्वसिद्धे । अन्यथा श्रुतिसङ्कोचापत्ते । न च सर्वं खल्विदमिति श्रुतिर्बाधाया सामानाधिकरण्यपरेति वाच्यम् । विज्ञानमानन्दं ब्रह्मेति श्रुतेरपि तथात्वस्यावारणीयत्वात् । ज्ञानवत् बलक्रियाशक्त्यादीनाञ्च स्पष्टतया स्वाभाविकत्वापरपर्यायब्रह्मस्वरूपताबोधकश्रुतेरुदाहृतत्वाच्च । न च मूर्च्छोत्तरकाले दु खत्वविशिष्टस्मृतेरेव सत्त्वान्न निरुपाधिकात्मनो दु खात्मकत्व सिद्ध्यतीति तदा वृत्त्यात्मकदु खमेव मूर्च्छायां कल्प्यत इति वाच्यम् । उक्तन्यायस्य सुषुप्तिस्थलेऽपि साम्यात् । तस्माद्ब्रह्म ज्ञानानन्दरूपस्वरूपलक्षणोपेतम् । कारणत्वादिक त्वागन्तुकमित्येतदयुक्तमेव ।

यदपि 'सुखार्थेच्छो: तदभिव्यक्त्यर्थं दु खाभावेच्छा' इति । तदसत् । 'सुखी भूयासं, न कदापि दु खी भूयासम्' इति तुल्यतयेच्छाविषयत्वानुभवात् ।

यदपि 'दु खाभावस्याधिकरणात्मन सुखत्वमेव' इति तदपि मन्दम् । दु खाभावस्य सुखरूपत्वे घटनिष्ठस्यापि तथात्वापातेन घटेऽपि सुखित्वापत्ते । आत्मन सुखरूपत्वात् आत्माधिकरणकस्यैव सुखत्वमित्यङ्गीकारे आत्मनिष्ठघटाभावस्यापि तथात्वापत्त्या दु:खाभावत्वेनेव घटाभावत्वेनापि निरुपाधिकेष्टत्वापत्तेरित्यलम् ।

एव परमते नित्यत्व ब्रह्मणि ध्वसाप्रतियोगित्वे सति प्रागभावाप्रतियोगित्वम् । अविद्यायामतिव्याप्तिपरिहाराय ध्वसेति । भावाद्वैतपक्षे ध्वंसस्य ध्वसाप्रतियोगित्वात्तत्रातिव्याप्तिपरिहाराय प्रागभावेति । तत्त्वज्ञानप्रयुक्ततावच्छेदकध्वंसत्वस्य ब्रह्मण्येव तत्त्वज्ञानपूर्वक्षणे तदुत्पत्तिक्षणे वाऽधिष्ठानभूते स्वीकारेण ध्वसत्वविशिष्टस्य

---

[1] सुखस्य इति पाठेन भाव्यमिति भाति । [2] दु खत्वादि । तत्र इति पाठेन भाव्यमिति भाति ।

(द्वै सु) ध्वंस.वरूपानुयोगितायां वा पुनर्ध्वंसपरम्परयाऽनवस्थारूपदोषापसत्त्या शुद्धाद्वैतपक्षस्यैवादरणे आत्मान्यस्य सर्वस्य ध्वसप्रतियोगित्वात् ध्वंसाप्रतियोगितामात्रं नित्यत्वमिति निरुक्तम् ।

तत्रेदमालोचनीयम् । इदं नित्यत्वं ज्ञानानन्दादिवद्ब्रह्मस्वभावभूत वा मायाशक्त्यारोपितेच्छादीवास्वाभाविक वा । नाद्य । ब्रह्मण्युक्तनित्यत्वाधिकरणतायास्तन्निर्वाहकसम्बन्धस्योक्तनित्यत्वनिष्ठ[1] धर्मितायां अभावत्वतदधिकरणत्वादीनां मोक्षेऽप्यवर्जनीयतया तेषाञ्च भावरूपत्वेन ..अद्वैत[2] पक्षनिर्वाहात् । शुद्धाद्वैतपक्षस्य तु सुतरामसम्भवात् । न चैते मोक्षे न सन्त्येवेति वाच्यम् । तथात्वे ब्रह्मस्वभावत्वानुपपत्ते । स्वभावस्यापि निवृत्तौ ब्रह्मणोपि निवृत्तिप्रसङ्गात् । न च शुद्धाद्वैतपक्षे एते सर्वे ब्रह्मस्वरूपभूता एव । अत एतेषा मोक्षे सत्त्वेऽपि न शुद्धाद्वैतहानिरिति वाच्यम् । मोक्षेऽपि धर्मधर्मिभावापन्नस्य सत्त्वावश्यकत्वे तन्निर्वाहकभेदस्य तेषाञ्च सत्त्वेन ब्रह्मणोऽखण्डत्वहानिप्रसङ्गात् । न द्वितीय । तेषामस्वाभाविकत्वे आनन्दज्ञानयोरिवानन्तत्वस्य ब्रह्मस्वलक्षणत्वानुपपत्ति. । 'अविनाशी वाऽरेऽयमात्मा' 'अतोऽन्यदार्तम्' इत्यादेर्नित्यानित्यवस्तुविवेचकागमस्य विरोधात् । अम्बरादितुल्यत्वेन बाधस्यावर्जनीयतया सद्रूपत्वानुपपत्तेश्च ।

ननु ध्वसप्रतियोगित्वाभावरूपनित्यत्वमप्यधिकरणीभूतब्रह्मस्वरूपभूतमेव । कल्पितभेदेन चाधाराधेयभावप्रतीति. ससारदशायाम् । मोक्षे तु नास्त्येव । अत आनन्दादिवत्स्वभावलक्षणत्वोपपत्ति. । न वा ब्रह्मण अखण्डत्वहानि नापि नित्यानित्यवस्तुविवेकोपदेशविरोध । न च ब्रह्मनिष्ठघटाभावस्यापि ब्रह्मस्वरूपत्वात्तस्यापि स्वलक्षणत्व कुतो नोच्यत इति वाच्यम् । घटाभावत्वावच्छिन्नस्य पटादावपि सत्त्वेनातिव्याप्तेस्तेन रूपेण तस्य लक्षणत्वायोगात् । ब्रह्मस्वरूपभूतस्य लक्षणत्वमिष्टमेवेति चेन्न । यत उक्ताभावरूपनित्यत्व ब्रह्मस्वरूपं चेत् तत्र तादृशाभावत्वं वर्तत एवेति वाच्यम् । अन्यथाऽभावरूपत्वायोगात् । तच्चाकल्पितञ्चेत् ब्रह्मण. अखण्डत्वहानिरत[3] स्तदुभयकल्पितमेव वाच्यम् । तथा च स्वासमानसत्ताकतादृशाभावत्वोपलक्षितब्रह्मस्वरूप नित्यत्वमिति पर्यवसन्नम् । तथा च शून्यवादिकल्पितशून्यत्वनैयायिककल्पितज्ञानानन्दानात्मकत्व[4] क्षणिकत्वश्रुतिकल्पितसर्वात्मकत्वादिधर्मानुपादाय तत्स्वभावत्वापत्त्यादिपूर्वोक्तदूषणजातमपरिहार्यमेव । ब्रह्मणि ध्वंसाप्रतियोगित्वरूप[5] नित्यत्वसत्त्वेऽप्यन्यस्य मतान्तररीत्या ध्वसप्रतियोगितयापि सत्यत्वसम्भवेन 'ब्रह्मणोऽनन्तत्वोक्ति. पर जगन्मिथ्यात्वे प्रमाणम्' इति त्वदीयकौमुदीकाराद्युक्तेरसङ्गतिश्च । तत्त्वज्ञानपूर्वादिक्षणे ब्रह्मणि तत्प्रयुक्तताावच्छेदकदृश्यध्वसत्वकल्पन चासम्भावितम् । विवेचित चेद ज्ञाननिवर्त्यत्वनिरुक्तिनिरासप्रस्तावे ।

अपि चाभावरूपधर्माणां ब्रह्मस्वरूपत्वाङ्गीकारे ब्रह्मणि विद्यमानजडानृतादिभेदस्य ब्रह्मधर्मतया सत्यतापत्त्या भेदमिथ्यात्वोक्तिरयुक्ता स्यात् । न च स्वरूपत· सत्यत्वेऽपि प्रपञ्चरूपमिथ्याभूतपदार्थप्रतियोगिकत्वविशिष्ट-

---

[1] धर्मताया इति पाठेन भाव्यमिति भाति । [2] पक्षानिर्वाहात् इति पाठेन भाव्यमिति भाति ।
[3] सदपि कल्पितमेव इति पाठेन भाव्यमिति भाति । [4] क्षणिकत्ववादिकल्पितक्षणिकत्व इति पाठेन भाव्यमिति भाति ।
[5] नित्यत्वेन सत्यत्वेऽपि इति पाठेन भाव्यमिति भाति ।

(द्वै धु) रूपेण मिथ्यात्वमुच्यत इति वाच्यम्। 'नात्र काचन भिदाऽस्ति' इति प्रतियोग्यनालिङ्गिततया स्वरूपत एव निषेधश्रवणात्। नन्वत एव विनिगमकात् भेदस्य मिथ्यात्वमस्तु। भिदा नास्तीत्यादिनाऽत्यन्ताभावसत्त्वावगाहनात्तस्याधिकरणस्वरूपतया सत्त्वमस्त्विति चेन्न। अस्थूलमनण्वित्यादेः स एष नेति नेत्यादेर्भेदविषायकस्यापि सत्त्वात्। किञ्च विशिष्टरूपेण निषेधाद्भेदस्वरूपसत्त्वाभ्युपगमे नाना किञ्चनेत्यादिपदैर्बुद्धिविषयतावच्छेदकतत्तद्रूपविशिष्टस्य परामृश्य निषेधात् घटादिस्वरूपाणां स्वरूपतो निर्धर्मकतया ब्रह्मवत्सत्त्व घटात्वादिविशिष्टरूपेण मिथ्यात्वमिति स्यात्। अविशेषात्। किञ्च ब्रह्मणि तत्स्वरूपभूतसत्यभेदाङ्गीकारे आनन्द ब्रह्मण इति व्यवहारनिर्वाहकसम्बन्धसिद्धये कल्पितभेदान्तराङ्गीकारापेक्षया विद्यमानभेदे आनन्दप्रतियोगिकत्वं स्वीक्रियताम्। तथा च ब्रह्मानन्दयोर्भेदाभेदेन सर्वव्यवहारनिर्वाहे गुणगुणिभावस्य वास्तवत्वापत्ति। नन्वेकमेवेति स्वगतभेदस्य निषिद्धत्वात्कथमिद युक्तमिति चेत्। आनन्दो ब्रह्मेति सामानाधिकरण्यनिर्वाहकतादात्म्यलाभाय भेदाभेदयोगावश्यकत्वे श्रुतेरत्यन्तभेदनिषेधार्थकत्वोपपत्ते। एवमद्वितीयत्वमपि ब्रह्मणो नित्यत्वनिरासन्यायेन निरस्तम्। एव द्वितीयाभावस्यावान्तरतात्पर्यविषयतया देवताधिकरणन्यायेन सिद्धिरित्यादिकन्तु पूर्वमेव निरस्तम्।

एव परमते द्रष्टृरूपस्य ब्रह्मण साक्षाद्द्रष्टृत्वरूपसाक्षित्वमप्यनुपपन्नम्। ननु कथमेतत्। अविद्याप्रतिबिम्बितचित्साक्षी। यद्वाऽविद्योपहितस्य न साक्षित्वम्। तस्य व्यवहारकाले नाशाभावेन तन्नाशरूपस्य संस्कारस्यासम्भवात्। किन्त्वविद्यावृत्तिनाशात्तदुपहितस्य नाशसम्भवादविद्यावृत्तिप्रतिबिम्बितचिदेव साक्षी। वृत्तिप्रतिबिम्बितरूपेण द्रष्टृत्वपक्षे वृत्तिविषयावच्छिन्नचिद्रूपेण दर्शनत्वम्। परोक्षस्थलेऽपि वृत्तिद्वारा विषयसम्बद्धचित एव प्रकाशकत्वात्। यद्यप्यविद्याप्रतिबिम्बितचितोऽविद्याकार्याश्रयत्वेनाविद्याकार्यावच्छिन्नचिद्रूपदर्शनाश्रयत्वेऽप्यनादिविषयावच्छिन्नचिद्रूपदर्शनाश्रयत्वे मानाभाव। एवं वृत्तिप्रतिबिम्बितचितोऽप्यविद्याप्रतिबिम्बितचिदभेदात्। तथापि सर्वत्र वृत्तिप्रतिबिम्बितनिष्ठ दर्शनसम्बन्धित्वमेव द्रष्टृत्वमव्याहतम्। मैवम्। साक्षिणःऽविद्यासिद्धौ तत्प्रतिबिम्बितस्य तदुपहितस्य वा चैतन्यस्य साक्षित्व सिद्ध्यति तत्सिद्धौ च तत्प्रतिभासमात्रशरीराविद्यासिद्धिरित्यन्योन्याश्रयात्। अविद्यावृत्तिघटितस्य साक्षित्वे तु साक्षिसिद्धावविद्यासिद्धिस्तत्सिद्धौ च तद्वृत्तिसिद्धिस्तत्सिद्धौ च साक्षिसिद्धिरिति चक्रकात्।

ननु साक्षिणोऽविद्यया तद्वृत्त्या वोपहितरूपत्वात् तज्ज्ञाने तज्ज्ञानस्यापेक्षणेऽपि तयोर्ज्ञान न साक्षिविषयकज्ञानापेक्षं साक्षिस्वरूपत्वात्। नापि साक्षिण उत्पत्तौ अविद्योत्पत्तौ वा साक्ष्यपेक्ष्यते। तयोरनादित्वात्। नाप्यविद्यावृत्तिसाक्षिणोरेकोत्पत्तावन्यापेक्षा। समसमयत्वात्। नाप्युपहितरूप साक्षी उपाध्याश्रितो येन स्थितावपेक्षा स्यात्। उपाधे स्वोपहितचिदाश्रितत्वेऽप्युपहितचित शुद्धचित्येवाश्रितत्वादिति चेन्न। साक्षिणोऽविद्यायास्तदीयविषयविषयीभावस्य चानादित्वेऽविद्याविषयकत्व साक्षिण. स्वभावभूतमेवेति बलादापतितम्। अविद्यासम्बन्धाप्रयोज्यत्वात्। तथा च स्वभावस्यानपायाच्छुद्धचैतन्यस्य मोक्षेऽप्यभावप्रसङ्ग। अविद्याध्यासस्य दोषानधीनत्वप्राप्त्याऽप्रामाण्यपरतस्त्वभङ्गप्रसङ्गश्च। न चानादेरप्यविद्याप्रयोज्यत्वं स्वीक्रियत इति वाच्यम्। असन्मते

(द्वै यु) द्रव्यं कर्म च कालश्चेत्यादेः स्वभावस्यापि परमेश्वरायत्तत्वग्राहकमानस्यैव त्वन्मतेऽनादेरपि अविद्याप्रयोज्यत्वे प्रमाणाभावात्। अन्यथाऽऽत्मस्वभावभूतानन्दादेरात्मनोऽविद्याप्रयोज्यत्वापातात्। अविशेषात्। एवं वृत्तिघटितस्य साक्षित्वपक्षेपि वृत्त्युत्पत्तेः प्राक् साक्षिणोऽविद्याविषयकत्वाभावात्प्रतिभासानधीनसत्ताशून्यायास्तस्या अभावाद्वृत्त्ययोगः। वृत्त्युत्पत्त्यनन्तरं चाविद्याविषयकत्वप्राप्त्याऽविद्यया वृत्तिस्तया चोपाधिभूतया साक्षी तेन चाविद्येति रीत्या चक्रकं दुर्वारम्। न च पूर्वपूर्वतरोत्पन्नवृत्तिसम्बन्धात्साक्षित्वम्। तद्वृत्तीनामप्यविद्यां विनाऽसिद्धेः। तत्तद्वृत्तीनां भेदात्तत्तद्वृत्त्युपहितसाक्षिणामपि भिन्नत्वेन तत्तत्प्रतिभासमात्रशरीराविद्यानामपि भेदापत्तिः। अविद्यैक्येपि तद्ग्राहकसाक्ष्युपधायकवृत्तीनां भेदे घटादिवत्स्थिरत्वप्राप्त्याऽज्ञानस्यानारोपितत्वस्यैवात्मवत्प्राप्तेः। अनन्ताविद्यातद्वृत्तिपरम्पराकल्पने त्वनवस्था। न च बीजाङ्कुरपरम्परावन्नानवस्था दोषायेति वाच्यम्। उक्तपरम्पराया अप्रामाणिकत्वेन अनवस्थाया दोषत्वस्य दुर्वारत्वात्। अन्यथाऽनवस्थाया दोषताया एवोच्छेदापत्तेः।

अपि च सुषुप्तावप्यविद्यावभासार्थं वृत्त्युत्पत्तिधाराङ्गीकारे वृत्तेरविद्यायाश्चोत्पत्तौ पूर्वपूर्वव्यक्तीनामेव सामग्रीत्वस्य वक्तव्यतया सौगतमते घटादीनामिव क्षणिकत्वप्राप्त्या अन्तःकरणात्मना दुःखाद्यात्मना च परिणामाभावेन अन्तःकरणावच्छिन्नचैतन्यरूपजीवतत्सुखदुःखादिप्रपञ्चस्यैवाभावप्रसङ्गः। अविद्योपाधिकस्य जीवत्वे प्रतिक्षणं अविद्याभेदेन जीवभेदापत्त्या कृतहानाकृताभ्यागमप्रसङ्गात्। क्षणिकजीवस्य पुण्यपापादिकर्तृत्वानुपपत्तेश्च। न चान्तःकरणादिकं मायाकल्पितमिति वाच्यम्। तथात्वे तदुपादानकदुःखादिप्रपञ्चस्य घटादिवत्सर्वसाधारण्यापत्तेः। मायाया अपि चित्यारोपितत्वेनैव सिद्ध्या तत्साक्षितायां अप्युक्तरीत्या चित्ययोगाच्च। एवं मायाचिद्योगरूपकालस्य क्षणिकत्वापत्त्या क्षणातिरिक्तमहाकालाभावापत्तिः। तथात्वे 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' 'कला काष्ठा' इत्यादिना क्षणातिरिक्तकालान्तराणां श्रुतावुक्तत्वभावापातात्। क्षणोत्पत्त्यैव तत्कूटरूपाणां तेषामुत्पत्तिसिद्धेः। न च चेतनस्य 'असङ्गो ह्ययं पुरुषः' इति असङ्गत्वश्रवणात् 'अहमज्ञः' इति तत्साक्षित्वप्रतीतेश्चान्यथानुपपत्त्यैव पूर्वोक्तपक्षाणां परिकल्पितत्वात्प्रमाणासिद्धेऽर्थे त्वदुक्तदोषाणामाभासत्वमेवेति वाच्यम्। सम्बन्धाभावसम्बन्धस्य स्वबोधितस्य निराकरणे श्रुतेर्व्याहतत्वापत्त्या परमात्मनः पापलेपाभावपरत्वात्। अहमज्ञ इत्यादिप्रतीतानां अविद्यानादित्वश्रुतीनां तत्सत्त्वेऽपि सम्भवात्। किञ्च साक्ष्युपाधिभूताविद्यावृत्तिः सविषयका निर्विषयका वा। आद्ये यद्ग्रहणे साक्षी स्वोपहितचिद्भवति तद्विषयिणी तदन्यविषयिणी वा। नाद्यः। तथात्वे अविद्यायाः स्वाकारवृत्तितया परिणामानन्तरमेव तदुपहितचिद्रूपसाक्षिसिद्धत्वाङ्गीकारे चक्रकमेव। अविद्याभेदाङ्गीकारेणोत्तराविद्याकारेण पूर्वाविद्यापरिणामो न घटते। समकालिकत्वेन वृत्तेर्विषयविषया तदनन्यतया तद्विषयकत्वे बीजाभावात्। अन्यथा तत्समकालिकपदार्थान्तरविषयकत्वापत्तेः। न ह्यनुमित्यादिवत्र काचन विशेषसामग्री नियामिकाऽस्ति येन तद्व्यवस्था स्यात्।

अपि च वृत्तेः स्वविषयकत्वाभावेन वृत्तिग्रहणार्थं वृत्त्यन्तरापेक्षायामनन्तानां यौगपद्यमनुभवविरुद्धमापद्यते। वृत्तेः स्वविषयकत्वाभ्युपगमेऽपि सुखाद्युत्पत्तिकाले तद्विषयकवृत्त्यभावेन तदवच्छिन्नस्य तत्प्रतिबिम्बितस्य

(द्वै द्यु.) वा चैतन्यस्याभावेन तत्प्रत्यक्षस्य प्रथमक्षणेऽभावेन ज्ञातैकसत्त्वानुपपत्ते । न द्वि ीय । तदन्यविषयकवृत्त्यव-च्छिन्नस्य तं प्रति साक्षित्वे तत्संस्काराभावप्रसङ्ग. । चै न्यस्य नाशाभावात् । वृत्तिविनाशेऽपि वृत्ते सुखाद्यवि-षयकत्वेन तन्नाशरूपसंस्कारस्य तद्विषयकत्वायोगात् । तत्समानकालिकपदार्थनाशत्वमात्रेण तद्विषयकत्वे सुखादिकालीनानन्तवायुसंयोगादिव्यक्तिविशिष्टचितामपि साक्षित्वापत्ति । तादृशसंयोगनाशेऽपि संस्कारत्वोपगम-सम्भवात् । न च संयोगादेरस्वच्छत्वेन तत्र चित्प्रतिबिम्बायोगात्तदर्थं वृत्तिरपेक्ष्यत इति वाच्यम् । तदुपहित-रूपेणैव साक्षित्वसम्भवे चित्प्रतिबिम्बनस्याकिञ्चित्करत्वात् । न तृतीय । अविद्यावृत्तेर्निर्विषयकत्वे तन्नाशस्य संस्काररूपत्वानुपपत्तेर्वायुसंयोगादिकमादाय विनिगमनाविरहस्योक्तत्वाच्च ।

एतेन हि 'स्वविषयकवृत्त्युपहितचैतन्यमेव साक्षी । वृत्तौ तदसम्भवात् । [1]घटाद्यविषयकाविद्यावृत्त्युपहित-चितो घटादिकं प्रति साक्षित्वात् । मनस्तत्संस्कारान्यतरत्नोपाधि । जाग्रति घटादिज्ञानोत्तरं तदुपहितनाशानु-त्पादेन साक्षिनाशरूपसंस्कारानुपपत्ते । वस्तुतोऽविद्योपहितचिदेव साक्षी । लाघवात् । वृत्ते स्वविषयकत्वाभावेन तन्नाशस्य वृत्तिविषयकत्वाभावेऽपि संस्कारसामान्यस्यैव वृत्तिस्मारकत्वसम्भवात्' इति परास्तम् । स्वविषयक-वृत्त्युपहितस्य साक्षित्वस्य वायुसंयोगादिकमादाय विनिगमकाभावेन दूषितत्वात् । वस्तुतस्त्विति पक्षस्यापि दूषित-त्वाच्च । एतत्कल्पे संस्कारसामान्यस्य वृत्तिस्मारकत्वोक्तावपि सुखादौ संस्कारनिर्वाहस्यानुक्तत्वाच्च । संस्कारस्य स्मर्यमाणविषयकत्वमनादृत्य तत्सामान्यस्य ज्ञानरूपवृत्तिस्मारकत्वे घटसंस्कारात्पटविषयवृत्ते स्मरणापत्तेरिति दिक् ।

'अनाद्यविद्यावृत्तिरेकाऽखण्डा । तदुपहितं तत्प्रतिफलितं वा चैतन्यं साक्षी' इति केचित् । तदसत् । तस्योक्तरीत्या संस्कारानिर्वाहकत्वात् । अनादेरविद्यापरिणतस्वरूपाविद्यावृत्तित्वे मानाभावात्तत्स्वरूपे मानाभावा-दनादिजीवब्रह्मविभागमादाय विनिगमनाविरहाच्च । किञ्च जीवचैतन्यस्य साक्षित्वे तस्य बुद्ध्युपाधिकत्वेनाणुत्वेन शुक्त्याद्यवच्छिन्नाविद्यया सम्बन्धाभावेन तत्परिणामभूतरजतादिसाक्षित्वानुपपत्तिः । न चान्तःकरणवृत्तिद्वारा बहिर्निर्गमेन विषयावच्छिन्नचिता सहाभेदाभिव्यक्त्या तत्साक्षित्वोऽपपत्तिरिति वाच्यम् । अन्तःकरणस्य बहिर्निर्गमने मानाभावेनोक्तरीत्ययोगात् । साक्षिस्वरूपलाभे तत्साक्षिकतयाऽविद्यासिद्धि तत्सिद्धौ तत्परिणामभूतबुद्धिरूपोपाधि सिद्धिः तत्सिद्धौ तदुपहितचैतन्यरूपसाक्षिसिद्धि इति चक्रकात् । बुद्ध्युपाध्यभावेन सुषुप्तिसाक्षिण्यव्याप्तेश्च ।

'अविद्योपाधिकः सर्वगतो जीव साक्षी' इति पक्षस्यापि अन्योन्याश्रयबलादविद्योपाधिकत्वासम्भवेन दुष्टत्वात् । ब्रह्मचैतन्यस्य साक्षित्वे तस्यैव दुःखाद्यनुभव स्यात् । न जीवस्य । स्वरूपैक्यबलादेव तज्ज्ञाने जीव-स्यानवच्छिन्नानन्दप्रकाशोऽपि स्यात् । ननु ब्रह्मण साक्षित्वेऽपि विषयावच्छिन्नब्रह्मचिता सह जीवस्य वृत्तिद्वारका-भेदसम्पत्त्या जीवस्यापि साक्षितापत्ति. । अनवच्छिन्नाऽनन्दस्तु जीवं प्रत्यावृतत्वान्न भातीति चेन्न । अतीतविषय-स्मरणाद्यधीनदुःखस्थले जीवस्य विषयावच्छिन्नब्रह्मचैतन्याभेदसम्पादकवृत्त्यभावेन साक्षित्वानुपपत्त. । ब्रह्मणा सहैकीभावसम्पत्त्यनन्तरमानन्दस्य जीवं प्रत्यावृतत्वमित्यस्यायोगाच्च । न च विषयपदेन सुखदुःखादिरूप साक्षि-

[1] घटादि इति पाठेन भाव्यमिति भाति ।

(दु:ख) भास्यविषय एव गृह्यते। तदवच्छेदेन ब्रह्मचैतन्येन सह जीवस्याभेदसम्पत्तिर्घटत इति वाच्यम्। सुखादावन्त:करणवृत्त्यभावेनाभेदव्यक्तिसम्पादकाभावादविद्यावृत्तेरावरणानिवर्तकत्वात्।

न च स्वत एवानावृतत्वात्तदवच्छेदेनाभेदाभिव्यक्तौ न वृत्त्यपेक्षेति वाच्यम्। तर्हि जीवस्यैव सुखादौ स्वत एव घटादौ वृत्तिद्वारा सम्बन्धात्साक्षित्वसम्भव व्यर्थ एव ब्रह्मण साक्षित्वाभ्युपगम। ब्रह्मणोऽप्यविद्याबिम्बभूतस्य सिद्धयेऽविद्यासाक्षित्वस्य वक्तव्यतया पूर्वोक्तान्योन्यश्रयादेर्दुर्वारत्वात्। जीवस्य ब्रह्माभेदसम्पत्त्या दु:खादिद्रष्टृत्वेन तदनुभवे ब्रह्मण स्वत एव तत्साक्षित्वाद्दु:खाद्यनुभवापत्ति। ननु य प्रति दु:खादौ मिथ्यात्वमावृत तत्त्वे सति दु:ख दसम्बन्धित्व तदनुभवित्वम्। न च तदीश्वरेऽस्ति। तस्य दु:खाद्यसम्बन्धित्वात्। तं प्रति दु:खादिमिथ्यात्वस्यानावृतत्वाच्चेति चेन्न। दु:खादौ मिथ्यात्वग्रहतद्विषयकब्रह्मचैतन्यरूपसाक्ष्यभेदे जीवस्य प्राप्ते जीवस्यापि दु:खानुभवाभावापत्तेर्जीव प्रति दु:खादिमिथ्यात्वस्यानावृतत्वात्। दु:खस्य जीवचैतन्यसम्बन्धित्वे तदभेदसम्पत्त्या ब्रह्मणोऽपि दु:खसम्बन्धित्वानपायादावृततन्मिथ्यात्वकत्वप्राप्तेश्च ब्रह्मणो दु:खानुभवस्यावर्जनीयत्वात्।

किञ्च ब्रह्मणो दु:खादौ मिथ्यात्वमनावृतमित्यस्य मिथ्यात्वप्रत्यक्ष तस्य वर्तत इत्येवार्थ। ज्ञानमात्रविवक्षाया शास्त्रादिजन्यपरोक्षज्ञानवतो जीवस्य दु:खानुभवो न स्यात्। तथा च दु:खादिमिथ्यात्वप्रत्यक्ष चाधिष्ठाने तदभावप्रत्यक्षमेव। तत्काले च कथ दु:खादिद्रष्टृत्वरूपसाक्षित्वम्। सोपाधिकभ्रमस्थलेऽपि तत्र भ्रान्तिविषयदर्शनकाले न तत्रोक्तमिथ्यात्वप्रत्यक्षम्। 'अत्र पीताभावो न दृश्यते, पीत एव दृश्यते' इत्यनुभवात्। निश्चितप्रामाण्यकमिथ्यात्वग्रहस्य दृढतरस्य सद्भावादेव न तत्र प्रवृत्ति। न चैव प्रकृते। शास्त्रजनितनिश्चितप्रामाण्यकदृढतरमिथ्यात्वग्रहवतामपि रोदनादिविक्रियादर्शनेन दु:खाद्यनुभवस्य सर्वसिद्धत्वात्। जीवन्मुक्ते आत्यन्तिक दु:खानुभवाभावो यदि वर्तते तर्हि तस्य मिथ्यात्वप्रत्यक्षसद्भावादेव तदङ्गीकारो विषयमिथ्यात्वनिश्चयेन दु:खस्यानुत्पत्तिर्वातस्येति न दोष।

'सर्वजीवसाधारणशुद्धचिदेव साक्षी' इत्यप्येतेन निरस्तम्। उक्तरीत्या दु:खोपप्लुतत्वस्य अपरिहारात्। अविद्यासाक्षित्वस्य तत्रैव वक्तव्यतया पूर्वोक्तान्योन्याश्रयाद्यपरिहाराच्च। सुप्तमैत्रं प्रति तदीयाज्ञानस्य शुद्धचिद्रूपसाक्षिणा भानेनोत्तरकाले 'एतावन्त काल किमपि नावेदिषम्' 'किमपि दु:ख नावेदिषम्' इति परामर्शो जायते। स न स्यात्। चैतन्यस्य सर्वानुगतत्वेन मैत्रस्वापकालेऽपि तेन जाग्रच्चैत्रीयदु:खग्रहणात्।

यत्तु 'साक्षिणा ज्ञानग्रहणेऽपि मैत्रीयतया न गृह्यते' इति तन्न। मैत्रीयतया ग्रहणाभावे तादृशाज्ञानस्य परामर्शेन मैत्रीयतया विषयीकरणानुपपत्ते.। पूर्वमननुभूतत्वात्। जाग्रदाद्यक्षणादौ तदनुमित्यादे: कथञ्चिदङ्गीकारे अज्ञानादेरपि तथात्वसम्भवेन सुषुप्तिवेद्यत्वासिद्धे:। तर्हि दु:खस्य मैत्रसम्बन्धित्वेनाग्रहणादेव नावेदिषम् इत्यस्योपपत्तिरिति चेन्न। 'किमपि दु:ख नावेदिषम्' इति सर्वथा दु:खाग्रहणप्रतीतेरनुपपत्ते.।

एतेन 'स्वतो वृत्तिद्वारा वा तत्तज्जीवाभेदस्य तत्तद्दु:खादिरूपविषयावच्छेदेन सम्पत्त्या तदवच्छेदेनानावृतत्व प्राप्तस्य शुद्धचैतन्यस्य तद्भासकत्वम्। तथा च चैत्रीयदु:खादे. चैत्रीयतया भासकत्वमिष्टमेव। चैत्र प्रति

(द्वै.गु.)तत्सत्त्वात्। सुखं मैत्रं प्रति चैत्रीयतया भासकत्व न सम्भवति। पुरुषान्तरीयदुःखादेः पुरुषान्तरं प्रत्यावृतत्वेन प्रमाणवृत्तिं विना तं प्रति साक्षिमात्रस्याभासकत्वात्। तं प्रति चैत्रदुःखादिभासकत्वमित्यस्य तं प्रत्यनावृतचैत्रदुःखादिसंसृष्टत्वमित्यर्थ' इति निरस्तम्। एवमपि मैत्रीयाज्ञानचैत्रदुःखग्राहकचैतन्यरूपसाक्षिण एकत्वेन तन्मूलकपरामर्शे सामान्यतः दुःखाग्रहणस्य विषयीकर्तुमशक्यत्वात्। तत्तज्जीवचैतन्याभेदसम्पत्तिविशिष्टस्य ग्राहकतया तादृशपरामर्शमूलत्वे जीवस्यैव साक्षित्वे पर्यवसानाच्छुद्धस्य साक्षित्वोक्तिरयुक्तैवेति दिक्।

इत्थञ्च त्वन्मते नित्यत्वानन्दरूपत्वसाक्षित्वादिधर्माणां केषामप्ययोगात् स्वप्रकाशनिरतिशयानन्दात्मकत्वादिना स्वाभिमतब्रह्मस्वरूपोत्कीर्तनमप्यल्पकमिति आधुनिकोक्तमयुक्तमेवेति स्थितम्। पूर्वोक्तसकलप्रमेयं संक्षिप्य सूचयति ॥ एतेनेति ॥ स्वाभाविकीति ॥ अविद्याकल्पितत्वे स्वाभाविकत्वोक्तेरयुक्तत्वात् ज्ञानबलक्रियाणां ब्रह्मणः स्वरूपभूतधर्मत्वसिद्धौ तन्न्यायेन श्रुतिसिद्धनिखिलकल्याणगुणानामपि स्वाभाविकतया सिद्धेर्बाधकाभाव इति भाव।

(गु. टि.) साक्षात्पद्माधारत्वस्य भगवति बाधितत्वात् मयि इत्यनुपपन्नम्। अतोऽपेक्षितपूरणेन तद्योजयति ॥ मम नाभाविति ॥ अनन्ता असङ्ख्याता गुणा यस्यासावनन्तगुणस्तस्मिन्ननन्तगुण इति अनन्तगुण इत्यनेनैवासङ्ख्यातगुणवत्त्वाभिधानात्तत्प्रतिपादकस्य 'गुणतोऽनन्त' इत्यस्य पौनरुक्त्यमित्यत

प्रत्येकशो गुणानां तु निःसीमत्वमुदीर्यते।
अनन्तत्वं तु गुणतस्ते चानन्ता हि सङ्ख्यया॥
अतोऽनन्तगुणो विष्णुर्गुणतोऽनन्त एव वा।

इति प्रमाणं मनसि निधाय गुणतोऽनन्त इत्येतद्व्याचष्टे ॥ गुणतोऽनन्त इतीति ॥ ननु आद्यो हिरण्यगर्भः समभूदित्येतावता पूर्णत्वात् स्वयम्भूरज इति विशेषणद्वयवैयर्थ्यमित्यतो हिरण्यगर्भस्य परमेश्वरादुत्पन्नत्वे आगमकथनार्थत्वात्तस्य न तदिति भावेनाह ॥ स्वयम्भूरज इतीति ॥ स्वयंशब्दस्य अकारस्य चेति ॥ स्वयंशब्दपर्यायस्वशब्दस्य 'स्वातन्त्र्यात्स्व इति प्रोक्त' इति स्मृत्या विष्णुनामत्वकथनेन तत्पर्यायस्य स्वयंशब्दस्यापि स्वातन्त्र्यार्थत्वेन विष्णुवाचकतायाः 'अकारो वासुदेवः स्यात्' इति स्मृत्या 'अ आ अं अः पुराणर्षिर्व्यासः शाखासहस्रकृत्' इति वासुदेवसहस्रनाम्नि व्यासनामसु पाठेन ऐतरेयभाष्ये 'अकारो वै सर्वा वाक्' इत्येतद्व्याख्यानावसरे

अकारः प्रथमं नाम विष्णोः सर्वगुणान् ब्रुवन्।
सर्वदोषविरुद्धत्वाद्गुणानामन्यतामपि॥
विष्णोर्वदति जीवेभ्यो जडेभ्यश्चैव सर्वदा।

इत्युदाहृतब्रह्मसारानुसारेण अकारस्य च विष्णुवाचितायाः सिद्धत्वादिति भाव। तथा चागमिकयोः स्वयम्भ्वजशब्दयोर्यौगिकत्वेनोक्तार्थे आगमिकतया प्रामाण्यमुपपन्नमिति भावः ॥ आगमसम्मतिरिति ॥ 'परमात्मा

(गु टि.)व्यवस्थित ''आत्मा नारायण पर.' इत्यादिश्रुत्या नारायणपरतया प्रयुक्ते परमात्मशब्दे आत्मशब्दश्चेतनपर्याय परमशब्दश्च उत्तमपर इति प्रसिद्धमेव। ततश्च परमात्मशब्द एव चेतनोत्तमत्वरूपपुरुषोत्तमत्वं तस्य वदतीत्यर्थ ॥ युक्तिरिति ॥ 'यो यस्य धारणपोषणकर्ता स तस्मादुत्तम ' इत्येवरूपा युक्ति 'यो लोकत्रयमाविश्य बिभर्ति' इत्यनेनोक्तेत्यर्थ ॥ नाशः स्यादिति ॥ गेहनाशे नश्यमानगेहान्तर्गतपुरुषनाशदर्शनादिति भाव ॥ तदुपपादनायेति ॥ लोकत्रयनाशेपि तत्प्रविष्टस्याविनाशोपपादनायेत्यर्थः ॥ ऐश्वर्यवचनमिति ॥ अघटितघटकशक्तिमत्त्वरूपैश्वर्यमीश्वर इत्यनेन कथितमित्यर्थ । अग्निस्तम्भनशक्तिमतो दह्यमानगृहान्तर्गतस्य तन्नाशेप्यविनाशवदघटितघटकशक्तिमत्त्वाल्लोकत्रयनाशेप्यविनाशो युक्त इति भाव । ज्ञापकश्चायमर्थो न कारक इति भावेन गम्यते अवगम्यत इति शेषपूरण कृतमिति द्रष्टव्यम् ।

का तर्ह्युदाहृतस्य 'न स्थानत.' इति सूत्रस्य गतिरित्यत आह ॥ नेति ॥ कुतोस्यैवान्यथा योज्यत्वमित्यत उक्तम् ॥ अस्पष्टमिति ॥ अत एव प्राक् स्पष्टवचनैरिति सविशेषत्ववचनाना अन्यथा योज्यत्वाभावसूचनाय स्पष्टतया निरवकाशत्व सूचितमिति भाव ॥ अन्यथा योजनीयमिति ॥ स्थानभेदप्रयुक्ततद्गतपरमात्मभेदनिराकरणपरतया योजनीयमित्यर्थ । तथा हि । सर्वावस्थाप्रेरकत्वेन प्रकृत परमात्मा किं प्रतिशरीर जाग्रदादिषु च स्थितो भिन्न उताभिन्न इति सन्देहे युगपद्भिन्नभिन्नस्थानस्थिताना घटपटादीना भेददर्शनेन तादृशस्य परमात्मन स्थानभेदाद्भिन्नत्वमेवेति प्राप्ते स्थानभेदेऽपि न परस्य ब्रह्मणो भिन्न रूपम् 'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते' इति सर्वेषु भूतेष्वेकस्यैव गुणपूर्णत्वश्रवणात् । अतो न तस्य भिन्नत्वमित्यन्यथा योजनीयमिति भाव । एतेनेत्यस्यैव विवरणम् ॥ श्रुतीनामिति ॥ लौकिकगन्धाद्यभावपरतया व्याख्येयत्वादित्यर्थ । अशब्दमित्यादौ तु साकल्येन विवक्षितत्वाददोष । अन्यथाव्याख्येयत्वे युक्त्यन्तरमाह ॥ श्रुतिष्वेवेति ॥ इत्यादीत्यादिपदेन विचित्रशक्तिरित्यादिपरिग्रह ।

### ब्रह्मनिर्विशेषत्ववादस्य युक्तिविरोधोपपादनम्

(टी) उपपत्तिविरुद्धश्च श्रुतीनामखण्डब्रह्मनिष्ठत्वम् । तथा हि । अखण्डार्थनिष्ठत्वं नाम निर्भेदार्थनिष्ठत्वं निर्विशेषार्थनिष्ठत्वं वा । आद्ये सगुणत्वाविरोध । भेदाभावेऽपि विशेषबलेनैव तदुपपत्तेः। न द्वितीयः। तथा सत्येकार्थत्वेन श्रौतपदजातस्य पर्यायतया सहप्रयोगाभावप्रसङ्गात् । अतः सगुणमेव ब्रह्म श्रुत्यभिप्रेतमवगम्यते ।

(वि टि) न केवलमखण्डार्थत्वे साधकाभावः। अपि तु बाधकश्चास्तीत्याह ॥ उपपत्तीति ॥ श्रुतीनां ज्ञेयनिष्ठश्रुतीनाम् । सगुणत्व हि धर्मवत्त्वम् । तच्च धर्मधर्मिणोर्भेदनियतत्वेन भेदाभावे कथमुपपद्यत इत्याशङ्क्याह ॥ भेदाभावेपीति ॥ विशेषबलेनैवेति ॥ विशेषस्य भेदकार्यकारित्वेन भेदप्रतिनिधित्वेनैव धर्मिग्राहकमानेन सिद्धत्वादिति भाव । एतच्चोपलक्षणम् । यथाकथञ्चिन्निर्भेदार्थनिष्ठत्व सगुणब्रह्मनिष्ठवेदान्तवाक्ये व्यापकम् । वस्तुतो निर्भेदार्थनिष्ठत्वस्याखण्डार्थत्वेन स्वतिसिद्धे प्रकृष्टप्रकाशादिलक्षणवाक्येऽव्यापकमित्यपि दूषण द्रष्टव्यम्

(वि टि.)॥ एकार्थत्वेनेति ॥ अन्यूनानतिरिक्तार्थत्वेनेत्यर्थः । न चार्थवादवाक्यगतपदानां लक्षणया प्राशस्त्यरूपैकार्थनिष्ठानामपि सहप्रयोगवद्वेदान्तवाक्यगतपदानामपि चिन्मात्रपराणामपि सहप्रयोगः सम्भवतीति वाच्यम्; दृष्टान्तासम्प्रतिपत्तेः । अर्थवादपदेष्वप्येकस्यैव प्राशस्त्यपरत्वाभ्युपगमात् । न च विनिगमनाविरहः । प्रथमोपस्थितत्वादेरेव विनिगमकत्वात् । 'किञ्चिदेव पदं स्तौति' इति तन्त्रवार्तिकोक्तेश्च । न च पदान्तरस्याध्ययनविध्यापादितपुरुषार्थपर्यवसायित्वभङ्गप्रसङ्गः । तस्य स्तुत्युपयुक्तगुणसमर्पकत्वेन तदभङ्गोपपत्तेरिति ।

(रा. टि.) ॥ निर्भेदेति ॥ स्वीयगुणकर्मादिभिरिति योज्यम् ॥ विशेषेति ॥ भेदप्रतिनिधिरूपविशेषबलेन सगुणत्वोपपत्तिरित्यर्थः. ॥ पर्यायतयेति ॥ क्रमेण प्रयोज्यतयेत्यर्थः । 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' इत्यादौ सत्यपदबोधितस्यैव स्वरूपस्य ज्ञानादिपदैर्बोधनेनैकार्थकत्वहेतुना क्रमेण प्रयोगार्हतया सत्यं ज्ञानमिति सहप्रयोगो न स्यादित्यर्थः ।

(वे. टि.) न केवलमखण्डार्थत्वे साधकाभावाच्छ्रुतीनां तत्परत्वाभावः । अपि तु बाधकसद्भावाच्चेत्याह ॥ उपपत्तिविरुद्धमित्यादिना ॥ इदञ्च बाधकप्रदर्शनं मूले साधकाभावप्रदर्शनमुपलक्षणपरमिति भावेन कृतमित्यवधेयम् । भेदसामान्याभावे धर्मधर्मिभेदस्याप्यसम्भवात्कथं सगुणत्वमुपपद्यत इत्यत आह ॥ भेदाभावेपीति ॥ विशेषबलेनैवेति ॥ विशेषस्य भेदप्रतिनिधित्वेन तत्कार्यकारितया धर्मिग्राहकप्रमाणसिद्धत्वादिति भावः । उपलक्षणञ्चैतत् । भेदाभावविशिष्टस्वरूपस्य तदुपलक्षितस्वरूपस्य वा निर्भेदत्वस्य शब्दबोध्यत्वेऽभिप्रेते निर्घटं भूतलमित्यादिवत्सखण्डार्थत्वापत्तिः । स्वरूपसत्त्वमात्रेऽभिप्रेते च सखण्डार्थानां सगुणवाक्यानामपि वस्तुगत्या निर्भेदब्रह्मनिष्ठत्वेनाखण्डार्थत्वापत्तिः । प्रकृष्टादिवाक्येष्वव्याप्तिश्चेत्यपि दूषणं द्रष्टव्यम् ॥ एकार्थत्वेनेति ॥ अन्यूनानतिरिक्तार्थत्वेनेत्यर्थः । पर्यायत्वे इष्टापत्तिरित्याशङ्कापरिहारायाह ॥ सहेति ॥

(द्वै. द्यु.) ॥ उपपत्तीति ॥ वक्ष्यमाणबाधकविरुद्धमित्यर्थः ॥ निर्भेदार्थेति ॥ स्वगतगुणक्रियादिप्रतियोगिकभेदरहितार्थत्वमित्यर्थः. । पररीत्या विकल्पकोटिं दर्शयति ॥ निर्विशेषेति ॥ निर्धर्मकेत्यर्थः ॥ विशेषेति ॥ तस्य भेदप्रतिनिधित्वादित्यर्थः ॥ पर्यायतयेति ॥ ब्रह्मातिरिक्तस्य सत्यज्ञानादिशब्दमुख्यार्थत्वाभावात् ब्रह्मण एव मुख्यार्थत्वे वक्तव्ये तत्र यदि शब्दानां शुद्धस्वरूपमात्रबोधकत्वं तदा शब्दानामन्यूनानतिरिक्तविषयबोधजनकत्वप्राप्त्या पर्यायत्वं प्राप्तमेवेति हृदयम् ॥ सहप्रयोगेति ॥ एकवस्तुविषयकैकज्ञानेच्छया युगपत्प्रयोगानुपपत्तिरित्यर्थः. ।

यद्यपि 'कलशो घटः' इति वाक्यमपि घटरूपैकार्थमात्रविषयकसंसर्गागोचरप्रमां जनयति । 'सम्भेदे नान्यतरवैयर्थ्यम्' इति न्यायेनैकवस्तुबोधकसामग्रीद्वयमेलनेन तद्वस्तुबोधे बाधकाभावात् । अन्यथा चैत्रोच्चारित 'घटमानय' इति वाक्यं मैत्रोच्चारितं च 'कलशमाहर' इति वाक्यं युगपत् शृण्वतो देवदत्तस्य तद्बोधो न स्यात् । न स्याच्च धूमालोकपरामर्शाभ्यां वह्न्यनुमितिः । अत एव 'प्रातिपदिकान्यनतिरिक्तविषयाणि प्राह भगवान् प्रथमाशब्दितविभक्त्या पाणिनिः । अतः सकलतर्कसमयज्ञो वष्टि वचसोरनतिरिक्तविषयत्वम्' इत्यनन्तोक्तैरित्यादौ

(द्वै.द्यु) नामप्रथमाविभक्त्योरेकार्थानुभावकत्वमुक्तं संक्षेपशारीरके। वचसोः उच्चैरिति प्रातिपदिकं तदुत्तर प्रथमा चेत्यनयो । वष्टि इच्छति। प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमेति सूत्रेण पाणिनिना प्रातिपदिक समानार्थकत्वस्य प्रथमाया उक्तत्वात्प्रातिपदिकसमभिव्याहृतप्रथमयाऽप्येकमात्रवस्तुविषयकबोधो जायते। परन्तु तत्तदुपस्थाप्ययोः संसर्गबाधनैराकाङ्क्ष्य घट कलश इति वाक्यस्येति परैरुक्तम्। तथा च सत्यज्ञानादिवाक्यस्या-बोधकत्वापादन न घटते।

तथापि उच्चैरित्यादौ शब्दसाधुत्वनिर्वाहकतया प्रथमायाः साधुत्वेऽपि घट. कलश इत्यत्राधिक्यरूपवाक्य-दोषोऽस्त्येव तद्वत्प्रकृतेऽपि स्यात्। न चासौ निर्दोषवाक्ये वक्तु शक्यत इत्यभिप्रायः।

ननूक्तार्थदृढीकरणाय पुनरुक्तिरस्त्विति चेन्न। निश्चितप्रामाण्यकतत्सत्त्वनिश्चयस्यैव दृढीकरणपदार्थतयो-क्तपदाना तावत्पर्यन्त तात्पर्यसत्त्वे स्वरूपमात्रपरत्वोक्त्यनुपपत्ते। 'अनन्ते स्वर्गे लोके प्रतितिष्ठति' ज्येये प्रति तिष्ठति' 'मैत्रावरुण्यो मैत्रावरुण्य.' 'न च पुनरावर्तते न च पुनरावर्तते' इत्यादाविवोक्तशब्दस्यैवोपस्थितस्य स्वार्थगृहीतशक्तितात्पर्यकस्यैव पुन प्रयोगौचित्येन पर्यायशब्दान्तरोपादानानौचित्याच्च।

अत एव 'अभ्यासरूपतया तात्पर्यग्रहणार्थत्वान्नाधिक्यम्' इत्यप्यसदेव। एकप्रकारासकृदुक्तिरूपत्वाभा-वात्। ज्ञानपदप्रयोगमात्रेण सत्यपदस्य स्वरूपमात्रे स्वार्थतात्पर्यनिश्चयाननुभवात्। अन्यथा लक्षणवाक्यत्वादिना स्वरूपमात्रपरत्वव्यवस्थापनप्रयासवैफल्यापत्ते.।

(गु. टि) एव साधकाभावेन श्रुतीनामखण्डार्थनिष्ठत्व निराकृत्य बाधकसद्भावेनापि निराकरोति॥ उप-१॥ पविरुद्धश्चेति॥ निर्भेदत्वे ब्रह्मणो धर्मधर्मिभेदस्याप्यभावापत्त्या कथं ब्रह्मण सगुणत्वमित्यत आह॥ विशे-षबलेनेति॥ विशेषस्य भेदप्रतिनिधित्वेन भेदकार्यकारितया धर्मिग्राहकप्रमाणसिद्धत्वादिति भाव.। उपलक्षणञ्चै-तत्। भेदाभावविशिष्टस्वरूपस्य तदुपलक्षितत्वस्य वा निर्भेदत्वस्य शब्दबोध्यत्वेऽभिप्रेते 'निर्घटं भूतलम्' इत्यादिव-त्सखण्डार्थत्वापत्ति.। स्वरूपसत्त्वमात्रे चाभिप्रेते सखण्डार्थाना सगुणवाक्यानामपि वस्तुगत्या निर्भेदब्रह्मनिष्ठत्वे-नाखण्डार्थत्वापत्ति। प्रकृष्टादिवाक्याना निर्भेदनिष्ठत्वाभावेनाव्याप्तिश्चेत्यपि द्रष्टव्यम्॥ एकार्थत्वेनेति॥ अन्यूनानतिरिक्तार्थत्वेनेत्यर्थ। अस्तु पर्यायत्वमपीतीष्टापत्तिं परिहरति॥ सहप्रयोगेति॥ क्रमेण प्रयोज्य-त्वस्यैव तल्लक्षणत्वेन घटकलशादिशब्दवद्वाक्यभेदेनैव प्रयोज्यत्वापत्त्या एकस्मिन् वाक्ये सहप्रयोगाभावप्रस-ङ्गादिति भाव।

ब्रह्मनिर्विशेषत्ववादे सत्यादिपदाना पर्यायत्वशङ्कानिरासपूर्वक प्रतिवादिना प्रमाणोक्तिः

(टी.) अथ मत द्विविधा वेदान्तवाक्यप्रवृत्तिः। एका पदार्थपरा। अपरा तस्यात्मतादात्म्य-रूपवाक्यार्थपरा। तत्र तावत्सत्यं ज्ञानमनन्तं ब्रह्मेत्यादि पदार्थपरं वाक्यमखण्डार्थनिष्ठम्। ब्रह्मविदा-प्नोति परमिति प्रस्तुतब्रह्मस्वरूपमात्रजिज्ञासायां तल्लक्षणं हीदमुच्यते। यथा खल्वस्मिन् ज्योतिर्मण्डले कश्चन्द्र इति चन्द्रस्वरूपमात्रप्रश्ने प्रकृष्टप्रकाशश्चन्द्र इति तल्लक्षणाभिधायकं वचनम्। यथा च तत्र

(टी) प्रकृष्टप्रकाशपदयोश्चन्द्रप्रातिपदिकार्थमात्रपरत्वेऽपि न पर्यायत्वम्। प्रकर्षादिगुणयोगाभिधानमुखेन लक्षणया तत्परत्वात्। तथा सत्यादिपदानामखण्डार्थनिष्ठत्वेऽपि परापरसामान्यवाचिनां शबले गृहीतसङ्गतीनां तेषां लक्षणया ब्रह्मस्वरूपमात्रपरत्वान्न पर्यायत्वम्।

न चैवं सति प्रतिपिपादयिषितार्थस्यैकेनैव पदेन लक्षितत्वात्पदान्तरवैयर्थ्यमिति वाच्यम्। लक्ष्यार्थभेदाभावेपि प्रतिपदमारोपितासत्यत्वाद्यनेकाकारव्यवच्छेदस्य प्रयोजनत्वात्। यथा नक्षत्रादिव्यवच्छेदप्रयोजनत्वेन न प्रकृष्टादिपदवैयर्थ्यम्।

तदयं प्रयोगः। सत्यज्ञानादिवाक्यमखण्डार्थनिष्ठम्। लक्षणवाक्यत्वात्। प्रकृष्टप्रकाशश्चन्द्र इत्यादिवाक्यवत्। तथा सत्यज्ञानादिवाक्यं ब्रह्मस्वरूपमात्रपरम्। तत्प्रश्नोत्तरत्वात्। यद्यत्स्वरूपमात्रप्रश्नोत्तर तत्तत्स्वरूपमात्रपरम्। यथोदाहृतं वाक्यम्। एवं तत्त्वमसीत्यादिब्रह्मात्मतादात्म्यपरमपि वाक्यमखण्डार्थनिष्ठम्। कोहमिति स्वरूपमात्रजिज्ञासायां ह्येतदुच्यते।

किञ्च न तावदत्र देवदत्तस्य गौरितिवद्विशिष्टार्थता। समानाधिकरणत्वात्। नापि मृद्धटो नीलोत्पलमितिवत्। अकार्यकारणद्रव्यनिष्ठत्वात्। नाप्यभेदविशिष्टं बोध्यम्। स्वरूपाभेदस्य सिद्धत्वात्। तच्छब्दार्थेनाभेदस्य विरुद्धत्वेन बोधयितुमशक्यत्वात्। अतस्तत्र स्वार्थैकदेशत्यागलक्षणया भेदभ्रमव्युदासद्वारेण स्वरूपमात्रपर्यवसानमेव। अत एव न पर्यायत्वेन व्यर्थताप्रसङ्गः। यथा खलु कोयमित्यपेक्षायामुक्ते सोय देवदत्त इति वाक्ये पदत्रयस्य देवदत्तस्वरूपमात्रपर्यवसानेपि विशिष्टाभिधानद्वारेण भागत्यागलक्षणया प्रवृत्तेर्न पर्यायत्वम् भेदभ्रमव्युदासेन सार्थक्यञ्च। अत्रापि प्रयोगः। तत्त्वमसीत्यादिवाक्यमखण्डार्थनिष्ठम्। अकार्यकारणद्रव्यनिष्ठत्वे सति समानाधिकरणत्वात्। सोऽयं देवदत्त इत्यादिवाक्यवत्। स्वरूपप्रश्नोत्तरत्वाच। पूर्ववत्प्रयोगः। अतः श्रुतीनामखण्डार्थत्वस्य प्रमितत्वादनुपपत्त्यभावाच्च कथं सगुणं ब्रह्म श्रुत्यभिप्रेतमिति।

(वि टि) अपर्यायशब्दानामेकप्रातिपदिकार्थमात्रपरत्व संसर्गासङ्गिसम्यग्धीहेतुत्व वा अखण्डार्थनिष्ठत्वमभिप्रेत्य शङ्कते॥ अथेति॥ वक्ष्यमाणलक्षणवाक्यत्वरूपहेतोर्भागासिद्धिवारणायानतिप्रसक्तपक्षतावच्छेदकविवक्षया वेदान्तवाक्यं विभजते॥ द्विविधेति॥ पदार्थपरेति॥ 'तत्त्वमसि' 'अयमात्मा ब्रह्म' इत्यादिमहावाक्यगततत्त्वमादिपदार्थपरेत्यर्थ॥ अपरेति॥ तत्त्वमसीत्यादिमहावाक्यप्रवृत्तिरित्यर्थ॥ तस्येति॥ त्वमादिपदार्थस्य ब्रह्माभेदरूपवाक्यार्थपरेत्यर्थ। तत्र ज्ञेयब्रह्मनिष्ठवेदान्तवाक्ये पदार्थनिष्ठवाक्य दर्शयन् साध्यभूताखण्डार्थत्वस्य बाधपरिहाराय पक्षे सम्भावना दर्शयति॥ तत्रेति॥ तत्पदार्थपरमित्यर्थ.। अत्रादिपदेन 'योयं विज्ञानमय.' इत्यादित्वपदार्थनिष्ठवाक्यपरिग्रह॥ प्रस्तुतेति॥ स्वरूपमात्रे पृष्टे यत्प्रस्तुतं जिज्ञासितं तदेव वक्तुमुचितम्। प्रकृते च ब्रह्मस्वरूपमात्रमेव जिज्ञासितम्। लक्षणवाक्येनापि तदेव बोधनीयम्। न तु विशिष्टम्। अजिज्ञासितार्थबोधकत्वेनानवधेयवचनत्वप्रसङ्गादिति भाव।

(वि टि ) साध्याप्रसिद्धिपरिहाराय दृष्टान्तमुपपादयति ॥ यथा खल्विति ॥ वचनमिति ॥ अखण्डार्थ-
त्वमित्यनुषज्यते । नन्वखण्डार्थत्वस्यैकप्रातिपदिकार्थमात्रनिष्ठत्वरूपत्वे संसर्गासङ्गिसम्यग्धीहेतुत्वरूपत्वे च लक्षण-
वाक्येन स्वरूपमात्रमेव प्रतिपाद्यत इति स्यात् । तत्प्रतिपादनं तद्वाक्यगतेनैकेनैव पदेन कृतमिति व्यर्थं पदान्तरमि-
त्याशङ्का दृष्टान्तमुखेन निरस्यति ॥ यथा चेति ॥ नन्वेकप्रातिपदिकार्थमात्रनिष्ठत्वे पर्यायत्वं दुर्वारम् । घट-
कलशादिशब्दे तथा दर्शनात् । न च शक्यतावच्छेदकैक्य एव पर्यायत्वम् । न त्वेकप्रातिपदिकार्थमात्रनिष्ठत्व
इति वाच्यम् । सामान्यरूपतया लघुत्वेनान्यूनानतिरिक्तार्थत्वस्यैव पर्यायत्वे तन्त्रत्वात् । नैयायिकादिभि. स्वरूप-
मात्रार्थकानामपि गगनाकाशादिपदाना पर्यायत्वस्वीकाराच्चेत्यत आह ॥ प्रकर्षादीति ॥ तथा च मुख्यया वृत्त्यैव
प्रातिपदिकार्थमात्रनिष्ठत्व एव पर्यायत्वम् । न तु लक्षणादिनापि तन्निष्ठत्वे । अर्थवादगतपदानां लक्षणयैक
प्राशस्त्यनिष्ठानामप्यपर्यायत्वदर्शनात् । न च मुख्यार्थानुपपत्त्यभावाल्लक्षणैव नोपपद्यत इति वाच्यम् । तात्पर्यानु-
पपत्त्या तदुपपत्ते । अन्यथा 'काकेभ्यो दधि रक्ष्यताम्' इत्यादौ लक्षणाऽभावप्रसङ्गादिति भाव ।

दार्ष्टान्तिके अपर्यायत्वमुपपादयति ॥ तथेति ॥ तथा न पर्यायत्वमिति सम्बन्ध । ननु सत्यादिपदाना
ब्रह्मस्वरूपलक्षकत्वमेवानुपपन्नम् । मुख्यार्थाभावेन तत्सम्बन्धरूपलक्षणाया एवायोगात् । न च सदादिकमेव
मुख्यार्थं । ब्रह्मस्वरूपातिरिक्तस्य सदाद्यर्थस्य त्वया अनभ्युपगमादित्यत आह ॥ परापरेति ॥ सत्त्वज्ञानत्वानन्द-
त्वादिरूपपरापरसामान्यविशिष्टसामान्यवाचिनामित्यर्थ । शबले इत्येतद्व्यक्तिस्थानीयघटादिसाधारण्येनोदाहरण-
प्रदर्शनार्थम् । गृहीतसङ्गतीनामित्येतत्सङ्गतिग्रहणं विना लक्षणाकल्पनमसम्भवीति ज्ञापनार्थमिति ज्ञातव्यमिति ।

नन्वस्तूक्तरीत्या अपर्यायत्वम् । तथापि पदान्तरवैयर्थ्यंतादवस्थ्यम् । प्रतिपिपादयिषितब्रह्मस्वरूपमात्रस्य
प्रथमोपस्थितेनैकेनैव पदेन प्रतिपादनसम्भवादित्याशङ्क्य निराकरोति ॥ न चैवमिति ॥ शब्दस्य हि द्वयं प्रयोजनम् ।
अर्थप्रतिपत्ति व्यावृत्तिज्ञापनञ्च । तत्राऽद्यस्यैकेन पदेन सिद्धावपि द्वितीयस्यासिद्धेरवैयर्थ्यमित्याह ॥ लक्ष्येति ॥
तदेव दृष्टान्तमुखेनोपपादयति ॥ यथा चेति ॥ सदृष्टान्तं पक्षे साध्यसम्भावनामुपपाद्य तत्रानुमानं प्रयोगारूढं
करोति ॥ तदयमिति ॥ अखण्डार्थनिष्ठमिति ॥ अपर्यायत्वे सत्येकप्रातिपदिकार्थमात्रनिष्ठमित्यर्थ । 'देव-
दत्तस्य दण्ड' इत्यादौ व्यभिचारवारणाय लक्षणवाक्यत्वादित्यत्र लक्षणपदम् ॥ ब्रह्मस्वरूपमात्रपरमिति ॥
संसर्गासङ्गिब्रह्मस्वरूपमात्रप्रतीतिजनकमित्यर्थ ॥ तत्प्रश्नोत्तरत्वादिति ॥ तन्मात्रप्रश्नोत्तरत्वादित्यर्थ. । यत्र
स्वरूप धर्मवैशिष्ट्यञ्च प्रश्नगोचरस्तत्प्रतिवचने व्यभिचारवारणाय मात्रपदम् ।

दृष्टान्ते साध्यसाधनवैकल्यशङ्कावारणाय सामान्यव्याप्तिरेवात्राभिप्रेतेत्याह ॥ यद्यदिति ॥ उदाहृत-
मिति ॥ प्रकृष्टप्रकाशादिवाक्यमित्यर्थ । पदार्थनिष्ठे अखण्डार्थत्वं प्रसाध्य वाक्यार्थनिष्ठेऽपि तत्प्रसाधयितु
मसिद्धिशङ्का निरस्यन् पक्षे अनुमानप्रवृत्त्यनुकूलां साध्यसम्भावना दर्शयति ॥ एवमिति ॥ साध्यसम्भावना-
प्रकारमेवोपपादयति ॥ किञ्चेति ॥ समानाधिकरणत्वादिति ॥ एकविभक्तियोग्यानेकशब्दत्वादित्यर्थ ।
समानाधिकरणत्वेपि मृद्घट नीलमुत्पलमित्यादौ मृत्त्वघटत्वयोर्नीलत्वोत्पलत्वयोश्च सामानाधिकरण्यरूपसंसर्गबोधवत्

(वि.टि)तत्त्वमसीत्यत्रापि तत्त्वंपदार्थभूतयो सर्वज्ञत्वकिञ्चिज्ज्ञत्वयो सामानाधिकरण्यरूपसंसर्गबोध किं न स्यादित्याशङ्क्य निराकरोति ॥ नापीति ॥ उत्पलवदित्यस्यानन्तरं विशिष्टार्थतेत्यस्यानुषङ्ग । मृद्घट इत्यादिवद्विशिष्टार्थत्वाभावे हेतुमाह ॥अकार्येति ॥ मृद्घट इत्यस्य कार्यकारणनिष्ठत्वात् नीलमुत्पलमित्यस्य द्रव्यमात्रनिष्ठत्वाभावात् तत्त्वमसीत्यादेश्चाकार्यकारणद्रव्यमात्रनिष्ठत्वान्न तद्वदस्य विशिष्टार्थता सम्भवतीति भाव ।

ननूक्तरीत्या सम्बन्धान्तरबोधासम्भवेपि अभेदरूपसम्बन्धस्तर्हि तत्त्वमसीत्यनेन बोध्यतामित्यत आह ॥ नापीति ॥ अभेदो बोध्यतामिति वदन्प्रष्टव्य । तत्किं तत्त्वपदलक्ष्यचैतन्यस्वरूपोऽभेदस्तेन बोध्य. किं वा तन्मुख्यार्थयोरिति । तत्र नाद्य इत्याह ॥ स्वरूपाभेदस्येति ॥ सिद्धत्वात् स्वप्रकाशत्वेन स्वत सिद्धत्वादित्यर्थ । न द्वितीय इत्याह ॥ तच्छब्दार्थेनेति ॥ सार्वज्ञ्यादिविशिष्टेन तच्छब्दमुख्यार्थेन किञ्चिज्ज्ञत्वादिविशिष्टस्य त्वपदार्थस्य विरोधेनाभेदेन बोधयितुमशक्यत्वादित्यर्थ ॥ स्वार्थैकदेशत्यागलक्षणयेति ॥ स्वार्थैकदेशभूतसर्वज्ञत्वासर्वज्ञत्वादिविरुद्धांशमनन्तर्भाव्य विशेष्यमूतचिन्मात्रलक्षणयेत्यर्थ ॥ भेदभ्रमव्युदासद्वारेणेति ॥ भेदभ्रमव्युदासरूपफलेन स्वरूपमात्रबोधनं सफलमिति भाव ॥ अत एवेति ॥ यतो वाच्यार्थभेद भेदभ्रमनिरासरूपप्रयोजनश्चास्ति अत एवेत्यर्थ ।

एतदेव दृष्टान्तमुखेन द्रढयति ॥ यथा खल्विति ॥ पदत्रयस्येति ॥ पदत्रयस्य प्रवृत्तेरित्यन्वय । अत्रापि समानाधिकरणत्वात् अकार्यकारणद्रव्यमात्रनिष्ठत्वाच्च 'देवदत्तस्य गौ' 'मृद्घट' 'नीलमुत्पलम्' इतिवन्न विशिष्टार्थतेत्यवगन्तव्यम् ॥ अकार्येति ॥ अकार्यकारणद्रव्यमात्रनिष्ठत्वे सतीत्यर्थ । 'मृद्घट' 'नीलमुत्पलम्' 'देवदत्तस्य गौ' इत्यादिवाक्ये व्यभिचारवारणाय क्रमेण विशेषणानि ॥ तत्स्वरूपेति ॥ ब्रह्मस्वरूपमात्रप्रश्नोत्तरत्वादित्यर्थ । नन्वेव दृष्टान्ते साध्यसाधनवैकल्यमित्यत आह ॥ पूर्ववदिति ॥ सामान्यव्याप्तिपुरस्कारेणेत्यर्थ । उपसंहरति ॥ तत इति ॥ श्रुतीनामिति ॥ ज्ञेयब्रह्मनिष्ठवेदान्तभागाना अखण्डार्थत्वस्योक्तरीत्या द्विविधस्यापि प्रमाणसिद्धत्वादुपपत्तिविरोधाभावाच्च कथ सगुण ब्रह्म श्रुत्यभिप्रेतम् । न कथमपि । किन्तु निर्गुणमेव ब्रह्म श्रुतितात्पर्यगोचर इत्यर्थ ।

(रा टि.) यदुक्तं श्रुतीना निर्विशेषब्रह्मपरत्वे श्रौतपदाना पर्यायत्व स्यादिति तन्न । प्रतिपाद्ये विशेषाभावेऽपि द्वारभूतधर्माणां भेदेनापर्यायत्वात् । तत्राऽऽरोपितान्यान्यधर्मव्यावर्तकतया पदाना सफलत्वेन वैयर्थ्याभावाच्चेति सदृष्टान्तमुपपादयन् शङ्कते ॥ अथ मतमित्यादिना ॥ अखण्डार्थनिष्ठमिति ॥ निर्धर्मकब्रह्मप्रातिपादिकार्थनिष्ठमित्यर्थ ॥ इदमिति ॥ सत्यं ज्ञानमित्यादिकमुच्यत इत्यर्थ ॥ वचनमिति ॥ चन्द्रप्रातिपदिकार्थमात्रनिष्ठमिति योज्यम् । प्रकर्षादीत्यादिपदेन प्रकाशग्रह. । लक्ष्यार्थाभेदेऽपि प्रकृष्टत्वप्रकाशत्वाख्यद्वारभूतगुणयोर्भेदेन यथा न पर्यायत्वमित्यर्थ । क्वचिन्मुख्यस्यैवान्यत्र लक्षणादृष्टेराह ॥ परापरेति ॥ सत्यत्वं परशब्दितव्यापकजाति । ज्ञानत्वादि अपरशब्दितव्याप्यजाति ॥ शबल इति ॥ मायाविशिष्टब्रह्मणीत्यर्थ । तस्य सत्यत्वज्ञानत्वादिधर्मयुक्तत्वादिति भाव ॥ प्रतिपदमिति ॥ व्यवच्छेदस्य प्रयोजनत्वादित्यन्वय ।

(रा टि) लक्ष्यार्थभेदाभावेऽपि व्यवच्छेद्यविभेदत ।
विज्ञानानन्दपदयो पर्यायत्वर्थते कुत ॥

इत्युक्तेरिति । सदृष्टान्त पक्षे साध्यसम्भावना हेतो· पक्षधर्मताञ्चोपपाद्य तत्रानुमानप्रयोगौ चाह ॥ **तदयमिति** ॥ तत्तस्माद्दृष्टान्तेन पक्षे साध्यस्य सम्भावितत्वात् हेतोरुक्तदिशा पक्षधर्मत्वादित्यर्थ ॥ **अखण्डार्थनिष्ठमिति** ॥ ब्रह्मस्वरूपमात्रपरमित्यर्थ । देवदत्तस्य दण्ड इत्यादावव्यभिचाराय लक्षणवाक्यत्वादिति वाक्यविशेषणं लक्षणेति । ॥ **उदाहृतमिति** ॥ प्रकृष्टेत्यादिवाक्यमित्यर्थ ॥ **ब्रह्मात्मेति** ॥ ब्रह्मजीवैक्यपरमित्यर्थ ॥ **अखण्डार्थनिष्ठमिति** ॥ अभेदरूपसंसर्गागोचरचित्स्वरूपमात्रगोचरसम्यग्ज्ञानजनकम् ॥ **कोऽहमितीति** ॥ श्वेतकेतो कोऽहमिति स्वरूपमात्रजिज्ञासायामुद्दालकेन तत्त्वमसीत्युच्यते । हि यस्मात् स्वरूपमात्रप्रश्ने प्रत्युच्यमानत्वादिति यावत् । एतेन वक्ष्यमाणद्वितीयहेतो पक्षधर्मतोक्ता ॥ व्याप्तिस्तु यद्यत्स्वरूपमात्रप्रश्नोत्तरमिति प्रागेवोक्तेति भाव । वक्ष्यति च **पूर्ववत्प्रयोग इति** । प्रयोगान्तरं विवक्षुर्वक्ष्यमाणहेतो पक्षधर्मतादि व्युत्पादयति ॥ **किञ्चेत्यादिना** ॥

॥ **अत्रेति** । तत्त्वमसीति वाक्य इत्यर्थ. ॥ **विशिष्टेति** ॥ व्यावृत्तार्थतेत्यर्थ ॥ **समानाधिकरणत्वादिति** ॥ समानविभक्तिपदोपेतत्वादिति वा भिन्नप्रवृत्तिनिमित्तकत्वे सत्येकार्थवृत्तिपदोपेतत्वादिति वाऽर्थ. ॥ **इतिवदिति** ॥ विशिष्टार्थतयेत्यनुषङ्ग· । अभेदरूपविशिष्टार्थतयेत्यर्थ । द्रव्येत्यनेन नीलमुत्पलमिति गुणनिष्ठवाक्यव्यावृत्ति ॥ **तच्छब्दार्थेनेति** ॥ तच्छब्दमुख्यार्थेन सार्वज्ञ्यादिविशिष्टेनेत्यर्थ । नात्यभेदेत्यादिना विपक्षे बाधकतर्कस्योपन्यासो भवति । पक्षे साध्यमुपसहरति ॥ **अत इति** ॥ विशिष्टार्थकत्वासम्भवादित्यर्थ. ॥ **स्वार्थैकदेशेति** ॥ सर्वज्ञत्वाल्पज्ञत्वादिरूपतत्त्वपदार्थैकदेशेत्यर्थ ॥ **पर्यवसानमेवेति** ॥ अत्र तत्त्वमस्यादिवाक्य इत्यनुषङ्ग ॥ **अत एवेति** ॥ विशिष्टाभिधानमुखेन भेदभ्रमनिरासद्वारेण स्वार्थैकदेशत्यागलक्षणया प्रवृत्तत्वादित्यर्थ । भेदभ्रमनिरासरूपफलवत्त्वान्न व्यर्थत्व वाच्यार्थभेदसत्त्वान्न पर्यायत्वमित्यर्थ. ॥ **भागत्यागेति** ॥ अतीतवर्तमानकालवैशिष्ट्यादिरूपभागत्यागेत्यर्थ । देवदत्तस्य गौरित्यत्राव्यभिचाराय विशेष्यम् । मृद्घट इत्यादावव्यभिचारायाकार्यकारणेति । नीलमुत्पलमित्यादावव्यभिचाराय द्रव्येति । व्याप्तिदृष्टान्तयोर्ज्ञानायाह ॥ **पूर्ववत्प्रयोग इति** ॥ अत इत्यस्य विवरणं श्रुतीनामित्यादि ॥ **अनुपपत्तीति** ॥ पर्यायत्वादिरूपेत्यर्थ ।

**(वे टि)** श्रुतिसूत्रयो [1]सावकाशत्वेनाखण्डार्थनिष्ठत्वासाधकत्वेप्यनुमानमेव तत्साधकं भविष्यतीत्याशयेन शङ्कते ॥ **अथेत्यादिना** ॥ वक्ष्यमाणलक्षणवाक्यत्वाकार्यकारणद्रव्येत्यादिहेत्वोर्भागासिद्धिवारणायानतिप्रसक्तपक्षतावच्छेदकविवक्षाया वेदान्तवाक्यं विभजते ॥ **द्विविधेति** ॥ **पदार्थपरेति** ॥ तत्त्वमसीत्यादिमहावाक्यगततत्त्वमादिपदार्थपरेत्यर्थ ॥ **अपरेति** ॥ तत्त्वमसीत्यादिमहावाक्यप्रवृत्तिरित्यर्थ· ॥ **तस्येति** ॥ त्वमादिपदार्थस्य ब्रह्माभेदरूपवाक्यार्थपरेत्यर्थ. । तत्र पदार्थनिष्ठवाक्य दर्शयन्वक्ष्यमाणलक्षणवाक्यत्वहेतो. पक्षधर्मतानुकूलतर्काद्युप-

[1] सावकाशत्वेनाखण्डार्थासाधकत्वेप्यनुमानमेव इति पाठेन भाव्यमिति भाति ।

(वे टि) पादनाय च तावत्पक्षं निर्दिशति ॥ तत्रेति ॥ अन्यथा साध्यधर्मिण एवानुपस्थितौ तत्र हेतूपपादनस्य यदीदमखण्डार्थनिष्ठं न स्यात्तर्ह्यनवधेयवचनं स्यादिति वक्ष्यमाणतर्कसूचनस्य चासम्भवादिति भाव. । अनेनानतिप्रसक्तं पदार्थपरवाक्यत्व लक्षणवाक्यत्वहेतौ पक्षतावच्छेदकमप्युक्तं भवति । अत्राऽदिपदेन योऽयं विज्ञानमय इत्यादित्वं पदार्थनिष्ठवाक्यपरिग्रह । सत्यादिवाक्यं तु तत्पदार्थपरमिति भाव ।

इदानीं लक्षणवाक्यत्वहेतो पक्षधर्मतां दर्शयति ॥ ब्रह्मेति ॥ ब्रह्मस्वरूपमात्रेति ॥ अनेन स्वरूपमात्रमेव पृष्टं जिज्ञासितञ्च । अतस्तदेव सत्यज्ञानादिलक्षणवाक्येन वक्तुमुचितम् । न तु विशिष्टम् । अपृष्टाजिज्ञासितार्थबोधकत्वेनानवधेयवचनत्वप्रसङ्गादित्यप्रयोजकतापि परिहृतेति ज्ञातव्यम् । व्याप्त्युपपादनाय दृष्टान्ते साध्यवैकल्यशङ्कापरिहाराय साध्यमुपपादयन् साध्यहेतुसहचार दर्शयति ॥ यथेति ॥ वचनमिति ॥ अखण्डार्थनिष्ठमित्यनुवर्तते । ननु निर्विशेषरूपाखण्डार्थनिष्ठत्वे श्रौतपदजातस्य पर्यायत्वप्रसङ्ग । इत प्रतिकूलतर्कपराहतिरनुमानस्येत्याशङ्का दृष्टान्तमुखेन परिहरति ॥ यथा चेति ॥ प्रकर्षादीति ॥ लक्ष्यार्थस्यैकत्वेऽपि वाच्यार्थभेदादपर्यायत्वमिति भाव ॥ परापरसामान्यवाचिनामिति ॥ परसामान्य सत्ता सत्यशब्दार्थ । अपरसामान्य ज्ञानत्वादि ज्ञानादिशब्दार्थ इत्यर्थ । व्यवहारे भट्टमताश्रयणात्सामान्यवाचिनामित्युक्तम् । अत्रापि वाच्यार्थभेदादपर्यायत्वमिति भाव ।

ननु सामान्यवाचिनामिति न युक्तम् । निर्विशेषे तदितरत्र च ज्ञानत्वाद्यसम्भवेन सङ्गतेरेव गृहीतुमशक्यत्वादित्यत आह ॥ शबले गृहीतसङ्गतीनामिति ॥ तथा च ज्ञानत्वादय शबले सम्भवन्तीति शक्तिग्रह सम्भवतीति भाव । यद्वा सामान्यवाचिनामिति प्रवृत्तिनिमित्तस्यापि शब्दवाच्यत्वाभिप्रायेणोक्तम् । वस्तुतस्तु सामान्यविशिष्टव्यक्तिरेव वाच्या । तथा चात्र प्रवृत्तिनिमित्तभेदादपर्यायत्वमिति भाव ।

ननु ज्ञानत्वादिविशिष्टवस्तुन एवाभावात्कथं शक्तिग्रह । शक्तिग्रहाभावे च कथ तन्मूला लक्षणापीत्यत आह ॥ शबल इति ॥ एव पक्षधर्मत्वादिक प्रदर्श्य प्रतिकूलतर्कपराहतिं च परिहृत्येदानीमनुमानप्रकार दर्शयति ॥ तदयमिति ॥ सत्यज्ञानेति ॥ यद्यपि प्रतिज्ञा पूर्वमेव कृता तथापि सा व्यवहितत्वान्न हेत्वाकाङ्क्षाजनकज्ञानजनिकाऽत पुनरुक्तेति ध्येयम् ॥ लक्षणेति ॥ देवदत्तस्य गौरित्यादिवाक्ये व्यभिचारपरिहाराय लक्षणेति ॥ ब्रह्मस्वरूपमात्रपरमिति ॥ अखण्डार्थत्वनिर्वचनमप्रयोजकताशङ्कापरिहारप्राक्ख्याय कृतमित्यवधेयम् ॥ तत्प्रश्नोत्तरत्वादिति ॥ तन्मात्रप्रश्नोत्तरत्वादित्यर्थ । अन्यथा विशिष्टप्रश्नोत्तरेषु व्यभिचारापत्ते । एव पदार्थनिष्ठवाक्यस्याखण्डार्थनिष्ठत्वेऽनुमानमभिधायेदानीं वाक्यार्थनिष्ठस्यापि तत्त्वमस्यादिवाक्यस्याखण्डार्थनिष्ठत्वेऽनुमान वक्तुं वक्ष्यमाणहेतो पूर्ववत्पक्षधर्मत्वाद्युपपादनाय तावत्पक्षं निर्दिशति ॥ एवमिति ॥ ब्रह्मात्मतादात्म्येति ॥ अनेनैक्यरूपवाक्यार्थपरवाक्यत्वमनतिप्रसक्तमत्र पक्षतावच्छेदकमुक्तमिति ध्येयम् ।

इदानीं वक्ष्यमाणतत्स्वरूपमात्रप्रश्नोत्तरत्वहेतो पक्षधर्मतामुपपादयति ॥ कोऽहमिति ॥ एतत् तत्त्वमसीत्यादिकम् । अन्यथा स्वरूपमात्रजिज्ञासाया स्वरूपमात्रे पृष्टे विशिष्टवचनेनानवधेयवचनत्वप्रसङ्ग इति भावः ।

(वे टि) तत्त्वमस्यादिवाक्यस्याखण्डार्थताया परिशेषमपि प्रमाणयितु तावत्प्रसक्तप्रकारान्प्रतिषेधति ॥ **किञ्चेत्यादिना** ॥ **समानाधिकरणत्वात्** भिन्नप्रवृत्तिनिमित्तकैकविभक्तिकशब्दत्वात् ।

ननु तर्हि समानाधिकरणत्वादभेदविशिष्टमेव बोध्यं स्यादित्यत आह ॥ **नापीति** ॥ किं चैतन्याभेदविशिष्ट बोध्यते किं वा तत्त्वंपदार्थाभेदविशिष्टमिति विकल्प मनसि निधायाऽद्यं दूषयति ॥ **स्वरूपेति** ॥ द्वितीय दूषयति ॥ **तच्छब्देति** ॥ अभेदस्येत्यनन्तर त्वंपदार्थ इति शेष ॥ **विरुद्धत्वेनेति** ॥ सार्वज्ञ्यादिविशिष्टेन तत्पदमुख्यार्थेन किञ्चिज्ज्ञत्वादिविशिष्टत्वपदमुख्यार्थाभेदस्य विरुद्धत्वेनेत्यर्थ । एवं प्रसक्तप्रकारान्प्रतिषिध्य परिशिष्यमाणमाह ॥ **अत इति** ॥ **स्वार्थैकदेशत्यागलक्षणयेति** ॥ सर्वज्ञत्वासर्वज्ञत्वविशिष्टचैतन्य हि तत्त्वपदयो स्वार्थ । तत्र सर्वज्ञत्वासर्वज्ञत्वरूपस्वार्थैकदेशत्यागेनोभयत्र विशेष्यभूतचिन्मात्रलक्षणयेत्यर्थ ॥ **भेदभ्रमव्युदासद्वारेणेति** ॥ भेदभ्रमव्युदासरूपप्रयोजनेनेत्यर्थ. ।

प्रतिकूलतर्कपराहतिं परिहरति ॥ **अत एवेति** ॥ सर्वज्ञत्वादिविशिष्टरूपवाच्यार्थभेदाद्भेदभ्रमव्युदासरूपप्रयोजनसद्भावाच्चेत्यर्थ । एतदेव दृष्टान्तमुखेनोपपादयति ॥ **यथेति** ॥ अनेन वक्ष्यमाणानुमाने दृष्टान्ते साध्यवैकल्यशङ्कापरिहारोऽपि सूचित इति मन्तव्यम् ॥ **देवदत्तस्वरूपमात्रेति** ॥ अत्रापि तत्त्वमसीत्यत्रेव देवदत्तस्य गौ इत्यादिवद्विशिष्टार्थनासम्भवादिति भाव ॥ **विशिष्टेति** ॥ तत्तेदन्ताविशिष्टदेवदत्तस्वरूपाभिधानद्वारेणेत्यर्थ ॥ **भागत्यागेति** ॥ तत्तेदन्ताविशिष्टरूपतदिदंपदमुख्यार्थैकदेशत्यागेन विशेष्यभूतदेवदत्तस्वरूपमात्रलक्षणयेत्यर्थ । परिशेषस्याप्यनुमानत्वात्प्रयोगप्रकार दर्शयति ॥ **अत्रापीति** ॥ अत्रापि प्रतिज्ञाया पूर्ववत्प्रयोजनमनुसन्धेयम् ॥ **अकार्यकारणेति** ॥ अकार्यकारणद्रव्यमात्रनिष्ठत्वे सतीत्यर्थ । मृद्घट नीलमुत्पलं देवदत्तस्य गौ. इत्यादिवाक्येषु व्यभिचारवारणाय क्रमेण विशेषणानि ।

(द्वै द्यु) **वेदान्तवाक्यप्रवृत्तिः** प्रवर्तमान वेदान्तवाक्यमित्यर्थ । 'कृदभिहितो भावो द्रव्यवत्प्रकाशते' इति वचनमनुरुद्ध्य निःश्रेयसमिति गौरीकान्तीये व्याख्या कृता तद्वत्प्रकृतेप्यनुसन्धेयम् ।

[1]यद्वा प्रवृत्ति शक्ति। पदार्थपरा वाक्यार्थपरेत्यस्य तद्बोधनिर्वाहिकेत्यर्थ । **वेदान्तेति** प्रकृताभिप्रायकम्'। लोकेऽपि तथाविधवाक्यद्वयस्य सत्त्वात्तस्यापि वक्ष्यमाणरीत्या अखण्डार्थत्वाच्च ॥ **पदार्थेति** ॥ यन्महावाक्यीयपदार्थ-

---

[1]यद्यपि कृदभिहित इत्यस्य नव्यैरित्थमर्थो वर्ण्यते 'कृदभिहितो भाव. भावकृदन्तपदबोध्यो धात्वर्थः द्रव्यवत् लिङ्गसङ्ख्यान्वयप्रयोजकरूपविशिष्टार्थकघटादिपदबोध्यार्थवत् लिङ्गसङ्ख्यान्वयोपयोगिरूपवत्तयेति यावत् । प्रकाशते तत्पदेन बोध्यत इत्यर्थ । पच् इत्येतावन्मात्रेणोपस्थापिते 'पाकः कीदृश ' इति लिङ्गसङ्ख्यान्वयाकाङ्क्षा न जायते । पाक इत्यादि पदेनोपस्थापिते च सा आकाङ्क्षा जायत इत्यनुभवसिद्धम्' इति । तथा चैतद्वचनस्य प्रकृतोपयोगो न दृश्यते । तथापि कृदभिहितो भावो भावकृदन्तप्रातिपदिकबोध्यो धात्वर्थ द्रव्यवत् उपकुम्भमित्यादिसमासघटकीभूतकुम्भादिपदार्थवत् प्रकाशते पूर्वपदार्थे भेदसम्बन्धेन विशेषणतया भासते इति प्राचीनोपदेशपरम्परासिद्धार्थमुक्तवचनस्यानुसृत्योक्तवचनोदाहरणमित्यदोष ।

(द्वै सु.) योर्भेदबुद्ध्या विरोधित्वे सति तन्महावाक्यीयपदार्थरूपाखण्डार्थकं यत् तत्तन्महावाक्यीयपदार्थनिष्ठम् । यन्महावाक्यार्थबोधोपयोगिपदार्थबोधपर्यवसायि यत् तत्तन्महावाक्यीयपदार्थपरमिति यावत् तस्यात्मतादात्म्यरूपेति पदार्थयोर्भेदाभावोपलक्षितस्वरूपेत्यर्थ ॥ वाक्यार्थेति ॥ यन्महावाक्यीयपदार्थयोर्भेदबुद्धिविरोधि तत्तन्महावाक्यार्थरूपाखण्डार्थक तन्महावाक्यार्थपरम् । अखण्डार्थबोधान्तराननुकूलाखण्डार्थबोधतात्पर्यकमिति यावत् । तत्त्वमसीति महावाक्यम् । तद्घटकतत्पदार्थभूतब्रह्मस्वरूपपर सत्य ज्ञानमनन्तमित्यादिवाक्यं त्वंपदार्थभूतजीवस्वरूपपर च योऽय विज्ञानमय प्राणेषु हृद्यन्तर्ज्योति पुरुष इत्यादिवाक्यं बोध्यम् । तावदिति महावाक्यस्याखण्डार्थकत्वं पश्चात्साधयिष्यत इत्याशयेन तावदिति ॥ अखण्डार्थनिष्ठमिति ॥

नन्वेतदयुक्तम् । अखण्डार्थनिष्ठत्वस्वरूपस्यैव पूर्वं निरस्तत्वेन तत्स्वरूपसिद्धे प्राक् तस्य किञ्चिद्धर्मिवृत्तित्वे सशयानुदयेनाजिज्ञासितत्वेन धर्मिविशेषनिष्ठत्वेन तत्साधनायोगात् । न च निर्विशेषार्थबोधकत्वरूपद्वितीयकल्पे दूषिते न पक्षव्यवस्थापनार्थमेवोत्तरग्रन्थस्य प्रवृत्तत्वान्नोक्तासङ्गतिरिति वाच्यम् । तथा सत्युत्तरत्रानुमाने प्रकृष्टप्रकाशवाक्यस्य दृष्टान्तीकरणासङ्गते । ब्रह्मातिरिक्तस्य निर्धर्मकत्वाभावेन निर्विशेषार्थबोधकत्वरूपसाध्यवैकल्यापत्तेरिति चेन्न । यतो निर्विशेषार्थकत्व नाम वस्तुतो यन्निर्विशेष तदर्थकत्वमिति न । तथात्वे तत्स्वरूपस्यैवाद्वैतवाद्यतिरिक्तानामसिद्ध्या तद्दूषणं विहाय पर्यायत्वादिदूषणदानानौचित्यापत्ते । किन्तु निर्विकल्पकबोधजनकत्वस्य नैयायिकैरिन्द्रियादिष्वभ्युपगतत्वेन सम्भवदुक्तिकत्वात् विशेषविनिर्मोकेणार्थबोधकत्व किञ्चिद्धर्माप्रकारकबोधजनकत्वमिति यावत् । इत्थ च सत्यज्ञानादिवैदिकपदाना अमुख्यवृत्त्याश्रयणस्य विना बलवद्बाधकमयोगान्मुख्यवृत्त्यैव बोधकत्व सिद्धवत्कृत्य मुख्यवृत्तिपक्षे पर्यायत्वापादन पूर्वं कृतम् । तत्पक्ष एव लक्षणाश्रयणादिना पूर्वोक्तदोषमुद्धर्तुं 'अथ मतम्' इत्यादिग्रन्थ आरभ्यते । तत्र लक्षणाश्रयणे बीजाभाव पराभिप्रेत निराकर्तुं ब्रह्म विदाप्नोति परमित्यादिना तदुपपाद्यत इति न सन्दर्भविरोध ।

ननु सामान्यतो निष्प्रकारकधीजनकत्व नाखण्डार्थकत्व वक्तु युक्तम् । परानभिप्रेतत्वात् । तथा हि, अद्वैतसिद्धिपूर्वपक्षभागव्याख्यावसरे अपर्यायशब्दाना प्रातिपदिकार्थमात्रपर्यवसायित्वरूपलक्षणस्य शीतोष्णस्पर्शवन्तौ पय पावकाविति वाक्यस्य लक्ष्यत्वमभ्युपेत्याद्वैतचन्द्रिकायां 'वस्तुत समुदितवाक्येपि लक्ष्यत्वम् । लक्षणस्थमात्रपदस्य विशेषणीभूतपदार्थान्तरव्यवच्छेदपरत्वेन पदार्थान्तराविशेषणकनामार्थधीपर्यवसायित्व लक्षणं सम्भवतीति बोध्यम्' इत्युक्तम् । तेन ज्ञायते पय पावकाविति समासार्थभूतद्वित्वविशिष्टपयस्त्वपावकत्वाद्यवच्छिन्नमात्रविषयक शीतोष्णस्पर्शवत्पदार्थाप्रकारकबोधस्तादृशसमुदितवाक्याज्जायत इति । एव सिद्धान्तभागे 'श्यामो युवा लोहिताक्ष औपगव ' इत्यौपगवलक्षणवाक्ये एकदेशस्था वृक्षा वन चतुरङ्गिणी सेनेत्यादिलक्षणवाक्ये चाव्याप्ति । औपगवपदस्य उपगुपुत्रत्वादिधर्मावच्छिन्नबोधकतया तदर्थबोधकत्वेऽपि नैकार्थमात्रपर्यवसायित्वम् । एवं वनसेनापदानामपि एकदेशस्थितवृक्षाश्वादिसमुदायपरत्वात्' इत्याशङ्क्याव्याप्त्युद्धारार्थं प्रवृत्तस्य 'एकत्व प्रातिपदिकार्थस्यैकधर्मावच्छेदेन वृत्तिविषयत्वमात्रम् । न त्वेकमात्रव्यक्तित्वम् । अतो यौगिकार्थौपगवादिप्रश्नोत्तरे श्यामो-दीर्घो लोहिताक्ष औपगव इत्यादौ अनेकार्थात्मकवनसेनाप्रश्नोत्तरे एकदेशस्था वृक्षा वनमित्यादौ नाव्याप्ति.' इति

(द्वै.चु) मूलस्य व्याख्यावसरे 'वृत्तिविषयत्वं शक्तिलक्षणाकृत्तद्धितसमासानामन्यतमज्ञानाधीनज्ञानविषयत्वम्। तथा च यादृशधर्मविशिष्टस्य शक्त्यादिज्ञानाधीनधीविषयत्वं तादृशयत्किञ्चिद्धर्मविशिष्टभिन्नाविषयकप्रमाजनकत्वं पर्यवसितम्' इत्यभिधाय 'तद्धितान्तेन गोसमीपवृत्त्यपत्यत्वविशिष्टबोधनात्तन्मात्रपर्यवसायिनि श्यामादिवाक्ये नाव्याप्तिः' इत्यभिहितम्। तेनापि ज्ञायतेऽखण्डार्थवाक्येन सप्रकारकबोधो जन्यते। परन्तु स न समभिव्याहृतपदार्थान्तरविषयक इति। तथा च निष्प्रकारकबोधजनकत्वस्याखण्डार्थकवाक्यलक्षणत्वेऽसम्भवोऽव्याप्तिर्वा स्यात्। प्रकृष्टप्रकाशादिवाक्यस्यापि चन्द्रत्वप्रकारकबोधजनकत्वादिति। मैवम्।

यतो यद्यप्युक्तवाक्यपर्यालोचनया सप्रकारकबोधः पराभिप्रेत इति प्रतीयते। तथापि नासौ तस्य परमसिद्धान्तः। तथात्वे सत्यज्ञानादिवाक्येन तत्त्वमस्यादिवाक्येन च ब्रह्मत्वरूपैकधर्मावच्छिन्नमात्रविषयकबोधजननेपि तस्याखण्डार्थकत्वानपायेन वेदान्तानामखण्डार्थकत्वानुरोधेन निर्विशेषब्रह्मसिद्ध्यभावप्रसङ्गात्। औपगवादिस्वरूपमात्रप्रश्नोत्तरीभूतौपगवादिलक्षणवाक्येन यद्यौपगवत्वादिप्रकारकबोधस्तदा किमपराद्धं श्यामत्वादिधर्मभानेन। औपगवत्वादिधर्मभानेऽप्यजिज्ञासिताभिधायकत्वदोषतौल्यात्। अतस्तद्वाक्येनाप्यौपगवादिस्वरूपमात्रावगाही निष्प्रकारक एव बोधो जायते। एवं वनसेनादिलक्षणवाक्यादपि एकदेशस्थनानावृक्षस्वरूपमात्रविषयक एव बोधो जायत इति तत्सिद्धान्तः।

अत एवाद्वैतचन्द्रिकायां 'वस्तुतः श्याम इत्यादेरौपगवादिस्वरूपमात्रप्रश्नोत्तरत्वेन तन्मात्रविषयकत्वसम्भवात्तद्धितादिपदस्य तत्स्वरूपमात्रलाक्षणिकत्वान्न यौगिकार्थमात्रविषयकत्वम्। एकदेशेत्यादेरपि वनादिपदलक्षितनानावृक्षस्वरूपमात्रविषयकत्वम्' इत्याद्यभिधाय 'तथा च शक्तिलक्षणान्यतररूपा लक्षणा वा या एका नाम्नो वृत्तिस्तज्ज्ञानजन्यस्मृतिविषयान्याविषयकप्रमाजनकत्वं लक्षणं सम्भवति' इति ग्रन्थेनैकप्रातिपदिकार्थपर्यवसायित्वरूपलक्षणं परिष्कृत्य सप्रकारकबोधमुपादाय लक्षणं परिष्कुर्वतो मूलकारस्याभिप्रायविशेषम् 'आचार्याणां श्यामेत्यादेः' इत्यादिग्रन्थेनाभिधाय तदीयोत्तरग्रन्थानुसारेण तस्यापि शुद्धस्वरूपमात्रबोधकत्वमखण्डार्थवाक्यानामभिमतमित्यभिप्रेत्य 'अत एव' इत्यादिग्रन्थेन तद्ग्रन्थसम्मतिरुक्ता।

उदाहृताद्वैतचन्द्रिकापरिष्कृतलक्षणवाक्ये विशिष्टनिष्ठशक्त्यापि सहकारिवशाद्विशेष्यमात्रबोधो जायते। अतश्चन्द्रादिपदशक्त्यैव चन्द्रादिस्वरूपमात्रबोध इत्याशयेन शक्तेर्ग्रहणम्। यत्र विशेष्यवाचकपदं निरूढलाक्षणिकं यथा 'पीलु स्वासाधारणधर्मयुक्तम्' इति वाक्यस्थपीलुपदं पीलुवृक्षजन्यत्वरूपशक्यसम्बन्धेन फलरूपार्थे, तत्स्थलानुरोधेन लक्षणाया ग्रहणम्। 'विशिष्टशक्तिस्थले विशेष्यबोधो लक्षणयैवेति पक्षे लक्षणा वा' इत्युक्तमिति ध्येयम्। उक्ताखण्डार्थकत्वमभिप्रेत्यैवोक्तं कल्पतरौ

अविशिष्टमपर्यायानेकशब्दप्रकाशितम्।
एकं वेदान्तनिष्णाता अखण्डं प्रतिपेदिरे॥ इति।

अत्र यद्यप्यखण्डार्थस्वरूपमुक्तं तथापि तेन तत्प्रतिपादकत्वमेव लक्षणमभिप्रेतमिति सिद्धम्। अत्र प्रका-

(द्वै द्यु) रतास्त्व नाखण्डो धर्म परेषाम्। किन्तु भासमानवैशिष्ट्यप्रतियोगितात्वादिकम्। तथा च संसर्गघटितत्वा-त्प्रकारताया लाघवात्ससर्गाविषयकबोधजनकत्वमखण्डार्थत्वमिति निष्कर्षस्तै. कृत। तथा चोक्त परकीयतत्व-प्रदीपिकाख्यग्रन्थे

संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम्।
उक्ताखण्डार्थता यद्वा तत्प्रातिपदिकार्थता॥

इति। कल्पतरावेकमित्यनेनैकप्रातिपदिकार्थत्वरूप यद्वीत्यन्तरेणाखण्डत्वं निरुक्त तल्लक्षलक्षणबोधक यद्वा। तत्प्रातिपदिकेत्यादि। अत्र ससर्गाविषयकप्रमाजनकत्वं लक्षण चेत् 'अप्राप्तयो प्राप्ति संयोग.' इति सयोग-लक्षणवाक्येऽव्याप्ति। न च पदसारितातिरिक्तससर्गागोचरप्रमाजनकत्व तत्। सर्वेषामपि ससर्गाणा पदसारितत्वेन पदसारितातिरिक्तससर्गाप्रसिद्धे.। नापि स्वघटकपदसारितातिरिक्तेत्यादि। 'स्वत्वस्याननुगतत्वेन पक्षदृष्टान्तयो-रेकधर्मावच्छिन्नसाध्यानिर्वाहः' इति तत्र तत्र वदतस्तवोक्तरीत्या साध्यपरिष्कारायोगात्।

ननु नञ्व्यत्यासेन स्वघटकपदसारितातिरिक्तससर्गगोचरप्रमाजनक यद्यत्तद्भेदकूटवत्त्व लक्षणमभिमतम्। घटमानय नीलोत्पलम् इत्यादिवाक्येषु स्वघटकपदानि यानि तत्सारितार्था घटादयस्तदन्यससर्ग कर्मत्वानयनयो· ससर्गो नीलोत्पलयोरभेदससर्गश्च तद्विषयकप्रमाजनकत्वसत्त्वात्तानि प्रतियोगिकोटिप्रविष्टानि। न प्रकृष्टप्रकाशादि-वाक्यानि। तेषां चन्द्रस्वरूपातिरिक्तानवगाहिबोधजनकताया अग्रे व्यवस्थापयिष्यमाणत्वात्। अतस्तेषु तत्तद्भेद-[1]कूटसत्त्वोपलक्षणसमन्वयसङ्गतिरिति। मैवम्। घट कर्मत्वमानयनमिति निराकाङ्क्षवाक्येऽतिव्याप्ते.। शाब्दबोध-जनकत्वाभावेन प्रतियोगिकोट्यनिविष्टत्वात्। न च ज्ञानजनकत्वमपि विशेष्यदल विवक्षणीयमिति वाच्यम्। तस्यापि ज्ञायमानलिङ्गविधया स्वप्रयोक्तृपुरुषानुमितिजनकत्वात्। विषयविधया स्वप्रत्यक्षजनकत्वाच्च। न च शाब्दजनकत्व विवक्षणीयमिति वाच्यम्। तेनापि योग्यताभ्रमेणाभेदान्वयबोधजननात्। तस्य प्रमाजनकत्वाभावेन प्रतियोगिकोट्यप्रवेशाच्चातिव्याप्ते। न च विशेष्यदले शाब्दपद प्रमापरमस्त्विति वाच्यम्। प्रमापदस्य सर्वथा बाध्यत्वशून्यविषयकार्थकत्वे प्रकृष्टप्रकाशादिवाक्येऽव्याप्त्यापत्ते.। व्यवहारकालबाध्यार्थविषयकार्थकत्वे तु 'अविद्यातिरिक्तदोषप्रयुक्तभानक प्रातिभासिकम्' इति प्रातिभासिकलक्षणवाक्येऽव्याप्ति। तद्वाक्यजन्यप्रातिभा-सिकस्वरूपमात्रावगाह्यखण्डार्थबोधस्योक्तप्रमात्वाभावात्। न च तदलक्ष्यमेवेति वक्तु युक्तम्। स्वघटकपदार्थयोः परस्परभेदबुद्धेरनाहार्यत्वेन तद्विरोध्यखण्डार्थबोधजनकत्वात्। 'शुक्तिरजतादिक नास्ति' इति वाक्यस्येवैतस्यापि प्रमाणत्वेनैव लोकव्यवहारगोचरत्वेन 'घट· कलशः' इत्यादिवाक्यस्येव अलक्ष्यत्वे बीजाभावात्।

ननु तर्हि त्यज्यतां प्रतियोगिकोटावपि प्रमात्वेन निवेशः। तावतापि घट. कर्मत्वमिति वाक्येऽतिव्याप्तेः प्रातिभासिकलक्षणवाक्ये चाव्याप्तेश्च निरासो भवति। न च ससर्गासङ्गिसम्यग्धीत्युक्तिविरोध.। तेन प्रमात्वेन

---

1 सत्त्वाल्लक्षणसमन्वय इति पाठेन भाव्यमिति भाति।

(द्वै.द्यु)निवेशप्रतिपादनादिति वाच्यम् । सम्यक्पदस्योक्तभेदविरोध्यर्थकतया घट कलश इति वाक्यवारणार्थत्वात् । घटः कलश इति वाक्ये घटत्वमात्रनिर्विकल्पकशाब्दस्य जातिशक्तिवादिमते जननेऽपि घटत्वे घटत्वभेदबुद्धेराहार्यत्वेन तद्विरोधित्वाभावेन तस्याखण्डार्थकवाक्यलक्षणलक्ष्यतायास्तान्त्रिकैरनङ्गीकृतत्वात् । न च तर्हि 'अपर्यायशब्दाना ससर्गगोचरप्रमाजनकत्वम्' इति भवदीयलक्षणेऽपर्यायशब्दाना इत्यस्य वैयर्थ्यापात । भवदुक्तप्रमात्वेन निवेशादेव तद्वारणादिति वाच्यम् । उक्तसम्यग्धीपदस्यैवोक्तक्रमेणापर्यायशब्दानामित्येतन्निवेशतात्पर्यग्राहकत्वाभ्युपगमादिति चेन्न । एवमप्युक्ताद्वैतसिद्धीयलक्षणवाक्ये प्रमापदापर्यायशब्दपदयोरन्यतरवैयर्थ्यस्य दुर्वारत्वात् ।

एतेन 'प्रमापदं स्वनिवर्त्याज्ञानविषयविषयकशाब्दपरम् । प्रातिभासिकलक्षणवाक्यजाखण्डबोधेनापि निवर्तनीय किञ्चिदज्ञान स्वीक्रियत एव । अतस्तत्र नाव्याप्ति । घट कर्मत्वमिति वाक्यजन्यशाब्दस्याविद्यावृत्तिरूपतयाऽविद्यानिवर्तकत्वाभावान्नातिव्याप्ति' इत्यपि निरस्तम् । घट· कलश इति वाक्यजन्यबोधस्याज्ञानानिवर्तकतायास्तथापि सिद्धत्वेनापर्यायशब्दानामित्यस्य वैयर्थ्यापरिहारात् ।

किञ्च स्वत्व प्रतियोगिकोटावनुयोगिकोटौ वा कामं निवेश्यताम् । तथापि ससर्गपदवैयर्थ्यं दुर्वारम् । पदसारितातिरिक्तस्य संसर्गस्यैव शाब्दबोधे भानेन संसर्गत्वेन तन्निवेशानर्थक्यात् । न चास्तु तथैव । ससर्गपदेन प्राचीनैरुपात्तेनैतादृशार्थो लभ्यत इति सूचनार्थत्वमात्र तस्येति वाच्यम् । तथापि 'सांसर्गिकविषयतावान् सम्बन्ध' इत्याकारे विशिष्टार्थतात्पर्यकवाक्येऽतिव्याप्ति. । तज्जन्यबोधविषयीभूतपदार्थद्वयसंसर्गाणामपि पदसारितातिरिक्तत्वाभावात् । न हीदं ससर्गलक्षणपरत्वेन कदाचिदुक्तमपि विशिष्टार्थबोधतात्पर्येण न प्रयोक्तव्यमिति राज्ञामाज्ञाऽस्ति । आग्रहकरणेपि सम्बन्धसामान्यं प्रमेयरूप सर्वप्रमेयविषयकज्ञानविषयीभूतमिति वाक्ये प्रतियोगिनि स्वत्वनिवेशपक्षेऽतिव्याप्ति । स्वघटकपदसारितातिरिक्ताप्रसिद्ध्या स्वपदेनोपादानासम्भवात् । अनुयोगिनि स्वत्वनिवेशपक्षेऽपि तादात्म्यसामान्य सम्बन्ध इति वाक्येऽतिव्याप्तिरेव । सम्बन्धत्वस्य संयोगादिसाधारणतया अलक्षणतयोक्तस्य लक्षणवाक्यत्वाभावेनेष्टापत्तेरयोगात् । पदार्थोऽभिधेय इति पदार्थसामान्यलक्षणवाक्ये अनुयोगिनि स्वत्वनिवेशपक्षेऽव्याप्तिश्च । स्वघटकपदसारितातिरिक्ताप्रसिद्धेरिति ध्येयम् ।

यदप्यपर्यायशब्दानामेकप्रातिपदिकार्थमात्रपर्यवसायित्वलक्षण पूर्वोदाहृतेन 'एका या नाम्नो वृत्ति' इत्यद्वैतचन्द्रिकावाक्येन निष्टङ्कितम् तदप्यकिञ्चित्करम् । वृत्तिपदस्य शक्तिलक्षणान्यतरपरत्वपक्षे सम्बन्ध तादात्म्यमित्यादिके विशिष्टपरवाक्येऽतिव्याप्ते । असम्बन्धत्वेनापि तादात्म्यस्यैव प्रकारतया भानात्ससर्गतयापि तस्यैव भानात्सम्बन्धत्वस्यापि किञ्चित्तादात्म्यरूपत्वेन तादात्म्यपदशक्तिसारितातिरिक्तागोचरप्रमाजनकत्वस्याव्याहते । न चोक्तरीत्या सर्वेषामपि किञ्चित्तादात्म्यरूपतया तदतिरिक्ताप्रसिद्धिरिति वाच्यम् । अवृत्तिगगनशशविषाणादीनामेव तथाभूताना प्रसिद्धेः । सम्बन्धत्वादेव तादात्म्यरूपत्वानङ्गीकारेऽपि यत्रोद्देश्यबोधक विधेयतत्संसर्गघटितधर्मावच्छिन्नलक्षणातात्पर्येणोच्चारितं तादृशोद्देश्यविधेयबोधरूपविशिष्टार्थबोधपरवाक्यसामान्येऽतिव्याप्ते । तद्बोधस्योद्देश्यबोधकनामनिरूपितलक्षणारूपैकवृत्त्युपस्थापितातिरिक्ताविषयकत्वात् । न च स्वघटकनामपदनिरू-

(द्वे ष्टु) पितैकवृत्तिग्रहाधीनैकस्मृतिप्रयोज्यबोधजनकवाक्यत्वमिति तस्य निष्कर्षः। अखण्डार्थकवाक्यस्थले नामार्थद्वयस्य प्रकारविशेष्यविधया भानोत्तरं वक्ष्यमाणरीत्या बाधग्रहेण वा तात्पर्यानुपपत्त्या वा पुनर्यत्किञ्चित्पदलक्षणाग्रहाधीनैकस्मृत्यैकप्रातिपदिकार्थमात्रविषयकबोधो जन्यत इति तद्बोधमादायैव लक्षणसङ्गतिः। न च पदानां बहूनां सत्त्वादेकपदलक्षणाधीनैव स्मृतिः कारणमित्यत्र मानाभावः। समानाकारानेकस्मृतीनामेकमात्रवस्त्ववगाहिशाब्दसामग्रीनिवेशे गौरवादेकपदलक्षणाया आवश्यकत्वे विशेष्यबोधकपदस्यैव प्राधान्याल्लक्षणाङ्गीकारात्। उक्तविशिष्टार्थपरवाक्यस्थले वाक्यघटकपदद्वयाधीनस्मृतिद्वयघटितसामग्र्यैव शाब्दबोधोदयात्तत्र नातिव्याप्तिः। स्मृतावेवैकत्वविवक्षणे यत्र नामपदद्वयाधीनैकसमूहालम्बनस्मृत्या विशिष्टार्थबोधः तत्रातिव्याप्तिः स्यादतो वृत्तावेकत्वनिवेशः। उक्तसमूहालम्बनस्मृतेर्वृत्तिद्वयग्रहाधीनत्वान्न दोषः।

स्मृतावेकत्वनिवेशे प्रत्येकं पदद्वयेनैकवृत्त्या जातस्मृतिद्वयघटितसामग्र्या विशिष्टार्थबोधकवाक्येऽतिव्याप्तिः स्यादिति तन्निवेश इति वाच्यम्। यत्र विषं भुंक्ष्वेति वाक्यजन्यबोधोत्तरं तत्र विरोधग्रहेण तद्वाक्यघटकैकपदमात्रलक्षणया 'द्विषदन्नं न भोक्तव्यम्' इति विशिष्टार्थावगाही जातस्तत्रातिव्याप्तेः। न हि तद्घटकैकपदवृत्तिमात्रग्रहाधीनैकविशिष्टविषयकस्मृतिसहकृतोक्तवाक्येन तद्वाक्यतात्पर्यविषयीभूतोक्तधीर्न जन्यते। अखण्डार्थपरवाक्येन तु जन्यत इत्यत्र त्वद्वाक्यातिरिक्तं किञ्चिन्नियामकमस्ति येनोक्तातिव्याप्तिर्न स्यात्। न च विशिष्टविषयकस्मृतेरेकेनैव पदेन जनने शाब्दबोधस्यापूर्वार्थावगाहित्वाभावप्रसङ्गात् तद्घटकपदद्वयस्य पृथगर्थद्वयलक्षणामङ्गीकृत्य तत्र शाब्दबोध उपपादनीय इति वाच्यम्। प्रकृष्टप्रकाशादिवाक्यस्थलेऽपि चन्द्रमात्रविषयकस्मृतेः पूर्वमावश्यकत्वे तत्राप्यपूर्वार्थबोधकत्वप्रसङ्गात्। तत्र चन्द्रस्मृतिं पूर्वमनङ्गीकृत्याभिहितान्वयवादिमते वक्ष्यमाणरीत्या स्वरूपसत्या एवाज्ञाताया वाक्यलक्षणाया बोधकत्वमभ्युपेत्य चन्द्रादिस्वरूपमात्रावगाहिबोधाङ्गीकारे त्वदीयलक्षणस्यासम्भव एव स्यात्। स्मृत्यघटितसामग्र्या शाब्दबोधजनकत्वं चेद्विलक्षणं निरुच्यते तदोक्तरीत्या विषं भुङ्क्ष्वेति वाक्येऽतिव्याप्तिरपरिहार्यैव।

ननु वाक्यजन्यप्रमाया विषयतासम्बन्धेनाज्ञानं सामान्यसामग्री। अत एवानुवादवाक्यात्स्मृतिरेव जायते। न शाब्दधीः। तथा चाज्ञाननिवर्तकबोधजनकत्वमेव प्रमाणवाक्यं आवश्यकम्। स्मृतेश्चाविद्यावृत्तित्वेनाज्ञानानिवर्तकतया चन्द्रस्वरूपविषयकाज्ञाननिवृत्त्यर्थं चन्द्रस्मृत्युत्तरमपि तच्छाब्दं आवश्यकं इति चेन्न। विषं भुंक्ष्वेति वाक्यस्थलेऽपि तथैव सम्भवेन पूर्वोक्तातिव्याप्तेर्दुर्वारत्वात्। तद्बोध्यार्थस्य विशिष्टरूपत्वेऽपि तद्बोध्यपदद्वयलक्षणाश्रयणस्य गौरवादेव परित्यागात्। तस्माद्ब्रह्मानन्दोक्तलक्षणमयुक्तमेवेति।

यद्यपि स्वघटकयत्किञ्चिन्नामपदजन्यस्मृतिविशेष्यमात्रविषयकबोधजनकत्वमत्र सुवचम्। विषं भुङ्क्ष्वेत्यादिविशिष्टपरवाक्यैर्विशेष्यस्वरूपमात्रावगाहिबोधानुदयान्नातिव्याप्तिः। नन्वभिधेयः पदार्थ इति पदार्थलक्षणवाक्ये अव्याप्तिः। पदार्थमात्रस्य स्मृतिविषयतया तदन्याप्रसिद्धेः। वस्तुतोऽभिधेयभेदाप्रसिद्धावपि निरूप्यनिरूपकभावापन्नविषयताशाल्यभिधेयभेदभ्रमस्यानाहार्यस्य प्रसिद्ध्या तद्विरोधिबोधजनकस्यास्याखण्डार्थवाक्यलक्षणालक्ष्यत्वे

(द्वै द्यु.) बीजाभावात् । एवं ध्वंसादिरूपकिञ्चिद्वस्तुभिन्ननिखिलप्रमेयार्थकसर्वनामपदघटिते वा तादृशसाङ्केतिकनामघटिते वा स प्रमेय इति वाक्येऽतिव्याप्तिश्च । तद्वाक्यजन्यविशिष्टावगाहिबोधस्यापि तादृशविशेष्यवाचकपदस्मारितातिरिक्ततादृशध्वंसादिरूपवस्त्वनवगाहित्वात् । प्रमेयत्वेनापि प्रकारकोटौ विशेष्याभिन्नव्यक्तीनामेव स्फुरणात् । अन्यथा तस्याप्रमात्वापत्तेरिति चेन्न । स्वघटकयत्किञ्चिन्नामपदनिरूपितवृत्तिमात्रग्रहाधीनैकस्मृतिघटितसामग्र्यधीनतादृशस्मृतिविशेष्यताव्याप्यस्वविषयतात्वावच्छिन्नकबोधजनकत्वमिति विवक्षणेनोक्तदोषवारणात् ।

विशिष्टार्थबोधकवाक्यजन्यबोधसामग्रीकोटौ पदद्वयवृत्तिग्रहाधीनभिन्नस्मृत्योः समूहालम्बनैकस्मृतेर्वा घटकत्वेऽप्युक्तैकस्मृतिमात्रस्याघटकत्वान्नातिव्याप्तिः । विषं भुङ्क्ष्वेति वाक्यजन्यबोधस्थले उक्तरीत्यैकस्मृतेर्निवेशाङ्गीकारेऽपि फलीभूतबोधीयविषयताया प्रकारतारूपायास्तत्प्रकारे सत्त्वेऽपि तादृशस्मृतिविशेष्यतायास्तत्राभावेनोक्तव्याप्यताभङ्गादेव नातिव्याप्तिः । व्याप्तिश्च स्वव्यापकसत्ताकत्वमेवेति न पदार्थलक्षणवाक्येऽव्याप्तिः । घटः कलश इति वाक्यजन्यबोधसामग्री यदि स्मृतिघटिता तदा पदद्वयवृत्तिग्रहाधीनस्मृत्योरेवैकस्मृतेर्वा निविष्टत्वान्नातिव्याप्तिः । तत्रैकमात्रपदवृत्तिग्रहाधीनस्मृतेरेव तत्र सामग्रीशरीरनिवेशे पदद्वयघटितवाक्यस्य तत्र कारणताया निर्युक्तिकत्वापातात् । अखण्डार्थकवाक्यस्थले तु द्वारीभूतबोधस्य स्वस्वार्थस्मृतिद्वारा समस्तपदैर्जननानन्तरं तात्पर्यवशात्तद्घटकैकनामपदाधीनस्मृतिसहकृततादृशवाक्येनैवाखण्डार्थावगाहिबोधोत्पत्तेर्विशिष्टवाक्यस्य तत्र कारणत्वं युक्तमेव । अन्यथा मध्यवृत्तिबोधस्य द्वारत्वानुपपत्तेः । अतोऽत्रापर्यायशब्दानामिति न देयमेव । उक्तार्थतात्पर्यग्राहकतया तस्योपयोगः । एवं सांसर्गिकविषयताशून्यशाब्दधीजनकतावच्छेदकं यत्पदोत्तरयत्पदत्वं तत्त्वमखण्डार्थत्वमिति संसर्गागोचरत्वघटितलक्षणमपि सुवचम् ।

घटः कलश इत्यादेः उच्चैर्नीचैः इत्यादेश्च मिलित्वैकार्थबोधकत्वे स्वपर्यायशब्दघटितत्वं वक्तव्यम् । तथाप्युक्तैकस्मृतिघटितसामग्र्या आद्यस्य तद्रीत्यैव वक्ष्यमाणरीत्या परमतेऽप्यभावात् । सांसर्गिकविषयताशून्यबोधस्य चाग्रे निराकरिष्यमाणतया लक्षणलक्ष्यस्वरूपाप्रसिद्धिरेव दोषोऽनुसन्धेयः ।

न किञ्चिद्विदितं कृष्ण त्वयेत्थं येन मां प्रति ।
त्वदृशा न मया ज्ञातेत्युच्यते सत्यवादिना ॥

इति श्लोकेऽतिव्याप्तिश्च । अत्र पाञ्चाल्या कुरुराजापकृतया कृष्णं प्रति भ्रातृत्वसम्बन्धमनुस्मरन्त्या सकोपमुच्यते । विपरीतलक्षणया तच्छ्लोकेन त्वया सर्वं ज्ञातमित्यर्थोऽवगम्यते । अतस्तज्जनकलक्षणाधीनस्मृतिविशेष्यताव्याप्यत्वस्योक्तशाब्दविषयताया सत्त्वात् । स्मृतौ सर्वस्यापि विशेष्यत्वादिति दिक् ।

तदेतत्सर्वं शिष्यैरेवोह्यतामित्याशयेन ग्रन्थगौरवभयाच्च नाखण्डार्थलक्षणदूषणं विशेषतः प्रदर्शितमिति ध्येयम् ।

अत्र तत्त्वमस्यादिवाक्यसाधारणरूपेण पक्षत्वे वक्ष्यमाणहेतोर्भागासिद्धिः स्यादिति वेदान्तवाक्यं विभज्य वाक्यविशेष एव पक्षत्वेनोररीकृतः । अखण्डार्थनिष्ठं सांसर्गिकविषयताशून्यबोधजनकं एकप्रातिपदिकार्थपर्यवसायि

(द्वै. शु ) वेत्यर्थ.। ब्रह्मस्वरूपमात्रप्रश्नविषयीभूतार्थबोधेच्छाधीनवाक्यत्वरूपब्रह्मप्रश्नोत्तरत्वरूपवक्ष्यमाणहेतुमुपपादयति॥ ब्रह्मविदिति ॥ प्रस्तुतब्रह्मस्वरूपेति ॥ मोक्षहेतुज्ञानविषयत्वेन प्रस्तुतेत्यर्थ । ब्रह्मस्वरूपेतरज्ञानस्य मोक्षाहेतुत्वान्न स्वरूपातिरिक्ते जिज्ञासोचितेति भावः ॥ लक्षणं हीति ॥ लक्षणवाक्यत्वरूपवक्ष्यमाणहेत्वन्तगेपपादनायेदमुदितमित्यवधेयम्। प्रकृष्टप्रकाशश्चन्द्र इति दृष्टान्तवाक्ये हेतुसाध्ये सिद्धवत्कृत्योपपादयति॥ यथा खल्विति॥ पूर्वोक्तं प्रतिकूलतर्कपराहतौ पर्यवसित पर्यायत्वापत्तिदोषमुद्धर्तुमाह ॥ यथा चेति ॥ प्रकर्षादिगुणेति ॥ प्रकृष्टप्रकाशादिगुणसम्बन्धाभिधानद्वारेत्यर्थ ॥ लक्षणयेति ॥ विशिष्टवाक्यस्य वा तद्घटकप्रत्येकपदयोर्वा तद्घटकैकनाम्नो वा यथामतं शुद्धस्वरूपमात्रलक्षणयेत्यर्थ । तत्परत्वात् शुद्धस्वरूपमात्रबोधे परमतात्पर्यशालित्वात् ।

अयमभिप्रायः। अज्ञातचन्द्रस्वरूपमात्र पुरुषस्तत्स्वरूपमात्रजिज्ञासया कश्चन्द्र इति पृच्छति। त प्रति वक्त्रा अज्ञाननिवर्तकतत्स्वरूपमात्रबोधाय वाक्य प्रयोक्तव्यम्। अधिकविषयबोधतात्पर्ये वाक्यस्य पुरुषस्य चाजिज्ञासिताभिधायकत्वाभिधातृत्वरूपौ दोषौ प्रसज्ज्येयाताम्। तादृशफलीभूतबोधो यादृशवाक्य विना न निर्वहति तावत्पदघटितमेव प्रयोक्तव्यम्। केवलं चन्द्र इत्येतावन्मात्रे प्रयुक्ते चन्द्रे प्रकृष्टप्रकाशाश्रयत्वाभावसन्देहविपर्ययनिवृत्तिर्न जायते। स्वरूपविषयकाज्ञानस्यानिवृत्तत्वात्। अत प्रकृष्टप्रकाशादिरूपलक्षणबोधकं वाक्यं प्रयोक्तव्यम्। तेन च चन्द्रे प्रकृष्टप्रकाशादितादात्म्यबोधानन्तर 'अस्य वाक्यस्य नैतावन्मात्रे तात्पर्यम्। आप्तस्य मदजिज्ञासिताभिधायकत्वापत्ते। किन्तु मज्जिज्ञासितस्वरूपमात्रबोधे तात्पर्यम्' इति प्रतिसन्धानेन चन्द्रादिपदलक्षणया स्वरूपमात्रशाब्दो जायते। तस्य स्वरूपविषयकाज्ञाननिवर्तकत्व युज्यते। तादृशतादात्म्यधीद्वारकस्वरूपमात्रबोधत्वेनैवाज्ञाननिवर्तकत्वात्। तथा च तादृशवाक्यघटकपदयोर्न सहप्रयोगानर्हत्वरूपपर्यायत्वप्रसक्तिरिति।

एतेन 'प्रकृष्टप्रकाशपदचन्द्रपदयोर्विभिन्नधर्मावच्छिन्नवाचित्वादेव पर्यायत्वशङ्कानुदयादेतावदुपपादनमकिञ्चित्करम्' इति शङ्कानवकाश। एकमात्रबोधकत्वे एकवाक्ये तदर्थं सहप्रयोगानर्हत्वरूपपर्यायत्वापत्तेरेव निराकृतत्वात्।

दार्ष्टान्तिकेऽपि तद्दोष परिहरति ॥ तथेति ॥ परापरेति ॥ परजाति सत्त्व अपरजातिर्ज्ञानत्वानन्दत्वे तद्वाचिनामित्यर्थ। भट्टमते जातौ शक्त्यङ्गीकारादेवमुक्ति. ॥ शबले गृहीतसङ्गतीनामिति ॥ शबले शक्तिग्रहविषयाणामित्यर्थः। अयं भावः। त्रिकालबाध्यत्वाभाव. सत्स्वरूपनिष्ठस्तत्स्वरूप.। अत. स एव सत्ताजातिरित्युच्यते। तत्र सर्वपदार्थाना तादात्म्येनारोपिततया तस्या. सर्वानुस्यूतत्वेन जातिसाम्यात् जातित्वव्यवहार। तस्य घटादौ वृत्तित्वाभावात् न जातित्वम्। सत्ता च कल्पितधर्मभावाद्ब्रह्मण्येव स्वोपहिते वर्तते। एव प्रमाणजन्यान्त.करणवृत्त्युपहितचिद्व्यक्तिषु ज्ञानत्वजाति.। तादृशोपहितचिद्व्यक्तीना परस्परं स्वसमानसत्ताकभेदवत्त्वेन बहुत्वात्तद्वृत्तिज्ञानत्वस्य जातित्वम्। एवमानन्दत्वजातिरपि विषयसंसर्गजवृत्त्युपहितचित्येव स्वीक्रियते। तथा च तत्तदुपहितचितामेव शबलपदार्थत्वात्तत्र तत्र तच्छब्दशक्तिग्रहो भवति।

(द्वै यु.) तदुक्तं कल्पतरौ 'सत्यत्वादिविशिष्टशबलब्रह्मवाचिनां सत्यादिपदानां शुद्धे ब्रह्मणि लक्षणा' इति। अधिकं दूषणग्रन्थव्याख्यावसरे विवेचयिष्यते । न च सत्यत्वादीनामुपहितवृत्तित्वात्कथं ब्रह्मलक्षणत्वमिति वाच्यम् । उपहितवृत्तेरपि शुद्धवृत्तित्वाङ्गीकारेण सामञ्जस्यादित्याशयात् ।। लक्षणयेति ।। न च सत्यत्वादिधर्माणां शुद्धेऽङ्गीकारेऽन्वयानुपपत्त्यभावात्कुतो लक्षणेति वाच्यम् । निष्प्रकारकबोधतात्पर्येणैवास्य वाक्यस्य प्रवृत्तत्वात्तन्निर्वाहायैव लक्षणा युक्तेति भावः । तथा च सत्यत्वादिविशिष्टबोधानन्तरं वाक्यलक्षणया तद्घटकपदलक्षणया वाऽखण्डार्थबोधोदयो भवतीति भावः ।

ननु तर्हि वाक्यलक्षणापक्षेऽपि वाक्यस्य सत्याद्येकतरपदघटितत्वेऽप्युद्देश्याखण्डबोधनिर्वाहादितरपदोपादानवैयर्थ्यम् । पदलक्षणापक्षे तु सुतरामेकेनैवोद्देश्यसिद्धेः । न च प्रतिपत्तृपुरुषभेदेन तदुपादानमिति युक्तम् । अयं ज्ञानपदेन बोधनीयोऽयं सत्यपदेन बोधनीय इत्यत्र शाखाभेदेन कर्मानुष्ठानभेद इव मानाभावादित्याशङ्कते ।। न चैवमिति ।। लक्ष्यार्थभेदेति ।। लक्ष्यतावच्छेदकस्य वा लक्ष्यवस्तुनो वा भिन्नत्वाभावेऽपीत्यर्थः । तथात्वे फलीभूतबोधे तद्भानार्थमेव पदान्तरमावश्यकं स्यादिति भावः । प्रतिपदमित्यस्य सत्त्वादित्यनेनान्वयः ।। आरोपितेति ।। शून्यवादिनैयायिकादिरीत्याऽनृतत्वाज्ञानत्वानानन्दत्वादेर्ब्रह्मण्यारोपितस्याभावनिश्चयरूपस्य प्रयोजनस्येत्यर्थः । सत्यमेव कस्यचित्पदस्य तद्घटितवाक्यस्य वा लक्षणामात्रेण स्वरूपमात्रावगाहिबोधः उत्पत्तुमर्हति । तथाऽप्येकसत्यपदसत्त्वे सत्त्वरूपविशेषणस्य द्वारीभूतबोधे भानेनानृतव्यावृत्तिनिश्चयसम्भवेऽपि नाज्ञानव्यावृत्तिर्निश्चेतुं शक्यते । एवं ज्ञानपदमात्रसत्त्वेनानृतव्यावृत्तिनिश्चयः स्यात् । अतश्च नासङ्कीर्णब्रह्मस्वरूपसिद्धिः स्यात् । अतस्तत्तद्व्यावृत्तिबोधनिर्वाहकतया द्वारीभूतबोधे तज्ज्ञानार्थं तेषां पदानां सार्थक्यमिति भावः । तादृशव्यावृत्तिधीद्वारकब्रह्मस्वरूपनिश्चयस्यैव ब्रह्मस्वरूपविषयकाज्ञानसंशयादिनिवर्तकत्वात्तदावश्यकमिति भावः ।। यथा चेति ।। नक्षत्रादीति ।। प्रकाशाश्रयत्वमात्रस्य नक्षत्राद्यव्यावर्तकत्वात्तद्व्यावृत्तिधीद्वारकचन्द्रस्वरूपसिद्ध्यर्थं चन्द्रस्वरूपमात्रतात्पर्यकेऽपि वाक्ये यथा न प्रकृष्टादिपदवैयर्थ्यं तथेति भावः ।

इत्थं हि परेषां प्रक्रिया । 'सत्यं ज्ञानम्' इति वाक्येन ब्रह्मविशेष्यकसत्यत्वादिधर्मोपहिततादात्म्यावगाहिनी धीर्जायते । ततो लक्षणवाक्यस्य लक्ष्यस्वरूपमात्रतात्पर्यकत्वनिश्चयबलेन तद्वाक्यघटकसत्यादिपदलक्षणया वा स्वबोध्यसम्बन्धस्यैव लक्षणात्वाङ्गीकाराद्वाक्यलक्षणया वा सत्यत्वज्ञानत्वाद्युपलक्षितस्वरूपमात्रावगाहिशाब्दबोधान्तरं जायते । न च काकेनोपलक्षणेन देवदत्तगृहवृत्त्युत्तृणत्वादिरूपोपलक्ष्यतावच्छेदकधर्मान्तरोपस्थापनावश्यकत्वे कथं स बोधः शुद्धस्वरूपमात्रावगाहीति साम्प्रतम् । धर्मोपलक्षकस्य तथात्वेऽपि स्वरूपोपलक्षकस्य स्वरूपमात्रबोधजनकत्वाभ्युपगमात् । प्रकृष्टप्रकाशादिवाक्ये तथा दृष्टत्वात् । तथा च ब्रह्मपदलक्षणाजन्यान्तःकरणवृत्तिविषयीभूतं चिन्मात्रं तादृशवृत्त्युपहितं लक्ष्यम् । सत्यादिपदलक्षणाजन्यचिन्मात्रविषयकान्तःकरणवृत्त्युपहिता चित् स्वरूपलक्षणम् । लक्ष्यात्यन्ताभिन्नस्यैव स्वरूपलक्षणत्वम् । तद्भिन्नं सलक्ष्यव्यावर्तकं यत्तत्तटस्थलक्षणमित्य-

[1] तस्य व्यवच्छेदस्य अभाव इति पाठेन भाव्यमिति भाति ।

(द्वै. द्यु ) भ्युपगमात् । लक्ष्यलक्षणावगाहिन्यखण्डस्वरूपविषयकबोधेऽप्येकस्यैव ज्ञातत्वेनोद्देश्यस्य अज्ञाननिवर्तक-वृत्तिविषयत्वेन विधेयतापि सङ्गच्छेते । ब्रह्मत्वाद्यवच्छिन्नविशेष्यकसत्यत्वादिवैशिष्ट्यविषयकशाब्दधीद्वारा तादृशवा-क्यजन्यस्वरूपमात्रविषयकशाब्दत्वावच्छिन्नस्यैव स्वरूपमात्रविषयकाज्ञाननिवृत्तिहेतुत्वात् । अखण्डार्थबोधस्याज्ञा-ननिवर्तकत्वात् । उद्देश्यताविधेयत्वे च परस्परं निरूप्यनिरूपकभावापन्ने द्वे । एकस्या एव वा तस्या रूपभेदेन निरूप्यनिरूपकभावः । सर्वथा सांसर्गिकविषयता परं नास्ति । अत्यन्ताभिन्नस्वरूपे संसर्गभानायोगात् । न च किञ्चिन्निरूपितविषयताऽव सांसर्गिकविषयतानिरूपितत्वव्याप्यमिति नियमः । सांसर्गिकविषयतायामेव व्यभिचा-रात् । उक्तस्वरूपलक्षणेन लक्ष्यस्यानृतादीतरभेदानुमितिर्जायते अर्थापत्तिर्वा । तत्प्रकारश्च अनृतादिव्यापका-भावप्रतियोगियुक्तसत्यादिपदजन्यवृत्तिविषयत्ववानयं ब्रह्मपदजन्योक्तवृत्तिविषय इति परामर्शेन ब्रह्मपदजन्यवृत्तिविषयो-ऽनृतादिभिन्न इत्यनुमितिः । अर्थापत्तिस्तु यद्ब्रह्मपदलक्षणाजन्यधीविषयत्वोपहितं तत्रानृतादिव्यावृत्तिं विना तन्निष्ठ सत्यादिपदजन्याखण्डाकारधियोपहितमनुपपन्नमित्युपपत्तिज्ञानेनोक्तानुमितिसमानाकारा जायते । तादृशतादृश-वृत्तिविषयत्वोपहितचिद्ग्रहहेतुपक्षज्ञानं च तादृशवृत्त्युत्पत्त्यनन्तरं तद्ग्राहकसाक्षिणैव भवति । न चाखण्डस्व-रूपबोधोत्तरमुक्तरीत्या व्यावृत्तिधीः किमर्थमपेक्ष्यत इति वाच्यम् । इतरव्यावृत्ततत्त्वपदार्थज्ञानोत्तरमेव महावाक्येन तयोरभेदबोधनेन भेदभ्रमनिरासार्थत्वात् । सर्वत्र लक्षणज्ञानस्य व्यावृत्तिफलकत्वेन क्लृप्तत्वात्प्रकृष्टप्रकाशादि-वाक्येऽपि चन्द्रस्वरूपमात्रबोधोत्तरं तादृशज्ञानविशेषविषयत्वोपहितचन्द्रस्वरूपहेतुनैवेतरव्यावृत्तिधीजननात् । तज्ज्ञानस्य चासङ्कीर्णचन्द्रादिव्यवहारफलकत्वादित्येकः पक्षः ।

…दिवाक्यं अनृतादिव्यावृत्तिज्ञानद्वारा अखण्डार्थबोधं जनयतीति अखण्डार्थबोध एव फलं व्यावृत्तिज्ञानं द्वारम्' इति । उक्तं हि 'सत्ये ब्रह्मणि सत्यादिशब्दा व्यावृत्तिद्वारा पर्यवस्यन्ति' इति । सत्यत्वादिवै-शिष्ट्यस्य ब्रह्मणि बोधोत्तरमनृतादिव्यावृत्तिधीर्ब्रह्मणि जायते सत्यत्वादिहेतुभिरेव । ततस्तद्द्वाराऽखण्डार्थधीर्जायते नन्वेतदयुक्तम् । शाब्दबोधे हि पदतदर्थोपस्थित्यादीनामेव कारणत्वम् । न व्यावृत्तिधिय इति सार्वत्रिकी रीतिः । प्रकृते चासत्यादिव्यावृत्तिर्न पदार्थो नाप्यवान्तरवाक्यार्थः । कथं तज्ज्ञानमखण्डार्थबोधहेतुरिति चेन्न । आपाततः सत्यादिवाक्यात् ज्ञाने जातेऽपि तत्र तात्पर्यसन्देहाधीनाप्रामाण्यसन्देहादिना जायमानज्ञानं निश्चयात्मकमप्रा-माण्यसन्देहानास्कन्दितञ्च न भवतीति स्वरूपमात्रविषयाविद्यानिवृत्त्युपधायकं न भवतीत्यतो विचारनिर्णीत-तात्पर्यकसत्यादिवाक्येन सत्यत्वादिविशिष्टबोधोत्तरं सत्त्वादिलिङ्गकव्यावृत्तिज्ञानवशादनृतादितादात्म्याभानाच्छुद्ध-स्वरूपमात्रविषयनिश्चयात्मकमनावृतप्रामाण्यकं स्वरूपमात्रविषयकाज्ञाननिवृत्त्युपधायकं ज्ञानं जायत इत्यन्वयव्यति-रेकबलादेव व्यावृत्तिज्ञानस्य द्वारत्वाभ्युपगमात् ।

नन्वथापि पदान्तराणां वैयर्थ्यम् । एकपदजन्यव्यावृत्तिज्ञानेनापि तादृशबोधसम्भवात् । यदि सत्यपदेना-नृतव्यावृत्तिसिद्ध्या अनृततादात्म्याभानेऽपि ज्ञानपदाभावेऽज्ञानव्यावृत्त्यसिद्ध्या जडतादात्म्यभानापत्त्योक्तफली भूतबोधासिद्धिः स्यादतो ज्ञानपदसार्थक्यमित्युच्यते तर्ह्यानन्दादिव्यावृत्तिसिद्ध्यर्थमानन्दपदमपि प्रयोक्तव्यं स्यादिति

(द्वै. द्यु) चेदिष्टापत्तिरेव। आनन्दपदस्यात्राऽश्रयणेऽपि विज्ञानमानन्द ब्रह्मेति वाक्यान्तरोक्तानन्दादीनामुक्तव्यावृत्तिसिद्धये उपसंहार. कर्तव्य । एव स्थूलादिव्यावृत्तिसिद्धये अस्थूलमनण्वित्याद्युक्तास्थूलत्वादीना नेति नेतीत्यादीना नेह नानेत्यादीनाञ्चोपसंहारः कर्तव्य । तथा च सर्वैर्मिलित्वा तादृशफलीभूतबोधो जायते। अतो न कस्यापि वैयर्थ्यम् । पर त्वानन्दादिभिरानन्दादिव्यावृत्तिरार्थिकी सिद्ध्यति । अस्थूलमित्यादिभिस्तु साक्षादेव शब्दमर्यादया ।

आनन्दादीनामुपसंहारस्तु गुणोपसहारपादे अभिहित 'आनन्दादय प्रधानस्य' 'अक्षरधिया त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम्' इति सूत्राभ्याम् । 'यत्र शाखायामानन्दादिपदानामन्यतमं न श्रूयते तत्रापि तदुपसहर्तव्यम् । यतस्तत् प्रधानस्य ब्रह्मणोऽनृतादिव्यावृत्तस्वरूपस्य बोधोपायभूतम्' इत्याद्यसूत्रार्थ. । द्वितीयस्य तु बृहदारण्यके 'एतद्वै तदक्षरम्' इत्युपक्रम्योक्तत्वेनाक्षरधियोऽस्थूलत्वादय. । अक्षरस्य धीर्येभ्यस्त इति व्युत्पत्तेः । ते यत्र 'यत्तदद्रेश्यम्' इत्यादौ न श्रूयन्ते तत्रापि तेषामुपसहार । सामान्यात् प्रपञ्चमात्रप्रतिषेधेन ब्रह्मप्रतिपादनस्य सर्वत्र समानत्वात् । तद्भावात् 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यम्' इति वाक्येऽक्षरस्य प्रतिपाद्यतया भावात् । यथा जामदग्न्येऽहीने पुरोडाशिनीषूपसत्सु चोदितासु पुरोडाशप्रधानमन्त्राणाम् 'अग्निर्वै होत्रं वेरेऽध्वरम्' इत्यादीनामुद्गातृवेदोत्पन्नानामध्वर्युभि. सम्बन्धो भवति । पुरोडाशप्रधानस्याध्वर्युकर्तृकत्वात् । मन्त्राणाञ्च प्रधानतन्त्रत्वात् ।

तदुक्त पूर्वमीमांसायाम् 'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोग ' इत्यत्र । तथेहाप्यक्षरस्वरूपधानतन्त्राणामस्थूलत्वादीना यत्र क्वचिदुत्पन्नानां सर्वत्र विद्यमानेन प्रधानेनाक्षरेण सम्बन्ध इत्यर्थ । न च ज्ञानत्वाऽऽनन्दत्वसत्यत्वमात्राणामेकैकानामतिव्याप्त्यभावात् मिलितोपादान लक्षणे व्यर्थमिति वाच्यम् । अतिव्याप्त्यादिवारणमेव न लक्षणघटकपदप्रयोजनमिति नियम. । किन्त्वभिमतलक्ष्यस्वरूपप्रमिति । प्रकृते च ज्ञानपदमात्रोपादाने शून्यवादिनापि अनृतस्य स्वज्ञानरूपाङ्गीकारात्तन्मतव्यावृत्तब्रह्मस्वरूपसिद्धिर्न स्यात् । एव सत्यज्ञानपदयोः सत्यानन्दपदयोर्वोपादाने नैयायिकादिभिस्तादृशज्ञानानन्दयो. परस्परं भिन्नयो स्वीकृतत्वात् तन्मतसिद्धापेक्षया व्यावृत्तस्वरूप न सिद्ध्येत् इति मिलितोपादानम् । तथा च ज्ञानातिप्रसङ्गनिरास एव पदानां फल बोध्यम् ।

नन्वेवमपि मिथ्यात्वाभावरूपसत्यत्ववाशब्द्यज्ञानस्यैवानृतत्वादिसंशयनिवर्तकत्वात्तन्मात्रद्वारकाखण्डज्ञानेनापि शून्यवादिव्यावृत्त ब्रह्म सिद्ध्यतीत्यनृतादिव्यावृत्तिनिश्चयस्य द्वारत्वाभ्युपगमवैयर्थ्यम् । एवं ज्ञानत्वादिवैशिष्ट्यनिश्चयस्यैव जडत्वादिसंशयविरोधित्व सम्भवतीति ज्ञानपदस्थलेऽपि तदुत्तरव्यावृत्तिधियो द्वारत्वं व्यर्थम् । एवमनन्तपदेनापरिच्छिन्नबोधवत्सत्यपदेनापि अनृतभिन्नवाचिनाऽनृतव्यावृत्ते· साक्षादेव सिद्धेस्तस्या. सत्यपदस्थले आर्थिकत्वोक्तिरप्ययुक्तेति चेन्न ।

(द्वै.द्यु) देयभावापन्नद्रव्यपर यत्तदन्यत्वे सति द्रव्यमात्रबोधकपदद्वयघटितत्वादित्यर्थः । मृद्घट इत्यत्र सत्यन्तदलेन नीलमुत्पलमित्यत्र विशेष्यदलेन न व्यभिचार इति भाव । नीलादिपदाना गुणवाचकत्वमेवेति हृदयम् ।

उक्तहेतुसत्त्वे तादात्म्यादिससर्गेण किञ्चित्प्रकारकत्वानुपपत्तावप्यैक्यसम्बन्धेनैकस्मिन्नपरप्रकारकत्वमस्तु । अतोऽप्रयोजकोऽय हेतुरित्याशङ्कापरिहारायाह ॥ नापीति ॥ अभेदविशिष्टम् ऐक्यसम्बन्धेन किञ्चिद्विशिष्टम् । तादात्म्य भेदाभेदनियत धर्मधर्मिभावनिर्वाहकम् । ऐक्य तु तदनिर्वाहकमत्यन्ताभेदरूप स्वस्मिन्स्वस्य ससर्गो भवतीत्यतोऽनयोर्भेद इत्यभिमान । वस्तुत सर्वत्रैक्यमेव संसर्ग । स च क्वचिद्भेदसहितः क्वचिच्च विशेषसहितो धर्मधर्मिभावनिर्वाहको भवति । युक्तमेवैतद्वक्ष्यतेऽपि ॥ सिद्धत्वादिति ॥ स्वरूपमात्रे स्वरूपमात्रभेदग्रहस्याऽहार्यतया जिज्ञासानुत्पादकत्वेन प्रश्नमूलभूतजिज्ञासा प्रत्यविषयत्वादित्यर्थ । तथा च तत्प्रतिपादने उत्तरवाक्यस्याजिज्ञासिताभिधायकत्वापत्तिरिति भाव ।

यद्वा सिद्धत्वात् मुख्यविषयरूपतयैव सिद्धत्वात् । तथा च भेदाभावरूपैक्यस्य विशेष्यात्यन्ताभिन्नत्वान्न तस्य संसर्गतया भान स्वीक्रियते । ऐक्ये सामानाधिकरण्यमिति व्यवहारस्याखण्डार्थबोधकत्वमित्येवार्थ इति भावः ॥ तच्छब्दार्थेनेति ॥ तच्छब्दार्थतावच्छेदकीभूताविद्याबिम्बत्वादिरूपधर्मविशिष्टेनोपहितेन चेत्यर्थ । अभेदस्य तादात्म्यस्य । त्वपदार्थस्य स्वस्य श्वेतकेतुना ज्ञाततयोद्देश्यत्वात्तत्पदार्थस्याज्ञातस्य विधेयत्वात् तत्पदस्य प्रथमतः सत्त्वेऽपि उत्तरत्र योजनया विधेयसमर्पकत्वमनुसृतम् ॥ एकदेशत्यागेति ॥ जहदजहल्लक्षणयेत्यर्थ. । इद च पदाना स्वशक्यतावच्छेदकविशिष्टविषयकबुद्धिजननानुकूलशक्तत्वमेव । विशेष्यमात्र इतरपदार्थविगाहिबोधो गौरनित्य इत्यादौ लक्षणयैवेति जरन्नैयायिकैकदेशिमतमनुसृत्य। विशिष्टशक्तपदेनापि विशेष्यमात्रबोधो विशेषणाशे बाधग्रहादिसहकृतशक्त्यैवेति पक्षाश्रयणे न लक्षणेति परैरुक्तम् ॥ भेदभ्रमेति ॥ जीवत्वोपलक्षितेश्वरत्वोपलक्षितचेतनयोर्भेदभ्रमनिरासरूपप्रयोजनेन निमित्तेन स्वरूपमात्रबोधजनकत्वमित्यर्थ ॥ अत एवेति ॥ प्रत्येक पदयोर्भिन्नधर्मावच्छिन्नबोधकत्वान्न पर्यायत्वम् । लक्षणयोक्तभ्रमनिवर्तकबोधजननार्थत्वान्न वैयर्थ्यमित्यर्थ. । दृष्टान्तोपपादनेनोक्तमर्थं सम्भावयति ॥ यथेति ॥ विशिष्टेति ॥ विशिष्टे शक्त्या तदुपस्थितिद्वारेणेत्यर्थ. । शक्योपस्थितेर्लक्षणाज्ञाने करणत्वाद्द्वारत्वोक्ति ॥ भेदभ्रमेति ॥ तत्तेदन्त्वोपलक्षितस्वरूपभेदभ्रमनिरासरूपप्रयोजनसत्त्वेनेत्यर्थ. ॥ सार्थकश्चेति ॥ पदत्रयमपीति शेष. । सार्थक्यमिति पाठो युक्ततर. । आखण्डलार्थस्तु समानविभक्तिकपदद्वयसमभिव्याहारस्थले चतुर्धा बोधो जायते । पदार्थयोर्द्वयोर्विशेष्यविशेषणभावावगाही एक । यथा नीलो घट इत्यत्र नीलरूपघटयो । विशेषणविशेष्यभावो नाम व्यावहारिकतादात्म्यम् । अपरस्त्वध्यासावगाही । अध्यास प्रातिभासिकतादात्म्यम् । यथा शुक्तितात्पर्यकमिद रजतमिति ज्ञानमिद रजतमिति वाक्यात् । अन्यो बाधावगाही य पुरुष स स्थाणुरिति वाक्याज्जायमान पुरोवर्तिन्यध्यस्तपुरुषभेदावगाही । य पुरुषत्वेन ज्ञात स न पुरुष किन्तु स्थाणुरिति तद्वाक्यार्थ । क्वचित्स्वरूपैक्ये यथा सोऽय देवदत्त इति वाक्याज्जायमानः । तद्वाक्येन हि तद्देशकालविशिष्टरूपतत्पदार्थैतद्देशकालविशिष्टैतत्पदार्थयोर्न तादात्म्यान्वयधी । विशिष्टयो. परस्प-

(द्वै द्यु) रतादात्म्ये विशेषणयो परस्परतादात्म्यापातेन लोके कयोरपि विशिष्टयोस्तादात्म्याभावेन युगपन्मिलनराहित्यरूपविरोधशालितदेतद्देशकालरूपविशेषणविशिष्टयो सुतरामभावेन वाक्याप्रमाण्यापत्ते· । तदुक्त संक्षेशारीरके

अविरुद्धविशेषणद्वयप्रभवत्वेऽपि विशिष्टयोर्द्वयो ।
घटते न यदैकता तदा न तरां तद्विपरीतरूपयो· ॥ इति ।

नाप्युपहितयोस्तादात्म्यधी । अविरुद्धोपाधिद्वयस्थले तदुपहितयोरभेदसम्भवेऽपि प्रकृते विरुद्धोपाधिद्वयोपहिततयोस्तादात्म्यासम्भवात् । वस्तुतोऽविरुद्धोपाधिद्वयस्थलेऽप्युपहितयोर्भेद एव ।

ननु विशेष्यान्वय्यन्वयित्वरूपविशेषणत्ववन स्ववैशिष्टाभिन्नविशिष्टान्तराभेदप्रसक्त्या विशेषणस्यापि विशेष्याभेदप्रसङ्गाद्विशेषणद्वयस्य परस्पराभेदप्रसङ्गात्तद्विशेष्याभेदप्रसङ्गाच्च बाधकाद्विशिष्टयोर्भेदोऽस्तु । पदार्थान्तरान्वयस्य स्वविशेष्यनिष्ठस्य सत्ताकाले स्वय विद्यमानत्वे सति स्वविशेष्यन्यावर्तको य स तदन्वये उपाधिरित्युच्यते । अस्यान्वयेऽयमुपाधिर्विशेषणमुपलक्षणमिति किञ्चिदपेक्षयैव तद्व्यवहारात् । पदार्थान्तरान्वयकाले स्वयमविद्यमानस्तदन्वयकाले विद्यमानतया तद्व्यावर्तकविद्यमानधर्मान्तरं स्वरूपमात्रं वोपस्थापयित्वा फलीभूतबोधे भासमानत्वाभाववानुपलक्षणमित्युच्यते । एव च विरुद्धोपाध्योरेककाले समानदेशत्वाभावेन परस्परोपहिततादात्म्यस्योपाधिद्वयकालीनत्वाभावात्तयोरभेदासम्भवेऽप्यविरुद्धोपाध्युपहितयो कुतस्तादात्म्याभाव इति चेदुच्यते ।

'यथा तत्क्षणविशिष्टस्य वैशिष्ट्यमिति रीत्या जायमानात् तत्क्षणविशिष्टघटवानिति ज्ञानात् विशेष्ये विशेषणमिति रीत्या जायमानस्य तत्क्षणविशिष्टघटवानिति ज्ञानस्य वैलक्षण्यस्यावश्यकतया ज्ञानवैलक्षण्यस्य विषयवैलक्षण्याधीनत्वाद्यथा विशिष्टस्यातिरिक्तत्वमभ्युपेयते तथा रक्तदण्डवान् भुंक्ते इत्यत्र विशिष्टस्योपाधित्वमिति न्यायेन जातात् उपधेये उपाधिस्तत्र चान्यो विशेषणमिति न्यायेन जाते उक्ताकार एव ज्ञाने वैलक्षण्यस्य तत्साधकत्वात् । आद्ये पुरुषस्य रक्तविशिष्टदण्ड उपाधि प्रकारतया भासते । द्वितीये केवल इति । पूर्वन्यायसाम्यात्' इति ग्रन्थेन परैरेवोपाधिभेदेनोपहितभेदस्योपपादितत्वात् । न चैतावता परोपपादनेन केवलोपहितयोर्भेदसिद्धावपि न धर्मद्वयोपहितयोर्भेदसिद्धिरिति वाच्यम् । तद्धर्मोपहितज्ञानात्तदविरुद्धधर्मोपहितज्ञानस्य वैलक्षण्यरूपन्यायसाम्येनैव सिद्धे· । अत एव सोऽय देवदत्त इति वाक्यार्थविचारावसर एव 'सामान्यत उपाधिभेदादुपहितयोरत्यन्तभेद' इति परैरुक्तम् ।

न च तर्हि तत्तेदन्तयोरन्यतरोपलक्षितेऽन्यतरेणोपहितस्य विशिष्टस्य भेदो भासतामिति वाच्यम् । विनिगमनाविरहेणोभयोरुपलक्षणत्वस्यैव परिशेषात्प्राप्ते । तत्तेदन्त्वयोरन्यतरविशिष्टेऽन्यतरवैशिष्ट्यस्यान्यतरोपलक्षितेऽन्यतरवैशिष्ट्यस्य च बोधनमप्युक्तन्यायेनैवापास्तम् । तथा चोपलक्षित च पदद्वयेन स्वरूपमात्रमेवेति तस्यैव स्वरूपैक्यमुच्यते । ऐक्यं चात्यन्ताभेदस्तत्प्रतियोगिकभेदाभावस्तन्निष्ठस्तत्स्वरूपमेव । अत्यन्ताभेदे च प्रकारविशेष्यतयोरयोगात्स्वरूपमात्रं भासत इति तज्जन्यबोधस्य संसर्गाविषयकत्वम् । न च भेदाभावत्वरूपेण स्वरूपमेव

(द्वै ष्ठु) स्वस्मिन्प्रकार. संसर्गो वा स्तामिति वाच्यम् । भेदाभावत्वविशिष्टस्य स्वरूपे कल्पितस्यायावद्द्रव्यभावित्वेन स्वरूपैक्यरूपत्वाभावेन तज्ज्ञानेऽपि ज्ञानस्यैक्यावगाहित्वायोगात् ।

न च स्वरूपमात्रबोधस्य प्रयोजनाभाव । तत्तेदन्त्वोपलक्षितस्वरूपभेदसंशयविपर्ययहेत्वज्ञाननिवृत्तिद्वारा तन्निवृत्तेरेव फलत्वात् । न च लक्षणया शक्त्या वा जायमानाया अखण्डशाब्दबोधहेतुभूतस्मृतेरपि स्वरूपमात्रविषयकत्वात्तयैव तन्निवृत्तौ शाब्दबोधवैफल्यम् । तदनिवृत्तौ विषयावैलक्षण्यात्स्वरूपमात्रावगाहिशाब्देनापि कथ तन्निवृत्तिरिति वाच्यम् । शाब्दस्य शङ्ख. श्वेत इति ज्ञानस्य शङ्ख पीतो न वेत्यादिसंशयविपर्ययानिवर्तकत्वेऽपि तत्समानविषयकप्रत्यक्षेण निवृत्तेर्ज्ञानस्वभाववैलक्षण्यानुसरणस्यावश्यकतया प्रकृते तदिदपदलक्षणाग्रहाधीनस्वरूपमात्रोपस्थितिजन्यस्वरूपमात्रविषयकशाब्दत्वेनैव तन्निवर्तकत्वाङ्गीकारात् । न च श्रुतोक्तवाक्यार्थस्यापि देवदत्तस्वरूपदर्शनोत्तरं सोऽयं न वेत्यादिसंशयोपलम्भात्कथं तस्य तन्निवर्तकत्वमिति वाच्यम् । शाब्देन सत्यव्यवहारविरोधिनोऽसत्त्वावरणाज्ञानस्य निवृत्तावपि न भातीति व्यवहारापादकस्वरूपमात्रविषयकाज्ञानस्य तादृशतत्तेदन्त्वोपस्थितिद्वारकस्य स्वरूपमात्रावगाहिप्रत्यक्षमात्रनिवर्त्यतया तादृशप्रत्यक्षानुत्पत्तौ तादृशाज्ञानसत्त्वेन तन्मूलकतादृश संशयाद्युपपत्ते । न च तात्पर्यज्ञानबलाच्छाब्दस्थले लक्षणादिना स्वरूपमात्रभानेऽपि प्रत्यक्षसामग्र्यां तदनिवेशात्कथं तद्भाननिर्वाह इति वाच्यम् । तत्तावगाहिस्मृतीदन्त्वावगाह्यनुभवाभ्यां धर्मद्वयविशिष्टोपहिताभेदबाधग्रहसहिताभ्यामेव तादृशप्रत्यक्षोत्पत्त्यङ्गीकारात् । शब्दप्रत्यक्षयो प्रतिबन्धकता त्वेकशक्त्याऽन्यथा वेत्यन्यदेतत् ।

सोऽय देवदत्त इत्यभिलापोऽपि पूर्ववृत्तिज्ञानसहितस्वरूपमात्रावगाहिप्रत्यक्षादेव । तत्तेदन्त्वाभ्यामिमं जानामीत्यनुव्यवसायोऽपि तत्तेदन्त्वोपलक्षितस्वरूपविषयकज्ञानवानहमित्येव विषयीकरोति । न तु तत्तेदन्त्वप्रकारकत्वं ज्ञानेऽवगाहत इति न तद्विरोधोऽपि ।

ननु स्वरूपमात्रज्ञाननिवर्त्यं कीदृश सशयादि । विशिष्टयोरुपहितयोर्भेदधियस्तत्कालेऽप्यनुवृत्तेरिति चेन्न । तत्तेदन्त्वोपलक्षितस्वरूपभेदभ्रमस्यैव तन्निवर्त्यत्वात् । तादृशभेदावगाहन नाम प्रतियोग्यंशे प्रकारत्वेन भासमानं यत्तत्त्वं तदवच्छिन्नत्वविशिष्टप्रतियोगितासम्बन्धेन वाऽवच्छिन्नत्वाविशेषिता वस्तुतस्तत्तोपलक्षितनिष्ठा या प्रतियोगिता तद्रूपसम्बन्धेन वा भेदांशे तत्तोपलक्षितस्वरूपमात्रभानम् । न च संशयस्य सधर्मितावच्छेदकत्वनियमादिदन्त्वस्य धर्मितावच्छेदकतया भानमावश्यकम् । एव भेदांशे प्रकारीभवत्प्रतियोगिन्यपि तत्ताभानमावश्यकं जातीतरस्य स्वरूपत प्रकारत्वायोगात् । न च तथैव भानमस्त्विति वाच्यम् । तथा सत्युपहितप्रतियोगिकभेदधीवैलक्षण्यनिर्वाहायानुपदमुक्तप्रकारस्यासम्भवापत्तेरिति वाच्यम् । तद्देशकालसम्बन्धरूपतत्ताया स्वरूपातिरिक्ताया दुर्वचतया ततोऽस्या· स्वरूपत प्रकारताया आवश्यकत्वे जातीतरस्येति त्वदुक्तनियमस्याप्रामाणिकतया भेदांश एव व्यक्तेरुक्तप्रकारस्यौचित्यात् । संशयस्य सधर्मितावच्छेदकत्वनियमोऽप्यप्रामाणिक । आपातभ्रमज्ञानस्य स्वरूपे धर्मान्तरावगाहिनोऽसंशयरूपत्वाभ्युपगमात् । अखण्डव्यक्तिप्रकारकस्याखण्डव्यक्तितद्विशेषितभेदोभयकोटिमुख्यविशेष्यकस्य भेदत्वरूपधर्मितावच्छेदकावगाहिन. संशयस्य वक्तुं शक्यत्वाच्च । स्वरूपे स्वरूपभेदज्ञान-

(द्वै ग्रु) स्याहार्यतया कथमुक्तशाब्दादिज्ञाननिवर्त्यत्वमिति नाशङ्क्यम्। उक्तरीत्याऽज्ञानविशेषनिवृत्तौ तन्मूलकोक्तसंशयादिनिवृत्तेरावश्यकतयाऽऽहार्यत्वादिपरिभाषाया अकिञ्चित्करत्वात्। एव च तत्त्वमसीत्यत्र तत्पदवाच्यतावच्छेदकसर्गस्थितिलयकर्तृत्वत्वपदवाच्यतावच्छेदकजागराद्यवस्थानुभवितृत्वाभ्या वा तत्पदवाच्यतावच्छेदकाविद्याबिम्बत्वत्वपदवाच्यतावच्छेदकाविद्याप्रतिबिम्बत्वाभ्या वोपहितयोर्विशिष्टयोर्वा तादात्म्यस्य व्यवहारकाल एव बाधितत्वेन तद्बोधकत्वे तद्वाक्यस्य व्यावहारिकप्रामाण्यस्याप्यभावापत्त्या सोऽयं देवदत्त इति वाक्यरीत्यैवात्र बोधो निर्वाह्य। तत्राभिहितान्वयवादिमते तत्त्वपदाभ्या चिन्मात्रविषयकशाब्दद्वयं जायते। ताभ्यामेव सुबन्तपदाभ्यां चिन्मात्रविषयकाखण्डबोधो जायते। तत्राज्ञातत्वाज्ञाननिवर्तकज्ञानविषयत्वाभ्यामेव निमित्ताभ्यामेकस्या एव चित उद्देश्यत्वविधेयत्वे।

ननु कुत एतत् उच्यते। अभिहितान्वयमते वाक्याधिकरणीयभट्टकारिकोदाहरणपूर्वकमद्वैतचन्द्रिकायां पक्षत्रयमुपपादितम्। तथा हि। घटमानयेत्यत्र घटपदेन घटत्वेऽभिधारूपशक्तिग्रहसहितेन प्रथमतो घटत्वमात्रविषयकनिर्विकल्पक एव शाब्दबोध। एवमम्प्रत्ययेन कर्मत्वत्वावच्छिन्नविषयक शाब्दबोध। कर्मत्वत्वस्य जातित्वाभावेन तन्मात्रे शक्त्यभावात्तद्विशिष्टे[1]त्यादिपदस्य शक्ते। तादृशशाब्दबोधात्मकघटत्वज्ञानकर्मत्वज्ञानाभ्यामेव घटत्वीयकर्मतेति बोध। घटत्वादिविषयकज्ञानस्य घटत्वकर्मत्वयोरन्वयबोधजनकत्वे तद्विषयीभूतघटत्वादेरपि शाब्दबोधजनकत्वप्राप्त्याऽभिहितान्वय इति व्यवहार। पदैरभिहितै शक्त्यधीनशाब्दबोधविषयीभूतै प्रकृतिप्रत्ययार्थैर्बोध्यमान प्रकृतिप्रत्ययार्थयोरन्वय संसर्ग इति तदर्थात्। एवमानयेत्यनेनापि धातुनाऽऽनयनस्याऽऽख्यातेन कृतेश्च प्रत्येकं शाब्दबोधानन्तरं ताभ्यामेवाऽनयनानुकूला कृतिरिति बोधो जन्यते। उक्ताभ्या बोधाभ्या घटकर्मकाऽनयनानुकूला कृतिरिति क्रियाकारकबोधरूपमहावाक्यार्थबोधो जायते। आद्यबोधस्य साक्षाच्छब्दजन्यत्वात् शाब्दत्ववत् उत्तरयोरपि बोधयो. शब्दप्रयोज्यत्वादेव शाब्दत्व स्वीक्रियते।

ननु प्रत्येकशब्दैर्घटत्वकर्मत्वादिविषयकशाब्दानन्तरमेव महावाक्यार्थबोध कुतो न स्वीक्रियते। मध्ये घटीया कर्मतेत्येवमाकारकबोध किमर्थमाश्रयणीय इति चेन्न। भट्टेन सर्वस्यापि महावाक्यार्थबोधस्य विशिष्टस्य वैशिष्ट्यमिति रीत्योत्पत्त्यङ्गीकारेण तत्कारणीभूतविशेषणतावच्छेदकनिर्णयमुद्रया तादृशबोधस्याऽवश्यकत्वात्। न च शाब्दबोधे घटत्वस्यैव भाने घटकर्मकानयनानुपपत्ति। घटानयनस्याऽक्षेपलभ्यत्वाङ्गीकारात्। अथ वा घटत्वमात्रशाब्दबोधानन्तरमुपस्थितघटत्वेनैव लक्षणया घट उपस्थाप्यते। तस्य चावान्तरवाक्यार्थबोधे महावाक्यार्थबोधे च भानोपपत्ति.। शक्यार्थनिष्ठाशक्योपस्थितिप्रयोजकसम्बन्धस्यैव लक्षणात्वाङ्गीकाराद्घटत्वस्य लक्षकत्वमुपपन्नम्। पदनिष्ठस्य तीरसंयुक्तप्रवाहशक्तत्वस्य लक्षणात्वापेक्षया प्रवाहनिष्ठतीरसंयोगस्यैव लक्षणात्वे लाघवात्। घटप्रातिपदिकाज्जायमानघटत्वनिर्विकल्पकस्य शाब्दत्वानङ्गीकारे तस्य स्मृतित्वं वाच्यम्। तस्य सम्बन्धज्ञानाधीनत्वाद्घटत्वघटपदयो सम्बन्धोऽपेक्षित। स च सयोगादेरसम्भवात्तज्ज्ञानाधीनस्मृते. शाब्दबोधकारणत्वे समवाय-

[1] त्वादिपदस्य इति पाठेन भाव्यमिति भाति।

(द्वि.द्यु )सम्बन्धेन स्मृताकाशादे. शाब्दबोधे भानप्रसङ्गेन सम्बन्धान्तराधीनस्मृतेरकिञ्चित्करत्वाच्च शक्तिरेव सम्बन्धोऽवश्यमनुसरणीय । शक्तिश्च पदनिष्ठतदर्थानुभवानुकूलसामर्थ्यम् । तथा च घटादिपदैर्घटत्वादिमात्रविषयकशाब्दबोधजनने तच्छक्तत्वस्य दुर्घटत्वापत्त्या तदुत्पत्तेरावश्यकत्वे तेनैवोक्तरीत्या महावाक्यार्थबोधनिर्वाहे स्मृतिजन्यत्वस्य शाब्दबोधे अङ्गीकारे मानाभावात् । न च महावाक्यार्थबोधस्यैव घटत्वविषयकतया तज्जनकत्व घटे घटत्वशक्तिरास्तामिति वाच्यम् । महावाक्यार्थबोधे घटस्येवाऽनयनस्यापि भानेन घटपदस्यानयनशक्तत्वमपि स्यादित्युक्तरीतिरेव युक्तेत्येक. पक्षः ।

घटपदोत्तराम्प्रत्ययरूपानुपूर्वीज्ञानस्य ज्ञायमानानुपूर्व्याश्चाधेयतया घटत्वविशिष्टकर्मत्वविषयकशाब्दस्य जन्यत्वम् । एवं घटेन घटायेत्यादावेवैव रीतिः । आनयतीत्यत्राप्येवमेव । तथा च तादृशबोधनिरूपितजनकता घटपदे वर्तते । किञ्चिन्निष्ठविशेष्यतानिरूपितसासर्गिकविषयतानिरूपितघटत्वप्रकारताशालिशाब्दत्वस्यैव घटत्वनिष्ठा करणतेत्यादिशाब्दसाधारणस्य जन्यतावच्छेदकत्वात । सा च घटपदनिष्ठा घटत्वीयत्वेनैव ज्ञाता शाब्दबोधोपयोगिनी । न त्वन्वयनिरूपितत्वेन ज्ञाता । तथा चान्वयाशे कुब्जेत्युच्यते । जनकतैव शक्तिः । तथा च न घटपदवाच्यत्वव्यवहारोऽन्वयादीनाम् । शक्तिर्यन्निष्ठा यदीयत्वेन ज्ञाता शाब्दबोधोपयोगिनी तस्यैव तत्पदवाच्यत्व नान्यस्येत्यभ्युपगमात् । इत्थ च घटपदे घटत्वानुभावकत्वरूपशक्तेरुक्तविशिष्टविषयकशाब्दबोधमादाय निर्वाहात्तादृशशक्तिरूपसम्बन्धज्ञानात्प्रथमतो घटत्वस्मृतिरेवाङ्गीकर्तव्या । न निर्विकल्पकशाब्दबोध. । प्रमाणजन्यानुभवस्याज्ञाननिवर्तकत्वेनैव प्रामाण्यात्केवलघटत्वादे पूर्वसम्बन्धज्ञान एव भातत्वेनोक्तशाब्दस्य घटत्वादावज्ञानानिवर्तकतया प्रमात्वाभावेन भ्रमत्वाभावेन च स्मृत्यनुभवविलक्षणज्ञानस्वीकारापत्ते· । तथा च घटमानयेत्यादिवाक्यस्थले घटादिपदैर्घटत्वकर्मत्वयो. स्मरणम् । तेन च घटत्वीयकर्मतेतिशाब्दबोधः स्मरणद्वारा घटमिति शब्देनैव जायते । एव आनयेतिपदेनाप्यानयनानुकूलकृतिशाब्दबोध. । ताभ्यां बोधाभ्यामेव घटकर्मत्वानयनरूपक्रिययोरन्वयरूपमहावाक्यार्थो बोध्यते । एतादृशवाक्यार्थरूपेऽपूर्वे संसर्गे पूर्वबोधविषयीभूताभ्या घटकर्मत्वानयनाभ्या यः सम्बन्धो निरूप्यनिरूपकभावादि· स एव लक्षणारूपो वाक्यार्थनिष्ठत्वेनाज्ञायमान एव हेतु । वाक्यार्थनिष्ठत्वेन ज्ञातस्यैव हेतुत्वे वाक्यार्थस्यापि पूर्वमेव ज्ञातत्वप्राप्त्या वाक्यस्यापूर्वार्थगमकत्वाभावापत्तेरित्यपरो द्वितीय पक्ष. ।

घटमानयतीत्यत्र घटमित्यनेन कर्मत्वविशिष्टघटत्वमिति बोध. घटत्वादिस्मृतिद्वारा जायते । आनयतीत्यनेन कृतिविषयीभूतमानयनमिति बोध कृत्यानयनादिस्मृतिद्वारा जायते । ताभ्या बोधाभ्या चोक्तमहावाक्यार्थबोधः । अन्यत्सर्वं द्वितीयपक्षरीत्यैव । घटपदकार्यतावच्छेदकं किञ्चिन्निष्ठप्रकारतानिरूपितसासर्गिकविषयतानिरूपितघटत्वविशेष्यताशालिशाब्दत्वमिति विशेष इति तृतीय· पक्षः । अभिहितेन प्रकृत्यर्थविशिष्टप्रत्ययार्थेनान्वयस्य महावाक्यार्थरूपान्वयस्याभिधान द्वितीयपक्षे । तृतीये च प्रत्ययार्थविशिष्टप्रकृत्यर्थेनेत्यादि बोध्यम् । अत्रोपपत्त्यादिक सर्वमद्वैतचन्द्रिकातोऽवसेयम् । ग्रन्थगौरवभयान्नेह प्रपञ्चयते ।

(द्वै घु) कार्यान्विताभिधानपक्षे च शाब्दबोधसामान्यस्य कार्यताविषयकत्वनैयत्यात् केवलघटपदेन वा घटमित्यादिप्रकृतिप्रत्ययाभ्यां वा घटमानयतीत्यादिनापि वा नावान्तरवाक्यार्थधीर्जायते। कार्यबाचकपदाभावात्। किन्तु घटादिस्मृतिरनन्तर कार्यवाचकपदसाहित्येनैकदैव विशेष्ये विशेषणमिति रीत्या शाब्दबोध.। क्वचिद्घटादिस्मृत्यनन्तर घटादिविशिष्टकर्मतास्मृतिर्जाता चेद्विशिष्टवैशिष्ट्यावगाह्यपि जायते। उक्तावान्तरज्ञानस्य न शाब्दत्वम्। शब्दस्य तत्रैवोपक्षीणत्वेन कारणाभावान्महावाक्यार्थबोधाभावप्रसङ्गात्।

न च भट्टमत इव तादृशावान्तरबोधाभ्यामेव महावाक्यार्थधी: सम्भवति। गुरोरर्थाध्याहारवादित्वेऽपि पदजन्यपदार्थोपस्थितिसहकारेणैव पदाजन्योपस्थिते फलजनकत्वाङ्गीकारात्। भट्टेन पुनरर्थमात्रोपस्थित्यापि शाब्दबोधाङ्गीकारान्न तस्य शाब्दबोधशब्दवाच्यसामान्योत्पत्तौ शब्दापेक्षा। अतस्तन्मते तादृशरीतिः सम्भवति। उक्तं भट्टवार्तिके

पश्यत. श्वेतिमारूप ह्वेषाशब्द च शृण्वतः।
खुरनिक्षेपशब्दश्च श्वेतोऽश्वो धावतीति धी॥
दृष्टा वाक्यविनिर्मुक्ता न पदार्थैर्विना क्वचित्॥ इति।

एवं गुरुमते वह्न्यनुकूलशक्तिर्न केवलतृणे नापि फूत्कारमात्रे। एकैकेन फलाजननात्। सा च तृणफूत्कारसयोगे तद्विशिष्ट एव यथा स्वीक्रियते तथा कारकपदकार्यवाचिपदमिलने एव घटानयन कार्यमित्यादिशाब्दानुकूला शक्ति. स्वीक्रियते। तस्याश्च घटपदनिष्ठत्व शाब्दबोधनिष्ठघटत्वविषयकत्वावच्छिन्ननिरूपकताकशक्तित्वेन। अतस्तेन रूपेण घटपदे तज्ज्ञान घटत्वशाब्दकारणमिति घटत्वं घटपदवाच्यमित्युच्यते। एतन्मतेऽप्याकृत्यधिकरणसिद्धान्तेन जातावेव शक्त्यभ्युपगमात्। एवमन्यत्रापि।

तथाचाभिहितान्वयमते प्रथमपक्षे प्रथमाविभक्तिसहिततत्त्वपदाभ्या शक्त्यैव चिन्मात्रविषयकशाब्दधीद्वय जायते। विशिष्टशक्तेर्विशेष्येऽपि सत्त्वेन तात्पर्याबाधग्रहादिसहकारे विशेष्यमात्रानुभावकत्वसम्भवात्। प्रथमाया अपि प्रातिपदिकार्थविहितत्वेऽपि तत्साहित्येऽप्येकसुबन्तेनैक एव बोध.। सम्भेदे नान्यतरवैयर्थ्यमिति न्यायात्। प्रातिपदिकप्रथमाभ्या चिन्मात्रविषयकबोधद्वयानन्तरं ताभ्या बोधाभ्या चिन्मात्रविषयकैको बोधो घटीयकर्मतेत्यादिबोधस्थानीयस्तत्पदेन जायते। एव त्वपदेनेत्यङ्गीकारेऽपि नास्माक क्षति.। तथा च प्रत्येकं सुबन्तजन्यबोधाभ्यामेकश्चिन्मात्रविषयको महावाक्यार्थबोधोऽखण्डविषयक.। द्वितीयतृतीयपक्षयोस्तु प्रथमं तत्त्वंपदप्रातिपदिकसुब्भिरुक्तरीत्या शक्त्यैव चिन्मात्रस्मृत्यनन्तरमवान्तरबोधस्थानापन्न सुप्सहिततत्पदेनैकस्तादृशत्वपदेनैक इति शाब्दबोधद्वय चिन्मात्रविषयक जायते। तादृशबोधद्वयेनैव महावाक्यार्थभूतचिन्मात्रविषयकाखण्डाकारधीर्जायते। असिपदमपि तात्पर्यग्राहकं वा तात्पर्यवशादेव चिन्मात्रलक्षक वा सन्महावाक्यार्थबोध एव कथञ्चिदुपयुज्यत इति पक्षत्रयेऽपि समानम्।

(द्वै. द्यु ) अन्विताभिधानमते तु सुबन्ततत्त्वपदाभ्यामुक्तरीत्या शक्त्यैव चिद्विषयकस्मृतिद्वय जायते। तद्द्वारा ज्ञानविध्येकतापन्नेन तत्त्वमसीतिवाक्येन कार्यत्वविषयक एव सन् ज्ञानाशे चिन्मात्रावगाही बोधो जायते। अखण्डार्थत्वमपि तदनुसारेणैव परिष्कर्तव्यम् ।

अभिहितान्वयमते चिन्मात्रविषयकावान्तरवाक्यार्थबोधद्वयं शाब्दबोधात्मकमपि अज्ञातज्ञानरूपत्वाभावात् ज्ञातार्थमात्रविषयत्वाच्च स्मृतिसमम् । न तु स्मृतिरूपम् । अन्विताभिधानमते तादृशबोधद्वय स्मृत्यात्मकमेव । तच्चोक्त पुरस्तात् ।

नन्वभिहितान्वयनये उक्तज्ञानस्याज्ञानानिवर्तकतया प्रमात्वायोग· । इष्टापत्ते । तादृशबोधद्वयस्य प्रमात्वानङ्गीकारात् । अगत्या स्मृत्यनुभवविलक्षणस्यापि ज्ञानस्य प्रमाणजन्यत्वाभ्युपगमात् । अत एव घटोऽस्तीति वाक्यजन्येऽस्तित्व घटत्वीयमिति बोधे घटत्वनिर्विकल्पकशाब्दधी स्मृतिसमैवाङ्गीक्रियते । अस्तित्वप्रकारकस्तु न बोध: । घटत्वस्य स्वरूपतो भातत्वेन निर्धर्मितावच्छेदककशाब्दापत्ते । उक्तमेतत्संक्षेपशारीरकृता

अभिहितघटना यदा तदानीं स्मृतिसमबोधयुगं पदे विधत्त. ।
परदृशि पुनरन्विताभिधाने पदयुगलात्स्मृतियुग्ममेव पूर्वम् ॥ इति ।

पदे तत्त्वंपदे । परदृशि ब्रह्मविषय इत्यर्थ. ।

ननु तर्हि तत्पदार्थविशिष्टत्वपदार्थविशिष्टयोरभेदबोधोऽपि अखण्डार्थबोध प्रति द्वारत्वेन संक्षेपशारीरकेऽभिहित ।

सामानाधिकरण्यमत्र भवति प्राथम्यभागन्वय
पश्चादेव विशेषणेतरतया पश्चाद्विरोधोद्भव ।
उत्पन्ने तु विरोध एकरसके वस्तुन्यखण्डात्मधी
सर्वैरेव पदैरय समुदितो ज्ञेय क्रमः सूरिभि ॥

इत्युक्तेः ।

सामानाधिकरण्यं समानविभक्तिकत्वनिश्चय· । प्राथम्यभागिति सामानाधिकरण्यविशेषणम् । विशेषणेतरतयाऽन्वयः पदार्थद्वयोस्तादात्म्येन विशेषणविशेष्यभावावगाही बोध· । पश्चात्तदनन्तर भवतीत्यर्थ । पश्चात्तदनन्तरं विरोधोद्भवः बाधकप्रतिसन्धानेनोक्तबुद्धावप्रमात्वधीर्जायते । ततश्चैकरसके वस्तुनि शुद्धचैतन्ये तद्विषय इति यावत् । अखण्डात्मधीरखण्डस्वरूपधीर्जायत इत्यर्थः । ज्ञानस्याखण्डस्वरूपत्व प्रकारताविशेष्यताऽनिरूपकत्वम् ।

अत्र च चिद्द्वयमात्रबोधद्वयस्य द्वारत्वमात्रमुक्तम् । उक्तविशिष्टयोस्तादात्म्यधियोर्द्वारत्वं त्यक्तमिति तद्विरोध इति चेन्न। तादृशतादात्म्यावगाहिबुद्धिबाधकप्रतिसन्धानयोस्तत्त्वपदयो शक्त्या लक्षणया वा विशेष्यमात्रोपस्थापकत्वमात्रे

(द्वैधु)चरितार्थत्वेन लक्षणाग्रहोत्तर मध्ये तस्य द्वारत्वाभावात्। पूर्वं तस्य कचिदुत्पन्नत्वमात्रेण तस्य द्वारत्वोक्ति। नियमेन तादृशबोधोत्पत्तौ मानाभावात्। उक्तपदयोर्विशिष्टबोधकत्वबाधकप्रतिसन्धानेन लक्षणाग्रहार्थं नियमेन तादृशबोधस्याप्रयोजकत्वेन अनपेक्षणात्। अन्यथा गङ्गाया घोष इत्यादावपि नियमेन प्रवाहवृत्तिर्घोष इत्याकारकस्य बाधितार्थबोधस्यावश्यमनुसरणीयत्वापत्त्या पूर्वमेव विशेषदर्शिनां तद्वाक्याच्छाब्दानुभवाभावप्रसङ्गात्।

न चान्यत्र तन्नियमाभावेऽपि प्रकृते तादृशबोधनियमोऽस्तु। नेह नानेतिवाक्यादेरखण्डबोधपरत्वेऽपि द्वारीभूतमिथ्यात्वबोधे तात्पर्यसत्त्वेन तादृशबोधवदिति वाच्यम्। युक्त मिथ्यात्वबोधेऽवान्तरतात्पर्यम्। मिथ्यात्वस्य व्यावहारिकत्वेन तदंशे व्यावहारिकप्रामाण्याक्षते.। प्रकृते च विशिष्टद्वयतादात्म्यस्य प्रातीतिकत्वेन तदंशे व्यावहारिकप्रामाण्यायोगेन शुक्तिरजतादिवाक्यतुल्यतापत्ते। नन्वस्तु तदंशे प्रातीतिकमेव प्रामाण्यमिति वाच्यम्। तस्य विप्रतिषिद्धत्वात्। तथात्वे यजमानपाषाणत्वादिबोधेऽपि श्रुतेरवान्तरतात्पर्यापत्ते। तस्मादुक्तमेव युक्तम्। तत्त्वपदशक्त्या विशेष्यमात्रस्य यो बोध स एवैकांशत्यागेन शक्त्या जायमानत्वाज्जहदजहल्लक्षणया भवतीति प्राचां प्रवाद.। तत्पदस्य चिदाभासविशिष्टमायावाचित्व त्वपदस्य तु चिदाभासविशिष्टाहङ्कारवाचित्व तदा तत्त्वपदयोर्जहल्लक्षणैव। तदप्युक्त संक्षेपशारीरके

> साभासाज्ञानवाची यदि भवति पुनर्ब्रह्मशब्दस्तथाहम्।
> शब्दोऽहङ्कारवाची भवति हि जहती लक्षणा तत्र पक्षे॥ इति।

न च सर्वेषा पदाना लाक्षणिकत्वेऽनुभावकत्वाभावेन शाब्दानुभवाभावप्रसङ्ग·। लाक्षणिकपदस्यापि शाब्दानुभवजनकत्वे तदर्थशाब्दानुभवानुकूलशक्तेरेव तद्वाचकत्वरूपतया लाक्षणिकपदस्य लक्ष्यार्थवाचकत्वापातादिति वाच्यम्। **अन्विताभिधानपक्षे** उक्तबाधकबलेन जहल्लक्षणापक्षानाश्रयणेऽप्य**भिहितान्वयपक्षे** दोषाभावात्। तन्मते प्रत्येकं पदाना स्वशक्त्याऽनुभावकत्वमेव। तदनुभूतार्थैरेव महावाक्यार्थबोधजनने शक्त्या बोध इत्युच्यते। तादृशार्थेन स्वसम्बन्धबलादुपस्थापितस्यार्थस्य बोधजनने लक्षणया बोध इत्युच्यते। लक्षणाया अर्थधर्मत्वात्। एवञ्च वाक्यघटकनिखिलपदैः स्वशक्त्या शाब्दबोधजननोत्तर तादृशैरखिलैरर्थैः स्वस्वपरित्यागेन लक्षणयाऽर्थान्तरोपस्थितिद्वारेणैकमहाशाब्दबोधजननेपि शब्दस्य लाक्षणिकार्थवाचकत्वापत्तिदोषाप्रसरेण सर्वलाक्षणिकस्थले शाब्दबोधे बाधकाभावात्। **अन्विताभिधानवादे** च महाशाब्दबोधस्यापि पदजन्यत्वाङ्गीकारात्सर्वेषां पदाना लाक्षणिकत्वे उक्तबाधकबलेन कस्यापि पदस्य लक्ष्यार्थानुभावकत्वाभावेन शाब्दबोधानुदय एव स्यात्। गङ्गाया इत्यादौ तु घोषपदस्य मुख्यार्थकत्वेन तस्यैव स्वार्थोपस्थितिद्वारा तच्छाब्दकारणत्वम्। गङ्गापदस्य नास्त्येव। तीरविषयता लाक्षणिकतीरोपस्थितिकार्यतावच्छेदकतयैव बोधे वर्तते। पक्षद्वयसाधारण्यादभिहितान्वयवाद एव सिद्धान्तानुकूल।

ननु तत्त्वमस्यादिवाक्यस्थतत्त्वपदयोश्चिति लक्षणाग्रहाच्छाब्दबोधसम्भवात्तत्त्वपदार्थशोधकसत्यज्ञानादिवाक्याना वैयर्थ्यम्। न च लक्षणाग्रहे धर्मितया चिज्ज्ञानाय तदुपस्थितेरावश्यकतया तदर्थं तद्वाक्यजातमिति

(द्वै.द्यु.) वाच्यम् । तद्वाक्येन चिद्बोधोपयोगिलक्षणाग्रहार्थं वाक्यान्तरापेक्षायामनवस्थापातात् । यदि च स्वप्रकाश-चैतन्ये लक्षणाग्रहो यदि वा विशिष्टशक्त्यैव विशेष्यमात्रभान स्वीक्रियते तर्हि तत्त्वंपदस्थलेऽपि तथैवास्त्विति चेन्न । यतो न वय तत्त्वंपदलक्षणाग्रहार्थं सत्यज्ञानादिवाक्यमिति ब्रूम । येन वैयर्थ्यं स्यात् । किन्तु महावाक्यतात्पर्य विषयीभूतचित्स्वरूपनिरूपणार्थमिति ब्रूम । अन्यथा चैतन्यैक्यमात्रस्य पुरुषार्थत्वग्रहाभावेन तदर्थं प्रवृत्त्ययोगात् । तत्त्वपदपरिशोधकवाक्यैस्तादृशचैतन्यस्याद्वितीयस्वप्रकाशनिरतिशयानन्दात्मकत्वेऽभिहिते तदैक्यस्य पुरुषार्थत्वग्रहो भवतीति तदावश्यकता । जीवचैतन्यस्य स्वप्रकाशाद्वितीयानन्दात्मकब्रह्मस्वरूपत्वासम्भावनाशङ्कानिरासाय जीव-शोधकवाक्यस्याप्युपयोग । तत्पदार्थशोधकसत्यादिवाक्याभावे मन्दाधिकारिभिरुपास्यस्य जीवनियामकत्वादि-गुणविशिष्टेश्वरस्य सत्त्वे तन्नियम्यजीवस्वरूपानन्दादेर्निरतिशयत्वाभावेनापुरुषार्थत्वापत्त्या तदर्थं प्रवृत्तिर्न स्यात् । अतस्तस्यापि नियामकत्वादिधर्ममिथ्यात्वग्रहपूर्वकं निरतिशयानन्दाद्वितीयत्वादिबोधकतत्पदार्थशोधकवाक्यसाफल्यम् । जीवत्वेशत्वोपलक्षितचैतन्ययोर्भेदभ्रमनिरासकतत्त्वमसीत्यादिमहावाक्याभावे स्वस्वरूपस्य निरतिशयानन्दात्मकत्व-निश्चयो न स्यात् । ईशत्वोपलक्षितचैतन्यस्यापि तथोक्तत्वेनोभयोर्मुख्याद्वितीयत्वनिरतिशयानन्दात्मकत्वायोग इत्यनुपपत्तिज्ञानात् । यथा मान्धाता महाराजोऽद्वितीय इत्युक्त्वा यौवनाश्वो महाराजोऽद्वितीय इत्युक्तावुभयो-र्मुख्याद्वितीयत्वमहाराजत्वानुपपत्तिज्ञानाहितसन्देहेन क्वचिदपि तन्निश्चयो न जायते । महावाक्येन तु तयोर्भे-दभ्रमनिरासे तु तन्निश्चयो जायते यो यौवनाश्व स मान्धातेत्युक्तौ यथा तथैव । तथा चावान्तरमहावाक्यानां सर्वेषामुपकार्युपकारकभावसत्त्वात्सार्थक्यम् । अनृतत्वानानन्दत्वादिभ्रमहेतुभूतयोर्जीवत्वेशत्वोपलक्षितचैतन्यस्वरूप-मात्रविषयकाज्ञानयोर्निवर्तकेऽवान्तरवाक्ये । तादृशचैतन्ययोर्भेदभ्रमहेतुभूतचैतन्यमात्रविषयकाज्ञाननिवर्तकं महा-वाक्यमिति विवेकः ।

केचित्तु 'तत्त्वमसीतिमहावाक्यजन्यबोधीयचैतन्यविषयता स्वपूर्वतनज्ञानविषयीभूतजीवत्वेशत्ववृत्तिप्रकार-तानिरूपिता भवति । तज्ज्ञानाविषयीभूतस्यापि तत्पूर्वतनज्ञानविषयीभूतस्य तन्निष्ठविषयतानिरूपितप्रकारतायाः प्राचीननैयायिकैरङ्गीकृतत्वात् । अत एव निर्विकल्पकोपस्थितघटत्वनिष्ठप्रकारतानिरूपितत्वमात्र सविकल्पके । न तु घटत्वस्यापि तत्र विषयत्वं तैरभ्युपगतम् । गुरुणापि भ्रमस्थले इदज्ञानाविषयीभूतरजतत्वनिष्ठप्रकारतानिरू-पिता विषयतेदज्ञाने स्वीक्रियते । तथा च यादृशजीवत्वेशत्वोपलक्षितचैतन्यविषयकमहावाक्यार्थज्ञानादज्ञानं स्वाविषयीभूतेशत्वजीवत्वनिष्ठप्रकारतानिरूपितचैतन्यमात्रनिष्ठविषयताक निवर्तते तादृशबोधजनकत्वमेवाखण्डार्थ-कत्वमित्याहु.' इति ।

एवं परप्रक्रियां प्रदर्श्यानुमानप्रयोगप्रकारमाह ॥ अत्रापीत्यादिना ॥ अकार्येति ॥ स्वतात्पर्यविषयीभूत-द्रव्यनिरूपितकारणत्वकार्यत्वाभावान्यतराभाववद्द्रव्यतात्पर्यकत्वसमानविभक्तिकपदसमभिव्याहृत यत्पदं तत्तदुभय-घटितत्व यत्र तत्रोक्ताखण्डार्थनिष्ठत्वमिति व्याप्ति । तत्ताविशिष्टदेवदत्तेदन्ताविशिष्टदेवदत्तयो कार्यकारणभावा-नापन्नत्वात्तदुभयपरसमानविभक्तिकपदद्वयघटिते सोऽय देवदत्त इति वाक्ये उक्ताखण्डार्थनिष्ठत्वं वर्तते । प्रकृते च

(दै घु) जीवत्वेशत्वविशिष्टयोरकार्यकारणाभावापन्नत्वात्तदुभयतात्पर्यकतत्त्वंपदघटितोक्तवाक्येऽपि हेतुसत्त्वात्साध्यसिद्धि. । अकार्यकारणेत्यनुपादाने मृद्घट इत्यादौ व्यभिचार । तस्योक्तरीत्या तदुभयतादात्म्यपरत्वात् । अतस्तन्निवेशः । अन्यतरत्वेनानिवेशे एकैकस्य कार्यत्वस्य वा कारणत्वस्य वा निवेशे घटपदं मृत्पद वा स्वपदेन यथासम्भवमुपादायोक्तवाक्य एव व्यभिचार स्यात् । अतोऽन्यतरत्वेन कार्यत्वकारणत्वयोर्निवेश । अशाशिनोर्विशिष्टशुद्धयोः परस्परमवश्य कार्यकारणभावापन्नत्वम् । अंशस्याशिकारणत्वाद्विशेष्यस्य विशिष्टं प्रति कारणत्वात् । अतस्तद्बोधकपदघटिते 'दण्डी चैत्र' इत्यादौ 'हस्तो वितस्ति· पट' इत्यादौ च न व्यभिचार । नीलरूपस्यैकस्यैव जातिवन्नित्यस्यैव सर्वत्राङ्गीकारे 'नीलो घट' इत्यादौ व्यभिचार । नित्यस्यापि गुणस्य घटत्वादिजातिवद्व्यक्त्या तादात्म्याङ्गीकारात । घटादिरूपस्यानित्यत्वे 'जलपरमाणु शुक्ल' इत्यादौ च व्यभिचारवारणायोभयत्र द्रव्यत्वेन निवेश । अत्र शुक्लाऽदिपदानि गुणोपस्थापकान्येव न तदवच्छिन्नद्रव्यपराणीति न व्यभिचार इति हृदयम् ।

विभक्त्यर्थस्य संसर्गतामते 'देवदत्तस्य गौ·' इत्यादौ व्यभिचारवारणाय स्वसमानविभक्तिकेति । अधिष्ठानाध्यस्तयोरपि कार्यकारणभावापन्नत्वान्न 'इद रजतम्' इत्यादौ व्यभिचारः शङ्क्य । 'यश्चोर. स स्थाणु.' इत्यादावपि न व्यभिचारः । तस्यापि बाधद्वारेण पुरोवर्तिस्वरूपमात्रबोधजनकत्वाङ्गीकारात् । अत एव 'इदं सर्वं यदयमात्मा' इत्यादे· 'अह ब्रह्मास्मि' इत्यादेर्बाधाय सामानाधिकरण्यपक्षे तस्याखण्डार्थकत्व युज्यते । अह ब्रह्मासीत्यादेर्बाधाया सामानाधिकरण्यमहमर्थस्य चिदाभासस्य जीवस्य नाशपक्षे सिद्धान्तलेशे उपपादितम् । नैष्कर्म्यवचनश्चोदाहृतम् ।

योऽय स्थाणु पुमानेषः पुंधिया स्थाणुधीरिव ।
ब्रह्मासीति धिया शेषे ह्यहबुद्धिर्निवर्तते ॥ इति ।

न चैवमपि दण्डी कुण्डलीति वाक्ये व्यभिचार । दण्डोपहितकुण्डलोपहितयो कार्यकारणभावानापन्नद्रव्य[1]निष्ठत्वादिति शङ्क्यम् । उपहितयोस्तादात्म्याभावेन तस्याप्यखण्डार्थत्वाङ्गीकारेण व्यभिचाराभावात । न चोक्तहेतोरप्रयोजकता । कार्यकारणाभावानात्मकद्रव्यत्वेन तादात्म्यायोगेन स्वरूपैक्यस्याप्यभावे तादृशसमानविभक्तिकपदद्वयघटितवाक्यत्वं न स्यादित्यनुकूलतर्कोत्थानात् ।

तत्प्रश्नोत्तरत्वरूपपूर्वसूचितहेतु स्पष्टं दर्शयति ॥ स्वरूपेति ॥ कथं सगुणं ब्रह्मेति ॥ श्रुतेर्गुणे तात्पर्याभावात्प्रत्युत तन्मिथ्यात्व एव तात्पर्यादिति भाव ।

(गु. टि) अखण्डार्थत्व न निर्भेदार्थनिष्ठत्व नापि निर्विशेषार्थनिष्ठत्वम् । येन तत्पक्षोक्तदोषः स्यात । किन्तु अपर्यायशब्दाना संसर्गागोचरप्रमाजनकत्व तेषामेकप्रातिपदिकार्थमात्रनिष्ठत्व वेत्यभिप्रेत्य न श्रुतीनां

---

[1] द्रव्यत्वेन तन्निष्ठत्वादिति इति पाठेन भाव्यमिति भाति ।

(गु टि )पूर्वोक्त सगुणब्रह्मनिष्ठत्वं युक्तमिति मन्वानो विवरणकारः शङ्कते ॥ अथ मतमिति ॥ किमत्र प्रमाण-मित्यत एकोदाहरणाभावेन वेदान्तमात्रस्यैकेनैवानुमानेनाखण्डार्थतासाधनायोगादनुमानभेदेन तत्सिषाधयिषुस्त-दर्थतया वेदान्तवाक्यद्वैविध्यमाह ॥ द्विविधेति ॥ पदार्थपरेति ॥ तत्त्वमसीति महावाक्यस्थतत्त्वंपदार्थविषयेत्यर्थ ॥ तस्याऽस्मतादात्म्यरूपेति ॥ तत्पदार्थस्य ब्रह्मणस्त्वपदार्थभूतजीवतादात्म्यरूपवाक्यार्थविषयेत्यर्थः ।

यत्तु 'तत्त्वमादिपदार्थस्य ब्रह्माभेदरूपवाक्यार्थपरा' इति केषाञ्चिदर्थवर्णनं तदसत् । तत्त्वपदार्थयोरैक्यस्यैव तत्त्वमस्यादिमहावाक्यार्थत्वेन तत्त्वमादिपदार्थस्य ब्रह्माभेदस्य तदर्थत्वायोगात् ।

किं तत्पदार्थपरं वाक्यमित्यतस्तदुदाहरति ॥ तत्रेति ॥ वेदान्तेष्वित्यर्थ । आदिपदेन 'योऽयं विज्ञान-मय ' इत्यादित्वपदार्थपरवाक्यपरिग्रह । करिष्यमाणानुमाने आभासानुद्धरन् हेतुद्वयासिद्धिं परिहरति ॥ ब्रह्मेति ॥

यत्तु लक्षणवाक्यत्वहेतो. पक्षधर्मतोपदर्शकत्वेन प्रवृत्त्युपवर्णन तदसत् । 'तल्लक्षणं हीदमुच्यते' इत्येतावता लक्षणवाक्यत्वहेतो पक्षधर्मतोपदर्शनसिद्धया शेषवैयर्थ्यापातात् । न च स्वरूपमात्रमेव पृष्टं जिज्ञासितञ्च । अत-स्तदेव सत्यज्ञानादिवाक्येऽपि वक्तुमुचितम् । न तु विशिष्टम् । तथा सत्यपृष्टाजिज्ञासितार्थबोधकत्वेनानवधेय-वचनत्वप्रसङ्गादिति अप्रयोजकत्वशङ्कापरिहारार्थत्वाद्ब्रह्मेत्यादिशेषग्रन्थस्य न वैयर्थ्यमिति वाच्यम् । अप्रयोजकत्व-शङ्कापरिहारस्योत्तरत्राकर एव स्पष्टत्वेन ब्रह्मेत्याद्यंशस्य तस्य तत्पर्यन्तत्वाश्रयणायोगात् । तत्स्वरूपमात्रप्रश्नोत्तरत्व-रूपद्वितीयहेत्वसिद्धिपरिहारकतया स्फुटं प्रतीयमानस्यास्य ग्रन्थस्य तत्परतयैव योजनीयत्वात् 'न च द्वितीयहेतो-रसिद्धिः । 'ब्रह्मविदाप्नोति परम्' इत्युक्तब्रह्मप्रातिपदिकार्थे बुभुत्सिते अस्य प्रवृत्तेः' इति द्वितीयहेत्वसिद्धिपरि-हारकत्वेनैव योजनीयत्वाच्च अप्रयोजकत्वशङ्कापरिहारकत्वाश्रयणानुपपत्तेश्च ।

एवमसिद्धिं परिहृत्य दृष्टान्तोपदर्शनेन व्याप्त्यसिद्धिं परिहरति ॥ यथेति ॥ ननु न सत्यज्ञानादिपदाना-मखण्डार्थत्व ब्रह्मप्रातिपदिकार्थमात्रनिष्ठत्व युक्तम् । तथा सत्येकार्थतया पर्यायत्वप्रसङ्गेन सहप्रयोगाभावप्रसङ्गा-दित्यतो लक्ष्यार्थभेदाभावेऽपि वाच्यार्थभेदान्न पर्यायत्वप्रसङ्ग इति भावेन तत्रानुरूप दृष्टान्तमाह ॥ प्रकर्षादि-गुणयोगाभिधानमुखेनेति ॥ आदिपदेन प्रकाशत्वपरिग्रह । गुणग्रहण सामान्यस्याप्युपलक्षणम् । ततश्च प्रकृष्टशब्दस्य प्रकर्षलक्षणगुणयोगाभिधानमुखेन प्रकाशशब्दस्य प्रकाशत्वरूपसामान्ययोगाभिधानमुखेनेत्यर्थः ॥ लक्षणयेति ॥ जहल्लक्षणयेत्यर्थ । प्रकृष्टप्रकाशपदयोर्गुणसामान्यरूपस्वार्थपरित्यागादिति भाव । ततश्च लक्ष्यार्थभेदाभावेऽपि गुणसामान्यरूपवाच्यार्थभेदान्न पर्यायत्वमिति भाव ।

॥ परापरसामान्यवाचिनामिति ॥ कुम्भाद्यनुगतसत्तासामान्य परजातिः । अन्त.करणवृत्त्युपधानभेद-लब्धचिदानन्दविशेषानुगते ज्ञानत्वानन्दत्वे चापरजाती । एवञ्च सत्यज्ञानादिशब्दाना लक्ष्यार्थाभेदेऽपि क्रमेणोक्त जातिवाचित्वेन वाच्यार्थभेदसद्भावान्न पर्यायत्वमित्यर्थ. । एव कल्पतरूक्तरीत्या पर्यायतां परिहृत्य रीत्यन्तरेणापि परिहरति ॥ शबले गृहीतसङ्गतिकानां वेति ॥ ततश्च सत्यत्वज्ञानत्वादिविशिष्टभिन्नभिन्नार्थवाचित्वान्न पर्यायत्व-मित्यर्थ. ।

(गु टि) ननु ब्रह्मणोऽन्यस्य सत्यत्वादिविशिष्टस्य परेणानङ्गीकारात्सत्यत्वादिपदसङ्गतिग्रहणविषयत्वाभावेन ब्रह्मण एव तद्विषयता वाच्या । ततश्च ब्रह्मणो वाच्यत्वाल्लक्ष्यत्वहानिरित्याशङ्‌क्य लक्ष्यत्वेनाभिमताच्छुद्धब्रह्मणोऽन्यस्य शबलरूपसगुणब्रह्मण एव सङ्गतिग्रहणविषयत्वाभ्युपगमेन शुद्धस्य तदभावान्न लक्ष्यत्वहानिरिति भावेनोक्तम् ॥ शबले गृहीतसङ्गतिकानामिति ॥

अत्र वाशब्दयुक्त एव पाठ स्वरस । मूलकोशेषु दर्शनात् । 'परापरसामान्यवाचिना सगुणब्रह्मवाचिना वा' इत्यादिसुधाऽनुसारात् । 'न च कुम्भाऽद्यनुगतसत्ता परजाति । अन्त करणवृत्त्युपधानलब्धभेदचिदानन्दविशेषानुगते ज्ञानत्वानन्दत्वे अपरजाती । एवञ्च सत्यज्ञानानन्दशब्दाना लक्ष्यार्थाभेदेऽपि क्रमेणोक्तजातिवाचित्वान्न पर्यायता' इति कल्पतरूक्तमयुक्तम्, इत्यादिना परापरसामान्यवाचित्वपक्ष निराकृत्य 'एतेन सत्यत्वादिविशिष्टशबलब्रह्मवाचिना सत्यादिशब्दाना शुद्धब्रह्मणि लक्षणेति न पर्यायत्वमिति निरस्तम्' इत्यादिना न्यायामृते सत्यत्वादिविशिष्टशबलब्रह्मवाचित्वपक्षस्य पृथगतिदेशेन निरासाच्च । 'सत्यादिपदानि सत्यत्वादिपृथगर्थवाचीन्येवेति न पर्यायतामापद्यन्ते' इत्यादे 'शबले गृहीतसङ्गतिकाना तदुपपत्ते.' इत्यन्तस्याहिकुण्डलाधिकरणीयसुधाग्रन्थस्य च 'सगुणब्रह्मवाचिना वा' इति जन्माधिकरणोक्तसत्यत्वादिविशिष्टशबलब्रह्मवाचित्वपक्षमात्राभिप्रायकत्वेन परापरसामान्यवाचित्वपक्षाभिप्रायकत्वाभावान्न तद्विरोध । अत एव तत्र परापरसामान्यवाचीनीत्यनुक्त्वा सत्यत्वादिपृथगर्थवाचीनीत्येवोक्तमिति द्रष्टव्यम् ।

यत्तु 'परसामान्य सत्ता सत्यशब्दार्थ । अपरसामान्यं ज्ञानत्वादि ज्ञानानन्दशब्दार्थः । व्यवहारे भट्टनय इति परैरङ्गीकारात्' इति परापरसामान्यवाचिनामित्यस्यार्थमभिधाय 'परापरसामान्यवाचिनामिति न युक्तम् । निर्विशेषे तदितरत्र च सत्ताज्ञानत्वाऽऽनन्दत्वानामसम्भवेन सङ्गतेरेव गृहीतुमशक्यत्वात्' इत्याशङ्कानिवर्तकतया 'शबले गृहीतसङ्गतिकानामित्येव तात्पर्यम् । उक्तधर्माणा शबले सम्भवान्न सङ्गतिग्रहणानुपपत्ति.' इत्येकपक्षोपदर्शकतया एतद्ग्रन्थार्थकथनं तदसत् । 'शबले गृहीतसङ्गतिकाना वा' इति एवद्ग्रन्थीयचिरन्तनमूलकोशस्थवाशब्दयुक्तपाठानुसारात् एतद्ग्रन्थव्याख्यानरूपपरापरसामान्यवाचिना सगुणब्रह्मवाचिना वेति जन्माधिकरणीयसुधानुसारात् परापरसामान्यवाचित्वसत्यत्वादिधर्मविशिष्टसगुणब्रह्मवाचित्वपक्षयो पृथङ्निरासकतयोदाहृतन्यायामृतग्रन्थानुरोधाच्चोक्तपक्षद्वयप्रदर्शनपरतया स्फुट प्रतीयमानस्यास्य ग्रन्थस्य परापरसामान्यवाचित्वरूपैकपक्षोपदर्शकत्वाश्रयणस्य वाशब्दविरुद्धत्वेनायुक्तत्वात् । घटादेस्तद्वाचकघटादिशब्दसङ्गतिग्रहणविषयत्ववत् कुम्भाद्यनुगतसत्तारूपपरसामान्यस्यान्त करणवृत्त्युपधानलब्धभेदचिदानन्दविशेषानुगतज्ञानत्वाऽऽनन्दत्वरूपापरसामान्यस्य च सत्यज्ञानाऽऽनन्दपदसङ्गतिग्रहणविषयत्वसम्भवेन तदाक्षेपस्य निर्दलत्वेन तत्परिहारकतया 'शबले गृहीतसङ्गतिकानाम्' इत्येतदशावतारस्यात्यन्तानुपयुक्तत्वाच्च । सत्यज्ञानादिपदाना शबले गृहीतसङ्गतिकत्वस्य शबलवाचित्वोपपादकत्वेऽपि सत्तादिरूपपरापरसामान्यवाचित्वानुपपादकत्वेन तदाक्षेपानिवर्तकतया तन्निवर्तकत्वेनैतत्प्रवृत्त्युपवर्णनायोगाच्चेत्यास्ता तावत् ।

(गु॰टि॰) यच्च 'सामान्यवाचिनामिति प्रवृत्तिनिमित्तस्यापि शब्दवाच्यत्वाभिप्रायेणोक्तम् । वस्तुतस्तु सामान्यविशिष्टा व्यक्तिरेव वाच्या । तथा च प्रवृत्तिनिमित्तभेदादपर्यायत्वम्' इति परापरसामान्यवाचिनामित्यस्याभिप्रायमभिधाय 'सत्यत्वज्ञानत्वाऽनन्दत्वविशिष्टवस्तुन एवाभावात्कथं शक्तिग्रहः । तदभावे च कथं लक्षणा' इत्याक्षेपपरिहारकतया अस्य ग्रन्थस्यैकपक्षोपदर्शकतामङ्गीकृत्य प्रवृत्त्युपवर्णनं तदप्यसत् । उदाहृतज्ञापकबलेन स्फुट पक्षद्वयोपदर्शकतया निश्चितस्यास्य ग्रन्थस्य सामान्यविशिष्टव्यक्तिवाचकत्वरूपैकपक्षमात्राभिप्रायकत्वस्यायुक्तत्वात् । परापरसामान्यवाचिनामित्यस्य परापरसामान्यविशिष्टव्यक्तिवाचिनामित्यर्थवर्णनस्यैतद्ग्रन्थव्याख्यानरूपपरःसहस्रानेकचित्सुखादिग्रन्थाननुसारित्वेन तथा व्याख्यानस्यानुपपन्नत्वाच्च । सत्ताविशिष्टस्य कुम्भादेर्ज्ञानत्वाऽनन्दत्वविशिष्टस्यान्त करणवृत्त्युपधानलब्धभेदचिदानन्दविशेषस्य च सत्त्वेन तत्रैव सत्यज्ञानादिशब्दसङ्गतिग्रहणोपपत्त्या तन्मूललक्षणायाः सम्भवेन तदाक्षेपस्याज्ञानमात्रमूलकत्वाच्चेत्यास्तां तावत् ।

एतद्ग्रन्थस्यैकपक्षाभिप्रायविषयकत्वदीयभ्रान्तिमूलभूताहिकुण्डलाधिकरणीययद्वेत्यादिसुधाग्रन्थस्य चार्थान्तरपरत्वेनैतद्ग्रन्थस्य त्वदभिमतैकपक्षाभिप्रायकत्वानुपोद्बलकत्वाच्च । तत्कथमिति चेत्तदुपास्यन्ता भवता गुरव इत्यास्तां तावत् ।

नक्षत्रादीत्यादिपदेन सन्तमसपरिग्रह । ततश्च प्रतिपदमारोपिताप्रकृष्टत्वाप्रकाशत्वाद्यनेकाकारव्यवच्छेदप्रयोजनकत्वान्न प्रकृष्टादिपदवैयर्थ्यमिति भाव । एवमुपोद्घातेनाऽभासानुद्धृत्य सिद्धमनुमानप्रयोग दर्शयति ॥ **तदयमिति** ॥ यद्यपि द्विविधपदार्थपरवाक्यानामपि अखण्डार्थत्वप्रतिज्ञानुसारेण तत्पदार्थपरसत्यज्ञानादिवाक्यानामिव त्वंपदार्थपर योऽयं विज्ञानमय इत्यादिवाक्यानामपि अखण्डार्थत्वस्योपोद्घातेनोपपादितस्यावश्यं साधनीयत्वमिति तत्परित्यागेन सत्यज्ञानादिवाक्यानामेव तत्साधनमनुचितम् तथाऽपि एकस्य तत्साधनप्रकारेणापरस्यापि अखण्डार्थपरतायाः साधितप्रायत्वात् किं पृथक्पृथक्साधनप्रयासेनेत्यभिप्रेत्यैकस्यैव तत्साधनमिति ज्ञेयम् ।

यद्यपि त्वंपदार्थपरवाक्यानामखण्डार्थत्वसाधनेन तत्पदार्थपरवाक्यानामपि तत्सिद्धिरविशिष्टैवेति तेषामेव तत्साधनं निर्निबन्धनमित्याभाति तथाऽपि तत्त्वमसीति वाक्ये तत्पदस्य पूर्वं त्वंपदस्य च पश्चाच्छ्रवणेनासति प्रथमपरित्यागे कारणे श्रुतमहावाक्यक्रमोल्लङ्घनायोगात् महावाक्ये प्रथमश्रुततत्पदार्थपरसत्यज्ञानादिवाक्यानामेव तत्साधनमित्यवधेयम् ।

॥ **अखण्डार्थनिष्ठमिति** ॥ संसर्गागोचरप्रमाजनकमित्यर्थः ॥ **लक्षणवाक्यत्वादिति** ॥ संसृष्टार्थपरवाक्ये अनैकान्तिकतापरिहाराय लक्षणविशेषणम् ॥ **प्रकृष्टादिवाक्यवदिति** ॥ न च हेतुद्वयेऽपि दृष्टान्तः साध्यविकल इति वाच्यम् । प्रकृष्टादिवाक्य चन्द्रप्रातिपदिकार्थमात्रनिष्ठं तन्मात्रप्रश्नोत्तरत्वात्सम्मतवदित्यनुमानेन तत्सिद्धेः । न हि कश्चन्द्र इति चन्द्रस्वरूपमात्रे पृष्टे अन्यद्वक्तुमुचितमिति भाव ॥ **अतस्तत्रेति** ॥ अत्र हि स्वार्थेत्यतः पूर्वं विशिष्टार्थाभिधानद्वारेणेति पूरणीयम् । सर्वज्ञत्वादिविशिष्टचैतन्यरूपवाच्यार्थाभिधानमुखेनेत्यर्थः ।

(गु टि) गङ्गापदलक्षिततीरस्यागङ्गात्ववत्सर्वज्ञत्वादिविशिष्टचैतन्यवाचितत्त्वंपदलक्ष्यस्य ब्रह्मणोऽचेतनत्वप्रसङ्ग इत्यतो गङ्गापदस्य जहल्लक्षणया तीरपरत्वात्तस्यागङ्गात्वेऽपि तत्त्वंपदयोर्जहल्लक्षणया ब्रह्मपरत्वाभावान्न तस्याचैतन्यप्रसङ्ग इत्याशयेनाऽह ॥ स्वार्थैकदेशत्यागलक्षणयेति ॥ जहदजहल्लक्षणयेत्यर्थ । सर्वज्ञत्वाज्ञत्वादिविशिष्टचैतन्यरूपवाच्यार्थैकदेशस्य सर्वज्ञत्वादिविशेषणांशस्य त्यागेन चैतन्यरूपविशेष्यांशस्योपादानादिति भाव ॥ भेदभ्रमव्युदासद्वारेणेति ॥ तदिति वचने त्वमिति वा वचने भेदभ्रमनिरासायोगात्तन्निरासेन चैतन्यस्वरूपप्रतिपादनेनेत्यर्थः ॥ अत एवेति ॥ लक्ष्यार्थभेदाभावेऽपि सर्वज्ञत्वाज्ञत्वादिविशिष्टचैतन्यरूपवाच्यार्थभेदान्न तत्त्वपदयो. पर्यायत्वम् । भेदभ्रमव्युदासरूपप्रयोजनवत्त्वान्न वैयर्थ्यमित्यर्थ. ॥ विशिष्टाभिधानद्वारेणेति ॥ तत्तेदन्ताविशिष्टदेवदत्तस्वरूपलक्षणतदिदपदवाच्यार्थैकदेशस्य तदेतद्देशकालवैशिष्ट्यरूपस्य परित्यागेन देवदत्तस्वरूपलक्षणविशेष्यांशस्योपादानादिति भाव । ततश्च लक्ष्यार्थाभेदेऽपि तदिदशब्दवाच्यतत्तेदन्ताविशिष्टदेवदत्तस्वरूपलक्षणवाच्यार्थभेदादपर्यायत्वमित्यर्थः ।

॥ भेदभ्रमव्युदासेनेति ॥ स इत्येवोक्ते अयमित्येव वोक्ते भेदभ्रमनिरासायोगात्तन्निरासेन देवदत्तस्वरूपप्रतिपादनेनेत्यर्थ । ततश्च भेदभ्रमव्युदासरूपप्रयोजनवत्त्वान्न वैयर्थ्यमिति भाव. ॥ अकार्यकारणेति ॥ अत्र समानाधिकरणत्व मृद्घट इत्यादौ व्यभिचारि । अकार्यकारणनिष्ठत्वविशेषितमपि गुणगुणिनोरभेदपक्षे नीलमुत्पलं नीलो घट इत्यादौ व्यभिचारि । गुणगुणिभेदपक्षे च कार्यकारणतिष्ठतया आद्यविशेषणेनैव तद्व्यावृत्तावपि गौ शाबलेय इत्याकृतिव्यक्तिसामानाधिकरण्यस्थले व्यभिचारीति तन्निरासाय द्रव्यमात्रनिष्ठत्वे सतीति विशेषणम् । अकार्यकारणनिष्ठत्वस्य द्रव्यमात्रवृत्तित्वविशेषितस्य देवदत्तस्य गौ. इत्यादौ व्यभिचारनिरासाय समानाधिकरणत्वादितीति सर्वं सार्थकम् ।

यत्तु नीलमुत्पलमित्यादौ व्यभिचारपरिहाराय द्रव्यमात्रनिष्ठत्वे सतीति विशेषणमिति तदसत् । गुणगुणिनोर्भेदेन कार्यकारणनिष्ठतया आद्यविशेषणेनैव तन्निरासस्य सिद्धत्वेन तस्य द्वितीयविशेषणप्रयोजनत्वासम्भवात् । न च गुणगुणिनोरभेदपक्षे अकार्यकारणनिष्ठत्वस्यापि सत्त्वान्न तेन निरास. सम्भवतीति वाच्यम् । तथा सति गुणगुणिनोरभेदपक्षे तदवैयर्थ्यसिद्धावपि तद्भेदपक्षे तद्वैयर्थ्यानिस्तारात् ।

सत्यज्ञानादिवाक्यानामखण्डार्थत्वसाधकानुमाने दृष्टान्ते साध्यवैकल्योपपादनम्

(टी.) तदेतदसत् । दृष्टान्तस्य साध्यविकलत्वादित्याशयवानाद्यदृष्टान्तं तावद्दूषयति

प्रकृष्टप्रकाशश्चन्द्र इत्यादिषु प्रकृष्टत्वादिविशेषणानि सन्त्येवेति न तत्साम्यम् ।

इत्यादिषु लक्षणवाक्येषु । स्थितानां पदानामभिधेयानीति शेषः । इतिशब्दो हेतौ । न तत्साम्यम् सत्यज्ञानाऽदिवाक्यानामिति शेषः । न तद्दृष्टान्तेनैषामखण्डार्थतासाधनं युक्तमिति यावत् ।

इदमुक्तं भवति । लक्षणा हि वाच्यार्थासम्भवे समाश्रीयमाणा गङ्गायां घोष इत्यादिवाक्येषु दृष्टा । एवमेवाऽश्रयणेऽतिप्रसङ्गात् । प्रकृते च प्रकृष्टाऽदिपदाभिधेयानि प्रकृष्टत्वाऽदिविशेषणानि

(टी) चन्द्रादौ प्रमाणसिद्धानि। अतोऽनुपपत्त्यभावान्नैषां लक्षणया चन्द्रादिस्वरूपमात्रपरत्वं युक्तम्। लक्षणानाश्रयणे चोक्तपर्यायत्वादिदोषप्रसङ्गः। तथा च दृष्टान्तस्य साध्यविकलत्वान्नानेन सत्यज्ञानादिवाक्यानां लक्षणया ब्रह्मस्वरूपमात्रपरत्वसिद्धिः इति।

(वि टि) तदेतत्सामान्येनानूद्य दूषयति ॥ **तदेतदसदिति** ॥ प्रकृष्टत्वादिविशेषणानां चन्द्रादिनिष्ठतया लक्षणवाक्येष्वसत्त्वात् यथाश्रुतेऽनुपपत्तिं परिहर्तुं शेषं पूरयति ॥ **इत्यादिष्विति** ॥ न तत्साम्यमिति साध्ये हेत्वाकाङ्क्षायामाह ॥ **इति शब्द इति** ॥ साम्यस्य सप्रतियोगिकत्वात्प्रतियोग्याकाङ्क्षायामाह ॥ **सत्येति** ॥

ननु सत्यज्ञानादिवाक्यस्य प्रकृष्टप्रकाशाऽदिवाक्यसाम्याभावेऽपि स्वत एवाखण्डार्थत्वं किं न स्यादित्यत आह ॥ **न तद्दृष्टान्तेनेति** ॥ सत्यज्ञानादिवाक्यस्याखण्डार्थत्वाप्रतीते प्रकृष्टप्रकाशादिवाक्येनैव तत्तत्र साधनीयम्। तच्चायुक्तम्। तस्य दृष्टान्तत्वायोगादिति भाव। ननु चन्द्रादौ वस्तुत. प्रकृष्टत्वादिविशेषणसत्त्वेऽपि प्रकृष्टादिपदाना तत्प्रतिपादनपरत्वाभावेन लक्षणया स्वरूपमात्रपरत्वेन चैतद्दृष्टान्तता स्यादित्याशङ्क्याऽह ॥ **इदमुक्तं भवतीति** ॥ **वाच्यार्थसम्भव इति** ॥ वाच्यार्थान्वयासम्भव इत्यर्थः ॥ **एवमेवेति** ॥ वाच्यार्थानुपपत्त्यभावेऽपीत्यर्थः ॥ **अतिप्रसङ्गादिति** ॥ गङ्गायां मत्स्य इत्यत्रापि स्यादित्यर्थः ॥ **प्रमाणसिद्धानीति** ॥ तथा च प्रकृष्टत्वादिविशेषणाना चन्द्रादावन्वये न योग्यताविरह इति भाव.।

॥ **अतोऽनुपपत्त्यभावादिति** ॥ न च मुख्यार्थानुपपत्त्यभावेऽपि तात्पर्यानुपपत्त्या स्वरूपमात्रे लक्षणाकल्पन सम्भवतीति वाच्यम। स्वरूपमात्रप्रश्नोत्तरत्वस्य निरसिष्यमाणतया स्वरूपमात्रे तात्पर्याभावेन तदनुपपत्तेरप्यभावादिति भाव। किञ्च स्वरूपमात्रे लक्षणाङ्गीकारे पर्यायत्व वैयर्थ्यञ्चापद्यते। न च शक्त्या एकार्थनिष्ठानामेव पर्यायत्वम्। न तु लक्षणादाविति वाच्यम्। द्विरेफशब्दस्य लक्षकस्यापि भ्रमरादिशब्दपर्यायत्वदर्शनात्। न च नक्षत्रादिव्यावृत्तिबोधनेन सप्रयोजनत्वान्न वैयर्थ्यमिति वाच्यम्। व्यावर्तकधर्मवैशिष्ट्याप्रतीत्या व्यावृत्तिबोधस्यैवासम्भवात्। विशिष्टार्थपरत्वाऽश्रयणे तु नायं दोष इत्यत आह ॥ **लक्षणाऽनाश्रयणे चेति** ॥ दृष्टान्तस्य साध्यवैकल्योपपादनप्रयोजनमुपसहरति ॥ **तथा चेति** ॥ **अनेन** प्रकृष्टप्रकाशाऽदिवाक्यदृष्टान्तेन उक्तानुमानेन चेत्यर्थ.।

(रा टि) अनतिप्रसङ्गायावच्छेदकमाह ॥ **इत्यादिषु लक्षणवाक्येष्विति** ॥ एवञ्च सति 'न तत्साम्यम्' इत्यस्य सिद्धमर्थमाह ॥ **न तद्दृष्टान्तेनेति** ॥ अनेन मूलवाक्येनोक्तशङ्कानिरासस्यास्पष्टत्वादाह ॥ **इदमुक्तमिति** ॥ **एवमेवेति** ॥ मुख्यार्थसम्भवेऽपीत्यर्थ।

(वे टि) प्रकृष्टत्वादिविशेषणाना चन्द्रनिष्ठतया लक्षणवाक्येष्वसत्त्वाद्यथाश्रुतान्वयेऽनुपपत्तिं परिहर्तुं शेषपूरणेन योजयति ॥ **इत्यादिष्विति** ॥ ननु सत्यज्ञानादिवाक्यस्य प्रकृष्टादिवाक्यसाम्याभावो मयाऽपि स्वीकृत। भिन्नभिन्नपदघटितत्वेन वैलक्षण्यस्यानुभवसिद्धत्वादित्यत आह ॥ **न तद्दृष्टान्तेनेति** ॥ हेतुसाध्यवत्तया साम्य त्वया स्वीकृतं तदत्र न सम्भवतीति भावः।

(वै टि) ननु चन्द्रादौ वस्तुत प्रकृष्टत्वाऽदिविशेषणसत्त्वेऽपि वाक्यस्य तत्प्रतिपादनपरत्वाभावेन लक्षणया स्वरूपमात्रप्रतिपादनपरत्वेन दृष्टान्त स्यादित्यत आह ॥ **इदमुक्त भवतीति** ॥ **वाच्यार्थासम्भव इति** ॥ वाच्यार्थान्वयासम्भव इत्यर्थः ॥ **एवमेवेति** ॥ वाच्यार्थान्वयानुपपत्त्यभावेऽपीत्यर्थ ॥ **प्रमाणसिद्धानीति** ॥ तथा च प्रकृष्टत्वादिविशेषणानां चन्द्रादावन्वये न योग्यताविरह इति भाव. ।

ननु मुख्यार्थानुपपत्त्यभावान्नात्र लक्षणाऽश्रीयते । किन्तु शक्त्यैव स्वरूपमात्राभिधायित्वम् । अतो न दृष्टान्ते साध्यवैकल्यमित्यत आह ॥ **लक्षणाऽनाश्रयण इति** ॥ **उक्तेति** ॥ वाच्यार्थभेदाभावाङ्गीकारादिति भाव ।

(द्वै. द्यु) ॥ **तावद्दूषयतीति** ॥ यद्यप्यखण्डार्थत्वमप्रसिद्धमित्यप्रसिद्धविशेषणतैव वक्तव्या तथापि सत्यज्ञानादिवाक्यतात्पर्यविषयीभूतप्रमा सासर्गिकविषयिताशून्येति प्रथमसाध्यनिष्कर्षेऽपि द्वितीयसाध्यस्य स्वघटित-वाक्यजन्यत्वस्वनिरूपितवृत्तिग्रहाधीनोपस्थितिविषयभिन्नाविषयकत्वैतदुभयसम्बन्धेन प्रातिपदिकस्यैव साध्यतया निष्कर्षकरणे प्रकृष्टप्रकाशादिवाक्यजप्रमात्वेन दृष्टान्तीकरणेऽप्रसिद्धविशेषणता न घटते । अत· साध्यवैकल्यमेव मूलेऽभिहितमिति ध्येयम् । यद्वा यद्यल्लक्षणवाक्य तत्तत्स्वरूपमात्रपरम् । इद च ब्रह्मलक्षणवाक्यमतो ब्रह्मस्वरूप-मात्रपरमिति रीत्या सामान्यव्याप्तिमूलकानुमितिरुद्देश्या । ब्रह्मस्वरूपमात्रपरत्वरूपाखण्डार्थकत्वमेव प्रकृतसाध्य-तयाऽभिमतम् । सामान्यव्याप्तिमूलकानुमितौ तु न साध्यसाधनयोर्व्याप्तिग्रहोऽपेक्षित. । किन्तु प्रकृतसाधनसजा-तीयेषु तत्कालोपस्थितसाधनेषु यावत्सु प्रकृतसाध्यसजातीयसाध्यनिरूपितव्याप्तिज्ञान प्रकृतसाधनस्य पक्षसत्त्वज्ञान चाप्रसिद्धस्यैव साध्यस्यानुमापकसामग्रीति सैवापेक्षिता । तत्र प्रकृतसाध्याप्रसिद्धेर्दोषत्वायोगात्सामान्यव्याप्तिदूष-णार्थमेवास्य ग्रन्थस्य प्रवृत्तिरित्यदोष । दृष्टान्तस्य साध्यविकलत्वादित्यस्य सजातीयसाध्यहेत्वोर्व्याप्तिग्रहस्थलत्वे-नाभिमतेषु सर्वस्थलेषु साध्याभावात्सामान्यव्याप्त्यभावादित्यर्थ इति न तद्विरोध इति ध्येयम् । एतेन प्रतिज्ञा-विरोधरूपतया प्रथमप्राप्तसाध्याप्रसिद्धिं विहाय चरमप्राप्तदृष्टान्तदोषोद्भावनमयुक्तमिति परास्तम् ।

वाच्यार्थानुपपत्त्या वा तात्पर्यानुपपत्त्या वा लक्षणा लोके दृष्टा । प्रकृते च न प्रथमकल्प इत्याशयेनाह ॥ **लक्षणा हीत्यादिना** ॥ **लक्षणाऽनाश्रयण इति** ॥ किन्तु मुख्यवृत्त्यैव पदद्वयस्य चन्द्रस्वरूपमात्रबोधकत्व इति शेष ।

(गु टि) ननु न लक्षणया चन्द्रस्वरूपमात्रपरत्व प्रकृष्टादिपदानामुच्यते येन मुख्यार्थानुपपत्त्यभावर्णनं सङ्गच्छेत । किन्तु मुख्यवृत्त्यैव । अतो नोक्तदोष इत्यत आह ॥ **लक्षणाऽनाश्रयणे चेति** ॥ चन्द्रस्वरूप-वाच्यार्थस्यैकत्वादिति भाव ।

यत्तु शक्त्यैव स्वरूपमात्राभिधायित्वेन लक्षणया तदनङ्गीकारान्न दृष्टान्ते साध्यवैकल्यमित्याशङ्क्य तत्प-रिहारकतयैतद्ग्रन्थप्रवृत्त्युपवर्णनं तदसत् । लक्षणावच्छक्तेरपि वृत्तित्वेन तत्प्रतिद्वन्द्वितया [1]मुख्यवृत्तेरेव वक्तव्य-तया शक्तेरुपादानायोगात् ।

[1] अवृत्तेरेव इति पाठेन भाव्यमिति भाति ।

तत्त्वमस्यादिवाक्यानामखण्डार्थतासाधकानुमाने दृष्टान्ते साध्यवैकल्योपपादनम्

(टी) द्वितीयं दृष्टान्तं दूषयति

अनित्यदेशकालसम्बन्धित्वस्य सत्त्वात् न सोऽय देवदत्त इत्याद्युपमा च

इत्यादिवाक्यमुपमा तत्त्वमस्यादिवाक्यस्याखण्डार्थतायामिति शेषः । तदेतद्देशकालसम्बन्धित्वं हि स इत्यादिपदवाच्योऽर्थः । तच्चास्त्येव देवदत्तादौ प्रमितमिति वाच्यार्थसम्भवान्न सोऽयं देवदत्त इत्यादिवाक्यं लक्षणया देवदत्तादिस्वरूपमात्रपरम् । अतो नैतद्दृष्टान्तेन तत्त्वमस्यादिवाक्यानामखण्डार्थतासिद्धिः ।

(वि टि) उपमा दृष्टान्त. ॥ तदेतदिति ॥ 'सोऽयं देवदत्त.' इति दृष्टान्तवाक्ये तद्देशकालसम्बन्धित्व तच्छब्दस्य वाच्योऽर्थ एतद्देशकालसम्बन्धित्वं अयमितीदंशब्दस्य वाच्योऽर्थ इति विवेकः ।

ननु तदेतद्देशकालसम्बन्धित्वस्य देवदत्तादौ प्रमाणसिद्धत्वेऽपि स इत्यादिपद लक्षणया देवदत्तादिस्वरूपमात्रपर किं न स्यादित्यत आह ॥ वाच्यार्थेति ॥

(रा. टि.) ॥ तदेतद्देशकालेति ॥ तद्देशकालवैशिष्ट्यं तच्छब्दार्थः । एतद्देशकालवैशिष्ट्यमयशब्दार्थः । अस्त्येवेत्यनुवादः प्रमितमिति व्याख्यानम् ।

(वे टि) ॥ तदेतदिति ॥ तद्देशकालसम्बन्धित्वं स इति तच्छब्दार्थ । एतद्देशकालसम्बन्धित्वमयमितीदशब्दार्थ इति विवेक. ।

(द्वै. गु) इत्याद्युपमा चेत्यत्र इत्यादि उपमा चेति छेदमभिप्रेत्य व्याचष्टे ॥ इत्यादिवाक्यमिति ॥ अस्त्येवेति ॥ पूर्वकाल इति शेषः । तथा च तदाश्रयत्वं न देवदत्ते बाधितमिति भाव. ।

प्रतिवादिमतरीत्या सोऽयं देवदत्त इत्यादिवाक्ये वाच्यार्थानुपपत्त्या स्वरूपमात्रे लक्षणासमर्थनम्

(टी) ननु कथमत्र लक्षणाऽश्रणनिमित्तवाच्यार्थानुपपत्त्यभावः । तद्देशकालविशिष्टस्यैतद्देशकालवैशिष्ट्य, एतद्देशकालविशिष्टस्य तद्देशकालवैशिष्ट्यं वा विशिष्टद्वयैक्यं वाऽत्र मुख्यार्थो वाच्यः । तत्र न तावदाद्यः । एतद्देशकालवैशिष्ट्यस्य प्रत्यक्षसिद्धत्वेनाबोध्यत्वात् । तद्देशकालविशिष्टस्यैतद्देशकालवैशिष्ट्यबोधने तद्देशकालयोरपीदानीं सत्त्वप्राप्तेश्च । न द्वितीयः । एतद्देशकालयोस्तदानीं सत्त्वप्रसङ्गात् । न तृतीयः । विशेषणभूतदेशकालैक्येन विना विशिष्टैक्यानुपपत्तेः । विशेषणैक्यस्य च प्रमाणबाधितत्वात् । अतो मुख्यार्थेऽनुपपत्तिदर्शनाद्विशिष्टद्वयोपलक्षितमेव देवदत्तस्वरूपमनेन भेदभ्रमव्युदासेन प्रतिपाद्यमिति युक्तमाश्रयितुम् ।

(वि टि ) ॥ वाच्यार्थानुपपत्तीति ॥ वाच्यार्थान्वयानुपपत्तीत्यर्थ ॥ मुख्यार्थो वाच्य इति ॥ सोऽय देवदत्त इति वाक्यस्येति शेष ॥ अबोध्यत्वादिति ॥ सन्दिग्धविपर्यस्तयोरन्यतरं प्रत्येव शब्दस्यार्थवत्त्वादिति भाव. ॥ तद्देशकालयोरपीति ॥ विशिष्टवृत्तेर्विशेषणवृत्तित्वनियमेनैतद्देशकालविशिष्टत्व सम्भवतीति भाव. ॥ तदानीमिति ॥ तदानीमसतस्तद्देशकालविशिष्टवृत्तित्वासम्भवादिति भाव । अनेन सोऽय देवदत्त इति वाक्येन ।

(रा टि.) लक्षणाबीज मुख्यार्थासम्भवमाशङ्कते ॥ नन्विति ॥ विशेषणैक्यस्येति ॥ तद्देशकालसम्बन्धैतद्देशकालसम्बन्धरूपविशेषणयोरैक्यस्येत्यर्थ ॥ भेदभ्रमेति ॥ स इत्युक्तस्यायमित्युक्तस्य चेति योज्यम् ।

(वे टि ) अनित्येत्येतद्व्याख्यातुमाह ॥ नन्विति ॥ अबोध्यत्वादिति ॥ सन्दिग्धविपर्यस्तान्यतरं प्रत्येव शब्दस्यार्थवत्त्वादिति भाव॰ ॥ तद्देशकालयोरिति ॥ तद्देशकालादे. सत्त्वं विना देवदत्तस्य तद्देशकालादिविशिष्टत्व न सम्भवति । विधेयान्वयकाले सत एव विशेषणत्वादिति भाव. । एवमेतद्देशकालयोरिति वाक्यमपि योज्यम् ॥ विशिष्टैक्यानुपपत्तेरिति ॥ यदा ह्यविरुद्धदण्डकुण्डलादिविशेषणभेदे न विशिष्टाभेदस्तदा तदेतद्देशकालरूप विरुद्धविशेषणभेदे सुतरा न विशिष्टाभेद इत्यर्थ । तदुक्त संक्षेपशारीरके

अविरुद्धविशेषणद्वयप्रभवत्वेऽपि विशिष्टयोर्द्वयो: ।
घटते न यदैकता तदा सुतरा तद्विपरीतरूपयो ॥ इति ।

॥ अनेनेति ॥ सोऽयं देवदत्त इति वाक्येनेत्यर्थ. ।

(द्वै द्यु ) ॥ तद्देशकालविशिष्टस्येति ॥ इदं तद्देशकालोपहितैतद्देशकालोपहितयोरभेदेनान्वयेन लब्धार्थस्य कथनपरम् । तयोस्तादात्म्यरूपान्वयकाले सतोरेव द्वयोरुपाधित्वात् ॥ विशिष्टेति ॥ विशिष्टवैशिष्ट्यावगाही तादृशविशेषणे स्वविशेष्यान्वय्यन्वयित्वरूपविशेषणत्वावगाही चोभयोस्तादात्म्यससर्गकनिश्चयो जायत इत्यर्थ: । एतेन सोऽयमिति वाक्यस्याभेदान्वयबोधं प्रत्येव जनकत्वेन भेदसंसर्गकशाब्दधीजनने सामर्थ्याभावादेकविशिष्टेऽपरवैशिष्ट्यप्रकारकज्ञानरूपभेदसंसर्गकशाब्दबोधो जायते वा तादृशपदार्थयोरभेदसंसर्गकशाब्दबोधो जायते वेति विकल्प्य तद्दूषणादीनामसङ्गतिरिति परास्तम् । पदार्थद्वयाभेदसंसर्गकबुद्धावेव तदेतद्देशकालयोर्विशेषणत्वोपाधित्वविवक्षापूर्वकप्रमेयवैलक्षण्यस्यैव शङ्कितत्वात् ॥ अबोध्यत्वादिति ॥ तन्मात्रतात्पर्ये वाक्यस्य वैयर्थ्यं स्यादिति भाव ॥ देशकालैक्येन विनेत्यादि ॥ परमतोपन्यासप्रक्रियायामुपपादितमेतत् । यद्यप्युपहितद्वयतादात्म्यायोगस्यापि पूर्वमुक्तत्वात्तदेतद्देशकालोपहितयोस्तादात्म्येऽपि धर्मद्वयैक्यापादनरूपदोषो वक्तुं शक्यत एव तथापि परोक्तोऽप्युपहितयोर्भेदो निर्युक्तिकत्वादश्रद्धेय एवेत्यस्य निर्दलत्वान्न तत्पक्षाश्रयणेन दूषणमभिहितम् । ॥ व्युदासेनेति ॥ निमित्ते तृतीया । स्वरूपमात्रप्रतिपादनेपि वाक्यस्य निष्प्रयोजनत्वमेव । तस्य प्रत्यक्षेणैव सिद्धत्वादिति शङ्कानिरासायैतत्प्रयोजनकथनम् । सिद्धार्थान्वाख्यानपरस्यापि भ्रमविशेषनिवर्तकतया सार्थक्यं वर्तत एव । यथा प्रयोगसिद्धशब्दस्वरूपान्वाख्यानपरव्याकरणस्य शब्दसाधुत्वभ्रमव्युदासरूपप्रयोजनवत्तया न

(द्वै. द्यु.) वैयर्थ्यं तथा प्रकृतेऽपीति भाव । व्याकरणस्य तथात्वमुक्तं **कात्यायनेन** 'सिद्धं तु निवर्तकत्वात्' इति । 'व्याकरणस्य सप्रयोजनत्व सिद्ध तत्रासाधुत्वभ्रमनिवर्तकत्वात्' इति तदर्थ इति ज्ञेयम् ।

(गु टि.) ॥ **तद्देशकालयोरपीति** ॥ तद्देशकालविशिष्टस्यैतद्देशकालयोरसत्त्वे तस्यैतद्देशकालवैशिष्ट्या-नुपपत्त्या तदुपपत्त्यर्थं तस्यैतद्देशकालयो सत्त्वस्यावश्यं वाच्यत्वात् एतद्देशकालयोस्तत्सत्त्वस्य च तद्देशकालयोरि-दानीं सत्त्वं विना अनुपपन्नत्वेन तद्देशकालयोरिदानी सत्त्वापातादित्यर्थ ॥ **एतद्देशकालयोरिति** ॥ एतद्देश-कालविशिष्टस्य तद्देशकालयोरसत्त्वे तस्य तद्देशकालवैशिष्ट्यानुपपत्त्या तदुपपत्त्यर्थं तस्य तद्देशकालयो सत्त्वस्या-वश्य वाच्यत्वादेतद्देशकालविशिष्टस्य तद्देशकालसत्त्वस्य चैतद्देशकालयोस्तद्देशकालसत्त्व विना अयोगादेतद्देश-कालयोरपि तदा सत्त्वं स्यादित्यर्थ ॥ **विशेषणैक्येन विनेति** ॥ विशिष्टस्य हि विशेषणविशेष्यतत्सम्बन्धात्मकत्व-पक्षे विशेषणभेदेन पदार्थान्तरत्वपक्षे विशेष्यभेदेनेव विशेषणभेदेनापि तद्भेदस्याऽवश्यकत्वादिति भाव । अस्तु तर्हि तदेतद्देशकालरूपविशेषणैक्यमपि इत्यत आह ॥ **विशेषणैक्यस्येति** ॥ **विशिष्टद्वयेति** ॥ न च वृत्तित्वेन शक्तिवल्लक्षणाया अपि शब्दमात्रधर्मत्वात् अशब्दरूपविशिष्टद्वयोपलक्षितत्व कथं देवदत्तस्वरूपस्येति वाच्यम् । विषयानन्तर्गतत्वे सति तद्व्यवहारजनकस्यैवोपलक्षणत्वेन विषयभूतगृहैकदेशत्वाभावेन विषयानन्तर्गतस्यैव काका-देस्तद्व्यवहारजनकतया तदुपलक्षणत्ववद्विशिष्टद्वयस्य देवदत्तस्वरूपानन्तर्गतस्यैव तद्व्यवहारजनकत्वेन तदुपल-क्षणत्वसम्भवादिति भाव । एतच्च 'ज्ञानलक्ष्यश्च' 'सर्वैर्विशेषणैर्लक्ष्यम्' इत्येतद्ग्रन्थव्याख्यानावसर आकर एव स्पष्टम् ।

**सोऽयं देवदत्त इत्यादिवाक्ये वाच्यार्थानुपपत्त्यभावसमर्थनेन लक्षणानिराकरणम्**

(टी) **मैवम् । न हि स इत्यस्य देशकालसम्बन्धमात्रमर्थः । किं नाम तस्यातीतत्वमपि । तथाऽनुभवात् । एवञ्च स इत्यस्य तद्देशकालसम्बन्धोऽभूदित्यर्थः स्यात् । अयमित्यस्यापि न कालादि-सम्बन्धमात्रमर्थः । किन्तु तस्य वर्तमानता च । न चैव सति पक्षत्रयेऽपि काचिदनुपपत्तिरस्ति यद्भयाल्लक्षणाऽश्रयणं स्यात् । तदिदमुक्तमनित्येति । उपलक्षणञ्चैतत् । वर्तमानेत्यपि ज्ञेयम् ।**

**नन्वत एवानुपपत्तिरित्युक्तम् । मैवम् । भावानवबोधात् । अविरुद्धविशेषणानामेव वाच्यतया-ऽनेनोक्तत्वात् । न ह्यतीतदेशादिसम्बन्धस्येदानीं सत्त्वे विरोधोऽस्ति । प्रध्वंसो हि तथोच्यते । तथा-ऽयमिति प्रागभावः । एतेन अन्यतरलक्षणाऽश्रयणं स्वयूथ्यानां निरस्तम् ।**

**विशिष्टैक्ये विशेषणैक्यं स्यादिति चेन्न । धूमवदग्निमतोरैक्येऽपि धूमाग्न्योर्भेददर्शनात् । तयो रैक्यमेव नास्तीति चेत् । तर्हि दृष्टान्ताभावात्सुतरां विशेषणैक्याऽपादनानुपपत्तिः । तथाऽपि किमत्र तत्त्वम् । श्रोतृबुभुत्सानुसारेण त्रयमपीति ब्रूमः । कुत एतदिति चेत् । अनित्यदेशकालसम्बन्धित्वस्येति तद्देशकालादिविशिष्ट इति वचनात्पक्षद्वयाङ्गीकारो ज्ञायते । अनुस्मृतेश्चेत्यादिना तृतीयाङ्गीकारोऽपि । तर्हि देशकालसम्बन्धित्वस्येति कथम् । उपलक्षणमित्यदोषः ।**

(टी) ननु प्रकृष्टप्रकाशश्चन्द्र इत्यनेनैव ग्रन्थेनायमपि दृष्टान्तो दूषितो भविष्यति । न्यायसाम्यात् । तत्किमनेन ग्रन्थेन । मैवम् । एतदनुपपत्तिपरिहारेण सार्थक्यादिति ।

(वि टि) ॥ तस्यातीतत्वमपीति ॥ तद्देशतत्कालसम्बन्धस्यातीतत्वमपीत्यर्थ । यद्यपि तद्देशतत्कालमात्रस्य तच्छब्दार्थत्वे एतद्देशैतत्कालमात्रस्येदंशब्दार्थत्वे च नानुपपत्ति । तदेतद्देशकालादीना सोऽयं देवदत्त इत्यनेन देवदत्ते सामानाधिकरण्यबोधसम्भवात् । न च तेषा विशेषणानां यौगपद्यप्रसङ्ग. । तच्च बाधितमिति वाच्यम् । यदन्वितत्वेन ज्ञान एव तात्पर्यविषयेतरान्वयधीस्तु वस्येह विशेषणत्वस्य विवक्षितत्वात् । एतच्च देशकालादीना सामानाधिकरण्येऽप्युपपन्नम् । तथाऽपि वस्तुगतिमभिप्रेत्यैवमुक्तम् । अत एव 'तथाऽनुभवात्' इत्युक्तमिति द्रष्टव्यम् ॥ यस्येति ॥ यस्य पुंसस्तद्देशकालसम्बन्धोऽभूत्स 'सोऽयम्' इत्यत्र स इत्यनेनोच्यत इत्यर्थः ॥ वर्तमानता चेति ॥ वर्तमानदेशकालसम्बन्ध इत्यर्थ । यस्यैतद्देशकालसम्बन्धो वर्तते स 'सोऽयम्' इत्यत्र अयमित्यनेनोच्यत इत्यपि द्रष्टव्यम् ॥ न चैवं सतीति ॥ उक्तरीत्या तदिदंशब्दयोरर्थविज्ञाने पक्षत्रयेऽपि न काऽप्यनुपपत्ति । विशेषणाना यौगपद्यप्रसङ्गरूपा चानुपपत्तिर्नास्तीत्यर्थ. । तस्यातीतत्वमपीति मूलवाक्यानुक्तं कथमुच्यत इत्यत आह ॥ तदिदमुक्तमिति ॥ 'अनित्यदेशकालसम्बन्धस्य सत्त्वात्' इति वाक्ये इदमसदुक्तमतीतत्व तद्देशकालयोरनित्यपदेनोक्तमित्यर्थ ।

ननु 'तस्य वर्तमानता च' इत्युक्तम् । अनित्यदेशकालेति वाक्ये तद्वाचकपदाभावादित्यत आह ॥ उपलक्षणश्चैतदिति ॥ अत एवेति ॥ यत एव तदिदशब्दयोरतीतवर्तमानदेशकालसम्बन्धात्वप्रयुक्तार्थे विशेषणयौगपद्यपसङ्गरूपा तदभेदप्रसङ्गरूपा चानुपपत्तिरस्तीत्युक्तमित्यर्थ ॥ अविरुद्धेति ॥ वाच्यतयेति ॥ इत्थम्भूतलक्षणे तृतीया । तदिदंशब्दवाच्यत्व प्राप्तानामविरुद्धविशेषणानामेव 'सोऽयं देवदत्त' इति वाक्येनोक्तत्वादित्यर्थ । अविरोधमेवोपपादयति ॥ न हीति ॥

ननु देशकालादीनामतीतत्वे तत्सम्बन्धातीतत्वस्यावश्यम्भावात्तदा सम्बन्धसत्त्वमपि विरुद्धमित्यत आह ॥ प्रध्वंसो हीति ॥ तथा च प्रध्वस एव तत्सम्बन्ध । विद्यमानतया विशेषणश्चेत्यर्थ ।

ननु वर्तमानकालैकदेशभूतक्षणलवादीना नाशाद्वर्तमानकालसम्बन्धरूपेदन्ताविरहात् अयमिति व्यवहारो न स्यादित्याशङ्कयाऽऽह ॥ तथाऽयमिति ॥ यथा स इत्यनेनातीतदेशकालसम्बन्ध उच्यते, स चैतद्देशकालप्रागभावरूप पर्यवस्यति तथा अतीतकालादिध्वंसस्तत्सम्बन्ध इति भाव ॥ एतेनेति ॥ उक्तरीत्या पक्षत्रयेऽपि लक्षणाकल्पकानुपपत्त्यभावेनेत्यर्थ ।

ननूक्तकल्पद्वये अनुपपत्त्यभावेऽपि तृतीयपक्षे कथमनुपपत्त्यभाव । तत्ताविशिष्टस्येदन्ताविशिष्टाभेदे विशिष्टान्वयिनो विशेषणान्वयित्वनियमेन तत्तेदन्तयोरभेदापत्ति । इदन्ताविशिष्टे तत्ताया अनन्वये विधेयान्वयित्वाभावेन विशेषणत्वाभावप्रसङ्गादिति शङ्कते ॥ विशिष्टैक्य इति ॥ विशिष्टैक्येऽपि न विशेषणैक्यमदर्शनादित्याह ॥ नेति ॥ तयोरिति ॥ धूमाग्निविशिष्टयोरैक्यमेव नास्ति । विशेषणभेदप्रयुक्तविशिष्टभेदावश्यम्भावादिति भाव ॥ तर्हीति ॥ न च विशिष्टान्वयिनो विशेषणान्वयित्वनियमात्तत्ताविशिष्टेदन्ताविशिष्टयोरभेदे तत्तेदन्तारूप-

(वि. टि) विशेषणयोरप्यभेदो दुर्वार.। अन्यथा विधेयान्वयित्वाभावेन विशेषणत्वानुपपत्तेरिति वाच्यम्। यदन्विततया ज्ञात एव तात्पर्यविषयेतरान्वयधीस्तत्त्वरूपविशेषणत्वस्य तत्राप्यनपायादिति भाव ।

उक्तरीत्या खण्डिताहङ्कार. शिष्यभाव प्रपन्न आचार्याभिप्रेत पक्षं पृच्छति ॥ किमत्रेति ॥ अत्र पक्षत्रय मध्ये। सकृत्प्रयुक्तस्य युगपदनेकार्थत्वासम्भवात्किमत्र तत्वमिति प्रष्टुरभिप्राय । एतदित्यस्यानन्तर ज्ञायत इति शेष । आचार्यवचनादेव ज्ञायत इत्याह ॥ अनित्येति ॥ उदाहृतवचनानि क्रमेण पक्षत्रयाणामङ्गीकारसूचकानीति द्रष्टव्यम् । ननु यदि पक्षत्रयमप्याचार्याभिप्रेत तदा देशकालसम्बन्धित्वस्य तद्विशिष्टैक्यस्य च सत्त्वादिति तद्वचनाकार स्यादित्याशङ्कते ॥ तर्हीति ॥ इत्यनेनैवेति ॥ 'प्रकृष्टप्रकाशश्चन्द्र इत्यादिषु प्रकृष्टत्वादिविशेषणानि सन्त्येवेति न तत्साम्यम्' इत्यनेनैवेत्यर्थ ॥ एतदनुपपत्तीति ॥ पक्षत्रयोक्तानुपपत्तीत्यर्थ ।

(रा टि) ॥ अतीतत्वमपीति ॥ ध्वसप्रतियोगित्वमपीत्यर्थ ॥ पक्षत्रयेऽपीति ॥ स इत्यनूद्यायमित्येतद्वैशिष्ट्यविधिपक्षे अयमित्यनूद्य स इति तद्वैशिष्ट्यविधिपक्षे उभयानुवादेनैक्यमात्रविधिपक्षे चेत्यर्थ ॥ अत एवेति॥ तदिदंशब्दयोरतीतवर्तमानदेशकालसम्बन्धार्थत्वादेव विशेषणयौगपद्यप्रसङ्गरूपा विशेष्ययोरभेदप्रसङ्गरूपा चानुपपत्तिरित्युक्तम्। 'ननु कथमत्र' इत्यादिपूर्वग्रन्थ इत्यर्थ ॥ वाच्यतयेति ॥ सोऽयमिति तदिदंशब्दवाच्यतयाऽनेनानित्यदेशकालसम्बन्धित्वस्येति मूलवाक्येनोक्तत्वादित्यर्थ । अविरोधमेव व्यनक्ति ॥ न हीत्यादिना ॥ तथा चायमर्थ । यदा 'स' इति तद्देशकालसम्बन्धवन्तमनूद्य 'अयम्' इति विधीयते तदैतद्देशकालसम्बन्धप्रागभाववानित्यर्थ । यदा तु 'अयम्' इति वर्तमानदेशकालसम्बद्धमनूद्य 'स' इति विधीयते तदा तद्देशकालसम्बन्धध्वसवानित्यर्थ । विशिष्टद्वयैक्यपक्षेऽप्येतद्देशकालसम्बद्धस्तद्देशकालसम्बन्धध्वसवान् तद्देशकालसम्बद्धो वा वर्तमानदेशादिसम्बन्धप्रागभाववानित्यर्थ इति पक्षत्रयेऽपि विशेषणयोस्तदेतद्देशकालसम्बन्धयोर्यौगपद्यरूपाऽनुपपत्तिर्नेति प्राचीनग्रन्थो विवृतो ध्येय ।

॥ एतेनेति ॥ तदिदंपदयोरविरुद्धविशेषणवाचकत्वकथनेन तदिदपदयोरन्यतरपदं स्ववाच्यविशेषणत्यागेन लक्षणया विशेष्यमात्रपरमिति लक्षणाऽऽश्रयणं स्वसमूहसम्बन्धिना वैष्णवाना केषाञ्चिन्निरस्तमित्यर्थ ॥ तयोरिति ॥ धूमविशिष्टाग्निविशिष्टयोर्विशेषणभेदादैक्यमेव नास्तीत्यर्थ· ॥ दृष्टान्तेति ॥ विशिष्टैक्ये विशेषणयोरप्यैक्यमित्यत्रेति योज्यम् ॥ तथाऽपीति ॥ पक्षत्रयेऽनुपपत्त्यभावेऽपि सोऽयमित्यादौ क. पक्ष साधुरित्यर्थ ॥ श्रोत्रिति ॥ तत्पदार्थबुभुत्सायामयमितीदंवैशिष्ट्यविधि । इदंपदार्थजिज्ञासाया स इति तद्वैशिष्ट्यविधि. उभयैक्यबोधेच्छाया विशिष्टद्वयैक्यपक्ष इत्यर्थ. ॥ कुत इति ॥ कस्माज्ज्ञापकादित्यर्थ ।

वक्ष्यमाणवाक्येन सह मूलवाक्यमनुवदति ॥ अनित्येति ॥ इति वचनादिति ॥ तत्रादिपदेनैतद्देशकालविशिष्ट इति च ग्राह्यत्वादिति भाव ॥ अनुस्मृतेरिति ॥ समयपादे पदार्थाना क्षणिकत्वनिराकरणेन स्थायित्वोपपादनाय तदेवेदमिति प्रत्यभिज्ञोक्त्यर्थं सूत्रम्। तत्र वस्तूना पूर्वोत्तरकालस्थाना भेदोऽथाभेद इति जिज्ञासाया पूर्वोत्तरकालविशिष्टानामभेदोक्तेरिति भावः ॥ तर्हीति ॥ विशिष्टैक्यस्यैवाभिमतत्वेऽनित्यदेशकाल-

**(रा टि )** सम्बन्धित्वविशिष्टस्येति वाच्यम् । कथं सम्बन्धित्वस्येत्युक्तिरित्यर्थ. ॥ **उपलक्षणमिति** ॥ वैशिष्ट्यस्येति योज्यम् । यद्वा इति कथमित्यस्य एकस्यैवोक्ति कथं वर्तमानदेशकालसम्बन्धित्वस्य सत्त्वादित्यपि वाच्यत्वादित्यर्थ. ॥ **अयमपीति** ॥ सोऽयं देवदत्त इति दृष्टान्तोऽपीत्यर्थ ॥ **न्यायेति** ॥ प्रकृष्टत्वादिविशेषणानि सन्त्येवेत्युक्त्या-ऽनित्यदेशकालसम्बन्धरूपविशेषणस्यापि सत्त्वप्राप्तिरिति भाव: ॥ **एतदनुपपत्तीति** ॥ पक्षत्रये परोक्तविशेषण-यौगपद्यादिरूपानुपपत्तीत्यर्थ ।

**(वे टि )** ॥ **अतीतत्वमपीति** ॥ ध्वसप्रतियोगित्वमपीत्यर्थ । अतीतत्वस्यापि भावे कियान्स इति तच्छब्दार्थो निष्पन्न इत्यपेक्षायामाह ॥ **एवञ्चेति** ॥ **वर्तमानता चेति** ॥ स्वप्रागभावप्रध्वंसरूपता चेत्यर्थ । तदुक्त **शिवादित्येन** 'तच्च प्राक्सम्बद्धस्वाभावविरहरूपत्वम्' इति । प्राक्सम्बद्धस्वाभाव प्रागभाव· तद्विरहश्च प्रध्वस तत्स्वरूपत्व वर्तमानत्वमिति तत्फक्किकार्थ । अनित्यवर्तमानत्वस्य चेद् लक्षणमिति न कश्चित्क्षुद्रोपद्रव. । एवञ्च यस्यैतद्देशकालसम्बन्धप्रागभावो ध्वस्त । सोऽयमित्यनेनोच्यत इत्यपि ग्राह्यम् । गूढाभिसन्धिराह ॥ **न चैवमिति** ॥ **अनित्येऽतीति** ॥ अत्र ह्युपलक्षणया तदिदशदार्थयोर्देवदत्ते सत्त्वमुच्यते । तदर्थमनित्यदेशकाल-सम्बन्धित्वस्येत्यनेन च स इति तच्छब्दार्थोनूद्यते । तेनातीतत्वमपि स इति तच्छब्दार्थान्तर्गतत्वेनाचार्याभिप्रेत-मिति ज्ञायत इति भाव । वर्तमानता चेत्युक्त मूलारूढ करोति ॥ **उपलक्षणमिति** ॥ **वर्तमानेत्यपीति** ॥ वर्तमानदेशकालसम्बन्धित्वस्यापि सत्त्वादित्यपि मूले ग्राह्यमित्यर्थ ।

आशयमविद्वान् शङ्कते ॥ **नन्विति** ॥ **अत एवेति** ॥ तद्देशकालसम्बन्धित्वस्यातीतत्वादेवेत्यर्थ. । **अनु-पपत्तिः** तस्य विशेषणत्वानुपपत्ति । आशयमुद्धाटयति ॥ **अविरुद्धेत्यादिना** ॥ उद्देश्यतावच्छेदकविधेयरूप तदेतद्देशकालसम्बन्धादिलक्षणविशेषणाना यथा न परस्परविरोध तथैव तदिदशब्दवाच्यतयाऽनेनानित्येत्यादि-मूलवाक्येनोक्तत्वादित्यर्थ । अविरोधमेवोपपादयति ॥ **न हीति** ॥

नन्वतीतस्येदानीं सत्त्वे स्फुटो विरोध इत्यत आह ॥ **प्रध्वसो हीति** ॥ अय भाव । यथा शश-विषाणमसदित्यत्र प्रतियोगिप्राधान्यविवक्षायामत्यन्ताभावप्रतियोगित्वमित्यर्थ: निषेधप्राधान्यविवक्षायां तु तत्प्रति-योगिकोऽत्यन्ताभावोऽर्थ उभयथाऽपि प्रतीते. । तथाऽत्राप्यतीतसम्बन्धवाचितच्छब्दस्य प्रतियोगिप्राधान्यविवक्षायां ध्वस्तदेशकालसम्बन्धो निषेधप्राधान्यविवक्षायां चानुभवदेशकालसम्बन्धध्वस एव वाच्यो भवति । एव वर्तमान-सम्बन्धवाचीदशब्दस्यापि यदि प्रतियोगिप्राधान्यविवक्षा तदा ध्वस्तप्रागभावप्रतियोगिसम्बन्ध: यदा तु निषेध-प्राधान्यविवक्षा तदा ध्वस्तसम्बन्धप्रागभाव एव वाच्यो भवति । एवञ्च यदा आद्यपक्षपरिग्रहस्तदा स इति तच्छब्दस्य निषेधप्राधान्ये वक्तृविवक्षया अनुभवदेशकालसम्बन्धध्वसवाचकत्वेनेदानी तद्ध्वंसस्य सत्त्वान्न विरोध । अस्मिन्पक्षेऽयमितीदशब्दे वक्तु· प्रतियोगिप्राधान्यविवक्षैव । अन्यथाऽनवधेयवचनत्वप्रसङ्गात् । तद्देशकालविशिष्टे एतद्देशकालवैशिष्ट्यबुभुत्साया हीदमुच्यते । बुभुत्सापूर्तिश्च नायमित्यत्र प्रतियोगिप्राधान्यविवक्षामन्तरेणोपपद्यत इति हृदयम् ।

(वे टि) यदप्यत्राबोध्यत्वादिति दूषणं तदपि तुच्छम् । एतद्देशकालवैशिष्ट्यस्य प्रत्यक्षत्वेऽपि तद्देशकालविशिष्टे तस्याप्रत्यक्षत्वादित्यग्रे वक्ष्यमाणत्वात् । यदा तु द्वितीयपक्षपरिग्रहस्तदा स इति तच्छब्दस्य प्रतियोगिप्राधान्ये वक्तृविवक्षयाऽतीतसम्बन्धवाचित्वेऽप्ययमितीदंशब्दस्य निषेधप्राधान्यविवक्षायां ध्वस्तसम्बन्धप्रागभाववाचित्वमेव वक्तुरभिप्रेतम् । तथा च पूर्वानुभवकाले इदानीं ध्वस्तैतद्देशकालसम्बन्धप्रागभावस्य सत्त्वान्न विरोध । तदिदमाह ॥ तथाऽयमिति ॥ प्रागभाव इति ॥ अत्रापि स इति तच्छब्दार्थे बुभुत्सानुसारेण प्रतियोगिप्राधान्यविवक्षाऽऽवश्यकी । अत एव श्रोतृबुभुत्सानुसारेणेति वक्ष्यति । यदा तु तृतीयपक्षाङ्गीकारस्तदा तदिदंशब्दयोरन्यतरस्यैव निषेधप्राधान्ये वक्तृविवक्षया विशेषणयोरविरोधेन विशिष्टैक्यमुपपद्यते ।

नन्वविरुद्धयोरपि विशेषणयोर्भेदे कथं विशिष्टद्वयैक्यमुपपद्यत इति चेत् । विवादास्पदं विशिष्टद्वयं नाभिन्नम् । भिन्नविशेषणकत्वादिति त्वदीयानुमानस्याप्रयोजकत्वात्तदेतत्सर्वमभिप्रेत्य पूर्वं पक्षत्रयेऽपि नानुपपत्तिरित्युक्तमिति ।

अन्ये तु 'ननु देशकालयोरतीतत्वे तत्सम्बन्धातीतत्वस्यावश्यम्भावात्तदा सम्बन्धसत्त्वमपि विरुद्धमित्यत आह ॥ प्रध्वसो हीति ॥ तथा च प्रध्वस एव तत्सम्बन्ध विद्यमानतया विशेषणञ्चत्यर्थ. ।

ननु वर्तमानकालैकदेशभूतक्षणलवादीनां नाशाद्वर्तमानकालसम्बन्धरूपेदन्ताविरहादयमिति व्यवहारो न स्यादित्याशङ्क्याऽऽह ॥ तथाऽयमितीति ॥ यथा 'स' इत्यनेनातीतदेशकालसम्बन्ध उच्यते तथा 'अयम्' इत्यनेन वर्तमानकालसम्बन्ध उच्यते । स च एष्यत्कालदेशप्रागभावरूप एव पर्यवस्यति । यथाऽतीतकालादिध्वसस्तत्सम्बन्ध इति भाव' इत्यप्याहु ।

॥ एतेनेति ॥ उक्तरीत्या पक्षत्रयेऽपि वाच्यार्थमविहायैव परोक्तानुपपत्तिपरिहारेणेत्यर्थ. । भिन्नविशेषणकत्वानुमानमनुकूलतर्कसद्भावान्नाप्रयोजकमित्याशङ्कते ॥ विशिष्टैक्य इति ॥ व्यभिचारात्तर्कं प्रशिथिलमूलमित्याह ॥ धूमवदिति ॥

ननु तत्राऽऽपादकाभावादेव न व्यभिचार इत्याशङ्कते ॥ तयोरिति ॥ दृष्टान्ताभावादिति ॥ नन्वत्र कथं दृष्टान्ताभाव । अग्निमतोऽग्निमतैक्येऽग्नेरग्निनैक्यदर्शनादिति चेन्मैवम् । स्यादेवं दृष्टान्तोपपादनं यद्यत्र विशिष्टैक्यमात्रमापादकं विशेषणैक्यमात्रञ्चाऽऽपाद्यं स्यात् । न च तत्सम्भवति । तथात्वे तर्कस्यानिष्टापादनरूपत्वाभावप्रसङ्गात् । प्रकृतेऽपि तत्तादिविशिष्टस्य तत्तादिविशिष्टेनैक्ये तत्तादिरूपविशेषणैक्यस्यापि विद्यमानत्वात् । तस्माद्विशिष्टद्वयैक्ये विशेषणद्वयैक्यं स्यादित्यापादनीयम् । अत्र च धूमवदग्निमतोरैक्याभावेऽङ्गीकृते दृष्टान्ताभावेन व्याप्तिग्रहासम्भवादित्यभिप्रायात् ।

तटस्थ. शङ्कते ॥ तथाऽपीति ॥ यद्यपि पक्षत्रयेऽपि नानुपपत्तिस्तथाऽप्यत्र पक्षत्रये आचार्याभिप्रेत. क पक्ष इत्यर्थ ॥ श्रोतृबुभुत्सानुसारेणेति ॥ यदा हि श्रोता तत्ताविशिष्टे इदन्तावैशिष्ट्यसन्देहादिना पृच्छति तदा स इत्यत्र निषेधप्राधान्यविवक्षयाऽयमित्यत्र प्रतियोगिप्राधान्यविवक्षया सोऽयमित्युत्तरं प्रवर्तते । यदा तु श्रोता

**(वै टि.)** इदन्ताविशिष्टे तत्तावैशिष्ट्यसन्देहादिना पृच्छति तदोक्तरीत्याऽयमित्यत्रैव निषेधप्राधान्यविवक्षयाऽय स इत्युद्देश्यविधेयभावेन सोऽयमिति वाक्य प्रवर्तते । यदा तु तत्ताविशिष्टेदन्ताविशिष्टयोर्भेदसन्देहादिना श्रोता पृच्छति तदा तदिदंशब्दयोरन्यतरस्यैव निषेधप्राधान्यविवक्षया स अयञ्च देवदत्त एवेत्युत्तरं प्रवर्तते। तथा च श्रोतृबुभुत्सानुसारेण पक्षत्रयमपि सम्भावितमित्याचार्याभिप्रेतमवगम्यत इति भाव ।

ननु पक्षत्रयस्य सम्भावितत्वेऽपि कथमाचार्याभिप्रेतत्वं निश्चीयते । तन्निश्चायकवचनाभावादित्याशङ्कते ॥ **कुत इति** ॥ कुतो वचनादेतत्पक्षत्रयं निश्चीयत इति शेष ॥ **पक्षद्वयेति** ॥ आद्यपक्षोक्ततद्देशकालयोरपीदानीं सत्त्व स्यादिति बाधकस्यानित्येति वाक्येनेष्टापत्त्या परिहारादाद्यपक्षाङ्गीकारो ज्ञायते । न हि तदनङ्गीकारे तत्रोक्तबाधकपरिहार सम्भवति । तद्देशकालविशिष्ट एवेत्युत्तरमूले तु द्वितीयाङ्गीकार स्पष्ट एव । तत्र तद्देश कालविशिष्टत्वस्य वाक्यार्थत्वकथनेन विधेयत्वस्योक्तत्वादिति भाव ।

तृतीयपक्षाङ्गीकारज्ञापक ब्रह्मसूत्रमुदाहरति ॥ **अनुस्मृतेरिति** ॥ आदिपदेन 'तदेवेदमिति प्रत्यभिज्ञाना-च्च' इति भाष्य गृह्यते । अत्र हि 'यत्सत्तत्क्षणिकम् यथा दीपादि सन्तश्चामी भावा ' इति क्षणिकत्वसाधकानु मानस्य प्रत्यभिज्ञाबाध उच्यते । तेन तदेतद्देशकालविशिष्टघटाद्यैक्यविषयत्वं प्रत्यभिज्ञाया सूत्रकाराभिप्रेतमिति वक्तव्यम् । अन्यथा तस्या बाधकत्वासम्भवात् । एवञ्च तज्जन्याभिलापस्यापि तदेतद्देशकालविशिष्टैक्यप्रतिपादकत्व सूत्रकाराभिप्रेतमिति ज्ञायते । अभिलापस्याभिज्ञासमानविषयत्वनियमादिति भाव । ननु यदि पक्षत्रयमाचार्याभिप्रेत स्यात्तदा तदेतद्देशकालसम्बन्धित्वस्य तद्विशिष्टैक्यस्य च सत्त्वादिति वचनव्यक्ति स्यादित्याशङ्कते ॥ **तर्हीति** ॥

(द्वै द्यु.) ॥ **वर्तमानता चेति** ॥ अत्रापि तथैवानुभवादिति हेतु स्फुट इति नोक्त ॥ **वर्तमानेत्य-पीति** ॥ मूले वर्तमानदेशकालसम्बन्धित्वमप्युपलक्षणया ग्राह्यमित्यर्थ । अन्यथाऽयमित्येतदशान्वयानुपपत्तेरपरि-हारान्मूलस्य न्यूनता स्यादिति भाव ॥ **नन्वत एवेति** ॥ विशेषणीभूततदेतद्देशकालयोरनित्यत्ववर्तमानत्वोक्त्या तादृशविशेषणयोरेकस्मिन्नेककालावच्छेदेनावर्तमानत्वरूपविरोधलाभादेवेत्यर्थ । **अनेन मूलेन** ॥ **अतीतेति** ॥ तादृशपदतात्पर्यविषयीभूतस्येत्यर्थ । उक्त विवृणोति ॥ **प्रध्वंसो हीति** ॥ सर्वाभि प्रतीतिभि प्राय स्वकाली-नधर्मावगाहनस्यौत्सर्गिकत्वात् स इत्यस्य तद्देशकालसम्बन्धध्वंसवानित्यर्थ इति भाव ॥ **प्रागभाव इति** ॥ स इत्यनेन पूर्वकालेऽतीतत्वविवक्षा विहाय पूर्वकालसम्बन्धमात्रबोधनपक्ष एतद्देशकालप्रागभावावच्छिन्नोऽयमित्य स्यार्थ इति भाव ॥ **अन्यतरलक्षणेति** ॥ पदद्वयमध्येऽन्यतरपदस्य स्वबोध्यदेशकालाघटितं पदार्थान्तरान्वययोग्य-तावच्छेदक यद्रूपं तद्विशिष्टलक्षणेत्यर्थ । सर्वनाम्नामपि बुद्धिस्थवाचित्वात्तादृशधर्मान्तरस्येदमादिपदप्रयोगहेतु-तया बुद्धिस्थत्वाभावात्तद्विशिष्टबोधो लक्षणयैवेति भाव । नन्विदपदप्रयोगकाले तादृशधर्मान्तर वक्तृबुद्धिस्थ न वा । आद्ये तदवच्छिन्नस्येदमादिपदशक्त्यैव बोधनसम्भवाल्लक्षणाश्रयण व्यर्थम् । द्वितीये तदवच्छिन्ने वक्तृ-तात्पर्याभावेन तादृशधर्मघटिते वक्तृतात्पर्यविषयत्वानुपपत्तिरिति । मैवम् । वक्ता हि विवक्षितधर्मं विविच्य वक्तुमशक्तो भवति । तन्मात्रबोधकशब्दाभावात् । अतस्तदुपस्थितिप्रयोजकदेशकालादिसम्बन्धबोध प्रथमत

(द्वे द्यु ) इच्छन् तद्घटितधर्मावच्छिन्नं बोधयितु प्रयुङ्क्ते इति तत्कालीनेदमादिपदानि तत्रैव शक्तानि । वृत्त्या पदात्तदनुपस्थितौ शाब्दबोधे भानायोगात् तादृशधर्मावच्छिन्ने लक्षणाया युक्तत्वात् । **स्वयूथ्यानां** रामानुजीयाना ॥ **निरस्तमिति** ॥ वक्ष्यमाणरीत्या देशकालघटितोक्तमुख्यार्थकत्वस्यैव पदद्वयेऽपि सम्भवादिति भावः । ननु तादृशध्वंसविशिष्टस्यैतत्कालादिविशिष्टेनोपहितयोरपि तादात्म्य बोधयितुं न शक्यत इति तस्याखण्डार्थत्वमेवेति शङ्कते ॥ **विशिष्टेति** ॥ विशिष्टपदेन विशिष्टोपहितयोर्द्वयोरपि परीत्या ग्रहण कार्यम् । अन्यथा न्यूनत्वापातात् । उपहितस्य विशेष्येण भिन्नाभिन्नस्य विशिष्टवदप्रामाणिकत्वमेव स्वमत इति सूचनाय न स्वशब्देन ग्रहण कृतमिति ध्येयम् ।

॥ **धूमवदित्यादि** ॥ ननु सिद्धान्ते अनित्यविशेषणस्थले विशेषणसम्बन्धेन विशेष्यस्यैव विशिष्टशब्दवाच्य परिणामविशेषो जायते । स च विशेष्येण भिन्नाभिन्न । तथा च धूमविशिष्टो धूमतत्सम्बन्धहेतुको वह्न्यहेतुकः परिणाम । वह्निविशिष्टोऽपि धूमाहेतुको वह्निहेतुक परिणाम । तावत्यन्तभिन्नावेव । अत कथं तयोरैक्यमुक्त-मिति चेत् ।

अत्र केचित् 'यतोधूमवान् वह्निमानिति पदाभ्या धूमविशिष्टवह्निविशिष्टाभिधाखण्डपरिणामौ नोच्येते । तथात्वे खण्डयोर्धूमवह्न्याद्यघटितस्वरूपत्वेन शाब्दबोधे धूमवह्न्योरस्फुरणप्रसङ्गात् । किन्तु वह्निधूमसम्बन्ध-वान्विशेष्य एव। रूपद्वयेन तयोरैक्य युज्यते । न च वह्निसम्बन्धधूमा इति ज्ञानादस्य धूमवानिति ज्ञानस्य वैलक्षण्यानुपपत्तिः विषयवैलक्षण्याभावादिति वाच्यम् । विषयतावैलक्षण्यादेव वैलक्षण्योपपत्ते । धूमप्रकारकपर्वतादि-विशेष्यकसंशयादेरपि तावतैव निवृत्ते । बाह्यार्थभङ्गनिरासस्य तु रीत्यन्तरेणैव कर्तव्यत्वात् । नन्वेव मत्वर्थीयप्रत्य-यान्तेनाखण्डविशिष्टस्याबोधने शिखी नष्ट स्वर्गी ध्वस्त इत्यादौ का गति । विशेष्ये नाशायोगात् । विशेषण एव तत्सम्बन्ध एव वा ध्वंसप्रतियोगितादात्म्य प्रतीयत इति न सत् । विशेष्यीभूतशिखिस्वर्गिणोरेव शिखिस्वर्गिपदेनो-पस्थितत्वेन तद्विशेषणतयोपस्थितशिखादावन्वये निराकाङ्क्षत्वात् । शिखादौ तत्प्रतीतिश्च शाब्दबोधोत्तरकालीना मानसी । अत कथं विशिष्टस्य धूमवदादिपदेनाबोधनमिति चेत् । सत्यम् । न वय धूमवदादिशब्दै सर्वथा विशिष्ट न बोध्यत इति ब्रूम. । किन्तु धूमतत्सम्बन्धतदाश्रयसहितमेव प्रतीयत इति । तथा च शक्तिविशेषस्यैव विषयितारूपत्वस्य पूर्वमुक्तत्वाद्विशिष्टव्यवहारानुकूलैका शक्तिस्तदशरूपा चान्या । तथा च धूमवद्रूपाश्रयस्य सम-भिव्याहृतवह्न्याश्रयस्य चाभेदो भासते । तत्पदप्रतिभासमानविशिष्टयोस्तु तादृशाश्रयतादात्म्यापन्नतयैव स्फुरणम् । न विशिष्टद्वयस्य तादात्म्य भासते ।

यत्र कचिद्विशिष्ट एवेतरान्वयतात्पर्यं तत्र तादृशाश्रयतादात्म्यापन्नत्वेन भासमानविशिष्ट एवेतरान्वय. । धूमाश्रयवह्न्याश्रययोरभेदभाने तत्पदोपस्थापितविशिष्टयोराश्रयाश एव तादात्म्यभानम् । विशिष्टस्येतरान्वयस्थले चाश्रयस्यैव विशिष्टे तादात्म्येन भानम् । फलव्यापारयो पृथग्धात्वर्थत्वमते कर्तृकर्माख्यातसमभिव्याहार इव । यथा स्वर्गी ध्वस्त इत्यादौ विशिष्टान्वयस्थले विशेषणस्यापि सत्ता तदन्वयकालेऽर्थात्प्रतीयते ता विहाय विशिष्ट-

(द्वै द्यु) सत्त्वायोगात् तात्पर्यसत्त्वे स्वविशेष्यान्वयिन्यन्वय । सोऽपि यथातात्पर्यं प्रतीयते । न तु विशिष्टान्वयस्थले स्वविशेष्यस्य यादृशोऽन्वयस्तादृश एवेति नियमः नापि विशेषणस्य स्वविशेष्यान्वयिन्यन्वय एवेति नियमश्च । बीजाभावात् । अतिप्रसङ्गस्य चोक्तरीतिमात्रेण वारणसम्भवात् । दण्डी प्रेषानन्वाहेत्यादौ दण्डादौ प्रेषोच्चारणे चैत्रवत्कर्तृत्वेनान्वयायोगाच्च ।

अत एव स्वविशेष्यस्येतरस्मिन्यादृशोऽन्वयस्तादृशान्वयिन एव विशेषणत्वमिति वदन्त परास्ता । दण्ड स्योक्तस्थले विशेषणत्वानुपपत्ते । तस्य प्रेषोच्चारयितृत्वायोगात् । दण्ड उपाधिर्न विशेषणमिति चेन्न । उपाधि-विशेषणयोरुपहितविशिष्टयोश्चातिरिक्तत्वे मानाभावात् । न चैवं सति धूमाश्रयवह्न्याश्रययोरैक्यस्यैव भानाङ्गीकारे विशिष्टैक्ये विशेषणयोरैक्यमिति परोक्तनियमस्य नेदं व्यभिचारस्थलोदाहरण युक्तमिति वाच्यम् । सोऽयं देवदत्त इत्यत्रापि तत्कालध्वसरूपविशेषयणसम्बन्धेन जायमानविशिष्टस्य प्रागभावरूपविशेषणसम्बन्धपरिणतविशिष्टेन सहाभेदबोधकताया अस्माभिरनङ्गीकारात्तदाश्रयमात्राभेदबोधकत्वस्यैवाङ्गीकारात्तत्पक्ष एव तेन विशेषणैक्यमापा-दितं स्यात् । तस्य चोक्तस्थले व्यभिचार इत्याशयेन तत्प्रदर्शनसम्भवात्' इत्याहुः ।

वस्तुतस्तु एकस्मिन्वस्तुनि चैकविशेषगसम्बन्धेनैकविशिष्टपरिणामवदनेकविशेषणसम्बन्धैरप्येकविशिष्टमेव परिणमते । अनेकद्रव्यैरेकगृहादिरूपविशिष्टोत्पत्तिदर्शनात् । पूर्वमेकविशेषणसम्बन्धेनैकविशिष्टोत्पत्त्यनन्तर विशेषणान्तरस्य सम्बन्धे तु तादृशविशिष्ट एव विशेषणसम्बन्धप्राप्त्या पूर्वविशिष्टस्यैव विशिष्टान्तरात्मना परि-णाम । अत एव दण्ड्येवेदानीं कुण्डली जात दण्डी सन् कुण्डली जात इति दण्डिरूपविशिष्टस्यैव कुण्डला-त्मना परिणामावगाहिप्रत्यय सङ्गच्छते । तर्हि चैत्र कुण्डली जात इति शुद्धतादात्म्यावगाहिप्रत्यय कथमिति न वाच्यम् । शुद्धे सम्बन्धद्वारेणेव कुण्डलरूपविशेषणस्य दण्डिरूपविशिष्टसम्बन्धाच्छुद्धविशिष्टोभयतादात्म्यापन्न-तयैव विशिष्टान्तरपरिणामसम्भवात् । तथा च तद्देशकालसम्बन्धध्वंसैतत्कालसम्बन्धाभ्यामेतत्कालप्रागभावतद्देश-काल [1]प्रागभावाभ्या तथा धूमाग्निभ्या चैकविशिष्टोत्पत्तिसम्भवादेकस्यैव धूमविशिष्टत्ववह्निविशिष्टत्वरूपाभ्यामैक्य-स्यैतद्वाक्येन बोधनसम्भवात् तत्र परोक्तनियमस्य व्यभिचारप्रदर्शनं युक्तमेव ।

न च धूमविशिष्टे धूमानङ्गीकारात्कथ धूमवत्पदेन तादृशविशिष्टस्य धूमघटितरूपेण स्फुरणमिति वाच्यम् । प्रमितधर्माणा विशेष्यद्वारैव तत्राङ्गीकारावश्यकताया प्रागेवावेदितत्वादिति । अत्र धूमवदग्निमद्ग्रहणेन अका-रणकार्यद्रव्येत्यादिहेतोर्व्यभिचारोऽपि सूचित । युगपद्विशेषणद्वयाधीनविशिष्टरूपद्रव्यबोधकव्याप्तितात्पर्यकवाक्ये त्वदुक्तहेतो सत्त्वात व्याप्तिपरत्वेनाखण्डार्थपरत्वाभावाद्व्यभिचार इति ॥ आपादनानुपपत्तिरिति ॥ ययोर्विशिष्ट योरैक्य तद्घटकयोर्विशेषणयोरैक्यमित्यत्र दृष्टान्ताभावादिति भाव ।

ननु माऽस्तु तथा व्याप्ति तथापि यादृशशब्दाभिलाप्यविशिष्ट यादृशशब्दाभिलाप्यविशिष्टाभिन्न तादृश शब्दाभिलाप्यविशेषणं तादृशशब्दाभिलाप्यविशेषणाभिन्नमिति नियम सम्भवति । वह्निमान्पर्वत अग्निमान्पर्वत इति

[1] सम्बन्धाभ्या इति पाठेन भाव्यमिति भाति ।

(द्वै. द्यु.) वाक्यद्वयमुपादायोपपादनसम्भवात् । तथा च तयैव व्याप्त्येदमापाद्यत इति चेन्न । अप्रयोजकत्वात् । किञ्च मृच्छब्दाभिलाप्यघटशब्दाभिलाप्ययोर्नीलशब्दाभिलाप्यघटशब्दाभिलाप्यविशिष्टयोरैक्येऽपि मृत्त्वघटत्वनीलत्वादीनामैक्याभावाद्व्यभिचारः । न च नीलत्वमृत्त्वोपहितानामेव तत्र तादात्म्यं स्वीक्रियत इति वाच्यम् । तद्धर्मविशिष्टपदतद्धर्मोपहितपदतद्धर्मावच्छिन्नपदानामेकार्थत्वेनोपहितयोः स्वीक्रियते विशिष्टयोर्न स्वीक्रियत इत्यस्य विप्रतिषिद्धत्वात् ।

कुत एतदिति चेन्न । यत्र यत्रोपहितोऽयमिति व्यवहारस्तत्र तद्धर्मविशिष्टोऽयमिति व्यवहारः, यत्र विशिष्टनाशादिप्रत्यक्षं तत्रोपहितस्यापि नाशादिप्रत्यक्षम्, उपहितस्य या सामग्री विशेष्ये विशेषणसम्बन्धरूपा विशिष्टस्यापि सैवेति कारणभेदानिरूपणात्फलभेदानिरूपणात्परस्पराविषयकप्रतीतिविषयत्वादिभेदकधर्माभावाच्च विशिष्टातिरिक्तस्य विशेष्येण भिन्नाभिन्नस्य परिणामविशेषस्याङ्गीकारे मानाभावात् । न च 'दण्डी प्रमेय इत्यत्र दण्डविशिष्ट उद्देश्य, दण्डी भुङ्क्त इत्यत्र दण्डोपहित एवोद्देश्यो न दण्डविशिष्ट.' इत्यादिप्रतीतिव्यवहारयोः प्रामाण्यनिर्वाहाय विशिष्टोपहितयोर्भेद आवश्यक इति वाच्यम् । तादृशप्रतीतिव्यवहारयोरेतदविषयकत्वात् । तथा हि । प्रमेयत्वे विधेये दण्डविशिष्ट उद्देश्य इत्यत्र विधेयभूतप्रमेयत्ववत्त्वेन भासमानदण्डाश्रय प्रमेयत्वं प्रत्युद्देश्य इति प्रतीयते । भोजने विधेये दण्डोपहित उद्देश्य इत्यत्र भोजनाश्रयत्वेनाप्रतीयमानभोजनसमानकालीनत्वेन भासमानो दण्डाश्रय उद्देश्यो न तु भोजनाश्रयत्वेन भासमानदण्डाश्रय इति । तथा च तत्तत्प्रतीतिनिरूपितविधेयताश्रयधर्मवत्त्वेन भासमानत्वाभासमानत्वयोरेव दण्डांशे विषयीकरणादेतत्प्रतीतिभ्यां कथमुपहितविशिष्टयोर्भेदसिद्धिः । अन्यथा 'सोऽस्तीत्यत्र तत्तोपलक्षितश्चैत्रो विषय, नेदन्त्वोपलक्षित., अयं काञ्च्यामभूदित्यत्र इदन्त्वोपलक्षितश्चैत्रो विषय न तत्तोपलक्षित, चैत्रोऽस्तीत्यत्र शुद्धश्चैत्र उद्देश्यो नेदन्त्वोपलक्षितो नापि तत्तोपलक्षित' इत्यादिप्रतीतिव्यवहाराभ्यां तत्तेदन्त्वोपलक्षितयोः परस्परं शुद्धेन च भेदस्य प्रसक्तया सोऽयं देवदत्त इत्यादौ तत्त्वमसीत्यादौ च तत्तेदन्त्वोपलक्षितयोस्तत्त्वपदोपलक्षितयोस्तत्त्वपदोपलक्षितजीवत्वेशत्वोपलक्षितचेतनयोश्चाभेदस्य प्रातीतिकत्वप्राप्त्या तद्बोधकत्वेन वाक्यप्रामाण्योपपादनासम्भवापत्तेः । उक्तयोर्भेदेऽपि स्वरूपमात्रबोधो जायते तेन प्रामाण्योपपत्तिरित्यङ्गीकारे तत्त्वंपदादीनां विशिष्टोपहितार्थकत्वेऽपि तथैव वक्तुं शक्यत्वेन तत्पक्षपरित्यागस्योन्मत्तचेष्टितत्वापातात् । यदि चेदन्त्वोपलक्षित उद्देश्य इत्यत्र विधेयभूतकाञ्चीसत्त्वाधिकरणत्वेन तत्समानकालत्वेन चाभासमान इदन्त्वाश्रयत्वेन भासमानश्चैत्र उद्देश्यो नत्वेतादृशेदन्त्वेन भासमानश्चैत्रः तत्त्वेन भासमानश्चैत्रो वेति तादृशप्रतीतिव्यवहाराभ्यां विषयीक्रियते । तेनोक्तरीत्योपलक्षितयोर्भेदासिद्धिरिति ब्रूषे तर्हि तथैव विशिष्टोपहितयोर्भेदासिद्धिरुक्तैव । न चोक्तव्यवहारादिना तदसिद्धावपि दण्डविशिष्टोद्देश्यकदण्डोपहितोद्देश्यकदण्डोपलक्षितोद्देश्यकानां दण्डी द्रव्यवानिति ज्ञानानां विषयवैलक्षण्यं विना परस्परवैलक्षण्यायोगात् विशिष्टोपहितोपलक्षितानां परस्परं वैलक्षण्यसिद्धिरप्रत्यूहैवेति वाच्यम् । उद्देश्यतावच्छेदकीभूतदण्डे विधेयीभूतद्रव्याश्रयत्वभानतदभानसहिततत्समानकालीनत्वादिसम्बन्धान्तरभानेनैतदुभयसाहित्यविशिष्टधर्मितावच्छेदकत्वमात्रेणैव वैलक्षण्यस्य सम्भ-

(द्वै घु) वात्। त्वद्रीत्यापि तादृशविधेयाश्रयत्वादिभानस्य तादृशोद्देश्यतावच्छेदकीभूतदण्डादावावश्यकत्वात्। अन्यथा दण्डिन द्रव्यवत्त्वेन जानामीत्येवानुव्यवसायस्य प्रतीतित्रयस्थलेऽप्यङ्गीकारापत्त्या प्रतीतित्रयाणा वैलक्षण्यस्यैवासिद्धिप्रसङ्गात्। दण्डविशिष्टविशेष्यकद्रव्यवत्त्वग्रहोत्तर [1]दण्डो द्रव्यवान्न वेति संशयानुत्पत्ति, दण्डोपहितधर्मिकतादृशग्रहोत्तर च [2]दण्डे द्रव्यवत्त्वसंशयोत्पत्तिरिति वैलक्षण्याभावापत्ते। दण्डांशे विधेयाभानस्योभयत्रापि तौल्यात्। एतेन परमतोपन्यासप्रस्तावे प्रदर्शिता विशिष्टोपहितभेदसाधिका युक्तिरप्यपास्ता। उक्तरीत्यैव तत्रापि निर्वाहात्।

यत्तूपलक्षणतयोपात्तस्य शाब्दबोधे भानं नास्ति। किन्तु तदुपस्थापितधर्मान्तरस्य वा तदुपस्थापितस्वरूपमात्रस्य वेति। तदसत्। पदवृत्त्याऽनुपस्थापितस्य शाब्दबोधे भाने पटशब्देन समवायेनोपस्थितगगनादीनामपि तात्पर्यवशाच्छाब्दबोधे भानप्रसङ्गात्। तदवगाहिशाब्दोत्तर मानस एव स। वक्तुस्तु तावद्बोधपर्यन्तमिच्छासत्त्वेऽपि न तस्य शाब्दत्वम्। अन्यथा धूमोऽस्ति इति वक्तृतात्पर्यविषयीभूतवह्न्यनुमितेरपि शाब्दत्वापत्तेः। स्वरूमात्रोपलक्षकत्व त्वश्रद्धेयमेव। स्वरूपमात्रावगाहिबोधस्योपलक्षणया धर्मान्तरोपादानस्थलेऽनुभवविरुद्धत्वात्। विवेचयिष्यते चेदमुपरिष्टात्। तद्विधेयकबोधे तत्समकालिकत्वतत्प्रयोजकत्वमात्रेणा भासमानेष्वपि उद्देश्यतावच्छेदकेषु विशेषणत्वव्यवहारो यथा तिलकी कर्म कुर्वीत धनवान्सुखीत्यादौ तिलकधनादीनाम्। तदभिप्रायेण तिलकादिविशिष्टोद्देश्यकस्थलमिति व्यवह्रियते। कदाचित्तिलकादौ कर्मकरणरूपविधेयाश्रयत्वाभान तत्समानकालीनत्वभानमात्रमभिप्रेत्य 'न तिलकविशिष्ट उद्देश्य, किन्तूपहित उद्देश्य' इति व्यवह्रियते। विशिष्टादिव्यवहाराणा तात्पर्यानुसारेण नानार्थबोधने सामर्थ्यात्। क्वचित्तत्पदशक्यकोटाव प्रविष्टस्तच्छक्तेरितरव्यावृत्तिनिर्वाहकोऽप्युपाधिरुच्यते। यथा धेनुपदप्रयोगे गोत्व, पङ्कजपदसमुदायशक्तेरनङ्गीकारे पङ्कजपदप्रयोगे पद्मत्वम्। क्वचिन्नीलाविषयकत्वतात्पर्येण नीलोपलक्षितस्य ज्ञानमिति, नीलस्य ज्ञानसमकालिकत्वतात्पर्येण नीलविशिष्टस्येद ज्ञानं नीलोपहितस्येदं ज्ञानं न नीलोपलक्षितस्य ज्ञानमिति। तथा च विशिष्टादिव्यवहाराणा तात्पर्यानुसारेणैकवस्तुनो बोधकत्वान्न तदन्यथानुपपत्त्या तयोर्भेदसिद्धि अन्यथा पूर्वोक्तव्यवहारबलात्तिलकी कर्म कुर्वीतेत्यादिवाक्याना विशिष्टोद्देश्यकत्वतदभावौ स्यातामिति दिक्।

तस्माद्दण्डपुरुषसयोगा इति ज्ञानात् दण्डीति प्रत्ययवैलक्षण्यार्थमङ्गीक्रियमाणविशिष्टाविषयकस्य तत्प्रत्ययविलक्षणोपहितविषयकप्रत्ययरूपसाधकस्याभावात्तयोर्भेदानङ्गीकारे बाधकाभावाच्चोपहितविशिष्टभेदाङ्गीकारो निर्युक्तिक एवेति त्वदुक्तनियमस्य नीलो घट इत्यादौ व्यभिचारो दुर्वार एव।

अत्रेदमपि बोध्यम्। मृत्त्वघटत्वोपहितयोस्तादात्म्यमिवेहापि ध्वसरूपतत्तेदन्तोपहितयो प्रागभावरूपेदन्तातत्तोपहितयोस्तादात्म्यमेव बुद्ध्यताम्। अविरुद्धोपाधिद्वयोपहितयोस्तादात्म्याभावे मृत्त्वघटत्वोपहितादीनामपि तथात्वापातेन तादात्म्यसंसर्गकबोधस्थलस्यैवाप्रसिद्धिप्रसङ्गः। तत्रापि मृत्त्वघटत्वोपलक्षितैक्यबोधने सोऽय-

---

[1] दण्डी इति पाठेन भाव्यमिति भाति।

[2] दण्डिनि इति पाठेन भाव्यमिति भाति।

(द्वै सू) मित्यादेरिवाखण्डार्थकत्वप्राप्त्या हेतावकारणकार्यद्र०येत्यादेर्वैयर्थ्यम्। उपाधिभेदादुपहितभेदे तुल्यन्याये-नोपलक्षितभेदस्यापि प्राप्त्या तयोरैक्यस्यापि बोधनायोग। कार्यकारणादीनामुपहितानामप्यभेद स्वीक्रियतेऽन्यत्र नेत्यत्र मानाभाव। समानाधिकरणव्यवहृतिगोचरत्वस्य दण्डी कुण्डलीत्यादावपि सत्त्वात्। अविरुद्धोपाधिद्वयो-पहितयोस्तादात्म्याङ्गीकारे सोऽय देवदत्त इत्यत्राप्यसदुक्तत्वेद०त्वयोरविरुद्धत्वात्तदुपहितयोस्तादात्म्यसम्भवाद खण्डार्थत्वायोग। जीवत्वेशत्वयोरेककाले एकस्मिन्नेव चेतनेऽङ्गीकृतत्वाद्भवता विरोधो वक्तु न शक्य इति तत्राप्युपहिताभेद एव बोध्यताम्। किञ्च

कार्योपाधिरय जीव कारणोपाधिरीश्वरः।

इति श्रुतिबलादविद्यान्त करणरूपकारणकार्योपाध्युपहितयोर्विशिष्टयोर्वा जीवेश्वरत्वप्राप्त्या कारणोपहितस्य कार्यो-पहित प्रति कारणत्वसम्भवादीशजीवयोस्तादात्म्यस्यैव सम्भवादखण्डार्थकत्वायोग। अन्यथाऽविद्यावृत्तिप्रतिबिम्बि तचिद्रूपसाक्षिणोऽविद्योपहितजीवतादात्म्याज्जीवस्य द्रष्टृत्वोक्त्यसङ्गत्यापत्ते। अत एव जीवेश्वरयो कार्यकारण-भावापन्नत्वादकारणकार्येत्याद्युक्तहेतोरसिद्धि। एवं तदेतद्रूपमित्यद्र०यपरवाक्येनाप्यखण्डार्थबोधोदयादखण्डार्थक-बोधकत्वे नोक्तहेतु प्रयोजकः। किन्त्वसम्भवत्तादात्म्यकत्वे सति समानाधिकृतत्वमात्रमिति तदेव वक्तव्यम्। एव सामानाधिकरण्यस्य चतुर्धा विभागोऽप्ययुक्त। इदं रजतमित्यादावपि तादात्म्यबोधस्यैवाङ्गीकृतत्वात्। यश्चोर स स्थाणुरित्यत्रापि चोरपदस्य चोरत्वेन ज्ञानविषय इत्यर्थस्याङ्गीकृतत्वेन तत्रापि तादात्म्यस्यैव बोधि-तत्वात्। अवान्तरभेदविवक्षाया प्रयोजनविशेषानुपलम्भादिति।

तटस्थ शङ्कते॥ तथापीति॥ त्रयमपीति॥ एतद्देशकालवैशिष्ट्यस्य पुरोवर्तिपिण्डे प्रत्यक्षसिद्धत्वेऽपि तद्देशकालसम्बन्धध्वंसविशिष्टे एतद्देशकालवैशिष्ट्यप्रकारकसन्देहेन तद्बुभुत्सायामाद्यपक्ष प्रवर्तते। एतत्कालादि-प्रागभावविशिष्टे तद्देशकालादिवैशिष्ट्यसन्देहाहितबुभुत्साया द्वितीयपक्ष प्रवर्तते। प्रथमकल्पे 'स देवदत्त अयम्' इत्युद्देश्यविधेयभाव। द्वितीयपक्षे 'अय देवदत्त स.' इत्युद्देश्यविधेयभाव। तात्पर्यानुसारेण योज नाग्रहसम्भवात्। शाब्दबोध सर्वपक्षेऽप्यभेदान्वयावगाही। परन्तु प्रथमद्वितीयपक्षयोस्तदनन्तरमेकविशिष्टेऽपर वैशिष्ट्यावगाहिमानसबोध श्रोतुरिष्टो जायते। तन्निर्वाहकतयैव वाक्यसार्थक्यम्। तृतीयपक्षे वक्ष्यमाणे शाब्द एव श्रोत्रभिमतो भवतीति ज्ञेयम्। पक्षत्रयेऽपि विशिष्टवैशिष्ट्यावगाही बोधो विशेषणयोः समकालिकत्वमव-गाहते। अत एकविशिष्टेऽपरवैशिष्ट्यस्य विशिष्टद्वयैक्यस्य च सिद्धि।

नन्वाद्यपक्षो न युक्त। तद्देशकालसम्बन्धध्वसस्य पुरोवर्तिपिण्डे निश्चयाभावे धर्मितावच्छेदकविशिष्ट-धर्मिनिर्णयाभावेन तदवच्छिन्नधर्मिकैतद्देशकालवैशिष्ट्यप्रकारकसन्देहायोगेन बुभुत्सानुपपत्ति। तस्य निश्चितत्वे तदवच्छिन्ने एतद्देशकालसम्बन्धस्यापि निश्चितत्वेन बुभुत्सायोग.। पुरोवर्तिन सन्निकृष्टत्वात्। अन्यथा त प्रत्युपदेशकस्यायमिति निर्देशायोग। न च पुरोवर्तिपिण्डत्वं धर्मितावच्छेदकत्वेनानवगाह्य जायमानो यस्तद्दे-शकालसम्बन्धध्वंसवत्त्वमात्रधर्मितावच्छेदककसंशयस्तद्बलादेव बुभुत्साऽस्त्विति वाच्यम्। तस्य धर्मितावच्छेदक-

(द्वै द्यु) सामानाधिकरण्यमात्रेणैतद्देशकालसम्बन्धाभावावगाहित्वे सोऽय देवदत्त इति पिण्डविशेषबोधकवाक्यस्य तदनिवर्तकता। अवच्छेदकावच्छेदेन तदभावावगाही संशयस्तु न घटते। स्वस्मिन्नेवैतद्देशकालसम्बन्धस्य निश्चितत्वादिति चेन्न। यत्र श्रोत्रा स्वसन्निकृष्टदेवदत्त पूर्वानुभूतस्तद्देशकालसम्बन्धध्वंसवत्तया ज्ञात पृच्छ्यते स देवदत्त क्वास्तीति त प्रति स्वसन्निहित देवदत्तं बोधयति स देवदत्तोऽयमिति तत्रोक्तप्रथमकल्पसम्भवात्। तृतीयपक्षे चायंपदस्योक्तप्रागभावावच्छिन्नार्थकत्वे तस्मिन् स इति पदार्थभूततद्देशकालसम्बन्धविशिष्टामेद प्रतीयते। तत्पदस्योक्तध्वंसावच्छिन्नार्थकत्वे तु अय पदार्थभूतैतद्देशकालसम्बन्धविशिष्टामेद प्रतीयते। विशेषणयोरविरुद्धत्वादुक्तविशिष्टद्वयैक्योपपत्ति।

ननु तत्पदस्योक्तध्वंसावच्छिन्नार्थकत्वे इदपदस्यैतद्देशकालविशिष्टार्थकत्वपक्षे यथा तत्तावच्छिन्नोद्देश्यकेदंपदार्थविधेयकबोध श्रोतृबुभुत्सानुसारेण स्वीक्रियते तथेदत्वावच्छिन्नोद्देश्यकतत्पदार्थविधेयकबोधोऽपि सम्भवति। श्रोतृबुभुत्सायास्तथैव सम्भवात्। एवमयमित्यस्य प्रागभावघटितार्थकत्वे तत्पदस्य यथाश्रुतार्थकत्वपक्षेऽप्यनयैव दिशा बोधद्वयम्। एवं विशिष्टैक्यबुभुत्सापि एवं क्रमेण द्विधा सम्भवति। तत्पक्षेऽप्युक्तोद्देश्यविधेयभावव्यत्यासात्पक्षषट्कमिति वक्तव्यम्। त्रयमिति कथमुक्तमिति चेन्न। तद्देशकालध्वंसैतद्देशकालसम्बन्धैतदुभयवैशिष्ट्यविषयकत्वेन तथैतद्देशकालप्रागभावतद्देशकालसम्बन्धैतदुभयवैशिष्ट्यविषकत्वेन बोधद्वय द्वयमेकीकृत्याद्यद्वितीयपक्षयोरुक्ति। पदद्वयस्य निषेधप्रधानत्वे उद्देश्यविधेयभावव्यत्यासेन बोधद्वयम्। तथैव श्रोतृबुभुत्सानुसारेण सम्भवति चेत्। अन्यतरपदस्य निषेधप्राधान्यविवक्षाया चोद्देश्यभावव्यत्यासेन श्रोतृबुभुत्सानुसारेण चत्वारो बोधा सम्भवन्ति। एवं चैतच्छट्कमपि तत्पदार्थेदंपदार्थविशिष्टद्वयैक्यविषयकत्वेनैकीकृत्य त्रयमपीति पक्षत्रयत्वेनोक्ति। प्रमेयवैलक्षण्याभावादुक्तावान्तरवैलक्षण्य नादृतमित्यवधेयम्।

इदमाचार्याभिप्रेत न वेति शङ्कां परिहरति॥ **अनित्येति**॥ देशकालयोरनित्यत्वकथनेन तद्ध्वंसमादायेदत्वसमानकालिकत्व सम्पाद्यैकविशिष्टेऽपरवैशिष्ट्यं सम्पाद्यमित्युक्तं भवति। तद्देशकालादिविशिष्ट इति तत्पदस्य देशकालसम्बन्धप्राधान्येनार्थमभिप्रेत्य तद्विशिष्ट इतीदपदार्थे तद्वैशिष्ट्यकथनात्तदनुसारेणायमित्यस्य प्रागभावघटितार्थकत्वमभ्युपेत्यैकविशिष्टेऽपरवैशिष्ट्यमुपपाद्यमित्युक्त भवतीति द्वितीयपक्षलाभ। अनुस्मृतेरिति सूत्रेण पूर्वापरकालसम्बन्धविशिष्टयोरैक्ये प्रत्यभिज्ञाया प्रमाणीकृतत्वात् तस्यास्तत्तेदन्ताविशिष्टयोरैक्यावगाहितासिद्धौ तदभिलापकवाक्यस्यापि तद्बोधकत्वमवश्यमङ्गीकरणीयम्। अभिज्ञाऽभिलपनयो समानविषयकत्वात्। तथा च तत्सूत्रेण तृतीयपक्षो लभ्यत इति भाव।

आदिपदेन तत्सूत्रसम्बन्धिभाष्यादिग्रहणम्। तेन परै 'पूर्वानुभूतस्य स्मृत्यनुपपत्त्याऽऽत्मन· क्षणिकत्व नास्ति' इति तत्सूत्रस्य व्याख्यातत्वात्कथमेतत्तृतीयपक्षज्ञापकतयोदाहियत इति शङ्काऽपास्ता। प्रत्यभिज्ञापरत्वेनाचार्यैर्भाष्ये व्याख्यातत्वात्तस्यैवादरणीयत्वात्। परोक्तस्यापव्याख्यानत्वात्। उत्तरोत्तरविज्ञानरूपाऽऽत्मनि पूर्वपूर्वविज्ञानवृत्तिवासनासङ्क्रमेण तै स्मृतेरुपपादितत्वात्तदन्यथानुपपत्त्याऽऽत्मन स्थिरत्वासिद्धे। स्मृतेरिव सौगतमते

(द्वि ग्रु) प्रत्यक्षकार्यप्रवृत्त्यादीना परामर्शादिकार्यानुमित्यादीनामप्यनुपपत्तेरात्मनः क्षणिकत्वपक्षे सत्त्वेन स्मृतिमात्रग्रहणे न्यूनत्वापत्तेश्च। सोऽहं तदेवेदमिति प्रत्यभिज्ञाया साक्षात्स्वविषयस्थिरत्वग्राहिकाया आत्मनि घटादौ च स्थिरत्वसाधकतया तत्परत्वेन सूत्रव्याख्यान विहायाऽऽत्ममात्रक्षणिकत्वनिरासकतयोक्तस्मृत्यन्यथाऽनुपपत्तिरूपहेतुपरत्वेन व्याख्यानस्यासङ्गतत्वाच्च ॥ देशकालेति ॥ तद्देशकालेत्याद्यप्यत्र ग्राह्यम् ॥ कथमिति ॥ आभ्या पक्षद्वयस्यैवाभिमतत्वलाभात्तृतीयपक्षस्याङ्गीकारो न युक्त इत्याशय ॥ उपलक्षणमिति ॥ अन्यत्रोक्तत्वाच्छिष्यैरेव ज्ञातुं शक्यमित्याशयेन कण्ठतोऽनुक्तम्। तदप्युपलक्षणतया ग्राह्यमेवेति भाव.।

ननु सोऽयमित्यत्राभेदान्वयबोधस्यैवावश्यवक्तव्यत्वात्तृतीयपक्ष. स्वत एव सिद्धः। तद्देशकालादिविशिष्ट इति प्रथमान्तनिर्देशेन मूलेनेतरपक्षद्वयवज्ज्ञापितोऽपि। किं ज्ञापकान्तरान्वेषणेनोपलक्षणत्वोक्त्या च। सत्यम्। वाक्येन साक्षाज्जायमानबोध एव परमतात्पर्यमित्यस्यैव तृतीयपक्षत्वेन तत्र ज्ञापकान्तरान्वेषणौचित्यात्। कैर्विशेषणैर्विशिष्ट इति प्रश्न इत्युक्त्या विशेषणसम्बन्धबोधमात्रे तात्पर्यावगमात्, उद्देश्याश विहाय तद्देशकालादिविशिष्ट इत्येतावन्मात्रेणैक्यपक्षस्य स्फुटमज्ञापितत्वाच्च स्फुटज्ञापकान्तरमुपलक्षणया गृहीतमित्यदोषः।

वस्तुतस्तु तद्देशकालसम्बन्धध्वंसैतद्देशकालसम्बन्धयोरेककालावच्छिन्नसामानाधिकरण्यमित्याद्य पक्ष.। एतद्देशकालसम्बन्धप्रागभावतद्देशकालयोरेककालावच्छिन्नसामानाधिकरण्य वाक्यार्थ इति द्वितीय. पक्ष। तद्देशकालसम्बन्धैतद्देशकालसम्बन्धाऽऽश्रयव्यक्त्यैक्यमिति तृतीयपक्ष। प्रथमद्वितीयपक्षयोरुक्तार्थलाभाय तदिदपदयोरन्यतरस्य निषेधप्राधान्यमभ्युपेत्यैकविशिष्टेऽपरवैशिष्ट्यावगाही बोधो वाक्याज्जायते। तत्पक्षद्वये च क्रमादनित्यदेशकालेति तद्देशकालादिविशिष्ट इति च ज्ञापके भवत। प्रथमानिर्देशेन विशिष्टद्वयाभेदान्वयबोधद्वारैवायमर्थ· पर्यवस्यतीति सूचितम्। तृतीयपक्षे तु तद्देशकालैतद्देशकालसम्बन्धाऽऽश्रययोरभेदबोधस्तदेतद्देशकालयोर्धर्मिविशेषणतापन्नयो परस्परं समानकालिकत्वानवगाही केवल धर्म्यंशे तत्प्रकारकोऽभिलषित.। तेनैव कालद्वयसम्बद्धैकवस्तुरूपस्थिरपदार्थसिद्धे। पूर्वोक्तपक्षद्वये कालद्वयसम्बन्धस्यैकत्राविषयीकृतत्वेन वस्तुस्थिरत्वासाधकत्वात् तृतीयपक्षाभ्युपगम आवश्यक। ध्वंसप्रागभावयो प्रतियोगिसामानाधिकरण्य विनाऽनुपपत्तिरित्यनुसन्धानेनानन्तर तत्सिद्ध्यङ्गीकारे चानुमानान्तरत्वापत्त्या प्रत्यभिज्ञाप्रत्यक्षस्य क्षणिकत्वानुमानबाधनायोपन्यासायोगप्रसङ्गाच्च।

इत्थञ्चात्र नोक्तमूलयोर्ज्ञापकत्वम्। सम्बन्धित्वस्येति सम्बन्धस्यैव प्राधान्येन ग्रहणात्। तद्देशकालादिविशिष्ट इति विशिष्टपदस्वारस्येन विशिष्टैक्यबोधस्योक्तत्वात्। तस्य च तृतीयपक्षे बाधितत्वात्। अत उक्तसूत्रभाष्यरूपज्ञापकान्तरमनुसृत मूलस्योपलक्षकत्वञ्चोक्तमिति।

न चैवरीत्या ग्रन्थाशयवर्णनमयुक्तम्। पूर्वशङ्कितपक्षत्रयस्यैवात्राभ्युपगतत्वप्रतीते। पूर्वत्र च विशिष्टैक्यपक्षस्यैव शङ्कितत्वादिति वाच्यम्। तत्ताविशिष्ट इदंतावैशिष्ट्यावगाहित्वमिदंताविशिष्टे तत्तावैशिष्ट्यावगाहित्वं तदिदपदार्थैक्यावगाहित्वमित्येतावदंशमात्रमुपादायात्र पक्षत्रयाङ्गीकारोक्ते सङ्गते.। अन्यथा तद्देशकालविशिष्टे एतद्देशकालवैशिष्ट्यादेरेव पूर्वं शङ्काग्रन्थ उक्तत्वेन पूर्वकल्पद्वये च ध्वंसादिकमादाय तदुपपादनस्याप्यसङ्गतत्वा-

(द्वै. सि.) पत्ते:। विशिष्टैक्ये विशेषणैक्यमित्यादिग्रन्थस्तु पूर्वकल्पद्वये विशिष्टद्वयैक्यस्यैव साक्षाद्वाक्येन बोधितत्वात्तदभिप्रायक । अतो न तद्विरोधोऽपि ।

नन्वथापि तृतीयपक्षो न युक्त । तद्देशकालसम्बन्धवान् देवदत्त एतद्देशकालसम्बन्धवानित्याकारस्य धर्मितावच्छेदकीभूतप्रकारतावच्छेदकीभूतदेशकालसम्बन्धयो: समानकालीनत्वानवगाहिनोऽपि बोधस्याङ्गीकर्तुमयोगात् । विरुद्धविशेषणयोरेकधर्मिण्यवगाहिनोऽनाहार्यबोधस्यानुदयात् । अन्यथा भाविपाकाधीनरागतात्पर्येण श्यामघटो रक्त इति प्रतीतिप्रयोगयो प्रामाण्यापत्तेरिति चेन्न । भावाभावादिरूपाणा सामान्यत एकाधिकरणावृत्तित्वरूपविरोधवत्त्वेन गृह्यमाणाना परस्परसामानाधिकरण्यावगाह्यनाहार्यबोधानुदयेऽपि एककालावच्छिन्नैकाधिकरणवृत्तित्वाभावरूपविरुद्धत्वेन गृह्यमाणाना तादृशैककालीनत्वमविषयीकृत्य सामानाधिकरण्यावगाही बोधो जायत एव । श्यामत्वरक्तत्वयो: समानकालिकत्वानवगाहिप्रतीतिप्रयोगाविष्टावेव । अन्यथा 'स्नातानुलिप्त' 'पीतप्रतिबद्धवत्साम्' इत्यादेरप्रामाण्यप्रसङ्गात् । तादृशक्रियाद्वयतदनुकूलकृत्यो समकालिकत्वाभावात् ।

यत्तु 'सर्वत्र विशिष्टवैशिष्ट्यावगाहिबोधजनने पदाना शक्तेरुक्तरीत्योपलक्षणविधया बोधजनकत्वाङ्गीकारे मुख्यार्थत्याग एव' इति । तदसत् । घटो द्रव्यं शुक्लो नित्यश्च, भूतल घटवत् इत्यादीना घटत्वभूतलत्वादीनामुपलक्षणया बोधजनकवाक्याना शतशो विद्यमानत्वेन सर्वत्रामुख्यार्थकत्वमङ्गीकृत्य त्वदभ्युपगतरीत्यङ्गीकारे मानाभावात् । विशिष्टवैशिष्ट्यावगाहिबोधादेस्तात्पर्याधीनत्वात् । अन्यथा वैपरीत्यस्यैव प्राप्तेर्विनिगमकाभावात् । प्रायो विशिष्टवैशिष्ट्यबोधतात्पर्येण लौकिकाना व्यवहारात्तदनुसारेण वेदेऽप्युत्सर्गतस्तथात्वकल्पनम् । न तु पदशक्तिबलादिति ।

यत्तु 'उक्तरीत्या तत्ताया ध्वंसरूपत्वाङ्गीकारेऽनुभवविरोध.' । तावताऽपि तद्देशकालसम्बन्धवानयमित्यत्रागति इति । तदसत् । पूर्वकालध्वंसादिविशिष्टे इतरवैशिष्ट्यबुभुत्सानिवृत्त्यर्थं तद्वाक्यप्रवृत्तिकाले वक्तृतात्पर्यानुसारात्तादृशबोधस्यैवानुभवसिद्धतया तत्रानुभवविरोधोत्त्यसङ्गते । तद्देशकालसम्बन्धवानिति वाक्यस्य च तृतीयपक्षरीत्या बोधकत्वसम्भवात् तत्रोक्तरीतेरनाश्रयणात् । तद्वाक्यस्योक्तरीत्या विशिष्टवैशिष्ट्यावगाहिधीपरत्वे त्वन्मतेऽपि तद्वाक्यमप्रमाणमेव । प्रत्युत तवैवानुभवविरोध: । सोऽयं देवदत्त इति वाक्यश्रवणानन्तर शुद्धस्वरूपं जानामीत्यननुभवात् । तं देवदत्तमिम जानामीत्येव सर्वानुभवात् ।

किञ्च प्रत्यभिज्ञाभिलापरूपस्य सोऽयमिति वाक्यस्य स्वरूपमात्रबोधकत्वे 'स एवायं गकार.' इति प्रत्यभिज्ञाभिलापकवाक्यस्यापि तथात्वे तदभिलाप्यप्रत्यभिज्ञाया अपि गकारस्वरूपमात्रविषयकत्वप्राप्त्या पूर्वापरप्रतीतिविषयगकाराभेदासिद्ध्या वर्णनित्यत्वासिद्धिप्रसङ्ग । व्यवहारे भट्टमतानुयायिनस्तवेष्टापत्ते कर्तुमशक्यत्वात् ।

न च सोऽय देवदत्त इत्यत्रोक्तरीत्या पूर्वापरत्वोपलक्षितगकारयोर्भेदभ्रमव्युदासद्वारा तदैक्य सिद्ध्यतीति वाच्यम् । उक्तनिश्चयस्य कथञ्चिद्भेदग्रहप्रतिबन्धकत्वाङ्गीकारेऽपि तत्प्रमाया स्वरूपैक्यस्याविषयत्वेन तादृशप्रमाणबलात्तत्सिद्ध्युक्तेरयोगात् । अन्यथा शुक्तौ रजतभ्रमवन्तं प्रति केनचिद्भ्रान्तेन पुरुषान्तरेण तदिदं रजतमित्युक्तौ

(द्वि. ग्रु) तत्रासत्त्वभ्रमवतो रजतत्वस्य रङ्गभेदव्याप्यताग्रहोद्बुद्धसंस्काराद्यन्यतरवत पुरुषस्य रङ्गभ्रमनिवृत्तेरनुभवसिद्धत्वात्। त्वन्मते च तस्य बोधस्य स्वरूपमात्रावगाहित्वात्तस्य चोक्तरीत्या रजतभेदग्रहरङ्गत्वादिभ्रमनिवर्तकत्वाच्च रजतस्य शुक्तिस्वरूपत्वस्य तद्बलात्सिद्ध्यापत्ते। न च तज्ज्ञान न प्रमेति वाच्यम्। शुक्तिस्वरूपस्यैव तत्र विषयतया तदप्रामाण्ये बीजाभावात्। न च तत्र प्रातिभासिकरजतस्वरूपमेव विषय इति वाच्यम्। तथात्वे रजतस्य प्रातिभासिकत्वेन रङ्गभ्रमहेत्वज्ञानविषयतानवच्छेदकत्वेनानधिष्ठानत्वेन तज्ज्ञानस्योक्ताविद्यानिवर्तकत्वाभावेन शुक्तौ रङ्गतादात्म्यभ्रमानिवृत्तिप्रसङ्गात्। रजतस्वरूपमात्रज्ञानेन शुक्तौ रङ्गभ्रमनिवृत्त्यङ्गीकारे शुक्तिरजतस्वरूपैक्यमपि सिद्ध्येत्। अन्यथा पूर्वापरगकारैक्यमपि न सिद्ध्येदविशेषात्।

ननु न भेदभ्रमनिवर्तकत्वमात्रमुक्तप्रत्यभिज्ञाया स्वीक्रियते। किन्तु पूर्वापरवर्णस्वरूपैक्यमपि तस्या विषय। न च तथात्वे स्वरूपमात्रावगाहित्वानुपपत्ति। ऐक्यस्य स्वरूपमात्रत्वेन तदनुपपत्त्यभावात् इति चेन्न। गकारस्वरूपमात्रस्य नैयायिकैरभ्युपगतत्वेन तै सह मीमांसकानां विवादाभावप्रसङ्गात्। एतेन

'भेदो भिन्नश्चातिरेकोऽतिरिक्तो भेदो भिन्न संविद स्वप्रकाशा।
इत्यादीना विद्यते नार्थभेद श्रुत्यन्तानामप्यखण्डस्तथार्थे'॥

इति सक्षेपशारीरकोक्तिरप्यपास्ता। भेद इत्यनेन तन्मात्रस्य भिन्न इत्यनेन तदाश्रयस्य च प्रतीत्याऽर्थवैलक्षण्यस्यानुभवसिद्धत्वात्। भेदावृत्तित्वग्रहप्रतिबन्धकत्वाप्रतिबन्धकत्वादिवैलक्षण्यस्य चानुभवसिद्धत्वाच्च भेदभिन्नपदयो समानार्थकत्वे क्तप्रत्ययस्य स्वार्थिकत्वापत्तेश्चेति॥ **न्यायसाम्यादिति**॥ वाच्यार्थानुपपत्त्यभावरूपन्यायसाम्यादित्यर्थ॥ **एतदनुपपत्तीति**॥ पूर्वशङ्काग्रन्थोक्तानुपपत्तीत्यर्थ।

(गु. टि) अस्तु तावत्तद्देशकालविशिष्टे एतद्देशकालवैशिष्ट्य विधेयमित्याद्य पक्ष। न चास्मिन् पक्षे तद्देशकालयोरिदानी सत्त्व स्यादिति दूषणमुक्तमिति वाच्यम्। तद्देशकालसम्बन्धध्वंसस्येव तद्ध्वंसस्यापि अनुभवानुरोधेन स इत्येतदर्थत्वेन स इत्यस्य तद्देशकालसम्बन्धरूपैकमात्रार्थकत्वाभावात्प्रकृते च स इत्यस्य तद्देशकालयोरिदानी सत्त्वानापादकतद्देशकालसम्बन्धध्वसार्थकत्वस्यैव विवक्षितत्वेन तदापादकतद्देशकालसम्बन्धार्थकत्वानङ्गीकारेण तदप्रसङ्गादित्यभिप्रेत्य गूढाभिसन्धि परिहरति॥ **न हीति**॥ **अतीतत्वमपीति**॥ अत्र ध्वंसप्रतियोगिस्वरूपातीतत्वस्य स इत्येतच्छब्दार्थान्तर्गतत्वकथन अतीतत्वान्तर्गतध्वसमात्रस्य तच्छब्दार्थान्तर्गतत्वाभिप्रायम्। न तु विशिष्टस्यापि तदन्तर्गतत्वाभिप्रायम्। ध्वसमात्रस्य तदन्तर्गतत्वविवक्षयोक्तदोषपरिहारसम्भवेन विशिष्टस्य तदर्थान्तर्गतत्वाश्रयणप्रयासवैयर्थ्यादिति ज्ञेयम्।

अस्त्वेव स इत्यस्योभयार्थत्वम्। तथापि प्रकृते कस्तदर्थ आश्रियत इत्यत आह॥ **एवञ्चेति**॥ इदञ्च तद्देशकालसम्बन्धध्वसस्य स इत्येतदर्थकत्व स इत्यनुवादेन अयमिति विधानपक्षे। तत्रैव तद्देशकालयोरापादितस्येदानी सत्त्वस्य परिहाराय स इत्यस्य तद्देशकालसम्बन्धार्थकत्वपरित्यागेन तद्ध्वंसार्थकत्वपर्यन्तधावनसार्थक्त्वात्। न तु अयमित्यनुवादेन स इति विधानपक्षेपि। तत्र तद्देशकालयोस्तदानी सत्त्वेन स इत्यस्य

(गु टि) तद्देशकालसम्बन्धार्थकत्वस्योपपन्नत्वेन तत्परित्यागेन तद्देशकालसम्बन्धध्वंसार्थकत्वपर्यन्तधावनस्यानर्थकत्वादिति ध्येयम्।

अस्तु वा एतद्देशकालविशिष्टे तद्देशकालवैशिष्ट्यं विधेयमिति द्वितीय पक्ष। न चैतस्मिन् पक्षे एतद्देशकालयोस्तदानीं सत्त्व स्यादिति दूषणमुक्तमिति वाच्यम्। एतद्देशकालसम्बन्धस्येव तत्प्रागभावस्यापि अयमित्येतदर्थत्वेन अयमित्यस्यैतद्देशकालसम्बन्धरूपैकमात्रार्थकत्वाभावात् प्रकृते च अयमित्यस्यैतद्देशकालयोस्तदानीं सत्त्वानापादकैतद्देशकालसम्बन्धप्रागभावार्थकत्वाभ्युपगमेन तदापादकैतद्देशकालसम्बन्धार्थकत्वानङ्गीकारेण तदप्रसङ्गादित्यभिप्रेत्य गूढाभिसन्धिरुत्तरमाह ॥ अयमित्यस्यापीति ॥ वर्तमानता चेति ॥ अत्र वर्तमानत्वस्य अयमित्येतच्छब्दार्थान्तर्गतत्वकथन वर्तमानत्वान्तर्गतप्रागभावस्यैव [1]तदर्थतदन्तर्गतत्वाभिप्रायम्। न तु विशिष्टस्यापि तदन्तर्गतत्वाभिप्रायम्। प्रागभावमात्रस्य तदन्तर्गतत्वाश्रयणेनैवैतत्पक्षोक्तदोषपरिहारेण विशिष्टस्य तदर्थान्तर्भावाश्रयणस्यानर्थकत्वात्। अयमित्यस्यैतद्देशकालसम्बन्धप्रागभावार्थकत्वञ्च अयमित्यनुवादेन स इति विधानपक्षे। तत्रैवैतद्देशकालयोस्तदानी सत्त्वस्याऽपादितत्वेन तत्परिहाराय अयमित्यस्य एतद्देशकालसम्बन्धार्थकत्वपरित्यागेन तत्प्रागभावार्थकत्वपर्यन्तानुधावनस्यार्थवत्त्वात्। न तु स इत्यनुवादेन अयमिति विधानपक्षेपि। तत्रैतद्देशकालयोरिदानी सत्त्वेन एतद्देशकालसम्बन्धस्य अयमित्येतदर्थकत्वसम्भवात् तत्परित्यागेनैतद्देशकालसम्बन्धप्रागभावार्थकत्वपर्यन्तधावनस्यानर्थकत्वादिति ध्येयम्।

एव पक्षद्वयोक्तदोषपरिहारेण तदुपपाद्योपसहरति ॥ न चेति ॥ यद्यप्यत्र तृतीयपक्षे प्रागुद्भावितदोषानुपपत्तिर्विशिष्टैक्येत्यादिनोत्तरत्राऽशङ्क्य परिहरिष्यते। न तु पूर्वत्र परिहृतेति पक्षद्वयेपीत्येव वक्तुमुचितम्। न तु पक्षत्रयेपीति। तथापि तत्र सम्भावितानुपपत्त्यन्तरपरिहारस्य पूर्वत्र सिद्धप्रायत्वाभिप्रायेणैवमुक्तम्। विशिष्टद्वयैक्य बोध्यमिति तृतीयपक्षे स इत्यस्य न तद्देशकालसम्बन्धध्वसमात्रार्थकत्वम्। तथा सति तद्देशकालसम्बन्धध्वंसविशिष्टस्य मध्यस्थस्येदन्ताविशिष्टेनाभेदबोधनादनेन तदभेदस्य सिद्धिप्राप्तावपि तद्देशकालसम्बन्धविशिष्टस्येदन्ताविशिष्टेनाभेदाबोधनेन तदसिद्धिप्रसङ्गात्। नापि तद्देशकालसम्बन्धमात्र तदर्थं। तथा सति तद्देशकालसम्बन्धविशिष्टस्येदन्ताविशिष्टेनाभेदबोधनादनेन तदभेदसिद्धिप्राप्तावपि तद्देशकालसम्बन्धध्वसविशिष्टस्य मध्यस्थस्येदन्ताविशिष्टेनाभेदाबोधनात्तदसिद्धिप्रसङ्गात्। किन्तु तद्देशकालसम्बन्धविशिष्टस्येदन्ताविशिष्टेनाभेदबोधनदशाया स इत्यस्य तद्देशकालसम्बन्धार्थत्व मध्यस्थस्येदन्ताविशिष्टेनाभेदबोधनदशाया तु तस्य ध्वसार्थत्वमित्येवमुभयार्थत्वमित्यतो युक्तमुभयाभेदबोधकत्वम्। एव अयमित्यस्यापि नैतद्देशकालसम्बन्धमात्रार्थत्वम्। तथा सति एतद्देशकालसम्बन्धविशिष्टस्य तत्ताविशिष्टेनाभेदबोधनादनेन तदभेदसिद्धावपि मध्यस्थस्यैतद्देशकालसम्बन्धविशिष्टत्वाभावेन तस्य तत्ताविशिष्टेनाभेदस्याबोधनादनेन तदसिद्धिप्रसङ्गात्। नाप्येतद्देशकालसम्बन्धप्रागभावमात्रार्थकत्वम्। तथा सति एतद्देशकालसम्बन्धप्रागभाव-

[1] एतच्छब्दार्थान्तर्गतत्वाभिप्रायम् इति पाठेन भाव्यमिति भाति।

(गु टि ) विशिष्टत्वान्मध्यस्थस्य तत्ताविशिष्टेनाभेदबोधनात्तस्य तेनाभेदस्यानेन सिद्धावपि एतद्देशकालसम्बन्ध-विशिष्टस्य तत्ताविशिष्टेनाभेदाबोधनात्तदसिद्धिप्रसङ्गात् । किन्तु एतद्देशकालसम्बन्धविशिष्टस्य तत्ताविशिष्टेनाभेद-बोधने तस्यैतद्देशकालसम्बन्धार्थकत्वं मध्यस्थस्य तदभेदबोधनदशाया तु तस्यैतद्देशकालसम्बन्धप्रागभा-वार्थकत्वमित्येवमुभयार्थकत्वमित्यतो युक्तमुभयाभेदबोधकत्वमिति तृतीयपक्षोपपादनस्यापि पूर्वेण सिद्धत्वादिति द्रष्टव्यम् ।

स इत्यनुवादेन अयमिति विधानपक्षे स इत्यस्य तद्देशकालसम्बन्धध्वसार्थत्वमेव । अयमित्यनुवादेन स इति विधानपक्षे अयमित्यस्यैतद्देशकालसम्बन्धप्रागभावार्थत्वमेवेति सिद्धान्तिनो गूढाभिप्रायमजानान स इत्यनु-वादेपि तस्य तद्देशकालसम्बन्धार्थत्वमपि अयमित्यनुवादेपि तस्यैतद्देशकालसम्बन्धार्थत्वमपीति मन्वानः शङ्कते ॥ **नन्विति** ॥ **अत एव** यत स इत्यस्य तद्देशकालसम्बन्धोप्यर्थ अयमित्यस्यैतद्देशकालसम्बन्धोप्यर्थ तत एवेत्यर्थ । **अनुपपत्तिः** तद्देशकालसम्बन्धविशिष्टे एतद्देशकालसम्बन्धवैशिष्ट्यस्य एतद्देशकालसम्बन्धविशिष्टे तद्देशकालसम्बन्धवैशिष्ट्यस्य विधानानुपपत्ति. । आद्ये तद्देशकालयोरिदानीं सत्त्वस्य द्वितीये एतद्देशकाल-योस्तदानीं सत्त्वस्यापातात् इत्युक्तमित्यर्थ ।

आशयमुद्घाटयति ॥ **अविरुद्धेति** ॥ अविरुद्धत्वमेवोपपादयति ॥ **न हीति** ॥ **अतीतदेशादिसम्बन्ध-स्येति** ॥ देशादिसम्बन्धातीतत्वस्येत्यर्थ । उपलक्षणञ्चैतत् । देशादिसम्बन्धस्य वर्तमानत्वरूपवर्तमानदेशादि-सम्बन्धस्य तदानी सत्त्वेपि विरोधाभावादित्यपि द्रष्टव्यम् ।

कथ न विरोध इत्यत स इत्यनुवादेन अयमिति विधानपक्षे देशादिसम्बन्धातीतत्वरूपातीतदेशादि-सम्बन्धार्थकस्य स इत्यस्य तद्देशकालसम्बन्धध्वसार्थत्वेन तद्देशकालसम्बन्धार्थत्वाभावात् स इत्यनेन तद्देश-कालसम्बन्धध्वंसोक्तावपि तद्देशकालसम्बन्धानभिधानान्न तद्देशकालयोरिदानी सत्त्वप्राप्तिरित्यभिप्रेत्याह ॥ **प्रध्वंसो हीति** ॥ स इत्यनुवादेन अयमिति विधानपक्षे प्रध्वंसः देशादिसम्बन्धप्रध्वसः तथा देशादि-सम्बन्धातीतत्वरूपातीतदेशादिसम्बन्धार्थक स इत्येतच्छब्दार्थत्वेनोच्यते । न तु देशादिसम्बन्ध । अतो नोक्त-दोषप्रसङ्ग इति योजना ।

अयमित्यनुवादेन स इति विधानपक्षे देशादिसम्बन्धवर्तमानत्वरूपवर्तमानदेशादिसम्बन्धार्थकस्य अय-मित्यस्य देशादिसम्बन्धप्रागभावार्थकत्वेनैतद्देशकालसम्बन्धार्थकत्वाभावान्नैतद्देशकालयोस्तदानी सत्त्वप्रसङ्ग इत्यभिप्रेत्याह ॥ **तथेति** ॥ अयमित्यनुवादेन स इति विधानपक्षे देशादिसम्बन्धवर्तमानत्वरूपवर्तमानदेशादि-सम्बन्धार्थकायमित्यनेनैतद्देशकालसम्बन्धप्रागभाव एवोच्यते । न त्वेतद्देशकालसम्बन्ध इति नोक्तदोष इत्यर्थ ॥ **एतेनेति** ॥ सोयमिति पदद्वयस्य मुख्यार्थमादायैव पक्षद्वयेपि परोक्तदूषणपरिहारेणेत्यर्थ । **अन्य-तरलक्षणाश्रयणं** प्रागुक्तानुपपत्तिपरिहाराय सोयमित्यनयोरन्यतरस्य लक्षणया देवदत्तस्वरूपमात्रपरत्वाश्रयण-मित्यर्थ. ।

(गु टि ) यद्वा अस्तु तावदाद्य । न चैव सति तद्देशकालयोरिदानीं सत्त्वप्रसङ्ग । तदनापादकस्य ध्वसपर्यवसन्नतद्देशकालसम्बन्धातीतत्वरूपातीततद्देशकालसम्बन्धस्यानुभवानुसारेण स इत्येतदर्थतया इदानीं तद्देशकालयो सत्त्वापादकतद्देशकालसम्बन्धमात्रस्य तदर्थत्वाभावेन तदप्रसङ्गादित्यभिप्रेत्य गूढाभिसन्धिरुत्तरमाह ॥ **न हीति** ॥ स इत्यस्योक्तोऽर्थश्च स इत्युद्दिश्य अयमिति विधानपक्षे विशेषणम् । इदानीं तद्देशकालसम्बन्धध्वसस्य सत्त्वेन तस्य विशेषणताया उपपन्नत्वात् । अयमित्युद्दिश्य स इति विधानपक्षे तूपलक्षणम् । तदानीं तद्देशकालसम्बन्धस्यैव सत्त्वात् तद्ध्वसस्यासत्त्वेन तस्य विशेषणताया बाधितत्वादिति द्रष्टव्यम् ।

अस्तु वा द्वितीय । न चैवं एतद्देशकालयोस्तदा सत्त्वप्रसङ्ग । तदनापादकस्य प्रागभावपर्यवसन्नैतद्देशकालसम्बन्धवर्तमानत्वरूपवर्तमानैतद्देशकालसम्बन्धस्यैव अयमित्येतदर्थतया तदानीमेतद्देशकालसत्त्वापादकस्यैतद्देशकालसम्बन्धमात्रस्य अयमित्येतदर्थत्वाभावेन तदप्रसङ्गादित्यभिप्रेत्य गूढाभिसन्धिरुत्तरमाह ॥ **अयमित्यस्यापीति** ॥ अयञ्चार्थ अयमित्यनुवादेन स इति विधानपक्षे विशेषणम् । तदानीमेतद्देशकालप्रागभावसत्त्वेन तस्य विशेषणताया उपपन्नत्वात् । स इत्यनुवादेन अयमिति विधानपक्षे तूपलक्षणम् । इदानीमेतद्देशकालसम्बन्धस्य सत्त्वात्तत्प्रागभावस्यासत्त्वेन तस्य विशेषणताया बाधितत्वादिति ज्ञेयम् ।

विशिष्टद्वयैक्यबोधनपक्षेऽपि मध्यस्थस्येदन्ताविशिष्टस्य चैक्यबोधनदशाया स इत्यस्यार्थो विशेषणम् । मध्यस्थे तद्देशकालसम्बन्धध्वसस्य सत्त्वेन विशेषणताया उपपन्नत्वात् । तद्देशकालविशिष्टस्यैतद्देशकालविशिष्टस्य चैक्यबोधदशाया तूपलक्षणम् । तद्देशकालविशिष्टे तद्देशकालसम्बन्धध्वसस्यासत्त्वेन तस्य विशेषणताया बाधितत्वात् । एव मध्यस्थस्य तद्देशकालसम्बन्धविशिष्टस्य चाभेदबोधनदशाया अयमित्यस्योक्तोऽर्थो विशेषणम् । मध्यस्थे एतद्देशकालसम्बधप्रागभावस्य सत्त्वेन तस्य विशेषणताया उपपन्नत्वात् । एतद्देशकालविशिष्टस्य तद्देशकालविशिष्टस्य चैक्यबोधनदशाया तूपलक्षणम् । एतद्देशकालविशिष्टे एतद्देशकालसम्बन्धप्रागभावस्यासत्त्वेन तस्य विशेषणताया बाधितत्वात् । ततश्च पदद्वयार्थस्योक्तरीत्या विशेषणत्वोपलक्षणत्वाऽश्रयणात् विशिष्टद्वयैक्यबोधकत्वपक्षोऽपि युक्त एवेत्यभिप्रेत्य प्राग्व्युत्पादितान्पक्षानुपसंहरति ॥ **न चेति** ॥ न चैव 'एतेनान्यतरलक्षणाऽश्रयणम्' इत्युत्तरग्रन्थविरोध । तदनुरोधेन प्राग्व्युत्पादितपक्षत्रये अन्यतरलक्षणाभावस्य प्राप्तत्वात् । उक्तयोजनाया तु अन्यतरस्योपलक्षणत्वाङ्गीकारेण लक्षणाया आश्रितत्वादिति वाच्यम् । एतेनेत्यग्रिमग्रन्थे अन्यतरस्य लक्षणया देवदत्तस्वरूपमात्रपरत्वाभावस्यैव पूर्वयोजनाया सूचितत्वेन अन्यतरस्य पूर्वत्रोपलक्षणत्वाऽश्रयणेऽपि लक्षणया देवदत्तस्वरूपमात्रपरत्वानङ्गीकारेण उत्तरग्रन्थविरोधाप्रसङ्गात् ।

आशयमविद्वान् शङ्कते ॥ **नन्विति** ॥ अत एव यतः स इत्यस्यातीतदेशकालसम्बन्धोऽर्थः यतश्च अयमित्यस्य वर्तमानैतद्देशकालसम्बन्धोऽर्थ, अत एव तद्देशकालयोरिदानी सत्त्वस्य एतद्देशकालयोस्तदानीं सत्त्वस्य चापत्त्या तद्देशकालविशिष्टे एतद्देशकालवैशिष्ट्यस्य एतद्देशकालविशिष्टे तद्देशकालवैशिष्ट्यस्य च विधानानुपपत्ति-

(गु टि.) रित्युक्तमित्यर्थः । आशयमुद्घाटयति ॥ अविरुद्धेति ॥ विशेषणानामविरुद्धत्वमेव दर्शयति ॥ न हीति ॥ एतच्चोपलक्षणम् । वर्तमानैतद्देशकालसम्बन्धस्य तदा सत्त्वे विरोधो नास्तीत्यपि द्रष्टव्यम् ।

नन्वेतद्देशकालवैशिष्ट्यदशायां तद्देशकालयोः सत्त्वापादकत्वादतीतदेशकालसम्बन्धसत्त्वस्य कथमिदानीं सत्त्वे विरोधाभावः, कथञ्च तदानीमेतद्देशकालसत्त्वापादकत्वादेतद्देशकालसम्बन्धसत्त्वस्य तदानीं सत्त्वे च विरोधाभाव इत्यत आद्ये विरोधाभावं दर्शयति ॥ प्रध्वंसो हीति ॥ प्रध्वंसः तद्देशकालसम्बन्धध्वंसः । तथा स इत्यनेनोक्ततद्देशकालसम्बन्धातीतत्वरूपातीतदेशकालसम्बन्धत्वेनोच्यते । न त्वन्यः । तद्देशकालसम्बन्धध्वंसस्येदानीं सत्त्वञ्च न तद्देशकालयोरिदानीं सत्त्वापादकमित्यविरुद्धमिति भावः । द्वितीयेपि तं दर्शयति ॥ तथेति ॥ प्रागभावः एतद्देशकालसम्बन्धप्रागभावः तथा अयमित्यनेनोक्तैतद्देशकालसम्बन्धवर्तमानत्वरूपवर्तमानैतद्देशकालसम्बन्धत्वेनोच्यते । न त्वन्यः । एतद्देशकालसम्बन्धप्रागभावस्य तदा सत्त्वञ्च नैतद्देशकालयोस्तदा सत्त्वापादकमित्यविरुद्धमेवेत्यर्थः । एतेनेत्यस्य तु पूर्वकल्प[1]एवाभिप्राय इति योजना ।

तृतीयपक्षे प्रागुक्तामनुपपत्तिं परिहर्तुं शङ्कते ॥ विशिष्टद्वयैक्य इति ॥ विशिष्टस्य विशेषणविशेष्यतत्सम्बन्धात्मकत्वपक्षे विशेषणभेदेन पदार्थान्तरत्वपक्षे च विशेष्यभेदेनेव विशेषणभेदेनापि तद्भेदस्यावश्यकत्वादिति भावः । व्यभिचारेण यत्र विशिष्टद्वयैक्यं तत्र विशेषणैक्यमिति तर्काङ्गभूतव्याप्त्यसिद्धेस्तर्काभासोऽयमित्याशयेन परिहरति ॥ धूमवदग्निमतोरिति ॥ विशेष्यस्यैक्येऽपि विशिष्टद्वयस्यैक्याभावेन आपादकस्यैव तत्रागमनान्न व्यभिचार इत्याशङ्कते ॥ तयोरिति ॥

माऽस्तु तर्हि व्यभिचारेण व्याप्त्यसिद्ध्या तर्कस्याऽभासत्वसिद्धिः । दृष्टान्ताभावेन व्याप्त्यसिद्ध्या तु भविष्यत्येव तत्सिद्धिरित्याशयेन परिहरति ॥ तर्हीति ॥ न चाग्निमतः अग्निमता साकमैक्यस्थले अग्निमद्रूपविशिष्टद्वयैक्यस्य विशेषणद्वयैक्यस्य च सत्त्वात्तत्रैवोक्तव्याप्तौ दृष्टान्तत्वसम्भवान्न दृष्टान्ताभावप्रयुक्तव्याप्त्यसिद्धिरपीति वाच्यम् । तावता दृष्टान्ताभावप्रयुक्तव्याप्त्यसिद्ध्यपासावपि धूमवदग्निमतोः सत्यप्यैक्ये धूमाग्न्योरैक्याभावात्तत्र व्यभिचारेण व्याप्त्यसिद्धेरावश्यकत्वात् । न च तत्र तयोरैक्यमेव नास्तीति न व्यभिचार इति वाच्यम् । विशिष्टमपदार्थान्तरमिति मते विशेष्यस्यैवोक्ताधिकरणत्वेऽपि धर्मयोरप्युद्देश्यतावच्छेदकत्वेन विशेषणत्वात् तस्यैव च विशिष्टद्वयाभेदशब्दार्थत्वात् । पदार्थान्तरमित्यावयोर्मते तु धूमाग्न्योर्भेदेऽपि धूमवानग्निमानित्यबाधितसामानाधिकरण्यधीबलेन विशिष्टयोरभेदस्यापि सत्त्वात् । अन्यथा इदं रूप्यमित्युक्ते पुरोवर्तिनि रूप्यभेदाप्रतीते रूप्यार्थिनः पुरोवर्तिनि प्रवृत्तिश्च न स्यात् । ततेदन्तोपलक्षितत्वरूपविशेषणभेदाद्विशिष्टभेदावश्यम्भावादित्याशयात् ।

यत्तु अतीतत्वमपीत्यस्य ध्वंसप्रतियोगित्वमित्यर्थवर्णनं तदसत् । अतीतत्वशरीरान्तर्गतध्वंसमात्रस्य स इत्येतदन्तर्भावाऽश्रयणमात्रेणोक्तदोषपरिहारसम्भवेन ध्वंसप्रतियोगित्वरूपातीतत्वस्य तदर्थान्तर्भावाऽश्रयणानर्थक्यात् ।

---

[1] इवाभिप्राय इति पाठेन भाव्यमिति भाति ।

(गु.टि) यच्च वर्तमानतापीत्यस्य स्वप्रागभावध्वंसरूपता चेत्यर्थवर्णनं तदप्यसत्। वर्तमानत्वशरीरान्तर्गतप्रागभावमात्रस्य अयमित्येतदर्थान्तर्भावाऽश्रयणेनोक्तदोषपरिहारस्योपदर्शितत्वेनोक्तरूपवर्तमानत्वस्य तदर्थान्तर्भावाऽश्रयणानर्थक्यात्। स्वकार्यप्रागभावसमयसम्बन्धित्वस्यापि वर्तमानत्वलक्षणेन तत्परित्यागेन स्वप्रागभावप्रध्वंसत्वरूपतद्विवक्षाया निर्निबन्धनत्वाच्च। न च स्वप्रागभावप्रध्वंसत्वस्योपपन्नत्वात्परिग्रह। अन्यस्य त्वनुपपन्नत्वात्त्याग इति वाच्यम्। **शेषानन्तपण्डितेन** स्वकार्यप्रागभावसमयसम्बन्धित्वस्योपपन्नताया प्राक्सम्बद्धस्वाभावविरहस्य चानुपपन्नतायाश्च व्युत्पादितत्वेन तस्यैव स्वीकर्तव्यत्वप्रसङ्गात्। नापि प्रकृतानुपयोगात्तत्परित्याग। तदुपयोगाच्चैतस्य स्वीकार इति युक्तम्। आशयखण्डनावसरे एतस्यापि प्रकृतानुपयोगस्य वक्ष्यमाणत्वेनास्वीकार्यत्वप्रसङ्गात्।

यच्च स्वप्रागभावप्रध्वंसत्वस्य वर्तमानत्वलक्षणताया **शिवादित्यमिश्र**सम्मतत्ववर्णनं तदप्यसत्। प्राक्सम्बद्धस्वाभावविरहत्वस्य तल्लक्षणताया एव मिश्रसम्मतत्वेन स्वप्रागभावप्रध्वंसत्वस्य नित्यवर्तमानतायामव्याप्तस्य वर्तमानत्वलक्षणतायास्तदसम्मतत्वात्। न चानित्यवर्तमानताया एवात्र लक्ष्यत्वान्नित्यवर्तमानतायामेतदसत्त्वं नैतदलक्षणत्वापादकमिति वाच्यम्। 'प्राक्सम्बद्ध स्वाभाव प्रागभाव तद्विरहस्तत्संसर्गाभाव। स च प्रागभावस्य प्रागभावाभावात्प्रध्वंसोऽत्यन्ताभावश्च। तदन्यतररूपत्वमित्यर्थ'। एवञ्च नित्यानित्योभयवर्तमानत्व सगृहीत भवति। अनित्याना प्रागभावध्वंसरूपत्वान्नित्याना तदत्यन्ताभावरूपत्वात्' इति तद्व्याख्यानरूपग्रन्थपर्यालोचनया नित्यानित्यसाधारण्येनवर्तमानत्वस्यैव लक्ष्यत्वसिद्ध्या अनित्यवर्तमानतामात्रस्य लक्ष्यत्ववर्णनस्य तद्विरुद्धत्वात्। उक्तलक्षणे वर्तमानतामात्रस्य लक्ष्यतायामपि स्वप्रागभावप्रध्वंसत्वरूपलक्षणे अनित्यवर्तमानताया एव लक्ष्यत्वमित्यभिप्राये च स्वप्रागभावप्रध्वंसत्वस्य तेन तत्त्वेनानुक्ततया तदुक्तमिति प्रतिज्ञाया 'तच्च प्राक्सम्बद्धस्वाभावविरहत्वम्' इति तद्वाक्यमुपन्यस्य 'प्राक्सम्बद्ध स्वाभाव प्रागभावस्तद्विरहस्तत्प्रध्वंसस्तत्स्वरूपत्वम्' इति तदर्थकथनस्य च गजस्नानवद्वैयर्थ्यापातात्।

अत एव 'एवञ्च यस्यैतद्देशकालसम्बन्धप्रागभावो ध्वस्त सोऽयमित्यनेनोच्यते इत्यपि ग्राह्यम्' इत्युक्तं निरस्तम्। वर्तमानत्वशरीरान्तर्गतप्रागभावमात्रस्य अयमित्येतदर्थान्तर्भावकथनमात्रेणोक्तदोषपरिहारस्योक्तरूपवर्तमानताया अनुपपन्नत्वप्रकृतानुपयुक्तत्वोपपादनेन [1]तदर्थान्तर्भावस्य च दर्शितत्वेन विशिष्टस्य तदर्थत्वाभावात्।

यच्च गूढाभिसन्धिराहेति 'न चैव सति' इत्यादिग्रन्थप्रवृत्त्युपवर्णनं तदसत्। भावानवबोधादित्युत्तरग्रन्थानुसारेण सर्वस्यापि न हीत्यादिपूर्वग्रन्थस्य गूढाभिसन्धिकत्वस्य सूचितत्वात्सर्वस्यापि गूढाभिसन्धिकत्वस्योपपादयितु शक्यत्वाच्च तत्परित्यागेन न चेत्यादिग्रन्थमात्रस्यैव गूढाभिप्रायकत्ववर्णनस्य निर्निबन्धनत्वात्। व्याख्यात्रा गूढमभिप्रायमुपदर्श्यैव न चेत्यादिग्रन्थस्य गूढाभिसन्धिताया वक्तव्यत्वेन तमनुपदर्श्य गूढाभिसन्धिकत्ववचनस्य शिष्यवञ्चनमात्रार्थकत्वेनायुक्तत्वाच्च।

---

[1] तदर्थानन्तर्भाव इति पाठेन भाव्यमिति भाति।

गु. टि ) देशादिसम्बन्धस्य तदानीं सत्त्वे स्फुटो विरोध इत्याशङ्कापरिहारकतया 'तथा' इत्यादिग्रन्थमवतार्य वा अतीतदेशादिसम्बन्धस्येदानीं सत्त्वे वर्तमानदेशादिसम्बन्धस्य तदानीं सत्त्वे स्फुटो विरोध इत्याशङ्कापरिहारकतया 'प्रध्वसो हि' इत्यादिसमग्र ग्रन्थमवतार्य वा उक्तरीत्या आशयवर्णनस्य सङ्गततया कर्तव्यत्वेन ग्रन्थावतारमकृत्वा उक्तरीत्या आशयवर्णनस्यासङ्गतत्वापातात् ।

अयुक्तश्चेदमाशयवर्णनम् । तथा हि, यत्तावदुक्त 'यथा शशविषाणमसदित्यत्रासच्छब्दस्योभयथा प्रतीत्यनुरोधेन निषेधप्रतियोगिप्राधान्यविवक्षाभेदेन निषेधप्रतियोगिरूपोभयार्थकत्व तथा अतीतदेशादिसम्बन्धवाचितच्छब्दस्य प्रतियोगिप्राधान्यविवक्षया ध्वस्तदेशादिसम्बन्धवाचित्व निषेधप्राधान्यविवक्षया देशादिसम्बन्धध्वसवाचित्व एव वर्तमानदेशादिसम्बन्धवाचिन अयमितीदशब्दस्य प्रतियोगिप्राधान्यविवक्षया ध्वस्तप्रागभावप्रतियोगि देशादिसम्बन्धार्थकत्वं निषेधप्राधान्यविवक्षया ध्वस्तदेशादिसम्बन्धप्रतियोगिकप्रागभावार्थकत्व' इत्याशयेन पीठरचन तदसारम् । [1]नञसमभिव्याहृतशब्दस्यापि प्रतियोगिनिषेधप्राधान्यविवक्षाभेदेन प्रतियोगिनिषेधरूपोभयार्थत्वस्यावश्याऽऽश्रयणीयत्वस्थित्या असदिति नञ्समभिव्याहृतासच्छब्दस्य प्रतियोगिनिषेधप्राधान्यविवक्षया प्रतियोगितदत्यन्ताभावरूपोभयार्थताया. सम्भवदुक्तिकत्वेऽपि स इति तच्छब्दस्य अयमितीदशब्दस्य च नञ्समभिव्याहृतत्वाभावेन तच्छब्दे प्रतियोगिप्राधान्यविवक्षया ध्वस्तदेशादिसम्बन्धार्थकताया निषेधप्राधान्यविवक्षया देशादिसम्बन्धध्वसार्थकताया इदशब्दे च प्रतियोगिप्राधान्यविवक्षया ध्वस्तप्रागभावप्रतियोगिदेशादिसम्बन्धवाचिताया निषेधप्राधान्यविवक्षया च ध्वस्तदेशादिसम्बन्धप्रतियोगिकप्रागभाववाचितायाश्चासम्भवदुक्तिकत्वात् । प्रतियोगिनिषेधप्राधान्यविवक्षाभेदेन तच्छब्दे ध्वस्तदेशादिसम्बन्धवाचिताया इव देशादिसम्बन्धध्वसवाचिताया इव इदंशब्देपि प्रतियोगिप्राधान्यविवक्षया ध्वस्तप्रागभावप्रतियोगिदेशादिसम्बन्धवाचिताया इव च निषेधप्राधान्यविवक्षया देशादिसम्बन्धप्रतियोगिकप्रागभावध्वसवाचिताया एव प्राप्त्या ध्वस्तदेशादिसम्बन्धप्रतियोगिकप्रागभाववाचित्वाभावेन तद्वाचित्वोक्तेरज्ञानमूलकत्वापाताच्च ।

यच्च एवञ्चेत्यादिना आद्यपक्षे अविरोधोपपादन तदप्यसत् । स इत्यस्य नञसमभिव्याहृततया तत्र निषेधप्राधान्यविवक्षाप्रयुक्तनिषेधार्थकत्वासम्भवस्योक्तत्वात् । तावतैवाऽऽद्यपक्षे अविरोधोपपादनसिद्ध्या तत्पक्षे अयमितीदंशब्दे प्रतियोगिप्राधान्यविवक्षावर्णनस्याऽनर्थक्याच्च । प्रतियोगिप्राधान्यविवक्षाया स्वरसत प्राप्ततयोपपादनानपेक्षत्वेनाऽऽद्यपक्षे तच्छब्दे स्वरसतोऽप्राप्त[2] निषेधान्यविवक्षाया एवोक्तयुक्त्योपपादनीयत्वेन तामनुपपाद्येदशब्दे स्वरसत प्राप्तप्रतियोगिप्राधान्यविवक्षोपपादनस्यासङ्गतत्वापाताच्च ।

यदपि द्वितीयपक्षपरिग्रहे स इति तच्छब्दस्य प्रतियोगिप्राधान्ये वक्तृविवक्षया अतीतदेशादिसम्बन्धवाचित्वेपि अयमितीदशब्दस्य निषेधप्राधान्यविवक्षया ध्वस्तदेशादिसम्बन्धप्रतियोगिकप्रागभाववाचित्वात्पूर्वानुभव-

---

[1] नञ्समभिव्याहृतशब्दस्य इति पाठेन भाव्यमिति भाति ।

[2] निषेधविवक्षाया इति पाठेन भाव्यमिति भाति ।

(गु टि) काले इदानीं ध्वस्तैतद्देशादिसम्बन्धप्रागभावसत्त्वान्न विरोध इत्यविरोधोपपादनं तदप्यसत्। नञसमभिव्याहृततया तच्छब्दे इदंशब्दे च प्रतियोगिनिषेधप्राधान्यविवक्षाऽसम्भवेन ध्वस्तप्रागभावप्रतियोगिदेशादिसम्बन्धवाचित्वोक्तेर्ध्वस्तदेशादिसम्बन्धप्रतियोगिकप्रागभाववाचित्वोक्तेश्चासामञ्जस्यात्। तद्विवक्षायामपि प्रतियोगिप्राधान्यविवक्षया तच्छब्दे [1]ध्वस्तप्रागभावप्रतियोगिदेशादिसम्बन्धवाचित्वप्राप्त्या स इत्यस्य तदवाचित्वेपि निषेधप्राधान्यविवक्षया देशादिसम्बन्धप्रतियोगिकप्रागभावध्वंसस्यैवेदंशब्दवाच्यत्वप्राप्त्या ध्वस्तसम्बन्धप्रागभाववाचित्वाभावेन पूर्वानुभवकाले इदानीं ध्वस्तैतद्देशकालसम्बन्धप्रागभावस्य सत्त्वमादायाविरोधोक्तेरज्ञानमूलत्वात्। आशयकथनावसरे तन्मात्रोक्तेरेव सङ्गतत्वेन ग्रन्थावतारस्यावक्तव्यतया [2]तदिदमयमिति प्रागभाव इति मध्ये ग्रन्थावतारस्यासङ्गतत्वापाताच्च।

यदपि 'अत्रापि स इति तच्छब्दार्थे श्रोतृबुभुत्सानुसारेण प्रतियोगिप्राधान्यविवक्षा आवश्यकी' इति तदावश्यकत्ववर्णनं तदप्यसत्। इदंशब्दे स्वरसतोऽप्राप्तनिषेधप्राधान्यविवक्षाया एवोक्तदोषपरिहारोपपादकतया अवश्यवक्तव्यत्वेन तच्छब्दे प्रतियोगिप्राधान्यविवक्षाया स्वरसतः प्राप्ततया अवक्तव्यत्वेन वक्तव्यानुक्त्यवक्तव्योक्तिप्रसङ्गात्।

यदपि श्रोतृबुभुत्सानुसारेणेति वक्ष्यतीत्युपष्टम्भकमुक्तं तदपि न। 'किमत्र तत्त्वम्। पक्षत्रयमपीति ब्रूमः' इत्यादिपूर्वोत्तरग्रन्थपर्यालोचनया पक्षत्रयस्य तात्त्विकतामात्रोपपादकत्वेनैकैकस्मिन्नपि पक्षे निषेधप्राधान्यविवक्षाऽऽवश्यकत्वानुपपादकत्वेन तस्य तत्रोपष्टम्भकत्वायोगात्।

यदपि तृतीयपक्षाङ्गीकारेपि तदिदंशब्दयोरन्यतरस्यैव निषेधप्राधान्ये वक्तृविवक्षया विशेषणयोरविरोधेन विशिष्टैक्यमुपपद्यत इति वर्णनं तदप्यसत्। विशेषणयोर्विरोधेनैक्यानुपपत्तेः प्रागनाशङ्कितत्वेनापरिहर्तव्यत्वात्। अनाशङ्कितत्वेपि सम्भावितत्वात्तस्याः परिहार्यत्वाभिप्राये आशङ्कासमाधानाभ्यां तृतीयपक्षोक्तदोषानुपपत्तिपरिहारकनन्वित्याद्युत्तरग्रन्थ एवैतदनुपपत्तिपरिहारस्य सङ्गतत्वेन पूर्वग्रन्थाशयवर्णनदशायां तत्परिहारवर्णनस्यासङ्गतत्वाच्च। तदिदंशब्दयोरन्यतरस्य नञसमभिव्याहृततया तत्रोक्तविवक्षाया असम्भवदुक्तिकत्वाच्च। विवक्षायामपि वा अन्यतरस्य निषेधप्राधान्यविवक्षावत् प्रतियोगिप्राधान्यविवक्षाया अप्यवश्यवक्तव्यत्वेन निषेधप्राधान्यमात्रोक्तेर्निर्निबन्धनत्वाच्च।

यदपि विवादास्पदं विशिष्टद्वयं नाभिन्नं भिन्नविशेषणकत्वादित्यनुमानमाशङ्क्य अप्रयोजकत्वेन निराकृतं तदप्यसत्। साक्षादनुमानस्यानाशङ्कितत्वेनाप्रयोजकत्वेनादूषणीयत्वात्। सूचितत्वेन दूषणाभिधानाभिप्राये च

---

[1] ध्वस्तदेशादिसम्बन्धवाचिताया निषेधप्राधान्यविवक्षया तद्देशादिसम्बन्धध्वंसस्यैव अयमितीदमंशेपि प्रतियोगिप्राधान्यविवक्षया ध्वस्तप्रागभावप्रतियोगिदेशादिसम्बन्धवाचिताया निषेधप्राधान्यविवक्षया देशादिसम्बन्धप्रतियोगिकप्रागभावध्वंसवाचिताया एव प्राप्त्या ध्वस्तसम्बन्धप्रागभाववाचित्वाभावेन इति पाठेन भाव्यमिति भाति।

[2] तदिदमाह ॥ तथा अयमिति प्रागभाव इति ॥ इति पाठेन भाव्यमिति भाति।

(गु.टि.)तत्पक्षोक्तदोषपरिहारकनन्वित्याद्युत्तरग्रन्थ एवैतद्दूषणस्य सङ्गतत्वेन आशयकथनावसरे तद्दूषणाभिधानस्यासङ्गतत्वात् ।

यदपि अस्याप्याशयतया वर्णनीयत्वे उपष्टम्भकतया 'न चैव सति पक्षत्रयेपि काचिदनुपपत्तिरस्ति' इति पूर्वग्रन्थोपदर्शन तदप्यसत् । तृतीयपक्षोक्तानुपपत्तेरुत्तरत्र परिहरिष्यमाणतया [1]पूर्वत्रापरिहृतत्वेपि तत्परिहारस्याल्पप्रयत्नसाध्यत्वेन वा पक्षद्वयोक्तानुपपत्तिपरिहारवद्बहुप्रयत्नसाध्यत्वाभावेन वा अस्मदुक्तरीत्या तत्पक्षे सम्भावितानुपपत्त्यन्तरपरिहाराभिप्रायेण वा पक्षत्रयेपि उत्तरत्र तत्पक्षे दोषपरिहार वक्तु न हीत्यादिनोपोद्घातमुक्त्वा पक्षत्रयेऽप्युक्तदोषाभावप्रतिज्ञारूपत्वेन वा सावकाशतया अप्रयोजकत्वस्याऽशयतया वर्णनीयत्वानुपपादकतया तत्रोपोद्बलकत्वायोगात् ।

यच्च भिन्नविशेषणकत्वानुमान अनुकूलतर्कसद्भावान्नाप्रयोजकमित्याहेति विशिष्टैक्य इति शङ्काग्रन्थप्रवृत्त्युपवर्णनं तदप्यसत् । तृतीयपक्षोक्तानुपपत्तिं परिहर्तुं तामाशङ्कत इत्येव तदवतारस्य स्फुटप्रतिभासस्य परित्यागेन त्वया पूर्वग्रन्थाऽशयतया वर्णितस्येह **टीकायां** पूर्वोत्तरग्रन्थे तदनुवादरूपन्यायामृतग्रन्थे च सर्वथैवास्पष्टस्य भिन्नविशेषणकत्वानुमानाप्रयोजकत्वस्योपमर्दकतयैतद्ग्रन्थप्रवृत्त्युपवर्णनस्यासङ्गतत्वात् । कथञ्चित्सङ्गतत्वेपि भिन्नविशेषणकत्वाद्विशिष्टद्वयं नाभिन्नम् । न चाप्रयोजकत्वम् । अनुकूलतर्कसनाथत्वेन तदयोगादिति पूर्वपक्षाशयवर्णनेनापि प्रकृतग्रन्थस्य भिन्नविशेषणकत्वानुमानाप्रयोजकत्वोपमर्दकत्वस्य लाभान्मदुक्तरीत्यैवैतद्ग्रन्थस्योत्थापनीयत्वेन त्वदुक्तरीत्या तदवतारायोगाच्च । न चैव पक्षत्रयेपीत्यादेरुक्तरीत्या सावकाशत्वेन भिन्नविशेषणकत्वानुमानाप्रयोजकत्वस्य सिद्धान्ताशयागमकत्वेन तस्य सिद्धान्ताशयत्वासिद्ध्या तदुपमर्दकत्वेनैतद्ग्रन्थप्रवृत्त्युपवर्णनस्य निर्निबन्धनत्वाच्च ।

यच्च 'अग्निमतोऽग्निमतैक्ये अग्नेरग्निनैक्यदर्शनान्न दृष्टान्ताभाव' इत्याशङ्क्य 'स्यादेव दृष्टान्तोपपादन यत्र विशिष्टैक्यमात्रमापादकं विशेषणैक्यमात्रमापाद्यमिति स्यात् । न चैवम् । तथात्वे तर्कस्यानिष्टापादनरूपत्वाभावप्रसङ्गात् । प्रकृतेऽपि तत्तादिविशिष्टेन तत्तादिविशिष्टस्यैक्ये तत्तादिरूपविशेषणैक्यस्यापि विद्यमानत्वात् । तस्मात् विशिष्टद्वयैक्ये विशेषणद्वयैक्य स्यादित्यापादनीयम् । अत्र च धूमवदग्निमतोरैक्याभावेऽङ्गीकृते दृष्टान्ताभावेन व्याप्तिग्रहासम्भव' इत्यभिप्रायवर्णन 'तर्हि दृष्टान्ताभावेन' इत्यादिग्रन्थस्य तदप्यसत् । 'धूमवदग्निमतोरैक्यापादकविशिष्टमपदार्थान्तरम्' इति **न्यायामृत**स्योत्तरग्रन्थानुसारेण 'अग्निमतोऽग्निमतैक्ये अग्नेरग्निनैक्यदर्शनात्' इति तच्छङ्काग्रन्थस्थेनेह **टीकायां** व्यभिचारेण व्याप्त्यसिद्ध्या आपादनानुपपत्तिवत् दृष्टान्ताभावेन व्याप्त्यसिद्ध्या आपादनानुपपत्तेरुक्तत्वेपि न तत्र तात्पर्यम् । वह्निमतो वह्निमतैक्ये वह्नेर्वह्निनैक्यदर्शनेन दृष्टान्ताभावप्रयुक्तव्याप्त्यसिद्ध्यनुपपत्त्या तत्प्रयुक्ताऽपादनानुपपत्तेर्निर्दलत्वात् । किं तु व्यभिचारेण व्याप्त्यसिद्ध्या तदापादनानुपपत्तावेव धूमवदग्निमद्रूपविशिष्टद्वयैक्यस्य धूमाग्निरूपविशेषणभेदस्य च विशिष्टमपदार्थान्तरमिति पदार्थान्तरमिति मतद्वयसाधारणत्वेन व्यभिचारस्य दृढतया तत्प्रयुक्तव्याप्त्यसिद्धेरवर्जनीयत्वेन तत्प्रयुक्तापादनानुपपत्ते सदलत्वादि-

---

[1] पूर्वत्र परिहृतत्वेपि इति पाठेन भाव्यमिति भाति ।

(गु टि )त्यभिप्रायसूचनेन दृष्टान्ताभावप्रयुक्तव्याप्त्यसिद्ध्या तदापादनानुपपत्तौ ग्रन्थकृदतात्पर्यस्य द्योतितत्वेन तदनुसारेण भवतापि 'मास्तु तर्हि दृष्टान्ताभावेन व्याप्त्यसिद्ध्या तदापादनानुपपत्ति । व्यभिचारेण व्याप्त्यसिद्ध्या तदापादनानुपपत्तिस्तु स्यादेव' इत्येव वह्निमतैक्येपीत्यादिन्यायामृतग्रन्थमूलकत्वदुक्ताक्षेपस्य परिहर्तव्यत्वेन तथा अपरिहृत्य प्रकारान्तरेण तत्परिहारस्य तत्तात्पर्यापरिज्ञानमूलकत्वात् । विशिष्टद्वयैक्य वेति [1] विकल्पग्रन्थानुसारेण 'न तृतीय विशेषणभूतदेशकालैक्येन विना विशिष्टद्वयैक्यानुपपत्ते । विशेषणैक्यस्य च प्रमाणबाधितत्वात्' इति दूषणग्रन्थानुरोधेन च विशिष्टद्वयैक्यस्याऽऽपादकताया विशेषणद्वयैक्यस्याऽऽपाद्यतायाश्च सिद्धत्वेन विशिष्टैक्यादेरापादकत्वादौ बाधकोपदर्शनाय विशिष्टद्वयैक्यादेरापादकत्वादिना त्वदीयव्युत्पादनस्यानर्थकत्वाच्च धूमवदग्निमतोरैक्याभावेऽङ्गीकृते तस्य दृष्टान्तत्वासम्भवेपि अग्निमतोऽग्निमतैक्यस्याग्नेरग्निनैक्यस्य च दृष्टत्वेन तस्यैव यत्र विशिष्टद्वयैक्य तत्र विशेषणद्वयैक्यमिति व्याप्तौ दृष्टान्तत्वेन तदभावप्रयुक्तव्याप्त्यसिद्ध्यनुपपत्त्या तत्प्रयुक्तापादनानुपपत्तेरसामञ्जस्यात् । धूमवदग्निमद्रूपविशिष्टद्वयस्यैक्यानङ्गीकारे आपादकाभावेनैव तदङ्गीकारपक्षेपि आपाद्याभावेन दृष्टान्तत्वानुपपत्त्या ऐक्याङ्गीकारानङ्गीकारयोर्दृष्टान्ताभावतद्भावानुपपादकत्वेनैक्याभावेऽङ्गीकृते दृष्टान्ताभावेन व्याप्त्यसिद्धिप्रसङ्गोपपादनस्य प्रशिथिलमूलत्वाच्च ।

ननु त्रयाणामप्येतेषा पक्षाणामाचार्यसिद्धान्तत्वासम्भवात्कश्चिदेव तत्सिद्धान्त इति वाच्यम् । तत्पक्षमेव परिगृह्य तत्रोक्तदोषपरिहारेण तदुपपादनमात्रेणैव चरितार्थत्वात्पक्षत्रयदोषपरिहारेण तदुपपादनमनर्थकमित्यभिप्रेत्य त्रिषु पक्षेषु क. पक्ष आचार्यसिद्धान्त इति पृच्छति ॥ तथापीति ॥ त्रयाणामप्याचार्यसिद्धान्तत्वासम्भव. किं तेषा विरुद्धत्वात् किं वा तदङ्गीकृतत्वज्ञापकाभावादिति विकल्पद्वयं मनसि निधाय 'नाद्य । त्रयाणामेतेषा पक्षाणामव्यवस्थिताना विरुद्धत्वेपि श्रोतुस्तद्देशकालविशिष्टे एतद्देशकालवैशिष्ट्यबुभुत्साया स अयमिति तद्देशकालविशिष्टे एतद्देशकालवैशिष्ट्यं विधेयमित्याद्य, एतद्देशकालविशिष्टे तद्देशकालवैशिष्ट्यबुभुत्साया अयं स: इत्युद्देश्यविधेयभावव्यत्यासेन एतद्देशकालविशिष्टे तद्देशकालवैशिष्ट्य विधेयमिति द्वितीय, तस्य विशिष्टद्वयैक्यबुभुत्साया तद्बोध्यमिति तृतीय इति श्रोतृबुभुत्सानुसारेण व्यवस्थितानामेतेषा त्रयाणामुक्तरीत्या अविरुद्धत्वेन विरुद्धत्वप्रयुक्तसिद्धान्तत्वासम्भवस्य वक्तुमशक्यत्वात्' इत्याह ॥ श्रोतृबुभुत्सानुसारेणेति ॥ पक्षत्रयस्य तदङ्गीकृतत्वज्ञापकाभावान्नाचार्यसिद्धान्तत्वमिति द्वितीयपक्षमङ्गीकृतत्वज्ञापकोक्त्या दूषयितुमुत्थापयति ॥ कुत एतदवगम्यत इति चेदिति ॥ परकीयैतद्ग्रन्थव्याख्यानखण्डनं प्राग्वत् ॥ तर्हीति ॥ देशकालसम्बन्धित्वस्येव विशिष्टद्वयैक्यस्यापि वक्तव्यत्वेन तन्मात्रोक्तेरश्लिष्टत्वादिति भाव । देशकालसम्बन्धित्वस्येत्यस्य विशिष्टद्वयैक्योपलक्षणत्वेन देशकालसम्बन्धित्वमात्रपरत्वाभावान्नानुपपत्तिरित्याशयेन परिहरति ॥ उपलक्षणमिति ॥ एतदनुपपत्तिपरिहारेणेति ॥ अत एव एतद्ग्रन्थव्याख्यानावसर एव 'ननु कथमत्र' इत्यादिना एतदनुपपत्तिमुद्भाव्य तत्परिहारो दर्शित इति द्रष्टव्यम् ।

---

[1] तृतीयविकल्पग्रन्थानुसारेण इति पाठेन भाव्यमिति भाति ।

(टी ) ननु मा भूद्वाच्यार्थानुपपत्तिर्लक्षणाऽऽक्षेपिका । वक्तुर्विशिष्टार्थविवक्षाऽभावस्तु गरलम भ्यवहरेत्यादाविव भविष्यति । स च स्वरूपमात्रप्रश्नोत्तरत्वात् सिद्ध्यति । अस्मिन् ज्योतिर्मण्डले कश्चन्द्र इति कोऽयमिति च चन्द्रदेवदत्तस्वरूपमात्रं ह्यनेन पृष्टम् । वक्ता च विशिष्टार्थं वदन् आम्रान्पृष्टः कोविदारानाचक्षाण इवानवधेयवचनः प्रसज्ज्येतेति चेत् । स्यादेवम् । यदि स्वरूपमात्रे प्रश्नः स्यात् । न चैवम् । स्वरूपमात्रस्य सिद्धत्वात् । न हि कश्चित्सिद्धं पृच्छतीत्याह

## देवदत्तादिस्वरूपमात्रस्य सिद्धत्वान्न स्वरूपमात्रे प्रश्नः

ननु प्राक्प्रकृष्टप्रकाशश्चन्द्र इत्येतदुदाहरणं प्रथम निराकृत्य पश्चात्सोऽय देवदत्त इत्येतन्निराकृतम् । अतश्चन्द्रादिमात्रस्येति वक्तव्यम् । किमर्थं क्रमभङ्गः । उच्यते । परेण स्वग्रन्थे प्रकृष्टादिवाक्यविषय एव प्रश्नानुपपत्तिर्व्युत्पादिता । सोऽयमित्यत्र तु वाच्यार्थानुपपत्तिरेव । अतश्चन्द्रादिस्वरूपस्येत्युच्यमाने प्रकृष्टादिवाक्यविषयानुपपत्तिपरिहार एवायमिति विज्ञायेत । तदुभयविषयतां तु ज्ञापयितु क्रमभङ्गः ।

एवमपि सोऽयमित्येतद्विषयतैव ज्ञास्यत इति चेन्न । प्रकृष्टादिवाक्यविषयत्वस्य परसिद्धत्वेन सुज्ञानत्वात् । परानुक्त कस्माच्छङ्कनीयमिति चेन्न । न्यायप्राप्तस्यापि परिहार्यत्वात् ।

(वि टि ) ॥ वक्तुरिति ॥ वक्तुस्तात्पर्यविषयार्थानुपपत्तिस्त्वित्यर्थ । प्रकृष्टादिवाक्ये सोऽयमित्यादिवाक्ये च विशिष्टार्थविवक्षैव नास्तीति पराभिमानज्ञापनायैवमुक्ति । अन्यथा गरलमभ्यवहरेदित्यादाविवेति विशिष्टार्थपरत्वाभावोपपादनाभावप्रसङ्गात् । यद्वा वक्तुर्विशिष्टार्थविवक्षाभावप्रमाणवाक्यत्वे लक्षणाऽऽक्षेपिके इत्यर्थ. । अज्ञातस्य तदाक्षेपकत्वानुपपत्तेर्ज्ञात एव स तदाक्षेपक इति वाच्यम् । तज्ज्ञानञ्च न प्रत्यक्षेण । अयोग्यत्वादित्याशङ्क्य तज्ज्ञानोपायं दर्शयति ॥ स चेति ॥ तत्सिद्धिप्रकारमेवोपपादयति ॥ अस्मिन्निति ॥ अनेनेति ॥ चन्द्रदेवदत्तादिस्वरूपमात्रे जिज्ञासावतेत्यर्थ । स्वरूपमात्रप्रश्नोत्तरत्वेन लिङ्गेनानुमितो विशिष्टार्थविवक्षाऽभाव स्वयमनुपपन्नस्तत्स्वरूपमात्रलक्षणाऽऽक्षेपक इत्ययुक्तम् । प्रकृष्टादिवाक्यस्य स्वरूपमात्रप्रश्नोत्तरत्वासिद्धे । ज्योतिर्मण्डलं साक्षात्कुर्वतैव 'अस्मिन् ज्योतिर्मण्डले कश्चन्द्र ' इत्यादिप्रश्नकरणात् । न हि तत्साक्षात्कारे चन्द्रादिस्वरूप विषय । न हि निश्चितार्थस्वरूप कोऽपि पृच्छतीत्याह ॥ स्यादेवमिति ॥ चन्द्रादिस्वरूपमात्रस्येतीति ॥ 'देवदत्तस्वरूपमात्रस्य सिद्धत्वात्' इति वाक्ये देवदत्तस्वरूपमात्रस्येत्यस्य स्थाने चन्द्राऽदिस्वरूपमात्रस्येति वक्तव्यमित्यर्थ. ॥ प्रश्नानुपपत्तिरिति ॥ उत्तरस्य विशिष्टार्थविषयत्वे स्वरूपमात्रविषयकप्रश्नो नोपपद्यत इति तदनुपपत्तिरित्यर्थ ॥ तदुभयविषयतामिति ॥ प्रश्नानुपपत्तिपरिहारयोरुदाहरणद्वयविषयतामित्यर्थ ।

(रा टि ) तात्पर्यानुपपत्तिरूपलक्षणाबीजं शङ्कते ॥ ननु मा भूदित्यादिना ॥ गरलमिति ॥ शत्रुगृहे बुभुक्षुं प्रति कश्चिदाप्तो वक्ति 'गरलं विषमभ्यवहर भक्षय' इति तस्य 'यद्द्विषदन्नं तन्न भोक्तव्यम्' इत्यर्थः। लक्षणायां

(रा.टि.) विषभक्षणे वक्तुर्विवक्षाऽभावो हेतुस्तथेत्यर्थ ॥ **स चेति** ॥ विशिष्टे वक्तुर्विवक्षाभाव इत्यर्थ ॥ **कोऽयमितीति** ॥ अय क इति देवदत्तस्वरूपप्रश्ने सोऽय देवदत्त इत्युक्तेरित्यर्थ ॥ **विशिष्टेति** ॥ प्रकृष्टत्वादिविशिष्टार्थं तद्देशकालादिविशिष्टार्थं वा वदन्तित्यर्थ । आम्रकोविदारशब्दौ [1]देशविशेषवाचकौ ॥ **अनवधेयेति** ॥ अश्रद्धेयवचन इति बहुव्रीहि ॥ **प्रश्नानुपपत्तिर्व्युत्पादितेति** ॥ उत्तरस्य विशिष्टार्थकत्वे स्वरूपमात्रविषयकप्रश्नोऽनुपपन्न, स्यादिति व्युत्पादितेत्यर्थ ॥ **वाच्यार्थेति** ॥ विशिष्टाभेदरूपवाच्यार्थानुपपत्तिरेव व्युत्पादितेत्यनुषङ्ग ॥ **उभयविषयतामिति** ॥ प्रश्नानुपपत्तिपरिहारस्योदाहरणद्वयविषयतामित्यर्थ· ॥ **परानुक्तमिति** ॥ सोऽयमिति वाक्यस्य विशिष्टार्थकत्वे कोऽयमिति स्वरूपमात्रप्रश्नो नोपपद्यत इत्येतदित्यर्थ । येन देवदत्तादीत्यादिमूलवाक्यं सङ्गत स्यादिति वाक्यशेष. ॥ **न्यायेति** ॥ उत्तरस्य विशिष्टार्थकत्वे स्वरूपमात्रप्रश्नो न युक्त इति न्यायार्थस्य प्रकृष्टादिवाक्य इव सोऽयमिति वाक्येऽपि प्राप्तत्वादिति भाव ।

(वे टि) विशिष्टार्थेति प्रकृताभिप्रायेणोक्तम् । मुख्यार्थेत्यर्थ । अतो गरलमिति दृष्टान्त **सङ्गच्छते** ॥ **विवक्षाऽभाव इति** ॥ वक्तृतात्पर्यानुपपत्तिरित्यर्थ. ॥ **गरलमिति** ॥ अत्र यथा वाक्यार्थस्य गरलकर्मकाभ्यवहारक्रियाकसंसर्गस्याग्निना सिञ्चेत्यादिवद्बाधाभावेन मुख्यार्थानुपपत्त्यभावेऽप्याप्तस्य वक्तुस्तत्र तात्पर्यानुपपत्त्या प्रस्तुतद्विषदन्नरूपमनिष्टसाधनं गरलपदेन विधिप्रत्ययेन च निषेधं लक्षयित्वा धातुना अनिष्टसाधनभोजनप्रतीतावनिष्टसाधनरूपप्रस्तुतद्विषदन्नकर्मकभोजनं न कार्यमिति वक्तृतात्पर्यविषयीभूतमर्थं प्रत्येति श्रोता । तथा प्रकृतेऽपि विशिष्टार्थरूपमुख्यार्थानुपपत्त्यभावेऽपि तत्र वक्तृतात्पर्यानुपपत्त्या तत्तात्पर्यविषयीभूत स्वरूपमात्र लक्षणया प्रत्येतीत्यर्थ. ।

ननु विशिष्टरूपवाक्यार्थे वक्तृविवक्षाभाव एव कुत सिद्ध इत्यत आह ॥ **स चेति** ॥ स्वरूपमात्रप्रश्नोत्तरत्वलक्षणं हेतु प्रकृष्टादिवाक्ये सोऽयमित्यादिवाक्ये चोपपादयस्तस्य विशिष्टार्थविवक्षाभावसाधकत्वेऽप्रयोजकता च परिहरति ॥ **अस्मिन्नित्यादिना** ॥ **अनुपपत्तिपरिहार इति** ॥ मुख्यार्थे तात्पर्यानुपपत्तिपरिहार इत्यर्थः ॥ **तदुभयविषयतामिति** ॥ तात्पर्यानुपपत्तिपरिहारस्योदाहरणद्वयविषयतामित्यर्थ ।

(द्वै द्यु) ॥ **विशिष्टार्थेति** ॥ प्रकृतवाक्येन स्वरसत प्रतीयमानो योऽर्थस्तन्मात्रपरमतात्पर्याभाव इत्यर्थ· ॥ **गरलमभ्यवहरेत्यादाविति** ॥ तत्र वाक्येन स्वरसतो बोध्ये गरल[2]भोजनमिष्टेष्टसाधनत्वे बोधमात्रे तात्पर्याभाव । किन्तु तद्द्वारा द्विषदन्न न भोक्तव्यमिति बोधान्तरे । तदुपपत्तये लक्षणादिकं यथा प्रकृते तथैवेत्यर्थ । ननु पुत्रहितेच्छो पितु पुत्रमरणसाधनोपदेशायोगाद्यथाश्रुतार्थे तात्पर्याभावोऽवसीयते । प्रकृते तज्ज्ञापकं किमित्यत आह ॥ **स चेति** ॥ **कोऽयमितीति** ॥ देवदत्तस्वरूपमात्रप्रश्नपरवाक्यमिदम् । **आम्रान्** चूतवृक्षान् **कोविदारान्** निम्बवृक्षान् ।

---

[1] इति पाठेन भाव्यमिति भाति ।

[2] भोजनस्येष्टेष्टसाधनत्वे तद्बोध इति पाठेन भाव्यमिति भाति ।

(गु. टि ) ननु वाच्यार्थानुपपत्तिरेव लक्षणाऽऽक्षेपिकेति न नियमः । तथा सति गरलमभ्यवहरेत्यादौ अभ्यवहरेत्यादिपदवाच्यस्याभ्यवहारकर्मत्वादेर्गरलादौ विद्यमानत्वेन लक्षणाऽऽक्षेपकवाच्यार्थानुपपत्तेरभावेन लक्षणाऽभावप्रसङ्गात् । किं तु वक्तुर्विशिष्टार्थविवक्षाऽभावोपि । ततश्च गरलमभ्यवहरेत्यादौ वाच्यार्थानुपपत्त्यभावेपि वक्तुर्विशिष्टार्थविवक्षाऽभावस्य सत्त्वात्तेनैव लक्षणाऽऽक्षेपवत् प्रकृष्टादिवाक्ये सोयमित्यादिवाक्ये च वाच्यार्थानुपपत्तेरभावेपि वक्तुर्विशिष्टार्थविवक्षाऽभावस्य सत्त्वात्तेनैव लक्षणाऽऽक्षेपसिद्धेर्न लक्षणाया अभावो वक्तुं शक्य इत्यभिप्रायेण शङ्कते ॥ **मा भूदिति** ॥ गरलमभ्यवहरेत्यत्र वक्तुः परमप्रेमास्पदतया अनिष्टसाधनकर्तव्यत्वबोधकत्वानुपपत्त्या विशिष्टार्थविवक्षाऽभावसिद्धिवत् प्रकृष्टादिवाक्ये सोयमित्यादिवाक्ये च वक्तुर्विशिष्टार्थविवक्षाऽभावस्य साधकाभावेनासिद्धेर्न वक्तुर्विशिष्टार्थविवक्षाऽभावेन लक्षणासिद्धिरिति वैषम्यमाशङ्क्य प्रकृतेपि स्वरूपमात्रप्रश्नोत्तरत्वेनैव वक्तुर्विशिष्टार्थविवक्षाऽभावस्य सिद्धत्वान्न दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमित्याशयेन तत्सिद्धिप्रकारं दर्शयति ॥ **स चेति** ॥ भवेदेतद्यदि स्वरूपमात्रप्रश्नोत्तरत्वं सिद्धं स्यात् । तदेव तु न सिद्धमिति कथं तेन विशिष्टार्थविवक्षाऽभावसिद्धिरित्यतस्तत्सिद्धिमुपपादयति ॥ **अस्मिन्निति** ॥ प्रकृष्टादिवाक्यस्य सोयमित्यादिवाक्यस्य च स्वरूपमात्रप्रश्नोत्तरत्वेपि वक्तुर्विशिष्टार्थविवक्षाङ्गीकारे बाधकाभावादप्रयोजकमेतदित्याशङ्क्य विपक्षे बाधकोपदर्शनेन परिहरति ॥ **वक्ता चेति** ॥ **न हि कश्चिदिति** ॥ सिद्धार्थताया प्रश्नदूषणत्वस्याकरे स्थितत्वादिति भाव ॥ **किमर्थः क्रमभङ्ग इति** ॥ निष्प्रयोजनत्वान्न क्रमभङ्गो युक्त इत्यर्थः । निष्प्रयोजनत्वमसिद्धमित्याशयेन प्रयोजनमुपदर्शयति ॥ **उच्यत इति** ॥ **अनुपपत्तिरिति** ॥ वाच्यार्थे तात्पर्यानुपपत्तिरित्यर्थः ॥ **तदुभयेति** ॥ तात्पर्यानुपपत्तिपरिहारस्योदाहरणद्वयविषयतामित्यर्थः । क्रमभङ्गेपि उभयविषयत्व[1]ज्ञानसम्भवान्नैतत्क्रमभङ्गप्रयोजनमिति निष्प्रयोजनत्वतादवस्थ्यमिति शङ्कते ॥ **एवमपीति** ॥

**प्रकृष्टादिवाक्यस्य चन्द्रादिस्वरूपमात्रबोधकत्वे कश्चन्द्र इत्यादिप्रश्नानुपपत्तिसमर्थनम्**

(टी) ननु चन्द्रदेवदत्ताऽऽदिस्वरूपं सिद्धमपि सङ्कीर्णतयैव । न तु व्यावृत्तत्वाऽऽदिना । अतः स्वरूप एव प्रश्नो युज्यते । अत एव प्रकाश इत्येवोक्ते नक्षत्रादौ प्रसङ्गात् प्रकृष्ट इत्येव चाभिहिते सन्तमसेपि प्रसङ्गात् नक्षत्रादिव्यावृत्त्या चन्द्रस्वलक्षणप्रतिपादनाय प्रकृष्टप्रकाशश्चन्द्र इत्याह । एवं स इति वाऽयमिति वा वचने भेदभ्रमानिरासात्तन्निरासेन देवदत्तस्वरूपमात्रप्रतिपादनाय सोऽयं देवदत्त इत्याहेति गम्यत इति चेन्न । विकल्पानुपपत्तेः । तथा हि । किं व्यावृत्त्यादिमत्स्वरूपं प्रश्नप्रतिवचनविषय इत्यभिप्रायः । उत स्वतन्त्रमेव नक्षत्रादिव्यावृत्त्यादिकम् । आद्ये विशिष्टार्थताऽनिस्तारः । अर्थाक्षिप्तमेव व्यावृत्त्यादि । न शब्दार्थ इति चेन्न । विशेषणार्पणेन विनाऽर्थाक्षेपासिद्धेः । द्वितीयं निराकरोति

नक्षत्राऽऽदिव्यतिरेकमात्रस्यापि सिद्धत्वान्न व्यतिरेकमात्रे

---

[1] ज्ञानासम्भवात् इति पाठेन भाव्यमिति भाति ।

(टी.) अत्रापि प्रश्न इत्यनुवर्तते । व्यतिरेक इत्युपलक्षणम् । भेदाभावोऽपि ग्राह्यः । मात्रशब्दे व्यतिरेकादेः स्वातन्त्र्यं सूचयति । सिद्धत्वाद्घटादाविति शेषः । न हि प्रष्टा घटादौ नक्षत्रादिव्यतिरे भेदाभावं वा न जानातीति युज्यते । स्वरूपमात्रस्य सिद्धत्वात् इत्युक्तम् । तत्कुत इत्यत आह

अन्यथा प्रश्नस्यैवासम्भवात्

यदि प्रष्टा चन्द्रादिस्वरूपमात्र न जानीयात्तदा चन्द्र इति अयमिति चानूद्य क इति व पृच्छेत् । न ह्यविदितं वस्त्वनुवदितुं शक्यते । तेन ज्ञायते चन्द्रादिस्वरूप तस्य सिद्धमिति ।

(वि टि) चन्द्रादिस्वरूपस्येतरव्यावृत्ततया भेदाभाववत्तया च सिद्ध्यभावात्स्वरूपमात्रविषयकप्रश्नो पत्तिरिति शङ्कते ॥ ननु चन्द्रेति ॥ सङ्कीर्णतयेति ॥ सिद्धमित्यनुषज्यते । प्रतिवचनानुगुण्यादपीतरव्यावृ भेदाभाववच्चन्द्रदेवदत्तादिस्वरूपमेव प्रश्नविषय इत्याशयेनाह ॥ अत एवेति ॥ व्यावृत्त्यादिमदित्यादिपदेन भेद भावपरिग्रह ॥ स्वतन्त्रमेवेति ॥ चन्द्रादिस्वरूपाविषयमेवेत्यर्थ. ॥ आद्य इति ॥ चन्द्रस्वरूपनक्षत्रा व्यावृत्त्यो भेदाभावदेवदत्तस्वरूपयोश्च संसर्गप्रत्यायनादिति भाव ॥ अर्थाक्षिप्तमेवेति ॥ तथा च शाब्दप्रती संसर्गागोचरत्वेन न शब्दस्याखण्डार्थत्वहानिरिति भावः ॥ विशेषणार्पणेनेति ॥ वस्तुतो व्यावर्तकधर्मवैशिष्ट्य बोधने तत्तेदन्तयो सामानाधिकरण्याबोधने चानुपपत्त्यभावेन व्यावृत्तेर्भेदाभावस्य चाक्षेप्यत्वानुपपत्तेरित्यर्थ तथा च चन्द्रादिस्वरूपे व्यावृत्तिबोधमिच्छता देवदत्तादिस्वरूपे भेदाभावबोधमिच्छता च प्रकृष्टादिलक्षणवाक्ये तत्र व्यावर्तकधर्मवैशिष्ट्यप्रत्यायन तत्तेदन्तयो सामानाधिकरण्यप्रत्यायनञ्चावश्यमङ्गीकार्यमिति सखण्डार्थ वज्रलेपायितमिति भाव । मूले व्यतिरेकपद भेदार्थकम् । उक्तदूषणस्योदाहरणद्वयसाधारण्यायाह ॥ व्यतिरे इतीति ॥ स्वातन्त्र्यमिति ॥ चन्द्रादिस्वरूपान्वितनया अनुपस्थितत्वमित्यर्थ । अन्यथेत्युत्तरवाक्यस्याव्यवहि पूर्ववाक्येनान्वयस्यानुपपन्नत्वादवतारयति ॥ स्वरूपमात्रस्येति ॥ असम्भवमुपपादयति ॥ यदीति ॥

(रा टि.) व्यावृत्तत्वादिनेत्यादिपदेन भेदशून्यतयेति ग्राह्यम् ॥ अत एवेति ॥ व्यावृत्तत्वादि सिद्धत्वाभावादेवेत्यर्थ । अस्य नक्षत्रादिव्यावृत्त्येत्युत्तरवाक्येनान्वय ॥ सन्तमस इति ॥ अवसमन्धेभ्यस्तमस इ समासान्त ॥ स्वलक्षणेति ॥ स्वरूपमात्रेत्यर्थ । व्यावृत्त्यादिमत्स्वरूपमित्यत्र भेदाभाववत्स्वरूपमिति वा अभेदवत्स्वरू पमिति वादिपदेन ग्राह्यम् । एवमग्रेऽपि ॥ अर्थाक्षिप्तमेवेति ॥ तथा च व्यावृत्त्यादे शब्दार्थत्वाभावान्नाखण्डार्थत्व प्रच्युति· शब्दस्येति भाव ॥ विशेषणेति ॥ प्रकृष्टप्रकाशत्वादिविशेषणार्पणेन विना नक्षत्रादिव्यावृत्त्यादेराक्षेपा सिद्धेरित्यर्थ ॥ द्वितीयमिति ॥ विशेष्यासंस्पृष्टस्वतन्त्रव्यावृत्तिभेदाभावौ प्रश्नप्रतिवचनयोर्विषयाविति पक्षमित्यर्थ ॥ व्यतिरेक इतीति ॥ व्यावृत्तिरित्यर्थ । सोऽयमित्युदाहरणाभिप्रायेणाऽऽह ॥ भेदाभावोऽपि ग्राह्य इति स्वातन्त्र्यमिति ॥ चन्द्रादिधर्म्यसस्पृष्टत्वेन भानमित्यर्थ ॥ भेदाभावमिति ॥ यत्र क्व च विद्यमान वा घटाद स्वप्रतियोगिकभेदाभाव वेत्यर्थ । सिंहावलोकनन्यायेन प्रागुक्तस्य विवरणमुत्तरवाक्यमिति [illegible]
॥ स्वरूपमात्रस्येति ॥

(वे टि) ॥ व्यावृत्तत्वादिनेति ॥ आदिपदेन भेदाभाववत्तयेति ग्राह्यम् । तथा च चन्द्रस्वरूप नेतरव्यावृत्तत्वेन सिद्धम् । देवदत्तस्वरूपन्तु भेदाभाववत्तया न सिद्धमित्यर्थ ॥ स्वरूप एवेति ॥ असङ्कीर्णाभिन्नस्वरूप एवेत्यर्थ. ॥ अत एवेति ॥ असङ्कीर्णाभिन्नस्वरूपस्य पृष्टत्वादेवेत्यर्थ । व्यावृत्त्यादिमदित्यादिपदेन भेदाभावपरिग्रह । एवमुत्तरत्रापि ॥ स्वतन्त्रमेवेति ॥ चन्द्रादिस्वरूपाविशेषणमेवेत्यर्थ ॥ आद्य इति ॥ व्यावृत्तत्वादिविशिष्टस्वरूपबोधनादिति भाव ॥ अर्थाक्षिप्तमेवेति ॥ तथा च शाब्दप्रतीतेर्विशिष्टागोचरत्वेन न शब्दार्थस्याखण्डत्वक्षतिरिति भाव ॥ विशेषणार्पणेनेति ॥ वस्तुतो व्यावर्तकधर्मवैशिष्ट्याबोधने तत्तेदन्तयो सामानाधिकरण्याबोधने चानुपपत्त्यभावेन व्यावृत्तेर्भेदाभावस्य चाक्षेप्यत्वानुपपत्तेरित्यर्थ. । तथा च चन्द्रादिस्वरूपे व्यावृत्तिबोधमिच्छता भेदाभावबोधमिच्छता च प्रकृष्टादिलक्षणवाक्येन तत्र व्यावर्तकधर्मवैशिष्ट्यप्रतिपादन सोऽयमिति वाक्येन तत्तेदन्तयो. सामानाधिकरण्यप्रतिपादनञ्चावश्यमङ्गीकार्यमिति सखण्डार्थत्व वज्रलेपायितमिति भाव. ।

(द्वै. द्यु) ॥ चन्द्रस्वलक्षणेति ॥ चन्द्रस्वरूपभूत चन्द्रलक्षणमित्यर्थ । तन्निरासेन अत्रापि अध्ययनेन वसतीत्यत्रेव पूर्ववत्फलरूपनिमित्ते तृतीया ॥ देवदत्तस्वरूपमात्रप्रतिपादनायेति ॥ उपपादितमेतत्सर्वं पूर्वपक्षविवरणावसरे ॥ विकल्पानुपपत्तेरिति ॥ विकल्पे सत्यनुपपत्तेरित्यर्थ ॥ किमिति ॥ व्यावृत्त्यादीत्यनेन भेदाभावग्रह. । व्यावृत्तत्वादिनेति तृतीयाया वैशिष्ट्यार्थत्वम् । तथा च स्वाशे तद्वैशिष्ट्यमित्यभिप्रेत्याद्यकोटिप्रसक्तिस्तत्साहित्यमात्ररूपमित्याशयेन स्वतन्त्रमिति द्वितीयकोटिप्रसक्ति ॥ आद्य इति ॥ विशिष्टार्थविषयकप्रश्ने तस्यैव वक्तव्यत्वादित्यर्थः । तन्निर्वाहश्च प्रकृष्टेत्यादेस्तस्मिन् लक्षणया वा सर्वत्र समानविभक्तिकस्थले अतद्व्यावृत्तिविशिष्टस्यैव वाक्यार्थत्वमतावलम्बनेन वा कर्तव्य इत्यर्थ. । एव सोऽयमित्यादौ तद्देशकालीनभेदाभावविशिष्टदेवदत्तस्वरूपबोधोऽपि विशेषणविभक्तेरभेदार्थकत्वमतेन वा तद्भेदाभावस्यैवातदन्यत्वरूपत्वाङ्गीकारेण वोपपाद्यः ।

ननु सङ्कीर्णचन्द्रदेवदत्तस्वरूपमात्र सिद्धमित्यस्मदुक्तेरयमभिप्राय. । सङ्कीर्णचन्द्रदेवदत्तस्वरूपबोधादितरव्यावृत्तचन्द्रस्वरूपतद्देशकालीनभेदाभाववद्देवदत्तनिश्चयो न जायते । स चासङ्कीर्णव्यवहारार्थमपेक्षित । तथाऽसङ्कीर्णस्वरूपज्ञानमपेक्षितम् । तज्ज्ञानेनेतरव्यावृत्त्यादिविशिष्टचन्द्रादिविषयकानुमितिरुत्पद्यते । अत स्तदर्थमसङ्कीर्णचन्द्रस्वरूपमात्रविषये प्रश्नस्तन्मात्रप्रतिपादनञ्च सङ्गच्छते । तथा चासङ्कीर्णचन्द्रदेवदत्ता दिस्वरूपमात्रस्य शाब्दविषयत्वान्नाखण्डार्थत्वहानि । व्यावृत्तिज्ञानस्य तदधीनानुमितिरूपस्य सम्भवात् व्यावृत्तिविशिष्टं ज्ञायत इत्यस्यापि नानुपपत्तिरित्याशयेन शङ्कते ॥ अर्थेति ॥ विशेषणार्पणेन विनेति ॥ फलीभूतशाब्दबोधे प्रकृष्टप्रकाशतद्देशकालादिसम्बन्धरूपधर्माणा चन्द्रदेवदत्तादौ भान विनेत्यर्थ ॥ अर्थाक्षेपेति ॥ चन्द्रदेवदत्तादौ व्यावृत्तिभेदाभावयोरित्यादि । अर्थाक्षेपोऽनुमितिरर्थापत्तिर्वा । अयं भाव । शुद्धस्वरूपमात्रस्य सङ्कीर्णासङ्कीर्णप्रभेदायोगात् सङ्कीर्णस्वरूपज्ञानमित्यस्येतरव्यावर्तकधर्ममुक्तभेदाभावानुमापकधर्मं च विहाय चन्द्रदे-

(द्वै द्यु) वदत्तादिपदप्रतिपाद्यत्वादिरूपसामान्यधर्मवत्त्वमात्रेण ज्ञानमित्यर्थः। असङ्कीर्णस्वरूपज्ञानमित्यस्य तादृश-व्यावर्तकधर्मादिमत्त्वेन ज्ञानमित्येवार्थ। तथा च तादृशज्ञानस्य शब्दफलत्वेऽखण्डार्थताहानिर्दुर्वारैवेति ॥ स्वातन्त्र्यमिति ॥ मुख्यविशेष्यतयाऽऽधेयतया चन्द्राद्यनालिङ्गिततया च प्रश्नविषयत्वमित्यर्थ. ॥ उक्तमिति ॥ देवदत्तादिस्वरूपमात्रस्य सिद्धत्वादिति मूलेनेत्यर्थ ॥ न जानीयादिति ॥ केनापि रूपेण न जानीयादित्यर्थः। ॥ कथ पृच्छेदिति ॥ कश्चन्द्र इति कोऽयमिति च चन्द्र देवदत्तं च कथं पृच्छेत्। प्रश्न प्रति तद्विषयक सशयस्य कारणत्वात् प्रति च धर्मिज्ञानस्य कारणत्वात्तदभावे सशयाभावे सशयद्वारा प्रश्नानुपपत्ति स्यादिति भाव ॥

(गु टि) व्यावृत्तत्वादिनेत्यादिपदेन भेदाभाववत्त्वपरिग्रह। ततश्चन्द्रस्वरूपमसङ्कीर्णत्वेन देवदत्तस्वरूपं भेदाभाववत्त्वेन न सिद्धमिति योजना ॥ स्वरूपमात्रेति ॥ असङ्कीर्णाभिन्नचन्द्रदेवदत्तस्वरूपमात्रेत्यर्थ. ॥ अत एवेति ॥ असङ्कीर्णचन्द्रस्वरूपस्य पृष्टत्वात्तत्प्रतिपादयितुं प्रसङ्गद्वयपरिहारकपदद्वयोपादानमर्थवत्। अन्यथा तन्न स्यादिति भाव। व्यावृत्त्यादीत्यादिपदेन भेदाभावपरिग्रह ॥ स्वतन्त्रमेवेति ॥ चन्द्राद्यविशेषणभूतमेवेत्यर्थः ॥ आद्य इति ॥ व्यावृत्त्यादिविशिष्टस्वरूपबोधनादिति भाव ॥ अर्थाक्षिप्तमेवेति ॥ अर्थाक्षिप्तस्य शब्दार्थत्वाभावेन शब्दार्थस्य नाखण्डत्वक्षतिरिति भाव ॥ विशेषणार्पणेनेति ॥ अन्यथा तीरस्यागङ्गात्वाबोधनेपि गङ्गाव्यावृत्तिसिद्धिप्रसङ्गादिति भाव। ततश्च विशेषणार्पणस्यावश्यम्भावाद्वाक्यद्वयस्य सखण्डार्थत्वमवर्जनीयमिति भावः ॥ तेनेति ॥ अनुवादादिनेत्यर्थ।

प्रकृष्टादिवाक्ये प्रश्नप्रतिवचनयोर्विशिष्टविषयकत्वसमर्थनेनाखण्डार्थत्वभङ्ग

(टी) यदि तर्हि प्रश्नपरिहारयोर्न स्वरूपमात्र विषयः किंविषयौ तावित्यत आह

**अतः कैर्विशेषणैर्विशिष्ट इति प्रश्ने प्रकृष्टप्रकाशतद्देशकालादिविशिष्ट एव वाक्यार्थः**

उपपद्यत इति वाक्यशेषः। तेन प्रश्न इति सप्तम्युपपत्तिः। प्रकृष्टप्रकाश इति भावप्रधानोनिर्देशः।

आदिपद पूर्वोक्तपक्षद्वयसग्रहार्थम्। तदयमर्थः। यत एव चन्द्रादिस्वरूपमात्रे प्रश्नो न युज्यते। अतः कश्चन्द्रः कोऽयमित्यनया वाचोभङ्ग्या कैर्विशेषणैर्विशिष्ट इति विशिष्टविषय एव प्रश्नोऽङ्गीकार्यः। प्रश्ने च विशिष्टविषये सति परिहारवाक्यस्यापि विशिष्ट एवार्थो युज्यते। तत्र प्रकृष्टप्रकाशश्चन्द्र इत्यादिवाक्यं प्रकृष्टप्रकाशत्वाऽऽदिविशिष्ट चन्द्रादिक प्रतिपादयति। नक्षत्राऽऽदिव्यावृत्तिस्त्वर्थलभ्या। सोऽयं देवदत्त इत्यादिवाक्य कदाचित्तद्देशकालविशिष्टस्यैतद्देशकालवैशिष्ट्य प्रतिपादयति। एतद्देशकालवैशिष्ट्यस्य सिद्धत्वेऽपि तद्देशकालविशिष्टस्येति विशेषणात्। कदाचिदेतद्देशकालविशिष्टस्य तद्देशकालवैशिष्ट्यम्। ऐक्य त्वर्थलभ्यम्। कदाचिद्विशिष्टद्वयैक्यश्चेति।

एवमेव 'ब्रह्मविदाप्नोति परम्' इत्युक्त्या सामान्यतोऽवगत ब्रह्म कैर्विशेषणैर्विशिष्टमिति विशेषणविवित्सया पृष्टे 'सत्यं ज्ञानमनन्तम्' इति सत्यत्वादिविशिष्टमेव बोध्यते। जीवात्मा च प्रत्यक्षेण सामान्यतोऽवगतो, विशेषापेक्षया पृष्टः, सिंहो देवदत्त इतिवत् 'तत्त्वमसि' इतिवाक्येन परमात्मसादृश्यविशिष्टः प्रतिपाद्यते। अभेदस्य प्रमाणबाधितत्वात्।

(वि टि ) प्रश्न इति सप्तम्यनुपपत्तिमाशङ्क्याह ॥ **उपपद्यत इतीति** ॥ ननु प्रकृष्ट प्रकाशो यस्येति बहुव्रीह्याश्रयणेन प्रकृष्टप्रकाशशब्देन चन्द्रस्य प्रत्यायनान्न तद्विशिष्टो वाक्यार्थ इत्यनुपपत्तेराह ॥ **भावप्रधान इति** ॥ **पूर्वोक्तेति** ॥ तद्देशकालविशिष्टे एतद्देशकालवैशिष्ट्य विशिष्टद्वयैक्यश्चेति पूर्वोक्तपक्षद्वयेत्यर्थ ।

ननु यदि प्रश्नोत्तरे विशिष्टविषयके तदा किंविशेषणविशिष्टश्चन्द्रादिरिति प्रश्न प्रकृष्टत्वादिविशेषणविशिष्टश्चन्द्रादिरित्युत्तरञ्च स्यात् । न तूक्तरीत्येत्यत आह ॥ **तदयमर्थ इति** ॥ **तत्रेति** ॥

ननु 'अस्मिन् ज्योतिर्मण्डले कश्चन्द्र ' इति प्रश्नो न प्रकृष्टत्वादिविशेषणवैशिष्ट्यविषयक । प्रकृष्टत्वादीनामपि योग्यत्वेन तद्वैशिष्ट्यस्य तत्र निश्चितत्वात् । अत एव न तद्वैशिष्ट्यबोधकं प्रतिवचनमपि । अत एव च न व्यावृत्तिरर्थसिद्धा । प्रत्यक्षेण व्यावर्तकधर्मग्रहे सति व्यावृत्तेरपि तेनैव निश्चयात् । नापि चन्द्रवाचकशब्दवाच्यत्व तयोर्विषय । चन्द्रशब्दवाच्य किञ्चिदस्तीति जानतोपि प्रश्नदर्शनादिति चेन्न । प्रश्नमूलभूतसंशयजनकदोषेण प्रतिबन्धान्न प्रकृष्टादिवैशिष्ट्यनिश्चय इति तद्वैशिष्ट्यमेव प्रश्नप्रतिवचनयोर्विषय । न हीन्द्रियसन्निकर्षमात्रेणार्थनिश्चय । भ्रमसंशयोच्छेदापत्तेरिति ।

॥ **सोयं देवदत्त इत्यादिवाक्यमिति** ॥ यद्यपि पूर्वानुभवजनिततत्तादिवैशिष्ट्यगोचरसंस्कारसहकृतेन्द्रियेण देवदत्ते त्द्देशकालवैशिष्ट्यस्य तद्विशिष्टाभेदस्य चैतद्देशतत्कालविशिष्टे निश्चयात् प्रश्नप्रतिवचने न सम्भवतस्तथापि संस्कारस्यानुद्बोधे प्रमोषे वा प्रत्यक्षेण निश्चयाभावेन प्रश्नप्रतिवचने भवत इति भाव ॥ **तदैक्य श्चार्थलभ्यमिति** ॥ नन्वेतद्देशकालवैशिष्ट्य न प्रतिपादनीयम् प्रत्यक्षसिद्धत्वादित्याशङ्क्य देवदत्तस्वरूपमात्रे सिद्धत्वेपि तद्देशकालविशिष्टे तस्मिंस्तस्यासिद्धेस्तत्प्रतिपादनोपपत्तरित्याह ॥ **एतद्देशकालवैशिष्ट्यस्येति** ॥ **विशेषणादिति** ॥ अत्र तद्विशिष्टस्य तस्यासिद्धत्वादिति शेष । एवं दृष्टान्तयोर्विशिष्टविषयत्वमुपपाद्य दार्ष्टान्तिकेपि तदुपपादयति ॥ **एवमेवेति** ॥ **पृष्ट इति** ॥ यद्यपि प्रश्नो न दृश्यते तथाप्युत्तरानुरोधेन कल्प्यप्रश्नमादाय पृष्ट इत्युक्तम् । नन्वभेद एव किं न बोध्यत इत्यत आह ॥ **अभेदस्येति** ॥ नाहमीश्वर नाह सर्वज्ञ नाहं चिन्मात्रमित्यादिप्रत्यक्षेण विरुद्धधर्माधिकरणत्वरूपलिङ्गेन 'कर्मक्षये याति स तत्त्वतोऽन्य ' इत्यादिश्रुत्या चजीवेश्वराभेदस्य बाध्यत्वादित्यर्थः ।

(रा टि ) **तेनेति** उपपद्यत इति शेषकथनेनेत्यर्थ । अन्यथा 'यस्य च भावेन भावलक्षणम्' इति सूत्रे वृत्त्यादौ 'यस्य च क्रियया क्रियान्तर लक्ष्यते तत सप्तमी स्यात् । गोषु दुह्यमानासु गत.' इत्याद्युक्तत्वेन प्रकृते लक्ष्यभूतक्रियाया अदर्शनात्सप्तम्यनुपपत्तिरिति भाव । प्रकृष्टप्रकाशपदस्य बहुव्रीहितया धर्मिवाचित्वे तद्वैशिष्ट्यायोगादाह ॥ **भावप्रधान इति** ॥ **पूर्वोक्तेति** ॥ तद्देशतत्कालविशिष्ट इत्युक्त्या वर्तमानदेशकालविशिष्टे तद्देशतत्कालवैशिष्ट्यं बोध्यते इति पक्षस्य प्राप्तत्वात्तद्देशकालविशिष्टे एतद्देशकालवैशिष्ट्यमिति पक्षस्य विशिष्टद्वयैक्यमिति पक्षस्य च सङ्ग्रहायाऽदिपदमित्यर्थ ।

अथ पदार्थं विवृण्वन् मूलवाक्य व्याचष्टे ॥ **तदयमर्थ इति** ॥ तस्याय तदयमिति ॥ **अत इति** ॥ स्वरूपमात्रे प्रश्नस्यायोगादित्यर्थः ॥ **वाचोभङ्ग्येति** ॥ प्रश्नवाक्यरीत्येत्यर्थः । भिन्नपदमेतत् । सोऽयमिति

(रा.टि ) वाक्यमपि विशिष्टविषयमिति। नन्वेतद्देशकालवैशिष्ट्यं न प्रतिपादनीयम् । प्रत्यक्षसिद्धत्वात् इत्याशङ्क्य तद्देशकालविशिष्टे न सिद्धमित्याह ॥ एतद्देशकालेति ॥ कदाचिदिति ॥ श्रोतृबुभुत्साऽनुरोधेनेति भाव ॥ **विशेषणविवित्सयेति** ॥ विविदिषयेत्यर्थ । आगमशासनस्यानित्यत्वादिडभावेन निर्देश । एव प्रकृष्टप्रकाशाऽदिवाक्यदृष्टान्तेनोक्तमखण्डार्थत्वं लक्षणवाक्यस्य निरस्येदानी सोऽयमित्यादिवाक्यदृष्टान्तेनोक्तमखण्डार्थत्वं तत्त्वमस्यादिवाक्यस्य निराह ॥ **जीवात्मा चेत्यादिना** ॥ **प्रत्यक्षेणेति** ॥ अहमिति मानसप्रत्यक्षेण वा साक्षिणा वा जडात्मत्वज्ञानाद्यात्मत्वाद्यौदासीन्येनावगत 'कोऽहम्' इति पृष्ट प्रश्नकर्ता श्वेतकेतु प्रतिपाद्यते । कथम् । तत्त्वमसि तद्वत् ब्रह्मवत् त्वमसि ज्ञानानन्दरूपोऽसि इत्येवमित्यर्थ. । तदाह सूत्रे 'तद्गुणसारत्वात्तु तद्व्यपदेश प्राज्ञवत्' इतीति भाव ॥ **प्रमाणेति** ॥ द्वा सुपर्णेत्यादिप्रमाणेति वा वक्ष्यमाणभेदप्रमाणेति वार्थ ।

(वे टि ) ॥ **तेनेति** ॥ उपपद्यत इति शेषानुक्तौ प्रश्नस्य वाक्यार्थाधारत्वविषयत्वयोरभावात्सप्तम्यनुपपन्ना स्यात् । तदुक्तौ तु प्रश्ने सतीत्यर्थलाभात्सप्तम्युपपत्तिरिति भाव । ननु प्रकृष्ट. प्रकाशो यस्येति बहुव्रीह्याश्रयणेन प्रकृष्टप्रकाशशब्देन चन्द्रस्य प्रत्यायनान्न तद्विशिष्टो वाक्यार्थ इत्यत आह ॥ **भावप्रधान इति** ॥ तथा च प्रकाशवैशिष्ट्य वाक्यार्थत्वेन प्राप्तमिति भाव ॥ **पूर्वोक्तेति** ॥ तद्देशकालविशिष्टे एतद्देशकालवैशिष्ट्यं वा विशिष्टद्वयैक्य वेति पूर्वोक्तपक्षद्वयेत्यर्थ ।

ननु यदि प्रश्नोत्तरे विशिष्टविषयके तदा किंविशेषणविशिष्टश्चन्द्रादिरिति प्रश्न प्रकृष्टत्वादिविशेषणविशिष्टश्चन्द्रादिरित्युत्तरञ्च स्यात् । न तूक्तरीत्येत्यत आह ॥ **तदयमिति** ॥ सतिसप्तमीत्वमुपपादयति ॥ **प्रश्न इति** ॥ प्रकृष्टप्रकाशत्वविशिष्ट एव वाक्यार्थ इतीममंश व्याख्याति ॥ **तत्रेति** ॥ प्रकृष्टादिवाक्यसोऽयमित्यादिवाक्ययोर्मध्य इत्यर्थ । ननु प्रकाशवैशिष्ट्यस्य वाक्यार्थत्वे नक्षत्रादिव्यावृत्तिबोध कथ स्यादित्यत आह ॥ **नक्षत्रेति** ॥ तद्देशकालादिविशिष्ट एव वाक्यार्थ इत्यंश व्याख्याति ॥ **सोऽयमित्यादिना** ॥ एतद्देशकालवैशिष्ट्यस्य प्रत्यक्षसिद्धत्वेनाबोध्यत्वादिति प्रागुक्तदोष परिहरति ॥ **एतद्देशकालवैशिष्ट्यस्येति** ॥ **विशेषणादिति** ॥ तद्विशिष्टे च तस्यासिद्धत्वादिति भाव । एवं दृष्टान्तयोर्विशिष्टविषयत्वमुपपाद्यादिशब्दमहिम्ना दार्ष्टान्तिकद्वयेऽपि तदुपपादयति ॥ **एवमेवेत्यादिना** ॥

(द्वै द्यु.) ॥ **वाक्यशेष इति** ॥ नन्वस्त्यादिक्रियापदानामुत्सर्गेन प्राप्तत्वात्तद्विहाय किमुपपद्यत इति क्रियापदाध्याहारेणेत्यत आह ॥ **तेनेति** ॥ उपोपपद्पद्लधातोरुत्तरवाक्यतात्पर्यप्रमाधीनबोधविषयत्वरूपव्यापारोऽर्थ । त प्रति अर्थरूपकर्तृद्वारा प्रश्नस्य वैषयिकाधिकरणत्वात् सप्तम्युपपत्ति । विषयिनया प्रश्नवृत्तित्ववत एवार्थस्य सदुत्तरवाक्यतात्पर्यप्रमाधीनबोधविषयत्वात् । अन्यथा प्रश्नोत्तरवैयधिकरण्यापत्ते । प्रश्नविषयता पर सामान्यरूपेणेत्यन्यदेतत् । गृहवृत्तित्वविशिष्टचैत्रस्य पाककर्तृत्वेन गेहे पचतीतिवत् । अस्तीतिक्रियायोगाङ्गीकारे तु अर्थनिष्ठकालसम्बन्धात्मकसत्तारूपक्रिया प्रति प्रश्नस्याधिकरणविधया प्रयोजकत्वाभावात्प्रश्नविषयत्व विनाऽप्यर्थसत्तोपपत्ते

(द्वै घु) ने कारकत्वगर्भितमधिकरणत्व सम्भवति। अत सप्तम्यनुपपत्ति· स्यादित्युपष्टम्भसङ्गति·। प्रश्ने विशिष्टविषये सतीत्युत्तरटीका तु उक्तस्य पर्यवसितार्थकथनपरेत्यविरोध। उक्तवाक्यानुसारात्प्रश्न इत्येतत्सति सप्तम्यन्तमिति उपपद्यत इति क्रियायोगाल्लभ्यत इति टिप्पण्यामुक्तम्। तत्पक्षे विशिष्टविषये सतीत्यस्याप्यध्याहार· कर्तव्य इति ज्ञेयम्।

॥ **भावप्रधान इति** ॥ प्रकृष्टप्रकाशपदयो कर्मधारयाश्रयणेनैवोपपत्तौ प्रकृष्टप्रकाशपदस्य बहुव्रीहित्वमाश्रित्य भावप्रधानत्वोक्तिर्यद्यपि न युक्ता तथापि प्रकृष्टप्रकाशश्चन्द्र इत्यादौ प्रकृष्टप्रकाशादिपदस्य बहुव्रीहिसमासरूपत्वस्यैव बुद्धौ परिवर्तितत्वात्तस्यैव भावप्रधानत्वस्य सर्वत्राप्येतादृशस्थलान्तरेष्वमियुक्तैरङ्गीकृतत्वादरणेनैव निर्वाहे किमपूर्वसमासान्तरोपस्थितिकल्पनयेत्याशयेनेत्थमभिहितम्।

बहुव्रीहिसमासे पूर्ववाक्यस्थे यो भावतया प्राप्त प्रकृष्टप्रकाशस्तत्प्रधानक एव। नान्यपदार्थभूताश्रय विशेषणत्वेन बोधकोऽय निर्देश इत्यर्थ। तथा च कर्मधारयाश्रणमेव कर्तव्यमिति भाव। एतावदुक्तिस्तु प्रकृष्टप्रकाशस्याप्रस्तुतत्वशङ्कानिरासायेत्यप्याहु।

॥ **तद्देशेत्यादि** ॥ पूर्वोक्तरीत्या ध्वंसप्रागभावावनुसन्धेयौ ॥ **अर्थलभ्यमिति** ॥ अनुषङ्गप्राप्तम्। न मुख्यतात्पर्यविषयीभूतमित्यर्थ। यथाश्रुतं त्वसङ्गतम्। ऐक्यस्य साक्षाच्छब्दवेद्यत्वस्यैव सत्त्वात्॥ **विशिष्टद्वयैक्यमिति** ॥ वस्तुतस्त्वित्यादिना पूर्वप्रदर्शितपक्षे विशिष्टपदमाश्रयमात्रपरम्। तद्देशकालसम्बन्धैतद्देशकालसम्बन्धाश्रयैक्यमित्यर्थ।

अथ 'कश्चन्द्र इति प्रश्न स्वरूपमात्रविषयक एवेति उत्तरवाक्यस्यापि तन्मात्रपरत्वमेव युक्तम्। न च स्वरूपमात्रस्य सिद्धत्वात्तत्र प्रश्नानुपपत्ति। असङ्कीर्णस्वरूपस्यासिद्धत्वात्तज्जिज्ञासया प्रश्नोपपत्ते। न च स्वरूपद्वैविध्यायोग। ज्ञातेऽपि चन्द्रस्वरूपे अय चन्द्र इति घटादिभ्यो निष्कृष्य व्यवहार प्रति विरोधिसशयविपर्ययहेतुभूताज्ञानस्यानुभवसिद्धत्वेन तादृशाज्ञानविषयत्वाभावोपहितचन्द्रस्वरूपस्यैवासङ्कीर्णचन्द्रस्वरूपपदार्थत्वात्। तथा च चन्द्रस्वरूपविषयकसंशयविपर्ययहेत्वज्ञानविरोधिचन्द्रस्वरूपज्ञानं भवत्विति जिज्ञासामूलकं प्रश्नवाक्यमिति पर्यवसितम्। प्रश्नवाक्यस्थकिंशब्दस्यापि तादृशाज्ञानविषयत्वप्रकारकेच्छाविषय इत्येवार्थ.। अवश्यमित्थमेव वक्तव्यम्। अन्यथा चन्द्रस्वरूपस्य सामान्यतो ज्ञातत्वेन पुनस्तज्ज्ञानसामान्ये इच्छानुदयात्। विषयसिद्धेरिच्छाविरोधित्वात्। न च सामान्यरूपेण ज्ञानस्य सिद्धत्वेऽपि विशेषरूपेण ज्ञानस्यासिद्धत्वात्तत्रेच्छासम्भव इति वाच्यम्। चन्द्र कश्चन वर्तते। स च सर्वस्मात् व्यावृत्तस्तत्प्रयोजकासाधारणधर्मवानित्येतत् 'सर्वं जानामि, तत्स्वरूप विविच्य न जानामि' इति सर्वानुभवबलात् चन्द्रासाधारणधर्मतन्निष्ठव्यावृत्त्यादीना सर्वेषा ज्ञानस्य सिद्धत्वावगमेन तत्रापीच्छायोगात्। उक्तानुभवबलादेवास्मदुक्ताज्ञानसिद्ध्याऽस्मदभिमतरीत्याश्रयणस्यैवोपपन्नत्वात्। न चासाधारणधर्मस्य सामान्यतो ज्ञातत्वेऽपि विशेषरूपेण तत्र जिज्ञासा युक्तेति युक्तम्। 'असाधारणधर्मोऽपि कश्चन

(द्वै. द्यु) धारणरूपावच्छिन्नस्येच्छाविषयत्वानुपपत्ते । न च तत्तत्कालावच्छिन्नस्वनिष्ठसंशयहेत्वज्ञाननिवर्तकज्ञानत्वमिच्छाविषयतावच्छेदकं भवत्विति वाच्यम् । तत्काले 'चन्द्रपदवाच्य: किं द्रव्य गुणो वा देवता वा जडा वा' इत्यादिसंशयानामपि सत्त्वेन तन्निवर्तकज्ञानस्यापीच्छाविषयत्वप्राप्त्या तन्मूलक कश्चन्द्र इति प्रश्न प्रति 'देवता चन्द्रो द्रव्य चन्द्र' इति वाक्यस्याप्युत्तररूपत्वापत्ते. । तत्कालीनचन्द्रस्वरूपविषयकसशयसामान्यनिवर्तक तु न लक्षणवाक्यजन्यज्ञानमपीति तदप्यनुत्तर स्यात् । न द्वितीय । चन्द्रस्वरूपमात्रविषयकाज्ञानस्यैवाप्रसिद्ध्या तन्निवर्तकज्ञानत्वेन भानायोगात् । न च 'चन्द्रस्वरूपमात्र न जानामि' इति सर्वलोकानुभवात्कथं तस्याप्रसिद्धिरिति वाच्यम् । 'सामान्यतश्चन्द्रस्वरूपादिकमस्तीत्यवगच्छामि । विशेषतस्तत्स्वरूप तदसाधारणधर्मांश्च न जानामि' इत्येव लोकानुभवात् । 'नभोमण्डलस्थज्योतिष्ट्वादिरूपसामान्यरूपविशेषरूपादिभिश्चाधिगच्छामि । धर्माद्यनालिङ्गितं शुद्धस्वरूप नाधिगच्छामि' इत्यनुभवाभावात् । तादृशज्ञानस्वरूपाङ्गीकाराऽग्रहेऽपि द्रव्य चन्द्र इति वाक्यस्यापि तदुत्तररूपत्वापत्तेरपरिहारात् । प्रकृष्टप्रकाशादिवाक्येनेव तद्वाक्येनापि तात्पर्यानुपपत्तिज्ञानसहकृतेन शक्त्यैकदेशेन जहदजहल्लक्षणया वा तत्सहकृतया चन्द्रस्वरूपमात्रबोधसम्भवात् । तात्पर्यानुपपत्तिसहकारवशाच्छब्देनाभिमतस्वरूपबोधे जननीये तत्पदार्थतावच्छेदकातिप्रसक्तेरविरोधित्वात् । अन्यथा चैत्रोच्चारितेन घटमानयेति वाक्येन घटत्वेन चैत्रीयघटव्यक्तेर्बोधाभावप्रसङ्गात् । चन्द्रवृत्त्यसाधारणधर्मभूतचन्द्रत्वचन्द्रपदवाच्यत्वाद्यवच्छिन्नबोधजनकचन्द्रादिपदसमभिव्याहारेणापि विशेषव्यक्तिपर्यवसानसम्भवाच्च । न च तद्वाक्यस्य तादृशबोधजननशक्तिर्न स्वीक्रियते । तदुत्तर 'चन्द्रस्वरूपाज्ञानं नष्टं, द्रव्यत्वमवगत्य चन्द्रस्वरूपमवसितवानस्मि' इत्यनुभवाभावेन तादृशफलासिद्धेरिति वाच्यम् । 'द्रव्यत्व तन्मात्रधर्म' इति तद्वाक्यादिनैव भ्राम्यतस्तादृशानुभवस्यापि सत्त्वात् । प्रकृष्टप्रकाशकत्वादिकमन्यत्रवृत्तीति भ्राम्यतस्तद्वाक्योत्तरमपि तादृशानुभवाभावेनोक्तवाक्ययोस्त्वदुक्तवैषम्यायोगात् ।

नन्वस्तु 'द्रव्य चन्द्र' इत्येतदपि तदुत्तर । तादृशानुभवस्य त्वयैवाङ्गीकृतत्वेनेष्टापत्तिसम्भवादिति वाच्यम् । तथात्वे 'कश्चन्द्र' इति पृच्छक प्रत्युक्तस्य 'द्रव्य चन्द्र' इति वाक्यस्याप्रमाणत्व 'प्रकृष्टप्रकाशश्चन्द्र' इति वाक्यस्य प्रमाणत्वमिति व्यवस्थायास्तत्तद्वक्त्रोराप्तत्वानाप्तत्वव्यवस्थायाश्चासिद्धिप्रसङ्गस्यैवापादनीयत्वात् । द्वारीभूतबोधे फलीभूतबोधे चाबाधितार्थकतायास्त्वन्मतरीत्या वाक्यद्वयेऽपि साम्यात् । न च लक्षणवाक्येन लक्ष्यतावच्छेदकधर्मसमनियतत्वेन तादृशधर्मावगाहिबोधो जायते । स एव च स्वरूपमात्रावगाहिज्ञानान्तरं प्रति द्वारीभूत । स च 'द्रव्य चन्द्र' इति वाक्याधीनो भ्रम: 'प्रकृष्टप्रकाशश्चन्द्र' इति वाक्याधीनस्तु प्रमात्मक इति तन्मूलकत्वमेवोक्तव्यवस्थानामिति वाच्यम् । वाक्यजन्यबोधे पदजन्यपदार्थोपस्थितितात्पर्यज्ञानादेरेव सर्वत्र कारणत्वेन क्लृप्ततया तैरेव बोधसम्भवे उक्तबोधस्य कारणत्वे मानाभावात् ।

लक्षणवाक्यस्थल एव तत्कल्पने लक्षणस्यैकविधत्वाभावात्तादृशतादृशनानाविधलक्षणवाक्याधीनबोधानामेकैकलक्ष्यस्वरूपावगाहिबोधे द्वारत्वेन कारणताकल्पनेन तदुत्तरक्षणे स्वरूपमात्रावगाह्यप्रामाणिकबोधान्तरकल्पने

(द्वै षु) च महागौरवम्। न च स्वरूपमात्रावगाहिबोध सर्वानुभवसिद्ध । तथात्वे घटादिसविकल्पक एवाबयोस्तत्र विवादाभावप्रसङ्गात्। स्वरूपमात्रविषयकाज्ञाननिवृत्त्यन्यथानुपत्त्या तत्कल्प्यत इति न युक्तम्। अवश्य द्वारत्वेनाङ्गीकरणीयबोध एव स्वरूपमात्रविषयकाज्ञान प्रत्यपि निवर्तकत्वस्यैव लाघवेन तदुत्तरं तादृशाज्ञाननिवृत्त्यनुभवादेव कल्पयितुमुचितत्वादननुभूतज्ञानान्तरस्य कल्पने कल्पनागौरवात् । अन्यथोद्बुद्धव्याप्तिसंस्कारसहितधूमवत्ताज्ञानमात्रेणानुमित्यङ्गीकारोऽपि भवतो न सिद्ध्येत्। न च स्वरूपांशेऽधिकावगाहित्वात्कथं तादृशज्ञानेन स्वरूपमात्रविषयकाज्ञान निवर्तते। समानविषयकत्वाभावादिति वाच्यम्। घटपटाविति समूहालम्बनेन घटाज्ञाननिवृत्तेर्दर्शनेन निवर्तकज्ञाने स्वनिवर्त्याज्ञानानधिकविषयकत्वस्य सामान्यत एवातन्त्रत्वाभ्युपगमेनानुभवानुसाराच्छक्तिविशेषेणैव निवर्तकत्वस्यावश्यकत्वेन सप्रकारकचन्द्रज्ञान एवोक्तलाघवानुसारेण शक्तिस्वीकारौचित्यात्। शक्तिविशेषादरणं तु त्वयाऽवश्य वक्तव्यमेव। उक्तमपि। अन्यथा स्वरूपमात्रावगाहिशाब्दबोधानुकूलपदार्थोपस्थित्यादेरपि स्वरूपमात्रविषयकत्वेन तेनाज्ञाननिवृत्त्यापत्ते ।

चन्द्रपदार्थं विविच्याजानतस्तत्सत्तामात्रं जानतोऽपि 'स चन्द्र एवैतत्कालवृत्ति.' इति वाक्य श्रुतवत सोऽय देवदत्त इति वाक्येनेव तेन चन्द्रस्वरूपमात्रावगाहिबोधस्योत्पन्नत्वात्तेन कश्चन्द्र इति प्रश्नहेतुभूताज्ञाननिवृत्त्यापत्तेश्च। लक्षणवाक्यजन्यस्वरूपमात्रबोधस्य च 'स चन्द्रोऽयम्' इत्यादिवाक्यनिवर्त्याज्ञाननिवर्तकत्वापत्तेश्च। उक्ताज्ञानयो स्वरूपमात्रविषयकत्वात्। न च अप्रकृष्टप्रकाशादिव्यावृत्त्युपलक्षितस्वरूपविषयकमज्ञानं लक्षणवाक्यनिवर्त्यं पूर्वकालवृत्तित्वोपलक्षितस्वरूपप्रतियोगिकभेदाभावोपलक्षितस्वरूपविषयकमज्ञानं च सोऽयमित्यादिवाक्यनिवर्त्यमित्यज्ञानयोर्वैलक्षण्यात्त्रैकवाक्यजन्यबोधसमानविषयकत्वमपराज्ञानस्येति नोक्तातिप्रसङ्ग इति वाच्यम्। तदाश्रयव्यक्तिमात्रविषयकत्वस्यैव तदुपलक्षितव्यक्तिविषयकत्वस्यैतन्मतसिद्धतया तत्रोक्तापत्तेर्युक्तत्वात्। **सिद्धान्तलेशकारपक्षे** तु दूषणमुत्तरत्र वक्ष्यामः। किञ्च लक्षणवाक्याना स्वरूपमात्रबोधस्य परमफलत्वाङ्गीकारे जात्यखण्डोपाधिलक्षणवाक्येन 'अनवच्छिन्नप्रकारतावन्तो जात्यखण्डोपाधय' इत्यनेन समस्तजात्यखण्डोपाधीनां घटत्वतद्व्यक्तित्वादीनां स्वरूपत उपस्थितौ सत्यां तथा तदधीनस्मरणेन च प्रमेयत्वसामान्यलक्षणाधीनसर्वबोधे तेषां स्वाश्रये स्वरूपत. प्रकारत्वप्राप्त्या विशेषरूपेणैव सर्वव्यक्तिज्ञानवत्त्वप्राप्त्या तादृशलक्षणज्ञानिन सर्वज्ञतापत्ते। कथञ्चित्तद्वारणं च तादृशबोधस्य लक्षणवाक्यजन्यत्वनिश्चयोत्तरमेवेत्यन्योन्याश्रयापत्ते ।

एवं कश्चन्द्र इति प्रश्नवाक्यप्रयोजकबुभुत्सायाश्चन्द्रस्वरूपेतराविषयकतन्मात्रविषयकबोधेनैव निवृत्तौ तादृशप्रश्नं श्रुत्वाऽङ्गुल्यैव यदा चन्द्र प्रदर्शयति तदापि बुभुत्सा निवर्तते इत्यनुभवसिद्धम्। तत्र प्रत्यक्षस्यैव चन्द्रस्वरूपबोधकत्वात्तेन च चन्द्रेतरस्वरूपादेर्विषयीकरणात्तादृशबुभुत्साया निवृत्तिर्न स्यात्। न च प्रत्यक्षेणापि स्वरूपमात्रबोधो जायत इति युक्तम्। चक्षुरादे स्वव्यवस्थापकगुणपुरस्कारेणैव भासकत्वस्य सर्वसिद्धत्वात्। न चाद्वैतसिद्ध्यादौ प्रत्यक्षेणापि तत्तेदन्त्वयोर्वैशिष्ट्यबाधग्रहसहितेन देवदत्तस्वरूपमात्रावगाहिबोधो

(द्वि, द्यु) जायत इत्युक्तिरपि युक्ता। प्रमाणाभावात्। स्वाभ्युपगतनिर्वाहार्थमेव सर्वकल्पने चातिप्रसङ्गात्। तादृश प्रतीत्युत्तर च 'सोऽय देवदत्त' इत्यभिलापस्य 'तत्तेदन्त्वाभ्या देवदत्तमभिजानामि' इत्यनुव्यवसायस्य च विरोधात्। अत्रापि 'प्रकृष्टप्रकाशवन्तं वर्तुलं चन्द्र पश्यामि' इत्यभिलपनानुव्यवसायविरोधात्। न च स्वरूपमात्रावगाहिज्ञान-पूर्वकाले तादृशधर्माणामुपस्थितत्वात्तादृशानुव्यवसायाभिलपनयोरुपपत्तिरिति वाच्यम्। तृतीयया प्रकारकत्वबोध-नात्तादृशप्रकारकत्वावच्छिन्नदेवदत्तविषयकत्ववत्त्वेन तादृशप्रकाशविशिष्टचन्द्रविषयकत्ववत्त्वेनैवानुव्यवसायेन विषयीकरणानुभवात्। तस्य पूर्वज्ञानविषयत्वमात्रेण तथाऽनुव्यवसायाङ्गीकारे पूर्वं घटत्वाद्युपस्थित्यनन्तरपटज्ञा-नोत्तर घट पटत्वेन जानामीत्यनुव्यवसायस्य घट पट इति व्यवहारस्य चापत्तेः। न च तत्रासंसर्गग्रहसत्त्वान्न तथा ज्ञानादिक प्रकृते तथाऽस्त्विति।

द्रव्यत्व घटश्चेति समूहालम्बनोत्तरमपि द्रव्यत्वेन घट जानामीत्यनुव्यवसायापत्ते। पूर्वज्ञानविषयत्व-मात्रेण तथाऽङ्गीकारवादिन एकज्ञानविषयत्वे सुतरा तदाकारौचित्यात्। गुरुमतरीत्यादरे तु सर्वत्र तथात्वौचि-त्येन भ्रमविलोपप्रसङ्गेनानिर्वचनीयस्यैवासिद्धिप्रसङ्गात्। 'अयं न स.' इति बाधग्रहसहितेनैव चक्षुषा देवदत्तस्वरू-पमात्रावगाहिबोधस्य जातत्वात्तत्रासंसर्गग्रहस्यावश्यकतया तत्र 'तत्तेदन्त्वाभ्या देवदत्तं जानामि' इत्यनुव्यवसायस्य 'सोऽयम्' इत्यभिलापस्य चानुपपत्तेर्जागरूकत्वाच्च। विशिष्टे विशिष्टभेदग्रहसत्त्वेऽप्युपलक्षितयोर्भेदग्रहाभावात्तदुपपत्ति रिति न वाच्यम्। तथात्वे तत्तेदन्त्वयोरेकस्मिन्नुपलक्षणविधयाऽवगाहिनो विशिष्टप्रत्यक्षस्योपपत्तौ किं सर्वानुभव-विरुद्धस्वरूपमात्रावगाहिज्ञानमङ्गीकृत्योक्तकुसृष्ट्यादरेण।

प्रकृष्टप्रकाशादेश्चन्द्रे बाधग्रहस्य कथमप्यसत्त्वेन तत्र प्रत्यक्षेण स्वरूपमात्रावगाहिबोधोत्पादनायोग। न च स्वरूपमात्रविषयकबोधेच्छाया' स्वस्य सत्त्वादेव प्रत्यक्षेण तादृशबोधोत्पत्तिरिति वाच्यम्। विशिष्ट-प्रत्यक्षजनकसामग्रीसत्त्वेऽपीच्छामात्रबलेनान्यादृशज्ञानोत्पत्तावनिष्टरूपस्पर्शगन्धादिविषयाणा तत्प्रत्यक्षजन्यदु खा-दीना च प्रत्यक्षाभावप्रसङ्गात्। सर्वेषामपि तदविषयकप्रत्यक्ष एवेच्छासत्त्वात्। प्रत्यक्षस्थले तथात्वाङ्गीकारेऽनु-ऽनुमितिस्थले तथात्व नास्तीत्यत्र विनिगमकाभावाद्वह्न्यविषयकपर्वतमात्रविषयकानुमितीच्छावलाद्बाधबलाद्वा वह्निव्याप्यधूमवत्तापरामर्शात्पर्वतस्वरूपमात्रावगाह्यनुमित्यापत्ति। न चाऽङ्गुल्या निर्देशस्थले अयं चन्द्र इत्याकारकं वक्त्रभिप्रेतं वाक्यमनुमिमीते श्रोता। तेन चन्द्रस्वरूपमात्रविषयकबोधवान् भवति। तेन च बुभुत्सा निवर्तत इति न प्रत्यक्षस्य तत्र बुभुत्सानिवर्तकत्वप्रसक्तिरिति वाच्यम्। प्रत्यक्षस्य तद्बोधजननद्वारा बुभुत्सा-निवर्तकत्वसम्भवे वाक्यकल्पने मानाभावाद्गौरवाच्च। सामान्यतो 'मदभिप्रेतबोधानुकूलवाक्याभिप्रायवान्' इति कथ-ञ्चिदनुमितिसम्भवेऽप्यानुपूर्वीविशेषावच्छिन्नवाक्याभिप्रायकत्व प्रत्यङ्गुलीनिर्देशादेर्व्यभिचारादप्रयोजकत्वाच्चानु-पूर्वीविशेषनिर्णयाभावेन तत्र शाब्दबोधोत्पत्तेरसम्भवदुक्तिकत्वाच्च। न च शाब्दबोधानुत्पत्तौ प्रत्यक्षमात्रेण कथ तदिच्छा निवर्तत इति वाच्यम्। तस्य स्वाज्ञाननिवर्तकबोधमात्र एवेच्छासम्भवेन शाब्दबोध एवेत्यत्र बीजा-भावात्।

(द्वै द्यु) एव स्वरूपमात्रबोधस्यैव कश्चन्द्र इति प्रश्नमूलबुभुत्सानिवर्तकत्वे येन पूर्वं 'चैत्रत्वव्याप्यलिङ्गमिदं, मैत्रत्वव्याप्यलिङ्गञ्चेदम्' इत्यन्यप्रसङ्गे कस्यचिन्मुखाच्छ्रुत, कालान्तरे च प्रयोजनवशात्तद्ग्रामं गत्वा कश्चैत्र इति कांश्चित्पृच्छत्यपि, तैस्तदुत्तरानुक्तौ स्वयमेव चैत्रं दृष्ट्वा पूर्वश्रुतलिङ्गस्मरणेन चैत्रस्वरूपं निश्चिनोति। अनन्तरं च 'मैत्रोक्तलिङ्गेन चैत्रस्वरूपमवगतवानस्मि' इति व्यवहरति च तत्रागतिरेव। त्वयाऽपि अनुमितेः स्वरूपमात्र विषयकत्वानङ्गीकारात्। तथा चोक्तस्थलेषु विशिष्टविषयकबोधेनैव क इत्यादिवाक्यप्रयोजकबुभुत्सानिवृत्त्यङ्गीकारावश्यकत्वेन तादृशवाक्यप्रयोजकबुभुत्साया विशिष्टविषयकबोधविषयकत्वावश्यकत्वे 'स्वरूपमवसितवानस्मि' इति वाक्यस्थस्वरूपपदस्य विशिष्टस्वरूपपरत्वञ्चावश्यकमिति सर्वत्र तथैव सम्भवे किमप्रामाणिकबोधान्तरकल्पनादिकुसृष्ट्या।

ननु न स्वरूपमात्रावगाहिबोधोऽप्रामाणिक। चन्द्रादावप्रकृष्टप्रकाशत्वादिबुद्धिं प्रति प्रकृष्टप्रकाशाश्रयत्वादिधर्मज्ञानस्य प्रतिबन्धकत्वे तत्राप्रामाण्यग्रहकाले तस्य प्रतिबन्धकत्वापत्तिवारणायाप्रामाण्यग्रहानास्कन्दितत्व निवेश्यम्। एवं तद्व्याप्यवत्ताज्ञानतदवच्छेदकधर्मदर्शनादीनामपि तन्निवेश्य प्रतिबन्धकत्वान्तराणि कल्पनीयानीति गौरवम्। प्रकृष्टप्रकाशाश्रयत्वादिज्ञानद्वारकस्वरूपमात्रज्ञानस्य प्रतिबन्धकत्वे तु एकैव प्रतिबन्धकता भवति। तेषु अप्रामाण्यग्रहकाले स्वरूपमात्रावगाहिबोधो न जायते। अप्रामाण्यज्ञानानास्कन्दितानामेव तेषां स्वरूपमात्र वगाहिबोधे द्वारत्वाङ्गीकारेण तादृशस्थले स्वरूपमात्रावगाहिबोधरूपप्रतिबन्धकस्यैवाभावेन प्रतिबध्यज्ञानोत्पत्तौ बाधकाभावात्। न च तेषामेव स्वरूपबोधं प्रति कारणतायामप्रामाण्यज्ञानानास्कन्दितत्वादिनिवेशांशे साम्य स्वरूपबोधस्याधिकस्य कल्पनाद्गौरवञ्चेति वाच्यम्। तेषां बोधानां स्वार्थविशिष्टवैशिष्ट्यावगाहिबुद्धित्वाव च्छिन्नं प्रति कारणत्वेऽवश्यं कल्पनीये तादृशज्ञानादिजन्यसुखादिसाधारण्यानुरोधेन तदव्यवहितोत्तरत्वस्यैव कार्यतावच्छेदकत्वाङ्गीकारात्स्वरूपमात्रबोधस्यापि तत्कार्यतावच्छेदकाक्रान्ततयैवोपपत्तावतिरिक्तकारणत्वाकल्पनादिति चेन्न।

प्रकृष्टप्रकाशाऽऽश्रयत्वादिधर्मप्रकारकज्ञानानां सुखदुःखादौ नियमेन परिनिष्ठितकारणत्वाङ्गीकारे तैः केषाञ्चित्सुखस्य केषाञ्चिद्दुःखस्य चोत्पत्त्यसम्भवापत्तेस्तेषामननुगतरूपेणैव कारणत्वस्यावश्यकतया विशिष्टवैशिष्ट्यबोधनिष्ठकार्यतायास्तत्साधारण्ये बीजाभावेन कारणाव्यवहितोत्तरत्वस्य गुरोरननुगतस्य च कार्यतावच्छेदककोटौ निवेशायोगेन तद्धर्मविशिष्टवैशिष्ट्यावगाहित्वस्यैव कार्यतावच्छेदकतया तस्य त्वदभिमतस्वरूपमात्रबोधेऽसम्भवेन गौरवस्य दुष्परिहरत्वात्।

किञ्च स्वरूपमात्रविषयकबोधत्वेन प्रकृष्टप्रकाशाभावादिज्ञानं प्रति प्रतिबन्धकत्वं वा 'चन्द्रः प्रकृष्टप्रकाश' इति [1]ज्ञानद्वारकत्वविशिष्टस्वरूपबोधत्वं वा। नाद्य। 'चन्द्रः कलङ्की' इत्यादिलक्षणवाक्याधीनस्वरूपबोधस्यापि

[1] ज्ञानद्वारकत्वविशिष्टस्वरूपबोधत्वेन वा इति पाठेन भाव्यमिति भाति।

(द्वै घु) प्रकृष्टप्रकाशाऽश्रयत्वाभावादिग्रह प्रति प्रतिबन्धकत्वापत्ते.। न द्वितीय । तदुद्वारकत्वस्य तादृशज्ञानाव्यव हितोत्तरत्वमात्रत्वे प्रकृष्टप्रकाशाऽश्रयत्वज्ञानकालीनेन तज्ज्ञानाप्रामाण्यावगाहिलक्षणान्तरज्ञानेन यत्र स्वरूपमात्रबोधो जातस्तस्योक्तप्रकृष्टप्रकाशाऽश्रयत्वाभावज्ञानप्रतिबन्धकत्वापत्ते । अप्रामाण्यज्ञानानास्कन्दिततादृशज्ञानाव्यवहितोत्तरस्वरूपबोधत्वेनैव प्रतिबन्धकत्वस्य प्रकाशाऽश्रयत्वव्याप्यवत्ताज्ञानोत्तरस्वरूपबोधे अभावेन तादृशज्ञानाव्यवहितोत्तरत्वविशिष्टस्वरूपबोधत्वेन पृथक्प्रतिबन्धकताया आवश्यकत्वे अप्रामाण्यज्ञानानास्कन्दिततादृशज्ञानत्वेनैव प्रतिबन्धकताया एव युक्तत्वेन तदव्यवहितोत्तरस्वरूपबोधत्वेन प्रतिबन्धकत्वस्यातिगुरुत्वेनासिद्धे ।

न च प्रकृष्टप्रकाशादिधर्मज्ञानजन्यस्वरूपज्ञानत्वादिनैव प्रतिबन्धकत्वम् । तच्चाप्रामाण्याज्ञानानास्कन्दितत्वेन निवेश्यते । तावताऽपि लाघवमक्षुण्णमेव । अनुगताननुगतानेकाप्रामाण्यज्ञानाभावकूटघटितधर्मापेक्षयोक्तरूपस्य लघुत्वे विवादाभावात् । तादृशप्रकाशाऽश्रयत्वादिज्ञाननिष्ठविशिष्टवैशिष्ट्यबोधादिसाधारणस्वरूपबोधनिष्ठ-[1]कार्यताकारणतावच्छेदककोटौ तादृशधर्मज्ञान एव तत्तदप्रामाण्यज्ञानाभावकूट निवेश्यते। अतो नोक्तस्थले दोष इति वाच्यम् । तादृशकार्यकारणभाव एव नास्तीत्युक्तत्वात् । तथात्वे स्वरूपबोधत्वावच्छिन्नस्याकस्मिकत्वापत्ते । तस्यासिद्धत्वेन किञ्चित्कार्यत्वेन पूर्वमसिद्धत्वात् । पदार्थोपस्थित्यादेरपि स्वरूपमात्रविषयकस्यासिद्ध्या तत्कार्यत्वे ता प्रति स्वरूपबोधत्वस्यावच्छेदकत्वायोगात् तस्या अपि स्वजन्यसुखदुःखादिसंस्कारादिसाधारण्यानुरोधेन स्वाव्यवहितोत्तरत्वस्यैव कार्यतावच्छेदकत्वौचित्याच्च वाक्यस्यापि स्वाव्यवहितोत्तरत्वावच्छिन्न प्रत्येव हेतुत्वात् । स्वासाधारणकारणं विना तादृशबोधाङ्गीकारे स्वरूपमात्रविषयकेच्छाकृत्यादिकमप्युक्तलाघवानुसारात् सिद्ध्येत् । प्रकृष्टप्रकाशादिज्ञानजन्यस्वरूपमात्रविषयकेच्छात्वेन तादृशकृतित्वेन प्रतिबन्धकत्वम् । तादृशेच्छादिक प्रत्युक्तज्ञानस्य विशिष्टवैशिष्ट्यधीसाधारणस्वाव्यवहितोत्तरत्वावच्छिन्नं प्रति जनकत्वमित्यस्यापि वक्तुं शक्यत्वात् । अनयैव दिशा निर्विषयकबोधोऽपि सिद्ध्येदविशेषात् ।

किञ्च यत्र प्रकृष्टप्रकाशाश्रयत्वप्रकारकप्रत्यक्षरूपमनुमितिरूपञ्च तदुत्तर स्वरूपबोधाभावेन तत्र प्रकृष्टप्रकाशत्वाभावादिज्ञानप्रतिबन्धानुरोधेन तादृशविशिष्टविषयकबोधत्वेनैव प्रतिबन्धकत्वावश्यकत्वे त्वदुक्तप्रतिबन्धकत्वासिद्ध्या स्वरूपमात्रविषयकबोधो न सिद्ध्यत्येवेति दिक् ।

स्वरूपमात्रबोधस्य शक्तिविशेषेण प्रतिबन्धकत्वमभ्युपेत्य स्वरूपमात्रविषयकपदार्थोपस्थितौ सा शक्तिर्न स्वीक्रियते । वाक्यजन्यबोध एव सा स्वीक्रियत इत्यङ्गीकारे तस्य वादिन कारणवैलक्षण्यस्यैव ज्ञानवैलक्षण्यनिर्वाहकत्वप्राप्त्या बाह्यार्थभङ्गनिरासाशैव दूरीकृता स्यादित्यादिकमपि ज्ञेयम् । लक्षणवाक्यस्य स्वरूपमात्रबोधकत्वाङ्गीकारे 'किमसत्' इति प्रश्नोत्तरभूतस्य सत्तादात्म्यशून्यमसत् इति वाक्यस्य फलीभूतबोधनिष्पादकतया संशयानिवर्तकत्वमेव स्यात् । असत्स्वरूपाप्रसिद्धे । तथा चानुभवविरोध । तादृशवाक्येन प्रश्नमूलभूतसंशयादिनिवृत्ते-

[1] कार्यतानिरूपितकारणता इति पाठेन भाव्यमिति भाति ।

(द्वैधु) रनुभवसिद्धत्वात् । फलीभूतबोधनिष्पादने चासत्स्वरूपाप्रसिद्ध्या तद्विषयकत्वायोगादितरपदार्थानां तत्र भानानङ्गीकाराच्च तत्र बलान्निर्विषयक एव स बोध स्यादित्यपि दोष केचिदुद्भावयन्ति ।

एव द्रव्यं चन्द्र इति लक्षणवाक्यस्य फलीभूतस्वरूपमात्रबोधस्य प्रमाणत्वेऽपि द्वारीभूतबोधाप्रामाण्यादेवाप्रमाणत्वे अर्थवादवाक्याना 'सोऽरोदीत्' 'तदश्रूणि व्यशीर्यन्त, तद्रजतमभवत्' इत्यादीनां रजतनिन्दाद्वारा सुवर्णदक्षिणाप्राशस्त्यपराणा प्रजापतिवपोत्खननप्रतिपादनद्वारा तूबरपशुप्राशस्त्यपराणाञ्चाप्रामाण्यापत्ते । द्वारीभूतबोधस्य रुद्ररोदनप्रजापतिवपोत्खननादिविषयकस्य बाधितत्वेनाप्रमात्वात् । न च तात्पर्यविषयीभूतद्वारीभूतबोधस्याप्रामाण्यमेव वाक्यस्याप्रामाण्यनियामकम् । उक्तबोधस्तु न तात्पर्यविषय इति वाच्यम् । तस्य श्रुतितात्पर्याविषयत्वे श्रोतृव्युत्पत्तिवशमात्रेण प्रतिभासे रजतनिन्दादेरसिद्ध्या सुवर्णप्राशस्त्याद्यसिद्धिप्रसङ्गात् । अन्यथा तद्वाक्यस्य रजतादिप्राशस्त्यादावपि लक्षणा स्यात् । अग्निमीळे इत्यादीनामपि सुवर्णप्राशस्त्यपरत्व स्यात् अविशेषात् । इहापि चन्द्रस्वरूपमात्रबोधफलकस्य द्रव्यत्वादौ चन्द्रत्वसमनैयत्यादिबोधस्य तात्पर्याविषयतैव द्वारत्वमिति वक्तु शक्यत्वाच्च ।

द्वारीभूततात्पर्यविषयबोधस्याप्रामाण्यस्य वाक्यप्रामाण्यविघातकत्वे नेह नानेति श्रुतीनां ब्रह्मस्वरूपमात्रपरत्वेन पारमार्थिकप्रामाण्य यदभिमतं तस्याप्यभावप्रसङ्ग । मिथ्यात्वे श्रुतेरवान्तरतात्पर्याङ्गीकारात्तादृशमिथ्यात्वांशे पारमार्थिकप्रामाण्यायोगात् । तदंशे व्यावहारिकप्रामाण्य वर्तत इति चेत्किं तावता । फलीभूतबोधांशे यादृश प्रामाण्य तादृशप्रामाण्याभावस्याङ्गीकारात् । प्रकृतेऽपि फलीभूतव्यावहारिकचन्द्रस्वरूपविषयकबोधजनकत्वात् द्वारीभूतबोधस्य प्रातिभासिकप्रामाण्यवत्त्वात् उक्तवाक्यस्य प्रकृष्टप्रकाशादिवाक्यवद्व्यावहारिकप्रामाण्यापादनसम्भवाच्च । प्रातिभासिकविषयकस्य प्रामाण्य विप्रतिषिद्धमिति चेत्तर्हि व्यावहारिकविषयकस्यापि कुतो न विप्रतिषिद्धम् । विषयीभूते यत्किञ्चित्कालाबाध्यत्वस्यान्ततो बाध्यत्वस्य च साम्यात् ।

किञ्च प्रातिभासिकविषयकत्व चेदप्रामाण्यं 'शुक्तौ प्रतीयमानं रजत दोषजन्यप्रतीतिविषयीभूतम्' इति वाक्यस्याप्रामाण्य स्यात् । न च प्रातिभासिकविधेयकत्वमप्रामाण्यमिति वाच्यम् । प्रत्यक्षे विधेयत्वाभावेनेद रजतम् इत्यस्याप्रामाण्यानुपपत्ते । न च मुख्यप्रकारतैव विधेयतेति वाच्यम् । तथात्वे 'शुक्तौ भासमानरजते दोषजन्यप्रतीतिविषयत्वम्' इति ज्ञानस्याप्यप्रामाण्यापातात् । प्रकारतायामाधेयतासम्बन्धानवच्छिन्नत्वोपादाने 'ह्रदे वह्नि.' इत्यादिज्ञानाना भ्रमत्वानुपपत्ति । 'ज्ञान विषयितया प्रातिभासिकवत्' इति ज्ञानस्य भ्रमत्वापत्तिश्च ।

ननु माऽस्त्वप्रामाण्यभयाद्द्रव्य चन्द्र इत्यनुत्तरमिति पक्ष तथापि लक्षणज्ञानेनेतरव्यावृत्तिधीर्जायते । प्रकृते च द्रव्यत्वस्य व्यभिचारित्वेनेतरव्यावृत्तिधीर्न जायत इति नोत्तर तथा प्रयुज्यते । प्रकृष्टप्रकाशत्वन्तु तथा भवतीति तल्लक्षणत्वेनोच्यत इति चेन्न ।

(द्वै द्यु) स्वरूपमात्रविषयकाज्ञाननिवृत्तिजनकबोधस्यैव वक्तुरिष्टत्वेन लक्षणवाक्यजन्यस्वरूपबोधस्यैव वक्तुरिष्टत्वेन लक्षणवाक्यजन्यस्वरूपमात्रबोधस्यैव तन्निवर्तकतायास्त्वदभ्युपगतत्वेन च व्यावृत्तिबोधस्याकिञ्चित्करत्वेन तदनिर्वाहकत्वस्योक्तबीजत्वाभावात्। न च स्वरूपमात्रबोधे व्यावृत्तिबोधो द्वारतयोपयुज्यत इति वाच्यम्। लक्षणवाक्य जन्यशाब्दबोधे स्वसामग्रीबलाज्जायमाने लक्षणज्ञानाधीनव्यावृत्त्यनुमिते कारणत्वे बीजाभावात्। तथाऽपि तस्य कारणत्वाऽग्रहेऽनुमितिजनकव्याप्तिस्मरणपरामर्शादिभिरनुमित्युत्पत्तिपर्यन्त पदज्ञानपदार्थोपस्थित्यादीना नष्टतया शाब्दायोग। न चानुमित्यनन्तर पुनस्तदनुसन्धानाच्छाब्दबोधोपपत्तिरिति वाच्यम्। तर्हि प्रथम तद्वाक्याच्छाब्दाजनने लक्षणग्रहस्याप्यभावेनेतरभेदानुमित्युत्पत्त्ययोगात्।

प्रथमतो लक्षणमात्रविषयकशाब्दबोधजननाङ्गीकारे प्रथमतो लक्षणवाक्याल्लक्ष्ये लक्षणप्रकारकबोधस्तदनन्तर सजातीयविजातीयव्यावृत्तिग्रह इत्यंशे आवयो सम्प्रतिपत्ति। तदनन्तरञ्च पुनर्लक्षणवाक्यानुसन्धानस्वरूपमात्रविषयकपदार्थोपस्थित्यादिभि पुन. स्वरूपमात्रविषयकशाब्दबोध इत्यशस्त्वदभ्युपगतस्त्वप्रामाणिक। तादृशशाब्दबोधादिसत्त्वे 'पुनस्तादृशवाक्यमनुसन्धाय चन्द्रस्वरूप शाब्दयामि' इति सर्वेषामनुभवप्रसङ्गात्। न च तथा कस्यचिदनुभव। तथात्वे प्रथमशाब्द इवोक्तपदार्थोपस्थितिशाब्दबोधादावविवादप्रसङ्गात्। न चाननुभूतस्य शाब्दस्य कल्पकं किमप्यस्ति। ज्ञानादीना ज्ञातैकसत्त्वनियमेन तत्र नैयायिकादिवत्तस्यातीन्द्रियत्वानङ्गीकारात्तादृशज्ञानमुत्पद्यते चेत्तथाऽनुभूयेतेति तर्कपराहतिप्रसङ्गेन कल्पनाया एवानुत्थानात्। न च स्वरूपमात्रजिज्ञासानिवृत्त्यन्यथाऽनुपपत्तिरेव तत्कल्पिकेति वाच्यम्। तादृशजिज्ञासाभावस्यैव पूर्वमुपपादितत्वात्। न च किंशब्दस्य स्वरूपमात्रविषयकबोध एव शक्तत्वात्तादृशजिज्ञासैव किंशब्दवाच्येति वाच्यम्। तत्रैव मानाभावात्। न च किञ्चिद्धर्मप्रकारकजिज्ञासात्वापेक्षया स्वरूपजिज्ञासात्वस्य लघुत्वात्तदवच्छिन्ने शक्तिरिति वाच्यम्। मात्रार्थानन्तर्भावे धर्मप्रकारकजिज्ञासाया वाच्यकोटेरबहिर्भाव.। तन्निवेशे च तवैव गौरवम्।

किञ्च प्राथमिकबोधेन सा जिज्ञासा निवर्तते न वा। 'नेतिपक्षेऽनुभवविरोध। तद्वाक्यश्रवणोत्तरमुक्त विमर्शात्पूर्वमेव 'चैत्रवाक्येन मत्पृष्टार्थो ज्ञात। न पुनस्तज्जिज्ञासा' इति सर्वानुभवात्। यत्र पुन श्रुतेऽप्यर्थे पुन. श्रवणेच्छा तत्र पूर्वज्ञाने अप्रामाण्यसशयादिना श्रुतार्थदार्ढ्यार्थं त्वयाऽपि तथैव वाच्यत्वात्। अन्यथा तादृशवाक्यश्रवणजन्यबोधादिद्वितीयादिक्षण एव व्यासङ्गादिना व्याप्तिस्मरणाभावादुक्तव्यावृत्त्यनुमितिर्नोत्पन्ना तत्र 'चैत्रेण मत्पृष्टार्थो नोक्त' इति प्रत्ययापत्ते। जिज्ञासा निवर्तते चेत्सप्रकारकबोधेन निवृत्तत्वात्सा सप्रकारकबोधविषयिण्येव।

अपि च केनचित् कश्चन्द्र इति केनचित्कीदृशश्चन्द्र इति पृष्टे वक्ता द्वावपि प्रत्येकदैवोत्तर वदति प्रकृष्टप्रकाशश्चन्द्र इति, तदा तज्जिज्ञासे निवर्तेते। तदन्यथाऽनुपपत्त्या जिज्ञासाद्वयस्य समानविषयकत्वसिद्धौ कीदृश इति वाक्यस्य प्रकारविशिष्टवस्तुजिज्ञासाबोधकत्वे विवादाभावात्किंशब्दबोध्यजिज्ञासाऽपि तादृश्येवेति।

(द्वै द्यु.) तथा चोक्तानुभवयुक्तिसिद्धार्थे शक्यतावच्छेदकलाघवादियुक्तिरकिञ्चित्करी । एकस्यैव वाक्यस्य तात्पर्यभेदादिकल्पनाया स्वरूपमात्रबोधकतासिद्ध्युत्तरकालिकत्वेनान्योन्याश्रयात् ।

अथ प्रकृष्टप्रकाशादिवाक्येन लक्षणज्ञानेन तद्द्वारकस्वरूपबोध एव जायते । न तत्र व्यावृत्त्यादिज्ञानापेक्षा । परन्तु तस्य जिज्ञासानिवर्तकत्वेऽप्यनवधारणत्वेनाज्ञानानिवर्तकतया तन्निवर्तनायावधारणात्मकज्ञानमपेक्ष्यते इति तादृशज्ञाने पुनर्लक्षणवाक्यानुसन्धानेन जननीये लक्षणजन्यव्यावृत्तिबोध सहकारी भवति । त विनाऽवधारणात्मकत्वानुपपत्तेरिति वाच्यम् । प्रथमज्ञानस्याज्ञानानिवर्तकत्वे तस्यैव जिज्ञासाविषयत्वस्य त्वयोक्तत्वेन तेन जिज्ञासानिवृत्त्युक्तययोगात् । न च तत्स्वरूपयोग्यत्वाज्जिज्ञासानिवर्तकम् । अनवधारणत्वेन फलानुपधायकत्वात्तादृशज्ञानान्तरमपेक्ष्यत इति वाच्यम् । अनवधारणस्य कदाऽपि फलानुपधायकत्वेन स्वरूपयोग्यत्वस्यैवाकल्पनात् उपधायकज्ञानस्यैवेच्छाविषयत्वाच्च तेन जिज्ञासानिवृत्त्यनुपपत्ते ।

किञ्च किमवधारणत्व नाम यद्भावाभावाभ्या प्रथमद्वितीयज्ञानयोर्विशेष. । जातिश्चेत्तादृशजातिसद्भावे मानाभाव. । प्रत्यक्षत्वादिना सङ्करात् । तथात्वे प्रथमज्ञाने तादृशजातिसद्भावे बाधकाभावाच्च । निश्चयत्वञ्चेत् । प्रथमज्ञाने तत्सत्त्वमावश्यकमेव । स्वरूपमात्रावगाहिज्ञाने विरुद्धकोटिद्वयावगाहित्वरूपसंशयत्वप्रसक्तेरभावात् स्वरूपमात्रज्ञानेऽपि संशयत्वमङ्गीक्रियत इत्युक्तेरुन्मत्तभाषणाविशेषात् । निश्चितप्रामाण्यकत्वञ्चेत्प्रथमज्ञानग्राहकेण साक्षिणा तन्निष्ठप्रामाण्यग्रहणस्यावश्यकत्वेन तत्राप्युक्तावधारणत्वाक्षते । न चाप्रामाण्योपस्थितिघटिततद्ग्राहकसामग्री न प्रामाण्य गृहीतुमीष्ट इति वाच्यम् । स्वरूपमात्रविषयकत्वेन गृह्यमाणे ज्ञाने सप्रकारकत्वघटिताप्रामाण्यग्रहणस्यायोगात् । घटज्ञाने पटत्वघटिताप्रामाण्यबुद्धेरिव तस्यानुत्तेजकत्वाच्च । न च तादृशस्वरूपमात्रावगाहिबोधेऽपि स्वस्मिन्नेवोद्देश्यत्वविधेयत्वयोरङ्गीकारात् तादृशविधेयाभाववन्निष्ठोद्देश्यतानिरूपिततन्निष्ठविधेयतानिरूपकत्वरूपमप्रामाण्य तत्र सम्भवतीति तत्सन्देहो युज्यत इति वाच्यम् । एकस्यैव वस्तुनो रूपभेदं विनोद्देश्यत्वविधेयत्वाङ्गीकारे मानाभावात् । सामान्यत विधेयाभावस्याप्रामाण्यशरीरनिवेशे सम्बन्धभेदमादाय दोषप्रसक्तया संसर्गस्यापि तच्छरीरनिवेशे संसर्गानवगाहिन्युक्तज्ञाने तस्यानुत्तेजकत्वात् । न च तद्भिन्ननिष्ठोद्देश्यतानिरूपिततन्निष्ठविधेयताकत्वरूपमप्रामाण्यमस्त्विति वाच्यम् । तस्यापि तादात्म्यसम्बन्धावच्छिन्नत्वस्य विधेयतायां निवेशं विनाऽप्रामाण्यरूपत्वायोगात् । अन्यथा घटवद्भूतलमित्यादिज्ञानानामप्यप्रामाण्यापत्ते ।

ननु नीलो घट इत्यत्र नीलादिनिष्ठविशेषणताना सम्बन्धानवच्छिन्नत्वमते तद्भिन्ननिष्ठोद्देश्यतानिरूपिततन्निष्ठसंसर्गानवच्छिन्नविधेयत्वनिरूपकत्वमप्रामाण्यम् । तथा च प्रकृतबोधेऽपि तादृशाप्रामाण्यग्रह एवोत्तेजको भवतु । अत्रापि तादृशोद्देश्यताविधेयताङ्गीकारादिति चेन्न । तादृशविधेयताया अत्राङ्गीकारे तत्साम्यादखण्डार्थकत्वहान्यापत्ते. । तैरपि घटो घट इति वाक्यस्य बोधकत्वाङ्गीकारेण रूपभेदावश्यकतया स्वरूपमात्रस्योद्देश्यविधेयभावायोगात् । तन्मतादरे गुणगुण्यभेदस्य सामानाधिकरण्यप्रत्ययानुरोधादसिद्धेश्च । तादात्म्यविषयकत्वात् ।

(द्वै द्यु.) स्वरूपमात्रविषयकाज्ञाने उक्तोद्देश्यत्वविधेयत्वयो सत्त्वे मानाभावेनोक्तज्ञानस्य तत्समानविषयकत्वा-भावान्मूलाज्ञानस्य च निर्विकल्पनिवर्त्यताया एव सिद्धान्तसिद्धत्वेन शाब्दे विधेयत्वाद्यङ्गीकारे तथात्वायोगेन च सर्वत्र स्वरूपाज्ञानानिवृत्तिप्रसङ्गाच्च ।

ननु बाधितार्थकत्वमेवाप्रामाण्यम् । तच्च स्वरूपमात्रविषयकज्ञानेऽपि सम्भवतीति तच्छङ्का युक्तेति चेन्न । स्वरूपे सत्त्वग्रह विना तज्जिज्ञासानुदयेन प्रश्नायोगात्तदन्यथाऽनुपपत्त्या तत्र सत्त्वरूपाबाधितत्वस्य निश्चितत्वेन तादृशस्वरूपमात्रविषयकत्वेन गृह्यमाणे ज्ञाने बाधितविषयकत्वशङ्काया अयोगात । योगे वा स्वरूपरूपपक्षस्येव तत्र लक्षणरूपहेतोश्च ग्रहासम्भवेन चेतरव्यावृत्त्यनुमितेरप्यनुत्पत्तिप्रसङ्गाच्च । शशविषाणशुक्तिरजतादेरपि स्वेतर-व्यावृत्तत्वेनोक्तलक्षणरूपलिङ्गेन सामान्यत स्वेतरव्यावृत्त्यनुमित्युत्पत्तावपि बाधितत्वशङ्कोच्छेदाभावेन द्वितीयज्ञान-स्यापि तादृशाप्रामाण्यज्ञानानास्कन्दितत्वेनोत्पत्तेरयोगाच्च ।

[1]नन्वलक्षणेन सामान्यत स्वेतरभिन्नत्वेनानुमितिर्जायत इति न स्वीक्रियते । स्वेतरत्वेनेतरपदार्थज्ञान वेलायामेव स्वस्यापि तदितरत्वस्य समानसंविद्वेद्यतयैव सिद्धेरनुमितिवैयर्थ्यापत्ते । अपि तूपस्थिततत्तद्रूपावच्छिन्न भेदकूटावगाहिन्येव । एवञ्चोक्तलक्षणज्ञानाधीनबाध्यव्यावृत्त्यनुमित्या बाध्यत्वशङ्कोच्छेदान्निश्चितप्रामाण्यकत्व-रूपानावृतप्रमात्वकं द्वितीयज्ञानं जायत इति वाच्यम् । तर्हि बाध्यभेदानुमितेरेकस्या एव प्रकृते उपयुक्तत्वेन भेदान्तरानुमितीनामप्रयोजकत्वेन लक्षणस्य तद्व्यभिचारित्वेऽपि बाधकाभावात् द्रव्यत्वादेर्बाध्यभेदाव्यभिचारित्वात्तस्य लक्षणत्वेनोक्तापत्तिर्दुर्वारैव । तत्काले सर्वप्रतियोग्युपस्थित्यभावात्कूटानुमितेरसम्भवात्कालविशेषघटितकार्यकारण-भावाङ्गीकारे च तत्कालीनतादृशस्वरूपबोधे तत्कालोपस्थितनिखिलभेदज्ञानत्वेन कारणत्वेऽननुगमापत्त्या लाघवात्तत्कालव्यक्त्यादेरेव कारणत्वौचित्येन व्यावृत्तिज्ञानस्य कारणत्वासिद्धेश्च । तथात्वेऽपि वा यदा गुणा दीनामेवोपस्थितिस्तत्काले गुणादिभेदग्रहद्वारा द्रव्यत्वज्ञानेन चन्द्रस्वरूपमात्रबोधसम्भवेन लक्षणत्वेनोक्तौ बाधका-भावाच्च । प्रकृष्टप्रकाशत्वस्य कदाचित्सूर्यादिभेदव्यभिचरित्वेन ग्रहवद्द्रव्यत्वस्यापि घटादिभेदव्यभिचारित्वग्रहे बाधकाभावाद्व्यभिचारग्रहप्रामाण्याप्रामाण्यरूपवैषम्यस्य प्रकृतेऽकिञ्चित्करत्वात् ।

किञ्च व्यावृत्तिबोधस्य द्वारत्वमपि त्वया वक्तु न शक्यते । प्रश्नकरण लक्षणकथनमपि तवायुक्तम् । 'चन्द्रो नाम कश्चिदस्ति । स चेतरव्यावृत्तोऽसाधारणधर्मवाश्चेति जानामि । परन्तु चन्द्रमेवाहं विजिज्ञासे' इत्य-नुभवबलेन व्यावृत्त्यादीनां सर्वेषां [2]ज्ञानत्व व्यवस्थाप्य सिद्धेऽपि स्वरूपमात्रेऽज्ञानात्तन्मात्रजिज्ञासा व्यवस्थापिता त्वया । तथा च लक्षणादीना सर्वेषा स्वयमेव तेन ज्ञातत्वात् वक्त्रा त प्रति तत्कथनस्य तेन व्यावृत्त्याद्यनुमिति-सम्पादनस्य चानुपयोगात् । एवं स्वत. सिद्धेन लक्षणज्ञानादिना तस्य व्यावृत्तिज्ञानाभावे वक्त्रा लक्षणकथनेऽपि व्यावृत्त्यादिज्ञाने बीजाभाव ।

---

[1] ननु लक्षणेन इति पाठेन भाव्यमिति भाति।

[2] ज्ञातत्वं व्यवस्थाप्य सिद्धेष्वसाधारणधर्मादौ स्वरूपमात्रे इति पाठेन भाव्यमिति भाति।

(द्वै. यु.) शाब्दबोधस्यैव तथात्वमसम्भावितम्। वृद्धव्यवहारादिना बालस्येतरव्यावृत्तघटादिस्वरूपसिद्ध्यादिमूलकतत्पदवाच्यत्वग्रहाद्यसिद्धिप्रसङ्गात्।

ननु स्वत एव विद्यमान तत्प्रष्टुश्चन्द्रासाधारणधर्मादिज्ञानं साक्षिरूपमेव। न प्रमाणजन्यम्। तच्च न तद्विषयकाज्ञाननिवर्तकम्। तद्विषयकाज्ञानानिवृत्तौ च व्यवहाराद्यनिष्पत्तेस्तदर्थं लक्षणकथनादि युक्तम्। अत एव कदाचित् 'कश्चन्द्रासाधारणधर्म' इत्यपि पृच्छतीति चेन्न। साक्षिज्ञानस्यानुवादादिक प्रत्यहेतुत्वेन कश्चन्द्र कोऽसाधारणधर्म इत्यनुवादस्याप्ययोगेन प्रमाणजन्यसामान्याकारवृत्तेस्तत्रावश्यकत्वात्। अन्यथा सर्वस्याप्यज्ञानावच्छेदकतया साक्षिवेद्यत्वाविशेषात् केनापि प्रकारेणादृष्टाश्रुतवस्त्वप्यनूद्य कथं न पृच्छेत्। तथा च चन्द्रादिस्वरूपस्यैव सामान्याकारेण ज्ञातत्वावश्यकत्वात्तद्विशेषधर्मस्यापि विशेषरूपेणाज्ञातत्वाद्विशेषरूपवत्तादृशधर्मविशिष्टचन्द्रस्वरूपज्ञानार्थमेव प्रश्नप्रतिवचनयोरुपपत्ति।

न च चन्द्रस्य सामान्याकारेण ज्ञानेऽपि 'किञ्चिन्निष्ठप्रकारत्वानिरूपितचन्द्रनिष्ठविषयताशाली बोधो भवतु' इतीच्छा जायते। किंशब्दस्यापि तादृशज्ञानविषयकेच्छाबोधकत्वात्प्रश्न[1]वाक्यस्यातदर्थकत्वस्य सिद्धत्वात्प्रतिवचनस्यापि तादृशबोधतात्पर्यकत्व युक्तमिति वाच्यम्। तादृशबोधस्याननुभूतत्वेन तज्जातीयस्थलान्तरेऽपि स्वरूपमात्रज्ञानत्वेनाननुभूतत्वेन सर्वस्यापि शब्दस्य सप्रकारबुद्धावेव हेतुताया सर्वानुभवसिद्धत्वेन स्वरूपमात्रव्यवहाराभावात्। स्वरूपमात्रबोधस्य स्वपरव्यवहारानुपयोगेन च तत्रेष्टसाधनताबुद्ध्यभावेन तादृशेच्छाङ्गीकारायोगात्। पूर्वोक्तबाधकबलेन प्रश्नप्रयोजकबुभुत्सायाश्च सप्रकारकज्ञानविषयत्वस्यैव [2]सिद्धत्वस्य किंशब्दशक्तिलाघवाकिञ्चित्करत्वस्योक्तत्वाच्च।

अपि च कीदृश इति प्रश्नानुसाराद्धर्मविशिष्टधर्मिबोधेच्छोभयसम्मता। तस्या एव किंशब्दबोध्यतासम्भवे अप्रसिद्धेच्छा विना प्रमाणेन परिकल्प्य तत्र किंशब्दशक्यत्वकल्पनमयुक्तम्। अन्यथा निर्विषयकबोधमप्येकं तद्विषयकेच्छा परिकल्प्य किंशब्दस्य तत्र शक्तिं परिकल्प्य तादृशब्दघटितप्रश्नानुसारादुत्तरवाक्यस्यापि निर्विषयकबोधजनकत्वमित्यादिकमपि सिद्ध्येत्। अविशेषात्। तर्हि 'कीदृश' इति 'क' इति वाक्ययोरविशेषेण बोधकत्वप्रसङ्ग इति चेदिष्टमेव। अन्यथा 'अय क.' 'अय किंस्वरूप.' इति स्वरूपप्रश्नेऽपि तव वैलक्षण्यापातात्। परन्तु कीदृशशब्दात् धर्मप्रकारकजिज्ञासैव प्रतीयते। किंशब्देन तु यथातात्पर्यं सम्बन्धादिप्रकारकजिज्ञासाऽपि प्रतीयत इत्यनयो॰ कश्चिद्विशेष। इत्थञ्च व्यावृत्त्यादिज्ञानस्य स्वरूपबोधे द्वारत्वमिति पक्षोऽपि न समञ्जस।

यत्तु 'कदाचिदसत्यत्वादिसशये सत्यत्वलक्षणज्ञानाधीन व्यावृत्तिज्ञानं तत्सशयविघटक भवतीति व्यावृत्तिज्ञानं द्वारमित्युपचर्यते। न तु स्वरूपमात्रावगाहिनि ज्ञाने नियमेन व्यावृत्तिज्ञानापेक्षा' इत्यद्वैतचन्द्रिकाकारेण पक्षान्तरमुक्त तत्र पक्षे द्रव्य चन्द्र इत्युत्तरवाक्यप्रयोगे न काचिद्बाधकशङ्का।

---

[1] वाक्यस्यापि तदर्थं इति पाठेन भाव्यमिति भाति।

[2] सिद्धत्वाच्च इति पाठेन भाव्यमिति भाति।

(ढ्ढ घु) यदपि तेनैव स्वसिद्धान्ततयाऽभिहितं 'लक्षणवाक्यजन्यलक्ष्यस्वरूपमात्रप्रतीत्युत्तरं तत्प्रतीतिविषयत्वोपहितस्वरूपेण लिङ्गविधयाऽर्थापत्तिविधया वेतरव्यावृत्तिर्धीर्जायते' इत्यादि पूर्वपक्षग्रन्थव्याख्याऽवसरेऽस्मत्प्रदर्शितप्रमेयं तत्पक्षे 'प्रकृष्टप्रकाशश्चन्द्रः' इत्यादेर्लक्षणवाक्यत्वापत्तिः सुलभैव। लक्षणवाक्यजन्यचन्द्रस्वरूपमात्रविषयिणी या वृत्तिस्तद्विषयत्वोपहितचन्द्रस्वरूपेण चन्द्रादिपदजन्यवृत्तिविषयत्वोपहिते चन्द्रे इतरभेदसिद्धेरप्रत्यूहत्वात्।

शुद्धस्वरूपस्य पक्षत्वानुपपत्त्या तादृशवृत्तिविषयत्वोपहितस्य पक्षत्वे हेतुत्वे च सति शुद्धस्वरूपे भेदासिद्ध्या तदुत्तरमवधारणात्मकस्वरूपमात्रविषयकज्ञानोत्पत्त्ययोगः। प्रश्नविषये भेदानुमित्यजननात्तस्य लक्षणफलत्वायोगः। लक्ष्यत्वेनाभिमत एवेतरभेदानुमितेस्तत्फलत्वात्।

एवं प्रकृष्टप्रकाशाद्युपलक्षितस्वरूपस्यैव लक्ष्यात्यन्ताभिन्नस्य स्वरूपलक्षणत्वेन भवदभिमतस्य स्वरूपलक्षणस्य स्वस्मिन् वृत्तित्वायोगेन हेतुत्वाभावात् ज्ञानविशेषविषयत्वोपहितस्य स्वरूपेण भिन्नाभिन्नत्वात्स्वरूपत्वाभावात्स्वरूपेणेतरभेदासिद्ध्या प्रकृष्टप्रकाशसत्यज्ञानादीनां स्वरूपलक्षणत्वोक्त्ययोगः। अन्यथोक्तोपहितवत् ब्रह्मण्यारोपितजगत्कारणत्वादिभिस्तादात्म्यापन्नैरितरभेदानुमित्या तेषामपि स्वरूपलक्षणत्वापत्तिः।

अपि चैतन्मते 'काकवद्देवदत्तगृहम्' इत्यस्यापि स्वरूपलक्षणत्वं स्यात्; किमित्यादिप्रश्नसामान्यस्य स्वरूपमात्रविषयकत्वनियमस्य भवदभ्युपगतत्वात्तादृशप्रश्नानुरोधेन तादृशवाक्येनापि लक्षणया स्वरूपमात्रबोध उत्पाद्यः। अन्यथा प्रश्नोत्तरयोर्वैयधिकरण्यापत्तेः। तथा च तादृशबुद्धिविषयत्वोपहितगृहस्यैवेतरव्यावर्तकत्वप्राप्तेः। न च तद्वाक्यस्य स्वरूपलक्षणपरत्वमिष्टमेव। समानविभक्तिकपदघटितलक्षणवाक्यसामान्यस्य स्वरूपलक्षणपरत्वाभ्युपगमादिति वाच्यम्। 'काकेन देवदत्तगृहमवसितवानस्मि' इति सर्वानुभवविरोधेनोक्तकल्पनाया असङ्गतत्वात्।

अत एव 'लक्षणांशगतपदशक्तिविशेष्यस्यैव यत्र लक्ष्यत्वं तत्स्वरूपलक्षणमन्यत्र तटस्थलक्षणत्वम्' इत्यपास्तम्। लक्षणबोधकभागस्थमतुप सम्बन्ध्यर्थकत्वेन तद्विशेष्यतया अपि गृहेऽनपायात्। 'जन्माद्यस्य यतः' इत्यत्र तत्पदाध्याहारस्यावश्यकत्वेन यतो जन्मादि तत् ब्रह्मेति लक्षणवाक्यपर्यवसानात् तत्पदस्य जन्मादिकारणपरामर्शकतया तत्पदार्थविशेष्यरूपब्रह्मण एव लक्ष्यत्वादुक्तवाक्यस्य समानविभक्तिकत्वाच्चास्य स्वरूपलक्षणत्वप्राप्त्याऽस्य सूत्रस्य तटस्थलक्षणपरत्वोक्तिविरोधाच्च।

न च लक्षणत्वेनाभिमतधर्मबोधकपदजन्यबोधे विशेष्यांशस्य लक्षणत्वञ्चेत् स्वरूपलक्षणत्वव्यवहारः। प्रकृते च नैवम्। 'जन्मादि यतः' इत्यंशस्यैव जन्मादिकारणस्वरूपलक्षणबोधकत्वात्तत्र च ब्रह्मणो विशेष्यत्वेनाभानादिति वाच्यम्। तर्हि लक्षणत्वेनाभिमतज्ञानत्वानन्दत्वादिधर्मबोधकज्ञानत्वादिपदजन्यबोधे ब्रह्मणो विशेष्यत्वाभावात्सत्यज्ञानादिवाक्यमपि स्वरूपलक्षणपरं न स्यात्। न च ज्ञानत्वादिकं न लक्षणत्वेनाभिमतम्। किन्तु ज्ञानादिकमेव। तद्बोधकपदे च विशेष्यमेव ब्रह्मेति वाच्यम्। तर्ह्यत्रापि कारणमेव लक्षणम्। न कारणत्वम्।

(द्वै द्यु) तत्परे च तदित्यध्याहृतपदे ब्रह्म विशेष्यमेवेति सूत्रस्य तटस्थलक्षणपरत्वोक्तिरयुक्तैव। तस्मादद्वैत चन्द्रिकाकारोत्प्रेक्षितपक्षोऽप्ययुक्त.।

नापि चन्द्रव्यवहारहेतुज्ञानत्वेनेच्छाविषयत्वमिति प्राग्विकल्पितस्तृतीय· पक्ष। चन्द्रमात्रव्यवहारविवक्षणे तस्याप्रसिद्धया पूर्वोक्तरीत्या तत्रेच्छोत्पादायोगात्। चन्द्रव्यवहारविवक्षणे प्रश्नहेतुज्ञानस्यापि तथात्वेन सिद्धत्वा त्तत्रेच्छायोगात्। उत्तरवाक्यस्य विशिष्टविषयकत्वेऽपि प्रश्नोत्तरयोर्वैयधिकरण्यायोगाच्च। किञ्च सर्वत्र किंशब्द घटितमेव प्रश्नवाक्य प्रवर्तत इति न नियम। 'इह ज्योतिर्मण्डले चन्द्रस्वरूप ज्ञातुमिच्छामि। त वद' इत्याकारस्यापि दर्शनात्। स्वरूपमात्रबोधस्येच्छाविषयत्वे तत्र स्वरूपपदस्य चन्द्रस्वरूपमात्रे लक्षणाकल्पनाप्रसङ्ग। मन्मते च स्वरूपपदस्यैवेतरव्यावृत्तस्वरूपवाचित्वान्न लक्षणा। न च तत्र ज्ञापकाभाव।

सर्वव्यावृत्तये यस्मात्स्वशब्दोऽय प्रयुज्यते।

इत्यनेन विष्णुतत्त्वनिर्णये आचार्यैः स्वरूपशब्दघटकस्वशब्दस्य सर्वव्यावृत्तिबोधकताया व्यवस्थापितत्वात्। न च 'चन्द्रस्वरूपमेव ज्ञातुमिच्छामि' इत्यपि वाक्यं प्रयुंक्ते। तदनुरोधादितरत्रापि स्वरूपपद तन्मात्रे लाक्षणिकमस्त्विति वाच्यम्। स्वरूपशब्दस्य व्यावृत्तिविशिष्टस्वरूपपरत्वेन तद्बोधानुपयुक्तपदार्थस्यैवैवकारेण व्यवच्छेद्यत्वात्। त्वद्रीत्या स्वरूपेतरसामान्यव्यवच्छेदपरत्वे द्वारतयाऽपि प्रकृष्टप्रकाशबोधकत्वेऽपि अनभिमतबोधकत्वापत्त्योत्तरस्य प्रश्नवैयधिकरण्यापत्तेरित्यलम्।

अज्ञात एव किंशब्दशक्ति। तादृशाज्ञाननिवृत्तिश्च स्वरूपज्ञानादेवेति कश्चित्। तदसत्। किंशब्देनाज्ञातमात्रे प्रतिपादितेऽपि श्रोतुरिच्छाया वक्त्रा ज्ञातत्वादनिच्छु प्रति तद्बोधनायोगादज्ञानमात्रज्ञाने तन्निवृत्तये विशिष्टार्थतात्पर्येण वाक्यप्रयोगे बाधकाभावात्। स्वरूपमात्रज्ञानस्यैवाज्ञाननिवर्तकत्वे मानाभावाच्चेति। तस्मात्स्वरूपमात्रजिज्ञासाभावाद्विशिष्टविषयकजिज्ञासयैव प्रश्न इति स्थिते उत्तरवाक्यस्यापि तथात्वेनाखण्डार्थपरत्वा भावादृष्टान्तस्य साध्यवैकल्योक्ति सुस्थिरैव।

सोऽयमित्यादिस्थले प्रतियोग्यशेऽभासमानधर्मस्थलेऽस्य प्रतियोगितावच्छेदकत्वादिभानपरिकल्पनादिकमाहार्यस्यापि ज्ञानस्य प्रतिबध्यत्वादिकल्पनञ्चाप्रामाणिकमेव।

यत्तु 'स्वरूपमात्रबोधेन स्वरूपमात्रविषयकाज्ञाननिवृत्त्या संशयनिवृत्तेस्त्वदीयाहार्यपरिभाषाया अनादरणीयत्वम्' इति। तदसत्। उत्तरे दत्ते तमर्थं ज्ञात्वाऽपि तस्यापहासादिना कोपाद्यभिवृद्धये आहार्यसशयेनैव पुनः पुन प्रश्नदर्शनेनाहार्यसंशयहेत्वज्ञानादिनिवृत्तेर्वक्तुमशक्यत्वात्।

केचिदित्युक्तमतेऽपि प्रकृष्टप्रकाशत्वतत्तेदन्त्वादीना ज्ञानान्तरविषयीभूतानामेव चन्द्रदेवदत्तादिविषयता निरूपितप्रकारताशालित्वमिति अत्रैव स्वीक्रियते किमन्यत्रापि प्रयोजनान्तरानुरोधात्स्वीकार.। नाद्य। वाक्यविशेष

(द्वै. द्यु) एवान्यत्राक्लृप्तस्याङ्गीकारे मानाभावात्। न च समानविभक्तिकपदसमभिव्याहृतकिंशब्दस्य स्वसमभिव्याहृतपदार्थतावच्छेदकतद्व्याप्यरूपोभयप्रकारता[1]निरूपितविषयताशालिबोधेच्छाविषयोऽर्थ । तादृशेच्छाया प्रष्टुर्विद्यमानत्वात्तद्वचनेन तां ज्ञात्वा वक्ता तादृशबोधतात्पर्येण वाक्य प्रयुंक्त इति तादृशबोध आवश्यक इति वाच्यम्। प्रकृतबोधे प्रकारीभूतधर्मयोर्भानेऽपि बाधकाभावेन बोधस्य तदविषयकत्वे बीजाभावात्।

न च स्वाविषयीभूततादृशधर्मद्वयप्रकारतानिरूपितविषयताशालिबोध एवेच्छाविषयीभूत.। किंशब्दवाच्यशरीरेऽपि स एव निविष्ट। अत परिहारवाक्यजन्यबोधस्य तादृशत्वमपेक्षितमिति वाच्यम्। एतादृशबोधस्यैवेच्छाविषयत्वमित्यत्रापि कल्पकानुपलम्भात्। न चाज्ञानमपि तादृशमिति तस्य निवृत्तये तादृशमेव ज्ञानमपेक्ष्यत इति वाच्यम्। अज्ञानस्यापि स्वाविषयीभूतचन्द्रत्वप्रकाशाश्रयत्वादिनिष्ठप्रकारतानिरूपितचन्द्रनिष्ठविषयताकत्वे मानाभावात्। 'चन्द्र न जानामि'इत्याकारकाज्ञानविषयकप्रतीत्या अज्ञाननिष्ठोक्तविषयकत्वानवगाहनात्। प्रतीत्यन्तरस्य चाभावात्। विना मान तादृश ज्ञान परिकल्प्येच्छादिक परिकल्प्य तादृशबोधाङ्गीकारे शून्यविषयकाज्ञानं निर्विषयकाज्ञानञ्च स्वीकृत्य तन्निवृत्तये तादृशबोधविषयकेच्छा परिकल्प्य तन्मूलकप्रश्नानन्तर तदुत्तरवाक्येन निर्विषयकशून्यविषयकबोधापत्ते । तस्येच्छादिसत्त्वेऽपि वाक्यस्य तादृशबोधोत्पादने सामर्थ्याभावात्तादृशबोधो नोत्पद्यते चेत्प्रकृतेऽपि तुल्यम्। त्वदभिमतबोधस्यापि कुत्राप्यक्लृप्तत्वेन तादृशबोधजनकत्वस्याखण्डार्थकत्वेनाभिमतवाक्येपि सत्त्वे मानाभावात्।

न द्वितीय । अन्यत्र तादृशबोधकल्पनेऽपि मानाभावात्। न च बोधो द्विविध । तद्विशिष्टवैशिष्ट्यावगाही तदुपलक्षितवैशिष्ट्यावगाही च। आद्ये ज्ञाने तस्मिन् प्रकारीभूतधर्मोऽपि भासते। तद्विना स्वविशेष्यान्वयिन्यन्वयित्वरूपविशेषणत्वासिद्धे । द्वितीये च तत्राभासमानस्यैव धर्मस्य तन्निष्ठविषयतानिरूपितप्रकारतामात्र स्वीक्रियत इति अन्यत्रापि तादृशबोधस्य सिद्धत्वात्तत्सामग्र्यादिक कल्पनीयमित्यखण्डार्थबोधकत्व तादृशबोधजनकत्वरूपमेव निरुच्यत इति वाच्यम्। उक्तरीत्यङ्गीकारेऽपि लक्षणवाक्याना सोय देवदत्त इति वाक्यानाञ्च तादृशबोधजनकत्वनिर्बन्धे कारणाभावात्। विशिष्टवैशिष्ट्यावगाहिबोधपरलक्षणवाक्ये लक्षणवाक्यत्वरूपहेतोर्व्यभिचारस्य दुर्वारत्वात्। प्रष्टुस्तादृशार्थबोध एवेच्छेत्यत्राज्ञानस्योक्तोपलक्षितवस्तुविषयकत्वमेवेत्यत्र च नियामकाभावाद्विशिष्टविषयकाज्ञाननिवर्तकविशिष्टबोधेच्छामूलकप्रश्नोत्तरीभूतलक्षणवाक्यसम्भवात्।

न च प्रकृष्टप्रकाशश्चन्द्र इति वाक्येन चन्द्रस्य मुख्यविशेष्यतयैव भानेन लक्षणविशिष्टस्यान्यत्र वैशिष्ट्याभानादुक्तविशिष्टवैशिष्ट्यबोधत्वाभावादुपलक्षितविषयत्वसिद्ध्या तत्रोक्तविषयता आवश्यकीति वाच्यम्। एवं सति चन्द्रत्वाद्युपलक्षितस्याप्यन्यत्र वैशिष्ट्यानवगाहनादुपलक्षितवैशिष्ट्यावगाहित्वाभावात्त्वदुक्तविषयताऽप्यप्रामाणिकी। न च तद्रूपेण मुख्यतया तदवगाहिज्ञानीयविषयताऽपि भवतीति वाच्यम्। तथात्वे घट इत्याकारकज्ञानस्यापि घटत्वोपलक्षितविषयतापत्ते । इष्टापत्तौ च पूर्वज्ञाने मुख्यतया भासमानघटत्व उक्तज्ञानीयविशेष्यतानिरूपित-

[1] त्वा इति पाठेन भाव्यमिति भाति।

(द्वै द्यु) प्रकारतामात्राङ्गीकारेऽपि घटघटत्वयो संसर्गाभाने धर्मधर्मिभावभानायोगाद्घटत्वे [1]अवृत्तित्वसंशयोच्छेदो घटत्वाऽश्रयव्यक्तावस्तित्वसंशयोच्छेद चन्द्रत्वप्रकाशाऽश्रयत्वयोस्तत्तेदन्त्वयो· सामानाधिकरण्यसंशयोच्छेदो न स्यात्। न स्याच्च घटत्वाश्रयवस्तुताहशसामानाधिकरण्यादीनाञ्च सिद्धि । विरोध्यविषयकस्यापि ज्ञानस्य प्रतिबन्धकत्वे तदविषयकस्यापि तत्साधकत्वे सर्वप्रतीतिभि. शून्यस्यैव सिद्ध्यापत्त्याऽतिप्रसङ्गात्। सत्यज्ञानादि-वाक्यसाध्यप्रतीतेस्तत्त्वमसीतिवाक्यसाध्यप्रतीतेश्च घट इत्यादिप्रतीत्यविशेषात् विशिष्टवस्तुन एव तद्फला-त्सिद्ध्याऽखण्डवस्त्वसिद्ध्या प्रयासवैफल्याच्च।

अपि च सोऽयमित्यत्र तत्तेदन्त्वोभयप्रकारतानिरूपितविषयताशालिबोधमात्रमङ्गीकृत्यैक्यस्य संसर्गता-ऽनङ्गीकारे नीलो घट इत्यत्रापि तथैव स्यात्। नीलत्वघटत्वविशिष्टयोरैक्ये नीलत्वघटत्वयोरप्यैक्यापातेन विशिष्टद्वयैक्यायोगात्। तथा चैक्यसंसर्गकप्रमाया विलोप एव स्यात्। तत्रोपहितयोस्तादात्म्य संसर्गो नैक्यम्। तस्य कुत्रापि संसर्गत्वं नास्त्येवेति चेन्न। अत्राप्युपलक्षितयोस्तादात्म्यमेव संसर्गतया भासताम्। न च तादा-त्म्यस्य भेदाभेदनियतत्वात्प्रकृते चोपलक्षितयो शुद्धाभेदस्यैव सत्त्वेन भेदाभावान्न संसर्गतेति चेन्न। उपहित-भेदस्योपाधिभेदरूपत्ववदुपलक्षितभेदस्याप्युपलक्षणभेदरूपत्वमाश्रित्य वा अभेदस्य वास्तवत्वं भेदस्य प्रातिभासि-कत्व संसर्गशरीर इत्युक्तरीतिमाश्रित्य वोपपादनसम्भवात्। अन्यथा तादात्म्येन तत्तोपलक्षितव्याप्यवानयमित्यादि-शाब्दादिपरामर्शादुक्ताखण्डार्थावगाह्यनुमितिस्वीकारो वा ताहशस्थलेऽनुमितेरपलापो वा स्यात्।

किञ्च विशिष्टस्य वैशिष्ट्यमिति रीत्या जायमानज्ञानस्यापि तद्धर्मविषयकत्व किमर्थमङ्गीकार्यम्। तद्धर्म-विशिष्टवैशिष्ट्यावगाहिज्ञानस्थले तत्राभासमानेऽपि धर्मे तन्निष्ठविषयतानिरूपितावच्छेदकताख्यविषयता उपलक्षित स्थले तद्धर्मेऽवच्छेदकतानात्मिकी प्रकारतेत्येतावतैव वैलक्षण्यस्य सम्भवात्। गन्धवत्त्वरूपलक्षणोपलक्षितपृथिवी-स्वरूपमात्रज्ञानान्नीलरूपवत्त्वरूपलक्षणोपलक्षितपृथिवीस्वरूपमात्रावगाहिज्ञानस्य विषयावैलक्षण्येऽपि विषयताकृतवैल क्षण्येनैव वैलक्षण्यस्य त्वयाऽवश्यमादरणीयतया प्रकृते विषयावैलक्षण्यस्याप्रयोजकत्वात्। एवञ्चान्यथाख्याति-बलादनिर्वचनीयसिद्धिरप्यपास्ता स्यात्। रजतमिद साक्षात्करोमीति प्रत्यये विलक्षणविषयतास्वीकारसम्भवात्। बाह्यार्थासिद्धिश्च।

न च विशिष्टवैशिष्ट्यावगाहिप्रत्यये तद्धर्मस्य धर्म्यंशे भानाभावे स्वविशेष्यान्वय्यन्वयित्वरूपविशेषणत्वहानि: स्यादिति वाच्यम्। तज्ज्ञानेऽभासमानस्यैव तन्निरूपितप्रकारताया इव तदन्वयिनिरूपितप्रकारताया अपि सम्भवेन तथात्वोपपत्ते। अवच्छेदकताख्यविषयतावत्त्वमात्रेणैव वा विशेषणत्वव्यवहारस्योपलक्षणत्वव्यवहारवदुपपत्तेश्च। 'रक्तत्वविशिष्टदण्डवन्त जानामि' इत्यनुव्यवसायेन व्यवसाये रक्तत्वविषयकत्वावगाहनात्तदवश्य स्वीकार्यमिति चेदिहापि 'रक्तत्वाऽश्रयदण्डवन्त पुरुष जानामि, तदभिन्नमिम जानामि' 'प्रकृष्टप्रकाशवन्तं चन्द्र जानामि' इत्यनुभवात्तथात्व केन वारयितु शक्यम्। विशिष्टोपलक्षितप्रतीत्योर्वैलक्षण्य तु प्रागुक्तमेवेति न काऽप्यनुपपत्तिः।

[1] अतित्व इति पाठान्तरम्।

(द्वि द्यु) अपि चैतन्मतेऽखण्डार्थकस्थलीयबोधस्य स्वरूपमात्रावगाहित्वं प्राचीनैरिवाङ्गीकृतमेव। परं तन्निष्ठविषयतायां ज्ञानान्तरीयविषयतानिरूपितत्वद्वयमप्यधिकं कल्प्यम्। तस्य प्रयोजनं तु न दृश्यते। प्रकृष्टप्रकाशश्चन्द्र इति लक्षणवाक्यजन्यबोधस्य कलङ्की चन्द्र इति लक्षणवाक्यजन्यबोधावैलक्षण्ये तन्निवर्तनीयसंशयनिवर्तकत्वापत्तिः। अत एतदङ्गीकार्यमिति न युक्तम्। तत्तल्लक्षणज्ञानद्वारकबोधे शक्तिविशेषस्यैव कल्पनयोपपत्तेः। त्वया च बोधे शक्तिरेका विषयतायाञ्च निरूपितत्वद्वयमपि कल्पनीयमिति महागौरवम्। न च ज्ञानस्य शक्तिमत्त्वेन प्रतिबन्धकत्वं न कल्प्यते। किन्तु तादृशविषयताऽश्रयत्वेनैव। तथा च ज्ञाने शक्त्यकल्पनान्न गौरवावकाश इति वाच्यम्। तथाऽपि ज्ञाने एकशक्तिकल्पनेनैवोपपत्तौ विषयताया निरूपितत्वद्वयकल्पनाधिक्याद्गौरवमेव।

किञ्चोक्तविषयतावत्त्वेन प्रतिबन्धकत्वे विषयतात्रयस्य विनिगमनाविरहान्मुख्यपदार्थतया निवेशे तदाश्रयज्ञानव्यक्तित्रयस्यैव पृथक् प्रतिबन्धकत्वापत्तिरिति महागौरवम्। ज्ञानत्रयमेलनायोगात्पूर्वज्ञान एव धर्मद्वयभानाङ्गीकारे अन्यतरस्यैव धर्मितावच्छेदकत्वे विनिगमकाभावात्कस्यापि धर्मितावच्छेदकत्वाभावे घट इति ज्ञाने क्लृप्तत्वात्पूर्वज्ञानविषयत्वबलात्प्रकारतामात्रस्य प्राप्त्या निर्धर्मितावच्छेदकत्वात्प्रतिबन्धानुपपत्तिश्च। ज्ञानद्वयस्यैव रूपभेदात्प्रतिबन्धकत्वद्वयं तु दुर्वारमेव। द्वितीयज्ञानद्वितीयक्षणे प्रथमज्ञाननाशे तृतीयक्षणे प्रतिबद्ध्योत्पत्तिर्ज्ञानद्वयप्रतिबन्धकतापक्षे अवश्यमङ्गीकर्तव्येत्याद्यनुसन्धेयम्। त्वदुक्तरीतौ सम्बन्धभेदनिबन्धनदोषवारणाय सम्बन्धविषयकत्वस्याप्यवश्यवक्तव्यतयाऽखण्डार्थताहानिश्चेत्यादिदूषणानि बहुतरमूहनीयानि इति न किञ्चिदेतत्। एवमेतानि सर्वाणि दूषणानि सत्यज्ञानादिवाक्यस्थले तत्त्वमसीत्यादिस्थलेऽप्यविशिष्टानि।

एवं 'अक्षरधियाम्' इत्याद्युदाहरणपूर्वकं ब्रह्मणि सर्वव्यावृत्तिबोधनाय गुणोपसंहारकथनमप्यशुद्धम्। सर्वव्यावृत्तीनां केनाप्यसर्वज्ञेन ज्ञातुमशक्यतया द्वाराभावेन कस्यापि ब्रह्मज्ञानानुदयप्रसङ्गात्। सर्वज्ञस्य तु योगबलादेव सर्वज्ञानवत् ब्रह्मज्ञानसम्भवेन तदीयशाब्दबोधस्य व्यावृत्तिद्वारकत्वे बीजाभावात्। बाध्यमेदज्ञानस्यैकस्यैवाप्रामाण्यशङ्कानिवृत्त्युपयुक्तत्वेनापेक्षितत्वस्येतरव्यावृत्तिज्ञानस्यानुपयुक्तत्वस्याप्युक्तत्वाच्च। नेति नेति इत्येतद्वाक्यं विना सर्वव्यावृत्तिबोधकस्येतरस्याभावेन तदेकोपसंहारेणैव सर्वसिद्धौ सत्यज्ञानादिवाक्यानां सर्वेषां वैयर्थ्याच्च। एवं व्यावृत्तीनां सत्यत्वे तद्वत्त्वेनैव ब्रह्मणोऽखण्डत्वभङ्गः। तेषां ब्रह्मस्वरूपत्वेऽप्याधाराधेयभावाभ्युपगमात्। अन्यथा ब्रह्मणि व्यावृत्तिर्जीवभेदाभाव इत्यादेर्वाङ्मात्रत्वापातात्। मिथ्यात्वे त्वागमस्याप्रामाण्यम्। व्यावहारिकप्रामाण्यमित्यादिप्रलापस्त्वपाकृत एव पूर्वम्।

न च सफलत्वाद्याकरणवत् भ्रमजनकत्वेऽपि प्रामाण्यम्। सिद्धान्ते मन्त्राणामिव ब्रह्मबुद्धौ व्यक्तिक्रममादायैव सर्वस्योपपादनेन तस्य भ्रमं प्रत्यजनकत्वात्। मतान्तररीत्याऽपि अनुसन्धानविशेषविषयत्वस्य साधुत्वव्याप्यतायाः एव व्याकरणप्रतिपाद्यतया तदंशे तस्य भ्रमहेतुत्वाभावात्। न च भ्रमात्मकानुसन्धानविधानादप्रा-

(द्वि.द्यु) माण्यमिति युक्तम्। निरर्थकवर्णावलीरूपमन्त्रविशेषस्येष्टसाधनतया जपादिविधायकवाक्यवत् विग्रहवद्देवतानङ्गीकारपक्षे इन्द्रायेति चतुर्थ्यन्तमन्त्रस्यैव वज्रहस्तत्वादिनाऽनुसन्धानविधायकशास्त्रवच्च तत्प्रामाण्योपपत्ते.।

न च तर्हि रुद्ररोदनाद्यर्थवादवाक्यवत् विषं भुंक्ष्वेति वाक्यवच्च भ्रमजनकत्वेऽपि फलीभूतबोधस्य प्रामाण्यात्प्रामाण्यमिति वाच्यम्। पूर्वमितरमोहनादिकारणाद्यनुसारेणाचिन्त्यशक्तिमद्भिर्देवै· कृतस्यैव रोदनवपोत्खननादेरेवार्थवादवाक्यप्रतिपादितत्वेन भ्रमजनकत्वाभावात्। तदशे भ्रमत्वे रजताप्राशस्त्यादौ हेत्वसिद्ध्या तदसिद्ध्याप[त्ते]।

'नाविद्यमान ब्रुवते वेदा ध्यातुं न वैदिका·।
अविद्यमान ध्यायन्तो सर्वे यान्त्यधर तम॥
तस्मात्सत्यार्थता ब्रूयाद्वेदानामपि सर्वश·॥'

इत्यादिना वेदस्य सर्वत्र सत्यार्थकताया एवोक्तत्वाच्च।

'विष भुक्ष्व' इति वाक्यस्थले तु वक्तुर्न प्रथमतो 'विषभोजनमिष्टसाधनम्' इत्याकारबोधे तात्पर्यम्। प्रयोजनाभावात्। अपि तु 'द्विषदन्न न भोक्तव्यम्' इति बोध एव विषादिपदलक्षणया यथासम्भव भवत्वित्यत्र। 'गङ्गाया घोष' इत्यत्र तीरपदप्रयोग विहाय गङ्गापदप्रयोगेण घोषे पावनत्वादिबोध इव विषपदप्रयोगमहिम्ना तत्सादृश्यादिना द्विषदन्नस्य महानिष्टत्वविषयकबोधं पाश्चात्यो भवत्विति तात्पर्येण लाक्षणिकप्रयोगः। कस्यचित् व्युत्पन्नस्य प्रथमतो विषभोजने इष्टसाधनत्वबोधोदयेऽपि वक्तृतात्पर्यविषयत्वाभावादेव न वाक्यस्य तज्जनकत्वप्रसक्तिः। अन्यथा लक्षणास्थले सर्वत्रानुपपन्नार्थबोधस्य द्वारत्वापातेन सर्वत्रापि बोधद्वयतात्पर्यस्याप्रामाणिकस्य कल्पनापातः। क्वचिदेतादृशवाक्यं शब्दविधया प्रामाण्यरहित सत् कोपानुमानादिद्वारा फलीभूतबोधोपयोगीति लिङ्गविधयैव प्रमाणम्। उक्तमेतत्कर्मनिर्णये आचार्यैः पक्षद्वयमपि। तस्मात्सत्यत्वज्ञानाद्यवान्तरबोधे व्यावृत्तिबोधे च श्रुतेस्तात्पर्येऽप्रामाण्य दुर्वारमेव।

यदपि सत्यत्वोक्त्याऽसत्यव्यावृत्ति सिद्ध्यतीति तदप्यशुद्धम्। सत्यताया उपहितब्रह्मण्यपि सत्त्वेन तस्यानृततया तद्व्यावर्तकत्वायोगात्। न च तदुपलक्षितस्वरूपस्यैव लक्षणत्वम्। तस्य निर्विशेषे स्वस्मिन् वृत्तित्वायोगात् स्वस्वेतरव्यावृत्तत्वेन ज्ञानं विना पक्षे साध्यव्याप्यत्वेन निश्चयायोगाच्च तन्नियामकत्वायोगात् तदर्थं स्वस्वेतरव्यावृत्तत्वस्य निर्विशेषे ग्रहापेक्षायामात्माश्रयापातेन च किञ्चिदुपहितरूपेणैव तथात्वस्य वाच्यतया स्वरूपलक्षणत्वायोगस्योक्तत्वात्। व्यावर्तकसंसर्गस्य स्वासमानसत्ताकत्वे स्वस्मिन् व्यावृत्तेरपि स्वसमानसत्ताकाया असिद्ध्यापत्ते। अन्यथा शुक्त्यसमसत्ताकरजतत्वसंसर्गेण सेत्स्यमानाया अरजतव्यावृत्तेरपि शुक्तिसमसत्ताकाया सिद्ध्यापातात्। न चाऽरोपितेन वर्णदैर्घ्येण तदधिकसत्ताकार्थसिद्धिर्दृष्टेति वाच्यम्। दैर्घ्यादीना ध्वनिविशेष-

(द्वै धु) व्यञ्जकानां वर्णेष्वनारोपितत्वात्। स्वप्नस्थले कामिनीज्ञानजन्यधातूत्सर्गाधीनसुखनिष्ठेतरव्यावृत्तिं प्रत्यपि जन्यतासम्बन्धेन धातूत्सर्गस्यैव साधकत्वेन तत्राप्युक्तनियमाक्षते। क्वचित्तथात्वमपि वर्तेत इत्याग्रहकरणेऽपि उक्तव्यावृत्तेरसत्यधर्ममूलकत्वादसत्त्वं क्वाचित्कस्थलवत्सत्त्वमिति सन्देहनिरासाभावापत्ते। न चेष्टापत्ति.। बाध्यव्यावृत्तिसन्देहस्य बाध्यसन्देह एव पर्यवसन्नत्वाद्ब्रह्मण्यबाध्यत्वनिर्णयाभावात्स्वरूपमात्रविषयकानावृतप्रामाण्यकज्ञानानुदयप्रसङ्गेनोक्तलक्षणवाक्यवैयर्थ्यात्।

एतेन ब्रह्मणि प्रतीयमाना व्यावृत्तिर्मिथ्यैवास्त्विति पक्षोऽपि परास्त.। मिथ्यात्वग्रहे बाध्यत्वनिश्चयस्योक्तरीत्या सन्देहस्य वाऽनपायात्। अधिकं मिथ्यात्वखण्डनावसरे निरस्तम्। ब्रह्मसंसृष्टव्यावृत्तीनां ब्रह्मरूपत्वाभ्युपगमेन सत्यत्वेऽप्याधाराधेयभावसत्यत्वेऽखण्डार्थहानि। असत्यत्वे व्यावृत्तिमिथ्यात्वपक्षाविशेष एव। एव लक्ष्या[1] समानधर्मोपदेशेनासमानसत्ताकव्यावृत्तिबोधनद्वारा स्वरूपबोधजननेनोपदेशकवाक्यप्रामाण्यञ्चेत्स्वकल्पितमेव कञ्चिद्धर्ममुक्त्वा षोडशकलपुरुषबोधनेऽपि वाक्यप्रामाण्याहाने 'तस्मान्नार्हाम्यनृत वक्तुम्' इत्यादिना **भारद्वाज**स्यानृतभयेन **हिरण्यनाभ**प्रत्याख्यानानुपपत्तिश्चेति। एवमेव ज्ञानादिस्थलेऽप्यूह्यम्।

एव **नैयायिकै**रीश्वरज्ञानस्य सत्यज्ञानानन्तरूपत्वस्याङ्गीकृतत्वाद्विशेषणत्रयोपादानेऽपि स्वाभिमतब्रह्मासिद्धि। तद्व्यावर्तकविशेषणोपादानेऽपि अन्येन केनचित्तथैव कस्यचिज्जडस्योत्प्रेक्षाया तद्व्यावृत्तब्रह्मसिद्धये पुनर्विशेषणान्तरोपादानपरम्परापत्ते। वस्तुत सत्यत्वादीनां ब्रह्मण्येव विद्यमानत्वापत्तेर्न[2] वस्तुतो ब्रह्मस्वरूपमात्रविषयकज्ञानमेव जायत इत्यङ्गीकारे तावन्मात्रेण स्वरूपमात्रविषयकाज्ञाननिवृत्तिसम्भवादन्योपादावैयर्थ्यमेव।

किञ्च सत्यपदशक्तिग्रहो लोकाना यत्र जायते स एव सत्यपदार्थ। स च सत्तादात्म्यवत्येव जायते। यथोक्त **संक्षेपशारीरके**

> आकाशादौ सत्यता काचिदेका प्रत्यङ्मात्रे सत्यता काचिदन्या।
> तत्सम्पर्कात्सत्यता तत्र चान्या व्युत्पन्नोऽय सत्यशब्दश्च तत्र ॥' इति।

**अम्बरादौ काचिदेका** स्वकालाबाध्यत्वरूपा **सत्यता**। **प्रत्यङ्मात्रे** ब्रह्ममात्रे **काचिदन्या** त्रिकालाबाध्यत्वरूपा। **तत्सम्पर्कात्** त्रिकालाबाध्यवस्तुतादात्म्यात्। **तत्र** आकाशादौ। **अन्या** तादृशसत्तादात्म्यवत्त्वरूपा। **तत्र** तादृशसत्तादात्म्यवत्त्वावच्छिन्ने। घट. सन्नित्यादिव्यवहारेण लोकाना त्रिकालाबाध्यतादात्म्यवत्त्वेनैव घटादीना प्रतीते.। प्रथमद्वितीयसत्यपदार्थादरण तु 'सत्यस्य सत्य, सत्य चानृतञ्च तत्सत्यमभवत्' इति श्रौतप्रयोगमात्रनिर्वाहाय। तच्च लक्षणयैव सम्भवति। अनेकशक्तिकल्पने गौरवात्। तथा च सत्यपदस्य ब्रह्मणि शक्तिर्न घटते। अत सत्तादात्म्यस्य ब्रह्मण्यभावात्। तत्र सत्यपदस्य विशिष्टबोधग्रहसाहतशक्त्यैव बोध इत्येतदयुक्तम्। किञ्च विशिष्टशक्त-

---

[1] समानसत्ताकधर्मो इति पाठेन भाव्यमिति भाति।

[2] ते धर्मा ज्ञायन्ते। किन्तु वस्तुतो इति पाठेन भाव्यमिति भाति।

(द्वै यु) पदस्य विशिष्टबाधग्रहसहकृतविशिष्टशक्त्यैवैकदेशबोधकत्वे घटो जातिमानिति वाक्यं विशिष्टधर्मावच्छिन्न-बाधग्रहमात्रसहकारवशाच्छक्तिभ्रमं लक्षणाग्रहं च विनाऽनवच्छिन्नद्रव्यत्वप्रकारकबोधं जनयेत्। इष्टापत्तौ च प्रश्नोत्तरवैयधिकरण्यादिरूपत्वदीयदूषणादावपीष्टापत्तिसम्भवेन न काऽपि व्यवस्था सिद्ध्येत्। अधिकं **शास्त्रारम्भ-समर्थनाख्यग्रन्थखण्डनावसरे** प्रपञ्चयिष्यामः।

किञ्च कश्चन्द्र इत्यत्र स्वरूपप्रश्नस्य कण्ठोक्तत्वात्तत्रोत्तरवाक्यमपि स्वरूपपरमस्तु। सत्यज्ञानादिवाक्यस्थले उत्तरस्यानाकाङ्क्षितत्वेनानुपादेयत्वपरिहाराय कस्मिंश्चित्प्रश्नवाक्येऽध्याहर्तव्ये कीदृशं ब्रह्मेत्येव प्रश्नवाक्यमेवाध्या-ह्रियताम्। उत्तरवाक्यस्य तु मुख्यार्थकत्वमेव सिद्ध्यतु। किं भागत्यागलक्षणया। न चैवम् 'एकधैवानुद्रष्टव्यम्' इति श्रुत्याऽखण्डस्वरूपविषयकज्ञानस्यैव मोक्षसाधनत्वावगमात् तादृशमेव प्रश्नादिकमध्याहृत्योत्तरं वाक्यं नेयमिति वाच्यम्। एकधैवेति धात्वप्रत्ययबलेन सप्रकारकज्ञानस्यैवावगमात्। न चानेकगुणप्रकारकज्ञानस्य मोक्षकारणत्व-मते एकप्रकारेणैव ज्ञानस्य मोक्षकारणत्वोक्तिविरोधापत्तिर्दुर्वारैव। मन्मते च वैशिष्ट्यं तृतीयार्थभूतं दर्शनं एवा-न्वेति। प्रकारश्च धर्मः। ज्ञानवृत्तिधर्मश्च विषयतासम्बन्धेन विषय एवेति एकमात्रविषयावच्छिन्नत्वं ज्ञाने लभ्यत इति स्वरूपमात्रविषयकत्वमेव पर्यवस्यतीति वाच्यम्। ज्ञाने ज्ञानत्वरूपधर्मस्यावर्जनीयतया त्वदुक्तार्थस्याप्यसम्भा-वितत्वापत्तेः। विषयितासम्बन्धेन धर्म एवात्र विवक्षित इत्यत्र नियामकाभावात्। एकमेव द्रष्टव्यमित्युक्त्यैव सामञ्जस्ये धात्वप्रत्ययानर्थक्यञ्च। तस्याभिमतार्थविरोधित्वात्। अतः 'चैत्र पूर्वस्मिन् वत्सरे इदानीमप्येकप्रका-रोपेत एव वर्तते' इत्यादीनां प्रचुरव्यवहाराणां विद्यमानत्वात्तद्रीत्या पूर्वापरकालेष्वविरुद्धप्रकारोपेतमेव द्रष्टव्यम्। न त्विदानीं सगुणं मायाऽपगमे निर्गुणमित्यादिरूपेणेति तदर्थोपपत्त्या तद्वाक्यस्य सावकाशत्वात्। अस्मदुक्तार्थस्यैव बहुप्रयोगानुसारेण स्वरसत्वाच्च। त्वदुक्तार्थस्य त्वन्यत्राक्लृप्तस्यैव कल्प्यतया हेयत्वात्। उक्ताभिप्रायकव्यवहारस्य कुत्राप्यदर्शनात्। ब्रह्मविदाप्नोति परं इत्युपक्रमवाक्यस्यासञ्जातविरोधित्वेन मुख्यार्थकत्वे बाधकाभावाद्विशिष्टबोध एव पदानां शक्तेरभ्युपगमाच्च ब्रह्मत्वविशिष्टविषयकज्ञानस्यैव मोक्षसाधनत्वावगमा-त्तदनुसारेण पूर्णत्वरूपब्रह्मत्वप्रयोजकधर्मविशिष्ट एव प्रश्नस्य उचितत्वेन मन्मतरीत्या सत्यादिपदैः जगत्स्रष्टृत्वादि-प्रतिपादनेन तस्योत्तररूपताया एव युक्तत्वाच्च। सगुणज्ञानस्यैव मोक्षसाधनत्वं तु प्रागेव व्यवस्थापितम्। किञ्च सर्ववेदान्तेषु सगुणमेव प्रतिपादितमित्यप्रसिद्धनिर्गुणवस्तुपरत्वं प्रश्नोत्तरादीनामयुक्तम्।

ननु कथमेतत् 'केवलो निर्गुणश्च' 'ततो यदुत्तरतरं तदरूपमनामयं य एतद्विदुरमृतास्ते भवन्ति' 'यत्त-दद्रेश्यमगोत्रमग्राह्यम्' इत्यादिश्रुतिः।

'एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः॥' इत्यादिगीतावाक्यञ्च
'प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तत् ज्ञानं ब्रह्मसञ्ज्ञितम्॥' इत्यादि

(द्वै द्यु) 'न तद्योगयुजा शक्यं नृप चिन्तयितु यत. ।
अत स्थूल हरे रूप चिन्त्यम् ' । इति च
'द्वे विद्ये वेदितव्ये' इति चाथर्वणी श्रुति
'परया त्वक्षरप्राप्ति. ऋग्वेदादिमया परा ।
एतदव्यक्तमजरमचिन्त्यमजमव्ययम् ॥
अनिर्देश्यमरूपञ्च पाणिपादाद्यसयुतम् ।
विभुं सर्वगत नित्य भूतयोनिमकारणम् ॥
व्याप्यव्याप्यमत सर्वं तद्वै पश्यन्ति सूरय ॥' इति च विष्णुपुराणम् ।

'सञ्चिन्तयेद्भगवतश्चरणारविन्दम्' इति सगुणभजनमुक्त्वा
'भक्त्या ह्यसङ्गः सदसत्यनात्मनि स्यान्निर्गुणे ब्रह्मणि चाञ्जसा रतिः ।'

इत्यादिभागवतमित्येवमादीनि निर्गुणं स्पष्टमवगमयन्तीति चेन्न । निर्गुणत्वाद्युक्तेरपाणिपादत्वाद्युक्तेश्च सत्त्वादिगुणराहित्यप्राकृतपाणिपादादिराहित्यपरत्वस्य पूर्वमुपपादितत्वात् । स्वर्गे मणिखचितभूप्रदेशोद्यानादिसत्त्वस्य पुराणादिसिद्धत्वात्तत्रत्यानामपि देवानामस्मदादिवदध्यक्षसिद्धभूसम्बन्धाभावेन भूसम्बन्धराहित्यस्य पुराणेषूक्तेरिवैतदुक्तेरपि युक्तत्वाच्च । अन्यथाऽरूपमनामयमिति ब्रह्मणोऽरूपशब्दितस्वरूपाभावोक्त्या ब्रह्मणो नि स्वरूपत्वापत्ते. । त्वदुक्तविष्णुपुराण एवाकारणत्वभूतकारणत्वयोर्व्याप्यत्वाव्याप्यत्वयोश्चैकस्मिन्नेवोक्त्या स्वव्याहतिप्रसङ्गात् । एतैरपि वाक्यै. किञ्चिद्धर्मपुरस्कारेणैव निर्दिष्टत्वेन त्वदभिमतनिर्गुणवार्तया अप्ययोगाच्च । न तद्योगेत्यत्र तु स्थूलसूक्ष्मरूपयोर्भेदो नोच्यते । परमात्मात्यन्ताभिन्नानामपि रूपाणा विशेषशक्त्याऽधिकारिविशेषैर्ज्ञेयत्वाज्ञेयत्वादिकमुच्यते । स्थूलपदन्तु मनुष्यदृष्टिगोचररामकृष्णाद्यवताररूपपरम् । अत एव प्रत्यस्तमितभेदमित्यादिना स्वगतभेदराहित्य विष्णुपुराणस्थभागान्तरे प्रतिपादितम् । अन्यथा

'स्थूलसूक्ष्मविशेषोऽत्र न क्वचित्परमेश्वरे ।
सर्वत्रैकप्रकारोऽसौ सर्वरूपेष्वजो यत. ॥' इति गारुडवाक्यस्य
'कृष्णरामादिरूपाणि परिपूर्णानि सर्वदा ।
न चाणुमात्र भिन्नानि तथाऽप्यस्मान्विमोहसि ॥'

इत्यादिवाक्यान्तराणां च विरोधापत्ते. । गीतावाक्योदाहरणं त्वशुद्धम् । तत्रत्याक्षरपदस्य प्रकृतिपरत्वेन त्वदभिमतनिर्गुणपरत्वाभावात् । तथात्वे उत्तरसन्दर्भे तदुपासनानिन्दापूर्वकं स्वोपासनाप्राशस्त्यपरत्वप्रतीतिविरोधात् । अधिकं सगुणत्वविचार एव प्रपञ्चितम् ।

(द्वै द्यु) एवं 'योऽयं विज्ञानमय' इत्यादिजीवस्वरूपप्रतिपादकवाक्यस्याखण्डार्थत्वमपि न सङ्गच्छते। 'कतम. स आत्मेति' बृहदारण्यके 'कतर स आत्मा' इत्यैतरेयके प्रश्नवाक्योपलम्भात् तस्य च धर्मपरत्वस्यैव वक्तव्यत्वात्। अन्यथा 'बहूना जातिपरिप्रश्ने डतमच् द्वयोरेकतरनिर्धारणे डतरच्' इति सूत्राभ्या जातिनिर्धारकप्रश्नविषय एव डतमडतरयोर्विधानात् तस्यासाधुत्वापत्ते। तथा चोत्तरवाक्यस्य स्वरूपमात्रपरत्वे प्रश्नोत्तरयोर्वैयधिकरण्यापत्ते- र्विशिष्टपरत्वस्यैव वक्तव्यत्वात्।

ननु 'कतर: स आत्मा' इत्यैतरेयकवाक्यपूर्वभागस्थवाक्ये 'कोऽयमात्मा' इति स्वरूपमात्रप्रश्नसत्त्वात्कतर इत्यस्य जघन्यस्य स्वरूपबोधद्वारीभूतार्थे अवान्तरतात्पर्यस्य सत्त्वेऽपि परमतात्पर्यं न स्वीक्रियते। अत एवोत्तर वाक्ये 'येन वा पश्यति येन वा शृणोति' इत्यादिना दर्शनादिक येन चिन्मात्ररूपेण घटित तत् आत्मरूपमिति निर्णीतम्। न हि दर्शनादिक किञ्चिद्धर्मविशिष्टात्मघटित येन तत्प्रतिपाद्यत इति युक्त स्यात्। एव कतम: स आत्मेति वाक्यस्य 'आत्मैवास्य ज्योतिर्भवत्यात्मनैवाऽय ज्योतिषाऽस्ते' इत्यादि पूर्ववाक्योक्तस्वप्ने ज्योति.शब्देन व्यवहारप्रयोजकत्वेन चिन्मात्ररूपस्योक्तत्वेन मनआदावात्मस्वरूपत्वविप्रतिपत्तितत्संशयनिरासायोक्तस्य कतम आत्मेत्यादेर्व्यवहारप्रयोजकचिन्मात्रविषयत्वम्। न हि जातिविशिष्टा चिद्व्यवहारप्रयोजिका। किन्त्वसत्त्वापा- दकाज्ञानाभावोपहिता। अत एव 'स एष नेति नेत्यात्मा' 'स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्यय पुरुष आनन्दोऽजर.' इति शुद्धात्मानमुक्त्वा 'अभयं वै ब्रह्म भवति य एव वेद' इत्युक्तम्। एव 'केनेषितं पतति प्रेषित मनश्चक्षु श्रोत्रं क उ देवो युनक्ति' इत्यादीनामात्मस्वरूपपरत्वात्तदनुरोधेनात्र प्रत्यययोरविवक्षि- तार्थकत्वमेवेति चेन्न।

किंशब्दप्रयोजकबुभुत्साया अपि स्वरूपमात्रविषयकत्वस्य निराकृतत्वेन तदनुरोधादेतेषामविवक्षितार्थकत्व- कल्पनानौचित्यात्। अविवक्षितार्थकत्वे तत्प्रयोगस्यैवानर्थक्यप्रसङ्गात्। शुद्धस्वरूपस्य त्वदभिमतस्य दर्शनादि- घटकत्वस्य व्यवहारप्रयोजकत्वस्याप्यसम्भवेनाविद्याद्युपहितरूपेणैव वक्तव्यतया मनोजीवयोरन्यतरनिर्धारकजीवत्व- धर्मपुरस्कारेण प्रथमवाक्ये प्रश्नविषयत्वसम्भवेन प्रत्ययानर्थक्योत्त्यमङ्गते। तादृशाज्ञानाभावोपहितचित्त्येव वृत्त्युपहितचिति ज्ञानत्वादिजातेरिव कस्याश्चिज्जाते सम्भवेन जातिपरिप्रश्नत्वसम्भवेन तत्रापि प्रत्ययानर्थक्याद- रणमयुक्तमेव। उत्तरवाक्येऽप्यसङ्गत्वादिधर्माणामुक्तत्वात्पुरुषत्वादिधर्माणामप्युक्तत्वेनोपष्टम्भोऽप्ययुक्त.। एत- द्वाक्ययो. परीत्या जीवपरत्वमभ्युपगम्येदमुदितम्। वस्तुत. अनयो सिद्धान्ते ईश्वरपरत्वमेवोपवर्णितम्। तदुप वर्णनञ्चेदानीमत्यन्तमनाकाङ्क्षितत्वाद्विस्तरभयाच्च न क्रियते।

एव सर्वत्र किंशब्दस्य स्वरूपप्रश्नमात्रबोधकत्वे कर्मकाण्डसगुणवाक्यस्वर्गदेवतादिप्रतिपादकवेदवाक्याना- मौषधादिप्रतिपादकोपवेदवाक्यानाञ्च श्रोतृबुभुत्सा विना प्रवृत्त्ययोगाच्छ्रोतुश्च तत्स्वरूपज्ञानसत्त्वेन तन्मूलक- प्रश्नस्यैव प्रसक्त्या तदनुसारेणाखण्डकर्माखण्डौषधाखण्डस्वर्गादीनामेव बोध. स्यात्। अतो विशिष्टार्थपरवाक्यस्यैव विलोपप्रसङ्ग.।

(द्वै.द्यु) न च तत्र बाधकाभावात्प्रकृष्टप्रकाशादिवद्विशेषणानां मानान्तराप्राप्तत्वाच्च वाक्यस्य विशिष्टार्थपरत्वसम्भवात्तदनुगुणमेव प्रश्नवाक्य कल्पनीयमिति वाच्यम् । इहापि सत्यज्ञानादीना प्रमाणान्तराप्राप्तत्वाद्बाधका भावाच्च तत्र [1]तात्पर्यासम्भवेन तादृशप्रश्नवाक्यस्यैव कल्पयितुमुचितत्वात् । न च 'एकधैवानुद्रष्टव्यम्' इति शुद्धज्ञानस्य मोक्षहेतुत्वश्रवणेन विशिष्टज्ञानस्य निष्फलत्वेन तत्र तात्पर्यायोगादेकमेवाद्वितीयमित्यादिधर्मनिषेधक श्रुतिबाधाच्च न तत्र तात्पर्यमिति वाच्यम् । श्रुतीना त्वदुक्तार्थस्य निरस्तत्वात् । ब्रह्मस्वरूपमोक्षसाधनज्ञानब्रह्मप्राप्तिस्वरूपफलानां पूर्ववाक्योक्ताना स्वरूपजिज्ञासाया निरूपणार्थं प्रवृत्तमन्त्रवर्णे गुहायामित्यादिना गुहावृत्तित्वादिधर्मोपादानेन तज्ज्ञानस्यैव मोक्षहेतुत्वोक्त्याऽखण्डविषयकज्ञानस्य मोक्षसाधनत्वपरतायास्तच्छ्रुतेर्वक्तुमशक्यत्वाच्च । अन्यथा परिच्छेदराहित्यस्यानन्तपदावान्तरतात्पर्यबलेन सिद्धौ जीवाभेदस्य ब्रह्मणि सिद्ध्या तज्ज्ञापनरूपप्रयोजनाभावेन व्यावर्त्यब्रह्मान्तराभावेन च तद्विशेषणोपादानानर्थक्यस्यैव प्राप्ते. ।

अपि चाजिज्ञासितत्वे ज्ञाननिरूपणस्यानाकाङ्क्षिताभिधानत्वप्राप्त्या तत्स्वरूपजिज्ञासाया आवश्यकत्वेन ज्ञानस्वरूपनिरूपणपरेणैतद्वाक्येनाखण्डस्यैव ज्ञानस्य मोक्षसाधनत्वावगमात् ब्रह्मविषयकत्वादिमत्त्वे तस्याखण्डत्वहानिप्राप्त्या तदन्यथाऽनुपपत्त्या निर्विषयकमेव ज्ञान मोक्षसाधन सिद्ध्यतु । तथा चैकधेति श्रुति तद्बलान्न स्वार्थपरा स्यात । एतत्सन्निधौ मोक्षरूपफलाश्रवणेन विधिप्रत्ययस्य च तदतिरिक्तेष्टसाधनताबोधकत्वेन दुर्बलत्वात् । न च ब्रह्मविषयकज्ञानस्यैव पूर्वं प्रसक्ततया तस्य निर्विषयकत्व व्याहतमिति वाच्यम् । तर्हि ब्रह्मपदेन ब्रह्मत्वादिधर्मपुरस्कारेणैव प्रसक्ततया तस्यापि निर्धर्मकत्वादिकथनमपि कुतो न व्याहतम् ।

न च समस्तवस्तुसंसर्गाभावोपलक्षितस्वरूपत्वमेवोत्कर्ष. । स एव ब्रह्मत्वमिति वाच्यम् । तर्हि ज्ञानेन सह ब्रह्मण. विषयविषयीभावससर्गस्याप्ययोगेन ज्ञाने तद्विषयकत्वस्यापि वक्तुमशक्यतया ब्रह्मेतराविषयकत्वमेव ज्ञाने ब्रह्मज्ञानत्वं स्यात् । तन्निर्वाहाय ब्रह्मवित्पदस्यापि तादृशज्ञान एव लक्षणापत्त्या ब्रह्मणि तात्पर्याभावादुत्तरवाक्यानामपि तत्र तात्पर्याभावप्राप्त्या निर्विषयकज्ञानेन तादृशमेवाज्ञान निवर्तत इति प्राप्त्या ज्ञानविषयतया ब्रह्मणोऽङ्गीकारेऽपि प्रयोजनाभावेन शून्यवाद एव तात्पर्यपर्यवसानापत्ते । तस्माज्ज्ञानमोक्षस्वरूपजिज्ञासायामप्यधिकोक्तिवत् ब्रह्मस्वरूपजिज्ञासायामप्यधिकोक्तिसम्भवादधिकार्थबोधनाभावे प्रश्नप्रतिवचनयोः साम्यापातेनाज्ञाननिवर्तकत्वायोगाच्छक्तिविशेषस्योत्तरज्ञानेऽङ्गीकारे वायुसंयोगादिकमादाय विनिगमकाभावान्मानाभावाच्च तदसम्भवाच्च विशिष्टपरत्वमेव सत्यज्ञानादिवाक्याना युक्तम् ।

यदप्युक्तं 'विशिष्टार्थपरवाक्याभावापादन न युक्तम् । लौकिकफलसाधनाज्ञादीना वाक्यतात्पर्याविषयत्वेऽपि प्रमाणान्तरेण सिद्धिसम्भवेऽपि सोमसवनाश्वत्थरमणीयसरोरण्यार्णवादिनानाविशेषणविशिष्टसत्यलोकादेस्त्रैलोक्यशरीरविशिष्टसगुणसायुज्यादेश्च फलस्य तन्निरूपितसाधनताविशिष्टध्यानादेश्च तद्विषयसगुणब्रह्मणो मनो

[1] तात्पर्यसम्भवेन इति पाठेन भाव्यमिति भाति ।

(द्वै. द्यु ) मयत्वादिनानागुणविशिष्टस्य 'यन्न दुःखेन सम्भिन्नम्' इत्याद्युक्तलक्षणस्वर्गस्य तन्निरूपितसाधनतया विशिष्टयागादेश्चागमैकसमधिगम्यतया मानान्तरावेद्यतया तत्सिद्ध्यर्थं विशिष्टार्थतात्पर्यस्यावश्यकत्वात्' इति ।

तन्न । तादृशवाक्यानामनाकाक्षायामेव प्रवृत्त्या विशिष्टार्थतात्पर्यकत्वे ब्रह्मवाक्यस्यापि तथैव सम्भवापत्तेरा- काक्षाया आवश्यकत्वे स्वरूपज्ञान विना तन्निष्ठधर्मजिज्ञासायोगात्स्वरूपमात्रजिज्ञासायामवश्यवक्तव्यायां तदर्थबोध नार्थं प्रवृत्तैतद्वाक्यै स्वरूपमत्रस्यावश्यं बोधनीयत्वप्राप्त्या तत्र तात्पर्ये आवश्यके द्वारीभूतार्थेऽपि तात्पर्यकल्पने मानाभावेन विशिष्टार्थासिद्धेस्त्वन्मते आपादनीयत्वादित्यलम् ।

**अभिहितान्वयवादनिराकरण** सुधादौ कृतम् । त्वन्मतेऽज्ञानासम्भवोऽपि वक्ष्यते । **कार्यान्वितशक्तिपक्षे** ज्ञानविधिशेषत्वमेव ब्रह्मवाक्यानामङ्गीकृत्याखण्डार्थकत्वस्य कथञ्चिदभ्युपगमोऽप्यसङ्गतः । उपासनाविधिशेषतया सगुणासिद्धिवत् ज्ञानविधिशेषत्वेन निर्गुणासिद्धिप्रसङ्गात् । उपासनाया अयाथार्थ्यवत् ज्ञानस्याप्ययथार्थत्वेऽपि तत्रेवात्रापि विधिसम्भवात् । न चायथार्थत्वे अज्ञाननिवर्तकत्वरूपफलजनकत्वायोगः । स्वाप्नशुक्तिसाक्षात्कारेण स्वप्ने तदारोपितरजताज्ञानहेत्वविद्यानिवृत्तिदर्शनात् । न च तत्र तिरोधानमेव नाज्ञाननिवृत्ति । जागरप्रबोधेनैव सर्वस्यापि निवृत्तिरिति वाच्यम् । तर्हि जाग्रद्रजतहेत्वज्ञानस्यापि शुक्तिज्ञानेन [1]तिरोधानमात्राङ्गीकारे ज्ञानस्याज्ञान निवर्तकत्वे समानविषयकत्वेनैव निवर्तकत्वमित्यादेरसिद्ध्या तद्बाधकाभावे श्रौतज्ञानस्यायथार्थस्यापि श्रुतिबला- देवाज्ञाननिवर्तकत्वसिद्धौ प्रमात्वस्यानुपयोगात् ।

अस्तु वा ब्रह्मणो ज्ञेयत्वाभावादिश्रुत्यनुग्रहाय विधेर्ज्ञाने सविषयकत्वांशेऽपि तात्पर्याभावः । तथा च निर्विषयकज्ञानस्य प्रमात्वमपि घटते । बाधितार्थविषयकत्वाभावस्यैव प्रामाण्यरूपत्वाभ्युपगमौचित्यात् । अनुभव- विरोधस्य निर्विकल्पकज्ञानाङ्गीकारेऽपि साम्यात् इत्यादीनि बहुतरदूषणान्यूहनीयानि । परमतस्यानन्तदोषदुष्ट ताया **आचार्यैरन्यत्र** बहुश उक्तत्वात् । पूर्वोक्तरीत्या प्रश्नोत्तरयोर्वैयधिकरण्यापत्तिरूपप्रतिकूलतर्के निरस्ते **न्यायामृतोक्तान्यखण्डार्थकत्वाभावसाधकान्यपि** सुस्थिराण्येवेत्यखण्डार्थत्वसाधकानुमानानां तद्बाधोऽपि सुस्थिर एवेति ।

**यदपि केनचिदर्वाचीनेनोक्तं** 'नन्वखण्डार्थत्व वेदान्तानामनुपपन्नम् । तद्धि संसर्गागोचरप्रमाजन- कत्वम् । तच्च न वाक्यस्य युक्तम् । तस्यैकपदार्थेऽपरपदार्थसंसर्गावगाहित्वात् । अन्यथा पदद्वयवैयर्थ्यापत्तेरिति चेदत्राहु । प्रतीतिस्तावद्विशिष्टवैशिष्ट्यावगाहिनी उपलक्षितवैशिष्ट्यावगाहिनी चेति द्विविधा । तत्राद्या विशेषणं विशेष्य तत्संसर्गञ्चावगाहते । अन्यथा विशेष्यान्वय्यन्वयित्वरूपविशेषणत्वस्यासम्भवप्रसङ्गात् । द्वितीया तूपलक्षि- णीभूतधर्मं नावगाहते । न चैवम् 'इदं द्रव्यम्' इति ज्ञानस्य द्रव्यत्वोपलक्षितावगाहिनो घटत्वाद्युपलक्षिताव- गाहित्वस्याप्यनपायात् 'अय घटो न वा' इति संशयविरोधित्वापत्तिरिति वाच्यम् । तटस्थस्यापि घटत्वादेर्द्रव्य-

---

[1] तिरोधानमात्राङ्गीकारेऽपि इति पाठेन भाव्यमिति भाति ।

(द्वै घु )निष्ठविषयताऽनिरूपकत्वाङ्गीकारेणातिप्रसङ्गवारणसम्भवात्। एवञ्च भेदसंसर्गकप्रत्ययस्थले विशेष्ये विशेषणवैशिष्ट्यभानस्यावश्यकत्वेऽपि सोऽयमित्याद्यत्यन्ताभेदस्थले धर्मिमात्रस्वरूपस्यैक्यस्य संसर्गतया भानकल्पने मानाभावात्तत्तेदन्तोभयनिरूपिततदाश्रयनिष्ठविषयताशालित्वमात्रमभ्युपेयते। तावन्मात्रेण चेदन्त्वोपलक्षिते तत्तोपलक्षित भेदग्रहविरोधित्वमप्रत्यूहम्। तथा चोक्तवाक्यगेवाखण्डार्थं प्रसिद्धम्। एतादृशशाब्दबोधे च विशिष्टपरत्वाभावनिश्चयसहकृता तदिदमादिपदजन्या तत्तादिप्रकारिका धीस्तदुपलक्षितोपस्थितिर्वा शाब्दबोधप्रयोजकसामान्यकारणजातसमवहिता प्रयोजिकेत्यादिक शास्त्रारम्भसमर्थने प्रपञ्चितम्। विशिष्टपरत्वाभावनिश्चय क्वचिदन्यथानुपपत्त्या क्वचिदन्यथा च। आद्या यथा सोऽयमित्यत्र। तत्र हि तदेतद्देशकालविशिष्टयोस्तदिदन्त्वाभ्यां परामर्शाद्विशिष्टबोधस्तावन्न सम्भवति। इतरसम्बन्धाभावात्। [1]विशिष्टातिरेकेण भिन्नकालीनविशेषणावच्छिन्नयोर्यौगपद्याभावेनाभेदस्य दूरोत्सारितत्वात्। तत्तेदन्त्वयोरेकस्योपलक्षणत्वमन्यस्य विशेषणत्वमित्यत्र विनिगमकाभावात्। द्वितीयेन यथा। यथा प्रकृष्टप्रकाशश्चन्द्र इत्यत्र। तत्र हि चन्द्रस्वरूपमात्रस्य पृष्टत्वात् तस्यैव प्रतिवक्तव्यतया विशेषणांशे तात्पर्याभावात्।

यत्तु 'सोऽयमित्यादौ नोक्तानुपपत्तिस्तच्छब्देन तद्देशकालसम्बन्धध्वंसवत. परामर्शात्' इति। तदसत्। उक्तध्वंसपरतच्छब्दादिघटितस्थले उक्तानुपपत्तिविरहेऽपि तद्देशकालसम्बन्धविशिष्टपरामर्शकतद्घटितोक्तवाक्ये विशिष्टप्रमापकत्वायोगात्। तावन्मात्रेणैवासदिष्टसिद्धे।

यत्तु प्रकाशश्चन्द्र इत्यादौ न स्वरूपमात्रविषयक प्रश्नः। प्रागेवावगतत्वात्। किन्तु विशिष्टवैशिष्ट्यविषयक इति। तन्मन्दम्। चन्द्रश्चन्द्रत्वजातिमाश्चन्द्रपदवाच्यश्चन्द्रत्वविशिष्टस्येतरव्यावृत्तिप्रयोजकधर्मवाश्चेति विशिष्टविषयकनिश्चयवतोऽपि तादृशप्रश्नदर्शनेन त्वन्मतेऽप्यनिस्तारात्।

अथ किंशब्दस्य जिज्ञासिते शक्ति'। जिज्ञासितत्वञ्चोद्देश्यवाचकपदसमभिव्याहृतकिंशब्दस्थले स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकरूपावच्छिन्नोद्देश्यतानिरूपितताद्दशधर्मव्याप्यधर्मावच्छिन्नविधेयताशालिबोधविषयकेच्छाविषयत्वम्। एवञ्चोक्तविधज्ञानानां सिद्धत्वेऽपि प्रकृष्टप्रकाशश्चन्द्र इति ज्ञानविशेषस्यासिद्धत्वान्न प्रश्नादिविरोध इति चेन्न। ममापि समानविभक्तिकपदान्तरसमभिव्याहृतकिंशब्दस्य स्वसमभिव्याहृतपदार्थतावच्छेदकतद्व्याप्यधर्मतदुभयनिरूपिततदाश्रयविषयताशालिबोधविषयकेच्छाविषये शक्तत्वात् उक्तविधबोधान्तरस्य सिद्धत्वेऽपि प्रकृष्टप्रकाशत्वादिनिरूपितचन्द्रनिष्ठविषयताशालिबोधस्य प्रागसिद्धत्वेन प्रश्नाद्यनुपपत्तेरभावात्। न चैतादृश विषयताशालिबोधो न भवदाचार्यसम्मत इति वाच्यम्। सिद्धान्तसंग्रहे तृतीयपरिच्छेदे अन्ये त्वित्यादिनैतन्मतस्य **दीक्षितश्रीचरणैरेव** दर्शितत्वात्' इति।

---

[1] विशिष्टयोर्भिन्न इति पाठेन भाव्यमिति भाति।

(द्वै द्यु) परे तु 'अज्ञाते किंपदस्य शक्तिः। उत्तरश्चाज्ञाननिवर्तकबोधजनकशब्दः। एवञ्चाज्ञाननिवर्तकशक्तेः पूर्वज्ञानेष्वसत्त्वान्न प्रश्नानुपपत्तिः। प्रकृष्टप्रकाशश्चन्द्र इति वाक्यजन्यबोधे तादृशशक्तेः सत्त्वाच्च न प्रतिवचनानुपपत्ति' इति वदन्ति।

तदपि उक्तैकदेशिमतनिरासेनैव निरस्तम्। अत्रोक्तस्य तटस्थघटत्वनिरूपितत्वस्यापि घटत्वनिष्ठप्रकारतानिरूपितत्वरूपत्वात्। यदि प्रकारताया भासमानवैशिष्ट्यप्रतियोगित्वान्यस्या अभावात्तद्रूपत्वे च घटे घटत्ववैशिष्ट्यभानावश्यकत्वप्राप्तौ तज्जातीयबोधजनकत्वेऽप्यखण्डार्थत्वहानिभयात्साक्षात्तटस्थघटत्वादिनिरूपितत्वमेव ज्ञानान्तरीयघटादिविषयताया स्वीक्रियते। तदाऽपि पूर्वोक्तसर्वदोषाणां साम्यमेव। परन्तु घटज्ञाने भासमानस्यैव घटत्वादेस्तन्निष्ठविषयतानिरूपकत्वाङ्गीकारेऽपि त्वदभिमतसंसर्गागोचरप्रमाजनकत्वरूपाखण्डार्थत्वहानेस्तत्र ज्ञानद्वयाङ्गीकारोऽनुचितः। उक्तक्रमेणाङ्गीकारेऽपि बाधकाभावाद्विनिगमकाभावेन सर्वत्र मानाभावेन च न कस्यापि सिद्धिरिति सुधीभिश्चिन्त्यमिति न किञ्चिदेतत्।

येषा वाक्यकुठारेणाखण्डोऽखण्डि मयाऽधुना।
तान् श्रीमध्वजयव्यासराजान् वन्दे निरन्तरम्॥

एव नवीनोत्प्रेक्षितपक्षाणामतिनिर्दलतां मन्यमानाः **सर्वज्ञकल्पाष्टीकाकाराः** शिष्या एव तद्दूषणं स्वोक्तमार्गेण कुर्वन्त्विति बुद्धया स्वयं कण्ठत उद्धाट्य तद्दूषणमकुर्वाणाः सत्यज्ञानादिवाक्यानां परोक्ताभिप्रायाभावे कोऽभिप्रायस्तेषामिति शिष्याकाङ्क्षायां तदभिप्रायमुपवर्णयन्ति ॥ **एवमित्यादिना** ॥ **सत्यत्वादिविशिष्टमिति** ॥ सत्यत्वादिकञ्च जगत्स्रष्टृत्वादिरूपमित्यानन्दमयाधिकरणानुव्याख्यानसुधादौ व्यक्तमिति नातिव्याप्तिप्रसक्तिः। तत्त्वमसीत्यादिस्थल उपपादयति ॥ **जीवात्मा चेति** ॥ **सामान्यतोऽवगत इति** ॥ चेतनत्वादिरूपसामान्यधर्ममात्रेणेत्यर्थः ॥ **विशेषापेक्षयेति** ॥ स्वस्मिन्प्रतीयमानगुणेषु मध्ये स्वाभाविकगुणविशेषवत्त्वादिनेत्यर्थः। मुख्यार्थ एव कुतो न स्वीक्रियत इत्यत आह ॥ **अभेदस्येति** ॥ **प्रमाणेति** ॥ नाहमिति प्रत्यक्षादिबाधितत्वादित्यर्थः।

(गु टि) वाक्यार्थे प्रत्याधारत्वविषयत्वयोरभावात्सप्तम्यनुपपत्तिमाशङ्क्य तदुपपत्त्यर्थमाह ॥ **उपपद्यत इतीति** ॥ ततश्च वक्ष्यमाणप्रकारेण प्रश्ने सतीति सतिसप्तमीत्वलाभेन तदुपपत्तिरित्याशयः।

ननु प्रकृष्टप्रकाशपदेन प्रकृष्टः प्रकाशो यस्येति बहुव्रीहिणा चन्द्रस्यैव प्रतिपादनात् तद्विशिष्टस्य परिहारवाक्यार्थत्वप्राप्तावपि विशेषणविशिष्टस्य चन्द्रस्य तदप्राप्तेर्न तस्य प्रकृष्टादिवाक्यार्थत्वमित्यत आह ॥ **भावप्रधान इति** ॥ लक्षणया भावप्रधान इत्यर्थः। तथा चोक्तरीत्या चन्द्रस्य प्रकृष्टप्रकाशरूपत्वेपि प्रकृष्टप्रकाशत्वरूपत्वाभावेन तद्विशिष्टचन्द्रस्य युक्तं वाक्यार्थत्वमिति भावः ॥ **पूर्वोक्तेति** ॥ तद्देशकालविशिष्टे एतद्देशकालवैशिष्ट्यं विशिष्टद्वयैक्यञ्चेत्यवशिष्टपक्षद्वयेत्यर्थः।

**प्रकृष्टादिवाक्ये प्रश्नप्रतिवचनयोर्विशिष्टविषयकत्वसमर्थनेनाखण्डार्थत्वभङ्गः**

(गु.टि.) ननु प्रश्नस्य विशिष्टविषयकत्वे 'कैर्विशेषणैर्विशिष्टः' इत्येव प्रश्नाकारेण भवि
ारत्वं तु कथमित्यत आह ॥ **अनयेति** ॥ वाचोभङ्ग्येति षष्ठ्या अलुक् । प्रकृष्टप्रका
र्थ इत्यंशं योजयति ॥ **तत्रेति** ॥ वाक्यद्वयमध्य इत्यर्थः ।

ननु प्रकाशत्ववैशिष्ट्यस्य शब्दबोध्यत्वे नक्षत्रादिव्यावृत्तेः शब्दाल्लाभो न स्यादित्यतो
ावृत्तेरशाब्दत्वमिष्टमेवेत्याह ॥ **नक्षत्रेति** ॥ तद्देशकालादिविशिष्ट एव वाक्यार्थ इत्यंशं यो
दिना ॥ **विशेषणादिति** ॥ तद्विशिष्टे च तस्यासिद्धत्वाद्युक्तं शब्दबोध्यत्वमिति भावः । ए
ेहारयोर्विशिष्टविषयकत्वोपपादनेन सूचितं दार्ष्टान्तिकेपि तयोर्विशिष्टविषयकत्वं स्वयमुपद
।॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते तत्त्वोद्योते अखण्डार्थभङ्गान्तो



# श्रीमदानन्दतीर्थभगवत्पादाचार्याः



वन्दे तं त्वा सुपूर्णप्रमतिमनुदिनाऽसेवित देववृन्दै
वंन्दे वन्दारुमीशे श्रिय उत नियतं श्रीमदानन्दतीर्थम् ।
वन्दे मन्दाकिनीसत्सरिदमलजलाऽसेकसाऽधिक्यसङ्गं
वन्देऽहं देव भक्त्या भवभयदहनं सज्जनान्मोदयन्तम् ॥